# अष्टांगहृदये सूत्रस्थानम् ।

श्रीमहागणपतये नमः । श्रीआनंदिनीमठाय नमः । दीप्त्या यस्येंद्रनीलोपलशकलरजोनीलया नीलिताभां लक्ष्मीमुत्तप्तभास्वत्कनकरुचिमपि स्पर्शरोमांचितांगीम् । कालीत्याशंकमानः स्फुरदधरपुटश्चक्रपाणिः किलाभूद्भर्ता लोकस्य शश्वत्स भवतु भवतां भूतये पद्मनाभः ॥ १ ॥ को मत्सरिणि लोकेऽस्मिन्विद्वान्किंचिच्चिकीर्षति । किंतु कश्चिद्भवेत्साधुस्ततोयं मत्परिश्रमः ॥ २ ॥ श्रीमन्मृगांकतनयष्टीकामष्टांगहृदयस्य । श्रीमानरुणः कुरुते सम्यग्द्रष्टुः पदार्थबोधाय ॥ ३ ॥ इह हि शास्त्रारंभे शास्त्रपरिसमाप्तये सर्व एव सभाभूषणभूता निखिलजनजनितप्रमोदसंदोहा रुचिररुचिरचितवचनचंदनचर्चितप्रबंधाः प्रबंधविरचनप्रवरा इष्टदेवतानमस्कारं तंत्रकारा विदधुः । तदयमपि तंत्रकारोभीष्टदेवतानमस्कारपुरःसरं तंत्रमारिरिप्सुरिदमाह ।

**रागादिरोगान् सततानुषक्ता-**
**नशेषकायप्रसृतानशेषान् ।**
**औत्सुक्यमोहारतिदान् जघान**
**योपूर्ववैद्याय नमोस्तु तस्मै ॥ १ ॥**

राग आदिर्येषां ते रागादयः । आदिशब्देन द्वेषलोभादिपरिग्रहः । रुजंतीति रोगा देहमनसी संतापयंतीत्यर्थः । ननु मनःस्थितत्वान्मन एव ते रुजंतीति वक्तुं युक्तम् । मैवम् । देहमनोलक्षणयोर्वस्तुनोराधाराधेयभावेन स्थितत्वाद्द्वयोरपि संतापो युक्तः । यथाधेयेनायोगोलकेन संतप्तेन तदाधारस्य कटाहादेः संतापः । आधारेण च कटाहादिना संतप्तेनाधेयस्य घृतादेः संतापः । तदेवं रागादयो द्वयं रुजंतीति न्याय्यमेतत् । तथा सततानुषक्ताः सर्वकालं प्रसृताः । सहजा इत्यर्थः । अशेषकायप्रसृता अशेषश्चासौ कायश्चाशेषकायः । तत्र प्रसृता अनुगताः । यद्वाऽशेषाश्च ते कायाश्चाशेषकायाः । सर्वाणि शरीराणि गजतुरगोरगादिसंबंधीनि तानि प्रकर्षेण सृता गताः । तथा न विद्यते शेषो येषां तेऽशेषाः सर्वे समूलाः । सबीजा इत्यर्थः । तथौत्सुक्यमोहारतिदाः । औत्सुक्यं विषयोत्कंठा ततोभिलापः । मोहः कार्यानभिज्ञत्वम् । अरतिरनवस्थितिः । स्थानासनादिष्वौत्सुक्यं च । मोहश्चारतिश्च ता ददति ये रागादयस्त एवम् । तानेवंविधान् यो भगवान् जघान तस्मै तथाभूतायापूर्ववैद्याय नमोस्तु । तं पूजयामीत्यर्थः । अत एवासावपूर्व आश्चर्यभूतो वैद्योऽन्यो हि यो वैद्यः स ज्वरादीनप्यचिरोत्थितान् रोगानेतद्विशेषणैरपरामृष्टान्न तथा हर्तुं समर्थः । किमुत रागादीनसाध्यलक्षणलक्षितांस्तथा चासाध्यलक्षणम् । अनुपक्रम एव स्यात् स्थितोत्यंतविपर्यये । औत्सुक्यमोहारतिकृदिति । यदिवा न विद्यते पूर्वो यस्मादसावपूर्वः । पूर्वेभ्यः प्रथम इत्यर्थः । अपूर्वश्चासौ वैद्योऽपूर्ववैद्य इत्यर्थः । एवंविधं चाभिमतनमस्कारश्लोकं विरचयन् ग्रंथकृद्ग्रंथस्य रोगोपशांतिः प्रयोजनमिति प्रतिपादयति । तथा चाह चरकमुनिः । धातुसाम्यक्रिया चोक्ता तंत्रस्यास्य प्रयोजनमिति । एवं च धातुसाम्येन प्रयोजनेन प्रयोजनवदिदं तंत्रम् । तथा तत्पाठात्तदर्थावबोधात्तद्विध्यनुष्ठानाचारोग्याख्यस्योपेयस्य तथाभिमतस्यायुषः परस्य पुरुषार्थस्य मोक्षाख्यस्य च परमार्थत इदमेव तंत्रमुपायः । अस्माचोपायोपेयलक्षणसंबंधवच्च हेतुलिंगौषध्याख्यस्कंधत्रयमस्याभिधेयं तेनाभिधेयेनाभिधेयवत्तंत्रम् । एवं च ग्रंथकृतात्र प्रयोजनसंबंधाभिधेया युक्त्यैवोक्ताः । इंद्रवज्रोपेंद्रवज्राविरचितत्वादुपजातिवृत्तम् । अनंतरापादितलक्ष्मशोभौ पादौ भवेतां विविधैर्विकल्पैः । यासामिमावन्ययतिप्रपंचौ स्मृताः स्मृतिज्ञैरुपजातयस्ताः । सर्वत्रैव चात्र तंत्रेऽनुष्टुभा समानीप्रमाणीवितानादिभेदभिन्नतया विरचनं यत्पुनरवसरांतरे वृत्तांतरविरचनमिह तत्सलक्षणं व्यंजयिष्यामः ।

इदानीमिष्टदेवतां नमस्कृत्य शास्त्रकारस्तंत्रमारिरिप्सुरिदमाह । अथात इत्यादि ।

### अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ।

अथशब्दोस्मिन्मंगलाधिकारानंतर्येषु द्रष्टव्यः । मंगलादीनां हि शास्त्राणां तदध्येतॄणां निष्प्रतिबंधा प्रवृत्तिरभिप्रेतार्थसाधनाय जायते । अथशब्दश्चायं मंगलार्थः । तथा चोक्तम् । ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठं भित्त्वा विनिर्यातौ तेनेमौ मंगलौ स्मृताविति । अतोऽधिकारे । आयुष्कामीयं शास्त्रमधिक्रियते यावदत ऊर्ध्वं प्रतन्यत आतंत्रपरिसमाप्तेस्तत्सर्वमायुष्कामीयं वेदितव्यम् । अत आनंतर्ये च । नमस्कारादनंतरमायुष्कामहितं व्याख्यास्याम इति । कथंपुनरेकस्यैव तंत्रकारस्य व्याख्यास्याम इति बहुवचनं युज्यते । ब्रूमः । अस्मदो द्वयोश्चेत्येकत्वेऽपि बहुवचनविधानादभिलषंति । युक्तमेवात्रैकस्मिन्नपि बहुवचनम् । तथा च मुनिः । आयुः शरीरेंद्रियसत्त्वात्मसंयोगाधारि जीवितम् । नित्यगश्चानुबंधश्च पर्यायैरायुरुच्यते । एतीत्यायुः । संततं यातीत्यर्थः । एवंविधं गत्वरस्वभावमपि हिताहारविहारसेवादिभिरहितवर्जनेन च कथमेतत् स्थिरीभवेदित्येवं कामयंते ये ते आयुष्कामाः । तेभ्यो हित आयुष्कामीयः । स पुनरायुर्वेदागमादिप्रकरणसमुदाय आयुष्कामयमानेनेत्यादिकः । आयुष्कामीय इति इसुसोः सामर्थ्ये इति षादेशः । तस्मै हितमिति छः । आयुष्कामीयशब्दोऽध्यायविशेषणार्थो नीलोत्पलदलवत् । बहुष्वध्यायेषु सत्सु कतममध्यायं व्याख्यास्याम आयुष्कामीयमिति । अधिकृतोध्ययनायेत्यध्यायस्तं व्याख्यास्यामः विविधप्रकारेण विशेषेण वा कथयिष्यामः । आयुष्कामैः पूर्वं दृष्टत्वादस्याध्यायस्यायुष्काम

इति संज्ञा । अर्थगतिमधिकृताध्याय इति नाम । तथा चोक्तम् । अधिकृत्येयमध्यायनामसंज्ञा प्रतिष्ठितेति । तत्र पदसमुदायो वाक्यं वाक्यसमुदायः प्रकरणं प्रकरणसमुदायो यः सोऽध्यायोऽध्यायसमुदायः स्थानं स्थानसमुदायस्तंत्रमिति विशिष्टशब्दो नानार्थः । आङभिविधौ । उत्तराख्यश्चायमलंकारः । तस्य हि लक्षणम् । उत्तरवचनश्रवणादुन्नयनं यत्र पूर्ववचनानां क्रियते तदुत्तरं स्यादित्यादि । ततोऽनेन वाक्येन शिष्यवचनमीदृशमुन्नीयते । संसारेऽस्मिन्नमी प्राणिनो नानारोगानीकाभिभूतास्त्रातारमलभमानास्त्रिवर्गाद्भ्रश्यंते । तत्कोनु भगवन्नत्रोपायः स्यादिति कृतप्रश्नो गुरुः प्रतिजज्ञे । अथ शिष्यवचनानंतरमतो हेतोर्यस्मादयं शिष्यः श्रुतकुलशीलादिसंपन्नो धीमेधागुणभूषणभूतो विविधैः प्रकारैराशिष्यबोधोत्पत्तेरायुष्कामीयमध्यायं व्याख्यास्यामो वर्णयिष्यामः । ननु कीदृशं तद्विविधप्रकारमाख्यानम् । ब्रूमः । पदतस्तदर्थतः प्रयोजनतश्चोद्यतः परिहारतः संबंधाभिधेयतश्च । पदतो यथायुरितीदं पदम् । तदर्थतो यथैतीत्यायुः । प्रयोजनतो यथाऽत्रैव धर्मार्थसुखसाधनम् । चोद्यतो यथा ननु कथमेतत्केवलं धर्मार्थसुखसाधनमिति वक्तुं पार्यते । यतोस्यायुषः कर्मैव केवलं धर्मसाधनमिति वक्तुं नो पार्यते । यतोस्यायुषः परिपालनार्थं विशस्ताः काकगृध्रभासादयो राजयक्ष्मचिकित्सिते भोज्या इत्युक्तम् । अभक्ष्याश्चैते । श्रुतिस्मृत्योरभक्ष्यत्वेनोक्तत्वात् । एवमभक्ष्यभक्षणाद्धिंसया च पापयोगस्तद्योगाच्चाधर्मसाधनं न धर्मसाधनमिति । परिहारतो यत्रैवंपरिहारो यज्ञाधिकारिशरीरनिमित्तं काकादीनां विशसनं भक्षणं विधीयमानं नाधर्माय । इतरथा क्रीडार्थं क्रियमाणमधर्मायैव । तथा च काकादयोपि तत्साधनोपयोगाद्धर्मेण तत्फलेन संबंध्यंते यज्ञिया इव पशवस्तदेवमायुषो धर्मसाधनत्वं स्थितम् । संबंधाभिधेयौ तूक्तावेव । ननु संत्येवान्यान्यपि महर्षिप्रणीतान्यायुर्वेदतंत्राणि किमनेन तंत्रेण कृतेनेति । अत्र ब्रूमः । अपरतंत्राणां सावद्यत्वादिदमुच्यते । अन्यानि हि तंत्राणि सदोषाणि । तथा हि । यदेतत्तावद्भगवता चरकमुनिना प्रणीतं तंत्रं रत्नाकर इव गांभीर्यातिशययोगाद्दुर्बोधं तस्यापि सदोषतां प्रकटयंति वाचाटाः । तथा ह्यादौ तत्सूत्रम् । अथातो दीर्घजीवितीयमध्यायं व्याख्यास्याम इति । अत्र दीर्घजीवितीय इति शास्त्रादावयुक्तम् । यतो दीर्घं जीवितमन्विच्छन्नित्यस्यानुकरणं दीर्घजीवितमिति । सोस्मिन्नध्यायेऽस्तीति छः । तस्याध्यायानुवाकयोर्लुकि सति दीर्घं जीवितमिति प्राप्नोति । तदिदमविदितपरमार्थशब्दस्वरूपाणां वचनम् । तथाहि । अध्यायानुवाकयोरित्यादौ सूत्रे विकल्पेन चायं लुगिष्यत इति जगाद जयादित्यः । तेन लुकः पाक्षिकत्वादत्र लुक् न भवतीत्येवं युक्तमुक्तमिदम् । दीर्घशब्देन गुणोऽभिधीयते जीवितशब्देनाऽपि गुण एव । तस्माद्द्वयोरपि गुणत्वादाधाराधेयभावो न युक्तो यतो गुणाश्रयो नोक्त इति । तथा च वैशेषिकाः । निर्गुणा गुणा इति । अथ कालशब्दं लुप्तस्वरूपं निर्दिश्य दीर्घजीवितीयशब्दो निर्दिश्यते तदा युक्तमेवैतत् । इंद्रियोपक्रमणीयेऽध्याये छप्रत्ययोत्पत्तिः कथमेवं विधीयतां यतोऽस्मिन्नध्याय इंद्रियोपक्रमणशब्दो नास्त्येव । एवमपामार्गतंडुलीयेऽपामार्गतंडुलशब्दस्याभावाच्छप्रत्ययोत्पत्तिर्दुर्लभा । तथा दिव्यांभसो गांगसमुद्रभेदः परीक्षा च नोक्ता । प्रत्युत तत्र पठ्यते । जलमेकविधं सर्वं पतत्यैंद्रं नभस्तलात् । तप्तं तत्पतितं चैव देशकालावपेक्षत इति । तथा नालिकेरोदकस्य गुणा नोक्ताः । तथा पक्वक्वथितक्षीरस्य स्वरूपविशेषो नोक्तः । तथा कषाये कियदौषधं किमवशेषं क्वथनीयमित्यादि च नोक्तम् । मिश्रके स्नेह एवमभ्यधादसौ । त्रिवृतां त्रिफलां दंतीं दशमूलं पलोन्मितम् । चतुर्गुणं जलं दत्वेत्यादि । तदेषामौषधानां कियन्मानमपि सलिलेनैतावता कीदृशं किमुत क्वाथनिर्यासाविति । तथा क्वथितशीततोयमपि कियता पाकेन पथ्यं भवतीति नोक्तम् । मुद्गो ग्राहीति च नोक्तम् । तथा च तत्पाठः । कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः । विशदः श्लेष्मपित्तघ्नो मुद्गस्तूक्तोत्तमोत्तम इति । तथा वास्तुकादीनां लघुत्वं नोक्तम् । तथाच तत्पाठः । पाठासुषासठीशाकं वास्तुकं सुनिषण्णकम् । विद्याद्ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकमिति । तथेक्षुवर्गे शैत्यात्प्रसादान्माधुर्यात्पौंड्रकाद्वांशिको वर इत्यसावभ्यधात् । पौंड्रकश्च वांशिकाद्वर इति सुप्रसिद्धमेतत् । अत्र मतिवैभवाद्भट्टारकहरिश्चंद्रौ व्याख्याविशेषमवोचताम् । यथा पौंड्रकाद्वांशिकोऽवर इति । एवं चैतदुपपन्नमेव । तदेवमात्रेयस्यापि तंत्रे यतो बहवो दोषा उद्भाव्यंते ततः का गणना तंत्रांतराणाम् । तथा वेदोत्पत्तिरिति संज्ञा तंत्रेऽस्मिन्सदोषत्वान्न कृता । तथा हि । आयुषो वेद आयुर्वेदस्तस्योत्पत्तिरायुर्वेदोत्पत्तिरिति भवितव्यम् । अत्र केचिदाहुः । आयुःशब्दलोपं कृत्वेह निर्देशः कृतः । एवमपि सति लोपस्तावदमंगलः । सोप्यायुषः सच शास्त्रादावित्यन्याय्यैवैषा संज्ञा । किंच वेदोत्पत्तिरित्येतदपि तावद्वक्तुं न युज्यते । नित्यत्वादस्य वेदस्य । नित्यो ह्ययमायुर्वेदः । संतानादिनित्यत्वात् । तथा ह्यायुःसंतानः । सर्वप्राणिसंवेद्यशरीरापरशरीरगो मनःप्रबंधनित्यतया नित्यः ।अस्य नित्यत्वादायुर्वेदोऽपि नित्यः । नित्यत्वाच्चास्योत्पत्तिमत्त्वं वक्तुमयुक्तम् । नन्ववबोधोपदेशाभ्यामुत्पत्तिरस्योपलभ्यते । यतः प्रागुपदेशान्नासावुपलभ्यते । अत उपदेशानंतरमुपदेशद्वारेणोपलभ्यते । तस्मादवबोधोपदेशावस्योत्पत्तिकारणत्वेन कल्पयित्वोत्पत्तिमत्त्वमस्योच्यत इति कैश्चिदूचे । नैतद्युक्तम् । यतः सतो बोधोपदेशौ स्तो नासतः । तथा चाचष्टे लोकः । अमुना गुरुणा छात्रायोपदिष्टं शास्त्रमिदमिति । सत एवोपदेशावबोधौ स्तः । तस्मान्नावबोधोपदेशावस्योत्पत्तिकारणमित्यतोऽपि हेतोर्वेदोत्पत्तिसंज्ञेत्ययुक्ता । इति संज्ञानां सावद्यत्वं निरूप्य निरवद्यायुष्कामीयसंज्ञा हि तंत्रे कृता । यथोच्चारितमात्रयैवाऽशेषस्तंत्रार्थः प्रकाश्यते । प्रतिस्थानं च योध्यायः प्रथमस्तत्संज्ञया स्थानार्थः । अन्ये च येऽध्यायास्तंत्रेऽस्मिंस्तत्संज्ञाभिर्यथास्वतंत्रमर्थजातं प्रकाशयंत इति ।

इदमिदानीं पृच्छ्यते तंत्रकारः । यदस्मिंस्तंत्रे किंचिदुच्यते स्म भवद्भिस्तत्स्वबुद्धिपरिकल्पितमुत नेत्याह ।

**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

इतिशब्द एवमर्थे । यथा इति ह स्म तानाह । हशब्दोऽनुकंपायां ब्रूधातोः स्म उपपदे भूतानद्यतनपरोक्षे लट् स्म इति लट् आहादेशः । अत्रेरपत्यमात्रेयः । इतश्चानित्र इति ढक् । आत्रेय आदिर्येषां धन्वंतरिप्रभृतीनां त एव महांतश्च ते ऋषयश्च महर्षयः । महत्त्वं तज्ज्ञानातिशययोगात् । तेनायमर्थोऽनेन कारणेनानुकंपया न तु फलाकांक्षया । भगवंत आत्रेयादयो महर्षयोऽब्रुवन् नास्माभिः स्वमतिपरिकल्पितं किंचिदप्यत्रोक्तम् । केवलं दूतसंदेशवचनन्यायेन युगानुरूपः क्रममात्रोऽन्यथा कृत इत्यर्थः । तथा चास्यैव संग्रहे । न मात्रामात्रमप्यत्र किंचिदागमवर्जितम् । तेऽर्थाः स ग्रंथसंदर्भः संक्षेपाय क्रमोऽन्यथेति । तदेवमागमप्रामाण्यमस्य तंत्रस्येत्युक्तं भवति ।

**आयुःकामयमानेन धर्मार्थसुखसाधनम् ।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥**

आयुर्वेदयति ज्ञापयति प्रकृतिज्ञानरसायनदूतारिष्टाद्युपदेशादित्यायुर्वेदः । तस्योपदेशा आयुर्वेदोपदेशाः । उपदिश्यंत आयुर्वेदार्था उपपत्तिभिरित्युपदेशा आयुर्वेदतंत्राणि । तेषु परमादरः पाठावबोधानुष्ठानरूप उत्कृष्टो यत्नः कार्यः । आयुर्वेदोपदेशेष्विति बहुवचननिर्देशादयमर्थो बोध्यते । बहुष्वायुर्वेदतंत्रेषु यत्नः कार्योऽनेकायुर्वेदावलोकनाच्चिकित्सायां वैद्यस्य न मनागपि संदेहो जायते । किंकुर्वता पुरुषेण । आयुःकामयमानेन जीवितमभिलषता । किंभूतमायुः । धर्मार्थेत्यादि । ध्रियते लोकोऽनेनेति धर्मः । अर्थ्यते याच्यत इत्यर्थः । सुखं द्विविधम् । तादात्विकमात्यंतिकं च । तादात्विकं कियत्कालांतरास्थायित्वात्सुखावभासं न परमार्थतः सुखम् । तथा चोक्तम् । तादात्वसुखसंज्ञेषु भावेष्वज्ञोनुरज्यत इति । तदेतत्संज्ञामात्रेण सुखं न त्वत्यंतमिति प्रदर्शयितुं सुखसंज्ञेष्विति मुनिनोक्तम् । आत्यंतिकं सुखं मोक्षाख्यं यत्र न दुःखानां श्लेषः । तेषां साधनमुपायो धर्मार्थसुखसाधनम् ।

अथास्यायुर्वेदस्य गौरवोत्पादनायागमशुद्धिं दर्शयति । ब्रह्मेत्यादि ।

**ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।**
**सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन् ॥३॥**
**तेऽग्निवेशादिकांस्ते तु पृथक् तंत्राणि तेनिरे ।**

ब्रह्माऽऽयुषो वेदं स्मृत्वा प्रजापतिं दक्षमजिग्रहद् अवाबोधयत् । स्मृत्वेत्यनेनैतद्गमयति ब्रह्मणः स्मर्तृत्वमेवात्र न कर्तृत्वम् । नित्यत्वादायुर्वेदस्य । नित्यत्वं चास्य प्राक् प्रत्यपादि । ग्रहेर्ण्यंतस्यात्र बुद्ध्यर्थत्वात् प्रजापतिशब्दस्य गतिबुद्धीत्यादिना कर्मसंज्ञा । स प्रजापतिरश्विनावजिग्रहत् । तौ सहस्राक्षमिंद्रमजिग्रहतामिति वचनविपरिणामेन संबंधः । शक्रोऽत्रिपुत्रादिकान् मुनीन् बोधयामास । अत्रिपुत्र आत्रेय आदिर्येषां धन्वंतरिनिमिकाश्यपादीनां त एवं ते चात्रेयादयोऽग्निवेशादिकानजिग्रहन् । ते त्वग्निवेशादयः षट् पृथक् प्रत्येकं तंत्राणि शास्त्राण्यग्निवेशभेडजातूकर्णपराशरहारीतक्षारपाणिनामाभिधेयानि तंत्राणि तेनिरे विस्तारितवंतश्चक्रुः । तंत्र्यंते धार्यंत आयुर्वेदार्था एभिरिति तंत्राणि ।

ननु यदि तैस्तंत्राणि पुनर्युगानुरूपसंदर्भैः संगृहीतानि तत्किमिदानीमनेन शास्त्रेण कृतेनेत्याह । तेभ्य इत्यादि ।

**तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ॥ ४ ॥**
**क्रियतेऽष्टांगहृदयं नातिसंक्षेपविस्तरम् ।**

तेभ्यो ग्रंथेभ्योऽतिविप्रकीर्णेभ्यो विक्षिप्तेभ्य उच्चावचोक्तार्थतयैवेतश्चेतश्च गतेभ्योऽत एव कश्चिदेवार्थः कस्मादेव तंत्रांतराज्ज्ञायते । यथा शल्यचिकित्सा सुश्रुतप्रणीतात्तंत्रादेवावगम्यते न तथाग्निवेशादिकात् । ऊर्ध्वांगचिकित्सा च जनकप्रणीतात्तंत्राद्यथावगम्यते न तथा सुश्रुतप्रणीतात् । अतः प्रायो बाहुल्येन सारतरोच्चयः क्रियते । उच्चीयंते संगृह्यंते विक्षिप्ताः पदार्था अनेनेत्युच्चयः । यथावा यवादीनां बहुक्षेत्रजातानामेकस्मिन् स्थान उच्चयो विधीयते राशीकृत्य स्थापनं तथेह सारतराणामुच्चयः । सारतरग्रहणेनैतद्द्योतयति संग्रहेणैव साराणामुच्चयः कृतः । अनेन तथा सारतराणां प्रदेशानामुच्चयः क्रियत इति । किं नाम । अष्टांगहृदयमेतच्च सान्वयार्थमस्य नाम । यथा शरीरस्य सर्वावयवेभ्यः प्रधानदेशो हि हृदयं तथेदमष्टांगायुर्वेदस्य प्रधानभूतत्वाद्धृदयमिव हृदयम् । तथा च तंत्रांते वक्ष्यति । हृदयमिव हृदयमेतदित्यादि । अष्टौ च तान्यंगान्यष्टांगानि तेषां प्रत्येकं हृदयं सारतरसंग्रहणात् । कीदृशमष्टांगहृदयम् । नातिसंक्षेपविस्तरम् । संक्षेपश्च विस्तरश्च संक्षेपविस्तरौ । अतिशयेन संक्षेपविस्तरौ यत्र न तन्नातिसंक्षेपविस्तरम् । अतिशब्दस्यात्र प्रत्येकं संबंधः । अतिसंक्षेपं किंचित्तंत्रं यथा सिद्धसारादि किंचिच्चातिविस्तरं यथा संग्रहादि । इदं तु तंत्रं नातिसंक्षेपविस्तरम् । अतिसंक्षेपोक्तं स्वल्पधियां नोपकृतये । तेषां हि यथोक्तागममात्रं श्रेयो न तु वाक्यार्थपर्यालोचनादधिकः परामर्शः । अतिविस्तीर्णं तु पाठावबोधानुष्ठानैस्तेषां दुःशक्यं स्यात् । तस्मादल्पमध्योत्कृष्टबुद्धिशिष्यहितार्थं तंत्रमेतदुद्दिष्टम् ।

कानि पुनस्तान्यष्टांगानीत्याह । कायेति ।

**कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषान् ॥ ५ ॥**
**अष्टावंगानि तस्याहुश्चिकित्सा येषु संश्रिता ।**

कायश्च बालश्च ग्रहश्चोर्ध्वांगं च शल्यं च दंष्ट्रा च जरा च वृषश्चेतीतरेतरद्वंद्वः । ननु सर्वस्याश्चिकित्सायाः कायाश्रितत्वात् कायशब्दोऽर्थादाक्षिप्त एव तत्किमर्थं कायशब्द उपादीयते । ब्रूमः । प्रकर्षो यथाभिरूपाय कन्या देयेत्यत्राभिरूपग्रहणादभिरूपतमायेति प्रतिपाद्यते । तथेहाऽपि प्रकृष्टो यः कायः संपूर्णधातुः प्रकृष्टा च यावस्था तया युक्तस्तत्संग्रहार्थः कायशब्द उपात्तः । तथा चिञ्चयन इत्यस्माद्धातोर्व्युत्पादितः कायशब्दः । चीयते प्र-

शस्तदोषधातुमलैरिति कायः । तदेवं सर्वशरीरोपतापकानामामपक्वाशयस्थानोद्भवानां ज्वररक्तपित्तातिसारादीनां रोगाणां यत्रोपशमयोगो निगद्यते तत्कायचिकित्सानामांगम् । बालस्य त्वसंपूर्णधातुत्वाद् यावनावस्थकायस्य प्रथमनिर्देशः । बालदेहेऽसंपूर्णबलधातुत्वादप्रकृष्टवयोवस्थाप्रभावात् तच्चिकित्सांगं पृथङ्निर्दिष्टम् । तथा बालोपयिकभेषजं धात्रीदुग्धलक्षणं दुग्धोद्भवव्याधिप्रशमादिनिर्देशाच्च । नन्वेवं वृद्धस्य प्रकृष्टवयोवस्थाया अभावात्तद्देहे कायचिकित्सेति कथं व्यपदेशः स्यात् । अत्र ब्रूमः । भूतपूर्वगत्या वृद्धदेहेन हि प्रकृष्टतयावस्था पूर्वमनुभूता । अतो भूतपूर्वगत्या तत्र कायचिकित्सोपदेशो युक्तः । एवं ग्रहचिकित्सा नाम यत्र देवादिग्रहगृहीतानां प्राणिनां शांतिकर्म विधीयते । यत्रोर्ध्वजत्रुगतानां रोगाणां नेत्रकर्णघ्राणादिसंश्रितानामाश्चोतनशलाकादिनोपशमो वर्ण्यते तदूर्ध्वांगचिकित्सानामांगम् । अत्र च जन्मनःप्रभृति विचारोपदेशाद्बालचिकित्सैव प्राग्वक्तुं युक्ता । किंतु कायचिकित्सा प्राधान्यात्प्रागुपन्यस्ता । ततोऽनंतरं बालचिकित्सा । बालस्य च ग्रहसंबंधाद्ग्रहचिकित्सा । ततः शरीरस्य मूलरक्षार्थमूर्ध्वांगचिकित्सा शालाक्यं नाम । ततः शस्त्रसाधनसामान्येन शल्यचिकित्सा । पीडाकरणसमानत्वात् । दंष्ट्राचिकित्सा दंष्ट्राविषात्मिका विषेणाशु च मरणे संभाव्यमाने रसायनोपयोगो युक्त इति रसायनचिकित्सा । अथवा विषस्य रसायनजेयत्वाद्रसायनकथनप्रस्तावः । ततोनंतरं वाजीकरणस्य भरणेन प्रस्तावः । तथा चाभीते ग्रंथकृत् । वाजीकरणमन्विच्छेत्संततं विषयी पुमानिति । रसायनस्य पश्चादित्यर्थः । अत्राल्पदुष्टरेतसां तदाप्यायनप्रसादोपजननरूपा चिकित्सा क्रियते तद्वाजीकरणम् । एवमेतानि कायादीनि तस्यायुर्वेदस्याष्टावंगान्याहुर्वदंति । ब्रह्माऽऽत्रेयादय इति शेषः । येषु कायादिषु चिकित्सा संश्रिता व्यवस्थिता चतुर्णां भिषगादीनां शस्तानां धातुवैकृते प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयत इति मुनिप्रोक्तलक्षणं नेह तंत्रकृद्व्यधत्त । चिकित्साशब्दादेवार्थस्य लब्धत्वात् । तथा च निर्देष्टुमाह । निंदा क्षमाव्याधिप्रतीकारविचारणासु सा निष्पद्यत इति । कितेर्धातोर्व्याधिप्रतीकार एवास्य व्युत्पादितत्वात् ।

कायस्य दोषधातुमलसमुदायत्वात्तानेव दोषादीन् निर्दिदिक्षुराह । वायुरिति ।

**वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः॥ ६ ॥**

चः समुच्चये । कफो दोषमध्ये समुच्चीयते । इत्यनेन प्रकारेण समासतः संक्षेपात् त्रयो दोषाः । ननु प्रस्तुतत्वादिह धातुसंज्ञया वातादयो निर्देष्टुं न्याय्या न दोषसंज्ञया । अस्त्येवैतत् किंतु रसादिदूषणपूर्वकमेषां विकारकरणे सामर्थ्यमिति प्रदर्शनार्थं दोषसंज्ञया ते निर्दिष्टा न धातुसंज्ञया । नह्येते धातुरूपा जातु विरुद्धत्वं कुर्वते देहधारणवर्धकत्वात् । एते मुनिनापि चरकेण पूर्वं दोषसंज्ञयैव निर्दिष्टाः । तथा च तद्ग्रंथः । वायुः पित्तं कफश्चोक्तः शरीरे दोषसंग्रह इति । वातपित्तकफा दोषास्त्रय एव समासत इत्येवं निर्देशे कर्तव्ये यदेषां पृथग्विभक्त्या निर्देशः कृतः स प्रधानत्वख्यापनार्थः । बहुवचनादेव त्रित्वे लब्धे त्रिग्रहणं नियमार्थम् । त्रय एव दोषा न चतुर्थोऽस्तीति । तंत्रांतरीया हि चतुर्थं दोषमीहंते । तेषां ह्ययमभिप्रायः । यथा दोषाणां स्थानलक्षणकार्यविकारचिकित्साद्युपदेशस्तथा रक्तस्यापि । तत्र स्थानं सर्वदेहव्यापित्वेऽपि प्लीहयकृती । लक्षणं च पद्मेंद्रगोपहेमादीत्यादि । कार्यं देहस्योत्पत्तिस्थिती । विकारो विसर्पप्लीहादि चिकित्सा शिराव्यधादिकं कर्मेति । तदेतदसारम् । वातादयो ह्यस्य दूष्यस्य सतः कथं दोषत्वं कर्तुं पारयंति । यतः प्राधान्यादन्वर्थनामत्वाच्च वातादीनामेव दोषत्वं न रसादीनाम् । वातादयो हि स्वातंत्र्यात्प्रधानाः । दूषयंतीति दोषा इति तेषामेव चानुगतार्था संज्ञा प्रवृत्ता । रसाद्यास्तु पारतंत्र्यादप्रधानाः । ते च वातादिभिर्दूष्यंत इति दूष्याः । तस्माद्रक्तस्य दूष्यत्वं न दोषत्वम् । यद्येवं वातादीनामन्योन्यदूषणाद्दूष्यत्वं स्यात् । पित्तेन हि श्लेष्मा दूष्यत इति दृश्यते । यथा पांडुरोगनिदाने । पित्तप्रधाना इत्यारभ्य यावत् श्लेष्मत्वग्रक्तमांसानि प्रदूष्येत्यादि । तदत्र श्लेष्मा पित्तेन दूष्यते । तथा श्लेष्मवद्रक्तस्याऽपि दोषत्वप्रसंग इति यो मन्येत तं प्रति ब्रूमः । विषम उपन्यासः । वातादयो हि सर्वदैव रसादीन् दूषयंति नतु रसादयः कदाचिदपि वातादीन् दूषयंति वातादीनां तु मध्याद्यदि कश्चिद्दूष्यति स तेषामन्यतमेन । तथा च प्रकृतिलक्षणे वातप्रकृतेः पित्तप्रकृतेश्च यथा लक्षणं दृश्यते नैवं रक्तप्रकृतेः । तथा च तंत्रकारेण ज्वरादयो वातादिविशेषणविशिष्टा एवोक्ताः । यथा वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयं न तु रक्तज्वरोऽयमिति निर्दिष्टः । येऽपि रक्तजा विकारा विसर्पादयस्तेष्वपि घृतदग्धन्यायेन व्यपदेशो बोध्यः । यथा घृतस्यांतर्हितेनाग्निना दग्धो घृतदग्ध इत्युच्यते तद्वद्रक्तस्थैर्वातादिभिर्दोषैर्जातो रक्तजोऽयमित्युच्यते । यत्र क्वचिद्रक्तस्य दोषसंज्ञा कुष्ठचिकित्सितादौ दृश्यते सा संज्ञामात्रेणैव नासावनुगतार्था । तस्य दूष्यत्वेनैव प्रवृत्तिः । तथा चैवं पुरीषादीनामपि संज्ञामात्रेण व्यवहारो दृश्यते । यथा न घृतं बहुदोषाय देयं यन्न विरेचनं तेन दोषायेत्यादि । अत्र पुरीषस्य दोषत्वमुक्तम् । तथोदरचिकित्सिते चरकस्य ज्वरचिकित्सिते वा यस्य दोषेण भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते तस्मादादोषपचनाज्ज्वरितानुपवासयेदिति । तदेवं वातादयस्त्रय एव दोषा न रक्तमिति स्थितमेतत् । समासतो विस्तरतस्तु संसर्गसन्निपातक्षयसमतादिभेदभिन्नास्तारतम्यपरिकल्पनया च कल्प्यमाना आनंत्यं यांति ।

**विकृताऽविकृता देहं घ्नंति ते वर्तयंति च ।**

विकृताः स्वभावप्रच्युता देहं घ्नंति । देहपदमत्र जीवितोपलक्षणार्थम् । जीवितेन विना कुर्वतीत्यर्थः । अविकृताः पुनर्देहं वर्तयंति प्रापयंति । विकृतानां दोषाणां प्रागुपन्यासस्तेषां प्रकृत्यवस्थाने नित्यं भिषजा यत्नवता भाव्यमिति सूचनार्थम् । अन्यथा महान्प्रत्यवायः स्यात् ।

इदानीमेषां व्यापिनामपि विशिष्टस्थानं विवक्षुराह ।

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः॥७॥**

अधश्च मध्यश्चोर्ध्वं चाधोमध्योर्ध्वानि तानि संश्रय आश्रयो येषां तेऽधोमध्योर्ध्वसंश्रयाः । हृच्च नाभिश्च हृन्नाभी तयोर्हृन्नाभ्योस्ते वातादयो व्यापिनोऽपि सर्वशरीरचरा अपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः । विशेषेणेति वाक्यशेषः । किमिदं वाक्यशेषत्वं नाम । उच्यते । यस्मिन् खलु पदेऽनुच्चार्यमाणेऽर्थगतिं पश्यंत्याचार्यास्तच्छेषमित्युच्चारणकाले तेन विनाऽभिधेयसिद्धेर्व्याख्याकाले तु मंदबुद्धिव्युत्पत्तये व्याचक्षते । तत्र नाभेरधो वायोः स्थानम् । हृन्नाभ्योर्मध्ये पित्तस्य । हृदयादूर्ध्वं कफस्य । ननु हृन्नाभ्योरिति कथं निर्देशो यावता प्राण्यंगत्वादेकवद्भावे स नपुंसकमिति नपुंसकत्वे हृन्नाभि इति प्राप्नोति । अत्र ब्रूमः । प्राण्यंगानां समाहार एव द्वंद्व इत्यस्य प्रायिकत्वान्नैकवद्भावस्तदभावाच्च तदाश्रयं नपुंसकत्वं न भवति । तथा चोक्तम् । सर्वत्र द्वंद्वो विभाषयैकवद्भवतीति । दृश्यते चाऽन्यत्रापि । यथा च रुद्रभट्टः । कौटिल्ये कचनिचये करचरणाधरदलेषु रागस्ते० इत्यादि । तथाऽस्यैव ग्रंथकृतः शिरःपृष्ठोरसां भूमिरिति । तथा जानुजंघोरुकट्यंसहस्तपादांगसंधिषु । तथा वायुः संध्यस्थिमज्जस्वित्यादि तस्माद्धृन्नाभ्योरिति प्रयोगो न्याय्य एव ।

अप्येषां सकलकालव्यापिनामपि नियतकालत्वं दर्शयन्नाह ।

**वयोऽहोरात्रिभुक्तानां तेंऽतमध्यादिगाः क्रमात् ।**

वयश्चाऽहश्च रात्रिश्च भुक्तं च वयोऽहोरात्रिभुक्तानि तेषां क्रमाद्यथासंख्यं ते वातादयोंऽतमध्यादिगा भवंति । अंतश्च मध्यश्चादिश्चांतमध्यादयस्तेषु गच्छंतीत्यंतमध्यादिगाः । अन्यत्रापि दृश्यत इति डः । तेनायमर्थो वयसः पुरुषायुषोंऽतः पश्चिमो भागो वायोः कोपकालः । मध्यो भागः पित्तस्य । आद्यो भागः कफस्यैवमह्नो रात्रेश्च योज्यम् । भुक्तमाहारस्तस्यांते जठराग्निसंयोगवशाद्रसानां जीर्णप्रायावस्था वायोः कोपकालः । मध्यो विदाहावस्था पित्तस्य । आद्यावस्था तु यस्यां मधुरीभाव आहारस्य तत्र कफस्य कोपकालः । यद्यपि चाहारस्य जठराग्निसंयोगवशाद्बह्व्योपि सूक्ष्मा अवस्थाः संभाव्यंते तथाप्येतासामेव सुतरामुपयोगित्वादिह निर्देशः । तथा हि । एता एव तिस्रोऽवस्थाः स्वकर्म दर्शयंति । वक्ष्यति हि । आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् । फेनीभूतं कफं यातं विदाहादम्लतां ततः । पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः । अग्निना शोषितं पक्वं पिंडितं कटुमारुतमिति ।

अधुनाऽग्निस्वरूपं प्रस्तौति ।

**तैर्भवेद्विषमस्तीक्ष्णो मंदश्चाग्निः समैः समः ॥ ८ ॥**

तैश्च वातादिभिः पुंसो यथाक्रमेणाग्निर्विषमस्तीक्ष्णो मंदश्च भवेत् । वातादयश्च समुदिता एव शरीरजनने समर्था इत्यवश्यं सर्वैरेव भवितव्यम् । इह तु य एकव्यपदेशस्तत्रोत्कर्षो द्रष्टव्यः । वातोत्कर्षेण विषमः पित्तोत्कर्षेण तीक्ष्णः कफोत्कर्षेण मंद इति । समैर्हान्युत्कर्षवर्जितैः समः । लक्षणमेषामंगविभागे शारीरे वक्ष्यति । यः पचेत्सम्यगेवान्नमित्यारभ्य यावच्चिरात्पचेदिति । यत्र तु द्वयोर्दोषयोरुत्कर्षत्वं तत्र सद्वैद्येन स्वधिया कल्प्यम् । यथा वातपित्तयोरुत्कर्षे वायोर्योगवाहित्वात्तीक्ष्णः । एवं वातकफयोरुत्कर्षे मंदः । कफपित्तयोस्तूत्कर्षे आहारविशेषवशात्कदाचित्तीक्ष्णः कदाचिन्मंद इति ।

अग्निचातुर्विध्यमुक्त्वा तदाश्रयस्य कोष्ठस्य चातुर्विध्यं विवक्षुराह ।

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ।**

तैर्वातादिभिर्यथाक्रमं क्रूरमृदुमध्यलक्षणः कोष्ठो भवति । वातोत्कर्षेण क्रूरः । पित्तोत्कर्षेण मृदुः कफोत्कर्षेण मध्यः । समैः पुनरेतैर्हान्युत्कर्षवर्जितैर्मध्य एव कोष्ठः । क्रूरादीनां तु लक्षणं वमनविरेचनविधौ वक्ष्यति । ननु समैर्वातादिभिः कथं मध्यकोष्ठता स्यादिति । ब्रूमः । समानां वातादीनां मध्ये द्वयोर्वातपित्तयोः स्वंस्वं क्रूरकोष्ठत्वमृदुकोष्ठत्वलक्षणाख्यं च विरुद्धं कर्म युगपत्कर्तुं न घटते । तृतीयस्तु सम एव कफः सोऽनयोर्मध्ये मध्यमां वृत्तिमाश्रित्य स्थितो नैकेनापि सह विरुद्ध्यते । अत एव तत्कार्यं मध्यकोष्ठतालक्षणं ते वातपित्ते निषेद्धुं नैव घटेते । एवं च तेनावश्यमात्मीयं मध्यकोष्ठतालक्षणं कर्म कर्तव्यं च यतो वातकर्मणः क्रूरकोष्ठतालक्षणस्य विरुद्धेन च पित्तकर्मणो मृदुकोष्ठतालक्षणस्य । अतो मध्यकोष्ठतैव समैर्वातादिभिर्न्याय्या । इयांस्तु विशेषः । पूर्वो यो मध्यकोष्ठः सोऽवश्यं प्रमाणाधिकेन कफेन जन्यते । मध्यः स्यात्तैः समैरपीति समग्रहणलिंगात् । इतरस्तु मध्यकोष्ठः समदोषमध्यस्थितेन समेनैव स्वप्रमाणस्थितेन श्लेष्मणा भवतीत्यनया रीत्या हेतुभेदादन्यत्वम् । यथा क्रूरकोष्ठयोर्लक्षणभेदोऽपि दृश्यते । यथा । श्लेष्माधिकश्छर्द्यते हि दुःखं विरिच्यते मंदकफस्तु सम्यगिति । तदयमत्रार्थः श्लेष्माधिके मध्यकोष्ठे न सम्यग् विरेचित्वं समकफे तु मध्यकोष्ठे सुविरेचित्वमिति ।

इदानीं प्रकृतिस्वरूपं प्रस्तौति ।

**शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ॥ ९ ॥**
**तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ।**
**समधातुः समस्तासु श्रेष्ठा निंद्या द्विदोषजाः ॥१०॥**

तैश्च वातादिभिस्तिस्रः प्रकृतयः पृथग्भवेयुर्हीनमध्योत्तमाः । प्रकृतिः शरीरस्वरूपम् । शुक्रार्तवस्थैरिति शुक्रं पितुर्द्वित्रिबिंदुकावस्थं रेतः । ऋतौ भवमार्तवं मातुर्द्वित्रिबिंदुकावस्थं शोणितम् । शुक्रं चार्तवं च तत्र तिष्ठंतीति शुक्रार्तवस्थास्तैस्तथाविधैर्जन्मादौ गर्भाधानकाले जन्मप्रारंभे गर्भादावित्यर्थः । ननु च यदा वातादयोऽधिकाः शुक्रार्तवे तिष्ठंति तदा कुतः शरीरस्य निष्पत्तिर्भवतीति । ततश्च यो दोषाणामधिको भावः सैव विकृतिः । तत्कथं दोषा आधिक्यं प्राप्ताः प्रकृतेः कारणतामुत्सहंते । विकृतत्वान्न हि विकृतिः कदाचित्प्रकृतेः कारणमिति वक्तुं युज्यते । कारणसदृशेन च कार्येण भवितव्यमित्याशंक्य सपरिहारं दृष्टांतमाह । विषेणेव

विपक्त्रिमेरिति । यथा विषेणैव जीवितनाशहेतुनास्य विषक्रिमेर्जन्म प्रकृतिः संभवो दृश्यते । तथा एतैर्दूषणस्वभावैरपि हि प्रमाणाधिकैर्दोषैः शुक्रार्तवस्थैरेव जन्मादौ शरीरस्य निष्पत्तिर्भवतीति । वातोत्कर्षेण हीना । पित्तोत्कर्षेण मध्यमा । कफोत्कर्षेणोत्तमा । सर्वासु प्रकृतिषु मध्ये या समधातुः प्रकृतिः सा समा श्रेष्ठोत्तमा चतुर्थी । समा धातवो यस्याः । धातुशब्दो दोषपर्यायः । धारणाद्धातव इति वचनात् । या मिश्रदोषजास्तिस्रः प्रकृतयस्ता निंद्या गर्हणीया अनारोग्यास्पदत्वात् । वातपित्तजा वातश्लेष्मजा पित्तश्लेष्मजा इति ।

**तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।**

तत्रेति निर्धारणे । तत्र तेषु दोषेषु मध्येऽनिलो वायू रूक्षो लघुः शीतः खरोऽमृदुः सूक्ष्मः स्रोतःप्रचारित्वात् । चलो गमनशीलो नैकत्र तिष्ठतीति । नन्वनुष्णाशीतो वायुः काणादैः पठितः । इह योगवहानुज्ञानादनुष्णशीत एवेष्यत इति । योगवाहः परं वायुः संयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयादिति । तथा । पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेद् दाहः पित्तयुत इति । उच्यते । सत्यमेतदनुष्णशीत एव वायुः । तस्य योगवाहित्वेऽपि तावन्मात्राद्दाहोदयाच्छैत्यं स्वाभाविकं न विनश्यति । शीतगुणव्यावर्णने चेदं प्रयोजनमुष्णेनायमुपशाम्यति प्रतिपत्त्यर्थम् ।

**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥११॥**

सस्नेहमीषत्स्निग्धम् । सशब्द ईषदर्थे । यथा । सतिक्ता या सशर्करा । एवमीषत्स्नेहो यस्य तत्सस्नेहम् । तीक्ष्णं शीघ्रकारि मंदविपरीतं सूचीव भिनत्ति । उष्णं लघु । विस्रं दुर्गंधि मत्स्यामगंधि । सरं व्याप्तिशीलं सरणशीलमूर्ध्वाधः प्रवर्तते न स्थिरमास्ते शकृद्विस्रंसि द्रवं च ।

**स्निग्धः शीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।**

स्निग्धगुणयोगात्स्निग्धः शीतोऽनुष्णो गुरुर्लघुर्न भवति । मंदश्चिरकारी तीक्ष्णविपरीतः । श्लक्ष्णोऽपरुषः । मृत्स्नो मृद्यमानोंगुलिग्राही पिच्छिलगुणयुक्तः चकचकायमानः । स्थिरो व्याप्तिशीलः । एवं तद्गुणयोगाद्गुणगुणिनोरभेदोपचाराद्वातादयो गुणतो निर्दिष्टाः ।

एषां च मिश्रीभूतानां तंत्रव्यवहारार्थं संज्ञाद्वयमाह ।

**संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १२ ॥**

एतदुक्तं भवति । द्वयोः स्वप्रमाणाधिकयोः क्षीणयोर्वा संयोगः संसर्गः । त्रयाणां दोषाणां वृद्धानां वा संयोगः सन्निपातः ।

दोषानुक्त्वा धातव उच्यंते ।

**रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।**
**सप्त दूष्याः**

रसादयः सप्त धातुसंज्ञाः शरीरधारणाद्धातवस्ते च दूष्याः । वातादिभिर्दूष्यंत इति दूष्याः । यस्माद्वातादीनां दूषणस्वभावत्वाद्या दोषसंज्ञा सान्वर्थसंज्ञा । दूषयंतीति दोषाः । अतोऽवश्यं ते दूष्यमपेक्षंते । कर्म विना कर्तुः क्रियाया असंभवात् । कर्तारं विना कर्मणो न कर्मत्वम् । एवं दोषैर्विना रसादीनां दूष्यनाम न पतति । तैर्विनाऽपि वातादीनां दोषनाम । तस्मात्परस्परापेक्षत्वादनयोर्दूष्यदोषयोर्दूष्यत्वेन च संज्ञालाभः ।

**मला मूत्रशकृत्स्वेदादयोऽपि च ॥ १३ ॥**

शकृदादयो मला उच्यंते । अपिचेतिशब्दाद्दूष्याश्चेति । न केवलं रसादय एव दूष्या यावन्मलास्तेऽपि धात्वादिभिर्दूष्यंत इति । एवं च रसादीनां दूष्यसंज्ञा धातुसंज्ञा च । तथा विण्मूत्रादीनां मलसंज्ञा दूष्यसंज्ञा चेति दोषधातुमलनिर्देशेन देहो व्याख्यातः । तथा चोत्तरग्रंथे दोषधातुमला मूलं सदा देहस्येति ।

तस्य च देहस्य यथा संततं केनचिदुपायेन परिपालनं निष्पद्यते तमुपायं दर्शयितुमाह ।

**वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ।**

सर्वेषां दोषधातुमलादीनां शरीराश्रितानां समानैस्तुल्यसद्भावैर्वृद्धिः स्वप्रमाणाधिक्यम् । विपरीतैर्विशिष्टतया व्यवस्थितैर्विपर्ययः क्षयः । अयनमयोगतिर्विपरीता गतिर्विपर्ययोऽपचयः । सामान्यविशेषैर्द्रव्यगुणकर्मभेदेन त्रिप्रकारोऽधिगच्छति । तथा चाहुः । सर्वेषां सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः । भावैर्भवति भावानां विपरीतैर्विपर्ययः । द्रव्यतो यथोक्तम् । रक्तमापद्यते रक्तेन मांसं मांसेन पार्थिवम् । तथा । सलिलात्मकं पयस्तदात्मकमेव श्लेष्माणमभिवर्धयति । तद्वत्क्षीरजातं घृतं शुक्रं तथा जीवंतीकाकोल्यादयः सोमात्मानो द्रव्यविशेषाः सौम्यधात्वेककारणानि स्नेहबलपुंस्त्वौजांसि मरीचपंचकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन् संवर्धयंति । गुणतश्चोचमोचखर्जूराणि पार्थिवानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मकमभिवर्धयंति । स्निग्धगुरुशीतादिगुणसामान्यात् । कर्मापि द्विविधं कायवाङ्मनोव्यापारात्मकम् । तत्र कायिकानि धावनलंघनप्लवनादीनि चलत्वसामान्याद्वायोर्वृद्ध्यै । वाचिकानि भाष्याध्ययनगेयादीनि । मानसं मनोव्यापारश्चिंताकामशोकभयानि । तान्यपि मनसः क्षोभणहेतुत्वाद्वायोर्वृद्धिकराणि । तथा संतापकृत्त्वसामान्यात्क्रोधेर्ष्यादि पित्तस्य । स्वप्नालस्यशय्यासुखादीनि स्थैर्यसामान्यात्कफस्येति । विशेषस्तु क्षयाय । यथाह । द्रव्यतो गवेधुकान्नं कर्शनीयानां तत्र बाह्यात्मिकया गवेधुकया पार्थिवानां मांसादीनां कृशिमा क्रियते । तथा तैजसेन क्षारेण श्लेष्मणः । गुणतो यथा । आरनालमौदकं श्लेष्माणं तद्विपरीतैर्लघुरूक्षोष्णतीक्ष्णविशदगुणैः क्षपयति । कर्मतो निद्रालस्यसौमनस्यानि निष्परिस्पंदं वातमपरिस्पंदस्वभावतयाऽपचिन्वंति । तथा परिस्पंदरूपाश्रिताव्यवायव्यायामा मंदपरिस्पंदवैपरीत्यात्कफमिति ।

वर्णितमेव वृद्धिः समानैः क्षयो विपरीतैरिति । तौ तु वृद्धिक्षयौ यतो वाय्वादीनां भवतस्तत्प्रत्यायनार्थमाह ।

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४ ॥**
**षड् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ।**

स्वाद्वादयः षड्रसा रसनेंद्रियग्राह्यत्वाद्रसास्ते च रसा द्रव्यं पंचभूतात्मकमाश्रिता यथापूर्वं च बलावहाः । यो यः पूर्वो यथापूर्वं बलावहा बलप्रापकाः । बलमावहंति प्रापयंतीति यावत् । तस्मात्सर्वेभ्यो मधुरो रसः प्रकर्षेण देहिनां बलकरः । कषायस्तु सर्वेभ्यो जघन्यबलावहः । तत्र स्वादुर्मधुरो घृतगुडादिः । अम्लोम्लिकामातुलुंगादिः । लवणः सैंधवादिः । ऊषणः कटुको मरीचादिः । कषायो हरीतक्यादिः । स्वादुर्मधुरपर्यायः । ऊषणः कटुकपर्यायः। यथा त्र्यूषणं त्रिकटुकमुच्यते । कषाय एव कषायको यथा कटुरेव कटुकः । षडिति षडेव न न्यूनाः समा अधिका वा । यद्यपि ते रसा गुणाः स्वाद्वादिभेदतस्तथा संसर्गतस्तथाऽनुरसतस्तारतम्यपरिकल्पनावशतोऽपि भिद्यमानरूपा अपि षट्त्वं नातिवर्तंते ।

**तत्राद्या मारुतं घ्नंति त्रयस्तिक्तादयः कफम् ॥ १५॥**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।**

तत्र तेषु रसेषु मध्य आद्यास्त्रयः स्वाद्वम्ललवणा मारुतं घ्नंति शमयंति । अन्ये तु तिक्तोषणकषायास्तमेव चानिलं कुर्वते कोपयंति । तिक्तादयस्त्रयस्तिक्तोषणकषायाः कफं घ्नंति प्रशमयंति । अन्ये मधुराम्ललवणास्तमेव कफं कुर्वते । कषायतिक्तमधुराः पित्तं घ्नंति । अन्ये त्वम्ललवणकटुकास्तदेव पित्तं कुर्वते । तेनेदमुक्तंभवति । मधुरो वातपित्तघ्नः श्लेष्मकरः । अम्लो वातं हंति कफपित्ते जनयति । लवणो मारुतं हंति कफपित्ते तु कुरुते । तिक्तः कफपित्ते नाशयति वातं तु जनयति । ऊषणः कफं नाशयति वातपित्ते तु जनयति । कषायः कफपित्ते हंति वातं तु करोतीति ।

एषां च रसानामाश्रयो द्रव्यं तच्च त्रिप्रकारमित्याह ।

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ १६ ॥**

इत्यनेन प्रकारेण शमनादिभेदेन त्रिधा त्रिप्रकारं द्रव्यम् । अन्येन प्रकारेण द्विधाऽथवाऽनेकधा। इतिशब्दः प्रकारार्थेऽभिहितः। यत्तु पित्तादीन् दोषान् शमयति तच्छमनम् । यथा तैलं घृतं माक्षिकम् । तत्र तैलं स्नेहौदार्यगौरवयोगाद्वातं तद्विपरीतगुणं शमयति । सर्पिर्माधुर्यशैत्यमांद्यगुणयोगात्तद्विपरीतगुणं पित्तम् । मधु च रौक्ष्यतैक्ष्ण्यकषाययोगात्तद्विपरीतगुणं कफम् । यद्वातादीन् दोषान् रसादीन्धातून् मूत्रादीन्मलांश्च कोपयति तत्कोपनम् । यथा यवकपटलमाषमत्स्याममूलकसर्षपमंडकदधिकिलाटविरुद्धमत्स्यपयःप्रभृतिः । दोषादीनां मलपर्यंतानां स्वप्रमाणस्थितानां साम्यानुवृत्तिहेतुर्यद्द्रव्यं तत्स्वस्थेभ्यो हितम् । यच्च स्वास्थ्यानुवृत्तिं करोति । ऋतुचर्याध्याये सेव्यत्वेनोक्तम् । तथा मात्राशितीयाध्याये रक्तशालिषष्टिकयवगोधूमजांगलमांसजीवंतीशाकदिव्योदकक्षीरादि । तथा यदूर्जस्करं रसायनवाजीकरणं सर्वदा शीलनीयत्वेन निर्दिष्टम् ।

तस्य वीर्यमाह ।

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।**

तत्र तस्मिन् द्रव्ये वीर्यं द्विविधम् । विंशतेर्गुणानां मध्याद्वावुष्णशीतौ तदुत्कर्षाद्वीर्यमिति सर्वायुर्वेदप्रसिद्धौ द्वावेव गुणौ शीतोष्णौ वीर्यकरणहेतू । वीर्यं शक्तिः । उष्णगुणोत्कर्ष उष्णगुणातिशय एव कश्चिदुष्णवीर्याख्यां लभते । तथा शीतगुणोत्कर्षः शीतगुणातिशय एव शीतवीर्याख्याम् । यद्यपि नानागुणकमपि द्रव्यं तथाप्यग्नीषोमात्मकत्वाज्जगतो द्विधैव वीर्यम् ।

द्रव्यविपाकमाह ।

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः १७**

विपाकस्त्रिविधः सर्वद्रव्याणां परिणामकालभावी कार्यानुमेयो जाठराग्निसंबंधाद्रसस्य स्वरूपांतरप्रादुर्भावः । स त्रिधैव । रसषट्त्वेऽपि न षोढा। तेन किंचित्स्वादुपाकं किंचिदम्लविपाकं किंचित्कटुविपाकं द्रव्यम्। तत्र मधुरलवणयोर्मधुरो विपाकः । अम्लस्याम्लः । तिक्तकटुकषायाणां कटुकः । स च कार्यानुमेयः । तथा च वक्ष्यति । जाठरेणाग्निना योगाद्यदुदेति रसांतरम् । रसानां परिणामांते स विपाक इति स्मृतः । अत एव सोपसर्गः पाकशब्द उपात्तः । विशिष्टः पाको विपाको न पाकमात्रस्वरूपः । तथा च भट्टारकचरकमुनिः । रसो विपाके द्रव्याणां विपाकः कर्मनिष्ठया । वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते । एवं कर्मनिष्ठानुमित एकरूपावस्थो जाठराग्निसंयोगाद्यो रसानां रसांतरोद्भवः स एव विपाको न यो जाठराग्निसंयोगमात्राद्रसानामनेकावस्थः । प्राङ्मधुरोऽनंतरं स एव पच्यमानोऽम्लस्ततो विपच्यमानः स एव कटुविपाकः ।

द्रव्यस्य गुणानाह ।

**गुरुमंदहिमस्निग्धश्लक्ष्णसांद्रमृदुस्थिराः ।**
**गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः ॥१८॥**

तत्र द्रव्ये गुर्वादयो दश गुणाः सविपर्यया विंशतिर्ज्ञेयाः । एषां क्रमाद्विपरीता लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनसरस्थूलपिच्छिलाः । गुरुस्तद्विपर्ययो लघुः । मंदस्तद्विपर्ययस्तीक्ष्णः । हिमस्तद्विपर्यय उष्णः। स्निग्धस्तद्विपर्ययो रूक्षः। श्लक्ष्णस्तद्विपर्ययः खरः । सांद्रस्तद्विपर्ययो द्रवः । मृदुस्तद्विपर्ययः कठिनः । स्थिरस्तद्विपर्ययः सरः । सूक्ष्मस्तद्विपर्ययः स्थूलः । विशदस्तद्विपर्ययः पिच्छिलः ।

रोगकारणमाह ।

**कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः ।**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १९ ॥**

कालः शीतोष्णवर्षलक्षणस्त्रिविधः । अर्थाः शब्दस्पर्शरसरूपगंधा महाभूतगुणाः। तथा चागमः । अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः। कर्म क्रिया कायवाङ्मनश्चेष्टा । कालश्चार्थश्च कर्म च तानि कालार्थकर्माणि तेषां योगाः संबंधाः । कालार्थकर्मणां योगाः।किंभूताः हीनमिथ्यातिमात्रकास्तथा सम्यग्योगश्चेति। ये कालादीनां योगा हीनमिथ्यातिमात्रकास्ते रोगैककारणम् ।

तेषामेव यः सम्यग्योगः स आरोग्यैककारणं प्रधानकारणमिति । एकशब्दः प्रधानवचनो यथैकः पार्थो धनुर्धरः । कालस्य हीनयोगः स्वरूपहानिः । अतियोगः स्वरूपातिशयः । मिथ्यायोगः स्वरूपाद्वैपरीत्यम् । यथा हीनशीतता हीनौष्ण्यता हीनवर्षता हीनयोगे । यथाऽतिशैत्यमत्यौष्ण्यमतिवर्षणमतियोगे । यथा शीतकालावसरेऽत्यौष्ण्यमुष्णकालावसरे शीतं वर्षाकालेऽवृष्टिर्मिथ्यायोगे । यथा एतद्योगत्रयं रोगकारणम् । सम्यग्योगो यथास्वरूपस्थितिरारोग्यकारणम् । अर्थानां पुनः स्वेनस्वेनार्थेनेंद्रियस्य हीनः संयोगो हीनयोगः । अत्यंतसंयोगोऽतियोगः । पुरुषानभिमतादिनार्थजातेनेंद्रियस्य योगो मिथ्यायोगः । एते त्रयो रोगकारणम् । यथास्वं सम्यग्योग आरोग्यकारणम् । कायादिकर्मणो हीनप्रवृत्तिर्हीनयोगः । अतिप्रवृत्तिरतियोगः । वेगोदीरणादिकं सामिभुक्तभाषणाऽदिकं रागद्वेषादिकं यथास्वमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः । सर्वेषां समा प्रवृत्तिः समयोगः । तेन हीनादयो योगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ।

रोगारोग्ये कैरुच्यत इत्याह ।

**रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।**

दोषाणां वातादीनां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा रुजाकरत्वाद्रोग एव । वैषम्यं विषमता स्वरूपाच्यावः । ततः कार्यकारणयोरभेदेन पठितो रोग इति । दोषाणां साम्यं स्वरूपादप्रच्युतिः समभावोऽरोगताऽऽरोग्यं स्वास्थ्यमिति यावत् ।

**निजागंतुविभागेन तत्र रोगा द्विधा स्मृताः ।**

तत्र तयो रोगारोग्ययो रोगा द्विधा निजागंतुभेदेन । निजा वातादिदोषजन्मानः । आगंतवो बाह्यहेतवः । तथा चाचार्यवचनम् । निजास्त्रिदोषोत्था बाह्यहेतुजास्त्वागंतवः । अनयोरियान्विशेषः । निजे रोगे वातादयः पूर्वं वैषम्यं गत्वा पश्चाद्व्यथामभिनिर्वर्तयंति । आगंतवः पुनः पूर्वमेवोत्पद्यंते । अनंतरं तत्र वातादयः कुप्यंतीति । अनेनोभयस्य निजागंतुभेदभिन्नस्य व्याधेश्चेतःसंतापकत्वं बोद्धव्यम् ।

यत एवं देहमनसी रोगाधिष्ठानत्वेन स्थिते न केवलो देहो नापि केवलं मनस्तस्मादतोनंतरमिदमाह ।

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ॥ २० ॥**

तेषां निजागंतुकानां विकाराणां रोगाणां कायमनोभेदेन द्विविधमधिष्ठानं स्थानम् । ज्वरास्रपित्तकासादीनां कायो मदमूर्छासंन्यासग्रहभूतोन्मादापस्माररागद्वेषादीनां मनः । अधितिष्ठंत्यस्मिन्नित्यधिष्ठानम् । कायः शरीरम् । मनश्चेतः ।

ननु कायिकानां रोगाणामुत्पत्तौ हेतवो वातादयो दोषाः प्रकुपिता उक्ता मानसानां च रोगाणां को हेतुस्तदर्थमाह ।

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ।**

मनश्चेतस्तस्य रजस्तमसी दोषावुपप्लवावविद्यासंभवौ । अत्र च प्राधान्यादादौ रजो निक्षिप्तम् । चशब्दः पवनादीनामप्युपसंग्रहार्थः । यस्मात्तेऽपि मनः संश्रित्य विकुर्वते । समये हि षडुन्मादा भवंति वातपित्तकफसन्निपाताद्द्विविधनिमित्ता उदाहृता इत्युदाहरणमात्रमुद्देशमात्रं वचनमात्रमत्रायुर्वेदशास्त्रे । रजस्तमसोर्न साकल्येन व्याकरणमनिलादीनामिव । ते खल्वत्र स्वभावस्थानादिभिः प्रकारैरशेषमुक्ता न तु रजस्तमसी ।

रोगोपहतशरीरज्ञानोपायमाह ।

**दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् ॥ २१ ॥**

रोगोऽस्यास्तीति रोगी व्याधितः । तं दर्शनादिभिः परीक्षेत । दर्शनेन दृष्ट्या कासमेहाद्यार्तेषु पीतशुक्लवर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकम् । स्पर्शनेन हस्तकायस्पर्शेन ज्वरगुल्मविद्रध्याद्यार्तम् । तथा शीतोष्णस्तब्धस्पंदे श्लक्ष्णखरस्पर्शादिकं च । प्रश्नेन पृच्छया शूलारोचकच्छर्दिप्रदर्दत्वं सुच्छंददुश्छंदत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि चेत्यातुरमुखात्परीक्षेत ।

रोगविशेषाधिगमोपायमाह ।

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ।**

रोगं निदानादिभिः पंचभिः परीक्षेत । निदानं कारणं हेतुरित्यर्थांतरम् । तच्चासन्नविप्रकृष्टभेदेन द्विधा । आसन्नमपि द्विविधम् । आसन्नात्यासन्नभेदेन । आसन्नं रूक्षलघुशीतादिद्रव्योपयोगः । अत्यासन्नं तु यतः समनंतरमेव रोगोत्पत्तिः । यथा वातादयो दोषाः क्रुद्धाः । विप्रकृष्टं यदादिकाले ज्वरादीनां तथा हविःप्राशादि मेहकुष्ठादीनाम् । तेनैवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टमेवंविधश्चोत्पन्नोऽतो निदानाज्ज्ञायते रोगः । प्राग्रूपं पूर्वरूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठितस्य लक्षणमुद्बुभूषुर्ज्वरादिरामयो वातादिदोषविशेषेणालिंगितरूपाभासो येनावभासते । यथायथमल्पत्वाद्यदव्यक्तमस्फुटं लिंगं तत्प्राग्रूपम् । लक्षणं पुनस्तदेव प्राग्रूपाद्विलक्षणम् । येन सकलदोषविशेषालिंगितः स्फुटलिंगो व्याधिर्दृश्यते लक्ष्यते । उपशयः सुखानुबंध्याहाराद्युपयोगः । एवंविधेनाहारादिकेन हि तस्य पीडा नाभूदेवंविधेन चाभूदत उपशयाज्ज्ञायतेऽयं रोग इति । स व्याधिसात्म्यः स्वास्थ्यहेतुः सुखावहः । आप्तिर्निर्वृत्तिः संप्राप्तिरागतिर्जातिरित्यर्थांतरम् । एवं दुष्टेनैवं स्थानस्थितेनैवमनुगतेनानया कल्पनयैवंमार्गेण दोषेणेति परिकल्पनमत आप्त्या ज्ञायतेऽयं रोग इति ।

उपशयादिप्रसंगे च देशकालावप्युपयुज्येते । अतस्तावपि पठति ।

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ २२ ॥**

इहास्मिन्नायुर्वेदशास्त्र आचार्या द्विविधं द्विप्रकारं देशमाहुः कथयंति । भूमिभेदेन देहभेदेन च ।

देहदेशः शिरःपाण्यादिलक्षणः प्रसिद्धः । भूमिदेश उच्यते ।

**जांगलं वातभूयिष्ठमनूपं तु कफोल्बणम् ।**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ २३ ॥**

भूदेशं पुनस्त्रिधा त्रिप्रकारमादिशेत् । तत्र जांगलो देशोऽल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठो वातप्रचुरः । तत्र जातौषधिखगपुरुषमृगादयो वातप्रधाना भवंति । प्रचुरोदकवृक्षो यो निर्वातो दुर्लभातपः सोऽनूप इति । स च कफप्रधानः । तजाश्चौषध्यादयः स्निग्धा भवंति । साधारणः पुनरुभयलक्षणो मध्यपतितो व्यामिश्ररूपः । स च सममलो वातादिसमदोषः । अत्र दोषा एव मलशब्देनोक्ताः । वक्ष्यति हि । देहस्य मलिनीकरणादाहारमलत्वाच्च मलाः ।

भेषजस्य सम्यग्योगहेतुं कालमाह ।

**क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ।**

कालो द्विविधः क्षणादिलक्षणो व्याध्यवस्थालक्षणश्च भेषजसौषधस्य योगं करोति । तदर्थसंपादनसामर्थ्यं करोतीत्यर्थः । भेषजस्य योगो भेषजयोगः तं करोति । क्षणादिः प्रसिद्धः । आदिग्रहणाल्लवत्रुटिमुहूर्तयामाहोरात्रपक्षमासर्त्वयनसंवत्सराणां परिग्रहः । क्षणादिकालस्योदाहरणम् । यथा। पूर्वाह्णे वमनं देयं मध्याह्ने तु विरेचनम्। मध्याह्ने किंचिदावृत्ते बस्तिं दद्याद्विचक्षणः । व्याध्यवस्था सामनिराममृदुमध्यतीक्ष्णत्वात्तत्तद्योग्यौषधविसृष्टिः। यथा। लंघनं स्वेदनं कालो यवाग्वस्तिक्तको रसः । मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा । यथा । ज्वरपेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् । त्र्यहं वा षडहं युंज्याद्वीक्ष्य दोषबलाबलम् । यथा । मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्याऽपि भेषजं योजयेत्तदा । अस्यामवस्थायां दत्तमौषधमारोग्याय भवति ।

तच्चौषधं द्विप्रकारमाह ।

**शोधनं शमनं चेति समासादौषधं द्विधा ॥ २४ ॥**

समासात्संक्षेपतो यत्किंचिज्जगत्यौषधं संभवति तदनेकप्रकारं संभवदपि द्वैरूप्यानतिक्रमाच्छोधनशमनलक्षणात् द्विधेत्युक्तम् । एकं शोधनरूपमपरं शमनरूपमिति । शोधनं यत् कुपितान् दोषान् बहिर्निःसार्य रोगोपशमनं करोति । शमनं यत्स्वस्थानस्थितानामेव साम्यहेतुः ।

औषधमुक्तं तस्य विषयमाह ।

**शरीरजानां दोषाणां क्रमेण परमौषधम् ।**
**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥ २५ ॥**

शरीरजानां वातादीनां क्रमेण यथासंख्येन परिपाट्योद्देशनिर्देशेन परमौषधं प्रधानौषधं बस्त्यादिवमनांतं शोधनरूपं तैलादिमध्वंतं शमनरूपम् । तेन वातस्य बस्तिर्गुदप्रणिधेयस्नेहक्काथादि परमौषधम् । पित्तस्य विरेको मुखपीतं गुदमार्गेणांतःस्थितस्य निःसारणं परमौषधम् । कफस्य वमनं मुखेन पीतं तेनैव दोषस्य निःसारणं परमौषधमिति शोधनरूपेण दोषाणामौषधम् । तैलादि तु शमनस्वरूपेणौषधम् । तथेति क्रमेणैव । वातस्य तैलं पित्तस्य घृतं कफस्य माक्षिकं परमौषधम् । प्रधानमौषधमिति यावत् ।

कायादिदेशमाश्रित्य सर्वत्र सममेव शरीरजातानां दोषाणां क्रमेण परमौषधमुक्तमथ मानसयोर्दोषयोः किंतत्परमौषधं स्यादिति तदर्थमाह ।

**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ।**

मनोदोषयो रजस्तमसोः रोगविघ्नकारि धैर्यादिकं परमौषधम् । धीश्च धैर्यं चात्मादिविज्ञानं च तत्तथाविधम् । तत्र धीर्बुद्धिर्बाह्याध्यात्मिकानां भावानां हिताहितपरिच्छेदविभागकारिणी । धैर्यं धृतिश्चेतसः स्थिरत्वमचापलम् । येन प्रतिषिद्धेषु न प्रवर्तते हितेषु च न सीदति।आत्मविज्ञानं योगाभ्याससमाधिना परमात्मस्वरूपविज्ञानम् ।आदिग्रहणाज्ज्ञानविज्ञानस्मृतिदेशकालादीनां परिग्रहः। मनोदोषसमुत्थकामादिजरोगार्थः परशब्दो विशेषणत्वेन निर्दिष्टः ।

एवं तावदनेन सकलचिकित्सितमुक्तं तच्च पादचतुष्टययुक्तं कार्यकरं तदर्थमाह ।

**भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ॥२६॥**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ।**

चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमंगचतुष्टयमुक्तं प्रत्येकं तच्चतुर्गुणमेवं षोडशगुणं चिकित्सितं भेषजं भिषजो भाषंते । भिषग्वैद्यः । तस्य च प्राधान्यादग्रे निर्देशः । तथा चागमः । योक्ता प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु । तथा संग्रहेऽपि । यद्वैद्ये विगुणे पादा गुणवंतोऽप्यनर्थकाः । स पादहीनानप्यार्तान् गुणवान्यश्च यापयेत् । चिकित्सायास्तमेवातः प्रधानं कारणं विदुः । द्रव्याण्यौषधानि । उपस्थाता परिचारकः । रोगी आतुरः । एतत्पादचतुष्टयं निर्दिष्टमाचार्येण ।

तेषां गुणानाह ।

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ॥२७॥**

दक्षः कर्मणि चतुरः । तीर्थादुपाध्यायाद्विदितागमादात्तो गृहीतः शास्त्रार्थो येन स तीर्थात्तशास्त्रार्थ आगमप्राप्तशास्त्रस्वरूपः । बहुशो दृष्टं कर्म येन चिकित्सालक्षणं स दृष्टकर्माऽभ्यस्तकर्मा शतशश्चिकित्सितरोगः । शुचिः कायवाङ्मनोव्यापारैर्मलीमसैरपरामृष्टोऽलिप्सावानर्थोपजीविकाहेतोर्न करोति परं धर्मोपार्जनेनेति शुचिः ।

औषधमपि चतुर्विधम् ।

**बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम् ।**

बहवः कल्पा यस्मिन् भवंति स्वरसक्काथचूर्णाद्यास्तद्बहुकल्पं व्याधीनां निवारणक्षमं न तु लवणवदेककल्पम्। तद्धि सुखमुपयुज्यते । नानाशक्तयो हि सत्त्वाः । बहवो गुणा यस्य गुरुमंदादयस्तद्बहुगुणम् । अथवा यदनेकरोगविनाशनसमर्थम् । संपन्नं संपत्तियुक्तं न विपन्नं प्रशस्तभूमिदेशजातम् । तथा च ग्रंथः । धन्वसाधारणे देशे समे सम्रृत्तिके शुचौ। श्मशानचैत्यायतनश्वभ्रवल्मी-

कवर्जित इति । प्रशस्तभूमिदेशजातादिगुणयुक्तम् । अथवा पाकसंस्कारादियुक्तम् । योग्यं दातुं यद्यत्रार्हति तच्च योग्यम् । व्याधिदेशकालदोषदूष्यदेहवयोबलादीन् ज्ञात्वा युज्यते दीयत इति तद्योग्यं रोगस्य रोगिणश्च ।

उपस्थातापि चतुर्विधः ।

**अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ॥ २८ ॥**

अनुरक्तो दृढभक्त आतुरस्य । शुचिः कायवाङ्मनोव्यापारैर्दुष्टैरपरामृष्टः । दक्षः सर्वचेष्टासु चतुरः । बुद्धिमान् विशिष्टया बुद्ध्या युक्तः । प्रवीण इति यावत् ।

रोग्यपि चतुर्विधः ।

**आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ।**

आढ्यो धनवान् । भिषग्वश्यो वैद्यायत्तस्तदुक्तकारी । ज्ञापको निदानादीनामावेदको वैद्यं रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः । सत्त्ववान् धैर्ययुतो मोहवर्जितः । धैर्येण प्रायश्चित्तवच्चिकित्सां करोति । अपिः संभावनार्थे ।

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते ।

**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ॥ २९ ॥**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ।**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि ॥ ३० ॥**
**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ।**

सर्वौषधक्षमे देह उत्पन्नो व्याधिः सुखसाध्यः सुखोपायः । तथा च ग्रंथः । सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते । सर्वाण्यौषधानि यः क्षमते सहते तीक्ष्णमध्यमृदुरूपाणि नानादेशजानि शमनानि तथा शोधनरूपाणि तथा विषक्षारादीनि । यूनः वयस्थस्य तरुणस्येत्यर्थः । पुंसो न स्त्रियाः । पुंग्रहणं स्त्रीनिवृत्त्यर्थम् । यतस्तस्याः सर्वदा भीरुत्वमबुद्धिमत्त्वं चातो यथोक्तानुरूपगुणाभावः । सा तु यस्मात्तीक्ष्णोष्णौषधानि न सहते सौकुमार्यादियोगात् । जितात्मनोऽलोलुपस्य । जित आत्मा येन । विषयाभिलाषं परिहरतः । अमर्मगोऽमर्मस्थः । मर्माणि शिरोहृदयबस्तिप्रभृतीनि तेषु गच्छतीति मर्मगो न मर्मगोऽमर्मगो हृत्कंठादिपीडाकरणासमर्थः । अल्पहेत्वग्ररूपरूप इति । हेतुश्चाग्ररूपं च रूपं च तानि हेत्वग्ररूपरूपाण्यल्पानि हेत्वग्ररूपरूपाणि यस्य स तथाविधः । हेतुर्निदानम् । अग्ररूपं पूर्वरूपम् । रूपं लक्षणम् । एतान्यल्पानि यस्य । अनुपद्रव इति । न विद्यते उपद्रवो यस्योत्पन्नस्य व्याधेरनंतरं जायते योऽन्यो व्याधिर्न तल्लक्षणभूतोऽप्रधानो न यथास्वलक्षणस्तदुपक्रमनिरोधकः स उपद्रवः । तथा चागमः । व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमविघाती च स ह्युपद्रव उच्यते । अतुल्यदूष्यदेशर्तुप्रकृतिरिति । दूष्यश्च देशश्च ऋतुश्च प्रकृतिश्च ता दूष्यदेशर्तुप्रकृतयः । अतुल्या दूष्यदेशर्तुप्रकृतयो यस्य । अतुल्या न सदृशाः । यथा दूष्ये मेदोमज्जादावनूपदेशे शीतर्तावातुरो वातप्रकृतिस्तस्य कुपितं पित्तं सुखसाध्यमिति । अतुल्यदूष्यो यथा । श्लेष्मणा शीतेन रक्तमुष्णं दूषितम् । अतुल्यदेशो व्याधिर्यथा । अनूपदेशे पित्तसंभूतः । अतुल्यर्तुर्यथा । शरदि कफोद्भवः । अतुल्यप्रकृतिर्यथा । पित्तप्रकृतेः श्लेष्मोद्भवो व्याधिः । नन्वतुल्यदूष्यदेशर्तुप्रकृतित्वादसौ कृच्छ्रसाध्यो यथा वा प्राप्तो न सुखसाध्योऽनेकसुखोपक्रमसाध्यत्वात् । यतो दूष्यादीनामतुल्यत्वात्परस्परमन्य एवोपक्रमः । एकसुखोपक्रमः सुखसाध्यो व्याधिः । अत एव साध्ययाप्यपरित्याज्या मेहाः श्लेष्मपित्तवातोत्थाः समासमक्रियतया महात्ययवत्तयापि चेत्येवं निर्दिशति । अत्रोच्यते । तथा प्रभावत्वात्प्रमेहाख्यस्य व्याधेर्यदुतश्लेष्मप्रमेहः समक्रियत्वात्साध्यः । पित्तप्रमेहो विषमक्रियत्वाद्याप्यः । महात्ययत्वाच्च वातप्रमेहः प्रत्याख्येयः । किंचातुल्यदूष्यदेशर्तुप्रकृतित्वान्महारंभो निष्प्रत्यनीको व्याधिर्जायतेऽतोऽसौ न सुखसाध्यः । कुत्रचिद्व्याधौ तुल्यदूष्यादिरपि सुखसाध्यत्वेन ज्यायान् । तथा च ग्रंथः । ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः । पादसंपदि भिषगादीनां चतुर्णां पादानां संपत्समृद्धिस्तस्यां सत्यामंगचतुष्टये परिपूर्णे सति । ग्रहेष्वनुगुणेष्विति । ग्रहाः सूर्यादयस्तेष्वनुगुणेष्वनुकूलराशिस्थितेषु शोभनस्थानगतेषु सत्सु । एकदोषमार्ग इति । दोषश्च मार्गश्च दोषमार्गम् । एकं दोषमार्गं यस्य स तथोक्तः । दोषो वातादिः । मार्गस्त्रिविधः शाखादिर्वक्ष्यमाणो बाह्याभ्यंतरमध्यभेदेन । तेनैकेन वातादीनामन्यतमेन दोषेण यो जातो न द्वाभ्यां त्रिभिर्वा तथैकेनापि मार्गेण बाह्येन मध्येनाभ्यंतरेण वा जातो नवो न जरठः । अचिरोत्पन्न इत्यर्थः । यस्माद्वत्सरातीता व्याधयोऽसाध्याः । स तथाविधो व्याधिः सुखेन साध्यते । तथा च ग्रंथः । सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ।

कृच्छ्रसाध्यं व्याधिमाह ।

**शस्त्रादिसाधनः कृच्छ्रः संकरे च ततो गदः ॥ ३१ ॥**

यो गदो रोगः शस्त्रादिसाधनः शस्त्रादिभिः साध्यते स कृच्छ्रसाध्यः कृच्छ्रप्रतीकारो महद्भिरुपायैः साध्यते तथा चिरेण । तथा च ग्रंथः । कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च । आदिग्रहणेन क्षाराग्निकर्मविषलेपादयो गृह्यंते । तथा संकरे च ततः पूर्वोक्तात्साध्यलिंगात्संकीर्णत्वे सति यो गद उत्पन्नः सोऽपि कृच्छ्रसाध्यः । चशब्दः समुच्चये । ततस्तस्मादुक्तसाध्यलक्षणाद्यः संकरे द्वित्रिविपर्यये सति स्थितः । तथा च युवा आतुरः किंतु न विजितात्मा विजितात्मा वा । किंतु रोगो मर्मस्थानगः । सर्वौषधक्षमे देहे जातः किंतु वृद्धः । कदाचिद्युवा न सर्वौषधक्षमो देहः । एवमनया दिशा सर्वमप्यूह्यम् ।

याप्योऽत उच्यते ।

**शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ।**

बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः पथ्यैराहारविहारैर्याप्यो याप-

नीयो नासौ प्रत्याख्येयः। एतावानेवास्य प्रत्याख्येयाद्याधेर्विशेषो यदायुःशेषत्वं याप्यस्य व्याधेरायुःशेषमात्रं वर्जयित्वा यदन्यत्तत्सर्वं समानं प्रायेणास्य च प्रत्याख्येयस्य व्याधेः। कस्य विपर्यये सति। प्रकृतत्वात्सुखसाध्यस्य। पथ्यैराहारविहारैरभ्यसनमभ्यासः पुनःपुनः करणं तस्माद्धिताहारविहारसेवनाद्याप्यः। स च चिकित्सायामल्पं सुखं दत्वा पुनः सोऽल्पेनैव हेतुना प्रतायते। तथा च ग्रंथः। दत्वाल्पं सुखमल्पेन हेतुना स प्रतायते। याति नाशेषतो रोगः कर्मजो नियतायुषः। प्रपतन्निव विष्कंभैर्धार्यस्तत्रातुरो हितैः।

प्रत्याख्येय उच्यते।

**अनुपक्रम एव स्यात्स्थितोऽत्यंतविपर्यये॥ ३२॥**
**औत्सुक्यमोहारतिकृद्दृष्टरिष्टोऽक्षनाशनः।**

न विद्यत उपक्रमः प्रतीकारो यस्य सोऽनुपक्रमोऽचिकित्स्यः। प्रत्याख्येय इति यावत्। कोऽसावनुपक्रमो योऽत्यंतविपर्यये स्थितः। योऽर्थाद्याप्यलक्षणादवशिष्टायुःशेषरूपादत्यंतविपर्यये स्थितः सर्वक्रियापथातिक्रांतो मज्जाशुक्रादिगंभीरधातुगतो मर्मसंधिसमाश्रितः सोऽनुपक्रम एवाचिकित्स्यः। साधयितुमशक्यत्वात्। तथौत्सुक्यादिकृदपि। औत्सुक्यं च मोहश्चारतिश्च ताः करोतीत्यौत्सुक्यमोहारतिकृत्। औत्सुक्यं गर्वादिविषयोत्कंठा। मोहो वैचित्यं चित्तनाशोऽज्ञानम्। अरतिरसुखं न कुत्रचिदवस्थितिः स्थानासनादिष्वनिर्वृतिश्चेतसः। एतावतो यः करोति सोऽनुपक्रमः। तथा दृष्टरिष्टोऽक्षनाशनः दृष्टं रिष्टं मरणचिह्नं यस्मिन् स दृष्टरिष्टः। तथाऽक्षनाशन इति। अक्षाणींद्रियाण्युच्यंते। चक्षुरादीन्यपि नाशयति सोऽक्षनाशन इंद्रियोपरोधी रोगोऽनुपक्रमो यः शीघ्रमिंद्रियविघातकृत्। एवं पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथाऽवश्यं स्वार्थादिहानिमवाप्नुयाद्वैद्यः। तथा च ग्रंथः। व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्।

साध्यलक्षणयुक्तोऽप्यातुरो नोपक्रमणीय इति दर्शयति।

**त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम्॥ ३३॥**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम्।**
**चंडं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम्॥ ३४॥**

एवंविधमार्तमातुरमुपक्रम्यमपि त्यजेत्परिहरेत्। भिषग्भूपैर्द्विष्टं भिषग्भिस्तथा भूपै राजभिर्द्विष्टम्। वैद्या राजानश्च यं द्विषंति। तथा तेषां द्विषं शत्रुं भिषग्भूपान्यो द्वेष्टि तमपि त्यजेत्। द्विषं शत्रुं चात्मनः। हीनोपकरणमिति। उपकरणविकलं हीनचिकित्सांगम्। व्यग्रं कार्यबहुलमन्यकार्यापेक्षिणं कार्यांतरासक्तचेतसम्। अविधेयं भिषजः। तदाज्ञां यो न करोति तमपि त्यजेत्। गतायुषं परिक्षीणजीवितम्। चंडं सहसापकारकरणबुद्धिं क्रूरकर्माणम्। शोकातुरं स्त्र्यादिविरहोत्थेन शोकेन शुचार्तम्। भीरुं सभयम्। कृतघ्नं यः कृतोपकारोप्यपकारं करोति। वैद्यमानिनं अवैद्योपि यो वैद्यमिवात्मानं मन्यते नैवौषधं करोति मूढस्तमपि त्यजेत्।

एवंच प्रथमेऽध्याये सकलतंत्रार्णवस्य तात्पर्यं व्याख्यातमनंतरं सुखस्मरणार्थमध्यायनामसंग्रह उच्यते।

**तंत्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः।**

तंत्र्यंते धार्यंतेऽनेनायुर्वेदार्था इति तंत्रम्। अध्यायानां संग्रहः संक्षेप एकत्रराशीकरणमतोऽनंतरं सुखस्मरणाय मया वक्ष्यते।

**आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः॥ ३५॥**
**अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः।**
**दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमः॥ ३६॥**
**शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम्।**
**धूमगंडूषदृक्सेकतृप्तियंत्रकशस्त्रकम्॥ ३७॥**
**शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः।**
**सूत्रस्थानमिमेऽध्यायास्त्रिंशत् शारीरमुच्यते॥३८॥**

इमे पूर्वोक्तास्त्रिंशदध्यायाः सूत्रस्थानमुक्तम्। आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनं च द्रवश्चेति द्वंद्वः। ईहा चर्या चेष्टेत्येकोऽर्थः। तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयोऽन्नस्वरूपविज्ञानीयोऽन्नसंरक्षामात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयो दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधोपक्रमणीयः शोधनादिगणसंग्रहः स्नेहविधिः स्वेदविधिर्वमनविरेचनविधिर्बस्तिविधिर्नस्यविधिर्धूमविधिर्गंडूषविधिराश्चोतनांजनविधिस्तर्पणपुटपाकविधिर्यंत्रविधिः शस्त्रविधिः शिराव्यधविधिः शल्याहरणविधिः शस्त्रकर्मविधिः क्षाराग्निकर्मविधिः। सूचनात्सूत्रम्। सूच्यतेऽनेन सकलस्तंत्रार्थ इति सूत्रस्थानं सकलस्य तंत्रस्य शिरःस्थानीयम्। अधुना शारीरमुच्यते। शारीरं शारीरस्थानमुच्यते। किंस्थानमध्यायसंग्रहः।

के पुनस्ते।

**गर्भावक्रांति तद्व्यापदंगमर्मविभागिकम्।**
**विकृतिर्दूतजं षष्ठम्**

तत्र गर्भावक्रांतिशारीरम्। तस्य व्यापत्। तस्येति गर्भपरामर्शः। गर्भव्यापच्छारीरम्। अंगविभागं शारीरम्। मर्मविभागं शारीरम्। विकृतिविज्ञानं शारीरम्। दूतविज्ञानीयं शारीरम्। एवमेते षडध्यायाः शारीरस्थानम्।

निदानमुच्यते।

**निदानं सार्वरोगिकम्॥ ३९॥**
**ज्वरासृक्क्श्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम्।**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च॥ ४०॥**
**पांडुकुष्ठानिलार्तानां वातास्रस्य च षोडश।**

सर्वरोगनिदानम्। ज्वरनिदानम्। रक्तपित्तकासनिदानम्।

श्वासहिक्कानिदानम् । राजयक्ष्मादिनिदानम् । मदात्ययादिनिदानम् । अर्शोनिदानम् । अतिसारग्रहणीदोषनिदानम् । मूत्राघातनिदानम् । प्रमेहनिदानम् । विद्रधिवृद्धिगुल्मनिदानम् । उदरनिदानम् । पांडुशोफविसर्पनिदानम् । कुष्ठश्वित्रकृमिनिदानम् । वातव्याधिनिदानम् । वातशोणितनिदानम् । इत्येवं षोडशाध्याया निदानस्थानम् ।

चिकित्सितमुच्यते ।

**चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ४१**
**वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते ।**
**विद्रधौ गुल्मजठरपांडुशोफविसर्पिषु ॥ ४२ ॥**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ।**
**द्वाविंशतिरिमेऽध्यायाः कल्पसिद्धिरतःपरम् ॥४३॥**

चिकित्सितस्थानं द्वाविंशतिरध्यायाः । ज्वरचिकित्सितम् । रक्तपित्तचिकित्सितम् । कासचिकित्सितम् । श्वासहिक्काचिकित्सितम् । राजयक्ष्मचिकित्सितम् । छर्दिहृद्रोगतृष्णाचिकित्सितम् । मदात्ययचिकित्सितम् । अर्शश्चिकित्सितम् । अतीसारचिकित्सितम् । ग्रहणीचिकित्सितम् । मूत्राघातचिकित्सितम् । प्रमेहचिकित्सितम् । विद्रधिवृद्धिचिकित्सितम् । गुल्मचिकित्सितम् । उदरचिकित्सितम् । पांडुरोगचिकित्सितम् । श्वयथुचिकित्सितम् । विसर्पचिकित्सितम् । कुष्ठचिकित्सितम् । श्वित्रकृमिचिकित्सितम् । वातव्याधिचिकित्सितम् । वातशोणितचिकित्सितम् । इमे द्वाविंशतिरध्यायाश्चिकित्सितस्थानम् । अत ऊर्ध्वं कल्पस्थानम् ।

**कल्पो वमविरेकस्य तत्सिद्धिर्बस्तिकल्पना ।**
**सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पोऽत उत्तरम् ॥४४॥**

अत्र कल्पे वमनकल्पः । विरेचनकल्पः । वमनविरेचनव्यापत्सिद्धिः । बस्तिकल्पः । बस्तिव्यापत्सिद्धिः । षष्ठो भेषजकल्पः । इत्येवं षडध्यायाः कल्पसिद्धिस्थानम् ।

अत उत्तरं अतोऽस्मात्कल्पसिद्धिस्थानादूर्ध्वमुत्तरतंत्रम् ।

**बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ ।**
**उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु संधिषु ॥४५**
**दृक्तमोलिंगनाशेषु त्रयो द्वौ द्वौ च सर्वगौ ।**
**कर्णनासामुखशिरोव्रणे भग्ने भगंदरे ॥ ४६ ॥**
**ग्रंथ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ।**
**विषे भुजंगे कीटेषु मूषकेषु रसायने ॥ ४७ ॥**
**चत्वारिंशोऽनपत्यानामध्यायो वीजपोषणः ।**

बालोपचरणीयः । बालामयप्रतिषेधः । बालग्रहप्रतिषेधः । भूतविज्ञानीयः । भूतप्रतिषेधः । उन्मादप्रतिषेधः । अपस्मारप्रतिषेधः । वर्त्मरोगविज्ञानीयः । वर्त्मरोगप्रतिषेधः । संधिसितरोगविज्ञानीयः । संधिसितासितप्रतिषेधः । दृष्टिरोगविज्ञानीयः । तिमिरप्रतिषेधः । लिंगनाशप्रतिषेधः । सर्वाक्षिरोगविज्ञानीयः । सर्वाक्षिरोगप्रतिषेधः । कर्णरोगविज्ञानीयः । कर्णरोगप्रतिषेधः । नासारोगवि० । नासारोगप्र० । मुखरोगवि० । मुखरोगप्र० । शिरोरोगविज्ञा० । शिरोरोगप्र० । व्रणविज्ञा० । सद्योव्रणप्रति० । भंगप्रति० । भगंदरप्रति० । ग्रंथ्यर्बुदश्लीपदादिवि० । ग्रंथ्यादिप्रति० । क्षुद्ररोगवि० । क्षुद्ररोगप्र० । गुह्यरोगवि० । गुह्यरोगप्रति० । विषप्रति० । सर्पविषप्र० । कीटलूतादिप्र० । मूषिकालर्कविषप्र० । रसायनाध्यायः । वाजीकरणाध्यायः । इति । एवमेते चत्वारिंशदध्याया उत्तरतंत्रम् । तदिति बालस्य परामर्शः । द्वौद्वाविति । वर्त्मनि द्वौ संधौ द्वौ यथासंख्येन । त्रय इति । दृक्तमोलिंगनाशेषु प्रत्येकमेकैकः । ग्रंथ्यादिक्षुद्ररोगगुह्यरोगेषु पृथग्द्वयं प्रत्येकं द्वौ द्वौ । अनपत्यानामप्रजानां पुंसां चत्वारिंशोऽध्यायो बीजपोषणः शुक्रवृद्धिहेतुरिति ।

**इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥ ४८ ॥**

इत्येवमनेन प्रकारेण सविंशमध्यायशतं षड्भिः स्थानैः सूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतंत्रैरुदीरितमिति भटः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां सूत्रस्थान आयुष्कामीयोऽध्यायः प्रथमः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

### अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥

अथेति सर्वेष्वध्यायेषु मंगलार्थः । मांगलिको ह्याचार्यः प्रत्यध्यायारंभे मंगलार्थमथशब्दं प्रयुंक्ते । दिने दिने चर्या दिनचर्या । दिनस्य वा चर्या दिनचर्या । चरणं चर्या । उभयलोकहितमाहारचेष्टितं प्रतिदिने यत्कर्तव्यं तमध्यायं व्याख्यास्यामः । प्रस्तुतादायुष्कामीयादध्यायादनंतरं कोऽस्य संबंधः । उच्यते । यस्मादायुष्कामेण पुरुषेण यत्प्रधानमायुष्यं तदासेव्यं प्रथमतस्तदन्यान्यानि यान्यायुष्याणि । अतः प्रथमं तावदाचारप्रधानेन भवितव्यम् । यत आचारादायुर्लभ्यत इत्याचार्याः । यद्यप्यत्र रात्रिचर्याऽपि विहिता तथाऽपि प्राधान्याद्दिनचर्याऽस्मिन्नध्याये निर्दिष्टा । अतो दिनचर्याध्यायोऽयमुच्यते ।

अस्मिंस्तंत्रे आयुःपालनं प्रकृतम् । तद्द्विविधम् । स्वस्थवृत्तमातुरवृत्तं च । तत्र मंगल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते ।

**ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः ।**

रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तो विषुवति समरात्रिंदिवेकाले द्विघटिकालक्षणः । मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्वात्सर्वस्मिन् काले रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम् । स्वस्थो नीरोगः कल्पः स आयुषो यथोपचरितस्य जीवितस्य । रक्षार्थं ब्राह्मे मुहूर्ते उत्तिष्ठेदभ्युत्थानं कुर्यात् । मुहूर्तो नाडिका-

द्वयम्। ब्रह्म ज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्तो ब्राह्मः पश्चिमयामस्तस्य नाडिकाद्वयं तस्मिन् ब्राह्मे मुहूर्ते उत्तिष्ठेत्। किंभूतः। स्वथोऽनातुरः। समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेंद्रियमनाः स्वस्थ इत्यभिधीयत इति स्वस्थलक्षणम्। किमर्थमुत्तिष्ठेत्। रक्षार्थमायुषो जीवितस्य। तदा ह्युत्तिष्ठतो व्याध्यलक्ष्म्याद्यभाव एवायुषो रक्षा भवति। आतुरेण धातुसाम्यार्थं स्वप्तव्यमेव।

**शरीरचिंतां निर्वर्त्य कृतशौचविधिस्ततः॥ १॥**
**अर्कन्यग्रोधखदिरकरंजककुभादिकम्।**
**प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम्॥ २॥**
**भक्षयेद्दंतधवनं दंतमांसान्यबाधयन्।**

शरीरस्य चिंता शरीरचिंता जीर्णाजीर्णनिरूपणादिका तां निर्वर्त्य ततो मूत्रपुरीषादेः कृतशौचविधानस्ततोऽनंतरं दंतधावनमर्कादिकं भक्षयेत्। संग्रहेऽप्युक्तम्। ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन्नित्यादि। अर्कः सूर्याह्वः। न्यग्रोधो यक्षावासः। खदिरो गायत्री। करंजश्चिरिबिल्वः। ककुभोऽर्जुनः। आदिग्रहणेन मालतीकरवीरादिग्रहः। कथं भक्षयेत्। दंतानां मांसान्यबाधयन्नपीडयन्। प्रातः प्रत्युषसि भुक्त्वा चाहारं भक्षयित्वा। मृद्वग्रं कूर्चिताग्रम्। तथा कषायकटुतिक्तकम्। रसत्रयेण ह्यनेन मुखवैशद्यारोचकश्लेष्मापनयाः सम्यक् संपद्यंते। अर्काद्युपादानादेव कषयादित्वे लब्धे कषायादिग्रहणं संग्रहादिगृहीतस्य संग्रहार्थं स्पष्टार्थं च। अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम्। संक्षेपविवक्षया न दंतधावनस्य गुणसंग्रहः। द्वादशाद्यंगुलप्रमाणत्वं श्लेष्मातकाद्यनिष्टदंतधावननिषेधश्च तंत्रांतरोक्तमपि नेहोक्तम्। सुश्रुतेनोक्तम्। अजग्धमनुपक्लिष्टं षडष्टद्वादशांगुलम्। प्रदेशिनीमुखसमं मृदुः स्याद्दंतधावनम्।

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती॥ ३॥**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत्।**

अजीर्णादीनां द्वंद्वः। एतानि विद्यंते यस्येत्यत इनिठनाविति इनिः। एवं तृष्णास्येत्यादौ द्वंद्वादिनिश्च। तद्दंतपवनमजीर्णी न भक्षयेत्। एवं वमथ्वादीनां मत्वर्थीयांतानां संबंधो योज्यः।

**सौवीरमंजनं नित्यं हितमक्ष्णोस्ततो भजेत्॥ ४॥**

ततो दंतधावनभक्षणानंतरं सौवीराख्यमंजनं भजेत्। कस्माद् यतो हितमक्ष्णोः।

**चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम्।**
**योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थं रसांजनम्॥ ५॥**

अस्मात्कारणात्स्रावणार्थे सप्तरात्रे सति रसांजनं दार्वीक्वाथसमुद्भवाख्यं योजयेत्। यस्माच्चक्षुस्तेजोमयमाग्नेयम्। यद्यपि पंचमहाभूतात्मकं सर्वमपि तथापि बाहुल्येन व्यपदेशात्तेजोमयमुच्यते। अत एव तद्रूपाण्यालोचयति। तथाच लोके कश्चिदाह। नरपतिरेतीति न चासौ नराणामेव पतिः किंतर्हि नारीणामपीति। तस्य चक्षुषो वातपित्ताभ्यामपि भयमस्ति विशेषेण तु कफाद्भयं ततो रसांजनं योजयेत्।

**ततो नावनगंडूषधूमतांबूलभाग्भवेत्।**

नावनादीनां नस्यादिविधिषु गुणा वक्ष्यमाणा विधानं च। तांबूलस्य तु वैशद्यारुचिहरत्वसौगंध्यादिगुणाः प्रसिद्धा एव। नावनादीनां तांबूलांतानां द्वंद्वः। ततोऽजनादनंतरं नावनगंडूषधूमतांबूलानि भजते यः स एवंविधो भवेत्। भजो ण्विरिति ण्विः।

येषां तु तांबूलमपथ्यं तानाह।

**तांबूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्॥ ६॥**
**विषमूर्छामदार्तानामपथ्यं शोषिणामपि।**

क्षतं विद्यते येषां ते क्षताः। अर्शआदित्वादच्। एवं पित्तास्राः। उत्कुपितमभिष्यन्न चक्षुरेकं द्वे वा येषां ते। ये च क्षताश्च पित्तास्राश्च रूक्षाश्चोत्कुपितचक्षुषश्च तेषामपथ्यमहितम्। तथा विषार्तानां मूर्छार्तानां मदार्तानां शोषिणां चेत्यपिशब्दस्यार्थः। शोषिणो राजयक्ष्मिणः।

तदेतत्सर्वं विधाय भोजनासन्ने कालेऽभ्यंग आचरणीय इत्याह।

**अभ्यंगमाचरेन्नित्यं स जराश्रमवातहा॥ ७॥**
**दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्।**

अभ्यंगं नित्यं सततमाचरेत्। नित्यग्रहणं चोपलक्षणार्थम्। एकद्वित्रिदिनांतरमपि यथोचितमाचरतोऽपि न दोषः। सोऽभ्यंग आचर्यमाणो जरा च श्रमश्च वातश्च तान् हंतीति क्विप्। तथा दृष्टीत्यादि। दृष्टेः प्रसादो वैमल्यं दृष्टिप्रसादः। शोभना चासौ त्वक् तस्या भावः सुत्वक्त्वम्। दृढस्य भावो दार्ढ्यम्। दृढादिभ्यः ष्यञ्। दृष्टिप्रसादादीनां द्वंद्वः। तानि करोति योऽभ्यंगः स एवम्।

**शिरःश्रवणपादेषु तं विशेषेण शीलयेत्॥ ८॥**

तमभ्यंगं शिरःश्रवणपादेषु विशेषेणातिशयेन शीलयेदभ्यसेदिति वचनाचावश्यं न तथा सर्वशरीरेऽभ्यंगः कार्यो यथैतेषु शिरःश्रवणपादेषु। अत्र च पूर्ववदेकत्वाभावः।

अथैतदपवादमाह।

**वर्ज्योऽभ्यंगः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः।**

अभ्यंगो वर्ज्यो वर्जनीयः। कफग्रस्तेन कृतसंशुद्धिनाऽजीर्णिना च।

**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः॥ ९॥**
**विभक्तघनगात्रत्वं व्यायामादुपजायते।**

शरीरायासजननं कर्म व्यायामः। तस्मात्पंच गुणा लाघवादयो निष्पद्यंते। विभक्तानि विभागेन स्थितानि घनानि गात्राणि यस्य स विभक्तघनगात्रस्तस्य भावस्तत्त्वमिति।

इदानीं येनासौ न कार्यस्तं दर्शयति ।

**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् १०**

वातपित्तामयी बाल आषोडशाद्वर्षाद् वृद्धः सप्ततेरूर्ध्वमजीर्णी च तं जह्यात् ।

**अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ।**

तुरवधारणे । बलवद्भिः पुरुषैः स्निग्धभोजिभिरर्धशक्त्यैव निषेव्यो व्यायामः । प्राक् श्रमाद्व्यायामवर्जनं कार्यमित्यर्थः ।

कदासौ विधातव्य इत्याह ।

**शीतकाले वसंते च मंदमेव ततोऽन्यदा ॥ ११ ॥**

हेमंते शिशिरे वसंते च सेव्यः । शीतवसंताभ्यामन्यदा मंदमेव सेव्यः । मंदमिति क्रियाविशेषणम् । क्रियाविशेषणानां कर्मत्वं नपुंसकलिंगता च वक्तव्येति ।

**तं कृत्वाऽनु सुखं देहं मर्दयेच्च समंततः ।**

तं व्यायामं कृत्वा अनु सुखं यथा शरीरे बाधा न स्यात्तथा देहं मर्दयेत् । समंततः परितः ।

**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ॥ १२ ॥**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ।**

अतिव्यायामतस्तृष्णादयो भवंति । तृष्णेति पृथक् पदम् । तेन तृष्णादीनां पदानामकृतसमासानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषां चातिव्यायामो व्यापद्द्योतनार्थः ।

अतिव्यायामप्रसंगेनातिजागरादीनामपि व्यापदो दर्शयति ।

**व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् १३**
**गजं सिंह इवाकर्षन् भजन्नतिविनश्यति ।**

व्यायामादीनां भाष्यांतानां द्वंद्वः । तान्यादिर्यस्य साहसस्य धनुराकर्षणादेस्तदेवम् । अयथाबलमारंभः साहसं तद्भजन्सेवमानो विनश्यति । क इव । सिंह इव गजमतिमहावर्ष्माणमाकर्षन्नाक्रामन्यथा विनश्यति तथाऽयथा बलमारंभेण व्यायामादिना नरो मार्यत इति ।

**उद्वर्तनं कफहरं मेदसः प्रविलापनम् ॥ १४ ॥**
**स्थिरीकरणमंगानां त्वक्प्रसादकरं परम् ।**

उद्वर्तनस्य कफहरादयश्चत्वारो गुणाः ।

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ॥ १५ ॥**
**कंडूमलश्रमस्वेदतंद्रातृड्दाहपाप्मजित् ।**

स्नानं दीपनं वृष्यमायुष्यं च भवति । ऊर्जा उत्साहः । बलं प्राणनम् । एते प्रददाति करोति यत्तदेवम् । कंड्वित्यादि । कंड्वादीनां द्वंद्वः । एतान् जयति । स्नानस्य प्रभावादायुष्यत्ववृष्यत्वदीपनत्वानि बोद्धव्यानि । अथवा स्नानेन प्रहर्षो भवति । हर्षणत्वाच्च वृष्यत्वम् । तथा च वक्ष्यति । यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यत इति । यथा स्नानं जाठराग्नेर्बहिर्निर्गतानि रोमकूपाश्रितान्यर्चींषि रुद्ध्वांऽतर्नयति ततश्चाग्नेः प्रबलत्वं कुर्वद् दीपनं संपद्यते । यथा शीतकाले शीतानिलस्पर्शसंरुद्धस्य जाठराग्नेः प्रबलत्वम् । बालादित्यस्तु व्याचक्षिष्ट । स्नानेन भ्राजकाख्यं त्वगाश्रितं पित्तमंतः प्रविशदूष्माणं संवर्धयति तेन तद्दीपनम् । अत एव परिषेके जलमुष्णमिष्यते । यस्माच्छीतं निर्वापयति तेजो न देहस्यांतः प्रवेशयति । शीतकाले यच्छीतानिलस्पर्शसंरुद्धस्याग्नेः प्रबलत्वं तत्काल एव तस्मिन् कालस्वाभाव्यादिति बोद्धव्यम् । तथा चान्यर्तौ शीते सति मंदाग्नित्वमेव दृश्यते । यथा वर्षास्वग्निमांद्यादेवांतर्बहिर्वह्निसंधुक्षणं भोजनं समुपदिष्टम् । तथा च मुनिः । व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि । विशेषशीत इत्यादि ।

**उष्णांबुनाधःकायस्य परिषेको बलावहः ॥ १६ ॥**
**तेनैव चोत्तमांगस्य बलहृत्केशचक्षुषाम् ।**

उष्णांबुनाऽधःकायस्य परिषेको बलावहः प्राणकृत् । तेनैवोष्णोदकेनैवोत्तमांगस्य शिरसः परिषेको विधीयमानः केशचक्षुषां बलहृत् । प्राण्यंगानां समाहार एव द्वंद्व इत्यस्य प्रायिकत्वात्केशचक्षुषामित्युपपन्नमेव ।

स्नानं येषामपथ्यं तान् दर्शयितुमाह ।

**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ १७ ॥**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।**

नेत्रे चास्यं च कर्णौ च तत्र रोगाः । अर्दितं च नेत्रास्यकर्णरोगाश्चातिसारश्च ते विद्यंते येषां त एवम् । अर्दितेषु गर्हितमहितम् । एवं शेषेषु योज्यम् । आर्दितादीनां द्वंद्वस्ततो मतुप् । तेनाध्मानादिमत्सु गर्हितमिति योज्यम् । एवं शेषेष्वपि ।

**जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ॥ १८ ॥**
**न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ।**

जीर्णे सम्यक्परिणते पूर्वक आहारमद्याद्भुंजीत । किमद्यात् । हितं पथ्यम् । मितं मात्रया युक्तम् । पथ्यमपि ह्यतिमात्रं वा भुक्तं दोषाय स्यादतो मितम् । न वेगानित्यादि । वातविण्मूत्रादीनां संबंधिनो वेगानुन्मुखीभूतानपि बलान्नेरयेन्न प्रवर्तयेत् । न वेगित इत्यादि । संजातवातविण्मूत्रवेगस्तमकृत्वा नान्यकार्यः स्यात् । नान्यत्कार्यं कुर्यादित्यर्थः । नाजित्वेत्यादि । साधयितुं शक्यः साध्यस्तं रोगमजित्वा नान्यकार्यः स्यादिति योज्यम् । स ह्युपेक्षितो दुःसाध्योऽसाध्यो वा स्यात् । साध्यशब्दोपादानादसाध्यामयप्रतिपन्नो न कार्यश्चिकित्सानैष्फल्यादिति द्योतयति ।

**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥ १९ ॥**
**सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।**

सर्वभूतानामशेषप्राणिनां यस्मात्सुखार्थाः प्रवृत्तयः कर्माणि

मता अभिप्रेताः। सुखं च शर्माख्यं धर्माद्विना न भवति तस्मात्कारणाद्धर्मपरो धर्मप्रधानः स्यात्। धर्मादिति पृथग्विनेति पंचमी।

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः॥ २०॥**

कल्याणे शुभकर्मणि मित्राणि सहाया उपदेशादिना कल्याणमित्राणि तानि भक्त्या अदंभमतिः सन् भजेत्। इतराणि कल्याणमित्रापेक्षयेतराणि पापमित्राणि तेभ्यो दूरगस्तद्वर्जनपरः। तत्संगो हि दृष्टादृष्टानर्थकरः। दूरग इत्यस्माद्दूरे स्थितः।

**हिंसास्तेयान्यथाकामं पैशून्यं परुषानृते।**
**संभिन्नालापव्यापादमभिध्यादृग्विपर्ययम्॥ २१॥**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत्।**

हिंसा प्राण्युपघातः। स्तेयं चौर्यम्। अन्यथाकामो निषिद्धकामसेवा गुरुदारगमनादि। एतत्त्रिविधं कायिकं पापं कर्म। पैशून्यं परेषां भेदकृद्वचनम्। परुषमम्रुदुवचनम्। अनृतमसत्यवचनम्। संभिन्नालापोऽसंबद्धप्रलपनम्। चतुर्विधमेतद्वाचिकम्। व्यापादः प्राण्युपघातचिंता। अभिध्या परगुणाद्यसहिष्णुता। दृग्विपर्ययं शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादिति त्रिविधमेतन्मानसम्। तदेतद्धिंसादि दशधा पापं कर्म कायवाङ्मानसैस्त्यजेन्न कुर्यादित्यर्थः।

**अवृत्तिव्याधिशोकार्तानतुवर्तेत शक्तितः॥ २२॥**

न विद्यते वृत्तिर्येषां तानवृत्तीन्। शक्त्या यथासामर्थ्यमनुगच्छेत्। तथा व्याधिना शोकेन चार्तांश्च।

**आत्मवत्सततं पश्येदपि कीटपिपीलिकम्।**

कीटान् पिपीलिकांश्चात्मवत्पश्येत्। स्वशरीरतुल्यानित्यर्थः। किमु सतोऽसाधून्वा। कीटपिपीलिकमप्यात्मवत्पश्येदित्यपिशब्दस्यार्थः। कीटपिपीलिकमिति क्षुद्रजंतव इत्येकत्वम्।

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन्॥ २३॥**

देवादीनां द्वंद्वः। देवादीनर्चयेत्। वृद्धा ज्ञानवृद्धाः शीलतपोवृद्धाश्च। नृपो राजा। अतिथिरसमानग्रामी वैश्वदेवांते समुपस्थितः।

**विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत्।**

अर्थिनो याचकान्प्रत्याख्यानेन विमुखान्न कुर्यात्। नावमन्येत परिभवेत्। नावमानयेन्न च परुषवचनादिना क्षिपेत्।

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ॥ २४॥**

अरौ शत्रावपकारपरेऽपि सत्युपकारप्रधानः स्यात्। ननु रिपुरपकारक एव तत्किमपकारक इति विशेषणेन। तथा च माघः। उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा। उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः। नहि सर्वदैवारिरपकारं कर्तुं शक्यः स्यात् किंतर्हि कदाचिदेव। हेत्वधीनत्वादपकारकारित्वस्य। वातादिदोषवत्। यथा वातादयो दोषा दूषणस्वभावा अपि संतः कदाचिद्विकारकत्वे समर्था भवंति कदाचिन्नैव। दोषत्वं सर्वदैव तेषाम्। तस्मादपकारक इति युक्तं विशेषणम्। अपकारिण्युपकारकृत्स्यात् किं पुनरुपकारक इत्यपिशब्दार्थः।

**संपद्विपत्स्वेकमना हेतावीर्ष्येत्फले नतु।**

संपत्सु विपत्सु चैकमनाः समचित्तः। संपत्सु विषक्तेन विपत्सु विषादिना न भाव्यमित्यर्थः। हेतावित्यादि। हेतौ कारणे ईर्ष्येत्। यथा। अयमेवं श्रुतत्यागादिगुणवान् कस्मादहमप्येवं न भवेयम्। फले न तु परकीये शोभने फले वस्त्रालंकारादिके नेर्ष्येत्।

**काले हितं मितं ब्रूयादविसंवादि पेशलम्॥ २५॥**

काले प्रस्तावे। हितं पथ्यम्। मितं न बहु। अविसंवादि सत्यम्। पेशलं मनोज्ञं ब्रूयात्।

**पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः।**
**नैकः सुखी न सर्वत्र विश्रब्धो न च शंकितः॥ २६॥**

पूर्वाभिभाषी पूर्वालापी स्यात्। सुमुखो गतभ्रुकुटिः। सुशीलः शोभनप्रकृतिः। तथा करुणया मृदुरार्द्रसंतानो मातेव पुत्रे। एकोऽद्वितीयः सन्सुखी न स्यात्। तथा च भगवान् व्यासः। मायाचारे मायया वर्तितव्यमिति। तथा सर्वत्र मित्रस्वजनादिष्वपि शंकितोऽविश्वस्तो न स्यात्तेषां वैमुख्यदोषप्रसंगभयात्।

**न कंचिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम्।**
**प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः॥ २७॥**

आत्मनः शत्रुं कंचिदपि न प्रकाशयेत्। तत्प्रकाशनाद्धि भेदः स्यात्। नात्मानं कस्यचिद्रिपुं प्रकाशयेत्। पूर्वोक्तादेव हेतोः। अपमानमसत्कारं कस्यचिन्न प्रकाशयेत्। प्रभोः स्वामिनः संबंधिनीं निःस्नेहतां न प्रकाशयेत्। तत्प्रकाशनादसौ प्रभुर्जातावसरैर्भेदकैः सुतरां निःस्नेहीक्रियते।

**जनस्याशयमालक्ष्य यो यथा परितुष्यति।**
**तं तथैवानुवर्तेत पराराधनपंडितः॥ २८॥**

जनस्याशयमालक्ष्य लोकस्य प्रकृतिं बुद्ध्वा परिच्छिद्य यो जनो यथा परितुष्यति तथा तेनैव प्रकारेण दानप्रियवचनादिना तमनुवर्तेताराधयेत्। कीदृशो भूत्वा। पराराधने पंडितस्तज्ज्ञः।

**न पीडयेदिंद्रियाणि न चैतान्यतिलालयेत्।**

इंद्रियाणि रसनादीनि कदन्नाशनादिना न पीडयेन्न निगृह्णीयात्। न चैतानींद्रियाण्यतिलालयेदतिशयेन विलासयेत्।

**त्रिवर्गशून्यं नारंभं भजेत्तं चाविरोधयन्॥ २९॥**

त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गस्तेन शून्यं रहितमारंभमुद्यमं न भजेन्न कुर्यात्। कथं भजेत्। तं च त्रिवर्गमविरोधयन्परस्परमविरोधयन्।

**अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ।**

सर्वधर्मेषु मध्यमां प्रतिपदं प्रतिपत्तिमनुयायात् सर्वेष्वाचारेषु मध्यमं मार्गमनुवर्तेत । नैकत्रासक्तिं कुर्यादित्यर्थः ।

**नीचरोमनखश्मश्रुर्निर्मलांघ्रिमलायनः ॥ ३० ॥**

नीचान्यदीर्घाणि लोमनखश्मश्रूणि यस्य स एवंभूतो भवेत् । लोमानि बाहूरुप्रभृतिषु रोमाणि केशाश्चोच्यंते । तथा च हृषेर्लोमस्वित्यत्र सूत्रे विवृतम् । लोमानि मूर्धजान्यंगजानि चेह गृह्यंत इति । नीचलोमादिकफलं च मुनिनोक्तम् । पौष्टिकं धन्यमायुष्यं शुचिरूपविराजनम् । केशलोमनखादीनां कृंतनं संप्रसाधनमिति । तथांघ्री पादौ । मलायनानि घ्राणकर्णादीनि । निर्मलान्यंघ्रिमलायनानि यस्य स एवम् । अस्य च फलम् । मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् । पादयोर्मलमार्गाणां शौचादानमभीक्ष्णशः ।

**स्नानशीलः सुसुरभिः सुवेषोऽनुल्बणोज्ज्वलः ।**
**धारयेत्सततं रत्नसिद्धमंत्रमहौषधीः ॥ ३१ ॥**

स्नानं शीलयति स्नानशीलो नित्यस्नायी स्यात् । तथा सुसुरभिः सुगंधिः । शोभनो जीर्णमलिनवस्त्रादिविवर्जितो वेषो यस्य स सुवेषः । अनुल्बणोऽनुद्धतः सचासावुज्ज्वलश्चानुल्बणोज्ज्वलः । अनुद्धतवेषः स्यादुज्ज्वलश्चेत्यर्थः । धारयेदित्यादि । रत्नानि मणयो वज्रपद्मरागादयः । सिद्धमंत्रोपराजितादिः । महौषधिः सहदेवादिका । रत्नादीनां द्वंद्वः । रत्नादि बाहुग्रीवादिषु सततं सदैव धारयेत् ।

**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ।**

युगमात्रदृग्विचरेद्भ्रमेत् । युगं हस्तचतुष्टयं तत्पश्यति यः स एवम् । एवं कुर्वन् संमुखमागच्छद्भिर्गवाश्वादिभिर्नोपद्रूयते । तथा सहातपत्रेण छत्रेण पदत्राणेन पदाधारपर्यायेण यो वर्तेत स एवम् । पादत्रच्छत्रयोश्च गुणा उक्ताः । मारुतस्यानुलोम्याय खुडस्तंभश्रमापहम् । अन्वर्थसंज्ञं पादत्त्रं बलदृक्शुक्ररक्षणम् । वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहमिति ।

**निशि चात्ययिके कार्ये दंडी मौली सहायवान्॥३२॥**

रात्रौ चात्ययिके कार्ये दंडी सन् विचरेत् । दंडेन सर्पादीनामुत्त्रासनमपि चोक्तम् । स्खलतः संप्रतिष्ठानं शत्रूणां च निषेधनम् । अवष्टंभनमायुष्यं भयघ्नं दंडधारणमिति । मौली शिरोवेष्टनयुक्तः । अनेनोपरि पततां पतंगकीटादिमूत्रपुरीषादीनां रक्षा । तथा सहायवान् । अनेनापि चित्तावष्टंभः । दंडशब्दादत इनिठनावितीनिः । मौलिब्दाच व्रीह्यादित्वात्तस्य ह्याकृतिगणत्वमिति केचित् । आत्ययिक इति । अत्ययः कृच्छ्रं तस्मिन् भवमित्यध्यात्मादित्वाट्ठञ् ।

**चैत्यपूज्यध्वजाशस्तच्छाया भस्मतुषाशुचीन् ।**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ॥ ३३ ॥**

चैत्यस्तु विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेषः । बुद्धालय इत्यन्ये । पूज्यो गुरुपुत्रादिः । ध्वजश्चिह्नम् । अशस्ताश्चंडालादयः । एषां छायाः । तथा भस्म भूतिः । तुषो धान्यादित्वक् । अशुचिर्विट् । यद्वा उच्छिष्टं वस्तु । तदेतन्नाक्रामेत् । शर्करा सूक्ष्मपाषाणाकृतिर्मृत्खंडिका । तथा लोष्टं मृत्पिंडादिखंडः । बलिर्देवताद्यर्चनम् । स्नानं प्रसिद्धम् । बलिश्च स्नानं च बलिस्नाने तयोर्भुवौ । बलिस्नानभुवौ । शर्करा च लोष्टं च बलिस्नानभुवौ च ता नाक्रामेत् ।

**नदीं तरेन्न बाहुभ्यां नाग्निस्कंधमभिव्रजेत् ।**
**संदिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ॥ ३४ ॥**

नदीं तरंगिणीं दोर्भ्यां न तरेत् । अग्निस्कंधमभि अग्निराशेरभिमुखं न व्रजेत् । संदिग्धा चासौ नौश्च तां नारोहेन्नोच्चलेत् । संदिग्धायाः शिथिलबंधनत्वाज्जर्जरत्वादतिभाराक्रांतत्वात्पारगमनं प्रति संदेहः। चेति समुच्चये । वृक्षं च नारोहेत् । कथम् । दुष्टयानवत् । यथा दुष्टयानमश्वादिकं नारोहेत् तथेति । दुष्टयानारोहणमपि चोक्त्यानया निषिद्धम् ।

**नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृंभणम् ।**

नासंवृतास्यः क्षुत्यादीन्कुर्यात् । हस्तादिना मुखं पिधाय कुर्यादित्यर्थः । क्षुतिश्छिक्का । हास्यं हसनम् । विजृंभणं जृंभिका । एषां समाहारद्वंद्वः ।

**नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम्॥३५॥**
**नांगैश्चेष्टेत विगुणं नासीतोत्कटकस्थितः ।**

नासां न विष्कर्षेत् । मलोत्सारणमात्रं तु कार्यमेवेति विशब्देन द्योतयति । अकस्मात्कारणंविना भुवं पृथ्वीं न विलिखेन्नोत्कर्षेत् । अंगैर्हस्तपादादिभिर्विगुणमननुगुणं यथा भवति तथा न चेष्टेत न व्याप्रियेत । उत्कटकं स्थितमवस्थानं यस्य स एवंभूतो नासीत । चिरं न तिष्ठेदित्यर्थः । अर्शोरोगाद्युत्पत्तेः ।

**देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ३६**
**नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम् ।**

देहादीनां द्वंद्वः । एषां संबंधिनीश्चेष्टाः क्रियाः श्रमात्खेदात् पूर्वं विनिवर्तयेत् । तावद्धनुराकर्षादि कुर्याद्यावन्नातीव श्रमः स्यादित्यर्थः। तथा ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुश्चिरं नासीत । नक्तं रात्रौ द्रुमं तरुं न सेवेत । तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम् ।

**तथा चत्वरचैत्यांतश्चतुष्पथसुरालयान् ॥ ३७ ॥**
**सूनाटवीशून्यगृहश्मशानानि दिवापि न ।**

चत्वरं त्रिपथम् । अन्ये त्वाहुः । यत्र प्रदेशे नगरनिवासिनो ग्राम्या वा समेत्य नानाविधाः कथाः कुर्वंति स चत्वर उच्यते । चैत्यांतश्चैत्यसमीपः । चतुष्पथं मार्गचतुष्टयसंगमः । सुरालयो देवगृहम् । एतांश्च नक्तं न सेवेत । सूना वध्यस्थानम् । अटवी

निर्जनो देशः । शून्यगृहमुजटभवनम् । श्मशानं पितृवनम् । एतानि दिवाऽपि न सेवेत । अपिशब्देन रात्रौ नितरामसेवनमाह ।

**सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ॥ ३८ ॥**
**नेक्षेत प्रततं सूक्ष्मदीप्तामेध्याप्रियाणि च ।**

आदित्यं सर्वथोद्यंतमस्तं यांतं प्रतिमागतं जलादर्शादिषु प्रतिबिंबितमुपरक्तं राहुग्रस्तं वा नेक्षेत । तथा भारं शिरसा न च वहेन्न नयेत् । प्रततमविरतं सूक्ष्मवस्तु नेक्षेत । दीप्तं चामेध्यं चाप्रियं चातिप्रततं नेक्षेत । ननु तर्हि सर्वथा नेक्षेतेत्यनेन कोऽर्थो यतो रविरपि दीप्तो दीप्तग्रहणेनैवास्य दर्शननिषेधः सिद्धः । अस्त्येवैतत् । किंतु सर्वप्रकारमादित्यं नेक्षेत । दीप्तं त्वनवरतं नेक्षेतेति ।

**मद्यविक्रयसंधानदानादानानि नाचरेत् ॥ ३९ ॥**

विक्रयो विनिमयः । इयत्प्रमाणमधुनेदं दीयत इति । संधीयते येन तत्संधानमनेकद्रव्यसंभारो येन तन्मद्यं यथावत्प्रमाणेन संधीयते । दानं यथाशास्त्रं स्वत्वनिवृत्तिः परस्वत्वापादनम् । आदानं च यथाशास्त्रमेव परस्माद्ग्रहणम् । एतेषां द्वंद्वः । ततो मद्यशब्देन षष्ठीसमासः । मद्यविक्रयादीनि नाचरेत् । द्विजविषयं चैतद्वाक्यमिति बोध्यम् । सर्वस्य तु निषेधात् क्रयादिव्यवहारोच्छेदः स्यात् ।

**पुरोवातातपरजस्तुषारपरुषानिलान् ।**
**अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥ ४० ॥**
**कूलच्छायानृपद्विष्टव्यालदंष्ट्रिविषाणिनः ।**
**हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ॥ ४१ ॥**
**संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिंतनम् ।**
**शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ॥ ४२ ॥**
**गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ।**
**तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥४३॥**
**मद्यातिसक्तिं विश्रंभस्वातंत्र्ये स्त्रीषु च त्यजेत् ।**

त्यजेदिति क्रिया वक्ष्यमाणा । पुरःशब्दस्य वातातपाभ्यां प्रत्येकं संबंधः । पुरोवातः पूर्वदिगागतो वातः । पुर आतपः पूर्वातपः । पुरोवातादीन्पंच त्यजेत् । अनृजुर्विषमस्थितशरीरः । क्षवथ्वादीन् षट् त्यजेत् । अनृज्विति क्रियाविशेषणमिति केचिद्व्याचक्षते । अन्नमत्र शाल्यादि । कूलं वप्रस्तच्छायां त्यजेत् । तत्र हि तिष्ठतस्तत्पाताद्भयं स्यात् । नृपद्विष्टं राज्ञोऽप्रियं त्यजेत् । व्यालो दुष्टहस्त्यादिः । दंष्ट्रिणः सर्पाद्याः । विषाणिनो गवाद्यास्तांस्त्यजेत् । हीनाः कुलशीलवित्तादिभिर्न्यूनाः । अनार्या असाधवः । अतिनिपुणा अतिगणनापरास्तेषां सेवां त्यजेत् । उत्तमैरिति सहार्थे गम्यमाने तृतीया । उत्तमैः सह विग्रहं त्यजेत् । संध्यास्वभ्यवहारादीन्पंच त्यजेत् । शत्रुसत्रेत्यादि । शत्र्वशनं त्यजेत् । सत्रं यज्ञस्तस्याशनं त्यजेत् । ऋत्विगादीन् वर्जयित्वाऽन्यस्य हि तदशनं निषेधति । तथाहि । यज्ञांते तदुद्भूतपापोपशमनाय प्रायश्चित्तं श्रूयते । गणाः कथकचारणादयस्तैराकीर्णं व्याप्तमशनं त्यजेत् । गणिका वेश्या तस्याः संबंध्यशनं त्यजेत् । तदशनाद्धि तत्पापसंक्रमणं स्यात् । पणिकः पणोपजीवी । नौद्व्यच इति ठन् । पणिको हि पापीयान्निंदितपण्यादिविक्रीणानः प्रशंसतीत्यादिहेतोः । गात्रेत्यादि । गात्राण्यंगानि तैस्तथा वक्त्रेण नखैश्च वाद्यं त्यजेत् । हस्तावधूननं केशावधूननं च त्यजेत् । अवधूननं कंपनम् । तोयेत्यादि । मध्यशब्दः प्रत्येकं युज्यते । तोययोर्द्वयोर्मध्येन यानं त्यजेत् । न यायादित्यर्थः । एवमग्न्योर्मध्येन । तथा पूज्ययोर्मध्येन । समासकरणात्तोयाग्न्योस्तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम् । तथा धूमं शवाश्रयं शवोद्भूतं त्यजेत् । मद्येत्यादि । मद्येऽतिसक्तिरतिसेवा तां त्यजेत् । स्त्रीषु योषासु विश्रंभं विश्वासं स्वातंत्र्यं च त्यजेत् ।

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ४४**
**अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ।**

हि यस्माद्धीमतो बुद्धियुक्तस्य सर्वचेष्टासु निःशेषव्यापारेषु लोक एवाचार्य उपदेष्टाऽतोऽस्माद्धेतोस्तमेव लोकं लौकिकेऽर्थे परीक्षकः पुरुषोऽनुकुर्यात् । यथा लोको व्यवहरति तथा व्यवह्रियादित्यर्थः ।

**आर्द्रसंतानता त्यागः कायवाक्चेतसां दमः ४५**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ।**

आर्द्रसंतानता सर्वसत्त्वेषु कृपालुत्वम् । त्यागो दानम् । कायवाक्चेतसां त्रयाणां दम उपशमः । परार्थेषु परप्रयोजनेषु स्वार्थबुद्धिः । यथायमेव स्वार्थोऽयमेव परार्थ इत्युभयलोकहितत्वम् । इत्येवंप्रकारं सद्व्रतं पर्याप्तम् । समाप्तमित्यर्थः । सत् शोभनं च तद्व्रतं च सद्व्रतम् ।

**नक्तंदिनानि मे यांति कथंभूतस्य संप्रति ॥४६॥**
**दुःखभाङ् भवत्येवं नित्यं संनिहितस्मृतिः ।**

नक्तंदिनानि रात्रिदिनानि संप्रतीदानीं कथंभूतस्य कीदृशस्य सतो मे मम यांति । एवं नित्यं सन्निहितस्मृतिः सन् पुमान् दुःखभाङ् भवति ।

**इत्याचारः समासेन संप्राप्नोति समाचरन् ४७**
**आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ।**

इति समाप्तौ । समासेन संक्षेपेण तावदयमाचारः पूर्वोक्तो यं समाचरन्ननुतिष्ठन्नायुरादीन् संप्राप्नोति । तथा लोकान् भूर्भुवःस्वःप्रभृतीन् शाश्वतान्नित्यान् । ननु शाश्वतशब्दो न युक्तः । यतः शश्वच्छब्दस्य कालवाचित्वात् कालाट्ठञिति ठञ् प्राप्नोति । तथा अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानमिति टिलोपश्च प्राप्नोति । नैतदस्ति । नस्तद्धित इत्यत्र सूत्रे ह्युक्तम् । शाश्वत इ-

त्यादौ तु टिलोपो नेष्यते । कालादिति योगविभागाच्चाणिति तस्माच्छाश्वतशब्दो न्याय्य एवेति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां सूत्रस्थाने द्वितीयोऽध्यायः समाप्तः ॥२॥

---

## तृतीयोऽध्यायः ।

दिनचर्याध्यायादनंतरमृतुचर्याया उपोद्घातः । पूर्वाऽध्याये सामान्येन दिनचर्योपदिष्टा । ऋतुविशेषवशाच्चाहारविहारसेवनप्रतिपादनार्थमृतुचर्याया आरंभ इत्याह ।

**अथात ऋतुचर्याध्यायं व्याख्यास्यामः ।**

पूर्ववद्व्याख्येयम् ।

**मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ।**
**शिशिरोऽथ वसंतश्च ग्रीष्मवर्षाशरद्धिमाः ॥ १ ॥**
**शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।**
**आदानं च तदादत्ते नृणां प्रतिदिनं बलम् ॥२॥**

मासैरित्यादिना कालोपवर्णनमाह । ननु कालोपवर्णनं दिनचर्यायां कस्मान्न कृतम् । उच्यते । ऋतुगौरवोद्भावनार्थम् । ऋतवो हि विशेषेणोपयोगिनो विप्रतिपत्तेश्च । यथैके चातुर्मासिकमृतुं कृत्वा शीतोष्णवृष्टिलक्षणान् हेमंतग्रीष्मवर्षाख्यांस्त्रीनृतूनिच्छंति । अपरे तु द्विमासिकान् शिशिरवसंतग्रीष्मवर्षाशरद्धेमंतलक्षणान् षडृतूनिति । द्वे संख्ये येषां ते द्विसंख्यास्तैर्द्विसंख्यैः । माघ आद्यो येषां फाल्गुनादीनां त एवम् । तैर्द्विसंख्यैर्माघाद्यैर्मासैः क्रमात्परिपाट्या षडृतवः स्मृताः । के त इत्याह । शिशिराद्याः शिशिरवसंतग्रीष्मवर्षाशरद्धेमंताः । उपचारादेव षट्त्वे लब्धे षड्ग्रहणं परमतक्षेपार्थम् । तथा केचित् त्रय एव ऋतव इति मन्यंते । तैस्तु ऋतुभिस्त्रिभिः शिशिरादिभिरुत्तरायणं विद्याज्जानीयात् । अयनमुत्तरं सवितुरुत्तरमार्गप्रतिपत्तिरुत्तरायणम् । आदानं तु जानीयात् । आदानमिति चान्वर्थमिति प्रतिपादयति । तदा तस्मिन् काले नृणां प्रतिदिनमन्वहं बलमादत्ते सारं गृह्णाति । कोऽसौ । प्रकृतत्वादादित्यः ।

कया युक्त्या बलमादत्त इत्याह ।

**तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः ।**
**आदित्यपवनाः सौम्यान् क्षपयंति गुणान् भुवः ३**
**तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।**

आदित्यश्च पवनाश्चादित्यपवनास्ते तस्मिन् काले यस्मात्सौम्यान् गुणान् भुवः संबंधिनः क्षपयंति विनाशयंति । कीदृशास्ते । अत्यर्थमतिशयेन तीक्ष्णाश्चोष्णाश्च रूक्षाश्चात्यर्थतीक्ष्णोष्णरूक्षाः । कस्मादेवंविधास्त इत्याह । मार्गस्वभावतो वर्त्मस्वाभाव्यात् । न च स्वभावः पर्यनुयोगमर्हति । मार्ग उष्णांशोरुत्तरदिग्गमनम् । यतश्चादित्यपवना रूक्षास्ततस्तिक्तादयो रसा बलिनो भवंति । क्रमादित्यनेन यथासंख्यमत्र बोधयति । तेन तिक्तः शिशिरे वसंते कषायो ग्रीष्मे कटुको व्यवतिष्ठते न सर्वे तिक्तादय एकैकस्मिन्नृताविति । तिक्त इत्याद्यसमासकरणं ज्ञापनार्थम् । तिक्तादिरेकैको बली भवति । द्वौ तु स्वप्रमाणावस्थितौ । नैवतौ पृथग्भूय तिक्तादेर्बलवत्त्वमित्यर्थः ।

**तस्मादादानमाग्नेयम्**

यत एवं भूमेः सौम्यगुणहानिर्वर्धनं च रूक्षाणां रसानां तस्मात्कारणादादानमाग्नेयम् ।

**ऋतवो दक्षिणायनम् ॥ ४ ॥**
**वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ।**

त्रयो वर्षादय ऋतवो दक्षिणायनं भगवतो दिवाकरस्य दक्षिणदिग्गमनम् । स च कालो विसर्गाख्यः । यद्यस्माद्बलमयं कालो विसृजति ददाति दक्षिणायनाख्यस्तस्माद्विसर्गोऽन्वर्थसंज्ञः कालः ।

**सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ५**
**मेघवृष्ट्यनिलैः शीतैः शांततापे महीतले ।**
**स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥ ६ ॥**

हि यस्मादत्र विसर्गाख्ये काले सौम्यत्वात् सोमभूयिष्ठत्वात् सोमो बलवान् । तदाश्रितरात्रिवृद्धिदर्शनात् । हीयते रविस्तदाश्रितदिनहान्युपलब्धेर्हीनशक्तिः संपद्यते । कदा । महीतले भूपृष्ठे शांततापे सति । कैर्मेघवृष्ट्यनिलैः । शीतैरित्युपलक्षणार्थम् । विसर्गकालत्वान्मृदुभिः स्निग्धैरपीति । अतएव स्निग्धा रसा अम्ललवणमधुरा बलिनो भवंति । अत्रापि क्रमादित्यनुवर्तते । पूर्ववच्च व्याख्येयम् ।

**शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ।**

शीतस्वभावकाले हेमंतशिशिराख्ये नृणामग्र्यं बलं भवति । वृष्टिश्च घर्मश्च तस्मिन्वृष्टिघर्मे वर्षाग्रीष्माख्ये कालेऽल्पम् । तुरवधारणे । शेषयोः शरद्वसंतऋत्वोर्मध्यमेव बलम् । ननु वसंत आदानकालत्वादत्यर्थतीक्ष्णोष्णरूक्षैरादित्यपवनैः शोष्यमाणेषु बलवृद्धिहेतुषु भुवः सौम्येषु गुणेषु कथं मध्यबलत्वमिति । ब्रूमः । वर्षादिष्वृतुषु बलमपचितं क्रमेणैवापचीयते । यथा कृष्णपक्षे चंद्रः । तस्माद्दीर्घकालानुवृत्तं बलं वसंते क्रमेणैवापचीयत इति मध्यबलत्वं युक्तम् । अनेनैव हेतुना शिशिरेऽग्र्यबलत्वम् । यतः सकलेन विसर्गेण कालेन यदुपचितमतिशयेन बलं तत् शिशिरे क्रमाच्च मात्रादानकालेऽपचीयमानमपि बलं न लक्ष्यते । यथा कृष्णपक्षादौ चंद्रः क्षीयमाण इति युक्तमुक्तम् । शीतेऽग्र्यं बलं वसंते च मध्यं बलमित्यवददिह शास्त्रकृत् ।

**बलिनः शीतसंरोधाद्धेमंते प्रबलोऽनलः ॥ ७ ॥**
**भवत्यल्पेंधनो धातून् स पचेद्वायुनेरितः ।**

किल विसर्गाभिनवबलत्वात्पुमान् बली भवति । तस्य बलिनः पुंसो हेमंते काले शीतसंरोधाद्धेतोरनलोऽग्निर्बली भवति । यतः सर्वतः स्रोतोरोधाज्जाठरोऽग्निरांतरैरेव स्वैरर्चिर्भिरभिवर्धते । वर्धितश्चासौ युक्तमाहारं सम्यक्पचाति । पक्वाच्चाहाराद्बलमभ्यधिकं जायते । हेमंते हेमंततौं द्योतयति । अस्मिन्नेव काले शीतसंरोधात् । तथा ह्यन्यर्तुजेन शीतेनाग्निसादो भवति । यथा वर्षासु । तत्र हि वृष्टिवाताभ्यां भवति शीतं न चाग्निदीप्तिः । तथा चाष्टांगसंग्रहे । वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित् । परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेदिति । इह पुनरनेकरूपगौरवयुक्तं भोजनं शस्यते । वक्ष्यति हि । अतो हिमेऽस्मिन्नित्यारभ्य यावद्रसान् स्निग्धान्पलं पुष्टमित्यादि । तथोक्तम् । ऊष्मा बहिः प्रतिहतो हिमशीतवातैरंतः शरीरविवरं प्रतिपद्यमानः । स्वस्थानपिंडितवपुर्भवति प्रचंडः शीतेऽनिलानलहरो विधिरिष्यतेऽत इति । तथा यद्यपि तत्र सत्वशरीरेत्यारभ्य यावत्तथोर्जस्करयोगजमित्यादिना ग्रंथेनाहारो युक्तिजस्यैकस्यैव बलस्य हेतुरित्युक्तो ग्रंथकृता । तथाऽपि युक्त्या निरूप्यमाणः सहजकालजयोरपि बलयोराहार एव हेतुत्वात्तथा ह्याहारंविना शरीरमेव न स्यात् । तदनया युक्त्या त्रिविधमपि बलमाहारजमपि बोद्धव्यम् । ननु यदि प्रबलोऽनलो भवति ततः किमित्याह । अल्पेंधन इत्यादि । अल्पमिंधनमाहाराख्यं यस्य सोऽल्पेंधनः सन् सोऽनलो धातून्रसादीन्पचेत् । कीदृशः । वायुनेरितः वातोद्दीपितः ।

**अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ८**

अस्मादनंतरोक्ताद्धेतोरल्पेंधनत्वे सति धातुपाकाख्यात् । अस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत । नान्यर्तुसंभवे हिम इत्यस्यार्थस्य द्योतनाय हिम इत्युक्तम् ।

**दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।**
**अवश्यकार्यं संभाव्य यथोक्तं शीलयेदनु ॥ ९ ॥**

एतर्हि एतस्मिन्काले बुभुक्षितः प्रातरेव प्रत्युषसि नान्यकाले यत्किंचिद्दिनातिक्रांतौ सत्यामवश्यं कार्यं मूत्रोत्सर्गादिकं दिनचर्योक्तं च संभाव्य संपाद्य यथोक्तं यथानिर्दिष्टमनु पश्चाद्वातघ्नतैलाभ्यंगादिकं शीलयेत् । यद्यपि बुभुक्षितोऽवश्यकार्यं संभाव्य यथोक्तं शीलयेदित्युक्तं तथापि बुभुक्षितेन न तथान्यत्कार्यं यथा भोजनम् । तथा चोक्तम् । आहारकाले संप्राप्ते यो न भुंक्ते बुभुक्षितः । तस्य सीदति कायाग्निर्निरिंधन इवानल इति । तस्मादौचित्याद्बुभुक्षितेनाहारः कार्य इति वेद्यम् । नन्वन्यस्मिन्नपि काले बुभुक्षितस्यैवाहारानुज्ञानाद्बुभुक्षितग्रहणं न कार्यम् । युक्तमाह भगवान् । किंत्वस्मिन्काले जाठराग्निरित्यग्निच्छायानुकारी भवति । ततोऽस्य जाठराग्नेरिवोपचारो युक्तः । यथा । मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् । निरिंधनोंऽतरं लब्ध्वा यथैनं न विपादयेदित्यबुभुक्षितस्यैव भोजनाधिकारित्वमिति भ्रांतिनिरासायेह बुभुक्षितग्रहणम् । निशानां दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतम् । यदात्र हेमंते शर्वर्यो दीर्घा जायंते तदैष विधिः सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन्निति । नन्वत्र सेवेत शीलयेद्भजेदित्येकार्थाभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टान्येकेनैवार्थाधिगतेः । अत्र ब्रूमः । कार्यांतरसूचनार्थमेतत्पदत्रयम् । तथाहि । अतो हिमेऽस्मिन्सेवेतेत्यत्र यः सेवेतशब्दः स इदं द्योतयति । स्वाद्वम्ललवणरसाः पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्याः । न कादाचित्क एषामस्मिन्नृतावुपयोगो विधेय इति । अत एव वातघ्नतैलाभ्यंगादेः पृथगेषां रसानामुपन्यासः । यथोक्तं शीलयेदित्यत्र यः शीलयेदित्येष शब्दः स वातघ्नतैलादेः सर्वस्य तुल्यकक्षतां द्योतयति । तथा प्रावाराजिनेत्यादौ यो भजेच्छब्दः स सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यतां प्रथयति । तथा च वक्ष्यति । आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैरिति ।

**वातघ्नतैलैरभ्यंगं मूर्ध्नि तैलं विमर्दनम् ।**
**नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः १०**

वातघ्नतैलैरभ्यंगं शीलयेत् । तैलस्य सर्वस्यैव वातघ्नत्वाद्वातघ्नेति विशेषणमतिशयप्रतिपादनार्थम् । तेन बलातैलादिभिरिति बोध्यम् । मूर्ध्नि तैलं शिरोऽभ्यंगादि । विमर्दनं शरीरसंवाहनमेतदौचित्यादभ्यक्तः सन् शीलयेत् । कुशलैस्तद्विद्भिः सार्धं नियुद्धं बाहुयुद्धं शीलयेत् । पादाघातं पादेन विमर्दनम् । युक्तित इत्यनेनार्धशक्त्यैव शीलनं द्योतयति । बाहुयुद्धपादाघातयोश्चानभ्यक्तस्यैव शीलनं युक्तम् ।

**कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।**
**कुंकुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११ ॥**

कषायेण रोध्रादिनाऽपहृतोऽपनीतः स्नेहो यस्य स एवम् । ततोऽनंतरं यथाविधि शास्त्रोदितेन विधानेन स्नातः । कुंकुमेन काश्मीरेण प्रदिग्धोऽनुलिप्तः । दर्पः कस्तूरिका सह तेन वर्तते यत्कुंकुमं तदेवम् । तथाऽगुरुणा जोंगकेन धूपितः ।

**रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ।**
**गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥**
**नवमन्नं वसां तैलं शौचकार्ये सुखोदकम् ।**
**प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥ १३ ॥**
**उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।**
**युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा १४**

रसान्मांसरसान् स्निग्धान् भजेत् । मांसरसानां स्निग्धत्वेऽपि स्निग्धानिति विशेषणमतिशयद्योतनार्थम् । पलं मांसं पुष्टं मेदुरं भजेत् । तथा गुडस्येदं गौडं तन्मयम् । तथाऽच्छसुरां सुरामंडं सुरां मदिरां च भजेत् । अन्नेन कषायद्रव्यैश्च या क्रियते सा

* हेमाद्रिसंमतस्तु कुथकास्तृतमिति पाठः । कुथकः कंबलः ।

सुरा भण्यते। ननु द्विधैव सुरा सेव्यत्वेनेहाभीष्टा तत्सुराशब्द एव निर्देष्टुं न्याय्यः। तस्मिन्हि सामान्यपदे निर्दिष्टे द्विधैव सुरा निर्दिष्टा भवति। सत्यमेतत्। किंत्वच्छसुरां नितरां भजेन्न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम्। अत एवाच्छसुरामिति पूर्वं निर्दिष्टम्। गोधूमेत्यादि। गोधूमश्च पिष्टं च माषश्च इक्षुश्च क्षीरं च तान्येवम्। गोधूमपिष्टमाषेक्षुक्षीरेभ्य उत्थानं यासां विकृतीनां ता एवम्। उत्पूर्वात्तिष्ठतेः सुपीति योगविभागाद्भावे कः। उदःस्थास्तंभोः पूर्वस्येति सस्य तकारः। गोधूमपिष्टमाषेक्षुक्षीरोत्थाश्च ता विकृतयश्च ताः शुभा रम्या भजेत्। तथा नवमपुराणमन्नं तथा वसां भजेत्। शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता। तथा तैलं भजेद्रक्षयेत्। अभ्यंगस्तु प्रागनुज्ञात एव। शौचकार्ये शौचक्रियायां सुखोदकमुष्णोदकं भजेत्। प्रावारः कार्पासो रोमवान् घनः पटस्तूलपटकादिः। अजिनं सुखस्पर्शरोमचर्म। कौशेयं पट्टवसनम्। प्रवेणी सूचीवाणाख्यो वस्तुविशेषः। कौचवं रांकववस्त्रभेदः। तवरक इत्यन्ये। एतैरास्तृतं दत्तप्रतिच्छदपटं शयनं भजेत्। कीदृक् शयनं भजेत्। उष्णस्वभावै रोमशिकारल्लिकाप्रायैः प्रावृतः प्रकर्षेणाच्छादितः। तथा अर्ककिरणान्भजेत्। कथम्। युक्त्या सम्यग्योगलक्षणया। अतिसेविता हि ग्लान्यादीन्कुर्युः। तथा स्वेदं भजेत्। युक्त्यैवेत्यत्रापि योज्यम्। अतिसेवितो हि स्वेदो ग्लान्यादीन् जनयेत्। पादत्राणं च पादुकादिकं सर्वदा भजेत्।

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः।**
**हरंति शीतमुष्णांग्यो धूपकुंकुमयौवनैः॥ १५॥**

ऊरू च स्तनौ च श्रोणिश्च ऊरुस्तनश्रोणि। पीवरं पीनमूरुस्तनश्रोणि यासां ता एवंभूताः प्रमदा विलासिन्यः शीतं हरंति नुदंति। पीनत्वेनातिकार्श्यमत्र निषिध्यते। तथा चाह। ग्राम्यधर्माधिकारे त्यजेदतिकृशामिति। किंभूता। सहमदेन यौवनोद्भूतेन सुरादिपानजेन कामोद्रेककारिणा वा वर्तते समदाः। तथा प्रिया वल्लभाः शीतं हरंति। किंभूताः उष्णांग्यो धूपकुंकुमयौवनैरगुर्वादिधूपेनोष्णांग्यः। तथा कुंकुमानुलेपनेनोष्णांग्यः। तथा यौवनोष्मणा सहजेनोष्णांग्य इति योज्यम्।

**अंगारतापसंतप्तगर्भभूवेश्मचारिणः।**
**शीतपारुष्यजनितो न दोषो जातु जायते॥१६॥**

अंगाराणां तापोऽगारतापस्तेन संतप्तं च तद्गर्भेऽभ्यंतरे भूवेश्म च तत्तस्मिंश्चरति नित्यं यस्तस्यांगारतापसंतप्तगर्भभूवेश्मचारिणः पुंसो यतः शीतपारुष्यजनितो दोषो दुःखं न जातु कदाचिज्जायते ततोऽगारतापसंतप्तगर्भभूवेश्मचारी स्यादिति भावः।

**अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः।**
**तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् १७**

अयमेव हैमंतो विधिः पूर्वोक्तः शिशिरे च विशेषतोऽतिशयेन कार्यः। कुत इत्याह। यस्मात्तस्मिन् काले शीतमधिकं भवति। कालस्वाभाव्यात्। तथा आदानकालाज्जातमादानकालजं च रौक्ष्यं भवति। ततो हेतुद्वयाद्विशेषेण हैमंतिको विधिः सेव्यः। हेमंते रसान् स्निग्धान् शीलयेदित्युक्तम्। शिशिरे तानतिशयेन शीलयेत्। एवं सर्वेष्वपि हैमंतिको विधिर्योजनीयः। आदानकालजमित्यनेनैतद्द्योतयति। आदानकाल एव रौक्ष्यस्य कारणं नान्यत्। अत एव हेमंते शीतेऽपि रौक्ष्यं नास्त्येवेति। आदानस्य च प्रारंभमात्रत्वम्। एवं शिशिरस्य संभव इति शिशिरे किंचिदेव रौक्ष्यं वेद्यम्। ननु यथा रौक्ष्यमादानकालजं तथौष्ण्यमपि। तथा चोक्तम्। तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा इति। एवंचौष्ण्यसद्भावाच्छीतस्य हेमंततो हानिः प्राप्ता न त्वाधिक्यम्। कथं तदा हि शीतमधिकमिति। ब्रूमः। रौक्ष्यस्य द्वौ हेतू। एकस्तावद्भगवद्दिवाकरकरैर्जगतः स्नेहादानम्। द्वितीयस्त्वग्नेः कालः। तदेवं रौक्ष्येणोभयहेतुजेन शिशिरे काले वाताः शीतस्वभावा आहिताधिकशक्तयो जायंते हैमंतेभ्यो मारुतेभ्यः। तथाविधाश्चोष्णेनादानकालप्राधान्यादप्राप्तबलेन शिशिरे नाभिभूयंते। अनभिभूताश्च शीतस्वभावत्वाच्च शीतमेव वर्धयंति। अतो युक्तं शीताधिक्यं शिशिर इति।

संप्रति वसंतचर्यां विवक्षुरिदमाह।

**कफश्चितो हि शिशिरे वसंतेऽर्कांशुतापितः।**
**हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत्॥१८॥**

यस्मात् शिशिरे मधुरस्निग्धादिनाऽऽहारेण कालस्वाभाव्याच्च श्लेष्मा संचितोऽतिशयेन स्त्यानत्वादतिकुपितो वसंते ऋतावर्कांशुतापितः सूर्यप्रभाभिर्विलापितो द्रवस्वरूपत्वाज्जलमिव विपरीतं जाठराग्निं हत्वा हि यस्माद्रोगान्विकारान् कुरुते जनयति। अतोऽस्मात्कारणात्तं कफं त्वरया शीघ्रमेव जयेत्। दोषानिति केचित्पठंति। अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दोऽत्र रश्मीनां पटिमानं सूचयति न तथा शीते। तत्र हि धूमधूम्ररजोमंदा इत्यधिरोगकैर्वर्जयेत्।

**तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः।**
**व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् १९**
**स्नातोऽनुलिप्तः कर्पूरचंदनागुरुकुंकुमैः।**
**पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक्॥ २०॥**
**सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान्।**
**प्रियास्यसंगसुरभीन् प्रियानेत्रोत्पलांकितान् २१**
**सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत्।**
**निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान्॥ २२॥**

तीक्ष्णैर्वमननस्यविरेकादिभिरुपक्रमेत्। तथा लघूनि रूक्षाणि च यानि भोजनानि तैश्च। तथा व्यायामश्चोद्वर्तनं च आघातश्च तैश्च कफं जयेदिति। चशब्दो लुप्तनिर्दिष्टः। ततः कफमुल्बणमु-

द्रुतं जित्वाऽनंतरं स्नातोऽनुलिप्तः समालब्धः कर्पूरचंदनागुरुकुंकुमैस्तथा पुराणं च तद्यवगोधूमं च तथा क्षौद्रं माक्षिकं तथा जांगलं च तत् शूल्यं भटित्रं च तत्तानि भुंक्ते पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक् । शूल्य इति शूलात्पाक इति यः । एवंविधः सन् वयस्यैर्मित्रैः सहित आसवादीन् पिबेत् । किंभूतान् । निर्गदान् निर्दोषान् । पिबेदिति वक्ष्यमाणेन संबंधोऽत्र दीपकत्वात् । आसवो यो द्रव्याण्यासुत्य क्रियते । उक्तं च । मद्याकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः । सोऽरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृत इति । सीधुरिक्षुरसोद्भवः । मार्द्वीकं मृद्वीकारसोद्भवम् । माधवो मधुना संस्कृतः । किंभूतानासवादीन् । सहकाररसोन्मिश्रान् प्रियया आस्वाद्य किंचित्पीत्वाऽर्पितान् ढौकितान् । तथा प्रियास्यसंगेन सुरभीन् सुगंधीन् । तथा प्रियानेत्राण्येवोत्पलानि तैरंकितान् संजातशोभान् । तथा सौमनस्यकृतश्चित्तप्रसादकृतः । तथा हृद्यान् हृदयाय हितान् ।

**शृंगवेरांबु सारांबु मध्वंबु जलदांबु वा ।**

तथा शृंगवेरांबु शुंठीक्वथितजलं पिबेत् । तथा सार आसनचंदनादिजस्तेन क्वथितमंबु पिबेत् । तथा मधुना युक्तमंबु मध्वंबु । जलदेन मुस्तया च क्वथितमंबु पिबेत् । वेति समुच्चये ।

**दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥**
**अदृष्टनष्टसूर्येषु मणिकुट्टिमकांतिषु ।**
**परपुष्टविघुष्टेषु कामकर्मांतभूमिषु ॥ २४ ॥**
**विचित्रपुष्पवृक्षेषु काननेषु सुगंधिषु ।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥२५॥**

काननेषूपवनेषु स्थितो मध्याह्नं गमयेदतिवाहयेत् । अह्नो मध्यो मध्याह्नः । संख्याविसायेत्यादिज्ञापकात्पूर्वापरेत्यादिना एकदेशिसमासः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । कथम् । गोष्ठ्यां क्रीडायां कथा गोष्ठीकथास्ताभिश्चित्राभिः कमनीयाभिर्व्यवहारसंबंधिनीभिरित्यर्थः । कीदृशः सन् । सुखी रागद्वेषादिरहितः । किंभूतेषु काननेषु । दक्षिणदिक्प्रवृत्तैरनिलैः शीतानि तेषु दक्षिणानिलशीतेषु । तथा परितः समंताज्जलं नित्यं वहंति यानि तेषु । आभीक्ष्ण्ये णिनिः । तथा क्वचित्प्रदेशेऽदृष्ट ईषद्दृष्टः क्वचिदतिघनत्वान्नष्टो न दृश्यते सूर्यो येषूपवनेषु तान्येवं तेषु । तथा मणीनां वज्रमरकतादीनां कुट्टिमानि विशिष्टा भुवस्ताभिः कांतिः शोभा येषां तान्येवं तेषु । तथा परपुष्टैः कोकिलैर्विघुष्टेषु कृतशब्देषु । तथा कामस्य कर्मांताः कामकर्मांता मदनव्यापाराः । अंतशब्दोऽत्र प्रशंसावचने । यथोद्भटस्य वचनम् । वनांतदेवतावेण्य इति । कामकर्मांतनिमित्तं भूमयो येषां वनानां तान्येवं तेषु । विचित्राणि नानारूपाणि पुष्पाणि येषां ते तथाविधा वृक्षा येषां तान्येवं तेषु । सुष्ठु गंधो येषां तेषु । गंधस्येदितीत्समासांतः । अस्मिन्काले कफोपचयदोषभयात् ।

**गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।**

गुरुशीतादींस्त्यजेत् । ननु लवणमपि श्लेष्माणं करोति तत्कस्मादिह न निषिद्धम् । अतो ब्रूमः । लवणः पूर्वं कफमम्लमधुराविव न करोति किंतर्हि निधने चिरंतनसंचितं स्रुतिरूपं श्लेष्माणं विधत्ते विष्यंदित्वात् । न च लवणस्य मधुरादेरिव बहुतरस्य प्रयोगः प्रसिद्धः किंतर्ह्यल्पस्यैव । तस्माल्लवणस्यात्रानिषेध एव न्याय्यः ।

अधुना ग्रीष्मचर्यामुपदिदिक्षुराह ।

**तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् २६**
**प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।**

यद्यस्मात्तीक्ष्णांशुर्भास्करोऽतितीक्ष्णा अंशवः करा यस्य स एवंभूतः सन् ग्रीष्मे संक्षिपतीव जगत्स्नेहमित्यत्रानुक्तमप्यर्थाल्लभ्यते । केचित्तु स्नेहमर्कोऽतितीक्ष्णांशुरिति पठंति । स्नेहस्तेजो बलं सारमित्येकोर्थः । तं स्नेहमर्कः संक्षिपतीव यत्संबंधः संहरतीव पिबतीव । इवशब्देनैतत्सूचयति । हेतुप्रत्ययपरतंत्रेषु सर्वभावेषु न कश्चित्कचित्तद्बुद्धिपूर्वकं संहरति । परमार्थतो बलहानिकृत्त्वादेषाम् ।

**अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरांस्त्यजेत्२७**

अतोऽस्मात्कारणादस्मिन् ग्रीष्मकाले पट्वादींस्त्यजेत् ।

किमत्र सेव्यमित्याह ।

**भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।**

मधुरमेवान्नं भजेत् । बाहुल्येन मधुरमन्नं सेव्यं न तथाऽन्यरसजातमित्येवकाराल्लभ्यते । तथा लघु स्निग्धं हिमं द्रवं चेति चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः ।

सामान्येन भोजनमुक्त्वा विशेषेणाह ।

**सुशीततोयसिक्तांगो लिह्यात्सक्तून् सशर्करान् २८**

सक्तून् सशर्करान् लिह्यात् । सुष्ठु शीतं सुशीतं च तत्तोयं च तेन सिक्तमाप्लुतमंगं कायो यस्य स एवंभूतः सन् ।

**मद्यं न पेयं पेयं वा स्वल्पं सुबहु वारि वा ।**

अस्मिन्काले मद्यं न पेयम् । पेयं वा स्वल्पमिति । वातश्लेष्मप्रकृतिना वातक्षयार्थमन्यर्तुवद्बहु न पेयं किंतर्हि स्वल्पमेव पातव्यम् । सुबहु वारि वेति । पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मप्रतिक्रियार्थं पित्तप्रतीकारमपीच्छता सुबहुवारि तन्मद्यं पेयमित्यत्रानुक्तोप्येवमर्थाद्विषयविभागो बोध्यः । अन्यथा निषेधविध्योर्विरोधः स्यात् ।

उक्तविध्यतिक्रमे दोषमाह ।

**अन्यथा शोफशैथिल्यदाहमोहान् करोति तत् २९**

तन्मद्यमनेन कारणेन पीतं सत् शोफादीन् करोति । शोफः

श्वयथुः । शैथिल्यमंगानामनैष्ठुर्यम् । दाहः सर्वांगीणस्तापः । मोहोऽज्ञानं जंतोः ।

**कुंदेंदुधवलं शालिमश्नीयाज्जांगलैः पलैः ।**

कुंदः पुष्पविशेषः । इंदुश्चंद्रः । तयोर्द्वंद्वः । कुंदेंदुवद्धवलं शुक्लं शालिं जांगलैः पलैर्मांसैः सहाश्नीयादद्यात् । क्षुण्णस्मितः स्मृतः शाली रक्तो व्रीहिरुदाहृतः ।

**पिबेद्रसं नातिघनं रसालां रागखांडवौ ॥ ३० ॥**
**पानकं पंचसारं वा नवमृद्भाजनस्थितम् ।**
**मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥ ३१ ॥**

रसं नातिघनं पिबेत् । रसशब्देनादिलोपाख्यया तंत्रप्रयुक्तया मांसरस उच्यते । तथा रसालां मार्जिकाख्यां पिबेत् । तथा रागखांडवौ पानकं च पंचसाराख्यम् । एतेषां च लक्षणं तंत्रांतर उक्तम् । यथा । सितामध्वादिमधुरा रागास्तत्राच्छकांतयः । ते साम्लाः खांडवा लेह्याः पेयाश्चांशुकगालिताः । स्वाद्वम्लपटुकट्वाद्याः प्रलेहास्तत्र खांडवाः । गुडदाडिममांसाद्या रागाश्चांशुकगालिताः । हृद्या वृष्या रुचिकरा ग्राहिणो रागखांडवा इति । तथा । द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकाः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् । पानकं पंचसाराख्यं दाहतृष्णानिवर्तकम् । अन्यत्र चोक्तम् । यथा । गुडदालिमादियुक्ता विज्ञेया रागखांडवाः । त्रिजातमरिचाद्यैस्तु संस्कृताः पानकास्तथेति । कीदृशं पानकं पिबेदित्याह । नवं च यन्मृद्भाजनं तत्र स्थितम् । तथा मोचं कदलीफलं चोचं पनसफलं तयोर्दलानि तैर्युक्तम् । तथा साम्लम् । तिंत्तिडीकादियोगात् खांडवरसानुगतम् । केचित्तु क्षीरं घृतपिप्पलीशशिमाक्षिकशर्करोपेतं पंचसारं पानकमित्याहुः । केन पिबेदित्याह । मृन्मयशुक्तिभिः ।

**पाटलावासितं चांभः सकर्पूरं सुशीतलम् ।**

पाटलया वासितं सुरभीकृतं तथा सकर्पूरं सुशीतलं चांभः पिबेत् । मृन्मयशुक्तिभिरित्यत्रापि योज्यम् । सुश्रुते चोक्तम् । परिपेलवया तुल्यास्तथा गुग्गुलुमुस्तकाः । चूर्णिताः शशिनोपेता नवभाजनधूपनम् । कुष्ठमुस्तकसंयुक्तैः पेलवोशीरवालकैः । मृदिता मृत्सु पिष्टैस्तैः खदिरांगारपाचिताः । सहकाररसाभ्यक्ताश्चंपकोत्पलवालकैः । पद्मकुंजककुंदैश्च यथालाभाधिवासिताः । श्रेष्ठः सलिलवासोऽयं स्मृतः सर्वर्तुको बुधैः ।

**शशांककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ३२**
**ससितं माहिषं क्षीरं चंद्रनक्षत्रशीतलम् ।**

माहिषं क्षीरं ससितं सशर्करं रजन्यां रात्रौ पिबेत् । किंभूतम् । चंद्रेण नक्षत्रैश्च शीतलम् । रजन्यां रात्रावाकाशे शैत्यार्थं स्थापितमित्यर्थः । किं कुर्वन् पिबेत् । भक्ष्यान् भक्षयन् भुंजन् । कीदृशान् । शशांककिरणान् कर्पूरनाडिकाख्यान् ।

**अभ्रंकषमहाशालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥**
**वनेषु माधवीश्लिष्टद्राक्षास्तबकशालिषु ।**

अभ्रमाकाशं कषंत्युल्लिखंत्यत्युच्चतयाऽभ्रंकषाः महांतश्च ते शालाश्च तालाश्च महाशालतालाः । अभ्रंकषाश्च ते महाशालतालाश्च तै रुद्धः स्थगित उष्णरश्मिर्दिनकरो येषु वनेषु तेषु मध्यंदिने मध्याह्नेऽर्कतापार्तः सन् स्वप्याच्छयीत । वनेष्विति । माधव्यो लताविशेषा अतिमुक्तकाख्यास्तासु श्लिष्टा माधवीश्लिष्टाः । द्राक्षायास्तबका गुच्छका द्राक्षास्तबकाः । माधवीश्लिष्टाश्च ते द्राक्षास्तबकाश्च तैः शालितुं श्लाघितुं शीलं येषां वनानां तानि माधवीश्लिष्टद्राक्षास्तबकशालीनि तेषु वनेषु ।

कस्मिन् स्वप्यादित्याह ।

**सुगंधिहिमपानीयसिच्यमानपटालिके ॥ ३४ ॥**
**कायमाने चिते चूतप्रवालफललुंबिभिः ।**

कायमाने वेण्वादिनिष्पादिते गृहविशेषे । कीदृशे । सुगंधि च तद्धिमं च तत्पानीयं च तत्सुगंधिहिमपानीयम् । पटानां वस्त्राणामालिः पंक्तिः पटालिः । सुगंधिहिमपानीयेन सिच्यमाना पटालिर्यस्मिन्नसौ सुगंधिहिमपानीयसिच्यमानपटालिकस्तस्मिंस्तथाविधे कायमाने । तथा । प्रवालाः किसलयानि । फलानां लुंबयः स्तबकाः । प्रवालाश्च फललुंबयश्च प्रवालफललुंबयः । चूतानां प्रवालफललुंबयस्ताभिश्चिते परितो व्याप्ते ।

ईदृशे कायमाने स्थितो यादृशे शयने शयीत तन्निरूपयन्नाह ।

**कदलीदलकह्लारमृणालकमलोत्पलैः ॥ ३५ ॥**
**कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ।**
**मध्यंदिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथवा ३६**

तल्पे शयने कल्पिते । कैः । कदलीदलादिभिः । कदल्या रंभाया दलानि पत्राणि । कल्हारं सौगंधिकम् । मृणालं बिसम् । कमलं पद्मम् । उत्पलं कुमुदम् । एतेषां द्वंद्वः । तैः कदलीदलादिभिः कोमलैः सुकुमारस्पर्शैः कल्पिते रचिते । किंभूते । कुसुमानि च पल्लवाश्च कुसुमपल्लवाः । हसंत इव कुसुमपल्लवा यत्र तस्मिन् धारागृहेऽथवा स्वप्यादित्यनुवर्तते । धारागृहमविरतममलजलधाराः पतंति यत्र ।

किंभूते ।

**पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ।**

पुस्तस्त्रीस्तनहस्तास्यैः प्रवृत्तमुशीरवारि यत्र तस्मिन् । पुस्तो दार्वादिमय्याः स्त्र्याद्याकृतेरुपादानकारणं यद्वस्तु तदुच्यते ।

**निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥ ३७ ॥**
**आसना**

निशासु च रात्रिषु सौधपृष्ठे हर्म्यतले आसना स्थितिः । कार्ये-

त्यध्याहार्यम् । तत्रासीतेत्यर्थः । किंभूते सौधपृष्ठे । निशाकरः शीतांशुस्तस्य करा गभस्तयस्तैराकीर्णे व्याप्ते ।

**स्वस्थचित्तस्य चंदनार्द्रस्य मालिनः ।**
**निवृत्तकामतंत्रस्य सुसूक्ष्मतनुवाससः ॥ ३८ ॥**
**जलार्द्रास्तालवृंतानि विस्तृताः पद्मिनीपुटाः ।**
**उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥३९॥**
**कर्पूरमल्लिका माला हाराः सहरिचंदनाः ।**
**मनोहरकलालापाः शिशवः सारिकाः शुकाः४०**
**मृणालवलयाः कांताः प्रोत्फुल्लकमलोज्ज्वलाः ।**
**जंगमा इव पद्मिन्यो हरंति दयिताः क्लमम् ४१**

स्वस्थचित्तस्य रागाद्यनुपहतमनसो जलार्द्राः क्लमं हरंति । एवं तालवृंतादयो योज्याः । अंतदीपकत्वादस्य । तस्य च कीदृशस्य । चंदनार्द्रस्य चंदनेनानुलिप्तस्य । तथा मालिनः स्रग्विणः । तथा निवृत्तं कामतंत्रं पुष्पधन्वपरिच्छदो यस्य । तथा सुष्ठु सूक्ष्मे तनुनी स्वच्छे वाससी यस्य स एवम् । जलार्द्राः पानीयक्लृताः शाटिकाः । तालवृंतानि मयूरपिच्छादिकृतानि तालवृंताकृतीनि व्यजनानि । तथा विस्तृता महांतः पद्मिनीपुटा नलिनीपत्राणि वीजनार्थम् । तयोत्क्षेपाः मयूरपिच्छादिकृता व्यजनविशेषाः । ते च किंभूताः । मृदुरुत्क्षेपो येषु ते मृदूत्क्षेपाः । जलवर्षी हिमोऽनिलो येषु मृदूत्क्षेपेषु ते जलवर्षिहिमानिलाः । शीतजलाभ्युक्षितैरेतैर्वातः कार्य इत्यर्थः । कर्पूरेत्यादि । मालाशब्दः प्रत्येकं प्रयुज्यते । स्फटिककर्पूरग्रथिता माला मल्लिकामालाश्चेत्यर्थः । तथा हारा मुक्तादामानि । किंभूतः । सह हरिचंदनेन सहरिचंदनाः । यच्छेदे लोहितमतिसुगंधं सुष्ठुशीतवीर्यं च तद्धरिचंदनमुच्यते । मनोहरेत्यादि । मनोहरो रम्यः कलो मधुर आलापो येषां ते मनोहरकलालापाः । शिशवो बालकाः । तथा सारिकाः शारारयः । शुकाः कीराः । मृणालेत्यादि । मृणालान्यतिकोमलानि बिसानि वलयाः कटकानि यासां ता दयिता योषितः । किंभूताः । कांता रम्याः । तथा प्रफुल्लैर्विकसितैः कमलैरुज्ज्वलाः शोभिता एवंभूताश्च । उत्प्रेक्ष्यंते । जंगमाः संचारिण्य इव पद्मिन्यः । क्लमं हरंतीति योज्यम् । स्वस्थचित्तस्येति प्राधान्यख्यापनार्थं प्रागुपात्तम् । स्वस्थचित्तस्यैव ते जलार्द्रादयः क्लमं हरंति न तथोपतप्तमनसः । चित्तायत्ता हि सर्वभावानां शुभाशुभप्रवृत्तयः । तथा च स्निग्धमधुरोऽप्याहार उपयुक्तः । सुखशय्यादिरपि विहारः सेवितः शोकाविष्टचेतसो न तथा शरीरस्य पुष्टिमादधाति । अत एव शोकः शोषणानामित्यग्र्यसंग्रहे प्रोक्तम् । तथा रूक्षोऽप्याहारस्तथाविधो विहारश्च सेवितो निर्वृत्तमनसः पुष्टिमेवादधाति न कार्श्यम् । तथाचोक्तम् । निर्वृत्तिः पुष्टिहेतूनामिति । सुश्रुते च क्लमस्य लक्षणमुक्तम् । योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इंद्रियार्थप्रबाधक इति ।

इदानीं वर्षाचर्यां निर्दिदिक्षुरिदमाह ।

**आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।**
**वर्षासु दोषैः**

आदानमुक्तम् । तेनादानाख्येन कालेन ग्लानं सक्लमं वपुः शरीरं येषां पुरुषाणां त आदानग्लानवपुषस्तेषामपचितधातूनामग्निरप्यपचितः सन्नो मंदः सन् पुनर्वर्षासु सीदति हानिं याति । अपिशब्दः पुनरर्थे । अनेकार्थत्वान्निपातानाम् । वर्षास्विति नित्यबहुत्वाद्बहुवचनम् । केन सीदतीत्याह । कालस्वभावाद्दोषैर्वातपित्तश्लेष्मभिर्दुष्टैरित्यनुक्तमप्यर्थाद्गम्यते । यतोऽग्निसादहेतुत्वमदुष्टानां तेषां न संभवति । तस्माद्दुष्टैर्दोषैरग्निः सीदतीत्यर्थाल्लभ्यते ।

ननु कथं वर्षासु दोषाणां दुष्टत्वं स्यादित्याह ।

**दुष्यंति तेंबुलंबांबुदेऽम्बरे ॥ ४२ ॥**
**सतुषारेण मरुता सहसा शीतलेन च ।**
**भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥४३॥**
**वह्निनैव च मंदेन**

ते दोषा दुष्यंति । कदा । अंबरे वियत्यंबुलंबांबुदेऽम्बुना लंबा अतिनिर्भरत्वादंबुलंबा ईदृशा अंबुदा मेघा यस्मिन्नेवंविधे । अनेन च विशेषणेनास्य कालस्य स्वरूपमुपलक्षयंत्याचार्याः । यदैवंविधो वर्षाकालः संपद्यते तदैवैते दोषा दुष्यंति स्वकर्मण्ययोग्याः संपद्यंते न वर्षाकालमात्रेऽनासादितस्वरूपे । तथा सतुषारेण सजलकणेन मरुता पवनेन सहसा ग्रीष्मतापसंतापादनंतरमेव शीतलेनाभ्यंतरो वायुर्दुष्यति । तथा भुवो बाष्प ऊष्मा भूबाष्पस्तेन । तथा कालस्वाभाव्यादम्लपाकेन वारिणा पित्तं दुष्यति । तथा मलिनेन वारिणा लूतादितंतुविण्मूत्रेत्यादिकलुषेण वर्षाजलेन कालस्वाभाव्याचातिशयेन मंदत्वं गतेनाग्निना श्लेष्मा दुष्यति । तदेतदेवमस्मिन्काले वातपित्तश्लेष्माणो युगपत्कालस्वाभाव्याद्दुष्यंति । नन्विह त्रयाणामपि दोषाणां कोपोऽनुज्ञायते । वक्ष्यति तु । चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिष्विति । तदिमे वचसी परस्परं व्याहाते । अत्रोच्यते । नानयोर्वाक्ययोर्मिथो विरोधः संभाव्यते । यस्मादिह दुष्यंतीत्युक्त्या स्वस्था एव दुष्टिं प्राप्ता विषादिस्पृष्टद्रव्यवत्कार्यकरणेऽसमर्था जायंत इत्युक्तम् । चयप्रकोपप्रशमा इत्यत्र च प्रकर्षेण कोपः स्थानांतरगतिलक्षणो गदितः । तदेवमस्मिन् काले वायोः कदाचिद् दुष्टत्वं स्यात् कदाचित्कोपश्चेति वचनाभ्यामेताभ्यां प्रत्यपादि । पित्तश्लेष्मणोस्तु दुष्टत्वमात्रमेवेति न किंचिदत्रासमंजसम् ।

**तेष्वित्यन्योन्यदूषिषु ।**
**भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥ ४४॥**

इतिप्रकारे । अन्योन्यं दूषयितुं शीलं येषां वातादीनां त एवं तेष्वनेन प्रकारेण परस्परं दूषणस्वभावेषु सत्सु भजेत् । साधारणं सर्वं यत्किंचिद्वातादीनां युगपत् प्रशमनं तत्सर्वं सेवेत । यच्चोष्मणो जाठराग्नेस्तेजनमुद्दीपनं तद्भजेत् । उष्मणस्तेजनस्यात्र

चशब्दयुक्तस्योपादानं प्राधान्यख्यापनार्थम् । अग्निर्हि सर्वभावानां प्रधानम् । तथा च वक्ष्यति । शांतेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः । रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यत इति । तस्मादग्न्युत्तेजनार्थे यत्नः कार्य इति भावः । भजेदिति क्रियादिदीपकत्वाद्भोजनं त्वतिदुर्दिन इतियावत्सर्वेषु योज्यम् ।

किं तत्साधारणमिति तदुदाहरणार्थमाह ।

**आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।**
**जांगलं पिशितं यूषान् मध्वरिष्टं चिरंतनम् ४५**
**मस्तु सौवर्चलाढ्यं वा पंचकोलावचूर्णितम् ।**
**दिव्यं कौपं शृतं चांभो भोजनं त्वतिदुर्दिने ४६**
**व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।**

शुद्धा तनुर्यस्य स एवंभूतः कृतविरेकादिः सन्नास्थापनं निरूहं भजेत् । तथा जीर्णं धान्यं पुराणयवगोधूमादिकम् । तथा रसान् मांसरसान् । किंभूतान् । कृतान् स्नेहशुंठ्यादियुतान् । तथा जांगलं पिशितं हरिणैणादिकं मांसम् । तथा यूषान् मुद्गदाडिमादिकृतान् । तथा मधु मार्द्वीकमरिष्टं द्वयमप्येतच्चिरंतनं पुराणं नतु नवमग्निमांद्यभयात् । मस्तुसौवर्चलाढ्यमक्षलवणसंयुक्तम् । चेति समुच्चये । किंभूतं मस्तु । पिप्पलीपिप्पलीमूलचव्यचित्रकनागराः । पंचकोलं तेनावचूर्णितम् । तथा दिव्यमाकाशजं तथा कौपं तथा शृतं क्वथितं चांभः पिबेत् । चः समुच्चये । दिवि भवं दिव्यम् । दिगादित्वाद्यत् । कूपे भवं कौपम् । प्राग्दीव्यतोण् । अतिदुर्दिने वातवर्षाकुलेऽहनि । व्यक्ताः प्रधाना अम्ललवणस्नेहा यत्र तद्भोजनं भजेत् । तथा संशुष्कं शुष्कप्रायम् । तथा क्षौद्रवत्समाक्षिकम् । तथा लघु । ननु वातलं मध्विति वक्ष्यति । पवनश्चात्र कुप्यतीत्युक्तम् । अतो माक्षिकस्यात्रोपयोगो न युक्तः । अत्रोच्यते । देहधातवोऽस्मिन् काले क्लेदमुपयांति । ततश्च क्लेदसंरक्षण एवोपक्षीणप्रभावत्वान्मधु मरुत्कोपं विधातुमसमर्थम् । तस्मान्मधूपयोगो न्याय्य एव ।

अथाऽत्र काले यादृशः पुरुषः स्यात्तं दर्शयति ।

**अपादचारी सुरभिः सततं धूपितांबरः ॥ ४७ ॥**
**हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ।**

पादाभ्यां चरति नित्यं पादचारी नैव यः सोऽपादचारी यानयायी स्यात् । तथा सुरभिः शोभनगंधयोगात् स्नानशीलः । ससुरभिरित्यनेनैवास्योक्तत्वात्सुरभिग्रहणमतिशयार्थम् । तथा सततमविरतं धूपितेंऽबरे यस्य स एवम् । तथा हर्म्यपृष्ठे धवलगृहतले वसेत् तिष्ठेत् । कीदृशे । बाष्पश्च शीतं च शीकरश्च तैर्वर्जिते ।

**नदीजलोदमंथाहःस्वप्नायासातपांस्त्यजेत् ॥ ४८॥**

तथा नदीजलादीन्पंच त्यजेत् । उदकालोडिताः सक्तवः ससर्पिष्का उदमंथवाच्या जलावक्षारीसंज्ञाः । तदत्र काले सात्म्यत्वात्सक्तवस्तक्रादिसंयोगान्नात्यंतमनिष्टाः । पानीयसंयोगात्तु वातलाः प्रकृष्टवातले काले नाभीष्टा एव । मुनिना त्वेवमुक्तम् । उदमंथं दिवास्वप्नमवश्यायं नदीजलम् । व्यायाममातपं चैव व्यवायं चात्र वर्जयेदिति ।

अधुना शरच्चर्यां विवक्षुराह ।

**वर्षाशीतोचितांगानां सहसैवार्करश्मिभिः ।**
**तप्तानां संचितं वृष्टौ पित्तं शरदि कुप्यति ४९**
**तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।**

वर्षासु शीतं वर्षाशीतं वर्षाशीतमुचितं सात्म्यं यस्य तदेवंविधमंगं वपुर्येषां ते वर्षाशीतोचितांगा नरास्तेषां सहसैव झटित्येव शरदि जातायामर्करश्मिभिर्भानुभाभिस्तप्तानां सतां पित्तं कुप्यति । किंभूतम् । वृष्टौ संचितं वर्षासु वृद्धिं गतम् । यतश्चैवं ततश्च तज्जयाय तिक्तं घृतं कुष्ठचिकित्सितोक्तं योज्यमिति वाक्यशेषः । यदि वा तिक्तैर्द्रव्यैः साधितम् । तथा विरेको योज्यः । तथा रक्तमोक्षणं च । सर्वोपक्रमेभ्यः पित्ते विरेकस्य ज्यायस्त्वादिह पूर्वमुपन्यासः । तथा ह्याह । विरेचनं पित्तहराणामिति । ततो रक्तमोक्षणं पित्ताधारत्वाद्रक्तस्य । विरेचनांगत्वाच्च तज्जयाय घृतं तिक्तमिति घृतस्य पूर्वमुपन्यासः । न ह्यस्निग्धस्य विरेचनप्राप्तिरस्ति । तथा च वक्ष्यति । स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः । दारुशुष्कमिवानामे शरीरं तस्य दीर्यत इति । तथा विरिक्तस्य स्रुतरक्तस्य च पवनप्रकोपभयम् । कालस्वाभाव्याच्च पित्तकोपभयम् । तदेतत्परिहर्तुं तथा पुष्ट्यर्थमग्निसंधुक्षणार्थं च तिक्तघृतोपयोगः कार्यः । इत्यनेन कार्यकारणत्वेन प्राधान्याच्च तिक्तघृतस्य पूर्वमुपन्यासः । असमासकरणं च ज्ञापनार्थम् । नैतानि सर्वाण्यवश्यं तिक्तघृतादीनि तदा कार्याणि । किंतर्हि देशाद्यनुरोधात्कदाचित्पित्तविजयाय तिक्तं घृतं कदाचिद्विरेकः कदाचिद्रक्तमोक्षः कदाचिद्द्वयं कदाचित्सकलान्येवेति । विरेकस्तु पित्तविजयार्थमवश्यं शरदि कार्यः । तथा वसंते श्लेष्मविजयाय वमनम् । वर्षासु च पवनविजयाय बस्तिः । अत एव प्राङ्निर्दिष्टं वसंते च वमनं वर्षासु चास्थापनं शरदि विरेक इति ।

**तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ५०**
**शालिमुद्गसिताधात्रीपटोलमधुजांगलम् ।**

क्षुधितोऽन्नं भोजनं तिक्तादिगुणयुक्तं भजेत् । क्षुधितग्रहणमतिबुभुक्षितप्रतिपादनार्थम् । अक्षुधितस्य भोजनाधिकाराभावात् । किं तत्तिक्तादिगुणयुक्तमित्याह । शालीत्यादि । शाल्यादीन् सप्त भजेत् ।

**तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ५१**
**समंतादप्यहोरात्रमगस्त्योदयनिर्विषम् ।**
**शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ५२**
**नाभिष्यंदि नवा रूक्षं पानादिष्वमृतोपमम् ।**

समंतात्सर्वतः सूर्यप्रभाभिरहनि तप्तं कथितं च चंद्रकिरणैर्निशि शीतीकृतम् । तथा अगस्त्योदयेन निर्विषीकृतम् । तथा शुचि पवित्रम् । वर्षासु ह्यशुचीत्युक्तम् । तच्च हंसोपभोग्यतया हंसवदतिनैर्मल्याद्धंसोदकं नाम तंत्रकारैरायुर्वेदशास्त्रे संज्ञितम् । तथा निर्मलमकलुषम् । तथाऽमलत्वात् पित्तश्लेष्माणौ जयतीति मलजित् । अगस्त्योदयनिर्विषशब्देन विशेषणेनैतत्प्रतिपादयति । यथा यदंतरिक्षप्रभवं सरस्तडागादिस्थं जलं तदेव प्रायेण शरद्येवंगुणं वेद्यं न कूपादिप्रभवम् । तस्य सदा निर्विषत्वात् । तथा चांतरिक्षप्रभवमेव पठ्यते । लूतादितंतुविण्मूत्रविषसंश्लेष्मदूषितमिति । तच्च नाभिष्यंदि न सुतिरूपश्लेष्मकारि नवा रूक्षं न वातप्रकोपकारि । वाशब्दश्चशब्दस्यार्थेऽत्र । यतस्तप्तांशुकिरणैस्तप्तम् । यतश्च शीतांशुतारकाकरैः शीतं प्रह्लादितमित्थं स्नेहरौक्ष्ययोरंतरे वर्तमानं पानादिष्वमृतोपमम् । आदिशब्देन स्नानावगाहयोर्ग्रहः । कुपितदोषशमनादकुपितदोषसाम्यानुवृत्तिहेतुत्वाच्चामृततुल्यमेतज्जलं भजेदित्यर्थः । अत्रोष्णांशुग्रहणमग्नितापनिवृत्त्यै । किरणग्रहणं साक्षात्तत्स्पर्शसंभवनार्थम् । दवपलाशादिभिरास्तृतमपि रविस्तापयति न तु तत्तथा गुणवत् । अतः किरणग्रहणेन तद्व्यवधानव्युदासं करोति । नच सर्वं दिनं सूर्यकिरणैस्तापः संभवति । चंद्रकरैस्तु सर्वां रात्रिं कथमिव स्यात् । यतः सकलचंद्रमसः पौर्णमास्यामेव सर्वस्यां रात्र्यां संभवो नान्यत्र । तस्माच्छीतं चंद्रकिरणै रात्र्यामिति नैतद्युक्तम् । अत्रोच्यते । विमले व्योमनि यथैव रविचंद्रौ यथाकालमव्याहतस्वरूपप्राप्तौ पथ्यतां जलस्यापादयतस्तद्वन्नक्षत्राण्यपि । तस्मान्नक्षत्रैरपि शीतं चंद्रेणेव श्रेष्ठमेव भवत्युदकम् । एवं च तदेवमवगच्छ । अन्यथैतद्वाक्यमयुक्तमिव स्यात् । चरकमुनिनाप्यनेनैवाऽभिप्रायेण नक्षत्रग्रहणं नाकारि । यथा । दिवा सूर्यांशुसंतप्तं निशि चंद्रांशुशीतलमिति। अष्टांगसंग्रहेऽप्युक्तम् । दिवा दिवाकरकरैर्निशाकरकरैर्निशीति । अत्र सकलस्याहोरात्रस्य रविशशियोगाय दिवानिशाग्रहणमन्यथैतदनर्थकं स्याद्व्यभिचाराभावात् ।

**चंदनोशीरकर्पूरमुक्तास्रग्वसनोज्वलः ॥ ५३ ॥**
**सौधेषु सौधधवलां चंद्रिकां रजनीमुखे ।**

चंदनं चोशीरं च कर्पूरश्च मुक्ताश्च स्रजश्च वसनानि च तैरुज्वलः शोभनः सन् सौधेषु धवलगृहपृष्ठेषु चंद्रिकां ज्योत्स्नां भजेत् । कदा । रजनीमुखे प्रदोषे । परतस्तु निदाघ इव न सेव्याः। अवश्यायभयात् । अवश्यायो ह्यत्र परिहार्यः ।

तथा चाह ।

**तुषारक्षारसौहित्यदधितैलवसातपान् ॥ ५४ ॥**
**तीक्ष्णमद्यदिवास्वप्नपुरोवातान् परित्यजेत् ।**

तुषारादीन् दश परित्यजेत् । तुषारोऽवश्यायः । क्षारो यवक्षारादिः । सौहित्यं तृप्तिः । तीक्ष्णं च तन्मद्यं च तीक्ष्णमद्यम् । पुरोवातः पूर्वदिग्गतो वातः ।



व्यासेन ऋतुचर्यामुक्त्वा समासेनाह ।

**शीते वर्षासु चाद्यांस्त्रीन् वसंतेऽत्यान् रसान्भजेत् ।**
**स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ।**

शीते हेमंतशिशिरयोर्वर्षास्वाद्यांस्त्रीन् स्वाद्वम्ललवणाख्यान् रसान् भजेत् । वसंते चांत्यांस्त्रीन् तिक्तकटुकषायान्भजेत् । स्वादु निदाघे ग्रीष्मे मधुरं भजेत् । शरदि स्वादुतिक्तकषायान्भजेत् ।

**शरद्वसंतयो रूक्षं शीतं घर्मघनांतयोः ॥ ५६ ॥**
**अन्नपानं समासेन विपरीतमतोऽन्यदा ।**

शरद्वसंतयो रूक्षमन्नपानं समासेन भजेत् । अतो विपरीतं स्निग्धमन्यदा हेमंतशिशिरग्रीष्मवर्षासु । शीतमन्नपानं घर्मघनांतयोर्भजेत् । अतो विपरीतमुष्णमन्नपानमन्यदा हेमंतशिशिरवर्षावसंताख्ये काले भजेत् ।

संप्रति सेव्यत्वेनोपदिष्टस्याहारस्यापवादमाह ।

**नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ५७**

नित्यं सर्वदा सर्वेषां षण्णामपि रसानामभ्यासः शीलनं कार्यमिति वाक्यशेषः । सर्वरसाभ्यासो बलकारणमिति वचनात् । नन्वेवं सति यथर्तुसेव्यत्वेन रसनियमो यः पूर्वं कृतः स विरुद्धो नेत्याह । स्वस्वेत्यादि । ऋतावृताविति वीप्सायां द्वित्वम् । स्वं च स्वं च स्वस्वं तस्याधिक्यं भूयस्त्वं कार्यमिति शेषः । यथा शीते वर्षासु चाद्यांस्त्रीनित्युक्तम् । तदेतेषु ऋतुष्वेते रसा भूयसोपयोक्तव्याः । नत्वेत एवेत्यर्थः । तथा समधातुं प्रति समे देशे वैषम्यनियमो वेद्यः । अन्यत्र तु जांगलेऽनूपे देशे विषमधातोश्च धातुसाम्योत्पादनार्थं देशदेहानुगुणमन्यर्तुविधानमन्यस्मिन्नप्यृतावनुष्ठेयमेव ।

किमन्यस्मिन्नृतौ प्राप्ते पूर्वर्तुचर्या सहसैव त्याज्याऽन्या च सेव्या । नेत्याह ।

**ऋत्वोरंत्यादिसप्ताहावृतुसंधिरिति स्मृतः ।**
**तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ५८**

ऋत्वोः शिशिरवसंतयोर्ग्रीष्मप्रावृषोरित्यादिकयोरंत्यश्चादिश्च यौ सप्ताहौ तावृतुसंधिरिति स्मृत उच्यते । तत्र सप्ताहद्वयलक्षणे ऋतुसंधौ पूर्वः पूर्वर्तुसंबंधी विधिस्त्याज्यः । अपर एष्यदृतुसंबंधी सेवनीयः । कथम् । क्रमात्क्रमेण पादेनापथ्यमभ्यस्तमित्यादिना । सप्तानामह्नां समाहारः सप्ताहः । सप्ताहश्च सप्ताहश्च सप्ताहौ । राजाहः सखिभ्यष्टजिति टच् समासांतः । न संख्यादेः समाहार इत्यह्नादेशनिषेधः ।

ननु किमेवं त्यागः सेवनं च क्रियत इत्याह ।

**असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात् ।**

यत्सहसा त्यागशीलनादसात्म्यादनुचिताज्जाता असात्म्यजा रोगाः स्युः । ततः सहसा त्यागशीलनं न कार्यमिति शेषः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां तृतीयोऽध्यायः संपूर्णः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

स्वस्थवृत्तिप्रवृत्तस्य वेगधारणशीलस्य च स्वास्थ्यसंभवः । अतो वेगधारणप्रतिषेधेन या रोगानुत्पत्तिस्तामधिकृत्याध्याय आरभ्यते ।

**अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ।**

व्याख्यात्र प्रथमाध्यायवद्बोद्धव्या । रोगाणामनुत्पादोऽनुत्पादनं तस्मै हितो रोगानुत्पादनीयः । उपदर्शनमिदं निदर्शनाख्यम् । तंत्रयुक्त्या चोत्पन्नरोगोपशमप्रदर्शनाद्रोगोपशमनीयोऽपि । वातादिरोधोत्थानां रोगाणामुपशमस्याप्युपदेशात् । तथा च वक्ष्यति । अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः । निजागंतुविकाराणामुत्पन्नानां च शांतय इति ।

**वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।**
**निद्राकासश्रमश्वासजृंभाश्रुच्छर्दिरेतसाम् ॥ १ ॥**

वातादीनां वेगान्न धारयेत् । सर्वत्र द्वंद्वसमासः । क्षवश्छिक्का । श्रमेण श्वासः श्रमश्वासः ।

वातस्य प्राधान्यात्तद्रोधजान्रोगान् पूर्वं निदर्शयन्नाह ।

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।**
**वातमूत्रशकृत्संगदृष्ट्यग्निवधहृद्गदाः ॥ २ ॥**

अधोवातस्य रोधेन गुल्मादयो जायंते । ऊर्ध्ववातस्योद्गाररूपस्य रोधात् सुखसाध्या अरुच्यादयः । अत एवाधोवातरोधाद्ये रोगा अतिप्रत्ययायरूपा गुल्मादयोऽत्र ते पूर्वं निर्दिष्टाः । उदावर्तोऽर्शोनिदाने वक्ष्यते । रुक् पीडा । क्लमो ग्लानिः । वातमूत्रशकृत्संगो वातादीनामप्रवृत्तिः । दृष्टेरग्नेश्च वधो नाशः । हृद्गदो हृद्रोगः ।

**स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।**
**पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ॥ ३ ॥**

तत्र वातोत्थे विकारे स्नेहः कर्तव्यः । स्वेदः कर्तव्यः । फलवर्तयः कार्याः । वातहराणि भोजनानि कार्याणि । पानानि सुखोष्णोदकपानानि कार्याणि । बस्तयश्च कार्याः । यत्किंचिद्वातानुलोमनं तच्छस्तम् ।

**शकृतः पिंडिकोद्वेष्टप्रतिश्यायशिरोरुजः ।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥ ४ ॥**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ।**

शकृतो रोधेन पिंडिकोद्वेष्टादयो जायंते । उद्वेष्टनमिवोद्वेष्टः पिंडिकयोरुद्वेष्टः पिंडिकोद्वेष्टः । पिंडिका जंघाकांडस्य पश्चिमे भागे पिंडाकृति कठिनं मांसम् । तत्रोद्वेष्टनेनेव रुग्भवतीत्यर्थः । प्रतिश्यायः पीनसः । चः समुच्चये । न केवलमेत एव यावत्पूर्वोक्ता गुल्मादयश्च स्मृताः ।

**अंगभंगाश्मरीबस्तिमेढ्रवंक्षणवेदनाः ॥ ५ ॥**
**मूत्रस्य रोधात्पूर्वे च प्रायो रोगाः**

मूत्रस्य रोधादंगभंगादयो जायंते । अंगानां भंगः स्फोटनमिवांगभंगः । बस्त्यादीनां वेदनया संबंधः । मेढ्रं शिश्नम् । पूर्वे च प्रायो रोगा अधोवातशकृद्रोधजास्तेऽपि मूत्रस्य रोधाज्जायंते । प्रायोग्रहणाद्वातादिरोधजाः केचिदेवोत्पद्यंते केचिन्नेति बोधयति ।

**तदौषधम् ।**
**वर्त्यभ्यंगावगाहाश्च स्वेदनं बस्तिकर्म च ॥ ६ ॥**

तदौषधं तेषां वातादिरोधजानां रोगाणामौषधं चिकित्सितं भवति । किं तदित्याह । वर्तिर्मदनफलादिकृता फलवर्तिसंज्ञा । अभ्यंगोऽभ्यंजनम् । अवगाहो वातहरद्रव्यसाधिते द्रवे द्रोण्यां निहिते पायुदेशस्यावस्थापनम् । स्वेदनं स्वेदः । बस्तिकर्म मलप्रवृत्तये बस्तिविधौ वक्ष्यमाणम् ।

पुरीषरोधोत्थेष्वन्यमप्यसाधारणमुपक्रममाह ।

**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ।**

पुरीषवेगधारणजेषु यक्ष्मसु रोगेषु विशः पुरीषस्य भेदि भेदकमन्नपानं यावकमस्तुवास्तुकादिकमौषधम् । चशब्दात्पूर्वोक्तं वर्त्यादि च ।

**मूत्रजेषु च पाने च प्राग्भक्तं शस्यते घृतम् ॥ ७ ॥**
**जीर्णांतिकं चोत्तमया मात्रया योजनाद्वयम् ।**
**अवपीडकमेतच्च संज्ञितं**

मूत्ररोधजेषु पुनः प्राग्भक्तं भक्तभोजनात्पूर्वं घृतं पाने शस्यते । जीर्णांतिकं घृतं च शस्यते । कथम् । उत्तमया मात्रयाऽहोरात्रजरणलक्षणया । योजनाद्वयमेतच्चावपीडकमुच्यते । योजनयोर्द्वयं योजनाद्वयं प्राग्भक्तस्नेहयोजना जीर्णांतिकस्नेहयोजना च । तत्र प्राग्भक्तं यत्र घृतपानसमनंतरं भक्तं भुज्यते । जीर्णांतिकं यत्तद्भक्तस्तनेऽन्ने जीर्णे घृतं प्रयुज्यते । प्रदेशांतरेष्ववपीडकशब्देन योजनाद्वयमेतदस्मिंस्तंत्रे वेद्यम् । तथा च वक्ष्यति । रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः । तथाऽष्टांगावतारे मूत्रोदावर्तचिकित्सायाम् । अवपीडकसर्पिश्च विशेषान्मूत्रजे गद इति । ननु वेगधारणेन बाहुल्येन मरुत एव कोपः । तथा च वक्ष्यति । ततश्च नैकधा प्रायः पवनो यत्प्रकुप्यति । पवनविजये च तैलं यथा वरं न तथा घृतमतस्तैलस्यैवावपीडकयोजनमत्रोचितं न सर्पिषः । अत्रोच्यते । तैलस्य वातजितोपि बद्धविट्काल्पमूत्रस्वभावत्वादत्रायोग्यं पानम् । तथा च । तैलं स्वयोनिवदित्यारभ्य यावद्बद्धविट्कमिति । स्वयोनिवदित्युक्तेश्चाल्पमूत्रत्वम् । तथा च वक्ष्यति । उष्णस्त्वच्यो हिमस्पर्शः केश्यो बल्यस्तिलो गुरुः ।

अल्पमूत्र इति । तदेवं तैलस्य बद्धविट्कालमूत्रस्वभावतया तदीयोऽवपीडको मूत्ररोधोत्थेषु रोगेष्वौषधत्वेन युक्तोऽपि न सर्पिष इव युक्तः ।

**धारणात्पुनः ॥ ८ ॥**
**उद्गारस्यारुचिः कंपो विबंधो हृदयोरसोः ।**
**आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम् ॥९॥**

पुनरतिव्यतिरेके । उद्गारस्य धारणादरुच्यादयो भवंति । उरो वक्षस्तस्याधो हृदयं तयोर्विबंधोऽतस्तंभ इव । तत्र तेषु रोगेषु हिध्मावद्भेषजम् । श्वासहिध्माचिकित्सिते हिध्मायाश्चिकित्सितं वक्ष्यति ।

**शिरोर्तींद्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः ।**

क्षुतेः क्षवथोर्धारणाच्छिरोर्त्यादयः स्युः । दुर्बलस्य भावो दौर्बल्यम् । गुणवचनेत्यादिना ष्यत्र् । इंद्रियाणां दर्शनादीनां दौर्बल्यं विषयग्रहणाशक्तित्वमिंद्रियदौर्बल्यम् । ननुच पूरणगुणेत्यादिना समासप्रतिषेधेन भवितव्यम् । अत्रोच्यते । य एव गुणशब्दा गुणिनावच्छिन्ना गुणमात्रे वर्तंते कदाचिद्गुणिन्यपि त एव प्रतिषेधस्य विषयाः । यथा पटस्य शुक्लो गुडश्च मधुर इत्यादयः । ये तु गुणमात्र एव वर्तंते न गुणिनि ते समासस्य । यथा पटहशब्दः पुत्रस्पर्शः कन्यारूपं द्राक्षारसश्चंदनगंध इत्यादयः । तथेंद्रियदौर्बल्यमित्यादावपि भावप्रत्ययांतस्य सदा व्यतिरेककारणत्वाद्गुणाभिधायित्वमेव । तस्मादेवमादौ तत्स्थैश्च गुणैः षष्ठी समस्यत इति समासः । तस्यायमर्थः । तेषु गुणेष्वेव तिष्ठंतीति तत्स्थाः । एतदुक्तं भवति । गुणा एव ये गुणा वर्तंते न द्रव्यात्मनि तैः सह षष्ठी समस्यते । शुक्लादिशब्दानां तु कदाचिद्द्रव्यवृत्तित्वात्सामानाधिकरण्येनापि वृत्तिर्दृष्टा । यथा शुक्लः पट इति । गुणवृत्तित्वात् वैयधिकरण्येनापि । यथा पटस्य शुक्ल इति । तदेषां प्रतिषेधविषयत्वम् । पटहशब्दादीनां तु तत्स्थत्वात्समासविषयत्वमिति स्थितम् । नन्वेवं सति बलाकायाः शौक्ल्यमित्यत्रापि पूर्वोक्तान्यायात्समासः प्राप्नुयात् । अत्रोच्यते । भाष्यकारवचनान्न भविष्यति । स हि गुणवचनग्रहणमेव कस्मान्न क्रियत इत्युक्त्वाऽभ्यधात् । बलाकायाः शौक्ल्यमित्यत्रापि यथा स्यादिति । समासस्यात्राभावः । अर्दितं वातव्याधिनिदाने ।

**तीक्ष्णधूमांजनाघ्राणनावनार्कविलोकनैः ॥ १० ॥**
**प्रवर्तयेत्क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ।**

क्षुतिं सक्तामप्रवर्तमानां तीक्ष्णधूमादिभिः प्रवर्तयेत् । तीक्ष्णधूमो धूमपानविधौ वक्ष्यते । तीक्ष्णं चांजनमक्षिरोगेषु । तीक्ष्णाघ्राणं यन्नासया मरीचादिग्रहणम् । तीक्ष्णं नावनं तस्य विधौ वक्ष्यति । स्नेहश्च स्वेदश्च तौ च शीलयेदभ्यसेत् । क्षुतिः क्षुतम् । सुश्रुते चोक्तम् । प्राणापानौ समौ स्यातां मूर्ध्नि स्रोतःपथे स्थितौ । नस्तः प्रवर्तते शब्दः क्षुतं तत्र विनिर्दिशेत् ।

**शोषांगसादबाधिर्यसंमोहभ्रमहृद्गदाः ॥ ११ ॥**
**तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ।**

तृष्णाया निग्रहान्निरोधाच्छोषादयो भवंति । तत्र तृष्णाया रोधजेषु विकारेषु सर्वः शीतो विधिः स्नानान्नपानादिको हितः ।

**अंगभंगारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥१२॥**
**तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम् ।**

क्षुध इति । निग्रहादित्यनुवृत्तिः । निग्रहापेक्षया षष्ठी । एवं निद्राया इत्यत्रापि योज्यम् । क्षुधो बुभुक्षाया निग्रहादंगभंगादयः षड् भवंति । सामान्येनापि शूलशब्दनिर्देशे पक्वाशयगतः शूलो गृह्यते । क्षुद्वेगनिग्रहेण निवारणः प्रभंजनः कुप्यति । तस्यावस्थानं पक्वाशये । वक्ष्यति हि । पक्वाशयकटीत्यारभ्य यावत्पक्वाधानं विशेषत इति । तत्र क्षुधो निग्रहे भोजनं लघु स्निग्धमुष्णमल्पं च योज्यम् ।

**निद्राया मोहमूर्धाक्षिगौरवालस्यजृंभिकाः ॥१३॥**
**अंगमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ।**

निद्राया निग्रहान्मोहादयो भवंति । तत्र निद्रावेगरोधोत्थे विकारे स्वप्न इष्टः । संवाहनानि स्वल्पानि मर्दनानि च ।

**कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः॥१४॥**
**शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः।**

कासस्य कासवेगस्य रोधात्तद्वृद्धिः तस्य कासस्य वृद्धिराधिक्यं स्यात् । तथा श्वासादयः । तत्र कासचिकित्सितोक्तः सुतरामतिशयेन विधिः कार्यः ।

**गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात्॥१५॥**
**हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।**

श्रमेणाध्वव्यायामादिना साहसेन सद्यो जातः श्वासः श्रमश्वासः । तस्माद्विधारिताद्वेगरोधाद्गुल्मादयः स्युः । तत्र विश्रमणं हितम् । वातघ्नश्च क्रियाक्रमो हितः ।

**जृंभायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः १६**

जृंभाया रोधात् क्षुतिवद्रोगाः । तत्र सर्वा च वातघ्नक्रिया हितेति शेषः । जृंभा मुखविकासो गात्रविनामः ।

**पीनसाक्षिशिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः ।**
**सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः१७**

बाष्पतोऽश्रुणो विधारितात् पीनसादयो भवंति । पीनसो नासास्रावः । अक्षिशिरोहृदां रुजा संबंधः । सशब्दश्चार्थे । गुल्माश्चेत्यर्थः । तत्र स्वप्नादिका चिकित्सा ।

**विसर्पकोठकुष्ठाक्षिकंडूपांड्वामयज्वराः ।**
**सकासश्वासहृल्लासव्यंगश्वयथवो वमेः ॥ १८ ॥**

वमेश्छर्दिषो विधारिताया विसर्पादयः स्युः । कोठो लोहितं कठिनं च मंडलम् । अक्षिकंड्वादीनामामयेन संबंधः ।

**गंडूषधूमानाहारान् रूक्षं भुक्त्वा तदुद्वमः ।**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ॥१९॥**
**सक्षारलवणं तैलमभ्यंगार्थं च शस्यते ।**

तत्र गंडूषादयः शस्ताः । अनाहारोऽभोजनम् । एतेषां द्वंद्वः । तथा रूक्षं भुक्त्वा तस्य रूक्षस्योद्वमश्छर्दनम् । एवं प्राणो वायुः स्वमार्गं प्रत्येति ततो व्यायामायत्र शस्तम् । तथा क्षारलवणाभ्यां युक्तं तैलमभ्यंगार्थे शस्यते हितं भवति ।

**शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुर्ज्वरः ॥ २० ॥**
**हृद्व्यथा मूत्रसंगांगभंगवृद्ध्यश्मषंढताः ।**

शुक्राद्विधारितात्तस्य शुक्रस्य स्रवणम् । तथा गुह्यवेदना पायुवेदना वृषणशूलम् । तथा श्वयथुः प्रकृतत्वाद्गुह्य एवेति योज्यम् । अश्मशब्देनाश्मरी कथ्यते । वृद्धिर्वर्ध्म । षंढता स्त्रीगमनाशक्तित्वम् ।

**ताम्रचूडसुराशालिबस्त्यभ्यंगावगाहनम् ॥ २१ ॥**
**बस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः ।**

तत्र ताम्रचूडादिकं भजेत् । तथा बस्तिशुद्धिकरैः कूष्मांडादिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च कांताः प्रियत्वेन हिता इति शेषः । निरनुबंधः नरभसेन प्रवर्तते शुक्रम् ।

वेगरोधिनो ये न चिकित्स्यास्तान्दर्शयन्नाह ।

**तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम्॥२२॥**

तृट् च शूलं च ताभ्यामार्तमतिपीडितं तथा क्षीणं क्षीणदेहं वेगरोधिनं च त्यजेन्न चिकित्सेत् । तथा विषं यो वमति तं च वेगरोधिनं त्यजेत् ।

अथ किमेते रोगा वेगोदीरणधारणाद्भवंति नेत्याह ।

**रोगाः सर्वेऽपि जायंते वेगोदीरणधारणैः ।**

सर्वेऽपि रोगा जायंते न केवलं पूर्वोक्ता एव । वेगानां पुरीषादिसंबंधिनां यान्युदीरणान्यनागतानां प्रवर्तनानि तैः । तथा तेषामेवागतानां यानि विधारणान्यनुत्सर्गलक्षणानि तैः । अत्रेयं युक्तिः । वेगोदीरणधारणं नाम वायोः कर्म तस्य क्रियावत्त्वात् । तेन च वेगोदीरणधारणलक्षणेन स्वकर्मणा स एव वायुः कोप्यते । स कुपितः सर्वानेव विकारान् जनयति । तथा चोक्तम् । शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवांगजाश्च । ये संति तेषां ननु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति । विट्श्लेष्मपित्तादिमलायनानां विक्षेपसंहारकरः स यस्मादिति ।

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २३ ॥**
**ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ।**
**अन्नपानौषधं तत्र युंजीतातोऽनुलोमनम् ॥ २४ ॥**

तत्र तेषु वेगोदीरणधारणोत्थेषु सर्वेषु मध्याद्ये तु भूयिष्ठं बाहुल्येन भवंति गुल्मोदावर्तादयस्तान् प्रति वर्त्यभ्यंगेत्यादिना साधनं निर्दिष्टं चिकित्सोक्ता । ततश्च वेगोदीरणधारणादनेकधा वायुर्यस्मात्कुप्यति । अतोस्माद्धेतोस्तस्यानुलोमनं मार्गयोजकमन्नपानौषधं युंजीत । यद्यपि वेगोदीरणधारणात्सर्वे रोगा जायंत इत्युक्तम् । तथापि यथा वेगधारणाच्चिरकालभाविनः सप्रत्यया रोगा भवंति न तथोदीरणात् । अत एव तंत्रकारोऽधोवातस्य रोधेनापि रोगा भवंति । शक्तो रोधादमी भवंतीत्युवाच । ननु तदुदीरणादमी रोगा भवंतीति । प्रायोग्रहणं क्वचित् कफादेरपि प्रकोप इति समापादयति । तथा च वमिनिग्रह उक्तम् । विसर्पकोठकुष्ठाक्षीत्यादि । तत्र गंडूषधूमानाहार इत्यादिचिकित्सा । न चैवंरूपो विधिर्वायावुपदिश्यते तस्मात्प्रायोग्रहणम् ।

यदि वेगरोधाद्रोगा जायंते तर्हि लोभादीनामपि नरकादिहेतूनां वेगा न धार्या इति प्राप्ते सतीदमाह ।

**धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।**
**लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेंद्रियः ॥२५॥**

तुशब्दोऽवधारणे । सदा सर्वकालं लोभेर्ष्यादीन् वेगान् धारयेदेवं हितैषी यः पुरुषः स्वहितमिच्छन् । क्व । प्रेत्य चेह च परलोके तथेहलोके च । किंभूतः सन् । जितानि दांतानींद्रियाणि मनःषष्ठानि चक्षुरादीनि विषयाणामनभिलाषुकतया येन स जितेंद्रियः । जितेंद्रियशब्देन लोभादिवेगविधारण उपायं दर्शयति । जितेंद्रिय एवैतान् धारयितुं शक्तो नान्य इत्यर्थः । द्वेषो वैरम् । मात्सर्यं परगुणासहिष्णुत्वम् । रागः प्रीतिः । आदिशब्देनाभिध्यादिपरिग्रहः । प्रेत्येह चेति कर्तव्ये द्विश्चकारकरणं रागादीनां वेगविधारणेन प्रेत्येह वास्मिन् लोके तुल्यकक्षत्वज्ञापनार्थम् । अन्यथा प्रेत्येत्यस्य पूर्वनिर्देशाद्भूयसैषां रागादीनां विधारणं प्रेत्य न तथेहलोके । पश्चान्निर्दिष्टत्वात् ।

अन्यच्च हितैषी किं कुर्यादित्याह ।

**यतेत च यथाकालं मलानां शोधनं प्रति ।**
**अत्यर्थसंचितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः२६**

मलानां वातपित्तश्लेष्मपुरीषादीनां यथाकालं शोधनं प्रति यतेत यत्नं कुर्यात् । यो यस्य मलस्य शोधनकालः स तस्मिन्काले शोधनीय इत्यर्थः । किमर्थं मलानां शोधनं कार्यमित्याह । अत्यर्थेत्यादि । यस्मात्ते मला अत्यर्थसंचिता अतिशयेन स्वस्थाने वृद्धिं गताः कुतोप्याहारविहाररूपात् कोपहेतोः क्रुद्धाः कुपिताः संतः कदाचिज्जीवितच्छिदः स्युर्भवेयुः । तस्मात्ते शोधनीयाः । अत्यर्थसंचितग्रहणेनैतद्द्योतयति । यदि ते मला अत्यर्थसंचिताः स्युस्तदैव तेषामन्योपक्रमेभ्यः शोधनाख्य उपक्रमो ज्यायान् । लंघनपाचने तूपक्रममात्रे ।

तदेवैतच्चेतसि कृत्वा दोषा इत्यादिग्रंथं ग्रंथकृदुवाच ।

**दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः।**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः॥ २७॥**

दोषा वातादयो लंघनपाचनैर्जिताः संतः प्रकृतिं प्रापिताः कदाचित्कस्मिन्नपि काले कुप्यंति। ये पुनः संशोधनैः शुद्धास्तेषां न पुनरुद्भव उत्थानं भवति।

**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत्।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् २८**

कालविद्यो वैद्यः सोऽतः संशोधनपूर्वं रसायनानि प्रयोजयेत्। कालशब्दो देशबलशरीराहारसात्म्यसत्वप्रकृतीनामुपलक्षणार्थः। नहि कालमात्रविद्रसायनप्रयोगं सम्यग्विधाययितुं शक्तः। किंभूतानि रसायनानि। सिद्धानि बहुशो दृष्टप्रत्ययानि ब्राह्मवासिष्ठादीनि। कथं योजयेदित्याह। यथाक्रमं यथायोगमित्यनेन रसायनं वाजीकरणोक्तं स्मारयति। तत्रैष रसायनक्रमः। हरीतकीमामलकं सैंधवं नागरं वचामित्यारभ्य यावदित्यम्। संततसुतकोष्ठस्य रसायनमुपाचरेत्। एतदुक्तंभवति। यद्यप्येवं वमनविरेचनास्थापनानुवासननावनैः पंचभिरपि कर्मभिः संस्रुतोर्ध्वाधः सकलकायस्तथाप्येष रसायनीयो भूयः शरीरसंस्कारः करणीयस्तत्पूर्वकत्वात्। अत एव संशुद्धदेहोऽयमिति कृत्वा त्रिवृद्दंत्यादीन्विरेचनात्मकानुपदिशति। तथा वाजीकरणेप्याह। अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान्। घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान्। योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनम्। ततो वाजीकरान् योगानिति। तथा यथायोगं यो यस्य युज्यते दातुमित्यर्थः। यथेदं रसायनं वातप्रकृतेर्योग्यमिदं पित्तप्रकृतेरिदं श्लेष्मप्रकृतेरित्यादि। तथाऽमुष्मिन् देशेऽमुष्मिन् काले वामुष्मिन्वयस्यमुष्मिन् देहे रसायनं योग्यमिदमिति यथायोगार्थः। एवं वृष्ययोगेऽपि योज्यम्। अत्र च रसायनानि। वातातपिकानि योजयेन्न कुटीप्रावेशकानि। स्वस्थवृत्ताधिकारत्वात्तद्विधानस्य।

**भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात्।**
**शालिषष्टिकगोधूममुद्गमांसघृतादिभिः॥ २९॥**
**हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः।**
**साभ्यंगोद्वर्तनस्नाननिरूहस्नेहवस्तिभिः॥ ३०॥**

भेषजेन क्षपिते नरे शोधनकर्षिते सत्याहारैर्भोज्यैर्बृंहणं हितं क्रमान्न सहसैव। कैराहारैरित्याह। शाल्यादिभिः। किंभूतैः। हृद्यानि च तानि दीपनानि भैषज्यान्यौषधानि च शुंठीपिप्पल्यार्द्रकत्वगेलादीनि तैः संयोगो मिश्रितस्तस्माद् हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्ती ददत्यभिलाषपाकानुत्पादयंति ये शाल्यादयस्तै रुचिपक्तिदैराहारैर्बृंहणं भेषजक्षपिते पथ्यम्। किंभूतैराहारैः। साभ्यंगेत्यादि। सहाभ्यंगादिभिर्वर्तंत इति साभ्यंगादिभिश्चेत्यर्थः। स्नेहवस्तिरनुवासनम्।

एवं कृते पुरुषः किं प्राप्नोतीत्याह।

**तथा स लभते शर्म सर्वपावकपाटवम्।**
**धीवर्णेंद्रियवैमल्यं वृषतां दैर्घ्यमायुषः॥ ३१॥**

तथा तेन प्रकारेण पूर्वं शोधनं ततो बृंहणं ततो रसायनप्रयोग इत्येवंरूपेण संशोधनादिसेवी पुरुषः शर्म स्वास्थ्यं लभते। तथा सर्वेत्यादि। सर्वे च ते पावकाश्च सर्वपावकास्तेषां पाटवं शक्तिं लभते। तत्र भौमाप्याग्नेयवायव्याः पंचोष्माणः सनाभसाः पंचमहाभूताग्नयो धात्वग्नयः सप्त त्रयोदशो जाठराग्निरिति। धीवर्णेत्यादि। धीवर्णयोश्चक्षुरादींद्रियाणां च वैमल्यं लभते। तथा वृषतां स्त्रीगमनसामर्थ्यं लभते। तथा दैर्घ्यमायुषो जीवितस्याधिक्यं लभते।

अधुनाऽऽगंतुरोगान्सोपक्रमान्निर्दिशति।

**ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः।**
**कामक्रोधभयाद्याश्च ते स्युरागंतवो गदाः॥ ३२॥**

भूतानि च विषं च वायुश्चाग्निश्च क्षतं च भंगाश्चेति द्वंद्वः। त आदिर्येषामागंतुकरोगहेतूनां त एवं तेभ्यः संभवो येषामागंतुकगदानां ज्वरादीनां ते भूतादिसंभवा आगंतवो रोगाः स्युः। आगंतुहेतुप्रभवत्वादागंतवो गदा उच्यंत इत्यर्थः। न केवलमेत एव गदा रागद्वेषभयाद्याश्चागंतवो गदाः स्युः।

अधुना एषां चिकित्सां निर्दिशति।

**त्यागः प्रज्ञापराधानामिंद्रियोपशमः स्मृतिः।**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्॥ ३३॥**
**अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः।**
**निजागंतुविकाराणामुत्पन्नानां च शांतये॥ ३४॥**

प्रज्ञाया अपराधा असाध्याचरणानि तेषां त्यागः। तथेंद्रियाणां चक्षुरादीनामुपशमो रूपादिविषयेऽतिप्रवृत्तानां संशमनमशुभरूपे वा विषये प्रवृत्तानां संयमनमलोलुपतेत्यर्थः। तथा स्मृतिरतीतार्थानुस्मरणम्। देशेत्यादि। तथा देशादीनां विज्ञानम्। देशो जांगलादिः। कालः शीतादिः। आत्मा च वातप्रकृत्यादिः। एषां विज्ञानमवबोधः। तथा च सतां वृत्तं चरितं सद्वृत्तं तस्यानुवर्तनमनुष्ठानम्। निजानामागंतूनां च विकाराणामनुत्पत्त्यै रोगाणामनुत्पादनाय समासेन संक्षेपेण विधिरेष त्यागः प्रज्ञापराधानामित्यादि सद्वृत्तस्यानुवर्तनमित्येवमंतः प्रदर्शितः सम्यगुक्तः। उत्पन्नानामित्यादि। चः समुच्चये। न केवलं निजागंतूनां रोगाणामनुत्पत्त्यै विधिरेष प्रोक्तः। यावदुत्पन्नानां जातानां च शांतये विधिः प्रोक्तः।

अथ मलानां शोधनकालानाह।

**शीतोद्भवं दोषचयं वसंते**
**विशोधयन् ग्रीष्मजमभ्रकाले।**

**घनात्यये वार्षिकमाशु सम्यक्**
**प्राप्नोति रोगानृतुजान्न जातु ॥ ३५ ॥**

शीतशब्देन हेमंतशिशिराख्यावृतू द्वावपि गृह्येते । तत्रोद्भवो जन्म यस्य दोषचयस्यासौ शीतोद्भवो दोषचयः । तं वसंते विशोधयन्निर्हरन् ग्रीष्मजमभ्रकाले वर्षाकाले दोषचयं विशोधयंस्तथा वार्षिकं घनात्यये शरदि चाशु यथोक्तं कालमनुल्लंघयन् सम्यग्यथावत्रिविधमपि दोषचयं विशोधयन्नृतुजान् रोगान् न जातु कदाचित्प्राप्नोत्यासादयति । वसंते विशोधयन्नित्यत्र वसंतप्रारंभ एव चैत्रे मासि विशोधयन्निति बोध्यम् । प्रत्यवायभयात् । तथाहि । ऋतुद्वयसंचितस्य दोषचयस्य विशोधनमक्रियमाणं रोगानिकं कुर्यात् । घनात्यये वार्षिकमित्यत्रात्यंतघनविनाशे शरत्पश्चिमे भागे विशोधयेदिति बोध्यम् । वार्षिको हि दोषचय एकर्तुज एव । तस्माद्विश्रब्धं कृत्वा साधारणे कार्तिके मासि स विशोधयितुं युक्तः । अपि चोग्रहेमंतशिशिरकालजो दोषचयो वसंते शोधयितव्यः । तस्मादाश्वयुजे मासि वार्षिको दोषचयो यदि विशोध्येत तदानीमतितरां बहुरग्रे दोषचयः स्यात्कालस्य बहुत्वात् । ग्रीष्मजमभ्रकाल इत्यत्र कालग्रहणेन वर्षाप्रारंभमात्र एवेति बोध्यम् । तथा च शास्त्रकारो वक्ष्यति । श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान्वाय्वादीनाशु निर्हरेत् ।

**नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः ।**
**दाता समः सत्यपरः क्षमावा-**
**नाप्तोपसेवी च भवत्यरोगः ॥ ३६ ॥**

नित्यं सदैव हिताहारविहारौ सेवते तच्छीलो यः स एवंभूतो नरः । तथा समीक्ष्यकारी विमृश्यविधायी । इदं कृत्वेदं संपद्यत इदं च कृत्वैतत्संपद्यत एवं बुद्ध्वा शुभं करोत्यशुभं वर्जयति । तथा विषयेषु शब्दादिष्वसक्तोऽलोलुपः । तथा दाता त्यागी त्यागवान् । तथा समः सर्वेषु भूतेषु समचित्तः । तथा सत्यपरोऽवितथवाक् । तथा क्षमावान् । यः शक्तोऽपि कृतापराधं दंडेनानुरूपेण न योजयति । तथाऽऽप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति । न केवलं प्राक्तनविध्यनुष्ठानेनारोगः संपद्यते यावदाप्तोपसेवी चेति चशब्दार्थः । येषां त्रिकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टाश्च विबुधास्तेषां वाक्यमसंशयमित्याप्तलक्षणमिति । उपजातिर्वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

---

## पंचमोऽध्यायः ।

अथ द्रवद्रव्यविज्ञानीयस्तस्यायं संबंधः । नित्यं हिताहारविहारसेवीत्युक्तम् । तौ चाहारविहारौ दिनचर्यर्तुचर्ययोर्यद्यपि नियमितौ तथापि न भवत्यलं हिताहितस्वरूपविज्ञानम् । एवं हि तत्रावादीत् । गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् । तथा । व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु । तथाऽनंतरातीतेऽप्यध्याये जगाद । अन्नपानं च विड्भेदीति । तदियता वाक्येन न तज्ज्ञायते किं पुनस्तद्गुरु शीतं किं लघु किं स्निग्धोष्णं किं शकृद्भेदनमिति । तस्मादाहारद्रव्यस्वरूपमतः परं प्रतन्यते । तत्रापि पंचवर्गस्वभावत्वेनाल्पवक्तव्यत्वात्प्राग्द्रवद्रव्यविज्ञानीयस्वरूपं निर्देष्टुं युक्तमन्नस्य द्रवस्वभावत्वेन भूयस्त्वादित्याह ।

### अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः॥

अपामेवायं स्वाभाविको गुणो यत् द्रवत्वम् । अतो यानि कानिचिद्द्रवरूपाणि द्रव्याणि तानि सर्वाण्यन्यान्येव क्षीरदध्यादीनि तदर्थं द्रवद्रव्यशब्दः सामान्येन सर्वद्रवव्यक्तिपरिग्रहार्थः शास्त्रकृता प्रयुक्तः । द्रवाणि च तानि द्रव्याणि च द्रवद्रव्याणि तेषां विज्ञानमवबोधस्तस्मै हितो द्रवद्रव्यविज्ञानीयोऽध्यायस्तं व्याख्यास्यामः प्रथयिष्यामः ।

प्राधान्याच्च पानीयस्य प्रागुपदेशः । तथा चाष्टांगसंग्रहेऽन्नपानप्रकरणेऽध्यगीष्ट । अन्नपाने तु सलिलमेव श्रेष्ठम् । सर्वरसयोनित्वात्सर्वभूतसात्म्याज्जीवनादिगुणयोगाच्च । तथात्रैवाध्यैष्ट । पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयमित्यादि । तथा चात्रैवाग्र्यसंग्रहेऽपि । तदेव प्रागुपनीतं श्रेष्ठमुदकमासां श्वासतत्स्तंभनक्लेदनानामिति बहुगुणत्वाच्चांतरिक्षस्थजलस्य प्रागुपन्यासो युक्त इत्याह ।

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।**
**तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ १ ॥**
**गंगांबु नभसो भ्रष्टं स्पृष्टं त्वर्केंदुमारुतैः ।**
**हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २ ॥**

जीवनमोजोविवृद्धिकरणम् । सौम्यधातुवर्धनमित्यन्ये । तर्पणं क्लमहृत् । हृद्यं हृदयाय हितं नतु हृदयस्य प्रियमिति हृद्यमिति व्याख्येयम् । एवं हि व्याख्यायमानेऽम्लहृद्यानामित्यग्र्याणां मध्ये तत्पाठं मुनिर्नैवाकरिष्यत् । यस्मात्किंचिद्द्रव्यं कस्यचित्प्रियं भवति न सर्वं सर्वस्य । तस्माद्धृदयाय हितं हृद्यमिति बोध्यम् । तथा ह्लादि आह्लादकरम् । तथा बुद्धेः प्रबोधनम् । यावन्मात्रा यस्य शेमुषी सा तस्य स्फुटप्रतिभासा तद्योगाद्भवतीत्यर्थः । तनु स्वच्छम् । अव्यक्तरसमनभिव्यक्तषड्रसमित्यर्थः । मृष्टमित्यास्वादसुखम् । संति हि भूरिरसशर्कराक्काथचूर्णवटकादीन्यव्यक्तरसानि नतु कार्त्स्न्येन तानींद्रियप्रसादप्रीतिकराणि । तथा । अनुरसबाहुल्यात्पृथगपि द्रव्याण्यभयामलकादीन्यव्यक्तरसानि नतु पुनस्तानि तथा मनः प्रीणयंति । पानीयस्य चाव्यक्तरसस्याप्याश्रयवशात्कषायत्वस्वादुत्वादि भवत्येव । तथा चाष्टांगसंग्रहेऽपठत् । श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पांडुर इत्यादि । मृष्टं शुद्ध-

मिति न व्याख्येयम्। तथा च मुनिः। शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्। प्रकृत्या दिव्यमुदकमिति। अत्र हि मृष्टविमलयोर्द्वयोरुपादाने पौनरुक्त्यं स्यात्। तस्मान्मृष्टशब्दोत्र मनःप्रीणनार्थः। तथा शीतं वीर्येण स्पर्शेन च। तथा लघु गुणयुक्तम्। तथा। अमृतोपमम्। यथा किलामृतं त्रिदोषघ्नत्वधातुसाम्यकृत्त्वविषार्तिजित्त्वादिगुणैरशेषैर्युक्तं तथैतज्जलमपीत्यर्थः। तथा चोक्तं संग्रहे। सूर्येंदुवृत्तप्रयुक्तत्वाल्लघु वातकफापहम्। शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजिदिति। तथा। नभसो भ्रष्टमंतरिक्षात्पतितमात्रं वस्त्रादिगृहीतं गांगं जलमीदृग्गुणं भवति। तुः पुनरर्थे। रविचंद्रानिलैः स्पृष्टं संबद्धं सत्पुनः पथ्यापथ्यत्वे देशकालावपेक्षते। देशो विषयः पात्रमाश्रय इति पर्यायाः। तत्र किमनूपदेशे जांगले वा तत्पतितं तथा किमसिते श्वेताद्यन्यतमे वेति देशानुवर्तनम्। तथा शीते किंवोष्णेऽथवा वर्षाख्ये पतितमिति कालानुवर्तनम्। रविचंद्रानिलैरिति समस्तनिर्देशो यदा समस्तैरेतैः स्पृष्टं नतु व्यस्तैस्तदा हिताहितत्वे देशाद्यपेक्षत इति द्योतयति। सद्योवस्त्रादिगृहीतस्य जलस्य तु न सर्वैरेतैर्योगः संभवतीति तत्प्रायेण हितमेव।

नन्वाकाशात्पततस्तल्लक्षणमंतरेण गांगमिदमिति न ज्ञायत इत्याह।

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।**
**अक्लिन्नमविवर्णं च तत्पेयं गांगम्**

येनांबुनाऽभिवृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं राजतस्थितमक्लिन्नमक्लेदयुतमविवर्णं च भवति तद्गांगं जलं पेयमित्युपलक्षणार्थम्। स्नानावगाहयोरपि तत्पथ्यमेव। रजतस्य रूप्यस्य विकारो राजतम्। प्राणिरजतादिभ्योऽञ्।

**अन्यथा॥ ३॥**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना।**

अन्यथा सामुद्रमिति। एतल्लक्षणविपर्ययेण येनांऽबुना सिक्तं शाल्यन्नं विवर्णं मलिनं क्लिन्नं भवेत्तत्सामुद्रम्। तच्च न पातव्यम्। अत्रापि पाननिषेध उपलक्षणार्थः। स्नानावगाहावपि ह्यनेन न कार्यौ। समुद्रस्य क्षारान्वयत्वात्क्लेदनादियोगः। ननु सामुद्रमित्ययुक्तम्। यतः समुद्रशब्दस्य धूमादिपाठाद्धूमादिभ्यश्चेति वुञा भवितव्यमिति केचित्। नैवम्। धूमादिभ्यश्चेत्यत्रैव गणे पठ्यते। समुद्रान्नावि मनुष्ये च वुञ्। सामुद्रिकी नौः सामुद्रिको मनुष्यः। अन्यत्र त्वणेव। सामुद्रं जलमिति। तस्मान्याय्यमेवैतत्। एवं सामुद्रो मणिरित्यादयो वेद्याः। अथ किं सदैव तन्न पातव्यं नेत्याह। मासादित्यादि। आश्वयुजमंतरेणैतन्न पातव्यम्। आश्वयुजे तु मासि कालस्वाभाव्यात्तत्पथ्यमेवेति भावः। सुश्रुतस्त्वधीते। गांगमाश्वयुजे मासि प्रायो वर्षति माधवः। तदुपाददीतेत्यादि।

**ऐंद्रमंबु सुपात्रस्थमविपन्नं सदा पिबेत्॥ ४॥**
**तदभावे च भूयिष्ठमंतरिक्षानुकारि यत्।**
**शुचिपृथ्वसितश्वेते देशेऽर्कपवनाहतम्॥ ५॥**

ऐंद्रमांतरिक्षं जलं गांगं सुपात्रस्थं शोभने भाजने राजतादौ स्थितमविपन्नमदूषितमविनष्टं पिबेत्। न मलिनाशुचि जुगुप्सितपात्रस्थम्। तदभावे तस्यैंद्रस्याभावे भूयिष्ठं बाहुल्येनांतरिक्षमैंद्रं जलं यदनुकरोति स्वच्छादिगुणैः सदृशं तत्पिबेत्। तदेवाह। शुचीत्यादि। शुचिश्चासौ पृथ्वसितश्वेतश्च तस्मिन् देशे यज्जलं स्थितम्। तथा। अर्कपवनाभ्यामाहतमासमंतात् क्रांतमीदृशमांतरिक्षानुकारि स्यादिति भावः।

इदानीं यादृशं जलं न पेयं तद्दर्शयति।

**न पिबेत्पंकशैवालतृणपर्णाविलास्तृतम्।**
**सूर्येंदुपवनादृष्टमभिवृष्टं घनं गुरु॥ ६॥**
**फेनिलं जंतुमत्तप्तं दंतग्राह्यतिशैत्यतः।**

पंकः कर्दमः। शैवालः शैवालम्। तृणं खटः। पर्णं पत्रम्। आविलं चास्तृतं चाविलास्तृतं पंकादिभिराविलास्तृतं पंकाद्याविलास्तृतम्। यथासंभवमत्र संबंधः। तेन पंकेनाविलं कलुषं शैवलादिभिरास्तृतं संछादितमिति बोध्यम्। तथा। सूर्येंदुपवनैरदृष्टमनासेवितं न पिबेत्। तथा। अभिवृष्टं तत्कालपतितान्यवर्षमिश्रीभूतं कालांतराविश्रांतम्। खरनादे चैवमुक्तम्। वार्षिकं तदहर्वृष्टं भूमिस्थमहितं जलम्। व्युष्टं त्रिरात्रं तच्चैव प्रसन्नममृतोपममिति तथा घनमस्वच्छम् तथा गुरु तथा फेनिलं फेनवत् तथा जंतुमत्कीटयुक्तं तथा तप्तमुष्णं तथा अतिशैत्यतोऽतिजाड्याद्दंतग्राहि दंतान् गृह्णाति कार्याक्षमान् करोति तच्छीलं न पिबेदिति प्रतिपदं योज्यम्। इत्ययं प्रायो भूमिष्ठतोयस्य निषेधः।

अधुना आंतरिक्षं यन्न पेयं तदाह।

**अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत्॥ ७॥**
**लूतादितंतुविण्मूत्रविषसंश्लेषदूषितम्।**

यद्दिव्यं जलमार्तवं न भवति तच्च न पिबेत्। ननु सर्वमेव दिव्यं जलमार्तवम्। कालस्य ऋतुरूपत्वात्। ऋतौ च भवमार्तवम्। एवंच न किंचिदनार्तवं संभवति। उच्यते। अनार्तवं न पिबेत्। अर्थादार्तवं पिबेदित्युक्तं भवति। तदत्र सामान्योक्तावपि विशिष्टो दिव्यस्य ऋतुर्बोध्यो वर्षाख्यो यस्मिन् काले दिव्यं जलं पेयत्वेनाभ्यनुज्ञायते। यथा वर्षासु दिव्यनादेयेत्यादि। अन्यर्तुभवं त्वनार्तवत्वान्न पेयम्। अत्र च वर्षाख्य ऋतुश्चातुर्मासिकोऽभिप्रेतः। अत एवाश्वयुजे मासि दिव्यं जलं पेयत्वेनानुजज्ञे। अन्यथा ह्यनार्तवत्वात्तदपेयमेव स्यात्। आर्तवं प्रथमं च यत् न केवलमनार्तवं न पिबेत् यावदार्तवमपि प्रथमं न पिबेत्। कुतोहेतोरित्याह। लूतादीत्यादि। लूता आदिर्येषां ते लूतादयः क्षुद्रजंतवः प्राणिविशेषास्तेषां तंतुविण्मूत्रविषाणि तंतुः सूत्राकारविशेषो लालेत्यन्ये। तेषां लूतादितंतुविण्मूत्रविषाणां संश्लेषः संपर्कस्तेन दू-

षितं यतस्ततस्तदार्तवमपि न पेयम् । केचित्त्वेवं व्याख्यानयंति । आर्तवं प्रथमं च यत्तन्न पेयं लूतादितंत्वादिदूषितं च न पेयमिति । संग्रहे चाध्यगीष्ट । धनवस्त्रपरिस्रावैः क्षुद्रजंत्वभिरक्षणम् । व्यापन्नस्यास्तपनमग्न्यकार्यस्रपिंडकैः । पर्णमूलबिसग्रंथिमुक्ताकतकशैवलैः । वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् । पाटलाकरवीरादिकुसुमैर्गंधनाशनमिति ।

इदानीं नदीर्निरूपयन्नाह ।

**पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥ ८ ॥**
**पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ।**

नद्यः समासात्संक्षेपतः पथ्या हिताः । का इत्याह । याः पश्चिममुदधिं समुद्रं गच्छंतीति पश्चिमोदधिगाः । अन्यत्रापि दृश्यत इति डः । तथा शीघ्रवहा वेगवत्यः । तथाऽमलोदका निर्मलसलिलाः । एवं त्रिविशेषणविशिष्टाः पथ्याः । अतोऽन्यथा पुनरन्यथा विपरीतलक्षणास्ता विपरीता अपथ्याः ।

**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ ९ ॥**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ।**
**कृमिश्लीपदहृत्कंठशिरोरोगान् प्रकुर्वते ॥ १० ॥**

हिमवांश्च मलयश्च हिमवन्मलयौ ताभ्यामुद्भूताः संजाताः पथ्याः । किं सर्वा एव नेत्याह । उपलेत्यादि । उपलानामास्फालनमुपलास्फालनं तेनाक्षेपः क्षोभस्तेन विच्छेदा विश्लेषा उपलास्फालनाक्षेपविच्छेदास्तैः खेदितं जातक्षोभमुदकं यासां ताः खेदितोदका या हिमवन्मलयोद्भूतास्ता एव पथ्याः । यास्त्वेवंभूता न भवंति ता अपथ्याः । स्थिरा इति । ता एवाऽवहंत्यः सत्यः कृम्यादीन् कुर्वते । हृच्च कंठश्च शिरश्च तेषां रोगाः । कृमयश्च श्लीपदं च हृत्कंठशिरोरोगाश्चेति द्वंद्वः । मुनिरपि हिमवत्प्रभवानां पथ्यत्वमाह । कृष्णात्रेयसुश्रुतौ त्वपथ्यत्वमाहतुः । अत एवायं ग्रंथकारो युक्त्या मतद्वयमपि संगिरमाणो विशेषणमुपन्यस्तवानुपलास्फालनाक्षेपविच्छेदैः खेदितोदका इति । तेन या एवंविधा न भवंति ता न पथ्या इति ।

**प्राच्याऽऽवंत्यपरांतोत्था दुर्नामानि महेंद्रजाः ।**
**उदरश्लीपदातंकान् सह्यविंध्योद्भवाः पुनः ॥ ११ ॥**
**कुष्ठपांडुशिरोरोगान् दोषघ्न्यः पारियात्रजाः ।**
**बलपौरुषकारिण्यः सागरांभस्त्रिदोषकृत् ॥ १२ ॥**

प्राच्यादिजा नद्यो दुर्नामान्यर्शांसि कुर्वते । प्राच्या गौडाः । आवंतयो मालवाः । अपरांताः कौंकणाः । महेंद्रजा नद्य उदरादीन् कुर्वते । सह्यविंध्यपर्वतोत्थाश्च पुनः कुष्ठादीन् कुर्वते । पारियात्रे जाता दोषघ्न्यो भवंति ।

**विद्यात्कूपतडागादीन् जांगलानूपशैलतः ।**

आदिशब्देन संग्रहोक्ता गृह्यंते । यथा । कौपसारसताडागचौंड्यप्रास्रवणौद्भिदम् । वापीनदीतोयमिति तत्पुनः स्मृतमष्टधा । कौपं स्वादु त्रिदोषघ्नं लघु पथ्यं च सर्वदा । क्षारं तु कफवातघ्नं दीपनं पित्तकृत्परम् । कषायबहुलं श्लेष्मपित्तघ्नं वातकृच्च तत् । तृष्णाघ्नं सारसं बल्यं कषायमधुरं लघु । औद्भिदं स्वादु पित्तघ्नं दीपनं गुरु किंचन । सक्षारं कटु वाप्यंबु पित्तघ्नं कफवातजित् । लघ्वल्पदोषं सुस्वादु नववापीष्ववार्षिकम् । अनभिस्यंदि नादेयं कटुकं कफपित्तजित् । विशदं वातलं रूक्षमनवस्थितलाघवम् । सुश्रुते चैषां लक्षणमुक्तम् । तथा । भूम्युत्खातसमुद्भूतमिंद्रनीलसमप्रभम् । विमलं मधुरास्वादं कौपं जलमुदाहृतम् । नद्याः शैलवराद्वापि स्तमेकांतसंस्थितम् । कुमुदांभोजसंछन्नं वारि सारसमुच्यते । प्रशस्तभूमिभागस्थं नैकसंवत्सरोषितम् । कषायमधुरास्वादं ताडागं सलिलं स्मृतम् । स्वयं शीर्णशिलाश्वभ्रे नीलोत्पलनिभं जलम् । लतावितानसंछन्नं बुधैश्चौंडेयमुच्यते । शैलसानुसमुद्भूतं स्पृष्टं वातहिमातपैः । लघु शीतामलं स्वादु स्मृतं प्रास्रवणं जलम् । विदार्य भूमिमुद्भूतं महत्या धारया स्रवत् । यज्जलं वेदितव्यं तदौद्भिदं स्वादु शीतलम् । पाषाणैरिष्टकाभिर्वा बद्धा स्याया तु कूपवत् । वापी सा खलु विज्ञेया कृतसोपानपंक्तिका । नद्यां शैलप्रसूतायां गोमेदकमणिप्रभम् । प्रशस्तभूमिभागस्थं जलं नादेयमुच्यत इति । पौषादिद्वितयेष्विष्टं विशेषेण क्रमाज्जलम् । सरस्तडागयोः कूपचुंड्योः प्रस्रवणौद्भिदोः । कूपेंद्रयोः कूपचुंड्योः सर्वपथ्यं ततः परम् । तदेतान् कूपादीन् जांगलानूपशैलान् समाश्रित्य जातान् विद्यात् । जांगलादिदेशजान् यथायोगं लघून् गुरूंश्च जानीयादित्यर्थः । तत्र जांगलदेशे कूपादीनां सप्तानां बहूदकसंबंधाभावाल्लघुत्वं वेद्यम् । आनूपे तु बहूदकसंबंधाद्गुरुत्वं वेद्यम् । शैले तूदकाल्पतया लघुतरत्वं वेद्यम् । तथा च संग्रहे । धन्वानूपमहीध्राणां सामीप्याद्गुरुलाघवमिति ।

इदानीं केषांचिज्जलपाननिषेधमाह ।

**नांबु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः १३**
**पांडूदरातिसारार्शोग्रहणीदोषशोथिभिः ।**
**ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः १४**

अल्पाऽग्न्यादिभिरंबु न पेयम् । सर्वथैषां जलपाननिषेधप्रत्यवायमाशंकमान इदमाह । अशक्त्या वा पिपासामसहिष्णुभिरत्यल्पं स्वल्पं पेयम् । यावन्मात्रेण प्रत्यवायो न भवति तावदेव पेयमित्यर्थः । अल्पाग्नयश्च गुल्मिनश्चेति द्वंद्वः । पांड्वादीनां सप्तानां द्वंद्वः । ततो मत्वर्थीय इनिः । शरन्निदाघाभ्यामंतरेण स्वस्थोऽप्यल्पशः पिबेत् किं पुनरातुरः । संग्रहे त्वेवमुवाच । काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् । पाषाणरूप्यमृद्धेमजाततापार्कतापितम् । पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजिदिति ।

**समस्थूलकृशा भक्तमध्यांतप्रथमांबुपाः ।**

समाश्च स्थूलाश्च कृशाश्च समस्थूलकृशाः । मध्यं च अंतश्च

प्रथमश्च मध्यांतप्रथमाः । भक्तस्य मध्यांतप्रथमा भक्तमध्यांतप्रथमाः । तेषु कालेषु येंऽबु पिबंति ते भक्तमध्यांतप्रथमांबुपा यथाक्रमं समाः स्थूलाः कृशाश्च भवंतीत्यर्थः । भक्तमध्येंऽबु पीतं धातुसाम्यं समानतां करोति । भक्तांते तु पीतमामाशये कफवृद्धिं विदधत्स्थौल्यमाधत्ते । भक्तादौ च पीतं निरिंधनमग्निं तेजःप्रतिपक्षतयाऽवश्यमवसादयति । मंदोऽग्निश्च सम्यगाहारं पक्तुमशक्तो भवति । आहारस्य च सम्यगपाकान्न तथा पुष्टिरिति कृशत्वे युक्तिः । तथा च संग्रहे । भक्तस्यादौ जलं पीतमग्निसादं कृशांगताम् । अंते करोति स्थूलत्वमूर्ध्वमामाशयात्कफम् । मध्ये मध्यांगतां साम्यं धातूनां जरणं सुखम् ।

**शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् १५**
**तृष्णोष्णदाहपित्तास्रविषाण्यंबु नियच्छति ।**

शीतमंबु मदात्ययादीन्नियच्छति पराकरोति । मदात्ययो मद्योत्थो रोगः । ग्लानिः क्लांतिः । मूर्च्छा मोहः । छर्दिर्वमिः । श्रमः स्वेदः । भ्रमोऽनवस्थितिः । तथा तृष्णादीनि नियच्छति । एवंगुणमप्यामं क्वचिन्नेष्यते । तथा चोक्तं संग्रहे । अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ।

अधुनोष्णांबुगुणानाह ।

**दीपनं पाचनं कंठ्यं लघूष्णं बस्तिशोधनम् ॥ १६ ॥**
**हिध्माध्मानाऽनिलश्लेष्मसद्यःशुद्धे नवज्वरे ।**
**कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥ १७ ॥**

दीपनादिगुणयुक्तमुष्णमंबु भवति । बस्तिशब्देन तात्स्थ्यान्मूत्रं गृह्यते । तेन मूत्रशोधनमित्यत्राऽर्थो बोध्यः । हिध्माऽध्मानादिषु च शस्यते । कासश्च श्वासश्च पीनसश्च पार्श्वरुक् च तासु च शस्यते । आमोऽपक्व आहार इत्यर्थः । केचित्त्वामपीनस इति पीनसविशेषणमामशब्दमाहुः । तैरजीर्ण उष्णांबु नोक्तं स्यात् । अजीर्णे चालसकादिरूपे जलमुष्णमिष्यत एव ।

अधुना क्वथितशीतलं निर्दिदिक्षुराह ।

**अनभिष्यंदि लघु च तोयं क्वथितशीतलम् ।**

अनभिष्यंदि न श्लेष्मकारि । लघुगुणयोगोंऽभसोऽस्त्येव पुनर्लघुत्वकथनमग्निसंस्कारवशाल्लघुतरत्वप्रतिपत्त्यर्थम् । अथवा । आधारवशादक्वथितमंभो लघ्वपि यद्गुरु संपन्नं तदपि क्वथितशीतलं लघु भवति । शीतलत्वादभिष्यंदित्वं यत्तोयस्य प्राप्तं तत्क्वथितशीतलत्वे चाऽस्य निषिद्धम् । मदात्ययादिहंतृत्वं तु यच्छीतलत्वसामान्यात्तदस्यास्त्येव । न केनचिन्निषेद्धुं संभाव्यते ।

**पित्तयुक्ते हितं दोषे व्युषितं तत्त्रिदोषकृत् ॥ १८ ॥**

पित्तयुक्त इत्येकवचनमविवक्षितम् । तेन वातपित्ते पित्तश्लेष्मणि सन्निपाते च यत्र पित्तयोगो पित्ताधिकत्वं दृश्यते तत्रैव क्वथितशीतलं हितम् । संग्रहोक्तं च क्वथनलक्षणं संक्षेपाभिप्रायेणेह नोक्तम् । यथा । क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् । क्वथितं फेनरहितमवेगममलं हितमिति । अस्यार्थः शिष्यव्युत्पत्त्यै दर्श्यते । धन्वसाधारणानूपेषु देशेषु क्रमशः क्षपितचतुर्भागत्रिभागार्धसलिलमधिश्रपयेत् । जांगलो हि देशोऽनिलानलाभ्यां भूयिष्ठमधिष्ठितस्तेनात्र तोयं लाघवादाशु विशुद्धिं प्राप्नोति । आनूपस्तु भूमिसोमगुणबहुलस्तत्र गुरुत्वादिगुणयोगाच्चिरेण विशुद्धिमश्नुते । एवं साधारणो देशश्चिंत्यः । तथा । ऋतुष्वपि यथायोगमयमेव क्रमो बोध्यः । सुश्रुतेनोक्तम् । यत्क्वथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु । चतुर्भागावशिष्टं तु तत्तोयं कफरोगनुत् । तत्पदाहीनं पित्तघ्नं हीनमर्धेन वातनुदिति । संग्रहोक्तमेव ग्रंथमिमं केचिदत्राऽपि पठंति । तथा । पानीयं नतु पानीयं पानीयेऽन्यप्रदेशजे । अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत् । शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् । अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् । प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषत इति । अन्यप्रदेशजे पानीयेऽजीर्णे पानीयं जलं न पानीयं न पेयम् । एतदुक्तं भवति । पानीये पीते तज्जरणांतं यावद्विजातीयं जलं न पेयमिति । अन्यप्रदेशज इति । कोऽर्थः । कौपे पीते ताडागं न पेयम् । ताडागे पीते कौपं न पेयम् । एवं सर्वत्र चिंत्यम् । तथा आमेऽपक्वे जलेऽजीर्णे क्वथितं च जलं न पेयम् । पक्वे क्वथिते पीते जीर्णेऽपि नेतरं नामं जलम् । यावन्न भुंक्ते तावत्सजातीयमपि न पेयमित्यर्थः । शीते विधिरयम् । क्वथितशीत एतद्विधानमित्यर्थः । तुरवधारणे । तप्तेऽजीर्ण एव शिशिरं त्यजेत् । जीर्णे तु शीतं पिबेदित्यर्थः । अतियोगेनाऽतिबाहुल्येन तृष्यतस्तृष्णावतोऽपि प्रयोजितमुपयुक्तं सर्वस्याऽपि नरस्य श्लेष्मपित्ततां याति । ज्वरितस्य विशेषतो यत आमेनाग्नौ बहिष्कृते ज्वरस्योत्पत्तिः । आमस्य च पानीयं वर्धकमिति । संक्षेपतयाऽल्पोपयोगित्वाच्चाऽवश्यायादिगुणा ग्रंथकृता नोक्ताः । तांश्चाऽत्र शिष्यहिताय ब्रूमः । रूक्षस्तनुरवश्यायः शीतो वातास्रकोपनः । पानतृड्दाहपित्तास्रकुष्ठोरुस्तंभमेहजित् । ग्रीष्मे तु सर्वजंतूनां स्पर्शनादपि शस्यते । पद्मिन्यंबु च पित्तघ्नं कफकृद्विरसं गुरु । हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममेव च । कफं न संदूषयति न पित्तं न च मारुतम् । तथाऽश्मवर्षप्रलये हिमादल्पांतरं गुणैः । चराचराणामहितं तुषारं त्वग्निनाशनम् । वैकारं लघु सक्षारं श्लेष्मघ्नं वह्निदीपनम् । केदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् । तद्वत्पाल्वलमुद्दिष्टं विपाके दोषलं तु तत् । अनेकदोषमानूपं वार्यभिष्यंदि गर्हितम् । एभिर्दोषैरसंयुक्तं निरवद्यं तु जांगलम् । पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् । दीपनं स्वादु शीतं च तोयं साधारणं लघु । चंद्रकांतभवं रक्षोविषपित्तज्वरापहम् । रत्नाकरसमुत्थं च सर्वदोषकरं मतमिति ।

**नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।**
**तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ १९ ॥**

नालिकेरांतःस्थितमुदकं स्निग्धं स्वादु वृष्यं हिमं च भवति। एवंभूतमपि प्रभावाल्लघु भवति। तथा तृष्णादिहरं दीपनं मूत्रशोधनं च भवति।

इदानीं युक्त्याऽग्र्यसंग्रहं निर्दिशति।

**वर्षासु दिव्यनादेये परं तोये वरावरे।**

प्रावृष्यांतरिक्षं जलं परमत्यंतं पथ्यम्। नदीसंभवं त्वपथ्यमिति तोयवर्गः।

परिशेषेभ्यो वर्गेभ्यः प्राग्बहुजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात्पयःसंज्ञासामान्यात्पयस इव जीवनादिगुणयोगाच्च तोयवर्गादनु क्षीरवर्गः प्रक्रम्यते। तत्रापि दध्यादीनां मूलकारणत्वात्क्षीरस्य प्रागुपादानम्। तथा जीवनीयानां रसायनानां चाग्रेसरत्वात्। तथा चाष्टांगसंग्रहे। क्षीरं जीवनीयानां क्षीरघृताभ्यासो रसायनानामित्यादि।

**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥२०॥**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम्।**
**प्रायः पयः**

पयः क्षीरं प्रायः स्वादुपाकरसादियुक्तं भवति। पाकश्च रसश्च पाकरसौ। स्वादू पाकरसौ यस्य तदेवम्। ओजसे हितमोजस्यम्। धातून् वर्धयति धातुवर्धनम्। वृष्यं शुक्रकरमतिशयेनेति बोध्यम्। धातुवर्धनत्वादेव शुक्रकरत्वमात्रस्य सिद्धेः प्रायोग्रहणात्कदाचित्क्षीरं नैवं भवति। तथा चोष्ट्रीक्षीरमीषद्रूक्षोष्णलवणं पठ्यते। अजाक्षीरं च लघु। आविकमुष्णमैकशफमुष्णं साम्ललवणं चेति। तस्मात्प्रायोग्रहणं कृतम्। स्वादुपाकरसत्वादेव क्षीरस्य स्निग्धवृष्यादयो गुणा लब्धा एव किं पुनरेतैरुद्दिष्टैरिति केचित्। तान् ब्रूमहे। मधुररसादिकेभ्योऽपरे स्निग्धवृष्यादयो गुणा बहुतराः क्षीरस्य विद्यंत इति ज्ञापनायैते स्निग्धादयो गुणाः पुनरुद्दिष्टाः। महाभूतानां हि संयोगादिविशेषात्कदाचिद्रससहचरिता एव गुणा द्रव्यमभिनिविशंते ये रसे समाधाय वर्ण्यते। यथा मधुर आयुष्यादिगुणाः। अम्लेऽग्निदीप्तिकृदादयः। केचिच्च रसमनपेक्ष्यैव द्रव्ये निविशंते। यथा मधुररसद्रव्ये मकुष्टतंडुलीयादौ रूक्षादयो गुणाः। तथाहि स्निग्धादीनां तत्रोपलंभः प्राप्तो मधुररसाश्लिष्टत्वात्। तस्मान्मकुष्टादिद्रव्यं मधुररससहचरोक्तेन गुणौघेन संयुक्तं वक्तुं युक्तम्। अन्यथा तु कृतं षड्रसगुणस्वरूपवर्णनमनर्थकमेव स्यात्। तस्मादयमत्र विषयविभागो ज्ञेयः। केचिद्गुणा रससहचरिता द्रव्ये निवसंति। यद्वशात्तद्द्रव्यं रसगुणाननुवर्तते। ईदृशं च विशेषमुद्दिश्य तंत्रकृद्भिर्मधुरादिरसानां स्निग्धादिगुणा वर्णिता वेद्याः। केचित्तु रसनिरपेक्षा एव द्रव्ये निवसंति। अत एव तद्द्रव्यं रसगुणान्नानुवर्तते। अस्मिंस्तु विषये रसगुणवर्णनं नोक्तमेव वेद्यम्। तस्मात्क्षीरस्य स्निग्धादियोगात्स्वादुपाकरसत्वे सत्यपि स्निग्धादिगुणवर्णनम्। एवं चोभयथा क्षीरस्य स्निग्धादिगुणयोगादधिकाः स्निग्धादयो ये गुणास्तेऽस्य संतीत्यवगच्छ। अयमेव च व्यवहारोऽन्यत्राऽप्येवंविधे शाल्यादौ द्रव्ये विज्ञेयः। ननु स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रस इति वक्ष्यते। ततश्च स्वादुरसत्वादेव स्वादुपाकत्वं लब्धं तत्किं पाकग्रहणेन। भणामः। शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यत इत्युक्तं तदेव क्षीरं गुरुगुणयुक्तमपि विदाहावस्थायां चिरं न तिष्ठति। प्रागेव स्वादुपाकतां यातीतीममर्थं ज्ञापयितुं पाकग्रहणम्। स्त्रीणां चाहाररस एवापत्यस्नेहात्क्षीराय संपद्यते। तथाच दारुवाहिः। स्त्रीणामपत्यजाद्धर्षाद्रसः क्षीराय कल्पते। स्नेहाद्रसः क्षरत्येवं हृदयात्क्षीरमेत्यत इति। गव्यस्य च पूर्वतरमुपादानं सर्वक्षीरेभ्यो ज्यायस्त्वात्तथा माहिषमपि। तक्रादिगोरसशब्देन प्रथितमिति।

**अत्र गव्यं तु जीवनीयं रसायनम् ॥२१॥**
**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम्।**
**श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥२२॥**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत्।**

एषु क्षीरेषु मध्ये गव्यं पुनः क्षीरं जीवनीयमतिशयेनेति बोद्धव्यम्। जीवनीयमात्रस्यौजस्यमित्यनेनैव क्षीरसामान्यलक्षणेनोक्तत्वात्। ओजस्यं हि जीवनीयमुच्यते। तथा ह्योजःक्षये जीवनीयानामौषधानामुपयोगो निर्दिष्टः। यथा। ओजः क्षीयेत कोपादिभिरित्युक्त्वाऽनंतरमुवाच। जीवनीयौषधक्षीररसाद्यास्तत्र भेषजमिति। अत्र च क्षीरं जीवनीयत्वेन गृहीतमपि पुनरुक्तं प्राधान्यख्यापनार्थम्। तथा च मुनिः। प्रवरं जीवनीयानां क्षीरमुक्तं रसायनमिति। रसवीर्यविपाकानां श्रेष्ठानां लाभोपायो रसायनम्। तथा चोक्तम्। लाभोपायो हि शस्तानां रसादीनां रसायनमिति। तथा क्षतक्षीणहितम्। क्षताय हितम्। क्षीणाय हितम्। क्षीणः क्षीणधातुः। तथा मेधा धारणाशक्तिस्तस्यै हितं मेध्यम्। उगवादिभ्यो यदिति यत्। एवं बल्यम्। तथा स्तन्यकरम्। कृञो हेतुताच्छील्येति हेतौ टः। स्त्रीणां स्तन्यकरणे हेतुरित्यर्थः। तथा सरम्। श्रमादींश्चैकादश नाशयेत्।

**हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम्॥२३॥**

महिष्या इदं माहिषं क्षीरमत्यग्निभ्योऽनिद्रेभ्यश्च हितम्। तथा गरीयो गुरुतरम्। तथा हिमं शीतवीर्यम्। मुनिरप्याह। महिषीणां गुरुतरं गव्याच्छीततरं पयः। स्नेहादूनमनिद्राय हितमत्यग्नये च तदिति। खरनादे चोक्तम्। गव्यं स्नेहोत्तमं क्षीरं गव्याच्च पयसः पयः। यथोत्तरं स्नेहहीनमौरभ्रच्छागमाहिषम्। जांगलानूपशैलेषु चरंतीनां यथोत्तरम्। पयो गुरुतरं वत्सो यथा तासां प्रवर्तनमिति। गुरु शीततरं गव्यान्माहिषं स्वप्नलं पयः। चतुर्थभागस्नेहोनं पित्तघ्नं च विशेषत इति। यच्च रविगुप्तः सिद्धसारे व्यध्यगीष्ट। गव्यात् स्निग्धं गुरुतरं माहिषं स्वप्नकृत्पय इति। तद्बुधैश्चिंत्यम्। सर्वमतविरुद्धत्वात्।

**अल्पांबुपानव्यायामकटुतिक्ताशनैर्लघु।**
**आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥२४॥**

आजं छागलं क्षीरं लघु भवत्यल्पांबुपानादिभिर्हेतुभूतैः । स्वल्पांबुपानादित्वं चाजानां स्वभावोऽन्यासां तु देशसात्म्यापेक्षया । यद्येवं स्वभावादेवमल्पांबुपानादेर्गम्यमानत्वादेतदुपन्यासो व्यर्थ एव । अत्रोच्यते । ज्ञापनार्थमिदम् । ज्ञापयति । यदा अजा अप्यव्यायामा गुर्वशनादि कुर्युस्तदा तासामप्यन्यथा क्षीरं भवेत् । एवं च गवादीनामप्याहारादिवशाद्गुरुलघुत्वं चिंत्यमिति । तेन प्रदोषेऽपराह्णे यद्गृहीतं पयस्तदपेक्ष्यौषसं प्रभाते यद्गृहीतं तद्गुरु । चेष्टारहितत्वात् । रात्रौ हि प्राणिनां न कदाचिच्चेष्टा भवति । अत औषसं गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु । अनया च दिशा सर्वमपि चिंत्यम् । अत एव संग्रहे यदुक्तम् । पिण्याकाम्लाशिनीनां तु गुर्वभिष्यंदि तद्भृशमिति । तदेतेनैवोक्तप्रायत्वान्नेहोक्तम् । शोषेत्यादि । शोषादीनां द्वंद्वः । तान् जयतीति क्विप् । शोषजित् । एवं ज्वरजिदित्यादि ।

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।**
**शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥२५॥**

औष्ट्रकमुष्ट्राणां क्षीरं लघु । तथा ईषन्मनाग्रूक्षोष्णं तथा दीपनं भवति । तथा वातादीनां शस्तम् । वातादिषु पथ्यमित्यर्थः । औष्ट्रकमित्युदुष्ट्राद्वुञिति वुञ् प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमित्युष्ट्रीशब्दादपि ।

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।**

मानुषीणां क्षीरं वातपित्तासृगभिघाताक्षिरोगजिद्भवति । वातश्च पित्तं चासृक् चाभिघातश्चेति द्वंद्वः । तैरक्षिरोगस्तं जयति यत्तदेवम् ।

केन प्रयोगेणेत्याह ।

**तर्पणाश्च्योतनैर्नस्यैः**

नस्याभ्यवहारादिना । तर्पणादीनि स्वे स्वेऽध्याये वक्ष्यमाणानि ।

**अहृद्यं तूष्णमाविकम् ॥ २६ ॥**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।**

आविकं क्षीरमुष्णवीर्यं भवति । तथा हृद्यं हृदयायाहितं भवति । तथा वातव्याधिहरम् । तथा हिक्कादिप्रदम् । आविकमित्यविशब्दात्स्वार्थे कप्रत्ययांतात्तस्येदमित्यण् ।

**हस्तिन्याः स्थैर्यकृत्**

हस्तिन्याः क्षीरं स्थैर्यकृद्भवति ।

**बाढमुष्णं त्वैकशफं लघु॥२७॥**
**शाखावातहरं साम्ललवणं जडताकरम् ।**

एकः शफो नखो यासां वडवादीनां ता एकशफास्तासामिदमैकशफं क्षीरं बाढमतिशयेनोष्णं भवति । तथा शाखासु बाहूरुप्रभृतिषु यो वातस्तं हरतीति शाखावातहरम् । हरतेरनुद्यमनेजित्यच् । तथा साम्ललवणमीषदम्लमीषल्लवणं च । तथा जडताकरमंगजाड्यकरणहेतुः । कृञो हेत्वित्यादिना हेतौ टः ।

**पयोभिष्यंदि गुर्वामं युक्त्या शृतमतोऽन्यथा॥२८॥**

आममक्वथितं पयोऽभिष्यंदि श्लेष्मप्रकोपि तथा गुरु भवति । अत आमादन्यथा विपरीतं युक्त्या शृतं भवति । अनभिष्यंदि लघु च । पूर्वावस्थामपेक्ष्योच्यते । युक्तिर्योग उपायः । खरनादे च क्षीरस्य श्रपणे युक्तिः स्पष्टं कृत्वा निर्दिशिता । विना तु वनितास्तन्यमाममेव हितं पयः । अर्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतमिति ।

**भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ।**

अतिशयेन क्वथितं कवलभोज्यमिव संजातं गरीयो गुरुतरं भवेत् । खरनादे चोक्तम् । सान्निर्जलं शृतं द्वित्रिचतुरष्टांशशेषितम् । तथा शृततमं सारं गुरु बल्यतमं पयः । सुश्रुते चोक्तम् । शृतशीतं तु पित्तघ्नं शृतोष्णं कफवातजित् । त्यजेद्विवर्णं ग्रथितं विगंधं विरसं पटु । रक्तपित्तप्रशमनी वृष्या संतानिका गुरुरिति । खरनादे चोक्तम् । धारोष्णात् सर्वशः क्षीरात् शृतं गुरुतरं भवेदिति । धारोष्णममृतोपमं निर्दोषत्वात् ।

अधुना दधिगुणान्निरूपयति ।

**अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥२९॥**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताऽग्निशोफकृत् ।**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ ३० ॥**
**पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ।**
**नैवाद्यान्निशि नैवोष्णं वसंतोष्णशरत्सु न ॥३१॥**
**नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ।**
**न चानामलकं नापि नित्यं नामंदमन्यथा ॥३२॥**
**ज्वरासृक्पित्तवीसर्पकुष्ठपांडुभ्रमप्रदम् ।**

अम्लौ पाकरसौ यस्य तदेवंभूतं दधि भवति । तथा ग्राहि स्तंभनम् । तथा चोक्तम् । भेदि यत्पिंडितान् भावान् शकृदादीन् भिनत्ति तत् । विपरीतमतो ग्राहि तच्च स्तंभनमुच्यत इति । तथा गुरूष्णं वातजिच्च । मेदआदीनां द्वंद्वः । तान् करोति यत्तदेवम् । रोचत इति रोचिष्णु । न रोचत एव केवलम् । अरोचकमपि व्यावर्तयतीति शस्तमरुचौ । रोचते हि घृतपूरादि न त्वरुचिं जयति । अरुचिघ्नं पटोलपत्रं तन्न रोचते । तथा ह्यत्रैव पठिष्यति । तिक्तः स्वयमरोचिष्णुररुचिमित्यादि । रोचिष्णुत्वादेवोच्चावचव्यंजनपरिवृतैर्मांसमंडकादिभिरपि सुहितस्यापि दध्न्यभिलाष उत्पद्यत एव । अत एव चैतदाहारांतेऽभ्यवहरंति । शीतक इति विषमज्वरविशेषणम् । शीतकारित्वं तु वाते श्लेष्मणि तत्संसर्गे च यद्यपि त्रितये संभवति तथाऽपि वातजिद्वातज एव विषमज्वरे दधि प्रयोज्यं संसर्गे वा वातोल्बणे । तथा हि शीतज्वर एवोक्तम् । अग्न्यनग्निकृतात्स्वेदात्स्वेदि भेषजभोजनमिति । पीनसे शस्तमिति कथमवि-

शेषेणोक्तं यतश्चत्वारः पीनसा वातपित्तकफसन्निपातजा इति । वक्ष्यते । तत्र दध्नो वाताधिक एव युक्तत्वं न शेषेषु । अत्र संचक्ष्महे । परिपाकात्पीनसस्योपशांतिः परिपाककरं च दध्युष्णत्वात् । अथवा पूर्ववत्सामान्योक्तावपि यत्र योग्यताऽस्य वातिके तेनैतदुपकल्प्यताम् । अनुक्तेष्वपि हि सामान्योपक्रमो वस्तुवशाद्विशेषेष्वेव विपरिणमति । तथा ह्यत्रैवोपरिष्टाद्दुग्धकर्मसु व्यतीतम् । श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः । जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् । तदेतन्न च सर्वेष्वेव कासश्वासकृच्छ्रास्रपित्तेषु पयः कार्मुकमिति । तथा ग्रहणीरोगे तद्रूक्षं शस्तम् । अनेन च हेतुना दध्नः प्रकृतिस्थस्य स्निग्धत्वं युक्त्यैवोक्तम् । यतो ग्रहण्यां रूक्षमुद्धृतसारमुद्दिष्टम् । निशि नैव कदाचिदद्यात् । नैवाद्यान्निशि नैवोष्णमित्येवकाराच्चात्यंतिकनिषेधाद्दिवा भुंजीतेत्यर्थादवगम्यते । नैवोष्णमग्न्यादितापात्तप्तं तथा वसंतग्रीष्मशरत्सु न भोज्यम् । अन्यतमेऽप्यन्यर्तावपि मुद्गसूपादीनामन्यतमेन रहितं न भोज्यम् । तत्र घृतसितोपलयोः समासेनैतयोरेव योगेन पथ्यत्वमिच्छंति । मुद्गसूपादीनां तु मिश्रीभावो दध्ना जन्यमानस्य दोषस्य प्रतिबंधार्थं कल्प्यते । रक्तपित्तवत् । यथा समीरणोल्बणेऽस्रपित्ते तित्तिर्यादीनामौष्ण्यमुदुंबरादिरसेन प्रतिबध्यते । नित्यमिति । यद्युपशेते शरीरस्थं तथा ह्युदर्करोगावहत्वान्न शीलनीयम् । अत एवान्नपानविधावतिदोषशीलत्वादस्य निषेधं करोति । तथा च वक्ष्यति । किलाटदधिकूर्चिकेत्यादि । नामंदमिति । दुग्धावस्थां व्यतीत्य दध्यवस्थामसंप्राप्तमंतरावर्ति मंदकमित्युच्यते । तस्मिन् सत्यपि स्नेहे परिणतिविशेषेण कालात्मना स्रोतसामत्यंतोपलेपकृता दोषत्रयकोपोऽपि भवतीत्यतीव वर्जनीयमेव । मंदकनिषेधश्चोपलक्षणार्थः । तेन मद्यादीनप्यप्राप्तरसान्नोपयुंजीतेत्यवगंतव्यम् । अन्यथेत्यादि । प्रशब्द एवं द्योतयति । विधिभ्रष्टं दधि निषेव्यमाणं प्रकर्षेण ज्वरासृक्पित्तादीन् प्रददाति । ननु शुक्रकृत्त्वबलवर्धनत्वाद्दीपनत्वमनुपपन्नम् । शुक्रकृद्बलवर्धनानि हि द्रव्याणि प्रायेण गुरूणि भवंति । अतो दध्येवंगुणं सत्कथमग्निकृत्स्यात् । अत्राचक्ष्महे । अम्लत्वादुष्णवीर्यत्वाच्च युक्तमेव । यतो रसविपाकाभ्यामम्लं वीर्येणोष्णं च दध्यतोऽग्निकृत्त्वमस्मिन्नुपपन्नमिति । ननु शुक्रकरत्वं दध्नो न युक्तम् । यतोऽम्लपाकरसं दधीत्यधीतमाचार्येणाम्लश्च शुक्रनाशनस्तस्माच्छुक्रकृत्त्वमयुक्तम् । अत्राचक्ष्महे । स्निग्धत्वबृंहणत्ववातघ्नत्वबल्यत्वैः शुक्रकृत्त्वमुपपन्नमेव । तथा च वक्ष्यति । किंचिद्रसेन कुरुते कर्म पाकेन चापरम् । गुणांतरेण वीर्येण प्रभावेणैव किंचनेति । वातजिदित्यनेन नार्थः । यानि खलु द्रव्याणिं बल्यस्निग्धगुरूष्णयुक्तानि तानि वातघ्नान्येव दृष्टानि । तस्माद्वातजिदिति न वाच्यम् । नैवम् । सक्तुमद्यसूर्यतापमंदकादिषु व्यभिचारात् । तथा हि । सक्तवो वातला वृष्या रूक्षा बलकराश्च । मार्द्वीकादिमद्यं हर्षणत्वाद्वृष्यं वातलं च । तथा च वक्ष्यति । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यत इति । मद्यं च मात्रापीतं हर्षणं भवति । तथा च मुनिः । हर्षमूर्जप्रदं पुष्टिमारोग्यं पौरुषं परम् । युक्त्या पीतं करोत्याशु मद्यमिति । सूर्यतापश्चोष्णोऽपि सन्मारुतस्य वृद्धये । तथाच मुनिः । कटुतिक्तातिरूक्षशीतललघूनीत्यारभ्य यावद्वातातपौ भयं शोको हेतुर्वातार्शसामिति । मंदकं च स्निग्धाम्लगुरुगुणयुक्तमपि त्रिदोषकरम् । तथा च मुनिः । त्रिदोषं मंदकमिति । त्रिषु च दोषेष्वंतर्भूतः पवन इति चैवं व्यभिचारदर्शनाद्वातजिदित्युक्तम् । क्षीरस्य च दध्यात्मना परिणमतोऽनभिव्यक्ताम्लाभिव्यक्ताम्लात्यम्ललक्षणास्तिस्रोऽवस्थाः संपद्यंते । तत्र मंदजातमनभिव्यक्ताम्लम् । सम्यग्जातमभिव्यक्ताम्लम् । अतिजातमत्यम्लम् । तत्र मंदजातं त्रिदोषकृत्त्वान्निषिद्धम् । सम्यग्जातस्यैते पूर्वोक्ता गुणाः । किंचिद्धीनाश्चात्यम्लस्य । तथा सुजातेऽत्यम्ले च दध्नि सरमंडौ स्तः । तत्र दध्न उपरिभागः सरः । अधो मंडः । एतद्गुणाश्च लाघविकत्वान्नेहोक्ताः । मुनिना च दर्शिताः । त्रिदोषं मंदकं जातं वातघ्नं दधि शुक्रलम् । सरः श्लेष्मानिलघ्नस्तु मंडः स्रोतोविशोधनः । श्लेष्मपित्तरक्तकृत्त्वं चाम्लपाकरसोष्णवीर्यत्वादेवावगम्यते । यत्तु साक्षादेतेषामुपादानं तत्प्रकर्षार्थम् । अन्येभ्योऽम्लद्रव्येभ्यो दध्येतान्यतिशयेन करोतीति । नैवाद्यान्निशीत्यादौ ग्रंथे चैकस्मिन्नकारे कर्तव्ये यदनेकनकारकरणं तच्छास्त्रनिषिद्धदधिभक्षणादतिप्रत्यवायज्ञापनार्थम् । चरकोक्तमंगल्यगुणो नेहोक्तश्चिकित्सायामनुपयोगित्वात् । अत एव सर्पिरादीनां मंगल्यानामपि चरकेऽपि मंगलत्वं नावादीति । सुश्रुते तु दध्नो विशेषगुणा उक्ताः । यथा । दध्याजं कफपित्तघ्नं लघु पाके विषापहम् । दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् । विपाके मधुरं वृष्यं रक्तपित्तप्रणाशनम् । बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् । विपाके कटुकं क्षारमम्लं भेद्यौष्ट्रकं दधि । वातार्शांसि च कुष्ठानि कृमीन् हंत्युदराणि च । वातघ्नं कफकृत्स्निग्धं विशेषान्न च पित्तकृत् । कुर्याद्भक्ताभिलाषं च दधिमस्तु परिस्रुतम् । शृतक्षीराच्च यज्जातं गुणवद्दधि तत्स्मृतम् । वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् । दधि त्वसारं रूक्षं तु ग्राहि विष्टंभि वातलम् । दीपनीयं विशेषेण सकषायं रुचिप्रदमिति । केवलमपि स्वल्पं कदाचिद्दधि भुंजीतेत्यर्थादवगम्यते । अन्यथा केवलस्य गुणकथनं निष्फलमेव स्यादिति केचिदाहुः ।

**तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥३३॥**
**शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।**
**प्लीहगुल्मघृतव्यापद्गरपांड्वामयान् जयेत् ॥ ३४ ॥**

तक्रं लघु कषायाम्लं दीपनं कफवातजिच्च भवति । तथा शोफादीनेकादश जयेत् । घृतस्यातिपानाद्व्यापद्रोगो घृतव्यापत् । गरः कृत्रिमो विषविशेषः । सुश्रुते चोक्तम् । नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके । शीतकालेऽग्निमांद्ये च कफोत्थेष्वामयेषु च । मार्गे विरोधे दुष्टे च वायौ तक्रं प्रशस्यते । तथोक्तम् । तक्रमामं कफं कोष्ठे हंति कंठे करोति च । पीनसश्वासकासादौ सिद्धमेवोपयोजयेदिति ।

मंदजातं मरुत्कोपि रुक्षाभिष्यंदि दुर्जरम्। अतिजातं भृशाम्लौष्ण्यतैक्ष्ण्यात् पित्तकरं परम्। दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित्। वातेऽम्लं सैंधवोपेतं स्वादु पित्ते सशर्करम्। हितं पथ्यं कफे साम्लं व्योषसौवर्चलान्वितम्। तक्राल्लघुतरो मंडो दुर्जरा तक्रकूर्चिकेति।

**तद्वन्मस्तु सरं स्रोतःशोधि विष्टंभजिल्लघु।**

मस्तु तद्वत्तक्रवद्गुणैर्वेद्यम्। तथा सरं तथा स्रोतःशोधि तथा विष्टंभजित्। सुश्रुते चोक्तम्। तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्। अम्लं कषायानुरसमवृष्यं कफवातजित्। आह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत्। बलमावहति क्षिप्रं तथा भक्तस्य रोचनम्।

**नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत्॥ ३५॥**
**संग्राहि वातपित्तासृक्क्षयार्शोर्दितकासजित्।**

नवनीतं नवं नवोद्धृतं लघु वृष्यं च तथा शीतं शीतवीर्यं बलवर्णाग्निकरं तथा संग्राहि वातादिजिच्च। संग्रहे चोक्तम्। शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतमित्यादि।

**क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित्॥३६॥**

क्षीरोद्भवं तु क्षीरादेव जातं मथित्वा तन्नवनीतं संग्राहि रक्तपित्ताक्षिरोगजिच्च भवति।

**शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम्।**
**बालवृद्धप्रजाकांतिसौकुमार्यस्वरार्थिनाम्॥३७॥**
**क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम्।**
**वातपित्तविषोन्मादशोषाऽलक्ष्मीज्वरापहम्॥३८॥**
**स्नेहानामुत्तमं शीतं वयसः स्थापनं परम्।**
**सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत्॥ ३९॥**

घृतं धीप्रभृतीनामग्निग्लपितात्मांतानां शस्तम्। धीर्वस्तुग्रहणशक्तिः। स्मृतिरतीतविचारशक्तिः। प्रजार्थिनां शस्तम्। प्रजाऽपत्यं तदर्थिनाम्। शुक्रस्य सफलताकरमित्यर्थः। तथा वातादिघ्नम्। तथा स्नेहानां तैलादीनामुत्तमं श्रेष्ठम्। तथा शीतम्। वयसः स्थापनं जरया विना वयसः स्थापनमित्यर्थः। सहस्रवीर्यमिति। सहस्रशब्दोऽनेकार्थः। अनेकशक्तीत्यर्थः। कथं विधिभिर्योगसंस्कारादिभिर्घृतमनेकशक्ति संपद्यते। येन द्रव्येण प्रयुज्यते संस्क्रियते वा तच्छक्तिमेवाऽनुरुध्यते। अथवा तत्संयोगाच्छक्त्यंतरमन्यदारोहति। अत एव हेतोः सहस्रशब्दोऽनेकार्थः। अन्यथा द्रव्याणामानंत्यात्कथं दशशतवाची सहस्रशब्द उपपद्यते। अन्ये त्वेवं व्याचक्षते। सहस्रशब्दो दशशतसंख्यावाच्येव। सहस्रपाक्यं हि सर्पिरुक्तं न सहस्रपाक्यात्परेण। तत्र चेदं सहस्रपाक्यत्वे प्रयोजनम्। पाकसहस्रं यावदस्य संस्कारोऽनुवर्तते नातःपरम्। अन्यथा सहस्रपाकात्परेण किमिति पाको नोक्तः। तस्मादासहस्रं पाकानां शक्त्यंतराण्यारोहंति पाका न ततः परेणेति। तथा कर्मसहस्रकृदनेककार्यकृत्।

**मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान्।**
**पुराणं जयति व्याधीन् व्रणशोधनरोपणम्॥४०॥**

पुराणमिति च बहुकालं पंचदशादिवर्षस्थितं घृतं मदादीन् व्याधीन् जयति। व्रणानां शैथिल्यादीन् शोधयति। तथा व्रणान् रोपयति। संग्रहे चैवमध्यैष्ट। व्रणशोधनरोपणम्। पूर्वोक्तांश्चाधिकान्कुर्याद्गुणांस्तदमृतोपमम्। तद्वच्च घृतमंडोऽपि रूक्षतीक्ष्णस्तनुस्तु स इति।

**बल्याः किलाटपीयूषकूर्चिकामोरणादयः।**
**शुक्रनिद्राकफकरा विष्टंभिगुरुदोषलाः॥ ४१॥**

किलाटादयो बल्यास्तथा शुक्रादिकरास्तथा विष्टंभिनो गुरवो दोषलाश्च स्युः। आदिग्रहणात्तक्रपिंडकक्षीरशाकयोर्ग्रहणम्। वह्निनाशकत्वं चैषां बल्यत्वेन शुक्रकृत्त्वेन विष्टंभिदोषलत्वेनाऽवगतमेवेति वह्निनाशना इति ग्रंथकृता नेह कृतम्। संग्रहे तु स्पष्टार्थं कृतमेव। तत्र किलाटोऽल्पक्षीरो बहुना तक्रेण कृतः। पीयूषः सद्यःप्रसूतायाः क्षीरकृतः। कूर्चिका दधितक्रकृता किलाटिका। मोरणः क्षीरसदृशः किलाटिकापीडन उत्तरापथे प्रसिद्धः।

**गव्ये क्षीरघृते श्रेष्ठे निंदिते चाविसंभवे।**

गोसंभवे क्षीरघृते श्रेष्ठे। आविके च निंदिते गर्हिते। घृतस्य च क्षीरविकारोपलक्षणार्थत्वाद्दधितक्रमस्त्वादीनामपि गव्यानां श्रेष्ठत्वमेव वेद्यम्। अत एवाविसंभवानां दधितक्रादीनामधमत्वमेव वेद्यं न क्षीरघृतयोरेव। अत एव संग्रहे सुस्पष्टं कृत्वोक्तम्। विद्याद्दधिघृतादीनां गुणदोषान्यथा पयः। अस्य ह्ययमर्थः। घृतादीनां पयोगुणान्विद्यात्। यथाशब्दस्य पदार्थानतिवृत्त्यर्थेऽव्ययीभावः। तेनैतदुक्तं भवति। यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्वद्दध्यादीनामपि सामान्येनैव गुणा उक्ताः। विशेषाभिलाषे तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतं यत्क्षीरं तद्गुणोच्चयोऽपि ग्राह्य इति। खरनादे तूक्तम्। दध्यादीनां तु तज्जानां सामान्ये गुणकर्मणी। तथा स्वात्स्वादपि क्षीराद्दध्यादीनां विशेषणम्। गव्यमिति गोपयसोर्यदिति यत्। बाहुल्येन क्षीरनिर्देशात्क्षीरवर्गोऽयम्। दधिनवनीतादीनां तु तद्विकारभूतत्वादिति क्षीरवर्गः।

क्षीरवर्गादनंतरमिक्षुवर्ग आरभ्यते। गुणक्रियातुल्यत्वात्। तथाहीक्षुरपि क्षीरवत्सरगुरुस्निग्धबृंहणादिगुणकर्मा।

**इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत्॥४२॥**
**वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसः सरः।**

इक्षो रसः सरत्वादिगुणयुक्तः। तथा कफमूत्रकृत्। सरः

शकृद्भेदी कथ्यते । तथा । गुर्वी सरा च पालंक्येत्युक्तानंतरमुक्तवान् । पालंक्यावत्स्मृतश्चंचुः सतु संग्रहणात्मक इति चंचुशाकस्य संग्रहणेन गुणेन सरत्वं बाधितमिति । अत्र स्निग्धबृंहणवृष्यमधुरादिगुणेन युक्तं च द्रव्यं प्रायः पवनहंतृ दृष्टम् । अतोऽस्यापीक्षुरसस्य मारुतजित्त्वं वेद्यम् । ग्रंथकृता तु स्पष्टं कृत्वा नोक्तम् । भुक्ते हि समीरणकृत्त्वमस्य दृष्टम् । तथा संग्रहे । वृष्यः शीतः पवनजिद्भुक्ते वातप्रकोपन इति । खरनादेऽप्युक्तम् । मारुताऽध्मानजननश्चक्षुष्यो बृंहणो रस इति ।

**सोऽग्रे सलवणो दंतपीडितः शर्करासमः ॥ ४३॥**

स च रसोऽग्र इक्षुप्रांते जातः सलवणः । सुश्रुते चोक्तम् । अतीव मधुरो मूले मध्ये मधुर एव च । अग्रे त्वक्षिषु विज्ञेय इक्षूणां लवणो रस इति । पाषाणादिसंक्षुण्णस्येक्षोः सद्य एव यो रस उत्पद्यते तस्यैते यथोक्ता गुणा वेद्या नान्यथा पीडितस्येक्षुरसस्य । यंत्रदंतादिपीडितस्याऽन्यथा शास्त्रकृता गुणो निर्दिश्यते । दंतपीडितः शर्करासम इति ।

यांत्रिकस्त्वन्यगुण एवेत्याह ।

**मूलाग्रजंतुजग्धादिपीडनान्मलसंकरात् ।**
**किंचित्कालं विधृत्या च विकृतिं याति यांत्रिकः॥४४**
**विदाही गुरुविष्टंभी तेनासौ**

मूलं चाग्रं च जंतुजग्धादयश्च मूलाग्रजंतुजग्धादयस्तेषां तथाविधानामिक्षूणां पीडनं तस्मान्मूलाग्रजंतुजग्धादिपीडनात्तथा मलसंकरान्मलमिश्रणात्तथा किंचित्कालं विधृत्या च यांत्रिके रसे स्वल्पकालं विधृतिर्विलंबश्च दृष्टः । तदेतैः कारणैर्यांत्रिको रसो विकृतिं याति स्वभावान्यथात्वं प्राप्नोति । तथा गुरुरधिकं गुरुः संपद्यते । अविदाही विदाही । अविष्टंभी विष्टंभीत्येवंविधाऽस्य विकृतिः । यांत्रिकस्य च रसस्य बाहुल्येन लोके मूलादिसहितस्य पीडनात्कालविलंबोपलब्धेश्च ग्रंथकृदेवं समवोचत् । अत एव हेतुनिर्देशोऽत्र कृतो हेत्वभावात्कार्याभावप्रतिपत्तिज्ञापनार्थमिति । तेन यदि निपुणधीभिर्मूलादिरहितः पीड्यते तदा विकृतिं न यात्येवेत्यर्थः । विदाहीत्यादि । यतो विकृतिं याति तेन हेतुनाऽसौ यांत्रिको विदाह्यादिगुणः संपद्यते । विदाहिजाठराग्निसंयोगाद्यः पाकं गच्छन्मध्यमायामेवावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरकालमवतिष्ठते न द्रागेव जरां याति गुरुत्वादथवा वस्तुस्वभावात्स विदाहगुणयुक्तोत्तया वितन्यते । तस्माद्गुरुस्वाभाव्याद्विदाही कथितः । तथा चोक्तं धान्वंतरे । शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यत इति ।

**तत्र पौंड्रकः ।**
**शैत्यप्रसादमाधुर्यैर्वरस्तमनुवांशिकः ॥ ४५ ॥**

तत्र तेषु रसेषु मध्ये पौंड्रको रसो वरः सर्वेक्षुरसेभ्यः श्रेष्ठः । कथं शैत्यादिभिर्हेतुभूतैः । शीतस्य भावः शैत्यम् । गुणवचनेत्यादिना ष्यञ् । प्रसादः प्रसन्नत्वम् । माधुर्यं स्वादुता । तमनु वांशिकः । हीनार्थेऽनुशब्दस्य कर्मप्रवचनीययुक्त इति द्वितीया । शैत्यादिभिः पौंड्रकाद्धीनो वांशिक इत्यर्थः ।

**शातपर्वककांतारनैपालाद्यास्ततः क्रमात् ।**
**सक्षाराः सकषायाश्च सोष्णाः किंचिद्विदाहिनः॥४६**

शातपर्वकादयस्ततो वांशिकात्क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः। ते च शातपर्वकादय ईषत्क्षारत्वेन युक्ता ईषत्कषायरसा ईषदुष्णाः किंचिद्विदाहिनश्च ।

**फाणितं गुर्वभिष्यंदि चयकृन्मूत्रशोधनम् ।**

फाणितं क्षुद्रगुडीभूत इक्षुरसो गुरुः । अतिशयेनेत्यर्थाद्वेद्यम् । गुरुत्वमात्रस्येक्षुरसेऽप्युक्तत्वात् । अभिष्यंदि तथा चयकृत् त्रिदोषकरं मूत्रशोधनं मूत्रमतिवाहयति । तंत्रांतरे चोक्तम् । रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् । कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ।

**नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥ ४७ ॥**
**प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ।**

गुडो धौतः संस्कारवशान्निर्मलो नातिश्लेष्मकरः । किंचित्कफकर इत्यर्थः । मूत्रं च शकृच्च मूत्रशकृत् । सृष्टं बहिः क्षिप्तं मूत्रशकृद्येन स एवम् । अपर इति धौताद्विशुद्धादन्यः । समल इति यावत् । प्रभूतः कृमिमज्जासृङ्मेदोमांसकफो यस्य स एवम् । कारणे कार्योपचाराद्गुडोऽप्येवमुक्तः । यथाऽनूपोदकं पादरोग इति । प्रभूतकृम्यादीन्करोतीत्यर्थः ।

**हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत्॥४८॥**

गुड इत्यनुवर्तते । पुराणो गुडो हृदयाय हितः । तथा पथ्यः। अंतर्मध्यबहिर्मार्गाय हितः । नवो गुडः श्लेष्माणमग्निसादं करोति।

**वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ।**
**मत्स्यंडिकाखंडसिताः क्रमेण गुणवत्तमाः ॥ ४९ ॥**

मत्स्यंडिकादयस्त्रयो वृष्यास्तथा क्षीणक्षतहिता रक्तपित्तानिलापहाश्च तथा क्रमेण गुणवत्तमाः । धौतगुडादपि मत्स्यंडिका गुणकारी निर्मलतरत्वात्। ततोऽपि खंडो गुणवत्तरः। खंडादपि शर्करा गुणवत्तमा निर्मलतमत्वात् । गुणवत्तमेति गुणवतीशब्दस्य तमप्प्रत्यये पुंवद्भावोऽत्र पक्षे च वक्तव्य इति पुंवद्भावः ।

**तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।**

तद्गुणेति । शर्करासमा यासशर्करा यवासशर्करेति या लोके प्रसिद्धा तिक्तमधुरकषायरसा च । केचित्त्वाचक्षते । दुरालभारसेन या क्रियते ।

**दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः ॥५०॥**

इत्येताश्चान्याश्च दाहादिनाशनाः । ग्रंथांतरे चोक्तम् । यथा

यथाऽऽसां वैमल्यं मधुरत्वं यथा यथा । स्नेहलाघवशैत्यादिसारत्वं च तथा तथेति ।

अधुना वरावरत्वं निर्धारयति ।

**शर्करेक्षुविकाराणां फाणितं च वरावरे ।**

इक्षुविकाराणां मध्ये शर्करा फाणितं च क्रमेण वरावरे भवतः। शर्करा श्रेष्ठा फाणितमवरम् ।

शर्करायोनिप्रसंगेन मधुनोऽपि गुणानाह ।

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत्॥५१॥**
**मेहकुष्ठकृमिच्छर्दिश्वासकासातिसारनुत् ।**
**व्रणशोधनसंधानरोपणं वातलं मधु ॥ ५२ ॥**
**रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ।**

मधु चक्षुषे हितम् । तथा छेदि । उभयथाऽऽश्चोतनव्रणलेपादावुपयुक्तम् । तथाऽभ्यवहारविषयेऽपि । तैक्ष्ण्याद्यो देहे पिंडितान् भावान् छिनत्ति विभजति स छेदीति कथ्यते। तथा तृडादिनुत्। मेहादिजिदिति च। प्रायेणाऽभ्यवहारविषय एव। व्रणानां शोधनं संधानं रोपणं च । शोधनं यत्पूयपैच्छिल्यादिप्रेरकम् । संधानं यद् द्वौ व्रणौ चैकीकरोति । रोपणं सुप्रसिद्धम् । एतच्च कार्यं बाह्यविषयमेवाऽस्य वेद्यम्। तथा वलमेतच्चास्य बाह्योपयोगेनाभ्यंतरोपयोगेन च । अंते व्यस्तश्रुतत्वात्। चक्षुष्यं छेदीत्यादिनाऽस्य मधुनः कर्मनिर्देशः। रूक्षं कषायमधुरमित्यनेनास्य स्वरूपनिर्देशः। लाघवाच्चाऽत्र ग्रंथकारेणैतद्भेदादि नोक्तम्। तथा ह्ययमेव तंत्रकारः संग्रहे मधुनो भेदानाख्यत्। तथा भ्रामरं पैत्तिकं क्षौद्रं माक्षिकं तद्यथोत्तरम् । तत्र स्याद्भ्रामरं शुक्लं घृतवर्णं तु पैत्तिकम् । क्षौद्रं तु कपिलं विद्यात्तैलाभं माक्षिकं मतम् । भ्रामरं तर्पणं स्वादु त्रिदोषं पैत्तिकं विदुः । वरं च गुर्वभिष्यंदि क्षौद्रं रूक्षं मनाग्गुरु । माक्षिकं लघ्वपवनं मधुरं शस्यते व्रणे । गरीयः स्वाद्वभिष्यंदि नवं जीर्णमतोऽन्यथा । मंडः पुराणान्मधुनस्तीक्ष्णो रूक्षो लघुस्तनुरिति । तथा संग्रहे कटुपाकित्वगुरुत्वशैत्यविषान्वयत्वविरुद्धोपक्रमत्वयोगवाहित्वादीन् गुणानवोचत् । योगवाहित्वं च विवदंते बहुविदः । तत्र केचिदेवं समगिरंत । यद्द्रव्यं द्रव्यांतरेण संयुज्यात्मीयं स्वभावं हित्वा संयुक्तद्रव्यस्वभावमेवानुवर्तते तद्योगवाहीति । नचैतद्युक्तम् । यतो यद्येवं योगवाहिता निश्चीयते तदानीं योगवाहिद्रव्योपयोगो निरर्थकः स्यात् । तथाहि । योगवाहिद्रव्यमंतरेणाऽपि यत्स्वभावं द्रव्यं प्रागासीत् तत्स्वभावमेव योगवाहिद्रव्ये युक्तमपि । तस्मादसदेतद्योगवाहिलक्षणमिति । केचित्त्वेवं प्रतिजानते । यद्द्रव्यं द्रव्यांतरेण युक्तमन्यस्य द्रव्यस्य शक्त्युत्कर्षमुत्पादयति तद्योगवाहीति । तदप्यसम्यक् । यस्मादेवमभ्युपगम्यमानेन बहूनि द्रव्याणि योगवाहीनि स्युः । तथा च मध्वादेरपि द्रव्यस्य किंचिद्द्रव्यं समानगुणस्य शक्त्युत्कर्षं कुर्वदेव दृष्टम् । तत्कथं मध्वादेरेव योगवाहित्वमुच्यते नापरस्येति । तदेतदपि लक्षणमसच्छ्रुतत्वादलक्षणम् । अपरे त्वेवमाहुः । यद्द्रव्यं द्रव्यांतरेण तुल्यगुणेनाऽपि युक्तं सत्तद्गुणाननुवर्तते स्वं च कार्यं तदविरुद्धं किंचित्करोति तद्योगवाहि द्रव्यम् । भृत्यवत् । यथा भृत्यः स्वामिकार्यमत्यजन् स्वकार्यमपि शरीरयात्रादिकं स्वाम्यविरुद्धं करोति तथैव मधुमदनफलसंयुक्तं वमनकार्यं करोति नतु वमननिवारणं मधुकार्यम् । एवं मधु हरीतकीसंयोगाद्विरेचनकार्यमेव करोति न मधुकार्यं स्तंभनरूपमिति । ये तत्रैवं प्रतिपन्ना मदनफलादेः शक्त्युत्कर्षस्तथाविधोऽस्ति येन मधुसंबंधि कार्यमवधूय स्वं कार्यं करोति ते चैवं चोदयंतो भवंतीति वंचनीयाः । यतस्तंभनद्रव्येणाम्येन येन केनचित्संयुक्तस्य सुधाक्षीरस्यापि शक्तिः किंचिदपहीयमाना दृष्टा मधुनाऽपि स्तंभनस्वभावेनाऽप्यस्य नापहीयते मनागपि । अतो मध्वादेरेव योगवाहित्वं नान्यस्य । अपिचान्यदा योगवाहि द्रव्यं त्रिवृतादिमदनफलेन युक्तं सद्विरेचनं वमनं चोभयकार्यं कुर्वद्दृष्टं न केवलं वमनमेव न विरेचनमेव । तस्मान्मध्वादेरेव योगवाहित्वमिति स्थितमेतत् । तत्तुल्येति । मधुसमा गुणैर्मधुशर्करा ।

**उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहंति तत् ५३**

तन्मधु उष्णमुपयुक्तं सन्निहंति मारयति । तथोष्णार्तं प्रतप्तं पुरुषं निहंति । उष्णे च काले देशे चोपयुक्तमुष्णैराहारादिभिश्च युक्तं सन्निहंति ।

**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ५४ ॥**

तच्च मधु प्रच्छर्दने वमने तथा निरूहे च उष्णं न निवार्यते न निषिध्यते । तस्मात्कारणात्तयोर्वमिनिरूहयोरलब्धपाकमपक्वमेवाशु निवर्तते पुनरागच्छति । इतीक्षुवर्गः ।

सर्पिषोऽनंतरं स्नेहसामान्यात्तैलवर्गो वक्तव्ये गुडस्य समानरसवीर्यविपाककर्मत्वात् प्रायेण चाहारद्रव्येषु भक्ष्यभोज्येष्वस्यैव तैलेभ्यः सारभोजनादिक्षुवर्गांतरा निर्दिष्टः । भूरिभोजनोपयोगितया च मद्यात्प्राक् तैलवर्गो वक्तव्य इत्याह ।

**तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥ ५५ ॥**

सर्वं तैलं स्वकारणसमगुणं भवति । यतो यदभिनिर्वृत्तं तत्स्वरूपमेवमित्यर्थः । तत्र तैलेषु मध्ये मुख्यं तिलोद्भवं यत्तैलं तत्तीक्ष्णं मंदविपरीतम् । तथा व्यवायि व्याप्तिशीलम् । तथा त्वग्दोषकृत्पानाभ्यासेन त्वचं दूषयति । अचक्षुष्यं चक्षुषे हितं न भवति । सूक्ष्मं सूक्ष्मस्रोतोगामि । उष्णमुष्णवीर्यम् । स्वयोनिवदित्यतिदेशात्कफकृत्त्वं प्राप्तमित्याह । कफकृन्न च कफं न करोति। संग्रहेऽप्युक्तम् । मेध्यस्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः । तस्यैव श्लेष्मकर्तृत्वं न तैलस्य खलस्य चेति। पानकस्त्वायुर्वेदावतारेऽधिजगे । विपाके कटुकं तैलं वातघ्नं कफपित्तकृदिति । ननु च

तैलमिति कथमस्य मुख्यं नाम। यतो यथा तिलस्य विकारः स्नेहस्तैलमित्युच्यते। तथैरंडादीनामपि यो विकारः स्नेहः सोऽपि तैलमित्युच्यते। मुनिरप्याह। अतैलमपि तैलमेव कृत्वोपदेक्ष्यते तैलप्राधान्यात्स्नेहप्राधान्यादिति यावत्। सामानाधिकरण्यप्रयोग एवोपपन्नः। यथा कौसुंभं तैलमैरंडं तैलमिति। अत्रोच्यते। तिलस्येदं वस्तु तैलमित्यन्वर्थता तिलोद्भवस्यैव तैलस्य संभवति न कौसुंभादीनामपि च। कौसुंभं तैलमित्यादौ तैलशब्दः कांडादिव्यवच्छेदपरः संभाव्यते। यथा कौसुंभं तैलं न पत्रं कांडं चेति। इदं तैलं तैलमित्यत्र तु सामानाधिकरण्येन यदि तैलशब्दो निर्दिश्यते ततः पूर्वस्मात्तैलशब्दात्स्नेहाभिधायिनोऽधिकमर्थांतरं न वक्ति। नन्वत्राऽपि तैलशब्दः कस्मात्कांडादिव्यवच्छेदपरो न भवतीति चेत्। वयं ब्रूमः। रूढिरूपत्वात्तैलशब्दस्य स्नेहविषय एव तैलशब्दो रूढो न कांडपत्रादिविषये। तिलस्य हि कांडं पत्रं वा न तैलमित्युच्यते किं तर्हि तिलपत्रं तिलकांडमिति। अत एव तैलशब्दोच्चारणस्य समनंतरं स्नेहविषयैव धीर्जायते न पत्रकांडादिविषया। तस्मादस्यैवैतन्मुख्यं नाभियुक्तम्। संस्कारानुवर्तित्वेन सर्वरोगजित्त्वाचास्य मुख्यत्वम्। तथा चोक्तम्। संस्कारात्सर्वरोगजिदिति। कुसुंभादीनां तिलशब्दस्य च स्नेहनार्थवाच्ये विकारे स्नेहे तैलच्प्रत्यये सति कुसुंभतैलमेरंडतैलं तिलतैलमिति रूपं भवति।

**कृशानां बृंहणायालं स्थूलानां कर्शनाय च।**
**बद्धविट्कं कृमिघ्नं च संस्कारात्सर्वदोषजित् ५६**

कृशानां पुंसां बृंहणाय बृहत्त्वायालं पर्याप्तं स्थूलानां च कर्शनायालम्। ननु कथमेकस्माद्वस्तुनो विरुद्धकार्यद्वयं कृशत्वबृंहणत्वरूपं स्यादिति ब्रूमः। कृशानां तावत्स्रोतांसि संकोचमायांति संकुचितस्रोतसां च नराणां तैलमंतरेणाऽन्यानि द्रव्याणि बृंहणगुणयुक्तान्यपि न तथा प्रवेष्टुं समर्थानि भवंति। तैलं पुनः संकुचितानि स्रोतांसि तीक्ष्णादिभिर्गुणैर्झटित्येव प्रविश्य शोधयति। स्रोतःशुद्ध्या च शरीरपुष्टिः। तथा च वक्ष्यति। स्रोतःसु तत्र शुद्धेषु रसो धातूनुपैति यः। तेन तुष्टिर्बलं वर्णः परं पुष्टिश्च जायत इति। तस्मात्कृशानां बृंहणायाऽलमित्युपपन्नम्। तथा स्थूलानां सूक्ष्मस्रोतोगामित्वात्सर्वस्रोतःसु तैलं प्रविश्य तीक्ष्णोष्णादिगुणयोगान्मेदः क्षपयति तत्क्षपणाच्च कर्शनं संपद्यत इति स्थूलानां कर्शनाय चेत्युपपन्नम्। स्नेहादिगुणयोगात्तैलस्य बृंहणत्वक्षामत्वे सिद्धे सति कृशानां बृंहणायालं स्थूलानां कर्शनाय चेत्युक्तं ज्ञापनार्थम्। यदित्थंभूतं तीक्ष्णादिगुणयुक्तमन्यदपि तत्कृशानां बृंहणायालं स्थूलानां कर्शनाय चेति। बद्धेत्यादि। बद्धा विट् येन तद्बद्धविट्कम्। कप्समासांतः। ग्रंथितपुरीषमित्यर्थः। तथा कृमिघ्नम्। संस्कारादित्यादि। विशिष्टद्रव्यकृतसंस्कारमाश्रित्याशेषरोगजित्।

**सतिक्तोषणमैरंडं तैलं स्वादु सरं गुरु।**
**वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम्॥ ५७॥**
**रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत्।**

एरंडतैलमीषत्तिक्तं कटु भवति तथा स्वादु मधुरं तथा सरं गुरु च। वर्ध्मेत्यादि। वर्ध्मादीन् जयेत्। कटीगुह्यकोष्ठपृष्ठस्थितौ रुक्शोफौ जयेत्।

**तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरंडोद्भवं त्वति ५८**

तच्च तीक्ष्णोष्णपिच्छिलं विस्रं च भवति। लोहितैरंडतैलं त्वतिशयेन तीक्ष्णादियुक्तम्।

**कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम्।**
**लघुपित्तास्रकृत् कोठकुष्ठार्शोव्रणजंतुजित्॥५९॥**

सर्षपाणामिदं सार्षपं तैलं कटूष्णं च भवति। तथा तीक्ष्णं कफशुक्रानिलापहं च। अपपूर्वाद्धंतेरन्येष्वपि दृश्यत इति डः। तथा च लघुपित्तास्रं च करोति तथा कोठादीन् जयति।

**आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम्।**

अक्षाणां बिभीतकानामिदमाक्षं तैलं मधुरादिगुणयुक्तं पित्तानिलहृच्च।

**नात्युष्णं निंबजं तिक्तं कृमिकुष्ठकफप्रणुत्॥६०॥**

निंबोद्भवं तैलमतिशयेनोष्णं न भवति तथा तिक्तं तथा कृमिकुष्ठकफनाशनमतिशयेन।

**उमाकुसुंभजं चोष्णं त्वग्दोषकफपित्तकृत्।**

अतसीजं कुसुंभजं च तैलमुष्णवीर्यं भवति तथा त्वग्दोषकफपित्तानि करोति।

स्नेहप्रसंगादिदमप्याह।

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ॥ ६१॥**
**मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव।**

वसा तु रूपेण शुद्धमांसस्य स्नेहः। मज्जा धातुः। तौ वातनाशनौ तथा मांसानुगस्वरूपौ यस्य प्राणिनः संबंधि मांसं तत्सदृशरूपौ। मेदोऽपि ताविव वसामज्जासदृशस्वरूपं विद्यात्। संक्षेपतया चायं तैलवर्ग इहोक्तः। तथा च संग्रहेऽधिकमप्युक्तम्। दंतीमूलकरक्षोघ्नं करंजारिष्टशिग्रुजम्। सुवर्चलेंगुदीपीलुशंखिनीनीपसंभवम्। सरलागुरुदेवाह्वशिंशपासारजन्म च। तुवरारुष्करोत्थं च तीक्ष्णं कट्वम्लपित्तकृत्। अर्शःकुष्ठकृमिश्लेष्मशुक्रमेदोनिलापहम्। करंजनिंबजे तिक्ते नात्युष्णे तत्र निर्दिशेत्। कषायतिक्तकटुकं सारलं व्रणशोधनम्। भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे। विशेषात्कृमिकुष्ठघ्ने तयोर्ध्वाधोविरेचने। अक्षातिमुक्तकाक्षोटनालिकेरमधूकजम्। त्रपुसैर्वारुकूष्मांडश्लेष्मातकपियालजम्। वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम्। पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्। तिलतैलं वरं तेषु कौसुंभं

न वरं परम् । वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ । मांसानुगस्वरूपौ च विद्यान्मेदोऽपि तावित्र । शालूकी शौकरी पाकहंसजा कुक्कुटोद्भवा । वसा श्रेष्ठा स्ववर्गेषु कुंभीरमहिषोद्भवा । काकमद्गुवसा तद्वत्कारंडोत्था च निंदिता । शाखादमेदसां छागं हस्तिनं च वरावरमिति । इति तैलवर्गः ।

तीक्ष्णोष्णसूक्ष्मादिगुणसामान्यात्तैलवर्गादनंतरं मद्यवर्ग आरभ्यते ।

**दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥६२॥**
**सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ।**
**सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६३ ॥**
**नष्टनिद्राऽतिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।**
**कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम्॥६४॥**
**वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।**

सर्वं मद्यं दीपनादिगुणयुक्तम् । तुष्टिश्चित्तपरितोषः । पुष्टिः शरीरपोषः । ते ददाति जनयति यत्तत्तुष्टिपुष्टिदम् । आतोऽनुपसर्गे कः । तथा ईषन्मधुरतिक्तकटुकम् । तथाऽम्लौ पाकरसौ यस्य तदेवम् । तथा सरम् । तथा सकषायम् । तथा स्वरश्चारोग्यं च प्रतिभा च वर्णश्च तान् करोति । ननु सर्वाण्येव द्रव्याण्यारोग्यार्थमुपदिश्यंते तस्मादारोग्यकृत्त्वं सर्वेषामेव द्रव्याणां प्राप्तमिति सर्वस्यैवाऽरोग्यकृत्त्वम् । उच्यते । युक्तमाह भवान् । किंत्वतिशयख्यापनार्थम् । एतन्मद्यमतिशयेनारोग्यकृदित्यर्थः । तथा लघु । तथा नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितम् । सर्वमेव मद्यप्रभावादिति केचित् । अन्ये त्वेवं मन्यंते । यथा सुरादि यन्मद्यं श्लेष्मादिवर्धनं तन्नष्टनिद्रेभ्यो हितम् । यच्च माधवादिमद्यं श्लेष्मादिहृंत तच्चाऽतिनिद्रेभ्यो हितमिति । तथा पित्तास्रदूषणं कृशेभ्यः स्थूलेभ्यश्च हितम् । सामान्येनाऽपि निर्देशेऽत्रायं विशेषो बोध्यः । किंचिन्मद्यं कृशाय हितं किंचित्स्थूलायेति । अथवा तैलोक्तन्यायेन कृशस्थूलहितत्वं बोध्यम् । तथा रूक्षं सूक्ष्मं स्रोतोगामि । तथा स्रोतो विशोधयति । तथा वातश्लेष्महरम् । युक्त्या पीतं सदेवंगुणं मद्यं भवति । युक्तिस्तु मदात्ययनिदाने चिकित्सिते च वक्ष्यमाणा । अन्यथाऽयुक्त्या पीतं सद्विषतुल्यं भवति ।

**गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ६५ ॥**

नवं किंचित्कालातिक्रांतं तन्मद्यं गुरु त्रिदोषकरं च भवति । नवमनतीतसंवत्सरमित्येके । जीर्णं पुराणं किंचित्कालातिक्रांतमतो नवादन्यथा लघु दोषहरं चेत्यर्थः ।

**पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।**
**नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ॥ ६६ ॥**

तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णो विहाराहारादिक उपचारो यस्य स एवं तेन । न विरिक्तेत्यादि । कृतविरेचनेन न पेयं दोषासाम्यादिति भावः । क्षुधार्तेन न पेयम् । तथाऽतितीक्ष्णमतिमृदु च मद्यं न पेयम् । अल्पसंभारमिति । यद्यावता संभारेण लोकप्रसिद्धेन संधीयते सुरादि तत्र तदपेक्षया चाल्पसंभारं न पेयम् । तथा कलुषमस्वच्छं च न पेयम् ।



अधुना मद्यविशेषानाह ।

**गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ।**
**सुराऽनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ॥ ६७ ॥**

सुरा गुल्मादिहृद्भवति । तथा स्नेहयतीति स्नेहनी । तथा गुरुर्वातनाशनी च । तथा मेदश्चास्रं च स्तन्यं च मूत्रं च कफश्च तानावहति ।

**तद्गुणा वारुणी हृद्या लघुतीक्ष्णा निहन्ति च ।**
**शूलकासवमिश्वासविबंधाध्मानपीनसान् ॥ ६८ ॥**

एवं वारुणी प्रसन्ना । त एव सुरोक्ता गुणा यस्याः सा तद्गुणा । सुरासमगुणेत्यर्थः । तथा हृदयाय हिता हृद्या । तथा लघुतीक्ष्णा च शूलादीन्निहंति च । विबंधः स्रोतसामुपलेपेन दोषादीनामावहनम् । जगलमेदकबक्कसानां सुतरामनुपयोगित्वाद्गुणा नेहोक्ताः । संग्रहे तूक्ता एव । यथा । जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः । बक्कसो हृतसारत्वाद्विष्टंभी दोषकोपनः । वारुण्या अधोभागो घनो जगलः । जगलस्याधो भागो मेदकः । पानीयेन मद्यकल्कपीडनोत्पन्नो बक्कसः ।

**नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ।**
**व्रणे पांड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ ६९ ॥**

बिभीतकानामियं बैभीतकी नातितीव्रो मदो यस्याः सैवम् । तीव्रमदं न जनयतीत्यर्थः । लघ्वी तथा पथ्या । व्रणादिषु चात्यर्थमन्यमद्यवन्न विरुध्यते ।

**यथा द्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।**
**ग्रहणीपांडुकुष्ठार्शःशोफशोषोदरज्वरान् ॥ ७० ॥**
**हंति गुल्मकृमिप्लीहान् कषायकटुवातलः ।**

अरिष्टोऽपि यैर्द्रव्यैः सिद्धः स तद्गुणाननुगच्छति । सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिकः । तंत्रांतरे चोक्तम् । मद्याकराधिकद्रव्यं मदिराद्यात्मकं ततः । यथा द्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिक इति । ग्रहण्यादिकांश्च रोगान् हंति । तथा कषायः कटुश्चासौ वातलश्च स एवम् । लक्षणं चास्य प्रागुक्तम् ।

**मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥ ७१ ॥**
**अल्पपित्तानिलं पांडुमेहार्शःकृमिनाशनम् ।**

मार्द्वीकं द्राक्षारसोद्भवं लेखनत्वादियुक्तम् । तथाऽल्पौ पित्तानिलौ यस्य तदेवम् । अन्यमद्यापेक्षयाऽल्पतरौ करोतीत्यर्थः । तथा पांड्वादिनाशनम् । विलिखत्यतितैक्ष्ण्याद्यद्धातूंस्तल्लेखनं मतम् ।

**अस्मादल्पांतरगुणं खार्जूरं वातलं गुरु ॥ ७२ ॥**

खार्जूरं मद्यमस्मान्मार्द्वीकादल्पांतरगुणम् । अल्पांतराः किंचिद्विशेषा गुणा यस्य तदेवम् । तथा वातलं गुरु च । द्राक्षा-

मद्यं चान्यत्रोक्तम् । यथा । शुष्कद्राक्षांबुसंभूतो विशदो रोचनो हिमः । द्राक्षासवो मधुसमो बृंहणो भृशदीपन इति ।

**शार्करः सुरभिः स्वादुहृद्यो नातिमदो लघुः ।**

शार्करः शर्करासंबंधी मद्यविशेषः सुरभिः सुगंधिर्भवति । तथा स्वादुश्च हृद्यश्च स्वादुहृद्यः । तथा नातिमदो लघुश्च भवति ।

**सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ ७३ ॥**

गुडसंबंधी गौडः सृष्टमूत्रत्वादिभिर्गुणैर्युक्तः । तथा तर्पणश्चासौ दीपनश्च तर्पणदीपनः ।

**वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ।**

सीधुः वातपित्तकरस्तथा स्नेहविकारान् तथा श्लेष्मविकारांश्च हंति । ब्रह्मभ्रूणवृत्रेष्वित्यत्र चतुर्विधस्य नियमस्य प्रायिकत्वात् क्विप् । सीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च ।

**मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥ ७४ ॥**

तत्र सीध्वोर्मध्ये पक्वरसो मेदःशोफोदरार्शांसि हंति । मेदःशोफोदरार्शोघ्न इत्यमनुष्यकर्तृके चेति टक् ।

**छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ।**

मध्वासवो माक्षिकेण संधीयते माधवाख्यो मद्यविशेषश्छेदी तीक्ष्णो मेहादिनाशनश्च । अष्टांगसंग्रहे तु सुरासवादयो गदिताः । तथा चापठत् । सुरासवस्तीव्रमदः स्वादुतीक्ष्णोऽनिलापहः । मैरेयो मधुरो वृष्यः सरः सतर्पणो गुरुः । तत्र मधुनैव सुरासंधानेन या क्रियते तां सुरासवमाहुः ।

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥ ७५ ॥**
**भृशोष्णतीक्ष्णरूक्षाम्लहृद्यं रुचिकरं सरम् ।**
**दीपनं शिशिरस्पर्शं पांडुदृक्कृमिनाशनम् ॥ ७६ ॥**

शुक्तं रक्तपित्तकफान् क्लेदयति । तथा वातानुलोमनं वातमनुलोमयति मार्गांतरेभ्यस्तमानीय स्वमार्गप्रतिपन्नं करोति तद्वातानुलोमनम् । अतिशयेनोष्णतीक्ष्णरूक्षाम्लं तथा हृद्यं तथाऽतिशयेन रुचिकरं तथा दीपनं तथा शिशिरः स्पर्शो यस्य तदेवं तथा पांड्वादिघ्नम् ।

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ।**

गुडादिभवं शुक्तं यथोत्तरं लघु । यद्यदुत्तरं तत्तल्लघु । गुडकृताच्छुक्तादिक्षुशुक्तं लघु । इक्षुशुक्तान्मद्यशुक्तं लघु । मद्यशुक्तान्मार्द्वीकं शुक्तं लघु भवति ।

**कंदमूलफलाद्यं च तद्वद्विद्यात्तदाऽऽसुतम् ॥ ७७ ॥**

कंदादि तदाऽऽसुतं गुडशुक्तादिसुतं तद्वद्विद्यात् । तच्छुक्तसमानगुणं जानीयात् । शुक्तेनात्युत्कृष्टशक्तिना परित्यज्य निजं स्वभावं वशीकृत्याऽऽत्मरूपतां नीयत इत्यर्थः । आद्यग्रहणात्कांडत्वक्पत्रादिपरिग्रहः । तेन कांडाद्यपि तथैव वेद्यम् ।

अम्लत्वारोचनादिगुणतुल्यत्वादन्यदपि शांडाक्यादिकमाह ।

**शांडाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ।**

मूलकसर्षपशाकानि क्वथितासुतानि कालजीरकराजिकासु भावितान्यम्लतीक्ष्णानि शांडाकीशब्देनोच्यंते । सा दक्षिणविषये प्रसिद्धा । सा चान्यच्चानुक्तमप्यासुतं कालेनाम्लमम्लीभूतं नतु स्वयमाम्ल्यमापाद्यम् । अनेनैव हेतुना सुतरां तत्संस्कारतामधिकरोतीति । तच्च रोचनं लघु भवति ।

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम् ॥**
**श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ।**
**शस्तमास्थापने हृद्यं लघु वातकफापहम् ॥ ७९ ॥**

धान्याम्लं कांजिकं भेदि तीक्ष्णं तथोष्णवीर्यं तथा पित्तकृत् स्वभावाच्च स्पर्शशीतलम् । व्यायामादिना श्रांतत्वं श्रमः । निर्व्यायामादेवोपश्रांतत्वं क्लमः । तौ हरति । तथा रुच्यं दीपनं च । बस्तिशूलं च जयति । तथा आस्थापने निरूहे शस्तम् । तथा लघु वातकफापहं च । हंतेरन्येष्वपि दृश्यत इति डः । धान्याम्लं तंडुलकंडनादिकृतं सौवीरकतुषोदकैर्वितुषैः सतुषैश्च यवैः क्रमात्कृतं तद्वद्विद्यात् ।

मद्यवत्तीक्ष्णोष्णादियुक्तत्वाद्गोमूत्रादिगुणानप्याह ।

**मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ ८० ॥**
**कृमिशोफोदरानाहशूलपांडुकफानिलान् ।**
**गुल्माऽरुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ ८१ ॥**

मूत्रं गोऽजादिभवं पित्तलादिगुणयुक्तं तथा लवणोऽनुरसः स्वल्पो यस्य तदेवम् । तथा कृम्यादीन् जयेत् । लघु च । गोमूत्रस्य च पूर्वमुपन्यासात्प्राधान्यं ज्ञेयम् । संग्रहे तु विशेषांतरमप्युक्तम् । श्वासकासहरं छागं पूरणात्कर्णशूलजित् । दद्यात्क्षये किलासे च गजवाजिसमुद्भवम् । हंत्युन्मादमपस्मारकृमीन्मेहं तु रासभम् । कषायतिक्तमेतेषां हिध्मश्वासहरं शकृत् । पित्तं तिक्तं कृमिहरं रोचना कफवातजित् । तिक्तं पामाहरं मूत्रं मानुषं तु विषापहमिति ।

**तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ।**
**इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ ८२ ॥**

इत्यनंतरोक्तेन प्रकारेण तोयादीनां वर्गैः क्रमानतिक्रमेण द्रवाणामेकदेशो यथास्थूलमयमुदाहृत उक्तः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां पंचमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अन्नविधौ प्रकृतेऽल्पवक्तव्यत्वात्पूर्वं द्रवद्रव्यमभिधायान्नं वक्ति ।

**अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ।**

अन्नस्य स्वरूपं स्वभावो रसवीर्यविपाकप्रभावगुणकर्मादि तस्य विज्ञानमवगमस्तस्मै हितोऽध्यायोऽन्नस्वरूपविज्ञानीयस्तं व्याख्यास्यामः । शेषं पूर्ववद्व्याख्येयम् । द्रव्यशब्दश्चाप्रयुक्तोऽप्यर्थस्य गमक इत्यन्नद्रव्यस्वरूपविज्ञानीय इति द्रष्टव्यम् । तथाहि पूर्वस्मिन्न-

ध्याये मंदमतिप्रबोधनाय प्रयुक्तो द्रष्टव्यः। आचार्या हि वैचित्र्येण ग्रंथरचनां विदधति। तत्र प्राक् स्वरूपशब्दो न निर्दिष्ट इह च द्रव्यशब्दः। अथ चोभयमप्रयुक्तमपि गम्यते मध्यलोपाख्यया च। अद्यते यत्तदन्नं धान्यमांसादि। धान्यं च द्विधा शूकशिंबी-भेदेन। तत्र प्राधान्याच्छूकधान्यस्य पूर्वमुपन्यासः। प्राधान्यं चास्य भूयस्त्वोपयोगित्वात्। शिंबीधान्यस्य तु तद्व्यंजनत्वेन स्वल्पोपयोगित्वात्प्रायेणापथ्यत्वाच्चाऽप्राधान्यम्।

**रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः।**
**सारामुखो दीर्घशूको रोध्रशूकः सुगंधकः॥ १॥**
**पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः।**
**स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः॥२॥**
**कषायानुरसाः पथ्या लघवो मूत्रला हिमाः।**
**शूकजेषु**

तत्र रक्तशालिमहाशाली सुप्रथितावेव। कलमो मगधादिषु प्रसिद्धः। स एव महातंडुल इति काश्मीरेषु। तूर्णकश्च तत्रैव आजव इति प्रसिद्धः। शकुनाहृतो यो मगधेषु बुद्धोत्पादकाल उत्तरकुरुभ्यो हंसैरानीतो मृगारिमात्रा विशाखाख्यया वापितो विस्तरं गतः। अत एव शकुनाहृत इत्यन्वर्थोऽस्य संज्ञा। सारामुखः कृष्णशूकः। शुक्लाकारो दीर्घशूकः। रोध्रशूको रोध्रपुष्पाकारशूकः। सुगंधको गंधशालिसंज्ञया जालंधरमगधादिषु ख्यातो देवशालिरित्यपरनामा। एवं पतंगादयो नानादेशेषु कर्षकादिभ्योऽवधार्याः। शूके जाताः शूकजास्तेषु मध्ये रक्ताद्यास्तपनीयांता अन्ये च ये शालयः शुभा रक्तादिसदृशास्ते सर्वे स्वादुपाकरसत्वादियुक्ताः। बद्धं ग्रंथितमल्पं च वर्चः पुरीषं कुर्वतीति बद्धाल्पवर्चसस्त एवम्। कारणेन कार्योपचारादुक्ताः। कषायोऽनुरसो येषां त एवम्। पथ्याः स्वभावेनैव हिताः। तथा लघवो मूत्रकारिणः शीतवीर्याश्च।

**वरस्तत्र रक्तस्तृष्णात्रिदोषहा॥ ३॥**

तत्र तेषु महाशालिकलमादिषु मध्ये रक्तो रक्तशालिसंज्ञो वरस्तृष्णादींश्च दोषान्निहंति। अस्य च प्रागुपादानेनैव वरत्वे लब्धे वरग्रहणं युक्त्याऽग्र्यादिसंग्रहार्थम्। तथा च। वर्षासु दिव्यनादेये परं तोये वरावरे इति। तथा गव्ये क्षीरघृते श्रेष्ठे। तथा। शर्करेक्षुविकाराणां फाणितं च वरावरे। वरोऽत्र मुद्गोऽल्पचलः। माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु चेत्यादीनि वाक्यानि प्रदेशांतरेष्वयमवोचदाचार्यः।

**महांस्तस्यानु कलमस्तं चाप्यनु**

तस्मादनु रक्तशालेः पश्चान्महाशालिर्वरः। तं च महांतमनु कलमः। महत्संज्ञात्कलमः किंचिदून इत्यर्थः।

**ततः परे।**

ततोऽनंतरं परेऽन्ये शालयो वरा ज्ञेयाः।

**यवका हायनाः पांसुवाप्यनैषधकादयः॥ ४॥**
**स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः**
**सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निंदिताः॥ ५॥**

यवकादयः शालिविशेषाः स्वादवः। तथोष्णादिगुणयुक्ताः। तथा सृष्टे मूत्रपुरीषे यैस्ते सृष्टमूत्रपुरीषाः। पूर्वं पूर्वं च निंदिताः। तेन यवकाः सर्वेभ्योऽपि गर्हिताः। तदन्वन्ये किंचित्किंचित्क्रमेण गर्हिता इति विज्ञेयम्। नैषधकादय इत्यत्राऽऽदिशब्देन च यवकपत्रिकादयः शालिविशेषा गृह्यंते।

**स्निग्धो ग्राही गुरुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः।**
**षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः॥ ६॥**

व्रीहिषु मध्ये षष्टिकः श्रेष्ठो रक्तशालिरिव शालिषु। तथा स्निग्धादिगुणयुक्तः स्थिरो हिम इति। शरीरस्थैर्यं करोति। ज्वरश्रमग्लानिहरोऽत एव रसायनप्रयोगे ज्वरादौ च तत्रतत्र क्षामवपुषामुपदिष्टः। यवस्तु स्थैर्यकरोऽपि नाम्नातो गुरुवातलत्वादिति। षष्टिकश्च द्विविधो गौरः कृष्णगौरश्च। अत्राऽसितगौरतो गौरः षष्टिकः श्रेष्ठः।

**ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः।**
**कुक्कुटांडकपालाख्यपारावतकशूकराः॥ ७॥**
**वरकोद्दालकोज्वालचीनशारददुर्दराः।**
**गंधनाः कुरुविंदाश्च गुणैरल्पांतराः स्मृताः॥ ८॥**

ततः षष्टिकान्महाव्रीह्यादयः क्रमाद्गुणैरल्पांतरा गुणैर्हीनाः।

**स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः।**
**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः॥ ९॥**

एभ्यः षष्टिकादिभ्योऽन्योऽनुक्तो व्रीहिः स्वादुर्मधुररसोऽम्लविपाकः पित्तकरो गुरुर्बहुमूत्रपुरीषोष्मा च। पाटलः पाटलाकुसुमाकारः। त्रिदोषस्त्रिदोषकोपनः। त्रिदोषस्त्वेवेत्यत्रैवशब्दोऽतिशयख्यापनाय। अतिशयेन त्रिदोषल एवेत्यर्थः। अतित्रिदोषलत्वेनास्याऽभ्यवहारनिषेधं करोति। अत एव च रसादिमत्त्वं न व्यधादस्य शास्त्रकारः।

**कंगुकोद्रवनीवारश्यामाकादि हिमं लघु।**
**तृणधान्यं पवनकृल्लेखनं कफपित्तहृत्॥ १०॥**

कंग्वादि तृणधान्यं हिमं लघु च। तथा मारुतकृल्लेखनं च। लेखनं विकर्षणम्। विलिखत्यतितैक्ष्ण्याद्यत् धातूंस्तल्लेखनं मतमिति। तथा कफपित्तहृत्। कषायमधुरत्वं पित्तश्लेष्महृत्त्वेनैतेषामवगतं तद्वद्बद्धविण्मूत्रत्वं वातकृत्त्वात्। तथा चोक्तम्। ततश्चाऽनेकधा प्रायः पवनो यत्प्रकुप्यति। अन्नपानौषधं तस्य युंजीतातोऽनुलोमनमिति। संग्रहे तु स्पष्टं कृत्वैते गुणा एषामुक्ताः। यथा। कफपित्तहरा रूक्षाः कषाया मधुरा हिमाः। वातला बद्धविण्मूत्रा लघवो लेखनात्मका इति। श्यामाकादीत्यत्राऽऽदिशब्देन तोयश्यामाकशिंबिरप्रशांतिकामधूलिकागवेधुकांडलोहित्यानां ग्रहणम्।

**भग्नसंधानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ।**

तत्र तेषु तृणधान्येषु मध्ये प्रियंगुः कंगुर्भग्नस्यांगस्य संधानं करोति । तथा गुरुः । सुश्रुतेनोक्तम् । रक्ताः पीताश्च कृष्णाश्च श्वेताश्चैव प्रियंगवः । यथोत्तरप्रधानाः स्यू रूक्षाः कफहराः स्मृताः।

**कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ॥ ११ ॥**

कोरदूषः कोद्रवोऽत्यर्थं संग्राही तथा स्पर्शशीतो विषापहश्च ।

**रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ।**
**वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ॥ १२ ॥**
**पीनसश्वासकासोरुस्तंभकंठत्वगामयान् ।**

यवो रूक्षादिगुणैर्युक्तो विड्वातकरो वृष्यः स्थैर्यकृच्च । तथा मूत्रादीन् जयेत् ।

**न्यूनो यवादन्ययवः**

अन्ययवो नाम शूकधान्यविशेषो लोकप्रसिद्धः । स यवाश्न्यूनः स्वल्पगुणैर्युक्तः ।

**रूक्षोष्णो वंशजो यवः ॥ १३ ॥**

वंशोद्भवो वेणुयवो रूक्षोष्णो भवति ।

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।**
**संधानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ १४ ॥**

गोधूमो वृष्यादिगुणयुक्तः । जीवन ओजोऽभिवर्धनः । तथा वातपित्तहरः । संधानकारी ऊरुप्रभृतेर्भग्नस्य संधानं करोति । तथा स्थैर्यकृत्सरश्च । चरके त्वन्यथैव गुणयुक्त उक्तः । यथा । स्थैर्यकृत्सकषायश्च बल्यः श्लेष्मविकारहा । संधानकृद्वातहरो गोधूमः स्वादुशीतल इति ।

**पथ्या नंदीमुखी शीता कषायमधुरा लघुः ।**

[1]नंदीमुखी पथ्या शरीराय हिता कषायमधुरा लघुश्च । इति शूकधान्यवर्गः ।

अस्मादनंतरं शिंबीधान्यवर्गस्य संबंधप्रयोजनं प्रागुक्तमेव ।

**मुद्गाढकीमसूरादि शिंबीधान्यं विबंधकृत् ॥ १५ ॥**
**कषायं स्वादु संग्राहि कटुपाकं हिमं लघु ।**
**मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥ १६ ॥**

शिंब्याः कोश्या धान्यं मुद्गादिकं यत् शिंबीधान्यं तद्विबंधकृत् । केषां विबंधं करोति । सामर्थ्यात् स्रोतसां नतु पुरीषादीनाम् । तथा च संग्राहीत्यत्रैव पठति शास्त्रकृत् । संग्राहिलक्षणं च तंत्रांतरे । यथा । भेदि तत्पिंडितान् भावान् शकृदाद्यान्भिनत्ति यत् । विपरीतमतो ग्राहीति । तस्माद्विबंधं स्रोतसामेवेत्याह । तथा कषायं स्वादु कटुपाकं शीतवीर्यं लघु च । मसुरादीत्यत्राऽऽदिशब्देन मकुष्ठचणकादीनां ग्रहणम् । तथा मेदआदिषु हितं प्रकृतत्वादभ्यवहारे तथा लेपोपसेके चेति । चशब्दोऽत्र लुप्तनिर्दिष्टो बोध्यः । लेपः प्रदेहः । उपसेकः परिषेकः । कषायशीतरूक्षत्वेन कटुपाकित्वेन च वातकृत्त्वं शिंबीधान्यस्य शास्त्रकृतोक्तम् । अत एवेदमुपपन्नम् । मुद्गोऽल्पचल इति । यदि हि शिंबीधान्यस्य मारुतकृत्त्वं समेयात् तदेतद्वक्तुं युज्यते । तस्माद्वातकृत्त्वमस्यास्तीति स्थितम् । तस्मिंश्च सत्याध्मानकारित्वमप्युपपन्नमेव । अत एव संग्रहेऽस्याध्मानकारित्वमुक्तम् । मुद्गादीनां च विशेषास्तत्रैवोक्ताः । यथा । हरितास्तेष्वपि वरा मकुष्ठाः कृमिकारिणः । वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशमिति ।

**वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ।**
**राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ॥ १७ ॥**

अत्र एषु च शिंबीधान्येषु मध्ये मुद्ग उत्तमः । तथा अल्पं चलं पवनं करोतीत्यल्पचलः । तुर्व्यतिरेके । कलायः पुनरतिशयेन वातलो भवति । राजमाषो रूक्षो बहुशकृत्करोतीति बहुशकृत् । तथा गुरुस्तथाऽनिलकरः । ताच्छील्ये टः । अन्य शिंबीधान्याच्चातिवातलोऽयमिति वेद्यमनिलकरग्रहणात् । अन्यथा शिंबीधान्यसामान्यलक्षणेन वातमात्रकरणस्य लब्धत्वादनिलकरग्रहणं न कुर्यात् ।

**उष्णाः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् ।**
**कासार्शःकफवातांश्च घ्नंति पित्तास्रदाः परम् ॥ १८ ॥**

कुलत्था उष्णवीर्याः पाकेऽम्लाः । तथा शुक्रादीन् घ्नंति । अश्माऽश्मरी वक्ष्यमाणलक्षणा । तथा पित्तास्रदाः परमतिशयेन रक्तपित्तकराः । कषायस्वादुसंग्राहित्वं शिंबीधान्यसामान्यलक्षणेनैषां वेद्यम् । दृष्टिनाशनत्वं चोष्णवीर्यत्वेन रक्तपित्तकरत्वेन च । संग्रहे तु स्पष्टं कृत्वोक्तम् । कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः । पीनसश्वासकासार्शोहिक्काऽनाहकफानिलान् । घ्नंति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम् । ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिन इति ।

**निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ।**
**सरो विदाही दृक्शुक्रकफशोफविषापहः ॥ १९ ॥**

निष्पावो राजशिंबीसंज्ञो वातादिकरस्तथा गुरुः सरो विदाही च । तथा दृगादींश्च हंति । संग्रहोक्तं चाम्लपाकत्वं कषायमधुरत्वं चेह नोक्तम् । यतोऽम्लविपाकित्वं विदाहित्वादेवास्योक्तम् । कषायस्वादुत्वं च शिंबीधान्यसामान्यगुणकथनेनैव । कृष्णात्रेयस्त्वाह । निष्पावा मधुरा रूक्षाः सकषाया विदाहिनः । उदावर्ते प्रशस्यंते गुरवो वातपित्तला इति ।

**माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ २० ॥**

माषः स्निग्धो बलादिकरः । तथा सरो गुरुरुष्णश्च । तथा वातहा स्वादुश्च । तथा शुक्रस्य वृद्धिं शुक्रस्यैव विरेकं बहिःप्रेरणं करोति ।

**फलानि माषवद्विद्यात्काकांडोलात्मगुप्तयोः ।**

[1] दीर्घसूक्ष्मो गोधूमो नंदीमुखीति हेमाद्रिः ।

काकांडोला चात्मगुप्ता च तयोः फलानि माषवद्विद्यान्माषसमगुणानि विजानीयात्। काकांडोला कटभी। आत्मगुप्ता कपिकच्छुः।

**उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो गुरुः २१**
**अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत्।**

तिल उष्णवीर्यः। तथा त्वच्यः। तथा स्पर्शे शीतः। केश्यो बल्यो गुरुश्च। तथाऽल्पमूत्रोऽल्पमूत्रकरः। पाके कटुः। तथा मेधादीन् करोति। त्वच्यकेश्यबल्या हितार्थयत्प्रत्ययांताः। स्निग्धत्वमनिलघ्नत्वं कषायकटुतिक्तरसत्वं नानाजातित्वं चेहास्य ग्रंथकृता लाघवान्नोक्तम्। संग्रहे तूक्तमेव। यथा। स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः। त्वच्यः केश्यो गुरुर्वृष्यः स्पर्शशीतोऽनिलापहः। अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत्। कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुण इति। अन्ये त्वनया युक्त्या संग्रहोक्तमर्थं संगृह्णते। स्निग्धत्वं तावत्तिलस्य तैलेषु मुख्यस्य स्नेहस्य योनिभूतत्वात्सिद्धम्। कफपित्तकृदिति वचनाच्च सामर्थ्यलब्धं वातघ्नत्वम्। कषायस्वाद्विति शिंबीधान्यसामान्यगुणकथनेन कषायस्वादुत्वं लब्धमिति। एतदेवोररीकृत्य सद्योव्रणप्रतिषेधे वक्ष्यति। कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम्। स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजिदिति।

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः २२**
**दृक्शुक्रहृत्कटुः पाके**

उमाऽतसी स्निग्धा स्वाद्वादिगुणयुक्तोष्णवीर्या च। तथा दृष्टिं शुक्रं च हरति कटुपाका च।

**तद्वद्बीजं कुसुंभजम्।**

तयोमया तुल्यं वर्तते तद्वदुमासमानगुणं कुसुंभबीजमित्यर्थः।

**माषोऽत्र सर्वेऽष्ववरो यवकः शूकजेषु च॥ २३॥**

अत्र शिंबीधान्येषु माषोऽश्रेष्ठः। शूकजेषु शूकधान्येषु यवकोऽश्रेष्ठः।

**नवं धान्यमभिष्यंदि लघु संवत्सरोषितम्।**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम्॥२४॥**

नवं प्रत्यग्रं धान्यमभिष्यंद्याभिमुख्येन स्यंदयति। ताच्छील्ये णिनिः। मालिन्यात्स्रोतसां स्रुतिरूपश्लेष्माणं करोतीत्यर्थः। अर्थात्पुराणमनभिष्यंदि। संवत्सरोषितं वर्षातीतं लघु भवति। नवं चार्थाद्गुर्वित्यनुक्तमप्युक्तं भवति। तंत्रांतरेऽप्युक्तम्। वर्षातीतं सर्वमन्नं परित्यजति गौरवम्। नतु त्यजति तद्वीर्यं वीर्यं मुंचत्यतः क्रमादिति। शीघ्रेत्यादि। लघ्वित्यनुवर्तते। सूप्यं मुद्गादि यच्छीघ्रजन्म तल्लघु भवति। तथा विगततुषं युक्त्या भर्जितं भृशं लघु भवति। संग्रहे त्वेवमुक्तम्। नवं धान्यमभिष्यंदि सेव्यं केदारजं च यत्। लघु वर्षोषितं दग्धभूमिजं स्थलसंभवमिति। इति शिंबीधान्यवर्गः।

निर्दिष्टे शूकशिंबीधान्ये तयोश्च संस्कृतयोरुपयोग इति कृतान्नवर्गश्चारभ्यते।

**मंडपेयाविलेपीनामोदनस्य च लाघवम्।**
**यथापूर्वं शिवस्तत्र मंडो वातानुलोमनः॥ २५॥**
**तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत्।**
**स्रोतोमार्दवकृत्स्वेदी संधुक्षयति चानलम्॥ २६॥**

मंडादीनां यथापूर्वं लाघवम्। तेनौदनमपेक्ष्य लघ्वी विलेपी ततोऽपि पेया पेयातो मंडो लघुतर इत्यर्थोऽवतिष्ठते। मंडपेयाविलेप्योदनानां यथापूर्वं लाघवमित्येवंवक्तव्ये यदत्रौदनस्य पृथक्पाठः स इदं ज्ञापयति। मंडादयो लाजोपादाना वेद्या न तु तंडुलोपादानाः। तथा च मुनिः। शृतः पिप्पलिशुंठीभ्यां युक्तो लाजांबुदाडिमैः। मंडः संदीपयत्यग्निं वातं चाप्यनुलोमयेदिति। तदुक्तम्। द्रव्यस्यार्धपलं दत्वा तोयस्य प्रस्थमावपेत्। अर्धशेषं गृहीत्वा तत्कर्षौ द्वौ दाडिमस्य च। युक्तं सैंधवविश्वाह्वधान्यकैः शाणमात्रकैः। द्विकर्षमात्रैर्लाजैश्च भूयः संक्वथितं च तत्। पिप्पलीजीरकाभ्यां च शाणेनावचूर्णितम्। पेयास्वेष विधिः कल्प्यो दाडिमादिकृतास्वपीति। तथा। सिक्थैर्विरहितो मंडः पेया सिक्थसमन्विता। घनसिक्था विलेपी स्याद्यवागूर्विरलद्रवेति। अन्ये तु मंडलक्षणं पेयालक्षणं चान्यथैवेच्छंति। तथा तल्लक्षणम्। लाजांबुसैंधवकणाधान्यनागरदाडिमैः। युक्तो विमृदितः पूतो मंडः संस्कृत उच्यते। निर्द्रव्या प्राकृता पेया तक्रदाडिमतंडुलैरिति। सामान्यपेयायाश्च तक्रदाडिमलाजादिसाधिताया गुणनिर्देशोऽयं न तु विशिष्टाया ज्वरचिकित्सादिविहिताया इति द्रष्टव्यम्। विशेषग्रहणात्कर्मांतरनिर्देशाच्च। तत्र तेषु मंडादिषु मध्ये मंडः शिवः। तथा वातानुलोमनः तथा तृषं ग्लानिदोषशेषं हंतीति तृड्ग्लानिदोषशेषघ्नः। अमनुष्यकर्तृके चेत्यत्र ठक्। विहितवमनस्य विहितविरेचनस्य वा किंचिच्छेषो यो दोषस्तस्य दोषशेषतावचनज्ञापकात् कृतवमनविरेचनस्य दोषशेषकरणं तेन च वमनकर्मणि विरेचनकर्मणि वा कर्तव्येऽतियोगभयात्तद्दोषशेषः कार्य इत्ययमर्थो युक्त्या प्रतिपादितः। तथा मंडः पाचनो धातुसाम्यकरश्च। तथा स्रोतसां मार्दवं करोति। तथा स्वेदयतीति स्वेदी। वह्निं च दीपयति।

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा।**
**मलानुलोमनी पथ्या पेया दीपनपाचनी॥ २७॥**

क्षुच्च तृष्णा च ताभ्यां ग्लानिः सा च दौर्बल्यं च कुक्षिरोगश्च ज्वरश्च तानपहंति या सैवंभूता पेया दौर्बल्यं कार्श्यं तथा मलान्वातादीननुलोमयति स्वमार्गस्थान् करोति। पथ्या शरीरस्य हिता। तथा दीपनी पाचनी चेति। पुंवत्कर्मधारयेति पुंवद्भावः।

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता।**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम्॥ २८॥**

विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता च। व्रणश्चा-

क्षिरोगश्च संशुद्धश्च दुर्बलश्च स्नेहपायी च तेषां हिता । व्रणाक्षिरोगशब्दौ मत्वर्थीयाकारांतौ ।

**सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ।**
**यश्चाग्नेयौषधक्वाथसाधितो भृष्टतंडुलः ॥ २९ ॥**
**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।**

ओदनः सुष्ठु धौतस्तथा प्रस्रुतो निश्चोतितः स्विन्नोऽत्यक्तबाष्पश्च लघुर्भवति । यश्चौदन आग्नेयौषधानां चित्रकादीनां क्काथेन साधितः सोऽतिलघुः । तथा भृष्टास्तंडुला यस्मिन्नोदने सोऽतिलघुतमः । यथोक्तलक्षणादोदनाद्विपरीतो योऽसुधौतादिः स गुरुः । क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽतिगुरुः ।

**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ३० ॥**

इत्यनया दिशा सर्वं पेयादिकं पूर्वोक्तं वक्ष्यमाणं च भक्ष्यादिकं द्रव्येण क्रियया संयोगेन मानेन चादिशेत् । तत्र द्रव्यतो यथा । ओदनस्य रक्तशाल्यादिजस्य लाघवम् । यावकादिजस्य तु गौरवम् । क्रियातो यथा । पाकादिसंस्काराच्छूल्यमांसस्य लघ्वादिगुणयोगः । अपरस्य त्वन्यथात्वं दृश्यते । तथा चोक्तं तंत्रांतरे । वृष्यं वातहरं बल्यं पथ्यं शूल्यामिषं लघु । अपथ्यं गुरु विष्टंभि मांसं यच्च रसोद्धृतमिति । तंत्रांतरे चोक्तम् । स्विन्नं मांसं गुरु स्तंभि शूलपक्वं त्रिदोषजिदिति । क्रिया संस्कार इत्यर्थः। योगः संयोगस्तेन यथा । आग्नेयचित्रकाद्यौषधक्काथैः साधितस्य लाघवम् । मानतो यथा । बहुभिर्लघुभिरत्यल्पैश्च गुरुभिर्युक्तैर्लघुरेव । विपरीतैस्तु विपरीत एव । आदिग्रहणेन देशादिपरिग्रहः । जांगलदेशप्रभवतंडुलकृतो लघुः । आनूपदेशतंडुलकृतो गुरुरित्यादि बोध्यम् ।

**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।**

रस इति मांसरसः । आदिशब्दलोपात् । स बृंहणादिगुणयुक्तः । कृताकृतस्य च रसस्यायं गुणनिर्देशो बोध्यः । रसो हि स्नेहशुंठ्यादियुतः कृत इत्युच्यते विपरीतस्त्वकृतः । तेन कृतस्य तंत्रांतरे विधानमप्युक्तम् । गुणाश्च यथा । छागलं सक्थिजं मांसं निरस्थि तैत्तिरं तथा । चतुष्पलान्वितं सूक्ष्मं कल्पितं क्षालितं जले । पिप्पलीपिप्पलीमूलशुंठीचित्रकधान्यकैः । द्विशाणैः संयुते तोये क्काथं सार्धाढकोन्मिते । मांसेऽस्मिन् द्विपलं तत्र दाडिमान्कुट्टितान्क्षिपेत् । तं रसं मर्दितं पूतं हिंगुसैंधवजीरकैः । युक्तं प्रधूपितं पथ्यं शुद्धानां शुद्धिकांक्षिणाम् । शुष्यतां व्याधियुक्तानां व्रणिनां वातरोगिणाम् । भग्नविश्लिष्टसंधीनां क्षीणधात्विंद्रियौजसामिति । तंत्रांतरे चोक्तम् । रसस्तत्र वरोऽनम्लः शाकुनो बृंहणः सरः । तक्रसिद्धस्तु विष्टंभी लघुर्वातकफापहः । फलाम्लगोरसोदारं सविश्वाजाजिधान्यकम् । स्निग्धं मांसं हितं बल्यं बृंहणं रोचनं गुरु । कासमर्दकधान्याम्लदाडिमादिरजःकृताः । लेहास्तक्रादिजाश्चान्ये योनिवद्गुरुरोचनाः । मालुधानीयवासादिपुष्पैर्योऽतिगुणः खलः । फलमूलैर्घनादानं व्यंजनं पाकतो घनम् । लेहवत्खल इत्यन्ये दोषलाः स्वस्वयोनिवत् । तद्वच्च तिलकल्काम्लप्रायः कांबलिको मतः । कट्वरः कफजिद्ग्राही पित्तलो रोचको लघुः । मांसादजातिशुंठ्यादिगलितः सोदको लघुः ।

**मौद्गस्तु पथ्यः संशुद्धव्रणकंठाक्षिरोगिणाम् ॥ ३१ ॥**

मौद्गो रसो यूषो व्रणिनां कंठरोगिणां च पथ्यः । अस्य च संस्कृतस्य विधानमुक्तम् । मुद्गानां द्विपलं तोये शृतमर्धाढकोन्मिते । पादस्थं मर्दितं पूतं दाडिमस्य पलेन तु । युक्तं सैंधवविश्वाह्वधान्यकैः पादकार्षिकैः । कणाजीरकयोश्चूर्णाच्छाणैकेनावचूर्णितम् । संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः । तथा । पटोलपत्राच्छाणार्धं मुद्गानां द्विपलं जले । द्रव्ये द्वात्रिंशद्गुणिते अतश्च दाडिमात्पलम् । कर्षमामलकानां च क्षिप्त्वा पुनरधिश्रयेत् । पूतं तत्सैंधवाद्यैश्च युक्तमाज्येन योजितम् । पटोलफलकाख्योऽयं यूषः पित्तोत्थरोगजित् । निंबपत्रैर्निंबयूषमेवमेव प्रकल्पयेत् । मूलकाच्छुंठिका स्विन्ना घृतभृष्टा सधान्यका । हिंगुजीरकसंयुक्ता ततो मथितदाडिमे । ससैंधवे विनिक्षिप्य पुनरमावधिश्रयेत् । तावद्यावन्मृदूभूतं ततश्चूषणसंयुतम् । सुधूपितं हिंगुघृतैश्चातुर्जातावचूर्णितम् । शुंठीरसं दीपनीयं वातश्लेष्मामयापहम् । अकृताकृतयूषाच्च रसाच्च जलसाधितात् । स्नेहाम्लपटुयुक्ताच्च पूर्वः पूर्वो लघुर्मतः । विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् । गौरवं तनुसांद्राम्लस्वादुष्वेषु पृथक्तया । तथोक्तम् । खलकाम्बलिकौ हृद्यौ साधितौ स्वौषधानुगौ । पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः । ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः । अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः । स्वल्पेन मांसेन शुंठ्यादिभिः स्वल्पैः स्वच्छा ये क्रियंते ते दकलावणिका बोध्याः । एवं यूषे यत्र धान्यमल्पं खलादौ वा मूलादीन्यल्पानि तस्याऽपि दकलावणिकत्वं बोध्यम् । तंत्रांतरे चोक्तम् । अथ गोरसधान्याम्लफलाम्लैरम्लितं च यत् । यथोत्तरं लघु हितं संस्कृतासंस्कृतं तथा । प्रभूतास्तमलो यूषः सूपाल्लघुतरः स्मृतः । सूपस्तु रसयूषाभ्यां स्थैर्याद्गुरुतरो मतः । तं सरोगो न चाश्नीयान्न चाल्पाशी कथंचनेति ।

**वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ।**

कौलत्थो यूषो वातमनुलोमयति गुल्मादींश्च जयति । तूनिप्रतूनी रोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ ।

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥ ३२ ॥**
**शांडाकीवटकं दग्घ्नं दोषलं ग्लपनं गुरु ।**

तिलस्य विकृतिः पिण्याकस्य च । तथा शुष्कशाकादि दृष्टिघ्नं त्रिदोषकरं ग्लानिकरं गुरु च । अंकुरितं सस्यं विरूढकम् । शांडाक्यपि तंत्रादिकाः शांडाकीवटकम् ।

**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ३३ ॥**

रसाला करमथितेन मरीचशर्करादियुक्तेन दध्ना कृता उल्लेखिकासंज्ञा बृंहणी देहस्य बृहत्त्वकरी वृष्यादिगुणयुक्ता च।

**श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु।**
**विष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत्॥ ३४॥**

पानकं श्रमादिहरं प्रीणनादिगुणयुक्तम्। प्रीणनं मनःप्रीतिकरं यथा द्रव्यगुणं च। स्वादुना गुणेन च युक्तम्। पर्पटादीनां लाघवादिह गुणा नोक्ताः। यथा। पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः। हृद्या वृष्या रुचिकरा गुरवो रागखांडवाः। प्रीणना भ्रमतृट्छर्दिमदमूर्छाश्रमच्छिदः।

**लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः।**
**कासपित्तोपशमना दीपना लघवो हिमाः॥ ३५॥**

लाजास्तृडादींश्छिंदंति। कासपित्ते चोपशमयति। तथा दीपना लघवः शीतवीर्याश्च।

**पृथुका गुरवो बल्याः कफविष्टंभकारिणः।**

हरितधान्यानि निस्तुषभृष्टमुशलहतानि। पृथुकाश्चिपिटसंज्ञा गुरुत्वादियुक्ताः।

**धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः॥ ३६॥**

धाना भृष्टयवादिर्विष्टंभिनी रूक्षादिगुणयुक्ता च।

**सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान्।**
**घ्नंति संतर्पणाः पानात्सद्य एव बलप्रदाः॥ ३७॥**
**नोदकांतरिता न द्विर्न निशायां न केवलान्।**
**न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून्॥३८**

सक्तवो लघवः क्षुधादींश्च घ्नंति। तथोदकमिश्रिताः संतर्पणाः सद्य एव बलं कुर्वंति। तांश्च जलेनांतरितान्व्यवहितान्नाश्नीयात्। अन्यभोजनेषु ह्यंतरा पानं विहितं न तथा सक्तुषु कार्यमिति बोधयति। तथा न द्विर्द्वौ वारौ नाद्यात्। न निशायां रात्र्याम्। न केवलानुदकादिरहितान्। न भुक्त्वाऽन्यद्भोजनादि। न द्विजैश्छित्त्वा दंतैः करस्थं पिंडं छित्त्वेत्यर्थः। बहूंश्च सक्तून्नाद्यात्। तंत्रांतरे चोक्तं रूक्षवातलत्वं सक्तूनामिह नोक्तम्। लघुत्वादिनैवावगतत्वात्। ननु रूक्षवातलं चेदभ्युपगम्यते सक्तूनां ततः संतर्पणा इत्यनुपपन्नम्। सद्य एव बलप्रदा इत्येतदप्ययुक्तम्। युक्त्या ह्याहारः परिणमति। स धातुपुष्ट्यै नान्यथा। अत्राचक्ष्महे। प्रभावादुभयमप्येतदुक्तम्। सक्तूनां ह्ययमचिंत्यः प्रत्यक्षवेद्यः प्रभावो यत्पीताः संतः संतर्पयंति। सद्य एव च बलं प्रयच्छंति। वाजीकरणं ह्यपरिणतमेव स्वकार्यं जनयति। तथा च मद्यं परिणतमेव मदं जनयति। तस्मात्संतर्पणत्वं बलप्रदत्वं चैषामुपपन्नमेव। तंत्रांतरे चोक्तम्। तुल्याज्यः सक्तुप्राशस्तु वृष्यो भेदी रसायनम्। तृट्छर्दिश्रमतुन्मद्यपीतस्तृष्णानिवर्तकः। प्रमेहक्षयकुष्ठानि न च स्युर्मंथपायिनाम्। निचयात्कठिना गुर्वी पिंडी प्रोक्ता मृदुर्लघुः। सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका। लाजसक्तुकृताऽपि स्याद्विलेपी तु गरीयसी।

**पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः।**

पिण्याकाख्यो यस्तिलादीनां निष्पीडितः कल्को ग्लपनो ग्लानिकरः। ग्लपन इति ग्लायतेर्णिजंताद्ग्लास्नावनुवमां चेति मित्वाद्ध्रस्वः। बाहुलकात्कर्तरि ल्युट्। तथा विष्टंभी दृष्टिविकारकृच्च।

**वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः॥ ३९॥**

वेसवारो नागरधान्यकाजाजिहिंगुघृतादिसंस्कृतं कुट्टितं मांसम्। गुरुः स्निग्धो बलवर्धनः शरीरोपचयवर्धनश्च।

**मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः।**

मुद्गादिजास्तु वेसवारा ये इंडरिकादिभिर्द्रव्यैः सूक्ष्मच्छिन्नैः क्रियंते लोके पूरणशब्देन प्रसिद्धास्ते गुरवः प्रकृतिद्रव्यगुणाश्च। आदिशब्देन माषादयो गृह्यंते। तंत्रांतरे चोक्तम्। सर्पिस्तैलगुडक्षीरैर्यवगोधूमपैष्टिकाः। पूपा विष्टंभिनः शीताः पैष्टिका वातलाः खराः। वृष्या बल्याः सरा माषैर्वातघ्ना मृदुपिच्छिलाः। यथाऽन्नं गुरवो बल्याः स्थूलाश्च कठिनाश्च ये। तैलपक्कास्तु दृष्टिघ्ना गरीयांसो विदाहिनः। कासारसारलघवो लाजैर्लघुतराः स्मृताः। वातपित्तहरो वृष्यो घृतपूरः कफप्रदः। सद्यःप्राणकरो रुच्यो मांसलो रक्तलो गुरुः। लघीयान्मंडककृतो गरीयान्फलपूरितः। मधुरोत्कारिका वृष्या कासारः पिच्छिलो गुरुः। गुडमत्स्यंडिकाखंडक्षीरेक्षुरससमाक्षिकैः। पूपाः शुक्रबलश्लेष्मरुचिदास्तर्पणाः क्षणात्। नानाद्रव्यैः समायुक्ताः पक्कामक्लिन्नभर्जिताः। निमर्दको गुरुः स्निग्धो वृष्यो बलवतां हितः। खारिकेंदुरिकापूरवटिकावटकादयः। विशदा रोचना बल्या गुरवः स्युः स्वयोनिवत्। यावकः पिच्छिलः स्निग्धः प्लीहोदावर्तहा गुरुः। भृष्टस्विन्नतया वाट्यो लघुः सेव्योऽतिकासिनाम्। ज्वरोदावर्तमेहानां पथ्यो वातानुलोमनः। ओलकं हरितावस्थं शिंबिजत्वात्खरं गुरु। मंदजर्यो यवादित्वादभ्योषो बृंहणः सरः। सिद्धसारे चोक्तम्। अत्युष्णा मंडकाः पथ्याः शीतला गुरवो मता इति।

**कुकूलकर्परभ्राष्ट्रकंद्वंगारविपाचितान्॥ ४०॥**
**एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरम्।**

अपूपान् कुकूलादिसिद्धानेकयोनीनेककारणान्यथोत्तरं लघून्विद्यात्। तेन कुकूलपक्कात् सजातीयादपूपात्कर्परपक्को लघुः। कर्परपक्काच्च भ्राष्ट्रपक्कः। भ्राष्ट्रपक्कात्कंदुपक्कः। कंदुपक्काच्चांगारपक्कः। कुकूलं गोअरं गोशकृदादिचूर्णसंतापः। कर्परो ज्वालातप्तं कपालम्। भ्राष्ट्रककंदू प्रसिद्धावेव। अंगारा बृहंतः काष्ठसंभूता इति। इति कृतान्नवर्गः।

कृतान्नवर्गादनंतरं मांसशाकवर्गयोस्तद्व्यंजनभूतयोर्निर्देशः। तत्राऽपि प्राधान्यान्मांसवर्गस्य पूर्वं निर्देशः। प्राधान्यं चाऽस्य भ-

---

१ इंडरीशब्दो मदनपालनिघंटे आहारवर्गे पठितः। यथा। इंडरी शुक्रला रूक्षा विष्टंभी कफवातकृदिति।

त्तेन सह प्रचुरोपयोगेऽप्यदोषात्। शाकस्य तु बहूपयोगे दोषं वक्ष्यति। शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेदित्यनेन।

**हरिणैणकुरंगर्क्षगोकर्णमृगमातृकाः॥ ४१॥**
**शशशंबरचारुष्कशरभाद्या मृगाः स्मृताः।**

हरिणादयो दश मृगाः स्मृताः। आदिशब्देन कालपुच्छकपृषतादयः संग्रहोक्ता गृह्यंते। कालपुच्छकचारुष्कवरपोतशशोरणाः। श्वदंष्ट्रामहारभकोहकारकशंबराः। करालकृतमालौ च पृषतश्च मृगाः स्मृता इति।

**लाववर्तीकवार्तीररक्तवर्त्मककुकुभाः॥ ४२॥**
**कपिंजलोपचक्राख्यचकोरकुरुवाहवः।**
**वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी॥४३॥**
**ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः।**
**तथा शारपदेंद्राभवारटाश्चेति विष्किराः॥ ४४॥**

तत्र लावादयो वारटांता एकविंशतिविकीर्य भक्षणाद्विष्किराः। रक्ते वर्त्मनी यस्य स रक्तवर्त्मकः। वर्तको वर्तिकेति जात्यंतरं नतु वर्तिकस्य स्त्री वर्तिका। यथा च बलाका सारिकेति। पुंस्यपि स्त्रीलिंगत्वावेशात्। शिखी मयूरः। त्रीह्यादिः।

**जीवंजीवकदात्यूहभृंगाह्वशुकसारिकाः।**
**लट्वाकोकिलहारीतकपोतचटकादयः॥ ४५॥**
**प्रतुदाः**

जीवंजीवकादयः प्रतुदा दश स्मृताः। प्रतुद्य तुंडेनाऽहत्य शाल्यादेर्भक्षणात्प्रतुदाः। आदिशब्देन संग्रहोक्ताः खंजरीटकपारावता गृह्यंते।

**भेकगोधाहिश्वाविदाद्या बिलेशयाः।**

भेकादयश्चत्वारो बिलेशयाः। बिले बाहुल्येन शयनाद्बिलेशयाः। आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यंते।

**गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः॥ ४६॥**
**मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः।**
**लोपाकजंबुकश्येनचाषवांतादवायसाः॥ ४७॥**
**शशघ्नीभासकुररगृध्रोलूककुलिंगकाः।**
**धूमिका मधुहा चेति प्रसहा मृगपक्षिणः॥ ४८॥**

गवादयः प्रसह्याहृत्य भक्षणात्प्रसहाः। मृगाश्च पक्षिणश्च मृगपक्षिणः। केचिन्मृगाः केचित्पक्षिण इत्यर्थः। अश्वतरो वेगसरः। अश्वस्तुरगः। बभ्रुर्जाहको नकुल इत्यन्ये। लोपाको लोमशः। जंबुकः शृगालः। श्येनो गरुडाकृतिः। चाषः किकीदिविः। वांतादः श्वा। वायसः काकः। उलूकः काकारिः। कुलिंगकः कृष्णचटकः।

**वराहमहिषन्यंकुरुरुरोहितवारणाः।**
**सृमरश्चमरः खड्गो गवयश्च महामृगाः॥ ४९॥**

वराहादयो दश महामृगसंज्ञाः। वारणो हस्ती।

**हंससारसकादंबबककारंडवप्लवाः।**
**बलाकोत्क्रोशचक्राह्वमद्गुक्रौंचादयोऽप्चराः॥ ५०॥**

हंसादयः क्रौंचांता अप्सु चरणादप्चरसंज्ञाः। आदिशब्देन रक्तशीर्षकादयो गृह्यंते।

**मत्स्या रोहितपाठीनकूर्मकुंभीरकर्कटाः।**
**शुक्तिशंखोद्रशंबूकशफरीवर्मिचंद्रिकाः॥ ५१॥**
**चुलूकीनक्रमकरशिशुमारतिमिंगिलाः।**
**राजीचिलिचिमाद्याश्च**

रोहितकादय एकोनविंशतिर्जलोद्भवा मत्स्यसंज्ञाः। चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थः।

**मांसमित्याहुरष्टधा॥ ५२॥**

इत्यष्टभिः प्रकारैः शास्त्रकारा मांसमाहुः।

**योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते।**

योनिषु पूर्वोक्तास्वष्टासु मध्ये व्यामिश्रगोचरत्वाद्व्यामिश्रविषयत्वादजावी व्यामिश्रेऽजावी छागोरभ्रे तेऽनिश्चिते। ते हि जांगलेऽपि देशे वर्तेते अनूपेऽपि। अजावी इति स्त्रीलिंगनिर्देशोऽत्र विवक्षित एव। केचित्त्वनिश्चिताविति निजगदुः। तत्र तित्तिरिरपि धन्वानूपचारी प्रथितः। तत्कथमसौ हि जांगलः कीर्तितः। ब्रूमः। तत्स्वभावित्वात्। यद्यप्युभयचरोऽयं तथाऽपि जांगलस्वभावत्वाज्जांगलोऽयं भक्षणे। अत्र विष्किरत्वं तित्तिरे निश्चितं निमित्तमस्ति। तस्मादयं जांगल एव युक्तः। हरिणादीनां च किरातकैवर्तादिभ्यो नानादेशप्रसिद्धाः संज्ञा वेद्याः।

**आद्यांत्या जांगलानूपा मध्यौ साधारणौ स्मृतौ५३**

आदौ भवा आद्या मृगविष्किरप्रतुदाख्या जांगलचारित्वाज्जांगलशब्दवाच्या एव। महामृगाऽप्चरमत्स्याख्या आनूपाः। मध्यौ द्वौ बिलेशयप्रसहाख्यौ साधारणौ। जांगलानूपचारिणावित्यर्थः। मध्याविति द्विवचननिर्देशसामर्थ्यादाद्यंतानां वर्गाणां प्रत्येकं त्रिधात्वमनुमीयते त्रिग्रहणमंतरेणाऽपि।

**तत्र बद्धमलाः शीता लघवो जांगला हिताः।**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे॥ ५४॥**

तत्र तेषु जांगलानूपसाधारणेषु मध्ये जांगला बद्धमला ग्रथितं पुरीषं कुर्वंति। शीतवीर्या लघवः। सन्निपाते हिताः। किंभूते। पित्तोत्तरे पित्ताधिके। तथा वातो मध्यो यस्मिंस्तस्मिन्मध्यममरुति। तथा कफानुगे कफोऽनुगोऽबलो हीनो यस्मिंस्तस्मिन् स्वल्पश्लेष्मणि।

**दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः।**

शशोऽग्निदीपनः पाके कटुको ग्राही रूक्षः शीतश्च। ग्राहिशीतत्वं चाऽस्य जांगलत्वादेव लब्धमित्यतिशयार्थं पुनरिहोपात्तम्। स्वादुकषायत्वादिकमेषामिह युक्त्योक्तम्। संग्रहे तु स्पष्टं कृत्वोक्तम्। यथा। तत्र बद्धमला रुच्या मांसानामुत्तमा हिमाः। कषायस्वादुविशदा लघवो जांगला हिताः। ताम्रोऽथ हरिणः कृष्णस्त्वेणो ह्यत्रिदोषजित्। लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः। कटुपाकोऽग्निकृत्पथ्यः सन्निपातेऽनिलावर इति

**ईषदुष्णा गुरुस्निग्धा बृंहणा वर्तकादयः ॥ ५५ ॥**
**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत्।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥५६॥**

वर्तकादारभ्य यावज्जांगलसमाप्तिस्तावत्सर्वे औष्ण्यगौरवस्निग्धत्वैरल्पैर्युक्ताः। तेष्वपि मध्ये तित्तिरिः श्रेष्ठो मेधादिकरश्च। तथा संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च। स च तित्तिरिर्धन्वन्यानूपे च देशे विचरत्यतः स्निग्ध उष्णो गुरुर्बृंहणश्च। तथा च संग्रहे। धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहण इति।

**नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्।**

शिखी बर्हीं नातिपथ्यः। श्रोत्रादीनां पथ्यो वयसः स्तंभनकारित्वेन पथ्यः।

**तद्वच्च कुक्कुटो वृष्यः**

तद्वच्च कुकुटो मयूरतुल्यगुणो वृष्यश्च।

**ग्राम्यस्तु श्लेष्मलो गुरुः ॥५७॥**

ग्राम्यः पुनः कुकुटः श्लेष्मलो गुरुश्च।

**मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः।**

क्रकरोपचक्रकाश्च मेधामग्निं च कुर्वंति हृद्याश्च।

**गुरुः सलवणः काणकपोतः सर्वदोषकृत् ॥ ५८ ॥**

काणः कपोतो गुरुरीषल्लवणस्त्रिदोषकृच्च।

**चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम्।**

चटकाः श्लेष्मलादियुक्ता अतिशयेन शुक्रकृतश्च।

**गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥ ५९ ॥**
**मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः।**

अतोऽनंतरं बिलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन स्निग्धत्वेन मधुरत्वेन चाधिकाः। यो यस्मादुत्तरो वर्गः स तस्माद्गुरुत्वादिभिरधिक इत्यर्थः। तथा यथोत्तरमेव मूत्रकृतो बल्या वातघ्नाः श्लेष्मपित्तलाश्च।

एवं वर्गपंचकस्य सामान्यगुणानुक्त्वाऽपवादमाह।

**शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः॥ ६० ॥**
**लवणानुरसाः पाके कटुका मांसवर्धनाः।**
**जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥ ६१ ॥**

तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः। क्रव्यमाममांसं भुंजते ये ते क्रव्यादाः। क्रव्यादास्तु ये प्रसहा मार्जारगृध्रोलूकादयस्ते लवणानुरसाः पाके कटुका मांसवर्धनाश्चातितराम्। जीर्णप्रभृत्यामयानामतिशयेन हिताः।

**नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम्।**
**शरीरधातुसामान्यादनभिष्यंदि बृंहणम् ॥ ६२ ॥**

नातिशब्दोऽत्रेषदर्थे। यदि तु प्रतिषेधनमात्रमभीष्टमभविष्यदाचार्यस्य ततो नञ एव केवलस्योपादानमकरिष्यत्। तस्मादीषदर्थ एव विवक्षितः। अत एवं व्याख्यानयंति। अदोषलमिति। अल्पदोषलम्। यथाऽनतिदग्धो ग्राम इति। शरीरस्य धातुः शरीरधातुः प्रकृतत्वात्पुरुषशरीरस्य मांसाख्यो यो धातुस्तस्य सामान्यात्तुल्यत्वादाजं मांसमनभिष्यंदि बृंहणं च। गुणकृतं चाऽत्र सामान्यं गृह्यते न द्रव्यकृतम्। द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमांसमपि पुरुषशरीरधातोर्मांसाख्यस्य मांसत्वेन समानं भवतीति तदप्यनभिष्यंदि बृंहणं च स्यान्न केवलमाजं मांसम्। गुणकृते तु सामान्ये गृहीते शरीरधातुसामान्यादाजमेव मांसमनभिष्यंदि बृंहणं चेति वक्तुं युज्यते। मांसग्रहणं चाऽत्रोपलक्षणार्थम्। न केवलमाजं मांसं पुरुषशरीरधातूनां मांसाख्येन तुल्यं यावदन्येऽपि ये छागशरीरगता धातवस्तेऽपि मनुष्यशरीरधातुना तुल्यगुणास्तेऽप्यनभिष्यंदिनो बृंहणाश्च। अनया भंग्या पुरुषमांसस्याऽप्याचार्येणाऽत्र गुणा उक्ताः। ननु बृंहणं यद्द्रव्यं तद्भौमाप्यमभिष्यंदि च। अपामेवाऽसाधारणो धर्मः स्रवणरूपः। तत्कथमनभिष्यंदीत्युक्तम्। ब्रूमः। द्रव्यप्रभावात्। ईदृशोऽयं द्रव्यप्रभावो यद्बृंहणमपि द्रव्यमनभिष्यंदीति।

**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत्।**

अतोऽजमांसाद्विपरीतमाविकं मांसमत्युष्णं स्निग्धं गुरु सदोषमभिष्यंदि चेति। बृंहणत्वस्याऽपि विपर्यये प्राप्ते तदपवादमाह। बृंहणं तु तदिति। तुशब्दोऽवधारणे। बृंहणमेव तदित्यर्थः।

**शुष्ककासश्रमाऽत्यग्निविषमज्वरपीनसान् ॥ ६३ ॥**
**कार्श्यं केवलवातांश्च गोमांसं संनियच्छति।**

गोमांसं शुष्ककासादीन्नियच्छति।

**उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ॥ ६४ ॥**

महिष उष्णो गुरुतरः स्वप्नादींश्च करोति। गुरुशब्दादीयसुनि प्रियस्थिरेत्यादिना गरादेशः। दार्ढ्यमिति वर्णदृढेत्यादिना ष्यञ्।

**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः।**

वराहः सूकरस्तद्वन्महिषगुणो ज्ञेय इत्यर्थः। तथा श्रमहा रुच्यादिप्रदश्च।

**मत्स्याः परं कफकराः**

गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरमित्यनेन लक्षणेनाऽतिगुरूष्णस्निग्धमधुरत्वमतिमूत्रशुक्रकृत्त्वमतिबल्यत्वमतिवातघ्नत्वमतिकफपित्तलत्वं च मत्स्यानामुक्तम्। परं कफकरा इत्यनेनाऽतः कफकृत्तमा मत्स्या इति बोधयति। संग्रहे स्पष्टार्थमेवमुक्तम्। कफपित्तकरा मत्स्याः परं पवननाशना इति।

**चिलिचीमस्त्रिदोषकृत् ॥ ६५ ॥**

चिलिचीमसंज्ञो मत्स्यस्त्रिदोषकरः।

**लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम्।**

लावादयः स्वस्ववर्गेषु वरतराः। तत्र लावो विष्किरेष्वतिश्रेष्ठः। रोहितो मत्स्येषु। स हि प्रतिस्रोतोविचारी। आकाशप्लवनश्च। तथा चोक्तम्। प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च। रोहितः प्रवरस्तेषामिति। गोधा च बिलेशयेषु वरा। एणो मृगेष्विति।

**मांसं सद्योहतं शुद्धं वयःस्थं च भजेत्**

मांसं सद्योहतं भजेत्। सद्योहतस्य मांसं भजेदित्यर्थः। तथा शुद्धं स्नाय्वस्थ्यादिरहितम्। तथा वयसि तिष्ठतीति वयःस्थम्। यद्यपि सर्वं मांसं वयःस्थमेव तथाऽपीह वयःस्थमित्युक्त्या शोभनं तरुणं वय इति शस्यते। तस्माद्यूनः प्राणिनो मांसं भजेन्न बालवृद्धयोरिति।

**त्यजेत् ॥६६॥**
**मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम्।**

मृतं स्वयं मृतं न भजेत्। अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मांसं तत्त्यजेदित्यर्थः। कृशं दुर्बलं न भजेत्। तथा भृशं मेद्यमतिमेदुरं मांसं त्यजेत्। तथा व्याधिना निर्ज्ञातस्वरूपेण हतस्य वारिणा विषेण च हतस्य निर्जीवीकृतस्य यन्मांसं तत्त्यजेत्। संग्रहे तु हंसादीनां विशेषा उक्ताः। यथा। हंसः स्वरकरः पित्तरक्तजिन्मधुरो हिमः। कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः। गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः। गुरूण्यंडानि बालानां कषायमधुरं पलम्। वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलमिति।

**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ॥६७॥**
**लघुर्योषिच्चतुष्पात्सु विहंगेषु पुनः पुमान्।**
**शिरःस्कंधोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ६८**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत्।**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥ ६९ ॥**
**मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम्।**

पुंस्त्रियोः पूर्वपश्चार्धे यथासंख्यं गुरुणी। पूर्वं च पश्चं च पूर्वपश्चे तयोरर्धे। पुंसः पूर्वार्धं गुरु स्त्रियः पश्चार्धं गुर्वित्यर्थः। गर्भिणी गुरुः गर्भिणीमांसं गुरु। चत्वारः पादा येषां ते चतुष्पादस्तेषु चतुष्पात्सु गवादिषु मध्ये स्त्री लघुः। चतुष्पादिति संख्यासुपूर्वस्येत्यंतलोपः। विहंगेषु द्विजेषु तु पुमान् लघुः। शिरःप्रभृतीनां मांसानां यथापूर्वं गुरुत्वं निर्दिशेत्। एवं सक्थ्यादिमांसेभ्यः शिरोमांसं गुरुतममित्यवतिष्ठते। आमपक्वाशययोश्च यथापूर्वं गुरुत्वनिर्देशः। तेन पक्वाशयादामाशयो गुरुः। रक्तादीनां धातूनां यथोत्तरं गुरुत्वं निर्दिशेत्। तेन लोहितान्मांसं गुरु मांसान्मेद इत्यादि। मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदमित्यत्राऽप्युत्तरोत्तरमित्यनुवर्तते। तेन मांसाद्गुरुतरो वृषणस्तस्मान्मेढ्रो यावत्सर्वं गरिष्ठं गुदं निर्दिशेत्। इति मांसवर्गः।

मांसवर्गादनंतरं शाकवर्गो निगद्यते।

**शाकं पाठासटीपूपासुनिषण्णसतीनजम् ॥ ७० ॥**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम्।**

पाठादिजं शाकं त्रिदोषहरं लघु ग्राहि च तद्वद्राजक्षवकवास्तुकम्।

**सुनिषण्णोऽग्निकृद्वृष्यस्तेषु**

तेषु मध्ये सुनिषण्णः स्वस्तिकाख्यो जलमध्ये भवति। पत्रैश्चांगेरीतुल्योऽग्निकरोऽपि वृष्यः।

**राजक्षवः परम् ॥ ७१ ॥**
**ग्रहण्यर्शोविकारघ्नः**

राजक्षवः क्षुद्बोधनो राजशाकाख्योऽत्यर्थं ग्रहण्यर्शोविकारघ्नः।

**वर्चोभेदि तु वास्तुकम्।**

वास्तुकं तु पुनः टक्कवास्तुकाख्यं वर्चोभेदि पुरीषस्य भेदनम्।

**हंति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम्॥७२॥**
**काकमाची सरा स्वर्या**

काकमाची त्रिदोषघ्नी कुष्ठनाशनी वृष्या किंचिदुष्णा सरा भेदिनी स्वरहिता च स्वर्या। स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनम्।

**चांगेर्यम्लाऽग्निदीपनी।**
**ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः७३**

चांगेरी क्षुद्राम्लिकाम्ला चाग्निदीपनी ग्रहण्यादिषु हिता। उष्णवीर्या ग्राहिणी लघ्वी च।

**पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः।**
**वेत्राग्रं बृहती वासा कुंतली तिलपर्णिका ॥७४॥**
**मंडूकपर्णी कर्कोटकारवेल्लकपर्पटाः।**
**नाडीकलायं गोजिह्वा वार्ताकं वनतिक्तकम् ७५**
**करीरं कुलकं नंदी कुचेला शकुलादनी।**
**कटिल्लं केम्बुकं शीतं सकोशातककर्कशम् ॥७६॥**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित्।**

पटोलादीनि कर्कशांतान्यष्टाविंशतिः शीतवीर्याणि तिक्तानि पाके कटूनि ग्राहीणि वातलानि कफपित्तघ्नानि च। सप्तला सातला। अरिष्टो निंबः। शार्ङ्गेष्टांगारवल्लिका। अवल्गुजा बाकुची। अमृता गुडूची। वेत्रो वंशसदृशस्तस्याऽग्रम्। वासा वृषः। कुंतली सूक्ष्मतिलजातिः। तिलपर्णो बदरकः। मंडूकपर्ण्यादित्यपर्णा। कर्कोटकारवेल्ले पुनः प्रथित एव। पर्पटः शीतप्रियाख्यः। नाडीकलायं सकुलाक्षकः सुवर्चलाभेदः। गोधूमिका तु गोजिह्वा गोजी क्रोष्टुकमूलिका। वनतिक्तकं वत्सकः। कुलकं काकतिंदुकः। नंदी जयवृक्षश्च शब्दितः। कु-

चेला पाठा। शकुलादनी कटुका। कटिल्लं दीर्घपत्रा वर्षाभूः। कोशातकी घंटोलिः। कर्कशः कंपिल्लकः।

सामान्यगुणानुक्त्वा केषांचिद्गुणकर्मविशेषमाह।

**हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम् ॥७७॥**
**पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम्।**

मुनिनाऽप्युक्तम्। पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा। फलं त्रिदोषशमनं मूलं चास्य विरेचनमिति। बृहतीद्वयं स्थूलबृहती महोटिकाख्या। क्षुद्रबृहती कंटकारिकाख्या। तदेतदुभयं पित्तकरमग्निदीपनं शकृदादीनां भेदनं वातघ्नं च।

**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ७८ ॥**

वृषं छर्दिकासौ हंति। रक्तपित्तं चात्यर्थं जयति।

**कारवेल्लं सकटुकं दीपनं कफजित्परम्।**

कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम्।

**वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ॥७९॥**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम्।**

वार्ताकं रसे कटु तिक्तमुष्णवीर्यं मधुरं वातश्लेष्मघ्नम्। सहक्षारेण वर्तते सक्षारं किंचित्क्षारत्वयुक्तमग्निजननम्। हृद्यं हृदयाय हितम्। रुच्यं रुचिकृत्। अपित्तलम्। नञीषदर्थे। किंचित्पित्तकरमित्यर्थः। तत्र सहक्षारेण वर्तते सक्षारमित्येवं कथमुक्तम्। यावता क्षारं द्रव्यम्। तथा च प्रागुक्तं क्षरणादित्यादि। न द्रव्यं द्रव्येण सह वर्तते। तथा च गुणानामेवाऽयं धर्मो यद्द्रव्याश्रितत्वं नाम। तस्मात्क्षारमित्ययुक्तमिव मन्यामहे। अत्राऽऽचक्ष्महे। क्षारशब्देनाऽत्र क्षारधर्म उपलक्ष्यते विस्रावणाद्यात्मकस्तद्वत्सक्षारमिति द्रव्यमुपदिश्यते। तस्मात्सक्षारमित्युपपन्नम्।

**करीरमाध्मानकरं कषायस्वादुतिक्तकम् ॥ ८० ॥**

करीरं गूढपत्राख्यमाध्मानकरं रसे कषायमधुरतिक्तकम्।

**कोशातकावल्गुजकौ भेदनावग्निदीपनौ।**

अनयोश्च पित्तकारित्वं वातकफघ्नत्वं च वेद्यम्। तथाहि। प्रायेण यद्रूक्षं गुडूच्यादिद्रव्यं तत्पित्तलं वातपित्तकफहरं च दृष्टम्। तथा चाह मुनिः। कफवातनुदवल्गुज इति। तदेवमन्यत्राऽप्यौचित्येन दोषकरत्वादिकल्प्यम्। संग्रहे चान्येऽप्युक्ताः। यथा। सतरूठं कंदकं च चक्षुर्ग्राहि हिमं गुरु। कुमारी जीवलोणिका नालिनी गुचुपर्णिका। स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु। श्यामा शाल्मलिकाश्मर्यफंजी कर्णिकयूथिका। वृक्षादनी क्षीरवृक्षबिंबी तनिकवृक्षिका। रोध्रः शाणः कर्बुदारः सशेलुर्वृषमूषिका। भल्लातकः कोविदारः कमलोत्पलकिंशुकम्। पटोलादिगुणं स्वादु कषायं पित्तजित्परम्। वातपित्तहरा रूढी पर्विणी दीर्घपुष्पिका। लघुरुष्णतरा तिक्ता सारुबूका च लांगली। वातला कटुतिक्ताम्लभेदिनौ तिलवेतसौ। विश्वं रास्ना बलाशाकं वातघ्नमतिसारनुत्। वातं वत्सादनी हन्यात्कफं कंडीरचित्रकाविति। मुनिना चान्येऽप्युक्ताः। न्यग्रोधोदुंबराऽश्वत्थप्लक्षपद्मादिपल्लवाः। कषायाः स्तंभनाः शीता हिताः पित्तातिसारिणाम्। तथा सुश्रुते गदितम्। करीरकुसुमं ज्ञेयं कफपित्तहरं लघु। आगस्त्यं नातिशीतोष्णं नक्तांधानां प्रशस्यते। चातुर्थकज्वरहरं नस्ययोगेन शीलितम्। राजवृक्षस्य निंबस्य शिग्रोः सिंहमुखस्य च। कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च। श्रेयसी बिल्वपर्णी च बिल्वपत्रं च वातनुदिति।

**तंडुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः॥८१॥**
**मदपित्तविषास्रघ्नः**

तंडुलीयो मंडीरकाख्यः शीतवीर्यो रूक्षः स्वादुपाकरसो लघुर्मदादिनाशनश्च।

**मुंजातं वातपित्तजित्।**
**स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम्॥८२॥**

मुंजातं वातपित्तघ्नं स्निग्धादिगुणयुतमतिशुक्रकृच्च।

**गुर्वी सरा तु पालक्या**

पालक्या गुर्वी तथा सरा शकृदादिभेदिनी। तुशब्दः पिच्छिलश्लेष्महिमादीनां संग्रहोक्तानां समुच्चयार्थः। तथा चोक्तं संग्रहे। पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमेति।

**मदघ्नी चाप्युपोदका।**

उपोदका मदनाशिनी। अपिशब्दात्तद्वद्गुर्वी सरा च। उपोदका मयाला खंडपालक्येति प्रथिता।

**पालक्यावत्स्मृतश्चंचुः स तु संग्रहणात्मकः॥८३॥**

चंचुः पालक्यासदृशो गुणैः स्मृतः। स पुनश्चंचुः संग्रहणात्मको न भेदी।

**विदारी वातपित्तघ्नी मूत्रला स्वादु शीतला।**
**जीवनी बृंहणी कंठ्या गुर्वी वृष्या रसायनम् ८४**

विदारी शृगालिका वातपित्तहरा मूत्रलादिगुणयुक्ता रसायनं च। कंदस्यैवायं गुणनिर्देशो बोध्यः। तथा च मुनिः। जीवनो बृंहणो वृष्यो बल्यः शस्तो रसायनम्। विदारिकंदः कंठ्यश्च मूत्रलः स्वादुशीतल इति।

**चक्षुष्या सर्वदोषघ्नी जीवंती मधुरा हिमा।**

जीवंती चक्षुष्यादिगुणयुक्ता। या मधुरा सा शीतवीर्या। एभिर्गुणैः किंचिदूना। तथा चोक्तं संग्रहे। चक्षुष्या सर्वदोषघ्नी जीवंती मधुरा हिमा। शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु। मुनिना तु जीवंत्याः शतावर्या वातपित्तहरत्वमगादि। तत्पा-

ठो हि । भंडीशतावरीशाकं बलाजीवंतिजं च यत् । पर्वण्या पर्वपुष्पा च वातपित्तहरं मतमिति ।

**कूष्मांडतुंबकालिंगकर्कार्वेर्वारुतिंडिशम् ॥ ८५ ॥**
**तथा त्रपुसचीनाकचिर्भटं कफवातकृत् ।**
**भेदि विष्टंभ्यभिष्यंदि स्वादुपाकरसं गुरु ॥८६॥**

कूष्मांडादिकं कफवातकृद्भेदि विष्टंभ्यभिष्यंदि स्वादुपाकरसं गुरु च ।

अत्र विशेषमाह ।

**वल्लीफलानां प्रवरं कूष्मांडं वातपित्तजित् ।**
**बस्तिशुद्धिकरं वृष्यम्**

वल्लीफलानां मध्ये कूष्मांडं पुष्पफलसंज्ञं वरं तथा वातपित्तहरं बस्तिशुद्धिकरं वृष्यं च ।

**त्रपुसं त्वतिमूत्रलम् ॥८७॥**

त्रपुसं पुनरतिशयेन मूत्रलम् ।

**तुंबं रूक्षतरं ग्राहि कालिंगैर्वारुचिर्भटम् ।**
**बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ॥८८॥**

तुंबमलाबुसंज्ञं रूक्षतरम् । एर्वारुकाद्यपि रूक्षं तुंबं त्वतिशयेनेत्यर्थः । तथा ग्राहि । पूर्वाणि तु सामान्यगुणोक्तया भेदीन्येव । चरकमुनिमतानुसारिणस्त्वेवमाचक्षते । तुंबं रूक्षतरं कालिंगैर्वारुचिर्भटं ग्राहीति । कालिंगं कर्चरम् । एर्वारुः कर्कटिका । चिर्भटं डंगरं मालवेषु प्रसिद्धमतिप्रसिद्धं जालंधरादिषु । एतच्च बालमसंपूर्णरसादि पित्तहरं शीतवीर्यं च । अतो बलाद्विपरीतं पक्वं पित्तकरमुष्णवीर्यं चेत्यर्थः । सुश्रुतेनोक्तम् । नीलं यत्त्रपुसं बालं वृष्यं पित्तहरं मतम् । तत्पांडुकफकृज्जीर्णमम्लपित्तकरं स्मृतम् ।

**शीर्णवृंतं तु सक्षारं पित्तलं कफवातजित् ।**
**रोचनं दीपनं हृद्यमष्ठीलाऽऽनाहनुल्लघु ॥ ८९ ॥**

शीर्णवृंतं कर्चरमीषत्क्षारं पित्तलं कफवातघ्नं च । रुचिकरमग्निदीप्तिकृत् । हृद्यमष्ठीलाऽऽनाहं च हंति लघु च । घनाष्ठीलोपमो ग्रंथिरष्ठीलोर्ध्वं समुन्नत इत्यष्ठीलालक्षणम् । साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् । ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षत इति ।

**मृणालबिसशालूककुमुदोत्पलकंदकम् ।**
**नंदीमाषककेलूटशृंगाटककशेरुकम् ॥ ९० ॥**
**क्रौंचादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु ।**

मृणालादि रूक्षं संग्रहणं शीतवीर्यं गुरु च । मृणालं द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं मृणालमितरद्बिसम् । शालूकं पद्ममूलम् । कुमुदकंदम् । कुमुदं शशिप्रियम् । उत्पलकंदकं रक्तोत्पलकंदम् । नंदी तुंडेरिका । माषको वास्तुलः । केलूटं हिरमकसंज्ञमुदुंबरभेदः । शृंगाटकं त्रिकोणाकृति जलोद्भवं कंदम् । कसेरुकं मागधम् । क्रौंचादनं तमेदम् । कलोड्यं पद्मबीजम् ।

**कलंबनालिकामार्षकुटिंजरकुतुंबकम् ॥ ९१ ॥**
**चिल्लीलट्वाकलोणीकाकुरूटकगवेधुकम् ।**
**जीवंतझुंझ्वेडगजयवशाकसुवर्चलम् ॥ ९२ ॥**
**आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम् ।**
**स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ॥ ९३ ॥**
**शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ।**
**स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ९४**

कलंबादिकं मधुरं किंचिल्लवणं वातश्लेष्मकरं गुरु च शीतवीर्यं मूत्रं पुरीषं च विसृजति बहिःक्षिपति । विष्टभ्योदरप्रदेशे पिंडीभूय जीर्यति परिणमति । प्रायोग्रहणं किंचिदेषां मध्ये नैवंस्वरूपमिति ज्ञापनार्थम् । कलंबं कदंबः । नालिका दीर्घनालरूपा कलंबुसंज्ञा । मार्षो गंधारिका । कुटिंजरं ताम्रमूलकम् । कुतुंबको द्रोणपुष्पी । चिल्ली पृथुपत्त्रं यवशाकं कुँमामसंज्ञम् । लट्वाको गुग्गुलुकः । लोणीका लोणारः । कुरूटकः स्थितिवारकः । गवेधुकं तृणधान्यविशेषः । जीवंतो बृहद्गांधारम् । झुंझुर्झुझुरुकः । एडगजः प्रपुन्नाटः । यवशाकं हयपत्रा चिल्ली । सुवर्चला रविभक्ता । आलुकानि च सर्वाणि नानाविधानि रक्तालुकमधुकालुकादिभेदेन । सूप्यानि मुद्गराजमाषादिपत्राणि । लक्ष्मणं मधुयष्टिका । एतच्च सर्वं स्विन्नं निष्पीडितरसमतिबहुस्नेहं च नात्यपथ्यम् । सुश्रुते चोक्तम् । संस्कृतं वेसवारेण सस्नेहं शाकमिष्यते । राजिकासक्तुभक्तादिसंस्कारं चानुवर्तते ।

**लघुपत्त्रा तु या चिल्ली सा वास्तुकसमा मता ।**

लघुपत्त्रा या चिल्ली यवशाकविशेषः सा तु वास्तुकसमा गुणैर्मता ।

**तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ॥९५॥**

तर्कार्यरणीका । वरणो मालः । समाहारेण तयोर्द्वंद्वः । एतत्स्वादु किंचित्तिक्तं कफवातघ्नं च ।

**वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम् ।**
**दीपनं भेदनं हंति गरशोफकफानिलान् ॥ ९६ ॥**

वर्षाभ्वौ पुनर्नवे तथा कालशाकं किंचित्क्षारं रसे च कटुतिक्तं वह्निदीपनं भेदनं गरादींश्च हरति । कठिल्लो वर्षाभूः स च प्रागुक्तगुणः । तथा च निघंटुः । पुनर्नवा विशाखश्च कठिल्लः सासिनाडिका । वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्त्रः कठिल्लकः । पुनर्नवा परः क्षुद्रः सद्यो मंडलपत्त्रकः । श्वेतमूलो वर्षकेतुर्मदा वर्षाभुरुच्यत इति ।

**दीपनाः कफवातघ्नाश्चिरिबिल्वांकुराः सराः ।**

चिरिबिल्वः पूतिकरंजस्तस्यांऽकुरा वह्निदीपनाः कफवातघ्नाः सराश्च।

**शतावर्यंकुरास्तिक्ता वृष्या दोषत्रयापहाः ॥९७॥**

शतावर्या अंकुराः प्ररोहास्तिक्तरसा वृष्याः शुक्रकृतस्त्रिदोषघ्नाश्च।

**रूक्षो वंशकरीरस्तु विदाही वातपित्तलः।**

वंशकरीरो वंशांकुरो रूक्षो विदाही वातपित्तकृत्।

**पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित्॥९८॥**

पत्तूरो दीपनस्तिक्तरसः प्लीहादिजित्। पत्तूरो मत्स्याक्षकः।

**कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः।**

कासमर्दः सरः कृम्यादींश्च नाशयति। उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम्।

**रूक्षोष्णमम्लं कौसुंभं गुरु पित्तकरं सरम् ॥९९॥**

कुसुंभशाकं रूक्षमुष्णवीर्यमम्लं गुरु पित्तकृत्सरं च।

**गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत्।**

सार्षपं शाकं गुरूष्णवीर्यम्। तथा शकृन्मूत्रं च बध्नाति। त्रिदोषकृच्च। संग्रहे तु सक्षारत्वमस्योक्तम्। तत्पाठो हि। सक्षारमधुरं स्निग्धमुष्णं च गुरु सार्षपमिति। सुश्रुतेन चोक्तम्। कफघ्नं सार्षपं शाकमासुरं शाकमेव चेति।

**यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम् १००**
**तन्मूलकं दोषहरं लघु सोष्णं नियच्छति।**
**गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥ १०१ ॥**
**स्वराग्निसादोदावर्तपीनसांश्च**

यन्मूलकमव्यक्तरसमस्फुटस्वादं तथा किंचित्क्षारमीषत्क्षारगुणयुक्तं कार्यतोऽनुमीयमानं तथा सतिक्तमीषत्तिक्तकं रसनेंद्रियस्य किंचिदुद्वेजकं तन्मूलकं दोषाणां हरं दोषहरं नान्यावस्थम्। बालं मूलकं दोषहरमित्यनेनास्य विशिष्टा बालावस्था दोषहरत्वेन नियम्यते। न सर्वं बालावस्थं दोषहरमपि त्वीदृग्रूपमित्यर्थः। अन्ये तु दोषहरमित्यत्र समासं कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते। यतः किंचिदुष्णवीर्यत्वात्पित्तकरत्वमस्यास्त्येव। किंचित्तिक्तरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहर्तुं न युक्तम्। वक्ष्यति हि। रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहतीति। एवं चैतन्मूलकं वातश्लेष्मघ्नमेव युक्तं न तु पित्तहृच्चेति तेषामभिप्रायः। एतच्च मूलकं गुल्मादीन्नियच्छति। पीनसांश्चेति चशब्दः समुच्चये। अन्यानप्येवं प्रायशो रोगान्नियच्छतीति। सुश्रुतस्तु। सर्वदोषहरा लघ्वी कंठ्या मूलकपोतिकेति यद्भेदांतरं ब्रूते तदप्यत्रैव बालमूलकलक्षणेऽतर्भूतमिति तंत्रकृतेह पृथङ्नोक्तम्।

**महत्पुनः।**
**रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत्॥१०२॥**
**गुर्वभिष्यंदि च**

अव्यक्तरसादिलक्षणावस्थां विहाय यावद्व्यक्तरसाद्यवस्थं तत्संपद्यते ततोऽनंतरं क्रमेण रसविपाकयोः कटुकमुष्णवीर्यं तन्मूलकं महद्वृद्धं त्रिदोषकृद्गुर्वभिष्यंदि च भवति। वृद्धस्य च मूलकस्यानेका अवस्थाः संभवंति। तत्र चास्याद्याऽवस्थायां किंचित्त्रिदोषकृत्त्वमंत्याऽवस्थायामतिशयेन त्रिदोषकृत्त्वं वेद्यम्। संग्रहे त्वस्य स्वादुविपाकित्वमुक्तम्। तत्पाठे। महत्पुनः। रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोषकृदिति। तच्चामविषम्।

**स्निग्धस्विन्नं तदपि वातजित्।**

अपिशब्द एवार्थे। तदेव महन्मूलकं स्निग्धस्विन्नं वातजित्। स्निग्धं च तत्स्विन्नं च स्निग्धस्विन्नम्। न त्वस्निग्धस्विन्नमात्रमित्यर्थः।

**वातश्लेष्महरं शुष्कं सर्वम्**

सर्वं बालं वृद्धं च मूलकं शुष्कं सद्वातश्लेष्महरम्।

**आमं तु दोषलम् ॥१०३॥**

आमं तु पुनर्मूलकं हरीतकत्वेन यद्भक्ष्यते तद्दोषलम्। सर्वमित्यत्रायत्नकृतेन संबंधेन संबध्यते। तेनादोषलस्य बालस्याऽप्यामस्य दोषलत्वं न तु वृद्धस्यैवेत्यर्थः। मूलकं नीलकंठापरसंज्ञम्।

**कटूष्णो वातकफहा पिंडालुः पित्तवर्धनः।**

पिंडालुः कटुको रसे वीर्ये चोष्णो वातकफघ्नः पित्तकरश्च।

**कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ॥ १०४ ॥**
**फणिज्झार्जकजंबीरप्रभृति ग्राहि शालनम्।**
**विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् १०५**
**दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु।**

कुठेरादि शालनं ग्राहि विदाहि कटुकं रसपाकयो रूक्षमुष्णवीर्यं हृद्यमग्निदीपनं च। तथा दृगादिहृत्तीक्ष्णम्। तथा दोषान्वातादीनुत्क्लेशयति कोपयति स्थानाच्चालयति दोषोत्क्लेशकरं लघु च। शालनमवदंशो येन सहान्नं भोक्तुं युज्यते। कुठेरो वैकुंठः। शिग्रुः फलपत्रकः। सुरसः कृष्णतुलसी। सुमुखः कटुपत्रकः। आसुरी राजिका। भूस्तृणं गुह्यबीजकम्। फणिज्झको मरिचकस्तीक्ष्णगंधः प्रकीर्तितः। आर्जकः खरपत्रकः। जंबीरः करपत्रकः। प्रभृतिशब्देन संग्रहोक्ता गृह्यंते। धान्यतुंबरुसालेययवानीशृंगवेरकाः। पर्णाशो गृंजनोऽजाजी कंडीरं जलपिप्पली। फणिज्झार्जकजंबीरं खराश्वा कालमालिका। दीप्यकः क्षवकद्वीपिबस्तगंधादिबद्धविडिति। तंत्रांतरे चोक्तम्। कटुतिक्तरसा शीता कफपित्तविनाशिनी। विपाके मधुरा लघ्वी तस्करांगुलिका स्मृतेति।

**हिध्मकासश्रमश्वासपार्श्वरुक्पूतिगंधहा ॥१०६॥ सुरसः**

सुरसो हिध्मादिघ्नः पूतिगंधं दौर्गंध्यं सौरभ्योत्पादनाद्धंति ।

**सुमुखो नातिविदाही गरशोफहा ।**

सुमुखः कटुपत्राख्यः किंचिद्विदाही गरशोफौ च हंति ।

**आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत्१०७**

आर्द्रिकाऽऽर्द्रधानिका तिक्तमधुरा मूत्रकरी पित्तं च न करोति ।

**लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ।**
**हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः १०८**
**किलासकुष्ठगुल्माऽर्शोमेहक्रिमिकफाऽनिलान् ।**
**सहिध्मपीनसश्वासकासान् हंत्यस्रपित्तकृत्१०९**

लशुनोऽतितीक्ष्णोऽत्युष्णवीर्यः । कटुपाकरसः सरः भेदी हृद्यादिगुणयुक्तश्च किलासादीन् हंति रक्तपित्तं च करोति । किलासं श्वित्रम् । कंदस्यैवायं गुणवीर्यनिर्देशो बोध्यः । पत्रमध्ययोर्मधुरत्वाद्भृशोष्णत्वानुपपत्तिः । तथा चोक्तं संग्रहे । पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः । तीक्ष्णोष्णो लशुनः कंद इति ।

**पलांडुस्तद्गुणन्यूनः श्लेष्मलो नाऽतिपित्तलः ।**
**कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ११०**

पलांडुर्धवलाक्षकाख्यस्तद्गुणन्यूनस्तस्य रसोनस्य गुणास्तद्गुणास्तैर्हीनः । लशुनात्किंचिद्धीनगुण इत्यर्थः । तथा श्लेष्मलो नातिपित्तं च करोति । नतु लशुनवत्कफघ्नोऽतिपित्तकृच्च । कफवातार्शसां स्वेदे भक्षणे च प्रभावात्पथ्यः । तंत्रांतरेऽन्योऽप्युक्तो यथा । स्निन्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च । स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः क्षीरपलांडुरुक्त इति ।

**तीक्ष्णो गृंजनको ग्राही पित्तिनां हितकृन्न सः ।**

गृंजनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च ।

**दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः१११**
**विशेषादर्शसां पथ्यः**

सूरणो नाम कंदविशेषो दीपनो रुच्यः श्लेष्मघ्नो विशदो लघुरर्शसामतिपथ्यश्च ।

**भूकंदस्त्वतिदोषलः ।**

भूकंदः स्फोटाख्यः प्रावृडुद्भवः प्रसिद्ध एव । स चात्यर्थं दोषलः ।

**पत्रे पुष्पे फले नाले कंदे च गुरुता क्रमात्११२**

पत्रादीनां यथोत्तरं क्रमाद्गुरुत्वम् । तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशाकं ततो नालशाकं ततोऽपि कंदशाकमिति । एवं हारीतकेष्वपि गुरुत्वं वेद्यम् । बाहुल्येन चैतदुक्तम् । मूलके हि वैपरीत्यं दृश्यते । तथा हि । मूलकस्य हि कंदे लघुत्वम् । अत एव मुनिरप्याह । मूलके तु विपर्यय इति । शाकानां हारीतकानां च येषामिह पर्याया नोक्तास्तेषां सद्वैद्येभ्योऽवगंतव्याः ।

अथ वरावरत्वं निर्धारयति ।

**वरा शाकेषु जीवंती सर्षपास्त्ववराः परम् ।**

शाकेषु मध्ये जीवंती वरा सर्षपाः पुनरवराः । इति शाकवर्गः ।

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वाच्छाकवर्गादनंतरं फलवर्ग उच्यते । खरनादेऽप्युक्तम् । भुक्तावसाने फलं भुज्यत इति फलवर्गोऽभिधीयत इत्याह ।

**द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट्११३**
**स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ।**
**निहंत्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ११४**
**तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ।**

फलेषूत्तमा फलोत्तमा गोस्तनीपर्याया द्राक्षा सा वृष्यादिगुणयुक्ता । सकषाया ईषत्कषाया । अनिलादीन्क्षयांतान् हंति । उदावर्तहरत्वं चरकमुनिनाऽस्या उक्तं तच्च स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वेनेहोक्तप्रायम् । अभ्यासाच्च द्राक्षाणां गुणहीनत्वं देशावतुरोधात्कल्प्यम् ।

**उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु दाडिमम् ।**
**पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।**
**सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम्११६**

उद्रिक्तमतिरिक्तं पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाडिमं जयति । मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम् । पित्तेत्यादि । अम्लं दाडिमं पित्ताविरोधि न पित्तं कुरुते न च पित्तं शमयति । अत एवैतद्वातकफापहमुक्तम् । सर्वं मधुरमम्लं च यद्दाडिमं तत् हृद्यादिगुणसंयुक्तम् । मुनिना तूक्तम् । रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनमिति ।

**मोचखर्जूरपनसनालिकेरपरूषकम् ।**
**आम्राततालकाश्मर्यराजादनमधूकजम् ॥ ११७ ॥**
**सौवीरबदरांकोल्लफल्गुश्लेष्मातकोद्भवम् ।**
**वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ॥ ११८ ॥**
**उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ।**
**दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ ११९ ॥**
**स्वादु पाकरसं स्निग्धं विष्टंभि कफशुक्रकृत् ।**

मोचादिप्रियालांतं बृंहणत्वादियुक्तम् । मोचं कदलीफलम् । नालिकेरं राजफलाख्यम् । परूषको मृदुफलः । आम्रातः कपिचूडः । तालमूलैः । काश्मर्यं काश्मरीफलम् । राजादनं क्षीरशु-

त्तम् । सौवीरबदरं कर्णिकाबदरम् । अंकोल इति बिल्वः । फल्गुः काकोदुंबरिका । श्लेष्मातकं शेलुः । अभिषुकं स्याराटम् । आक्षोडं स्नेहफलाख्यम् । मुकूलकं दंतीफलम् । निकोचनं सरलफलम् । उरुमाणं स्निग्धफलम् । प्रियालं सन्नतरुः ।

**फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम्॥१२०**
**शकृन्मूत्रविबंधघ्नं केश्यं मेध्यं रसायनम् ।**
**वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम्॥१२१॥**
**परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ।**
**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः १२२**
**कोलमज्जा गुणैस्तद्वत्तृट्छर्दिकासजिच्च सः ।**

तालस्येदं तालं फलं पित्तकारि । काश्मर्यजं फलं सरं शीतवीर्यादिगुणयुक्तम् । मधूकबदरयोरपि विशेषांतरमुक्तं संग्रहे । मधूकजमहृद्यं तु बदरं सरणात्मकमिति । वातामादीनां ग्रहणं गुणविशेषप्रदर्शनार्थम् । निर्धारिते तु विशेषे वातामादिकमुष्णवीर्यं कफपित्तकरं सरमतिशयेन वातघ्नं स्निग्धं च । आदिशब्देनाऽभीषुकादीनां ग्रहणम् । प्रियालजातं प्रियालजं फलमनुष्णवीर्यम् । तुर्विशेषे । विशेषस्तु शीतवीर्यत्वमेव । शेषं बृंहणादि सर्वं समानम् । प्रियालमज्जाऽस्थ्यभ्यंतरं मधुरादिगुणयुक्तम् । बदरमज्जा गुणैस्तद्वत् प्रियालमज्जावत्तृडादिजिच्च । तंत्रांतरे चोक्तम् । बिभीतको मदकरः कोलानां पित्तनाशनः । तथा तालखर्जूरादीनां मस्तकमज्जानः स्वादुपाका वृष्याः शीतवीर्याश्चेति सुश्रुतोऽपठत् ।

**पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम्॥१२३॥**
**दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत् ।**

बिल्वं पक्वं सुदुर्जरं पूतिमारुतं च दुर्गंध्यपानवातकृद्भवति । बालमसंपूर्णमनुपचितं बिल्वं दीपनं कफवातघ्नम् । उभयमामं पक्वं च ग्राहि मूत्रपुरीषादेः संग्रहणम् ।

**कपित्थमामं कंठघ्नं दोषलं दोषघाति तु ॥१२४॥**
**पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ।**

आमं कपित्थं कंठं हंति । दोषलं त्रिदोषकृत् । पक्वं कपित्थं दोषघ्नं हिक्काच्छर्दिहरम् । सर्वमामं पक्वं च कपित्थं ग्राहि विषापहं च । आमकपित्थस्य कषायत्वं कंठघ्नत्वेनैवोदितम् । अम्लत्वं चाम्लवर्गमध्ये पाठादवगंतव्यम् । पक्वस्य च मधुरत्वं सुप्रसिद्धमितीहैतन्नोक्तम् । तथा आमकपित्थगुणकथनेन तथाविधानि कषायाम्लस्वभावानि विविधानि कपित्थानि सदैवामकपित्थगुणानि वेद्यानि । पक्वकपित्थगुणकथनेन च तथाविधानि माधुर्यानुविद्धानि सदा पक्वगुणानि वेद्यानि ।

**जांबवं गुरु विष्टंभि शीतलं भृशवातलम्॥१२५॥**
**संग्राहि मूत्रशकृतोरकंठ्यं कफपित्तनुत् ।**

जांबवं गुर्वादिगुणयुक्तं मूत्रशकृतोश्च संग्रहणं कंठाय च हितं न कफपित्तजिच्च । जांबवमिति फलार्थे जंब्वा वेत्यण् ।

आम्रस्य व्यवस्थस्याऽप्युपयोगदर्शनात्तथैव गुणानाह ।

**वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् १२६**
**गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ।**

वातेत्यादि । आम्रमिति वक्ष्यमाणेन संबंधः । आम्रं चूताख्यं बालं सद्वातपित्तास्रकृत् । बद्धास्थि संजातास्थि कफपित्तकृत् । पक्वमाम्रं गुरु वातजित् । मधुराम्लं कफशुक्रकृत् । संग्रहे सहकारस्य गुणा उक्ताः । यथा । सहकाररसो हृद्यः सुरभिः स्निग्धरोचन इति ।

**वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु १२७**

वृक्षाम्लं ग्राह्यादिगुणैर्युक्तम् । वातश्लेष्महल्लघु च । कोशाम्रं च किंचिदेतस्मान्न्यूनगुणं ज्ञेयम् । तथा च संग्रहे । वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम् । वातश्लेष्महरं किंचिदूनं कोशाम्रजं तत इति ।

**शम्या गुरूष्णं केशघ्नं रूक्षं पीलु तु पित्तलम् ।**
**कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ॥१२८॥**
**सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।**

फलापेक्षया षष्ठी । शम्याः फलं गुरु । उष्णवीर्यं केशघ्नं रूक्षं च । पीलुफलं च पित्तलं यावद्गुल्मनुत् । सतिक्तमीषत्तिक्तं मधुरं च यत्पीलु तन्नात्युष्णं त्रिदोषजिच्च ।

मातुलुंगस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात्पृथगेव गुणानाह ।

**त्वक्तिक्तकटुका स्निग्धा मातुलुंगस्य वातजित्१२९**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।**
**लघु तत्केसरं कासश्वासहिध्मामदात्ययान् १३०**
**आस्यशोषानिलश्लेष्मविबंधच्छर्द्यरोचकान् ।**
**गुल्मोदरार्शःशूलानि मंदाग्नित्वं च नाशयेत् १३१**

बीजपूरकस्य त्वक्तिक्ता तटुका रसे स्निग्धा वातघ्नी च । खरनादस्त्वाह । त्वङ्मातुलुंगात्कटुका गुर्वी वातप्रकोपनीति । चरकेऽप्युक्तम् । गुर्वी त्वगस्य कटुका मारुतस्य च नाशनीति एतन्मतानुसारिणस्त्वत्रैव पाठं पठंति । त्वक्तिक्तकटुका स्निग्धा मातुलुंगस्य वातकृदित्यकारप्रश्लेषात् । मांसं केसरादर्वाग्बृंहणं मधुरं वातपित्तहृद्गुरु च । तस्य मातुलुंगस्य केसरं तत्केसरं लघु । तथाऽर्शआदीन्मंदाग्नित्वांतान्नाशयेत् ।

**भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥१३२॥**

त्वक् च मांसं च त्वङ्मांसं भल्लातकसंबंधि बृंहणं मधुरं शीतलं च । तस्य भल्लातकस्यास्थि तदस्थि अग्निसमं तीक्ष्णत्वादग्निवत्स्फोटककर्तृत्वात् । अथवाऽग्निश्चित्रकस्तस्य गुणदोषकर्तृ-

तया तुल्यं भल्लातकास्थीति । तथा मेधायै हितमिति । कफवातघ्नम् ।

**स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ।**
**रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥१३३॥**

पालेवतं रैवतकाख्यं द्विधा । कथं द्विःप्रकारमित्याह । स्वाद्वम्लं च । तत्तु यथासंख्येन शीतमुष्णं च । तथा द्वयमपि गुरु रुच्यमत्यग्निशमनं च । अथवा यथासंभवं संबंधो मधुरं गुर्वत्यग्निनाशनं च । अम्लं रुच्यमिति । मधुरमारुकं रुच्यं हृद्यं भवति ।

अपक्वस्यैवैते गुणा वेद्याः । यस्मादाह ।

**पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ।**

पक्वं च द्रागेव परिणामं याति । किंचिदुष्णवीर्यं किंचिद्गुरु किंचिद्दोषलमपथ्यम् । निघंटावुक्तम् । आरुकं वीरसेनं च वीरावीरारुकं तथा । विद्याजातिविशेषेण तच्चतुर्विधमारुकम् ।

**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥१३४॥**
**गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम् ।**

द्राक्षापरूषकं करमर्दकं चार्द्रमशुष्कमपक्वमम्लं सतिपित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरं चेति । करमर्दकं सुषेणमम्लम् ।

**तथाऽम्लं कोलकर्कंधूलकुचाम्रातमारुकम्॥१३५॥**
**ऐरावतं दंतशठं सतूदं मृगलिंडिकम् ।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥१३६॥**

कोलादिकं मृगलिंडिकांतं तथा तद्वच्चेत्यम्लद्राक्षादिवद्गुणैर्ज्ञेयमित्यर्थः । कर्कंधूर्ह्रस्वबदरी । लकुचं लिकुचम् । आरुकस्याम्लकस्यैवैते गुणा ज्ञेयाः । मधुरस्य हि विशेषेण पूर्वमुक्ता एव गुणाः । तथैरावतादि नात्युष्णं पित्तं करोति । ऐरावतं नागरंगम् । दंतशठं जंबीरम् । तथा सतूदं मृगलिंडिकं च । तथा करमर्दकं पक्वं शुष्कं च नात्यर्थपित्तकरम् ।

**दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् ।**
**तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः॥१३७॥**

अम्लीकाफलं कोलफलं च शुष्कं सद्दीपन भेदनं तृष्णादिनाशनं लघु कफवातयोश्च पथ्यम् ।

**फलानामवरं तत्र लकुचं सर्वदोषकृत् ।**

फलानां सर्वेषां मध्ये लकुचमप्रधानं त्रिदोषकरम् । चरकमुनिस्त्वस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे । तत्पाठे । हिक्कार्शसां हितः। वातलं कफपित्तघ्नं विद्यात्कर्पटकीफलम् । मधुराण्यतिपाकानि वातपित्तहराणि च । अश्वत्थोदुंबरप्लक्षन्यग्रोधानां फलानि तु । प्राचीनामलके चैव दोषघ्नं सरुहानि च । इंगुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् । सुश्रुतेनोक्तम् । सुगंधि मधुरं स्निग्धं लवलीफलमुच्यते । वृक्षाम्लाल्पांतरगुणं कोशाम्रफलमुच्यत इति ।

संप्रति यादृशं फलं शाकं च संपाद्यं तदुपदिशन्नाह ।

**हिमानिलोष्णदुर्वातव्याललालादिदूषितम् १३८**
**जंतुजुष्टं जले मग्नमभूमिजमनार्तवम् ।**
**अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽपि च ॥१३९॥**
**धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।**
**असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् १४०**
**प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।**

दूषितशब्दः प्रत्येकं संबध्यते । धान्यं केदारस्थं हिमेन दूषितं त्यजेत् । तथाऽनलेन प्रवृद्धेन दूषितं तथा उष्णेनातपादिना दुर्वातेन पुरोवातादिना तथा व्यालानां सर्पादीनां लालया दूषितं त्यजेत् । आदिग्रहणेन शवकोथमूत्रपुरीषादीनां ग्रहणम् । तथा जंतुभिः कृम्यादिभिर्जुष्टं सेवितम् । जले मग्नमाशिखं बुडितम् । अभूमौ विपरीतभुवि जातमभूमिजम् । या यस्योचिता भूमिस्ततोऽन्या विपरीता । अनार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थः । तल्लक्षणं रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुतम् । यथा रक्तशालिर्यवकेन सह विरुध्यते । तथा मुद्गो माषेण । एवं शूकधान्यं विजातीयेन शूकधान्येन । तथा शिंबीधान्यं शिंबीधान्येन विजातीयेन सह विरुद्धं त्यजेत् । केचिच्छूकधान्येन सह विरुद्धमिति वर्णयंति । अन्ये तु जीर्णं नवेन मिश्रितमन्यधान्ययुतमिति ब्रुवते। केदारगतं जीर्णतयाऽतिपुराणत्वेन हीनवीर्यं नष्टशक्ति । एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशम् । रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण कांजिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं जठरेऽसंजातरसमपरिपूर्णरसस्वरूपमित्यर्थः । तद्वच्छुष्कं तथैव शुष्कशाकमप्यसंजातरसं त्यजेत् । अन्यत्र मूलकात् शुष्कमूलकं भजेदेव । प्रायेण फलमप्येवंविधं त्यजेत् । प्रायोग्रहणं द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम् । तथा आममसंप्राप्तपाकं फलं त्यजेदिति वर्तते । किं सर्वं नेत्याह । बिल्ववर्जितम् । बिल्वं त्वाममपि पथ्यत्वान्न त्यजेदेवेत्यर्थः । इति फलवर्गः ।

फलवर्गादनंतरं विविधौषधवर्गारंभः । प्रायेणास्याऽहारोपयोगित्वात्तत्राऽपि लवणानां पूर्वमुपन्यासो युक्तः सुतरामुपयोगित्वादित्याह ।

**विष्यंदि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः॥१४१॥**
**वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ।**

सर्वं लवणं विष्यंद्यादिगुणयुक्तं विदुर्जानंति सद्वैद्या इति शेषः। विष्यंदयति तच्छीलं विष्यंदि । स्त्यानस्य कफादिसंघातस्य विलीनविग्रहतामुत्पादयतीत्यर्थः । सूक्ष्मं सूक्ष्मस्रोतोगामि । सृष्टं मलं मूत्रपुरीषादि येन तत्सृष्टमलम् । तथा वातापहम् । पाकि अन्नव्रणादीनां पाककारि । तीक्ष्णममृदु मरीचादिवत् । उष्णमुष्णवीर्यम् । रोचनं रुचिकृत् तथा कफपित्तकृत् ।

इति सामान्यलक्षणमुक्त्वा विशेषमाह ।

**सैंधवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत्॥१४२॥**
**लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ।**

तत्र तेषु लवणेषु मध्ये सैंधवं सस्वादु ईषन्मधुरं वृष्यं हृद्यं त्रिदोषघ्नं तथा किंचिदुष्णं दृष्टेः पथ्यं किंचिद्विदाह्यग्निदीपनं च । सामान्यगुणाश्च विष्यंदिसूक्ष्मसृष्टमलत्वरोचानान्यस्य संत्येव ।

**लघु सौवर्चलं हृद्यं सुगंध्युद्गारशोधनम् ॥१४३॥**
**कटुपाकं विबंधघ्नं दीपनीयं रुचिप्रदम् ।**

सौवर्चलं लघु हृदयाय हितं सुगंध्युद्गारं शोधयति । दुष्टं सच्छुद्धं करोति । कटुपाकं च । तथा विबंधिस्रोतसां हितं विबंधघ्नम् । अग्निदीप्तिरुचिकृत् ।

**ऊर्ध्वाधः कफवातानुलोमनं दीपनं बिडम् १४४**
**विबंधानाहविष्टंभशूलगौरवनाशनम् ।**

बिडं तदूर्ध्वमधश्च कफवातादीननुलोमयति । तथा दीपनं विबंधादिघ्नं च ।

**विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् १४५**

सामुद्रं विपाके मधुरं गुरु कफवर्धनं च ।

**सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।**

भूमिमुद्भिद्य यद्भवति तदौद्भिदमीषत्तिक्तं कटु क्षारं तीक्ष्णमुत्क्लेदि च दोषोत्क्लिष्टकरम् ।

**कृष्णे सौवर्चलगुणा लवणे गंधवर्जिताः ॥१४६॥**

कृष्णे लवणे सौवर्चलगुणा लघुत्वादयो गंधेन वर्जिताः सौगंध्यरहितास्त इति शेषः ।

**रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ।**

रोमकं लवणं लघु पांसूत्थं शिरालवणमीषत् क्षारं श्लेष्मलं गुरु च ।

**लवणानां प्रयोगे तु सैंधवादीन् प्रयोजयेत् १४७**

लवणानां प्रयोगे सैंधवमादि कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराण्येव यत्र युज्यंते तत्र सैंधवमादि कृत्वा प्रयोज्यानि । यथा हिंग्वादिचूर्णे द्विबह्वित्युक्तम् । तत्र सैंधवसौवर्चले प्रयोज्ये । यत्र त्रयाणां प्रयोगस्तत्र सैंधवसौवर्चलविडादि । एवमौद्भिदादीनां लवणवर्गे पठितानामन्यत्राऽपि वेद्यम् । खरनादे चोक्तम् । सैंधवं सारकं पाक्यं सौवर्चलमथौद्भिदम् । पूर्वं पूर्वं गुणोत्कृष्टमौष्ण्यं चैषां यथोत्तरमिति ।

**गुल्महृद्ग्रहणीपांडुप्लीहानाहगलामयान् ।**
**श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥१४८॥**

यवशूकजो यवक्षारो गुल्मादीन् शमयति ।



संप्रति स्वर्जिकाक्षारादीनामपि गुणानाह ।

**क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः ।**
**पित्तासृग्दूषणः पाकी च्छेद्यहृद्यो विदारणः१४९**
**अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ।**

क्षारः सर्वश्च परममतिशयेन तीक्ष्णोष्णः कृमिजिल्लघुश्च । पित्तासृजी दूषयति । पाकी पाककारी । छेदी भेदः श्लेष्मादिग्रंथिघ्नः । अहृद्यो हृदयाय न हितः । विदारणः पक्वगंडादीनाम् । कटुलावण्याच्छुक्रादीनामपथ्यः ।

**हिंगु वातकफानाहशूलघ्नं पित्तकोपनम् ॥१५०॥**
**कटुपाकरसं रुच्यं दीपनं पाचनं लघु ।**

हिंगु वातादिघ्नं पित्तप्रकोपनं कट्वादिगुणयुक्तं च ।

**कषाया मधुरा पाके रूक्षा विलवणा लघुः १५१**
**दीपनी पाचनी मेध्या वयसःस्थापनी परा ।**
**उष्णवीर्या सराऽयुष्या बुद्धींद्रियबलप्रदा॥१५२॥**
**कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान्**
**शिरोऽक्षिपांडुहृद्रोगकामलाग्रहणीगदान्॥१५३॥**
**सशोषशोफातीसारमेदमोहवमिक्रिमीन् ।**
**श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥ १५४॥**
**विबंधं स्रोतसां गुल्ममूरुस्तंभमरोचकम् ।**
**हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान्१५५**

हरीतकी कषाया कषायरसा । कषायरसत्वात्कटुविपाकित्वं प्राप्तमित्याह । मधुरा पाक इति । तथा रूक्षा । विलवणेति वचनं लवणं वर्जयित्वा शेषाः पंच रसा अस्याः संतीति वेदयति । नन्वेवं कषायेत्यनर्थकं यतः पंचसु रसेषु लवणहीनेषु मध्ये कषायोऽनुप्रविष्ट एव । अस्त्येवैतत् । कषायेत्येतदतिशयख्यापनाय । कषायो रसोऽस्यां बाहुल्येनाऽस्तीत्यर्थः । तथा च मुनिः । हरीतकीं पंचरसामुष्णां विलवणां शिवामिति । तथा लघुः । दीपन्यग्नेः । पाचन्यामादेः । मेध्या मेधायै हिता । वयस इत्यादि । कालकृता शरीरावस्था यौवनादिर्वयस्तस्य परमतिशयेन स्थापनी स्थिरीकरणी । उष्णेत्येतावतैवोष्णवीर्येत्यस्याऽर्थस्य लब्धत्वाद्वीर्यग्रहणमतिशयोष्णवीर्यत्वख्यापनार्थम् । सरा भेदनी । तथाऽऽयुषे हिता । बुद्धिः वर्तमानार्थग्राहिणी प्रज्ञा । इंद्रियाणि चक्षुरादीनि । तेषां बलं प्रददाति या सैवम् । कुष्ठादीन् रोगान् जयति । खरनादे त्वेवमभ्यधायि । स्वाद्वम्लभावात्पवनं कटुतिक्ततया कफम् । कषायमधुरत्वाच्च हंति पित्तं हरीतकी ।

**तद्वदामलकं शीतमम्लं पित्तकफापहम् ।**

तया हरीतक्या तुल्यं वर्तत इति तृतीयांताद्वतिः । हरीतकीसमानगुणमामलकमित्यर्थः । विशेषं त्वस्याह । अभयोष्णेदं शीतं

शीतवीर्यं तथाऽम्लमम्लरसं पित्तघ्नं चेति । कृष्णात्रेयस्त्वामलकं त्रिदोषघ्नं चाख्यत् । यथा । अम्लभावाज्जयेद्वातं पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वादेवमेष त्रिदोषनुत् । सुश्रुतेऽपि त्रिदोषघ्नमुक्तम् । तद्ग्रंथो हि । चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् । हंति वातं तदम्लत्वात्पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वात्फलेभ्योऽभ्यधिकं तु तदिति ।

**कटु पाके हिमं केश्यमक्षमीषच्च तद्गुणम् ॥१५६॥**

अक्षं बिभीतकं पाके कटुकं शीतवीर्यं केशेभ्यो हितम् । तयेषत्तद्गुणं ताभ्यां हरीतकीधात्रीभ्यां समाना गुणा यस्य तत्तद्गुणं किंचिदक्षम् । ननु हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात्कथमिवोपयोगः क्रियतामिति केचित् । तान् ब्रूमहे । अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम् । तथा च धन्वंतरिराख्यत् । बिभीतकः कर्षफल इत्यादि । अन्वर्था हीयं संज्ञा । कर्षः कर्षप्रमाणं फलं यस्य स कर्षफल इति । तदेवं बिभीतकस्य फलं यत्कर्षप्रमाणं तद्ग्राह्यमित्यवतिष्ठते । हरीतक्या अपि प्रमाणं नियतमेव । तंत्रांतरेऽप्युक्तम् । न चास्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथांऽभसि । निमज्जेद्या प्रशस्तत्वाद्गुणकृत्सा प्रकीर्तिता । नवादिगणयुक्तत्वं तथैकत्वं द्विकर्षता । हरीतक्याः फले येन तेनैतच्छ्रेष्ठमुच्यत इति । तदेवं द्विकर्षप्रमाणत्वं हरीतक्याः स्थितम् । धात्रीफलस्याऽपि युक्त्या नियतप्रमाणत्वमेव । तथा चोक्तं तंत्रांतरे । अभयैका प्रदातव्या द्वावेव तु बिभीतकौ । धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्तितेति । तदेवमामलकानामर्धकर्षप्रमाणत्वमवतिष्ठते । तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ।

**इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ।**
**रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥१५७॥**

इयमीदृशी त्रिफला रसायनवरा चक्षूरोगघ्नी । रोपणी व्रणानाम् । त्वग्गदाः कुष्ठादयः । क्लेदो व्रणादीनां स्रावः । मेदश्चतुर्थो धातुः । मेहः प्रमेहः । कफः श्लेष्मा । अस्रं रक्तम् । तानि जयति या सैवम् ।

**सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।**

दीपनरोचनमित्येतत्पर्यंतम् । त्वक् च पत्रं चैला चेति द्वंद्वैकवद्भावः । एतस्य नाम त्रिजातकं त्रिसुगंधमिति । एतत्रिजातकं केसरयुक्तं चतुर्जातकमित्युच्यते । तच्च पित्तप्रकोपित्वादिगुणम् ।

**पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् १५८**
**रसे पाके च कटुकं कफघ्नं मरिचं लघु ।**

पित्तप्रकोपि तीक्ष्णादिगुणयुक्तं रसे पाके च कटुकं मरिचं कफघ्नं लघु च । कटुकरसत्वेन लब्धे पाकग्रहणमतिशयार्थम् ।

**श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली ॥**
**सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ।**
**स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा १६०**
**न तामत्युपयुंजीत रसायनविधिं विना ।**

आर्द्राऽशुष्का पिप्पली श्लेष्मला स्वादुरसा शीतवीर्या गुरुः स्निग्धा च । सा पिप्पल्यत आर्द्रायाः पिप्पल्याः सकाशाद्विपरीता । शीतविपर्ययेणोष्णा गुरुविपर्ययेण लघुः । स्निग्धविपर्ययस्त्वत्र नास्ति स्निग्धेत्युक्तत्वात् । तथा वृष्या रसे कटुश्च । कटुरसत्वाच्च कटुपाकत्वं प्राप्तमित्याह । स्वादुपाका । तथाऽनिलादीन् हंति सरा च । एवंविधामपि तां पिप्पलीमत्यर्थं न युंजीत रसायनविधिं विना । पिप्पलीं वर्धमानादिरसायनविधान एवातिशयेनोपयुंजीत ।

**नागरं दीपनं वृष्यं ग्राहि हृद्यं विबंधनुत् ॥१६१॥**
**रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।**

नागरं शृंगवेरं दीपनादिगुणयुक्तम् । ग्राहि विड्विबंधकृत् तथा हृद्यम् । विबंधनुत् स्रोतःशुद्धिकृत् ।

**तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६२ ॥**
**स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।**

आर्द्रकं शुंठीसमानगुणमेव । एतच्च त्रयं मरिचपिप्पलीशुंठ्याख्यं त्रिकटुकसंज्ञं स्थौल्यादीन् जयेत् ।

**चविका पिप्पलीमूलं मरिचाल्पांतरं गुणैः ॥१६३॥**

चविका पिप्पलीमूलं मरिचात् स्तोकविशेषगुणं गुणैर्भवति । कटुरसविपाकं कफघ्नं लघूष्णवीर्यं चेत्यर्थः । गुणशब्देन रसविपाकादयोऽपि तंत्रांतराद्गृह्यंते नतु पारिभाषिका एव गुरुलघ्वादयो व्याप्तिन्यायात् ।

**चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा ।**

चित्रको दहनसंज्ञकोऽग्निसमः । पाकेऽत्यंतोष्ण इत्यर्थः । तथा शोफादीन् हंति ।

**पंचकोलकमेतच्च मरिचेन विना स्मृतम् ॥१६४॥**
**गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ।**

एतच्च पूर्वोक्तं मरिचरहितं पिप्पलीपिप्पलीमूलचव्यचित्रकशुंठ्याख्यं पंचकोलसंज्ञं स्मृतं वैद्यके तंत्रे । तथा गुल्मादिघ्नमतिदीपनं च ।

**बिल्वकाश्मर्यतर्कारीपाटलाटुंटुकैर्महत् ॥१६५॥**
**जयेत्कषायतिक्तोष्णं पंचमूलं कफानिलौ ।**

बिल्वादीनामुपलक्षणे तृतीया । बिल्वादिभिरुपलक्षितं महत्पंचमूलं कफानिलौ जयेत् । तच्च कषायतिक्तरसमुष्णवीर्यं च । बिल्वं श्रीफलम् । काश्मर्यो गंभारी । तर्कार्यरणिका । पाटला

ताम्रपुष्पा । टुंटुकः श्योणाकः । महद्गुरु बृहदनल्पमिति पर्यायाः ।

**ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥१६६॥**
**स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।**

पंचमूलमिति वर्तते । ह्रस्वं कनीयो लघ्वल्पमिति पर्यायाः । बृहतीद्वयं क्षुद्रबृहती महाबृहती । अंशुमतीद्वयं शालिपर्णी पृश्निपर्णी च । गोक्षुरको भक्षकंटकः । इदं ह्रस्वं पंचमूलं स्वादुपाकरसं नातिशीतं नात्युष्णं सर्वदोषजिच्च ।

**बलापुनर्नवैरंडशूर्पपर्णीद्वयेन तु ॥ १६७ ॥**
**मध्यमं कफवातघ्नं नाऽतिपित्तकरं सरम् ।**

एतैः पंचभिर्मध्यमं पंचमूलम् । एतच्च कफवातघ्नं नातिपित्तकरं सरं च ।

अधुना चतुर्थं पंचमूलमाह ।

**अभीरुवीराजीवंतीजीवकर्षभकैः स्मृतम् ॥१६८॥**
**जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम् ।**

अभीरुवीरादिभिः पंचभिर्जीवनाख्यं पंचमूलं चक्षुष्यादिगुणयुक्तम् ।

पंचमं पंचमूलमाह ।

**तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ॥१६९॥**

तृणसंज्ञं पंचमूलं दर्भकासेक्षुशरशालिभिः । तच्च पित्तजित् । संग्रहे त्वधिकमुक्तम् । यथा । सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः । विषदोषहरं शीतं सकषायं रसायनम् । रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् । वयसः स्थापनं शीतं लेखनं वातपित्तजित् । ताम्रं सतिक्तमधुरं कषायं लेखनं लघु । कटुपाकरसं शीतं रोपणं कफपित्तजित् । कांस्यं कषायानुरसं विशदं लेखनं सरम् । दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम् । सतिक्तलवणं भेदि पांडुत्वकृक्रिमिवातनुत् । लेखनं पित्तलं किंचित् त्रपु सीसं च तद्गुणम् । चक्षुष्यं कृष्णलोहं तु कषायं स्वादुतिक्तकम् । लेखनं वातलं शीतं क्रिमिकुष्ठकफप्रणुत् । गात्रशैथिल्यपालित्यपांडुघ्नं शोफशोफजित् । तद्वत्तीक्ष्णं विशेषेण तद्विकापि सुदुर्जरम् । पद्मरागमहानीलपुष्परागविद्रूकाः । मुक्ताविद्रुमवज्रेंद्रवैदूर्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चक्षुष्यं धारयेत्पाणौ पाप्माऽलक्ष्मीविषापहम् । सक्षार उष्णवीर्यश्च काचो दृष्टिकृदंजनात् । शंखोदधिमलौ शीतौ कषायावतिलेखनौ । तुत्थकं कटुकं क्षारं कषायं विशदं लघु । लेखनं भेदि चक्षुष्यं कंडूक्रिमिविषापहम् । विशदो गैरिकः स्निग्धः कषायमधुरो हिमः । कफघ्नी तिक्तकटुका मनोऽह्वा लेखनी सरा । स्निग्धं कषायं कटुकं हरितालं विषप्रणुत् । कषायमधुरं शीतं लेखनं स्निग्धमंजनम् । रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम् । स्रोतोंऽजनं वरं तत्र ततः सौवीरकांजनम् । कफघ्नं तिक्तकटुकं छेदि सोष्णं रसांजनम् । सर्वदोषप्रशमनं कासमोहक्षयापहम् । कफघ्नमुष्णकटुकं शिलाजतुरसायनम् । तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित् । कषाया मधुरा रूक्षा कफघ्नी वंशरोचना । तुगा क्षीरी क्षयश्वासकासघ्नी मधुरा हिमा । कारवी कुंचिकाऽजाजी कबरी धान्यतुंबरु । अन्नगंधहरं रुच्यं दीपनं कफवातजित् । बाष्पिका कटुतीक्ष्णोष्णा कृमिश्लेष्महरा परम् । तद्वच्च राजिका विघ्नसाधनी दीपनी परम् । शूलाटोपहरा रुच्या दीप्यकः कोष्ठशूलजित् । अह्रयाः सर्षपाः स्निग्धा बाष्पिकावत्प्रकीर्तिताः । शताह्वाकुष्ठतगरसुरदारुहरेणवः । एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः । लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः । शैयकस्तिक्तमधुरः स्निग्धोष्णः कफवातजित् । बस्तिमूत्रविबंधघ्नो वृष्यो गोक्षुरको हिमः । पाचनं कफपित्तघ्नं तिक्तं शीतं विषाद्वयम् । कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचनम् । तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरहृद्दाहकामलावातरक्तनुत् । तिक्तशीतौ ज्वरहरौ लघुभूनिंबपर्पटौ । निंबस्तिक्तो हिमः कुष्ठक्रिमिपित्तकफापहः । महानिंबः परं ग्राही कषायो रूक्षशीतलः । गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः । सस्वादुः सकटुस्तिक्तः सकषायो रसायनम् । व्रण्यः स्वर्यः कटुः पाके रूक्षः सूक्ष्मोऽग्निदीपनः । क्लेदमेदोऽनिलश्लेष्मगंडमेहापचीकृमीन् । पिटकाग्रंथिशोफांश्च हंत्युष्णः स्रंसनो लघुः । शंखपुष्पी सरा तिक्ता मेध्या कृमिविषापहा । कटुतिक्तोष्णमधुरा स्निग्धा स्वादुकफापहा । पित्तास्रविषतृड्दाहकृमिघ्नं गुरु रूक्षणम् । सर्वं सतिक्तं मधुरं चंदनं शिशिरं परम् । लघु रक्तं तथोशीरं वातलं पाचनं च तत् । ज्वरातिसारवमथुरक्तपित्तकफापहम् । मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम् । गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत् । कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे । प्रलेपाज्जयतः कंडूं शोफं दुष्टव्रणं विषम् । प्रपौंडरीकं चक्षुष्यं शिशिरं व्रणरोपणम् । कषायतिक्तमधुरं रक्तपित्तप्रसादनम् । बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम् । तत्र नागबला बल्या क्षतक्षीणहिता गुरुः । तांबूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत् । भेदि संमोहकृत्पूगं कषायं स्वादु रोचनम् । जातीपत्री कटुफलं कंकोलकलवंगकम् । लघु तृष्णापहं हृद्यं वक्त्रदौर्गंध्यनाशनम् । सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः । लताकस्तूरिका तद्वन्मुखशोषहरा परम् । कषायमधुरं शीतं पद्मं पित्तकफास्रजित् । तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलम् । सचंपकं ततो न्यूनं गुणैः कोरंटकिंशुकम् । मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम् । विषपित्तकफान्नागं सिंदुवारं च तद्गुणम् । कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च । वातलं पुष्पमागस्त्यं कषायं कफपित्तजित् । बंधूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका । कफघ्नमुष्णवीर्यं च कुंकुमं व्रणशोधनम् । अवल्गुजैडगजजं बीजं वातकफप्रणुत् । आस्यावर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा । अतोऽध्वाऽग्निबलायूंषि कुर्याच्चंक्रमणं सुखम् । मारुतस्यानुलोम्यं च खुडस्तंभश्रमापहम् । अन्वर्थसंज्ञं पादत्रं बलकृच्छुक्रलं तथा । वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम् । प्रवातो रौक्ष्यवैवर्ण्यस्तंभकृद्दाहतृड्भ्रमान् । श्रमाग्निमूर्छाश्च जयेदप्रवा-

तमतोऽन्यथा। प्राग्वायुरुष्णोऽभिष्यंदी त्वग्दोषाऽर्शोविषक्रिमीन्। सन्निपातज्वरश्वासमामवायुं च कोपयेत्। याम्योऽस्रग्वातकफकृच्छीतः स्वादुः कषायकः। कषायः पश्चिमो रूक्षो लघुर्नातिविदह्यते। वातकृत्कफपित्तघ्नो मूर्छादाहभ्रमापहः। स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्सोऽनिलः। ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः। अम्लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते। आतपो भ्रमतृट्स्वेददाहमूर्छाविवर्णताः। कुर्यात्पित्तास्रवर्ह्नीश्च छाया त्वेतान्व्यपोहतीति।

संप्रति सुखग्रहणधारणार्थं संग्रहश्लोकमाह।

**शूकशिंबीजपक्वान्नमांसशाकफलौषधैः।**
**वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः॥१७०॥**

शूकधान्यादिभिर्वर्गितैर्वर्गीकृतैरयमन्नस्य लेश एकदेशः स्तोकमात्रो निर्दिष्टः। किंभूतः। नित्योपयोगो विद्यते यस्य स नित्योपयोगिकः। सदोपयोगवानित्यर्थः। मात्रायोगक्रियादेशकालादिविशेषाच्चोक्तानामपि द्रव्याणामन्यथात्वं दृष्टम्। यथा। तिलशो निषेव्यमाणं विषमपि संजायतेऽमृतसमानम्। भल्लातकः सह तिलैस्तत्कार्यपि कुष्ठमुपहंति। संस्कारेण लघुभ्यः सक्तुभ्यः सिद्धपिंडिका गुरवः। मरुवासिष्वतिसात्म्यं दधिपीलुशमीकरीराणाम्। घृतदुग्धं हेमंते मंदाग्निकफोत्तरं भवेत्प्रायः। दधिदुग्धं वातघ्नं तदजातं वातकृद्भवति। रेचनमपि च क्षीरं गव्यं संग्राहि कस्यचिद्भवति। तस्मादेवमादि स्वबुद्ध्यैवाऽभ्यूह्यम्। शास्त्रकृता तु ग्रंथगौरवभयात्स्पष्टं कृत्वा तन्नोक्तम्। प्रदेशांतरेषु युक्त्यैव प्रतिपादितमिति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामन्नस्वरूपादिविज्ञानीयोऽध्यायः षष्ठः६

---

## सप्तमोऽध्यायः।

अन्नपानस्वरूपं शरीरसंधारणार्थं प्रागुक्तम्। पथ्यमपि चान्नपानं विषाद्युपहतं रोगाय मृत्यवे वा संपद्यते। अतस्तद्रक्षणाध्यायोऽयमारभ्यते।

**अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः।**

अन्नस्य रक्षाऽन्नरक्षा सोपदेश्या यत्राध्याये सोऽप्युपचारादन्नरक्षेत्युच्यते। यथा। शिशुपालवधः काव्यमिति। शेषं व्याख्यानमत्र पूर्ववत्कार्यम्।

**राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत्।**
**सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः॥ १॥**

राजा नृपः प्राणाचार्यं वैद्यं राजगृहासन्ने निवेशयेदावासयेत्। एवंसति यो गुणः स्यात्तमाह। सर्वदेत्यादि। सर्वदा सर्वकालं रात्रौ दिवा वा नृपभवनसमीपस्थितः स वैद्यः सर्वत्रान्नपानशयनमाल्यादौ प्रतिजागृविर्दत्तावधानो भवति।

ननु किमेवं क्रियत इत्याह।

**अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः।**
**योगक्षेमौ तदायत्तौ धर्माद्या यन्निबंधनाः॥ २॥**

महीपतेः संबंध्यन्नपानं विषाद्विषसंस्पर्शाद्विशेषेणाऽतिशयेन रक्षेत्। अन्नपानमित्युपलक्षणम्। शयनवस्त्रगंधरत्नमाल्यादीनामपि परिरक्ष्यत्वात्। किमिति नृपान्नपानादि विशेषेण रक्षेदित्याह। योगेत्यादि। योगोऽन्नवस्त्रादिभिः संबंधः। क्षेमस्तेषामन्नादीनां चौराद्युपद्रवरक्षणात्। द्वावप्येतौ तदायत्तौ नृपायत्तौ स्याताम्। क्षेमशब्दोऽर्धर्चादिः। धर्माद्या इति। धर्मार्थकाममोक्षा यन्निबंधना योगक्षेमनिबंधनाः।

संप्रति विषदुष्टस्य भक्तस्य लक्षणमाह।

**ओदनो विषवान् सांद्रो यात्यविस्राव्यतामिव।**
**चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः॥ ३॥**
**मयूरकंठतुल्योष्मा मोहमूर्छाप्रसेककृत्।**
**हीयते वर्णगंधाद्यैः क्लिद्यते चंद्रकांचितः॥ ४॥**

विषवानोदनः सांद्रो विलेप्याकारः न च विस्रावयितुं शक्यते। यतः पृथक्सिक्थो न भवेत्। तथा चिरेण पच्यते बहुना कालेन पाकं याति। स च पक्वो निष्पन्नपाकः सद्य एव पर्युषितोपमो दिवसांतरितोऽतिक्रांताहोरात्रः। मयूरकंठेन तुल्य ऊष्मा बाष्पराजिर्नानावर्णा यस्य स तथोक्तः। पर्युषितोपम इति। यथा पर्युषितं भक्तं निरूष्म स्तब्धं च भवति। तथा विषदूषितं सद्योऽवतारितमपि तादृशमेव भवति। स चोपयुक्तो मोहमूर्छाप्रसेकान्करोति। मोहो वैचित्यम्। मूर्छा संज्ञाभ्रंशः। प्रसेकः श्लेष्मनिष्ठीवनम्। हीयते वर्णगंधाद्यैरित्यादिशब्देन रसस्पर्शादिपरिग्रहः। प्रक्लिन्नो भवति। सलिलमध्यक्षिप्ततैलबिंदुसदृशैश्चंद्रकैश्च पूर्णो भवति। इति चक्षुरादिभिः परीक्षा।

व्यंजनानां परीक्षामाह।

**व्यंजनान्याशु शुष्यंति ध्यामक्वाथानि तत्र च।**
**हीनातिरिक्ता विकृता छाया दृश्येत नैव वा॥५॥**
**फेनोर्ध्वराजीसीमंततंतुबुद्बुदसंभवः।**
**विच्छिन्नविरसा रागाः खांडवाः शाकमामिषम् ६**

व्यंजनानि सूपादीनि दधितक्रदाडिमादिसंस्कृतान्याशु शीघ्रं शुष्काणि भवंति। क्वाथश्च तेषां ध्यामो मलिनो भवति। तत्र चेति। व्यंजनवस्तु क्वाथेषु हीनाधिका शिरोविरहादिलक्षणविकारोपेता चात्मीया छाया प्रतिबिंबं दृश्यते। नैव वा कीदृश्यपि छाया न दृश्यते। न चेदमरिष्टं सनिमित्तत्वात्। फेनादीनां संभवः। तत्रेति प्रकृतम्। व्यंजनोपलक्षितेषु सर्वद्रवेष्वेव। विशेषेण पुनर्लवणोल्बणद्रवे फेनमाला। ऊर्ध्वराजीसंभवं तु रसकादिषु स्वयं दर्शयिष्यति। विच्छिन्नविरसा रागा इति। वि-

च्छिन्नो रक्तवर्णः क्वचित्क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति । विरसं विगतरसं तद्भवति । यथा राग एवं खांडवोऽपि । शाकमामिषं च छिन्नं स्थाने स्थाने त्रुट्यद्विरसं च ।

यत्र द्रवे यादृशी राजी संभवति तां विशेषतो दर्शयन्नाह ।

**नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ।**
**श्यावा पीताऽसिता तक्रे घृते पानीयसन्निभा॥७॥**
**काली मद्यांभसोः क्षौद्रे हरित्तैलेऽरुणोपमा ।**
**पाकः फलानामामानां पक्वानां परिकोथनम् ॥८॥**
**द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।**
**मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ॥ ९ ॥**
**माल्यस्य स्फुटिताग्रत्वं म्लानिर्गंधांतरोद्भवः ।**
**ध्याममंडलता वस्त्रे शदनं तंतुपक्ष्मणाम् ॥ १० ॥**
**धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ।**
**स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये ॥ ११ ॥**

मांसरसे विषदूषिते नीला नीलवर्तिकाकारा राजी दृश्यत इति प्रकृतेन संबंधः । एवं चाग्रेऽपि राजी दृश्यत इति योज्यम् । क्षीरमध्ये ताम्रा ताम्रवर्णा दधनि दध्नि श्यावा दृश्यते लक्ष्यते चक्षुषा । श्यावा राजीति सर्वत्र प्रकृतम् । पीताऽसिता तक्र इत्यादि । तक्रस्य मध्ये पीताऽसिता आनीलपीता राजी दृश्यत इति प्रकृतम् । घृते सलिलनिभा । काली कृष्णा मद्यस्य तोयस्य च विषदूषितस्य । क्षौद्रे हरिदिति । माक्षिकमध्ये हरिता राजी दृश्यते । तैलेऽरुणोपमेषल्लोहिताकारा । उदाहरणमात्रं त्वेतत् । मस्तुनः कपोताभा । धान्याम्लस्य कृष्णा । द्रवौषधस्य कपिला । तथा । आमानां फलानां पाकः पक्वानां परिकोथनं शाटितत्वं भवति । द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते । यथासंख्यं योज्यम् । आर्द्राणां म्लानिः । शुष्काणां वैवर्ण्यं श्यावत्वादिलक्षणम् । मृदूनां कठिनत्वं कठिनानां मृदुत्वम् । अयं स्पर्शविपर्ययः । माल्यस्य पुष्पादेः स्फुटितं विशीर्णमग्रं प्रांतो यस्य तत्स्फुटिताग्रं तद्भावस्तत्त्वम् । म्लान्युद्भवो म्लानता । गंधांतरोद्भवः स्वगंधनाशः । अन्यस्य संभवश्च । वसागंधस्य च तैले संभवः । ध्याममंडलता वस्त्रे । वस्त्र आस्तरणप्रावरणादिरूपे ध्यामानि मलिनानि मंडलानि यस्य वस्त्रस्य तद्भावस्तत्त्वम् । शदनं श्यातः पातः । केषाम् । तंतूनां रोम्णां पक्ष्मणां च पार्श्ववर्तिनां वस्त्रसंबंधिनामेव । धातुर्लोहादिः । मौक्तिकं मुक्ता । काष्ठं दारु । अश्मा पाषाणः । रत्नानि वज्रमरकतादीनि । आदिशब्देन शंखशुक्त्यादिपरिग्रहः । तेषु धात्वादिषु मलाक्तता पंकोपदिग्धता । स्नेहहानिस्तेषामेव धात्वादीनां स्निग्धत्वव्यपगम इत्यर्थः । एवं स्पर्शप्रभाहानी । मृन्मये तु भांडे विषदूषिते निष्प्रभे सप्रभत्वम् ।

इदानीं यो विषं ददाति तस्य लक्षणमाह ।

**विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ।**
**स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृंभते ॥१२॥**

विषं ददातीति विषदो नरः श्यावं शुष्कमास्यं मुखं यस्याऽसौ श्यावशुष्कास्यः श्यामशुष्कवदनः । किं करोति । विलक्षो वीक्षते दिशः । दिश इति समंतादित्यर्थः । विलक्ष इति लज्जावान् । वीक्षतेऽवलोकयति । किंच स्वदोषशंकया स्वेदवान्वेपथुमान् । त्रस्तः शरीरेण जातकंपत्वात् । भीतश्चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात् । स्तंभकुड्यादिभिरात्मानमंतर्धापयितुमिच्छन्नितस्ततो गच्छंश्च स्खलितगतिर्भवति तत आह । स्खलति । पुनःपुनश्च जृंभां करोति तेनाह । जृंभते । उपलक्षणं चेदं तत्तत्कालभाविनीनां क्रियाणाम् । तद्यथा । अस्थानहासी । पृष्टोऽसंबद्धमुत्तरं ददाति नैव वा वदति । विवक्षुर्मुह्यत्यंगुलीः स्फोटयति । शिरः कंडूयते । ओष्ठौ लेढि । भुवं विलिखति । क्रियासु त्वरते । विपरीतमाचरति । स्वभूमौ च नावतिष्ठते ।

इदानीं सविषस्याऽग्निप्रक्षेपणादिकमुपदिशन्नाह ।

**प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ।**
**शिखिकंठाभधूमार्चिरनर्चिर्वोग्रगंधवान् ॥ १३ ॥**

सविषमन्नं प्राप्याऽग्निः स्फुटत्यति चटचटायतेऽतिशयेनेत्यर्थः । एकावर्त इति । एक एवावर्तो यस्य । संहतसर्वज्वालत्वादसावेकावर्तः । शिखिकंठाभधूमार्चिः शिखी मयूरस्तस्य कंठ इंद्रायुधवदनेकवर्णस्तस्येवाऽभा ययोर्धूमार्चिषोस्ते शिखिकंठाभे तादृशे धूमार्चिषी यस्याग्नेरसौ शिखिकंठाभधूमार्चिरिंद्रायुधवदनेकवर्णधूमज्वाल इतियावत् । अनर्चिर्वाऽज्वाल इति वा । उग्रगंधवानिति । कुणपगंधवान् । निदर्शनं चेदम् । धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलता अप्युत्पादयति ।

स्नेहलवणयोगादप्यग्निरेवं स्यादतः पक्षिमृगैरपि परीक्षाप्रकारांतरं दर्शयन्नाह ।

**म्रियंते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् ।**
**उत्क्रोशंति च दृष्ट्वैतच्छुकदात्यूहसारिकाः ॥१४॥**
**हंसः प्रस्खलति ग्लानिर्जीवंजीवस्य जायते ।**
**चकोरस्याऽक्षिवैराग्यं क्रौंचस्य स्यान्मदोदयः १५**
**कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ।**
**उद्वेगं याति मार्जारः शकृन्मुंचति वानरः ॥१६॥**
**हृष्येन्मयूरस्तद्दृष्ट्वा मंदतेजो भवेद्विषम् ।**
**इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ॥ १७ ॥**
**यथा तेन विपद्येरन्नपि न क्षुद्रजंतवः ।**

मक्षिकाः सविषेऽन्ने न निलीयंते । निलीनास्तु सद्यो विपद्यंते । विषदुष्टाहारात्तु काकः क्षामस्वरो भवेत् । उत्क्रोशंत्युच्चैर्विक्रोशंति दर्शनादेव शुकदात्यूहसारिकाः । विषदर्शनमात्रादेव च

हंसगतिः स्खलति । ग्लानिर्जीवंजीवस्य जायते । उपलक्षणं चेदम् । मरणमपि कस्यचिन्न ग्लानिः । एवं जीवंजीवकस्य चकोरस्याऽक्षिविरक्तता । दृष्ट्वैतदिति सर्वत्र योजनीयम् । क्रौंचस्य स्यान्मदोदयो मदोत्पत्तिः । कपोतपरभृद्दक्षचक्रवाकास्त्यजंत्यसून् प्राणान्विजहति चात्यर्थं मरणदुःखाभ्याहताः । उद्विजतेऽत्यर्थं मार्जारः । वानरस्तु शकृत् पुरीषं मुंचति । उपलक्षणं चेदम् । पृष्ठतोमुखो रोदिति च । तथा हृष्येन्मयूरस्तद्दृष्ट्वा । तदिति सविषान्नपरामर्शः । दृष्ट्वेत्यनुवर्तमानेऽपि पुनर्दृष्ट्वेति वचनं सर्वत्र मध्ये संप्रत्ययार्थमाद्यंताभ्यां गृहीतत्वात् । विषं चास्य दर्शनादेव मंदतेजस्कं भवति । एवं पूर्वोक्ताभिः परीक्षाभिरन्नं भक्तादि विषवद्विषसंसृष्टं ज्ञात्वा त्यजेदेतत् । कथम् । प्रयत्नतः प्रयत्नेन । तमेव प्रयत्नं दर्शयन्नाह । यथा येन प्रकारेण त्यज्यमानेन क्षुद्रजंतवो मक्षिकादयोऽपि तेन विषेण न विपद्येरन् न नश्येयुस्तथा त्यजेत् । क्षुद्रजंतवोऽपि किंपुनर्महांत इत्यपिशब्दार्थः ।

**स्पृष्टे तु कंडूदाहोषाज्वरार्तिस्फोटसुप्तयः ॥१८॥**
**नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः ।**
**शस्तास्तत्र प्रलेपाश्च सेव्यचंदनपद्मकैः ॥ १९ ॥**
**ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ।**

सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति कंड्वादयः शोफांताः स्युः । ऊषा प्रादेशिको दाहः । सर्वदाहस्तु दाहः । अर्तिः शूलम् । सुप्तिरंगस्याऽचैतन्यम् । नखरोमच्युतिर्नखशातो रोमशातः। ननु नखशातः केवलं वातरोगेषु पठितः । विषे च सन्निपातकोप उक्तः । तत्कथमेतदुच्यते । जात्यंतरभूत एवायं विषनिमित्त इत्यदोषः । तत्र तेषु विषसंस्पर्शजेषु कंड्वादिरोगेषु सेकाद्याः शस्ता यतो विषनाशनाः । प्रलेपाश्च हिताः । कैरित्याह । सेव्यादिभिः।

**लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् २०**
**दंतहर्षो रसाज्ञत्वं हनुस्तंभश्च वक्रगे ।**
**सेव्याद्यैस्तत्र गंडूषाः सर्वं च विषजिद्धितम् ॥२१॥**

वक्रगे मुखप्राप्ते लाला भवति । जिह्वौष्ठयोर्जाड्यं भवति । ऊषादयश्च स्युः । रसाज्ञत्वं जिह्वा रसं न चेतयत इत्यर्थः । हनोः स्तंभश्च स्यात् । तत्र सेव्याद्यैः पूर्वोक्तैर्गंडूषा हिताः । सर्वं चान्यदपि यद्विषं जयति तद्धितम् ।

**आमाशयगते स्वेदमूर्छाध्मानमदभ्रमाः ।**
**रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ २२ ॥**
**बिंदुभिश्चाचयोऽगानां पक्वाशयगते पुनः ।**
**अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ २३ ॥**
**तंद्रा कृशत्वं पांडुत्वमुदरं बलसंक्षयः ।**
**तयोर्वांतविरिक्तस्य हरिद्रे कटभीं गुडम् ॥२४॥**
**सिंदुवारितनिष्पाववाष्पिकाशतपर्विकाः ।**
**तंडुलीयकमूलानि कुकुटांडमवल्गुजम् ॥ २५ ॥**
**नावनांजनपानेषु योजयेद्विषशांतये ।**

विषान्ने आमाशयं प्राप्ते स्वेदादयः स्युः । हृदयस्य रोधनं स्तंभः । बिंदुभिर्नानावर्णैरंगानामाचयः समंताचयनम् । पक्वाशयगते तु विषेऽनेकवर्णं वमति । मूत्रयत्यतिसार्यते । तंद्रादयश्च भवंति । तयोरामपक्वाशयगतयोर्विषयोर्वर्तमानस्य पुंसो यथायोगं वातविरिक्तस्य हरिद्रे कटभीत्यादिकमौषधं नावनादिषु योजयेत्। तत्र मदनफलालाबुकुंभीकोशातकीफलैर्मधुयुक्तैर्निष्पावांबुयुक्तैर्वमनम् । तस्य स्नेहयित्वा विरेचनम् । पक्वाशयगते वमितस्यैव नीलिनीफलयुक्तेन घृतेन विरेचनमेव ।

**विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ २६ ॥**
**सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।**
**शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥२७॥**

विषभुक्ताय पुंस ऊर्ध्वमधश्च शुद्धाय काले सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात् । किंभूतम् । हृद्विशोधनं हृदयं शोधयदित्यर्थः । विषभुक्तायेत्याहिताग्न्यादित्वात्परनिपातः । काल इत्युपलक्षणम् । देशसात्म्याग्न्यादीन्व्यपेक्षेतेत्यर्थः । शुद्धे हृदि स्वलिंगे ज्ञाते ततोऽनंतरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं दापयेत्।

हेम्नि दत्ते सति यो गुणः स्यात्तमाह ।

**न सज्जते हेमपांगे पद्मपत्रेऽम्बुवद्विषम् ।**
**जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः॥२८॥**

हेम पिबतीति हेमपस्तस्यांगे विषं न सज्जते । कथम् । पद्मपत्रे जलमिव । तस्य च हेमपस्य विस्तीर्णमायुर्जायते । एष विधिर्गरेऽपि स्मृतो यो विष उक्तः । सज्जत इत्यत्रात्मनेपदं चिंत्यम् ।

**विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ।**

विरुद्धं चाहारं विषगरोपमं विद्यात् । विषगरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः । तथा चोक्तं संग्रहे । विस्फोटगुल्ममदविद्रधिमेहयक्ष्मतेजोबलस्मृतिमतींद्रियचित्तनाशम् । कुर्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युमिति ।

तदेव विरुद्धभोजनमाह ।

**आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ २९ ॥**
**विरुध्यते सह बिसैर्मूलकेन गुडेन वा ।**
**विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ३०**

आमिषं मांसमानूपं महामृगवारिचरवारिशयाख्यं माषादिभिः सप्तभिः सह विरुध्यते । आनूपेष्वपि मध्ये विशेषादतिशयेन पयसा सह मत्स्या विरुध्यंते । यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यंदिनी । शीतोष्णयोगाच्च परस्परविरुद्धे । मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यंतविरुद्धः । स पुनः शकलीरो लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति । सोऽत्यभिष्यंदितमत्वात्सुतरां विरुद्धः । एष चाहारोऽनिर्दिष्टविका-

रकारी यथोक्तान् विस्फोटादीन् करोति । कालांतरेण च चिकित्सां विना प्राणानपि हरति । कश्चिच्च विरुद्धाहारो निर्दिष्टविकारकारी । यथोपोदकातिसारायेति ।

**विरुद्धमम्लं पयसा सह सर्वं फलं तथा ।**

आम्लं द्रव्यं पयसा सह सर्वं विरुद्धम् । सर्वग्रहणं द्रवाद्रवग्रहणार्थम् । द्रवं कांजिकादि । अद्रवं चुक्रिकादिकमित्यर्थः । अन्यथा पयसो द्रवसमानजातीयत्वात्कांजिकायेव द्रवद्रव्यं विरुध्यते न चुक्रिकादिकमपि । ननु तृतीययैव सहार्थो लब्ध एव । यथा । वाराहं श्वाविधा नाद्यादित्यत्र । ततः किं सहशब्देन । सत्यमेतत् । सहग्रहणं तु नियमार्थम् । सहैकध्यमम्लेनोपयुज्यमानं विरुद्धम् । यदा त्वम्लेन गोरसादिना क्षीरशाकसंज्ञव्यंजनकरणार्थं पयः संस्क्रियते तदा तस्य द्रव्यांतरत्वापत्तेर्विरोधो नास्ति । तथा दधिक्षीरादिना घृतं पच्यते तत्राऽप्यविरोध एव । द्रव्यांतरत्वात् । पूर्वकस्याऽपि सहशब्दस्यैवंप्रायमेव प्रयोजनमभ्यूह्यमिति । अपि च । क्षीरे भुक्त उत्तरे कालेऽप्यम्लं न भोज्यमिति प्रतिपादनार्थं च सहग्रहणम् । तथा चोक्तं संग्रहे । सर्वं चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्धमिति । फलं तथेति । फलमक्षोडादि च पयसा सह विरुद्धम् । सर्वशब्दः सर्वत्र न संबंधनीयो यतो न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धमपि तु किंचिदेव । तथा च मुनिः परिसंख्ययैवाऽपठत् । तथा आम्राम्रातकलकुचकरमर्दमोचदंतशठबदरकोशाम्रभव्यजांबवकपित्थतित्तिडीकपालेवताक्षोडपनसनालिकेरदाडिमामलकान्येवंप्रकाराणि चान्यानीति । तस्मान्न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धं किंतु मुन्युक्तमेव ।

**तद्वत्कुलत्थवरककंगुवल्लमकुष्टकाः ॥ ३१ ॥**

तद्वदिति । फलवत् कुलित्थादयः पयसा सह विरुद्धाः । वरको व्रीहिभेदः । वरकोद्दालकेति प्रागुक्तेः । वल्लमकुष्टकौ शिंबीधान्यविशेषौ । उपलक्षणं चेदम् । माषनिष्पावावपि हि विरुद्धौ पयसा सहेति संग्रहे कथितम् ।

**भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ।**

भक्षयित्वेति । हरितकं मूलकं कुठेरादि भुक्त्वा पयस्त्यजेन्न पुनः शाकम् । मूलकादि स्निग्धस्विन्नं शाकसाधनेन साधितं भुक्त्वा क्षीरं न भक्षयेत् । एतस्मादेव च ज्ञापकान्मूलकादीनामुभयरूपत्वं वेद्यम् । हरितकत्वं च । तथा मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाऽभविष्यत् ततो हरितकं मूलकादि भक्षयित्वेति तंत्रकृन्नावक्ष्यत् । तस्मान्मूलकस्य हरितकत्वं च ज्ञेयम् । लशुनेन सह क्षीरस्य प्रयोगो य उक्तः । साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलमिति । स न विरुद्धः । अग्न्यादिसंपर्काद्द्रव्यांतरत्वोत्पत्तेः ।

**वाराहं श्वाविधा नाद्याद्दध्ना पृषतकुक्कुटौ ॥३२॥**
**आममांसानि पित्तेन माषसूपेन मूलकम् ।**
**अविं कुसुंभशाकेन बिसैः सह विरूढकम् ॥३३॥**
**माषसूपगुडक्षीरदध्याज्यैर्लकुचं फलम् ।**
**फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥३४॥**
**कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ।**
**सिद्धां वा मत्स्यपचने पचने नागरस्य वा ॥३५॥**
**सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम् ।**

श्वाविधा सेधामांसेन सह वाराहं मांसं नाद्यात् । अग्रेऽपि नाद्यादिति क्रियायोगो यावत्यजेदिति क्रियांतरम् । पृषतकुक्कुटौ दध्ना सह नाद्यात् । आमान्यपक्वानि मांसानि पित्तेन सह । माषसूपेन सह मूलकम् । अविं मेषं कुसुंभशाकेन सह । विरूढकमंकुरितधान्यं बिसैः सह । माषसूपादीनामन्यतमेन सह लकुचफलम् । कदल्याः फलं तक्रेण सह दध्ना वा । तालफलेन वा कदलीफलम् । कणोषणाभ्यां सह काकमाचीम् । केवलेन माक्षिकेण सह काकमाचीं गुडेन वा सह काकमाचीम् । मत्स्याः पच्यंते यस्मिन् भांडे तत्र वा सिद्धां काकमाचीं नाद्यात् । नागरस्य वा पचने शुंठीभांडे सिद्धां काकमाचीम् । तथाऽन्यत्र वा भाजने यथारुचिसिद्धां कामात्तां काकमाचीं रात्रिमुषितां पर्युषितां नाद्यात् ।

**मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत् ३६**
**कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे ।**

मत्स्या निस्तल्यंते भृज्यंते येन स्नेहेन स मत्स्यनिस्तलनस्नेहस्तत्र साधिताः पिप्पलीस्त्यजेत् । विरुद्धत्वात् । नाद्यादिति प्रकृतेऽपि त्यजेदिति वचनं न केवलं नाद्यात्लेपादिकमपि न कुर्यादिति प्रतिपादनार्थम् । उत्तरत्राऽपि त्यजेदित्यस्यानुवृत्तावेतदेव तात्पर्यम् । कांस्यपात्रे दशरात्रमुषितं सर्पिस्त्यजेत् । दशाहादर्वागपि विरुद्धमेव । अरुष्करे भल्लातकविषय उष्णमन्नपानादिकं त्यजेत् । तथा पेयं नोष्णोपचारेणेत्यर्थेन मद्यस्योष्णं निषिद्धम् । तथोष्णमुष्णार्तमुष्णे च युक्तं चोष्णैरिति माक्षिकस्य । तथा दध्नो नैवाद्यान्निशि नैवोष्णं वसंतोष्णेत्यादिभिः । तस्मान्मधुमद्यदधिष्वत्युष्णं विरुद्धमित्यत्राऽचार्यो युक्त्या प्रत्यपादयत् । संग्रहे तु स्पष्टं कृत्वोक्तम् । मद्यमधुदधिभल्लातकेषु चोष्णमिति ।

**भासो विरुध्यते शूल्यः कंपिल्लस्तक्रसाधितः॥३७॥**

भासः पक्षिविशेषः शूल्यो विरुध्यते । शूले संस्कृतो भासः कृतबस्तेर्विरुध्यत इत्यर्थः । शूल्य इति शूलात्पाक इति यत् । कंपिल्लस्तक्रसाधितो विरुध्यते । संग्रहे चातोऽधिकमप्युक्तम् । यथा। सौवीरेण तिलशष्कुली । क्षीरेण लवणम् । नवनीतेन शाकम् । नवपुराणमामपक्वं चैकध्यम् । तथा सलिलावगाहः सहसोष्णाभितप्तस्य त्वग्दृष्ट्युपघाताय तृष्णाभिवृद्धये च । तथैव पयःपानं

रक्तपित्ताय । शरीरेणायस्तस्य सहसाभ्यवहारश्छर्दिषे गुल्माय वा । वाचा त्वायस्तस्य स्वरसादायेति ।

**ऐकध्यं पायससुराकृशराः परिवर्जयेत् ।**

एकत्र पायससुराकृशरास्त्यजेत् । ऐकध्यमिति एकाद्वो ध्यमुञिति ध्यमुञ् ।

**मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ ३८ ॥
एकत्र वा समांशानि विरुध्यंते परस्परम् ।**

मध्वादीनि समांशानि तुल्यप्रमाणानि मिथो विरुध्यंते । कथम् । द्वे वा त्रीणि वैकत्र वा सर्वाणि । यथा । मधुसर्पिषी । मधुवसे । माक्षिकतैले । माक्षिकोदके । त्रीणि त्रीणि यथा । मधुसर्पिर्वसेत्येवमादि । ननु यद्येवंविधो विरोध उच्यते तत्कथमगस्त्यलेहे कुडवं च पृथग्घृतात् । तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकादिति तैलघृतमधूनां तुल्यांशानां प्रयोगः । ब्रूमः । केवलानां मध्वादीनां समांशानामुपयोगो विरुद्धो न तु द्रव्यांतरसंयोगेन । तेषां संयोगसंस्कारादिवशाद्विशिष्टगुणांतरोत्पत्तिर्दृष्टा । तस्मादगस्त्यलेहादौ द्रव्यांतरे संयोगादिवशादविरोध एव ।

**भिन्नांशेऽपि मध्वाज्ये दिव्यवार्यनुपानतः ॥३९॥
मधुपुष्करवीजं च मधुमैरेयशार्करम् ।
मंथानुपानः क्षैरेयो हारिद्रः कटुतैलवान् ॥४०॥**

भिन्नांशेऽपि मध्वाज्ये दिव्यवार्यनुपानतोऽनुपानेन विरुध्येते । तृतीयार्थे तसिप्रत्ययः । अपिशब्दान्न केवलं समांश इत्यर्थः । मधु माक्षिकं पुष्करबीजं चैकध्यं विरुध्यते । तथा मधु मार्द्वीकं मैरेयं खर्जूरासवं शार्करं शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते । क्षैरेयः पायसो मंथानुपानो विरुद्धः । मंथोऽनुपानं यस्य स एवम् । क्षैरेय इति क्षीराड्ढञ् । हारिद्रः कुप्रसवः शाकविशेषः सार्पच्छत्रानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः ।

**उपोदकातिसाराय तिलकल्केन साधिता ।**

उपोदका तिलकल्केन साधिताऽतिसाराय । तादर्थ्ये चतुर्थ्यत्र । अर्थो निमित्तम् । तस्मै इदं तदर्थमेव तदर्थं तादर्थ्यम् । तेनातीसारकरणमित्ययमर्थो जायते ।

**बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥४१॥
भृष्टा वराहवसया सैव सद्यो निहंत्यसून् ।**

बलाका पक्षिजातिर्वारुण्या प्रसन्नया युक्ता विरुद्धा । कुल्माषैर्नातिस्विन्नमुद्गादिभिश्च सह विरुध्यते । सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव प्राणान् मारयति ।

**तद्वत्तित्तिरिपत्राढ्यगोधालावकपिंजलाः ॥ ४२ ॥
ऐरंडेनाग्निना सिद्धास्तत्तैलेन विमूर्छिताः ।**

तित्तिर्यादय ऐरंडेनाग्निना सिद्धास्तत्तैलेनैरंडतैलेन विमूर्छिता बहुशो भृष्टास्तद्वद्बलाकावत्सद्यो जीवितहराः । पत्राढ्यो मयूरः ।

**हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ॥ ४३ ॥
हारिद्रवह्निना सद्यो व्यापादयति जीवितम् ।**

हारीतस्य पक्षिविशेषस्य मांसं हारिद्रशूलके प्रोतमासक्तं च तत्पाचितं च हारिद्राग्निना सद्यो जीवितं हंति ।

**भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४४ ॥**

तदेव हारीतमांसं भस्मपांशुपरिध्वस्तं समाक्षिकं विरुद्धम् । भस्म च पांशुश्च भस्मपांशू भस्मरेणू ताभ्यां परिध्वस्तं धूसरितम् । सिद्धसारे चोक्तम् । न जातु कटुतैलेन भृष्टामद्यादुपोदकाम् । प्रियंगुकल्कास्निग्धांगः पायसं न समाचरेदिति ।

द्रव्याणामानंत्यात्प्रतिपदोक्त्याऽशेषविरुद्धसंग्रहः कर्तुमशक्य इति तत्संग्रहार्थं व्यापि लक्षणमाह ।

**यत्किंचिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः॥४५॥**

यत्किंचिदन्नपानौषधं वा दोषमुत्क्लेश्य स्वस्थानात्संचलय्य न हरेद्बहिर्न निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । शुद्धिरत्रेष्टा । अत्र विरुद्धाहारकृते विकारे शुद्धिर्वमनविरेकादिरूपेष्टा श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणात्तन्निर्हारे चारोग्योत्पत्तिः । शमो वेति । न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैः । तेषां वैरोधिककोपितदोषाणां तत्कृतानां वा विस्फोटादीनां विकाराणां विरोधिभिः प्रतिपक्षभूतैरौषधैः ।

न च शोधनशमनरूप एवोपक्रमोऽत्रेत्याह ।

**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याऽभिसंस्कृतिः ।**

तैरेव वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं या शरीरस्याऽभिसंस्कृतिः सा च विरुद्धाहारकृते विकारे प्रशस्तेति । यथा माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन संततशीलनादभिसंस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तं सद्विकर्तुमशक्तम् । एतदुक्तं भवति । विरुद्धप्रतिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्यं ग्राहितो यथा विरुद्धमपि द्रव्यं विकारं कर्तुं नालम् ।

**व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ४६
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ।**

व्यायामो विद्यते येषामित्यर्श आदित्वादच् । वयःस्थास्तरुणाः। बलेन शालितुं श्लाघितुं शीलं येषां ते बलशालिनः । स्निग्धाः स्निग्धवृष्याहारसात्म्याः । व्यायामिनां विरोध्यपि भोजनं न पीडायै न रोगोत्पत्तये । एवं स्निग्धादीनां प्रत्येकं संबंधः कार्यः । केचिद्व्यायामीति पठंति । तथा विरुद्धमप्यन्नं यदभ्यासात्सात्म्यं

सात्मीभूतं तथाऽल्पमल्पमात्रया च यद्भोजनं तच्च विरुद्धमपि न पीडायै इति योज्यम्।

अथ यदपथ्यमपि सात्म्यतां प्राप्तं तत्किं त्याज्यं नवा। कथं च त्याज्यं कथं च पथ्यं भोज्यमित्याह।

**पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत्॥ ४७॥**

अपथ्यहितमन्नं पानं वा यल्लंघनप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत्पादेन चतुर्थांशेन त्यजेदहितफलत्वात्। तद्धि शरीरोचितमप्यपथ्यत्वादुदर्के दोषाय संपद्यते न गुणाय। यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनाऽपि त्यज्यमाने शरीराबाधा शक्यते वह्निमांद्याद्वा तदा पादपादेन वा षोडशांशेन त्यजेदिति वाशब्दार्थः।

**निषेवेत हितं तद्वदेकद्वित्र्यंतरीकृतम्।**

तेन तुल्यं वर्तते तद्वत्। तेनैव क्रमेण पादेन पादपादेन वा हितं निषेवेत शीलयेत्। कथमेतद्द्वयमप्यपथ्यरूपं त्याज्यं निषेव्यं चेत्याह। एकेत्यादि। एकश्च द्वौ च त्रयश्च तैरंतरीकृतम्। एकद्वित्रिभिरन्नकालैर्व्यवधानं कृत्वाऽपथ्यं पादेन पादपादेन वा त्यजेत्। एकद्वित्र्यंतरीकृतमिति क्रियाविशेषणत्वादत्र नपुंसकलिंगत्वम्। अधुनैतदेव स्पष्टीकृत्योच्यते। अपथ्यापाटलव्रीह्यादेरभ्यस्तात्पदमेकं त्यक्त्वाऽनुचितात्पथ्याद्रक्तशाल्यादेस्तमेव पादं दत्वा चतुष्पात्त्वं संपाद्य योज्यम्। एवमन्नकालमेकमतिवाहयेत्। एवं पादेनापथ्यमभ्यस्तं त्यक्तं भवति। पथ्यं चानुचितं निषेवितं भवति। तथा द्वितीयेऽन्नकाले सर्वमपथ्यं योजनीयम्। एवमेकेनान्नऽकालेनापथ्यपादोंऽतरीकृतः। ततस्तृतीयेऽप्युचितादपथ्यात्पादद्वयमपास्यानुचितात्पथ्यात्पादद्वयमुपयुज्य ततश्चतुर्थे सर्वमपथ्यं भोज्यं पंचमे च। एवमन्नकालद्वयेन पथ्यपादद्वयसहितमपथ्यपादद्वयमंतरीकृतम्। ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात्पादत्रयमनुचितात्पथ्याद्भुक्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम्। एवमन्नकालत्रयेणापथ्यमंतरीकृतम्। ततो दशमेऽन्नकाले सर्वं पथ्यं सेवनीयम्। एवं पादपादेनाप्ययमेव क्रमः। स्पष्टार्थं च दिक्प्रदर्श्यते। तथा यवकादेः षोडशांशं त्यक्त्वाऽनुचिताच्छाल्यादेः पथ्यात्षोडशांशमेव दत्त्वा चतुष्पात्त्वं संपाद्य भोज्यम्। एवमपथ्यमभ्यस्तं पादपादेन त्यक्तं भवति पथ्यं चानुचितं निषेवितं भवति। द्वितीयेऽन्नकाले सर्वमपथ्यं सेव्यम्। एवमेकेनापथ्यषोडशांशोंऽतरीकृतः। ततस्तृतीयेऽप्युचितादपथ्यात्पादपादद्वयमपास्याऽनुचितात्पथ्यात्पादद्वयं दत्त्वा चतुष्पात्त्वं संपाद्य सेव्यम्। ततश्चतुर्थे पंचमे वाऽन्नकाले सर्वमपथ्यं भोज्यम्। एवं कालद्वयेन पादपादद्वयमपथ्यस्यांतरीकृतम्। ततः षष्ठेऽन्नकालेऽनुचितात्पथ्यात्पादपादत्रयमुचितादपथ्यात्पादपादास्त्रयोदशेति भोज्यम्। ततः सप्ताष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम्। एवं कालत्रयेणांतरीकृतः। ततो दशमेऽन्नकाले पथ्यादनुचितात्पादपादाश्चत्वारः। अपथ्यपादपादा द्वादशेति भोज्यम्। तत एकादशे सर्वमपथ्यं भोज्यम्। तत एकेनान्नकालेनांतरीकृतम्। एवमन्नकालद्वयत्रयांतरितं च तावद्योज्यं यावत्पथ्यस्य षोडशपादाः सेव्यतया संपद्यंते।



एवमनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवंति पथ्यगुणाश्च संवर्धिताः स्थिरतां प्राप्नुवंतीत्यत आह।

**अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा॥४८॥**
**सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा।**

हि यस्मात्सहसा क्रममिममनालोच्याऽन्यथैवोक्तविध्यतिक्रमेणाऽपथ्यमपि त्यक्तं सात्म्यं विकाराय जायते पथ्यमेव वा सहसा शीलितमसात्म्यं विकाराय जायते। सात्म्यासात्म्याभ्यां विकारः सात्म्यासात्म्यविकारस्तस्मै। क्लृपि संपद्यमाने चतुर्थीति चतुर्थी। क्रमेण त्वपथ्यत्यागपथ्यशीलने विधीयमाने गुणाय स्यातामिति दर्शयति।

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः॥४९॥**
**नाप्नुवंति पुनर्भावमप्रकंप्या भवंति च।**

दोषा अपथ्याभ्यासजाः क्रमेण पूर्वोक्तेनापचिताः क्षयं नीता गुणाश्च पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिता वृद्धिं नीताः संतः पुरुषाणां यथासंख्यमपुनर्भावं यांति दोषाः। गुणाश्चाप्रकंप्याः स्थिरा भवंति।

सांप्रतमहिताहारसेवनं सदा त्याज्यमिति सद्युक्तिं दर्शयति।

**अत्यंतसन्निधानानां दोषाणां दूषणात्मनाम्॥५०॥**
**अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति।**

दोषाणामहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पंडितो नार्हति न युज्यते। किंभूतानाम्। अत्यंतमतिशयेन संनिधानं निकटत्वं येषां दोषाणां त एवं तेषां दूषणात्मनां दूषणस्वभावानाम्।

एतत्प्रसंगेन चेदमाह।

**आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः॥ ५१॥**
**शरीरं धार्यते नित्यमागारमिव धारणैः।**

शयनं स्वप्नः। ब्रह्मचर्यं स्त्रीणामसेवा। आहारादीनां द्वंद्वः। एतैर्युक्त्या प्रयोजितैः शरीरं सततं धार्यते। किमिव कैः। आगारं गृहमिव धारणैः स्तंभैर्यथा।

**आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते॥ ५२॥**

तत्र तेषु त्रिषु मध्यादाहारो वर्णित ऋतुचर्यायां द्रवान्नस्वरूपविज्ञानीययोः। तत्र तत्र च शास्त्रकारो ज्वरचिकित्सादौ च वक्ष्यति।

शयनब्रह्मचर्ययोस्त्विहैव विधिं वक्तुकाम आह।

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्।**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च॥ ५३॥**

निद्रायत्तं निद्राधीनं सुखमारोग्यं दुःखं रोगस्तथा पुष्ट्यादि

च। न च जीवितमिति संबंधः। अजीवितेन योगो भवतीत्यर्थः।

सांप्रतं दुष्टनिद्रां निर्दिशति।

**अकालेऽतिप्रसंगाच्च न च निद्रा निषेविता।**
**सुखायुषी पराकुर्यात्कालरात्रिरिवाऽपरा॥ ५४॥**

अकाले निषेविताऽति च निषेविता किंचिदेव निषेविता निद्रा सुखमारोग्यलक्षणमायुश्च जीवितं ते सुखायुषी पराकुर्यान्नाशयेत्। केव। अपरा कालरात्रिरिव।

अथ निद्रागुणप्रसंगेन तत्प्रतिपक्षभूतस्य जागरणस्याऽपि गुणमाह।

**रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।**
**अरूक्षमनभिष्यंदि त्वासीनप्रचलायितम्॥ ५५॥**

अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ। तेन रात्रावपि जागरणं रूक्षम्। दिवा त्वाग्नेयमत्यर्थं रूक्षं कालेनाहितबलत्वात्। तथा प्रस्वपनं दिवाऽपि स्निग्धम्। रात्रौ तु सौम्यकालेऽतिशयेन स्निग्धमित्यवतिष्ठते। अपिशब्दाभ्यामंतरेण तु रात्रावेव जागरणं रूक्षं दिवा तु स्निग्धमित्यर्थौ जायते। व्यवच्छेद्यफलत्वाद्वाक्यानाम्। एवं दिवस एव स्निग्धं प्रस्वपनं रात्रौ तु रूक्षमिति। नचैतद्युज्यते। ततो दिवा जागरणं सदा रूक्षं नाभविष्यत् तत्कथमिदमुपपत्स्यते। बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि। विषार्तः कंठरोगी च नैव जातु निशास्वपीति। येषां ह्यपतर्पणमेव हितं यच्चापतर्पणं तदवश्यं रूक्षम्। तस्मादपतर्पणस्वभावं जागरणमेव सेव्यम्। तथा। ग्रीष्मे वायुचयादानरौक्ष्यराज्यल्पभावतः। दिवा स्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः। मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः। क्रोधशोकभयैः क्लांतान् श्वासहिध्मातिसारिणः। वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान्। अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि। तदेतेषां संतर्पणार्हत्वात्संतर्पणमेव हितम्। यच्च संतर्पणं तदवश्यं स्निग्धम्। तस्मादेतैः संतर्पणस्वभावमेव सदा प्रस्वपनं सेव्यम्। एवं च पूर्वमेव च व्याख्यानं युक्तम्। प्रस्वप्नजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम्। यथा रूक्षं द्रव्यं गुग्गुल्वादि कफमेदःप्रभृतीन् सौम्यान् भावान् क्षपयति। तथैव यदा जागरणमपि तत्क्षपयद्दृष्टं तदा तद्रूक्षकार्यकरणादरूक्षमपि रूक्षमित्युपचर्यते। तथा प्रस्वपनादर्वाक्कफमेदःप्रभृतीनां सौम्यानां भावानां स्वहेतोरुत्पादस्तथा नोपलभ्यते। यथा प्रस्वपनादनंतरं तस्मात्प्रस्वपनमस्निग्धमपि स्निग्धमित्युपचर्यते। प्रचल इवाचरतीति क्यङंतान्निष्ठा। आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितं नतु प्रस्वपनं सर्वसर्विकया। येन स्नेहनहेतुः स्यात्। रूक्षकार्याकरणादरूक्षम्। अनभिष्यंदि तु विशेषेण। आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थः।

यदि स्निग्धत्वादभिष्यंदी दिवास्वप्नस्तत्किं कदाचिदपि न कार्य इत्याह।

**ग्रीष्मे वायुचयादानरौक्ष्यराज्यल्पभावतः।**
**दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः॥५६**
**मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः।**
**क्रोधशोकभयैः क्लांतान् श्वासहिध्मातिसारिणः॥५७**
**वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान्।**
**अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ५८**
**धातुसाम्यं तथा ह्येषां श्लेष्मा चांऽगानि पुष्यति।**

ग्रीष्मकाले दिवास्वप्नो हितः। यतस्तस्मिन्काले पवनचयो भवति। आदानस्य च परिपुष्टत्वादतिरौक्ष्यं भवति। रात्रयश्च निद्रासमाप्त्ययोग्या अल्पा भवंति। दिवास्वप्नश्च संतर्पकः। ग्रीष्मादपरस्मिन् काले कफपित्तकरः। सोऽचिंत्यत्वाद्धेतुप्रभावस्य भाष्यादिक्लांतादीन् मुक्त्वा वर्जयित्वा। तेनैतदुक्तं भवति। ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषां हित एव। यानमश्वादि। क्षतः खड्गादिच्छिन्नः। अभिहतो लगुडादिना स्वप्नोचिताः शीलितदिवास्वप्नाः। तत्र भाष्यादिक्लांतानां पवनाकोपात्स्वप्नोऽनुज्ञातः। श्वासहिध्मादीनां वेगविस्मरणार्थम्। वृद्धादीनां यथायथं संतर्पणार्थं वेगविस्मरणार्थं च। अजीर्णिनां दिवास्वप्नोचितानां च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तंत्रकृता। तथा चोक्तम्। उचितो हि दिवास्वप्नो येषां नित्यं शरीरिणाम्। वातादयः प्रकुप्यंति तेषामस्वपतां दिवेति। नन्वजीर्णिनां दिवास्वप्नो न युक्तो दिवास्वप्नस्य कफवृद्धिकरत्वात्। कफवृद्ध्या चाग्निमांद्यम्। अग्निमांद्यादजीर्णान्नस्याऽपाक इत्ययुक्तस्तेषां दिवास्वप्नः। अत्रोच्यते। दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति। धातुसाम्ये च सति स्वस्थानस्थितैर्दोषैरनुपहतो वह्निः पचनक्षमो भवति। कफस्तु वृद्धोऽपि नैतेषामग्निमांद्यं विधत्ते। अपि त्वंगानां पुष्टिमादधाति। अत एवानंतरमेवोवाच शास्त्रकारः। धातुसाम्यं तथा ह्येषां श्लेष्मा चांऽगानि पुष्यतीति।

**बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि ५९**
**विषार्तः कंठरोगी च नैव जातु निशास्वपि।**

तथा बहुमेदःश्लेष्माणः स्निग्धाहारादिशीलिनश्च ग्रीष्मेष्वहनि न स्वप्युः। विषार्तः कंठरोगी च रात्रिष्वपि कदाचिदपि न स्वप्यात्।

**अकालशयनान्मोहज्वरस्तैमित्यपीनसाः॥ ६०॥**
**शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमंदताः।**

अकाले शयनं स्वप्नोऽकालशयनं तस्मादकालशयनान्मोहादयः स्युः। स्तैमित्यं गात्राणां निरुत्साहत्वम्।

अत्र च का चिकित्सेत्याह।

**तत्रोपवासवमनस्वेदनावनमौषधम्॥ ६१॥**
**योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनांजनम्।**
**नावनं लंघनं चिंतां व्यवायं शोकभीक्रुधः॥ ६२॥**

**एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ।**

तेष्वकालस्वप्नजेषु रोगेपूपवासाद्यौषधं योजयेत् । निद्रायाश्च बाहुल्येन रात्रिः कालः । तथा चोक्तम् । लोकादिसर्गप्रभवा तमोमूला तमोमयी । बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायत इति । अतिनिद्रायां सत्यां तीक्ष्णानि वमनांजननस्यानि योजयेत् । लंघनादि च । एभिरेव च तीक्ष्णवमनादिभिर्निद्राया नाशो भवति । श्लेष्माख्यस्य धातोरतिशयेनापचयात् ।

संप्रति निद्रानाशजान्विकारानाचष्टे ।

**निद्रानाशादंगमर्दशिरोगौरवजृंभिकाः ॥ ६३ ॥**
**जाड्यं ग्लानिभ्रमापक्तितंद्रारोगाश्च वातजाः ।**

निद्रानाशादंगमर्दादयो वातोत्थाश्च रोगाः स्युः ।

**यथाकामलतो निद्रां रात्रौ सेवेत सात्म्यतः॥६४॥**
**असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान् ।**

यतश्च सम्यक् सेविताया निद्राया असम्यक् सेवितायाश्चाऽनंतरोक्ता गुणा दोषाः । अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत् । असात्म्याज्जागरादर्धेन स्वप्न इष्यते । किंतर्हि यो यावंतं कालमुचितं स्वपिति तस्मात्कालाद्यावंतं प्रातः स्वप्यात् । अभुक्तवानभुक्ते सति । असात्म्यग्रहणेनैतद् द्योतयति । न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्धेन दिवास्वप्न इष्यते किं तर्हि यो यावंतं कालमुचितं स्वपिति तस्मात्कालाद्यावंतं कालं जागृयात्तावतोऽर्धेनासौ स्वप्यात् । केचिद्धि स्वल्पनिद्राः स्वभावतो भवंति ।

**शीलयेन्मंदनिद्रस्तु क्षीरमद्यरसान् दधि ॥ ६५ ॥**
**अभ्यंगोद्वर्तनस्नानमूर्ध्वकर्णाक्षितर्पणम् ।**
**कांताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥६६॥**
**मनोनुकूला विषयाः कामं निद्रासुखप्रदाः ।**
**ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ६७ ॥**
**निद्रा संतोषतृप्तस्य स्वं कालं नातिवर्तते ।**

योयो मंदनिद्रः स क्षीरादीन् शीलयेत् । कांताबाहुलताश्लेषादयो निद्रासुखहेतवः । कांताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतुर्नतु ग्राम्यधर्मसेवेति दर्शनार्थम् । अत एवानंतरमाह । ब्रह्मचर्यरतेर्निद्रा स्वकालं नातिवर्तत इति । ब्रह्मचर्यरतस्याऽप्यनुगतो मैथुनाभिलाषो निद्रां नाशयेदित्याह । ग्राम्यसुखे निःस्पृहं चेतो यस्य स तस्य तथा संतोषतृप्तस्य ।

यदा तु ग्राम्यधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थमुच्यते ।

**ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ॥६८॥**
**अप्रियामप्रियाचारां दुष्टसंकीर्णमेहनाम् ।**
**अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ॥६९॥**
**वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ।**
**चैत्यश्मशानाऽयतनचत्वरांबुचतुष्पथम् ॥ ७० ॥**
**पर्वाण्यनंगं दिवसं शिरोहृदयताडनम् ।**
**अत्याशितोऽधृतिः क्षुद्वान् दुःस्थितांगः पिपासितः**
**बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ।**

ग्राम्यधर्मे स्त्रीपुंसयोगविषयेऽनुत्तानां स्त्रियं त्यजेदुत्तानां भजेदित्यर्थः । तथा रजस्वलत्वादियुतां त्यजेत् । दुष्टं व्याधिमलादिभिः संकीर्णं संकुचन्मेहनं योनिर्यस्यास्ताम् । तथा वर्णिनीं ब्रह्मचारिणीम् । अन्ययोनिमजामहिष्यादिं च त्यजेत् । गुर्वित्यादि । ग्राम्यधर्मनिर्वर्तने गुरुदेवनृपालयांस्त्यजेत् । तथा चैत्यादींस्त्यजेत् । तेषु स्त्रियं न संगच्छेदित्यर्थः । चैत्यादीनां पर्याया दिनचर्यायामुक्ताः । आयतनं दुष्टानां निग्रहस्थानं च । पर्वाणि रविसंक्रांत्यादींस्त्यजेत् । तेषु कामं न सेवेतेत्यर्थः । तथाऽनंगम् । अंगं जघनम् । नांगमनंगमंगसदृशं जघनकार्यनिर्वर्तनयोग्यं मुखादिकमुच्यते । दाक्षिणात्या हि मुखेन कुर्वंति तन्निषिध्यते । दिवसं च त्यजेत् । दिने रतं न कुर्वीतेत्यर्थः । मूर्धवक्षोभिघातं च त्यजेत् । अत्याशितादयः सुरतं त्यजेयुः । अत्याशितोऽतिभुक्तः । अधृतिर्दुर्मनाः । अन्यवेगार्तः पुरीषादिवेगातुरः । ननु क्षुद्वान् क्षुद्वेगार्त उच्यते । ततोऽन्यवेगार्त इत्यनेनैवाऽस्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन । सत्यमेतत् । अतिशयार्थं त्वेतत् । यथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते न तथाऽन्यवेगार्त इति ।

संप्रति ऋतुविशेषे निधुवनं नियमयति ।

**सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे ॥ ७२ ॥**
**त्र्यहाद्वसंतशरदोः पक्षाद्वर्षानिदाघयोः ।**

तृप्तो वाजीकरणैः संजातसंतर्पणः सन् कामतो यथेच्छया हिमे हेमंततौ शिशिरे च कामं यथेच्छं सेवेत । वाजीकृतामिति संपदादित्वात्क्विप् । तृप्त इति क्तोऽधिकरणे च ध्रौव्येत्यादिनाऽधिकरणे क्तः । अधिकरणवाचिनश्चेति षष्ठी । वसंते शरदि च त्र्यहात् त्र्यहमतिक्रम्य मैथुनं निषेवेत । वर्षाग्रीष्मयोः पक्षात् कामं भजेत् ।

**भ्रमक्लमोरुदौर्बल्यबलधात्विंद्रियक्षयः ॥ ७३ ॥**
**अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ।**

अन्यथोऽक्तविधेरन्येन प्रकारेण स्त्रियं गच्छतो भ्रमादयः स्युः । अपर्वण्यकाले मरणमपर्वमरणम् ।

**स्मृतिमेधायुरारोग्यपुष्टींद्रिययशोबलैः ।**
**अधिका मंदजरसो भवंति स्त्रीषु संयताः ॥ ७४ ॥**

स्त्रीषु संयताः स्त्रीः सम्यक् सेवमानाः स्मृत्यादिभिरधिका अल्पजराश्च भवंति ।

**स्नानानुलेपनहिमानिलखंडखाद्य-**
**शीतांबुदुग्धरसयूषसुराप्रसन्नाः ।**

**सेवेत चानुशयनं विरतौ रतस्य**
**तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७५ ॥**

रतांते यथौचित्येन स्नानादीन् सेवेत । खंडखाद्यं खंडकृतं कणिकेत्यादि । रसो मांसरसः । चानुशयनमिति । अनु पश्चाच्च स्वप्नं सेवेत । तस्मात्स्नानादिसेविनः शरीरस्य एवमस्मिन्कृते धाम तेजो भूय आगच्छति । त्भौजौ वसंततिलकं गुरुकद्वयं च। स्नानांगरागव्यजनेंदुपादयूषासवक्षीररसान् रसालम् । भक्षान् सिताढ्यान् सलिलं सुशीतं सेवेत निद्रां च रतांततांत इति ।

एतच्च पूर्वोक्तं हिताहितं सर्वं वैद्य एव वेत्ति तस्माद्वैद्यस्य सर्वथा शरीरं राज्ञा निवेद्यमिति दर्शयन्नाह ।

**श्रुतचरितसमृद्धे कर्मदक्षे दयालौ**
**भिषजि निरनुबंधं देहरक्षां निवेश्य ।**
**भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः**
**स्वकुशलफलभोगी भूमिपालश्चिरायुः ७६**

भिषजि शरीररक्षणं निरनुबंधं निर्विकल्पमाधाय बहुकालमात्मीयश्रेष्ठफलभोगवान् । तथा तेजश्च स्वास्थ्यं च कीर्तिश्च प्रभावश्च एवं विपुला विस्तीर्णास्तेजःस्वास्थ्यकीर्तिप्रभावा यस्य स एवंविधः । कीदृशे भिषजि । श्रुतं शास्त्रावबोधः । चरितमाचारः । ताभ्यां समृद्धे संपूर्णे । तथा क्रियाचतुरे । तथा कृपालौ । वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामन्नपानरक्षाध्यायः सप्तमः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अन्नरक्षाध्यायानंतरं मात्राशितीयो युक्तः । यतो विषादिभ्यो रक्षितमन्नपानं हीनमात्राभ्यवहृतं जीवितोपघाताय संपद्यते । मात्राभ्यवहृतं प्राणिनां प्राणाय ।

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।**

अथेत्यानंतर्ये यथा । अथाऽतो धर्मजिज्ञासेति वेदाध्ययनादनंतरं धर्मो जिज्ञासितव्य इत्यर्थः । अत इति प्रस्तुताभिसंबंधे । अशनमशितम् । भावे निष्ठा । मात्रयाऽशितं तस्मै हितो मात्राशितीयः । शेषं पूर्ववद्व्याख्येयम् ।

**मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।**
**मात्रां द्रव्याण्यपेक्षंते गुरूण्यपि लघून्यपि ॥ १ ॥**

सर्वकालं स्वस्थ आतुरो वा मात्राशी स्यात् परिमिताशी भवेत् । कुतो हेतोः । हि यस्मान्मात्राऽग्नेः प्रवर्तिका स्वव्यापारे । अग्निप्रवृत्तिश्च देहस्थितिहेतुः । तथा चोक्तम् । अग्निमूलं बलं पुंसां बलमूलं हि जीवितमिति । तस्मान्मात्रायाः प्राधान्यम् । अस्माच्च कारणान्मात्रायाः प्राधान्यं यतो मात्रां द्रव्याण्यपेक्षंते गुरूण्यपि लघूनि च । तत्र गुरूणि पिष्टक्षीरद्राक्षाक्षोडेक्षुमाषानूपमांसादीनि । लघूनि दिव्योदकरक्तशालिषष्टिकमुद्गलावकपिंजलैणशशशंबरादीनि ।

तत्र गुरूणां का मात्रा का लघूनामित्याह ।

**गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।**
**मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥ २ ॥**

गुरूणां द्रव्याणामर्धसौहित्यमर्धतृप्तिः । लघूनां नातितृप्तता नातितृप्तिः किं तर्हि सौहित्यमात्रम् । एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा ह्रस्वा मध्या बृहती च तस्याः प्रमाणम् । तत्र प्रमाणं मानम् । तस्यास्तु प्रमाणमुन्मानम् । एवंचात्र मात्राशब्दस्यापौनरुक्त्यम् । हि यस्मात्तावत्परिमाणमभ्यवहृतं सुखमविकृतिं कृत्वा परिणमति । एतद्विपर्ययेण हीनमात्रं भोजनं वर्ज्यं दोषदर्शनात् ।

यथा चाह ।

**भोजनं हीनमात्रं तु न बलोपचयौजसे ।**
**सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ॥**

हीनमात्रं पुनरशनं न बलाय नोपचयाय न चौजसे । सर्वेषां वातरोगाणां कारणतां याति ।

**अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।**

अतिमात्रं त्वशनं त्रीनपि दोषान् शीघ्रमेव प्रकोपयति ।

कुपिताश्च त्रयो दोषा अलसकाख्यं विषूचिकाख्यं वा व्याधिं यथा कुर्वंति तथा दर्शयति ।

**पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ॥ ४ ॥**
**आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।**
**विष्टंभयंतोऽलसकं च्यावयंतो विषूचिकाम् ॥५॥**
**अधरोऽत्तरमार्गाभ्यां सहसैवाजितात्मनः ।**

तेनापक्वेनाहारेण दुष्टेन वाताद्या हि यस्मात्पीड्यमाना विबध्यमाना रुद्धमार्गत्वादत एव युगपदेककालं सर्व एव कोपितास्तदेव दुष्टमन्नमाविश्याऽलसकं कुर्वते । किंकुर्वंतः । विष्टंभयंतस्तदेव दुष्टमन्नं स्रोतःसु रुंधानाः । तथाऽधरोत्तरमार्गाभ्यां सहसैवानुचिते देशे काले च्यावयंत ऊर्ध्वमधश्च निष्कर्षयंतः । अजितात्मनोऽसंयतचेतसः पुंसो विषूचिकां कुर्वते ।

एतदेव सविस्तरमाह ।

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥६॥**
**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।**

ऊर्ध्वं मुखेनाहारो न प्रयाति न चाधस्ताद्गुदेन प्रयाति न चाहारः पच्यते । आमाशये नाभिस्तनांतरं जंतोरामाशय इति स्मृतस्तस्मिन्नलसीभूत इवालसीभूतः । यथाऽकर्मशीलः पुरुषो-

ऽलस इत्युच्यते तथाऽयमाहारोऽलसीभूतस्तिष्ठति तेन हेतुना स रोगोऽलसकः स्मृतः ।

विषूचिकायास्तु निर्वचनमाह ।

**विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥**
**सूचीभिरिव गात्राणि विध्यतीति विषूचिका ।**

वाय्वादीनां त्रयाणामत्यंतप्रकोपान्नानाप्रकारैर्वेदनोद्भेदैः पीडोत्पादैर्यस्माद्गात्राणि सूचीभिरिव विध्यति तस्माद्विषूचिकेत्युच्यते । विविधानां विकाराणां सूचिका विसूचिका विसूचिकेत्युच्यते ।

**तत्र शूलभ्रमाऽनाहकंपस्तंभादयोऽनिलात् ॥ ८ ॥**
**पित्ताज्ज्वरातिसारांतर्दाहतृट्प्रलयादयः ।**

वातादधिकाच्छूलादयो भवंति । आदिशब्देनांगोद्वेष्टनमुखशोषादिपरिग्रहः । पित्तात्प्रवृद्धाज्ज्वराद्याः स्युः । प्रलयो मूर्छाप्रायः । आदिशब्देन मदादिपरिग्रहः ।

**कफाच्छर्द्यंगगुरुतावाक्संगष्ठीवनादयः ॥ ९ ॥**

कफादधिकाच्छर्द्यादयो भवंति । आदिशब्देन क्षवथ्वादीनां ग्रहणम् ।

**विशेषाद्दुर्बलस्याऽल्पवह्नेर्वेगविधारिणः ।**
**पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमंतरा ॥ १० ॥**
**अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।**
**शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११ ॥**
**सोऽलसः**

दुर्बलत्वादियुक्तस्य यन्मारुतेन विशेषादन्नं पीडितमंतरामाशयमध्य एव श्लेष्मणा रुद्धमलसीभूतं तथा दोषैः क्षोभितमाकुलितमत एवाऽतिपीडाकारित्वाच्छल्यरूपत एव स्थितं तीव्रान् दुःसहान् शूलादीन् छर्द्यादिवर्जितान् कुरुते । छर्द्यतीसाराभ्यां विसूचिकोक्ता । सोऽलससंज्ञो रोगः । दुर्बलो ह्यनुपचितधातुः स न कदाचिदाहारं सोढुं शक्तः । अल्पाग्निश्चाहारं सम्यङ्न जीर्यति । यतो वेगधारणशीलस्य प्रतिहतो वायुर्विमार्गगः पित्तकफावपि विमार्गगौ कुरुत इत्येतद्विशेषेण निर्देशः ।

दंडकालसकं लिलक्षयिषुराह ।

**अत्यर्थदुष्टास्तु दोषा दुष्टामवद्धखाः ।**
**यांतस्तिर्यक्तनुं सर्वां दंडवत्स्तंभयंति चेत् ॥ १२ ॥**
**दंडकालसकं नाम तं त्यजेदाशुकारिणम् ।**

अतिशयेन दुष्टा दोषास्तथा दुष्टामेन बद्धानि पूर्णानि स्रोतांसि यैस्ते दुष्टामबद्धखाः । तथा तिर्यग्गच्छंतः तनुं सर्वांगं शरीरं सकलं दंडवद्यदि स्तंभयंति प्रसारणाकुंचनरहितं कुर्वंति तदा दंडकालसको नाम रोगो भवति । तं दंडकालसकं त्यजेन्नोपक्रमेत् । यत आशुकारिणमाशु शीघ्रं स्वकर्म मारणं करोतीत्याशुकारी । क्षिप्रं हंतीत्यर्थः ।

संप्रत्यामविषं निर्दिशति ।

**निरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३ ॥**
**आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।**
**विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥**

विरुद्धं प्रागुक्तं विरुद्धमल्पमित्यादिना । विद्यादध्यशनमित्यादिनाऽध्यशनम् । अजीर्णं च त्रिविधं वक्ष्यति । एतानि शीलितुं शीलं यस्य तस्य पुंसो य आमदोषो विषलक्षणलालादिलक्षणयुक्तो महाघोरोऽतिकष्टो विषाख्यो यो भवति तं न चिकित्सेत् । कुतः । विषरूपत्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्च । विषसदृशस्वरूपत्वाद्विषे शीतोपक्रमो युक्त आमे चोष्णोपक्रमो युक्त इति विरुद्धोपक्रमत्वम् ।

अलसकोपक्रमं निर्दिदिक्षुरिदमाह ।

**अथाऽममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।**
**पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥**
**स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।**
**नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् १६**

अथेत्यानंतर्ये । पूर्वोक्तं साध्यासाध्यमवगम्याऽनंतरमामं साध्यमदुष्टं संतं त्वरितं द्रागातुर उल्लिखेदुद्वमेदित्यर्थः । किंविधमामम् । अलसीभूतम् । अलसलक्षणतां गतमुल्लिखेदित्याह । पीत्वेत्यादि । जलमुष्णं पीत्वा वचालवणमदनफलयुक्तं वमेदित्यर्थः । ततोऽनंतरं स्वेदनं योजयेत् । तथा । विपाच्य मूत्राम्लमधूनि दंतीपिंडीतकृष्णाबिडधूमकुष्ठैः । वर्तिं करांगुष्ठनिभां घृताक्तां गुदे रुजानाहहरीं विदध्यादित्यादि फलवर्तिं च मलवातानुलोमनीं योजयेत् । तत्रामदोषे दोषवशादंगानि च नाम्यमानानि संकोच्यमानानि संतत्यर्थं स्विन्नानि वस्त्रादिना वेष्टयेत् ।

**विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।**
**तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥**

विसूच्यां पूर्वोक्तलक्षणायामतिवृद्धायां सत्यां पार्ष्ण्योः खुरिकयोरयःशलाकादिना दाहः प्रशस्यते । तदहर्विसूचिकावंतमुपवास्य लंघयित्वा विरिक्तवत्पेयादिक्रमेणोपाचरेत् । सुश्रुते चोक्तम् । सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे । भल्लातकमधूच्छिष्टसीसपिण्याकनागरैः । घृततैलं पचेत् साम्लैस्तच्च खल्लीघ्नमुत्तमम् । त्वक्पत्त्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि । शिरीषनक्ताह्वफणिज्जबीजत्र्यायंत्यपामार्गफलानि वर्तिः । बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपनस्यांजनधूमयोगैरिति ।

**तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।**
**आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम्॥१८॥**
**निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।**

अजीर्णी तीव्रशूलोऽपि सन् शूलहरमौषधं न पिबेत् । वमनकरमुष्णोदकं च प्रागुपदिष्टमेव पिबेदित्यर्थः । शूलघ्नमित्युपलक्षणार्थम् । छर्दतीसारघ्नमपि विसूचिकायां न पिबेत् । यत आमेन सन्नो मंदीभूतोऽग्निर्दोषौषधाशनं पक्तुं न समर्थः । एतेषां च दोषौषधाशनानां त्रयाणां संबंधी यो विभ्रमो व्यापत्तिः सहसा कालमनपेक्ष्य चातुरं हन्यात् । न केवलमिदं गुणाय संपद्यते प्रत्युत दोषं करोतीति सूचनार्थमपि चेति कृतम् ।

कदौषधं युंजीतेत्याह ।

**जीर्णाशने तु भैषज्यं युंज्यात् स्तब्धगुरूदरे॥१९॥**
**दोषशेषस्य पाकार्थमग्नेः संधुक्षणाय च ।**

जीर्णमशनं यस्य तस्मिन्नौषधं युंज्याद्वैद्यः । कीदृशि । स्तब्धमचलं गुरूदरं कोष्ठो यस्य तस्मिन् । किमर्थमौषधं युंज्यादित्याह । दोषेत्यादि गतार्थम् ।

कीदृशमौषधं योज्यमित्याह ।

**शांतिरामविकाराणां भवति त्वपतर्पणात् ॥२०॥**
**त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् ।**

तुरवधारणे । यस्मादपतर्पणादेवामजातानां विकाराणामालस्यजाड्याग्निमांद्यादीनां शांतिरुपशमो भवति तस्मादपतर्पणं योजयेत् । वक्ष्यति हि । मेहामदोषातिस्निग्धेत्यारभ्य यावल्लंघयेन्नित्यमिति । तस्मादपतर्पणं समीक्ष्य देशकालाग्न्यादीन् पर्यालोच्य त्रिप्रकारं त्रिप्रकारे दोषे वैद्यः प्रयोजयेत् ।

संप्रत्येतदेव यथायोगमाह ।

**तत्राऽल्पे लंघनं पथ्यं मध्ये लंघनपाचनम् ॥२१॥**
**प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ।**

तत्र तेषु त्रिषु मध्येऽल्पे दोषे लंघनमुपवासाख्यं पथ्यम् । तेन ह्यनलानिलवृद्ध्याऽल्पो दोषः शीघ्रं संशोष्य जीयते । मध्ये दोषे लंघनं पाचनं च पथ्यम् । अग्निः पचति तस्य पचतो ये विबंधादयो भवंति तान्निषिध्य पाटवमादधानं पचेति प्रयुंक्त इव तत् पाचयतीति पाचनमुच्यते । हेतुमण्णिजंतात्पचेर्बाहुलकात्कर्तरि ल्युट् । यदुपयुक्तमन्नपानौषधमपक्वानां सामानां धातूनां पाचने समर्थं तत् पाचनमित्यर्थः । प्रभूते शोधनं पथ्यम् । शोधनं तु कायाद्बहिर्दोषानीरयति । वक्ष्यति हि । यदीरयेद्बहिर्दोषान्पंचधा शोधनं तु तदित्यादि । कुतः । प्रभूत आमदोषे शोधनं हितमित्याह । तद्धीत्यादि । हि यस्मात्तच्छोधनं मूलान्मलान्नाशयेत् । संग्रहेऽप्युक्तम् । बहुदोषाणां पुनरुपसेवनमेव कार्यं नद्यसाविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवतीति ।

**एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात्॥२२॥**
**चिकित्सेदनुबंधे तु सति हेतुविपर्ययम् ।**
**त्यक्त्वा यथायथं वैद्यो युंज्याद्व्याधिविपर्ययम् ॥२३॥**

यथा संतर्पणोत्थ आमदोषो निदानविपर्ययाच्चिकित्स्यत एवमन्यानपि ज्वरादीन् विकारान् स्वनिदानविपर्ययाच्चिकित्सेत् । संतर्पणोत्थोपतर्पणेन शीतोत्थ उष्णेनेत्यादि । यदि त्वेवमुपक्रम्यमाणो व्याधिरनुबध्यते । तेनोपशमं न गच्छेत् ततो हेतुविपर्ययं त्यक्त्वा व्याधिविपर्ययं युंज्यात् । किंभूतम् । यथायथं यद्यस्य ज्वरादिव्याधेर्भैषज्यं वक्ष्यमाणं तत्प्रयुंजीतेत्यर्थः । यथा मुस्तापर्पटकं ज्वरे रजनी प्रमेह इति ।

न च हेतुव्याधिविपर्ययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह ।

**तदर्थकारि वा पक्वे दोषे त्विद्धे च पावके ।**
**हितमभ्यंजनस्नेहपानवस्त्यादियुक्तितः ॥ २४ ॥**

तन्निदानव्याधिविपर्ययासाध्यमर्थं रोगोपशमलक्षणं कर्तुं शीलं यस्य तत्तदर्थकारि तद्वा युंज्यात् । यथा मदात्यये मद्यपानमतिसारे विरेचनमिति । वाशब्दः समुच्चयार्थ इति । त्रिविधमौषधं निर्दिश्याऽमचिकित्सामेवानुसरन्नाह । पक्वे दोषे निरामे दीप्ते पावके च निरामयत्वे दीप्ताग्नित्वे च समुचितमेव हितमभ्यंगादिकम् । युक्तितो मात्रया यथाऽग्निसादादि न भवतीति ।

अजीर्णं लक्षयितुमाह ।

**अजीर्णं च कफादामं तत्र शोफोऽक्षिगंडयोः ।**
**सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम्॥ २५ ॥**

अग्निप्रतिपक्षत्वेन कफस्याऽजीर्णकरणप्राधान्यादग्रे निर्देशः । कफात्सकाशादजीर्णमामसंज्ञकं भवति । तत्रामाख्येऽजीर्णेऽक्षिकूपयोर्गंडयोः शोफो भवति । सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गारः । प्रसेकः प्रसक्तं निष्ठीवनम् । उत्क्लेशो दोषाणां स्थानाचलनम् । गौरवं गात्राणाम् ।

**विष्टब्धमनिलाच्छूलविबंधाध्मानसादकृत् ।**

अनिलाद्विष्टब्धं नामा जीर्णं भवति । तच्च शूलादिकृत् ।

**पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहवत्॥२६॥**

पित्ताद्विदग्धं नामाऽजीर्णमुत्पद्यते । तच्च तृडादियुक्तम् ।

त्रिविधस्यैवास्य चिकित्सामाह ।

**लंघनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।**
**विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥२७॥**

तुरवधारणे । अमाख्येऽजीर्णे लंघनमेव कार्यं न वमनविरेचनादि । विष्टब्धे स्वेदनं भृशं कार्यम् । भृशशब्देनैतद् द्योतयति । पूर्वत्राऽपि स्वेदनं कार्यमत्र त्वत्यर्थमिति । विदग्धे विदग्धनाम्य-

जीर्णे वमनं कार्यम् । यद्वा लंघनस्वेदनवमनानां यथावस्थं यथादोषोद्रेकं हितं भवेत्तदेव कार्यम् । आमाजीर्णेऽपि स्वेदनवमने विदग्धेऽपि लंघनस्वेदने इति ।

**गरीयसो भवेल्लीनादामादेव विलंबिका ।**
**कफवातानुबद्धामलिंगा तत्समसाधना ॥ २८ ॥**

गरीयसः प्रभूतादजीर्णादेव विलंबिका स्यात् । कीदृशात् । लीनादत्यर्थं स्रोतःसु श्लिष्टत्वात् । लीनादिति लीङ्श्लेषण इत्यस्य क्तप्रत्यये स्वादय ओदित इत्योदितश्चेति निष्ठानत्वम् । सा च श्लेष्मवायुभ्यामनुबद्धा युक्ता भवति । आमं नाम यदजीर्णं तत्सदृशलक्षणा । यथा । शोफोऽक्षिगंडयोः । सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवमिति । तेनामेन समं तुल्यं साधनं चिकित्सा यस्याः सैवम् । लंघनं कार्यमाम इति ।

जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात् । तल्लक्षणार्थमाह ।

**अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।**
**शयीत किंचिदेवात्र सर्वश्चानाशितो दिवा ॥२९॥**
**स्वप्यादजीर्णी संजातबुभुक्षोऽद्यान्मितं लघु ।**

रसशेषेऽश्रद्धाऽन्नानभिलाषः । हृद्व्यथा हृदयशूलं गौरवं च । शुद्धेऽप्युद्गारेऽन्नसंबंधिनि । तेनाजीर्णादर्थांतरभूत एवायं रसशेषः । अतश्च रसस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थः । तच्चिकित्सामाह । शयीतेत्यादि । अत्र रसशेषे किंचिदेव स्तोकमात्रमेव स्वप्यान् नाजीर्ण इव प्रभूतम् । सर्वश्चाऽजीर्ण्यनाशितो दिवा शयीत । आलाघवात् । यदा चोत्पन्नक्षुत्स्यात्तदा स्तोकं लघु चाद्यात् । आशः कृतो येनाऽशितः । न आशितोऽनाशितः । अभुक्तवानित्यर्थः । नन्वजीर्ण्यभिहतोन्मत्तानित्यनेनैव वाक्येनाऽजीर्णिनां दिवास्वप्नोऽनुज्ञात एव तत्किंपुनरुक्तेन । ब्रूमः । विशेषार्थं वाक्यमिदम् । अभुक्तो दिवा स्वप्यादजीर्णीति । तत्र तु सामान्यम् । अशितानशितचिंता न कृतेति युक्ता पुनरिहोक्तिः ।

सामान्यमजीर्णलक्षणं सामान्येन ब्रूते ।

**विबंधोऽतिप्रवृत्तिर्वा ग्लानिमारुतमूढता ॥ ३० ॥**
**अजीर्णलिंगं सामान्यं विष्टंभो गौरवं भ्रमः ।**

विबंधो मूत्रपुरीषयोरप्रवृत्तिलक्षणः । अतिप्रवृत्तिस्तयोरेव । ग्लानिः शरीरस्यापचयः । मारुतमूढता वातस्य प्रतिलोमता । विष्टंभः कुक्षेराध्मानम् । गौरवं गुरुगात्रत्वम् । भ्रमो मोहः । एतत्सामान्यमजीर्णलक्षणम् । उक्तं च । सीदत्यंगं भ्रमो मोहः कोष्ठे मुह्यति मारुतः । सर्वेषामप्यजीर्णानामविसंवादि लक्षणम् ।

सांप्रतमजीर्णस्याऽन्यान्यपि कारणान्याह ।

**न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ ३१ ॥**
**द्विष्टविष्टंभिदग्धामगुरुरूक्षहिमाशुचि ।**
**विदाहि शुष्कमत्यंबुप्लुतं वान्नं न जीर्यति ॥ ३२ ॥**

अतिमात्रमेव भुक्तमन्नं न केवलमामदोषाय किं तर्हि द्विष्टादि चान्नं न जीर्यति । द्विष्टमप्रियम् । विष्टंभि कुक्ष्याध्मानकारि । हिममतिशीतम् । अशुच्युच्छिष्टं केशादिदूषितं च । एतच्चाचिंत्यप्रभावत्वादामदोषहेतुः विदाहि प्रागुक्तम् । शुष्कमद्रवप्रायम् । अत्यंबुप्लुतमतिजलेन प्लावितम् ।

**उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः ।**

चः समुच्चये । न केवलं द्विष्टाद्यन्नं भुक्तं न जीर्यति यावता शोकादिभिश्चोपतप्तेन भुक्तं न जीर्यति । शोक इष्टविपत्त्यादिना मनोदौस्थ्यम् । क्रोधो रोषः । क्षुद्बुभुक्षा । तदुपतप्तत्वं कालातिक्रमत्वात् । आदिशब्देन लोभभयादिपरिग्रहः ।

संप्रत्यपरमप्यन्नमामक्षोभकरमाह ।

**मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ॥ ३३ ॥**
**विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ।**
**अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥३४॥**
**त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजंति वा**

पथ्यं शाल्यादि । अपथ्यं यवकादि । तन्मिश्रमेकीकृत्य भुक्तं समशनमभिमतमस्मिन्वैद्यकतंत्रे । विद्यादित्यादि । भुक्तस्याऽभ्यवहृतस्योपरि यद्भोजनं तदध्यशनं जानीयात् । नन्वेवं प्रातराशे कृते यः सायमाशस्तस्याऽध्यशनत्वं प्रसज्यते । अध्यशनं च विवर्ज्यमेव । यतोऽनंतरमेव पठिष्यति । त्रीण्यप्येतानि मृत्युं वेत्यादि । वैद्यकतंत्रेषु च नराणां द्विराहार उपदिष्टः । भगवान् व्यासोऽप्यवोचत् । सायंप्रातर्मनुष्याणां भोजनं विधिनिर्मितमिति । तस्मादध्यशनस्यैवं तदसमीचीनं लक्षणम् । अत्र संचक्ष्महे । प्राग्भुक्तस्योपरि समनंतरमेव वह्नावविभक्ते यदशनं तदेवाध्यशनं नान्यत् । अतएव सुश्रुतो ब्रूते । प्राग्भुक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेदिति । तस्मात् प्रातराशे कृते सत्यग्नौ विभक्ते यः सायमाशः स न परिहार्योऽपि तु कार्य एव । गुणावहत्वात् । एतदेव प्रतिपादयितुं संग्रहेऽध्यगीष्ट । प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति । अजीर्णे सायमाशे तु प्रातराशोहि दुष्यति । दिवा प्रबोध्यतेऽर्केण हृदयं पुंडरीकवत् । तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यांति सर्वशः । व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः । न क्लेदमुपगच्छंति दिवा तेनास्य धातवः । अक्लिन्नेष्वन्नमासक्तमन्यत्तेषु न दुष्यति । अविदग्धेष्विव पयःस्वन्यत्संमिश्रितं पयः । रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च । परिक्लेदं यांति कोष्ठे संवृते देहधातवः । क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति । विदग्धेषु पयःस्वन्यत्पयस्तप्तेष्विवार्पितम् । नैशे तस्मादजीर्णेऽन्ने नान्यद्भुंजीत भोजनमिति । अधिशब्दोऽत्रोपरिशब्दार्थः । यथा प्रासादमधिरोहति । अकाले बहु चाल्पं वा भुक्तं त्वशनं विषमाशनसंज्ञं विद्यात् । कः पुनरकालो भोजनस्येतिचेत् । ब्रूमः ।

प्रसृष्टे विण्मूत्र इत्यादिनाऽऽहारकालं वक्ष्यति तद्वैपरीत्येनाकालो वेद्यः । त्रीण्यप्येतानि समशनाऽध्यशनविषमाशनानि मृत्युं वा सृजंति जनयंति । घोरान् व्याधीन्गुल्मादीन् वा ।

**काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः॥**
**षड्रसं मधुरप्रायं नातिद्रुतविलंबितम् ।**
**स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ३६**
**तर्पयित्वा पितॄन् देवानतिथीन् बालकान्गुरून् ।**
**प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥३७॥**
**समीक्ष्य सम्यगात्मानमनिंदन्नब्रुवन् द्रवम् ।**
**इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ॥३८॥**

काले वक्ष्यमाणे । तन्मना भोजनगतचित्तः । स्नातः । बुभुक्षितः । विविक्तस्थ एकांतस्थितः । तथा प्रक्षालितचरणहस्तमुखः। अनिंदन् भोजनमगर्हमाणः । अब्रुवन्नभाषमाणः । इष्टं मनोरुचितं भोजनम् । तथा द्रवं द्रवप्रायम् । इष्टैः प्रियैः सहाश्नीयात्। क्षुद्वान् । अत्र च प्रशंसायां मतुप् । उत्पन्नप्रशस्तबुभुक्षः । तेन किंचिदपि यदा दुष्टबुभुक्षा स्यात्तदा नाद्यादित्यर्थः । दुष्टबुभुक्षाया लक्षणम् । दोषोपनद्धं यदि लीनमन्नं पित्तोद्धतस्याग्रणुयान्न वह्निम् । जयेत दुष्टां तु ततो बुभुक्षां या मंदबुद्धीन् विषवन्निहंतीति । किंभूतं भोजनम् । सात्म्यम् । तच्च सात्म्यं द्विधा ।एकं स्वल्पकालाभ्यस्तं सुखावहम् । अन्यच्च जन्मनःप्रभृति सहात्मनाभ्यस्तं सुखावहं च । एतदेवैकं सात्म्यमुच्यते । तथा शुचि अनुच्छिष्टं केशाद्यनुपहतं च । हितं पथ्यम् । स्निग्धं च तदुष्णं च स्निग्धोष्णम्। तथा लघु लघुप्रायं न तु लघ्वेव । अत एवेदमुपपन्नम् । षड्रसं मधुरप्रायमिति । मधुररसो हि गुरुः । तथा च वक्ष्यति । कटोः कषायस्तस्माच्च मधुरः परमं गुरुः । तद्यद्धि लघ्वेव स्यान्मधुरप्रायमिति न घटते । तस्माल्लघुप्रायमिति व्याख्येयम्।कथमद्यात् । आह । नातिद्रुतमविलंबितम् । किं कृत्वा। पित्रादींस्तर्पयित्वा । तथा तिरश्चोऽप्यश्ववृषादीन् प्रतिपन्नपरिग्रहान् कृतस्वीकारान् प्रत्यवेक्ष्य। तदाहारचिंतां कृत्वेत्यर्थः। अथात्मानं समीक्ष्य यथा ममेदं सात्म्यमिति नित्यमप्रमत्तः सन् पर्यालोच्य । खरनादेनोक्तम् । अतिद्रवाशी त्वाहारगुणदोषान्न विंदति । उत्क्षुद्व्यत्यल्पमश्नाति च्छर्दयेद्वाऽनवस्थितः । विलंबितं तु भुंजानो न तृप्तिमधिगच्छति । स्वादबह्वपि शीतत्वाद्याति भक्तमहृद्यताम् । जल्पतो हसतश्चापि भुंजानस्याऽन्यचेतसः । त एव दोषा मंतव्या ये विलंबितभोजन इत्यादि ।

**भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।**
**शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९ ॥**

तृणादिजुष्टं भोजनं त्यजेत् । आदिशब्देन मक्षिकादिपरिग्रहः । तथा भूय उष्णीकृतं तथा शाकबहुलं तथाऽवरान्नं माषादि तद्भूयिष्ठं तथाऽत्युष्णमतिलवणं च त्यजेत् ।

**किलाटदधिकूर्चीकाक्षारशुक्तामभूलकम् ।**
**कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥ ४० ॥**
**माषनिष्पावशालूकविसपिष्टविरूढकम् ।**
**शुष्कशाकानि यवकान् फाणितं च न शीलयेत्४१**

तथा किलाटादीन्न शीलयेन्नाभ्यस्येत् । न कादाचित्कोऽभ्यवहार एषां निषिध्यते । मुनिना तु नाभ्यसेद्गौरवादिति यथा हेतुरुपन्यस्तस्तथेह नोक्तमयुक्तत्वात् । तथा हि । एषामभ्यवहारे यदि गुरुत्वमेव हेतुः स्यात् ततो यवादीनामपि बहुतराणां द्रव्याणां शीलनमयुक्तं स्यात्। तस्मादेषामशीलनेऽन्यदपि कारणं चिंत्यं न तु गुरुत्वमात्रमेव । यथा किलाटकूर्चीकयोर्दोषलत्वं दध्नस्तु ज्वरादिकर्तृत्वं तथा स्रोतोलेपः । स्रोतोलेपवत्त्वाच्चाऽनेकरोगहेतुत्वम् । क्षारस्य पुंस्त्वहानिकृत्त्वम् । शुक्तस्य दृष्टिहननत्वादि । तस्मादेषामपथ्यत्वाच्छीलननिषेधो बोध्यः ।

**शीलयेच्छालिगोधूमयवषष्टिकजांगलम् ।**
**पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ॥ ४२ ॥**
**घृतदिव्योदकक्षीरक्षौद्रदाडिमसैंधवम् ।**
**त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ॥ ४३ ॥**

शाल्यादीन् शीलयेत् । मधुसर्पिर्भ्यां सह त्रिफलां च रात्रौ नेत्रबलाय शीलयेत् ।

**स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ।**

न केवलं शाल्यादीनेव शीलयेत् । यच्च द्रव्यं स्वास्थ्यानुवृत्तिं करोत्यृतुचर्याविध्यादिषु युक्तमन्नपानादिकम् । तथा रोगोच्छेदकरं यत्किराततिक्तकादिद्रव्यं तच्च शीलयेत् ।

**बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम्॥४४॥**
**अद्याद्द्रव्यं गुरु स्निग्धं स्वादु मंदं स्थिरं पुरः ।**
**विपरीतमतश्चांते मध्येऽम्ललवणोत्कटम् ॥ ४५ ॥**

बिसादिद्रव्यं गुर्वादिगुणयुक्तं पुरः पूर्वमद्यात् । मोदको लड्डुकः । उत्कारिका लप्सिका । अतोऽस्माच्च विपरीतं लघुरूक्षतीक्ष्णकटुसरप्रायमंते भोजनस्य सेवेत । मध्ये चाम्ललवणोत्कटम् । खरनादे चोक्तम् । कटुं लवणमम्लं वा पूर्वमाहारमाहरेत् । आहारो मधुरो ह्यग्रे गुरु विष्टभ्य जीर्यति । तदेतद्देशसात्म्यादिवशात्प्रमाणयितव्यम् ।

**अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।**
**आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ४६ ॥**

कुक्षेर्जठरस्यान्नेन द्वौ भागौ प्रपूरयेत् । पानेन जलादिना एकमंशं प्रपूरयेत् । चतुर्थमंशं पवनादीनामाश्रयमवशेषयेन्न त्वन्नेन पानेन वा प्रपूरयेत् । अत्र त्वंशकल्पना परिकल्पनेनैव युज्यते नत्वंगुलमानादिना । सुश्रुते चाभिहितम् । प्रक्षालयेदद्भिरास्यं भुंजानश्च मुहुर्मुहुः । विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ववत् ।

रसना वियते यस्य मुखस्य तद्रसनं तस्मिन् रसने विशुद्धे रोचतेन्नमपूर्ववत् ।

**अनुपानं हिमं वारि यवगोधूमयोर्हितम् ।**
**दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ॥ ४७ ॥**
**शाकमुद्गादिविकृतौ मस्तुतक्राम्लकांजिकम् ।**
**सुरा कृशानां पुष्ट्यर्थं स्थूलानां तु मधूदकम् ४८**
**शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके ।**
**व्याध्यौषधाध्वभाष्यस्त्रीलंघनातपकर्मभिः ॥४९॥**
**क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम् ।**

यवगोधूमयोर्भुक्तयोरनु पश्चात्पानं शीतं जलं हितम् । तथा दध्नि मद्ये विषे क्षौद्रे च हिमं जलमनुपाने हितम् । पिष्टमयेषु कोष्णं जलं हितम् । शाकमुद्गादिविकृतौ च मस्त्वादिकमनुपानं हितम् । कृशानां पुंसां सुरा पुष्ट्यर्थं हिता। स्थूलानां पुनः कर्शनाय मधूदकं हितम् । शोषे क्षये मांसरसो हितः पुष्टिकारित्वात् । मांसे भुक्ते मद्यमनुपानं हितम् । स्वल्पे च पावके मद्यमेवानुपानम् । व्याध्यादिभिः क्षीणे क्षपिते पयो दुग्धं पथ्यं हितम् । इह प्रकृतेऽपि पथ्यग्रहणं पथ्यतरत्वज्ञापनार्थम् । यथाऽमृतमित्यनेनैतत्प्रतिपादयति । यथाऽमृतं बलवर्णौजःकांत्यायुरादिजनकं तथेदमपीत्यर्थः ।

**विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ॥ ५० ॥**
**अनुपानं समासेन सर्वदा तत्प्रशस्यते ।**

अन्नस्य भक्तवटकादेर्यद्विपरीतं गुणैस्तदनुपानं सदा प्रशस्यते । यथा स्निग्धस्य रूक्षं रूक्षस्य स्निग्धं शीतस्योष्णमुष्णस्य शीतम् । मधुरस्याम्लमम्लस्य मधुरमित्यादि । नन्वेवमुरीक्रियमाणे क्षीरस्य क्षैरेयादेर्वा चुक्रादीनामम्लानामनुपानं प्राप्तमित्याह । विपरीतगुणमपि यदविरोधि तदेवानुपानं सदा हितम् ।

अनुपानस्य किं कर्मेत्याह ।

**अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढांगताम् ॥५१॥**
**अन्नसंघातशैथिल्यविक्लित्तिजरणानि च ।**

अनुपानमूर्जादीन्करोति । ऊर्जा मनःप्रहर्षः । तृप्तिः प्रीणनं शरीरेंद्रियस्य क्षामता विपरीतोऽन्नगुणः । तथा व्याप्तिः । द्रवस्य हि गमनं न कठिनस्य । दृढांगता स्थिरशरीरत्वम् । तथाऽन्नसंघातस्य शैथिल्यम् । विक्लित्तिर्विक्लेदनम् । जरणं परिणामः । एतानि च करोति ।

एवंगुणमप्यूर्ध्वजत्र्वादिषु न हितमित्याह ।

**नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ॥ ५२ ॥**
**गीतभाष्यप्रसंगे च स्वरभेदे च तद्धितम् ।**

ऊर्ध्वं जत्रुण ऊर्ध्वजत्रु तस्मिन्ये गदास्तेषु तदनुपानं न हितम् । तथा श्वासादिषु न हितम् । गीतभाष्ययोः प्रकर्षेण संगः सातत्येन संबंधस्तस्मिन् । तथा स्वरभेदेन स्वरसादेन तद्धितम् । ऊर्ध्वजत्रुगदादीनां ह्यनुपानं प्रदूष्यामाशयमुरःकंठस्थितमाहारजं स्नेहमासाद्याऽभिष्यंदाग्निसादच्छर्द्यादीनामयान्विदध्यात् ।

संप्रति येषां पानमेव न शस्यते तानाह ।

**प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ॥ ५३ ॥**
**पानं त्यजेयुः**

प्रक्लिन्नो देहो येषामामविसर्पाद्यार्तानां ते पानं त्यजेयुः । मेहादीनां रोगातुरशब्देन प्रत्येकं संबंधः । मेहरोगाद्यातुराः पानं द्रवरूपं त्यजेयुर्न केवलमन्नपानस्योपरि यदनुपानम् । खरनादे चोक्तम् । मेही प्लीही व्रणी कुष्ठी पांडुर्जठरपीनसी । शोषातिसारी मंदाग्निः पानीयं मंदमाचरेत् । नोर्ध्वांगपवनाविष्टे वाग्व्यायामहते न च । क्षतोरसि श्वासकासहिक्कावम्यर्दिते न च । निरन्ने चोर्ध्वरोगे च न पेयं वारि शीतलमिति ।

**सर्वश्च भाष्याध्वशयनं त्यजेत् ।**
**पीत्वा भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम्॥५४॥**

चशब्दो लुप्तनिर्दिष्टोऽत्र । सर्वोऽपि पुरुषः पीत्वा भुक्त्वा च भाष्यादींस्त्यजेत् । तथाऽऽतपादीन् पंच त्यजेदित्यत्राऽप्यनुवृत्त्या योज्यम् । यानं रथादि । प्लवनं तरणम् । वाहनमश्वादि ।

काले सात्म्यमित्युक्तम् । भोजनस्य तु कः काल इत्याह ।

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।**
**तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ**
**प्रयुंजीताहारं विधिनियमितः कालः स हि मतः ॥**

आहारं विधिना पूर्वोक्तेन काले सात्म्यं शुचि हितमित्यादिना नियमितं प्रयुंजीत । अश्नीयादित्यर्थः । कदा । मूत्रपुरीषे प्रकर्षेण सृष्टे सति । न किंचिदेव त्यक्त इति प्रशब्देन द्योतयति । तथा हृदये सुष्ठु विमले रसशेषकृतगौरवादिरहिते । तथा दोषे वातादौ स्वपथगे स्वमार्गगे । अजीर्णे ह्याहारेऽन्नशेषेण रुद्धगतयो वातादयः स्वस्थानं न लभेरन् । सुजीर्णे तु स्वस्थानस्थाः स्युः । उद्गारे विशुद्धे । चशब्दोऽनुक्तसमुच्चयार्थः । स्रोतोमुखेषु च विशुद्धेष्वित्यर्थः । क्षुदुपगमन उपगतायां क्षुधि । वातेऽनुसरत्यनुलोमं गच्छति । तथाऽग्नौ कायाग्नावुद्रिक्ते पाकक्षमे । तथा देहे षड्विंद्रिये सुष्ठु लघौ च । कालः स हि मतः । हिशब्द एवार्थे । स एव कालो भोजनस्य दृष्टो न ततोऽप्यूर्ध्वम् । स ह्यतिकालः । तत्र भुक्तमन्नं वातविष्टब्धं कृच्छ्राद्विपच्यते । तथा चोक्तं तंत्रांतरे । अतीतकालं भुंजानो वायुनोपहतेऽनले । कृच्छ्राद्विपच्यते भुक्तं द्वितीयं न च कांक्षति । कुक्षावाध्मानमाटोपसादांश्च कुरुतेऽधिक-

मिति । तस्मात्पूर्वोक्तकाले भोजनमद्यादिति । यमौ न्सौं सः सः स्याद्रसरविविरामा धीरललिता ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां मात्राशितीयोऽध्यायोऽष्टमः ॥ ८ ॥

## नवमोऽध्यायः ।

पूर्वमन्नपानादिद्रव्यैकदेशः प्रायोपयोगवान्निर्दिष्टस्तस्य चाहारविधेर्मात्रा चोपदिष्टा । संप्रति द्रव्यरसवीर्यविपाकादयो वाच्याः । अन्नपानं हि रसवीर्यविपाकादि परीक्ष्य प्रयोक्तव्यं नान्यथा । तस्मान्मात्राशितीयाध्यायादनंतरं द्रव्यादिविज्ञानीय आरभ्यते ।

**अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः॥**

द्रव्यमादिर्येषां ते द्रव्यादयः । आदिशब्देन रसवीर्यादिपरिग्रहः । द्रव्यादीनां विज्ञानमवगमस्तस्मै हितः । शेषं पूर्ववत् ।

तत्र द्रव्यस्य रसादिभ्यः प्राङ्निर्देशः प्राधान्यात् । प्राधान्यं च स्वयमेव ग्रंथकृत्प्रतिपादयन्नाह ।

**द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ।**

रसादीनामिति निर्धारणे षष्ठी । रसवीर्यादीनां मध्ये द्रव्यमेव प्रधानम् । ते रसादयो हि यस्मात्तदाश्रयास्तदेव द्रव्यमाश्रयो येषां त एवम् । अत एव केवला रसादयो नोपलभ्यंते । तस्मात् द्रव्यं प्रधानम् ।

**पंचभूतात्मकं तत्तु**

तुरवधारणे । यत्तदोश्च नित्यसंबंधाद्यदित्येतदनुक्तमप्यर्थाल्लभ्यते। तेनायमर्थः। यद्रसादीनामाश्रयभूतं कार्यं द्रव्यं हरीतक्यादि स्थावरं छागादि जंगमं तत्पंचभूतात्मकम् । तत्र यत्कारणद्रव्यमाकाशादि तस्य हि पंचभूतात्मकत्वे सत्याकाशादीनां पृथक्त्वेनात्मलाभो न स्यात्। ततश्चेदमाकाशं नाम महाभूतमिदं पृथ्वी नाम महाभूतमिति गदितुं न पार्येत । सर्वस्य पंचमहाभूतात्मकत्वात् । न च यत्कारणं तत्कदाचित्कार्यं स्यात् । तस्मात्कार्यद्रव्यस्यैव पंचमहाभूतात्मकत्वं न कारणद्रव्यस्याऽऽकाशादेः । मुनिस्तु । खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रह इति । न च वा द्रव्यमुक्त्वा तल्लक्षणं व्यधित । यथा । यत्राऽश्रिताः कर्मगुणाः कारणं समवायि यत् । तद्द्रव्यमिति । अस्यार्थः । यत्र कर्म परिस्पंदलक्षणं संयोगवियोगकारणं समवेतश्च गुणः । यत्र शब्दादयो गुर्वादयो वा बुद्धिवपुरादयो वा समवेताः । यच्च कारणं समवायि तद्द्रव्यमुच्यते । समवायीति । यत्कारणमपृथग्भवति तत्समवायिकारणं यथा तंतवः पटस्य । एवमेतानि च कर्मगुणाश्रयित्वसमवायिकारणत्वानि यद्यपि सर्वाणि सर्वस्मिन् द्रव्ये न विद्यंते तथाऽपि यद्यत्र संभवति तत्र तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम् । तद्यथा । मनसः कर्मगुणाश्रयित्वेन वाय्वादीनां तु कर्मगुणाश्रयित्वेन समवायिकारणत्वने च । नन्वाकाशादीनि कारणव्यद्राणीति कथमुक्तम् । यावताऽऽकाशस्य द्रव्यत्वमेव नास्तीति केचित्तान्ब्रूमहे । जलधेरिव प्रत्यक्षेणैवाऽस्य नीलरूपतोपलब्धेरस्तित्वं सिद्धम् । तथा कवयोऽपि नीलत्वमेवाऽस्य वर्णयंति । तथा कर्णाटस्य । विपुलपुलिना हृद्या नद्यो वहंत्यतिनिर्मलाः कमलसुभगो वायुर्घ्राणं विलंबति मांसलः । नवजलधरच्छायावासादिवाचिरनिर्गतो वहति शशभृन्नीलस्निग्धे नभस्यवदातता-मिति । तथा च बाणस्य धौतोशनिनिभसीति । तदेतद्दूषयंति । तथा हि । दूरात् भ्रांतिमात्रेणैव नीलरूपत्वमस्योपलभ्यते । यथा गिरेर्विविधवर्णस्याऽपि दूरान्नीलत्वप्रतीतिः । यत्कवीनां वर्णनं तस्मादलसेन निष्प्रमाणकमेव संभाव्यते । तथा च ते नभसः शुक्लत्वं वर्णयंति । न च शुक्लत्वमेतस्योपपद्यते निराकारत्वात् । तस्मान्न नीलरूपत्वं नभसः । ननु दर्शनवैचित्र्यादस्य रूपवत्त्वमुपपन्नम् । यथा पुरुषः शरादि ऋजुतां दिदृक्षुरेकं चक्षुर्निमील्याऽपरं चोन्मील्य तामुपलभते नतु नयनयुगलेन । तद्वत्संनिकृष्टे गगनरूपस्यानादानं विप्रकृष्टे तु स्यादिति । नचैतद्युक्तम् । यतो रूपवत्त्वेऽभ्युपगम्यमाने स्पर्शवत्त्वमस्य प्रसज्येत । रूपस्य स्पर्शेन नित्यसंबंधात् । स्पर्शवत्त्वे सत्याकाशत्वमेव न स्यात् । अतो न रूपवद्व्योम । अन्ये त्वेवं मन्यंते । पवनवदाकाशस्यावस्थास्तु यथा किल पवनः स्पर्शवान् । न च तस्मिन्रूपं संभवति । तथैवाकाशो न रूपवान्न च स्पर्शवानिति । तदिदमनवगतपदार्थस्वरूपाणां विलपनम् । ततो यत्र रूपं तत्राऽवश्यं स्पर्शो न तु यत्र स्पर्शस्तत्राऽवश्यं रूपम् । तस्मान्न नभो रूपवन्न च सत् । अत्रोच्यते । परमार्थदर्शिभिर्यदुपादायोत्पत्तिः कथ्यते तदस्ति । यथा पृथिव्यादि । उक्तं च । अक्षरात् खं ततो वायुस्तस्मात्तेजस्ततो जलम् । उदकात् पृथिवी जाता भूतानामेष संभव इति । तस्मादाकाशं द्रव्यमस्ति । अपि च । आकाशमुपादाय गतिवृद्धिप्रसवादिविशेषोपलब्धेराकाशस्याऽस्तित्वम् । यथा रूपोपलब्धिविशेषसंभवानुमितं चक्षुः । अपि च । आकाशाभावे ह्येकघनत्वं जगतः स्यात् । तथा शब्दाख्यस्य गुणस्यान्यथाऽनुपपत्त्यास्त्याकाशमिति । ननु वायुर्नास्त्येव । तत्स्वरूपग्राहकप्रमाणाभावात् । स्पर्शोपलब्धेर्वायोरस्तित्वमुच्यत इति चेत् तदपि न युज्यते । अधुनैवोक्तं खाद्वायुरिति । गगनस्य च स्पर्शाभावाद्वायोरस्पर्शवत्वं कारणगुणपूर्वकत्वात्कार्यस्य । नैतदस्ति । कार्यस्योभयात्मकत्वदर्शनात् । कारणगुणपूर्वकं कार्यं दृष्टमकारणगुणपूर्वकं च दृष्टम् । तत्र कारणगुणपूर्वकं तावद्यथा । तंतुश्वेतत्वपूर्वकं पटे श्वेतत्वम् । अकारणगुणपूर्वकं च दृष्टं यथा । हरिद्राक्षारसंयोगाद्रक्तता । तस्मादस्पर्शादाकाशादुत्पन्नो वायुः स्यादेव स्पर्शवान् । नन्वेवमप्यग्निजलपृथिवीष्वपि स्पर्शविशेषसंभवात्तस्मादग्न्यादिसमवाय एव वायुर्व्यवहरते न तद्व्यतिरिक्तो वायुरस्ति । अत्रोच्यते । सत्यमनलादीनामपि स्पर्शोऽस्ति किंतु विलक्षण एवासौ । तथा हि । तेजसः स्पर्शो रूपैकार्थसमवायी । अपां स्पर्शो रूपरसाभ्यां समवेतः । पृथिव्या रूपरसगंधसमवेतः । यस्तु वायोः स्पर्शः स पत्रचलनशाखाभंजनादिकर्मसमवायी स नैषामग्न्यादीनां

दृष्टानां नाप्यदृष्टानामात्मादिकालादीनाम् । गुणाश्च सर्वे द्रव्याश्रया दृष्टा रूपादय इव पटादिषु । तस्माद्वायोर्विशिष्टस्पर्शवत्त्वादस्तित्वमनुमीयते । तथा पवनस्य तत्कर्मोपदेशादस्तित्वम् । यस्य तत्त्वदर्शिभिः कर्मोपदिश्यते तदस्ति । यथा कफादिवद्वातस्य च कर्मोपदिष्टम् । यथा स्रंसव्यासवधस्वापेत्यादि । तस्मादस्ति वायुर्द्रव्यमिति । अग्निर्द्रव्यं नास्ति इंधनव्यतिरेकेणानुपलब्धेः । अत्रोच्यते । तत्त्वदर्शिभिरग्नेर्द्रव्योत्पत्तिहेतुत्वेनोपदेशादस्तित्वम् । तथा चेहैव वक्ष्यति । आग्नेयं दाहभावर्णप्रकाशपवनात्मकमिति । ननु युक्तश्चतुर्णां भूतानां सावयवत्वात् द्रव्येषूत्कर्षापकर्षसंनिवेशः । क्वचिद्द्रव्ये कस्यचिद्भूतस्य प्रमाणतः प्रभावतश्चावयवानामुत्कर्षापकर्षसद्भावादाकाशस्य तु निरवयवत्वात्सूक्ष्मत्वादेकत्वाच्चोत्कर्षापकर्षसंनिवेशो न युक्तः । युक्तमाह भवान् किंतु सावयवानामेव द्रव्याणां येऽवयवाः क्वचित्पाषाणादौ संहता अवतिष्ठंते । येन तत्र द्रव्ये काठिन्यस्य प्रकर्षो भवति तत्र चाऽऽकाशमपकृष्यते । अनिबिडावयवे तु सन्निवेश आकाशः प्रकृष्यते । तदेवमनया युक्त्याऽऽकाशस्याऽपि न्यूनाधिकभाव उपपन्नः ।

अथ केन महाभूतेन कथं कृत्वाऽरब्धं द्रव्यमित्याह ।

**क्ष्मामधिष्ठाय जायते ॥ १ ॥**

पृथ्वीमाधारीकृत्वोत्पद्यते । एवं पृथिव्याख्येन भूतेनाऽऽधारत्वेनोपकृत्य तेन तदारब्धं द्रव्यमित्युच्यते । यथा ।

**अंबुयोन्यग्निपवननभसां समवायतः ।**
**तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ २ ॥**

अंबु सलिलं योनिः कारणं यस्य तदंबुयोनि द्रव्यम् । एवं जलं नाम महाभूतं रसवत्त्वाद्योनितयोपकृत्य तेन तदारब्धमित्युच्यते । मुनिनाऽप्युक्तम् । रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः । अमीषां द्रव्यादीनामाश्रयकर्मणोर्भेदश्चिंत्यः । तथाऽग्निपवननभसां समवायादपृथग्भावात्तस्य द्रव्यस्य निर्वृत्तिर्निष्पत्तिः । तथा तस्य द्रव्यस्य यो विशेष इदमन्यदिदमन्यद्द्रव्यमित्येवंरूपो नानास्वभावः सोऽप्यग्निपवननभसां समवायात् । एवमग्निपवननभोभिः समवायिकारणत्वेनोपकृत्य तैरेतद्द्रव्यमारब्धमित्युच्यते । एवं च सर्वं कार्यद्रव्यं पचमहाभूतात्मकम् । पंचभिर्महाभूतैरारब्धत्वात् । ननु यदि पंचमहाभूतात्मकं द्रव्यं तत्कथमुच्यते पार्थिवमिदं द्रव्यमिदमाप्यमित्याह । व्यपदेशस्तु भूयसेति । यत्र द्रव्ये यद्भूतं भूयिष्ठमधिकृतं तेन तस्य व्यपदेशः संज्ञा भवति । यथा पृथिव्याधिक्योत्पादितं द्रव्यं पार्थिवम् । एवमाप्यं तैजसं च वेद्यम् । तदेवं सर्वं द्रव्यं पंचभूतात्मकं स्थितम् ।

**तस्मान्नैकरसं द्रव्यं भूतसंघातसंभवात् ।**

तस्माद्भूतसंघातसंभवात् कारणाद्द्रव्यं नैकरसमपि त्वनेकरसम् । एवं द्रव्यवद्रसस्याऽपि भूतसंघातसंभवत्वम् । अत एव प्रतिद्रव्यं मधुरादिरसस्य नानास्वादोपलंभः । तथा च । द्राक्षाऽक्षोडक्षीरेक्षुक्षौद्रगोजाक्षीरशुक्तादौ द्रव्ये सत्यपि माधुर्ये परोऽपर आस्वाद उपलभ्यते । एवमम्लानामपि मातुलुंगधान्याम्लादीनां द्रव्याणां नानास्वादोपलंभः । एवं लवणादीनाम् । अपि चैषां द्राक्षादीनामनेकरसत्वमास्वादविशेषादनुमीयमानं भूयसा रसेनान्यरसाभिभवं कृत्वा व्यपदिश्यते । इदं मधुरमिदमम्लाद्यन्यतमं महाभूतवत् । यथा सर्वं द्रव्यं पंचमहाभूतात्मकं भूयसा महाभूतेनान्यमहाभूताभिभवं कृत्वा तेन व्यपदिश्यते पार्थिवमिदमाप्यमिदमिति । ननु द्रव्यनिर्णये कृते पांचभौतिकं द्रव्यं यदेव प्रतिज्ञातं तदेव तस्मादित्यादिना निगमनग्रंथेनाऽतिवाहयितुं युक्तं न पुनरप्रस्तुतमनेकरसत्वम् । तस्मादत्रैवं ग्रंथः कर्तुं न्याय्यः तस्मान्नैकभूतजं द्रव्यं भूतसंघातसंभवादिति । अत्रोच्यते । षण्णामपि रसानां योनिरुदकं ततश्चैकस्यैव महाभूतस्योदकसंज्ञस्य रसकारणत्वं प्राप्तं नान्येषां नीरसत्वादिति कृत्वा न भूतसंभवत्वं रसस्येत्येवंविधामाशंकामपनिनीषुर्भूतसंघातसंभवत्वं रसस्य चैकेनैव प्रयत्नेन । तस्मान्नैकरसं द्रव्यं भूतसंघातसंभवादिति जगाद । मुनिश्चात एव रसस्य भूतसंघातसंभवत्वं स्पष्टं कृत्वोवाच । यथा । रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः । इत्येवं भूतसंघातो रसानां द्रव्याश्रितानामपि संभवकारणम् । एतच्च रसभेदीये सविस्तरं व्याख्यास्यामः ।

**नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः ॥ ३ ॥**
**अव्यक्तोऽनुरसः किंचिदंते व्यक्तोऽपि चेष्यते ।**

द्रव्यमनेकरसं ततस्तस्मात्कारणादेकदोषा रोगा ज्वरादयो न भवंत्यपि त्वनेकदोषा इत्यर्थः । अत्राऽपि व्यपदेशस्तु भूयसेत्यध्याहार्यम् । तेन त्रिदोषात्मकेऽपि ज्वरे वाताधिके वातज्वर एवं पित्तज्वरः श्लेष्मज्वर इत्येवंरूपो व्यपदेश उपपन्नः । ननु यदि सर्वो ज्वरः संनिपातजस्तत्किमिति वक्ष्यत्ययं संनिपातज्वर इति । ब्रूमहे । समविषमरूपं शक्त्युत्कर्षमाश्रित्य यत्र दोषा वर्तंते स सन्निपातज्वर इति तंत्रकृता पुरस्ताद्विस्तरेण प्रतिपादयिष्यते । अथ को रसोऽनुरसो वेत्याह । तत्रेत्यादि । तत्र तस्मिन् द्रव्ये यो व्यक्तः स्फुट उपलभ्यते स रसः स्मृतस्तंत्रकृद्भिः । यश्चाव्यक्तोऽस्फुटप्रतिभासो रसनेंद्रियेणोपलभ्यते सोऽनुरसः । हीनार्थोऽत्रानुशब्दोऽल्परस इत्यर्थः । नैतावदेवानुरसलक्षणमित्याह । किंचिदित्यादि । मुखक्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेंद्रियेण किंचिदंते व्यक्तोऽप्युपलभ्यते यः सोऽप्यनुरस इष्यते मुनिभिरिति वाक्यशेषः । अंत इत्यनेनैवं तद्बोधयति । अंतेऽवसाने न त्वादावापानमात्रे न च मध्ये । तयोर्हि रसस्यैवोपलंभः । अनुशब्दस्याऽत्र पश्चादर्थत्वम् । पश्चात् स्फुटोऽपि किंचिद्य उपलभ्यते सोऽप्यनुरस इत्यर्थः ।

ननु मधुरादयो रसा गुर्वादिगुणयुक्ताः कथं वक्तुं पार्यते । यतो मधुरादयो रसा गुणा गुर्वादयश्च । न च गुणानां मधुरादीनां

गुर्वादिगुणाधारत्वमुपपन्नम् । तथा च वैशेषिकाः । निर्गुणा गुणा इति तस्मिन्पर्यनुयोग इदमाह ।

**गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ॥ ४ ॥
रसेषु व्यपदिश्यंते साहचर्योपचारतः ।**

पृथिव्यादौ पृथिव्यादिमहाभूतारब्धे द्रव्ये रसाश्रये गुर्वादयो गुणाः परमार्थत आश्रिता नतु रसेषु मधुरादिषु । यत्तु रसेषु व्यपदिश्यंते तत् साहचर्योपचारतः । सह चरतीति सहचरस्तस्य भावः साहचर्यम् । यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि गुरुगुण आश्रित इति मधुररसगुरुगुणयोः सहचरभावः । साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारस्तस्मात्साहचर्योपचारतो गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यंते । यथा गुरुर्मधुरो रसो लघुरम्ल इत्यादि । न पुनः परमार्थतो रसेषु गुर्वादयः संति । अस्ति च साहचर्येण व्यपदेशः । यथा घृतसहचरेण घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते ।

**तत्र द्रव्यं गुरु स्थूलं स्थिरगंधगुणोल्बणम् ॥ ५ ॥
पार्थिवं गौरवस्थैर्यसंघातोपचयावहम् ।**

तत्र तेषु पार्थिवादिषु पंचसु द्रव्येषु मध्ये पार्थिवं द्रव्यं गुर्वादिगुणोत्कटम् । उल्बणशब्देनैतद् द्योतयति पार्थिवे द्रव्येऽन्येऽपि गुणाः संति । सर्वद्रव्याणां पांचभौतिकत्वात् । गुर्वादयस्तत्रोत्कटाः । एवमाप्यादिषु सर्वं योज्यम् । तथा गौरवाद्यावहं गुरुत्वादित्यर्थः ।

**द्रवशीतगुरुस्निग्धमंदसांद्ररसोल्बणम् ॥ ६ ॥
आप्यं स्नेहनविष्यंदक्लेदप्रह्लादबंधकृत् ।**

आप्यं द्रव्यं द्रवादिगुणोल्बणं स्नेहनादिकृत् ।

**रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम् ॥ ७ ॥
आग्नेयं दाहभावर्णप्रकाशपचनात्मकम् ।**

आग्नेयं द्रव्यं रूक्षादिगुणोत्कटं दाहादिकरम् ।

**वायव्यं रूक्षविशदं लघुस्पर्शगुणोल्बणम् ॥ ८ ॥
रौक्ष्यलाघववैशद्यविचारग्लानिकारकम् ।**

वायव्यं रौक्ष्यादिगुणं रौक्ष्यलाघवादिकरं च ।

**नाभसं सूक्ष्मविशदलघुशब्दगुणोल्बणम् ॥ ९ ॥
सौषिर्यलाघवकरं**

नाभसं द्रव्यं सूक्ष्मादिगुणोल्बणं सौषिर्यादिकरं च ।

**जगत्येवमनौषधम् ।
न किंचिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ १० ॥**

एवमनेन पंचमहाभूतारब्धेन गुर्वादिगुणयोगेन द्रव्याणां जगति भुवनेऽस्मिन्ननौषधभूतं न किंचिद्द्रव्यमस्त्यपि तु सर्वमेव द्रव्यं यत्सिकतापांस्वादिकं तदौषधं चिकित्सितम् । वशान्नानार्थयोगयोः । अर्थश्च योगश्चार्थयोगौ । अर्थः प्रयोजनम् । योगो युक्तिः । यथाऽनया युक्त्यौषधमिदं योजितमस्य रोगस्य विजयाय स्यादनया चास्य रोगस्येति । नानाविधौ यावर्थयोगौ तयोर्वशात्सामर्थ्यात् सर्वमपि द्रव्यमौषधम् । रोगप्रतीकारहेतुत्वात् ।

अथ किं द्रव्यं किंभूतोत्कटं भवतीत्याह ।

**द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम् ।
अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥ ११ ॥**

ऊर्ध्वं गच्छतीत्यूर्ध्वगमम् । खप्रकरणे गमेरप्युपसंख्यानमिति खः । प्रायो बाहुल्येनोर्ध्वगं द्रव्यमग्निपवनाधिकं भवति । यथा मदनफलादि । भूयिष्ठं प्रायेण । तथा चाऽग्निसमीरणोत्कटस्याऽप्यधोगामित्वं दृष्टम् । यथा हरीतक्यादेः । अचिंत्यप्रभावत्वाद्यथा सर्पे विषमयत्वेऽपि तत्फणामणेर्विषघ्नत्वम् । भूमितोयोल्बणं द्रव्यमधोगामि भवति । यथा त्रिवृतादि । यत्तु व्यामिश्रात्मकं तुल्यकालमूर्ध्वाधोदोषहरणं तदिह ग्रंथगौरवभयान्नोक्तमपि मिश्रीभूतोत्कटं द्रव्यं व्यामिश्रात्मकमिति सामर्थ्यलब्ध एवायमर्थः ।

**इति द्रव्यं रसान्भेदैरुत्तरत्रोपदेक्ष्यते ।**

इति परिसमाप्तौ । द्रव्यं प्रति यद्वक्तव्यं तन्निष्पन्नमित्यर्थः । एवं द्रव्ये निर्दिष्टे रसा निर्देष्टुं युक्ता इत्याह । रसानित्यादि । बहुवक्तव्यत्वादुत्तरत्रानंतरेऽध्याये रसान् भेदैस्त्रिषष्टिसंख्यावच्छिन्नैरुपदेक्ष्यते तंत्रकृत् ।

अथ वीर्यस्य विपाकादिभ्यः प्राधान्यात्तच्चर्चां प्रस्तौति ।

**वीर्यं पुनर्वदंत्येके गुरुस्निग्धहिमं मृदु ॥ १२ ॥
लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ।**

द्रव्यमुक्तम् । वीर्यं पुनर्गुर्वादीनष्टौ गुणान् द्रव्याश्रितानिति समाचक्षते । तस्मादेवमनेन प्रकारेण वीर्यमष्टधाऽष्टप्रकारं गुर्वादीनां मतम् ।

**चरकस्त्वाह वीर्यं तद्येन या क्रियते क्रिया ॥ १३ ॥
नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता हि सा ।**

चरकाचार्यः पुनरेवं वक्ति । येन स्वभावेन या क्रिया क्रियते यत्कर्म निष्पाद्यते तद्वीर्यम् । तदेव यावत् किंचिद्गुणजातं द्रव्ये स्थितं तत्सर्वं वीर्यमेव सर्वं वीर्यं करोति । अत एवाह । नावीर्यमित्यादि । यन्न वीर्यं तन्न किंचित्करोति न कांचिदप्यर्थक्रियां निष्पादयति । प्रतिनियतशक्तिपरिष्वक्तत्वात्सर्वभावानाम् । अत एवाह । सर्वेत्यादि । हिशब्दो यस्मादर्थे । यस्मात्सर्वा क्रिया वीर्यकृता वीर्येण जनिता ततो यन्न वीर्यं तन्न किंचित्कुरुते ।

**गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते ॥ १४ ॥
समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।
व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥**

यतो वीर्यस्यैव करणसामर्थ्यं तेन कारणेन गुर्वादिष्वेवाष्टासु वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते । एवकारोऽवधारणार्थः । गुर्वादिष्वेव वीर्यसंज्ञा न तु रसविपाकप्रभावेषु । किंभूतेषु गुर्वा-

दिषु । समग्रेत्यादि । समग्राश्च ते गुणाश्च तेषु साराश्चिरकालावस्थितयो गुर्वादय एव । तथा च जाठराग्निसंयोगेनाऽपि न मधुरादिरसनस्वभावमेते जहति । सर्तेः सुस्थिर इति घञि सारशब्दः । तथाऽन्येभ्यो मंदसांद्रादिभ्यो रसादिभ्यो वा गुणेभ्यो वा गुर्वादयः शक्त्युत्कर्षविवर्तिनः । शक्तेः सामर्थ्यस्योत्कर्ष आधिक्यम् । विशेषेण वर्तो विशेषेण भवनम् । शक्त्युत्कर्षस्य विवर्तः स विद्यते येषां त एवम् । किंच गुर्वादीनां गुणानां व्यवहाराय व्यवहारार्थम् । मुख्यत्वादन्येभ्यो गुणेभ्यो गुर्वादयः प्रधानभूता इत्यर्थः । तथा च गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रया इत्युक्तं न मधुरादयो गुणा इति । तस्माद्गुर्वादीनां गुणानां व्यवहारमुख्यत्वं रसादिभ्यः । तथा बह्वग्रग्रहणाद्बहुग्रहणादग्रग्रहणाच्च बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवंति । तथा चायुर्वेदशास्त्रेषु रसादिभ्यो गुर्वादीनामग्रे ग्रहणं दृष्टम् । यथा वातादिदोषगुणनिरूपणायां गुर्वादीनामेव पूर्वं ग्रहणं न रसादीनाम् । तथा च तत्र रूक्षो लघुरित्याचार्योऽपठद्वाग्व्यादिलक्षणे । एवं गुर्वादीनामेवाग्रे ग्रहणाद्गुर्वादिष्वेव वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते ।

**अतश्च विपरीतत्वात्संभवंत्यपि नैव सा ।**
**विवक्ष्यते रसाद्येषु वीर्यं गुर्वादयो ह्यतः ॥ १६ ॥**

अतोऽस्माच्च कारणकदंबकाद्विपरीतत्वाद्वैपरीत्येन स्थितत्वान्न रसादयो वीर्यम् । तथाहि । रसस्य सारत्वं नाऽस्ति । जाठराऽनलसंयोगवशेन रसांतरोत्पत्तेः । गुर्वादीनां तु जठराग्निसंयोगवशेनाऽपि नान्यथाभावः । तथा न रसस्य शक्त्युत्कर्षविवर्तित्वम् । यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यम् । व्यवहाराय यथा गुर्वादेर्मुख्यत्वं यथा बह्वग्रग्रहणं तथा प्राग्दर्शितम् । प्रभावः सर्वातिशायी द्रव्यस्वभावस्तस्य च क्रियानिर्वर्तनसामान्ये सत्यपि वीर्यसंज्ञा पूर्वोक्ताद्धेतोर्न वर्तते । एवं विपाककर्मणोरपि चिंत्यम् । तस्माद्रसाद्येषु संभवंत्यपि विद्यमानाऽप्यसद्रूपेव सा वीर्यसंज्ञा न विवक्ष्यते नोरीक्रियते । आदौ भव आद्यः । दिगादित्वाद्यत् । रस आद्यो येषां प्रभावादीनां त एवं तेषु । वीर्यमित्यादि । हिशब्दो यस्मादर्थे । यत एवं सा वीर्यसंज्ञा संभवंत्यपि रसादिषु वैपरीत्यान्न विवक्ष्यतेऽतो गुर्वादय एव वीर्यं न रसादयः ।

**उष्णं शीतं द्विधैवाऽन्ये वीर्यमाचक्षतेऽपि च ।**

अन्य आचार्या उष्णं शीतमिति द्विःप्रकारं वीर्यमाचक्षते । एवकारोऽवधारणार्थः । द्विधैव वीर्यं नाष्टधेति । अपिचेति निपातसमुदायो युक्तिसमुच्चये । तेऽपि सयुक्तिकमेवाहुरित्यर्थः ।

तामेव युक्तिं दर्शयन्नाह ।

**नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ १७ ॥**
**व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ।**

नानास्वभावमपि द्रव्यं स्थावरजंगमाद्यचेतनचेतनमग्नीषोमौ महाबलावुत्कृष्टशक्ती न जातु कदाचिदतिक्रामति नोल्लंघ्य वर्तते । अवश्यं हि द्रव्यं किंचिदाग्नेयं किंचित्सौम्यम् । अतः किंचिद्द्रव्यमुष्णवीर्यं किंचिच्छीतवीर्यम् । तथा च मुनिः । न मत्स्याः पयसा सहाभ्यवहार्याः । उभयं ह्येतन्मधुरं मधुरविपाकं शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रदूषणायेति । अत्र दृष्टांतमाह । व्यक्ताव्यक्तमित्यादि । व्यक्तं चाव्यक्तं च व्यक्ताव्यक्तं नानात्मकमपि जगत्त्रैलोक्यं कर्तृ यथा व्यक्तं चाव्यक्तं च नातिक्रामति तथा द्रव्यमग्नीषोमावित्यर्थः । व्यक्तं स्थूलं दृश्यमित्यर्थः । सांख्यानां तु महदादि व्यक्तमव्यक्तं प्रधानं पुरुषश्च ।

**तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ॥१८॥**
**शमं च वातकफयोः करोति शिशिरं पुनः ।**
**ह्लादनं जीवनं स्तंभं प्रसादं रक्तपित्तयोः ॥ १९ ॥**

तत्र तयोरुष्णशीतयोर्मध्य उष्णमुष्णवीर्यं भ्रमादीन् करोति । आशु पाकितां शीघ्रपाकित्वम् । शिशिरं शीतवीर्यं तु ह्लादनादीन्करोति ।

वीर्यादनंतरं विपाकं लक्षयति ।

**जाठरेणाऽग्निना योगाद्यदुदेति रसांतरम् ।**
**रसानां परिणामांते स विपाक इति स्मृतः ॥२०॥**

जाठरेणौदर्येणाऽग्निना योगात्संश्लेषाद्यद्रसानां परिणामांते जरणनिष्ठाकाले रसांतरं रसविशेष उत्पद्यते स विपाक इति स्मृतो मुनिभिः कथितः ।

**स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।**
**तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥२१॥**

स्वादुर्मधुरो गुडादिः पटुर्लवणः सैंधवादिर्मधुरं कृत्वा पच्यते रस इति संबंधः । मधुरमिति क्रियाविशेषणत्वान्नपुंसकलिंगम् । स्वादुः स्वादुविपाको लवणोऽपि स्वादुविपाक इत्यर्थः । अम्लो रसो दधिकांजिकादिरम्लं पच्यतेऽम्लविपाको भवति । तिक्तोषणकषायाणां प्रायशः कटुविपाको भवति । प्रायशोग्रहणं सर्वत्राऽपि योजनीयम् । तेन व्रीहिस्थो मधुरो रसोऽम्लं पच्यत इत्युपपन्नम् । तथा चोक्तम् । स्वादुरम्लविपाकोऽन्यो व्रीहिरिति । तथा हरीतक्या भूयस्त्वेन यः कषायो रसः स मधुरमेव पच्यते । तथा कटुको रसः शुंठ्यार्द्रकपिप्पल्यादिस्थो मधुरं पच्यते । तथा चोक्तम् । कषया मधुराः पाक इति । तथा । नागरं दीपनं वृष्यं ग्राहि हृद्यं विबंधनुत् । रुच्यं लघु स्वादुपाकमिति । तद्वदार्द्रकमपीति । तथा । श्लेष्मला स्वादुशीतार्द्रेत्यारभ्य यावत्स्वादुपाकेति । अत्र केचिदाहुः । तिक्तकषाययोरेव कटुविपाकतया पित्तकर्तृत्वमापद्यत इति । तदेतदसत् । शीतवीर्यत्वेनैतयोः पित्तहंतृत्वात् । वीर्यं हि रसविपाकौ विजयते । वक्ष्यति हि । रसं विपाकस्तौ वीर्यमिति ।

**रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ।**
**किंचिद्रसेन कुरुते कर्म पाकेन वाऽपरम् ॥ २२ ॥**
**गुणांतरेण वीर्येण प्रभावेणैव किंचन ।**

रसैर्जिह्वाविषयिकैर्मधुराम्लकटुकैर्विपाककालोपलभ्यो मधुराम्लकटुकलक्षणो यो रसो भवत्यसौ तुल्यफलः । तुल्यं सदृशं फलं यस्य स तुल्यफलः । एतदुक्तं भवति । अभ्यवहृतस्य मधुररसस्य जाठराग्निसंयोगवशाद्यद्रसांतरं फलतया निष्पन्नं तद्रसैः सदृशम् । फलग्रहणेनैतत्प्रतिपादयति । फलोपममेव वृष्यादिलक्षणकार्यसदृशं न तु कुसुमोपमं देहाह्लादनादिलक्षणकार्यमिति । एवमम्लादीनामपि व्याख्येयम् । तत्रेत्यादि । तेषु रसवीर्यविपाकादिषु मध्ये द्रव्यं किंचिच्छुभाशुभं सदसत्कर्म रसेन कुरुते । यथा । मधु कषायरसत्वेन पित्तं शमयति । किंचिद्विपाकेन । यथा । तदेव मधु कटुविपाकतया कफं हंति । किंचन द्रव्यं गुणांतरेणाऽन्योन्यगुणविकृतत्वाद्रसविपाकतो यः स गुणांतरो गुर्वादिस्तेन । यथा । अम्लं कांजिकं कफं शमयति । रौक्ष्यात् । किंचन वीर्येण । यथा कषायतिक्तं महत्पंचमूलं वातं जयति नतु पित्तमुष्णवीर्यत्वात् । किंचन द्रव्यं प्रभावेणैव शुभाशुभं कर्म कुरुते । यथा । अम्लोष्णा सुरा क्षीरं वर्धयति ।

ननु गुरूष्णाम्लमधुरादिगुणानां रसादीनां विरोधः । तत्रैषां कार्यनिष्पत्तौ समशक्तित्वं नवेत्याशंकानिवृत्त्यर्थमाह ।

**यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते ॥ २३ ॥**
**अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ।**

रसादीनां रसवीर्यविपाकप्रभावानां मध्ये यद्रसादिवस्तु रसो वीर्यं वा विपाको वा प्रभावो वा बलवत्त्वेन बलिष्ठतया द्रव्ये वर्ततेऽवतिष्ठते तत्तद्वस्तुजातमितरान्बलिष्ठानभिभूय विफलीकृत्य कारणत्वं प्रतिपद्यते । कर्मकरणे कारणतामासादयतीत्यर्थः।

अत इदमाह ।

**विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ॥ २४ ॥**

हि यस्माद्विरुद्धगुणसंयोगे संहतीभावे सति यदल्पं वस्तु तद्भूयसा बलवता जीयतेऽभिभूयते। गुणशब्देन चात्र रसादयो गृह्यंते न पारिभाषिका गुर्वादयोऽप्रकृतत्वात् । विरुद्धगुणसंयोग इत्यत्र विरुद्धगुणसमवेतद्रव्यसंयोग इति कल्प्यं न विरुद्धगुणसंयोग इति । न हि गुणानां संयोगो वक्तुं युज्यते किं तर्हि द्रव्याणाम् । तथा च मुनिः । संयोगस्तु द्वयोर्बहूनां वा संहतीभावः । विरोधश्च द्विविधः । स्वरूपतः कार्यतश्च । स्वरूपतो विरोधो गुरुलघ्वोः शीतोष्णयोश्च । कार्यतो यथा । वायौ जेतव्येऽरूक्षोष्णद्रव्यसंयोगोपयोगः । अत्र हि यो गुणानां विरोधः स कार्येण । तत्र यदल्पं वस्तुजातं तद्भूयसा वस्तुजातेनाऽभिभूयते । तत्र यथा क्षीरं शीतवीर्यमपि मधुररसहेतुकस्नेहगौरवादिभिः सहायबाहुल्याद्वातशमनाख्यं कार्यं करोति न पुनः स्वकार्यं वातप्रकोपाख्यम् ।

यत्र तु द्रव्ये रसादीनामुत्कर्षासंभवः परस्परं साम्यं तत्र कस्य कार्यकारणत्वमित्याह ।

**रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहति ।**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २५ ॥**

रसं मधुरादिषड्विधं विपाकः कर्ता व्यपोहति कार्यकरणे कुंठयति । यथा मधुरो मधुनि रसः कटुना विपाकेनाभिभूयते । अत एव पवनशमनाख्यं कार्यं मधुररसहेतुकं न करोत्यपि तु वातप्रकोपनाख्यं कटुविपाकहेतुकमेव करोति । तौ रसविपाकौ वीर्यं कर्तृभूतमपोहति । यथा महिषामिषोत्थितौ मधुररसविपाकावुष्णवीर्याख्यं कर्तृ अभिभवति । अत एव तन्मांसं पित्तादिदूषणम् । अन्यथा स्वादुरसविपाकित्वात्पित्तशामकमेव स्यात् । प्रभावस्तु त्रीनपि रसादीन् विजयते । यथा । अम्लरसविपाकोष्णवीर्या च सुरा क्षीरं जनयति । इतीदृशं रसादीनां नैसर्गिकं बलं स्वाभाविकी शक्तिः । एतदुक्तं भवति । रसं समबलमपि विपाको व्यपोहति । रसविपाकौ च समबलावपि वीर्यं स्वभावादपोहति । एतानि च समबलान्यपि प्रभावो व्यपोहतीति ।

ननु द्रव्यरसविपाकवीर्याणि कर्मानुमानेन यथास्वरूपाण्येवावगच्छामः । प्रभावस्य तु न ज्ञायते कीदृशं कर्मेत्यत आह ।

**रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ।**

द्वयोर्द्रव्ययो रसादीनां रसवीर्यविपाकानां साम्ये सति यदेकं द्रव्यमन्यत्कर्म कुरुतेऽन्यत्पुनरन्यद्विशिष्टं कर्म तत् प्रभावजं प्रभावाज्जातमिति ज्ञेयम् । अयमस्य द्रव्यस्य प्रभाव इति विशिष्टकर्मकरणान्निश्चीयत इत्यर्थः । ननु प्रभावः क उच्यत इति । ब्रूमः । रसवीर्यविपाकादिगुणातिशायी द्रव्यस्य स्वभावो यः स प्रभावः । उक्तं च । रसवीर्यविपाकादिगुणातिशयवानलम् । द्रव्यस्वभावो निर्दिष्टो यः प्रभावः स कीर्त्यत इति ।

अत्र निदर्शनार्थमाह ।

**दंती रसाद्यैस्तुल्याऽपि चित्रकस्य विरेचनी ॥२६॥**
**मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ।**

चित्रकस्य रसवीर्यविपाकैस्तुल्याऽपि दंती रसादिभ्योऽतिशायिद्रव्यस्वभावयोगाद्विरेचनी न चित्रकश्चित्रकत्वात् । मधुकस्य च मृद्वीका तुल्याऽपि रसादिभ्योऽतिशायिद्रव्यस्वभावयोगान्मृद्वीका विरेचनी न मधुकम् । घृतं क्षीरस्य रसादिभिस्तुल्यमपि घृतं दीपनं न पुनः क्षीरम् । अन्ये त्वेवं प्रभावलक्षणं प्रतिपन्नाः प्रतिवस्तु स्वसंज्ञाप्रवृत्तिनिमित्तलक्षणो यो धर्मस्त्वतलादिप्रत्ययप्रतीतिसमधिगम्यः स प्रभावः । तंत्रांतरे चोक्तम् । वस्तूनां यः स्वसंज्ञायाः प्रवृत्तौ कारणे स्मृतः । त्वतलादिबोध्यश्च प्रभाव इति । एवं च दंतीत्वाद्दंत्या विरेचनकारित्वं प्रभावः । चित्रकस्य चित्रकत्वादविरेचनकारित्वं प्रभावः । एवं मृद्वीकात्वान्मृद्वीकाया विरेचनकारित्वं प्रभावः । इत्यादि सकलपदार्थेषु बोध्यम् ।

सामान्यविशेषाभ्यां यतः सकलं व्याप्तमतो ग्रंथकार इदमाह।

**इति सामान्यतः कर्म द्रव्यादीनां पुनश्च तत् ॥२७॥**
**विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।**

इति प्रकारे । अनेन प्रकारेण द्रव्यरसवीर्यादीनां सामान्येन कर्म व्याख्यातं न विशेषेण । यैरेव महाभूतै रसवीर्यादयो द्रव्याश्रिता आरब्धास्तैरेव तथाभूतैस्तदाश्रयमपि द्रव्यम् । अतः सामान्यतः कर्म द्रव्यादीनां युक्तं संप्राप्तं विशिष्टं कर्म प्रतिद्रव्यं वक्तुमिदमाह । पुनश्च तदिति । तत्सामान्योक्तं कर्म द्रव्यरसादीनां संबंधि पुनर्भिद्यते विशिष्यते । केनेत्याह । विचित्रेत्यादि । विचित्राश्च ते प्रत्ययाश्च विचित्रप्रत्ययाः । नानाकारसंनिवेशविशेषयुक्तानि महाभूतानि प्रतिसत्त्वं प्राक्तनशुभाशुभकर्मप्रेरितो विचित्रो महाभूतपरिणाम इत्यर्थः । विचित्रप्रत्ययारब्धं च तद्द्रव्यं च तस्य भेदो विशेषस्तेन विचित्रप्रत्ययारब्धद्रव्यभेदेन तत्सामान्योक्तं कर्म द्रव्यादीनां भिद्यते । द्रव्याश्रितत्वाद्रसादीनामपि यत्कर्म तदपि द्रव्यभेदेन भिद्यते न तु सर्वमपि देशकालादिवशाद्विचित्रप्रत्ययारब्धम् । परस्परवैलक्षण्याद्द्रव्याणाम् । परस्परवैलक्षण्ये चैषां विचित्रप्रत्ययारब्धत्वमेव कारणम् । यद्वशादन्यदिदं द्रव्यमिति रूपरसविपाकादिभिन्नमुत्पद्यते तथा प्रतिभासते च । तत्किंनु विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यत इति । अत्राऽचक्ष्महे । सत्यमेतत् किंतु विशिष्टद्रव्यस्य संग्रहार्थं विचित्रप्रत्ययारब्धमिति विशेषणं शास्त्रकृता कृतम् । यस्य भेदेन द्रव्ये रसवीर्यादीनां यत्सामान्योक्तं कर्म तद्भिद्यते । यस्मिन् द्रव्ये रसादीनामन्यानि महाभूतान्यारंभकाणि द्रव्यस्य चारंभकाण्यपराणि च तद्द्रव्यं विचित्रप्रत्ययारब्धम् । तदेवं द्रव्याणां द्वैविध्यम् । यतः कानिचिद्द्रव्याणि यैरेव महाभूतैर्यथाविधै रसादय आरब्धास्तैरेव तथाविधैर्महाभूतैस्तदाश्रयाण्यपि द्रव्याण्यारब्धानि । तानि रसादिसमानप्रत्ययारब्धान्युच्यंते । तानि च यथायथं तत्कर्म रसाद्यनुगुणं सामान्यात्कुर्वते । यथा क्षीरेक्षुशर्करादीनि । कानिचित्पुनस्तदाश्रितरसादिसमारंभकमहाभूतान्यन्यानि तदाश्रयद्रव्यारंभकाण्यन्यानि च महाभूतानि । तैरारब्धानि तानि विचित्रप्रत्ययारब्धानि द्रव्याणि । एतदुक्तं भवति । रसादीनामारंभकाण्यन्यथाभूतानि महाभूतानि नोभयत्रैकरूपाणीति । तानि च यथायथं रसाद्यनुगुणं कर्म न कुर्वंति भिन्नत्वाद्धेतुभावस्य । तथाहि । रसादीनामारंभेऽन्यो हेतुरन्यश्च तदाश्रयद्रव्यारंभ इति । यथा मकुष्ठयवमत्स्यसिंहादीनि । एतानि यथारसं वीर्यविपाककर्म कुर्वंति । विचित्रप्रत्ययारब्धत्वात् । इत्थं यानि रसादिसमानप्रत्ययारब्धानि द्रव्याणि च बहून्यपि तेषां रसोपदेशेन रसकर्म निर्देष्टुं शक्यते । अत एव हेतोः षण्णां रसानां योऽनुगुणनिर्देशस्तस्य सार्थकत्वम् । रसोपदेशमंतरेण हि बहुतराणां समानरूपाणां द्रव्याणां क्षीरेक्ष्वादीनां कर्म वक्तुं सुखेन शक्यते । यानि तु विचित्रप्रत्ययारब्धानि द्रव्याणि तेषां प्रतिद्रव्यं कर्मोपदेशं विना यथायथं कर्म वक्तुं न शक्यते ।

एतदुदाहरणार्थं ग्रंथकृदाह ।

**स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ॥ २८ ॥**
**उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ।**

स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो मधुररसोपदिष्टं यद्वातजित्त्वं कर्म तत्करोति । समानप्रत्ययारब्धत्वात् । यवस्तु स्वादुरसोपेतो गुरुगुणयुक्तश्च मधुररसोपदिष्टं यद्वातजित्त्वं कर्म तन्न करोत्यपि तु वातकृत्त्वमेव करोति । विचित्रप्रत्ययारब्धत्वात् । मत्स्यः स्वादुरसोपेतो गुरुगुणोपेतश्च न मधुररसोपदिष्टशीतवीर्यः किं तर्ह्युष्णवीर्यो विचित्रप्रत्ययारब्धत्वात् । क्षीरं च स्वादुरसोपेतं गुरुगुणयुक्तं च मधुररसोपदिष्टशीतवीर्यं समानप्रत्ययारब्धत्वात् । स्वादुरसयुक्तो गुरुगुणयुक्तश्च सिंहो न यथारसं मधुरविपाकः किं तर्हि कटुको विपाके विचित्रप्रत्ययारब्धत्वात् । शूकरो मधुररसयुक्तो गुरुगुणोपेतश्च यथारसं मधुरविपाक एव समानप्रत्ययारब्धत्वात् । एवं यानि समानप्रत्ययारब्धानि द्रव्याणि तेषां रसोपदेशेनैव गुणा निर्दिष्टा भवंति । तथा च मुनिः । शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः । तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः । तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः । वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते । यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ । एवमादीनि चान्यानि निर्दिशेद्रसतो भिषगिति । बाहुल्येन च रसादिसमानप्रत्ययारब्धान्येव द्रव्याणीति चेतसि कृत्वा चान्योऽवोचत् । यथा । गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये । रसेषु व्यपदिश्यंते साहचर्योपचारत इति । अत एव च बहुतराणि द्रव्याणि रसादिसमानप्रत्ययारब्धान्यतो रसोपदेशव्याख्या तानि निर्देष्टुं शक्यंते नान्यथा । विचित्रप्रत्ययारब्धानि पुनः कतिपयान्येव द्रव्याणि तानि प्रतिद्रव्यमेवोपदिश्यंते। मुनिनाऽप्ययमर्थो युक्त्यैवोक्तः । यथा । मधुरं किंचिदुष्णं स्यात्कषायं तिक्तमेव च । यथा महत्पंचमूलं यथा चानूपमामिषम् । लवणं सैंधवं नोष्णमम्लमामलकं यथा । अर्कागुरुगुडूचीनां तिक्तानां चौष्ण्यमुच्यते । किंचिदम्लरसं ग्राहि किंचिदम्लं भिनत्ति च । यथा कपित्थं संग्राहि भेदि चामलकं यथा । पिप्पली नागरं वृष्यं कटु वा वृष्यमुच्यते । कषायः स्तंभनः शीतः सोऽभयास्त्वन्यथामतः । तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेदिति । ये च रससंयोगा वक्ष्यमाणास्ते रसादिसमानप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपैर्मिथः कल्पनीयाः । न तु विचित्रप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपैः। यस्मात्तेषामयथाशास्त्रनिरूपिता रसवीर्यविपाकादयो विद्यंते विचित्रप्रत्ययारब्धत्वात् । अयं रससंयोगभेद एवंगुणोऽयमेवंगुणत्वाचामुष्मिन्विषये योज्य एतस्मिन्विषये चाऽयमिति निर्देष्टुं न शक्यते । अनिर्ज्ञातस्वरूपत्वात् । नाह विचित्रप्रत्ययारब्धैर्ये रससंयोगाः क्रियंते तेषां स्वरूपं कथमवधारयितुं शक्यते । अपिच । समानप्रत्ययारब्धैर्ये संयोगाः कल्प्यंते तेषां संयोगिनां वीर्यतो यो विरोधः शीतोष्णलक्षणः स न दोषाय । ये तु विचित्रप्रत्ययारब्धैः संयोगाः कल्प्यंते तेषां संयोगिनां यः शीतोष्णलक्षणैर्विरोधः स दोषायेति वेद्यम् । अन्यथा रसालापानकादीनामनेकद्रव्यकृतानामनभ्यवहार एव प्राप्नुयात् । तथा त्रयस्त्रिंशद्वर्गा ये वक्ष्यमाणास्तेषु यदयौगिकं तज्जह्यात् यौगिकं त्वनुक्तमपि युंज्यादिति यद्वक्ष्यते तत्र रसादिसमानप्रत्ययार-

ब्धमेव योज्यं न विचित्रप्रत्ययारब्धम् । तस्य रसवीर्यविपाकानां निश्चयस्य कर्तुमशक्यत्वात् । तस्मादित्यादि । यत एवं विचित्रप्रत्ययारब्धं विचित्ररूपं तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेदपितु रसादिसमानप्रत्ययारब्धं द्रव्यमेव रसोपदेशेन निर्दिशेदिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

पूर्वस्मिन्नध्याये रसान् भेदैरुत्तरत्रोपदेक्ष्यत इत्युक्तमतस्तान् रसभेदान्वक्तुं रसभेदीयाध्यायं ब्रूते ।

**अथाऽतो रसभेदीयमध्यायं व्याख्यास्यामः ।**

रसानां भेदो रसभेदस्तस्मै हितो रसभेदीयस्तमध्यायं व्याख्यास्यामः कथयिष्यामः।रसनार्थो रस इति मुनिः।तथाऽब्योनिरपामेव रसवत्त्वात् । तथा च मुनिः । आपो हि रसवत्य इति । अपां चाव्यक्तरसत्वात्प्रति व्यक्त्यन्यादृशो रसानां महाभूतवैलक्षण्यज आस्वाद आस्वाद्यते । तथा च मधुररसाधिष्ठितानां क्षीरद्राक्षेक्षुशर्करादीनां प्रतिव्यक्त्यन्यादृशो मधुरास्वाद उपलभ्यते । न त्वेकरूपः । एवमम्लानामारनालकोलाम्लिकादीनामपि प्रतिद्रव्यमनेकरूप आस्वादविशेष उपलभ्यते न त्वेक एव ।

पूर्वं च प्रत्यपादि षडेव रसा इति तानेव लक्षयति ।

**क्ष्मांभोऽग्निक्ष्मांऽबुतेजःखवाय्वग्न्यनिलगोऽनिलैः ।**
**द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ १ ॥**

पृथिव्यादिभिर्महाभूतैर्द्वयोल्बणैर्द्व्यधिकैः क्रमात्परिपाट्या । यथासंख्यमित्यर्थः । मधुरादीनां षण्णां रसानामुद्भवोऽभिनिर्वृत्तिर्भवति । द्वयमुल्बणं येषु भूतेषु तानि द्वयोल्बणानि तैः । द्वयोल्बणशब्दोपादानाच्च द्रव्यवद्रसस्याऽपि पांचभौतिकत्वमिति प्रतिपादयति । कतमत्पुनर्भूतद्वयं कतमस्मिन् रसेऽधिकमारंभकं स्यादिति यथासंख्येन दर्शयन्नाह । क्ष्मांभोऽग्निक्ष्मांबुतेजःखवाय्वग्न्यनिलगोनिलैः । भूमिजलाभ्यामधिकाभ्यां मधुरः । क्ष्माग्निभ्यामम्लः । अंब्वग्निभ्यां लवणः । खवायुभ्यां तिक्तकः । अग्निवायुभ्यां कटुः । क्ष्मानिलाभ्यां कषायः । ननु भूमितोयाधिक्यान्मधुर एवमंब्वाद्याधिक्यादन्यो भूम्याकाशाधिक्यादन्य इत्येवमादिरसविकल्पैरसंख्येयरसप्रसंगः प्राप्नोति । अत्रोच्यते । स्वभावाददोषः । एषां भूम्याकाशादीनामीदृशः स्वभावो यत्केनचिदेव भूताधिक्येन व्यवस्थितानि भूम्यादीनि रसांतरोत्पादनसमर्थानि भवंति न सर्वेणेति ।

ननु स्वलक्षणं विनाऽनुक्तो रसविशेषः कथं ज्ञायतामिति लक्षणार्थमाह ।

**तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिंपति ।**
**आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः ॥ २ ॥**
**प्रियः पिपीलिकादीनाम्**

तेषां रसानां मध्य आस्वाद्यमानो वक्त्रमनुलिंपति मुखोपदेहं जनयति । तथा देहस्याह्लादन आश्वासकः । तथाऽक्षाणामिंद्रियाणां प्रसादनः प्रसन्नत्वकृत् । तथा पिपीलिकादीनां प्रियः । तं मधुरं जानीयात् । पिपीलिकादीनां प्रिय एतेनैतद्दर्शयति । प्रमेहादिषु मूत्रगंधोदये पिपीलिकोपसर्पणान्माधुर्यानुमानं कृत्वा मधुमेहत्वादि ज्ञायते । आस्वाद्यमान इत्युत्तरत्राऽपि योज्यम् ।

**अम्लः क्षालयते मुखम् ।**
**हर्षणो रोमदंतानामक्षिभ्रुवनिकोचनः ॥ ३ ॥**

अम्लो रस आस्वाद्यमानो मुखं क्षालयते स्रावयति । तथा रोमदतानां हर्षणः । हृषु अलीके । अलीककारी । उद्वेजक इत्यर्थः। तथाऽक्षिभ्रुवनिकोचनः । अक्षिणी च भ्रुवौ चाक्षिभ्रुवम् । अचतुरादिसूत्रे निपातितम् ।

**लवणः स्यंदयत्यास्यं कपोलगलदाहकृत् ।**

लवणो रसो मुखं स्यंदयति । तथा कपोलयोर्गले च दाहं करोति । अन्नस्य रोचन इतीहातिप्रसिद्धत्वान्नोक्तम् । संग्रहे तु । स्पष्टार्थमुक्तम् । यथा । कंठकपोलं विदहत्यन्नं प्ररोचयतीति ।

**तिक्तो विशदयत्यास्यं रसनं प्रतिहंति च ॥ ४ ॥**

तिक्तो मुखं विशदयतीति । तच्च पैच्छिल्ययुतं करोति । रसनेंद्रियं च प्रतिहंति । अन्यरसग्रहणशक्तिं नाशयतीत्यर्थः ।

**उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः ।**
**स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ॥ ५ ॥**

कटुरास्वाद्यमानो जिह्वाग्रमुद्वेजयति सोद्वेगं करोति । चिमिचिमां कुर्वन् दहनज्वालासंस्पर्शादिवाऽक्ष्यादि स्रावयति । गंडौ च दहतीव ।

**कषायो जडयेज्जिह्वां कंठस्रोतोविबंधकृत् ।**

कषायो जिह्वां जडयति रसादिक्रियायां मंदीकरोति । तथा कंठस्य स्रोतांसि शिराविशेषास्तेषां विबंधं करोति । श्वासादीनामयथाप्रवृत्तिमिव कुरुत इत्यर्थः ।

**रसानामिति रूपाणि कर्माणि**

इति परिसमाप्तौ । रसानां मधुरादीनां लक्षणानि समाप्तानि संप्रति तेषां कर्म यथास्वं प्रदर्शयन्नाह । कर्माणीति वक्ष्यमाणानीति वाक्यशेषः ।

अथ को रसः किं कर्म करोतीत्यत आह ।

**मधुरो रसः ॥ ६ ॥**
**आजन्मसात्म्यात्कुरुते धातूनां प्रबलं बलम् ।**
**बालवृद्धक्षतक्षीणवर्णकेशेंद्रियौजसम् ॥ ७ ॥**
**प्रशस्तो बृंहणः कंठ्यः स्तन्यसंधानकृद्गुरुः ।**
**आयुष्यो जीवनः स्निग्धः पित्तानिलविषाऽपहः॥८॥**
**कुरुतेऽत्युपयोगेन समेदःकफजान् गदान् ।**
**स्थौल्याग्निसादसंन्यासमेहगंडार्बुदादिकान् ॥ ९ ॥**

मधुरो रसो धातूनां बलं प्रबलं कुरुते । बलं निजं यत्प्रकृष्टं जनयतीत्यर्थः । कुतः आजन्मसात्म्याजन्मप्रभृति देहस्य सात्म्यादित्यर्थः । बालभाव एव हि क्षीरादिना पुरुषस्य वृत्तिः । तथा बालादीनां प्रशस्तो हितस्तेजसोऽधिकवर्धनत्वात्प्रशस्तः । ओजस्तु तेजोधातूनां परमित्योजोलक्षणं वक्ष्यति । तथा बृंहणः कंठ्यश्च । स्तन्यं क्षीरं संधानं श्लेषस्ते करोतीति स्तन्यसंधानकृत् । तथाऽऽयुष्यादिगुणः । नन्वायुष्यजीवनयोरेकार्थत्वादेकतरोपादानमेव युक्तम् । नैवम् । एतयोर्भिन्नार्थत्वात् । तथाहि । आयुष्यः स उच्यते । योऽपरिमितायुषो हितोऽधिकायुषो हितत्वात् । तथा च मुनिः । तेनाऽयुरमितं लेभ इति । यस्त्वायुषो नियतरूपस्य तामेव मर्यादामनुबध्नाति स जीवयतीति जीवन उच्यते । तदनयोः स्पष्ट एव भेदः । तथा जीवनमोजस्यमित्यभिन्नार्थौ किंत्वेतयोर्द्वयोरपीह यदुपादानं तदोजसो द्विविधाया अपि वृद्धेः कारकोऽयमिति प्रतिपादयितुम् । तथा च मधुरो रसो रुधिरादिक्रमेणौजसो वृद्धिकरः सामान्याद्विशेषाच्च । यथा क्षीरं धातुवर्धनमुक्तं वृष्यं च । तत्र धातुवर्धनत्वेनैव वृष्यत्वस्योक्तत्वाद्वृष्यशब्दोपादानं यत्तदन्यानि वृष्याणि रूपाण्यात्मगुणादीनि तेभ्यः सकाशाद्विशेषेणाश्वेव वृद्धिकरमिति द्योतयितुं कृतमिति । कुरुत इत्यादि । मधुरो रसोऽत्युपयोगेनाऽतिसेवया मेदःश्लेष्मोत्थान्रोगान्करोति । कांस्तानित्याह । स्थौल्यादिकान् ।

**अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।**
**उष्णवीर्यो हिमस्पर्शः प्रीणनो भेदनो लघुः ॥ १० ॥**
**करोति कफपित्तास्रं मूढवातानुलोमनम् ।**
**सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम्**
**कंडुपांडुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ।**

अम्लो रसोऽग्निदीप्तिकृत्त्वादियुतः तथा कफपितास्रं करोति । मूढमननुलोमगं वातमनुलोमयतीति मूढवातानुलोमनः । सोऽम्लो रसोऽतिसेवितो देहशैथिल्यं तिमिरादींश्च कुर्यात् ।

**लवणः स्तंभसंघातबंधविध्मापनोऽग्निकृत् ॥ १२ ॥**
**स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।**
**सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥ १३ ॥**
**तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ।**

लवणो रसः स्तंभादिविध्मापनो वह्निकृत्त्वादियुतश्च । सोऽत्यभ्यस्तो वातरक्तादीन् जनयेत् । बलं प्राणं क्षपयेत् ।

**तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ॥ १४ ॥**
**कुष्ठमूर्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् ।**
**क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १५ ॥**
**लघुर्मेध्यो हिमो रूक्षः स्तन्यकंठविशोधनः ।**
**धातुक्षयाऽनिलव्याधीनतियोगात्करोति सः ॥ १६ ॥**

तिक्तो रसः स्वयं मुखस्याऽरोचनशीलोऽरुच्यादीन् जयेत् । अरुचिराहारद्रव्यविषयेऽनभिलाषः । क्लेदादीनामुपशोषणः । तथा लघ्वादिगुणयुक्तः । सोऽतिसेवितो धातुक्षयादीन् कुरुते ।

**कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ।**
**व्रणावसादनस्नेहमेदःक्लेदोपशोषणः ॥ १७ ॥**
**दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः ।**
**छिनत्ति बंधान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥**
**कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।**
**मूर्छामाकुंचनं कंपं कटिपृष्ठादिषु व्यथाम् ॥ १९ ॥**

कटुर्गलामयादीन् जयति । व्रणस्याऽवसादनो रोहणः स्नेहादिविशोषणो दीपनत्वादिगुणयुक्तश्च । अन्नं शोषयति विदहति । अन्नशोषणत्वाच्छिनत्ति बंधान् । स्रोतांसि विवृणोति प्रसारयति । कफघ्नश्च सोऽतिनिषेवितस्तृष्णादीन् करोति ।

**कषायः पित्तकफहा गुरुरस्रविशोधनः ।**
**पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥**
**आमसंस्तंभनो ग्राही रूक्षोऽतित्वक्प्रसादनः ।**
**करोति शीलितः सोऽतिविष्टंभाध्मानहृद्रुजः ॥ २१ ॥**
**तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ।**

कषायः पित्तकफघ्नो गुरुत्वादियुतोऽतिशयेन त्वक्प्रसादनश्च । सोऽत्युपयुक्तो विष्टंभादीन्करोति ।

अथ मधुरादिस्कंधान्निर्दिशति ।

**घृतहेमगुडाक्षोडमोचचोचपरूषकम् ॥ २२ ॥**
**अभीरुवीरापनसराजादनबलात्रयम् ।**
**मेदे चतस्रः पर्णिन्यो जीवंतीजीवकर्षभौ ॥ २३ ॥**
**मधूकं मधुकं बिंबी विदारी श्रावणीयुगम् ।**
**क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यौ काश्मरी सहे ॥ २४ ॥**
**क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।**

हेम कांचनम् । राजादनं चाषप्रियम् । बलात्रयं बलाऽतिबला नागबलेति । मेदा महामेदेति मेदाद्वयम् । चतस्र इति । शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च । मधूकं मधूकपुष्पम् । मधुकं मधुयष्टी । बिंबी गोल्हा । श्रावणीयुगं श्रावणी महाश्रावणी च । क्षीरिणी कांचनक्षीरी । काश्मरी गंभारी । सहे महासहा क्षुद्रसहा च । आदिशब्देन तृणपंचमूलं मेदोमज्जतैलं मधुरदाडिमपुष्करबीजशृंगाटकाश्वगंधाश्वदंष्ट्रामृणालकशेरुकासिंचतिकाखर्जूरीतालमस्तकादीनि गृह्यंते ।

इदानीमम्लस्कंधमाह ।

**अम्लो धात्रीफलाम्लीकामातुलुंगाम्लवेतसम् २५**
**दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।**
**आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २६ ॥**

धात्रीफलमामलकम् । रजतं रौप्यम् । चुक्रं शुक्तम् । उपलक्षणं चेदम् । संग्रहोक्तान्यन्यान्यपि कोशाम्रलकुचकुवलकोलबदरैरावतप्राचीनामलकमस्तुधान्याम्लादीनीहैव बोध्यानि ।

अथ लवणस्कंधमाह ।

**वरं सौवर्चलं कृष्णं विडं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं शीसं क्षारश्च लवणो गणः ॥ २७ ॥**

वरं सैंधवं लवणश्रेष्ठत्वात् । क्षारः स्वर्जिकादिः ।

तिक्तस्कंधं वक्ति ।

**तिक्तः पटोली त्रायंती वालकोशीरचंदनम् ।
भूनिंबनिंबकटुकातगरागुरुवत्सकम् ॥ २८ ॥
नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् ।
पाठापामार्गकांस्यायोगुडूचीधन्वयासकम् ॥ २९ ॥
पंचमूलं महद्व्याघ्र्यौ विशालाऽतिविषा वचा ।**

नक्तमालः करंजः । कांस्यं लोहभेदः । अयो लोहम् ।

कटुस्कंधमाह ।

**कटुको हिंगुमरिचक्रिमिजित्पंचकोलकम् ॥ ३० ॥
कुठेराद्या हरीतकाः पित्तं मूत्रमरुष्करम् ।**

पित्तं मूत्रं छागादीनाम् । उपलक्षणं चेदम् । अन्यानि संग्रहोक्तानि च मनःशिलासर्षपकुष्ठादीनि बोध्यानि ।

कषायस्कंधमाह ।

**वर्गः कषायः पथ्याक्षं शिरीषः खदिरो मधु ॥ ३१ ॥
कदंबोदुंबरं मुक्ताप्रवालांजनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसपद्मोत्पलादि च ॥ ३२ ॥**

आदिशब्देन प्रियंगुरोध्रकट्वंगादीनि गृह्यंते ।

इदानीमेषां गुणनिरूपणं करोति ।

**मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सितताया जांगलामिषात्॥३३॥**

प्रायेण मधुरं द्रव्यं कफकृद्भवति शाल्यादीन्पुराणान् वर्जयित्वा । प्रायोग्रहणं तैलमकुष्टादीनां व्यभिचारदर्शनात् । एवमुत्तरत्राऽपि प्रायोग्रहणस्य प्रयोजनं वेद्यम् ।

**प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैंधवात् ॥ ३४ ॥**

अम्लं द्रव्यं प्रायः पित्तकृद्दाडिमामलके हित्वा । लवणं द्रव्यं प्रायश्चक्षुषोऽपथ्यं सैंधवं वर्जयित्वा ।

**तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुंठीकृष्णारसोनतः ॥ ३५ ॥**

तिक्तं द्रव्यं कटु च प्रायेणावृष्यं वातकृच गुडूच्यादीन् हित्वा ।

**कषायं प्रायशः शीतं स्तंभनं चाऽभयामृते ।**

कषायं द्रव्यं प्रायेण शीतवीर्यं स्तंभनं च भवति हरीतकीं वर्जयित्वा ।

**रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥३६॥
तिक्तः कषायो मधुरस्तद्वदेव च शीतलः ।**

कट्वम्ललवणा रसा यथोत्तरमुष्णवीर्याः । कटुरुष्णः । अम्ल उष्णतरः । लवण उष्णतमः । एवमुत्तरत्राऽपि यथोत्तरत्वं योज्यम् । तिक्तादयश्च तद्वदेव यथोत्तरं शीतवीर्याः । तेन तिक्तः शीतवीर्यः । कषायः शीतवीर्यतरः । मधुरः शीतवीर्यतम इति स्थितम् ।

**तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३७ ॥**

तिक्तकटुकषाया रूक्षा विष्टंभकृतश्च । तथेति । यथोत्तरमित्यर्थः ।

**पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ।**

पट्वादयः स्निग्धा निःसारितविण्मूत्रवाताश्च । तथेत्यत्राऽपि वर्तते ।

**पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३८ ॥**

लवणात्कषायो गुरुतरः कषायान्मधुरः परमं गुरुः । अतिशयेन गुरुरित्यर्थः ।

**लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।**

अम्लो लघुस्तस्मादम्लात् कटुर्लघुतरस्तस्माच्च कटोस्तिक्तो लघुतमः ।

इदानीं रसानामाधारद्वारेण संयोगान् कल्पनां च विभजन्नाह ।

**संयोगाः सप्तपंचाशत्कल्पना तु त्रिषष्टिधा ॥ ३९ ॥
रसानां यौगिकत्वेन यथास्थूलं विभज्यते ।**

वक्ष्यमाणया रीत्या रसानां योगाः सप्तपंचाशद्विभज्यंत इति वचनविपरिणामेन संबंधः । कल्पना पुनरेषां त्रिषष्टिधा विभज्यते कथं कृत्वा कल्पना विभज्यते । यथास्थूलं स्थूलानतिक्रमेण व्यक्तरसास्वादानुरूपतया न पुनर्यथासूक्ष्मम् । तथाहि । रसानुरसकल्पनया तरतमयोर्वशाच्च रसानां कल्पना क्रियमाणाऽऽनंत्यमुपैति । तस्माद्यथास्थूलं रसानां कल्पना त्रिषष्टिधा विभज्यते । तथा यौगिकत्वेन शरीरोपयोग्यत्वेन ।

इदानीं रससंयोगानां व्याख्यानं विभक्तिकामाह ।

**एकैकहीनांस्तान्पंच पंच याति रसा द्विके ॥ ४० ॥
त्रिके स्वादुर्दशाम्लः षट् त्रीन्पटुस्तिक्त एककम् ।
चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत्॥४१॥
पंचकेष्वेकमेवाम्लो मधुरः पंच सेवते ।
द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥**

द्विके परिमाणे रसाधारद्रव्यसंबंधिनि संयोगे पंच रसा मधुराम्ललवणतिक्तकटुकास्तान् पंचाम्ललवणतिक्तकटुकषायान् यांति संयुज्यंते । किंभूतानेकैकेन हीना विनाकृता एकैकहीनास्तान् । येनैकेन युक्तांस्तद्वियुक्तानित्यर्थः । अत्र पंचानां रसानां पर्यायेण प्रत्येकमेकैकहीनानां च शक्तिमत्त्वेनैककर्तृत्वेन च संबंधो वेद्यः । अत एव चतुर्द्विके पंचदशप्रकाराविति यद्वक्ष्यति तदुपप-

त्रम् । एवं मधुरोऽम्लादीनम्लो लवणादीन् लवणस्तिक्तादींस्तिक्तः कटुकषायौ कटुः कषायं यातीति स्थितम् । द्विक इति द्वौ परिमाणमस्य संयोगस्य । संख्यायाः संज्ञेत्यादिपरिमाणानुवृत्तेः परिमाणार्थे संख्याया अतिशदंतायाः कनिति कन् । एवं त्रिकादिषु वक्ष्यमाणेषु लक्षणं योज्यम् । द्विरसद्रव्यसंयोगे पंचदश भेदा भवंति । यथा । मधुरोऽम्लं याति १ मधुरो लवणं २ मधुरस्तिक्तं ३ मधुरः कटुकं ४ मधुरः कषायं ५ । अम्लो लवणं याति १ अम्लस्तिक्तं २ अम्लः कटुकं ३ अम्लः कषायं ४ । लवणस्तिक्तं १ लवणः कटुकं २ लवणः कषायं ३ । तिक्तः कटुकं १ तिक्तः कषायं २ । कटुः कषायमिति १ । अत्र च मधुरस्य गंतृत्वमेव न गम्यत्वं हीनत्वयोगाऽभावात् । कषायस्य गम्यत्वमेव न गन्तृत्वमंत्यत्वात् । एवं द्विरससंयोगे पंचदश । त्रिके त्रिरसाधारद्रव्यसंबंधिनि संयोगे स्वादुर्मधुरो दश संयोगान् याति । यथा । मधुरोऽम्ललवणं १ मधुरोऽम्लतिक्तकं २ मधुरोऽम्लकटुकं ३ मधुरोऽम्लकषायं ४ । स एव मधुराम्लत्यागेन तत्स्थाने लवणयुक्तस्तिक्तादिभिस्त्रिभिः क्रमेणाऽन्वितस्त्रीन् संयोगान् याति । मधुरलवणतिक्तकः १ मधुरलवणकटुकः २ मधुरलवणकषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तयुक्तः कटुकषायाभ्यां क्रमेणाऽन्वितो द्वौ संयोगौ याति । मधुरतिक्तकटुकः १ मधुरतिक्तकषायः २ । स एव तिक्तत्यागेन तत्स्थाने कटुकान्वित एकं संयोगं याति । मधुरकटुकषायः १ । एवं मधुरो दशसंयोगान् याति । अम्ल इत्यादि । त्रिक इति वर्तते । अम्लः षट् संयोगान् याति । यथा । अम्ललवणतिक्तः १ अम्ललवणकटुकः २ अम्ललवणकषायः ३ । स एवाऽम्लो लवणत्यागेन तत्स्थाने तिक्तान्वितः कटुकषायाभ्यां क्रमेण युक्तो द्वौ संयोगौ याति । अम्लतिक्तकटुकः १ अम्लतिक्तकषायः २ । एवं तिक्तत्यागेनैकं संयोगं याति । अम्लकटुकषायः १। इत्यम्लः षट् । त्रीन् पटुरिति । लवणस्तिक्तयुक्तः कटुकषायाभ्यां क्रमेणाऽन्वितो द्वौ संयोगौ याति । लवणतिक्तकटुकः १ लवणतिक्तकषायः २ । स एव तिक्तत्यागेनैकं याति । लवणकटुकषायः १। एवं लवणस्त्रीन् संयोगान् याति । तिक्त एकमेव संयोगं याति । तिक्तकटुकषायः १ । एवं त्रिकसंयोगे विंशतिः । चतुष्केष्वित्यादि । चतुष्करससंयोगेषु स्वादुर्दश संयोगान् याति । तत्र मधुरः साम्लो लवणादिभिः षट् संयोगान् याति । यथा । मधुराम्ललवणतिक्तः १ मधुराम्ललवणकटुकः २ मधुराम्ललवणकषायः ३ मधुराम्लतिक्तकटुकः ४ मधुराम्लतिक्तकषायः ५ मधुराम्लकटुकषायः ६ । स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणान्वितस्त्रीन् संयोगान् याति । मधुरलवणतिक्तकटुकः १ मधुरलवणतिक्तकषायः २ मधुरलवणकटुकषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तान्वित एकं संयोगं याति । मधुरतिक्तकटुकषायः १ । एवं चतुष्केषु मधुरो दश संयोगान् याति । चतुरोऽम्ल इत्यादि । चतुष्क इति वर्तते । अम्लः सलवणस्तिक्तादिभिस्त्रीन् संयोगान् याति । अम्ललवणतिक्तकटुकः १ अम्ललवणतिक्तकषायः २ अम्ललवणकटुकषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तान्वित एकं संयोगं याति । अम्लतिक्तकटुकषायः १ । एवं चतुष्केष्वम्लश्चतुरः । पटुः सकृत् । पटुर्लवणः सकृदेकं भेदं याति । लवणतिक्तकटुकषायः १ । एवं चतुष्केषु पंचदश संयोगभेदाः । पंचकेष्वेकमेवाम्ल इति । पंचकेष्वम्लो रस एकमेव भेदं याति । अम्ललवणतिक्तकटुकषायः १ । मधुरः पंच सेवते । मधुरो रसः पंच संयोगान् सेवते । अम्लत्यागान्मधुरलवणतिक्तकटुकषायः १ लवणत्यागान्मधुराम्लतिक्तकटुकषायः २ तिक्तत्यागान्मधुराम्ललवणकटुकषायः ३ कटुकत्यागान्मधुराम्ललवणतिक्तकषायः ४ कषायत्यागान्मधुराम्ललवणतिक्तकटुक इति ५ । पद्येन च सुखस्मृत्यै रसभेदान् शृणुष्व मे । मधुरोऽम्लेन पटुना तिक्तेन कटुकेन च ।१। कषायेण पृथक् सार्धमम्लः सुलवणेन च । तिक्तेन कटुना सार्धं कषायेण पृथक् सह । २ । पटुस्तिक्तेन कटुना कषायेण पृथक् सह । तिक्तस्तु कटुना सार्धं कषायेण पृथक् तथा । ३ । कटुकस्तु कषायेण द्विसंयोग इति स्मृताः । दश पंच च भेदास्तु संख्याता विंशतिस्त्रिके । ४ । मधुराम्लौ तु पटुना तिक्तेन कटुना तथा । कषायेण तथा सार्धं तथा स्वादुपटू पृथक् । ५ । तिक्तेन कटुकेनाऽपि कषायेण तथा सह । स्वादुतिक्तौ तु कटुना कषायेण पृथक् सह । ६ । स्वादूषणौ कषायेण स्वादोरेवं दश त्रिके । भेदाः स्युरम्ललवणौ तिक्तेन कटुना पृथक् । ७ । कषायेण तथा सार्धमम्लतिक्तौ पृथक् सह । कटुकेन कषायेण तथाम्लकटुकौ सह । ८ । कषायेणेति षट् प्रोक्ता भेदा अम्लस्य तु त्रिके । पटुतिक्तौ तु कटुना कषायेण पृथक् सह । ९ । पटूषणौ कषायेण भेदा इति पटोस्त्रयः । तिक्तोषणौ कषायेण तिक्तस्यैवं सकृत्स्मृतः । १० । त्रिकं भेदा इति प्रोक्ताश्चतुष्के दश पंच च । स्वाद्वम्ललवणं सार्धं तिक्तेन कटुकेन च । ११ । पृथक्कषायेण तथा मधुराम्लौ सतिक्तकौ । कटुकेन तु संपृक्तौ कषायेण पृथक् तथा । १२ । स्वाद्वम्लकटुकाः सार्धं कषायेणेति षट् स्मृताः । सप्तमश्चाऽत्र मधुरो लवणोषणतिक्तकैः ।१३। भेदोऽष्टमो मतः स्वादुकटुतिक्तकषायकैः । नवमस्तत्र मधुरः षडूषणकषायकैः । १४ । दशमोऽत्र भवेत्स्वादुतिक्तोषणकषायकैः । दश भेदा भवंत्येवं मधुरेण चतुष्कके । १५ । कटुतिक्ताम्ललवणैर्भेद एकश्चतुष्कके । द्वितीयस्त्वम्ललवणकषायकटुकैः स्मृतः ।१६। तृतीयोऽत्र भवेदम्लपटुतिक्तकषायकैः । चतुर्थोऽत्र भवेदम्लतिक्तोषणकषायकैः ।१७। एवमम्लेन भेदाः स्युश्चत्वारोऽत्र चतुष्कके । पटुनैकोऽत्र लवणतिक्तोषणकषायकैः । १८ । एवं पंचदश ख्याताश्चतुष्करससंख्यया । षड् भेदान् पंचके प्राहुस्तान्वक्ष्यामि विभागशः ।१९। एको भेदोऽम्ललवणतिक्तोषणकषायकैः । द्वितीयः स्वादुलवणतिक्तोषणकषायकैः ।२०। तृतीयस्त्वम्लमधुरतिक्तोषणकषायकैः । चतुर्थस्त्वम्लमधुरपटूषणकषायकैः । २१ । पंचमस्त्वम्लमधुरपटुतिक्तकषायकैः । षष्ठो भेदोऽम्लमधुरलवणोषणतिक्तकैः । २२ । षट् भेदा इति निर्दिष्टाः पंचके प्रविभागशः । भेदः स्वा-

द्वम्ललवणतिक्तोषणकषायकैः । २३ । एक एव षड्रसेन पृथक्त्वेन तु षट् स्मृताः।स्वादुरम्लोऽथ लवणस्तिक्तश्च कटुकस्तथा । २४ । कषाय इति भेदाः स्युः सर्वतोऽत्र त्रिषष्टिधा । क्षीरं सुरा बिडं निंबश्चव्या पथ्यं रसाश्रयम् । २५ । द्रव्यं स्वादु रसादीनां षण्णां विद्धि यथाक्रमम् । द्रव्यं द्रव्यांतरेणैव योजयेद्धि रसादिषु । २६ । धात्रीफलं शर्करया लवणेनाऽर्द्रकं तथा । एवमादीनि द्रव्याणि योजयेद्भिषगुत्तमः । २७ । कानिचिद्विरसादीनि द्रव्याणि स्युः स्वभावतः । यथैणः षड्रसः कृष्णो यथा पंचरसाऽभया । २८ । मद्यं पंचरसं यद्वत्तिलो यद्वच्चतूरसः । एरंडतैलं त्रिरसं माक्षिकं द्विरसं यथा । २९ । घृतमेकं स्वादुरसं मधुरादिविभागतः । दिङ्मात्रादुदितादेवं शेषमूह्यं मनीषिणा । ३० ।

संप्रति एकैकहीनानित्यादिना ग्रंथेन ये रसानां भेदाः शास्त्रकृतोक्तास्तानेव संक्षेपेण प्रकटयितुमाह ।

**षट्पंचकाः षट् च पृथग्रसाः स्यु-**
**श्चतुर्द्विकौ पंचदशप्रकारौ ।**
**भेदास्त्रिका विंशतिरेकमेकं**
**द्रव्यं षडास्वादमिति त्रिषष्टिः ॥ ४३ ॥**

पंचकरसानां योगाः षट्संख्याः । पंचकेष्वेकमेवाम्लो मधुरः पंच सेवत इति । षट् च पृथग्रसा असंयुक्ताश्च षड्रसा इति । चतुरित्यादि । चतुष्कभेदः पंचदशप्रकारः । द्विकभेदश्च पंचदशप्रकारः । चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत् । एवं पंचदश प्रकाराः । एकैकहीनांस्तान् पंच पंच यांति । रसा द्विके इति वचनात् । भेदा इत्यादि । त्रिकास्त्रिभेदभिन्ना भेदा विंशतिः। त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककं चेति विंशतिः । एकमेव द्रव्यं षडास्वादम् । इतीयं रसानां भेदास्त्रिषष्टिः ।

यथास्थूलं चैषा त्रिषष्टिधा कल्पना ख्याता । संप्रति यथासूक्ष्मं प्रदर्शयितुमाह ।

**ते रसानुरसतो रसभेदा-**
**स्तारतम्यपरिकल्पनया च ।**
**संभवंति गणनां समतीता**
**दोषभेषजवशादुपयोज्याः ॥ ४४ ॥**

ते रसभेदास्त्रिषष्टिरूपा रसतो रसवशेन तथाऽनुरसतोऽनुरसवशेन तथा तारतम्यपरिकल्पनाऽयं मधुरोऽयं मधुरतरोऽयं मधुरतम इत्येवंरूपा या तया च गणनां समतीताः संख्यामतिक्रांताः संभवंति । दोषेत्यादि । दोषा वातादयो भेषजानि हरीतक्यादीनि । दोषाश्च भेषजानि च दोषभेषजानि तेषां वशोनुरोधः सामर्थ्यं वा तस्माद्धेतुभूताद्रसभेदा उपयोज्या न दोषमनपेक्ष्य भेषजं वाऽनपेक्ष्य । एवमेवोपयोज्या इत्यर्थः । तथा च मुनिः । क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् । दोषौषधादीन् संचिंत्य भिषजा सिद्धिमिच्छतेति । दोषभेषजवशादित्युपलक्षणार्थम् । देशादिवशादपि देशादीन्वीक्ष्य रसभेदा उपयोज्याः । यथा पवने जेतव्ये मधुराम्लौ लवण इति । स्वागता रनभगैर्गुरुकांता इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां रसभेदाख्यानीयो नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

रसभेदीयादनंतरं दोषादिविज्ञानीय आरभ्यते । यतो दोषभेषजवशादुपयोज्या इत्युक्तमत ईदृक्स्वरूपास्ते दोषा इति ज्ञापनार्थमध्यायोऽयमुच्यते ।

**अथाऽतो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ।**

दोषा आदयो येषां ते दोषादयस्तेषां विज्ञानं प्राकृतेन वैकृतेन च स्वरूपेणोपगमस्तस्मै हितो यस्तमध्यायं व्याख्यास्यामः । आदिशब्देन धातवो मलाश्च संगृह्यंते । तत्स्वरूपोपगमेन च त एव दोषाः सम्यग्ज्ञाता भवंति । धातूनां मलानां च दोषाधारभूतत्वात् ।

**दोषधातुमला मूलं सदा देहस्य तं चलः ।**
**उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ॥ १ ॥**
**सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।**
**अनुगृह्णात्यविकृतः पित्तं पक्त्यूष्मदर्शनैः ॥ २ ॥**
**क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।**
**श्लेष्मास्थिरत्वस्निग्धत्वसंधिबंधक्षमादिभिः ॥ ३ ॥**

दोषा वातादयो धातवो रसादयो मला मूत्रादयस्ते देहस्य मूलमिव मूलम् । यथा वृक्षस्य स्कंधशाखादियुक्तस्य मूलं प्रधानं तदारब्धत्वात्तथा देहस्य दोषधातुमलाः । तं च देहं चलो वायुरुत्साहादिभिरनुगृह्णात्युपकुरुते । उत्साहः सर्वचेष्टासूद्योगः । उच्छ्वास ऊर्ध्वं श्वसनं श्वासमुक्तिः । निश्वासः श्वासस्य शरीरांतःप्रवेशनम् । चेष्टनं चेष्टा वाक्कायमनोव्यापारः । वेगानां प्रवर्तनं वातविण्मूत्रादीनां बहिर्निरसनम् । एतैश्च मारुतो देहमनुगृह्णाति । पित्तं पक्त्यादिभिरनुगृह्णाति । पक्तिः पाकः । ऊष्मा औष्ण्यम् । दर्शनं दृष्टिः । मेधा बुद्धिविशेषः । धीः प्रज्ञा । शौर्यं पौरुषम् । तनुमार्दवं शरीरमृदुत्वम् । श्लेष्मा स्थिरत्वादिभिरनुगृह्णाति । क्षमा क्षांतिः ।

इदानीं धातूनां कर्माण्याह ।

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।**
**गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ ४ ॥**

प्रीणनादीनि कर्माणि रसादीनां क्रमात्क्रमेण श्रेष्ठानि स्मृतानि । मुनिभिरिति शेषः । संग्रहोक्तानि मध्यमान्यपराणि कर्माण्येषां संत्येव । यथा रसस्य दृष्टिरक्तपुष्ट्यादिकं कर्म । रक्तस्य च वर्णप्रसादो मांसपोषणम् । मांसस्य बलं मेदःपुष्टी च । मेदसः स्वेददार्ढ्यास्थिपुष्ट्यश्च । अस्थ्नो मज्जपोषणम् । मज्ज्ञो बलमस्थिपूरणं शुक्रपुष्टिश्च । शुक्रस्य हर्षो बलं च । एतैर्धातवो देहमनुगृह्णंतीत्यर्थः । प्रीणनमाप्यायनम् । रसो हि सम्यगभ्यवहरणतः स्रोतांसि

संप्रविश्येंद्रियप्रसादमभिनिर्वर्तयन्मनसः प्रीतिमादधाति । जीवनमोजोवृद्धिकरं रक्तकर्म । लेप उपदेहो मांसस्य कर्म । तदुपलिप्तान्यस्थीनि चेष्टां क्षमंते । स्नेहो नेत्रादिषु स्निग्धता मेदसः कर्म । धारणमूर्ध्वधारणमस्थिकर्म । पूरणं स्नेहेनास्थ्नां मज्ज्ञः कर्म । शुक्रस्य गर्भोत्पत्तिः श्रेष्ठं कर्मेति योज्यम् ।

इदानीं मलानां कर्माण्याह ।

**अवष्टंभः पुरीषस्य मूत्रस्य क्लेदवाहनम् ।**
**स्वेदस्य क्लेदविधृतिः**

अवष्टंभो देहधारणशक्तिः श्रेष्ठं कर्म पूरीषस्य स्मृतम् । मूत्रस्य क्लेदवाहनं श्रेष्ठं कर्म । मूत्रं क्लेदं निर्वाहयति । स्वेदस्य क्लेदविधारणं श्रेष्ठं कर्म । क्लेदाभावे हि नैव देहस्य मध्यमत्वक् । स्वेदस्य कचरोमधारणमपि ।

**वृद्धस्तु कुरुतेऽनिलः ॥ ५ ॥**
**कार्श्यकार्ष्ण्योष्णकामित्वकंपाऽनाहशकृद्ग्रहान् ।**
**बलनिद्रेंद्रियभ्रंशप्रलापभ्रमदीनताः ॥ ६ ॥**

वृद्धः पुनर्वायुः कार्श्यादीन् करोति । बलादीनां भ्रंशेन संबंधः। बलस्य तु प्राणोपघातो भ्रंशः । निद्रायास्तु नाशो भ्रंशः ।

**पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाऽल्पनिद्रताः ।**
**पित्तम्**

पीतस्य विडादिभिस्त्वगंतैः संबंधः । ततः क्षुदादिभिर्द्वंद्वस्तैस्तस्ताप्रत्ययः । पित्तं पीतविण्मूत्रादीन् करोति ।

**श्लेष्माऽग्निसदनप्रसेकालस्यगौरवम् ॥७॥**
**श्वैत्यशैत्यश्लथांगत्वं श्वासकासातिनिद्रताः ।**

श्लेष्मा वृद्धोऽग्निसादादीन् करोति । श्वैत्यं गात्रशुक्लता । शैत्यमंगानां शिशिरत्वम् ।

**रसोऽपि श्लेष्मवद्रक्तं विसर्पप्लीहविद्रधीन् ॥ ८ ॥**
**कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ।**
**व्यंगाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥**

रसः श्लेष्मवत् । रसोऽपि वृद्धोऽग्निसादादीन् करोति । रक्तं वृद्धं विसर्पादीन् करोति । उपकुशो नाम दंतरुजोत्तरतंत्रे वक्ष्यमाणलक्षणा ।

**मांसं गंडार्बुदग्रंथिगंडोरूदरवृद्धताः ।**
**कंठादिष्वधिमांसं च**

मांसं वृद्धं गंडादीन् रोगान् करोति । गंडशब्देन गंडमाला गलगंडश्च गृहीतौ । आद्यंतलोपात् । इतरश्च गंडो गंडमांसात् । गंडौ चार्बुदं च ग्रंथिश्च गंडार्बुदग्रंथयः । गंडौ च ऊरू चोदरं च तेषां वृद्धता । ततो द्वंद्वः । ताः करोति । वृद्धता वृद्धत्वम् । कंठादिष्वधिकं मांसं च कुरुते । आदिशब्देन तालुजिह्वादिपरिग्रहः ।

**तद्वन्मेदस्तथा श्रमम् ॥ १० ॥**
**अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलंबनम् ।**

मेदोऽपि वृद्धं गंडादीन् कुरुते । तथाऽल्पेऽपि चेष्टिते श्रमं कुरुते श्वासं च। तथा स्फिजोः स्तनयोरुदरस्य च लंबनं कुरुते ।

**अस्थ्यध्यस्थ्यधिदंतांश्च**

अस्थि वृद्धमध्यस्थ्यधिदंतांश्च कुरुते ।

**मज्जा नेत्रांगगौरवम् ॥११॥**
**पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च ।**

मज्जा वृद्धो नेत्रयोरंगानां च गौरवं कुर्यात् । कुरुत इति प्रकृते कुर्यादित्युक्तं स्पष्टार्थम् । पर्वस्वंगुल्यादिसंधिषु स्थूलानि मूलानि च कुर्यात् । अरूंषि पिटिकाविशेषान् कुर्यात् । कीदृशानि । स्थूलमूलानि । कृच्छ्राणि कृच्छ्रसाध्यानि ।

**अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥१२॥**

शुक्रं वृद्धमतिस्त्रीकामतां कुर्यात् शुक्राश्मरीं च । अपिशब्दाद्बलस्नेहाद्यपि ।

**कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ।**

शकृत्पुरीषं वृद्धं कुक्षावाध्मानादीन् कुर्यात् । कुर्यादिति संभावनायां लिङ् । आध्मानमानाहः । आटोपोंऽत्रकूजनम् ।

**मूत्रं तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥१३॥**

मूत्रं वृद्धं बस्तिनिस्तोदं बस्तिव्यथां कुर्यात् । तथा कृतेऽपि मूत्रेऽकृतसंज्ञतामकृताभासत्वमेव कुर्यात् ।

**स्वेदोऽतिस्वेददौर्गंध्यकंडूः**

स्वेदो वृद्धोऽतिस्वेदादीन् कुर्यात् ।

**एवं च लक्षयेत् ।**
**दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥१४॥**

अनेन प्रकारेण दूषिकादीनपि मलान् लक्षयेदनुमिनुयात् । दूषिकाऽक्षिमलः । आदिशब्दाद्घ्राणकर्णनासामलादीनां ग्रहणम् । कथं लक्षयेदित्याह । बाहुल्येत्यादि । मलबाहुल्येन तत्स्थानगौरवेण च । आदिग्रहणात्कंडूक्लेदादयो गृह्यंते ।

वृद्धानां वातादीनां लिंगान्यभिधाय क्षीणानां वातादीनां लिंगान्याह ।

**लिंगं क्षीणेऽनिलेंऽगस्य सादोऽल्पं भाषितेहितम्।**
**संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसंभवः ॥१५॥**

अनिले क्षीणे स्वप्रमाणापचिते । वायोस्तु सर्वक्षये देह एव न

स्यात् । कस्य तु लिंगं स्यात् किं पुनस्तल्लिंगमित्याह । अंगस्येत्यादि । अंगस्य सादः क्रियास्वसामर्थ्यम् । ईहितं चेष्टितं कायिकं कर्म । भाषितं चेहितं च । अल्पवचनताऽल्पचेष्टितत्वं च स्यात् । तथा संज्ञामोहः संविदोऽभावः । तथा श्लेष्मवृद्धौ य उक्ता अग्निसादप्रसेकादयस्तेषामामयानां संभवो भवति ।

**पित्ते मंदोऽनलः शीतं प्रभाहानिः**

पित्ते क्षीणे लिंगमेतत् । अग्निर्मंदः शीतं कांतिहानिश्च स्यात्।

**कफे भ्रमः ।**
**श्लेष्माशयानां शून्यत्वं हृद्द्रवश्लथसंधिताः ॥१६॥**

कफे क्षीणे भ्रमो भवति । तथा श्लेष्माशयानां शून्यत्वम् । श्लेष्माशया उरःशिरःसंध्याद्याः ।

**रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता ।**

रसे क्षीणे रौक्ष्यादयः स्युः ।

**रक्तेऽम्लशिशिरप्रीतिशिराशैथिल्यरूक्षताः ॥१७॥**

रक्ते क्षीणेऽम्लाद्यभिलाषादयः स्युः ।

**मांसेऽक्षग्लानिगंडस्फिक्शुष्कतासंधिवेदनाः ।**

मांसे क्षीणेऽक्षग्लानिः । गल्लयोः स्फिजोश्च शुष्कत्वम् । संधीनां वेदनाः स्युः । स्फुटंतीव संधय इत्यर्थः ।

**मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशांगता १८**

मेदसि क्षीणे कट्याः स्वापः प्लीहवृद्धिः कृशांगत्वं च ।

**अस्थ्न्यस्थितोदः शदनं दंतकेशनखादिषु ।**

अस्थ्नि क्षीणेऽस्थ्नां तोदो भवति । शदनं शातः । पात इत्यर्थः । केषाम् । दंतादीनाम् ।

**अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥१९॥**

मज्जनि क्षीणेऽस्थ्नां सौषिर्यं भ्रमादिश्च ।

**शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।**
**तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २० ॥**

शुक्रे क्षीणे शुक्रं चिरात् प्रसिच्येत रक्तं वा । प्रसिच्येतेति कर्मकर्तरि । वृषणयोरतिशयेन तोदो व्यथा स्यात् । मेढ्रं शिश्नं धूमायतीव च । लोहितादेराकृतिगणत्वात् क्यिप् । अकृत्सार्वेत्यादिना दीर्घः ।

**पुरीषे वायुरंत्राणि सशब्दो वेष्टयन्निव ।**
**कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् २१**

पुरीषे क्षीणे वायुः कुक्षौ भ्रमति । अंत्राणि वेष्टयन्निव शब्दं जनयन्यात्यूर्ध्वम् । किं कुर्वन् । हृत्पार्श्वे भृशं पीडयन् ।

**मूत्रेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं सास्रमेव वा ।**

मूत्रे क्षीणेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं रक्तमेव वा ।

**स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः २२**

स्वेदे क्षीणे रोम्णां च्युतिः शादो रोम्णां च स्तब्धत्वम् । त्वचश्चर्मणः स्फुटनं दरणम् ।

इदानीं घ्राणादिमलानामपि सामान्येन क्षयलिंगमाह ।

**मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।**
**स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ २३ ॥**

सूक्ष्माणां शुष्काल्पानां दूषिकादीनां दुःखेन बोद्धुं शक्यं दुर्लक्ष्यं क्षयं लक्षयेज्जानीयात् । कैः । मलानां स्थानानि मलायनानि स्वानि च तानि मलायनानि च स्वमलायनानि तेषां संशोषतोदशून्यत्वलाघवानि स्वमलायनसंशोषतोदशून्यत्वलाघवानि तैः ।

एवं व्यासेन दोषधातुमलानां वृद्धिक्षयावभिधाय समासतोऽभिधातुमिदमाह ।

**दोषादीनां यथास्वं च विद्याद्वृद्धिक्षयौ भिषक् ।**
**क्षयेण विपरीतानां गुणानां वर्धनेन च ॥ २४ ॥**
**वृद्धिं मलानां संगाच्च क्षयं चाऽतिविसर्गतः ।**

दोषधातुमलानां वृद्धिक्षयौ जानीयात् । कथम् । यथा स्वदोषादीनां गुणेभ्यो विपरीता ये गुणास्तेषां गुणानां क्षयेण वर्धनेन च देहगतेन दोषादीनां क्षयं वृद्धिं च विद्यात् । यथा वायोर्गुणा रूक्षलघुशीतादयस्तेषां विपरीताः स्निग्धगुरूष्णादयस्तेषां स्निग्धादीनां देहे यदा वृद्धिर्दृश्यते तदा वायोः क्षयो ज्ञेयः । यदा तु तेषां स्निग्धादीनां देहे क्षयो दृश्यते तदा वायोर्वृद्धिं विद्यात् । एवं स्वबुद्ध्या विकल्प्य मलानां धातूनां च वाच्यम् । मलानामित्यादि न केवलं मलानां पूर्वोक्तेन प्रकारेण वृधिक्षयौ ज्ञेयौ यावदमुनाऽपि वक्ष्यमाणेन लक्षणेन तेषां वृद्धिक्षयौ ज्ञेयौ । एवं स्वबुद्ध्या विकल्प्य मलानां संगाद्बहिर्निःसरणलक्षणाच्च वृद्धिं विद्यात् । तेषामेव मलानामतिविसर्गादतिप्रवर्तनात्क्षयं विद्यात् ।

**मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडनः ॥ २५ ॥**

द्वावपि मलानां वृद्धिक्षयौ पीडाकरौ देहस्य । तत्राऽपि य एषां क्षयः स वृद्धितोऽप्यतिशयेन पीडाकरः । अनौचित्यात् । देहिनां हि प्रायो मलक्षयोऽनुचितोऽनभ्यस्तो वृद्धिस्तूचितैवेति न तथा पीडाकरीति ।

अथ दोषादीनामाश्रयाश्रयिभावं दर्शयति ।

**तत्राऽस्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः ।**
**श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः ॥२६॥**
**यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।**
**अस्थिमारुतयोर्नैवं प्रायो वृद्धिर्हि तर्पणात् ॥२७॥**

**श्लेष्मणाऽनुगता तस्मात् संक्षयस्तद्विपर्ययात्।**
**वायुनाऽनुगतः**

तत्र तेषु वातादिषु मध्येऽस्थि वायुः स्थित आश्रितः। पित्तं तु स्वेदरक्तयोः स्थितम्। श्लेष्मा शेषेषु रसमांसमेदोमज्जशुक्रमूत्रपुरीषादिषु स्थितः। यतश्चैवमाश्रयाश्रयिभावो दोषधातूनां तेन हेतुनाऽऽश्रयाश्रयिणां मिथः परस्परं यदेकस्याऽश्रयस्य वर्धनं तत्तदाश्रयिणोऽपि वर्धनं यदा यस्य क्षपणं तदाश्रयिणोऽपि क्षपणम्। नन्वेवमेवाऽस्थ्नो वाताश्रयस्य यद्वर्धनं तदप्याश्रयिणोऽपि वर्धनं यदस्य क्षपणं तदपि वातस्य क्षपणं प्राप्नोतीत्याह। अस्थिमारुतयोर्नैवं वर्धनक्षपणौषधम्। संभवतीत्यध्याहार्यम्। हि यस्मात्प्रायो बाहुल्येन या वृद्धिर्वर्धनं दोषधातूनां सा संतर्पणाद्बृंहणाद्भवति। प्रायोग्रहणं वायुपरिहारार्थम्। सा च श्लेष्मणाऽनुगताऽनुबद्धा यत एवं या वृद्धिः संतर्पणात्तस्माद्धेतोर्य एषां दोषादीनां क्षयः स प्रायो भूयिष्ठमपतर्पणात्तल्लंघनरूपाद्भवति। स च संक्षयो वायुनाऽनुगतः।

एवं यदस्थ्नो वर्धनमौषधं तत् स्निग्धमधुरादि बृंहणरूपं वातस्य क्षपणम्। यच्च वातस्य वर्धनमौषधं तद्रूक्षतिक्ताद्यपतर्पणं लंघनरूपमस्थ्नः क्षपणम्। तदर्थमेतदुक्तम्।

**अस्माच्च वृद्धिक्षयसमुद्भवान्॥ २८॥**
**विकारान् साधयेच्छीघ्रं क्रमाल्लंघनबृंहणैः।**

यत एवं वृद्धेः संतर्पणरूपत्वं क्षयस्याऽपतर्पणरूपत्वमतो वृद्धिक्षयसंभवान् विकारान् दोषधातूनां संबंधिनः क्रमाल्लंघनबृंहणैः साधयेदुपक्रमेत्। कथम्। शीघ्रम्। चिरोत्थिता हि ते दुश्चिकित्स्याः स्युः। वृद्ध्युत्थान् विकारान् लंघनैः क्षयोत्थान् बृंहणैरिति क्रमार्थः।

नन्वेवं वातवृद्ध्युत्थान् विकारान् लंघनैस्तत्क्षयोत्थान् बृंहणैरिति स्यादत इदमाह।

**वायोरन्यत्र तज्जांस्तु तैरेवोत्क्रमयोजितैः॥ २९॥**

वायुं हित्वा वृद्ध्युत्थान् विकारान् लंघनैः क्षयोत्थान् बृंहणैः साधयेत्। कथम्। तज्जान् वायुसंभवान् विकारान् पुनस्तैरेव लंघनबृंहणैरुत्क्रमयोजितैरुपक्रमेत्। यथानिर्दिष्टक्रमाद्विपरीतः क्रम उत्क्रमः।

यथा वातवृद्ध्युत्थान् विकारान् बृंहणैस्तत्क्षयोत्थांश्च लंघनैरिति दोषाणां विशेषचिकित्सेह नोक्ता। दोषोपक्रमणीये वक्ष्यमाणत्वात्। रसचिकित्सा च रसोऽपि श्लेष्मवदित्युक्तेर्नेह पुनर्निर्दिष्टाऽतो रक्तादीनां चिकित्सामाह।

**विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः।**
**मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ३०**
**स्थौल्यकार्श्योपचारेण मेदोजानस्थिसंक्षयात्।**
**जातान् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिस्तथा॥३१॥**
**विड्वृद्धिजानतीसारक्रियया विट्क्षयोद्भवान्।**
**मेषाजमध्यकुल्माषयवमाषद्वयादिभिः॥ ३२॥**
**मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया।**
**व्यायामाऽभ्यंजनस्वेदमद्यैः स्वेदक्षयोद्भवान् ३३**

वृद्धिक्षयोपक्रमे एवं स्थितेऽपि विशेषेण रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैरुपक्रमेत्। मांसवृद्धिजान् शस्त्रक्षाराग्निकर्मभिः। स्थौल्यकार्श्योपचारेण मेदोवृद्धिक्षयाभ्यां जातान्। मेदोजानिति मध्यमपदलोपोऽत्र द्रष्टव्यः। मेदोवृद्धिजान् स्थौल्योपचारेण द्विविधोपक्रमणीयोक्तया स्थौल्यचिकित्सया मेदःक्षयजान् कार्श्योपचारेणोपाचरेत्। अस्थिक्षयजान् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिस्तथा तथारूपैस्तिक्तसंयुतैरित्यर्थः। ननु यानि वातकृंति द्रव्याणि तान्यस्थिक्षयोद्भवविकाराणां वृद्धिकरणानीति तद्द्रव्योपयोगोऽत्र न युक्तस्तिक्तस्य वातकृत्त्वात्। उच्यते। यद्द्रव्यं स्निग्धं शोषणं खरत्वमुत्पादयति तदस्थ्नो वर्धनं युक्तं खरस्वभावादस्थ्नाम्। नचैवंविधमेकं द्रव्यमस्ति यत् स्निग्धं शोषणं च। तस्मात् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिश्च तिक्तसंयुतैश्चेत्युपदिष्टम्। क्षीरघृतस्य तिक्तयुक्तस्य खरस्वभावत्वात्। विड्वृद्धिजान् पुरीषवृद्धिजानतीसारचिकित्सया साधयेत्। विट्क्षयोद्भवात् मेषाजमध्यादिभिः साधयेत्। मेष उरभ्रः। अजश्छागः। तयोर्मध्यमंतराधिः। कुल्माषोऽर्धस्विन्नो माषादिर्हिंगुघृतादिसंयुतः। माषद्वयं माषो राजमाषश्च। आदिशब्देन काकांडोलात्मगुप्तादीनां ग्रहणम्। मूत्रवृद्ध्युत्थान् मेहचिकित्सया मूत्रक्षयोत्थान् मूत्रकृच्छ्रचिकित्सया स्वेदक्षयजान् व्याधीन् व्यायामादिभिः साधयेत्।

**स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः।**
**तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः॥३४॥**

स्वस्थानं कायाग्नेः पक्वामाशययोर्मध्यम्। यथा वक्ष्यति। पित्तं पंचात्मकं तत्तु पक्वामाशयमध्यगमित्यादि यावत्पाचकं नाम तत् स्मृतमिति। तत्र पक्वामाशयमध्ये तिष्ठतीति स्वस्थानस्थस्तस्यैवंविधस्य कायाग्नेर्जाठरानलस्यांऽशा भागा धातुषु रसादिषु संश्रितास्तेषामग्न्यंशानां सादेन मांद्येन धातूनां वृद्ध्युद्भवस्तेषामंशानामतिदीप्त्याऽतितैक्ष्ण्याद्धातुक्षयोद्भवः।

**पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधम्।**

पूर्वो रसाख्यो धातुर्वृद्धो भूत्वा परं रक्ताख्यं धातुं वृद्धं कुर्यात् पूर्वश्च क्षीणो धातुः परं धातुं तद्विधं क्षीणमेव कुर्यात्।

**दोषा दुष्टा रसैर्धातून् दूषयंत्युभये मलान्॥३५॥**
**अधो द्वे सप्त शिरसि खानि स्वेदवहानि च।**
**मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः॥३६॥**

दोषा दुष्टा रसैर्मधुरादिभिर्मिथ्यायोगातियोगसेवितैः कुपिता धातून् दूषयंति। उभये दोषा धातवश्च मलान् दूषयंति। मला मलायनानि दूषयंतीति संबंधः। तथा च मुनिः। मलायनानि बाध्यंते दुष्टैर्मात्राधिकैर्मलैरिति। कानि मलायनानीत्याह। अधो

द्वे गुदमेढ्राख्ये । सप्त शिरसि खानि द्वे अक्षिणी द्वौ कर्णौ द्वौ नासापुटावास्यं चेति । तथा स्वेदवहानि रोमकूपाख्यानि छिद्राणि सर्वशरीरगतानि मलायनानि स्युः । अतो दूषणात्कारणात् तेपु मलायनेषु दुष्टेपु यथास्वं गदाः स्युः । यो यस्य स्वो यथास्वम् ।

दोषधातुमलानां समविषमाऽवस्था गदिता ओजस्तु निरूपयन्नाह ।

**ओजस्तु तेजो धातूनां शुक्रांतानां परं स्मृतम् ।**
**हृदयस्थमपि व्यापि देहस्थितिनिबंधनम् ॥३७॥**
**स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ।**
**यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति॥३८॥**
**निष्पद्यंते यतो भावा विविधा देहसंश्रयाः ।**

रसादीनां धातूनां शुक्रांतानां यत्परं तेजस्तदोजः स्मृतम् । तथा हृदयस्थमपि व्यापी सकलशरीरव्यापि । यतस्तस्य षड्बिंदुकस्य विशेषेण हृदयं स्थानम् । तथा देहस्य स्थितिर्देहस्थितिस्तस्या निबंधनं जीविताधिष्ठानमित्यर्थः । अन्ये त्वाहुः परशब्देनैतद् द्योतयति । अन्यदप्योजोऽस्ति न तद्धातूनां शुक्रांतानां तेजः श्लेष्माख्यमिति । तथा चोक्तं संग्रहे । मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकमित्यादि । यन्नाशे यस्यौजसो नाशेऽभावे नियतं निश्चितं प्राणिनोऽभावः । यस्मिन्नोजसि तिष्ठति विद्यमाने तिष्ठति प्राणिति देहीति शेषः । यतो यस्माच्च भावाः पदार्था निष्पद्यंते जायंते विविधा अनेकप्रकाराः । तथा देहः संश्रयो येषां ते देहसंश्रयाः । लक्षणमोजसो मुनिनाऽभ्यधायि । हृदि तिष्ठति यच्छुद्धं स्निग्धमीषत्सपीतकम् । ओजः शरीरे संख्यातं तन्नाशे ना विनश्यतीत्यादि ।

**ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ३९**
**बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेंद्रियः ।**
**विच्छायो दुर्मना रूक्षो भवेत्क्षामश्च तत्क्षये ४०**
**जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ।**

ओजः कोपादिभिः क्षीयेत । तत्क्षये बिभेति दुर्बल इत्यादिलक्षणम् । जीवनीयौषधाद्यास्तत्र भेषजम् । जीवनीयौषधानि जीवंत्यादीनि दश जीवनसंज्ञानि । तथाऽन्यानि यानि मधुराणि द्रव्याणि । क्षीरस्य जीवनीयत्वेनैव ग्रहणे सिद्धे पृथग्भावोऽतिशयार्थोऽतिशयेनात्र क्षीरमौषधमिति । रसो मांसरसः । आदिग्रहणेन काकांडोलाऽत्मगुप्ताघृतादिपरिग्रहः ।

**ओजोविवृद्धौ देहस्य तुष्टिपुष्टिबलोदयः ॥ ४१ ॥**

ओजोविवृद्धौ सत्यां देहस्य तुष्टिः प्रहर्षः पुष्टिर्वृद्धिर्बलं स्थानमेषामुदयः सम्यग्वृद्धिर्भवति ।

इदानीं संक्षेपेण वृद्धिक्षयभेषजं कथयन्नाह ।

**यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु ।**
**तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत्॥४२॥**

यदन्नं पुरुषो द्वेष्टि नाभिनंदति यदप्यन्नं प्रार्थयेत तत्तदन्नं द्विष्टं त्यजन् परिहरन्निष्टमन्नं समश्नन् भक्षयन् दोषाणां संबंधिनौ वृद्धिक्षयौ तौ तौ यौ यस्य दोषस्यात्मीयौ वृद्धिक्षयौ तौ तौ जयेत् । ननु किमविशेषेणैतत्प्रार्थितमश्नन् दोषक्षयं जयेन्नेत्याह । अविरोधि । तुरवधारणे । अविरोध्येव तत्तथाविधमन्नमश्नन् दोषाणां क्षयं जयेन्न तु विरोध्यन्नमश्नन् ।

ननु द्वेष्यान्नत्यागेनेष्टभक्षणेन कुतो हेतोर्दोषाणां वृद्धिक्षयौ जयेदित्याह ।

**कुर्वते हि रुचिं दोषा विपरीतसमानयोः ।**
**वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयंत्यबुधास्तु न ॥४३॥**

यस्माद्दोषा वातादयो विपरीतसमानयोः । रुचिं कुर्वंति । किंभूताः संतः । वृद्धाः क्षीणाश्च । यथाक्रमं वृद्धाः प्रमाणाधिकाः संतः स्वगुणेभ्यो यद्विपरीतगुणमन्नं तद्विषयां रुचिं प्रीतिमुत्पादयंति । भूयिष्ठं बाहुल्येन क्षीणाः संतो यत्तत्समानगुणमाहारजातं तेषां वर्धनहेतुस्तद्विषयां प्रीतिमुत्पादयंति । यथा वातो वृद्धः स्निग्धाम्लमधुरमन्नमभिलषति । पित्तं वृद्धं शीतमधुररूक्षतिक्तकषायमन्नमभिलषति । श्लेष्मा वृद्धो रूक्षाम्लकटुतिक्तमन्नमभिलषति । वातः क्षीणो रूक्षकषायाद्यन्नमभिलषति । पित्तं क्षीणमम्ललवणकटुकमन्नमभिलषति । श्लेष्मा क्षीणः स्निग्धमधुराम्ललवणमन्नमभिलषति । भूयिष्ठमित्यनेन प्रायिकत्वमस्या व्यवस्थाया दर्शयति । तेन दोषगतिवैचित्र्यादन्यथाऽपि क्वचिद्भवति । यथा कस्यचिन्नरस्य वातोऽपि क्षीणः स्निग्धमधुराद्यन्नमभिलषति पित्तमपि वृद्धमम्ललवणाद्यन्नमभिलषति श्लेष्माऽपि वृद्धो मधुराम्लाद्यन्नमभिलषतीति व्यभिचारात् । अत एवाऽबुधा न लक्षयंति न विदंति यथा किमयं दोषः क्षीण उत वृद्ध इति ।

नचानेनैव लक्षणेन वृद्धाः क्षीणाश्च दोषा लक्षणीयाः किं तर्ह्यन्यदपि लक्षणमस्तीत्याह ।

**यथाबलं यथास्वं च दोषा वृद्धा वितन्वते ।**
**रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ४४**

बलानतिक्रमेण यथास्वं च यद्यदात्मीयं यथारूपाणि गुणकर्मलक्षणानि दोषा वृद्धा वितन्वते विस्तारयंति । क्षीणाश्च बलानतिक्रमेण तथास्वरूपाणि जहति त्यजंति । यथा वायुर्वृद्धो रूक्षशैत्यपारुष्यस्रंसव्यासादीनि विस्तारयति । क्षीणस्तु वायुः पूर्वोक्तानि रूक्षादीनि जहात्यत एव न व्यंजयति । अथ समा दोषाः किं विदधतीत्याह । समा इत्यादि । यदा न वृद्धा नच क्षीणाः समा दोषाः स्वप्रमाणस्थास्तदा स्वं कर्मोत्साहोच्छ्वासादिकं तथोक्तं कुर्वते । तल्लक्षणात्ते लक्षणीयाः ।

तदेवं वृद्धक्षीणसमा दोषा वेद्याः। क्षीणा दोषाः क्षीणत्वादेवा-किंचित्करत्वात्कदाचित्पीडां नोत्पादयंत्येवेति विचिंत्याऽल्पमतयो वैद्याः क्षीणदोषवर्धनार्थं कदाचिदनादरं कुर्युरित्याह।

**य एव देहस्य समा विवृद्ध्यै**
**त एव दोषा विषमा वधाय।**
**यस्मादतस्ते हितचर्ययैव**
**क्षयाद्विवृद्धेरिव रक्षणीयाः॥ ४५॥**

य एव दोषाः समाः संतो देहस्य विवृद्ध्यै वर्धनाय भवंति त एव दोषा विषमाः स्वप्रमाणादधिका हीना वा संतो वधाय देह-विनाशाय स्युः। यस्मादेवं ततस्ते दोषा हितचर्ययैव क्षयाद्धीन-त्वाद्रक्षणीयाः। कुत इव वृद्धेरिव। यथा विवृद्धेविशेषेण वर्ध-नात्ते रक्ष्यंते तथा क्षयादपि रक्षणीया इति। उपजातिर्वृत्तम्।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटी-कायां सर्वांगसुंदराख्यायां रसभेदाख्यानीयोनामैकादशोऽध्यायः ११

---

## द्वादशोऽध्यायः।

दोषादिविज्ञानीयादनंतरं दोषभेदीयाध्यायारंभो यतो दोषभेद-मंतरेण दोषविज्ञानं सम्यङ्नोक्तं स्यात्। पूर्वस्मिंश्चाध्याये बहुवक्त-व्यत्वाद्दोषभेदो नोक्त इत्याह।

**अथाऽतो दोषभेदीयाध्यायं व्याख्यास्यामः।**

दोषाणां भेदो दोषभेदः स्थाननामविभागादिभिस्तस्मै हितो दोषभेदीयः। शेषं पूर्ववत्।

**पक्वाशयकटीसक्थिश्रोत्राऽस्थिस्पर्शनेंद्रियम्।**
**स्थानं वातस्य तत्राऽपि पक्वाधानं विशेषतः॥ १॥**

पक्वाशयादि वातस्य स्थानं तत्राऽपि षड्विधस्थाने विशेषेण पक्वमाधीयते स्थाप्यतेऽस्मिन्निति पक्वाधानं पक्वाशयः। अत एव वाते बस्तेरुपक्रमः प्रधान उक्तः। मूलापकर्षणात्सकलशरीरव्या-पित्वेऽपि येषामिदं विशेषेणोक्तम्। तथा च प्रागुक्तम्। ते व्या-पिनोऽपि हृन्नाभ्योरिति। विचित्रगतित्वाच्चैषां वक्ष्यमाणप्राणा-दिभेदेन पृथक् स्थानकर्मनिर्देशः।

**नाभिरामाशयः स्वेदो लसीका रुधिरं रसः।**
**दृक् स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः॥ २॥**

पित्तस्य नाभ्यादीनि स्थानानि। लसीका जलसदृशी। दृक् चक्षुः। स्पर्शनं त्वक्। ननु स्पर्शनेंद्रियं वायोः स्थानमुद्दिष्टं तदेव कथं पित्तस्याऽपि स्यात्। ब्रूमः। वातसखित्वादग्नेर्वात-सखो ह्यग्निः पित्तं च वह्निरिति वचनात्। तस्मादुभयोरप्ये-तद्युक्तं स्थानम्। विशेषत इति। अत्रैषु स्थानेषु मध्ये पित्तस्य विशेषेण नाभिः स्थानम्।

**उरःकंठशिरःक्लोमपर्वाण्यामाशयो रसः।**
**मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः॥ ३॥**



कफस्योरःप्रभृतीनि जिह्वांतानि स्थानानि। सुतरां सुष्ठु स्थानमुरो वक्षः।

अथ प्रत्येकमेतेषां दोषाणां विशिष्टस्थानाश्रयेण क्रियाभेदा-त्पंचपंच भेदानाह।

**प्राणादिभेदात्पंचात्मा वायुः**

वायुरेक एव चलनस्वभावः सन् प्राणादिभिः प्राणोदानव्या-नसमानापानैर्भेदाद्विशेषात्पंचात्मा पंचस्वभावः। यथैकोऽपि देव-दत्तो यां यां क्रियां करोति तदनुरूपामेव संज्ञां लावकपाच-कादिकां लभते तद्वद्वातादयः।

**प्राणोऽत्र मूर्धगः।**
**उरःकंठचरो बुद्धिहृदयेंद्रियचित्तधृक्॥ ४॥**
**ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृत्।**

अत्र एषु मध्ये प्राणो वायुर्मूर्धगः शिरसि स्थित उरः कंठं च चरति। तथा बुद्ध्यादीनां धारकस्तथा ष्ठीवनादिक्रियः। ष्ठीवनं मुखस्रावोद्गारः। ष्ठीवनमिति ष्ठिवेर्ल्युटि ष्ठिविसिव्योर्दीर्घश्चेति पृषोदरादिपाठाद्दीर्घः।

**उरः स्थानमुदानस्य नासानाभिगलांश्चरेत्॥ ५॥**
**वाक्प्रवृत्तिप्रयत्नोर्जोबलवर्णस्मृतिक्रियः।**

उदानस्य प्रधानमुरः स्थानं नासादींश्च चरति। वाक्प्रवृत्त्या-दिक्रियः। प्रयत्नः कार्येषु पदार्थग्रहणादिषूद्यमः।

**व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः॥ ६॥**
**गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः।**
**प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम्॥**

व्यानो हृदये स्थितः प्राधान्येन कृत्स्ने सर्वस्मिन् शरीरे च-रति। तथा महाजवः शीघ्रगतिः प्राणाद्यपेक्षया। तथा गत्या-दिकाः क्रियाः प्रायः सर्वदेहिनां तस्मिन्व्याने प्रतिबद्धास्तदा-यत्ताः। गतिश्चंक्रमणम्। अपक्षेपणमंगस्याऽधोनयनम्। उत्क्षेपो-ऽगस्योर्ध्वनयनम्। निमेषोऽक्ष्णोर्निमीलनम्। उन्मेषस्तयोर्विकाशः। आदिग्रहणेन जृंभणान्नास्वादनविशोधनादिपरिग्रहः।

**समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः।**
**अन्नं गृह्णाति पचति विवेचयति मुंचति॥ ८॥**

समानो वायुरग्निसमीपस्थः। सामान्योक्तावपि प्राधान्यात्पा-चकोऽग्निर्गृह्यते। अत एवाह। कोष्ठे चरतीति। सर्वत इत्याद्या-दित्वात् सर्वस्मिन् कोष्ठे चरति। स चान्नं गृह्णात्यपक्वमामाशये धारयतीत्यर्थः। पचत्यग्निसंधुक्षणाद्भस्त्राकार इव। विवेचयति संह-तमन्नं पाकाय विभजते। मुंचति शकृन्मूत्रादिरूपमधः।

**अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः।**
**शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः॥ ९॥**

अपानो वायुरपानं प्राधान्येनाश्रितः श्रोण्यादिचरः शुक्रादि-निष्क्रमणक्रियः। इतिवातभेदाः पंच।

पंच पित्तभेदानाह ।

**पित्तं पंचात्मकं तत्र पक्वामाशयमध्यगम् ।**
**पंचभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ १० ॥**
**त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितम् ।**
**पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥ ११ ॥**
**तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।**
**करोति बलदानेन पाचकं नाम तत्स्मृतम् ॥१२॥**

तेषु पंचसु मध्ये पक्वामाशययोर्मध्यस्थं यत्पित्तं तथा पंचभूतात्मकत्वेऽपि सति यत्तैजसगुणोदयादाग्नेयगुणोत्कर्षात्क्षपितसोमगुणत्वेन त्यक्तद्रवत्वं संजातकाठिन्यं तथा सहकारिकारणैः पाचनक्रियां प्रति सव्यापारैर्वाय्वादिभिरनुग्रहादुपकाराद्यत्पाकदाहादिक्रिययाऽनलशब्दितमग्निशब्दवाच्यं यत्पित्तं तत्पाचकमुच्यते । तच्चान्नं पचति । सारकिट्टौ पृथग् विभजति विभागीकरोति । किट्टशब्दस्य लोकाश्रयत्वाल्लिंगस्येति पुंस्त्वम् । तत्रस्थमेव पक्वामाशयमध्यगमेव शेषाणां रंजकादीनां धातुस्थानां चानुग्रहमुपकारं करोति । बलदानेन सामर्थ्याधानेन स्वस्थानस्थमेव तेषूपकुरुत इत्यर्थः ।

**आमाशयाश्रयं पित्तं रंजकं रसरंजनात् ।**

यच्चाऽमाशयस्थं पित्तं तद्रसाख्यधातो रंजनाद्रागनिष्पादनाद्रंजकमुच्यते ।

**बुद्धिमेधाऽभिमानाद्यैरभिप्रेतार्थसाधनात् ॥१३॥**
**साधकं हृद्गतं पित्तं**

यत्तु हृद्गतं हृदयस्थं पित्तं तद्बुद्ध्यादिभिः करणभूतैरभिप्रेतस्याऽर्थस्य बाह्यग्रहणस्मरणादिरूपेण साधनात् साधकमुच्यते । वर्तमानकाले या मनोर्थसंशयस्य निश्चयं कर्तुं तदर्थाध्यवसायोपारूढा सा बुद्धिः । बुद्धिविशेषो मेधा ।

**रूपालोचनतः स्मृतम् ।**
**दृक्स्थमालोचकं**

दृष्टिस्थं पित्तं रूपालोचनादंतस्तारकायाः स्थितं तदायत्तरूपग्रहणशक्तित्वादालोचकमुच्यते ।

**त्वक्स्थं भ्राजकं भ्राजनात्त्वचः॥१४॥**

त्वचो भ्राजनाद्दीपनाद्भ्राजकं नाम पित्तम् । एतच्च पित्तमभ्यंगलेपपरिषेकादीन् पाचयति ।

**श्लेष्मा तु पंचधा**

श्लेष्मा तु पंचधा श्लेष्माऽपि पंचप्रकारः ।

तदेव पंचप्रकारत्वमाह ।

**उरःस्थः स त्रिकस्य स्ववीर्यतः ।**
**हृदयस्यान्नवीर्याच्च तत्स्थ एवांबुकर्मणा ॥ १५ ॥**
**कफधाम्नां च शेषाणां यत्करोत्यवलंबनम् ।**
**अतोऽवलंबकः श्लेष्मा**

स श्लेष्मा उरसि तिष्ठतीत्युरःस्थस्त्रिकस्य पृष्ठाधाराख्यस्य स्वप्रभावाद्यस्मादवलंबनं करोति स्वकर्मणि तस्य सामर्थ्यमुत्पादयति । हृदयस्यान्नवीर्यादन्नवीर्येणाभ्यवहृतादन्नाद्रसरूपतापरिणतादवलंबनं बलेन वीर्येण करोति । चशब्दात्स्ववीर्येणाऽपि हृदयस्यावलंबनं करोति । किंत्वन्नवीर्यादतिशयेन यथावलंबनं हृदयस्य करोति न तथा स्ववीर्यतः । यतोऽन्नरसः पूर्वं हृदि स्थितिं कृत्वा ततो व्यानव्युत्क्षिप्तः सर्वं शरीरं याति तस्माद्विशेषेण हृदयस्याऽन्नवीर्यादवलंबनं युक्तम् । आगमोऽपि । हृदयं मनसः स्थानमोजसश्चितितस्य च । मांसपेशीचयो रक्तपद्माकारमधोमुखम् । योगिनो यत्र पश्यंति सम्यग् ज्योतिः समाहिताः । रसो यः स्वच्छतां यातः स तत्रैवाऽवतिष्ठते । ततो व्यानेन विक्षिप्तः कृत्स्नं देहं प्रपद्यते । तथा तत्स्थ एवोरःस्थ एवैष श्लेष्मा शेषाणां कफस्थानानामंबुकर्मणा क्लेदसंश्लेषादिलक्षणेन जलव्यापारेणाऽवलंबनं करोत्यतोऽस्माद्यथोक्ताद्धेतोरवलंबकः श्लेष्मेत्युच्यते ।

**यस्त्वामाशयसंस्थितः ॥ १६ ॥**
**क्लेदकः सोऽन्नसंघातक्लेदनात्**

यः पुनः श्लेष्मा आमाशये स्थितः स क्लेदक इत्युच्यते । कुतः । अन्नसंघातक्लेदनात्कारणात् ।

**रसबोधनात् ।**
**बोधको रसनास्थायी**

रसनास्थायी जिह्वास्थो बोधक इत्युच्यते । रसबोधनात् कारणात् ।

**शिरःसंस्थोक्षतर्पणात्॥१७॥**
**तर्पकः**

शिरःस्थोऽक्षतर्पणात्तर्पकः । शिरःस्थस्तर्पक इत्युच्यते । अक्षतर्पणाद्धेतोः ।

**संधिसंश्लेषाच्छ्लेषकः संधिषु स्थितः ।**

संधिषु स्थितः श्लेष्मा श्लेषक इत्युच्यते । संधिसंश्लेषात् कारणात् ।

एवं दोषाणां स्थानान्युक्त्वोपसंहरन्नाह ।

**इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् १८**
**व्यापिनामपि जानीयात्कर्माणि च पृथक्पृथक् ।**

बाहुल्येन दोषाणामविकृतात्मनामप्रच्युतस्वभावानामित्युक्तप्रकाराणि स्थानानि व्यापिनामपि सकलशरीरचराणामपि ज्ञेयानि । तथा कर्माणि पृथक्पृथक् प्रत्येकं कृत्वा जानीयाद्वैद्यः ।

विकृतिरेषां वृद्धिः क्षयश्च । वृद्धिरपि द्विविधा चयप्रकोपभेदेन । दोषादिविज्ञानीये सामान्येन वृद्धिक्षयलक्षणमुक्तम् । संप्रति चयकोपरूपवृद्धिनिदानं संक्षेपेण सूचयन्नाह ।

**उष्णेन युक्ता रूक्षाद्या वायोः कुर्वंति संचयम् १९**
**शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः ।**

उष्णेन गुणेन विरुद्धेनोपहिता रूक्षादयः प्रथमाध्यायोक्ताः षड्वातगुणा वायोश्चयं कुर्वंति न कोपमुष्णस्य विरुद्धत्वात् । त एव रूक्षादयः शीतगुणोपहितास्तत्सदृशत्वाद्वायोः कोपं कुर्वंति । उष्णेन युक्ताः स्निग्धादयो गुणा वायोः शमं कुर्वंति विपरीतत्वात् ।

**शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ॥२०॥**
**उष्णेन कोपं मंदाद्याः शमं शीतोपसंहिताः ।**

एवं पित्तस्य शीतेन गुणेन युक्तास्तीक्ष्णादयो गुणाश्चयं कुर्वंति । एवं तीक्ष्णादयो गुणा उष्णेन सहिताः कोपं कुर्वंति । मंदादयो गुणाः शीतगुणयुक्ताः शमं कुर्वंति विपरीतत्वात् ।

**शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् २१**
**उष्णेन कोपं तेनैव गुणा रूक्षादयः शमम् ।**

शीतगुणोपहिताः स्निग्धादयः कफस्य चयं कुर्वंति । उष्णेन युक्तास्त एव स्निग्धाद्याः कफस्य कोपं कुर्वंति । तेनैवोष्णेन युक्ता रूक्षादयः कफस्य च शमं कुर्वंति । कफस्य हि शीतगुणेन सदृशेनाऽपि स्निग्धादिगुणयुक्तेन स्त्यानत्वाच्चयः स्यात् । विपरीतेनोष्णेन विलयनात्कोपः । स एवोष्णो यदा रूक्षादियुक्तो भवति तदा विपरीतत्वाच्छमो भवति ।

इदानीं चयादीनां लक्षणान्याह ।

**चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥२२॥**
**विपरीतगुणेच्छा च**

स्वधाम्न्यात्मीये स्थाने दोषस्य या वृद्धिः स चय उच्यते । चितस्य दोषस्य लिंगमाह । यदा हि वातश्चितो भवति तदा रूक्षादिषु तद्गुणसामान्येषु प्रद्वेषः स्यात् तद्विपरीतगुणेषु स्निग्धादिष्वभिलाषः स्यात् । एवं कफपित्तयोश्चितयोर्व्याख्या । ननु प्रद्वेषो वृद्धिहेतुष्वित्येकमेव लक्षणं दोषचयसत्तानुमापकं कर्तुं न्याय्यम् । यदि वा विपरीतगुणेच्छा चेत्येतत् । किं द्वयोरुपादानेन । अत्रोच्यते । कदाचिदचितोऽपि दोषो वाताख्यः स्वप्रमाणस्थः क्षीणो वा यस्य स वातवृद्धिहेतून् रूक्षादीन्न द्वेष्टयपि तानिच्छति । सात्म्यवशात् । यथा गर्भिणी स्त्री दोहदवशात् । तदेवं व्यभिचारदर्शनात् प्रद्वेषो वृद्धिहेतुषु विपरीतगुणेच्छा चेति द्वयमपि कर्तव्यम् । तेन यदा तुल्यकालं पुरुषस्य वातसमानगुणेषु तद्वृद्धिहेतुषु प्रद्वेषो जायते वातगुणप्रतिपक्षेषु तत्क्षपणहेतुषु चाभिलाषस्तदा सम्यक् निश्चीयते वातस्योपचितिरिति द्वयमप्येतदुक्तम् ।

**कोपस्तून्मार्गगामिता ।**
**लिंगानां दर्शनं स्वेषामस्वास्थ्यं रोगसंभवः॥२३॥**

उन्मार्गगामिता स्वस्थानं त्यक्त्वा दोषस्य यत्पुनर्मार्गांतरगमनं स कोपः । कोपस्य लिंगमाह । लिंगानां स्वेषां यथायथं दर्शनमुद्भवो वातादीनां कुपितानां यानि लिंगानि दोषादिविज्ञानीयेऽभिहितानि वातव्याधिनिदाने च वक्ष्यंते तेषां दर्शनमुपलब्धिः

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।**
**वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥२४॥**

ग्रीष्मादिषु त्रिषु कालेषु ग्रीष्मवर्षाशरत्सु वातस्य चयप्रकोपप्रशमा भवंति । तथा वर्षादिषु त्रिषु वर्षाशरद्धेमंतेषु च पित्तस्य चयप्रकोपप्रशमा भवंति । तथा शिशिरादिषु त्रिषु शिशिरवसंतग्रीष्मेषु श्लेष्मणश्चयप्रकोपप्रशमा भवंति ।

ननु मरुतो ग्रीष्मे चयो न युक्तो यतस्तस्मिन्काले लघुरूक्षा ओषधयो भवंति । तथा वर्षासु पित्तचयो न युक्तो जलानामौषधीनां चाऽम्लपाकत्वात् । तथा श्लेष्मणः शिशिरे चयो न युक्तस्तदा ह्याप ओषधयश्च स्निग्धा भवंति कालश्च शीत इति कोप एवोपपन्न इत्यस्मिन् पर्यनुयोग इदमाह ।

**चीयते लघुरूक्षाभिरोषधीभिः समीरणः ।**
**तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥२५॥**
**अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ।**
**पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥२६॥**
**चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ।**
**तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति॥२७॥**

ग्रीष्मकाले वातो लघुरूक्षाभिरोषधीभिर्देहे चादानकालस्वाभाव्यात्तद्विधे लघुरूक्षः समीरण इति समानगुणत्वात्पवनस्य कोपः प्राप्तस्तन्निषिध्यते कालस्यौष्ण्यादित्यनेन । एवं पित्तस्य वर्षासु कोपः शैत्यादित्यनेन निषिध्यते ।

**इति कालस्वभावोऽयं**

इति पूर्वोक्तोऽयं वाय्वादिचयादिः कालस्य स्वभावः ।

**आहारादिवशात्पुनः ।**
**चयादीन् यांति सद्योऽपि दोषाः कालेऽपि वा न तु**

आहारादिवशादन्नपानसामर्थ्यात्पुनर्दोषाः सद्योऽपि तत्क्षणादेव कालमनपेक्ष्यैव चयादींश्चयप्रकोपप्रशमान् यांति । तस्मादेव चाहारादिवशात् । यथास्वं चयादिकालेऽपि च दोषा नतु चयादीन् यांति । तस्मात्कालादाहारादीनां प्राधान्यमित्यर्थः । आहारादीत्यत्राऽऽदिशब्देन रसायनवाजीकरणवमनविरेचनादयो गृह्यंते ।

एवं दोषाणां चयादीन् प्रदर्श्य व्याप्तिनिवृत्तिवैचित्र्यं कोपजं दर्शयितुमाह ।

**व्याप्नोति सहसा देहमापादतलमस्तकम् ।**
**निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत्॥२९॥**

मलः कुपितः सहसा शीघ्रमेवापादतलमस्तकं व्याप्नोति । पादतलादारभ्य यावन्मस्तकमित्यर्थः । निवर्तते पुनरल्पाल्पं स्तोकं स्तोकमिति । यथा गिरिनद्यादीनां जलपूरः समविषमं सहसैव व्याप्नोति निवर्तते तु स्तोकं स्तोकमिति ।

ननु प्रतिरोगं निदानलक्षणचिकित्सितमानंत्याद्वक्तुमशक्यं तच्चाऽविदन्न कश्चिदत्र तथा यत्नं कुर्यादित्याशंक्याह ।

**नानारूपैरसंख्येयैर्विकारैः कुपिता मलाः ।**
**तापयंति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ॥३०॥**
**शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ।**

यत्तदोर्नित्यसंबंधाद्यस्मादिति लभ्यते । यस्मान्नानारूपैरनेकप्रकारैरसंख्येयैर्गणनां समतीतैर्विकारैर्ज्वरैर्मला वातपित्तश्लेष्माणः कुपितास्तनुं देहं तापयंति दुःखयंति तस्मात्तद्धेत्वाकृतिसाधनं शक्यं नैकैकशो वक्तुमयमस्य विकारस्य हेतुरियमाकृतिरिदं लक्षणमिदमस्य साधनं चिकित्सितमतः सामान्यमुच्यते ।

अत्रैव हेत्वंतरमाह ।

**दोषा एव हि सर्वेषां रोगाणामेककारणम् ॥३१॥**
**यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ।**
**छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ३२**
**विकारजातं विविधं त्रीन् गुणान्नाऽतिवर्तते ।**
**तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ॥ ३३ ॥**
**विकारजातं त्रीन्दोषान्**

सर्वेषां रोगाणां यस्माद्दोषा एवैककारणम् । एकं च तत्प्रधानं कारणं निमित्तमेककारणम् । यदि वा सर्वेषां रोगाणां दोषा एकं तुल्यं कारणं समानं कारणमित्यर्थः । एवशब्दोऽवधारणे । दोषा एव कारणं नाऽपरं किंचिद्वस्तुजातम् । अत्र दृष्टांतमाह । पक्षी प्राचिकादिर्यथा सर्वतः समंतात्परिपतन् भ्रमन् सर्वमप्यहः सकलमपि दिवसमात्मीयां छायां नाऽत्येति नाऽतिक्रामति । तया विना क्षणमप्यसौ नोपलभ्यत इत्यर्थः । तथाऽन्यदपि निदर्शनमाह । यथा वेत्यादि । यथा वा कृत्स्नं निरवशेषमेतद्विकारजातं स्थावरजंगमादिभेदभिन्नं जरायुजांडजादिभेदभिन्नं वा विविधं नानाप्रकारं त्रीन् गुणान् सत्वरजस्तमःसंज्ञान्नाऽतिवर्तते नात्येति । त्रिभिरेतैर्विरहितं न जातुचिद्भवतीत्यर्थः । तथा स्वधात्वित्यादि । धातवो दोषधातुमलाः शरीरधारणसामान्यात् तेषां वैषम्यं स्वलक्षणतोऽन्यथात्वं स्वधातुवैषम्यं निमित्तं यस्य तद्विकारजातं त्रीन् दोषान्नाऽतिक्रामति । त्रिदोषरहितं न संभवतीत्यर्थः । धातुवैषम्यं च प्रतिरोगमन्यादृशत्वान्नानाविधम् । यत्तु येन धातुवैषम्येण जन्यते तत्तस्य स्वं स्वीयं भवति । येषां तु रोगाणां देवग्रहादि निमित्तं न तेषु तथा दोषानुबंधः । आगंतुकत्वात् । आगंतुकनिजयोर्ह्ययमेव भेदः । यदागंतुकेषु प्रथमं रोगोद्भूतिः पश्चाद्दोषानुबंधो निजेषु प्राग्दोषानुबंध इति । ये च व्याचक्षते । स्वे च ते धातवश्च तेषां वैषम्यमिति । तेषां नायमर्थः प्रतिपादितः स्यात् । स्वग्रहणं चाऽतिरिच्यते । यतः शरीरांतरावस्थायिनो दोषा वातादयः शरीरांतरे रोगं जनयितुं नालम् । तस्मात्पूर्वमेव व्याख्यानं श्रेयः ।

**तेषां कोपे तु कारणम् ।**
**अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ३४**
**हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ।**

तेषां वातादीनां कोपे कारणमसात्म्यैरनुचितैरर्थैः शब्दस्पर्शरूपरसगंधाख्यैः श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानामिंद्रियाणां यः संयोगस्तथा कालः शीतोष्णवर्षलक्षणो दुष्टस्तथा कर्म चैहिकमन्यजन्मजं च यद्दुष्कृतमशुभमेतत्त्रयं दोषाणां कोपहेतुः । तुशब्दः समुच्चये । न केवलं रूक्षादयो वातादीनां कोपकारणं यावदसात्म्येंद्रियार्थसंयोगादिरपि । एतच्च पूर्वोक्तं दोषकोपकारणमसात्म्येंद्रियार्थसंयोगादिभेदेन त्रिधा भिन्नमपि पुनर्भूयस्त्रिधा त्रिप्रकारमपि भिद्यते । कथम् । हीनमिथ्यातियोगेन ।

तानेव हीनमिथ्यातियोगान्दर्शयति ।

**हीनोऽर्थेनेंद्रियस्याऽल्पः संयोगः स्वेन नैव वा ३५**
**अतियोगोऽतिसंसर्गः सूक्ष्मभासुरभैरवम् ।**
**अत्यासन्नाऽतिदूरस्थं विप्रियं विकृतादि च ॥३६॥**
**यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः ।**
**एवमत्युच्चपूत्यादीनिंद्रियार्थान् यथायथम् ॥३७॥**
**विद्यात्**

अर्थेन शब्दादिना स्वेनेंद्रियस्य श्रोत्रादेर्हीनोऽल्पो यः संयोगः स हीनयोगः । नैव वेति । अथवा सर्वसविकया तेनार्थेन न संयोगः सोऽपि हीनो योगः । तस्यैवेंद्रियस्य स्वेनार्थेन योऽतिसंसर्गोऽतिसेवालक्षणः स तस्य स्वेनार्थेनातियोगः । तच्च सूक्ष्मभासुरभैरवमित्यादि यदक्ष्णा वीक्ष्यते नयनेनालोक्यते स तस्य चक्षुरिंद्रियस्य स्वेनार्थेन मिथ्यायोगः । एवमनया दिशा सूक्ष्मभासुरभैरवं तथा । अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च । यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः । तिमिरादिहेतुत्वात् । एवमनया चक्षुषो रीत्याऽन्यानपींद्रियार्थान् यथास्वमिंद्रियाणामत्युच्चसूक्ष्मादीन् मिथ्यायोगरूपान्विद्यात् । यदाऽत्युच्चपरुषेष्टविनाशभीषणाद्यनिष्टशब्दः श्रोत्रेंद्रियेण गृह्यते तदा श्रोत्रेंद्रियस्य स्वेनार्थेन शब्दाख्येन मिथ्यायोगः । यदा पूतिविष्ठाद्यनिष्टो गंधो घ्राणेंद्रियेण गृह्यते तदा घ्राणेंद्रियस्य स्वेनार्थेन गंधाख्येन मिथ्यायोगः । यदा स्नानानुलेपनादीनां शीतोष्णादीनां च स्पृश्यानामक्रमसेवनेन स्पर्शः स्पर्शनेंद्रियेण गृह्यते तदा स्पर्शनेंद्रियस्य स्वेनार्थेन स्पर्शाख्येन मिथ्यायोगः । तथा रसनेंद्रियेण यो रसोऽपरिपाट्या युज्यते । तथा पथ्यद्रव्यविनिष्ठोऽपि यो रसो रसनेंद्रियेण गृह्यते स तस्य रसनेंद्रियस्य स्वेन रसाख्येनाऽर्थेन मिथ्यायोगः ।

**कालस्तु शीतोष्णवर्षभेदात्त्रिधा मतः ।**
**स हीनो हीनशीतादिरतियोगोऽतिलक्षणः॥३८॥**
**मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः ।**

कालः पुनः शीतोष्णवर्षभेदेन त्रिधा त्रिप्रकारो मतो मुनीनाम् । तत्र हेमंतशिशिरलक्षणः शीतः । उष्णो वसंतग्रीष्मलक्षणः । प्रावृड्लक्षणो वर्षाख्यः । स च कालो हीनशीतादिर्हीनयोगलक्षणः । अतियोगोऽतिमात्रयोगलक्षणः । विपरीतं स्वं शीतोष्णवर्षाख्यं लक्षणं यस्य कालस्य स विपरीतस्वलक्षणो मिथ्यायोगः । गुणगुणिनोरभेदोपचारात् काल एवमुच्यते । तत्र यथा हेमंते शीतस्याल्पत्वं हीनो योगस्तस्मिन्नेव हेमंतेऽतिशैत्यमतियोगस्तस्मिन्नेव हेमंत औष्ण्यं मिथ्यायोगः । उपलक्षणं चेदम् । एवं शरद्वसंतयोरपि यन्मंदवर्षौष्णत्वं स्वलक्षणं तद्यदा हीनतरं स्यात् सोऽपि हीनयोगः । एवमतियोगायोगयोरपि योज्यम् ।

**कायवाक्चित्तभेदेन कर्माऽपि विभजेत्त्रिधा॥३९॥**
**कायादिकर्मणा हीना प्रवृत्तिर्हीनसंज्ञिका ।**
**अतियोगोऽतिवृत्तिस्तु वेगोदीरणधारणम् ॥४०॥**
**विषमांगक्रियारंभः पतनस्खलनादिकम् ।**
**भाषणं सामिभुक्तस्य रागद्वेषभयादि च ॥ ४१ ॥**
**कर्म प्राणातिपातादि दशधा यच्च निंदितम् ।**
**मिथ्यायोगः समस्तोऽसाविह चामुत्र वा कृतम्**

यथा कालस्त्रिधा निरूपितस्तथा कर्माऽपि कायवाक्चित्तभेदेन त्रिप्रकारं विभजेत् । तथा कायकर्मणस्तथा वाक्कर्मणस्तथा चित्तकर्मणो हीना या प्रवृत्तिः स हीनसंज्ञको योगः । अतिप्रवृत्तिस्त्वतियोगः । कायादिकर्मणो मिथ्यायोगमधिकृत्याह । वेगोदीरणधारणमित्यारभ्य यावत्पतनस्खलनादिकं यदेतत् कायिकं कर्म तस्य कर्मण एवंरूपस्य या वृत्तिः स कायकर्मणो मिथ्यायोगः । विषमांगैः क्रियाकर्म विषमारंभ उभयलोकविरुद्धो विषमपतनं विषमस्खलनम् । आदिशब्देन विषमगमनादीनां ग्रहणम् । सामिभुक्तस्याऽर्धभुक्तस्य यद्भाषणं जल्पनमेवंरूपा या प्रवृत्तिः स वाक्कर्मणो मिथ्यायोगः । रागद्वेषभयादि यदेतन्मानसं कर्म तस्य कर्मण एवंरूपा या प्रवृत्तिः स चित्तकर्मणो मिथ्यायोगः । तथा दिनचर्याध्यायोक्तं यत्प्राणातिपातादि दशधा दशप्रकारं कर्म निंदितमशुभं निर्दिष्टं हिंसास्तेयेत्यादिना ग्रंथेन तच्च यथायथं कायवाक्चित्तकर्मणां मिथ्यायोगः । समस्तोऽसाविह चामुत्र वा कृतमस्मिन् लोके कृतमन्यत्र वा लोके कृतमाचरितं सर्व एव मिथ्यायोगः ।

**निदानमेतद्दोषाणां कुपितास्तेन नैकधा ।**
**कुर्वंति विविधान् व्याधीन् शाखाकोष्ठास्थिसंधिषु**

निदानमेतद्दोषाणां कोप इति वाक्यशेषः । कुपितास्तेन निदानेन नैकधा किं तर्ह्यनेकप्रकारेण व्याधीन् विविधान् नानाप्रकारान् कुर्वंति । कुपिता दोषा इति वचनविपरिणामेन संबंधः । क्व व्याधीन् कुर्वंतीत्याह । शाखाश्च कोष्ठश्चाऽस्थीनि च संधयश्च तेषु ।

शाखेति किमुच्यत इत्याह ।

**शाखारक्तादयस्त्वक् च बाह्यरोगायनं हि तत् ।**
**तदाश्रया मषव्यंगगंडालज्यर्बुदादयः ॥ ४४ ॥**
**बहिर्भागाश्च दुर्नामगुल्मशोफादयो गदाः ।**

शाखा रक्तादयः षड्धातवस्त्वक् चैतद्बाह्यं रोगायनं बाह्यानां रोगाणामयनं स्थानम् । हिशब्दो यस्मादर्थे । यस्माद्बाह्यानां रोगाणामयनमतस्तदाश्रया मषव्यंगादयो रोगा बहिर्भागा उच्यंते । आदिशब्देन विसर्पविद्रधिपिप्लुकुष्ठादयो गृह्यंते । दुर्नामेत्यादि । बहिर्भागाश्चेत्यत्र चशब्दो भिन्नक्रमः शोफादय इत्यस्मादनंतरं द्रष्टव्यः । दुर्नामगुल्मशोफादयश्च बहिर्भागा इत्यर्थः ।

**अंतः कोष्ठो महास्रोत आमपक्वाशयाश्रयः ॥ ४५ ॥**
**तत्स्थानाश्छर्द्यतीसारकासश्वासोदरज्वराः ।**
**अंतर्भागं च शोफार्शोगुल्मवीसर्पविद्रधि ॥ ४६ ॥**

कोष्ठः कथ्यते । अंतस्तथा महास्रोतस्तथाऽऽमपक्वाशयाश्रयः । तत्स्थाना अंतर्भागाश्रयाश्छर्द्यादयो रोगाः । न केवलास्त एव छर्द्यादयोंऽतर्भागाश्रया यावच्छोफार्शोगुल्मवीसर्पविद्रध्यप्यंतर्भागं च । शोफादीनां विद्रध्यंतानां समाहारद्वंद्वनिर्देशः ।

इदानीं मध्यमं रोगमार्गं वक्ति ।

**शिरोहृदयबस्त्यादिमर्माण्यस्थ्नां च संधयः ।**
**तन्निबद्धाः शिरास्नायुकंडराद्याश्च मध्यमाः ॥४७॥**
**रोगमार्गस्थितास्तत्र यक्ष्मपक्षवधार्दिताः ।**
**मूर्धादिरोगाः संध्यस्थित्रिकशूलग्रहादयः ॥ ४८ ॥**

शिरोहृदयादीनि मध्यमो रोगमार्गः । अस्थ्नां च संधय इत्येवं निर्देशेनेदं बोधयति । नाऽत्र द्वयं विवक्षितमस्थीनि च संधयश्चेति किं तर्ह्यस्थ्नां संबंधिनः संधय इति । संधयो ह्यन्येऽपि संति । तथा च वक्ष्यति । मांसास्थिस्नायुधमनी शिरासंधिसमागम इति । तन्निबद्धास्तेष्वस्थिषु निबद्धाः संलग्ना इत्यर्थः । शिराः स्नायवः कंडराश्चादयो येषां धमनीकूर्चादीनां ते । चशब्दात्पूर्वोक्ताश्च । तत्र मध्यमे रोगमार्गे यक्ष्मादयो गदास्त्रिकशूलग्रहायंताः । मूर्धादीत्यत्राऽदिशब्देन हृदयबस्त्यादिपरिग्रहः । संध्यस्थित्रिके शूलानि संध्यस्थित्रिके ग्रहा इति योज्यम् । आदिशब्देन पक्षग्रहादयो वातविकारा गृह्यंते । यक्ष्माणोऽत्र मर्मास्थिसंध्यधिष्ठानत्वात्पूर्वं निर्देशः । वक्ष्यति हि । तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः । शरीरसंधीनाविश्य तान् शिराश्च प्रपीडयन्नित्यादि ।

इदानीं वायोः कर्माण्याह ।

**स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ।**
**संगांगभंगसंकोचवर्तहर्षणतर्षणम् ॥ ४९ ॥**
**कंपपारुष्यसौषिर्यशोषस्पंदनवेष्टनम् ।**
**स्तंभः कषायरसता वर्णः श्यावोऽरुणोऽपि वा ॥५०॥**

**कर्माणि वायोः**

स्रंसो हन्वादिसंधेर्भ्रंशः। व्यसनं व्यासो विक्षेपणमंगप्रत्यंगादेर्यथा क्षेपकादिषु। व्यधस्ताडनमिव मुद्गरादिना। स्वापः सुप्तिः कर्मण्यचैतन्यम्। सदनं सादोंऽगानां क्रियास्वसामर्थ्यम्। रुक् सततं शूलम्। तोदो विच्छिन्नं शूलम्। भेदनं भेदो विदारणमिवांगस्य। संगो मूत्रपुरीषादेः स्वाशयेभ्योऽनिःसारो वाक्संगादिश्च। अंगानां जंघोरुप्रभृतीनां भंग इव भंगश्चूर्णनमिवांगभंगः। संकोचनं संकोचः शिरादीनाम्। वर्तनं वर्तः पुरीषादीनां पिंडीकरणम्। हर्षणं रोम्णामूर्ध्वीभावः। तर्षणं तर्षस्तृट्। तथा कंपोऽतिवेपनम्। पारुष्यं परुषत्वम्। सौषिर्यमस्थ्नाम्। शोषः शोषणम्। वेष्टनं ग्रथनमिवांगस्य। स्पंदनं हि किंचिच्चलनम्। स्तंभो बाहूरुजंघादीनां समाकुंचनाद्यभावः। कषायरसता कषायास्वादत्वम्। वर्णः श्यावोऽरुणोऽपि वा। श्यावारुणौ वर्णावित्यर्थः। एतानि वायोः कर्माणि।

अथ पित्तस्याह।

**पित्तस्य दाहरागोष्मपाकिताः।**
**स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्छनं मदः ॥५१॥**
**कटुकाम्लौ रसौ वर्णः पांडुरारुणवर्जितः।**

दाहादीनि पित्तस्य कर्माणि। सर्वांगीणस्तापो दाहः। रागो लौहित्यम्। ऊष्मा औष्ण्यम्। पाकिता पाककर्तृत्वमजीर्णेष्वन्ने च। स्वेदनं स्वेदः। क्लेदः शोणितादिषु विकारः। स्रुतिः स्रावः। कोथः क्लेदस्यातिशयोऽविच्छिन्नत्वम्। सदनं सादः। मूर्छनं भ्रमः। मदो वक्ष्यमाणो रोगविशेषः। रसावास्वादौ कटुकाम्लौ। वर्णः पांडुरारुणाभ्यामन्यः। शुक्ललोहितवर्णनिषेधेन तच्छेषनानावर्णसंभवः सूच्यते।

श्लेष्मकर्माण्याह।

**श्लेष्मणः स्नेहकाठिन्यकंडूशीतत्वगौरवम् ॥ ५२ ॥**
**बंधोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः।**
**वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ॥५३॥**
**इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम्।**
**दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ॥ ५४ ॥**
**व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम्।**

कफस्य स्नेहादीनि कर्माणि। स्नेहः स्नैग्ध्यम्। काठिन्यममृदुत्वम्। कंडूः खर्जूः। शीतत्वं शीतसद्भावः। गौरवं गुरुत्वम्। बंधः स्रोतसाम्। अस्थ्यादीनामुपलेपः। स्तैमित्यं गात्राणामपटुत्वम्। काये वर्णः शुक्लः। रसौ च मधुरपटू। चिरकारिता कार्यादौ विश्रब्धत्वम्। ननु वायोरमूर्तत्वाद्वर्णरसोपलब्धिरनुपपन्ना। अमूर्तस्य हि वर्णरसौ दूरोत्सारितौ। नैतदस्ति। न हि सर्वाणि कार्याणि कारणसदृशान्येव भवंति। तथा चेंद्रियेभ्यो जडेभ्यो बुद्धेरजडाया उत्पत्तिर्दृष्टा। तस्मात्कारणसदृशानि कार्याणीति प्रायिकमेतत्। अचिंत्यत्वाच्च द्रव्यप्रभावस्य वायोः सकाशात् कषायरसता श्यावारुणवर्णोत्पत्तिश्चाऽन्वयव्यतिरेकसिद्धा कथमिव निवार्यताम्। इत्येवं दोषाणां कर्माण्युपदिष्टानि। तद्विकाराश्च संग्रह उक्ताः। तथा च तद्ग्रंथः। अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः। विंशतिः श्लेष्मजाश्चैव स्थूला नानात्वजा मताः। नखभेदः पादशूलं सुप्तिभ्रंशो विपादिका। खुडो गुल्फग्रहो जानुविश्लेषो जानुकुंचनम्। पिंडिकोद्वेष्टनं सादश्चोर्वोः स्तंभश्च गृध्रसी। पांगुल्यं भ्रंशशूलं च गुदे स्तंभस्तु मेहने। मुष्काक्षेपः श्रोणिभेदो वंक्षणानाह एव च। उदावर्तोऽथ विड्भेदः पार्श्वपृष्ठत्रिकग्रहाः। खंजवामनकुब्जत्वं हृद्रोदरवेष्टकौ। हन्मोहो वक्षनिस्तोदः शोषोद्घातौ तथोरसः। बाहुशोषो हनुग्रीवामन्यास्तंभौष्ठभेदनम्। दंतभेदोऽथ शैथिल्यं कंठध्वंसोऽथ वा ग्रहः। कषायास्यत्वमूकत्वे मुखशोषो रसाज्ञता। घ्राणनाशोऽज्ञता गंधे शब्दोच्चैःश्रवणं तथा। बाधिर्यं कर्णशूलं च वर्त्मस्तंभनकुंचनम्। तिमिरं चाऽक्षिशूलं च भ्रूव्युदासोऽथ नेत्रयोः। ललाटशंखभेदौ च केशभूस्फुटनं तथा। शिरोरुजार्दितं जृंभा प्रलापो वेपथुर्भ्रमः। एकांगव्याधिरायामः पक्षाघातोऽपतंत्रकः। दंडकः स्वप्ननाशश्च ग्लानिः पारुष्यरुक्षता। विषादश्चाऽनवस्थानमरुणश्यामवर्णता। इत्यशीतिः समाख्याता रोगा वातसमुद्भवाः। अंतर्दाहो विदाहश्च प्लोषोऽथ दवथुर्दवः। अत्यूष्मा चांसदाहश्च स्वेदोऽत्यम्लकधूमकौ। रक्तक्लेदोंऽगगंधश्च गात्रावयवशातनम्। त्वङ्मांसदरणं मांसक्लेदश्चमंदलं तथा। रक्तविस्फोटकः कोठः पित्तासृग्रक्तमंडले। नीलिका कामला कक्षा गात्रे हरितपीतता। पूतितिक्तास्यता तृष्णा लोहगंधास्यता तथा। जीवादानमतृप्तिश्च प्रवेशस्तमसस्तथा। गलास्यगुदमेढ्राक्षिपाको हारिद्रपीतता। नखाक्षिमूत्रशकृतां चत्वारिंशत्तु पित्तजाः। स्तैमित्यं गौरवं तृप्तिरालस्यमतिनिद्रता। तंद्रास्यस्रावमाधुर्ये प्रलेपो हृदयस्य च। सादः कंठप्रलेपश्च श्लेष्मोद्गिरणमेव च। मलाधिक्यमतिस्थौल्यं वमनं प्रतिसंचयम्। उदर्दो गलगंडश्च शैत्यं श्वेतावभासता। विण्मूत्रनखनेत्राणां शुक्लता च कफामयाः। यथास्थूलं विकाराणां चत्वारिंशमिदं स्मृतमिति। हृदादौ शूलवद्दाहो योंऽतर्दाहः स कीर्तितः। पाणिपादांसमूलेषु संतापो विविधस्तु यः। अभ्यर्चिषेव निःस्वेदो विदाहः स निगद्यते। ओषः सर्वांगिकस्तीव्रो दाहः स्वेदारतिप्रदः। दवथुश्चक्षुरादिभ्यस्तीव्र ऊष्मा प्रवर्तते। मुखौष्ठतालुषु दवो अम्लोद्गिरणमम्लकः। धूमायनं शिरोघ्राणकंठतालुषु धूमकः। प्रमीलकस्तु स्तैमित्यं गुरुतांऽगस्य गौरवम्। आहारानभिलाषस्तु तृप्तिः स्याद्विषयाऽग्रहः। निद्रार्तस्येव तंद्रा स्याच्छेषाः प्रथितनामकाः। दोषाणां कर्माण्युपदिश्य निर्देशप्रयोजनमधिकृत्याह। इति प्रकारे। दोषाणां लक्षणं दोषलक्षणं यथायथं लिंगम्। इति पूर्वोक्तेन प्रकारेण यद्दोषलक्षणमुक्तं तद्दर्शनाद्यैः सम्यगुपलक्षयेत् जानीयात्। वैद्य इति शेषः। दर्शनाद्यैरित्यादिशब्देन स्पर्शनप्रश्नौ गृह्येते। किंभूतं दोषलक्षणम्। अशेषाश्च त आमयाश्चाशेषामयास्तान् सर्वानामयान् साधु व्याप्नोति तदशेषामयव्यापि। किंभूतो वैद्यः। अवहितो द-

त्तावधानः । तथा व्याध्यवस्थाविभागज्ञः । व्याधेरवस्थाः कालकृता दशास्तासां विभागः पृथक्त्वं यथेयमन्यस्य व्याधेरवस्थेयमन्यावस्थेत्यवस्थाभेदाच्चोपक्रमभेदः । तथा ह्येकस्यैव ज्वरस्य नवस्याऽन्य उपक्रमो जीर्णस्याऽन्यस्तदेवं विभागं यो जानाति स व्याध्यवस्थाविभागज्ञः । तथाऽर्थान् व्याधितान् प्रतिक्षणं मुहूर्ते मुहूर्ते पश्यन्नालोकयन् ।

किमिति पुनः पुनर्व्याधितदर्शनं क्रियत इत्याह ।

**अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ॥५५॥**
**रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ।**

अभ्यासान्मुहुर्मुहुश्चिकित्सितकर्मणि प्रवर्तनाद्दृष्टिर्दर्शनं चिकित्साविज्ञानं जायते न केवलाच्चिकित्साशास्त्रावगमात् । किंभूता दृष्टिः । कर्मणि सिद्धिस्तां प्रकाशयितुं शीलं यस्याः सा कर्मसिद्धिप्रकाशिनी । अत्र दृष्टांतमाह । रत्नादीत्यादि । आदिशब्देन सुवर्णहिरण्यादीनां ग्रहणम् । तेषां यत्सदसज्ज्ञानमिदं शोभनमिदं न शोभनमित्यवगमस्तन्न शास्त्रादेव जायते किंतर्ह्यभ्यासाच्च । एवकारोऽवधारणार्थः । न शास्त्रावबोधान्न च केवलादभ्यासादित्येवकारेण बोधयति । किल यथा रत्नपरीक्षा तच्छास्त्रावबोधदर्शनाभ्यां सम्यग्जायते तथैव चिकित्सा शास्त्रावबोधान्नित्यं नित्यमातुरदर्शनाच्चाऽवगम्यत इत्यर्थः ।

**दृष्टापचारजः कश्चित्कश्चित्पूर्वापराधजः ॥ ५६ ॥**
**तत्संकराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ।**

दृष्टश्चासावपचारश्च तस्माज्जातो दृष्टापचारजः । अपचारो व्याधिहेतुः । ऐहिकलौकिकाद्याधिकारणाज्जातो दृष्टापचारजः । कश्चिदात्मकृतात्पूर्वापराधादशुभकर्माख्याज्जातः पूर्वापराधजः । अपरः कश्चित्तत्संकराद्भवति । तयोः संकरस्तत्संकरो मिश्रत्वं तस्मात् । न केवलात्पूर्वापराधान्न च केवलाद्दृष्टापराधादपि तु द्वयोः संसर्गाज्जात इत्यर्थः । एवमनेन प्रकारेण व्याधिस्त्रिधा त्रिप्रकारः स्मृतः ।

अथ त्रिप्रकारव्याधिलक्षणार्थमाह ।

**यथा निदानं दोषोत्थः कर्मजो हेतुभिर्विना ॥ ५७ ॥**
**महारंभोऽल्पके हेतावातंको दोषकर्मजः ।**

यथा निदानं दोषोत्थ इति । यद्यस्य दोषस्य वातादेर्लघुरूक्षादि निदानं तेन कुपिता दोषास्तेभ्य उत्थितो व्याधिः स दोषोत्थो ज्ञेयः । यो दृष्टापचारज इत्युक्त इत्यर्थः । हेतुभिर्वातादिनिदानैर्लघुरूक्षादिभिर्विना यो भवति स कर्मजः । यस्त्वल्पे निदाने सेविते महारंभः स्यात् स कर्मदोषजो रोगो ज्ञेयः । महानारंभो यस्य सः । पूर्वरूपरूपैर्बलवद्भिर्युक्त इत्यर्थः ।

अथ त्रिविधस्याऽपि व्याधेश्चिकित्सामाह ।

**विपक्षशीलनात्पूर्वः कर्मजः कर्मसंक्षयात् ॥ ५८ ॥**
**गच्छत्युभयजन्मा तु दोषकर्मक्षयात्क्षयम् ।**

विपक्षशीलनात्पूर्व इति । पूर्वः पूर्वमुक्तो यः केवलं दोषजो व्याधिः स विपक्षशीलनात् यथोक्तविपक्षादिसेवनात्क्षयं याति । कर्मजो रोगः कर्मसंक्षयात्क्षयं याति । उभयजन्मा दोषकर्मोत्थो दोषकर्मणोरुभयोरपि क्षयात्क्षयं याति ।

व्याधीनां त्रैविध्यमाख्याय द्वैविध्यं दर्शयितुमाह ।

**द्विधा स्वपरतंत्रत्वाद्व्याधयः**

स्वतंत्रश्च परतंत्रश्च स्वतंत्रपरतंत्रौ तयोर्भावः स्वतंत्रपरतंत्रत्वं तस्माद्धेतोर्द्विधा व्याधयः । एके स्वतंत्रा अन्ये परतंत्रा इत्यर्थः ।

**अंत्याः पुनर्द्विधा ॥ ५९ ॥**

अंते भवा अंत्याः परतंत्रास्ते पुनर्भूयो द्विधा ।

तदेव द्वैविध्यं दर्शयितुमाह ।

**पूर्वजाः पूर्वरूपाख्या जाताः पश्चादुपद्रवाः ।**

पूर्वं जाताः पूर्वजाः । अन्येष्वपि दृश्यत इति डः । पूर्वजाः पूर्वरूपसंज्ञा रोगाः । ये च पश्चाज्जाता गदास्ते व्याधीनामुपद्रवा इत्यंता द्विविधाः ।

संप्रति स्वतंत्रं लक्षयति ।

**यथास्वजन्मोपशयाः स्वतंत्राः स्पष्टलक्षणाः ॥६०॥**

जन्म चोपशयश्च जन्मोपशयौ । जन्मोत्पत्तिरुपशयः सुखानुबंधः । यो यः स्वं यथास्वम् । यस्य ज्वरादेर्यावात्मीयौ शास्त्रनिर्दिष्टौ तौ यथास्वशब्देन सूच्येते । यथास्वं जन्मोपशयौ येषां ते यथास्वजन्मोपशया व्याधयः स्वतंत्रा उच्यंते । चिकित्सागुरुलाघवप्रतिपत्त्यर्थं च स्वतंत्रादिसंज्ञाकरणम् । स्वग्रहणाद्येऽन्यजन्मनि जायंतेऽन्यस्य च व्याधेर्येत उपशयः सुखानुबंधस्तत एतत्परिवारस्याऽपि । ते तु न स्वतंत्राः । तथा चोक्तम् । पूर्वरूपरूपादिक्रमेण ज्वरादावुत्पन्ने तत्परिवारा ये व्यासादय उत्पद्यंते तदुपशये चोपशेरते न ते स्वतंत्राः । ज्वरादय एव तु मूलव्याधिरूपत्वात्स्वतंत्रा इत्युच्यंत इति ।

**विपरीतास्ततोऽन्ये तु**

स्वतंत्रेभ्यो रोगेभ्यो येऽन्ये परतंत्राः पूर्वरूपाख्यास्तथोपद्रवसंज्ञाश्च ते विपरीता विपरीतस्वरूपा न यथास्वजन्मोपशया न च स्पष्टलक्षणाः ।

एवं व्याधीनां स्वतंत्रपरतंत्रत्वं प्रतिपाद्य दोषाणां प्रतिपादयन्नाह ।

**विद्यादेवं मलानपि ।**

न केवलं रोगान् स्वतंत्रपरतंत्रभेदैर्विद्याद्वैद्यो यावन्मलान् दोषानपि वातादीनेवं स्वतंत्रपरतंत्रभेदैर्जानीयात् ।

**तान् लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ॥६१॥**

तान् वातपित्तकफान् यथास्वजन्मोपशयलक्षणावच्छिन्नस्वरूपान् प्रतिज्वरं प्रतिविकारं विकुर्वाणान् । विकृतिं कोपं गच्छतो जानीयात् वैद्य इति शेषः । कीदृक् । अवहितो दत्तचित्तः ।

एवं स्वतंत्राणां व्याधीनां यथास्वोपशय एव भेषजमुक्तम् । परतंत्राणां व्याधीनां कः प्रशमोपाय इत्याह ।

**तेषां प्रधानप्रशमे प्रशमोऽशाम्यतस्तथा ।**
**पश्चाच्चिकित्सेत्तूर्णं वा बलवंतमुपद्रवम् ॥ ६२ ॥**

तेषां परतंत्राणां रोगाणामप्रधानानां प्रधानप्रशमे स्वतंत्रव्याधिप्रशमे शमो भवति । न तु तेषां पृथगुपक्रमो विधेय इत्यर्थः । अशाम्यतस्तथा शममगच्छतः परतंत्रान् व्याधीन् दोषान् वा तथा तेन प्रकारेण प्रधानचिकित्सालक्षणेन पश्चात् प्रधानचिकित्सात उत्तरकालं चिकित्सेत् । अचिकित्स्यमानो ह्यसाध्यतां यायात् । तूर्णं वेति । उपद्रवश्चेद्बलवान् स्यात्तदा तमेवोपद्रवं तूर्णमेव चिकित्सेन्न पश्चात् ।

ननु कुतोऽप्रधानं शीघ्रं चिकित्सेदित्याह ।

**व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ।**

हि यस्माद्व्याधिक्लिष्टशरीरस्य पुंसः सोऽतिशयेन पीडाकरः । प्रागुत्पन्नोऽपि रोगः पीडाकरः । उपद्रवश्च पश्चाज्जायमानो व्याधिक्लिष्टशरीरस्योत्पन्नत्वात्पीडाकरतरः । तदयमत्रार्थः । स्वतंत्रो व्याधिर्हीनबलः प्रधानोपक्रमेणैवोपशाम्यति । यस्तु परतंत्रः पश्चादुत्पद्यमानोऽपि स्वतंत्रव्याध्युपक्रमेण शमं न याति तं पश्चादुपक्रमेत् । यस्तु बलवान् परतंत्रस्तमादावेव चिकित्सेदतिपीडाकरत्वात् ।

ननु येषां विकाराणां नामग्राहं चिकित्सा नोक्ता तेषां नामाकुशलो वैद्यः किं चिकित्सेन्नेत्याशंक्याह ।

**विकारनामाकुशलो न जिह्रीयात्कदाचन ॥ ६३ ॥**
**नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ।**

विकारा रोगास्तेषां नामानि तेष्वकुशलो वैद्यो न जातुचिज्जिह्रीयात् रोगसंज्ञाऽनभिज्ञोऽहमिति लज्जां न कुर्यात् । चिकित्सामेव विदध्यादित्यर्थः । कुतो हेतोरित्याह । नहीत्यादि । यस्मात्सर्वविकाराणां नामतः संज्ञातो ध्रुवा निश्चिता स्थितिः स्वस्थानं नास्ति ।

ननु कुतोऽशेषरोगाणां नामतो नास्ति स्थितिरित्याशंक्याह ।

**स एव कुपितो दोषः समुत्थानविशेषतः ॥ ६४ ॥**
**स्थानांतराणि च प्राप्य विकारान् कुरुते बहून् ।**

यस्मात्स एक एव दोषो वाताद्यन्यतमः समुत्थानविशेषतो हेतुभेदात् तथा स्थानांतराणि स्वस्थानं हित्वा पराणि स्थानानि प्राप्य गत्वा विकारान् बहूननंतान् कुरुते । तथा चोक्तं तंत्रांतरे । योऽतःशरीरसंधीनाविशति तेन जृंभा ज्वरश्चोपजायते । यस्त्वामाशयमभ्युपैति तेन रोगा भवंत्युरस्यरोचकश्च । यः कंठमभिप्रपद्यते कंठस्ततो भ्रंशते स्वरश्चाऽवसीदति । यः प्राणवहानि स्रोतांस्यन्वेति श्वासः प्रतिश्यायश्च तेनोपजायत इति ।

**तस्माद्विकारप्रकृतीरधिष्ठानांतराणि च ॥ ६५ ॥**
**बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम् ।**

विकारस्य ज्वरादेः प्रकृतय उपादानकारणानि वातादिदोषास्ता विकारप्रकृती रोगहेतुविशेषान् बुद्ध्वा ज्ञात्वा तथाऽधिष्ठानांतराणि स्थानविशेषांश्च बुद्ध्वा तथा हेतुविशेषाऽनधिष्ठाननिदानभेदांश्च बुद्ध्वा यथा किमयं कुपितः पवनो रूक्षेण हेतुना लघुना शीतेन वेत्यादि ज्ञात्वा शीघ्रमेवोपक्रमं चिकित्सां कुर्यान्न तु विकारानभिज्ञ इति न चिकित्सेत् ।

ननु बुद्ध्वाऽपि विकारप्रकृत्यादित्रयमुपक्रमं कुर्वतः कदाचित्सिद्धिमाप्नुवंतो दृश्यंते भिषजः कदाचिन्नेति तदत्र संशयस्खलिते कर्मणि कथं नियुज्यते वैद्य इति कथमुक्तं शीघ्रं कुर्यादुपक्रममित्याशंक्याह ।

**दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ॥ ६६ ॥**
**सत्वं सात्म्यं तथाऽहारमवस्थाश्च पृथग्विधाः ।**
**सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ॥ ६७ ॥**
**यो वर्तते चिकित्सायां न स स्खलति जातुचित् ।**

दोषौषधनिरूपणे सति दूष्यादीन् दश समीक्ष्य सम्यग्विलोक्य यश्चिकित्सायां वर्तते यत्नं करोति स वैद्यो न कदाचित् स्खलति नाऽपराधी स्यात् । दोषो वातादिः । औषधं हरीतक्यादि । तयोर्निरूपणं पर्यालोचनं तस्मिन् दोषौषधनिरूपणे । दूष्यादीनां समस्तानामुपादानं सर्वेषामेवावगमे चिकित्साकरणं प्रति यत्नातिशयद्योतनार्थं न पुनरेषां द्वौ वा त्रीन् वा चतुरः पंच वा समीक्ष्य किंतर्हि सर्वानेतान् सम्यगवबुध्येति । अथ दूष्यादीनेव समीक्ष्य नेत्याह । अवस्थाश्च पृथग्विधाः । एषामेव दूष्यादीनामवस्थाः सूक्ष्मसूक्ष्मा अतिशयेन सूक्ष्मास्ताश्च यथावद्बुद्ध्वेति ।

नच दूष्याद्येव परीक्ष्यं किंतर्हि व्याधिरपि गुरुलघुत्वेन परीक्ष्य एवेत्याह ।

**गुर्वल्पव्याधिसंस्थानं सत्वदेहबलाबलात् ॥ ६८ ॥**
**दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ।**

गुरुश्चाऽल्पश्च गुर्वल्पौ गुर्वल्पौ च तौ व्याधी च गुर्वल्पव्याधी तयोः संस्थानमाकृतिः । अपिशब्दो भिन्नक्रमे । तद्गुर्वल्पव्याधिसंस्थानमन्यथाकारमपि दृश्यते विपरीतमपि लक्ष्यते । अपिशब्दात्क्वचिद्गुर्वल्पव्याधिसंस्थानं यथातत्त्वं दृश्यते क्वचिन्नेति व्याधिलक्षणस्य गमकत्वाभावः प्रसज्येत । ततश्च रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिरिति दूष्येत्तस्मादपिशब्दोऽत्र गुर्वल्पसंस्थानस्य यथातत्त्वदर्शनं क्वचिद्भवत्येवेति सूचनार्थं कृतः । कुतो हेतोरित्याह । सत्वेत्यादि । सत्वं धैर्यम् । देहो महदल्पस्थूलकृशादिः । सत्वं च देहश्च सत्वदेहौ । बलं चाबलं च बलाबले । तस्मात्सत्वदेहबलाबलाद्धेतोर्गुर्वल्पव्याधिसंस्थानेऽवहितो भवेत् । अधिकसत्वे तथोत्कृष्टदेहबले च गुरुर्महानपि व्याधिरुत्पन्नोऽल्पसंस्थानो हीनबल इव लक्ष्यते । सत्वदेहबलयोरुत्कृष्टत्वात् । तथा हीनसत्वे हीनदेहे हीनबले चोत्पन्नो लघुरपि महानिव लक्ष्यते । हीनसत्वदेहबलात् । तस्मादस्मिन्व्याधिसंस्थानेऽर्थे दत्तावधानेन भाव्यम् ।

**गुरुं लघुमिति व्याधिं कल्पयंस्तु भिषग्ब्रुवः ॥ ६९ ॥**
**अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ।**

भिषग्ब्रुव इत्यादि । यश्च भिषग्ब्रुवः कुत्सितो वैद्यः स व्याधिसंस्थानमात्रावलोकनाद् गुरुं व्याधिं लघुमिति कल्पयन्निश्चिन्वन्नल्पदोषाकलनया हीनमात्रादोषनिश्चयेन पथ्ये विप्रतिपद्यते । चिकित्सिते मोहं गच्छति । गुरुव्याधावल्पव्याधियोग्यं भेषजं ददाति । एवं लघुव्याधिं गुरुमिति कल्पयन् बहुदोषाकलनया पथ्ये विप्रतिपद्यते भिषग्ब्रुवत्वात् । अन्यत्राऽपि ब्रुवांतस्य कुत्सितत्वमेव प्रसिद्धम् । यथा मनुः । जातिमात्रोपजीवी स्यात् कामं वा ब्राह्मणब्रुवः । धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचनेति । केचित् भिषग् ध्रुवमिति पेठुः । भिषग्वैद्यो गुरुं लघुमिति व्याधिं कलयन् ध्रुवं निश्चितं पथ्ये विप्रतिपद्यत इति च व्याचक्षते ।

यस्मादेवम् ।

**ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम् ॥७०॥**
**उदीरयेत्तरां रोगान् संशोधनमयोगतः ।**

ततोऽल्पमल्पमात्रमल्पवीर्यं वाऽनुत्कृष्टशक्तिकं वा भेषजं गुरुव्याधौ प्रयोजितं दत्तं संशोधनं रोगानुदीरयेत्तरामतिशयेनोत्क्लेशयेत् । कुतः । अयोगतो हीनयोगात् । अयोगो हि हीनयोग उच्यते । यथा पुत्रकार्याकरणादपुत्र इत्युच्यते ।

**शोधनं त्वतियोगेन विपरीतं विपर्यये ॥ ७१ ॥**
**क्षिणुयान्न मलानेव केवलं वपुरस्यति ।**

विपर्यये च लघुव्याधौ विपरीतं शोधनं तु प्रयोजितं कस्माद्विपरीतमल्पवीर्यात् संशोधनादतिमात्रमुत्कृष्टवीर्यं च बहुदोषाकलनयाऽतियोगेन प्रयोजितं न केवलं मलान् क्षिणुयात् क्षपयेद्यावद्वपुरस्यति शरीरमपि हिंस्यात् । अत्र च संशोधनं यद्दृष्टांतत्वेनोपन्यस्तं तदयोगातियोगाभ्यां रोगान् शरीरक्षपणकृदिति निर्वर्तयतीति । खरनादेनाऽप्युक्तम् । अल्पमुत्क्लेशयेद्दोषं बहु प्राणान्निहंति च । तस्मान्निरूप्य भिषजा देयं युक्तं विरेचनमिति । तथा ज्वरगुल्मादीनां च तत्प्रतीकारार्थं यद्दीयते भेषजं तत्राऽपि महारंभेऽल्पमल्पवीर्यं चौषधं न देयमित्यस्मादेव दृष्टांतीभूतादर्थादवगंतव्यम् ।

**अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ॥ ७२ ॥**
**तथा युंजीत भैषज्यमारोग्याय यथा ध्रुवम् ।**

यस्माच्चैवं रोगाणां दुर्विज्ञेया गतिरतोऽस्माद्धेतोः सततमभियुक्तः सदाऽयुर्वेदपाठावबोधानुष्ठानपरो वैद्यः सर्वं दूष्यादिवस्तुजातमालोच्य सर्वथा सर्वेण प्रकारेणाऽयुर्वेदानुसारिण्या स्वमनीषया तद्विद्यसंभाषातः संभवया च तथा कर्माभ्यासतोऽपि निपुणं निरूप्य तथा तेन प्रकारेण दोषदूष्यदेशाद्यनुगुणेन भैषज्यं युंजीत भेषजं युंज्यात् । यथाऽऽरोग्याय ध्रुवं येन प्रकारेणाऽऽरोग्यार्थमवश्यं स्यात् ।

पूर्वमुक्तं दोषा एव हि सर्वेषां रोगाणामेककारणमतस्तानेव दोषान् वृद्धिक्षयभेदेनाह ।



**वक्ष्यंतेऽतःपरं दोषा वृद्धिक्षयविभेदतः ॥ ७३ ॥**

वृद्धिश्च क्षयश्च वृद्धिक्षयौ तयोर्विभेदो वृद्धिक्षयविभेदः । विविधो भेदो विभेदस्तस्माद्वृद्धिक्षयविभेदतः । ततोऽनंतरं दोषा वातादयो वक्ष्यंते भणिष्यंते ।

**पृथक् त्रीन् विद्धि संसर्गस्त्रिधा तत्र तु तान्नव ।**

पृथग्व्यस्तान् स्वप्रमाणाधिकान् त्रीन् दोषान् रोगहेतून् विद्ध्यवेहि । वातो वृद्धः पित्तं वृद्धं श्लेष्मा वृद्धः एवं त्रयो दोषाः । संसर्गभेदानधुना वक्ति । संसर्गस्त्रिधा त्रिप्रकारः । तत्र संसर्गे नव दोषभेदान्स्वप्रमाणाधिकान् विद्धीत्येतदनुवृत्तिकृतेन संबंधेन सर्वत्र योज्यम् ।

कथं नव भेदा इत्याह ।

**त्रीनेव समया वृद्ध्या षडेकस्याऽतिशायने ॥ ७४ ॥**

समया वृद्ध्या त्रीनेवाऽन्यूनाधिकान् संसर्गदोषभेदान् । एको वातपित्ताभ्यामधिकाभ्यां द्वितीयो वातकफाभ्यामधिकाभ्यां तृतीयः पित्तश्लेष्मभ्यामधिकाभ्यामिति । संसर्गेत्थयोर्दोषयोरेकस्य दोषस्याऽतिशायनेऽधिकतरया वृद्ध्या षट् संसर्गदोषभेदान् विद्धि । अतिशयोऽतिशायनम् । अतिशायने तमबिष्ठनाविति निपातनाद्दीर्घः । दोषद्वयवृद्धेश्चित्यमानत्वादपरदोषचिंता नास्त्यत्र । वातो वृद्धः पित्तं वृद्धतरम् । पित्तं वृद्धं वातो वृद्धतरः । कफो वृद्धः पित्तं वृद्धतरम् । पित्तं वृद्धं कफो वृद्धतरः । कफो वृद्धो वातो वृद्धतरः । वातो वृद्धः कफो वृद्धतरः । एवं षट् संसर्गभेदान् विद्धि ।

**त्रयोदश समस्तेषु**

समस्तेषु सन्निपतितेषु त्रिष्वपि दोषेषु वृद्धेषु त्रयोदश दोषभेदान् विद्धि ।

कथमित्याह ।

**षट् द्व्येकातिशयेन तु ।**

द्वावेकश्च द्व्येकास्तेषां द्व्येकेषामतिशयोऽधिकत्वं तेन द्व्येकातिशयेन । ततो द्व्यतिशयेन त्रयो भेदाः । तथा दोषैकस्याऽतिशयेन त्रय इति षट् भेदाः । यथा कफो वृद्धो वातपित्तमधिकवृद्धम् । पित्तं वृद्धं वातकफावतिवृद्धौ । वातो वृद्धः पित्तकफावतिवृद्धौ । पित्तकफौ वृद्धौ वातोऽतिवृद्धः । वातकफौ वृद्धौ पित्तमतिवृद्धम् । वातपित्ते वृद्धे कफोऽतिवृद्धः । इति षड्भेदान् द्व्येकातिशयेन सन्निपाते विद्धि ।

**एकं तुल्याधिकैः**

तुल्यं कृत्वा समं कृत्वा वृद्धैर्दोषैरेकं सन्निपातमेकभेदं विद्धि ।

**षट् च तारतम्यविकल्पनात् ॥ ७५॥**

तरतमयोर्भावस्तारतम्यम् । कस्य तारतम्यम् । प्रकृतत्वात्संनिपातस्थदोषाणाम् । तारतम्यस्य विकल्पने भेदस्तारतम्य-

विकल्पनं तस्मात्संनिपातस्थदोषाणां वृद्धिरूपाणां षड्भेदान् विद्धि । यथा । वातो वृद्धः पित्तं वृद्धतरं कफो वृद्धतमः । वातो वृद्धः कफो वृद्धतरः पित्तं वृद्धतमम् । पित्तं वृद्धं कफो वृद्धत्तरो वातो वृद्धतमः । पित्तं वृद्धं वातो वृद्धतरः कफो वृद्धतमः। कफो वृद्धो वातो वृद्धतरः पित्तं वृद्धतमम् । कफो वृद्धः पित्तं वृद्धतरं वातो वृद्धतमः । एतेषां च लक्षणं मुनिरध्यगीष्ट । तथा च ग्रंथः । सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य हि । प्राक् सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक्पृथक् । भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् । वातपित्तोल्बणे विद्यालिंगं मंदकफे ज्वरे । शैत्यं कासोऽरुचिस्तंद्रा पिपासा दाहरुग्व्यथा । वातश्लेष्मोल्बणे विद्यालिंगं पित्तज्वरे विदुः । छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना । मंदवातेऽध्यवस्यंति लिंगं पित्तकफोल्बणे। संध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः । वातोल्बणे स्याद्व्यनुगे तृष्णा कंठास्यशुष्कता । रक्तविण्मूत्रता दाहः स्वेदस्तड्बलसंक्षयः । मूर्छा चेति त्रिदोषे स्याल्लिंगं पित्तगरीयसि । आलस्याऽरुचिहृल्लासदाहवम्यरतिभ्रमैः । कफोल्बणं संनिपातं तंद्राकासेन चाऽदिशेत् । समं दोषैस्त्रिभिर्वृद्धैः सन्निपातस्य लक्षणम् । मुहुर्दाहो मुहुः शीतं कर्णक्ष्वेडनपार्श्वरुक् । मोहश्छर्दिर्दिवा निद्रा रात्रौ जागरणं तथा । प्रतिश्या च्छर्दिरालस्यं तंद्रारुच्यग्निमार्दवम् । हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम् । हारिद्रमूत्रनेत्रत्वग्दाहस्तृष्णा भ्रमोऽरुचिः । हीनवाते मध्यकफे लिंगं वाताधिके मतम् । शिरोरुग्वेपथुः श्वासः प्रलापश्छर्द्यरोचकौ । हीनपित्ते मध्यकफे लिंगं वाताधिके मतम् । शीतकं गौरवं तंद्रा प्रलापोऽस्थिशिरोऽतिरुक् । हीनपित्ते वातमध्ये लिंगं श्लेष्माधिके विदुः । वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः । कफहीने वातमध्ये लिंगं पित्ताधिके मतम् । श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् । कफहीने पित्तमध्ये लिंगं वाताधिके स्मृतमिति ।

**पंचविंशतिमित्येवं वृद्धैः**

एवं पूर्वोक्तेन प्रकारेण पंचविंशतिसंख्यान् वृद्धान् दोषान् वृद्धैर्दोषैर्विद्धि ।

**क्षीणैश्च तावतः ।**

क्षीणैः क्षयावस्थैर्दोषैस्तावतस्तत्परिमाणान्पंचविंशतिसंख्याकान् दोषभेदान् विद्धि । यथा वृद्धैः पृथक् त्रीन् दोषभेदान् तथा क्षीणैः । पृथक् त्रीनित्यादि ग्रंथे वृद्धिशब्दस्थाने क्षीणशब्दो निपात्यः । तद्यथा । वातः क्षीणः पित्तं क्षीणं कफः क्षीणः । तदेवं संसर्गे नव दोषभेदान् विद्धि । कथम् । त्रीनेव समक्षीणत्वेन । क्षीणवातपित्तसंसर्गः । क्षीणपित्तकफसंसर्गः । क्षीणवातकफसंसर्गः । षडेकस्यातिशायने । अतिशायनेऽन्यदोषापेक्षया क्षीणत्वातिरेके । वातः क्षीणः पित्तं क्षीणतरम् । पित्तं क्षीणं वातः क्षीणतरः । वातः क्षीण कफः क्षीणतरः । कफः क्षीणो वातः क्षीणतरः । कफः क्षीणः पित्तं क्षीणतरम् । पित्तं क्षीणं कफः क्षीणतरः । एवं षड् दोषभेदान् विद्धि । त्रयोदश समस्तेषु सन्निपतितेषु क्षीणेषु दोषेषु दोषभेदांस्त्रयोदश विद्धि । कथम् । षड् द्व्येकातिशयेन तु । दोषद्वयस्याऽतिशयेनाऽतिक्षीणत्वेन तथा । दोषैकस्याऽतिक्षीणत्वेन पर्यायतः षट् क्षीणसंनिपातैर्दोषभेदान् विद्धि । यथा वातः क्षीणः पित्तकफावतिक्षीणौ । पित्तं क्षीणं वातकफावतिक्षीणौ । कफः क्षीणः पित्तवातावतिक्षीणौ। वातपित्ते क्षीणे कफोऽतिक्षीणः । पित्तकफौ क्षीणौ वातोऽतिक्षीणः । वातकफौ क्षीणौ पित्तमतिक्षीणम् । एकं तुल्यक्षीणैर्भेदं विद्धि । षट् तारतम्यविकल्पनात् । कफः क्षीणः पित्तं क्षीणतरं वातः क्षीणतमः । वातः क्षीणः कफः क्षीणतरः पित्तं क्षीणतमम् । पित्तं क्षीणं कफः क्षीणतरो वातः क्षीणतमः । कफः क्षीणो वातः क्षीणतरः पित्तं क्षीणतमम् । वातः क्षीणः पित्तं क्षीणतरं कफः क्षीणतमः । पित्तं क्षीणं वातः क्षीणतरः कफः क्षीणतमः । एवं पंचविंशतिदोषभेदान् क्षीणैर्दोषैर्विद्धि ।

**एकैकवृद्धिसमताक्षयैः षट् ते**

ते सन्निपातस्थदोषास्त्रयः षोढा भवंति । कथमित्याह । वृद्धिश्च समता च क्षयश्च वृद्धिसमताक्षयाः । एकैकस्य वाताद्यन्यतमस्य वृद्धिसमताक्षया एकैकवृद्धिसमताक्षयास्तैरेकैकवृद्धिसमताक्षयैः षट् । यथा । वातो वृद्धः पित्तं समं कफः क्षीणः । पित्तं वृद्धं वातः समः कफः क्षीणः । कफो वृद्धः पित्तं समं वातः क्षीणः । कफो वृद्धो वातः समः पित्तं क्षीणम् । वातो वृद्धः कफः समः पित्तं क्षीणम् । पित्तं वृद्धं कफः समो वातः क्षीणः । एवमेकैकवृद्धिसमताक्षयैः षट् ।

**पुनश्च षट् ॥ ७६ ॥**

**एकक्षयद्वंद्ववृद्ध्या सविपर्यययाऽपि ते ।**
**भेदा द्विषष्टिर्निर्दिष्टाः**

एकस्य क्षय एकक्षयः । द्वंद्वस्य वृद्धिर्द्वंद्ववृद्धिः । एकक्षयसहिता द्वंद्ववृद्धिरेकक्षयद्वंद्ववृद्धिस्तया । किंभूतया । सविपर्ययया सहविपर्ययेण वैपरीत्येन वर्तते तया । एकक्षयद्वंद्ववृद्ध्या पुनरेव षड् दोषभेदाः । वातः क्षीणः पित्तकफौ वृद्धौ । पित्तं क्षीणं वातकफौ वृद्धौ । कफः क्षीणो वातपित्ते वृद्धे । एवमेकक्षयद्वंद्ववृद्ध्या त्रयो भेदाः । सविपर्ययया च वृद्ध्या त्रयो दोषभेदाः । द्वंद्वक्षयैकदोषवृद्ध्या द्वंद्वक्षयसहितैकदोषवृद्धिस्तया । यथा । वातपित्ते क्षीणे श्लेष्मा वृद्धः । वातकफौ क्षीणौ पित्तं वृद्धम् । पित्तकफौ क्षीणौ वातो वृद्धः । इति सविपर्ययया वृद्ध्या त्रयो दोषभेदाः । एवं सन्निपातभेदाद्विरूपया वृद्ध्या षडेते । पंचभेदगणनया दोषाणां भेदा द्विषष्टिर्निर्दिष्टाः ।

**त्रिषष्टः स्वास्थ्यकारणम् ॥ ७७ ॥**

त्रिषष्टीनां पूरणो यो दोषभेदः स स्वास्थ्यकारणमारोग्यहेतुर्धातुसाम्यात् । अत्र हि स्वप्रमाणस्था वातपित्तकफाः । ये च दो-

षभेदा द्विषष्टिस्ते च रोगकारणमित्यर्थादुक्तं भवति । अत्र च रोगहेतुत्वे दोषवैषम्यं कारणम् । त्रिषष्ट इति तस्य पूरणे डडित डट् ।

अधुना रसादिभेदादानंत्यं दोषभेदानां दर्शयन्नाह ।

**संसर्गाद्रसरुधिरादिभिस्तथैषां**
**दोषांस्तु क्षयसमताविवृद्धिभेदैः ।**
**आनंत्यं तरतमयोगतश्च यातान्**
**जानीयादवहितमानसो यथास्वम् ॥ ७८ ॥**

न केवलं द्विषष्टिभेदभिन्नान् दोषान् जानीयात् । आनंत्यं च गतान्विद्यात् । कथमानंत्यमित्याह । एषां दोषभेदानां यथास्वं रसादिभिः संयोगात् । तथैषामेव क्षयादिभेदैस्तरतमयोगाच्चाऽनंत्यं गतान्विद्यात् । तत्र दिङ्मात्रं शिष्यव्युत्पत्तये प्रदर्श्यते । तत्र रसवातपित्तकफानां पृथक् त्रयो भेदा भवंति पृथक् त्रीन् विद्धीत्यनुसारेण । संसर्गस्त्रिधा । तत्र तु तान् रसमेवाऽधिकृत्य नव विद्धि । कथम् । पूर्ववत् त्रीनेव समया वृद्ध्या षडेकस्याऽतिशायने । एवं पूर्वोक्तेन न्यायेन रसमधिकृत्य संसर्गं योजयित्वा संनिपाते योजनीयाः । यथा त्रयोदश समस्तेषु । कथम् । षड्द्व्येकातिशयेन तु । एकं तुल्याधिकैः षट् च तारतम्यविकल्पनादिति समानं पूर्वेण । रसाख्यं स्थानं केवलमधिकम् । पंचविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतो रसमधिकृत्य भेदान् विद्धि । इत्येवं रुधिरमांसादिभिर्योज्यम् । एकैकापह्रासेनेत्येवं द्विषष्टिभेदभिन्नानां दोषाणां रसादिभिः सप्तभिः संयोगाच्चत्वारि शतान्येकचत्वारिंशदधिकानि स्युः । शक्रादादिसंसर्गात्क्षीणतमादिभेदैश्च चिंत्यमाना दोषा आनंत्यं यांतीति । रसभेदे दोषभेदे चाऽवगते वैद्यस्य हेतुलक्षणोपक्रमेषु मोहो न भवति । तथा च मुनिः । यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित् । न स मुह्येद्विकाराणां हेतुलिंगोपपत्तिष्विति । स्रौञ्ज्रौगस्त्रिदशभवा प्रहर्षिणी स्यात् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

पूर्वेऽध्याये विकृतान् दोषानाश्वेवोपक्रमेदित्युक्तमतस्तमेवोपक्रमं दर्शयितुं दोषोपक्रमणीयमारिरिप्सुरिदमाह ।

**अथाऽतो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ।**

दोषाणामुपक्रमणं चिकित्सा दोषोपक्रमणं तस्मै हितो दोषोपक्रमणीयः । शेषं पूर्ववद्योज्यम् ।

सर्वदोषेभ्यश्च प्रधानो वात इति तदुपक्रमं पूर्वमाह ।

**वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।**
**स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यंगमर्दनम् ॥ १ ॥**
**वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम् ।**
**स्निग्धोष्णा वस्तयो वस्तिनियमः सुखशीलता ॥२॥**
**दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः ।**
**विशेषान्मेध्यपिशितरसतैलानुवासनम् ॥ ३ ॥**

वातस्योपक्रमः स्नेहः । श्रेष्ठत्वाच्च प्रागुपादानं स्नेहस्य । ततः स्वेदः कृतस्नेहस्वेदस्य च संशोधनं तच्च मृदु न तीक्ष्णम् । तीक्ष्णस्य वातकोपहेतुत्वात् । तथा स्वाद्वादीनि भोज्यानि भक्ष्याणि । अभ्यंगश्च मर्दनं चाऽभ्यंगमर्दनं पाण्यादिना । वेष्टनं शाटकादिना । त्रासनं खड्गव्यग्रोग्रहस्तराजपुरुषादिदर्शनादिना । ननु भीशोकादिभिर्मारुतस्य कोप उक्तः । वक्ष्यति हि । क्रियाऽतियोगभीशोकेत्यादि । तत् कथं त्रासनं वायोरुपक्रमः । उच्यते । भयं वातप्रकोपहेतुर्न तु त्रासनम् । त्रासनं हि सर्ववातावजयनं तस्माद्वातोपशांत्यर्थं त्रासनं युक्तम् । यथोन्मादादिषु । तथा च वक्ष्यति । वातोन्मादे हर्षणश्वासत्रासभयताडनेत्यादि । तथा सेकादिरुपक्रमः । सेको दशमूलक्काथादिना । तथा मद्यं पैष्टिकं गौडिकं वातस्योपक्रमः । तथा स्निग्धोष्णा वस्तयो वातस्योपक्रमः । स्निग्धोष्णा इत्युक्त्या रूक्षशीतं बस्तिमत्र निराकरोति । तथा बस्तिनियमो यथाविधि बस्तिदानं वातस्योपक्रमोऽथवा बस्तिनियमः कर्मकाले योगाख्यस्त्रिपंचाशद्बस्तिसंख्यः प्राक्स्नेह एकः पंचांत इत्येवमादिना ग्रंथेन यो दर्शितः स वातस्योपक्रमः । तथा सुखं शीलयतीति सुखशीलः । शीलिकामिभिक्ष्याचरिभ्यो णः । तस्य भावः सुखशीलता सौख्यवृत्तित्वम् । तिलप्रियालाक्षोडादयोऽनेका योनयो येषां तेऽनेकयोनयः स्नेहास्ते च वातस्योपक्रम इति योज्यम् । किंभूताः । दीपनपाचनैर्द्रव्यैः सिद्धाः । विशेषेण पुष्टमांसरसस्तैलमनुवासनं च वातस्योपक्रमः ।

पित्तस्योपक्रमं वक्ति ।

**पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् ।**
**स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ४ ॥**
**सुगंधशीतहृद्यानां गंधानामुपसेवनम् ।**
**कंठे गुणानां हाराणां मणीनामुरसा धृतिः ॥ ५ ॥**
**कर्पूरचंदनोशीरैरनुलेपः क्षणे क्षणे ।**
**प्रदोषश्चंद्रमाः सौधं हारि गीतं हिमोऽनिलः ॥ ६ ॥**
**अयंत्रणसुखं मित्रं पुत्रः संदिग्धमुग्धवाक् ।**
**छंदानुवर्तिनो दाराः प्रियाः शीलविभूषिताः ॥ ७ ॥**
**शीतांबुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः ।**
**सुतीर्थविपुलस्वच्छसलिलाशयसैकते ॥ ८ ॥**
**सांभोजजलतीरांते कायमाने द्रुमाकुले ।**
**सौम्या भावाः पयः सर्पिर्विरेकश्च विशेषतः ॥ ९ ॥**

उपक्रम इति वर्तते । सर्पिषः पानमित्यादि पित्तस्य प्रकुपितस्योपक्रमः । तथा हाराणां मुक्तादाम्नां कंठे गुणसंज्ञानां वक्षसा धृतिर्धारणम् । मणीनां मरकतचंद्रकांतपद्मरागादीनाम् । तथा कर्पूरादिभिः प्रतिक्षणमनुलेपनम् । तथा प्रदोषादिः पित्तस्योपक्रम इति वर्तते । प्रदोषो रात्रिमुखम् । सुधाया इदं सौधं धवलगृ-

हम् । हारि रम्यं गीतं गानम् । तथा मित्रमयंत्रणसुखं न विद्यते यंत्रणा यस्मिंस्तथाविधं सुखं यस्मिंस्तथाविधं मित्रम् । तथा संदिग्धाऽव्यक्ता मुग्धा प्रौढा वाग् गीर्यस्य स एवंविधः पुत्रः । दाराः कलत्राणि वल्लभाः सुशीलाश्च । तथा छंदानुवर्तिनश्चित्तानुगुणकारिणः । शीतांबुधारा गर्भेऽभ्यंतरे येषां तथाविधानि गृहाणि । तथोद्यानमुपवनम् । तथा दीर्घिका गृहपुष्करिण्यः । तथा सौम्या भावाः पित्तस्योपक्रमः । क स्थितस्य । सुतीर्थविपुलस्वच्छसलिलाशयसैकते यः कायमानस्तृणगृहं तस्मिन् । शोभनं तीर्थं यस्य स एवं सुतीर्थश्चासौ विततविमलजलाशयश्च सुतीर्थविपुलस्वच्छसलिलाशयस्तस्य समीपे सैकतं तस्मिन् । सिकता अस्मिन्देशे संतीति सिकताशर्कराभ्यां चेत्यण् । समूहार्थे ठग्दुर्निवारः स्यात् । कीदृशे कायमाने सांभोजं सपद्मं जलं यस्मिंस्तीरांते स एवं सांभोजजलस्तीरांतो यस्मिन् कायमाने तस्मिन् । तथा द्रुमैर्वृक्षैराकुले व्याप्ते । विशेषेण तु पयो घृतं विरेकश्चोपक्रमः ।

अधुना श्लेष्मण उपक्रममाह ।

**श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ।**
**अन्नं रूक्षाऽल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥१०॥**
**दीर्घकालस्थितं मद्यं रतिप्रीतिप्रजागरः ।**
**अनेकरूपो व्यायामश्चिंता रूक्षं विमर्दनम् ॥ ११ ॥**
**विशेषाद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ।**
**धूमोपवासगंडूषा निःसुखत्वं सुखाय च ॥ १२ ॥**

विधिना शास्त्रोक्तेन युक्तं तीक्ष्णं वमनविरेचनं कफस्योपक्रमः । तथाऽन्नं रूक्षादिगुणयुक्तम् । तथा मद्यं पुराणम् । रतिप्रीतिप्रजागरः । रमणं रतिस्तस्याः प्रीतिः सुखं तया प्रजागरोऽतिजागरणम् । तथाऽनेकरूपो व्यायामो नियुद्धधनुराकर्षणादिकः । विशेषेण तु वमनं यूषो माक्षिकं तथा मेदोघ्नं यदौषधं तच्च धूमादयश्च । तथा निःसुखत्वं सुखाभावो दुःखरूपत्वम् । वाग्देहमनःकर्मणो दुःखदस्याऽनुष्ठानाद्यदसुखमुत्पद्यते तच्च श्लेष्मणो वृद्धस्य विकारकरणहेतोरुपशमात्सुखाय जायते ।

इदानीं संसर्गोपक्रमं वक्ति ।

**उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्तितः ।**
**संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १३ ॥**

पृथक् प्रत्येकं दोषान्वातादीनुद्दिश्याऽश्रित्य य उपक्रमः कीर्तित उक्तः संसर्गसंनिपातेषु च तमुपक्रमं यथास्वं विकल्पयेत् । प्रवृद्धदोषानुसारेण निरूप्य प्रयुंजीतेत्यर्थः । यथा वातपित्तसंसर्गे वातपित्तोपक्रमौ मिश्रौ वातकफसंसर्गे वातकफोपक्रमावित्यादि । एवं संनिपातेऽपि निरूप्योपक्रमः प्रयोज्यः ।

संसर्गे भूयोऽप्युपक्रममाह ।

**ग्रैष्मः प्रायो मरुत्पित्ते वासंतः कफमारुते ।**
**मरुतो योगवाहित्वात्कफपित्ते तु शारदः ॥ १४ ॥**

उपक्रम इति वर्तते । वातपित्तसंसर्गे ग्रीष्मर्तुचर्याविहित उपक्रमः प्रायेण योज्यः । यथाऽतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् । भजेन्मधुरमेवान्नमित्यादि सर्वं त्याज्यं सेव्यं च । कफमारुतसंसर्गे वसंतर्तुभवस्तीक्ष्णैर्वमननस्याद्यैरित्यादिरुपक्रमो योज्यः। प्रायेणेत्यत्राऽपि योज्यम् । ननु ग्रीष्मेऽत्यंतशीतसेवोक्ता वसंते च तीक्ष्णं वमननस्याद्युक्तमेतच्च द्वयमप्येकांतेन पवनहेतुः ।तत्कथमुक्तं ग्रैष्मः प्रायो मरुत्पित्ते वासंतः कफमारुत इत्याशंक्याह । मरुतो योगवाहित्वात् । अत्राऽयं भावः । यदा किल वायुः पित्तेन युज्यते तदा दाहादिकृन्न पित्ते समे सति दाहादिकं कर्तुं मरुत्सामर्थ्यमपि च ग्रीष्मे शीतमेव सेव्यत इति नायं नियमः किंतर्हि स्निग्धाद्यपि तस्मान्मरुत्पित्ते ग्रीष्मविधिर्युक्तः । वसंते च कफयोगात् कफविकारकार्येव भवति योगवाहित्वादतो वासंतस्तीक्ष्णो वमननस्यादिर्न्याय्यः । एवं पित्तेन सह स्थितस्य वायोः पित्तचिकित्सा कफेन सह स्थितस्य वायोः कफचिकित्सा स्वभाववशादिति भावः । कफपित्तसंसर्गे तु शारदः शरदृतुचर्याविहित उपक्रमः । संनिपाते क उपक्रमः । ब्रूमः । वर्षर्तुचर्याविहितः । प्रावृषि हि दोषत्रयकोप उक्तोऽत एवाह । भजेत्साधारणं सर्वमित्यादि ।

संप्रत्युपक्रमस्य कालं वक्ति ।

**चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।**
**सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १५ ॥**

चयकाल एव दोषं वातादिं जयेत् । यथा छिन्नमूलत्वान्न विकुर्वीत । न कोपकालं प्रतीक्षेतेति सूचनार्थं एवशब्दः । कथं जयेदित्याह । कुपितं दोषमविरोधयन् । सर्वदोषकोपे केवलं बलवत्तरं दोषं जयेत् । कथम् । शेषदोषाविरोधेन ।

कुतो हेतोरित्याह ।

**प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ।**
**नाऽसौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् १६**

प्रयोगो व्याधिं शमयेदन्यमन्यं व्याधिमुदीरयेत्प्रकोपयेन्नाऽसौ विशुद्धो न श्रेष्ठ इत्यर्थः । स तु विशुद्धः प्रयोगो यः शमयेद्व्याधिं न कोपयेत् । तस्मादन्यं व्याधिमविरोधयन् व्याधिं जयेत् ।

अथ कथं दोषाः कोष्ठाच्छाखास्थिसंधिषु यांतीत्याह ।

**व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ।**
**कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च १७**
**दोषा यांति**

कोष्ठादुदराच्छाखास्थिमर्माणि दोषा यांति । कुत इति हेतुचतुष्टयमाह । व्यायामादिभिः शाखास्थिमर्माणि दोषा यांति । तत्र व्यायामोपजातश्रमस्योर्ध्वं प्रपन्नः पवनो व्यायामकृतक्षोभश्रमोष्मादिभिः प्रशिथिलं चलं च दोषं स्वास्पदाच्च्यावयित्वा पर्याकुलं शाखादिषु क्षिपति । तथाऽन्यातपादिसंबंधिन ऊष्मणस्तैक्ष्ण्यात्ती-

क्ष्णेन ह्यूष्मणा विलायिता दोषास्तेनैव चोष्मणा विवृतेषु स्रोतोमुखेषु सत्सु शाखादीन् यांति । अहितेत्यादि । अहितेन सेवितेन दोषाः स्वप्रमाणादतिरिच्यमानाः कोष्ठमापूर्य वार्षिका इव जलौघा निम्नोन्नतानीव शाखास्थिमर्माणि प्रपद्यंते । अपिः समुच्चये । द्रुतत्वादित्यादि । द्रुतत्वाच्छीघ्रवाहित्वान्मारुतस्य कोष्ठाच्छाखास्थिमर्माणि दोषा यांति ।

शाखादिभ्यः कथं दोषाः कोष्ठं यांतीत्याह ।

**तथा तेभ्यः स्रोतोमुखविशोधनात् ।**
**वृद्ध्याभिष्यंदनात्पाकात्कोष्ठं वायोश्च निग्रहात् १८**

स्रोतसां मुखानि तेषां विशोधनं विवरणं तस्माद्दोषाः कोष्ठं यांति । तथा वृद्ध्यादिभिः । वृद्धिः स्वप्रमाणातिरेकः । वृद्धा हि दोषाः स्वानि स्रोतांस्यापूर्य कोष्ठं यांति । अभिष्यंदनं च नाग्नितापादितीक्ष्णोष्णादिसंश्लेषादेवाऽपि तु क्षीराद्यभिष्यंदि भोजनादपि । एवं पाकात् । पाचनादिभिः पक्वा दोषाः क्वचिदनासज्जंतः कोष्ठं यांति । किंच । वायोश्च निग्रहात् । चशब्दान्न केवलं पूर्वेभ्यो हेतुभ्यो यावद्वायुप्रेरणाच्चेत्यर्थः ।

कोष्ठस्था दोषाः किं कुर्युरित्याह ।

**तत्रस्थाश्च विलंबेरन् भूयो हेतुप्रतीक्षिणः ।**

तत्रस्थाः कोष्ठस्थाश्च दोषा विलंबेरन्नरोगानुत्पादयेयुर्यस्मात्ते भूयो हेतुप्रतीक्षिणः । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनाद्धेतौ प्रथमा । भूयो हेतुप्रतीक्षिणत्वादित्यर्थः । वृद्धोऽपि हि दोषः कोष्ठे शाखादौ वा मार्गांतरे गतो हीनशक्तित्वान्न रोगोत्पादनसमर्थो भवति ।

यद्येवं किं कदाचिदप्यन्यस्थानगता दोषा हीनशक्तित्वान्न रोगान् कुर्युरित्याह ।

**ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपि ॥ १९॥**

ते दोषाः कालदेशदूष्यप्रकृत्यपथ्यादेः समानगुणाद्बलं लब्ध्वा कुप्यंति । विकारमुत्पादयंतीत्यर्थः । कुत्रस्थान इत्याह । अन्याश्रयेष्वपि कोष्ठाश्रयशाखादिमर्मस्वपि । शाखामर्माश्रिताः कोष्ठेष्वपीत्यर्थः । न केवलं स्वस्थानस्था एव कुप्यंतीति सूचनार्थोऽपिशब्दः ।

इदानीं परस्थानगतानां दोषाणां विकल्पेन चिकित्सामुपदिशन्नाह ।

**तत्राऽन्यस्थानसंस्थेषु तदीयामबलेषु च ।**

तत्र तेषु वातादिष्वन्यस्थानसंस्थेषु । अन्यस्य स्थानमन्यस्थानं तत्र संतिष्ठंतेऽन्यस्थानसंस्थास्तेषु परस्थानगतेषु तदीयां स्थानिदोषसंबंधिनीमेव चिकित्सां कुर्यान्न स्वकीयाम् । तस्य परस्थानदोषस्येयं तदीया ताम् । किंभूतेषु दोषेषु । अबलेषु । तुरवधारणे । अबलेष्वेव न बलवत्सु । बलवत्सु हि स्वामेव चिकित्सां वक्ष्यति ।

अत एवाह ।

**कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ॥२०॥**

बलेनात्मीयया शक्त्याऽन्याभिभाविष्वन्यस्थानिदोषमभिभवितुं शीलं येषां तेऽन्याभिभाविनः । स्थानिदोषं पराभूय तत्र ये संतिष्ठंत इत्यर्थः । तेषु स्वामेव चिकित्सां कुर्यादित्यर्थः । किमेष एव नियमो यदन्यस्थानगतेष्वबलेष्वागंतुस्थानिदोषसंबंधिनीं चिकित्सां कुर्यात् । बलवत्सु पुनरागंतुसंबंधिनीं चिकित्सां कुर्यात् ।

अथ पक्षांतरेऽपि कुत्रचित्क्वचिद्द्रियत इत्यत आह ।

**आगंतुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ।**

स्थानिनं दोषं प्रतिकृत्य यथाऽसौ स्थानिदोष आगंतुदोषचिकित्सानिवर्तनान्न विकारं कुर्यात्तथा तस्य प्रतीकारं कृत्वा पूर्वं स्वैरेवोपक्रमैरबलिनमप्यागंतुं दोषं शमयेच्चिकित्सेत् । न केवलमन्यस्थानसंस्थेष्वागंतुष्वबलेषु स्थानिदोषचिकित्सां कुर्याद्यावदागंतुदोषचिकित्सामपि कुर्यादित्यर्थः । अथाऽसौ स्थानिदोष आगंतुदोषेण बलवत्त्वादभिभूयेत ततोऽस्य विकारकरणं प्रत्यसमर्थत्वात्तत्प्रतीकारमकृत्वैव चाऽगंतुं शमयेदिति वाशब्दार्थः । अन्यस्थानसंस्थेष्विति बहुवचननिर्देशः । पर्यायेण दोषाणां स्थितत्वादन्यथा द्वयोरेकस्य वाऽन्यस्थानस्थितत्वं संभवति न त्रयाणाम् ।

तिर्यग्गतेषु दोषेषु यत्कार्यं तदाह ।

**प्रायस्तिर्यग्गता दोषाः क्लेशयंत्यातुरांश्चिरम् ॥ २१॥**
**कुर्यान्न तेषु त्वरया देहाग्निबलविक्रियाम् ।**

तिर्यग्गता दोषाः प्रायो बाहुल्येनाऽतुरांश्चिरं क्लेशयंति पीडयंति। तेषु तिर्यग्गतेषु दोषेषु त्वरया शीघ्रमेव क्रियां चिकित्सां न कुर्याद्वैद्य इति शेषः । कीदृशो वैद्यो देहाग्निबलाभिज्ञः ।

कथं तेषामुपक्रमः कार्य इत्याह ।

**शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ॥ २२ ॥**

तांस्तिर्यग्गतान् दोषान् प्रयोगेण शास्त्रविहितेन शमयेत् । सुखं वेति । यथा वा देहपीडा न भवति तथा क्रमेण कोष्ठमानयेद्वृद्ध्याऽभिष्यंदनादित्यादिना ।

**ज्ञात्वा कोष्ठप्रपन्नांश्च यथाऽसन्नं विनिर्हरेत् ।**

ज्ञात्वेत्यादि । कोष्ठगतांश्चावगत्य यथाऽसन्नं विनिर्हरेत् । यो यस्यासन्नो मार्गो गुदं मुखं घ्राणं वा तेनैव यथाऽसन्नं वमनविरेचनादिना निष्कासयेदित्यर्थः ।

संप्रति साममललिंगमाह ।

**स्रोतोरोधबलभ्रंशगौरवानिलमूढताः॥ २३ ॥**
**आलस्यापक्तिनिष्ठीवमलसंगारुचिक्लमाः ।**

१ विण्मूत्रनखदंतत्वक्चक्षुषां पीतता भवेत् । रक्तत्वमतिकृष्णत्वं पृष्ठास्थिकटिसंधिरुक् । शिरोरुक् जायते तीव्रा निद्रा विरसता मुखे । क्वचिच्च श्वयथुर्गात्रे ज्वरोऽतीसारहर्षणम् । क्षेपकावत्र ।

**लिंगं मलानां सामानां निरामाणां विपर्ययः ॥ २४ ॥**

स्रोतसां रोधः । बलस्य भ्रंशो हानिर्बलभ्रंशः । गौरवं गुरुत्वम् । अनिलस्य वायोर्मूढतास्य सम्यगसंचारः । आलस्यं तंद्रा । अपक्तिराहारस्याऽपाकः । निष्ठीवो मुखस्रावः । मलस्य पुरीषादेः संगोऽप्रवृत्तिः । अरुचिरन्नानभिलाषः । क्लमो ग्लानिः । इत्येतत्सामानां मलानां लिंगं लक्षणम् । निरामाणां विपर्ययोऽस्माद्विपरीतम् ।

संप्रति रोगसंभवमाह ।

**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।**
**दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २५ ॥**

ऊष्मणोऽग्नेरल्पबलत्वेन दौर्बल्येनाऽद्यं प्रथमधातुं रसं रसाख्यमपाचितमामं प्रचक्षते वदंत्याचार्या इति शेषः । किंभूतं रसम् । आमाशयगतम् । तथा दुष्टं वाताद्यनुशयितम् । रसग्रहणं पवनस्य निरासार्थम् । अन्यथा आद्यो धातुर्वाताख्य इत्याशंक्येत । वातादीनामपि हि धारणाद्धातुसंज्ञाऽस्त्येव ।

**अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्छनात् ।**
**कोद्रवेभ्यो विषस्येव वदंत्यामस्य संभवम् ॥ २६ ॥**

अन्येऽपरे आचार्या दोषेभ्य एव वातादिभ्योऽतिदुष्टेभ्योऽन्योन्यमूर्छनात् परस्परमिश्रीभावादामस्य संभवं कथयंति । केभ्यः कस्येव । यथा कोद्रवेभ्यो विषस्य संभवं कथयंति तथा दोषेभ्य आमस्य संभवम् ।

**आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः ।**
**सामा इत्युपदिश्यंते ये च रोगास्तदुद्भवाः ॥ २७ ॥**

तेन पूर्वोक्तलक्षणेनाऽमेन संपृक्ताः संयुक्ता दोषा दूष्याश्च रसादयः । कीदृशाः । दूषितास्तैरेव वातादिभिः । सहामेन सामा इत्युपदिश्यंते तत्र तत्र प्रदेशे तंत्रे भण्यंते । ये च रोगा ज्वरादयस्तदुद्भवा वातादिदोषसमुत्थास्तेनामेन युक्ताः सामा इत्युच्यंते । यथैहैव । अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे इति । आमलक्षणं चैवं पठंति । द्रवं गुर्वनेकवर्णं हेतुः सर्वरोगाणां स्निग्धं पिच्छिलमामं तंतुमदनुबद्धशूलं दुर्गंधीत्यादि । सामानां च वातादीनां संग्रहे पृथग्लक्षणमुक्तम् । यथा । वायुरामान्वयः सार्तिराध्मानकृदसंचरः । दुर्गंधमसितं पित्तं कटुकं बलहं गुरु । आविलस्तंतुमांस्त्यानः प्रलेपी पिच्छिलः कफः । विपर्यये तु पक्वत्वं तथा ताम्रं समेचकम् । पीतं च पित्तमच्छं च श्लेष्माऽच्छः पिंडितोऽथवा । विशदश्च सफेनश्च धवलो मधुरो रस इति ।

सामा अपि दोषा यादृशा न निर्हार्यास्तादृशान् दर्शयति ।

**सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत् ।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव २८**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ।**

सामान् दोषान् वातादीन् सर्वस्मिन्देहे प्रविसृतान् व्याप्तशेषकायान् धातुषु रसाद्येषु लीनान् क्लिष्टाननुत्क्लिष्टान् स्वस्थानादचलितान् न निर्हरेद्वमनादिभिर्न शोधयेत् । कुतः । दुर्निर्हरत्वाद्दुःखेन निर्हर्तुं शक्यत्वात् । ते हि निर्ह्रियमाणा आश्रयस्य शरीराख्यस्य नाशाय स्युः । यावत्तु सर्वदेहप्रविसृता न भवंति यथा भुक्तानंतरं ज्वरोत्पत्तौ नवातिसारे च तथा वमनेन हरीतक्या च यथायोगं निर्हारोऽनुज्ञात एव ग्रंथकृता । अत्र दृष्टांतमाह । फलादित्यादि । आमादपक्वात्फलादाम्रादे रसो निर्ह्रियमाणो दुर्निर्हरत्वादाश्रयस्य फलस्य यथा नाशाय भवत्येवं दोषा अपि ।

तर्हीदृशे दोषे किं कार्यमित्याह ।

**पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥२९॥**
**शोधयेत् शोधनैः काले यथासन्नं यथाबलम् ।**

तांस्तथाविधान् दोषान् पाचनैर्ज्वराद्यध्यायोक्तैः । दीपनैरिति पाचनानां स्नेहानां च विशेषणं मध्यदीपकत्वात् । अग्निदीप्तिकृद्भिः पाचनैः स्नेहैश्च परिष्कृतान् परिकल्पितान् कृतसंस्कारान् यथासन्नं यथाबलं च कृत्वा यथोक्ते काले शोधनैर्द्रव्यैः शोधयेत् । यथासन्नमिति । यस्य दोषस्याऽसन्नो यो मार्गस्तेनैव तं निर्हरेत् । यथाबलमिति यस्य यावद्बलमातुरस्योत्तमं मध्यममधमं वा तज्ज्ञात्वा मृदुना मध्येन तीक्ष्णेन वा शोधनेन शोधयेदित्यर्थः ।

कस्य को मार्ग आसन्न इत्याह ।

**हंत्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ।**

वक्त्रेण द्रव्यं युक्तं पीतमामाशयादाशु मलान् हंति । घ्राणेन तु पीतमूर्ध्वजत्रूत्थान्मलानाशु हंति । गुदेन युक्तं पक्वाधानात् पक्वाशयादाशु मलान् हंति ।

इदानीं यादृशा आमा न धार्यास्तादृशान् दर्शयति ।

**उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम्॥३१॥**
**धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ।**

अध ऊर्ध्वं वोत्क्लिष्टानामान् स्वयं वहतो यत्नं विनैव प्रवृत्तानौषधैः स्तंभनैर्न धारयेत् । कुत इत्याह । हि यस्मात्ते दोषा विधृता रोगदा ज्वरादिकारिणः ।

तेषु तु यत्कार्यं तदाह ।

**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥**
**विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ।**

अतोऽस्माद्धेतोः प्रवृत्तान् प्राक् प्रारंभकाले दोषान् हितभोजिन उपेक्षेत संग्रहेण न धारयेत् । विबद्धानीषत्प्रवृत्तांस्तैस्तैर्यथोक्तैः पाचनैः पाचयेत् पाकं नयेन्निर्हरेद्वा ।

अथ कः शोधनकाल इत्याह ।

**श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ३३**
**ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ।**

क्रमाद्यथाक्रमं ग्रीष्मचितं वायुं श्रावणे निर्हरेत् । वर्षाचितं पित्तं शरदि निर्हरेत् । हेमंतशिशिरचितं कफं वसंते निर्हरेत् । एते हि साधारणाः कालाः । अत एतेषु शोधनं युक्तम् ।

ननु ग्रीष्मादिष्वेव कस्माद्वातादयो न शोध्यंत इत्याह ।

**अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ॥ ३४ ॥**
**संधौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ।**

यतो ग्रीष्मादयोऽत्युष्णादियुक्तास्तेषामत्युष्णवर्षशीतानां ग्रीष्मवर्षाहिमागमानां साधारणे संधौ शीतोष्णवर्षसमभावे काले दोषान् वातादीन्दुष्टान्विकृतान्विशोधयेद्विनिर्हरेत् । संधौ हि साम्यमतः शोधनं प्रति न ते कालाः । तथा हि । ग्रीष्मे तावदादानग्लानं खरतररविकिरणतप्तं पिपासाक्लमायाकुलमतिप्रविलीनदोषमतिशिथिलं शरीरं भवति । औषधं पुनरतिखरदिवाकरकरनिर्भरतापादुष्णतीक्ष्णतां यातमतियोगाय संपद्यते । प्रावृषि घनघनौघसंघट्टसादिते सर्वतो जगत्यवसन्नोऽग्निर्भवति । आदानदुर्बलं च शरीरं भवति । ओषधयश्च जलदजलप्लावितमूला अल्पवीर्याः संपद्यंते । भूबाष्पसंयोगाच्चौषधीनां विदग्धत्वम् । अतो मध्यतां गता अयोगायैव । शीतकाले चाऽतिशीतोपहतत्वाच्छरीरमतिवातविष्टब्धमतिस्निग्धगुरुदोषं भवति । शीतोपहतत्वाच्चोष्णस्वभावमप्यौषधं संशोधनायोपयुक्तं मंदवीर्यतां प्राप्तमयोगायैव कल्पते । तस्माद्युक्तमुक्तमत्युष्णवर्षशीतत्वाद्ग्रीष्मादिषु स्वस्थस्य शोधनमयुक्तम् ।

नन्वातुरस्य संशोधनसाध्यस्याऽयमेव संशोधनकालो नेत्याह ।

**स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ३५ ॥**

स्वस्थावस्थमधिकृत्याऽयं संशोधनकाल उक्तः । व्याधौ चात्यधिके व्याध्यनुरोधेन शोधनकालः ।

यदि हेमंतादावतिशीतोष्णादौ काले व्याधिः संशोधनसाध्यः संभवेत्तदा कथं संशोधनं कार्यमित्याह ।

**कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।**
**प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३६ ॥**

शीतोष्णवृष्टीनां प्रतीकारं कृत्रिमऋतुगुणं यथायथमुत्पाद्य संशोधनादिलक्षणां क्रियां प्रयोजयेत् । कृत्रिमगुणोपधानं च यथा। हेमंते गर्भगृहादि ग्रीष्मे धारागृहादीनि । क्रियाकालं न हापयेन्नाऽतिक्रामयेदात्ययिकस्य व्याधेः प्राणहारित्वात् ।

संप्रत्यौषधकालान् दर्शयन्नाह ।

**युंज्यादनन्नमन्नादौ मध्येंऽते कवलांतरे ।**
**ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ३७**

दशैते औषधस्य कालाः । अनन्नमौषधं तदुच्यते यदुपयुज्य तस्मिन्परिणते भुंजीत । अन्नादौ तदुच्यते यदुपयुज्यं समनंतरमाहारोपयोगो विधीयते । मध्य इति । अन्नस्याऽहारस्य मध्ये यदौषधं भुज्यते । अंतेऽवसाने । कवलांतर इति । कवलयोर्ग्रासयोरंतरे मध्ये न तु ग्रासमिश्रितं कृत्वेत्यर्थः । ग्रासे ग्रास इति । यद्ग्राससंपृक्तं भुज्यते । मुहुरिति । पुनः पुनर्भुक्तेऽभुक्ते वा यदौषधं भुज्यते । सान्नमिति । सहान्नेनाऽहारेण यदौषधं भुज्यते । सामुद्गं तद्भण्यते यदाहारस्य प्राक् पश्चाच्च प्रयुज्यते । तेन हि समुद्गपुटयुगलोपमेनौषधद्वयेनाहारो मध्ये क्रियते । समुद्गः संपुटकः । निशि यच्छयनवेलायां भुज्यते ।

अधुना विषयविभागेन यस्मिन् व्याधौ यदुपयुज्यते तद्दर्शयति ।

**कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः ।**
**अन्नादौ विगुणेऽपाने समाने मध्य इष्यते ॥ ३८ ॥**
**व्यानेऽते प्रातराशस्य सायमाशस्य तूत्तरे ।**
**ग्रासग्रासांतयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३९ ॥**
**मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ।**
**योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ॥ ४० ॥**

कफोद्रेके रोगे निरन्नमौषधं योज्यम् । कयोरित्याह । बलिनोरित्यादि । बलवति रोगे तत्केवलमन्नादिरहितमौषधम् । तद्ध्यनन्नमतिवीर्यं भवति । बलवांश्च यदि रोगी तदोपयुंजीत नतु दुर्बले । दुर्बलस्य त्वन्नसहितं न ग्लानिकरं भवति । अन्नादाविति । अपानाख्ये वायौ विगुणे कुपिते सत्यौषधं भुक्त्वा समनंतरमेवाहार इष्यत इत्यर्थः । समाने वायौ विगुणे मध्ये भक्तस्यौषधमिष्यते । व्यानाख्ये विगुणे प्रातराशस्य पूर्वाह्णभुक्तस्यांतेऽवसाने भेषजमिष्यते । सायमित्यादि । उत्तरे व्यानापेक्षयोदानाख्ये मरुति विगुणे सायमाशस्याऽपराह्णभुक्तस्य त्वंते भेषजमिष्यते । प्राणाख्ये मातरिश्वनि वाते प्रदुष्टे विकृते ग्रासग्रासांतयोर्भेषजमिष्यते । ग्रासश्च ग्रासांतश्च तयोस्तेन ग्राससंपृक्तमौषधं ग्रासयोर्मध्ये भैषजमित्यवतिष्ठते । मुहुर्मुहुर्भुक्ते यदभुक्ते वा भेषजं तत्तु विषादिषु योज्यम् । अरोचकेऽरुचौ सह भोज्यैर्भैषज्यं योज्यम् । कीदृशैर्भोज्यैश्चित्रैरनेकविधैः ।

**कंपाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम् ।**

सामुद्गं नाम यदादावंते चाऽहारस्य भुज्यते तत्कंपादिषु प्रशस्यत इति वक्ष्यमाणेन संबंधः । केषाम् । लघ्वन्नाशिनाम् ।

**ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४१ ॥**

ऊर्ध्वजत्रुविकारेषु शयनवेलायामौषधं प्रशस्यत इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

दोषोपक्रमणीयादनंतरं द्विविधोपक्रमणीयारंभेऽयं संबंधः । पूर्वं सामान्येनोपक्रमो दोषोपक्रमणीयेऽभिहितः । अत्र तूपक्रमस्य विशेषेणोपक्रमविशेष उच्यत इत्याह ।

**अथाऽतो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः।**

द्विविधं द्विप्रकारं च तदुपक्रमणं च द्विविधोपक्रमणं तस्मै हितो द्विविधोपक्रमणीयः । शेषं पूर्ववत् ।

उपक्रमश्च समासतो द्विविधः । तंत्रांतरपठितानां चतुर्णामुपक्रमाणामत्रैवांतर्भावात् । अत एव सहेतुकमुपदिशन्नाह ।

**उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः ।**

हि यस्मादुपक्रम्यस्य चिकित्स्यस्य द्वित्वाद्धेतोरुपक्रमो द्विधैव मत इष्टः । एवशब्दोऽवधारणे परमतं क्षिपति ।

कथं द्विधेत्याह ।

**एकः संतर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ १ ॥**
**बृंहणो लंघनश्चेति तत्पर्यायावुदाहृतौ ।**
**बृंहणं यद्बृहत्त्वाय लंघनं लाघवाय यत् ॥ २ ॥**
**देहस्य**

तत्र तयोर्द्वयोरुपक्रमयोरेकः संतर्पणरूप उपक्रमो द्वितीयश्चापतर्पणरूप उपक्रमः । बृंहणं लंघनं च तयोः संतर्पणाऽपतर्पणयोः पर्यायावुदाहृतौ । देहस्य बृंहणं तदुच्यते यद्देहस्य बृहत्त्वाय भवति । लंघनं तदुच्यते यद्देहस्य लाघवाय लाघवोत्पादनाय भवति ।

**भवतः प्रायो भौमापमितरच्च ते ।**

संतर्पणापतर्पणे भौमापमितरच्च भवतः । भूमेरिदं भौमम् । अपामिदमापम् । भौमयुक्तमापं संतर्पणम् । इतरद्भौमापादन्यदग्निवाय्वाकाशात्मकमपतर्पणम् । प्रायोग्रहणात्किंचिद्भौममप्यपतर्पणम् । यथा यवमसूरमकुष्ठतंडुलीयादि । तथाऽग्निपवनोत्कटस्याऽपि शुंठीपिप्पल्यादेर्वृष्यत्वेन संतर्पणकार्यदर्शनाच्च ।

अधुना स्नेहनादेश्चतुर्विधस्योपक्रमस्य संतर्पणाऽपतर्पणयोरेवांतर्भावं दर्शयन्नाह ।

**स्नेहनं रूक्षणं कर्म स्वेदनं स्तंभनं च यत् ॥ ३ ॥**
**भूतानां तदपि द्वैध्याद्द्वितयं नाऽतिवर्तते ।**

स्नेहनादि यच्चतुर्विधं कर्म तदपि द्वितयं संतर्पणापतर्पणरूपं नाऽतिवर्तते नाऽतिक्रामति । कुतो हेतोरित्याह । भूतानां संतर्पणापतर्पणरूपाद्द्वैध्याद्द्विप्रकारकत्वात् ।

इदानीं प्रत्येकं तयोर्भेदानाह ।

**शोधनं शमनं चेति द्विधा तत्राऽपि लंघनम् ॥ ४ ॥**

तत्र च तयोः संतर्पणापतर्पणयोर्बृंहणलंघनापरपर्याययोर्मध्याल्लंघनमपतर्पणं तद्द्विधा । कथमित्याह । शोधनं शमनं चेति । इति हेत्वर्थे । यतः शोधनं शमनं च ततो द्विधेत्यर्थः ।

इदानीं शोधनस्य लक्षणं प्रभेदं चाऽधिकृत्याह ।

**यदीरयेद्बहिर्दोषान्पंचधा शोधनं च तत् ।**

यदौषधं दोषान् वातादीनंतः स्थितान् बहिरीरयेत् क्षिपेत्तच्छोधनम् । तच्च पंचधा पंचविधम् ।

तदेव पंचविधत्वमाह ।

**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ५ ॥**

निरूहो बस्तिस्तथा वमनं तथा कायविरेकः शिरोविरेकश्च तथाऽस्रविस्रुती रक्तस्रावश्चेति पंचधा शोधनम् । सर्वशरीरस्य शिरःप्रभृतेरधो मलनिर्हरणं यत्स कायविरेकशब्देनोच्यते । यत्तु केवलं शिरःसंज्ञकस्य शरीरावयवस्य घ्राणेनोर्ध्वमलनिर्हरणं स शिरोविरेकः ।

संप्रति शमनाख्यस्य लक्षणं प्रभेदं चाधिकृत्याह ।

**न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।**
**समीकरोति विषमान् शमनं तच्च सप्तधा ॥ ६ ॥**
**पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ।**

यदौषधं दोषान् वातादीन्न शोधयति नांतःस्थितान्बहिर्निष्कासयति तथा समान् स्वप्रमाणस्थान्नोदीरयति नोत्क्लेशयति विषमांश्च स्वप्रमाणाद्धीनाधिकभावावस्थितान् समीकरोति स्वप्रमाणस्थान् विदधाति तच्छमनमुच्यते । तच्च सप्तधा सप्तप्रकारं पाचनादिभेदेन । पाचयतीति पाचनम् । पचतोऽग्नेः पक्तुं शक्तिमधिकां यदुत्पादयति तद्द्रव्यं क्रिया वा पाचनमुच्यते । यथा लंघनं किराततिक्ताख्यं मुस्तादि वा । दीपनं यथा घृतादि । तंत्रांतरे च दीपनपाचनयोर्लक्षणमुक्तम् । क्षारपाणिनाऽप्युक्तम् । पाचनं पाचयेद्दोषान् सामान् शमनमेव तु । दीपनं ह्यग्निकृच्चामं कदाचित्पाचयेन्न वा । यथा । यदग्निकृत्पचेदामं दीपनं तद्यथा घृतम् । पाचनं तद्विपर्यस्तं यथा वक्ष्यामि लक्षणमिति । क्षुत्तृट्शब्दाभ्यां क्षुत्तृष्णानिग्रहाविह गृहीतौ ।

पाचनादीनां दोषशमनत्वमुक्तं तच्च वाते वातपित्ते च न संभवतीत्याह ।

**बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ७ ॥**

तुशब्दो विशेषे । विशेषस्तु लंघनापेक्षया । शोधनं शमनं चेति द्विधा लंघनमुक्तम् । बृंहणमपि शोधनं भवति दुग्धादिद्रव्यं शोधनस्वभावद्रव्यत्वात् । तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशंक्यते । यथा लंघनशोधनद्रव्येण हरीतक्यादिना । ततो बृंहणस्य विशेषणार्थस्तुशब्दः कृतः । बृंहणं यतः शोधनं मरुतः केवलस्य पित्तसहितस्य वा शमनं नतु लंघनशोधनवत्कोपनम् । एवकारोऽवधारणार्थः । बृंहणं यच्छोधनरूपं शोधनं वातस्य पित्तयुक्तस्य वा शमनमेव न कोपनं जातुचिदित्यर्थः । लंघनं तूभयरूपमपि वातस्य वातपित्तयोर्वा कोपनमेव ।

इदानीं ये बृंह्यास्तानाह ।

**बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ।**
**भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥**
**गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ।**

कर्शितशब्दस्य व्याध्यादिभिः प्रत्येकं संबंधः । व्याधिकर्शितान् बंहयेदेवं शेषेष्वपि योज्यम् । भारादिभिः क्षीणस्य प्रत्येकं

संबंधः। भारक्षीणान् बृंहयेत्। एवं शेषेषु रूक्षादीन् बृंहयेत्। ग्रीष्मेऽपरानप्यन्याननुक्तानपि बृंहयेत्। इत्थं च ग्रीष्मेऽपि सर्वानपि बृंहयेदिति विशेषेण तु व्याधिकर्शितादीन्।

कैर्बृंहयेदित्याह।

**मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः॥ ९॥**
**स्वप्नशय्यासुखाऽभ्यंगस्नाननिर्वृतिहर्षणैः।**

मांसादिभिर्बृंहयेत्। मधुरस्निग्धैर्बस्तिभिर्न तु रूक्षतीक्ष्णैस्तेषामपतर्पणस्वभावत्वात्। स्वप्नो निद्रा। शय्यासुखं खट्वाजनितं शर्म। निर्वृतिश्चित्तस्याऽनाकुलत्वम्।

**मेहामदोषाऽतिस्निग्धज्वरोरुस्तंभकुष्ठिनः॥ १०॥**
**विसर्पविद्रधिप्लीहशिरःकंठाऽक्षिरोगिणः।**
**स्थूलांश्च लंघयेन्नित्यं शिशिरे त्वपरानपि॥ ११॥**

मेहादीनामिनिर्मत्वर्थीयः। मेहप्रभृतीन् लंघयेत्। शिशिरे पुनरन्यानप्यपरानपीति व्याधितानां ग्रहणम्। स्वस्थानां तु शिशिरे हेमंतविधिविशेषेणोक्त एव। शिशिरशब्दः शीतमात्रोपलक्षणार्थः। तेन हेमंतेऽपि लंघयेदित्यर्थ उपलभ्यते।

पूर्वमुक्तं लंघनं द्विधा। शोधनं शमनं चेति। तत्र शोधनविषयं निरूपयन्नाह।

**तत्र संशोधनैः स्थौल्यबलपित्तकफाऽधिकान्।**
**आमदोषज्वरच्छर्दिरतीसारहृदामयैः॥ १२॥**
**विबंधगौरवोद्गारहृल्लासादिभिरातुरान्।**
**मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥ १३॥**
**एभिरेवाऽऽमयैरार्तान् हीनस्थौल्यबलादिकान्।**
**क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान्॥ १४॥**
**समीरणातपाऽऽयासैः किमुताऽल्पबलैर्नरान्।**

लंघयेदिति वर्तते। तत्र तेषु लंघनीयेषु मध्ये संशोधनाख्यैर्लंघनैः स्थौल्याद्यधिकान् तथाऽऽमदोषादिभिरार्तान् लंघयेत्। तथा मध्यस्थौल्यबलपित्तकफाऽधिकानेभिरेवाऽऽमदोषज्वरादिभिर्गदैरातुरान् प्रायः पूर्वं पाचनदीपनैर्लंघनभेदैर्लंघयेत्। प्रायोग्रहणं देशकालाद्यपेक्षया नियमस्याऽसर्वविषयत्वज्ञापनार्थम्। हीनस्थौल्यबलादिकांस्तु सतः क्षुत्तृष्णानिग्रहैर्बुभुक्षापिपासावेगविधारणाख्यैर्लंघनविशेषैर्लंघयेत्। दोषैर्वातपित्तकफैर्मध्यबलैरार्तान् तथा दृढान् शक्तान् समीरणादिभिर्लंघयेत्। आयासो व्यायामः। किमुत किंपुनरल्पबलैर्दोषैरार्तान् समीरणादिभिर्लंघयेत्। सुतरां तु हीनबलैरार्तान् लंघयेदेवेत्यर्थः।

**न बृंहयेल्लंघनीयान्**

लंघनीयान् लंघनार्हान् मेहामदोषादीन्न बृंहयेत्।

तर्हि बृंह्यस्य वातलादेर्यदा ज्वरादिव्याधिर्लंघनसाध्यो जायते तदा किं लंघनं कार्यमुत बृंहणमित्यत्र संशय इत्याह।

**बृंह्यांस्तु मृदु लंघयेत्॥ १५॥**
**युक्त्या वा देशकालादिबलतस्तानुपाचरेत्।**

ये पुनर्बृंह्यास्तान् लंघनसाध्यामयार्तान् मृदु कृत्वा लंघयेत्। मृदुना लंघनप्रकारेणाऽपतर्पयेदित्यर्थः। युक्त्या वा प्रयोगेण संतर्पणाऽपतर्पणव्यामिश्रलक्षणेन देशकालादीनां बलतोऽनुरोधेन तानुपाचरेदुपक्रमेत्। नैव लंघयेदित्यर्थः। आदिग्रहणेन सत्वसात्म्यादिग्रहणम्।

बृंहितलंघितयोः किं लक्षणमित्याह।

**बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः॥ १६॥**

बृंहिते सति बलं पुष्टिः स्यात्। तथा बृंहणसाध्या य आमयास्तेषां संक्षयो विनाशो भवेत्।

संप्रति लंघितलक्षणमाह।

**विमलेंद्रियता सर्गो मलानां लाघवं रुचिः।**
**क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकंठता॥ १७॥**
**व्याधिमार्दवमुत्साहस्तंद्रानाशश्च लंघिते।**

विमलेंद्रियतादिस्तंद्रानाशश्चेत्यंतो ग्रंथो लंघितलक्षणम्। विमलेंद्रियता करणपाटवम्। क्षुत्तृषोः सहैककालमुदयः। शुद्धहृदयेति। हृदयं चोद्गारश्च कंठश्च हृदयोद्गारकंठं शुद्धं च तद्धृदयोद्गारकंठं च तस्य भावः शुद्धहृदयोद्गारकंठता। विमलेंद्रियतादीनां पदानामकृतसमासानामेव समस्तानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषां च लंघितलक्षणत्वद्योतनार्थः। अन्यथाऽप्येषां दोषाणामुत्पत्तौ लंघितलक्षणत्वं भवेन्न त्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लंघितलक्षणत्वं स्यात्। मुनिरप्यनेनैव हेतुनाऽसमासेनैव लक्षणं व्यधत्त। तथा। वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे। हृदयोद्गारकंठस्य शुद्धौ तंद्राक्लमे गते। स्वेदे जातेऽरुचौ चैव क्षुत्पिपासासहोदये। कृतं लंघनमादेश्यं निर्व्यथे चांतरात्मनीति।

**अनपेक्षितमात्रादिसेविते कुरुतस्तु ते॥ १८॥**
**अतिस्थौल्याऽतिकार्श्यादीन् वक्ष्यंते ते च सौषधाः।**

ते बृंहणलंघनेऽनपेक्षितमात्रादिसेवितेऽतिस्थौल्याऽतिकार्श्यादीन् कुरुतः। अनपेक्षिताश्च ते मात्रादयश्चाऽनपेक्षितमात्रादयस्तैः सेविते। मात्राद्यनपेक्षया कृते इत्यर्थः। ते चाऽतिस्थौल्याऽतिकार्श्यादयः सौषधाः सभेषजा वक्ष्यंते पुरस्ताद्भणिष्यंते।

अथाऽतिबृंहितलंघितयोः किं लक्षणमित्याह।

**रूपं तैरेव च ज्ञेयमतिबृंहितलंघिते॥ १९॥**

अतिबृंहितश्चाऽतिलंघितश्चेत्येकवद्भावः। अतिबृंहितेऽतिलंघिते च तैरेवाऽतिस्थौल्यादिभिस्तथाऽतिकार्श्यादिभिश्च रूपं बृंहणलंघनाऽतियोगलक्षणं वेद्यम्। चशब्दः समुच्चये।

तानेवाऽतिस्थौल्यादीनाह।

**अतिस्थौल्यापचीमेहज्वरोदरभगंदरान्।**
**कासंसंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान्॥ २०॥**

अतिस्थौल्यादीनतिबृंहितं कर्तृ कुरुते इत्यनुपात्तेनाऽपि प्रकृत-

त्वादत्र कर्तृपदेन क्रियापदेन च संबंधः कार्यः । अत एव तदपेक्षयाऽतिस्थौल्यादीनां द्वितीया । अथवा योग्यतयैवाऽनुपात्तेनाऽपि क्रियादिना संबंधो भवत्येव । सुकविलक्षणस्यैवं स्थितत्वात् । तथा च भगवतो व्यासस्य । यश्च निंबं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गंधमाल्येन सर्वस्य कटुरेव सः । अत्र हि छेदसेकालंकारक्रियाऽपेक्ष्य निंबादीनां द्वितीयाऽर्थसंबंधश्च ।

अथैषां स्थौल्यादीनामुपक्रममाह ।

**तत्र मेदोऽनिलश्लेष्मनाशनं सर्वमिष्यते ।**

तेष्वतिस्थौल्यादिषु मेदोऽनिलश्लेष्मनाशनं सर्वमन्नपानौषधमिष्यते ।

किंतदिति ब्रूते ।

**कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ॥ २१ ॥**
**मस्तुदंडाहतारिष्टचिंताशोधनजागरम् ।**
**मधुना त्रिफलां लिह्याद्गुडूचीमभयां घनम् ॥२२॥**
**रसांजनस्य महतः पंचमूलस्य गुग्गुलोः ।**
**शिलाजतुप्रयोगश्च साग्निमंथरसो हितः ॥ २३ ॥**
**विडंगं नागरं क्षारः काललोहरजो मधु ।**
**यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् २४**

कुलत्थादिकं स्थूलायेष्यते । जूर्णस्तृणधान्यविशेषो दक्षिणापथे जोंधलक इति प्रसिद्धः । दंडाहतं मथितम् । त्रिफलादीनामन्यतमं मधुना लिह्यात् । तथा रसांजनादेश्च प्रयोगोऽग्निमंथररससहितो हितोऽतिस्थूलायेति प्रकृतेन योज्यम् । विडंगादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित् ।

**व्योषकट्वीवराशिग्रुविडंगाऽतिविषास्थिराः ।**
**हिंगुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥२५॥**
**निशे बृहत्यौ हपुषा पाठामूलं च केंबुकात् ।**
**एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥ २६ ॥**
**सक्तुभिः षोडशगुणैर्युक्तं पीतं निहंति तत् ।**
**अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान्**
**हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ।**
**बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥२८॥**

व्योषादीनि द्रव्याणि चतुर्विंशतिः परस्परसमभागानीत्येको भागः । तत्समो मधुनो द्वितीयो भागो घृतस्य तृतीयस्तैलस्य चतुर्थः । एषां सर्वेषां मिश्रीभूतानां षोडशगुणा यवसक्तवः । तदेतत्पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगान्निहंति । अन्यांश्च तथाविधान् रोगान् बृंहणोत्थानित्यर्थः । तथा हृद्रोगादीन् निहंति । तथा बुद्ध्यादिकरम् । सन्नस्य मंदस्याऽग्नेर्दीपनं च ।

सांप्रतमतिलंघनोत्थान् रोगान् सौषधादीनाह ।

**अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ।**
**स्नेहाऽग्निनिद्राहक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः २९**
**बस्तिहृन्मूर्धजंघोरुत्रिकपार्श्वरुजा ज्वरः ।**
**प्रलापोऽर्ध्वानिलग्लानिच्छर्दिः पर्वास्थिभेदनम् ॥**
**विण्मूत्रादिग्रहाद्याश्च जायंतेऽतिविलंघनात् ।**

अतिकार्श्यादयोऽतिविलंघनाज्जायंते । स्नेहादीनां क्षयशब्देन समासः । बस्त्यादीनां च रुजाशब्देन । मूत्रादिग्रहाद्याश्चेत्याद्यशब्देन नानाविधानां वातरोगाणां ग्रहणम् ।

यद्यपि कार्श्याख्योऽयं महान्दोषस्तथाऽपि स्थौल्यमपेक्ष्य वर एवेति प्रतिपादयन्नाह ।

**कार्श्यमेव वरं स्थौल्यात्**

अत्र चाऽतिकार्श्यमेव वरमतिस्थौल्यादिति वेद्यम् । न कार्श्यमात्रं स्थौल्यमात्रं वा । यस्मादतिकृशातिस्थूलावेव लंघनबृंहणाभ्यामुपक्रम्यावत्र विवक्षितौ न स्थूलकृशौ सामान्येन ।

कार्श्यमेव स्थौल्याद्वरं कुत इत्याह ।

**नहि स्थूलस्य भेषजम् ॥३१॥**
**बृंहणं लंघनं नालमतिमेदोऽग्निवातजित् ।**

यस्मात् स्थूलस्य भेषजं बृंहणं नालं न समर्थं न च लंघनं समर्थम् । यस्मात्स्थूलस्य भेषजमतिमेदोऽग्निवातजित् । यन्मेदःक्षपणमग्निनाशकृद्वातहृच्च । स्थूलस्य हि बृंहणेन मेदोऽतितरामुपचीयते लंघनेन मेदःक्षपणं भवति किंत्वग्निपवनावस्योपचीयेते । तस्माद्बृंहणं मांसक्षीरादि यच्च लंघनं कोद्रवश्यामाकादि तत्पूर्वस्माद्धेतोः स्थूलस्य न भेषजम् ।

**मधुरस्निग्धसौहित्यैर्यत्सौख्येन विनश्यति ॥३२॥**
**कृशिमा स्थविमाऽत्यंतविपरीतनिषेवणैः ।**

यतो यस्मात्कृशिमा मधुरस्निग्धतृप्तिभिः सौख्येनाऽनायासेन नश्यति शाम्यति तस्मात्कार्श्यं स्थौल्याद्वरम् । यतश्च स्थविमा स्थूलत्वमत्यंतविपरीतनिषेवणैः शाम्यति । अत्यंतविपरीतानां निषेवणान्यत्यंतविपरीतनिषेवणानि तैस्तिक्तकटुकषायप्रायैरन्नपानौषधसेवनैः शाम्यतीत्यर्थः । स्थूलकृशयोश्च यदि बृंहणसाध्यस्तुल्यो व्याधिः स्यात्ततः स्थूलस्योपक्रमविरोधात्तथा सुखेन न शाम्यति । यथा कृशस्य लंघनसाध्यो विसूचिकादिर्यदि चैतयोः स्यात् सोऽपि कृशस्य सुखेनोपशाम्यति । स्थूलस्य विरुद्धोपक्रमत्वाद्दुःखेन शाम्यति । तथा ह्यत्र प्रधानोपक्रमः स्वेदः स च तावन्न घटते । न स्वेदयेदतिस्थूलमिति निषेधात् । अथैनं लंघयति तदा । स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः । चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम् । स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ । इत्यादिना यावद्वातसखेन वनवह्निना वनस्येवाऽस्य महती व्यापदुत्पद्यते । अथ बृंहणोपक्रमः क्रियते तदाऽऽमदोषो वर्धते । कृशस्य त्वविरुद्धोपक्रमत्वाद्विसूचिकादिः सुखेनोपक्रम्यस्तस्मात्कार्श्यमेव स्थौल्याद्वरम् । कृशिमेति कृशशब्दात्पृथ्वादिपाठादि-

मनिच्। रऋतो हलादेरिति रेफादेशः। स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित्। तस्मिंश्च सति स्थूलदूरेति यणादिपरस्य लोपः। ऋकारस्य च गुणः।

अथ कृशे कीदृशं भेषजमित्याह।

**योजयेद्बृंहणं तत्र सर्वं पानान्नभेषजम्॥ ३३॥**

तत्र कृशे बृंहणं सर्वं पानाद्यौषधं योज्यम्।

**अचिंतया हर्षणेन ध्रुवं संतर्पणेन च।**
**स्वप्नप्रसंगाच्च कृशो वराह इव पुष्यति॥ ३४॥**

अचिंतया चेतसः शोककार्याद्यनाकुलत्वेन तथा हर्षणेन चित्तस्य तुष्ट्या तथा संतर्पणेनाऽऽहारविशेषादिना बृंहणेन तथा स्वप्नप्रसंगादतिनिद्रासेवनेन कृशः पुष्यति सर्वोपचितधातुः संपद्यते। क इव। वराहः शूकरो यथा। अन्येभ्यश्च पुष्टिहेतुभ्यः कृशविषये स्वप्न एव प्रधान इति च दर्शयितुं वराहो दृष्टांतत्वेनोपन्यस्तो ग्रंथकृता। तथाहि। वराहस्य स्वप्नमंतरेण न कश्चित्तथाविधोऽभ्यवहारादिरुपलभ्यते। यथाऽसौ पुष्टोऽतिमेदुरो दृश्यते। अतिस्थूलाऽतिकृशयोश्च मुनिना लक्षणमभ्यधायि। मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः। अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते। तथा। शुष्कस्फिगुदरग्रीवो धमनीजालसंततः। त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मत इति।

**नहि मांससमं किंचिदन्यद्देहबृहत्त्वकृत्।**
**मांसादमांसं मांसेन संभृतत्वाद्विशेषतः॥ ३५॥**

मांसेन सममपरं देहबृहत्त्वकरं नच विद्यते। सर्वबृंहणत्वकरेभ्यो मांसमतिबृंहणमित्यर्थः। विशेषेण मांसादमांसं देहस्य बृंहणत्वकृत्। कुत इत्याह। मांसेन संभृतत्वात् पुष्टत्वात्।

एवं विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह।

**गुरु चाऽतर्पणं स्थूले विपरीतं हितं कृशे।**

यद्गुरु तथापतर्पणं तत्समासेन स्थूलाय हितं माक्षिकशालूकादि। एतद्धि रौक्ष्यान्मेदः क्षपयति। गौरवाच्च शीघ्रं जरां न गच्छति। यदतो विपरीतं लघु संतर्पणं च तदतिकृशाय हितं शालिषष्टिकैणेयमांसलावकपिंजलाऽविकम्। अतिकृशस्य ह्यग्निरपि कृशो भवति। तस्माद्यदि तस्य गुर्वन्नपानौषधमुपयुज्यते ततोऽग्निसादोऽस्य जायते। अथाऽस्य लघु बृंहणमुपयुज्यते तद्भूयः कार्श्यमेवाऽऽस्यापद्यते। तस्माल्लघु संतर्पणं च यत्तत्कृशाय हितम्। गुरुचेत्यत्र चशब्दाल्लघु च यदपतर्पणं श्यामाककोरदूषादिकं तथाऽन्यदपि यन्न गुरु नच लघु मेदोघ्नं जागरव्यवायव्यायामचिंतादिकं तच्च स्थूले हितं गमयति।

**यवगोधूममुभयोस्तद्योग्याहितकल्पनम्॥ ३६॥**

उभयोः स्थूलकृशयोर्यवगोधूमं हितम्। किंभूतं यवगोधूममित्याह। तद्योग्येत्यादि। तयोः स्थूलकृशयोर्योग्या उचिताऽऽहिता कृता कल्पना संयोगसंस्कारादिनोपयोगोपायो वा यस्मिन् यवे गोधूमे तदेवं यवाः स्थूले हिता गोधूमाः कृशे इत्यर्थः। हितयोगे चतुर्थी वक्तव्येत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी। अन्येऽपि ह्येवं प्रयोगा दृश्यंते। यथा रुद्रटस्य। सामाँजाधीमतां हितमिति। तथाऽस्यैव। विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता। व्रणाऽक्षिरोगसंशुद्धदुर्बलस्नेहपायिनामिति।

ननु चाऽतीसारज्वरगुल्मादीनामनेकरूपत्वादनंता एवोपक्रमाः प्राप्तास्तत्कथमुक्तमुपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मत इत्याह।

**दोषगत्याऽतिरिच्यंते ग्राहिभेद्यादिभेदतः।**
**उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव॥३७॥**

दोषाणां पृथग्रूपाणां संसर्गसन्निपाततरतमभेदेनाऽऽनंत्यं यातानां या गतिस्तथा तेषामेव स्थानवृद्धिक्षयलक्षणा या गतिस्तिर्यगूर्ध्वाधोलक्षणा या गतिस्तथा शाखाकोष्ठास्थिसंधिलक्षणा च या गतिस्तयाऽतिरिच्यंते बहवो भवंत्युपक्रमाः। कथमित्याह। ग्राहिभेद्यादिभेदतः। ग्राही च भेदी च ग्राहिभेदिनौ तावादी येषां रोगानुरोधान्नानाविधानामुपक्रमाणां ते ग्राहिभेद्यादयस्तेषां भेदो विशेषो ग्राहिभेद्यादिभेदस्तस्मात्। यद्यप्यतिरिच्यंतेऽनंताः संपद्यंते तथाऽपि द्वित्वात्संतर्पणाऽपतर्पणरूपान्न तेऽतिरिच्यंते। संतर्पणरूपत्वमपतर्पणरूपत्वं वा वर्जयित्वा न तेषामुपक्रमाणां रूपांतरं संभवतीत्यर्थः। कथमिव नाऽतिरिच्यंत इत्याह। भिन्ना अपि गदा इव। यथा वातादिदोषवशान्नानाविधा अपि ज्वरादयो बृंहणलंघनसाध्यत्वं सामत्वं निरामत्वं वा नातिवर्तंते तथोपक्रमा अपीति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चतुर्दशोऽध्यायः॥ १४॥

---

## पंचदशोऽध्यायः।

द्विविधोपक्रमणीयाध्यायादनंतरं शोधनादिगणसंग्रहाध्यायारंभः। यतो दोषोपक्रमणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहितास्ते च मदनमधुकादिभेषजाश्रया अतस्तानि शोधनान्युपयोगीनि सर्वोपक्रमाधिकाराणि संजिघृक्षुरध्यायमिममारेभे।

### अथाऽतः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः।

शोधनं शोधनरूपो द्रव्यगण आदिर्येषां त एवम्। आदिशब्देन वातहरादिगणपरिग्रहः। तेषां संग्रहो यस्मिन्नध्याये स शोधनादिगणसंग्रहस्तं शोधनादिगणसंग्रहसंज्ञमध्यायं व्याख्यास्यामः। गणः समूहः। विक्षिप्तानां पदार्थानामेकत्र राशीकरणं संग्रहः। तत्र शोधनगणस्य सर्वदोषविजयत्वेन प्राधान्यात्पूर्वमुपन्यासः।

शोधनं च चतुर्विधम् । वमनविरेचनास्थापनशिरोविरेचनद्रव्यभेदेन । तत्राऽपि वमनस्यौषधगणं तावत्पूर्वं वक्ति ।

**मदनमधुकलंबानिंबबिंबीविशाला**
**त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।**
**विदुलदहनचित्राः कोशवत्यौ करंजः**
**कणलवणवचैलासर्षपाश्छर्दनानि ॥ १ ॥**

मदनं राठः । मधुकं मधुयष्टिका । लंबा तुंबी दीर्घतिक्ताऽलाबुसंज्ञा । निंबः पिचुमंदः । बिंबी गोह्वा ओष्ठोपमफलसंज्ञा । विशाला इंद्रवारुणी । त्रपुसं तिक्तत्रपुसं वेद्यम् । तस्य वमने योग्यत्वात् । कुटजं वत्सकम् । मूर्वा पीलुपर्णी । देवदाली घरंघरा । कृमिघ्नं विडंगम् । विदुलो जलवेतसः । दहनश्चित्रकः । चित्रा मूषिकपर्णी । कोशवत्यौ घंटालिकैका धामार्गवो द्वितीया राजकोशातकी । करंजो नक्तमालम् । कणः पिप्पली । लवणं सैंधवम् । वचा गोलोमी । एला त्रुटिः । सर्षपो रक्षोघ्नः । एतानि मदनादीनि छर्दनानि छर्दिकृन्ति छर्दिकराणि । अत्र मदनविशालात्रपुसकुटजविडंगैलासर्षपाणां फलानि वमनकृंति । मधुकविदलचित्रकदंतीवचानां तु मूलानि । रोध्रसुवर्णक्षीरीकंपिल्लानां त्वचो वम्याः । शेषाणां फलपत्रपुष्पाणीति । वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ।

**निकुंभकुंभत्रिफलागवाक्षी-**
**स्नुक्शंखिनीनीलिनितिल्वकानि ।**
**शम्याककंपिल्लकहेमदुग्धा**
**दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥**

निकुंभो दंती । कुंभस्त्रिवृतम् । त्रिफला वरा । गवाक्षी विशाला द्वितीयेंद्रवारुणी । स्नुग्गुडा । शंखिनी यवतिक्ता । नीलिनी नीलपुष्पा भारवाहीसंज्ञा । तिल्वको रोध्रः । शम्याकः कर्णिकारः । कंपिल्लको रंजनकः । हेमदुग्धा कनकक्षीरी । दुग्धं क्षीरम् । मूत्रं प्रसिद्धम् । निकुंभादीन्येतानि विरेचनानि । उपजातिर्वृत्तम् ।

**मदनकुटजकुष्ठदेवदाली-**
**मधुकवचादशमूलदारुरास्नाः ।**
**यवमिसिकृतवेधनं कुलत्थो**
**मधुलवणं त्रिवृता निरूहणानि ॥ ३ ॥**

मदनं मदनफलम् । कुटजं वत्सत्वक् । कुष्ठं गदनाम । दारु देवदारु । रास्ना युक्तरसा । मिसिः शतपुष्पा । कृतवेधनं धामार्गवः । निरूहणानि निरूहणसाधनानि । भवति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा ।

**वेल्लाऽऽपामार्गव्योषदार्वीसुराला**
**बीजं शैरीषं बार्हतं शैग्रवं च ।**
**सारो माधूकः सैंधवं तार्क्ष्यशैलं**
**त्रुट्यौ पृथ्वीका शोधयंत्युत्तमांगम् ॥ ४ ॥**

वेल्लो विडंगः । अपामार्गः प्रत्यक्पुष्पी । व्योषं त्रिकटुकम् । दार्वी पीतद्रुः । सुराला श्रेष्ठसर्जरसः । शिरीषबीजं शैरीषम् । बृहत्या बीजं बार्हतम् । शिग्रुबीजं शैग्रवम् । सारो माधूको मधुपुष्पसारः । सैंधवं सिंधूत्थम् । तार्क्ष्यशैलं शुष्करसांजनम् । त्रुट्यौ सुक्ष्मैला स्थूलैला च । पृथ्वीका हिंगुपत्री । एतान्युत्तमांगं शोधयंति । मूर्धविरेचनानीत्यर्थः । मौ यौ पंचाश्वैश्छिदेवीति नाम्ना ।

**भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।**
**वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ५ ॥**

भद्रदारु द्रुकिलिमम् । नतं तगरम् । कुष्ठं गदः । दशमूलं द्विपंचमूलम् । बलाद्वयं बलाऽतिबला च । एतानि भद्रदार्वादीनि तथा वक्ष्यमाणो वीरतरादिर्विदार्यादिश्च वायुं नाशयति ।

**दूर्वाऽनंता निंबवासाऽऽत्मगुप्ता**
**गुंद्राऽभीरुः शीतपाकी प्रियंगुः ।**
**न्यग्रोधादिः पद्मकादिः स्थिरे द्वे**
**पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ६ ॥**

दूर्वा शाद्वलम् । अनंता यवासः । निंबः प्रसिद्धः । वासा आटरूषकः । आत्मगुप्ता कपिकच्छूः । गुंद्रा पदएरकः । अभीरुः शतावरी । शीतपाकी शिखंडिका काकणंतिकाभेदः । प्रियंगुः श्यामा । एष दूर्वादिगणस्तथा वक्ष्यमाणो न्यग्रोधादिस्तथा पद्मकादिर्गणस्तथा शालिपर्णीपृश्निपर्ण्यौ । तथा पद्मं जलजं वन्यं कुटंनटं सारिवादिश्च गणः । एते पित्तं नाशयंति । म्तौ तौ गौ चेच्छालिनी वेदलोकैः ।

**आरग्वधादिरर्कादिर्मुष्ककाद्योसनादिकः ।**
**सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥७॥**

आरग्वधाद्यादयो गणाः सप्तैते बलासं श्लेष्माणं जयंति ।

**जीवंती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च ।**
**ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ८**

जीवंत्यादिर्गणो जीवनीयसंज्ञः । उदाहरणमात्रं चेदम् । धीमता स्वादुशीतस्निग्धादीन् जीवंत्यादिषु साधारणगुणानालोच्य क्षीरेक्षुद्राक्षाऽक्षोडविदार्यादिषु तद्गुणेषु जीवनीयादित्वमवधारयितुं युक्तमिति । जीवंती जीववर्धना । काकोल्यौ द्वे एका काकोली कवडीसंज्ञा । अन्या क्षीरकाकोली पयस्विनीसंज्ञा । द्वे मेदे एका मेदा मणिच्छिद्रासंज्ञा । अन्या महामेदा वृक्षसहासंज्ञा । मुद्गपर्ण्यादीनां प्रागुक्तानि नामानि । द्व्यंतांतरादिगुरुभिः सोदधिलैः सप्तभिर्गणैर्गुरुणा । आर्यार्धे नाऽत्रायुजि जः षष्ठोऽयं नलघुकौ वा ।

विदारिपंचांगुलवृश्चिकाली
वृश्चीवदेवाह्वयशूर्पपर्ण्यः ।
कंडूकरी जीवनह्रस्वसंज्ञे
द्वे पंचके गोपसुता त्रिपादी ॥ ९ ॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्मांऽगमर्दोर्ध्वश्वासकासहरो गणः ॥१०॥

विदारी वृष्यकंदा । पंचांगुल एरंडः । वृश्चिकाल्युष्ट्रधूमको मेषशृंगी । वृश्चीवः क्षुद्रवर्षाभूः । देवाह्वयः सुरदारुः । देवाह्वयेति पाठे एका सहदेवा द्वितीया विश्वदेवा चेति देवाह्वयम् । शूर्पपर्णी मुद्गपर्णी तथा माषपर्णी च । कंडूकरी कपिकच्छूः । जीवनेत्यादि । अभीरुवीराजीवंतीजीवकर्षभकैः स्मृतम् । जीवनाख्यमिति जीवनसंज्ञं पंचमूलम् । बृहती कंटकारिका । शालिपर्णी पृश्निपर्णी गोक्षुरकमिति ह्रस्वसंज्ञं पंचमूलम् । गोपसुता सारिवा । त्रिपादी हंसपादी कीटमारिकाख्या । उपजातिर्वृत्तम् । एष विदार्यादिगणो बृंहणो वातपित्तघ्नः शोषादिहरश्च ।

सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ।
यष्टी परूषकं हंति दाहपित्ताऽस्रतृड्ज्वरान् ११

सारिवोष्णवल्ली । उशीरं वीरतरुः । काश्मर्यः सर्वतोभद्रा । मधूको गुडपुष्पकः । शिशिरद्वयमेकं सितं चंदनं मलयजसंज्ञमन्यद्रक्तचंदनसंज्ञम् । यष्टी क्लीतकसंज्ञा । परूषकं मृदुफलम् । सारिवादिरयं दाहादीन् हंति ।

पद्मकपुंड्रौ वृद्धितुगर्द्ध्यः
शृंग्यमृता दश जीवनसंज्ञाः ।
स्तन्यकरा घ्नंतीरणपित्तं
प्रीणनजीवनबृंहणवृष्याः ॥ १२ ॥

पद्मकं हेमपद्मम् । पुंड्रः प्रपौंडरीकम् । वृद्धिः श्रावणी । तुगा तुगाक्षीरी । ऋद्धिर्महाश्रावणी । शृंगी कुलीरशृंगी । अमृता छिन्नरुहा । दश जीवनसंज्ञा जीवंत्यादिगणोक्ताः एते पद्मकादयः स्तन्यहेतवः । तथा वातपित्तं घ्नंति । तथा प्रीणनादियुक्ताः । अष्टाभ्यो भाद्गौ योज्यावुपचित्रा ।

परूषकं वरा द्राक्षा कट्फलं कतकाफलम् ।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥१३॥

परूपको मृदुफलो बंधनच्छदः । वरा श्रेष्ठा । द्राक्षा मधुफला । कट्फलं रोहिणी सोमवल्कः । कतकफलं वारिप्रसादनम् । राजाह्वं कर्णिकारम् । दाडिमं शुकेष्टम् । शाकं खरच्छदं वृक्षविशेषः । परूषकादिरेष तृडामयादिजित् ।

अंजनं फलिनी मांसी पद्मोत्पलरसांजनम् ।
सैलामधुकनागाह्वं विषांतर्दाहपित्तनुत् ॥ १४ ॥

अंजनं द्विधा । एकं स्रोतोंऽजनं यामुनसंज्ञमपरं सौवीरांजनं नेत्रभूषणाख्यम् । फलिनी प्रियंगुः । मांसी कृष्णजटा । पद्मं पुष्करम् । उत्पलं शशिप्रियम् । रसांजनं तार्क्ष्यशैलम् । एला बहुला प्रसिद्धा । मधुकं मधुयष्टी । नागाह्वं नागकेसरम् । एषोंऽजनादिर्विषादिजित् ।

पटोलकटुरोहिणी चंदनं
मधुस्रवगुडूचिपाठान्वितम् ।
निहंति कफपित्तकुष्ठज्वरान्
विषं वमिमरोचकं कामलाम् ॥ १५ ॥

पटोलं पांडुफलम् । कटुरोहिणी कटुका । चंदनं गंधसारम् । मधुस्रवा मरुद्री सुरंगी । गडूची छिन्नरुहा । पाठांऽबष्ठा । एतैर्द्रव्यैर्युक्तमेतत् । पटोलादिकं कफादीन् हंति । मात्रासमकं नवमोल्गंतम् ।

गुडूचीपद्मकारिष्टधानका रक्तचंदनम् ।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥१६॥

गुडूची छिन्नोद्भवा । पद्मको मरुद्भवः । अरिष्टो निंबः । धानका धान्याकम् । रक्तचंदनं रक्तकाष्ठम् । एष गुडूच्यादिः पित्तादीन् हंति ।

आरग्वधेंद्रयवपाटलिकाकतिक्ता
निंबाऽमृतामधुरसास्रुववृक्षपाठाः ।
भूनिंबसैर्यकपटोलकरंजयुग्मं
सप्तच्छदाऽग्निसुषवीफलबाणघोंटाः ॥ १७ ॥
आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान् ।
कफं कंडूं प्रमेहं च दुष्टव्रणविशोधनः ॥१८॥

आरग्वधः शम्याकः । इंद्रयवाः कलिंगकाः । पाटलिर्वसंतदूती । काकतिक्ता शार्ङ्गेष्टा । निंबः पारिभद्रकः । अमृता गुडूची । मधुरसा मूर्वा । स्रुववृक्षो विकंकतः कंटकीवृक्षः कंटकारिकेति प्रसिद्धः । पाठांऽबष्ठा । भूनिंबः कैरातः । सैर्यकः सहचरः । पटोलं कर्कशच्छदम् । करंजयुग्ममेकः पूतिककरंजश्चिरिबिल्वाख्योऽपरो नक्तमालाख्यः । सप्तच्छदोऽयुग्मच्छदः । अग्निश्चित्रकः । सुषवी कारवी पानीयवल्ली अजशृंगी । फलं मदनफलम् । बाणः सहचरः । घोंटा पूगविशेषः । वसंततिलका वृत्तम् । अयमारग्वधादिश्छर्द्यादीन्निहंति ।

असनतिनिशभूर्जश्वेतवाहप्रकीर्या
खदिरकदरभंडीशिंशपामेषशृंग्यः ।
त्रिहिमतलपलाशा जोंगकः शाकशालौ
क्रमुकधवकुलिंगच्छागकर्णाश्वकर्णाः ॥ १९ ॥
असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।
पांडुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ २० ॥

असनः पीतशालाख्यः । तिनिशः स्यंदनसंज्ञः । भूर्जो बहुपु-

टाख्यः। श्वेतवाहोऽर्जुनः। प्रकीर्या पूतिकरंजः। खदिरो गायत्री। कदरः खदिराकृतिः श्वेतसारः। भंडी शिरीषः। शिंशपा मंडलपत्रिका। मेषशृंग्यजशृंगी। त्रिहिमं चंदनत्रयं मलयजरक्तचंदनदारुहरिद्राभेदेन। तलस्तालः। पलाशः किंशुकः। जोंगकोऽगुरुसंज्ञः। शाकं वरदारु। शालो रसनिर्यासाख्यः। धवः शकटाख्यः। क्रमुकं पूगम्। कुलिंगं शाक्रयवाः। छागकर्णो बस्तकर्णः। अश्वकर्णः कुशिकः। मालिनी वृत्तम्। अयमसनादिः श्वित्रादीन् विजयते शमयति। विजयत इति विपराभ्यां जेरित्यात्मनेपदम्। तथा मेदोदोषं निबर्हति पराकरोति।

**वरणसैर्यकयुग्मशतावरी**
**दहनमोरटबिल्वविषाणिकाः।**
**द्विबृहतीद्विकरंजजयाद्वयं**
**बहलपल्लवदर्भरुजाकराः॥ २१॥**
**वरणादिः कफं मेदो मंदाग्नित्वं नियच्छति।**
**अधोवातं शिरःशूलं गुल्मं चांतःसविद्रधिम्॥२२॥**

वरुणो रुमालः। सैर्यकयुग्मं सहचरद्वयमेको रक्तपुष्पः कुबरकाख्योऽन्यः पीतपुष्पः कुरंटकाख्यः। शतावरी वरा। दहनो वह्निः। मोरटो मूर्वा। बिल्वः पूतिवातः। विषाणिकाऽजशृंगी। द्विबृहत्यौ कंटकारिकामोटिकाऽख्ये। करंजयुग्मं प्रागुक्तम्। तर्कारी हरीतकी चेति जयाद्वयम्। बहलपल्लवः शोभांजनः। दर्भाः कुशाः। रुजाकरो हितालुः। द्रुतविलंबितमाह नभौ भरौ। वरणादिरयं कफादीन् हंति।

**ऊषकस्तुत्थकं हिंगु कासीसद्वयसैंधवम्।**
**सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम्॥२३॥**

ऊषको वृष्यकः कल्लर इति प्रसिद्धः। तुत्थकं कार्पूरं किटिहापरसंज्ञम्। हिंगु रामठम्। कासीसद्वयमेकं पांशुधातुसंज्ञमपरं पुष्पकासीसाख्यम्। सैंधवं माणिमंथम्। शिलाजतु शिलाजम्। ऊषकादिरयं मूत्रकृच्छ्रादीनपहंति।

**वेल्लंतरारणिकबूकवृषाऽश्मभेद-**
**गोकंटकेत्कटसहाचरबाणकाशाः।**
**वृक्षादनीनलकुशद्वयगुंठगुंद्रा-**
**भल्लूकमोरटकुरंटकरंभपार्थाः॥ २४॥**
**वर्गो वीरतराद्योऽयं हंति वातकृतान् गदान्।**
**अश्मरीशर्करामूत्रकृच्छ्राऽघातरुजाहरः॥ २५॥**

वेल्लंतरो वीरतर उशीराख्यः। अरणिकोऽग्निमंथः। बूक ईश्वरमल्लिका। वृष आटरूषकः। अश्मभेदः पाषाणभेदः। गोकंटको गोक्षुरकः। इत्कटा सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काष्टविशेषः। सहाचरः सहचरः। बाणो नीलपुष्पशैर्यकः। काशः श्वेतचामरकः। वृक्षादनी कामवृक्षकः। नलो मृत्युपुष्पाख्यः। कुशद्वयं स्थूलसूक्ष्मभेदेन दर्भद्वयम्। गुंठो वृंततृणम्। कुंद्रगुंठकापरसंज्ञः। गुंद्रा पद एरकः। भल्लूकः श्योनाकः। मोरटः क्षीरमोरटः। कुरंटः सितिवारकः। करंभ उत्तमारणी। पार्थो सुवर्चला। वसंततिलका वृत्तम्। एष वीरतरादिर्वर्गो गणो वातजान् रोगान् हंति तथाऽश्मर्यादिहरः।

**रोध्रशावररोध्रपलाशा**
**जिंगिणीसरलकट्फलयुक्ताः।**
**कुत्सितांबकदलीगतशोकाः**
**सैलवालुपरिपेलवमोचाः॥ २६॥**
**एष रोध्रादिको नाम मेदःकफहरो गणः।**
**योनिदोषहरः स्तंभी वर्ण्यो विषविनाशनः॥२७॥**

रोध्रस्तिल्वकः। शावररोध्रोऽक्षिभैषजापरसंज्ञः। पलाशः शठी। जिंगिणी जिंजिणी कृष्णशाल्मली। सरलं देवदारु। कट्फलं कुमुदारोहिणी। युक्ता रास्ना। गिरिकर्णिकेत्यन्ये। कुत्सितांबः कदंबः। कदली रंभा। गतशोकोऽशोकः। एलवालु ऐलेयम्। परिपेलवं कुटन्नटं गोपालदमनकाख्यम्। मोचा शल्लकी। स्वागता वृत्तम्। अयं रोध्रादिको गणो मेदःकफापहो योनिदोषघ्नश्च। तथा स्तंभी दोषाणां शकृदादेश्च। तथा वर्णाय हितो विषघ्नश्च।

**अर्कालर्कौ नागदंती विशल्या**
**भार्गी रास्ना वृश्चिकाली प्रकीर्या।**
**प्रत्यक्पुष्पी पीततैलोदकीर्या**
**श्वेतायुग्मं तापसानां च वृक्षः॥ २८॥**
**अयमर्कादिको वर्गः कफमेदोविषापहः।**
**कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः॥ २९॥**

अर्कः सदापुष्पी। अलर्को मंदारकाख्यः श्वेतकुसुमः। नागदंती पर्वपुष्पिका। विशल्या लांगली। भार्गी फंजी। रास्ना रस्या। वृश्चिकाल्युष्ट्रधूमकः। प्रकीर्या करंजकः। प्रत्यक्पुष्पी अपामार्गः। पीततैला काकादनी। उदकीर्या करंजकः। श्वेतायुग्ममेका किणिहिसंज्ञाऽन्या महाश्वेता पालिंदीसंज्ञा। तापसानां वृक्ष इंगुदः। शालिनी वृत्तम्। एषोऽर्कादिर्वर्गः कफघ्नोऽतिशयेन व्रणशोधनः।

**सुरसयुगफणिज्जं कालमालाविडंगं**
**खरबुसवृषकर्णीकट्फलं कासमर्दः।**
**क्षवकसरसिभार्गी कामुका काकमाची**
**कुलहलविषमुष्टी भूस्तृणो भूतकेशी॥३०॥**
**सुरसादिगणः श्लेष्ममेदःकृमिनिषूदनः।**
**प्रतिश्यायाऽरुचिश्वासकासघ्नो व्रणशोधनः॥३१॥**

सुरसयुगं सुतुलसीद्वयं गौरकृष्णभेदेन। फणिज्जो मरीचकः।

कालमाला कृष्णार्जकः कुवेरकभेदः। विडंगं वेल्लम्। खरबुसो मरुबकः। वृषकर्णी मूषिककर्णी। कट्फलं सोमवल्कम्। कासमर्दः कासघ्नः। क्षवकः क्षुद्विबोधनः। सरसी तुंबरपत्रिका। भार्गी अंगारवल्ली। कामुका रक्तमंजरी। अतिमुक्तक इत्यन्ये। काकमाची गुडफला। कुलहलो भूकुंबकोऽलंबुसाख्यः। विषमुष्टिः कर्कोटी। महानिंबक इत्येके। भूस्तृणं गुह्यबीजमतिच्छत्राख्यम्। भूतकेशी मांसीपुत्रजारा। मालिनी वृत्तम्। सुरसादिरयं गणः श्लेष्मादिघ्नः प्रतिश्यायादिहरो व्रणशुद्धिकृत्।

**मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः।**
**गुल्ममेहाश्मरीपांडुमेदोऽर्शःकफशुक्रजित् ॥३२॥**

मुष्कको मोक्षकः। स्नुक् गुडा उग्रकांडः। वरादीनां प्रोक्तानि नामानि। मुष्ककादिरेष गुल्मादिजित्।

**वत्सकमूर्वाभार्गी**
**कटुकामरिचं घुणप्रिया च गंडीरम्।**
**एलापाठाजाजी**
**कट्वंगफलाजमोदसिद्धार्थवचाः ॥ ३३ ॥**
**जीरकहिंगुविडंगं पशुगंधा पंचकोलकं हंति।**
**चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥**

वत्सको वनतिक्तकः। मूर्वा मधुरसा। मरीचमूषणम्। घुणप्रियाऽतिविषा। गंडीरः स्नुही। एला वेला। पाठा प्राचीना। अजाजी जीरकः। कट्वंगफलमरलुकफलम्। केचित्तु कट्वंगं टुंटुकं फलं राठमित्याहुः। अजमोदो दीप्यकः। सिद्धार्थो गौरसर्षपः। वचादीनामुक्तानि नामानि। गुर्वताष्टपदननभागार्यापूर्वसदृशशकलद्वितया। आर्यैरार्यागीतिर्गीता संगीतगीतविधौ। पशुगंधाऽजगंधा मकरंतराख्या। पंचकोलकं प्रागुक्तम्। वत्सकादयश्चलादीन् घ्नंति। आर्या।

**वचाजलददेवाह्वनागराऽतिविषाऽभयाः।**
**हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥**
**वचाहरिद्रादिगणा वामातीसारनाशनौ।**
**मेदःकफाढ्यपवनस्तन्यदोषनिवर्हणौ ॥ ३६ ॥**

वचा गोलोमी। जलदोऽबुधरः। देवाह्वं किलिमम्। नागरं विश्वम्। अतिविषा भंगुरा। अभयाऽमृता। हरिद्राद्वयं पिंडा एका पचंपचा दार्वीसंज्ञान्या। यष्ट्याह्वं क्लीतिका। कलशी पृश्निपर्णी। कुटजोद्भवा इंद्रयवा। एतौ वचादिहरिद्रादिगणावामातीसारघ्नौ मेदःकफादिहरौ च।

**प्रियंगुपुष्पांजनयुग्मपद्मा-**
**पद्माद्रजोयोजनवल्ल्यनंता।**
**मानद्रुमो मोचरसः समंगा**
**पुन्नागशीतं मदनीयहेतुः ॥ ३७ ॥**
**अंबष्ठा मधुकं नमस्करी**
**नंदीवृक्षपलाशकच्छुराः।**
**रोध्रं धातकिबिल्वपेशिके**
**कट्वंगः कमलोद्भवं रजः ॥ ३८ ॥**
**गणौ प्रियंग्वंबष्ठादी पक्वातीसारनाशनौ।**
**संधानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥३९॥**

प्रियंगुः श्यामा। पुष्पांजनं रीतिपुष्पम्। युग्मेत्यत्राऽनुवृत्तिकृतेन संबंधेनांऽजनमिति संबध्यते। तेनांऽजनयुग्मं स्रोतोंजनमेकमन्यत्सौवीरमित्यर्थोऽवतिष्ठते। पद्मा पद्मचारिणी। पद्मात् कमलाद्रजः केसरम्। योजनवल्ली मंजिष्ठा। अनंता यवासकः। मानद्रुमः शाल्मली। मोचरसः शाल्मलीनिर्यासः। समंगा नमस्कारी रक्तमूलाख्या। पुन्नागस्तुंगो रक्तकेसराख्यः। शीतं चंदनम्। मदनीयहेतुर्धातुकी। उपजातिर्वृत्तम्। अंबष्ठा मयूरशिखाख्या। मधुकं मधुयष्टिका। नमस्करी समंगा। नंदीवृक्षः प्ररोही। पलाशः प्रसिद्धः। कच्छुरा फणिहारी धन्वयवासकाख्यः। बिल्वपेशिका बिल्वमज्जा। कट्वंगः स्योनाकः। कमलोद्भवं रजः पद्मरेणुः। एतौ प्रियंग्वंबष्ठादिगणौ पक्वातीसारनाशनौ संधानीयौ हितौ पित्ते व्रणरोपणौ च। अष्टाभ्योऽथो गुरावुपचित्रा।

**मुस्तावचाऽग्निद्विनिशाद्वितिक्ता-**
**भल्लातपाठात्रिफलाविषाख्याः।**
**कुष्ठं त्रुटी हैमवती च योनि-**
**स्तन्यामयघ्ना मलपाचनाश्च ॥ ४० ॥**

मुस्ता गांगेयी। तिक्ताद्वयमेका कटुकाऽन्या काकतिक्ता। विषाख्या शुक्लकंदा। हैमवती श्वेतवचा। एते योन्यामयघ्नाः स्तन्यामयघ्ना मलपाचनाश्च। तौ ज्गौ गुरुश्चेद्भवतींद्रवज्रा।

**न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं**
**जंबूद्वयाऽर्जुनकपीतनसोमवल्काः।**
**प्लक्षाऽम्रवंजुलपियालपलाशनंदी-**
**कोलीकदंबविरलामधुकं मधूकम् ॥ ४१ ॥**
**न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधनः।**
**मेदःपित्तास्रतृड्दाहयोनिरोगनिवर्हणः ॥ ४२ ॥**

न्यग्रोधो वटवृक्षः। पिप्पलोऽश्वत्थः। सदाफल उदुंबरः। जंबूद्वयमेका राजजंबूर्बृहत्फलाऽन्या ह्रस्वफला काकजंबूः। अर्जुनः पार्थः। कपीतनः कपिचूडो वानीराख्यः। सोमवल्कः सितसारः। खदिरः प्लक्षः शृंगीप्लक्षकाख्यः। आम्रश्चूतः। वंजुलो वेतसः। पियालो द्राक्षारसप्रियः खरस्कंधाख्यः। नंदी जयवृक्षः। कोली बदरी। विरला तिंदुकी मधुकं यष्टिः। मधूकं मधूकपुष्पम्। न्यग्रोधादिरयं संग्रहणादिगुणयुक्तः। वसंततिलकम्।

**एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं**
**स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ।**
**शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकं कुंकुमं**
**चंडागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ४३**
**एलादिको वातकफौ विषं च विनियच्छति ।**
**वर्णप्रसादनः कंडूपिटिकाकोठनाशनः ॥ ४४ ॥**

एलायुग्मं सूक्ष्मैला स्थूलैला च । तुरुष्कः कृत्रिमो निर्यासविशेषः । कुष्ठं गदः । फलिनी गंधप्रियंगुः । मांसी नलदम् । जलं ह्रीबेरं । ध्यामकं दवदग्धकम् । स्पृक्का देवी । चोरको ग्रंथिपर्णी । चोचं त्वक् । पत्रं गंधपत्रम् । तगरं चक्रम् । स्थौणेयं तैलपीतकम् । जातीरसो बोलः । शुक्तिर्नखः । व्याघ्रनखः समुद्रजः । अमराह्वं देवदारुः । अगुरुः प्रसिद्धः । श्रीवासश्चंडा श्रीवेष्टकाख्यः । कुंकुमं बाह्लीकम् । चंडा कोपना । गुग्गुलुः पुरः । देवधूपः सर्जरसः । खपुरः कंदुरुकः । पुन्नागो रक्तकेसरः । नागाह्वयं नागकेसरम् । एलादिरयं वातादीन् हंति । तथा वर्णप्रसन्नत्वकृत् कंड्वादिहृच । म्सौज्सौतौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम् ।

**श्यामा दंती द्रवंतीक्रमुककुटरणी**
**शंखिनी चर्मसाह्वा**
**स्वर्णक्षीरी गवाक्षी शिखरिरजनक-**
**च्छिन्नरोहाकरंजाः ।**
**वस्तांत्री व्याधिघातो वहलवहुरस-**
**स्तीक्ष्णवृक्षात् फलानि**
**श्यामाद्यो हंति गुल्मं विषमरुचिकफौ**
**हृद्रुजं मूत्रकृच्छ्रम् ॥ ४५ ॥**

श्यामा मालविका त्रिवृत् मसूरविदनाख्या । दंती मुकूलकश्चित्राख्यः । द्रवंती उंदुरकर्णिका । क्रमुकः पट्टिकारोध्रः । कुटरणी शुक्ला त्रिवृत् । शंखिनी यवतिक्ता । चर्मसाह्वा सातला । त्राह्मीत्यन्ये । स्वर्णक्षीरी कंकुष्ठम् । गवाक्षी गवादनी स्थाणुकर्णीसंज्ञा । इंद्रवारुणीत्यन्ये । शिखरी अपामार्गः । रजनकः कंपिल्लकः । छिन्नरोहाऽमृतवल्ली । करंजः कैडर्यः । वस्तांत्री वृषगंधा । व्याधिघातः कृतमालः । बहलबहुरस इक्षुः । तीक्ष्णवृक्षात् पीलोः फलानि । श्यामादिरेष गुल्मादीन् हंति । म्रौ भ्नौ याश्च त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद्विरामैः ।

**त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।**
**युंज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥४६॥**

इति प्रकारे । त्रयस्त्रिंशदिति वर्गाः कथिताः । अत्र संख्योपादानमेषां प्राधान्यख्यापनार्थम् । अन्येऽप्येवंप्रकाराः संत्येते तु प्रधाना इत्यर्थः । सुखग्रहणार्थं वा संख्यावचनं कृतम् । एतेषु त्रयस्त्रिंशत्सु वर्गेष्वलाभतोऽलाभे सति तद्विधं रसवीर्यपाकैस्तुल्यं द्रव्यमन्यदनुक्तमपि युंज्यात् । नचैतावदत्र विधेयमित्याह । जह्यादयौगिकम् । न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथालाभमन्यत्तद्विधं द्रव्यं युंज्याद्यावदयौगिकं यत्तु द्रव्यं तच्च त्यजेत् । दोषरोगातुराद्यपेक्षया पुरुषस्याऽस्मिन् काले वयसि वा यो गणः समस्तत्साध्यामयशमनाय च वारयितुं युक्तः । एकस्य द्रव्यस्याऽलाभे द्वयोर्बहूनां वा तत्प्रकारमेकमपरं द्रव्यं द्वे वा बहूनि वा द्रव्याणि संयोज्य प्रयोज्यः । एवं न समस्तद्रव्यापेक्षा कार्येति । यथा च सुश्रुतः । समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत् । पृथङ्मिश्रान् समस्तांश्च गणान् वा व्यस्तसंहतानिति । त्रयस्त्रिंशदिति त्रेस्त्रयश्चेति त्रयसादेशः । यौगिकमिति योगाय प्रभवतीत्यर्थे योगाद्यचेति ठञ् ।

**एते वर्गा दोषदूष्याद्यपेक्ष्य**
**कल्कक्वाथस्नेहलेहादियुक्ताः ।**
**पाने नस्येऽन्वासनेऽतर्वहिर्वा**
**लेपाभ्यंगैर्घ्नंति रोगान् सुकृच्छ्रान् ॥ ४७ ॥**

एते पूर्वोक्ता वर्गा दोषदूष्यवयोबलादीनपेक्ष्य कल्कादियुक्ताः सुकृच्छ्रान् रोगानामयान् घ्नंति । युक्ता इत्यत्रांऽतर्भावितण्यर्थो युजिः । ततः कल्कादिषु वैद्येन योजिता इत्यर्थोऽवतिष्ठते । आदिशब्देन फांटशीतकषायादिपरिग्रहः । कथमेते घ्नंतीति प्रकारं युक्त्याऽऽह । पाने इत्यादि । पानाद्युपयोगे सति । लेपाभ्यंगैरिति बहुवचनेन लेपाभ्यंगस्नानादिभिश्चेति योज्यम् । मालिनी वृत्तम् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां पंचदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

शोधनादिगणसंग्रहाऽध्यायादनंतरं स्नेहाध्यायारंभः । यतः शोधनं स्नेहस्वेदावंतरेण न संभवति । वक्ष्यति हि । स्नेहस्वेदावनभ्यस्येत्यादि । तस्मात्स्नेहस्वेदाऽध्याययोरारंभो युक्त इत्याह ।

**अथाऽतः स्नेहविधिमध्यायं व्याख्यास्यामः ।**

स्नेहस्य सर्पिरादेर्विधिः स्नेहविधिस्तं व्याख्यास्यामः । शेषं पूर्ववद्योज्यम् ।

**गुरुशीतसरस्निग्धमंदसूक्ष्ममृदुद्रवम् ।**
**औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १ ॥**

गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति । विपरीतमतो यल्लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसांद्रगुणोपेतं तद्विरूक्षणम् । प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यम् । तथा च लघ्वपि सार्षपं तैलं छागं च दुग्धं तथा विष्किरप्रतुदमृगाख्यं वर्गत्रयं स्नेहनं भवति । तथोष्णमपि मत्स्यमहिषमांसं स्नेहनं भवति । एवं रूक्षणेऽपि वेद्यम् । तथा च यवो गुरुशीतसरादिगुणयुक्तोऽपि वि-

रूक्षणस्तथा राजमाषोऽपि । स्नेहने प्रकृतेऽपि विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहस्य तारतम्यप्रतिपादनार्थः ।

**सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।**
**तत्राऽपि चोत्तमं सर्पिः संस्कारस्याऽनुवर्तनात् २**

स्नेहेषु क्षीरानूपाऽमिषादिषु मध्ये सर्पिरादयश्चत्वारः स्नेहाः प्रकर्षेण वराः । आशु स्वकार्यकरणात् । तत्राऽपि च तेष्वपि चतुर्षु मध्ये सर्पिरुत्तमं संस्कारस्याऽनुवर्तनात् । ननु यदि संस्कारमनुरुध्यते सर्पिस्तदानीं मरिचचित्रकादिद्रव्यादिभिः संस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः । न चेदं दृष्टम् । यदस्य शैत्यादयो गुणा विनश्यंत्यौष्ण्यादयश्चोत्पद्यंत इति । अत्रोच्यते । अनुशब्दोऽत्र सहार्थे । अनेकार्थत्वान्निपातानाम् । तेनायमर्थः । सर्पिषो गुणाः संस्कारगुणैः सह वर्तंते नतु तैलादीनाम् । तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजंति । अत्र चोदाहरणं चंदनाद्यं तैलम् । अतो द्रव्यगुणांतरैरनभिभूतगुणत्वात्सर्पिष इतरेषां तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम् । अत एव च वातपित्तज्वरादिषु विकारेषु घृतसाध्येषु भेषजं तैलं नेष्टमनिष्टसंपादनात् । तैलसाध्येषु तु विकारेषु तदुपशांत्यर्थं तथाविधद्रव्यसंस्कृतं घृतमपीष्टम् । तद्धि न तथाऽनिष्टहेतुः । तस्मात्सर्वस्नेहेभ्यः सर्पिरेवोत्तमम् । संस्कारस्याऽनुवर्तनादिति न्यायात् न्याय्यमेव । माधुर्यादिहेतोश्च ।

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ।**

यो यः पूर्वो यथापूर्वं यो य उत्तरो यथोत्तरमिति यथा सादृश्य इत्यव्ययीभावः । उत्तरमपेक्ष्य पूर्वः पूर्वं चापेक्ष्योत्तरः । तेन चतुर्णां स्नेहानां यथाविहितानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जसर्पिःसंज्ञका यथापूर्वत्वेन संबध्यंते नतु तैलाख्यः स्नेहस्तस्य पूर्वत्वाभावात् । न ह्यन्योऽस्मात्कश्चिदुत्तरोऽस्ति यदपेक्षयैष पूर्वत्वमात्मन आसादयेत्तस्मान्नास्ति पूर्वत्वसंबंधस्तैलस्य । तथा चतुर्णां स्नेहानां त्रय एव स्नेहा मज्जवसातैलाख्या यथोत्तरत्वेनाऽभिसंबध्यंते न सर्पिःसंज्ञकः स्नेह उत्तरत्वाभावात् । न ह्यन्यः कश्चिदस्य पूर्वो विद्यते यदपेक्षयैवोत्तरत्वमात्मन आसादयतीत्युक्तम् । तदेवं यथापूर्वं पित्तघ्नत्वं वसामज्जसर्पिषां सामान्येनोक्तम् । विशेषेण च वसा पित्तघ्नी मज्जा पित्तघ्नतरः सर्पिः पित्तघ्नतममित्यर्थः । इतरघ्ना इति । इतरौ वातकफौ पित्तापेक्षया तौ घ्नंति पराकुर्वंतीतीतरघ्नाः । यथोत्तरं त्रयः स्नेहा मज्जवसातैलाख्या वातश्लेष्मघ्नाः । तेन मज्जा वातश्लेष्मघ्नो वसा वातश्लेष्मघ्नतरा तैलं वातश्लेष्मघ्नतममिति प्रकृतम् । अन्ये त्वेवं व्याचक्षते । श्लेष्मणि स्नेहनिषेधादितरघ्ना इति सामान्योक्तावपि वातघ्ना इति गम्यते । अथवा द्रव्यांतरसंस्कृतसर्पिराद्यपेक्षया कफस्याऽपीतरशब्देन ग्रहणमिति ।

**घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ॥३॥**

घृताद्गुरुणः सकाशात्तैलं गुरु गुरुतरमित्यर्थः । वसा तु तैलाद्गुरुतरा ततोऽप्यतिशयेन मज्जा गुरुतमः ।

इदानीं यमकस्नेहस्त्रिवृतस्नेहो महास्नेह इति तत्रतत्रोच्यते न च ते ज्ञायंत इत्याह ।

**द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।**

द्वाभ्यां स्नेहाभ्यां यमको नाम्ना स्नेहः । यथा सर्पिर्वसाभ्यां सर्पिस्तैलाभ्यां सर्पिर्मज्जभ्यामित्यादि । एवं त्रिभिः स्नेहैस्त्रिवृतश्चतुर्भिर्महास्नेह उच्यत इति शेषः ।

संप्रति स्नेह्यान्निरूपयति ।

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिंतकाः ॥ ४ ॥**
**वृद्धबालाऽबलकृशा रूक्षाः क्षीणास्त्ररेतसः ।**
**वातार्तस्यंदतिमिरदारुणप्रतिबोधिनः ॥ ५ ॥**
**स्नेह्याः**

स्वेद्यादयः स्नेह्याः स्नेहार्हाः । न ह्यस्नेहितः स्वेद्य इत्यर्थः । एवं योऽपि शोध्यः सोऽपि पूर्वं स्नेह्यः । स्वेदार्हाः स्वेद्याः । अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यः । एवं संशोध्याः शोधनार्हाः । मद्यासक्तस्त्रीसक्तव्यायामसक्ताश्च तथा येऽपि चिंतकास्तथा वृद्धा बाला अबला अल्पबला इत्यर्थः । तथा कृशा रूक्षाः क्षीणरुधिराः क्षीणशुक्राश्च । वातार्ता वातपीडिताः । स्यंदादिषु प्रत्येकमिन् योज्यः । स्यंदोऽभिष्यंदस्तिमिरोऽक्षिरोगः । दारुणप्रतिबोधिनः कृच्छ्रोन्मीलिन इत्यर्थः । एते स्नेह्याः स्नेहार्हाः ।

**न त्वतिमंदाऽग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।**
**ऊरुस्तंभाऽतिसाराऽमगलरोगगरोदरैः ॥ ६ ॥**
**मूर्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।**
**अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ७ ॥**

अतिमंदाग्न्यादयो न स्नेह्याः । अतिशब्दो यावद्दुर्बलेषु प्रत्येकं योज्यः । तेनाऽतिदुर्बला न स्नेह्या इत्यर्थः । अत एवाल्पबलाः स्नेह्या नत्वतिदुर्बला इति न पूर्वापरविरोधः । अतितीक्ष्णाग्नेः स्नेहनादत्यग्निवृद्धिः । अतिस्थूलस्य चाऽग्निमेदसोर्वृद्धिः । अतिदुर्बलस्य च जरणाशक्तेः स्नेहस्य व्यापत् । ऊरुस्तंभादिभिर्यावन्मद्येन च पीडिता न स्नेह्याः । अत्र शोधनप्रसंगे तु स्नेहनं विना न शोधनमिति यावत् । अपप्रसूता स्रुतगर्भा न स्नेह्येति लिंगवचनविपरिणामः । प्रयुक्ते च नस्यादिकर्मणि सर्व एव न स्नेह्याः ।

सांप्रतं चतुर्णां स्नेहानां मध्ये यो येभ्यो हितस्तं दर्शयन्नाह ।

**तत्र धीस्मृतिमेधाऽग्निकांक्षिणां शस्यते घृतम् ।**

तत्र तेषु स्नेहेषु मध्ये धीस्मृत्याद्यभिलाषिणां घृतं शस्यते यावदग्निकांक्षिणाम् । अन्ये तु मेधादिकांक्षिणामिति पठंति । आदिशब्देन स्वरायुर्वर्णादिपरिग्रहः ।

**ग्रंथिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ॥ ८ ॥**
**तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ।**

तैलं ग्रंथ्यादिरोगिषु शस्यते । लाघवदार्ढ्यार्थिषु क्रूरकोष्ठेषु प्राणिषु च शस्यते ।

**वाताऽतपाऽध्वभारस्त्रीव्यायामक्षीणधातुषु ॥ ९॥**
**रूक्षक्लेशक्षमाऽत्यग्निवातावृतपथेषु च ।**
**शेषौ**

वातादीनां क्षीणधातुना प्रत्येकं संबंधः । वातक्षीणधातुषु एवमातपक्षीणधातुष्वित्यादि । शेषौ घृततैलाभ्यामुक्ताभ्यामन्यौ वसामज्जानौ शस्येते । तथा रूक्षेषु क्लेशसहेषु । अत्यग्निषु बलवदग्निष्विति द्रष्टव्यम् । अन्यथाऽत्यग्निषु स्नेहनिषेधात्पूर्वापरविरोधः स्यात् । अथवा । अत्यग्निष्वपि वसामज्जानावनुजज्ञे । अपवादवाक्यत्वादस्येति व्याख्येयम् । वातेनाऽवृताः पंथानश्छिद्राख्या येषां तेषु च शस्येते शेषौ ।

वसायास्त्वन्यदपि विशेषांतरमाह ।

**वसा तु संध्यस्थिमर्मकोष्ठरुजासु च ॥१०॥**
**तथा दग्धाऽहतभ्रष्टयोनिकर्णशिरोरुजि ।**

तुर्विशेषे । चः समुच्चये । रुजाशब्दः प्रत्येकं संबध्यते । संधिरुजास्वस्थिरुजास्वित्यादिषु । तथा दग्धरुज्याहतरुजि तथा भ्रष्टयोनिरुजीत्येवं संबंधः कार्यः ।

इदानीं कस्मिन्काले कस्य स्नेहस्योपयोगः शस्त इति दर्शयन्नाह।

**तैलं प्रावृषि वर्षांते सर्पिरन्यौ तु माधवे ॥ ११॥**

तैलं प्रावृषि शस्यत इति संबंधः । एवमुत्तरत्राऽपि योजनीयम् । स्वस्थस्य स्नेहनार्थं सर्वत्रैव स्नेहस्य प्रसंगे नियमोऽयं क्रियते । तैलं प्रावृष्येव वर्षांत एव सर्पिर्वसामज्जानौ माधव एवेति।

ननु वर्षासु तैलं वर्षांते सर्पिर्वसामज्जानौ माधव इति योऽयं नियमः स किंचिदपेक्ष्य वर्तते आहोस्विदनपेक्ष्येत्यस्मिन् पर्यनुयोग इदमाह ।

**ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ।**

साधारणे ऋतौ श्रावणादौ संशोधनात् पूर्वं स्नेहनार्थं स्नेहस्तैलादिकः शस्तः । तथाऽह्नि वासरे न निशि । तथा विमले रवौ जलदनीहारादिनाऽनाच्छादिते खरांशौ । स्नेह इति सामान्यशब्दप्रयोगात्सर्वः स्नेहः सर्पिरादिश्चतुष्प्रकारो गृह्यते ।

**तैलं त्वरायां शीतेऽपि**

त्वरायां सत्यां व्याधिक्रियां प्रति प्राप्ते काले स्नेहयोग्यतायां सत्यां शीते हेमंतशिशिराख्ये काले तैलं संशोधनात्पूर्वं स्नेहनार्थं शस्तं नान्यस्नेहः । अपिशब्दाच्च केवलं वर्षास्ववर्षासु च शस्त इत्यर्थः ।

सर्वस्य स्नेहस्याऽह्न्युपयोगाद्रात्रावप्रयोगः प्राप्त इत्याह ।

**घर्मेऽपि च घृतं निशि ॥ १२ ॥**
**निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ।**

न केवलं शरदि घृतं प्रयुंजीत यावद्धर्मेऽपि निश्युपयुंजीत । नच घर्म एव निश्युपयुंजीत यावत्पित्ते कुपितपित्तजे वा विकारे तथा पवने कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुंजीत न दिवा न च तैलं वसामज्जानौ वा । तथा पित्तवति पित्ताधिके संसर्गे वातपित्ताख्ये श्लेष्मपित्ताख्ये कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुंजीत । पित्ते पवन इत्येतद्दोषविकारोभयोपलक्षणार्थं वेद्यम् । पित्तवतीति भूम्नि मतुप् ।

**निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा १३**

अन्यथोक्तप्रकारादपरेण प्रकारेण यथा शीतकाले निशि घृतोपयोगाद्वातकफाद्धेतो रोगा भवेयुः । तथा दिवा घर्मे काले तैलोपयोगात्पित्ततः पित्ताद्रोगाः स्युः । वसामज्ज्ञोस्त्वनिश्चितस्वरूपत्वान्नोष्णकाले नाऽपि शीतकाले त्वरायां सत्यामुपयोगस्तंत्रकारेण दर्शितः । तथा चोक्तम् । यथासत्वं तु शैत्योष्णे वसामज्ज्ञोस्तु निर्दिशेदिति ।

कथं स्नेह उपयोज्य इत्याह ।

**युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ।**
**नस्याभ्यंजनगंडूषमूर्धकर्णाऽक्षितर्पणैः ॥ १४ ॥**

युक्तिर्योग उपायलक्षणः । युक्त्या मात्राकालक्रियाभूमिदेहदोषस्वभावया स्नेहं सर्पिरादिकमवचारयेदुपयुंजीत । केन सहेत्याह । भक्ष्याद्यन्नेन । आदिशब्देन भोज्यलेह्यपेयस्य त्रिविधस्याऽप्यन्नस्य ग्रहणम् । तथा बस्तिभिर्नस्येनाभ्यंजनेन गंडूषेण च स्नेहमवचारयेत् । मूर्धादीनां तर्पणशब्देन प्रत्येकं संबंधः । तेन मूर्धतर्पणेन शिरोबस्त्याख्येन तथा कर्णतर्पणेन कर्णपूरणाख्येन तथाऽक्षितर्पणेन तर्पणपुटपाकविध्युक्तेन । भक्ष्यं शशांककिरणादि तेन भक्ष्येण सह । आदिग्रहणादोदनादयो मुन्युक्ता गृह्यंते । तथा च मुनिः । ओदनश्च विलेपी च रसो मांसं पयो दधि । यवागूः सूपशाके च यूषः कांबलिकः खलः । सक्तवस्तिलपिष्टं च मद्यं लाजास्तथैव च । भक्ष्यमभ्यंजनं बस्तिस्तथैवोत्तरबस्तय इत्यादि । बस्तिभिरिति बहुवचननिर्देशो बस्तित्रयग्रहणार्थः । तेन निरूहोऽन्वासनं बस्तिरुत्तर इति ।

**रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ।**
**स्नेहस्याऽन्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ॥**

रसभेदश्चैककत्वं च ताभ्यां रसभेदैककत्वाभ्यां स्नेहस्याऽवचार्यमाणस्य चतुःषष्टिर्विचारणा भवंति । रसभेदेनैकैकहीनानित्यादिग्रंथनिर्दिष्टेन त्रिषष्टिसंख्यावच्छिन्नेन सहोपयुक्तस्य स्नेहस्य तथैककत्वेनाऽसहायेन केवलेन स्नेहेन सहाऽस्य चतुःषष्टिर्विचारणाः स्नेहप्रयोगकल्पना या एता भक्ष्याद्यन्नेन तथा रसभेदेन मूर्धकर्णाक्षितर्पणेन च या एताः क्रमाद्यथाक्रमं निर्दिष्टास्ताः कल्पनाः स्नेहस्याऽन्याभिभूतत्वादन्येन भक्ष्याऽदिना बहुना तथा रसभेदेन सहोपयुक्तस्याऽभिभूतत्वात्तथाऽल्पत्वादल्पोपयोगित्वान्मूर्धाऽक्षितर्पणादौ पानद्रवप्रभृतस्येवावचारयितुमशक्यत्वाच्च विचारणाः स्मृताः । आयुर्वेदस्य कर्तृभिरिति शेषः ।

**यथोक्तहेत्वभावाच्च नाऽच्छपेयो विचारणा ।**

स्नेहस्य विचारणासंज्ञात्वे यथानिर्दिष्टो हेतुस्तस्य यथोक्तस्य हेतोरभावादविद्यमानहेतुत्वाद्योऽच्छपेयः स्नेहः केवल एव न सा विचारणा केवलोपयोगित्वाद्बहूपयोगित्वाच्चेत्यर्थः । नन्विह केवलः स्नेहो न विचारणेत्युच्यते । प्राक्केवलस्यैव स्नेहस्य बस्त्याद्युपयोगविचारणेत्यभ्यधायि तदेतत्पूर्वापरव्याहतमिव मन्यामहे । नैतदस्ति । अच्छपेय इत्यस्य ह्ययमर्थः । अच्छः केवलो यः स्नेहः पीयते सा विचारणा न भवति । मूर्धादितर्पणादिना तु केवलस्य स्नेहस्य य उपयोगः सा च विचारणेति ।

**स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥१६॥**

सोऽच्छपेयाख्यः कल्पः प्रयोगः स्नेहस्य श्रेष्ठः प्रशस्यतमः । कुत इत्याह । स्नेहकर्माशुसाधनात् स्नेहकर्मणां तर्पणमार्दवादीनां शीघ्रं संपादनात् ।

अधुना स्नेहस्य त्रिविधमात्रालक्षणमधिकृत्याह ।

**द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यंति याः क्रमात् ।**
**ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् १७**
**कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ।**

द्वाभ्यां यामाभ्यां या स्नेहस्य मात्रा प्रयुक्ता जाठरानलवशाज्जरां याति सा तस्य ह्रस्वा मात्रा । चतुर्भिर्यामैर्या जीर्यति सा तस्य मध्यमा मात्रा । अष्टभिर्यामैर्या जीर्यति सोत्तमा मात्रा । क्रमाद्यथाक्रमं ता ह्रस्वमध्यमोत्तमा मात्रास्ताभ्यश्च तिसृभ्यो मात्राभ्यो ह्रसीयसीमतिशयेन ह्रस्वां कल्पयेत् । वैद्य इति शेषः । ह्रस्वमध्यमोत्तमा इति निर्देशे ङ्यापोरित्यादिना ह्रस्वः । ह्रस्वा मात्रा यामद्वयजरणलक्षणा ततोऽप्यर्वाक्कालेन या जरां याति सा ह्रसीयसीति । दोषादीन् दोषभेषजदेशकालबलशरीराऽऽहारसत्वसात्म्यप्रकृतीर्वीक्ष्याऽकलय्य प्राक् पूर्वमेवाऽज्ञातकोष्ठे पुरुष उत्तममात्राविषये ह्रसीयसीं कल्पयेत् । ततो ह्रस्वामनंतरं मध्यमामनंतरमुत्तमाम् । एवं मध्यममात्राविषये ह्रसीयसीं ह्रस्वमात्राविषयेऽपि ह्रसीयसीं प्राक्कल्पयेत् । अतिप्रत्यपायभयात् । एवकारोऽवधारणे । तुशब्दो यथोत्तरमिति क्रमनिर्देशार्थः । संग्रहेऽप्युक्तम् । अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयमिति । इयं ह्रस्वेयं ह्रस्वा इयमनयोरतिशयेन ह्रस्वा ह्रसीयसीतीयसुनः स्थूलदूरेत्यादिना लोपः । अन्यैस्तु पलद्वयपलचतुष्टयपलषट्कसंख्यावच्छिन्ना मात्रा उक्ताः । नचैतद्युज्यते । यतो जठरानलशक्तिमनपेक्ष्य स्नेहमात्रा प्रयुज्यमानाऽनर्थायैव । अतोऽस्माभिः पलद्वयादिसंख्याऽवच्छिन्ना नोक्ता । मुनेरपि नैतन्मतम् । तद्ग्रंथो हि । अहोरात्रमहः कृत्स्नमर्धाहं च प्रतीक्ष्यते । प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रतीति ।

अधुना शोधनशमनबृंहणभेदात्त्रिविधस्य स्नेहस्य कालमात्रालक्षणमधिकृत्याह ।

**ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥१८॥**

ह्यस्तनेऽन्न आहारे जीर्ण एव जीर्णमात्र एव न त्वन्नाभिलाषे सति शुद्धये शोधनार्थं बहुरुत्तमया मात्रया स्नेहोऽच्छः केवलः पेयत्वेन शस्यते । संजातबुभुक्षेण तु पीतो जाठरानलस्य दीप्तत्वाच्छोधनकार्यमकुर्वाणस्तद्योग्यतां चाऽनुत्पादयन्नाश्वेव जरामुपैति । वमनमपि बुभुक्षितस्य न संपद्यते कफाऽपचितेः पूर्वोक्ताद्धेतोः । तस्मायुक्तमुक्तं ह्यस्तने जीर्ण एवान्न इति ।

**शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ।**

शमनो यो रोगस्य शमनायोपयुज्यते स्नेहः स क्षुद्वतो जातबुभुक्षस्य शस्यते जातायां बुभुक्षायां न जीर्णमात्र एवान्ने शोधन इव । शमनो हि स्नेहो यत्र तत्रस्थं दोषं कुपितं सर्वशरीरव्यापित्वात् शमयति । यदि पुनर्जीर्णमात्र एवान्ने स्नेहोऽयमबुभुक्षितस्यैवोपयुज्यते तदानीं स्रोतसां कफाद्युपलेपानिवर्तनात्तत्संपृक्तोऽसौ स्नेहो न सर्वं शरीरं व्याप्नुते । अव्याप्नुवंश्च न दोषं शमयेत् । तस्मात्क्षुद्वत एवायं शस्यते । स च मध्यममात्रयाऽनन्नः केवल एव भक्ष्यादिना विचारणाँ आहारेण रहितः । अच्छ एव पेय इत्यर्थः । अत्र चोत्तमया मात्रया स्नेहपानदिनानंतरं पथ्यं कार्यं पुनः स्नेहप्रयोगः पुनरन्यस्मिन्नहनि पथ्यं कार्यम् । मध्यममात्रया स्नेहपाने तु लघुभोजिनो न याममात्रेऽन्नाकांक्षा भवति । तदा च स्नेहोपयोगे रात्र्यारंभे रात्रियामार्धे गते वा रसकौदनप्रायं भोजनं भोज्यं मात्रयैव । ग्रंथकारो हि शमने स्वल्पभोजनमेवाऽनुजज्ञे । वक्ष्यति हि । उपचारस्तु शमने कार्यः स्नेहे विरिक्तवदिति । सुश्रुते चोक्तम् । परिषिच्याऽद्भिरुष्णाभिर्जीर्णस्नेहं ततः परम् । यवागूं पाययेदुष्णामक्लिन्नामल्पतंडुलाम् । पेयो यूषो रसो वा स्यादकृतः सौरभायुतः । कृतो वाऽप्यल्पसर्पिष्को विलेपी वा विधीयत इति ।

**बृंहणो रसमद्याद्यैः सभक्तोऽल्पः**

बृंहणः स्नेहो रसमद्याद्यैः सह शस्यते । रस इत्यविशेषोक्तौ ज्ञेयो मांसभवो रस इति तंत्रांतरोक्त्या रसशब्देन मांसरसोऽत्र बोद्धव्यः । आदिशब्देन क्षीरखंडादिद्रवरूपस्य ग्रहणम् । तथा सह भक्तेनौदनेनाऽसौ वर्तत इति सभक्तः शस्यते । एष च स्नेहो ह्रसीयसीतोऽपि मात्रातोऽल्पः ।

**हितः स च ॥ १९ ॥**
**बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ।**
**स्त्रीस्नेहनित्यमंदाग्निसुखितक्लेशभीरुषु ॥ २० ॥**
**मृदुकोष्ठाऽल्पदोषेषु काले चोष्णे कृशेषु च ।**

स च स्नेहो बालादिषु हितः । बालादीनामितरेतरद्वंद्वः । पिपासार्तास्तृट्पीडिताः । स्नेहद्विषो ये स्वभावेनैव स्नेहं द्विषंति । स्त्रीस्नेहयोर्नित्यशब्देन संबंधः । स्त्रीनित्येषु स्नेहनित्येषु चेत्यर्थः । काले चोष्णे ग्रीष्मादौ कृशेषु नरेषु च हितः ।

स चोपयुक्तः किं करोतीत्याह ।

**प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ॥२१॥**
**व्याधीन् जयेद्बलं कुर्यादंगानां च यथाक्रमम् ।**

प्राक् च मध्यं चोत्तरं च तत् प्राङ्मध्योत्तरं भक्तं यस्मिन्स्नेहे स प्राङ्मध्योत्तरभक्तः। तेनाऽयमर्थः। भक्तस्याऽदावुपयुक्तोऽसौ स्नेहोऽधोदेहजान् व्याधीन् जयेत्। ध्यम उपयुक्तो मध्यदेहजान् भक्तस्योपर्युपयुक्त ऊर्ध्वदेहजानिति यथाक्रमम्। तथांऽगानां शरीरावयवानामधोमध्योर्ध्वसंज्ञकानां बलं कुर्यात्। इदं चोक्तम्। मारुतेऽभ्यधिके सर्पिः सदा सलवणं हितम्। केवलं चाऽधिके पित्ते कफे सत्र्यूषणं तथेति।

**वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ॥ २२ ॥**
**आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु।**
**जीर्णाऽजीर्णविशंकायां पुनरुष्णोदकं पिबेत् ॥२३॥**
**तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः।**

अच्छे पेये स्नेह उत्तममध्यमह्रस्वमात्रोपयोजितेऽनु पश्चादुष्णं वारि पिबेत्। किमर्थम्। तत्सुखपक्तये तस्य स्नेहस्य सुखपक्तिः सुखेन पाकस्तदर्थम्। तथाऽऽस्योपलेपशुद्ध्यै स्नेहलिप्तस्य मुखस्य शुद्धिनिमित्तम्। तुवरतैले भल्लातकतैले वाऽच्छपेयेऽप्युष्णोदकं न पिबेत्। तयोरत्युष्णवीर्यत्वादिति भावः। तुवरस्याऽयं विकारः स्नेहस्तौवरस्तस्य विकार इत्यण्। एवमारुष्करे च। चिरपीते च स्नेहे जीर्णाऽजीर्णं प्रति संशये सति भूयोऽप्युष्णं जलं पिबेत्। अनुपानापेक्षं पुनर्ग्रहणं न वीप्सार्थम्। तेनोष्णोदकपानेनोद्गारस्य विशुद्धिर्भवेत्। ततश्च जीर्णाऽजीर्णशंकातोऽधिकमंगलाघवं रुचिश्च स्नेहस्य पातुः स्यात्। संग्रहेऽप्यन्यदप्युक्तम्। यथा। ततो गुरुप्रावरणो निवाते शयने स्थितः। जरणांतं प्रतीक्षेत तृष्यनुष्णाऽल्पवारिपः। शिरोरुग्भ्रमनिष्ठीवमूर्छादाहाऽरुचिक्लमैः। जानीयाद्भेषजं जीर्णाजीर्णं तच्छांतिलाघवात्। अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिरिति।

**भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि२४**
**द्रवोष्णमनभिष्यंदि नाऽतिस्निग्धमसंकरम्।**
**उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ॥ २५ ॥**
**न वेगरोधी व्यायामक्रोधशोकहिमातपान्।**
**प्रवातयानयानाध्वभाष्याभ्यासनसंस्थितिः ॥ २६ ॥**
**नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च।**
**यान्यहानि पिबेत्तानि तावंत्यन्यान्यपि त्यजेत् ॥२७**
**सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः।**

भोज्यो भोजयितव्यो नरः। किं तत्। अन्नम्। कीदृशम्। द्रवोष्णम्। अत्र चोभयथा समासः। द्रवेण मुद्गयूषादिना सहोष्णमन्नं द्रवोष्णम्। तथा केवलं द्रवं च तदुष्णं च द्रवोष्णं पेयादिकं केवलमेवेति। तथाऽनभिष्यंदि न कफकृत्। तथा नाऽतिस्निग्धमर्थादीषत्स्निग्धम्। तथाऽसंकरमसंकीर्णमपथ्येनामिश्रितमित्यर्थः। कः पुरुषः किं कुर्वन्नीदृशमन्नं मात्रया भोजयितव्य इत्याह। श्वः स्नेहं पास्यन्पातुमिच्छन्। तथा तस्मिन्नेव दिने स्नेहं पिबेत्। तथा पीतवानपि यः स्नेहम्। अपिः समुच्चये। ननु मात्राशी सर्वकालं स्यादिति प्रागुक्तमेव तत्किमिह पुनर्मात्राग्रहणेन। ब्रूमः। मात्राशब्दस्तत्र प्रमाणार्थ इह स्वल्पार्थः। तेनायमर्थः। यावदन्नमस्य सम्यग्यथाकालं परिणमति तावताऽप्यन्नादनेन स्वल्पं भोज्यमिति। तथाऽसौ स्नेहस्य पाता उष्णोदकोपचारी स्यात्। उष्णोदकमुपचरितुं सेवितुं शीलमस्य स एवम्। तथा ब्रह्मचारी ललनासंगरहितः। क्षपाशय इत्यधिकरणे शेतेरित्यच्। क्षपाशय इत्यनेन दिवास्वप्नस्य रात्रिजागरस्य च निषेधः। स्नेहं पिबति यावंत्यहानि तावंत्यन्यान्यपि स्नेहपानरहितानि व्यायामादींस्त्यजेत्। सर्वकर्मसु वमनविरेचनादिष्वयमुष्णोदकोपचारीत्यादिक्रमो विधिरित्यर्थः। यानादिष्वहःस्वप्नोऽजीर्णवर्ज्यो नायं विधिरिति प्रदर्शनार्थं प्रायोग्रहणम्। व्याधिक्षीणेषु च प्रायोऽयमेव विधिः। अत्राऽप्यतीसारादिष्वहःस्वप्नादीनामनुज्ञानात्प्रायोग्रहणम्।

**उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ॥ २८ ॥**

तुर्व्यतिरेके। शमने स्नेहे तूपयुक्ते उपचारो भोजनादिविधिर्विरिक्तवत्कार्यः। यथा विरिक्ते पेयादिकः क्रमस्तथाऽस्मिन्नपीत्यर्थः।

**त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत्।**
**सम्यक्स्निग्धोऽथवा यावदतः सात्मी भवेत्परम्२९**

मृदौ कोष्ठे सति पुरुषस्त्रिदिनमच्छं स्नेहं पिबेत्। क्रूरकोष्ठे सप्ताहम्। मध्यकोष्ठस्तु षड्रात्रम्। मध्यकोष्ठस्त्वत एव लक्षणादधिगम्यते। मध्यकोष्ठे च स्नेहगो दोषः संग्रहे कथितः। यथा। चत्वार्यहानि पंच वा स्नेहं पिबेदिति। यदि च त्र्यहेण सम्यक्स्निग्धलक्षणं न स्यात्ततश्चतुष्पंचरात्रमपि स्नेहं पिबेत्। मध्यकोष्ठस्तु षड्रात्रं पिबेदित्याह। सम्यक्स्निग्धोऽथवा यावदित्यादि। अथवा नैष नियमः सम्यक्स्निग्धलक्षणोत्पत्तिरेव नियमोऽतः सप्ताहादप्यूर्ध्वमच्छस्नेहः पेयो यावत्स्निग्धलक्षणं स्यात्। अतःपरं स्नेहः सात्मीभवेत्। सात्मीभूते च स्नेहे यो दोषः स संग्रहे कथितः। यथा। सात्मीभूतो हि कुरुते न मलानामुदीरणम्। अतियोगेन वा व्याधीन् यथाँऽधोद्योतयोजनादिति। यदि तु सप्ताहेनाऽपि स्नेहलक्षणं नोत्पद्यते तदा दिनमेकं विश्रमय्य पुनः स्नेहो योज्य इति सद्वैद्याः।

**वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्।**
**स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः॥३०॥**
**अतिस्निग्धे तु पांडुत्वं घ्राणवक्त्रगुदस्रवाः।**

सम्यक्स्निग्धे पुरुषे तु वातानुलोम्यादि क्लमांतं लक्षणं भवति। वर्चः शकृत् स्निग्धं तथाऽसंहतं शिथिलम्। रूक्षेऽस्निग्धे विपर्ययो वैपरीत्यम्। अतिस्निग्धे तु स्नेहस्याऽतियोजनात्पुनः पांडुत्वादयो भवंति। स्रवशब्दस्य घ्राणादिभिः प्रत्येकं समासः।

**अमात्रयाऽहितोऽकाले मिथ्याहारविहारतः ॥३१॥**
**स्नेहः करोति शोफार्शस्तंद्रास्तंभविसंज्ञताः।**
**कंडुकुष्ठज्वरोत्क्लेशशूलाऽऽनाहभ्रमादिकान् ॥३२॥**

अमात्रः पीतः स्नेहः सर्पिरादिः शोफाऽदीन् करोति । आदिशब्देन तु बलक्षयजाड्यवाग्ग्रहादयः संग्रहोक्ता गृह्यंते । अहितो यो यस्य प्रतिषिद्धः स्नेहः । तथाऽकाले ग्रीष्मादौ पूर्वं प्रतिषिद्धे । तथा मिथ्याऽऽहारतो द्रवोष्णमित्यादिविपर्ययेण । तथा मिथ्याविहारत उष्णोदकोपचारी स्यादित्यादिविपर्ययेण ।

**क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ।**
**तक्रारिष्टं खलोद्दालयवश्यामाककोद्रवाः ॥ ३३ ॥**
**पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ।**
**यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ॥३४॥**

स्नेहव्यापदि स्नेहविधिविभ्रंशे सति क्षुत्तृष्णादि साधनं चिकित्सा । क्षुत्तृष्णानिग्रहौ क्षुत्तृष्णाशब्देनाऽत्रोक्तौ । उल्लेखनं वमनम् । रूक्षशब्दस्य पानादिभिस्त्रिभिर्योगः । तक्राणि चारिष्टश्चेत्येवं समासः । खलो व्यंजनविशेषः प्रागुक्तः । उद्दालः शालिविशेषः । यथास्वं दोषानुगुण्येन प्रतिरोगं यद्यस्मिन् रोगे स्वे स्वेऽध्याय उक्तं तदपि साधनम् ।

स्नेहव्यापत्साधनस्य विरूक्षणस्वभावत्वात्प्रसंगेन विरूक्षणस्य सम्यक्कृताऽतिकृतलक्षणमाह ।

**विरूक्षणे लंघनवत्कृताऽतिकृतलक्षणम् ।**

विरूक्षणे सम्यगुत्पन्ने तथाऽत्यर्थोत्पन्ने च लंघनवत् कृतातिकृतलक्षणं ज्ञेयम् । कृतं चाऽतिकृतं च कृतातिकृतं तयोर्लक्षणं कृतातिकृतलक्षणम् । कृतशब्देन सम्यक्कृतमुच्यते । विरूक्षणाऽतियोगलक्षणं तु स्नेहाऽतियोगलक्षणेनैवोक्तम् । तत्र सम्यक्कृतस्य लंघनस्य यल्लक्षणं विमलेंद्रियतादि तदेव विरूक्षणे कृते लक्षणं बोध्यम् । तथाऽतिकृते विरूक्षणेऽतिलंघितस्य लक्षणं कार्श्यादिकं वेद्यम् ।

**स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ॥३५॥**
**स्निग्धत्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः ।**
**एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ ३६ ॥**

स्निग्धश्चाऽसौ द्रवोष्णधन्वोत्थरसश्च तं भुंक्ते यः स स्निग्धद्रवोष्णधन्वोत्थरसभुक् । धन्वोत्थरसो जांगलदेशमांससमुद्भूतो रसः । मांसरसस्य स्वभावत एव स्निग्धद्रवत्वात्स्निग्धद्रवग्रहणमधिकयोगायेति वेद्यम् । उष्णमुभयथा वीर्यतोऽग्निसंयोगाच्च । एवंभूतः पुरुषः पूर्वं स्निग्धोऽनंतरं स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् दिनत्रयं स्थितः सन् विरेकं कुर्यात् । वमनं पुनरिति । यदा तु स्नेहादनंतरं वमनमेवोपयुंक्ते तदैकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितोऽन्यच्च दिनं द्वितीयमहः कफमुत्क्लेश्य स्थानात् प्रच्याव्याऽवस्थितो वमनं कुर्यात् । केनोत्क्लेश्य । तत्करैः कफकरणहेतुभिर्माषक्षीरमत्स्यगुडादिभिः । तत्करैरित्यादि कृञो हेत्वादिना हेतौ टः ।

**मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।**
**स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ॥३७॥**
**संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।**

मांसलत्वादियुक्ताः पुरुषा ये शोध्यत्वेन स्नेहयितुमभीष्टास्तान् पूर्वं प्रथमं रूक्षयेत् । ततो रूक्षयित्वाऽनंतरं संस्नेह्य शोधयेत् । किमेवं स्यादित्याह । एवं स्नेहव्यापन्न जायते । मांसला उपचितमांसाः । मेदुरा मेदस्विनः ।

**अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥ ३८ ॥**

न केवलं स्नेहव्यापदेवं न स्यात् । यावत् स्नेहोऽसात्म्यतां गतः सन् मलान् वातादीन् पुरीषादींश्चेरयितुं प्रेरयितुमलं पर्याप्तः ।

**बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।**
**योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ॥३९॥**

बालादिषु तथा यः स्नेहविषयः परिहारः शीतोदकादिस्तमसहिष्णुष्वक्षमेषु सद्यःस्नेहाख्याननुद्वेगाननुद्वेजकानेतान् योगान् प्रयोजयेत् ।

कांस्तानित्याह ।

**प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्जिता ।**
**तिलचूर्णश्च सस्नेहफाणितः कृशरा तथा ॥ ४० ॥**
**क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः ।**
**पेया च पंचप्रसृता स्नेहैस्तंडुलपंचमैः ॥ ४१ ॥**
**सप्तैते स्नेहनाः सद्यःस्नेहाश्च लवणोल्वणाः ।**

तेषु बालादिषु प्राज्यमांसरसाः प्रभूतमांसानामेव रसास्तथा स्नेहभर्जिता पेया तथा तिलचूर्णः पललाख्यः सस्नेहफाणितः सर्पिरादिना युक्तः क्षुद्रगुडेन च युक्तस्तथा क्षैरेयी वा पेया सर्पिष्मत्युष्णा च दधिसरो वा सगुडः । पेया च पंचप्रसृता । द्वे पले प्रसृतं विदुः । पंच प्रसृतानि यस्यां सा पंचप्रसृता । केषां पंच प्रसृतानीति युक्त्याह । स्नेहैस्तंडुलपंचमैरिति । सर्पिस्तैलं वसा मज्जेति चतुर्णां स्नेहानां चत्वारि प्रसृतानि तंडुलाश्च प्रसृतमित्यर्थः । एते सप्त पूर्वोक्ताः सद्यः शीघ्रं स्नेहना निष्परिहाराश्च । न केवलमेत एव स्नेहना इत्याह । स्नेहाश्च लवणोल्बणाः सर्पिरादयो लवणाढ्याश्च सद्यः स्नेहनाः ।

कस्मादित्याह ।

**तद्ध्यभिष्यंद्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥४२॥**

यस्माल्लवणमभिष्यंदि स्रोतसां स्रावकमरूक्षत्वादिगुणयुक्तं च सूक्ष्मं सूक्ष्मस्रोतोगामि व्यवायि देहमखिलं व्याप्य पाकाय कल्प्यते ।

**गुडानूपाऽमिषक्षीरतिलमाषसुरादधि ।**
**कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ ४३ ॥**

कुष्ठादिषु स्नेहयोग्यत्वे सति गुडादि स्नेहनार्थं न प्रकल्पयेन्न योजयेत् ।

तर्हि ते कथं स्नेह्या इत्याह ।

**त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ।**
**स्नेहान्यथास्वमेतेषां योजयेदविकारिणः ॥ ४४ ॥**

एतेषां कुष्ठादीनां यथास्वमध्यायेषु पथ्यत्वेनाऽभिहितैस्त्रिफलादिभिः पाचितान् साधितानविकारिणः स्नेहान् योजयेत्। कुष्ठादीनां संबंधी यो विकारस्तद्गताम्। तेन कुष्ठिनां शोफिनां मेहिनामित्यर्थोऽवतिष्ठते।

**क्षीणानां त्वामयैरग्निदेहसंधुक्षणक्षमान् ॥ ४५ ॥**

आमयैर्व्याधिभिः क्षीणानां पुंसामग्निदेहसंधुक्षणक्षमान् स्नेहान् योजयेत्। अग्निश्च देहश्चाऽग्निदेहौ। संधुक्षणाश्च क्षमाश्च संधुक्षणक्षमास्तान्। यथासंख्येनाऽत्र संबंधः। अग्नेः संधुक्षणास्तद्दीपका देहस्य क्षमाः पुष्ट्यावहाः। अत्र चाऽयं भावः। किल व्याधिभिः क्षीणानां वह्निरपि क्षीणो भवति। अतस्तेषां न केवलं ये पुष्ट्यावहा वह्निमांद्यमावहंति। अथवा वह्निसंधुक्षणा न पुष्ट्यावहाः स्नेहा उपयोक्तुं युक्ताः किं तर्ह्युभयकारिण एव योक्तुं युक्ता इति।

**दीप्तांतराग्निः परिशुद्धकोष्ठः**
**प्रत्यग्रधातुर्बलवर्णयुक्तः।**
**दृढेंद्रियो मंदजरः शतायुः**
**स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ४६ ॥**

यः पुमानाभीक्ष्ण्येन स्नेहमुपसेवते स दीप्तांतराऽग्नित्वादिगुणयुक्तो भवतीति प्रदिष्टः। सद्वैद्यैरिति शेषः। उपजातिर्वृत्तम्।

इति श्रीमदरुणदत्तविरचितायामष्टांहृदयटीकायां सर्वांगसुंदराख्यायां षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः।

शोधनप्रसंगेन स्नेहोपयोगः स्निग्धे च देहे दोषाणां मार्दवीकरणाय स्वेदस्य प्रसंगोऽतस्तत्परिज्ञानार्थोऽयमध्याय आरभ्यते।

**अथाऽतः स्वेदविधिमध्यायं व्याख्यास्यामः।**

अथाऽत इति। स्वेदनं स्वेदस्तस्य विधिर्विधानं व्याख्यास्यामः। शेषं पूर्ववत्।

स्वेदस्य चातुर्विध्यमाह।

**स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः।**

स्वेदश्चतुर्विधस्तापादिभेदात्।

तत्र तापादीनेव लक्षयितुमाचष्टे।

**तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥**

तापः स्वेदोऽग्नितप्तेन वसनेन तथा फालेनाऽयोमयेनाऽग्निना तप्तेन तथा हस्ततलेनाऽपि। आदिग्रहणाद्वालुकाघटिकाकांस्यपात्रादयो गृह्यंते।

**उपनाहो वचाकिण्वशताह्वादेवदारुभिः।**
**धान्यैः समस्तैर्गंधैश्च रास्नैरंडजटामिषैः ॥ २ ॥**
**उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः।**
**केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः ॥ ३ ॥**
**पित्तेन पद्मकाद्यैस्तु साल्वणाख्यैः पुनःपुनः।**

किण्वं सुराप्रकृतिः। धान्यैरिति सामान्योक्तावपि तिलाऽतसीमाषादीनि योग्यत्वाद्यान्युष्णवीर्याणि स्निग्धानि वा तानि प्रायेण प्रयोज्यानीति। समस्तग्रहणं गंधैरेव युज्यते। अत एव संग्रहेऽवदत्। सर्वगंधानीति। गंधैर्गंधद्रव्यैः कुष्ठागुरुतगरसुरसादिभिस्तथा रास्नादिभिः। किंभूतैः पूर्वोक्तैः। उद्रिक्तलवणैर्लवणाढ्यैः। तथा स्नेहश्च चुक्रं च तक्रं च पयश्च तैः प्लुतैरालोडितैः। चुक्रमम्लम्। तक्रस्य चुक्रत्वादेव ग्रहणे सिद्धे तक्रग्रहणमतिशयाय। अतिशयेन साल्वणाख्ये स्वेदने तक्रं प्रयोज्यमिति। केवले पवने वचादिभिरुपनाहः स्वेदः कार्यः। श्लेष्मसंसृष्टे पवने सुरसादिभिः सुरसयुगादिना गणेन। पित्तेन संसृष्टे पवने पद्मकाद्यैः पद्मकपुंड्राह्वेत्यादिभिः। पित्तेन संसृष्टे पवन इत्यत्र किंचिदेव पित्तेन संसृष्टे पवने पद्मकादिभिरुपनाहः कार्य इत्यादि योज्यं नाऽधिकेन पित्तेन युक्ते पवने नाऽपि तुल्येन पित्तेन युक्ते पवन इति। एवं ह्युक्तम्। ग्रैष्मः प्रायो मरुत्पित्ते विधिः कार्य इति। ग्रैष्मश्च विधिः प्रायेण सर्वः शीतस्तत्र स्वेदो दूरोत्सारित एव। तस्मात् किंचित्पित्तेन संसृष्टे पवने पद्मकाद्यैरुपनाहः कार्य इति वेद्यम्। एते च त्रय उपनाहाः केवले वायौ तथा कफयुक्ते पित्तयुक्ते च क्रमेण योज्याः। एते च साल्वणाभिधानाः स्वेदा इत्याह। साल्वणाख्यैरिति। पुनःपुनरिति। असकृत्तैः स्वेदयोजना कार्येत्यर्थः। निरपायो हि यथाऽयं साल्वणाऽपरसंज्ञ उपनाहाख्यः स्वेदो न तथाऽपरे स्वेदा इति। उपनह्यते बध्यते चर्मपट्टादिनेत्यन्वर्थं नामाऽस्योपनाह इति। साल्वण इत्यस्य च तंत्रांतरे प्रसिद्धं नाम। तथा च धन्वंतरिः। काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः। सानूपोदकमांसस्तु सर्वस्नेहसमन्वितः। सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तित इति। उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैरिति त्रिष्वपि स्वेदेषु योज्यम्।

बंधात्मकश्चाऽयं स्वेद इति बंधात्मकस्वेदोपायभूतांश्चर्मपट्टादीनाह।

**स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥ ४ ॥**
**अलाभे वातजित्पत्रकौशेयाऽविकशाटकैः।**
**रात्रौ बद्धं दिवा मुंचेन्मुंचेद्रात्रौ दिवाकृतम् ॥ ५ ॥**

चर्मपट्टैर्बद्धमुपनद्धमंगं रात्रौ दिवा मुंचेत्। किंभूतैः। स्निग्धोष्णवीर्यैस्तथाऽपूतिभिरदुर्गंधैः। सुपरिकर्मितत्वात्। अलाभे चर्मपट्टादीनामभावे वातजित्पत्रैरेरंडजादिभिस्तथा कौशेयादिभिः। कौशेयं रांकवादिवस्त्रविशेषः। आविकं कंबलम्। तैर्बद्धं रात्रौ दिवा मुंचेत्। दिवा वा बद्धं रात्रौ मुंचेद्रात्रौ बद्धं दिवा मोक्तव्यम्।

**ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः।**
**पत्रभंगेन धान्येन करीषसिकतातुषैः ॥ ६ ॥**
**अनेकोपायसंतप्तैः प्रयोज्यो देशकालतः।**

ऊष्मोष्णबाष्पः। ऊष्माख्यः स्वेद उत्कारिकादिभिः प्रयो-

ज्यः । तत्र यवमाषैरंडबीजातसीकुसुंभबीजादिभिः पिष्टस्विन्नैर्लेपसिकाकृतिर्यः स्वेदनोपायः स उत्कारिका । लोष्टं मृत्पिंडः । कपालं कर्परम् । उपलः पाषाणः । पांसुर्धूलिः । तथा पत्रभंगेन छदसमूहेन । तथा धान्येन । करीषो गवादिशकृच्चूर्णम् । सिकता वालुका । तुषो धान्यत्वक् । एतैरुत्कारिकादिभिस्तुषांतैः स्वेदो विधातव्यः । किंभूतैः । अनेके च त उपायास्तैः संतप्तोष्णीकृता य उत्कारिकादयस्तैरनेकोपायसंतप्तैः।कथं प्रयोज्य इत्याह। देशकालतः । ल्यब्लोपे पंचमी चेयम् । तेन देशकालावपेक्ष्य । उपलक्षणं चेदम् । तेन दोषदूष्यादीनपेक्ष्य स्वेदोऽयं प्रयोज्यः । लोष्टकपालपाषाणानग्निवर्णान्संदंशेन गृहीत्वा स्वेद्यदोषाद्यपेक्षयांऽभस्यम्ले धान्याम्ले शुक्तादौ वा निमज्जयेत् । तदुद्भूतबाष्पैः स्वेदः शयनस्थस्य कार्यः । अथवा गवादिशकृता पिंडीकृतेनोष्णेन स्वेदः स च पिंडस्वेदसंज्ञः । अथवैरंडादिद्रव्ययुक्तानि यवादीनि धान्यानि साम्लकादीनि गृहीत्वा पिहितमुखायामुषायां सम्यगुपस्वेद्य निवाते गृहे शयनस्थे किलिंजे प्रस्तीर्याऽविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे रौरवाजिनप्रावारादिष्ववच्छन्नं स्वेदयेत् । अथवा पूर्ववत्स्वेद्यद्रव्याणि कुंभ्यामुत्क्वाथ्य तन्निकटोपविष्टो घनवस्त्रप्रावृत ऊष्माणं गृह्णीयात् । एष संस्तरस्वेदः । एवमनेकोपायसंतप्तत्वं दोषदूष्याद्यपेक्षया निरूप्य स्वेदो योज्यः ।

अथ द्रवस्वेदमाह ।

**शिग्रुवीरणकैरंडकारंजसुरसार्जकात् ॥ ७ ॥**
**शिरीषवासावंशार्कमालतीदीर्घवृंततः ।**
**पत्रभंगैर्वचाद्यैश्च मांसैश्चाऽनूपवारिजैः ॥ ८ ॥**
**दशमूलेन च पृथक् सहितैर्वा यथामलम् ।**
**स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ॥ ९ ॥**
**कुंभीर्गलंतीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।**
**वाससाऽऽच्छादितं गात्रं स्निग्धं सिंचेद्यथासुखम् ॥**

शिग्र्वादिजैः पत्रसमूहैस्तथा वचाद्यैर्वचादिगणोक्तैस्तथा मांसैरनूपजैर्जलजैश्च दशमूलेन च पृथग्व्यस्तैर्द्वित्र्यादिभिः सहितैः समस्तैर्वा यथामलं स्नेहवद्भिर्दोषहरघृताद्यन्यतमस्नेहयुक्तैर्यथादोषं सुराशुक्तवारिक्षीरादिसाधितैः कुंभीः स्थालीः पूरयित्वा तथा गलंतीर्गर्गरीश्च वंशादिमयीर्नाडीर्वा पूरयित्वा रुजार्दितं पीडार्तं गात्रमंगं वाससाच्छादितं तथा स्निग्धं सद्यथासुखं सुखस्पर्शं कदाचिदत्युष्णं कदाचिदीषदुष्णं दोषपीडावशात् सिंचेदिति ।

परिषेकस्वेदमाख्यायाऽवगाहस्वेदं द्रवभेदमाह ।

**तैरेव वा द्रवैः पूर्णं कुंडं सर्वांगगेऽनिले ।**
**अवगाह्याऽऽतुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११ ॥**

तैरेव पूर्वोक्तैः स्वेदद्रवैः पूर्णं कुंडं भृशमवगाह्य प्रविश्याऽऽतुरो रोगी तिष्ठेत् । कीदृशे दोष इत्याह । सर्वांगगेऽनिले सर्वशरीरव्यापिनि वायौ तथाऽर्शःप्रभृतिरोगकष्टपीडासु । आदिग्रहणेन हस्तपादपीडासु वा । कुंडग्रहणमुपलक्षणार्थम् । तेन कूपकुटीस्वेदौ च वेद्यौ । संग्रह उक्तम् । शयनस्याऽधोविस्ताराद्द्विगुणखाते कूपे वातहरदारुकरीषाद्यन्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः । कुटीं नाऽत्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहद्रव्यकल्कघनप्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्तखदिरांगारपूर्णहसंतिकासमूहपरिवृतां विधाय तन्मध्यस्थितशय्यास्थं स्वेदयेदिति कुटीस्वेदः । पद्मोत्पलादिभिः सक्तुपिंड्या वाऽऽच्छाद्य चक्षुषी । शीतैर्मुक्तावलीपद्ममुकुलोत्पलभाजनैः । मुहुः करैश्च सजलैः स्विद्यतो हृदयं स्पृशेदिति ।

**निवातेऽतर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।**

अपगतवाते देशे स्वेदमाचरेत् । किंभूतः । अंतः स्नेहपानेन बहिश्चाऽभ्यंगादिना स्निग्धः । तथा जीर्णान्नश्च येन ह्यस्तनमन्नं जीर्णम् । आमाजीर्णाद्याक्रांतं नरं वर्जयित्वा तेन स्वेदार्हेण नरेण स्वेद आचरणीयः । आमाजीर्णाद्याक्रांतेन तु पुरुषेणाऽजीर्णेऽन्ने नैव स्वेद आचरणीयः ।

कीदृशं स्वेदमाचरेदित्याह ।

**व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १२ ॥**

व्याध्यपेक्षया व्याधितापेक्षया देशापेक्षया ऋत्वपेक्षया धाँत्वपेक्षया च यँथाविध एव मध्यममुत्कृष्टं हीनं वा स्वेदमाचरेत् ।

**कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ।**

कफार्तः कफग्रस्तो रूक्षः सन्नंतर्बहिरस्निग्धो रूक्षणं न च स्निग्धं स्वेदमाचरेत् । अपरं श्लेष्मवाते रूक्षस्निग्धं केनचिदंगेन रूक्षं केनचिदंगेन स्निग्धमेवंविधं स्वेदमाचरेत् ।

**आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥ १३ ॥**
**रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।**

आमाशयगते वात आदौ रूक्षः स्वेदः कार्यः पश्चात्स्निग्धः । तथा पक्वाशयगते कफ आदौ स्निग्धः स्वेदः पश्चाद्रूक्ष इत्यर्थः । कुत एवं नियम इत्याह । स्थानानुरोधतः स्थानवशात् । वायुर्यत आमाशय आगंतुः स्थानं च तत् श्लेष्मणस्तद्वशात्तत्राऽऽदौ रूक्ष एव स्वेदो योज्यः पश्चात् स्निग्ध इति । कफश्च पक्वाशय आगंतुः स्थानं च तद्वायोरतः पूर्वं स्निग्धः स्वेदः पश्चाद्रूक्ष इति पूर्वोक्त एव न्यायो न्याय्यः । तथा चोक्तम् । तत्राऽन्यस्थानसंस्थेषु तदीयामिति । तथा । आगंतुं शमयेद्दोषं स्थानिनं प्रतिकृत्य चेति । तस्मात्पूर्वं रूक्षेण स्थानिनं कफं प्रतिकृत्य पश्चादागंतुकस्य वायोः शमनं स्निग्धस्वेदाख्यं प्रयोज्यमिति । ननु वायोरामाशये कफोऽनुपपन्नः । यतो मरुल्लघ्व्यादिगुणयुक्तः । आमाशयस्तु गुरुमृदुत्वादियुक्तः । अतः शम एवोपपन्न इति चेत् । एतच्चाऽयुक्तम् । बलिनो ह्यन्याश्रयस्थस्याऽपि कोपो युक्तः । मार्गरोधाच्च वायोरामाशयेऽपि प्रकोपः संभवतीति । तथा च वक्ष्यति । प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गत इति । तथा चोक्तम् । ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपीति ।

**अल्पं वंक्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥ १४ ॥**

वंक्षणयोरल्पमेवेति योज्यम् । दृशोर्मुष्कयोर्हृदि चाऽत्यल्पम् नवेति । अथवा दृगादिषु स्वेदं नाचरेदेव ।

**शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।**
**स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥१५॥**

शीतशूलयोः क्षये संजाते सत्यंगानां पाणिपादादीनां च मृदुत्वे जाते स्विन्नो नरः स्यात् । स च स्विन्नः शनैर्मृदितो मंदमर्दितांगः स्नात उष्णोदकेनाऽनंतरं स्नेहोक्तविधिमुष्णोदकोपचारी स्यादित्यादिकं भजेदिति ।

स्वेदस्य सम्यग्लक्षणमुक्त्वाऽतियोगलक्षणमाह ।

**पित्ताऽस्रकोपतृण्मूर्छास्वरांगसदनभ्रमाः ।**
**संधिपीडाज्वरश्यावरक्तमंडलदर्शनम् ॥ १६ ॥**
**स्वेदाऽतियोगाच्छर्दिश्च तत्र स्तंभनमौषधम् ।**
**विषक्षाराऽग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ १७ ॥**

स्वेदस्याऽतियोगाद्रक्तपित्तकोपादयो भवंति च्छर्दिश्च । मूर्छा मोहः । स्वरांगयोः सदनेन संबंधः । भ्रमोऽज्ञानम् । श्यावानि च रक्तानि च श्यावरक्तानि । तत्र तेषु स्तंभनमौषधं कार्यम् । तथा विषाद्यातुरेष्वपि स्तंभनमेवौषधं न्याय्यमित्यर्थः ।

**स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तंभनमन्यथा ।**

गुरु यद्द्रव्यं तीक्ष्णमुष्णं च तद्बाहुल्येन स्वेदनं भवति । प्रायोग्रहणात् भयशोकादिकमगुर्वपि गृह्यते । अन्यथाऽतो वैपरीत्येन संस्तंभनं भवति ।

**द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥ १८ ॥**
**स्वेदनं स्तंभनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम् ।**

द्रवादिगुणयुक्तं यत्तद्द्रव्यं स्वेदनं भवति । तथा श्लक्ष्णादियुक्तं तत् स्तंभनं भवति ।

अधुना रसतः स्तंभनं निर्दिशन्नाह ।

**प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥ १९ ॥**

प्रायः समासतः संक्षेपेण तिक्तं कषायं च मधुरं च स्तंभनं भवति ।

स्तंभितस्य लक्षणमाह ।

**स्तंभितः स्याद्बले लब्धे यथोक्तामयसंक्षयात् ।**

बले लब्धे जाते सति यथोक्तानां रोगाणां च संक्षयात्स्तंभितो नरः स्यात् ।

अतिस्तंभितं लक्षयति ।

**स्तंभत्वक्स्नायुसंकोचकंपहृद्वाग्घनुग्रहैः ॥ २० ॥**
**पादोष्ठत्वक्करैः श्यावैरतिस्तंभितमादिशेत् ।**

त्वक् च स्नायुश्च तयोः संकोचः । हृदयादीनां ग्रहेण संबंधः । ततः स्तंभादीनां द्वंद्वः । स्तंभादिभिस्तथा श्यावैः पादादिभिरतिस्तंभितं कथयेत् ।

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्छितान् ॥ २१ ॥**
**स्तंभनीयक्षतक्षीणक्षाममद्यविकारिणः ।**
**तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥ २२ ॥**
**पीतदुग्धदधिस्नेहमधून्कृतविरेचनान् ।**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभयान्वितान् ॥ २३ ॥**
**क्षुत्तृष्णाकामलापांडुमेहिनः पित्तपीडितान् ।**
**गर्भिणीं पुष्पितां सूतां मृदु चाऽत्ययिके गदे ॥ २४॥**

अतिस्थूलादीन्न स्वेदयेत् । अतिस्थूलस्य स्वेदेन मेदोविलयनादत्यंतं शरीरक्षोभः स्यात् । रूक्षादीनां च कार्श्यमिति । आढ्यरोगो वातरक्तम् । भ्रष्टदग्धगुदोऽतीसारक्षाराग्न्यादिभिः । ग्लान्यादीनामन्वितेन संबंधः । क्षुदादीनां मेहांतानां द्वंद्वः । क्षुद्वतः स्वेदादत्यंतं देहग्लानिः । कामलापांडुमतोः स्वेदेन पित्तवृद्ध्या रोगवृद्धिः । पित्तप्रधानस्य स्वेदाद्रोगवृद्धिः । गर्भिण्याः स्वेदेन गर्भव्यापत् । पुष्पिताया रक्तातिप्रवृत्तिः । सूतायाः कार्श्यम् । मृदु चेति । यदैषामतिस्थूलादीनामात्यंतिको व्याधिर्विसूचिकादिः स्यात्तदैते मृदु स्वेदयितव्याः ।

**श्वासकासप्रतिश्यायहिध्माध्मानविबंधिषु ।**
**स्वरभेदाऽनिलव्याधिश्लेष्मामस्तंभगौरवे ॥ २५ ॥**
**अंगमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ।**
**महत्त्वे मुष्कयोः खल्यामायामे वातकंटके ॥ २६ ॥**
**मूत्रकृच्छ्रार्बुदग्रंथिशुक्राघाताढ्यमारुते ।**
**स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ २७ ॥**

श्वासादिमत्सु यथास्वं स्वेदं कुर्यात् । क्वचित्तापं क्वचिदुपनाहं क्वचिदूष्माणं क्वचिद्द्रवमिति । कथम् । तेष्वौषधानि तदौषधानि तेषां विभागो यथास्वमुपयोगस्तेन तदौषधविभागेन स्वेदं कुर्यात् । खल्ली तीव्ररुजान्वितेति वातव्याधौ वक्ष्यते । आयामवातकंटकौ च । आढ्यवात ऊरुस्तंभः ।

**स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।**

मेदःकफाभ्यां पवन आवृते सत्यनाग्नेयः स्वेदो हितः ।

कोऽसावनाग्नेय इत्याह ।

**निवातं गृहमायासो गुरुप्रावरणं भयम् ॥ २८ ॥**
**उपनाहाहवक्रोधभूरिपानं क्षुधातपः ।**

निवातगृहादयोऽनाग्नेयाः स्वेदाः । आयासो व्यायामः । गुरुप्रावरणं रल्लकादि । भयं खड्गहस्तराजपुरुषदर्शनादिना । उपनाहोऽप्यनाग्नेयः स्वेदः । उपनाहस्य द्वैविध्यात् । तत्रोपनाहो वचाकिण्वेत्यादिराग्नेयः । तत्र तापोऽग्नितप्तवसनेत्यनुवृत्तेः । अनाग्नेयस्तु स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपटैरित्यादिकः । आहवः समरः । भूरिपानं बहुमद्यपानम् ।

**स्नेहक्लिन्नाः कोष्ठगा धातुगा वा**
**स्रोतोलीना ये च शाखाऽस्थिसंस्थाः ।**

**दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं**
**नीताः सम्यक्शुद्धिभिर्निर्ह्रियंते ॥ २९ ॥**

ते दोषाः सम्यक् सुष्ठु शुद्धिभिर्वमनविरेचनलक्षणाभिर्निर्ह्रियंते निष्कास्यंते । के दोषा इत्याह । स्नेहक्लिन्ना ये तथा कोष्ठगा धातुस्थाश्च स्रोतोलीनास्तथा शाखास्वस्थिषु च स्थिताः । किंभूताः । स्वेदैर्द्रवीकृत्य कोष्ठं नीता उदरं प्रापिता इति ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

शुद्धिभिर्निर्ह्रियंत इत्युक्तं कास्ताः शुद्धय इति शुद्ध्यर्थं वमनविरेचनाधिकारः ।

**अथाऽतो वमनविरेचनविधिमध्यायं व्याख्यास्यामः**

अथाऽत इत्यादि । वमनं च विरेचनं च तयोर्विधिः । शेषं पूर्ववत् ।

तत्र वमनविधिमाह ।

**कफे विदध्याद्वमनं संयोगे वा कफोल्बणे ।**
**तद्वद्विरेचनं पित्ते**

श्लेष्मणि वमनं कुर्यात् । अत्र पूर्वं वमनकथनं विरेच्यते मंदकफस्तु सम्यगिति प्रतिपादनार्थम् । संयोगे च कफाधिके । तत्र च पित्तकफवान्वमनं कुर्यात् । यथा कफे कफाऽधिके वा संयोगे च वमनं तथैव पित्ते पित्ताऽधिके वा संयोगे विरेचनं कुर्यादिति तद्वच्छब्दस्याऽर्थः ।

**विशेषेण तु वामयेत् ॥ १ ॥**
**नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।**
**कुष्ठमेहाऽपचीग्रंथिश्लीपदोन्मादकासिनः ॥ २ ॥**
**श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ।**

विशेषेण पुनर्नवज्वराऽतिसारादीनूर्ध्वरोगपर्यंतान्वामयेत् ।

**अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥३॥**
**बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ।**
**प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥**
**ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः ।**
**मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥**
**उदावर्तभ्रमाऽष्ठीलापार्श्वरुग्वातरोगिणः ।**

गर्भिण्यादयो वातरोगांता अवम्याः । अर्शांसि विद्यंते यस्य सोऽर्शसः । अर्शआदिभ्यश्चेत्यच् । तत्र गर्भिण्या वमनाद्गर्भव्यापद्गर्भभ्रंशश्च । क्षुधितस्य च वायुना क्षपितशरीरत्वाद्बलक्षयः स्यात् । बालादीनामौषधबलाक्षमत्वाद्बलोपरोधः स्यात् । हृद्रोगादीनां हृदयोपरोधः । प्रसक्तच्छर्दनानामुदानो वायुरुत्क्षिप्य प्राणानपि हिंस्यात् । एवमन्यत्राऽपि रोगोद्गमाश्रित्यः ।



किं सर्वदैव गर्भिण्यादयोऽवम्या उत कस्यांचिदवस्थायां वम्या इत्याह ।

**ऋते विषगराऽजीर्णविरुद्धाऽभ्यवहारतः ॥ ६ ॥**

विषाद्यभ्यवहारमंतरेण । विषाद्यभ्यवहारे तु वम्या एवैते ।

**प्रसक्तवमथोः पूर्वं प्रायेणामज्वरोऽपि च ।**
**धूमांतैः कर्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ॥ ७ ॥**

प्रसक्तवमथोः पूर्वस्थिता एकादशातुरा दुर्बलांतास्तथाऽऽमज्वरिणश्च ते सर्वे धूमांतैः कर्मभिर्वर्ज्या न केवलं वमनेनैव । धूमग्रहणं गंडूषादिकर्मणोऽपि परिहारार्थम् । प्रायोग्रहणमष्टमासाया गर्भिण्या निरूहा वर्ज्या इति सूचनार्थं तथा सद्योभुक्तस्य ज्वरितस्य सतो वमनानुज्ञानार्थम् । तु पुनरजीर्णिनः पुरुषा वमनादिभिर्गंडूषादिभिश्च वर्ज्याः । सद्योऽजीर्णिनां हि वमनमनुज्ञातमेव ।

**विरेकसाध्या गुल्मार्शोविस्फोटव्यंगकामलाः ।**
**जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ॥ ८ ॥**
**विद्रधिस्तिमिरं काचः स्यंदः पक्वाशयव्यथा ।**
**योनिशुक्राशया रोगाः कोष्ठगाः कृमयो व्रणाः ॥९॥**
**वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।**
**वम्याश्च कुष्ठमेहाद्याः**

विरेकेण साध्या उपक्रम्या गुल्मादयः शकृद्ग्रहपर्यंताः पक्वाशये व्यथा पक्वाशयव्यथा । वम्याश्चेति चः समुच्चये । ये च कुष्ठाद्या ऊर्ध्वरोगपर्यंता वमनार्हा उक्तास्ते च विरेच्याः ।

**न तु रेच्यो नवज्वरी ॥ १० ॥**
**अल्पाऽग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ।**
**सशल्यास्थापितक्रूरकोष्ठाऽतिस्निग्धशोषिणः ११**

न तु रेच्य इति तुरवधारणे । नवज्वरी नैव रेच्यः । तस्य हि विरेचनमपक्वान् दोषान् निर्हरद्वातकोपायैव स्यात् । यक्ष्मादीनां त्ववस्थावशान्मृदुविरेच्यत्वमनुज्ञातमेव तथाऽपि चाऽध्मानगुरुताशूलस्तैमित्यकारिणीत्यादिनाऽतीसारस्याऽपि मृदुविरेचनमनुज्ञातं नैवं नवज्वरस्य स्वल्पविरेच्यत्वं कदाऽपि । अल्पाऽग्न्यादयः शोष्यंता न विरेच्याः । तत्राऽल्पाग्निरबलत्वाद्भेषजवेगं न सहते । अधोरक्तपित्ताऽतिसारिणावतिप्रवृत्त्या हन्यात् । क्षतपायोः प्राणापहारकारिणी रुक् स्यात् । सशल्यस्य क्षते वायुराश्रितो जीवितं हन्यात् । आस्थापितस्य भेषजवेगासहनाद्बलोपरोधः स्यात् । क्रूरकोष्ठस्यौषधाद्धेतोर्दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदाऽऽनाहच्छर्दिमूर्छाक्लमान् जनयित्वा प्राणान् हन्युः । अतिस्निग्धस्याऽतियोगाय स्यात् । शोषिणः क्षीणधातुतया मलबलत्वं तदभावाद्देहविनाशनं स्यादिति ।

**अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।**
**श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥१२॥**

**निशां सुप्तं सुजीर्णान्नं पूर्वाह्ने कृतमंगलम् ।**
**निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १३ ॥**
**वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।**
**आकंठं पायितान्मद्यं क्षीरमिक्षुरसं रसम् ॥ १४ ॥**
**यथाविकारविहितां मधुसैंधवसंयुताम् ।**
**कोष्ठं विभज्य भैषज्यमात्रां मंत्राभिमंत्रिताम् ॥ १५ ॥**
**ब्रह्मदक्षाश्विरुद्रेंद्रभूचंद्रार्काऽनिलाऽनलाः ।**
**ऋषयः सौषधिग्रामा भूतसंघाश्च पांतु वः ॥ १६ ॥**
**रसायनमिवर्षीणाममराणामिवाऽमृतम् ।**
**सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १७ ॥**
**ॐनमो भगवते भैषज्यगुरवे वैदूर्यप्रभराजाय**
**तथागतायाऽर्हते सम्यक्संबुद्धाय । तद्यथा ।**
**ॐभैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ।**
**प्राङ्मुखं पाययेत्**

एतत् पूर्वोक्तं रेच्यारेच्यत्वमवगम्याऽनंतरं साधारणे श्रावणादौ काले यथाविधि स्नेहस्वेदाऽध्यायोदितेन क्रमेण स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां प्राङ्मुखं पाययेदिति वक्ष्यमाणेन संबंधः । श्वोवम्यं प्रातर्वमनार्हम् । वम्यमित्यर्हे कृत्यतृचश्चेत्यर्हार्थे पोरदुपधादिति यत् । उत्क्लिष्टः स्थानाचलितः कफो यस्य तमुत्क्लिष्टकफम् । कैः । मत्स्यादिभिः । अंतर्भावितण्यर्थोऽत्र । उत्क्लेशित इत्यर्थः । तथा रात्रौ सुप्तम् । कालाध्वनोरिति द्वितीया । अत एव सकलनिशास्वापोऽत्र लक्ष्यते । सुष्ठु जीर्णमन्नमाहारो यस्य तम् । कदा पाययेत् । प्रातःकाले । किंभूतम् । कृतं मंगलं स्वस्त्ययनादि यस्य तम् । कृतमंगलमित्युपलक्षणार्थम् । कृतदेवद्विजाग्निगुरुवृद्धार्चनमपीति द्रष्टव्यम् । तथा निरन्नमकृताहारमातुरवशात् किंचित्स्निग्धम् । कथमित्याह । पेयया पीतसर्पिषम् । वृद्धेत्यादि । असावथ वृद्धो वा बालो वा दुर्बलो वा क्लीबः खेदासहिष्णुर्भवति भीरुर्वा कातरो भवति तदा रोगानुरोधादाकंठमतिमात्रं मद्यक्षीरादिकं पाययेत्तदनंतरं भैषज्यमात्रां पाययेत् । संग्रहेऽप्युक्तम् । भीरुकृशबालसुकुमारत्वाद्दोषानुरोधेनाऽऽकंठं पीतयूषेक्षुक्षीरमांसरसमद्यतुषोदकयवागूमंडान्यतममिति । किंभूतां मात्राम् । यथाविकारविहितां रोगानुसारेण साधितां तथा मधुसैंधवाभ्यां युताम् । किं कृत्वा । कोष्ठं मृदुमध्यक्रूरलक्षणं विभज्य विचार्य । श्लेष्माधिक्येन मृदुत्वं श्लेष्ममध्यत्वेन मध्यत्वं श्लेष्महीनत्वेन क्रूरत्वमिति मानं कोष्ठस्य बोध्यम् । तथा चोक्तम् । श्लेष्मोत्तरं छर्दयते ह्यदुःखमिति । भैषज्यमात्रां किंभूताम् । मंत्राभिमंत्रिताम् । तानेव मंत्रानाह । ब्रह्मेत्यादिग्रंथेन ।

**पीतं मुहूर्तमनुपालयेत् ।**
**तन्मनाः**

भैषज्यमात्रां पीतं संतमातुरं मुहूर्तं तन्मना वमिगतचित्तोऽनुपालयेत् प्रतीक्षेत ।

**जातहृल्लासप्रसेकश्छर्दयेत्ततः ॥ १८ ॥**
**अंगुलिभ्यामनायस्तो नालेन मृदुनाऽथवा ।**
**गलताल्वरुजन्वेगानप्रवृत्तान् प्रवर्तयन् ॥ १९ ॥**
**प्रवर्तयन् प्रवृत्तांश्च जानुतुल्यासने स्थितः ।**

ततोऽनंतरं संजातहृल्लासप्रसेकः सन् छर्दयेत् । हृल्लासो हृदुपरोधः । प्रसेको निष्ठीवनम् । कथं वमेत् । अंगुलिभ्यां द्वाभ्याम् । यद्वा कोमलेन सुवर्चलैरंडादिजेन नालेन मृदुना वमेत् । कीदृशः । अनायस्तोऽनायासेनेत्यर्थः । अपरं गलताल्वपीडयन् । तथाऽप्रवृत्तान् वेगान् प्रेरयन् प्रवृत्तांश्च प्रवर्तयन् । जानुप्रमाणे पीठे स्थितः ।

**उभे पार्श्वे ललाटं च वमतश्चाऽस्य धारयेत् ॥ २० ॥**
**प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः ।**

अपरमस्य नरस्य वमनं कुर्वतो द्वे पार्श्वे ललाटं च धारयेत् । परिचारक इति शेषः । प्रतिलोमतोऽसन्मार्गेण ।

**कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २१ ॥**
**वमेत् स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।**
**पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २२**

कफे तीक्ष्णोष्णकटुकैर्द्रव्यैर्वमेत् । पित्ते स्वादुशीतैर्द्रव्यैर्वमेत् । स्निग्धाम्ललवणैर्वायुयुक्ते कफे वमेत् । कियंतं कालं वमेदित्याह । यावत् पित्तस्य दर्शनं कफांतो वा तावद्वमेत् ।

**हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।**
**वमेत्पुनः पुनः**

हीनवेगो नरः कणाधात्रीसिद्धार्थलवणोदकैरसकृद्वमेत् ।

**तत्र वेगानामप्रवर्तनम् ॥ २३ ॥**
**प्रवृत्तिः सविबंधा वा केवलस्यौषधस्य वा ।**
**अयोगस्तेन निष्ठीवकंडूकोठज्वरादयः ॥ २४ ॥**

तत्र तेषु सम्यग्योगाऽतियोगायोगेषु मध्याद्वेगानामप्रवर्तनमसावयोगः । सविबंधा च या प्रवृत्तिः सोऽप्ययोगः । केवलस्य दोषादिरहितस्यौषधस्य या प्रवृत्तिः सोऽप्ययोगः । तेनाऽयोगेन निष्ठीवनादयः स्युः ।

**निर्विबंधं प्रवर्तंते कफपित्ताऽनिलाः क्रमात् ।**
**सम्यग्योगे**

सम्यग्योगे कफपित्ताऽनिलाः क्रमेण निर्विबंधं निःसंगं प्रवर्तंते ।

**अतियोगे तु फेनचंद्रकरक्तवत् ॥ २५ ॥**
**वमितं क्षामता दाहः कंठशोषस्तमोभ्रमः ।**
**घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २६ ॥**

अतियोगे पुनः फेनचंद्रकरक्तवद्वमितं भवति । फेनश्च चंद्रकश्च रक्तं च तानि विद्यंते यस्य वमितस्य तदेवम् । तथा क्षामतादयो भवंति । तमस्तिमिरदर्शनं दारुणाश्च वातरोगास्तथा मृत्युर्भवति । जीवाख्यस्य शोणितस्य निर्गमान्निष्कासात् ।

**सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत् ।**
**धूमत्रयस्यान्यतमं स्नेहाचारमथाऽऽदिशेत् ॥२७॥**

सम्यग्योगेन वमिते सति मुहूर्तमाश्वास्य शीतवातादिना धूमत्रयस्य स्निग्धमध्यतीक्ष्णाख्यस्याऽन्यतममेकं पाययेद्वैद्यः । अथाऽनंतरं स्नेहाचारमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् ।

**ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखांबुना ।**
**भुंजानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमम् ॥२८॥**

तदूर्ध्वं सायमपराह्णे प्रभाते पूर्वाह्णे वा बुभुक्षित उष्णोदेकन स्नातो रक्तशाल्यन्नं भुंजानः पेयादिकं क्रमं भजेत् ।

तमेव पेयादिकं क्रममाह ।

**पेयां विलेपीमकृतं कृतं च**
**यूषं रसं त्रीनुभयं तथैकम् ।**
**क्रमेण सेवेत नरोऽन्नकालान्**
**प्रधानमध्यावरशुद्धिशुद्धः ॥ २९ ॥**

प्रधाना च मध्या चाऽवरा च प्रधानमध्यावराः । प्रधानमध्यावराश्च ताः शुद्धयश्च ताभिः शुद्धो नरः क्रमेण यथासंख्यं पेयां त्रीनन्नकालान् द्वावन्नकालावेकमन्नकालं भजेदिति । विलेप्यादिष्वप्येवं योज्यम् । एतदेव स्पष्टीकृत्योच्यते । यथा । प्रधानशुद्ध्या शुद्धो नरो द्वावन्नकालावेकस्मिन् दिने पेयां भजेदिति । द्वितीयेऽह्न्येकमन्नकालं विलेपीं तृतीये वासरे द्वावन्नकालौ विलेपीमेव । चतुर्थे दिवसेऽकृतं शुंठीलवणाद्यसंस्कृतं यूषं द्वावन्नकालौ भजेत् । पंचमेऽह्नि प्रथमेऽन्नकाले । चः समुच्चये । त्रिष्वपि कालेष्वकृतं च यूषं भजेत् । विभज्य तावद्गम्यते । एवं कालत्रयं कृताकृतं रसं विभज्य भोजयेत् । सप्तरात्रेण प्रकृतिभोजनं क्रमेण सेवेत । एवं यथास्वं मध्यशुद्धिशुद्धस्याऽवरशुद्धिशुद्धस्य च योजना कार्या । मुनिस्त्वाह । अथैनं सायाह्नेऽपरे वाऽह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितंडुलानां स्वविक्लिन्नां मंडपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य । एवं द्वितीये तृतीये वान्नऽकाले । चतुर्थे तु तथाविधानामेव शालितंडुलानां सुस्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत् । एवं पंचमे षष्ठे चाऽन्नकाले । सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विःप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवमष्टमे नवमे चाऽन्नकाले । दशमे त्वन्नकाले लावकपिंजलादीनामन्यतमस्य मांसस्य रसेन दकलावणिकेन नाऽतिसारवता भोजयेदुष्णोदकानुपानम् । एवमेकादशे द्वादशे वाऽन्नकाले । अत ऊर्ध्वमन्नगुणान् क्रमेणोपयुंजानः सप्ताहात्प्रभृति भोजनमागच्छेदिति । त्रीनिति कालाध्वनोरत्यंतसंयोगे द्वितीया ।

अधुना पेयादिक्रमस्य फलं वक्ति ।

**यथाऽणुरग्निस्तृणगोमयाद्यैः**
**संधुक्ष्यमाणो भवति क्रमेण ।**
**महान् स्थिरः सर्वपचस्तथैव**
**शुद्धस्य पेयादिभिरंतराग्निः ॥ ३० ॥**

तथा बाह्योऽग्निरणुरल्पस्तृणगोमयकाष्ठफलादिभिः संधुक्ष्यमाण उद्दीप्यमानो महान् स्थिरः सर्वपचो भवति । सर्वपच इति पचेरजंतस्य सर्वशब्देन सह षष्ठीसमासः । तेनैव प्रकारेण पेयादिभिः शुद्धसौदर्योऽग्निर्महान् स्थिरः सर्वपचश्च भवति । खरनादेऽप्युक्तम् । विरेके वमने श्रेष्ठे पेयादीनां त्रिकक्रमः । त्रिशो द्विशो मध्यमे स्यादेकशस्तु कनीयसीति ।

**जघन्यमध्यप्रवरे तु वेगा-**
**श्चत्वार इष्टा वमने षडष्टौ ।**
**दशैव ते द्वित्रिगुणा विरेके**
**प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च ॥ ३१ ॥**

जघन्यं च मध्यं च प्रवरं च तस्मिन्वमने क्रमेण वेगाश्चत्वारः षडष्टेऽष्टास्तंत्रकृतामिति शेषः । ते वेगा दशैव द्वित्रिगुणा जघन्यमध्यप्रवरे विरेके क्रमेण भवंति । तथेति समुच्चये । न केवलं वेगानां मानं प्रस्थश्च द्विचतुर्गुणो मानं स्यादिति तथाशब्दस्याऽर्थः। त्रीण्येतान्युपजातिवृत्तानि ।

**पित्तावसानं वमनं विरेका-**
**दर्धं कफांतं च विरेकमाहुः ।**

पित्तांतं वमनं वदंति । विरेकादर्धं वमनं कथयंति । विरेचनं कफांतमाहुः ।

**द्वित्रान् सविट्कानपनीय वेगान्**
**मेयं विरेके वमने तु पीतम् ॥ ३२ ॥**

द्वे वा त्रयो वा द्वित्राः । संख्ययाऽव्ययेति बहुव्रीहिः । बहुव्रीहौ संख्येये डजिति वा समासांतः। सह विशा पुरीषेण वर्तत इति सविट्को विद्वान् वेगान् सविट्कानपनीय गणनयाऽनया रुद्धविरेके मेयं मातव्यम् । वमने पुनः पीतं यदौषधं तदपनीय मेयम् । इंद्रवज्रा वृत्तम् ॥

**अथैनं वामितं भूयः स्नेहस्वेदोपपादितम् ।**
**श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् ॥३३॥**

एनं नरं वामितं भूयः पुनरपि स्नेहस्वेदाभ्यामुपपादितमनंतरं सम्यग्विरेचयेत् । कदा । श्लेष्मणः कालः संविभागप्रहरस्तास्मिन् गते सति । किं कृत्वा । कोष्ठं मृदुमध्यक्रूरलक्षणं ज्ञात्वाऽवगम्य।

**बहुपित्तो मृदुः कोष्ठः क्षीरेणाऽपि विरिच्यते ।**

यो बहुपित्तः कोष्ठः स मृदुर्भवति । स च क्षीरेणाऽपि विरेच्यते । अपिशब्दादारग्वधादिभिरपि ।

**प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥३४॥**

प्रभूतमारुतः क्रूरः कोष्ठो भवति । स कृच्छ्रेण कथंचिदपि श्यामादिकैर्विरेच्यते । आदिशब्देन कंकुष्ठसुधादीनां ग्रहणम् । अपिशब्दादारग्वधादिना विरेच्यते ।

**कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।**
**स्निग्धोष्णलवणैर्वायौ**

कषायमधुरैरारग्वधादिभिः पित्ते विरेकः । कटुकैः कफे विरेकः । स्निग्धाम्ललवणैरेरंडतैलादिभिर्वायौ विरेकः कार्यः ।

**अप्रवृत्तौ तु पाययेत् ॥ ३५ ॥**
**उष्णांबु स्वेदयेदस्य पाणितापेन चोदरम् ।**

विरेकाप्रवृत्तावुष्णांबु पाययेद्वैद्यः । अस्य चाऽतुरस्य पाणितापेन जठरं स्वेदयेत् ।

**उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत्**

तस्मिन् विरेकस्य दिनेऽल्प उत्थाने स्तोकायां प्रवृत्तौ सत्यां भुक्त्वाऽन्नमन्येद्युरन्यस्मिन् दिने पुनर्विरेचनौषधं पिबेदातुरः ।

**अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।**
**भूयोऽप्युपस्कृततनुः स्वेदस्नेहैर्विरेचनम् ॥३७॥**
**यौगिकं सम्यगालोच्य स्मरन्पूर्वमनुक्रमम् ।**

दृढस्नेहः कोष्ठो यस्य स दृढस्नेहकोष्ठः । न दृढस्नेहकोष्ठोऽदृढस्नेहकोष्ठः । स भूयोऽपि स्नेहस्वेदैः संस्कृतशरीरो दशाहादूर्ध्वं यौगिकं विरेचनं पिबेत् । यथावन्निरूप्य पूर्वमनुक्रमं भैषज्यमात्रां मंत्राभिमंत्रितामित्यादिकं तथाऽप्रवृत्तौ तु पाययेत् । उष्णांबु स्वेदयेदस्य पाणितापेनेत्यादिकं च स्मरन् पिबेदिति ।

**हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥३८॥**
**कंडूर्विदाहः पिटिका पीनसो वातविड्ग्रहः ।**
**अयोगलक्षणम्**

अयोगलक्षणं हृत्कुक्ष्यशुद्धिरित्यादिकम् ।

**योगो वैपरीत्ये यथोदितात् ॥३९॥**

यथोक्ताद्वैपरीत्ये हृत्कुक्षिशुद्धिरित्यादिको योगो योगलक्षणम् ।

**विट्पित्तकफवातेषु निःसृतेषु क्रमात्स्रवेत् ।**
**निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥४०॥**
**मांसधावनतुल्यं वा मेदःखंडाभमेव वा ।**
**गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ४१ ॥**
**भवंत्यतिविरिक्तस्य तथाऽतिवमनामयाः ।**

अतिविरिक्तस्य विट्पित्तकफवातेषु क्रमान्निःसृतेषु जलं स्रवेत् । किंभूतम् । निःश्लेष्मपित्तं तथा श्वेतं कृष्णं सलोहितं पीतरक्तमथवा मांसधावनसदृशमथवा मेदःशकलाभं स्रवेत् । तथा गुदनिःसरणादयोऽतिवमनामयाश्च क्षामतादयो भवंति ।

**सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत् ॥४२॥**
**धूमवर्ज्येन विधिना**

एनं च नरं सम्यग्विरिक्तं वमनविहितेन विधिना विधूमेनोपपादयेत् ।

**ततो वमितवानिव ।**
**क्रमेणाऽन्नानि भुंजानो भजेत्प्रकृतिभोजनम् ॥४३॥**

ततोऽनंतरं क्रमेण पूर्वोक्तेन रक्तशाल्यन्नसहितपेयादीन्यन्नान्यश्नन् प्रकृतिभोजनं भजेत् ।

**मंदवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।**
**अदृष्टजीर्णलिंगं च लंघयेत्पीतभेषजम् ॥ ४४ ॥**

पीतभेषजं मंदवह्न्यादीन् पंच लंघयेत् । अदृष्टं जीर्णलिंगं पीतभेषजस्य यस्येति योज्यम् ।

एवं लंघिते यो गुणो भवति तमाह ।

**स्नेहस्वेदौषधोत्क्लेशसंगैरिति न बाध्यते ।**

उत्क्लेशाश्च संगाश्चोत्क्लेशसंगाः । स्नेहश्च स्वेदश्चौषधं च तानि तेषामुत्क्लेशसंगाः स्नेहस्वेदौषधोत्क्लेशसंगास्तैः । इत्येवं लंघिते सति मंदाग्न्यादिर्न बाध्यते ।

**संशोधनाऽस्रविस्रावस्नेहयोजनलंघनैः ॥ ४५ ॥**
**यात्यग्निर्मंदतां तस्मात्क्रमं पेयादिमाचरेत् ।**

संशोधनादिभिर्यतोऽग्निर्मंदतां यात्यतो हेतोः पेयादिं क्रममाचरेत् । संशोधनं सम्यक्शुद्धिः । अस्रविस्रावो रक्तस्रुतिः । स्नेहयोजनं स्नेहयोगः । ननु शुद्ध्यादिमांद्यमिहोच्यते । वक्ष्यति च । शुद्धः प्रसादमित्यादिना । ज्वलनस्य दीप्तिसंशोधनं करोतीति । तदिमे वचसी परस्परं व्याचक्षाते । अत्रोच्यते । कालभेदाद् दोषसंशोधने क्रियमाणेऽग्निमांद्यं भवति । कृते च संशोधनेऽपेयादिक्रममासेवमानस्याऽग्निदीप्तिरिति न कश्चिदत्र व्याघातः ।

**स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥४६॥**
**पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ।**

स्रुताल्पपित्तश्लेष्माणमिति । स्रुतौ पतितावल्पौ पित्तश्लेष्माणौ यस्य तं तथा मद्यपो यो नरस्तं मद्यपं तथा वातपैत्तिकमेतांस्त्रीन् पेयां न पाययेत् । तर्ह्येषां किं कार्यमित्याह । प्रथमेऽन्नकाले लाजसक्तवो द्वितीयेऽन्नकाले मांसरसोदकेनेत्येष तर्पणादिक्रमस्तेषां हितः ।

ननु विरेचनस्येव वमनस्य कस्मात्पाको न प्रतीक्ष्यत इत्याह ।

**अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ॥ ४७ ॥**

**निर्हरेद्वमनस्याऽतः पाकं न प्रतिपालयेत्।**

वमनमपक्वं सद्दोषान्निर्हरेत्। विरेचनं तु पच्यमानं दोषान्निर्हरेत्। अतो वमनस्य पाको न प्रतिपाल्यते।

**दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम्॥ ४८॥**
**विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत्।**

दुर्बलो बहुदोषश्च दोषपाकेन हेतुना स्वयमौषधमंतरेण यो विरिच्यते भिद्यते तं नरं भेदनीयैभोज्यैर्भक्ष्यैर्योजयेत्।

**दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः॥ ४९॥**
**अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम्।**
**वरं तदसकृत्पीतमन्यथा संशयावहम्॥ ५०॥**
**हरेद्बहूंश्चलान्दोषानल्पाऽनल्पान् पुनः पुनः।**

दुर्बलादयः पिबेयुः। किमित्याह। यस्माद्विरेचनौषधं पुनः पुनः पीतं वरम्। अन्यथा बहु तीक्ष्णं चौषधं पीतं संशयावहं प्राणसंदेहकारि। तथा पुनः प्रयुक्तमौषधं बहूंश्चलान् दोषानल्पानल्पान् हरेत्। एवं बलहानिं विना दोषनिर्हारः कृतः स्यात्।

**दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत्तु तान्॥५१॥**
**क्लेशयंति चिरं ते हि हन्युर्वैनमनिर्हृताः।**

तुरवधारणे। दुर्बलस्य नरस्य मृदुद्रव्यैरल्पानेव तान् दोषान् सम्यक् शमयेत्। ते तु दोषा अनिर्हृताश्चिरमेतमातुरं क्लेशयंति हन्युर्वा। अनिर्हृता मारयेयुः।

**मंदाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः॥ ५२॥**
**संधुक्षिताग्निं विजितकफवातं च शोधयेत्।**

मंदाग्निं क्रूरकोष्ठं च नरं सह क्षारलवणाभ्यां वर्तंते यानि घृतानि तैर्यथासंख्यमुद्दीपितानलं विजितकफवातं च शोधयेत्।

**रूक्षबहुनिलक्रूरकोष्ठव्यायामशीलिनाम्॥ ५३॥**
**दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति।**
**तेभ्यो वस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ५४**
**शकृन्निर्हृत्य वा किंचित्तीक्ष्णाभिः फलवर्तिभिः।**

रूक्षादीनां भैषज्यमविरेच्यैव विरेचनमकृत्वैव परिणतिमेति। तेभ्यो रूक्षादिभ्यः पूर्वं बस्तिं दद्यादनंतरमेरंडतैलबिंदुघृतादिकं विरेचनं योजयेत्। अथवा फलवर्तिभिस्तीक्ष्णाभिः पुरीषं किंचिदल्पं निर्हृत्य निःसार्य स्निग्धं विरेचनं दद्यात्।

किमिति बस्तिनाऽथवा तीक्ष्णाभिः फलवर्तिभिश्च किंचिच्छकृन्निर्हारः क्रियत इत्याह।

**प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम्॥५५॥**

यस्मान्मलं प्रवृत्तं संतं किंचित्पतितं स्निग्धो विरेकः सुखं मलप्रेरणेन निर्हरेत्।

**विषाभिघातपिटिकाकुष्ठशोकविसर्पिणः।**
**कामलापांडुमेहार्तान्नातिस्निग्धान् विरेचयेत् ५६**

नातिशब्दोऽत्रेषदर्थे। नातिशीतगुप्तमित्यत्र यथा। विषाद्यार्तानीषत्स्निग्धान् विरेचयेत्।

**सर्वान् स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान्।**

सर्वानीषत्स्निग्धान् विषाद्यार्तादीन् स्नेहविरेकैः शोधयेत्। स्नेहभावितांश्च पुरुषान् रूक्षैर्विरेकैः शोधयेत्।

**कर्मणां वमनादीनां पुनरप्यंतरेंऽतरे॥ ५७॥**
**स्नेहस्वेदौ प्रयुंजीत स्नेहमंते बलाय च।**

वमनादीनां कर्मणामंतरेंऽतरे मध्ये मध्ये पुनरपि भूयः स्नेहस्वेदौ प्रयुंजीत। अंते च कर्मणां बलाय शरीरस्य बलाधानार्थं स्नेहं प्रयुंजीत। तदेषोऽर्थो बोद्धव्यः। आदौ स्नेहस्वेदौ ततो वमनं पुनः स्नेहस्वेदौ ततो विरेचनं पुनः स्नेहस्वेदौ ततोऽनुवासनं पुनः स्नेहस्वेदौ ततो निरूहबस्तिरिति।

किमित्येवं विधीयत इत्याह।

**मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा॥५८॥**
**स्नेहस्वेदैस्तथोत्क्लेश्य ह्रियते शोधनैर्मलः।**

मलो हि देहादुत्क्लेश्य पतनोन्मुखीकृत्य शोधनैर्विरेचनादिभिर्ह्रियते। कथमिव। वाससो वस्त्राद्यथा स्नेहस्वेदैः।

स्नेहस्वेदानभ्यासे दोषमाह।

**स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः॥ ५९॥**
**दारु शुष्कमिवाऽऽनामे शरीरं तस्य दीर्यते।**

यो नरः स्वेदस्नेहावनभ्यस्याऽशीलयित्वा शोधनं कुर्यात्तस्य शरीरं दीर्यते। कथमिव। आनाम आनमने काष्ठं शुष्कं यथा दीर्यते।

सांप्रतं संशुद्धेः कालमाह।

**बुद्धिप्रसादं बलमिंद्रियाणां**
**धातुस्थिरत्वं ज्वलनस्य दीप्तिम्।**
**चिराच्च पाकं वयसः करोति**
**संशोधनं सम्यगुपास्यमानम्॥ ६०॥**

यौवनादेः पाकः परिणाम इति। उपजातिर्वृत्तम्।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामष्टादशोऽध्यायः॥ १८॥

---

## एकोनविंशोऽध्यायः।

मलहरणार्थं पूर्वाध्याय उक्तः। बस्तिनाऽपि मला निर्ह्रियंत इति वमनविधेरनंतरं बस्तिविधिरुपदेशो युक्त इत्याह।

**अथाऽतो बस्तिविधिमध्यायं व्याख्यास्यामः।**

अथाऽत इति । बस्तिना दीयत इति बस्तिस्तस्य विधिः । शेषं पूर्ववद्व्याख्येयम् ।

**वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते ।**
**उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधश्च सः ॥१॥**
**निरूहोऽन्वासनो बस्तिरुत्तरः**

वात उल्बणोऽधिको येषां दोषाणां तेषु बस्तिरिष्यते । आचार्यैरिति शेषः । तत्र वातपित्ते वातश्लेष्मण्यथवा केवले वायौ बस्तिरिष्यते । उपक्रमाणां चिकित्सानां सर्वेषां स बस्तिरग्रणीः प्रधानतमः । स च त्रिप्रकारः । तदेव त्रैविध्यमाह । निरूहोऽन्वासनो बस्तिरुत्तर इति । यदा तूत्तरेण मार्गेण मेढ्रादिना दीयत इत्युत्तरबस्तिः ।

**तेन साधयेत् ।**
**गुल्माऽऽनाहखुडप्लीहशुद्धाऽतीसारशूलिनः॥२॥**
**जीर्णज्वरप्रतिश्यायशुक्राऽनिलमलग्रहान् ।**
**वर्ध्माऽश्मरीरजोनाशान्दारुणांश्चाऽनिलामयान्॥**

तेनेत्यनेन निरूहः परामृश्यते । कथमितिचेत् । ब्रूमः । अनास्थाप्याश्चेत्यधीते । तत्र के निरूह्या इत्यपि । ते संत्यत्राऽनिरूह्याः । पुनरिमे प्रतिवक्तुं युज्यंते । अपि च । आस्थाप्या एव चान्वास्या इति पठंति केचिदास्थाप्या इति न गम्येत यदीह निरूहो न परामृश्येत । तस्मात्तेनेत्यनेन निरूहस्य ग्रहणं न्याय्यम् । तेन निरूहेण गुल्मादींस्तथा जीर्णज्वरादीन् कृच्छ्रान् वातरोगांश्चोपक्रमेत् । गुल्मादीनां शूलांतानां द्वंद्व इनिः कार्यः । शुक्रादीनां ग्रहेण संबंधः । शुक्रग्रहो रेतोविबंधः । अनिलग्रहो वायोरसंचारः । रजोनाशः स्त्रियाः पुष्पनाशः ।

**अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।**
**आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ४॥**
**कासश्वासप्रमेहार्शोहिध्माऽऽध्मानाल्पवर्चसः ।**
**शूनपायुः कृताहारो बद्धच्छिद्रोदकोदरी ॥ ५ ॥**
**कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।**

अतिस्निग्धादयः सप्तममासगर्भिण्यंता अनास्थाप्या अनिरूह्याः । वमिमान् प्रसक्तच्छर्दिः । बद्धादिरुदरेण संबंधः । तत इनिर्मत्वर्थीयः । यद्वाऽतिसारिण आस्थाप्या इत्यनेनाऽऽमातिसारिणोऽनास्थाप्यत्वे लब्धे पुनर्वचनमतिप्रमाथित्वेनाऽऽमातिसारिणः कथंचिदप्यनास्थाप्या इति। तत्राऽतिस्निग्धस्य दोषानुत्क्लेश्य निरूहः श्वयथुमुदरं च जनयेत् । क्षतोरस्ककृशयोः क्षोभव्यापन्नं शरीरमाशु पीडयेत् । आमातिसारिणो दोषस्य सम्यगनिर्हरणाद्देहस्य क्षामत्वादतिपीडां कुर्यात् । प्रसक्तच्छर्दिषो दोषोत्क्लेशनिरूहमूर्ध्वं नयेत् । कृतवमनविरेकयोः सुरिक्तं देहं क्षतं क्षार इव दहेत् । कृतनस्यस्य विवृतोर्ध्वस्रोतस्तया विभ्रंशं कुर्यात् । कासश्वासादीनामुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्वं व्रजेत् । अर्शःप्रभृतीनां भृशतरमाध्मानान्मृत्युर्वा स्यात् । अल्पवर्चस्कादीनां स्तंभजाड्यादीनावहेत् । गर्भिण्याः पूर्वोक्ता एव दोषाः ।

**आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः॥६॥**
**रूक्षाः केवलवातार्ताः**

य एवाऽस्थाप्यास्त एवाऽनुवास्याः । आङ्पूर्वात्तिष्ठतेर्णिजंतादनुपूर्वाच्च वसतेरर्हार्थे ण्यत् । विशेषेणाऽतिवन्ह्यादयोऽनुवास्याः ।

**नाऽनुवास्यास्त एव च ।**
**येऽऽनास्थाप्यास्तथा पांडुकामलामेहपीनसाः ७**
**निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः ।**
**अभिष्यंदिकृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥**
**पीते विषे गरेऽपच्यां श्लीपदी गलगंडवान् ।**

त एवेति । य एवाऽनास्थाप्या अनिरुह्यास्ते चाऽपि नानुवास्याः। तथा पांड्वादयो नानुवासनार्हाः । एतेषां हि दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत् । निरन्नस्याऽनुवासनात् स्नेहविपत्तिः । तथा चोक्तं खरनादेन । अभुक्तदत्तश्च तथा स्नेहो बस्तिर्विपद्यत इति । प्लीहादीनां स्तंभजाड्यादीनावहेत् । कृमिकोष्ठस्याऽनुवासनादयः पूर्वमनिर्हृतैः कृमिभिरतिबहुत्वादशेषा निःसरणेन हृदयमतिकर्षद्भिश्छर्दयेयुः । आढ्यमारुतस्य सम्यग्दोषानिर्हरणादामवृद्धिः । पीते विषे गरे च नाऽनुवास्या इति योज्यम् । अपच्यां च । क्रमेण श्लीपदीतीनिर्गलगंडवानिति मतुप् । अपच्यादयो नाऽनुवास्या इति । संग्रहे चोक्तम् । अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् । सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते । तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता । कायाग्नेराशु नाशश्च विशेषादनिवर्तिना । स्नेहः सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलम् । पक्वस्थं हंति पक्वस्थश्च्यवते चान्नपाकतः । निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि । तावन्न मूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ । ऊर्ध्वं वा शकृता सार्धं संस्थितौ कोष्ठ एव वा । समलाहारविष्टब्धौ हरेतामाशु जीवितम् । भुक्त एवानुवास्योऽस्मान्न निरूह्योऽत्र भुक्तवानिति ।

निरूहान्वासनयोर्नेत्रस्य लक्षणमाह ।

**तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम् ॥ ९ ॥**
**गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ।**

तयोर्निरूहान्वासनयोर्नेत्रं भवति । नीयते प्राप्यते स्नेहकल्काद्यपानमिति नेत्रम् । नेत्रेति णेः ष्ट्रन्प्रत्ययः । किंभूतं नेत्रम् । हेमादीति । आदिशब्दः प्रकारे । तेन रूप्यरीतिकायस्कांस्यत्रपुसीसादयो गृह्यंते । दारु शिंशपादिकाष्ठम् । अस्थि गजादेः । वेणुर्वंशः । एतेषां द्वंद्वः । एभ्यो जातं तयोर्निरूहान्वासनयोर्नेत्रं भवति । किंभूतम् । गोपुच्छाकारम् । गोपुच्छ इवाऽकारो यस्य तत् । तथाऽच्छिद्रं निर्विवरं तथा श्लक्ष्णं कोमलं तथाऽप्यृज्ववक्रम् । गुलिकासदृशमतीक्ष्णं मुखं यस्य तदेवम् ।

अथाऽस्य प्रमाणमाह।

**ऊनेऽब्दे पंच पूर्णेऽस्मिन्नासप्तभ्योंऽगुलानि षट्॥१०॥**
**सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव।**
**द्वादशैव परं विंशात्**

अपूर्णे वर्षे नेत्रस्य पंचांगुलानि। आतुरांगुलप्रमाणमिति गम्यते। दैर्घ्येण चेत्येतदप्यनुक्तं गम्यते। वक्ष्यति हि। स्वांगुष्ठेन समं मूले स्थौल्येनेति। आसप्तभ्यः सप्तवर्षाणि मर्यादीकृत्य षडंगुलानि प्रमाणम्। आङत्र मर्यादायां नाभिविधौ। तेन षड्वर्षे बाले षडंगुलानि नेत्रम्। अन्यथा सप्तवर्षस्याऽपि षडेवेति प्राप्नोति। वक्ष्यति तु सप्तमे सप्तेति। एवं च पूर्वापरं व्याहतं स्यात्। तस्मान्मर्यादायामाङित्यवेहि। सप्तमे वर्षे सप्तांगुलानि। द्वादशे वत्सरे तान्यंगुलान्यष्टौ नेत्रम्। द्वादशानां पूरण इति तस्य पूरणे डडिति डट्। एवं षोडश इत्यत्र। षोडशसंवत्सरे नवांगुलानि नेत्रम्। विंशाद्वत्सरात्। तस्मादूर्ध्वमेकविंशप्रभृतिवर्षेषु द्वादशांगुलानि नेत्रम्। नातोऽप्यधिकानीत्येवशब्दार्थः। विंशतिशब्दात्पूरणे डटि तिविंशतेर्डितीति तिलोपाद्विंशशब्दः।

**वीक्ष्य वर्षांतरेषु च॥ ११॥**
**वयोबलशरीराणि प्रमाणमभिवर्धयेत्।**

वर्षांतरेष्वंतरालावच्छिन्नेषु वर्षेषु नवमदशमादिषु वीक्ष्य पर्यालोच्य नेत्रस्य प्रमाणमभिवर्धयेत्। चशब्दो भिन्नक्रमः। न केवलं वर्षांतरेषु प्रमाणमभिवर्धयेत्। यावद्वयोबलादीनि निरूप्य प्रमाणं चाऽभिवर्धयेत्।

**स्वांगुष्ठेन समं मूले स्थौल्ये नाऽग्रे कनिष्ठया॥१२॥**

स्थौल्येन परिणाहेन स्वांगुष्ठेन तुल्यं मूले नेत्रं तथाऽग्रं प्रांतस्तस्मिन् कनिष्ठयांऽगुल्या समं नेत्रं स्यात्। खरनादेऽप्युक्तम्। बस्तिनेत्रमृजु शुक्लं सद्वृत्तं गुलिकामुखम्। भवेद्गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम्। या त्रिभागप्रणयने मर्यादा कर्णिका भवेत्। द्वे कर्णिके चोपरिष्टाद्वस्याधारेऽथवांतरे। स्वांगुष्ठकपरीणाहं मूलं नेत्रस्य शस्यते। मध्यं त्वनामिकातुल्यमग्रं तुल्यकनिष्ठिकम्। स्वेनांगुलिप्रमाणेन दैर्घ्यं स्याद्द्वादशांगुलम्। कर्कंधुप्रवहच्छिद्रं श्रेष्ठमन्ययथावयः। विंशद्द्वादशषड्वर्षे द्वादशाष्टषडंगुलम्। कर्कंधुकसतीनाग्रमुखं छिद्रवहमित्यादि। मुनिरप्यवोचत्। षड्द्वादशांगुलसंमितानि षड्विंशतिद्वादशवर्षजानाम् स्युर्महत्कर्कंधुसतीनवाहिच्छिद्राण्यपि हितानि चैव। यथा वयोंऽगुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्यात् परिणाह इति।

अधुना बिंदुद्वारेण नेत्रस्थौल्यप्रमाणमधिकं दर्शयन्नाह।

**पूर्णेऽब्देंऽगुलमादाय तदर्धाऽर्धप्रवर्धितम्।**
**त्र्यंगुलं परमं छिद्रं मूलेऽग्रे वहते तु यत्॥१३॥**
**मुद्गं माषं कलायं च क्लिन्नं कर्कंधुकं क्रमात्।**

वर्षे पूर्णे सत्यंगुलमादाय स्वांगुलात्प्रभृति क्रमेण त्र्यंगुलं छिद्रं मूले नेत्रस्य भवति। किंभूतं छिद्रम्। अर्धस्याऽर्धमर्धार्धम्। तस्यांऽगुलस्यार्धार्धं तेन प्रवर्धितम्। तत्र प्रथमे वर्षेऽगुलमात्रं छिद्रं यावद्वर्षाणि षट्। सप्तमे वर्षे सपादमंगुलं यावदेकादश वर्षाणि। द्वादशे वर्षे सार्धमंगुलं यावत्षोडश वर्षाणि। षोडशे वर्षे पादोनमंगुलद्वयम्। सप्तदशे वर्षेऽगुलद्वयम्। अष्टादशे वर्षे सपादमंगुलद्वयम्। एकोनविंशतिवर्षे सार्धमंगुलद्वयम्। विंशतिवर्षस्य पादोनमंगुलित्रयम्। एकविंशतिवर्षस्य त्र्यंगुलं छिद्रमिति क्रमो वेद्यः। परममित्यनेनैतद्गमयति। परममुत्कर्षमाश्रित्येदं मूलच्छिद्रम्। मध्यमं तु यत्तच्छिद्रं स्वांगुष्ठेनेत्यनेनोक्तम्। ऊनवर्षस्य त्वर्धांगुलं छिद्रमेतदपेक्षया कल्प्यम्। अग्रे तु छिद्रं तद्वद्भवति यन्मुद्गादि वहति। तत्र वार्षिकस्य मुद्गवाहि यावत्षड्वर्षम्। सप्तवर्षस्य मापवाहि यावदेकादशोऽब्दः। द्वादशवर्षस्य कलायवाहि षोडशवर्षस्य स्विन्नकलायवाहि एकविंशतिवर्षस्य कर्कंधुवाहीति क्रमाद्वयःप्रमाणम्। ऊनवर्षस्य च न मुद्गादिवाहि कल्प्यम्। अग्रच्छिद्रप्रमाणं चैतदग्रे कनिष्ठयेत्यत्राऽपि संगच्छत एव। दैर्घ्यप्रमाणं चाऽत्र पक्षे पूर्वमेव योज्यम्। स्वांगुष्ठेन समं मूले स्थौल्ये प्रमाणं चेत्यनेन छिद्रप्रमाणं स्वमत्या भिषजा प्रकल्प्यम्। तथा त्र्यंगुलं परमं छिद्रमित्यत्र स्थौल्यप्रमाणं स्वधियैव निरूप्यम्। तंत्रकृता तु ग्रंथगौरवभयादुक्तप्रायत्वाच्चेह नोक्तम्।

**मूलच्छिद्रप्रमाणेन प्रांते घटितकर्णिकम्॥ १४॥**
**वर्त्याऽग्रे पिहितं मूले यथास्वं द्व्यंगुलांतरम्।**
**कर्णिकाद्वितयं नेत्रे कुर्यात्**

मूले यच्छिद्रमुक्तं तत्प्रमाणेन घटिता संपादिता कर्णिका छत्राकारा गुदाधिकांतःप्रवेशरोधिनी यस्मिंस्तदेवम्। तथा वर्त्या दशादिकृतया प्रांते पिहितं स्थगितम्। मूले यथास्वमूनवर्षादिकस्य तदंगुलप्रमाणेन द्व्यंगुलांतरं कर्णिकायुगलं मूलप्रदेशे नेत्रे विदधीत बस्तिपुटयोजनार्थम्।

अत एवाह।

**तत्र च योजयेत्॥ १५॥**
**अजाविमहिषादीनां बस्तिं सुमृदितं दृढम्।**
**कषायरक्तं निश्छिद्रग्रंथिगंधशिरं तनुम्॥ १६॥**
**ग्रंथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम्।**

तत्रेत्यादि। तस्मिंश्च कर्णिकाद्वितयेऽजादीनां बस्तिं योजयेत्। आदिशब्देन गोहरिणवराहमहिषाणां ग्रहणम्। अजादीनामित्येवं निर्देशेऽप्यविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्येभ्यो बस्तिभ्य एतद्बस्तेर्योग्यतरत्वप्रतिपादनार्थम्। किंभूतं बस्तिम्। सुमृदितं सस्नेहं मुहुः सुष्ठु मर्दितं तथा दृढं तथा कषायेण हरीतक्यादिना रक्तं तथा छिद्रं च ग्रंथिश्च गंधश्च शिराश्च ताः निर्गता न संति यस्य तन्निश्छिद्रग्रंथिगंधशिरम्। तथा तनुं न स्थूलं

तथा साधु सम्यक् सूत्रेण ग्रंथितं बद्धं तथा सुखेनाऽकृच्छ्रेण संस्थापनीयमौषधं यत्र तदेवम्।

**वस्त्यभावेंऽकपादं वा न्यसेद्वासोऽथवा घनम्॥१७**

बस्तेरभावे सत्यंकपादं छागेणाद्यवयवविशेषं वा न्यसेन्नेत्रे योजयेत्। अथवा वस्त्रं घनं न्यसेत्।

**निरूहमात्रा प्रथमे प्रकुंचो वत्सरात्परम्।**
**प्रकुंचवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः॥१८॥**
**प्रसृतं वर्धयेदूर्ध्वं द्वादशाऽष्टादशस्य च।**
**आसप्ततेरिदं मानं दशैव प्रसृताः परम्॥१९॥**

निरूहस्य मात्रा प्रथमे वर्षे कषायस्नेहसहितस्य प्रकुंचः पलप्रमाणम्। षण्मासादौ त्वेतदनुसारेणार्धपलादि कल्प्यम्। वर्षात्परं प्रकुंचवृद्धिः प्रतिसंवत्सरं कार्या यावत्षट् प्रसृता द्वादश पलानि। तत ऊर्ध्वं प्रसृतं वर्धयेत्। प्रत्यब्दमित्यनुवर्तते। ततो द्वादशवर्षस्यैव द्वादश पलानि। अनंतरं त्रयोदशवर्षादिषु प्रतिवर्षं पलद्वयं निरूहमात्रायां वर्धयितव्यं क्रमेणैव यावत्सप्तदशवर्षाणि। अष्टादशवर्षस्य तु द्वादश प्रसृताश्चतुर्विंशतिपलानि। इदं मानं प्रमाणं सप्ततिवर्षाणि यावत्। परं सप्ततेरूर्ध्वं दशैव प्रसृता मानं नाऽधिकम्।

एवं सांवत्सरिकादारभ्य यावद्वर्षशतिकस्तावन्निरूहमात्रामभिधायाऽनुवासनमात्रामधिकृत्याह।

**यथायथं निरूहस्य पादो मात्राऽनुवासने।**

यथायथं यथास्वं वार्षिकस्यैकविंशतिवत्सरादेर्वा निरूहस्य पादश्चतुर्भागो मात्रानुवासनेऽनुवासनविषये मात्रा। यस्य पलं निरूहस्तस्य कर्षप्रमाणमनुवासनमित्यर्थः। एवं सर्वत्र कल्प्यम्।

**आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः॥२०॥**
**अन्वासनार्हं विज्ञाय पूर्वमेवाऽनुवासयेत्।**
**शीते वसंते च दिवा रात्रौ केचित्ततोऽन्यदा॥२१॥**
**अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु।**
**अस्निग्धरूक्षमशितं सानुपानं द्रवादि च॥२२॥**
**कृतचंक्रमणं मुक्तविण्मूत्रं शयने सुखे।**
**नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः २३**
**संकोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम्।**

आस्थाप्यं निरूहणार्हं स्निग्धं तथा स्विन्नं तथा शुद्धमूर्ध्वाधस्तथा भूयोऽपि लब्धबलं तथाऽनुवासनयोग्यं विदित्वा पूर्वमेव निरूहादनुवासयेत्। शीते हेमंतशिशिरयोर्ऋत्वोस्तथा वसंते दिवाऽनुवासयेत्। केचिदाचार्या अन्यदा शीताद्वसंताच्चाऽन्यस्मिन् ग्रीष्मप्रावृट्शरदाख्ये ऋतौ रात्रावनुवासयेत्। केचिदिति भिन्नक्रमस्ततोऽन्यदेत्यतोऽनंतरं द्रष्टव्यः। इति केचिदाहुरिति वाक्यशेषः। धान्वंतरास्तु सर्वथैव रात्रावनुवासनं नेच्छंति। धन्वंतरिमतमधिकृत्य संग्रहेऽधिजगे। न रात्रौ प्रणयेद्वास्ति दोषोत्क्लेशो हि रात्रिजः। स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरमिति। तदेवं तद्देशांतरादिवशात् प्रमाणयितव्यम्। किंभूतं नरम्। अभ्यक्तस्नातं पूर्वमभ्यक्तः पश्चात्स्नातः। पूर्वकालेति समासः। उचिताद्यथेन भोजनमभ्यस्तं तस्माच्चतुर्थभागहीनमशितं तथा हितं लघुगुणयुक्तं तथा किंचित्स्निग्धरूक्षं तथा सानुपानं द्रवादि च। आदिशब्देन द्रवोष्णमनभिष्यंदीत्यादि विशिष्टं भुक्तवंतमिति गमयति। उक्तं च संग्रहे। अतिस्निग्धाशिनो ह्युभयमार्गात् स्नेहो मदमूर्छाऽग्निसादहृल्लासादीन् जनयति। रूक्षाशिनो विष्टंभं बलवर्णहानिं च। अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चान्नावृते न तदावरणाद्व्यापदमिति। किंभूतम्। किंहितमशनमात्रम्। तथा त्यक्तमूत्रपुरीषं तथा शयने सुखावहे संविष्टं स्थितम्। किंभूते। नाऽत्युच्छ्रिते नाऽत्युन्नते न चोच्छीर्षे त्यक्तोच्छीर्षे। कथं संविष्टम्। वामपार्श्वतो वामपार्श्वेन। संकोच्य दक्षिणं सक्थि वामसक्थ्न उपरीति वृद्धवैद्याः। ततो दक्षिणसक्थ्नोपरं वामं सक्थि प्रसार्य। संग्रहे चोक्तम्। शयनेनात्युच्छ्रिते स्वास्तृत ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शिरसं संवेशयेदिति।

**अथाऽस्य नेत्रं प्रणयेत्स्निग्धे स्निग्धमुखं गुदे २४**
**उच्छ्वास्य वस्तेर्वदने वद्धे हस्तमकंपयन्।**
**पृष्ठवंशं प्रति ततो नाऽतिद्रुतविलंबितम्॥२५॥**
**नाऽतिवेगं न वा मंदं सकृदेव प्रपीडयेत्।**

अस्यैवंभूतावस्थस्यातुरस्य गुदे स्निग्धे कृते बस्तेर्वदन उच्छ्वासवातं निःसार्य बद्धे सति नाऽतिशीघ्रं नाऽविलंबितं नाऽतिवेगं नवा मंदं तथा पृष्ठवंशाभिमुखमेकवारमेव नेत्रं स्निग्धप्रांतं प्रपीडयेत्। कथं प्रपीडयेत् हस्तमकंपयन्। अतिद्रुतादिपीडनदोषा बस्तिव्यापदि वक्ष्यमाणाः।

**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति॥२६॥**

सावशेषं च स्नेहं कुर्वीत। कुतो हेतोरित्याह। यस्मात् शेषे स्नेहे वायुस्तिष्ठति।

**दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ।**
**तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत्२७**

दत्ते चाऽतिस्नेहे सत्युत्तानगात्रस्य तु तस्य स्फिजौ हस्तेनाहन्यात्। तथा तेनैव प्रकारेण तत्पार्ष्णिभ्यां स्फिजौ ताडयेत्। शय्यां खट्वां पादश्चरणदेशात्त्रीन्वारानुत्क्षिपेन्न तु मूर्धतः।

**ततः प्रसारितांगस्य सोपधानस्य पार्ष्णिके।**
**आहन्यान्मुष्टिनांगं च स्नेहेनाभ्यज्य मर्दयेत्॥२८॥**
**वेदनार्तमिति स्नेहो नहि शीघ्रं निवर्तते।**
**योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्नकार्यकृत्२९**

ततः शय्योत्क्षेपादनंतरं प्रसारितशरीरस्य दत्तगेंदुकस्य पार्ष्णिके पार्ष्ण्यो मुष्ट्या हन्यात्। अंगं शरीरं च स्नेहेन तैलादिना-

भ्यज्य मर्दयेत् । किमेवं क्रियत इत्याह । अंगं वेदनार्तं पीडातुरमिति हेतोर्यस्मादाशु स्नेहो न निवर्तते । शीघ्रमपयाते च स्नेहे सत्यपरः स्नेहो देयः । कस्मादेवं विधीयत इत्याह । स्नेहश्च शरीराभ्यंतरेऽतिष्ठन्नेव कार्यकृन्न स्नेहने समर्थ इत्यर्थः ।

**दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।**

दीप्ताग्निं तु पुरुषं निवृत्तस्नेहं संतं लघुमात्रया स्वभावतश्चाशयेत् ।

**निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥३०॥**
**अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।**
**तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥३१॥**

स्नेहस्य त्रयः प्रहराः परो निवृत्तिकालः । ततः प्रहरत्रयात् परतो रात्रिंदिवमुपेक्षेत । न तदाकृष्टये यत्नं कुर्यात् । परतोऽहोरात्रात्फलवर्तिभिरर्शश्चिकित्सितोक्ताभिरथवा तीक्ष्णैर्बस्तिकल्पोक्तैर्बस्तिभिः स्नेहागमनार्थं यतेत ।

**अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ।**
**उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥३२॥**
**प्रातर्नागरधान्यांभः कोष्णं केवलमेव वा ।**

अतिरौक्ष्यादनागच्छन् स्नेहो यदि जाड्याग्निसादादिदोषान्न विधत्ते तदुपेक्षेतैव न विष्कासने यतेतेत्यर्थः । ततो निशां रात्रिमध्युषितः पुमान् प्रातः प्रभाते शुंठीधान्यांबु कदुष्णं पिबेत् । केवलमेव वा नागरधान्यकरहितं कोष्णं जलं पिबेत् ।

**अन्वासयेत्तृतीयेऽह्नि पंचमे वा पुनश्च तम् ॥३३॥**
**यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान् ।**
**व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥**

तमातुरं भूयस्तृतीये दिवसे पंचमे वाऽनुवासयेत् । अथवा यथा स्नेहपाको भवेदित्यग्न्यपेक्षया समरात्रेऽधिके न्यूने वा त्रिरात्रे वा यथायोगमनुवासयेत् । अतोऽस्मादेव हेतोरधिकपवनान्व्यायामशीलानत्यग्निदीप्तान् रूक्षांश्च पुरुषान् प्रत्यहमनुवासयेत् ।

**इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।**
**निरूहं शोधनं युंज्यादस्निग्धे स्नेहनं तनोः ॥३५॥**

इति पूर्वोक्तेन प्रकारेण स्नेहैस्त्रिचतुरैर्वा स्निग्धे सति स्रोतोविशोधनार्थं निरूहं शोधनं प्रयोजयेत् । अस्निग्धे सति तनोः शरीरस्य स्नेहनं प्रयोजयेत् । त्रयो वा चत्वारो वा त्रिचतुराः । संख्ययाव्ययेति समासः । चतुरोच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमित्यच् समासांतः ।

**पंचमेऽथ तृतीये वा दिवसे साधके शुभे ।**
**मध्याह्ने किंचिदावृत्ते प्रयुक्ते बलिमंगले ॥ ३६ ॥**
**अभ्यक्तस्वेदितोत्सृष्टमलं नाऽतिबुभुक्षितम् ।**
**अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥३७॥**
**बस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ।**

अथाऽनुवासनादनंतरं तृतीये पंचमे वा वासरे मध्याह्ने किंचिदावृत्तेऽतिक्रांते तथा बलिमंगले विहिते सति पुरुषं कृताभ्यक्तस्वेदितं त्यक्तमलं किंचिद्बुभुक्षितं तथा प्रकृत्यादिभिर्ज्ञात्वा दोषादीन् विदित्वा । आदिशब्देन सात्म्यबलादिपरिग्रहः । इत्येवं सर्वमधिगत्य वैद्यो बस्तिं प्रकल्पयेत् । ननु दूष्यं देशमित्यादिना सर्वमुक्तमेवैतत्तत्किमनेनेति । ब्रूमः । निरूहमपि सापायं पश्यताचार्येणैतदुक्तम् । दूष्यदेशादि महता यत्नेनाऽलोचनीयमिति प्रतिपादनार्थं निरूहमात्रा प्रथममित्यादि सर्वमालोच्यम् । कथं प्रकल्पयेदित्याह । तद्विद्यैर्वैद्यकशास्त्रज्ञैर्बहुभिः सह सार्धम् ।

अथ निरूहकल्पनामाह ।

**क्राथयेद्विंशतिपलं द्रव्यस्याऽष्टौ फलानि च ३८**

द्रव्यस्य बस्तिकल्पोक्तस्य निरूहकल्पनार्थं विंशतिपलानि तथाऽष्टौ फलानि मदनफलानि सामान्यपरिभाषया षोडशगुणं जलं दत्त्वा क्राथयेत् । चतुर्भागावशेषश्च ग्राह्यः ।

**ततः क्राथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।**
**पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके ॥ ३९ ॥**

तस्मादेवंकृतात् क्राथाचतुर्थांशं स्नेहं वाते प्रकल्पयेत् । द्वादशप्रसृतो हि निरूहः । तत्र स्नेहं षट्पलिकं कल्पयेदित्यर्थः । पित्तेऽधिके स्वस्थे च पुरुषे षष्ठांशं स्नेहं चतुष्पलिकं प्रकल्पयेदिति प्रकृतम् । कफेऽधिके स्नेहमष्टमांशं त्रिपलिकं प्रकल्पयेत् । सर्वत्र च वातपित्तकफेष्वधिकेषु स्वस्थवृत्तेश्चाष्टमं भागं त्रीणि पलानि कल्कस्य प्रयोजयेदिति प्रकृतम् । ननु स्वस्थस्य दोषचालनं प्रतिषिद्धं तंत्रांतरीयैः । तद्ग्रंथो हि ।यो हि संचालयेत्सुप्तं वने सिंहं करादिभिः । स दोषांश्चालयेत् स्वस्थान् प्रच्छर्दनविरेचनैरिति । तस्मात् स्वस्थे निरूहस्य कल्पना न युक्तेति । तदेतदसत् । यस्मात् प्रागभिहितम् । शीतोद्भवं दोषचयं वसंते विशोधयन् ग्रीष्मजमभ्रकाले । घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्नजात्विति । तस्मादाचार्यवचनाज्ज्ञायते स्वस्थवृत्तेरपि शुद्धिविधानं संमतमिति । तंत्रकृतस्तंत्रांतरीयं मतं त्वसदेव शिष्टव्यवहारविरुद्धत्वात् ।

**सर्वत्र चाऽष्टमं भागं कल्काद्भवति वा यथा ।**
**नाऽत्यच्छसांद्रता बस्तेः**

सर्वत्र वाते पित्ते कफे च कल्कात् पेष्यद्रव्यादष्टमं भागं त्रीणि पलानि कल्पयेत् । भवति वेत्यादि । यथा नाऽत्यच्छता सांद्रता बस्तेः । यथा वा बस्तिरत्यच्छोऽतिसांद्रो वा घनो न भवति तथा कल्कः कल्पयितव्यः ।

**पलमात्रं गुडस्य च ॥ ४० ॥**
**मधुपट्वादिशेषं च युक्त्या**

पलमात्रं गुडस्य चेति पित्ते तदधिकं नेति ज्ञापनार्थं मात्रग्रहणम् । मधुपट्वादिशेषं च युक्त्या प्रकल्पयेत् । तत्रेयं युक्तिः । माक्षिकस्य पलचतुष्टयं सैंधवस्य च कर्षः । तथा क्वचिद्यवक्षारस्य कर्षः । आदिग्रहणान्मांसरससुरासवमूत्रक्षीरकांजिकानां ग्रहणम् ।

**सर्वं तदेकतः ।**
**उष्णांबु कुंभीबाष्पेण तप्तं खजसमाहतम् ॥ ४१ ॥**
**प्रक्षिप्य वस्तौ प्रणयेत्पायौ नात्युष्णशीतलम् ।**
**नाऽतिस्निग्धं नवा रूक्षं नाऽतितीक्ष्णं नवा मृदु ४२**
**नात्यच्छसांद्रं नो नाऽतिमात्रं नाऽपटु नाऽति च ।**
**लवणं तद्वदम्लं च**

तदेतत्सर्वमौषधमेकत एकस्मिन् कृत्वा भेषजपाकातिक्रांतिपरिहारार्थमुष्णांबु कुंभीबाष्पेण तप्तं खजेन दर्व्या हननकाष्ठेन समाहतमालोडितं तथा ब्रह्मदक्षेत्यादिना चाऽभिमंत्रितं बस्तौ प्रक्षिप्य पायौ गुदे प्रणयेत् । नाऽत्युष्णं नाऽतिशीतलं नाऽतिस्निग्धं न वा रूक्षं नाऽतितीक्ष्णं न वा मृदु नाऽत्यच्छं नाऽतिसांद्रं नाऽतिघनं नोनमात्रं न चाऽतिमात्रं नाऽपटु नाऽतिलवणं तद्वदम्लं चेत्यादिना नाऽत्यम्लम् । अतिशब्दप्रयोगादत्र मध्यमावस्थानुगमः ।

सांप्रतमन्यमतमभिधत्ते

**पठंत्यन्ये तु तद्विदः ॥ ४३ ॥**
**मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक् ।**
**कर्षार्धं माणिमंथस्य स्वस्थे कल्कपलद्वयम् ॥ ४४ ॥**
**सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ।**
**माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥४५॥**
**आवपेत निरूहाणामेष संयोजने विधिः ।**

पठंतीत्यादि । तद्विदो बस्तिविद एवं पठंति । यथा । मात्रां त्रिपलिकां कुर्यादित्यादि । संप्रति निरूहावयवानां माक्षिकादीनां संयोजनविधिमाह । माक्षिकमित्यादि । माक्षिकादि क्रमादावपेत् । कुंडके माक्षिकं प्रथमं प्रक्षिप्य मर्दयेत् । ततस्तत्रैव लवणं क्षिप्त्वा मेलयेत् । ततो लवणं तत्रैव मर्दयित्वा मिश्रयेत् । एवं स्नेहं ततोऽनु कल्कं ततः क्वाथमित्यनेन क्रमेण मिश्रयेदित्यर्थः । एवं योजितानि द्रव्याणि समरसतां यांति । समरसभावेन निरूहस्य सम्यग्योगो भवति । निरूहाणां संयोजने मिश्रण एष विधिरेतद्विधानम् ।

**उत्ताने दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६ ॥**
**कृतोपधानः संजातवेगश्चोत्कटकः सृजेत् ।**

निरूहे दत्तमात्रे तूत्तानः संस्तन्मना निरूहवेगे दत्तावधानस्तथा कृतोपधानः संस्तिष्ठेत् । समुद्गतवेगश्चोत्कटकः संस्त्यजेद्वेगमिति शेषः ।

**आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ॥ ४७ ॥**
**तत्राऽनुलोमिकं स्नेहक्षारमूत्राऽम्लकल्पितम् ।**
**त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥४८॥**
**विदध्यात्फलवर्तिं वा स्वेदनोत्रासनादि च ।**

आगतौ प्रत्यागमने कालः परमो मुहूर्तः । अपरस्तस्मान्मुहूर्तादन्यो विट्श्रद्धागमनकालो मृत्यवे मरणाय । तत्र तस्मान्मुहूर्तात्परमनागतनिरूहस्य त्वरितमपरं बस्तिं निरूहं प्रपीडयेदिति संबंधः । किंभूतं निरूहम् । आनुलोमिकमनुलोमकरम् । स्नेहस्तथा क्षारो यवक्षारादिस्तथा मूत्रं गोमूत्रमम्लं तक्रकांजिकादि तैः कल्पितं निरूहितम् । तथा स्निग्धं च तीक्ष्णमुष्णं च । स्निग्धयोगादेव स्निग्धत्वे सिद्धे स्निग्धग्रहणं निरूहाणां स्निग्धतरत्वप्रतिपादनार्थम् । आनुलोमिकमित्यध्यात्मादित्वाट्ठञ् । अथवा फलवर्तिं विदध्यात् । फलेन मदनफलेन युक्ता वर्तिः । सा चार्शश्चिकित्सिते वक्ष्यमाणा । स्वेदनोत्त्रासनादि च । स्वेदनं स्वेदः । उत्त्रासनं खड्गहस्तयोधदर्शनादिना कुपितनृपखड्गव्यग्रोग्रबाहुदर्शनादिनाऽऽकुलं कुर्यात् ।

**स्वयमेव निवृत्ते तु द्वितीयो वस्तिरिष्यते ॥ ४९ ॥**
**तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ।**

फलवर्त्याद्यायासं विनाऽपि निवृत्ते निरूहे सति द्वितीयो निरूह इष्यते । यत्नविशेषेण तु निरूहे निवृत्ते सति नाऽन्यं बस्तिं प्रपीडयेदित्युक्तं भवति । तृतीयोऽपीत्यपिः समुच्चये । एवं चतुर्थोऽपीति । यावद्वेति । पंचमादयोऽपि बस्तयो देया यावत्सम्यङ्निरूढत्वं स्यात् ।

कानि पुनः सम्यङ्निरूढलिंगानीत्याह ।

**विरिक्तवच्च योगादीन्विद्यात्**

निरूहे विरिक्त इव योगादीन् विद्यात् । तत्र चोक्तम् । हृत्कुक्षिशुद्धिरित्यारभ्य यावद्भवत्यतिविरिक्तस्य तथाऽतिवमनामया इति ।

**योगे तु भोजयेत् ॥ ५० ॥**
**कोष्णेन वारिणा स्नातं तनु धन्वरसौदनम् ।**

योगे तु निरूहस्य सम्यग्योगे सति सुखोष्णजलस्नातं संतं भोजयेत् । किम् । धन्वरसो जांगलरसश्चौदनश्च तद्धन्वरसौदनम् । किंभूतं धन्वरसौदनम् । तनु अघनम् । ननु यूषक्षीररसैः क्रमादिति वक्ष्यति तत्कथमिहेदमभ्युपपद्यते । ब्रूमः । वातविकारशमनार्थो हि निरूहः प्रायेणेष्यते । तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः । अग्रे च दोषाऽपेक्षया पथ्यं विशेषेणैवोपदेक्ष्यतेऽतो नाऽत्र किंचिदनुपपन्नम् । ननु दोषनिर्हरणं वमनविरेकाभ्यां द्रवादेव क्रियते । तत्र पेयादिक्रमो युक्तस्तथेहाऽपि युक्तः स्यात् । नैवम् । विरेकवमनाभ्यां हि वह्निस्थानमाच्छाद्यते तेनाऽग्निमांद्यं भवति । निरूहस्तु नाभेरूर्ध्वमगच्छन्नेव दोषनिर्हरणं करोति । तेन नाऽत्राग्निमांद्यापत्तिः । तस्मान्नाऽत्र पेयादिक्रमः । अपि च वातविकारविषयत्वाच्च रसौदनप्रायमेव पथ्यं युक्तम् ।

**विकारा ये निरूहस्य भवंति प्रचलैर्मलैः ॥ ५१ ॥**

**ते सुखोष्णांबुसिक्तस्य यांति भुक्तवतः शमम् ।**

प्रकर्षेण चलैर्दोषैर्ये विकारा भवंति ते कोष्णसलिलस्नातस्य कृतभोजनस्य सतः शमं गच्छंति । अत एव तत्कार्यमिति भावः ।

**अथ वातार्दितं भूयः सद्य एवाऽनुवासयेत् ॥५२॥**

अथ निरूहादनंतरं वातपीडितं पुरुषं सद्य एव तस्मिन्नेव दिनेऽनुवासयेत् ।

**सम्यग्घीनाऽतियोगाश्च तस्य स्युः स्नेहपीतवत् ।**

तस्याऽनुवासनस्य स्नेहपानस्येव सम्यग्योगादयः स्युः । स्नेहपीतस्येव स्नेहपीतवत् । षष्ठ्यंताद्वतिः ।

तत्र वातानुलोम्यमित्यादि घ्राणवक्त्रगुदस्रवा इत्युक्तं स्नेहपानं सम्यग्योगातियोगलक्षणम् । अन्यदनुवासनस्य सम्यग्योगलक्षणमाह ।

**किंचित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ५३ ॥**
**साऽनुलोमाऽनिलः स्नेहस्तत्सिद्धमनुवासनम् ।**

चशब्दः पूर्वोक्तं सम्यग्योगलक्षणं समुच्चिनोति । किंचिदल्पमात्रं कालं कोष्ठाभ्यंतरे स्थितः सन् सविट्कः साऽनुगुणपवनो निवर्तते निःसरति यः स एवंभूतः स्नेहस्तत्सिद्धमभिमतकार्यकार्यनुवासनम् ।

उक्तं च व्यस्तं समस्तं चेदं सिद्धानुवासनलक्षणम् ।

**एकं त्रीन् वा बलासे तु स्नेहवस्तीन् प्रकल्पयेत् ५४**
**पंच वा सप्त वा पित्ते नवैकादश वाऽनिले ।**
**पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥**

स्नेहबस्तीननुवासनानि एकं त्रीन्वा श्लेष्मविकारे प्रकल्पयेत् । कार्ये कारणोपचारादेवमुक्तम् । एवमग्रेऽपि चिंत्यम् । पित्ते पंच स्नेहबस्तीनथवा सप्त दद्यात् । नव एकादश वायौ दद्यात् । ततः पुनरयुग्मान् स्नेहबस्तीन् दद्यात् । ततः पुनरप्यास्थापनं दद्यात् । अयुग्मवचनं स्नेहबाहुल्येनाऽयं व्यवहारो युक्त इति प्रतिपादयितुम् । वातार्तस्य तु युग्मा अपि देया एव । तथा चाऽमुनैवाऽभ्यधायि । व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरमिति ।

**कफपित्ताऽनिलेष्वन्नं यूषक्षीररसैः क्रमात् ।**

कृतास्थापनस्य च पथ्यं श्लेष्मपित्तपवनेषु यथासंख्यं यूषादिभिः सहान्नमुपभोक्तव्यम् ।

**वातघ्नौषधनिःक्काथस्त्रिवृतासैंधवैर्युतः ॥ ५६ ॥**
**वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः ।**

बस्तिर्निरूहोऽनिले वातविषये वातघ्नौषधानि दशमूलादीनि तेषां निःक्काथो यवकादिसिद्धः सैंधवैर्युतस्तथा स्निग्धो मधुराम्ललवणयुक्तः पवने हितः ।

**न्यग्रोधादिगणक्काथौ पत्रकादिसितायुतौ ॥ ५७ ॥**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।**

पित्ते मधुरशिशिरौ सघृतदुग्धेक्षुरसमधू द्वौ बस्ती हितौ ।

**आरग्वधादिनिःक्काथवत्सकादियुतास्त्रयः ॥ ५८ ॥**
**रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।**

तथाऽऽरग्वधेंद्रयवेत्यादिकषायवत्सकमूर्वेत्यादिकषायाभ्यां युक्ता रूक्षा माक्षिकगोमूत्राभ्यां सहितास्तीक्ष्णादिगुणयुक्तास्त्रयो बस्तयः कफे हिताः ।

**त्रयश्च सन्निपातेऽपि दोषान्घ्नंति यतः क्रमात् ॥५९**

सन्निपाते त्रय एव बस्तयो हिताः । यस्मादेते त्रीन् दोषान् क्रमेण पराकुर्वंति ।

**त्रिभ्यः परं वस्तिमतो नेच्छंत्यन्ये चिकित्सकाः ।**
**नहि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६० ॥**

अत एव हेतोस्त्रिभ्यो बस्तिभ्यः परमपरे भिषजो निरूहं नेच्छंति । यतस्त्रयो दोषास्त्रिभिर्बस्तिभिर्निवर्तिता इति चतुर्थो दोषो न विद्यते यं लक्षीकृत्य भूयश्चतुर्थः पुटको दीयते ।

**उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।**
**त्रिधैवं कल्पयेद्वस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥**

अन्ये वैद्यास्तृतीयो बस्तिर्दोषाणां शमनं क्रमादित्यनया युक्त्या बस्तित्रयं कल्पयेदिति जगदुः ।

तत्र किं क्रियतामित्याह ।

**दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ।**

तदत्र दोषभेषजसात्म्यादिवशात्सर्वमप्येतत्प्रमाणीकार्यम् ।

अथ पूर्वमतानुग्राहि स्वमत आह ।

**सम्यङ्निरूढलिंगं तु नाऽसंभाव्य निवर्तयेत् ॥ ६२ ॥**

सम्यङ्निरूढलिंगं त्वसंभाव्याऽसंपाद्य न निवर्तयेत् । बस्तिदानं कारयेदेवेति ।

इदानीं कर्मकालयोगाख्यान् बस्तिविशेषानाह ।

**प्राक्स्नेह एकः पंचांते द्वादशाऽऽस्थापनानि च ।**
**सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ६३ ॥**

प्राक् पूर्वमेकः स्नेहबस्तिः । अंतेऽवसाने पंच स्नेहाः । तथा निरूहा द्वादश सहानुवासनाः । इत्येवं त्रिंशद्बस्तयः कर्मेति गदिताः ।

**कालः पंचदशैकोऽत्र प्राक् स्नेहांते त्रयस्तथा ।**
**षट् पंच बस्त्यंतरिताः**

पंचदश बस्तयः काल उच्यते । कथमुच्यते । एकः पूर्वं स्नेहस्तथांऽते त्रयः स्नेहास्तथा षट् स्नेहाः पंचभिर्बस्तिभिरंतरिता इति ।

**योगोऽष्टौ बस्तयोऽत्र तु ॥ ६४ ॥**
**त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यंतयोरुभौ ।**

योगो वाष्टौ बस्तयः । कथमित्याह । त्रयो निरूहास्त्रीणि चाऽनुवासनानि तथाऽद्यंतयोर्द्वौ स्नेहबस्ती इति ।

**स्नेहबस्तिं निरूहं वा नैकमेवाऽतिशीलयेत् ॥ ६५॥**
**उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ।**

स्नेहबस्तिमथवा निरूहमेकमेव केवलमतिशयेन न शीलयेत् । यतः स्नेहादतिसेवितादुत्क्लेशाऽग्निमांद्ये जायेते।निरूहादतिसेवितात्पवनाद्भयं जायते ।

**तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चाऽनुवासितः ६६**

तस्मात्कारणान्निरूढो नरः स्नेहनार्हः स्यात् । अनुवासितश्च पुरुषो निरूहणार्हो भवेत् ।

**स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ।**

एवं पूर्वोक्तया स्नेहशोधनयुक्त्या बस्तिकर्म सेवितं त्रीन् दोषान् जयति ।

अधुना मात्राबस्तिं लक्षयति ।

**ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ६७॥**
**मात्राबस्तिः स्मृतः स्नेहः**

ह्रस्वया यामद्वयजरणलक्षणया स्नेहमात्रया समस्तुल्यो योजितः स्नेहो मात्राबस्तिसंज्ञः स्मृतः सद्वैद्यैरिति शेषः । अन्यैश्चाऽन्यथा स्नेहमात्रोक्ता । यथा । षट्पला तु भवेज्ज्येष्ठा त्रिपला मध्यमा भवेत् । कनीयस्यध्यर्धपला त्रिधा मात्राऽनुवासन इति ।

**शीलनीयः सदा च सः ।**
**बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिंतकैः ॥ ६८ ॥**
**वातभग्नबलाऽल्पाग्निनृपेश्वरसुखात्मभिः ।**
**दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९॥**

स च मात्राबस्तिर्बालादिभिः सततमेव शीलयितव्यः । स च शीलितो दोषापहस्तथा निष्परीहारोऽनियंत्रणो बलाय हितो निर्गतपुरीषादिकः सुखकारी स्यात् ।

**बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।**
**द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७० ॥**

बस्तिस्थाने रोगेषु नारीणामित्यर्थाल्लभ्यते । नारीणां योनिगर्भाशयेषु च द्वाभ्यां त्रिभिर्वाऽऽस्थापनैः शुद्धेभ्यस्तेभ्यो नरेभ्यः स्त्रीभ्यश्चोत्तरबस्तिं दद्यात् । द्वे वा त्रीणि वा द्वित्राणि च तान्यास्थापनानि च द्वित्रास्थापनानि तैः शुद्धा द्वित्रास्थापनशुद्धाः । पुमान्स्त्रियेत्येकशेषः । गुदादुत्तरेण मार्गेण दीयत इत्युत्तरबस्तिः ।

अथ नेत्रस्य परिमाणमाह ।

**आतुरांगुलमानेन तन्नेत्रं द्वादशांगुलम् ।**
**वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१ ॥**
**सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसंभवम् ।**
**कुंदाश्वमारसुमनः पुष्पवृंतोपमं दृढम् ॥ ७२ ॥**

तन्नेत्रमुत्तरबस्तियंत्रकमातुरांगुलप्रमाणेन द्वादशांगुलं दैर्घ्येणेत्यर्थादेव प्रतीयते । पुरुषाणामेवैतदिति वेद्यम् । स्त्रीणां हि वक्ष्यति । नेत्रं दशांगुलं मुद्गप्रवेशमिति । तच्च वृत्तं वर्तुलं गोपुच्छाकृति तथा मूले मध्ये चोत्पादितकर्णिकं तथा सिद्धार्थकः प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेशं तादृशमग्रं प्रांतो यस्य नेत्रस्य तत् सिद्धार्थकप्रवेशाग्रं तथा श्लक्ष्णमतिकोमलं तथा हेमादिजम् । आदिशब्देन धात्वादयः प्रागुक्ता गृह्यंते । कुंदकरवीरजातीपुष्पवृंतसदृशं दृढं च । अश्वमारः करवीरः ।

**तस्य बस्तिर्मृदुर्लघुर्मात्रा शुक्तिर्विकल्प्य वा ।**

तथा तस्य नेत्रस्य बस्तिर्मृदुर्लघुर्योज्य इति शेषः । मात्रा शुक्तिः कर्षद्वयम् । शुक्तिः स्नेहस्येति शेषः । विकल्प्य वा बलवयःसत्वदेहसात्म्यादि निरूप्य वा मात्रा कार्येत्यर्थः ।

**अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ॥ ७३ ॥**
**ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ।**
**हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ ७४ ॥**
**सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम् ।**
**आमेहनांतं नेत्रं च निष्कंपं गुदवत्ततः ॥ ७५ ॥**
**पीडितेंऽतर्गते स्नेहे स्नेहबस्तिक्रमो हितः ।**

अथेति मंगले । अस्य रोगिणो निरूहवत्कृतमंगलस्य तथा पूर्वं स्नातस्य पश्चादशितस्य । कथमशितस्य । स्नेहबस्तिविधानतः । तृतीयार्थे तसिः । स्नेहबस्तौ यादृश आहारो विहितस्तेन कृतभोजनस्येत्यर्थः । तथर्जोः स्पष्टं स्थितस्य तथा सुखेनाऽसीनस्य । क्व । पीठ आसने । किंभूते । जानुतुल्ये । तथा मृदावकठिने च । प्रहृष्टे स्तब्धे तथा ऋजु स्पष्टं कृत्वा स्थिते सति शनैर्न त्वरया सूक्ष्मां शलाकां प्रणयेत् । स्थूलायां तत्र क्षतकरणात् । तया शलाकया शुद्धे मेढ्रे सत्यनुसेवनीं सेवनीमनुलक्षीकृत्य आमेढ्रांतं नेत्रं प्रणयेत् । षडंगुलं प्रायेण प्रवेशयेदित्यर्थः । कथम् । गुद इव निष्कंपम् । ततो निष्कंपं स्थापनादनंतरं पीडिते पुटके स्नेहे चांऽतःप्रविष्टे सत्यनुवासनक्रमो हितः । पाणिना ताडयेत् स्फिजौ तस्य पार्ष्णिभ्यामित्यादिकः ।

**बस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ७६ ॥**
**अनुवासनवच्छेषं सर्वमेवाऽस्य चिंतयेत् ।**

त्रींश्चतुरो वा बस्तीननेन विधानेन दद्यात् । शेषं विधिपरिहारादि सम्यग्दत्तव्यापदादिकमस्योत्तरबस्तेरनुवासनस्येव दापयेत् । यदुक्तं खरनादेन । यथाशेषं प्रवेश्याऽथ स्नेहस्यार्धपलं नयेत् । प्रत्यागते द्वितीयं वा तृतीयं वा प्रदापयेत् । स चेदनुवसेत्तत्र स्यात्क्रियेयं विशेषतः । पिप्पल्यारग्वधागारधूमवत्सकसैंधवैः । मूत्राऽम्लपिष्टैर्गुलिकाः सर्षपा माषसन्निभाः । छायासु शुष्कास्ताः शिश्ने दद्यात्सर्षपसन्निभाः। पूर्वं माषोपमाः पश्चात्ताभिः स्नेहं समानयेत् । स्नेहे प्रत्यागते च स्यादानुवासनिको विधिरिति ।

एवं पुरुषाणामुत्तरबस्तिविधानमुक्त्वा स्त्रीणां वक्ति ।

**स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतः ॥ ७७ ॥**

**विदधीत तदा तस्मादनृतावपि चात्यये।**
**योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ॥ ७८ ॥**

ललनानामृतुकाल एवाऽर्तवकाल ऋतुस्तु द्वादशनिशा इत्यादिनोक्तस्तत्र ऋतौ योनिः कर्ता उत्तरबस्तिस्वभावं स्नेहं गृह्णाति । कुतः । अपावृतेरपावरणात् कारणात् । अन्यदा तु संवृतत्वान्न स्नेहमादत्ते गर्भवत् । तस्माद्धेतोस्तदा ऋतुकाले विदधीत । प्रकृतत्वादुत्तरबस्तिम् । आत्ययिके व्याधावनृतावपि विदधीत । तमेवात्ययं दर्शयति । योनीत्यादि । योनिविभ्रंश उत्तरे वक्ष्यमाणः । योनिशूलो योनिरुजा तेषु तथा योनिव्यापत्तौ तथाऽसृग्दरे रक्तपित्तं योनिमुखेनागच्छत् स्त्रीणामसृग्दरमुच्यते । एतेषु रोगेषूत्तरबस्तिमात्ययिकत्वादनृतावपि दद्यात् ।

अथाऽत्र नेत्रस्य प्रमाणमाह ।

**नेत्रं दशांगुलं मुद्गप्रवेशं चतुरंगुलम् ।**
**अपत्यमार्गे योज्यं स्याद् द्व्यंगुलं मूत्रवर्त्मनि ॥७९॥**
**मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलम् ।**

दशांगुलप्रमाणं दैर्घ्येण तत्तथा मुद्गः प्रविशत्यस्मिन्निति मुद्गप्रवेशं तदिवाग्रं प्रवेशाग्रमिति वेद्यमंतलोपाख्यया तंत्रयुक्त्या । वृत्तगोपुच्छाकारादि शेषं पूर्वोक्तमत्र वेद्यम् । पुष्पवृंतोपमत्वं त्वत्र न युज्यते । यतो मूत्रस्रोतःपरिणाहं यत्तद्विधातव्यं पुरुषे स्त्रियां चैवंप्रकारम् । यदुक्तं मुनिना । पुष्पनेत्रप्रमाणं तु प्रमदानां दशांगुलम् । मूत्रस्रोतःपरीणाहमिति । तत्र चतुरंगुलं यावत् प्रवेश्यम् । चतुरंगुला चोर्ध्वकर्णिका कार्या । अधिकप्रवेशनिवारणार्थं नतु मेहननेत्र इव मध्यमकर्णिकेति । अयमर्थोऽत्र साक्षान्नोपात्तो गम्यमानत्वात् । अत एतत्प्रवेशप्रमाणमाह । चतुरंगुलमपत्यमार्गे योज्यं स्यादिति । अपत्यमार्ग इत्यनेन स्त्रीगर्भग्रहणप्रसवादिसमर्थं सूच्यते। एवंविधायाः स्त्रियाश्चतुरंगुलं प्रवेशयितव्यमिति । मूत्रवर्त्मनि द्व्यंगुलं योज्यम् । या स्त्री सुरतव्यवहारगर्भग्रहणयोग्या । अथवा बालाया अप्रौढायास्तस्या योनिर्मूत्रस्यैव केवलं मार्गस्तस्या नेत्रं द्व्यंगुलं प्रवेश्यम् । अतऊर्ध्वं तु प्रवेशात्तासां मांसक्षतिः स्यात् । केषु रोगेषु । मूत्रकृच्छ्रविकारेषु । बालानां तु स्त्रीणामेकमंगुलं प्रवेश्यम् ।

**प्रकुंचो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ ८०॥**

स्त्रीणामुत्तरबस्तौ स्नेहस्य प्रकुंचो मध्यमा मात्रा नोत्तमा कनिष्ठा वा । बालानां तु शुक्तिरेव मध्यमा मात्रा स्नेहस्य ।

अधुनोत्तरबस्त्यवस्थानं त्रिविधाया अपि स्त्रिया वदति ।

**उत्तानायाः शयानायाः सम्यक् संकोच्य सक्थिनी।**
**ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥**
**बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् ।**

उत्तानाया न त्ववाङ्मुखायाः पार्श्वस्थिताया वा । शयानाया न त्वासीनायास्तथोर्ध्वजान्वा बस्तींस्त्रिचतुरानहोरात्रेण योजयेत् । किं कृत्वा । सक्थिनी संकोच्य । अनुवासने त्वेक एवाहोरात्रेण योज्य इत्यस्य भेदः । बस्तिदानं कार्यं न त्वत्राऽनुवासनवत्त्र्यहे पंचमे वाऽहनीति । किं कुर्वन् । स्नेहमात्रां यथास्वमर्धकर्षकर्षादिक्रमेण वर्धयेत् ।

**त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ॥८२॥**

त्र्यहमेव च विश्रम्य त्रीणि दिनानि विलंब्य च पुनः पूर्वोक्तेनैव प्रकारेण प्रणिदध्यात् प्रकुर्यात् । एष एव च न्यायो मेढ्रेऽपि योज्यः । तज्जातीयत्वादस्यार्थस्य । अत एवांतेऽयमुपदिष्ट उभयसंबंधार्थम् ।

युक्त्योक्तमेवाऽमुमर्थं संक्षेपेण संग्राह्य पुनराह ।

**पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।**
**सद्यो निरूढश्चाऽन्वास्यः सप्तरात्राद्विरेचितः ॥८३॥**

उत्तमशुद्ध्या शुद्धे वमिते पक्षादनंतरं विरेकः कार्यः । यस्मात्प्रवरया शुद्ध्या शुद्धे तु वमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्तिः । सप्ताहेनैकांतराऽनुवासनदानेन स्निग्धस्य विरेक इति पक्षेणैव युज्यते। ततोऽनंतरं पक्षात्परतो निरूहो यतः कृतविरेकस्य सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकांतरितेन स्निग्धस्य निरूहो युज्यत इति पक्षेणैव युक्तः । निरूढश्च सद्य एवाऽनुवास्यः । तथा च प्रागभ्यधायि ।अथ वातार्दितं भूयः सद्य एवाऽनुवासयेदिति । विरेचितः सप्तरात्रादूर्ध्वमनुवास्यो यतः सप्ताहेन प्रकृतिभोजनापत्तिस्ततः स्नेहार्थमनुवासनं युक्तम् ।

ननु दोषाणां धातूनां च स्नेहस्वेदाभ्यामेकलोलीभावात् कथं बस्तिर्दोषानेव निर्हरेन्न धातूनित्येतच्चोद्यं दृष्टांतद्वारेण परिजिहीर्षुरिदमाह ।

**यथा कुसुंभादियुतात्तोयाद्रागं हरेत्पटः ।**
**तथा द्रवीकृताद्देहाद्बस्तिर्निर्हरते मलान् ॥ ८४ ॥**

कुसुंभकुंकुमादियुक्ताज्जलाद्यथा पटो वासो रागं हरेद्गृह्णीयान्न कुसुंभादिकं तथैव द्रवीकृतात्कायाद्दोषधातूनामेकलोलीभावेऽपि बस्तिर्दोषान्निर्हरेन्न धातून् ।

अधुना वायोः स्वरूपं प्रथयन् बस्तिं श्लाघयन्नाह ।

**शाखागताः कोष्ठगताश्च रोगा**
**मर्मोर्ध्वसर्वावयवांगजाश्च ।**
**ये संति तेषां नतु कश्चिदन्यो**
**वायोः परं जन्मनि हेतुरस्ति ॥ ८५ ॥**

सक्थिनी द्वे द्वौ बाहू इति शाखास्तासु गतास्तत उत्पन्नाः । एवं कोष्ठो महास्रोतस्तत्र गताः कोष्ठगताः । तथा मर्माणि च ऊर्ध्वं च सर्वे चाऽवयवाश्च मर्मोर्ध्वसर्वावयवास्तेषामंगं तत्र जाता मर्मोर्ध्वसर्वावयवांगजाः । तत्र मर्माणि मर्मविभागे वक्ष्यंते। ऊर्ध्वशब्देनोर्ध्वजत्रु गृह्यते । तत्र जाता ऊर्ध्वांगजा मुखरोगादयः । सर्वांगजा ज्वरादयः । अवयवजाः श्वित्रादयश्च ये रोगा विद्यंते तेषां जन्मन्युत्पत्तौ वायोरपरः कश्चिदपि हेतुर्नास्ति । कथम् । परमतिशयेन । किंचिन्मात्रेणाऽनुबलभावेन

पित्तश्लेष्माणावपि हेतू भवत एव । यथा पामादर्शनादीनाम् । अथाऽवयवग्रहणेनैवोर्ध्वग्रहणे लब्ध ऊर्ध्वग्रहणं प्राधान्यख्यापनार्थम् । यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति । तदेवाधिकृत्य वक्ष्यमाणाः पंच विधयः सकलमेवोत्तरे च तंत्रे प्रधानं तस्मात्प्रधाना ऊर्ध्वांगजाः ।

ननु कुतो हेतोर्मरुत एतेषु कारणत्वमित्याह ।

**विट्श्लेष्मपित्तादिमलाचयानां**
**विक्षेपसंहारकरः स यस्मात् ।**
**तस्याऽतिवृद्धस्य शमाय नान्य-**
**द्बस्तेर्विना भेषजमस्ति किंचित् ॥ ८६ ॥**

विट् च श्लेष्मा च पित्तं च विट्श्लेष्मपित्तानि तान्यादिर्येषाम् । आदिशब्देन मूत्रस्वेदादिपरिग्रहः । त एव शरीरमलिनीकरणान्मलास्तेषामाचयाः संचयास्तेषां स वायुर्यस्माद्विक्षेपसंहारकरः । विक्षेपश्च संहारश्च विक्षेपसंहारौ तौ करोतीति कृञो हेतुताच्छील्येत्यादिना हेतौ टः । विक्षेपसंहारकरणहेतुरित्यर्थः । तस्य क्रियावत्त्वात् । वायुश्च शेषदोषाभ्यां न कदाचिद्विक्षिप्यते संह्रियते वा । तयोर्निष्क्रियत्वात् । तस्य च वायोः प्रवृद्धस्य शमनार्थं बस्तिमंतरेणाऽपरं भेषजं नास्ति । स्नेहस्वेदादिकं तु विद्यमानमपि न तथा समर्थमित्यगण्यत्वात्तदविद्यमानमुच्यते ।

**तस्माच्चिकित्सार्ध इतिप्रदिष्टः**
**कृत्स्ना चिकित्साऽपि च बस्तिरेकैः ।**
**तथा निजागंतुविकारकारी**
**रक्तौषधत्वेन शिराव्यधोऽपि ॥ ८७ ॥**

तस्माद्दोषप्रधानस्य पवनस्य शमनार्थात्कारणाद्बस्तिश्चिकित्सार्ध इति कथितः । एकैश्चाऽऽचार्यैर्निरवशेषाऽपि चिकित्सा बस्तिः प्रदिष्टः । ननु चतुर्णां भिषजादीनामित्यादिलक्षणा चिकित्सा तत्कथं तस्या भागकल्पना कर्तुं युज्यते । नच सर्वा चिकित्सा बस्तिरिति वक्तुं शक्यते । शेषचिकित्साशास्त्रविस्तरस्यानर्थक्यप्रसंगात् । तस्मादेतदयुक्तमिवाऽऽभाति । अत्रोच्यते । तथाऽपि वायुविकारा अशीतिरुक्ताः । पित्तश्लेष्मविकाराश्च षष्टिरुक्ताः । तत्र वातविकाराणां प्रधानोपक्रमो बस्तिस्तस्माच्चिकित्सार्धो बस्तिः कार्यद्वारेणोक्तः । अथवा मारुतं पित्तश्लेष्मविट्सहितं बस्तिः समूलमेवापकर्षतीत्युक्त्वा सर्वा चिकित्सा कार्यद्वारैकैरुपदिष्टः । अन्यत्राऽपि चैवं प्रायो निदर्शित आचार्यैः । तथाच मुनिः । यानीह कर्माण्युक्तानि विसर्पविनिवृत्तये । एकतस्तानि सर्वाणि रक्तमोक्षणमेकत इति । चिकित्सार्धमित्ययं तु पाठो न युक्त एव । अर्धशब्दस्य हि समविभाग एव नपुंसकत्वम् । न चाऽत्र समप्रविभोगो गम्यते । तस्मान्नपुंसकत्वमत्राऽन्याय्यम् । तथेत्यादि । न केवलं बस्तिर्यावच्छिराव्यधोऽपि चिकित्सार्धः सर्वा वा चिकित्सेत्युपदिष्टः । कुतः । निजेत्यादिना । निजा वातादिसमुत्था आगंतवो विषवह्न्यादिसमुत्थाः । निजाश्चाऽगंतवश्च ते च ते विकाराश्च निजागंतुविकारास्तान्कर्तुं शीलमस्य तन्निजागंतुविकारकारि तच्च तद्रक्तं च निजागंतुविकारकारिरक्तं तस्यौषधत्वेन । तत्र विसर्पविद्रधिप्रभृतिरोगविशेषोपशमकरणाच्चिकित्सार्धः शिराव्यध उपदिष्टः । तथाऽपरेऽपि ये रोगाः शीतोष्णस्निग्धरूक्षाद्यैरुपक्रमैरनुपशांतास्तेऽपि शिराव्यधसाध्याः । अत एव सर्वाऽपि चिकित्सा शिराव्यध उक्त इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामेकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः ।

पंचकर्मोक्तिप्रस्तावे वमनविरेकान्वासननिरूहानुक्त्वा नस्यविधिमाह ।

**अथाऽतो नस्यविधिमध्यायं व्याख्यास्यामः ।**
**ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।**

जत्रु वक्षोंऽसयोः संधिः । जत्रुण ऊर्ध्वमूर्ध्वजत्रु । मयूरव्यंसकादित्वात्समासः । तत्र विकारा ऊर्ध्वजत्रुविकारास्तेपूर्ध्वजत्रुविकारेषु शिरोरोगादिषु विषये वमनशिराव्यधादयोऽपीष्यंत एव । विशेषेण तु नस्यमिष्यते । नासायां भवं नस्यम् । तत्र भव इति यत् । नासिकायाः पद्न्न इति नसादेशः ।

ननु किमिति नस्यमेतेषु रोगेषु विशेषेणेष्टमित्याह ।

**नासा हि शिरसो द्वारं तेन तद्व्याप्य हंति तान् ॥ १ ॥**

यस्माद्घ्राणं शिरोद्वारं तेन द्वारेण श्रोत्रशृंगाटकप्राप्तमूर्ध्वं नेत्रकंठादिशिरोमुखानुप्रवेशेन तच्छिरो व्याप्य तान्विकारान् हंति ।

**विरेचनं बृंहणं च शमनं च त्रिधाऽपि तत् ।**

तत्र नस्यं विरेचनबृंहणशमनादिभेदेन त्रिधा स्यात् ।

तत्र पूर्वं विरेचनाख्यस्योपयोगमाह ।

**विरेचनं शिरःशूलजाड्यस्यंदगलामये ॥ २ ॥**
**शोफगंडकृमिग्रंथिकुष्ठाऽपस्मारपीनसे ।**

शिरःशूलादिषु विरेचनं नस्यमिष्यते । अपस्मारो यद्यप्यूर्ध्वजत्रुस्थितो न भवति तथाऽपि विरेचननस्येन शाम्यतीति तदुपादानम् । उपलक्षणं चेदम् । कफप्रकोपास्यवैरस्यगंधाज्ञानादिष्वपि विरेचनमेव हितम् ।

**बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ ३ ॥**
**नासाऽस्यशोषे वाक्संगे कृच्छ्रबोधेऽवबाहुके ।**

वातोद्भवशूलादिषु बृंहणं नस्यं हितम् । सूर्यावर्तः शिरोरोगविशेषः । कृच्छ्रबोधः कृच्छ्रोन्मीलनम् । अवबाहुको वातव्याधिविशेषः ।

**शमनं नीलिकाव्यंगकेशदोषाक्षिराजिषु ॥ ४ ॥**

नीलिकादिषु शमनं नस्यं हितम् । नीलिकाव्यंगौ क्षुद्ररोगेषु वक्ष्यमाणौ । केशदोषः केशशातः ।

**यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ।**
**कल्कक्वाथादिभिश्चाढ्यं मधुपट्वासवैरपि ॥ ५ ॥**

ये ये स्नेहा यथास्वं तैः । किंभूतैः । यौगिकैर्योगार्हैः सर्षपतैलादिभिर्न तु घृतादिभिः । तथा यथास्वं मरीचशुंठ्यादिभिः प्रसाधितैः संस्कृतैः । तथा कल्कक्वाथस्वरसादिभिश्च यथास्वं कफघ्नैर्गिरिकर्णिकादिजैराढ्यं विरेचनाख्यं नस्यं भवति । न केवलमेतैर्यावन्माक्षिकादिभिश्च । पटुः सैंधवादिः । आसवो मद्यविशेषः ।

**बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ।**
**शमनं योजयेत्पूर्वैः क्षीरेण च जलेन च ॥ ६ ॥**

बृंहणं नस्यं धन्वोत्थमांसोद्भवरसैः स्यात् । तथाऽसृजा रक्तेन धन्वोत्थेनैव । तथा खपुरैर्निर्यासविशेषैः । अपिशब्दादन्यैरपि पूर्वोक्तैः स्नेहैरतीक्ष्णैर्बृंहणं भवति । शमनं नस्यं पूर्वोक्तैरतीक्ष्णैः स्नेहैर्घृतादिभिस्तथा मांसरसादिभिर्योजयेत् । तथा क्षीरेण जलेन चेति । सुश्रुतस्तु स्पष्टतरमुवाच । तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषापबाहुकाऽकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु चाऽन्येषु मुखरोगेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति । शिरोविरेचनं श्लेष्मणाऽभिव्याप्ततालुकंठशिरसामरोचकशिरोगौरवशूलपीनसाऽर्धावभेदकक्रिमिप्रतिश्यायाऽपस्मारगंधाज्ञानेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति । तथा सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत् । अवपीडस्तु शिरोविरेचनवदभिष्यंदसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपीड्याऽवपिष्य चेतोविकारक्रिमिविषाभिपन्नानां चूर्णं प्रधमेत् । शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात् । कृशदुर्बलभीरूणां सुकुमारस्य योषिताम् । श्वेताः स्नेहाः शिरःशुद्धौ कल्कस्तेभ्यो यथा हित इति ।

अधुनाऽन्यानपि नस्यविशेषानाह ।

**मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।**

एषु नस्यभेदेषु मध्ये मर्शाख्यः प्रतिमर्शाख्यश्चेति स्नेहो द्विधा भेदद्वयेन भवति । कथम् । मात्रया मात्राभेदेन नतु वस्तुभेदेन ।

**कल्काद्यैरवपीडस्तु तीक्ष्णैर्मूर्धविरेचनः ॥ ७ ॥**

तुरवधारणे भिन्नक्रमः । कल्काद्यैरेवाऽवपीडो न स्नेहेन । स चाऽवपीडस्तीक्ष्णैः शुंठ्यादिभिः कल्कक्वाथरसाद्यैर्न मृदुभिः । मूर्धविरेचनः शिरोविरेचनाख्यं नामांतरमस्य ।

अतीक्ष्णैस्तु शमनसंज्ञमेव विरेचनस्य प्रकारांतरमाह ।

**ध्मानं विरेचनश्चूर्णो**

चूर्णो मरीचादिभिः कृतो विरेचनो बहिर्दोषनिरसनो ध्मानं प्रध्मानाख्यं नस्यं स्यात् । कथं । नासया प्रणीयमानः ।

कथं पुनरसौ नासायां ध्मापयितव्य इत्याह ।

**युंज्यात्तं मुखवायुना ।**
**षडंगुलद्विमुखया नाड्या भेषजगर्भया ॥ ८ ॥**
**स हि भूरितरं दोषं चूर्णत्वादपकर्षति ।**

युंज्यात्तं चूर्णं मुखवायुना फूत्काराख्येन प्रवेशयेत् । कथम् । नाड्या करणभूतया । किंभूतया । षडंगुलानि यस्याः सा षडंगुला । द्वे मुखे यस्याः सा द्विमुखा । षडंगुला चाऽसौ द्विमुखा च षडंगुलद्विमुखा तया । तथा भेषजगर्भया त्रिकट्वादिचूर्णभरितया । स हि चूर्णो भूरितरं बहुतरं दोषं चूर्णत्वादपकर्षति निर्हरति । तथा कल्कक्वाथादयः । ततस्तस्माद्विरेचनाख्योऽयमित्यर्थः ।

अधुना मर्शस्नेहस्य परिमाणमधिकृत्याह ।

**प्रदेशिन्यंगुलीपर्वद्वयान्मग्नसमुद्धृतात् ॥ ९ ॥**
**यावत्पतत्यसौ बिंदुर्दशाष्टौ षट् क्रमेण ते ।**
**मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ॥१०॥**
**बिंदुद्वयोनाः कल्कादेः**

प्रदेशिन्यंगुष्ठसमीपजांगुली तस्याः पर्वद्वयं तस्मात् । किंभूतात् । पूर्वं मग्नं पश्चात्समुद्धृतं तस्मान्मग्नसमुद्धृतात् । तर्जनीपर्वद्वयाद्यावत्परिमाणं पतत्यसौ बिंदुरुच्यत इति शेषः । ते बिंदवो यथासंख्यं मर्शस्य दशोत्कृष्टा मात्रा । अष्टौ मध्यमा मात्रा । षट् कनिष्ठा मात्रा । ता एव क्रमान्मात्रा बिंदुद्वयेनोनाः कल्कस्वरसादेः । तेनाऽष्टौ बिंदव उत्तमा मात्रा षण्मध्यमा चत्वारः कनिष्ठेत्यवतिष्ठते । यावदिति यत्परिमाणमस्येति यत्तदेतेभ्यः परिमाणे वतुप् । आसर्वनाम्न इत्याकारादेशः ।

अधुना येषां नस्यमयुक्तं तानाह ।

**योजयेन्न तु नावनम् ।**
**तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥ ११ ॥**
**भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ।**
**नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १२ ॥**
**शुद्धानां दत्तबस्तीनां तथा नार्तवदुर्दिने ।**
**अन्यत्राऽत्ययिकाद्व्याधेः**

तोयादि पीतं यैस्तेषाम् । आहिताग्न्यादित्वात्परनिपातः । तथा पातुमिच्छतां नावनं नस्यं नैव योजयेत् । तोयादिपीतानां पातुमिच्छतां च प्रयोजितं नस्यं नासास्यदोषदेहतिमिरशिरोरोगान् कुर्यात् । भुक्तभक्तस्य च दोषा ऊर्ध्वस्रोतांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेयुः । शिरःस्नातस्य शिरोऽक्षिकर्णशूलकंठरोगपीनसहनुमन्यास्तंभार्दितशिरःकंपान् । स्नातुकामस्य च मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान् । स्रुतरक्तस्य च क्षामतामरुचिमग्निसदनं च । नवप्रतिश्यायस्य स्रोतोरोधाद्दुष्टप्रतिश्यायक्रिमिकंडूविचर्चिकारोगान् । मूत्रितोच्चारितादिवेगार्तानां भृशतरं वेगविधारणजान् विकारान् । सूतिकायाः स्रुतरक्तदोषान् । श्वासकासिनोर्व्याधिविवृद्धिम् । शुद्धानां कृतवमनविरेचनानां श्वासकासस्वरेंद्रियहानिशिरोगौरवक्रिमिकंडूदोषान् दत्तबस्तीनां विवृत-

स्रोतस्तयाऽतिव्याप्त्या श्वासकासादीन् । तथाऽनार्तवदुर्दिनेऽपि सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकंडूपाकमन्यास्तंभकंठरोगप्रतिश्यायारूषिकाः । एषु च नस्यदोषेषु जातेषु यथास्वमायतनं दोषोद्रेकं चाऽवेक्ष्य स्नेहस्वेदशिरोविरेकवक्त्रलेपसेकतीक्ष्णावपीडधूमगंडूषादीनि यथास्वं कुर्यात् । संग्रहे चोक्तम् । गर्भिण्या भक्तद्वेषज्वरमूर्छाऽर्धावभेदकाः स्युः । अपत्यं च व्यंगं विकलेंद्रियमुन्मादापस्मारयुक्तं वा स्यात् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छुभिः शृतं पयः पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वैभिरेव च शृतं हविर्वीतहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानमिति । तोयपीतादिषु सदैव किं न योज्यमित्याह । अन्यत्रेत्यादि । आत्ययिके व्याधौ नस्यं योज्यमेव ।

सांप्रतं यत्र काले यत्र च दोषे नस्यं प्रयोज्यं तद्दर्शनार्थमाह ।

**अथ नस्यं प्रयोजयेत् ॥ १३ ॥**
**प्रातः श्लेष्मणि मध्याह्ने पित्ते सायंनिशोश्चले ।**

श्लेष्मरोगे प्रातर्नस्यं प्रयोजयेत् । पित्तरोगेषु मध्याह्ने । वातेऽपराह्ने रात्रौ च । कारणे कार्योपचारात्कफरोगः श्लेष्मशब्देनोक्तः । तेन श्लेष्मरोगादिषु प्रातर्नस्यं योज्यम् । संग्रहे विशेषः । लालास्रावसुप्तिप्रलापदंतकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्राविति ।

**स्वस्थवृत्ते तु पूर्वाह्ने शरत्कालवसंतयोः ॥ १४ ॥**
**शीते मध्यंदिने ग्रीष्मे सायं वर्षासु सातपे ।**

तुरवधारणे । स्वस्थवृत्ते शरदि वसंते च पूर्वाह्न एव नस्यं योज्यम् । शीते हेमंतशिशिरलक्षणे मध्याह्ने । ग्रीष्मे सायमपराह्ने । वर्षासु सातपे दृश्यमाने रवौ वासरे प्रयोजयेत् ।

अधुना दोषापेक्षया नस्यकालनियममाह ।

**वाताभिभूते शिरसि हिध्मायामपतानके ॥ १५ ॥**
**मन्यास्तंभे स्वरभ्रंशे सायंप्रातर्दिनेदिने ।**
**एकाहांतरमन्यत्र सप्ताहे च तदाचरेत् ॥ १६ ॥**

वाताभिभूतमूर्धादिषु स्वरभ्रंशांतेषु सायंप्रातः पूर्वाह्नाऽपराह्नयोः प्रतिदिनं च नैकाहांतरितम् । अन्यत्र वाताभिभूतमूर्धादिभ्योऽन्यस्मिन् रोगे एकाहांतरं सप्ताहं च नस्यमाचरेत् । सप्ताहादूर्ध्वं नस्यं न विदध्यादित्यर्थः ।

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य नस्यं देयं तदाह ।

**स्निग्धस्विन्नोत्तमांगस्य प्राकृतावश्यकस्य च ।**
**निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥ १७ ॥**

पूर्वं स्निग्धं पश्चात्स्विन्नमुत्तमांगं शिरो यस्य तस्य तथा प्राक् पूर्वं कृतमावश्यकमवश्यकरणीयमुच्चारमूत्रोत्सर्गदंतधावनादिकं येन स प्राकृतावश्यकस्तस्य तथा निवातस्थाने शयनं यत्तत्र स्थितस्य सतो भूयो जत्रूर्ध्वं स्वेदयेत् ।

**अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।**
**किंचिदुन्नतपादस्य किंचिन्मूर्धनि नामिते ॥ १८ ॥**
**नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।**
**उष्णांबुतप्तं भेषज्यं प्रनाड्या पिचुनाऽथवा ॥ १९ ॥**

अथाऽनंतरमुत्तानस्पष्टस्थितशरीरस्य सतो हस्तचरणे प्रसारिते तथा किंचिदुन्नतचरणस्य किंचिच्छिरसि नामिते सति नासापुटमेकं पिधाय स्थगयित्वा पर्यायेण नतु युगपद्भैषज्यं निषेचयेत् । कीदृशमुष्णांबुतप्तमुष्णोदकोष्णीकृतम् । केन परिषेचयेत् । प्रनाड्याऽथवा पिचुना कार्पासादिमयेन ।

**दत्ते पादतलस्कंधहस्तकर्णादि मर्दयेत् ।**

दत्ते नस्ये सति पादतलस्कंधहस्तकर्णादि मर्दयेत् । आदिशब्देन ग्रीवाललाटादिपरिग्रहः । सुश्रुते चाऽभ्यधायि । वस्त्रावच्छादितनेत्राय वामहस्तप्रदेशिन्योन्नामितनासिकाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णांबुप्रतप्तं रजतादिशुक्तीनामन्यतमस्थमनवच्छिन्नधारमासिंचेदिति ।

**शनैरुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥ २० ॥**

ततो मर्दनानंतरं शनैरुच्छिद्य पार्श्वयोरुभयोर्निष्ठीवेत् । अनभ्यवहरन् कफसहितमभ्यवहृतमग्निमवसादयेद्दोषं च संवर्धयेत् । एकपार्श्वनिष्ठीवने न सर्वाः शिरा भेषजेन सम्यग्व्याप्यंते ।

**आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ।**

एवमनेन क्रमेणाऽऽभेषजक्षयाद्विस्त्रिर्वा नस्यं कुर्यात् । ननु नस्यमात्रा सकृदेव प्रक्षेप्तव्या हीनमात्रं चौषधं न देयम् । तद्धि दोषानुत्क्लेश्यानिर्हरेद्गौरवारुचिकासप्रसेकपीनसच्छर्दिकंठरोगान् कुर्यात् । अधिकमतियोगाद्दोषान् कुर्यात् । सकृदेव सर्वं दत्तमुच्छिद्यमानं शिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधं च कुर्यात् । अत्युष्णं दाहपाकज्वररक्तांगमूर्च्छाश्रमान् । अतिशीतं हीनदोषानेव । अत्युन्नतशिरसः सम्यक्प्रतिपद्यमानं तानेव हीनदोषान् । अत्यवनतशिरसो दूरगमनान्मूर्छाजाड्यज्वरान् । संकुचितगात्रस्य सम्यग्धमनीरप्राप्नुवद्दोषोत्क्लेशं कुर्यात् ।

यदि च नस्ये दीयमाने भेषजवेगादसात्म्येन संजातमूर्छायां प्रतीकारमाह ।

**मूर्छायां शीततोयेन सिंचेत्परिहरन् शिरः ॥ २१ ॥**

मूर्छायां सत्यां शीतजलेन मूर्धवर्जं सिंचेत् । संग्रहेऽप्युक्तम् । नच नस्ये निषिच्यमाने कोपहासव्याहारसंदनोच्छिंदनान्याचरेत् । तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलितपलितव्यंगतिलकालकमुखदूषकानां संभव इति ।

**स्नेहं विरेचनस्यांते दद्याद्दोषाद्यपेक्षया ।**

विरेचनस्यावसाने देशदोषसात्म्याद्यपेक्षया स्नेहमनुसंन्यसेत् । तंत्रांतरे चोक्तम् । अथ नस्यार्हं नरमव्याहतवेगं धौतांतर्बहिर्मुखमवस्थितशिरसं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णेनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपादं प्रसारितचरणं च जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेदिति ।

**नस्यांते वाक्शतं तिष्ठेदुत्तानः**

नस्यावसाने वाक्शतं मात्राशतमुत्तानो निद्रामासेवमानस्तिष्ठेत्।

**धारयेत्ततः ॥ २२ ॥**
**धूमं पीत्वा कवोष्णांबुकवलान् कंठशुद्धये।**

ततो वाक्शतावस्थानादनंतरमीषदुष्णजलकवलान् धारयेत्। किमर्थम्। कंठशुद्ध्य उत्क्लिष्टदोषशांतये। किं कृत्वा। धूमं विरेचनाद्यन्यतमं यथायोगं पीत्वा ततोऽस्य स्नेहोक्तविधिमाचारमादिशेत्।

**सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम्॥२३**

सम्यक्स्निग्धे शिरसि सुखोच्छ्वासादयः स्युः। संग्रहे चोक्तम्। सम्यक्स्निग्धे मूर्ध्नि विरिक्ते वा सुखोच्छ्वासनिःश्वाससुखसुप्तबोधाक्षिपाटवानि स्युः।

**रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता।**

रूक्षे तु शिरस्यक्षिस्तब्धता तथा नासायामास्ये च शोषो मूर्धशून्यता च स्यात्।

**स्निग्धेऽतिकंडूर्गुरुताप्रसेकारुचिपीनसाः ॥ २४ ॥**

अतिस्निग्धे कंड्वादयः स्युः।

**सुविरिक्तेऽक्षिलघुतास्वरवक्त्रविशुद्धयः।**

सुविरिक्ते सम्यग्विरिक्तेऽक्षिलघुतादयः स्युः।

**दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥ २५ ॥**

दुर्विरिक्ते गदोद्रेको रोगस्याऽधिक्यमतिविरेचिते क्षामता कृशता स्यात्।

अधुना प्रतिमर्शस्य विषयं सूचयितुमाह।

**प्रतिमर्शःक्षतक्षामबालवृद्धसुखात्मसु।**
**प्रयोज्योऽकालवर्षेऽपि**

प्रतिमर्शः क्षामतादिषु प्रयोज्यः। अकालवर्षणेऽपि कार्यः।

**न त्विष्टो दुष्टपीनसे ॥ २६ ॥**
**मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्धनि।**
**उत्कृष्टोत्क्लिष्टदोषे च**

दुष्टपीनसे तु न प्रयोज्यः। दुष्टपीनसो नासारोगेषु वक्ष्यमाणः। तथा मद्यपीते तथाऽबलश्रोत्रे रुद्धश्रवणमार्गे तथा कृमिभिर्दूषितो मूर्धा यस्य तस्मिन् कृमिपीडितशिरसि तथोत्कृष्टो वृद्धिं गतस्तथोत्क्लिष्टः प्रचलो दोषो यस्य तस्मिंश्च प्रतिमर्शो न योज्यः।

केन प्रकारेण न योज्य इत्याह।

**हीनमात्रतया हि सः ॥ २७ ॥**

हि यस्मात् हीनमात्रतया हीना मात्रा यस्य स हीनमात्रस्तस्य भावो हीनमात्रता तया। यस्मादसौ प्रयुज्यते एषां चोदीर्णदोषत्वात्। तावता दोषोत्क्लेश एव भवति न शमः।



**निशाहर्भुक्तवांताहःस्वप्नाध्वश्रमरेतसाम्।**
**शिरोभ्यंजनगंडूषप्रस्रावांजनवर्चसाम् ॥ २८ ॥**
**दंतकाष्ठस्य हासस्य योज्योंऽतेऽसौ द्विबिंदुकः।**

असौ प्रतिमर्शो द्विबिंदुको निशादीनां पंचदशानां कालानामंते प्रयोज्यः।

**पंचसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात्॥२९॥**
**दृग्बलं पंचसु ततो दंतदार्ढ्यं मरुच्छमः।**

तत्र निशाहर्भुक्तवांताहःस्वप्नाख्येषु पंचसु कालेषु प्रतिमर्शे प्रयुक्ते स्रोतसां शुद्धिर्भवति। क्रमात्क्रमेणैवं पठितेष्वध्वश्रममैथुनानां त्रयाणामंते प्रतिमर्शे दत्ते सति श्रमनाशः स्यात्। उपलक्षणं चेदम्। मनःप्रसादशिरोलाघवेऽपि भवतः। एवं शिरोभ्यंजनादिषु पंचस्वंते प्रतिमर्शे योजिते सतिं दृष्टेर्बलं स्यात्। ततोऽनंतरं दंतकाष्ठहासयोरंते यथासंख्येन द्विजदृढत्वं पवनशमश्च स्यात्।

अधुनांऽजनस्य धूमादीनां च पुरुषविशेषे नियमं करोति।

**न नस्यमूनसप्ताब्दे नाऽतीताऽशीतिवत्सरे॥३०॥**
**न चोनाऽष्टादशे धूमः कवलो नोनपंचमे।**
**न शुद्धिरूनदशमे न चाऽतिक्रांतसप्ततौ ॥ ३१ ॥**

ऊनसप्तवर्षे नस्यं न योज्यम्। तथाऽतिक्रांताशीतिवर्षे च नस्यं न प्रयोज्यम्। अपूर्णाऽष्टादशे वर्षे धूमो न प्रयोज्यः। कवलोऽपूर्णपंचवत्सरे न प्रयोज्यः। ऊनदशवर्षे शुद्धिर्वमनविरेकादिका न प्रयोज्या। अतीतसप्ततिवर्षे शुद्धिर्न योज्या।

**आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत्।**
**मर्शवच्च गुणान् कुर्यात्स हि नित्योपसेवनात्॥३२॥**
**न चाऽत्र यंत्रणा नाऽपि व्यापद्भ्योऽमर्शवद्भयम्।**

प्रतिमर्शः पुनर्बस्तिरिव शस्तो हितः। कथम्। आजन्ममरणं जन्ममरणे चावधिं कृत्वा प्रतिमर्शो हित इत्यर्थः। स च प्रतिमर्शो नित्योपसेवनात् संततमभ्यस्यमानो मर्श इव गुणान् सुखोच्छ्वासादीन् कुर्यात्। अत्र च प्रतिमर्शे यंत्रणोष्णोदकोपचारी स्यादित्यादिका नास्ति। न च व्यापद्भ्योऽक्षिस्तब्धता शोष इत्यादिभ्यो भयं मर्श इव नास्तीति। मर्शे इव मर्शवत्। सप्तम्यंताद्वतिः।

**तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥**
**शिरसः श्लेष्मधामत्वात्स्नेहाः स्वस्थस्य नेतरे।**

तैलमेव नित्याभ्यासेन प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठं भवति। कुतो हेतोर्मूर्ध्नः कफस्थानत्वात्। न चापरे स्नेहास्तेषां श्लेष्मलत्वादिति भावः।

**आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥**
**मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि।**
**को मर्शं सपरीहारं सापदं च भजेत्ततः ॥ ३५ ॥**

**अच्छपानविकाराख्यौ कुटीवाताऽतपस्थिती ।
अन्वासमात्राबस्ती च तद्वदेव च निर्दिशेत् ॥३६॥**

आशुकारी मर्शश्चिरकारी तु प्रतिमर्शः । गुणोत्कर्षत्वयुक्तो मर्शो गुणापकृष्टतान्वितश्च प्रतिमर्श इत्यनयोर्भेदः । यदि च मर्शे प्रतिमर्शे च विशेषो न स्यात्तदा मर्शं सपरीहारं सव्यापदं च को भजेत् । न कश्चिद्भजेदित्यर्थः । प्रतिमर्शविशेषवदच्छपानविकाराख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत् । तथा कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते यच्च वातातपाद्यपरिहारस्थित्या रसायनं क्रियते ते च द्वे अपि तथैव विशेषेण निर्दिशेत् । तथान्वासनं तथा मात्राबस्तिश्च तावप्येवं चिरकारिशीघ्रकारित्वादिगुणैर्विनिर्दिशेत् ।

इदानीमणुतैलं निर्दिदिक्षुराह ।

**जीवंतीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागुरुवरापुंड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिः स्थिरे कृमिहरं पत्रं त्रुटिं रेणुकं
किंजल्कं कमलाह्वयं शतगुणे दिव्येंऽभसि क्वाथयेत्
तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेच्च सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशंत्यणुतैलमेतत् ॥ ३८ ॥**

जीवंतीत्यादि । जीवंत्यादीनि द्रव्याणि दिव्ये जले क्वाथयेत् । गोपी सारिवा । प्लवं गोपालदमनाख्यम् । पुंड्राह्वं पौंडरीकम् । धावन्यौ कंटकारिकामहोटिकाख्ये । सुरभिः सल्लकी । स्थिरे शालिपर्णीपृश्निपर्ण्यौ । कृमिहरं विडंगम् । अत्र तैलसमानि द्रव्याणि ग्राह्याणीति वैद्यव्यवहारः । आकाशादेः पटादिभिर्गृहीतं जलं दिव्यमुच्यते । तैलं तस्माच्छतगुणं गृहीत्वा तावत्क्वाथयेत् । यावद्दशगुणो रसस्तैलात्स्यात् । तेन क्वाथेन च तैलं दशवारान्पचेत् । दशमे च पाके तैलसममजाक्षीरं क्षिपेत् । ततः पुनः पचेत् । इति तत्तैलं महागुणमणुतैलसंज्ञं कथयंति । अणुषु तैलमणुतैलम् । अणूनींद्रियस्रोतांसि प्रविशतीत्यर्थः ।

**घनोन्नतप्रसन्नत्वक्स्कंधग्रीवाऽस्यवक्षसः ।
दृढेंद्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३९ ॥**

नस्यशीलिनो निबिडोच्चतररमणीयत्वगादयः स्युः । त्वक् च स्कंधश्च ग्रीवा चाऽऽस्यं च वक्षश्च त्वक्स्कंधग्रीवास्यवक्षः । घनोन्नतप्रसन्नं त्वक्स्कंधग्रीवास्यवक्षो येषां ते घनोन्नतप्रसन्नत्वक्स्कंधग्रीवास्यवक्षसः । तथा पुष्टेंद्रियाः पलितवर्जिताश्च भवेयुः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां विंशोऽध्यायः ॥ २० ॥

---

## एकविंशतितमोऽध्यायः ।

ऊर्ध्वांगचिकित्साप्रसंगाद्धूमपानविधिं जिगदिषुराह ।

**अथाऽतो धूमपानविधिमध्यायं व्याख्यास्यामः ।
जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने ।
उच्छेदाय च जातानां पिबेद्धूमं सदाऽऽत्मवान् ॥१॥**

आत्मवान् सुमतिर्हिताऽऽहारविहारो जत्रुण ऊर्ध्वं श्लेष्मवातोद्भवानां विकाराणां रोगाणामजन्मनेऽनुत्पत्त्यै तथोत्पन्नानामुच्छेदाय विनाशाय सदा धूमं पिबेत् ।

**स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे ।
योज्यः**

स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिधा । यथाक्रमं वाते स्निग्धो वातकफे मध्यः कफे तीक्ष्णो योज्यः ।

**न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २ ॥
तिमिरोर्ध्वाऽनिलाऽध्मानरोहिणीदत्तबस्तिषु ।
मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥
शिरस्यभिहते पांडुरोगे जागरिते निशि ।**

रक्तपित्तार्त्यादिषु धूमो नावचारणीयः । ननु वाते वातकफे कफे च धूमस्योक्तत्वात्पित्तार्तौ प्राप्तिरेव नास्ति तत्किं प्रतिषेधेन । ब्रूमः । वातप्रकृतिवातपित्तार्तौ सत्यां कश्चिद्भिषक्पाशो भ्रांत्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूमं योजयेत्तन्निषेधार्थमिदमुक्तम् । अथवा पित्तार्तप्रकृतेर्वातश्लेष्मव्याध्युन्नतौ धूमो न योज्य इति प्रतिपादनार्थमिदं गदितम् । आदिशब्दो मत्स्यादिषु विषांतेषु प्रत्येकं योज्यः । अत्र च यथासंभवं पानं मद्यादेरशनं च मत्स्यादेरशनशब्देनेहोच्यते । चतुर्विधेष्वाहारेष्वशनशब्देनास्त्येव व्यवहारः । यथा मात्राशी सर्वकालं स्यादिति । केचिच्च यवागूपायिन्यपि धूमपानं नेच्छंति ।

**रक्तपित्तांध्यबाधिर्यतृण्मूर्छामदमोहकृत् ॥ ४ ॥
धूमोऽकालेऽतिपीतो वा**

मूर्छा संज्ञानाशः । मोहश्चित्तनाशः । मुह वैचित्य इति पाठात् । आंध्यबाधिर्यग्रहणमुत्तमांगरोगोपलक्षणार्थम् । तेन संग्रहोक्तमर्दितमपि गृह्यते । धूमोऽकाले पूर्वोक्ते रक्तपित्तार्त्यादौ पीतो रक्तपित्तादीन् कुर्यात् । अप्रतिषिद्धेऽपि काले क्षुतादावतिशयेन पीतो रक्तादिकृत् ।

**तत्र शीतो विधिर्हितः ।**

तत्र रक्तपित्ताद्यार्तौ विधिरुपक्रमो यथास्वं सर्पिःपाननस्यालेपपरिषेकादिः शीतो विधिर्हितः ।

इदानीं त्रयाणां धूमानां पृथक्कालं दर्शयन्नाह ।

**क्षुतजृंभितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥**

**हासस्य दंतकाष्ठस्य धूममंते पिबेन्मृदुम् ।**
**कालेष्वेषु निशाऽऽहारनावनांते च मध्यमम् ॥ ६ ॥**
**निद्रानस्यांजनस्नानच्छर्दितांते विरेचनम् ।**

क्षुतादीनामष्टानामंते मृदुं स्नेहनाख्यं धूमं पिबेत् । एषु क्षुतादिषु कालेषु निशाहारनावनांतेषु च मध्यमं धूमं पिबेत् । मध्यममिति मध्यान्म इति मः । विरेचनाख्यं धूमं निद्रादीनामंते पिबेत् । नावननस्ययोरेकार्थयोरिहोपादानान्नस्यक्रमेण धूमं पिबेदिति ग्रंथकृता प्रतिपादितम् । तेन स्निग्धनस्यांते स्निग्धं मृद्वपरपर्यायं धूमं पिबेत् । आचार्योपदेशाच्च क्षुताद्यंतेषु च स्निग्धं धूमं पिबेत् । मध्याह्नस्यांते मध्यमं धूमं पिबेत् । कालेष्विति बहुवचनाच्च क्षुदादीनामष्टानामंतादिषु च मध्यमं धूमं पिबेत् । एवं निद्रानस्यांते विरेचनं धूमं पिबेत् । कालेष्विति वचनान्निशाशब्दोऽत्र विरेचनपर्यायः ।

सांप्रतमत्र नेत्रस्वरूपमाह ।

**बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु ॥ ७ ॥**
**मूलाग्रेऽगुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ।**

बस्तौ नेत्रं बस्तिनेत्रं बस्तिनेत्रेण समं बस्तिनेत्रतुल्यं द्रव्यं धातुदार्वस्थिवेणुजं यस्य धूमनेत्रस्य तद्बस्तिनेत्रसमद्रव्यं धूमनेत्रं शिल्पिना कारयेद्भिषक् । किंभूतं नेत्रम् । त्रयः कोशाः पर्वाणि यस्य तत्त्रिकोशम् । ऋजु न वक्रम् । तथा मूलं चाऽग्रं च तस्मिन्यथासंख्यमंगुष्ठबदरास्थिप्रवेशम् । अंगुष्ठश्च कोलास्थि चेति समाहारद्वंद्वः । तत्प्रविशत्यस्मिन्निति पदरुजविशेति घञ् ।

दैर्घ्येण प्रमाणमिदानीं तीक्ष्णादिकस्य त्रिविधस्य धूमनेत्रस्याऽऽह ।

**तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पंच च ॥ ८ ॥**
**अंगुलानां क्रमात्पातुः प्रमाणेनाऽष्टकानि तत् ।**

यथासंख्यं दैर्घ्येण तीक्ष्णस्य त्रीण्यष्टकानि चतुर्विंशतिरंगुलानि स्युः । स्नेहने च धूमे चत्वार्यष्टकानि द्वात्रिंशदंगुलानि स्युः । मध्यमे च धूमे पंचाष्टकानि चत्वारिंशदंगुलानि स्युः । पर्वानेकत्वं सूक्ष्मत्वं दैर्घ्यं च नेत्रस्येह कृतम् । एवं हि नयनकर्णादीनां न बाधको धूमः स्यात् । तथा च मुनिः । दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः । नेंद्रियं बाधते धूम इति ।

कीदृशः सन् धूमं पिबेदित्याह ।

**ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥**
**पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ।**

ऋजु स्पष्टमुपविष्ट आसीनः । तथा तच्चेता धूमपानगतचित्तः तथा प्रसारितमुखः तथा नेत्रगतदृष्टिरित्यपि द्रष्टव्यम् । कथं पिबेत् । त्रिपर्ययमाक्षेपविसर्गावपनैस्त्रिपर्ययैः । तथा छिद्रमेकैकं पिधाय प्रकृतत्वान्नासिकाया एव । तदेवंविधः सन्नासिकया पिबेत् । एकैकमित्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ । तेनाऽयमर्थः । एकं नासापुटं पिधायाऽपरेण नासापुटेनाऽऽकृष्य धूमं पिबेत् । अपरं नासापुटं पिधाय तदपरेणाऽऽक्षिप्य तथैवोत्सृजेदित्यर्थः ।

**प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १० ॥**
**उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कंठगे ।**

नासागते शिरोगते वा दोष उत्क्लिष्टे स्वस्थानाच्चलिते सति प्राक् पूर्वं नासया पिबेत् । अनुत्क्लिष्टे दोष उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत् पश्चान्नासिकया । कंठरोधदोषोत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद्वक्त्रेणेति विपरीतम् ।

**मुखेनैव वमेद्धूमं नासया दृग्विघातकृत् ॥ ११ ॥**

नासयाऽऽस्येन वा पीतं धूमं वक्त्रेणैवोत्सृजेन्न तु घ्राणेनैव । कस्मान्न मुच्येतेत्याह । नासयेत्यादि । घ्राणेनोत्सृज्यमानो धूमो दृष्टिविघाततिमिरादीन् करोति । तस्मान्मुखेनैवोत्सृजेत् ।

**आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिःस्त्रिभिस्त्रिभिः ।**

आक्षेपमोक्षैरादानविसर्गैस्त्रिभिस्त्रिभिस्त्रीन्वारान् धूमः पातव्यः । त्रिरिति द्वित्रिचतुर्भ्यः सुच् ।

**अह्नः पिबेत्सकृत् स्निग्धं द्विर्मध्यं शोधनं परम् १२**
**त्रिश्चतुर्वा**

अह्नः सकृदेकवारं स्निग्धं धूमं पिबेत् । मध्यमं धूमं द्वौ वारौ पिबेत् । अह्न इत्यत्राऽप्यनुवर्तते । तीक्ष्णं धूमं त्रीन् वारांश्चतुरो वा दिवसस्य पिबेत् । अह्न इति कृत्वोऽर्थप्रयोगे कालेऽधिकरण इति षष्ठी ।

**मृदौ तत्र द्रव्याण्यगुरुगुग्गुलुः ।**
**मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥ १३ ॥**
**वरांगकौंतीमधुकबिल्वमज्जैलवालुकम् ।**
**श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥ १४ ॥**
**शल्लकी कुंकुमं माषा यवाः कुंदुरकं तिलाः ।**
**स्नेहः फलानां साराणां मेदोमज्जावसाघृतम् १५**

तत्र तेषु त्रिषु धूमेषु मध्यान्मृदौ प्रायोगिकाख्ये धूमे द्रव्याण्यगुरुप्रभृतीनि । प्लवो गोपालमदनकः । स्नेह इति । फलानामक्षोडनालिकेरादीनां स्नेहः । तथा साराणां खदिरासनादीनां च स्नेहः । मधुकमदनयोरेकयोनित्वादुक्तस्योपयोगो मदनस्याऽत्र विरुद्ध इति केचित् । तच्चाऽयुक्तम् । द्रव्यांतरत्वान्मदनस्य पिण्याकादिवत्तिलादेः । घृतं चाऽत्र गव्यमेव ग्राह्यं मुख्यत्वात् । उक्तं हि । गव्ये क्षीरघृते श्रेष्ठ इति ।

**शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ।**
**न्यग्रोधोदुंबराश्वत्थप्लक्षरोध्रत्वचः सिता ॥ १६ ॥**
**यष्टी मधुः सुवर्णत्वक् पद्मकं रक्तयष्टिका ।**
**गंधाश्चाकुष्ठतगराः**

शमने धूमे शल्लक्यादीनि गंधद्रव्याणि कुष्ठतगरवर्ज्यानि ।

**तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥**
**दशमूलमनोह्वालं लाक्षाश्वेताफलत्रयम् ।**
**गंधद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥१८॥**

तीक्ष्णे विरेचनाख्ये धूमे ज्योतिष्मत्यादीनि गंधद्रव्याणि च तीक्ष्णानि कुष्ठतगरादीनि गणश्च शोधनादिगणः संग्रहोक्तो वेल्लापामार्गेत्यादिको मूर्धविरेचनः ।

संप्रति धूमवर्तिविधानमाह ।

**जले स्थितामहोरात्रमिषीकां द्वादशांगुलाम् ।**
**पिष्टैर्धूमौषधैरेवं पंचकृत्वः प्रलेपयेत् ॥ १९ ॥**
**वर्तिरंगुष्ठवत्स्थूला यवमध्या यथा भवेत् ।**
**छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथम् २०**
**धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ।**

रात्रिंदिवं सलिल उषितां दैर्घ्येण द्वादशांगुलामिषीकां दर्भमूलं पंचकृत्वः पंचवारान् धूमोक्तैरौषधैः पिष्टैः प्रकर्षेण लेपयेत् । तथांऽगुष्ठवत्स्थूला यवमध्या वर्तिः स्यात् । एतदाकृतिविधानं च त्रिविधेऽपि नेत्रके वर्तेः सुखप्रवेशार्थम् । तामिषीकां छायाविशुष्कां विगतगर्भामपनीतेषीकां तथा स्नेहेन घृतादिना यथास्वमभ्यक्तां तथा धूमनेत्रस्य यदंगुष्ठप्रमाणं छिद्रं तत्राऽर्पितां तथाऽग्निप्लुष्टामंगारप्रदीप्तां पातुं पानार्थे प्रयोजयेत् ।

अधुनाऽपरमपि धूमप्रकारमाह ।

**शरावसंपुटच्छिद्रे नाडीं न्यस्य दशांगुलाम्॥२१॥**
**अष्टांगुलां वा वक्त्रेण कासवान् धूममापिबेत् ।**

शरावयोः संपुटं युग्मं तस्य छिद्रे नाडीं दशांगुलामष्टांगुलप्रमाणां वा निक्षिप्य कासी धूममापिबेत् । तदयमत्राऽर्थः । अपगतधूमखदिरबदरादिदारुस्थिरांगारप्रखरपूर्णशरावे कासहरचूर्णं सस्नेहं गुलिकां वा न्यस्य मध्यकृतच्छिद्रशरावेण पिधाय नाडीमष्टांगुलां दशांगुलां वा निवेश्य कासवान् कासी वक्त्रेण मुखेन धूमं पिबेदिति ।

**कासः श्वासः पीनसो विस्वरत्वं**
**पूतिर्गंधः पांडुता केशदोषः ।**
**कर्णाऽस्याक्षिस्रावकंड्वर्तिजाड्यं**
**तंद्रा हिध्मा धूमपं न स्पृशंति ॥ २२ ॥**

कासादयो धूमपं न स्पृशंति । धूमं पातुरेते न संभवंतीति भावः । तत्र पूतिर्गंध आस्यनासयोः । पांडुता मुखस्य । केशस्य दोषाः सितपिंजरत्वादयः । कर्णौ चाऽस्यं चाऽक्षिणी च कर्णाऽस्याक्षि । स्रावश्च कंडूश्चाऽर्तिश्च जाड्यं च स्रावकंड्वर्तिजाड्यम् । कर्णादिषु प्रत्येकं स्रावादिचतुष्टयं योज्यमिति । शालिनी वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामेकविंशतितमोऽध्यायः ॥ २१ ॥

## द्वाविंशतितमोऽध्यायः ।

इदानीं द्वाविंशाध्यायारंभणप्रस्तावो गंडूषादिविधानप्रदर्शनार्थमित्याह ।

**अथाऽतो गंडूषादिविधिमध्यायं व्याख्यास्यामः ।**

गंडूषादयो विधीयंते यस्मिन्निति गंडूषादिविधिः । आदिशब्देन कवलादिपरिग्रहः ।

**चतुष्प्रकारो गंडूषः स्निग्धः शमनशोधनौ ।**
**रोपणश्च**

चत्वारः प्रकारा भेदा यस्य स चतुष्प्रकारो गंडूषः स्निग्धादिभेदेन ।

**त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥**
**अंत्यो व्रणघ्नः**

तत्र तेषु गंडूषेषु मध्याद्यथासंख्यं पवनपित्तश्लेष्मसु त्रयः स्निग्धादयो गंडूषा योज्याः । तत्र वाते स्निग्धो गंडूषः । पित्ते शमनः कफे शोधन इत्यर्थः । अंत्यो रोपणाख्यो व्रणघ्नो व्रणसाधन उपयुज्यते ।

इदानीमेषां लक्षणं निर्वक्ति ।

**स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।**
**स्नेहैः**

अत्रैषु गंडूषेषु मध्ये स्निग्धो मधुरादिसाधितैः स्नेहैर्भवति ।

**संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥**

शमनस्तिक्तादिभिरौषधैः पटोलाऽरिष्टजंब्वाम्रमधुकक्काथशर्करोदकक्षौद्रादिभिः स्यात् ।

**शोधनस्तिक्तकट्वम्लपटूष्णैः**

शोधनो गंडूषस्तिक्तकट्वम्लादिभिरौषधैर्भवति ।

**रोपणः पुनः ।**
**कषायतिक्तकैः**

रोपणस्तु गंडूषः कषायतिक्तकैः स्यात् ।

ननु द्रव्याणां शुष्कत्वाद्गंडूषानुपपत्तिरिति चेत्तत्राह ।

**तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥**
**शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम् ।**
**कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥**

तत्र तेषु पूर्वोक्तेषु गंडूषेषु मध्ये स्नेहादिकं कल्कैर्यथायुक्तं विपक्वं यथास्पर्शं शीतमुष्णं वा प्रयोजयेत् ।

**दंतहर्षे दंतचाले मुखरोगे च वातिके ।**
**सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ ५ ॥**

दंतहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदकं हितम् ।

**गंडूषधारणे नित्यं तैलं मांसरसोऽथवा ।**

गंडूषधारणे नित्यं तैलं मांसरसो वा हितः ।

**ऊषादाहान्विते पाके क्षते वाऽऽगंतुसंभवे ॥ ६ ॥**
**विषक्षाराऽग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ।**

ऊषादियुक्ते पाके क्षते वाऽऽगंतुजे तथा विषे क्षाराग्निभ्यां दग्धे च सर्पिर्गंडूषे हितं क्षीरं वा ।

**वैशद्यं जनयत्यास्ये संदधाति मुखव्रणान् ॥ ७ ॥**
**दाहतृष्णाप्रशमनं मधुगंडूषधारणम् ।**

माक्षिकगंडूषधारणं मुखे वैशद्यं जनयति न पैच्छिल्यम् । मुखव्रणांश्च संदधाति तथा दाहं तृष्णां च शमयति ।

**धान्याम्लमास्यवैरस्यमलदौर्गंध्यनाशनम् ॥ ८ ॥**

धान्याम्लं गंडूष उपयुक्तं वदनवैरस्यं तथा मलं दौर्गंध्यं चाऽपनयति ।

**तदेवाऽलवणं शीतं मुखशोषहरं परम् ।**

तदेव कांजिकमलवणं शीतं परमतिशयेनाऽस्यशोषहरम् ।

**आशु क्षारांबुगंडूषो भिनत्ति श्लेष्मणश्चयम् ॥९॥**

क्षारेण स्वर्जिकादिना युक्तं जलं कफस्य चयमाशु भिनत्ति ।

**सुखोष्णोदकगंडूषैर्जायते वक्त्रलाघवम् ।**

कोष्णपानीयगंडूषैर्वदनलाघवं संपद्यते ।

**निवाते सातपे स्विन्नमृदितस्कंधकंधरः ॥ १० ॥**
**गंडूषमपिबन् किंचिदुन्नतास्यो विधारयेत् ।**

वातरहिते रव्यालोके स्थाने । स्कंधौ च कंधरा च स्कंधकंधरम् । पूर्वं स्विन्नं पश्चान्मृदितं स्कंधकंधरं यस्य स एवम् । तथा गंडूषमपिबंस्तथा किंचिदुन्नतं मुखं यस्य स एवंविधः सन् गंडूषं धारयेत् ।

कियंतं कालमित्याह ।

**कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा ।**
**असंचार्यो मुखे पूर्णे गंडूषः कवलोऽन्यथा ॥११॥**

कफेन पूर्णं कफपूर्णमास्यं यस्य स कफपूर्णास्यस्तस्य भावः कफपूर्णास्यता यावद्भवेत् । अथवा स्रवत् घ्राणाक्षि यस्य स स्रवद्घ्राणाक्षः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । तस्य भावः स्रवद्घ्राणाक्षता यावत्स्यात्तावद्गंडूषान् धारयेत् । एवं गंडूषाः पंच सप्त धार्यितव्या यावत्स्वास्थ्यं स्यात् । मुखे पूर्णे सति यः संचारयितुमशक्यः स्यात् स गंडूष उच्यते । अन्यथा च संचारयितुं शक्यते । मुखेऽपूर्णे यः स कवल उच्यते ।

**मन्याशिरःकर्णमुखाक्षिरोगाः**
**प्रसेककंठामयवक्त्रशोषाः ।**
**हृल्लासतंद्रारुचिपीनसाश्च**
**साध्या विशेषात्कवलग्रहेण ॥ १२ ॥**

मन्यादीनां रोगेण संबंधः । प्रसेकादीनां द्वंद्वः । आमयशब्दस्य कंठेन संबंधो विविधकंठरोगसूचनार्थः । मन्यारोगादयो विशेषेण कवलधारणेन साध्याश्चिकित्स्याः ।

**कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ।**

कल्कादिभेदेन प्रतिसारणं त्रिधा स्यात् । कल्को जलादिपिष्टः । माक्षिकादिना यद्घनीक्रियते द्रव्यं सा रसक्रिया । चूर्णं प्रथितमेव ।

**युंज्यात्तत् कफरोगेषु गंडूषविहितौषधैः ॥ १३ ॥**

तत्प्रतिसारणं श्लेष्मरोगेषु गंडूषोक्तैरौषधैर्योज्यम् । सामान्योक्तावपि कफरोगविषयत्वात् शोधनगंडूषोक्तैरिति वेद्यम् ।

**मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ।**

मुखालेपस्त्रिप्रकारो दोषघ्नो विषघ्नो वर्णकरश्च ।

**उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः ॥ १४ ॥**

स च मुखालेपो वातश्लेष्मण्युष्णो हितः । शेषेषु पित्ते वातातिशये च शिशिरो हितः । स च त्रिप्रमाणः ।

कथमित्याह ।

**त्रिप्रमाणश्चतुर्भागत्रिभागार्धांगुलोन्नतिः ।**

चतुर्भागत्रिभागार्धांगुलोन्नतिः । उन्नतिरुत्सेधः ।

**अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति च्छविम् ॥**
**तमार्द्रयित्वाऽपनयेत्तदंतेऽभ्यंगमाचरेत् ।**

तस्य मुखालेपस्याऽशुष्कस्य स्थितिः । शुष्कस्तु मुखालेपश्छविं त्वचं दूषयति । मुखालेपमार्द्रयित्वाऽपसारयेत् । तस्यांते तस्मिन्नपनीतेऽभ्यंगं कुर्यात् ।

**विवर्जयेद्दिवास्वप्नभाष्याऽग्न्यातपशुक्क्रुधः १६**

मुखालेपी दिवास्वप्नादीन् वर्जयेत् । अहःस्वप्नादिसेवनात् कंडूत्वक्शोफपीनसदृष्ट्युपधानादिभयं स्यात् ।

**न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ।**
**अरोचके जागरिते**

पीनसादौ मुखालेपो न योज्यः ।

**स च हंति सुयोजितः ॥ १७ ॥**
**अकालपलितव्यंगवलीतिमिरनीलिकाः ।**

स च मुखालेपः सुयोजितो विधिना सेवितोऽकालपलितादीन् पराकरोति ।

**कोलमज्जावृषान्मूलं शावरं गौरसर्षपाः ॥ १८ ॥**
**सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः।**
**दर्भमूलहिमोशीरशिरीषमिशितंडुलाः ॥ १९ ॥**
**कुमुदोत्पलकह्लारदूर्वामधुकचंदनम् ।**
**कालीयकतिलोशीरमांसीतगरपद्मकम् ॥ २० ॥**
**तालीसगुंद्रापुंड्राह्वयष्टीकाशनतागुरुः ।**
**इत्यर्धार्धोदिता लेपा हेमंतादिषु षट् स्मृताः २१**

कोलमज्जादयोऽर्धश्लोकोक्ताः षण्मुखालेपा इत्येवं षट्सु हेमंतादिषु ऋतुषु स्मृताः । मुनींद्रैरिति शेषः । तत्र बदरमज्जादयो हेमंते । व्याघ्र्यादयः शिशिरे । दर्भमूलादयो वसंते । कुमुदादयो ग्रीष्मे । कालीयकादयः प्रावृषि । तालीसादयः शरदि ।

**मुखालेपनशीलानां दृढं भवति दर्शनम् ।**
**वदनं चाऽपरिम्लानं श्लक्ष्णं तामरसोपमम् ॥२२॥**

मुखालेपाभ्यासवतां नराणां दर्शनं दृष्टिर्दृढं स्यात् । मुखं च विकसितमिव तथा कोमलं पद्मतुल्यं च जायते ।

**अभ्यंगसेकपिचवो वस्तिश्चेति चतुर्विधम् ।**
**मूर्धतैलम्**

अभ्यंगादिभेदात् चतुर्धा शिरसि तैलं स्यात् ।

**बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ २३ ॥**

तच्चोत्तरोत्तरं बहुगुणं विद्यात् । अभ्यंगात् सेको बहुगुणस्ततोऽपि पिचुस्तस्मादपि बस्तिरिति क्रमेण ।

**तत्राऽभ्यंगः प्रयोक्तव्यो रौक्ष्यकंडूमलादिषु ।**

तत्र तेषु मध्ये रौक्ष्यादिष्वभ्यंगः कार्यः ।

**अरूषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ २४ ॥**
**परिषेकः**

अरूषिकादिषु परिषेकः ।

**पिचुः केशशातस्फुटनधूपने ।**
**नेत्रस्तंभे च**

केशशातादिषु पिचुः प्रयोक्तव्यः ।

**वस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ २५ ॥**
**नासाऽऽस्यशोषे तिमिरे शिरोरोगे च दारुणे ।**

वस्तिः पुनः प्रसुप्त्यादौ योज्यः ।

**विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ ॥ २६ ॥**
**शुद्धाक्तस्विन्नदेहस्य दिनांते गव्यमाहिषम् ।**
**द्वादशांगुलविस्तीर्णं चर्मपट्टं शिरःसमम् ॥ २७ ॥**
**आकर्णबंधनस्थानं ललाटे वस्त्रवेष्टिते ।**
**चैलवेणिकया बध्वा माषकल्केन लेपयेत् ॥२८॥**

तस्य शिरोबस्तेर्विधानमुच्यते । निषण्णस्योपविष्टस्य नरस्य । क्व । पीठे जानुतुल्ये तथा मृदौ न कठिने । किंभूतस्य । शुद्धो वमनादिनाऽक्तस्तैलादिना स्विन्नः स्वेदेन देहो यस्य तस्य शुद्धाक्तस्विन्नदेहस्य । कदा । दिनांतेऽपराह्णे विभावर्यां वा । चर्मपट्टं गव्यं माहिषं वा तथा द्वादशांगुलविस्तीर्णं तथा शिरस्तुल्यं तथाऽऽकर्णं कर्णं यावद्बंधनस्थानं यस्य तदेवंविधं चर्मपट्टं चैलवेणिकया संयम्य माषकल्केन लेपयेत् । कदा । ललाटे वस्त्रवेष्टिते । संग्रहे तूक्तम् । अथ शुद्धतनोः सायं रात्रौ वा निवातस्थस्य स्वभ्यक्तस्विन्नस्य सोपाश्रयासनोपविष्टस्य केशांते श्लक्ष्णं त्र्यंगुलं माषपिष्टेन सूक्ष्मेण सद्यः सुखांबुना मृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात् । ततस्तस्योपरि संधाय बस्तिं बस्तिमूलं च दृढमवलीकं समं चैलवेणिकया बध्वा पुनर्माषपिष्टेनोपरिस्राावि कृत्वा यथाव्याधिदोषदूष्यहितं सिद्धमन्यतमं स्नेहं सुखोष्णमासेचयेदिति ।

**ततो यथाव्याधि श्टतं स्नेहं कोष्णं निषेचयेत् ।**
**ऊर्ध्वं केशभुवो यावद्व्यंगुलम्**

तत एवंकृते सति व्याधिवशेन पक्वं स्नेहं कोष्णमुपरिच्छिद्रेणाऽवसेचयेत् । केशभूमेरुपरिष्टाद्व्यंगुलं यावत् ।

स च स्नेहः कियत्कालं धार्य इत्याह ।

**धारयेच्च तम् ॥ २९ ॥**
**आवक्त्रनासिकोत्क्लेदात्**

तं च स्नेहं यावद्वक्त्रनासिकास्रुतिः स्यात्तावद्धारयेत् ।

**दशाऽष्टौ षट् चलादिषु ।**
**मात्रासहस्राणि**

चल आदिर्येषां ते चलादयस्तेषु यथासंख्यं दशाष्टौ षट् मात्रासहस्राणि यावत्स्नेहं धारयेत् । वाते दशमात्रासहस्राणि पित्तेऽष्टौ मात्रासहस्राणि कफे षण्मात्रासहस्राणीत्यर्थः ।

**अरुजे त्वेकम्**

अरुजे तु स्वच्छवृत्त एकं मात्रासहस्रं धारयेत् ।

**स्कंधादि मर्दयेत् ॥ ३० ॥**
**मुक्तस्नेहस्य**

मुक्तस्नेहस्याऽपनीतशिरोबस्तेः स्कंधशिरोग्रीवादि मर्दयेत् । स्नेहबस्तिर्हि स्नेहशब्देनाऽत्र गृह्यते । तत उष्णोदकोपचारी स्यादित्यादिकमाचरेत् । तत्र ह्यवोचत् । सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रम इति ।

**परमं सप्ताहं तस्य सेवनम् ।**

तस्य च स्नेहबस्तेः परमं सेवनं सप्तदिनानि । तस्मात्त्रिपंचसप्ताऽहानि कार्यः शिरोबस्तिरित्यवतिष्ठते ।

**धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ॥ ३१ ॥**
**रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ।**

कर्णपूरणं धारयेत् । किं कुर्वन् । कर्णमूलं विमर्दयन् । कियत्कालं यावत्पीडाया मार्दवं भवेत् । स्वस्थचित्ते तु मात्राशतं यावद्बिभृयात् ।

अथ मात्रायाः किं प्रमाणमित्याह ।

**यावत्पर्येति हस्ताग्रं दक्षिणं जानुमंडलम् ॥ ३२ ॥**
**निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ।**

दक्षिणं हस्ताग्रं कर्तृ जानुमंडलं दक्षिणं पर्येति परिवर्तते । दक्षिणशब्दोऽत्र काकाक्षिगोलकन्यायेन द्वयेनाऽपि युज्यते । कियत्कालेनेत्याह । निमिषोन्मेषमात्रेण समं न तु विश्रम्य सा मात्रा स्मृता मुनिभिरिति शेषः ।

**कचसदनसितत्वपिंजरत्वं**
**परिफुटनं शिरसः समीररोगान् ।**
**जयति जनयतींद्रियप्रसादं**
**स्वरहनुमूर्धबलं च मूर्धतैलम् ॥ ३३ ॥**

कचानां सदनादिभिः संबंधः । परिफुटनं कचानामेव प्रकृतत्वात् । शिरसो मरुदामयांश्च हंति । इंद्रियाणां चक्षुरादीनां प्रसादं जनयति । तथा स्वरादिबलं च मूर्धतैलं जनयति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ।

त्रयोविंशाध्यायारंभो जत्रूर्ध्वरोगप्रस्तावाल्लोचनाश्चोतनविधानप्रदर्शनार्थमित्याह ।

**अथाऽत आश्चोतनांजनविधिमध्यायं**
**व्याख्यास्यामः ।**

आश्चोतनं चांऽजनं च तयोर्विधिर्यस्मिन्नध्याये स एवम् । शेषं पूर्ववत् ।

**सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम् ।**
**रुक्तोदकंडूघर्षाश्रुदाहरोगनिबर्हणम् ॥ १ ॥**

सकलानामपि नयनामयानां प्रथममाश्चोतनं परिषेको हितम् । यतस्तदाश्चोतनमुपयुक्तं रुजादिघ्नं स्यात् । संग्रहे चोक्तम् । अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाऽक्षिकोशालेपनं तच्च बिडालकसंज्ञकमिति ।

**उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ।**

तदाश्चोतनं मरुत्युष्णम् । कफे किंचिदुष्णम् । रक्ते पित्ते च शीतं हितम् ।

संप्रत्याश्चोतनस्य विधिमाह ।

**निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥**
**शुक्त्या प्रलंबयाऽन्येन पिचुवर्त्या कनीनिके ।**
**दश द्वादश वा बिन्दून् द्व्यंगुलादवसेचयेत् ॥ ३ ॥**
**ततः प्रमृज्य मृदुना चैलेन कफवातयोः ।**
**अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥**

निवातस्थानस्थितस्याऽतुरस्य वैद्यो वामेन पाणिनोन्मील्य लोचनमपांगदेशे भाजनं निधायाऽन्येन दक्षिणकरेण पिचुवर्त्या शुक्त्या प्रलंबया दश द्वादश वा बिंदून् द्व्यंगुलान्नातिनिकटान्नातिदूरात् कनीनिकेऽवसेचयेत् । अत इति । अनंतरं कोमलेन वस्त्रखंडेन प्रमृज्य शोधयित्वाऽन्येन शोधनाच्चैलेन कोष्णजलप्लुतेनाऽक्षि मृदु स्वेदयेन्नातिशयेन । कयोर्दोषयोः । वातकफयोः । नतु पित्तरक्तयोरित्यर्थः ।

**अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाऽक्षिसेचनम् ।**
**अतिशीतं तु कुरुते निस्तोदस्तंभवेदनाः ॥ ५ ॥**
**कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।**
**विकारवृद्धिमत्यल्पं संरंभमपरिस्रुतम् ॥ ६ ॥**

अत्यर्थमुष्णमतितीक्ष्णं चाऽऽश्चोतनं रुजे रागाय दृग्विनाशाय च स्यात् । अतिशीतं त्वक्षिसेचनं निस्तोदादीन् विधत्ते । निस्तोदः सूच्येव व्यधः । स्तंभोऽक्ष्णः स्तंभनमिव वेदनां शूलम् । कषायवर्त्मत्वं कुरुते । घर्षो वर्त्मनः परस्परं संश्लेषः । बह्वतिमात्रमाश्चोतनं कृच्छ्रेणोन्मेषणं विधत्ते । अत्यल्पमक्षिसेचनं विकारवृद्धिं कुरुते । अपरिस्रुतमक्षिसेचनं संरंभं नेत्रक्षोभं विधत्ते ।

कया युक्त्या नेत्रे प्रयुक्तमौषधं दोषानपनयतीत्याह ।

**गत्वा संधिशिरोघ्राणमुखस्रोतांसि भेषजम् ।**
**ऊर्ध्वगान्नयने न्यस्तमपवर्तयते मलान् ॥ ७ ॥**

संध्यादीनां द्वंद्वः । ततः स्रोतःशब्देन षष्ठीसमासः । संधिशब्देनेहाक्षिकोशसंबंधिनः संधयो गृह्यंते । तेनाक्षिकोशसंबंधिस्रोतांसि शिरोघ्राणमुखस्रोतांसि गत्वा नयने क्षिप्तमौषधमूर्ध्वगान्मलानपवर्तयते ।

**अथांऽजनं शुद्धतनोर्नेत्रमात्राश्रये मले ।**
**पक्कलिंगेऽल्पशोफातिकंडूपैच्छिल्यलक्षिते ॥ ८ ॥**
**मदघर्षाश्रुरोगेऽक्षिण प्रयोज्यं घनदूषिके ।**
**आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः ॥ ९ ॥**

अथाश्चोतनादन्यदंजनं प्रयोक्तव्यम् । कीदृशस्याऽऽतुरस्य ।

शुद्धा तनुर्यस्य स तस्य । मले नेत्रमात्राश्रये न त्वधिकशरीरव्यापिनि । तथा पक्वलिंगे । पक्वलिंगता कथं वेद्येति विशेषणद्वारेणाऽऽह । अल्पशोफेनातिकंड्वा पैच्छिल्येन च लक्षितेऽवगते पक्वलिंगे सति । कीदृशेऽक्षिण । मंदा अल्पा घर्षा अश्रुरोगा यस्य तस्मिन् । तथा घना दूषिका नेत्रमलो यस्मिन्नयने तस्मिन् । एतदपि पक्वलिंगमेव । पित्तेन कफेन रक्तेन चाऽऽतुरे मारुतेन चाऽऽतुरे विशेषेणांजनं प्रयोज्यम् ।

**लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।**
**अंजनम्**

अंजनं च लेखनादिभेदेन त्रिभेदम् । लिख्यते शस्त्रेणेव शुक्रार्मादीति लेखनम् । रोप्यते संरोह्यतेऽनेनाऽभिष्यंदादीति रोपणम् । प्रसाद्यते निर्मलीक्रियतेऽनेनेति प्रसादनम् । दृष्टेः प्रसादनं दृष्टिप्रसादनम् । संग्रहोक्तस्य स्नेहनस्य यत्स्नेहनमंजनं कथितं तदिह रोपणदृष्टिप्रसादनयोरेवांतर्भूतत्वात् पृथङ्नोक्तम् ।

**लेखनं तत्र कषायाम्लपटूषणैः ॥ १० ॥**

तत्र तेषु त्रिष्वंजनेषु मध्याल्लेखनमंजनं कषायादिभिर्द्रव्यैः शुक्रार्मादिषु प्रयोज्यम् ।

**रोपणं तिक्तकैर्द्रव्यैः**

रोपणमंजनं तिक्तकैर्द्रव्यैः स्यात् । तिक्तग्रहणमुपलक्षणार्थं संग्रहोक्तस्य । तेन कषायद्रव्यैः सस्नेहै रोपणमंजनं वेद्यम् ।

**स्वादुशीतैः प्रसादनम् ।**

स्वादुशीतैर्द्रव्यैः प्रसादनमेव प्रसादनमंजनम् । स्वादुशीतद्रव्यैश्चूर्णं श्लक्ष्णांजनं संतप्ते चक्षुषि प्रयुज्यमानं प्रत्यंजनसंज्ञां लभते ।

**दशांगुला तनुर्मध्ये शलाका मुकुलानना ॥ ११ ॥**
**प्रशस्ता लेखने ताम्री रोपणे काललोहजा ।**
**अंगुली च सुवर्णोत्था रूप्यजा च प्रसादने १२**

दशांगुला राजमाषस्थूला शलाका प्रशस्यते । मध्ये तनुस्तथा मुकुलाकारे आनने मुखे द्वे अपि यस्याः सा मुकुलानना लेखनेंऽजने ताम्री शलाका प्रशस्यते । रोपणे काललोहोत्था कृष्णशस्त्रोद्भवा । अंगुली च हस्तावयवविशेषो रोपण एव शस्तः । एवं प्रसादनेंऽजने सुवर्णोत्था कनकोद्भवा राजतोद्भवा च शलाका प्रशस्ता ।

अंजनकल्पना त्रिप्रकारा स्यात् कथमित्याह ।

**पिंडो रसक्रिया चूर्णस्त्रिधैवांजनकल्पना ।**
**गुरौ मध्ये लघौ दोषे ताः क्रमेण प्रयोजयेत् १३**

पिंडादिभेदेन त्रिप्रकारांऽजनकल्पना स्यात् । पिंडादयो बहुदोषादिषु क्रमेण प्रयोज्याः । गुरौ दोषे पिंडः प्रयोज्यो मध्ये दोषे रसक्रिया लघुदोषे चूर्णं इत्यर्थः ।

**हरेणुमात्रं पिंडस्य वेल्लमात्रा रसक्रिया ।**
**तीक्ष्णस्य द्विगुणं तस्य मृदुनः**

तीक्ष्णद्रव्यकृतस्य पिंडस्य हरेणुमात्रं प्रमाणं कथयंति । मृदुद्रव्यकृतस्य पिंडस्य तद्द्विगुणं द्विहरेणुमात्रं वदंति । रसक्रियाया विडंगं प्रमाणमाहुः ।

**चूर्णितस्य च ॥ १४ ॥**
**द्वे शलाके तु तीक्ष्णस्य तिस्रः स्युरितरस्य च ।**

चूर्णे तीक्ष्णे द्विगुणां शलाकां मृदौ त्रिगुणां शलाकामभिदधुः । तंत्रांतरे चोक्तम् । लेखनमंजनं ताम्ररजतकांस्याद्यन्यतमेषु धार्यम् । रोपणं सुवर्णवटशंखान्यतमेषु । प्रसादनं स्फटिकप्लक्षचंदनान्यतमेषु धार्यम् । एवं ह्यंजनमव्यापन्नगुणं भवति । वर्तेर्वर्षणार्थं शिला निम्नमध्याऽनुद्वारिणी पंचांगुलायता त्र्यंगुलविस्तारेति ।

**निशि स्वप्ने न मध्याह्ने पानान्नोष्णगभस्तिभिः १५**
**अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुताः ।**
**प्रातःसायं च तच्छांत्यै व्यभ्रेऽर्केऽतोऽजयेत्सदा १६**

निशि रात्रावंजनं न प्रयोज्यम् । तथा स्वप्ने स्वप्नकालेंऽजनं न प्रयोज्यम् । तथा मध्यंदिनेंऽजनं न प्रयोज्यम् । न च म्लाने लोचनेंऽजनं प्रयोज्यम् । केन म्लाने । उष्णाभिर्दीधितिभिः । यस्मादेषु कालेष्वंजनेन प्रयुक्तेन दोषा वृद्धिं नीतास्तथाऽन्यस्थानगतत्वादुत्पीडितास्तथा द्रुताः कालस्योष्णत्वाद्विलयं गता अक्षिरोगाय स्युस्तस्मादेषु कालेष्वंजनं न प्रयोज्यम् । यतः पूर्वोक्तेषु कालेषु पूर्वोक्ता दोषास्तस्मात्पूर्वाह्णे च तच्छांत्यै तस्याक्षिरोगस्योपशमाय गताभ्रे रवौ सदैव नेत्रमंजयेत् ।

**वदंत्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमंजनम् ।**
**विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १७ ॥**

अन्ये त्वाचार्या एवं मन्यंते । तीक्ष्णमंजनं दिवा न प्रयोज्यम् । कस्मादित्याह । यस्माच्चक्षुरादित्यं प्राप्य सीदति । किंभूतम् । विरेकदुर्बलम् । तीक्ष्णांजनेन विरेचितत्वात् । तस्माद्दिवसे तीक्ष्णमंजनं न प्रयोज्यम् ।

अत एवाऽऽह ।

**स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ।**
**शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः १८**

यस्मात्स्वप्नेन रात्रौ तर्पिता तथा कालस्य रात्र्याख्यस्य सौम्यत्वेन तर्पिता दृष्टिः पुनः स्थैर्यं प्राप्नोति तीक्ष्णांजनक्षोभिताऽपि । कीदृग्दृष्टिः । आग्नेय्यग्न्युत्कटभूतसंभवा । तथा शीतसात्म्या । तस्माद्रात्रावंजनं प्रयोज्यम् । आग्नेयीति सर्वत्राग्निकलिभ्यां ढग्वक्तव्य इति ढक् । शीतं सात्म्यं यस्याः । पैत्तिकज्वरस्येव ।

तदेतदन्यमतमव्यापकमिति दूषयन्नाह।

**अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे।**
**काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत्१९**

अत्युत्कृष्टे कफेऽथवा लेखनार्हे शुक्रार्मादौ रोगे दिनेऽपि नात्युष्णे तीक्ष्णमंजनं प्रयोजयेत्। काममनुगतमेतत्। कालस्यात्यौष्ण्यादंजनस्य तैक्ष्ण्याच्चाऽतियोगेन दृष्ट्युपघातः स्यात्।

अत एवाह।

**अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता।**
**उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः॥ २०॥**

पाषाणाच्छस्त्रस्योत्पत्तिस्तस्मादेव चाऽश्मनः श्लक्ष्णतादियोगात्तीक्ष्णता। उपघातोऽपि कुंठत्वादिकस्तेनैव पाषाणेन न केवलं तैक्ष्ण्यम्। तथा तेनैवाश्मशस्त्रन्यायेन नेत्रस्य तेजसोऽग्नेरश्मस्थानीयाज्जन्म रविसंज्ञात्तेजसः सकाशात्तीक्ष्णता दर्शनपटुत्वमत्युष्णेन तु तेन तस्योपघातः। तस्माद्यदन्ये गदंति सामान्येनैव दिवांऽजनं न प्रयोज्यमिति तदसदेव।

**न रात्रावपि शीतेति नेत्रे तीक्ष्णांजनं हितम्।**
**दोषमस्रावयत्स्तंभकंडूजाड्यादिकारि तत्॥२१॥**

अपि च रात्रावपि नेत्रे कफाधिक्येनातिशीते कंडूपैच्छिल्याद्यनुमिते तीक्ष्णमंजनं न प्रयोज्यम्। यतो निशि तीक्ष्णमंजनमुपयुक्तं कालस्य सौम्यत्वाद्दोषस्रवणेऽयोग्यमस्रावयदंजनं कंडूजाड्यादिकृत् स्यान्न तु शमकारि। तस्माच्छीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनरित्येतदप्यसत् तस्मात्पूर्वोक्तमेवाऽनवद्यम्।

**नांजयेद्भीतवमितविरिक्ताऽशितवेगिते।**
**क्रुद्धज्वरिततांताक्षिशिरोरुक्शोकजागरे॥ २२॥**
**अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः।**
**अजीर्णेऽग्न्यर्कसंतप्ते दिवा सुप्ते पिपासिते॥ २३॥**

भीतादीनामक्षिणी वैद्यो नांजयेत्। अशितोऽत्र सद्योभुक्तो वेद्यः। सद्योभुक्तस्य नरस्य नयने नांजयेदित्यर्थः। तांते सूक्ष्मभासुरादिदर्शनादभिघातत्वाच्च ग्लानेऽक्षिणी यस्य स एवं तस्मिन्। अदृष्टेऽर्के जलदच्छन्नत्वात्। तथा शिरःस्नातादिषु।

सांप्रतं यादृशमंजनं न योज्यं तद्दर्शयति।

**अतितीक्ष्णमृदुस्तोकबह्वच्छघनकर्कशम्।**
**अत्यर्थशीतलं तप्तमंजनं नावचारयेत्॥ २४॥**

अतिशब्दस्य तीक्ष्णादिभिर्घनांतैः संबंधः। अत्यर्थशीतलमित्येतस्मादत्यर्थशब्दस्तप्तमित्यत्राऽनुवृत्तिकृतेन संबंधेन योज्यः। अतितीक्ष्णादिगुणमंजनं न प्रयोजयेत्। तंत्रांतरे चांऽजनविधिरुक्तः। सुखोपविष्टस्याऽऽतुरस्य सूपविष्टो वैद्यो वामांगुष्ठेनोत्तरं वर्त्मोत्क्षिप्य कृष्णभागस्याऽधःकनीनिकादपांगं यावदंजनं नयेदिति।

**अथाऽनुन्मीलयन् दृष्टिमंतः संचारयेच्छनैः।**
**अंजिते वर्त्मनी किंचिच्चालयेच्चैवमंजनम्॥ २५॥**
**तीक्ष्णं व्याप्नोति सहसा न चोन्मेषनिमेषणम्।**
**निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत्॥२६॥**

अथैवमंजनस्वरूपमवेत्य नेत्रेंऽजिते सति दृष्टिगोलकमनुन्मीलयन्मध्ये शनैःशनैः संचारयेत्। कथम्। वर्त्मनी चालयेत्। एवमंजनं नेत्रं व्याप्नोत्यनुप्रविशति। न च सहसा विध्यतिक्रमेणोन्मेषनिमेषणं कुर्यात्। चशब्दोऽवधारणे। नैव समाचरेदित्यर्थः। वर्त्मभ्यां च निष्पीडनं न समाचरेत्। वाशब्दोऽवधारणे। क्षालनं च नैव कुर्यात्।

**अपेतौषधसंरंभं निर्वृतं नयनं यदा।**
**व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा॥ २७॥**

अपेतोऽपगत औषधसंरंभो भेषजक्षोभो यस्मान्नेत्रात्तदेवमपेतौषधसंरंभम्। अत एव निर्वृतमपेतदुःखानुबंधि यदा लोचनं स्यात्तदा व्याध्यादियोग्यैर्जलैः प्रक्षालयेत्। तत्र व्याधिरभिष्यंदादिः। दोषो वातादिः। ऋतुर्वसंतादिः।

**दक्षिणांगुष्ठकेनाऽक्षि ततो वामं सवाससा।**
**ऊर्ध्ववर्त्मनि संगृह्य शोध्यं वामेन चेतरत्॥ २८॥**

ततो नयनप्रक्षालनादनंतरं दक्षिणांगुष्ठेन सवस्त्रेण वामं नयनमूर्ध्ववर्त्मनि सम्यगादाय शोधनीयम्। वामेनांऽगुष्ठेन सवाससेतरद्दक्षिणमूर्ध्ववर्त्मनि संगृह्य शोध्यम्।

किमिति शोध्यमित्याह।

**वर्त्मप्राप्तांजनाद्दोषो रोगान्कुर्यादतोऽन्यथा।**

अतोऽन्यथाऽशोध्यमाने वर्त्मनि प्राप्तं च तदंजनं वर्त्मप्राप्तांजनं तस्माद्दोषो रोगान् कुर्यात्। तस्मात्तच्छोध्यं नयनम्।

**कंडूजाड्येंऽजनं तीक्ष्णं धूमं वा योजयेत् पुनः।**

कंडूश्च जाड्यं चेति समाहारद्वंद्वः। तस्मिन् सति तीक्ष्णमंजनं योजयेत्। अथवा तीक्ष्णं धूमं योजयेत्।

**तीक्ष्णांजनाऽभितप्ते तु पूर्णं प्रत्यंजनं हितम्॥२९॥**

पुनस्तीक्ष्णेनांजनेनाऽभितप्ते लोचने पूर्णं प्रत्यंजनं चोक्तं हितमिति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां त्रयोविंशोऽध्यायः॥ २३॥

---

## चतुर्विंशतितमोऽध्यायः।

अस्मादनंतरं चतुर्विंशाऽध्यायारंभ आश्चोतनांजनाभ्यां हि नयनस्य प्रायो दौर्बल्यमतस्तर्पणादेरुपयोगो युक्त इत्याह।

**अथाऽतस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः।**

तर्पणं च पुटपाकश्च तर्पणपुटपाकौ तयोर्विधिस्तम्। शेषं पूर्ववत्।

**नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते।**

**वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ १ ॥**
**कृच्छ्रोन्मीलशिराहर्षशिरोत्पाततमोऽर्जुनैः ।**
**स्यंदमंथान्यतोवातवातपर्यायशुक्रकैः ॥ २ ॥**
**आतुरे शांतरागाश्रुशूलसंरंभदूषिके ।**
**निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः ॥ ३ ॥**
**काले साधारणे प्रातः सायं चोत्तानशायिनः ।**

चक्षुषि म्लायति सति तथा स्तब्धादिगुणे तर्पणं कार्यम् । तथा शीर्णे पक्ष्मणी यस्य तदेवम् । आविलमस्पष्टमीक्षणं दर्शनं यस्य तदेवम् । शीर्णपक्ष्म च तदाविलेक्षणं च तस्मिन् । तथा कृच्छ्रोन्मीलादयोऽक्षिरोगेषु वक्ष्यंते । कृच्छ्रोन्मीलश्च शिराहर्षश्च शिरोत्पातश्च तमश्चाऽर्जुनश्चैतैरातुरे । तथा स्यंदश्च मंथश्चान्यतो वातश्च वातपर्यायश्च शुक्रकं च तैरातुरे । तथा तस्याऽनर्हे । यतो वक्ष्यति । तर्पणं पुटपाकं च तस्याऽनर्हे न योजयेत् । तथा शांता शमं गता रागाश्रुशूलसंरंभदूषिका यस्मिन्नयने तस्मिन् । कीदृशि स्थाने । निवाते विगताऽनिले । उपलक्षणं चेदम् । विगतातपरजोधूमादिक इत्यपि द्रष्टव्यम् । कीदृशयोर्मस्तकदेहयोः । शुद्धयोर्यथायोगं वमनविरेचननस्यैः कृतशुद्ध्योरित्यर्थः । कीदृशे काले । साधारणे वसंतादिके । कदा । सायं प्रातर्वा दोषदूष्याद्यपेक्षया । कीदृशस्याऽतुरस्य । उत्तानशायिन इति । शयनस्य-सोत्तानस्येत्यर्थः ।

**यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम् ॥ ४ ॥**
**द्व्यंगुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।**
**सर्पिर्निमीलिते नेत्रे तप्तांबुप्रविलापितम् ॥ ५ ॥**

यवैर्मिश्रा माषा यवमाषास्ते प्रकृता यस्यां सा यवमाषमयी ताम् । तादृशीं पालीं नेत्रकोशाद्बाह्यत उभयपार्श्वयोः समामनिम्नोन्नतां कृत्वा यथायोगं दोषदूष्याद्यनुरोधात्पक्वं घृतं निमीलितेऽनुन्मीलिते लोचने क्षिपेत् । अथ पाल्या उच्छ्रायमाह । द्व्यंगुलोच्चां द्व्यंगुलोच्छ्रायवतीम् । तथा दृढां निबिडाम् । यथा स्नेहो न प्रस्रवेदित्यर्थः । कीदृशं सर्पिः । तप्तेन जलेन प्रकर्षेण विलापितं द्रवीकृतम् ।

**नक्तांध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ।**
**आपक्ष्माग्रात्**

रात्र्यंधादिषु वसां यथास्वौषधसिद्धां तथैव विलापितामावपेत् । अथ स्नेहक्षेपादनंतरमापक्ष्माग्रात् पक्ष्माग्राणि यावन्निमग्नानि तावत्सर्पिरावपेदिति ।

**अथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥**
**मात्रां विगणयेत्तत्र वर्त्मसंधिसितासिते ।**
**दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पंच च ॥७॥**
**शतानि सप्त चाऽष्टौ च दश मंथे दशाऽनिले ।**
**पित्ते षट् स्वस्थवृत्ते च बलासे पंच धारयेत् ॥ ८ ॥**

अथ घृताद्यावपनादनंतरं शनैःशनैरुन्मीलनं विदधतस्तस्याऽऽतुरस्य मात्राः पूर्वोक्ता विगणयेत् । तत्र तेषु वर्त्मादिके व्याधौ सर्पिषि क्षिप्ते शतसंख्यादीर्मात्रा विगणयेत् क्रमेण । तत्र वर्त्मरोगे मात्राशतम् । संधिरोगे त्रीणि शतानि । सितरोगे पंच शतानि । असितरोगे सप्त शतानि । दृष्टिरोगेऽष्टौ शतानि धारयेदिति । क्रमशो यथासंख्येन । मंथाख्ये रोगे दश शतानि । वातरोगे दशैव शतानि । पित्तरोगे षट् शतानि । स्वस्थवृत्ते च षट् शतानि । कफे पंच शतानि । धारयेत् ।

**कृत्वाऽपांगे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।**
**पिबेच्च धूमं नेक्षेत व्योम रूपं च भास्वरम् ॥ ९ ॥**

यथोक्तमात्राधारणादनंतरमपांगदेशे पाल्या द्वारं कृत्वा स्नेहं भाजने निक्षिपेत् । ततः सक्तुपिंड्याक्षिकोशं प्रमृज्य स्नेहेरितकफोपशांतये धूमं च पिबेन्न केवलं तर्पणं कुर्यात् । प्रक्षालितनेत्रं त्वेनं मात्रया भोजयेत् । न दिवसे तथा व्योम न पश्येद्भास्वरं रूपं च । उपलक्षणं चेदम् । एवमातपमपि न पश्येत् ।

**इत्थं प्रतिदिनं वायौ पित्ते त्वेकांतरं कफे ।**
**स्वस्थे च द्व्यंतरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥**

इत्थमनेन क्रमेण पवने प्रत्यहं तर्पणं दद्यात् । पित्ते पुनरेकांतरं तर्पणं दद्यात् । कफे स्वस्थे च द्विदिनांतरं योजयेत् । इत्येवं यावन्नयनस्य तृप्तिः स्यात्तावत्तर्पणं योज्यम् ।

तृप्तस्य किं लक्षणमित्याह ।

**प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।**
**तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥**

प्रकाशक्षमत्वादिकं तृप्तस्य सम्यक्तर्पितस्य लक्षणम् । प्रकाशक्षमता प्रभाभास्वरादिसहत्वम् । अतृप्ते वैपरीत्यं पूर्वोनिर्दिष्टम् । अतितृप्ते सति कफोद्भवाः कंडूपैच्छिल्यादिका रुजः स्युः ।

**स्नेहपीता तनुरिव क्लांता दृष्टिर्हि सीदति ।**
**तर्पणानंतरं तस्माद्दृग्बलाधानकारिणम् ॥ १२ ॥**
**पुटपाकं प्रयुंजीत पूर्वोक्तेष्वेव यक्ष्मसु ।**

स्नेहपीता दृष्टिः क्लांता तनुरिव यतोऽवसीदति तस्मात्कारणात्तर्पणानंतरं पुटपाकं प्रयुंजीत । कीदृशम् । दृशोर्बलं दृग्बलं तस्याऽऽधानं प्रबंधेन वृत्तिस्तत्करोति तं दृग्बलाधानकारिणम् । हेतोर्द्वितीया । दृग्बलाधानकारित्वात् प्रयुंजीतेत्यर्थः । पूर्वोक्तेष्वेव तर्पणोक्तेष्वामयेषु ।

**स वाते स्नेहनः श्लेष्मसहिते लेखनो हितः ॥ १३॥**
**दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।**

स च पुटपाको वाते स्नेहनो हितः । कफसहिते मारुते लेखनो हितः । दृष्टिदौर्बल्यादिषु प्रसादनो हितः ।

इदानीमेषां पुटपाकानां कल्पनामाह ।

**भूशयप्रसहानूपमेदोमज्जावसामिषैः ॥ १४ ॥**
**स्नेहेन पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।**

भूशया बिलेशया भेकगोधाद्याः । प्रसहा गोखरादयः । अनूपा महामृगवारिचरवारिशयाः तेषां मेदोमज्जावसामिषाणि तैस्तथा जीवनीयैर्जीवंतीकाकोल्यादिभिश्च क्षीरपिष्टैः स्नेहनं पुटपाकं कल्पयेद्वैद्यः ।

**मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैंधवैः ॥ १५ ॥**
**स्रोतोजशंखफेनालैर्लेखनं मस्तुकल्पितैः ।**

मृगा हरिणाद्याः पक्षिणो विष्किरप्रतुदास्तेषां यकृन्मांसानि तैः । तथा मुक्तादिभिर्मस्तुकल्पितैर्लेखनं पुटपाकं कल्पयेद्वैद्यः । प्रसहानां मृगपक्षिणां स्नेहने पुटपाक उपयुक्तत्वाज्जांगला एव मृगपक्षिणोऽत्र ग्राह्याः ।

**मृगपक्षियकृन्मज्जावसांऽत्रहृदयामिषैः ॥ १६ ॥**
**मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।**

मृगपक्ष्यादीनां यकृन्मज्जावसांत्रहृदयामिषाणि तैः । तथा मधुरैर्मधुरवर्गोक्तैर्घृतान्वितैः स्तन्यक्षीरपिष्टैः प्रसादनं पुटपाकं कल्पयेद्वैद्यः । अत्र स्तन्यं स्त्रिया एव ।

अधुना पुटपाकस्य कल्पनामाह ।

**बिल्वमात्रं पृथक्पिंडं मांसभेषजकल्कयोः ॥ १७ ॥**
**उरुबूकवटांऽभोजपत्रैः स्नेहादिषु क्रमात् ।**
**वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥**
**पचेत्प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ।**
**नेत्रे तर्पणवद्युंज्यात्**

मांसं च भेषजकल्कश्च तयोः पृथक् बिल्वफलमात्रं पिंडमेरंडादिपत्रैर्वेष्टयित्वा कृष्णमृत्तिकालिप्तं वृद्धवैद्यव्यवहारात् द्व्यंगुलोत्सेधं मृत्तिकालेपं कृत्वा क्रमेण धवादींधनैः प्रदीप्तैः पचेत् । तत्र स्नेहने पुटपाक एरंडपत्रैर्वेष्टनं धवकाष्ठैः प्रदीपनम् । प्रसादने जलजपत्रैर्वेष्टनं गोमयेंधनेन प्रदीपनमिति क्रमार्थः । अग्न्याभमिति । अग्निवर्णं सत् पक्वं ज्ञात्वाऽपनीतपत्रं विधाय वाससा निष्पीड्य तद्रसं नयने तर्पणमिव युंज्यात् ।

**शतं द्वे त्रीणि धारयेत् ॥ १९ ॥**
**लेखनस्नेहनांत्येषु**

लेखनादिषु शतादीनि धारयेत् । तत्र लेखने शतं मात्राणां धारयेत् । स्नेहने द्वे शते । अंत्ये प्रसादने त्रीणि शतानि धारयेत् ।

**पूर्वौ कोष्णौ हिमोऽपरः ।**

पूर्वौ स्नेहनलेखनौ कोष्णौ योज्यौ । हिमोऽपरः प्रसादनाख्यः ।

**धूमपोऽते तयोरेव**

तयोराद्ययोः पुटपाकयोरंते धूमपः स्यात् । स्नेहेरितकफोपशांत्यै न तु प्रसादनांत इत्येवशब्दार्थः ।

**योगास्तत्र च तृप्तिवत् ॥ २० ॥**

तत्र तेषु च पुटपाकेषु योगास्तर्पण इव स्युः । तृप्तिवदिति सप्तम्यंताद्वतिः । योगा इति बहुवचननिर्देशात् सम्यग्योगायोगातियोगा गृह्यंते ।

**तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् ।**

तर्पणपुटपाकौ नस्यायोग्ये न योजयेत् । नस्यानर्हा योजयेन्न तु नावनमित्याद्युक्ताः ।

**यावंत्यहानि युंजीत द्विस्ततो हितभाग्भवेत् ।**

यावन्मात्राणि दिनानि तर्पणपुटपाकौ कुर्वीत तावंत्यहानि ततो द्विगुणानि च दिनानि हितसेवी स्यात् ।

**मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशि ॥ २१ ॥**

कृततर्पणपुटपाको मालत्यादिपुष्पैर्बद्धाक्षः सन् विभावरीं वसेत् । मालती सुमनाः । मल्लिका गंधवार्षिका ।

**सर्वात्मना नेत्रबलाय यत्नं**
**कुर्वीत नस्यांजनतर्पणाद्यैः ।**
**दृष्टिश्च नष्टा विविधं जगच्च**
**तमोमयं जायत एकरूपम् ॥ २२ ॥**

सर्वेण प्रकारेण नेत्रबलाय चक्षुःसामर्थ्याय नस्यादिभिर्यत्नं कुर्यात् । दृष्टिश्चेति चो हेतौ । यतो दृष्टिर्यदि न स्यात्ततो जगद्विविधमपि तमोमयमंधकाररूपमेकलक्षणं संपद्यत इति । उपजातिर्वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पंचविंशतितमोऽध्यायः ।

अथेदानीं पंचविंशाऽध्यायारंभो यंत्रप्रविधानप्रदर्शनार्थः । यतो बस्तिनस्यांजनक्षारादीनि यंत्राश्रयाण्येवेत्याह ।

**अथाऽतो यंत्रविधिमध्यायं व्याख्यास्यामः ।**

यंत्रस्य विधिर्यंत्रविधिः । शेषं पूर्ववत् । अर्शोभगंदरादिषु निरुजेंऽगे यम्यते नियम्यते शस्त्रक्षाराग्निकर्मेति यंत्रम् ।

एतदेव स्पष्टयन्नाह ।

**नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।**
**आहर्तुमभ्युपायो यस्तद्यंत्रं यच्च दर्शने ॥ १ ॥**
**अर्शोभगंदरादीनां शस्त्रक्षाराऽग्नियोजने ।**
**शेषांगपरिरक्षायां तथा बस्त्यादिकर्मणि ॥ २ ॥**
**घटिकालाबुशृंगं च जांबवोष्ठादिकानि च ।**

अनेकप्रकाराणि यानि शल्यानि शल्यवेणुपाषाणादिरूपाणि विविधेषु शरीरप्रदेशेषु निविशंते तेषामाहरण आक्रष्टुं योऽभ्युपायस्तद्यंत्रमुच्यत इति शेषः । तथाऽर्शोभगंदरनाडीव्रणादीनां शस्त्रादियोजने सति शेषस्य निरुजांगस्य परिरक्षायां रक्षानिमित्तम् । स्वस्थस्यांऽगस्य शल्यबाधानिवृत्त्यर्थमित्यर्थः । तथा बस्तिनस्यादिकर्मणि य उपायस्तच्च यंत्रम् । तथा घटिकादि च यंत्रं पिचुना रक्ताद्याकर्षणाय च । जांबवोष्ठसंदंशादीनि च यंत्राणि ।

यंत्राणां किं रूपं किं कार्यमित्याह ।

**अनेकरूपकार्याणि यंत्राणि विविधान्यतः ॥ ३ ॥**

**विकल्प्य कल्पयेद्बुद्ध्या**

रूपाणि च कार्याणि च रूपकार्याणि । अनेकानि विचित्राणि रूपकार्याणि येषां तानि यानि नानाप्रकाराणि । तत्र रूपं कंकमुखस्वस्तिकाद्याकारत्वम् । कार्यमस्थ्यादिलग्नशल्यहरणादिकम् । यतश्चैवं नानाविधत्वं यंत्राणामतस्तानि बुद्ध्या विकल्प्य कार्यानुरोधात्कल्पयेत् ।

ननु यंत्राणां दिङ्मात्रेऽप्यनभिज्ञः कथमिव कल्पनां कर्तुं पारयेदित्याह ।

**यथास्थूलं तु वक्ष्यते ।**

यानि यानि स्थूलानि यथास्थूलम् । यथा सादृश्य इत्यव्ययीभावः । यथा स्थूलयंत्रकरणेन व्युत्पन्नमतिः शेषाणामपि यंत्राणामुत्पादने विकल्पं कर्तुं समर्थो भवत्येवेति भावः ।

अथ यंत्राण्याह ।

**तुल्यानि कंकसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥**
**मुखैर्मुखानि यंत्राणां कुर्यात्तत्संज्ञकानि च ।**
**अष्टादशांगुलायामान्यायसानि च भूरिशः ॥ ५ ॥**
**मसूराकारपर्यंतैः कंठे बद्धानि कीलकैः ।**
**विद्यात्स्वस्तिकयंत्राणि मूलेऽकुशनतानि च ॥ ६ ॥**
**तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।**

येन पार्श्वेन शल्यमुद्धियते तद्यंत्राणां मुखं वेद्यम् । कंकादीनां पक्षिमृगादीनां मुखैस्तुल्यानि यंत्राणां मुखानि कुर्यात् । आदिशब्देन गृध्रहरिणादिपरिग्रहः । तानि तत्संज्ञकानि । च एवार्थे । तानि यंत्राणि तन्नामान्येव । यथा कंकमुखं सिंहमुखमित्यादि । स्वस्तिकाख्यानि यंत्राणि विद्यात् । कीदृशानि । अष्टादशांगुलदैर्घ्याणि । भूरिशो बाहुल्येनाऽयसानि शस्त्रमयानि । दंतादिमयानामपि क्वचिद्दर्शनाद्भूरिश इत्युक्तम् । तथा कंठप्रदेशे कीलकैर्बद्धानि । कीदृशैः कीलकैः । मसूराकाराः पर्यंता येषां तैः । यत्र प्रदेशे यंत्राणां हस्तग्रहस्तत्र तन्मूलम् । तत्रांऽकुशवन्नतानि परिणतानि । तैः कंकमुखादिभिरस्थिसंलग्नशल्यस्य कांडफलादेराहरणमाकर्षणमिष्यते ।

**कीलबद्धविमुक्ताग्रौ संदंशौ षोडशांगुलौ ॥ ७ ॥**
**त्वक्शिरास्नायुपिशितलग्नशल्यापकर्षणौ ।**

कीलेन मसूराकारांतेन बद्धं विमुक्तमग्रं मुखं ययोस्तौ कीलबद्धविमुक्ताग्रौ संदंशौ भवतः । कीदृशौ । षोडशांगुलप्रमाणौ । क उपयोग एतयोः स्यादित्याह । त्वगित्यादि । त्वगादीनां द्वंद्वः । त्वक्शिरास्नायुपिशितलग्नं च तच्छल्यं च तस्याऽपकर्षण आहरणे तावुपयुज्येते ।

**षडंगुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ८ ॥**

षोडशांगुलसंदंशद्वयादन्यः संदंशः सूक्ष्मशल्यानां नासारोमादीनां हरण आकर्षणे तथोपपक्ष्मणां वर्त्मादिभवानामाहरणे युज्यते ।

**मुचुंडीसूक्ष्मदंतर्जुमूले रुचकभूषणा ।**
**गंभीरव्रणमांसानाममर्मणः शेषितस्य च ॥ ९ ॥**

स च मुचुंडीसंज्ञः । किंभूता मुचुंडी । सूक्ष्मा दंता यस्याः सा सूक्ष्मदंता तथर्जुरवक्रा । न च संदंशवद्वक्रा बद्धा द्विबाहुरित्यर्थः । तथा मूले हस्तग्रहणस्थाने रुचकमंगुलीयकरूपं भूषणं यस्याः सा रुचकभूषणा । रुचकपीडनेन सा कर्म करोतीत्यर्थः । गंभीरश्चासौ व्रणश्च गंभीरव्रणस्तस्मिन् मांसानि तस्यामधिमांसमेतद्विषय आहरणे । अमर्मणश्च शेषितस्य च्छिन्नशेषस्याऽऽहरणे मुचुंडी ।

**द्वे द्वादशांगुले मत्स्यतालवद् द्व्येकतालके ।**
**तालयंत्रे स्मृते कर्णनाडीशल्यापहारिणी ॥ १० ॥**

द्वे तालयंत्रे भवतः । किंप्रमाणे द्वादशांगुले । संस्थानमाह । मत्स्यतालवन्मीनगलतालवत् द्वितालकम् । द्वयोः पार्श्वयोर्मत्स्यमुखसदृशमपरमेकतालकमेकपार्श्वे मत्स्यमुखाकारमेव । ते द्वे तालयंत्रे स्याताम् । कर्णेत्यादि । कर्णनाडी शल्यमपहरतः कर्णनाडीशल्यापहारिणी ।

**नाडीयंत्राणि शुषिराण्येकानेकमुखानि च ।**
**स्रोतोगतानां शल्यानामामयानां च दर्शने ॥ ११ ॥**
**क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।**
**तद्विस्तारपरीणाहदैर्घ्यं स्रोतोनुरोधतः ॥ १२ ॥**

नाडीयंत्राणि बस्तिनेत्रादिवत् सुषिराणि स्युः । एकं चाऽनेकं चैकानेकं मुखं येषां तानि च कानिचिदेकमुखान्येकद्वाराणि कानिचिदनेकमुखान्यनेकद्वाराणि । एतत्कर्माचष्टे । स्रोत इत्यादि । तानि च कर्णादिस्रोतोगतानां शल्यानां दर्शननिमित्तं विदधीत । तथा कंठादिस्रोतोगतानां रोगाणां दर्शने दर्शननिमित्तं विदधीत । तथा क्रियाणां शस्त्रक्षाराग्निप्रक्षालनौषधप्रणिधानादीनां सुकरत्वार्थम् । तथा विषदग्धांगादीनामाचूषणाय विदधीत । तद्विस्तारेत्यादि । तेषां नाडीयंत्राणां विस्तारश्च परीणाहश्च दैर्घ्यं च तानि स्रोतोवशाद्भवंति । यथाऽनुवासनोत्तरबस्तिनस्यनाडिकादिषु निर्दिष्टम् ।

**दशांगुलार्धनाहांतःकंठशल्यावलोकने ।**
**नाडी**

कंठे शल्यं कंठशल्यम् । कंठाभ्यंतरशल्यावलोकनार्थं दशांगुला नाड्यर्धनाहा पंचांगुलपरिणाहा ।

**पंचमुखच्छिद्रा चतुष्कर्णस्य संग्रहे ॥ १३ ॥**
**वारंगस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ।**

पंचमुखानि छिद्राणि यस्याः सा चतुष्कर्णस्य वारंगस्य संग्रहे संग्रहणनिमित्तमिदं यंत्रम् । चत्वारः कर्णा यस्य वारंगस्येति समासः । तत्र शरादिदंडप्रवेशः । शिखाकारः कीलको वारंग उच्यते । द्विकर्णवारंगस्य संग्रहार्थं त्रिच्छिद्रा नाडी स्यात् । त्रीणि

च्छिद्राणि यस्याः सा त्रिच्छिद्रा। छिद्रशब्दस्योपलक्षणार्थत्वात्त्रि-मुखेत्येतदपि द्रष्टव्यम्। तस्य वारंगस्य प्रमाणं तत्प्रमाणं तस्माद्वारंगप्रमाणतस्तदनुसारेण नाडीप्रमाणं ज्ञेयम्।

**वारंगकर्णसंस्थानाऽनाहदैर्घ्यानुरोधतः॥ १४॥**
**नाडीरेवंविधाश्चाऽन्या द्रष्टुं शल्यानि कारयेत्।**

वारंगकर्णस्य संस्थानं चाऽऽनाहश्च दैर्घ्यं च तान्येव वारंगकर्णसंस्थानानाहदैर्घ्याणि तेषामनुरोधस्तस्मादेवंप्रकारा अन्या अपि नाडीः शल्यानि शरीरांतर्गतानि द्रष्टुं कारयेत्।

**पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशांगुला॥ १५॥**
**चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता।**

मूर्ध्नि मूर्धभागे पद्मकर्णिकया जलकर्कटिकया सदृशी। कियत्प्रमाणा। द्वादशांगुला। तथा चतुर्थश्चतुर्भागः सुषिरो यस्याः। अंगुलसुषिरेति यावत्। सा नाडी शल्यनिर्घातिनी मता। मुनीनामिति शेषः।

अर्शोयंत्रं दर्शयितुमाह।

**अर्शसां गोस्तनाकारं यंत्रकं चतुरंगुलम्॥ १६॥**
**नाहे पंचांगुलं पुंसां प्रमदानां षडंगुलम्।**
**द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि॥ १७॥**
**मध्येऽस्य त्र्यंगुलं छिद्रमंगुष्ठोदरविस्तृतम्।**
**अर्धांगुलोच्छ्रितोद्वृत्तकर्णिकं तु तदूर्ध्वतः॥ १८॥**

अर्शसां संबंधि यंत्रकं गोस्तनाकृति चतुरंगुलं मानतो दैर्घ्येण स्यात्। यंत्रकमित्याकर्षकं स्यात्। नाहे परिणाहे च पंचांगुलम्। यत्पंचांगुलं दीर्घेण सूत्रेण वेष्ट्यते तत्प्रमाणं स्थौल्यमित्यर्थः। पुंसामेव पंचांगुलं नाहे स्यात्। स्त्रीणां परिणाहे तु षडंगुलं यंत्रकं स्यात्। स्वभावत एव तासां गुदस्य महत्त्वात्। व्याधेर्दर्शने द्विच्छिद्रमुभयपार्श्वे द्विच्छिद्रं यंत्रम्। कर्मणि शस्त्रक्षाराद्यवचारण एकच्छिद्रं यंत्रकम्। अस्य यंत्रस्य मध्ये त्र्यंगुलं छिद्रमंगुष्ठमध्यतुल्यविस्तारं तथा तदूर्ध्वतोऽर्धांगुलोच्छ्रिता उद्वृत्ता कर्णिका यस्य तदेवम्।

**शम्याख्यं तादृगच्छिद्रं यंत्रमर्शःप्रपीडनम्।**

शम्याख्यं शमीसंज्ञं तृतीयं यंत्रकं तादृग् गोस्तनाकारमित्यादिलक्षणलक्षितयंत्रसदृशं स्यात्। अत्र विशेषमाह। अच्छिद्रमित्यादि। अत्र यंत्रे छिद्रं न विधेयमित्यर्थः। इदं च यंत्रमर्शःप्रपीडनं स्यात्।

**सर्वथाऽपनयेदोष्ठं छिद्रादूर्ध्वं भगंदरे॥ १९॥**

सर्वथा भगंदरे भगंदरयंत्र ओष्ठमपनयेत्। कुतःप्रभृति। छिद्रादूर्ध्वम्। उपरिष्टादर्धांगुलमपकर्षेदित्यर्थः। कर्णिका तु कार्यैव।

**घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यंगुलद्वया।**
**प्रदेशिनीपरीणाहा स्याद्भगंदरयंत्रवत्॥ २०॥**

घ्राणार्बुदे घ्राणार्शसि चैकच्छिद्रा नाडी दैर्घ्येणांगुलद्वयप्रमाणा तथा प्रदेशिनीतुल्यः परीणाहो यस्याः सैवम्। सा च भगंदरयंत्रतुल्या स्यात्। अपनीतौष्ठेत्यर्थः।

**अंगुलित्राणकं दांतं वार्क्षं वा चतुरंगुलम्।**
**द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम्॥ २१॥**

अंगुलित्राणकाख्यं यंत्रं दंतमयं काष्ठमयं वा चतुरंगुलप्रमाणमर्शसां यंत्रसदृशं द्विच्छिद्रं गोस्तनाकृति स्यात्। तच्च वक्त्रस्य विवृतौ प्रसारणे। अंगुलेर्दंतेभ्यो रक्षणार्थत्वादंगुलित्राणमिति नाम।

**योनिव्रणेक्षणं मध्ये सुषिरं षोडशांगुलम्।**
**मुद्राबद्धं चतुर्भित्तमंभोजमुकुलाननम्॥ २२॥**
**चतुःशलाकमाक्रांतं मूले तद्विकसेन्मुखे।**

योनिव्रणमीक्षतेऽनेन तद्योनिव्रणेक्षणं यंत्रकम्। मध्ये मध्यभागे सुषिरम्। तथा दैर्घ्येण षोडशांगुलम्। तथा मुद्रिकयोर्मिकया संचारिण्या बद्धं युक्तम्। तथा चत्वारो भित्ताः पत्राणि यस्य तच्चतुर्भित्तम्। मूलशलाकाक्रमणान्मुखे विकसेत् प्रसरेत्।

**यंत्रे नाडीव्रणाभ्यंगक्षालनाय षडंगुले॥ २३॥**
**बस्तियंत्राकृती मूले मुखेऽगुष्ठकलायखे।**
**अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी॥ २४॥**

यंत्रे द्वे षडंगुले भवतः। किमर्थम्। अभ्यंगश्च क्षालनं चाऽभ्यंगक्षालने तदर्थमुपयुज्येते। आकरणमाकृत्। संपदादित्वात् क्विप्। बस्तियंत्रस्य चाकृती आकारौ ययोस्ते बस्तियंत्राकृती वृत्तगोपुच्छाकारे। तथा यथासंख्यं मूले मुखेंऽगुष्ठकलायखे मूलेंऽगुष्ठतुल्यच्छिद्रे मुखे कलायसमच्छिद्रे। अग्रतोऽकर्णिके कर्णिकारहित इति बस्तियंत्राद्विशेषः। मूले तु कर्णिके द्वेऽपि पुटकयोजनार्हे कार्ये एवेत्यग्रग्रहणम्। मूले मूलदेशे निबद्धं योजितं मृदु चर्म बस्तिपुटकाकारं ययोस्ते निबद्धमृदुचर्मणी।

**द्विद्वारा नलिका पिच्छनलिका वोदकोदरे।**

उदकोदरे जलस्रावणार्थं नलिका द्विद्वारोभयमुखी स्यात्। अथवा पिच्छनलिका मयूरपिच्छजेत्यर्थः।

**धूमबस्त्यादियंत्राणि निर्दिष्टानि यथायथम्॥ २५॥**

धूमादियंत्राणि यथायथं यथास्वं धूमपानाद्यध्यायेषूक्तानि।

**त्र्यंगुलास्यं भवेच्छृंगं चूषणेऽष्टादशांगुलम्।**
**अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति॥ २६॥**

शृंगं त्र्यंगुलमुखं दुष्टवातविषरक्तांबुदुष्टस्तन्यादेश्चूषणे चूषणनिमित्तमष्टादशांगुलं स्यात्। अष्टादशेति ह्यष्टन इत्यादिनाऽऽकारादेशः। तथाऽग्रे प्रांते सर्षपप्रमाणच्छिद्रम्। यः प्रदेशश्चूषणाय शरीरे योज्यते तदग्रम्। तथा सुष्ठु नद्धं सम्यग्बद्धम्। चूचुकस्य स्त्रीकुचाग्रस्याऽऽकृतिराकारो यस्य तदेवम्।

**स्याद्द्वादशांगुलोऽलाबुर्नाहे त्वष्टादशांगुलः।**
**चतुस्त्र्यंगुलवृत्तास्यो दीप्तोऽतः श्लेष्मरक्तहृत्॥ २७॥**

अलाबुस्तुंबं द्वादशांगुलो दैर्घ्येण स्यात् । परिणाहेऽष्टादशांगुलः। चत्वारि वा त्रीणि वांऽगुलानि यस्य तच्चतुरुयंगुलं तत्तादृशं वृत्तं वर्तुलं मुखं यस्य स एवम् । तयांऽतर्मध्ये दीप्तो ज्वलितः पिचुर्भूर्जादिगर्भ इत्यर्थः । स ईदृशो दुष्टकफरक्तहरः स्यात् ।

**तद्वद् घटी हिता गुल्मविलयोन्नमने च सा ।**

तद्वत्तेनाऽलाबुना तुल्यदैर्घ्यानाहादिस्तुल्यकार्याकारा च घटी स्यात् । सा च गुल्मस्य विलय उन्नमने च हिता न केवलं कफरक्तहृदिति चार्थः ।

**शलाकाख्यानि यंत्राणि नानाकर्माकृतीनि च ॥२८॥**
**यथायोगप्रमाणानि**

शलाकासंज्ञानि यंत्राणि विविधकर्माणि विविधाकाराणि यथायोगप्रमाणानि स्युः ।

**तेषामेषणकर्मणी ।**
**उभे गंडूपदमुखे**

तेषां मध्य उभे गंडूपदतुल्यास्य एषणकर्मणी ।

**स्रोतोभ्यः शल्यहारिणी ॥ २९ ॥**
**मसूरदलवक्रे द्वे स्यातामष्टनवांगुले ।**

तथा स्रोतोभ्यः शल्यहारिणी शलाकायंत्रे भवतः । किंभूते । मसूरेत्यादि । मसूरदलमिव वक्रं ययोस्ते मसूरदलमुखे द्वे शलाकेऽष्टांगुले नवांगुले वा स्याताम् ।

**शंकवः षट्**

शंकवः षट् स्युः ।

**उभौ तेषां षोडशद्वादशांगुलौ ॥ ३० ॥**
**व्यूहनेऽहिफणावक्रौ**

तेषां मध्ये द्वौ षोडशांगुलौ द्वादशांगुलौ वा भवतः । व्यूहने व्यूहनकर्मणि सर्पफणामुखौ ।

**द्वौ दशद्वादशांगुलौ ।**
**चालने शरपुंखास्यौ**

द्वौ शंकू दशांगुलौ द्वादशांगुलौ वा भवतः । चालने कांडवाज इव मुखं ययोस्तौ शरपुंखास्यौ भवतः ।

**आहार्ये बडिशाकृती ॥ ३१ ॥**

आहार्ये आकर्षणे बडिशाकारौ ।

षट्शंकूनाख्याय गर्भशंकुमाह ।

**नतोऽग्रे शंकुना तुल्यो गर्भशंकुरिति स्मृतः ।**
**अष्टांगुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३२ ॥**

नतोऽग्रेऽग्रतोभागे तथा शंकुना समः कीलकाकारोऽष्टांगुलदीर्घः स गर्भशंकुरिति स्मृतः । मुनिभिरिति शेषः । तेन शंकुना मूढगर्भमनिःसरंतं हरेत् ।

**अश्मर्याहरणे सर्पफणावद्वक्रमग्रतः ।**

अश्मर्याकर्षणे सर्पफणावदग्रे वक्रं स्यात् । सर्पफणाख्यमेवं-तद्यंत्रम् ।

**शरपुंखमुखं दंतपातनं चतुरंगुलम् ॥ ३३ ॥**

शरपुंखमुखाख्यं चतुरंगुलं दंतपातनं स्यात् । अनेन हि दंताश्चलंतः पात्यंते कृम्यादिभक्षिता वा ।

**कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ।**

प्रमार्जने क्षालने क्षारक्लेदादेः षट् शलाकाः स्युः । किंभूताः। कार्पासेन विहितमुष्णीषं शिरोवेष्टनमिव यासां तास्तथोक्ताः ।

**पायावासन्नदूरार्थे द्वे दशद्वादशांगुले ॥ ३४ ॥**

पायावासन्नदूरार्थे दशद्वादशांगुले दशांगुले दूरार्थे द्वे भवतः । आसन्नार्थे द्वादशांगुल इत्यर्थः ।

**द्वे षट्सप्तांगुले घ्राणे द्वे कर्णेऽष्टनवांगुले ।**

घ्राणे षट्सप्तांगुले द्वे भवतः । आसन्नदूरार्थेऽत्राऽप्यनुवर्तते । तथैव कर्णेऽष्टनवांगुले भवतः ।

**कर्णशोधनमश्वत्थपत्रप्रांतं स्रुवाननम् ॥ ३५ ॥**

कर्णशोधनाख्यं यंत्रमश्वत्थपत्रस्येव प्रांतो यस्य तत्तथा । तथा स्रुवस्येवाननं यस्य तदेवम् ।

**शलाकाजांबवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।**
**युंज्यात् स्थूलाणुदीर्घाणाम्**

शलाकाश्च जांबवोष्ठानि च तेषां पृथक् त्रयं क्षारे क्षारपातनेऽग्निदाहकरणे च युंज्यात् । किंभूतानां शलाकाजांबवोष्ठानाम् । स्थूलाश्चाऽणवश्च दीर्घाश्च तेषाम् । तत्र शलाकास्तिस्रो जांबवोष्ठानि च त्रीणि क्षारे तथा दाहने । एवं द्वादशैतानि शलाकाख्यानि यंत्राणीति ।

**शलाकामंत्रवर्ध्मनि ॥ ३६ ॥**
**मध्योर्ध्ववृत्तदंडां च मूले चार्धेंदुसंनिभाम् ।**

अंत्रवर्ध्मन्यंत्रवृद्धौ शलाकां युंज्यात् । कीदृशीम् । मध्यादूर्ध्वं वृत्तो दंडो यस्यास्ताम् । तथा मूले मूलभागेऽर्धेंदुसन्निभामर्धचंद्राकाराम् ।

**कोलास्थिदलतुल्यास्या नासार्शोर्बुददाहकृत्॥३७॥**

बदरास्थिखंडसमं मुखं यस्याः सा कोलास्थिदलतुल्यास्या । सा नासार्शःसु नासार्बुदेषु च दाहं करोति ।

**अष्टांगुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।**
**कनीनीमध्यमानामिनखमानसमैर्मुखैः ॥ ३८ ॥**

क्षारौषधक्रमे तिस्रः शलाका निम्नमुखा अष्टांगुलाः स्युः । कीदृश्यः । कनीनी च मध्यमा चाऽनामी च तासां नखास्तेषां मानं प्रमाणं तेन मानेन समैस्तुल्यैर्मुखैरुपलक्षिताः स्युः ।

**स्वंस्वमुक्तानि यंत्राणि मेढ्रशुद्ध्यंजनादिषु ।**

मेढ्रादिषु विषय उत्तरबस्त्यादिषु स्वंस्वं यथास्वं यंत्राणि गदितानि । आदिशब्देन नावनादिपरिग्रहः ।

**अनुयंत्राण्ययस्कांतरज्जुवस्त्राश्ममुद्गराः ॥ ३९ ॥**
**वध्रांत्रजिह्वावालाश्च शाखानखमुखद्विजाः ।**
**कालः पाकः करः पादौ भयं हर्षश्च तत्क्रियाः ।**
**उपायवित्प्रविभजेदालोच्य निपुणं धिया ॥ ४० ॥**

अयस्कांतादीन्येकोनविंशत्यनुयंत्राणि कल्पयेत् । स्वल्पयंत्रकार्यकरणात् । तेषां क्रियास्तत्क्रिया निर्घातनादिका बुद्ध्या निपुणमालोच्य प्रविभजेत् । निर्घातनादिकर्माणि प्रविभज्य युंज्यादित्यर्थः ।

तान्येव यंत्राणां कर्माण्याह ।

**निर्घातनोन्मथनपूरणमार्गशुद्धि-**
**संव्यूहनाहरणबंधनपीडनानि ।**
**आचूषणोन्नमननामनचालभंग-**
**व्यावर्तनर्जुकरणानि च यंत्रकर्म ॥ ४१ ॥**

निर्घातनादि यंत्रस्य कर्म । निर्घातनं ताडनं परिपातनम् । उन्मथनमुन्मूलनम् । एवमन्यदपि चिंत्यम् । चः समुच्चये । तेन प्रक्षालनादीनि समुच्चीयंते ।

**निवर्तते साध्ववगाहते च**
**ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।**
**यंत्रेष्वतः कंकमुखं प्रधानं**
**स्थानेषु सर्वेष्वधिकारि यच्च ॥ ४२ ॥**

निवर्तनादिभिश्चतुर्दशभिः कारणैर्यंत्रेषु मध्ये कंकमुखं श्रेष्ठमिति यस्माच्च सर्वेषु प्रदेशेष्वधिकार्यधिक्रियत इति । वसंततिलकोपजाती वृत्ते ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां यंत्रविध्यध्यायः पंचविंशः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

अथेदानीं षड्विंशाऽध्यायारंभः शस्त्रस्वरूपविज्ञानार्थः ।

**अथाऽतः शस्त्रविधिमध्यायं व्याख्यास्यामः ।**
**षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।**
**शस्त्राणि रोमवाहीनि बाहुल्येनांगुलानि षट् ॥ १ ॥**
**सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।**
**अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २ ॥**
**समाहितमुखाग्राणि नीलांभोजच्छवीनि च ।**
**नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥**
**स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च ।**
**प्रायो द्वित्राणि युंजीत तानि स्थानविशेषतः ॥ ४ ॥**

बाहुल्येन शस्त्राणि षडंगुलानि भवंति । तथा षड्विंशतिसंख्यानि । तथा सुकर्मारैः कर्मकुशलैर्नरैर्यथाविधि सम्यङ्निष्पादितानि तथा रोमवाहीनि लोमशातनसमर्थानि । तथा सुरूपाणि शोभनाकाराणि । तथा सुधाराणि शोभनधाराणि । तथा सुखेन गृह्यंते सुखग्रहाणि च कारयेत् । क्व अयसि । कीदृशे । सुष्ठु ध्मातं सुतीक्ष्णं तथाऽऽवर्तितं च यदयः शस्त्रं तस्मिन् । कीदृशानि च शस्त्राणि । अकरालानि सुदर्शनानि । समाहितं सुष्ठु कृतं मुखाग्रं फलं येषां तानि समाहितमुखाग्राणि । तथा नीलोत्पलद्युतीनि । तथा नामानुगतं रूपं येषां तान्यन्वर्थनामानीत्यर्थः । तथा सर्वकालं संनिहितानि समीपस्थानि । स्वं च तदुन्मानं च स्वोन्मानमात्मीयं प्रमाणं तस्मात्सकाशादर्धं तस्य चतुर्थांशोऽष्टभागोंऽगुलषट्कस्य सप्तमांशद्वयसहितं यवदशकं तत्परिमाणं फलं येषां तान्येवम् । अपि चेति समुच्चये । एवंविधानि शस्त्राण्येकैकशः स्थानविशेषाद्वित्राणि प्रयुंजीत । एकैकश इत्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ । ततः शस्प्रत्ययः ।

**मंडलाग्रं फले तेषां तर्जन्यंतर्नखाकृति ।**
**लेखने छेदने योज्यं पोथकीशुंडिकादिषु ॥ ५ ॥**

तेषां शस्त्राणां मध्ये मंडलाग्रं नाम शस्त्रम् । कीदृशम् । फलोद्देशे तर्जन्या अंतर्नखस्तर्जन्यंतर्नखस्तस्येवाऽऽकृतिर्यस्य तदेवम् । क्वैतद्योज्यमित्याह । लेखने छेदने पोथक्यादिषु योज्यम् । आदिशब्देन वर्त्मरोगादयो गृह्यंते ।

**वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।**
**ऋज्वग्रमुन्नते शोफे गंभीरे च तदन्यथा ॥ ६ ॥**
**नताग्रं पृष्ठतो**

वृद्धिपत्रं नाम शस्त्रं क्षुराकारं स्यात् । तच्च छेदनादिषु योज्यमिति प्रकृतम् । फलपरिमाणं तूक्तमेव । कीदृक् । ऋजु स्पष्टमग्रं यस्य तदृज्वग्रं तदुन्नते शोफे स्यात् । गंभीरे तु शोफे तद्वृद्धिपत्रमन्यथा । कथमन्यथेत्याह । नतेत्यादि । पृष्ठदेशे नतमग्रं यस्य तन्नताग्रं भवतीति ।

**दीर्घह्रस्ववक्त्रं यथाशयम् ।**
**उत्पलाध्यर्धधाराख्ये छेदने भेदने**

उत्पलं चाऽध्यर्धधारं च ते आख्ये ययोस्ते उत्पलाध्यर्धधाराख्ये शस्त्रे यथाक्रमं दीर्घह्रस्ववक्त्रे भवतः । उत्पलपत्रं दीर्घमुखमध्यर्धधारं तु ह्रस्ववक्त्रमित्यर्थः । तच्छेदने तथा भेदने च योज्यम् ।

**तथा ॥ ७ ॥**
**सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धांगुलं फले ।**

सर्पवक्त्रं नाम शस्त्रं नामानुगताकारं घ्राणार्शश्छेदने कर्णार्शश्छेदने च योज्यम् । तथेति समुच्चये । भेदनेऽपि योज्यम् । तच्च फलेऽर्धांगुलं भवति ।

**गतेरन्वेषणे श्लक्ष्णा गंडूपदमुखैषिणी ॥ ८ ॥**

एषणी नाम शस्त्रं गतेर्व्रणानामन्वेषणे योज्यम् । कीदृशी । श्लक्ष्णा कोमलस्पर्शा । तथा गंडूपदमुखमिव मुखं यस्याः सा गंडूपदमुखा ।

द्वितीयामेषणीमाह ।

**भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।**
**वेतसं व्यधने**

अपरैषणी भेदनार्थे सूचीमुखा स्यात् । मूले निविष्टं कृतं खं छिद्रं यस्याः सा मूलनिविष्टखा । वेतसं वेतसपत्राकारं शस्त्रं षडंगुलं पूर्वोक्तफलं तच्च व्यधने योज्यम् ।

**स्राव्ये शरार्यास्यं त्रिकूर्चके ॥ ९ ॥**

शरारिराटिः पक्षिविशेषः । शरार्यास्यं नाम शस्त्रं त्रिकूर्चकं च स्राव्ये योज्यम् ।

**कुशाटा वदने स्राव्ये द्व्यंगुलं स्यात्तयोः फलम् ।**

कुशाटा नाम शस्त्रं वदने स्राव्ये योज्यम् । तयोः शरारिकुशाटयोः फलं द्व्यंगुलप्रमाणं स्यात् ।

**तद्वदंतर्मुखं तस्य फलमध्यर्धमंगुलम् ॥ १० ॥**

अंतर्मुखं नाम शस्त्रं तद्वत्कुशाटातुल्यम् । तस्यांऽतर्मुखस्य फलमध्यर्धमंगुलं स्यात् ।

**अर्धचंद्राननं चैतत्तथा**

तथा कुशाटातुल्यं तदप्यर्धचंद्रास्यसंज्ञं शस्त्रम् । चः समुच्चये भिन्नक्रमे ।

**ऽध्यर्धांगुलं फले ।**
**व्रीहिवक्रं प्रयोज्यं च तच्छिरोदरयोर्व्यधे ॥ ११ ॥**

व्रीहिवक्त्रमप्यध्यर्धांगुलफलं स्यात् । तच्च शिराव्यध उदरव्यधे च योज्यम् ।

**पृथुः कुठारी गोदंतसदृशार्धांगुलानना ।**
**तयोर्ध्वदंडया विध्येदुपर्यस्थ्नां स्थितां शिराम् १२**

कुठारी नाम शस्त्रं पृथुर्विस्तीर्णसंस्थानदंडा तथा गोदंतसदृशमर्धांगुलमाननं यस्याः सैवम् । तया कुठारिकयोर्ध्वदंडया सत्या शिरामस्थ्नामुपरि स्थितां विध्येत् ।

**ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः ।**
**लिंगनाशं तया विध्येत्**

ताम्रमयी शलाका द्विमुखा स्यात् । सा च मुखे कुरुबकाकृतिः रक्तसहचरपुष्पमुकुलाकारा । तया शलाकया लिंगनाशं कफोत्थपटलसंज्ञं विध्येत् ।

**कुर्यादंगुलिशस्त्रकम् ॥१३॥**
**मुद्रिकानिर्गतमुखं फले त्वर्धांगुलायतम् ।**
**योगतो वृद्धिपत्रेण मंडलाग्रेण वा समम् ॥ १४ ॥**
**तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् ।**
**सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥**

अंगुलिशस्त्रकं कुर्यात् । कीदृशम् । मुद्रिकाया ऊर्मिकाया निर्गतं निष्क्रांतं मुखं यस्य तन्मुद्रिकानिर्गतमुखम् । फले तु तस्मिन्मुखेऽर्धांगुलदीर्घं योगतः संस्थानेन वृद्धिपत्रेण मंडलाग्रेण वा तुल्यम् । कियत्प्रमाणाऽस्य मुद्रिका कार्येत्याह । तत्प्रदेशिन्यग्रेत्यादि । तस्य वैद्यस्य या प्रदेशिनी तस्या यदग्रं पर्व तस्य यत्प्रमाणं तेनार्प्यत इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी मुद्रिका यस्मिंस्तद्विपकृतर्जन्यग्रपर्वप्रमाणार्पणमुद्रिकम् । तथा सूत्रेण बद्धं सूत्रबद्धम् । सूत्रेण बध्वा मणिबंधे योज्यमित्यर्थः । गलस्रोतोरोगाणां छेदने भेदने च तद्योज्यम् ।

**ग्रहणे शुंडिकामादेर्बडिशं सुनताननम् ।**

बडिशं नाम शस्त्रं शुंडिकामादेर्ग्रहणे योज्यम् । आदिशब्देन प्रतिजिह्वादेर्ग्रहणम् । कीदृशं तत् । सुनतमंकुशवदानतमाननं मुखं यस्य तदेवम् ।

**छेदेऽस्थ्नां करपत्रं तु खरधारं दशांगुलम् ॥ १६ ॥**
**विस्तारे द्व्यंगुलं सूक्ष्मदंतं सुत्सरुबंधनम् ।**

करपत्रं नाम शस्त्रं खरधारं तथा दशांगुलं दैर्घ्येण । द्व्यंगुलं विस्तारेण । सूक्ष्मा दंता यस्य तत्सूक्ष्मदंतम् । तथा । त्सरुर्मुष्टिर्बंधनं ग्रहणम् । शोभने त्सरुबंधने यस्य तत्सुत्सरुबंधनम् । अभिधानकोशे यद्यपि त्सरुरसिमुष्टिरित्यभ्यधायि तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्टावप्युपपन्नमेव ।

**स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा ॥ १७ ॥**

कर्तरी नाम शस्त्रं कर्तरीसदृशं स्नाय्वादिभेदे योज्यम् ।

**वक्रर्जुधारं द्विमुखं नखशस्त्रं नवांगुलम् ।**
**सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छन्नलेखने ॥ १८ ॥**

नखशस्त्रं नखच्छेदकं प्रसिद्धम् । तच्च वक्रा ऋजुश्च धारा यस्य तदेवम् । तस्यैकं मुखं वक्रमन्यदृजु स्पष्टम् । तथा नवांगुलं नवांगुलप्रमाणं नतु षडंगुलम् । एतच्च सूक्ष्मशल्यस्य कंटकादेरुद्धरणादौ नखच्छेदने भेदने च योज्यम् ।

अधुना दंतलेखनशस्त्रमाह ।

**एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ।**
**दंतलेखनकं तेन शोधयेद्दंतशर्कराम् ॥ १९ ॥**

एकधारमेकस्मिन् प्रदेशे तथा चतुष्कोणं तथा एकत एकस्मिन्देशे प्रबद्धा आकृतिर्यस्य तद्दंतलेखनकम् । तेन दंतशर्करां शोधयेत् ।

अधुना सूचीशस्त्रमाह ।

**वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने ।**
**मांसलानां प्रदेशानां त्र्यस्रा त्र्यंगुलमायता ॥ २० ॥**
**अल्पमांसाऽस्थिसंधिस्थव्रणानां द्व्यंगुलायता ।**
**व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २१ ॥**
**सा सार्धद्व्यंगुला**

अत्र एषु शस्त्रेषु मध्ये सीवने सीवनविषये तिस्रः सूच्यः स्युः। किंभूताः। वृत्ता वर्तुलाः पाशे गूढास्तथा दृढाः सारत्वात्। आसां च प्रत्येकं संस्थानविशेषेण विशेषोपयोगमाह। मांसलानां बहुमांसानां शरीरदेशानां त्र्यस्रा मुखे सूची स्यात्। संग्रहेऽप्यवोचत्। त्र्यस्राग्रेति। त्र्यस्रेति चिंत्यम्। तथा त्र्यंगुलमायता त्र्यंगुलदीर्घेत्यर्थः। वृत्तत्वं दृढपाशत्वं चोक्तमेव। सामान्यलक्षणेनाल्पमांसानां व्रणानां संध्यस्थिसंश्रितानां च द्व्यंगुलमायता दीर्घा। वृत्तमुखत्वं चाऽस्याः सामान्योक्तम्। तृतीयामाह। व्रीहीत्यादि। व्रीहिमुखा चापवत् कुटिला दैर्घ्येण द्वे अंगुले सार्धे स्यात्। सा च पक्वाशय आमाशये मर्मसु च व्रणानां सीवने योज्या।

अधुना कूर्चं लिलक्षयिषुराह।

**सर्ववृत्तास्ताश्चतुरंगुलाः।**
**कूर्चो वृत्तैकपीठस्थाः सप्ताऽष्टौ वा सुबंधनाः॥२२॥**
**संयोज्यो नीलिकाव्यंगकेशशातनकुट्टने।**

ताः सूचयः सर्वतो वर्तुला दैर्घ्येण चतुरंगुलाः कूर्च इत्युच्यते। किंभूताः। वृत्त एकस्मिन् पीठे संस्थिताः। तथा सप्तसंख्याऽष्टौ वा। तथा शोभनं बंधनं यासां ताः सुबंधनाः। अत एवेदं शस्त्रं सूचीकूर्चसंज्ञमिति। तथा चाऽर्शश्चिकित्सिते जगाद। अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैरित्यादि। स च बद्धसप्ताष्टसूचिकः कूर्चो नीलिकादिषु कुट्टनविषये योज्यः। उपलक्षणत्वाचाऽस्य श्वित्रेंद्रलुप्तादिष्वपि योज्यः।

**अर्धांगुलैर्मुखैर्वृत्तैरष्टाभिः कंटकैः खजः॥२३॥**
**पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्।**

अष्टाभिः कंटकैः खज उच्यते। कीदृशैः। अर्धांगुलप्रमाणं मुखं येषां तैरर्धांगुलमुखैः। तथा वर्तुलैः। तेन खजेन हस्ताभ्यां विलोड्यमानेन नासिकातोऽस्रं हरेत्।

**व्यधने कर्णपालीनां यूथिका मुकुलानना॥२४॥**

कर्णपालीनां व्यधने यूथिका नाम शस्त्रं स्यात्। कीदृशी। मुकुलानना।

**आराऽर्धांगुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः।**
**चतुरस्रा तया विध्येच्छोफं पक्वामसंशये॥२५॥**
**कर्णपालीं च बहुलाम्**

अर्धांगुलप्रमाणं वृत्तं मुखं यस्याः साऽर्धांगुलवृत्तास्या। तथा स एवाऽर्धांगुलप्रमाणः प्रवेशो यस्याः सा तत्प्रवेशा। तथोर्ध्वत इति। वृत्तार्धांगुलादुपरिष्टात्तथैव वाऽर्धांगुलप्रमाणैव चतुरस्रा स्यात्। सा आरानाम शस्त्रम्। तया आरया शोफं विध्येत्। कदा पक्वामसंशये किमयं पक्वः शोफ उताम इति संदेहे। बहुलां च कर्णपालीं तया विध्येत्।

**बहुलायाश्च शस्यते।**
**सूची त्रिभागसुषिरा त्र्यंगुला कर्णवेधनी॥२६॥**



बहुलाया अतिमांसलायाः कर्णपाल्याश्च सूची शस्यते न केवलमारा। कीदृशी सूची। त्रिभागः प्रांतभागात्सुषिरो यस्याः सैवम्। तथा त्र्यंगुला दैर्घ्येण। सा च कर्णवेधनी स्यात्।

**जलौकःक्षारदहनकाचोपलनखादयः।**
**अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत्॥२७॥**
**अपराण्यपि यंत्रादीन्युपयोगं च यौगिकम्।**

जलौकःप्रभृतीन्यनुशस्त्राणि रक्तस्रावकार्यकारणात्। तानि चाऽलौहानि लोहवर्जितानि। आदिशब्देनायस्कांतशाकशेफालिकापत्रादीनां ग्रहणम्। एवंचोक्तेन न्यायेनाऽन्यान्यपि यंत्रादीनि विकल्पयेत्। आदिशब्देन शस्त्राणां ग्रहणम्। उपयोगं च यौगिकं साधुतरं बुद्ध्या निरूपयेत्।

**उत्पाट्यपाट्यसीव्यैष्यलेख्यप्रच्छन्नकुट्टनम्॥२८॥**
**छेद्यं भेद्यं व्यधो मंथो ग्रहो दाहश्च तत्क्रियाः।**

उत्पाट्यादीनि तत्क्रियास्तेषां षड्विंशतिशस्त्राणां क्रियाः कर्माणि तत्क्रियाः। तानि षड्विंशतिशस्त्राणि संग्रहोक्तानि। तद्यथा। दंतलेखनमंडलाग्रवृद्धिपत्रोत्खरशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूचीकूर्चखजैषणीबडिशनखशस्त्राणीति। उत्पाट्यमूर्ध्वेनयनं यंत्रं धार्यम्। तत्र नखशस्त्रं योज्यम्। पाटने वृद्धिपत्रादि। सेवने सूच्यः। लेखने मंडलाग्रादिः। भेदन एषणी सूचीमुखा। व्यधने वेतसादि। मंथने खजः। ग्रहे संदंशः। दाहे शलाकादिरिति।

शस्त्रदोषानाह।

**कुंठखंडतनुस्थूलह्रस्वदीर्घत्ववक्रताः॥२९॥**
**शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः।**

स्पष्टम्।

अधुना शस्त्राणां ग्रहणविधिं दर्शयति।

**छेदभेदनलेख्यार्थं शस्त्रं वृंतफलांतरे॥३०॥**
**तर्जनीमध्यमांगुष्ठैर्गृह्णीयात्सुसमाहितः।**

छेदभेदनलेख्यार्थं तर्जनीमध्यमांगुष्ठैर्मीलितैः शस्त्रं वृंतफलांतरे वृंतफलमध्यभागे गृह्णीयात्। कीदृक्। सुसमाहितस्तद्गतमनाः।

**विस्रावणानि वृंताग्रे तर्जन्यंगुष्ठकेन च॥३१॥**

विस्रावणकार्याणि शरार्यास्यादीनि शस्त्राणि वृंताग्रे तर्जन्यंगुष्ठाभ्यां गृह्णीयात्।

**तलप्रच्छन्नवृत्ताग्रं ग्राह्यं व्रीहिमुखं मुखे।**

गृह्णीयादित्यनुवर्तते। तलशब्देन पाणितलमुच्यते। आदिलोपाख्यया तंत्रयुक्त्या। तलेन प्रच्छन्नं वृत्तमग्रं यस्य तद्व्रीहिमुखं मुखे गृह्णीयात्।

**मूलेष्वाहरणार्थं तु क्रियासौकर्यतोऽपरम्॥३२॥**

शेषं शस्त्रं क्रियासौकर्यतो गृह्णीयात्। सुकरस्य भावः सौकर्यम्। यथा सुकरा पाटनादिका क्रिया स्यात्तथा विदधीतेत्यर्थः।

शस्त्रकोशमाचष्टे ।

**स्यान्नवांगुलविस्तारः सुघनो द्वादशांगुलः ।**
**क्षौमपत्त्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३३ ॥**
**विन्यस्तपाशः सुस्यूतः सांतरोर्णास्थशस्त्रकः ।**
**शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः ॥ ३४ ॥**

नवांगुलविस्तारः शस्त्रकोशः स्यात् । तथा सुष्ठु घनो निबिडः । तथा द्वादशांगुलप्रमाणो दैर्घ्येण । तथा क्षौमादिजः । तथा विन्यस्तः कृतः पाशो यस्य स विन्यस्तपाशः । तथा सुष्ठु स्यूतः । तथा सांतराणि सव्यवधानान्यूर्णास्थानि शस्त्राणि यस्मिन् स सांतरोर्णास्थशस्त्रकः । तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम् । तथा शोभनः संचयो यस्य शस्त्रकोशस्य स सुसंचयः । नापितभांडिकावत् । तंत्रांतरे चोक्तम् । निशानी तु शस्त्राणां सूक्ता शिलैका माषमुद्गप्रभेत्यादि ।

सुकुमारबालानामस्रविस्रावणार्थं जलौकसो निर्दिदिक्षुराह ।

**जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ॥ ३५ ॥**

सुखिनां सुखोचितानां रक्तस्रावणार्थं जलौकसो योजयेत् ।

ताश्च द्विप्रकाराः । सविषा निर्विषाश्च । तत्र सविषाणां सापायत्वात्ता एव तावल्लक्षयति ।

**दुष्टांबुमत्स्यभेकाहिशवकोथमलोद्भवाः ।**
**रक्ताः श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ॥**
**इंद्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः ।**
**सविषा वर्जयेत्**

दुष्टांबूद्भवाश्च जलौकसः सविषा इति वर्जयेत् । तथा मत्स्यभेकसर्पादिशवकोथोद्भवास्तथा तेषामेव मत्स्यादीनां ये मला मूत्रपुरीषादयस्तदुद्भवाश्च सविषा इति वर्जयेत् । सविषाणां लक्षणमाह । रक्ता इत्यादि यावल्लोमशांतास्ताः सविषा यतस्ता वर्जयेत्ता न योजयेत् ।

**ताभिः कंडूपाकज्वरभ्रमाः ॥ ३७ ॥**
**विषपित्तास्रनुत्कार्यं तत्र**

ताभिर्हि योजिताभिः कंड्वादयः स्युः । उपलक्षणं चेदम् । दाहशोषमूर्छादयोऽपि स्युः । तासु मोहाद्योजितासु विषादिजित् कार्यम् ।

**शुद्धांबुजाः पुनः ।**
**निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजयः ॥ ३८ ॥**
**कषायपृष्ठास्तन्वंग्यः किंचित्पीतोदराश्च याः ।**

जलौकस इति वर्तते । शुद्धजलोद्भवाः सौगंधिकोत्पलकमलविपुलसलिलशैवालजा जलौकसो निर्विषाः स्युः । आसां च लक्षणमाह । शैवलेत्यादि । शैवलमिव श्यावास्तथा वृत्तास्तथा नीलोर्ध्वराजयस्तथा कषायं न्यग्रोधादिवल्कलसदृशवर्णं पृष्ठं यासां ता एवम् । तथा तनुशरीराः किंचित्पीतवर्णजठराश्च निर्विषा वेद्याः ।

**ता अप्यसम्यग्वमनात्प्रततं च निपातनात् ॥ ३९ ॥**
**सीदंतीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ।**

सुनिर्विषा अपि जलौकसो रक्तमत्ता इति त्यजेत् । न केवलं सविषा इति प्रतिपादनार्थोऽपिशब्दः । रक्तमत्तत्वे हेतुद्वयमाह । असम्यग्वमनात् । दुष्टरक्तस्येति शेषः । प्रततं च लागनाद्दुष्टरक्तपायित्वेन रक्तमत्ताश्च ताः स्युः । ताश्च कथं लक्ष्यंत इत्याह । सीदंतीरित्यादि । जलं प्राप्य तोयपूर्णभांडमासाद्य सीदंतीस्तथा चेष्टमाना इति ज्ञात्वा त्यजेत् ।

**अथेतरा निशाकल्कयुक्तेऽभसि परिप्लुताः ॥ ४० ॥**
**अवंतिसोमे तक्रे वा पुनश्चाऽश्वासिता जले ।**
**लागयेद्घृतमृत्स्यांगशस्त्ररक्तनिपातनैः ॥ ४१ ॥**
**पिबंतीरुन्नतस्कंधाश्छादयेन्मृदुवाससा ।**

अथ परीक्षातोऽनंतरमितरा लागयेत् । किंभूताः । हरिद्राकल्कयुक्तजलपरिप्लुताः कांजिके तक्रे वा परिप्लुताः पुनश्च जले समाश्वासिताः सात्म्यभूते जले प्लवनार्हाः सोत्साहाः सतीर्योजयेत् । अलगंतीः कथं लागयेदित्याह । घृतेत्यादि घृतादिपातनैस्ता योजयेत् । पातनशब्दः प्रत्येकं योज्यः । शस्त्रेणांऽगे रक्तं मोक्षयित्वा वा ता योजयेत् । ताश्च पिबंतीः सूक्ष्मवाससाऽऽच्छादयेत् । एवं हि तासां मक्षिकाद्यनुपद्रवात् सम्यग्योजना स्यात् । अथ किमेताः पिबंत्युत नेति कथं ज्ञायत इत्यत्र विशेषणद्वारेण हेतुमाह । उन्नतस्कंधा इति । उन्नतः स्कंधो यासां ता एवम् । उन्नतस्कंधत्वेन तासां पानं ज्ञायत इत्यर्थः ।

ननु शुद्धरक्तदुष्टरक्तयोरेकलोलीभूतत्वाच्छुद्धरक्तधात्वाकर्षणाज्जलौका दोषाय स्यादित्याह ।

**संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ॥ ४२ ॥**
**आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ।**

दुष्टशुद्धास्रान्मिलितादपि दुष्टरक्तं जलौकाः पूर्वमादत्ते न शुद्धं देहधातुस्थमिति दृष्टांतेन दर्शयति । हंस इत्यादि । हंसो यथा क्षीरजलान्मिश्रितात्प्राग्दुग्धमादत्ते न तु जलं तथा जलौकाः प्रागशुद्धं रक्तमादत्ते पश्चादितरदिति न्याय्यमेतत् ।

**दंशस्य तोदे कंड्वां वा मोक्षयेद्वामयेच्च ताम् ॥ ४३ ॥**

दंशस्य तोदे सति कंड्वां वा सत्यां मोक्षयेत् । शुद्धरक्तरक्षार्थमतियोगभयाच्च । तामित्येकवचननिर्देशादेकैकां मोक्षयेन्न तु सर्वाः सकृदेवेति गमयति । अथ पानलौल्याद्दंशं न त्यजेत्ततो हरिद्राचूर्णं लवणचूर्णं वा आनने दत्त्वा मोक्षयेत् । मोक्षितां च जलौकसं वामयेत् ।

वमनविधानमाह ।

**पटुतैलाक्तवदनां श्लक्ष्णकंडनरूक्षिताम् ।**

१ क्षिप्तोऽत्र । गुल्मार्शोविद्रधीकुष्ठवातरक्तगलामयान् ।
नेत्ररुग्विषवीसर्पान् शमयंति जलौकसः ॥

सैंधवयुतेन तैलेन रूक्षितास्यां तथा सूक्ष्मेण तंडुलकंडनेन रूक्षितामवकीर्णां वामयेत् । तंडुलशब्दस्याऽत्र लोपो ज्ञेयस्तंत्रयुक्त्या ।

**रक्षन् रक्तमदाद्भूयः सप्ताहं ता न पातयेत् ॥ ४४ ॥**

ताः कृतवमना जलौकसो रक्तमदाद्रक्षन् पुनः सप्ताहं न योजयेत् ।

**पूर्ववत् पटुता दार्ढ्यं सम्यग्वांते जलौकसाम् ।**

जलौकसां सम्यग्वांते सति पूर्ववदलगितानामिव पटुतादि भवति ।

**क्लमोऽतियोगान्मृत्युर्वा**

अतियोगाद्वमनस्य क्लमो मृत्युर्वा स्यात् ।

**दुर्वांते स्तब्धता मदः ॥ ४५ ॥**

दुर्वांते सति स्तब्धता मदश्च स्यात् ।

**अन्यत्राऽन्यत्र ताः स्थाप्या घटे मृत्स्नांबुगर्भिणि ।**
**लालादिकोऽथनाशार्थं सविषाः स्युस्तदन्वयात् ४६**

ताश्चाऽन्यस्मिन्नन्यस्मिन्घटे त्र्यहात्पंचाहाद्वा स्थाप्याः । किंभूते । मृत्स्नापृक्तेन जलेन गर्भिणि । तद्युक्त इत्यर्थः । प्रशस्ता मृन्मृत्स्ना । सस्नौ प्रशंसायामिति स्नप्रत्ययः । अनेकभाजनस्थापने कोऽर्थ इत्याह । लालादिकोथनाशार्थम् । आदिशब्देन मूत्रपुरीषादिपरिग्रहः । लालादीनां जलौकसा संबंधः । कोथः कुथितत्वं क्लिन्नता तन्नाशाय । तदन्वयाल्लालादियोगात्ताः सविषाः स्युः ।

**अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः ।**

अशुद्धावशुद्धलिंगानुमिते रक्ते सति दंशान् हरिद्रादिभिः स्रावयेत् ।

**शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ॥ ४७ ॥**

अनंतरं शतधौतघृतसंपृक्ताः पिचवो योज्या इति शेषः । शतशब्दोऽनेकपर्यायो बहुकृत्वो धौतेत्यर्थः । तथा शिशिरा लेपा यष्टीचंदनोशीरादयो योज्याः । दंशस्थितचलितरक्तप्रसादनायेति भावः ।

**दुष्टरक्तापगमनात्सद्योरोगरुजां शमः ।**

दुष्टरक्तस्याऽपगमान्निःसरणात्सद्यो रोगरुजादिशमः स्यात् । उपलक्षणं चेदम् । श्वयथुशैथिल्यदाहशमोऽपि भवत्येव ।

**अशुद्धं चलितं स्थानात्स्थितं रक्तं व्रणाशये ॥ ४८ ॥**
**अम्लीभवेत्पर्युषितं तस्मात्तत्स्रावयेत्पुनः ।**

अशुद्धं रक्तं स्वाशयाच्चलितं व्रणस्थाने स्थितं पर्युषितं तदम्लीभवेद्यतस्तस्मात्तद्रक्तं भूयः स्रावयेत् ।

**युंज्याच्चालाबुघटिका रक्ते पित्तेन दूषिते ॥ ४९ ॥**
**तासामनलसंयोगात्**

रक्ते पित्तेन दूषिते सत्यलाबुघटिका न लागयेत् । तासामलाबूनां घटिकानां चाऽग्निसंयोगात्पित्तरक्तकोपोत्पत्तेरिति भावः ।

**युंज्याच्च कफवायुना ।**

तास्तु कफवायुना दुष्टेऽसृजि युंज्यात् ।

**कफेन दुष्टं रुधिरं न शृंगेण विनिर्हरेत् ॥ ५० ॥**
**स्कन्नत्वाद्**

कफेन दुष्टं रक्तं सत् शृंगेर्नाकर्षेत् । स्कन्नत्वात्स्त्यानत्वाद्धेतोः । शृंगस्य चाऽग्निसंयोगाभावेन कफविलयने सामर्थ्याभावात् ।

**वातपित्ताभ्यां दुष्टं शृंगेण निर्हरेत् ।**

वातपित्ताभ्यां तु दुष्टं रुधिरं शृंगेण निर्हरेत् ।

**गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम् ॥ ५१ ॥**
**स्नायुसंध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ।**
**अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ ५२ ॥**
**न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ।**
**प्रच्छानेनैकदेशस्थं ग्रंथितं जलजन्मभिः ॥ ५३ ॥**
**हरेच्छृंगादिभिः सुप्तमसृग्व्यापिशिराव्यधैः ।**

गात्रं रज्वा पट्टेन वा दृढं बद्ध्वोपरि प्रच्छनीयप्रदेशस्थं तथा स्नाय्वादि परिहरन् प्रच्छानं कुर्यात् । कथम् । अधोदेशात्प्रवृत्तैः पदैरुपरिगामिभिरूर्ध्वं प्रसारिभिः । किंभूतैः पदैः । न गाढैर्न खरैर्न निरंतरैर्न च तिर्यग्भिस्तिरश्चीनैः । तथा पदे पदं नाचरन् । पदस्योपरि पदमकुर्वन्नित्यर्थः । एकदेशस्थितं रक्तं प्रच्छानेनाऽकर्षेत् । ग्रंथितं जलजन्मभिर्हरेत् । ग्रंथितं ग्रंथ्यर्बुदादिषु रक्तं जलौकाभिर्हरेत् । शृंगादिभिः सुप्तं निश्चेतनसंस्थानं प्रसुप्त्यादिविकारि शृंगादिभिर्हरेत् । व्यापिशिराव्यधैः । व्यापि सर्वशरीरस्य लोहितं शिराव्यधेनाऽकर्षेत् ।

**प्रच्छानं पिंडिते वा स्यात्**

पिंडिते रक्ते प्रच्छानं वा स्यात् ।

**अवगाढे जलौकसः ॥ ५४ ॥**

अवगाढे रक्ते जलौकसः स्युः ।

**त्वक्स्थेऽलाबुघटीशृंगम्**

त्वक्स्थ उत्ताने रक्तेऽलाबुघटीशृंगाणि स्युः ।

**शिरैव व्यापकेऽसृजि ।**

सर्वशरीरव्यापके रक्ते शिरैव । सिरायां मतविकल्पो नास्त्येवेत्येवशब्दार्थः ।

**वातादिधाम वा शृंगजलौकोलाबुभिः क्रमात्॥५५॥**

अथवा वातादिस्थानास्थितं रक्तं यथाक्रमं शृंगादिभिर्हरेत् ।

**सुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ।**

**सतोदकंडूशोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५६ ॥**

लुतरक्तस्य नरस्य शीतलैः प्रलेपादिभिस्तोदकंडूयुतः शोफो वा स्यात् । तं सर्पिषोष्णेन सेचयेत् । तं तादृशं शोफं घृतेनोष्णेन सेचयेदिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ।

अनंतराऽतीताध्याये शृंगादीन् लोहितावसेचनोपायानुक्त्वा प्रच्छन्नेनैकदेशस्थेत्यादिना वाक्येन तेषां विषयो दर्शितः । सिराव्यधस्य तु बहुवक्तव्यत्वात्पृथगध्यायो युक्त इत्याह ।

**अथाऽतः सिराव्यधविधिमध्यायं व्याख्यास्यामः ।**

सरत्याभी रक्तमिति सिरास्तासां व्यधस्तस्य विधिस्तमध्यायं व्याख्यास्यामः । शेषं पूर्ववत् ।

**मधुरं लवणं किंचिदशीतोष्णमसंहतम् ।**
**पद्मेंद्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥**
**लोहितं प्रवदेच्छुद्धं तनोस्तेनैव च स्थितिः ।**

लोहितं मधुरादिगुणं तथा किंचिल्लवणं तथाऽशीतोष्णम् । नञ्त्रीषदर्थे । इषच्छीतमीषदुष्णमसंहतं द्रवं शुद्धं स्यात् । संप्रति वर्णेन शुद्धलोहितलक्षणमाह । पद्मेत्यादि । इंद्रगोपः कीटकविशेषः । हेम कनकम् । अविर्मेषः शशस्तयोर्लोहितशब्देन रक्तवाचिना संबंधः । पद्मादीनां द्वंद्वः पद्मेंद्रगोपहेमाविशशलोहितमिव लोहितं रक्तवर्णं यद्रक्तं तच्छुद्धं स्यात् । तच्च तनोः शरीरस्य प्रभव उत्पत्तिहेतुः । तेनैव रक्तेन च तनोः स्थितिः प्रबंधविच्छेदलक्षणा । अनेकदृष्टांतोपादानं च शुद्धरक्तस्याऽनेकवर्णदर्शनात् ।

**तत्पित्तश्लेष्मलैः प्रायो दूष्यते**

तच्च रक्तं बाहुल्येन पित्तश्लेष्मलैर्दूष्यते । पित्तलैः क्षारोष्णतीक्ष्णादिभिः । श्लेष्मलैर्माषतिलादिभिः । तथा पुराकृताद्दैवादपि । शरत्कालस्वभावात्कदाचिद्वातलैर्दूष्यत इति प्रायोग्रहणम् ।

**कुरुते ततः ॥ २ ॥**
**विसर्पविद्रधिप्लीहगुल्माऽग्निसदनज्वरान् ।**
**मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३ ॥**
**कुष्ठवाताऽस्रपित्तास्रकट्वम्लोद्गीरणभ्रमान् ।**
**शीतोष्णस्निग्धरूक्षाद्यैरुपक्रांताश्च ये गदाः ॥ ४ ॥**
**सम्यक् साध्या न सिध्यंति ते च रक्तप्रकोपजाः ।**

ततो दूषणात्कारणाद्विसर्पादीन् भ्रमांतान्कुरुते । तथा शीतोष्णादिभिरुपक्रांताश्च ये गदाः सम्यक्चिकित्सिताः साध्या अपि रोगा ये न सिध्यंति ते च रक्तप्रकोपजाः । न केवलं विसर्पादय इति चार्थः । आदिशब्देन स्तंभवेदनादिपरिग्रहः ।

**तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ ५ ॥**

तथा तेषु विसर्पादिषु रोगेषु रक्तमुल्बणं स्रावयितुं सिरां व्यधयेत् । अदंतत्वादत्र वृद्धेरभावः ।

**न नूनषोडशाऽतीतसप्तत्यब्दस्रुतासृजाम् ।**
**अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥**
**गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।**
**अतीसारोदरच्छर्दिपांडुसर्वांगशोफिनाम् ॥ ७ ॥**
**स्नेहपीते प्रयुक्तेषु तथा पंचसु कर्मसु ।**
**नायंत्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् ॥८॥**
**नातिशीतोष्णवाताभ्रेष्वन्यत्राऽत्ययिकाद्गदात् ।**

ऊनषोडशवर्षादीनां सिरां न व्यधयेत् । स्नेहपीते पीतस्नेह इत्यर्थः । आहिताग्न्यादित्वात् परनिपातः । तथा पंचसु वमनादिषु कर्मसु विहितेषु सत्सु सिरां न व्यधयेत् । तथाऽयंत्रितामबद्धां सिरां न व्यधयेत् । न तिर्यङ् न चानुत्थितां नातिशीते नात्युष्णे नातिवाते न च मेघोदये सिरां व्यधयेत् । आत्ययिकाद्रोहिणीविषादिकादन्यत्र न व्यधयेत् । आत्ययिके तु रोगे शीतोष्णवृष्टीनां यथायथं प्रतीकारं विधाय सिरां मोक्षयेदेव ।

**शिरोनेत्रविकारेषु ललाट्यां मोक्षयेत्सिराम् ॥ ९ ॥**
**अपांग्यामुपनास्यां वा**

शिरोनयनविकारेषु ललाट्यां सिरां मोक्षयेत् । ललाटे भवा ललाट्या । शरीरावयवाद्यत् । एवमग्रेऽप्यपांगे भवां नासिकासमीपे भवां वा ।

**कर्णरोगेषु कर्णजाम् ।**

कर्णामयेषु कर्णजां कर्णसमीपभवां सिरां विध्येत् ।

**नासारोगेषु नासाग्रे स्थिताम्**

नासामयेषु नासाग्रे स्थितां विध्येत् ।

**नासाललाटयोः ॥ १० ॥**
**पीनसे**

पीनसे प्रतिश्याये नासाललाटयोः स्थितां सिरां विध्येत् ।

**मुखरोगेषु जिह्वौष्ठहनुतालुगाः ।**

मुखरोगेषु जिह्वादिगाः सिरा विध्येत् ।

**जत्रूर्ध्वं ग्रंथिषु ग्रीवाकर्णशंखशिरःश्रिताः ॥ ११ ॥**

जत्रूर्ध्वे वक्षोंऽसयोः संध्यूर्ध्वं ये ग्रंथयस्तेषु ग्रीवाद्याश्रिताः सिरा विध्येत् ।

**उरोऽपांगललाटस्था उन्मादे**

उन्माद उरःस्था अपांगस्था ललाटाश्रिताश्च विध्येत् ।

**ऽपस्मृतौ पुनः ।**

**हनुसंधौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥१२॥**

अपस्मारे हनुसंधौ स्थितां सिरां विध्येत्। समस्ते सर्वस्मिन् वा हनौ सिरां विध्येत्। सिरां भ्रूमध्यगामिनीं भ्रूमध्यस्थां वाऽपस्मृतौ विध्येदिति वाशब्दोऽत्रानुवर्त्य योज्यः।

**विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनांतरे।**

विद्रधौ पार्श्वशूले च पार्श्वस्थाः कक्षास्तनांतरस्थाश्च सिरा विध्येत्।

**तृतीयकेंऽसयोर्मध्ये**

तृतीयके ज्वरेंऽसयोर्मध्ये स्कंधसंधौ स्थितां सिरां विध्येत्।

**स्कंधस्याधश्चतुर्थके ॥ १३ ॥**

चतुर्थके ज्वरे स्कंधस्याधोगतां सिरां विध्येत्।

**प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यंगुले स्थिताम्।**

प्रवाहिकायां शूलयुक्तायां श्रोणितः कट्या द्व्यंगुले स्थितां सिरां विध्येत्।

**शुक्रमेढ्रामये मेढ्रे**

शुक्ररोगे मेढ्ररोगे च मेढ्रस्थितां सिरां विध्येत्।

**ऊरुगां गलगंडयोः ॥ १४ ॥**

गलगंडयोश्चोभयोरूरुस्थां सिरां विध्येत्।

**गृध्रस्यां जानुनोधस्तादूर्ध्वं वा चतुरंगुले।**

गृध्रस्यां जानुनोरधस्ताच्चतुरंगुल ऊर्ध्वं वा जानुनश्चतुरंगुले स्थितां सिरां विध्येत्।

**इंद्रबस्तेरधोऽपच्यां द्व्यंगुले**

अपचिसंज्ञे रोग इंद्रबस्तेरधो द्व्यंगुले सिरां विध्येत्। इंद्रबस्तिर्जंघांतरे वक्ष्यमाणः।

**चतुरंगुले ॥ १५ ॥**

**ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ**

सक्थिपीडायां गुल्फस्योर्ध्वं चतुरंगुले विध्येत्।

**तथा क्रोष्टुकशीर्षके।**

ऊर्ध्वंगवातरोगविशेषे गुल्फस्योर्ध्वं चतुरंगुले विध्येत्।

**पाददाहे खुडे हर्षे विपाद्यां वातकंटके ॥ १६ ॥**
**चिप्पे च द्व्यंगुले विध्येदुपरि क्षिप्रमर्मणः।**

पाददाहादिषु क्षिप्रमर्मण उपरि द्व्यंगुले विध्येत्।

**गृध्रस्यामिव विश्वाच्याम्**

विश्वाच्यां गृध्रस्यामिव सिरां विध्येत्। गृध्रस्यां जानुनोधस्तादिति।

**यथोक्तानामदर्शने ॥ १७ ॥**
**मर्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम्।**

यथोक्तानां सिराणामदर्शने सति मर्मवर्जिते यथासन्ने स्थाने व्याधिवशादपरां विध्येत्।

**अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥**
**कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः।**
**अग्नितापाऽतपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥**
**मृदुपट्टात्तकेशांतो जानुस्थापितकूर्परः।**
**मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत्॥२०॥**
**दंतप्रपीडनोत्कासगंडाऽऽध्मानानि चाऽचरेत्।**

अथेत्यानंतर्ये। स्निग्धा तनुर्यस्य स स्निग्धतनुः। तथा सज्जानि प्रगुणान्युपकरणानि वस्त्रपीडपादकस्नेहगैरिकादीनि यस्य स सज्जोपकरणः। तथा बली पुष्टः। तथा कृतं स्वस्त्ययनं बलिमंगलहोमादिकं यस्य स कृतस्वस्त्ययनः। तथा स्निग्धरसयुक्तेनाऽन्नेन प्रतिभोजितः। तथाऽग्नितापश्चाऽतपश्च ताभ्यां स्विन्नः। तथा जानुतुल्यमुच्चमासनं तत्र संस्थितः समुपविष्टः। तथा मृदुना सूक्ष्मेण वस्त्रपट्टेनाऽत्तो गृहीतो बद्धः केशांतो यस्य स एवम्। तथा जानुनि स्थापितं कूर्परं येन स एवम्। तथा मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्येऽतिशयेन पीडयेत्। तथा दंतप्रपीडनाद्याचरेत्।

**पृष्ठतो यंत्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥**
**कंधरायां परिक्षिप्य न्यस्यांतर्वामतर्जनीम्।**
**एषोंऽतर्मुखवर्जानां सिराणां यंत्रणे विधिः ॥ २२ ॥**

एनं चाऽतुरं पृष्ठदेशे वसनमावेष्टयन्नरो यंत्रयेत्। कथम्। कंधरायां ग्रीवायां वस्त्रं परिक्षिप्य तथांऽतर्मध्ये वामतर्जनीं न्यस्य। सिराणां यंत्रण एष विधिरेतद्विधानम्। किंभूतानाम्। अंतर्मुखवर्जानाम्।

**तथा मध्यमयांऽगुल्या वैद्योंऽगुष्ठविमुक्तया।**
**ताडयेत्**

ततो यंत्रणादनंतरं वैद्योंऽगुष्ठविमुक्तया वामपाणिजया मध्यमयांऽगुल्या ताडयेत्।

**उत्थितां ज्ञात्वा स्पर्शांगुष्ठप्रपीडनैः॥ २३॥**
**कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया।**
**फलोद्देशे सुनिष्कंपं सिरां तद्वच्च मोक्षयेत् ॥ २४ ॥**

स्पर्शेन वांऽगुष्ठपीडनैर्वोत्थितां ज्ञात्वा ऊर्ध्वदंडया सिराया मध्ये न्यस्य फलोद्देशे सुनिष्कंपं वामहस्तगृहीतया कुठार्या सिरां लक्षयेत्। तद्वच्च मोक्षयेत्। यथैव लक्षयेत्तथैवेत्यर्थः।

**ताडयन् पीडयेच्चैनां विध्येद्व्रीहिमुखेन तु।**

व्रीहिमुखेन पुनस्ताडयन् विध्यंस्तथांऽगुष्ठादिना पीडयेत्।

एनां कुठारिकाविषयजां सिरां विध्येत् । ननु कुठारिकाविषये कथं व्रीहिवक्त्रस्य प्रयोगः । यतोऽपवादविषयं परिहृत्योत्सर्गाः प्रवर्तंत इति न्यायः । व्रीहिवक्त्रस्यैव सामान्येन प्रयोगोऽनुज्ञातः । तथाचाऽह । व्रीहिवक्त्रं प्रयोज्यं वा तत्सिरोदरयोर्व्यध इति । कुठार्याः पुनर्विशेषोऽभिहितः । तयोर्ध्वदंडया विध्येदुपर्यस्थ्नां स्थितां सिरामिति । तस्मादयुक्तमेतत् । अत्रोच्यते । ज्ञापकं कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव । यदयमाचार्यो वक्ष्यति । मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकमिति । अनेन हि वचनेन ग्रंथकार इदं प्रत्यपादयत् । बहुमांसे शरीरावयवे व्रीहिमुखं व्रीहिमात्रं निक्षेप्यम् । अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोगः कार्य इति । अनेनैवाऽभिप्रायेण शास्त्रकृता प्रमाणपरिमाणाभ्यां संख्यायाश्चाऽपि संशये मात्रच् वक्तव्य इत्यनेन मात्रच् कृतः । अन्यथा तु स्पष्टं कृत्वा व्रीहिप्रमाणं व्रीह्यास्यं मांसले निक्षिपेद्व्यध इति पाठं कुर्यात् । तस्माद्युक्तो व्रीहिमुखस्य कुठारिकाविषयेऽपि प्रयोग इति ।

**अंगुष्ठेनोन्नमय्याऽग्रे नासिकामुपनासिकाम् ॥२५॥**

अग्रेऽग्रदेशे नासिकामंगुष्ठेनोन्नमय्योपनासिकासन्नदेशस्थां सिरां विध्येत् ।

**अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ।**

आभिमुख्येनोन्नतोपरि तालुदेशे नीता तथा विशेषेण दंतैर्दष्टा अग्रे जिह्वाऽग्रजिह्वा येनासावभ्युन्नतविदष्टाग्रजिह्वस्तस्याधः प्रकृतत्वाज्जिह्वाया एवाऽधस्तात्तदाश्रयां जिह्वाधःस्थां सिरां विध्येत् । तदित्यनेन जिह्वाधः परामृश्यते । जिह्वाध आश्रयो यस्याः सिरायास्ताम् ।

**यंत्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ॥ २६ ॥**

ग्रीवाश्रितानां सिराणां व्यधो ग्रीवाश्रितसिराव्यधस्तस्मिन्स्तनयोरूर्ध्वं यंत्रयेद्वाससा वेष्टयेत् ।

**पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।**
**कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ॥ २७ ॥**

पाषाणगर्भौ हस्तौ यस्य तस्य नरस्य भुजे जानुस्थे जानुष्वेव स्थिते प्रसृते प्रसारिते । भुज इति वचनमतंत्रम् । द्वावपिहि भुजौ गृह्येते । कुक्षेरारभ्य यावद्ग्रीवा तावन्मृदिते मलिते । कस्मिन् । ग्रीवाश्रितसिराव्यधार्हेंऽगे । यथा बद्ध ऊर्ध्वं पट्टको यस्मिंस्तस्मिन् विध्येत् । प्रकृतत्वात्सिराम् ।

**विध्येद्धस्तसिरां बाहावनाकुंचितकूर्परे ।**
**बध्वा सुखोपविष्टस्य मुष्टिमंगुष्ठगर्भिणीम् ॥ २८ ॥**
**ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरंगुले ।**

हस्तसिरां विध्येत् । कथम् । बाहावनाकुंचितकूर्परे । अनाकुंचितः प्रसारितः कूर्परो यस्य बाहोस्तस्मिन् । तथा सुखोपविष्टस्य सुखासीनस्य । तथा मुष्टिं बध्वा । किंभूताम् । अंगुष्ठेन गर्भिणीमंगुष्ठगर्भिणीम् । गूढांगुष्ठं मुष्टिं बध्वेत्यर्थः । तथा वेध्यस्थानादुपरि चतुरंगुलपरिमाणे स्थाने पट्टिकां बध्वा विध्येत् ।

**विध्येदालंबमानस्य बाहुभ्यां पार्श्वयोः सिराम्॥२९॥**

बाहुभ्यामालंबमानस्याऽवलंब्यं वस्तु भुजाभ्यामासजतः पार्श्वयोः सिरां विध्येत् ।

**प्रहृष्टे मेहने**

प्रहृष्टे स्तब्धे मेढ्रे तदाश्रितां सिरां विध्येत् ।

**जंघासिरां जान्वकुंचिते ।**

जानुन्यकुंचिते स्पष्टे स्थिते सति जंघायां सिरां विध्येत् ।

**पादे तु सुस्थितेऽधस्ताज्जानुसंधेर्निपीडिते ॥ ३० ॥**
**गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ।**
**द्वितीये कुंचिते किंचिदारूढे हस्तवत्ततः ॥ ३१ ॥**
**बध्वा विध्येत्सिराम्**

सुखं कृत्वा भूम्यादिदेशे स्थिते पादे सति पादसिरां विध्येत् । तथा जानुसंधेरधस्तादागुल्फं गुल्फं यावत् कराभ्यां गाढं कृत्वा पीडिते सति तस्य चरणस्योपर्युपरिष्टाद्द्वितीये चरण ईषत्संकुचिते । तथा आरूढे तत्काले सति ततो हस्तवद्वेध्यस्थानादुपरि चतुरंगुले पट्टकं बध्वा सिरां विध्येत् ।

**इत्थमनुक्तेष्वपि कल्पयेत् ।**
**तेषु तेषु प्रदेशेषु तत्तद्यंत्रमुपायवित् ॥ ३२ ॥**

इत्थमनेन प्रकारेण यंत्रलक्षणोद्देशेनानुक्तमपि यंत्रं तत्तद्देशे माहात्म्यात् क्रियासौकर्यार्थं तेषु तेषु शरीरावयवेषु स्वबुद्ध्या तत्तद्यंत्रं यथायोगं कल्पयेदुपायज्ञो वैद्यः ।

**मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।**
**यवार्धमस्थ्नामुपरि सिरां विध्यन् कुठारिकाम्॥३३॥**

मांसले शरीरावयवे व्रीहिमुखं शस्त्रं व्रीहिप्रमाणं निक्षिपेत् । अस्थ्नामुपरि यवार्धमात्रं कुठारिकां निक्षिपेत् । किंकुर्वन् । सिरां विध्यन् ।

**सम्यग्विद्धे स्रवेद्धारां यंत्रे मुक्ते तु न स्रवेत् ।**

सम्यग्विद्धे सति धारां स्रवेत् । यंत्रे च मुक्ते सति न स्रवेत् ।

**अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ॥ ३४ ॥**
**सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ।**

अल्पं विद्धा सती सिरा स्तोकं कालं वहति । दुर्विद्धाऽसम्यग्विद्धा तु सिरा सशब्दं स्रवेत् । दुःखेन कृच्छ्रेण धार्यते ।

**भीमूर्छायंत्रशैथिल्यकुंठशस्त्रातितृप्तयः ॥ ३५ ॥**
**क्षामत्ववेगितास्वेदा रक्तस्याऽस्रुतिहेतवः ।**

भीमूर्छादयो रक्तस्याऽस्रवहेतवः । भीर्भयम् । मूर्छा मोहस्तमसीव प्रवेशः । यंत्रशैथिल्यमगाढं कृत्वा यंत्रपीडनम् । तथा कुंठं

भग्नं शस्त्रम् । तथाऽतितृप्तिरतिसौहित्यम् । क्षामत्वं निर्बलता । वेगिता संजातवेगत्वम् । अस्वेदः स्वेदायोगः । यतश्चैते रुधिरस्यास्रुतिहेतवोऽतो रक्तस्रुतावेते परिहार्याः ।

**असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ॥ ३६ ॥**
**सागारधूमलवणतैलैर्दिह्याच्छिरामुखम् ।**

असम्यगस्रे स्रवति वेल्लादिभिः सिरावदनं दिह्यात्प्रलेपयेत् ।

**सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥**

सम्यक्प्रवृत्ते रक्ते सति सिरामुखं कोष्णाभ्यां तैललवणाभ्यां दिह्याल्लेपयेत् ।

**अग्रे स्रवति दुष्टास्रं कुसुंभादिव पीतिका ।**

यथा रागपीतिकामिश्रीभूतात् कुसुंभादग्रे पूर्वं पीतिका स्रवति तथा दुष्टा दुष्टरक्तादेकलोलीभूतादग्रे पूर्वं पीतिका स्रवति ।

अग्रग्रहणात्पश्चाददुष्टमपि रक्तमवश्यं स्रवतीत्याशंक्येदमाह ।

**सम्यक्स्रुत्य स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥३८॥**

यथावत्प्रस्रुत्य स्वयत्नेन विना यत्तिष्ठेन्न स्रवेत् शुद्धं तदिति नाहरेन्न स्रावयेत् । जीवितहेतुत्वात् ।

**यंत्रं विमुच्य मूर्छायां वीजिते व्यजनैः पुनः ।**
**स्रावयेन्मूर्छति पुनस्त्वपरेद्युर्त्र्यहेऽपि वा ॥ ३९ ॥**

मूर्छायां सत्यां यंत्रं विमुच्य व्यजनैर्वीजिते समाश्वस्ते नरे सति पुनरस्रं स्रावयेत् । पुनर्मूर्छति त्वातुरेऽशुद्धमपि रक्तं तस्मिन्नहनि न स्रावयेत् ।

**वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।**

वातात् श्यावादिलक्षणं रक्तं स्यात् ।

**पित्तात्पीतासितं विस्रमस्कंद्यौष्ण्यात्सचंद्रकम् ४०**

पित्तात् पीतादिलक्षणमस्रं स्यात् । अस्कंद्यस्त्यानमुष्णत्वात्सचंद्रकं च ।

**कफात् स्निग्धमसृक्पांडु तंतुमत्पिच्छिलं घनम् ।**

कफात् स्निग्धादिलक्षणमसृक् स्यात् ।

**संसृष्टलिंगं संसर्गात्**

संसर्गाद्दोषाणां संसृष्टलिंगं रक्तं स्यात् ।

**त्रिदोषं मलिनाविलम् ॥ ४१ ॥**

त्रिदोषं रक्तं मलिनं कलुषं तथाऽऽविलं घनं च । एतच्च दोषत्रयसंसर्गलक्षणादधिकं लक्षणं मंतव्यम् । नचैतावदेव त्रिदोषलक्षणं मंतव्यम् ।

**अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ।**

अशुद्धमस्रं बलिनोऽपि किं पुनरबलिनः प्रस्थात्परमधिकं न स्रावयेत् ।

कस्मादित्याह ।

**अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ४२**

अतिस्रावे हि रक्तस्य मृत्युर्भवेत् वातरोगाश्च कृच्छ्राः स्युः ।

**तत्राऽभ्यंगरसक्षीररक्तपानानि भेषजम् ।**

तत्र रक्तातिस्रुतावभ्यंगादीनि भेषजम् ।

**स्रुते रक्ते शनैर्यंत्रमपनीय हिमांबुना ॥ ४३ ॥**
**प्रक्षाल्य तैलप्लोताक्तं बंधनीयं सिरामुखम् ।**

स्रुते रक्ते सति यंत्रं शनैर्विमुच्य मंदंमंदमपनीय सिरामुखं शीतोदकेन प्रक्षाल्य तैलप्लोताक्तं सद्बंधनीयम् ।

**अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥**

अशुद्धं वातादिदुष्टरुधिरलक्षणाद्दुष्टं ज्ञात्वा भूयः पुनः स्रावयेत् । कदा । सायमपराह्णे तस्मिन् दिवसे । अथवाऽपरेह्नि द्वितीये दिवसे ।

**स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ।**

अथवा स्नेहोपस्कृतो भावितो देहो यस्य तथाविधस्य भृशं दूषितमतिशयेन दुष्टं रक्तं पक्षादूर्ध्वं पुनः स्रावयेत् । एवमशुद्धं रक्तं यथायोगं सायमह्न्यपरे पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेन्न ततोऽधिकमिति रक्तस्रुतौ ब्रूमः । प्रस्थपरिमाणं च तंत्रांतरे गदितम् । वमने च विरेके च रक्तातीसारयोरपि । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण इति ।

किंचिच्छेषं दुष्टरक्तं स्थापयेदुत सर्वं स्रावयेदिति संशयापनोदार्थमिदमाह ।

**किंचिद्धि शेषे दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५ ॥**
**सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत् ।**

यस्मात्किंचिच्छेषे दुष्टे रक्ते नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्तते क्रियापथमतिक्रम्य मार्गांतरमसौ नाऽऽसादयति । अतो दुष्टमपि रक्तं सशेषं धार्यम् । न दुष्टरक्तस्याऽतिस्रुतिमाचरेत् । प्राणायतनत्वात् । सुश्रुतोऽप्यध्यगीष्ट । रक्तं सशेषदोषं तु कुर्यादपि विचक्षणः । नचातिप्रस्रुतं कुर्याच्छेषं संशमनैर्जयेदिति ।

अथ किंचिच्छेषं रक्तमुपेक्षणीयमुत प्रतिक्रिया काऽपि कार्येत्याह ।

**हरेच्छृंगादिभिः शेषम्**

स्रुतशेषं दुष्टरक्तं शृंगतुंबघटिकादिभिर्हरेन्न तु सिरया ।

**प्रसादमथवा नयेत् ॥ ४६ ॥**
**शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ।**
**दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥**

अथवा शीतोपचारेण पित्तरक्तक्रियया शुद्ध्या वमनविरेचना-

दिरूपया विशेषणेन लंघनरूपेण तद्दुष्टं रक्तमनुद्रिक्तमेव प्रसादये-त्कलुषतां परित्यज्य तस्य प्रसन्नत्वमभ्युपपादयेन्न तु केवलं स्रुत-शेषं रुधिरं शीतोपचारेण प्रसादयेत् । यावदनुद्रिक्तमप्रवृद्धं दुष्टं रुधिरमेवमनेनैव शीतोपचारादिना प्रसादं नयेन्न तु तन्निर्हरणे सि-राव्यधादिना यतनीयमनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात् ।

**रक्ते त्वतिष्ठति क्षिप्रं स्तंभनीमाचरेत्क्रियाम् ।**

रक्ते त्वतिष्ठति स्थितिमलभमाने त्वरितमेव स्तंभनीं क्रियां वक्ष्यमाणां कुर्यात् । रक्तस्य प्राणायतनत्वात् ।

तदेतत्स्तंभनविशेषमाह ।

**रोध्रप्रियंगुपत्तंगमाषयष्ट्याह्वगैरिकैः ॥ ४८ ॥**
**मृत्कपालांजनक्षौममषीक्षीरीत्वगंकुरैः ।**
**विचूर्णयेद्व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ४९ ॥**

रोध्रादिभिः सिराव्रणमुखं विचूर्णयेत् । पद्मकादिहिमं शीत-कषायं पिबेत् ।

**तामेव वा सिरां विध्येद्व्यधात्तस्मादनंतरम् ।**

तामेव प्राग्विद्धां सिरां तस्मात् प्राग्व्यधादनंतरमव्यवहितं विध्येत् ।

**सिरामुखं च त्वरितं दहेत्तप्तशलाकया ॥ ५० ॥**

अथवा सिराद्वारं क्षिप्रं कृत्वाऽग्निनोपतप्तया शलाकया दहेत्। रक्तस्य स्रवणादनंतरं यद्विधेयं तदाह ।

**उन्मार्गगा यंत्रनिपीडनेन**
**स्वस्थानमायांति पुनर्न यावत् ।**
**दोषाः प्रदुष्टा रुधिरं प्रपन्ना-**
**स्तावद्धिताहारविहारभाक्स्यात् ॥ ५१ ॥**

यंत्रनिपीडनेनोन्मार्गगाः स्वमार्गमुल्लंघ्य मार्गांतरसमाश्रयणेनो-त्पथं प्रतिपन्ना दोषाः । किंभूताः । प्रदुष्टाः । तथाविधं रक्तं प्राप्ताः पुनर्यावत्स्वाश्रयं न प्रतिपद्यंते तावद्धिताहारविहारभाक् स्याद्धितावाहारविहारौ भजेत् । भजो ण्विरिति ण्विः । इंद्रवज्रा वृत्तम् ।

**नात्युष्णशीतं लघु दीपनीयं**
**रक्तेऽपनीते हितमन्नपानम् ।**
**तदा शरीरं ह्यनवस्थितास्र-**
**मग्निर्विशेषादिति रक्षणीयः ॥ ५२॥**

रक्ते स्राविते‍ऽन्नपानं नात्युष्णशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत् । अतिशीतं त्वग्निं सादयेत् । तथा लघु स्वभा-वतो मात्रादिना च । दीपनीयं संस्कारादिना । कुत एवमन्नपानं हितमित्याह । यस्मात्तस्मिन् काले शरीरमनवस्थितं चलितवृत्ति रक्तं यस्य शरीरस्य तदेवंभूतं भवति । तच्चाऽसृक् शरीरस्याऽधारो रक्तस्य च पित्तं पित्तस्य च वह्निः । तथा च वक्ष्यति । पित्तं वह्निरिति । तस्माद्विशेषेण महता यत्नेन वह्निर्नात्युष्णशीतादिना-ऽऽहारविहारेण रक्षितव्यः ।

कृतसिराव्यधस्य पुरुषस्य लक्षणमंतरेणोन्मार्गगामिनां दो-षाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते । न च निर्हृतदुष्ट-रक्तः पुरुषो लक्षणं विना ज्ञायत इति द्वयस्य परिज्ञानार्थमाह ।

**प्रसन्नवर्णेंद्रियमिंद्रियार्था-**
**निच्छंतमव्याहतपक्तृवेगम् ।**
**सुखान्वितं पुष्टिबलोपपन्नं**
**विशुद्धरक्तं पुरुषं वदंति ॥ ५३ ॥**

वर्णश्चेंद्रियाणि च वर्णेंद्रियाणि प्रसन्नानि वर्णेंद्रियाणि यस्य तं प्रसन्नवर्णेंद्रियम् । तथेंद्रियार्थान् शब्दादीन् स्वभावाभिप्रेतानि-च्छंतमभिलषंतम् । तथा पक्तुर्वेगः सामर्थ्यम् । अव्याहतोऽन-भिभूतः पक्तृवेगो यस्य तमव्याहतपक्तृवेगमविनष्टपचनवेगम् । तथा सुखान्वितमारोग्ययुक्तम् । प्रकृतिमापन्नं पुष्टिबलाभ्यां यु-क्तम् । एवंविधं विशुद्धरक्तं पुरुषं वदंतीति शरीरस्य लक्षणमुक्तम् । मधुरं लवणमित्यादिना तु रक्तस्यैव विशुद्धिलक्षणमभिहितमिति । उपजातिर्वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटी-कायां सर्वांगसुंदराख्यायां सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

शिराव्यधविधेरनंतरं शल्याहरणविधिरारभ्यते ।

**अथाऽतः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।**

यतः सिराव्यधाऽध्याये शल्यरूपस्य रक्तस्य सकलकायव्या-पिनः सिराव्यधोपायेन निर्हरणमुक्तमिदानीं प्रादेशिकस्य लोहादेः शल्यस्य प्रतिदेशस्थितस्य लक्षणं निर्हरणोपायादिश्चाऽस्मिन्नध्याये शल्याहरणविधौ निर्दिश्यत इत्याह ।

**वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पंचधा गतिः ।**

वक्रादिभेदभिन्ना शल्यानां पंचप्रकारा गतिर्गमनम् । कदा-चिच्छल्यानि वक्रं कृत्वा तिर्यग्वोर्ध्वं वाऽधो वा गच्छंति । कदाचिदृजु कृत्वा । एवमुभयथा तिर्यगूर्ध्वाधोभेदगमनाच्छल्यानां पंचधा गतिः ।

सशल्यः कथं वेद्य इत्याह ।

**ध्यामं शोफं रुजावंतं स्रवंतं शोणितं मुहुः ॥ १ ॥**
**अभ्युद्गतं बुद्बुदवत्पिटिकोपचितं व्रणम् ।**
**मृदुमांसं विजानीयादंतःशल्यं समासतः ॥ २ ॥**

एवंविधं व्रणमंतःशल्यं विजानीयात् । समासतः संक्षेपेण । ध्यामं श्यामवर्णम् । तथा शोफम् शोफान्वितम् । रुजावंतम् । तथा मुहुः शोणितं स्रवंतम् । तथाऽभ्युद्गतमाभिमुख्येनोच्छ्रितमुन्नतम् । तथा

बुद्बुदेन तुल्यं वर्तते बुद्बुदवत्। तथा पिटकैरुपचितं व्याप्तम्। तथा मृदुमांसं कोमलमांसम्।

इति सामान्येनांऽतःस्थितस्य शल्यस्य लक्षणमुक्त्वा त्वगादिगतस्य लक्षणमाह।

**विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः। शोफो भवति**

सामान्यलक्षणं पूर्वोक्तमंतःशल्यं सर्वत्र विद्यते। विशेषेण पुनस्त्वग्गते शल्ये शोफो विवर्णस्तथा कठिनो दीर्घश्च स्यात्।

**मांसस्थे चोषः शोफो विवर्धते॥ ३॥ पीडनाक्षमता पाकः शल्यमार्गो न रोहति।**

मांसगते शल्ये चोषः स्यात्। सर्वांगीणस्तीव्रो रतिमान् दाहश्चोष उच्यते। तथा शोफो विवर्धते। तथा पीडनस्याऽक्षमत्वं पाकश्च। शल्यमार्गश्च रोहं न याति।

**पेश्यंतरगते मांसप्राप्तवच्छ्वयथुं विना॥ ४॥**

पेशीमध्यगते मांसगतेन तुल्यं लक्षणं श्वयथुं वर्जयित्वा। मांसावयवविशेषो दीर्घतंत्वाकृतिः पेशीत्युच्यते।

**आक्षेपः स्नायुजालस्य संरंभस्तंभवेदनाः। स्नायुगे दुर्हरं चैतत्**

स्नायुगे शल्ये स्नायुजालस्याऽक्षेपाद्याः स्युः। आक्षेप आकर्षणम्। संरंभः क्षोभः। स्तंभः स्तब्धता। वेदना शूलम्। तच्च स्नायुगं शल्यं दुःखेन निर्हर्तुं शक्यते।

**सिराध्मानं सिराश्रिते॥ ५॥**

सिराश्रिते शल्ये सिराणामानाहः स्यात्।

**स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते।**

स्रोतोगते शल्ये स्रोतसां स्वकर्मगुणयोर्हानिः स्यात्। यथा कंठस्रोतसि स्थिते शल्ये पानाभ्यवहरणस्य निरोधो जायते। गुणोऽपि यस्तस्याऽप्रदुष्टत्वादिलक्षणः सोऽप्यस्य हीयत इति। एवमन्येषां स्वकर्मगुणहानिर्व्याख्येया। अतिवाक्त्वं चेति योज्यम्।

**धमनिस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत्॥ ६॥ निर्याति शब्दवान् स्याच्च हृल्लासः सांगवेदनः।**

धमनिस्थे शल्ये वायुर्लोहितं सफेनं प्रेरयेत्। तथा सशब्दो मरुन्निर्याति। हृल्लासश्चांगपीडायुक्तः स्यात्।

**संघर्षो बलवानस्थिसंधिप्राप्तेऽस्थिपूर्णता॥ ७॥**

अस्थिसंधिप्राप्ते शल्ये बलवान् संघर्षः क्षोभः स्यात्। तथाऽस्थिपूर्णता च जायते।

**नैकरूपा रुजोऽस्थिस्थे शोफः**

अस्थिस्थे शल्येऽनेकाकारा नानाविधा रुजो भग्नरुग्णमृदितपीडितावनुन्नप्रायाः स्युः शोफश्च।

**तद्वच्च संधिगे।**



**चेष्टानिवृत्तिश्च भवेत्**

संधिगते शल्ये तद्वदेवाऽस्थिस्थशल्येन तुल्यं लक्षणं संधिस्थशल्याक्रांतावयवस्य। तथा चेष्टाया व्यापारस्य निवृत्तिरुपरमश्च स्यात्। पूर्वमस्थिसंधिगतस्य शल्यस्य लक्षणमुक्तम्। अधुनाऽनुरक्तशरीरसंधिगतशल्यस्य लक्षणम्। अन्यो हि शरीरसंधिः। तथा च राजयक्ष्मनिदाने वक्ष्यति। शरीरसंधीनाविश्येति।

**आटोपः कोष्ठसंश्रिते॥ ८॥ आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने। विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः॥ ९॥**

कोष्ठमुदरमाश्रिते शल्य आटोपः क्षोभस्तथाऽनाहो जठराध्मानम्। तथा व्रणमुखेऽन्नशकृन्मूत्रदर्शनं स्यात्। मर्मस्थं शल्यं मर्मविद्धोपलक्षणैर्विद्यात्। मर्मविद्धस्य च लक्षणं संग्रहे कथितम्। यथा। देहप्रसुप्तिर्गुरुता संमोहः शीतकामता। स्वेदो मूर्छा वमिः श्वासो मर्मविद्धस्य लक्षणमिति।

**यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत्।**

न केवलं सामान्यलक्षणेन ध्यामादिना। तथा त्वगादिस्थशल्यविशेषलक्षणेन त्वगादिस्थं शल्यं लक्षयेत्। यावद्यथास्वं परिस्रावैस्तथारूपैर्विभावयेत्।

**रुह्यते शुद्धदेहानामनुलोमस्थितं तु तत्।**

तत्प्राङ्निर्दिष्टं शल्यं रुह्यते रोहं याति। किंभूतानां पुंसाम्। वमनविरेचनादिभिः शुद्धदेहानाम्। रुह्यत इति कर्मकर्तरीति केचित्। तच्च न युक्तम्। यतः कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति। न कर्मस्थभावकानां न च कर्तृस्थक्रियाणामित्युक्तम्। रुहिश्च कर्तृस्थक्रियः। तस्माद्रोहतीति रुट्। रुडिवाचरतीति क्वंतोऽयम्। रूढाभासो ह्ययं नतु सम्यग्रूढः। तथाच वक्ष्यति। दोषकोपेत्यादि। तस्मादस्य रूढाभासत्वादेषा व्युत्पत्तिर्युक्ता।

**दोषकोपाऽभिघातादिक्षोभाद्भूयोऽपि बाधते॥१०॥**

यतस्तच्छल्यमसम्यग्रूढत्वाद्भूयोऽपि बाधते। प्राकृतबाधमपि पीडां जनयति। कुतोहेतोरित्याह। दोषकोपश्चाऽभिघातश्च तावादी येषां धातूनां धावनलंघनादिशीलानां त एवं तैः क्षोभः संरंभस्तस्माद्दोषकोपक्षोभादभिघातादिक्षोभाद्बाधते।

त्वगादिनष्टे शल्ये मिथ्यारूढत्वाददृश्यतां प्राप्ते सति परिज्ञानार्थमिदमाह।

**त्वङ्नष्टे यत्र तत्र स्युरभ्यंगस्वेदमर्दनैः। रागरुग्दाहसंरंभा यत्र चाज्यं विलीयते॥ ११॥ आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत्।**

तत्र तेषु त्वङ्नष्टादिषु शल्येषु मध्ये त्वङ्नष्टं यत्र प्रदेशे स्यात्तत्स्थानेऽभ्यंगादिभिर्लोहित्यशूलदाहक्षोभाः स्युः। यत्र वा स्थाने घृतं स्त्यानं योजितं विलीयते तत्स्थानं शल्यवत् सत्यं वदेत्। अ-

थवा लेपश्चंदनादिना दत्तो यत्राश्वेव शुष्यति तत्स्थानं त्वग्देशं शल्यवज्जानीयात् ।

**मांसप्रनष्टं संशुद्ध्या कर्शनाच्छ्लथतां गतम् ॥ १२ ॥**
**क्षोभाद्रागादिभिः शल्यं लक्षयेत्**

मांसप्रनष्टमदृश्यतां प्राप्तं संशुद्ध्या वमनविरेचनादिकया यत्कर्शनं कृशत्वं तस्मात् श्लथतां शिथिलत्वं प्राप्तं क्षोभादनेकप्रकाराद्वेदनारूपात्तथा रागादिभिर्लक्षयेत् ।

**तद्वदेव च ।**
**पेश्यस्थिसंधिकोष्ठेषु नष्टम्**

तेन मांसप्रनष्टेन तुल्यं वर्तते । यथा शुद्ध्या कर्शनात् श्लथतां गतं क्षोभाद्रागादिभिर्लक्षयेदिति ।

**अस्थिषु लक्षयेत् ॥ १३ ॥**
**अस्थ्नामभ्यंजनस्वेदबंधपीडनमर्दनैः ।**
**प्रसारणाकुंचनतः संधिनष्टं तथाऽस्थिवत् ॥ १४ ॥**

अस्थिषु नष्टं शल्यमस्थ्नामभ्यंजनस्वेदनबंधनपीडनमर्दनैः प्रसारणाऽकुंचनतो लक्षयेत् । संधिनष्टं शल्यमस्थि नष्टवल्लक्षयेत् ।

**नष्टे स्नायुशिरास्रोतोधमनिष्वसमे पथि ।**
**अश्वयुक्तं रथं खंडचक्रमारोप्य रोगिणम् ॥ १५ ॥**
**शीघ्रं नयेत्ततस्तस्य संरंभाच्छल्यमादिशेत् ।**

स्नायुशिरास्रोतोधमनीषु नष्टे शल्येऽसमे पथि विषमे मार्गे रथमारोप्य रोगिणं शल्यवंतं शीघ्रं नयेदाश्वेव देशांतरं प्रापयेत् । किंभूतं रथम् । खंडं चक्रं यस्य स खंडचक्रस्तं खंडचक्रम् । ततस्तस्य रथस्य संरंभात् क्षोभाच्छल्यमादिशेल्लक्षयेत् ।

**मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात् ॥ १६ ॥**

मर्मनष्टं शल्यं पृथङ्नाभिहितम् । कुतः तेषां मर्मणां मांसादौ एव प्राङ्निर्दिष्टो यतः संश्रयो न तु पृथङ्मर्माणि विद्यंते । तथा च संग्रहे । मर्मप्रनष्टेऽप्यनन्यभावान्मांसादिभ्यो मर्मणामुक्तं परीक्षणं भवतीति ।

एवं विशेषेण नष्टशल्यलक्षणमुक्त्वा सामान्येन नष्टशल्यं लक्षयितुमाह ।

**सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ।**

सामान्येन सशल्यं तु क्षोभिण्या क्रियया संरंभोत्पादकेन कर्मणा श्वसनप्राणायामादिकेन यत्सरुक्स्थानं तत्सशल्यं जानीयात् ।

**वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ॥ १७ ॥**
**अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत् ।**

वृत्तं वर्तुलम् । पृथु पार्श्वाभ्यां यत्परिच्छिद्यते । चतुष्कोणं चतुरस्रम् । त्रिपुटं त्र्यस्रम् । समासतः संक्षेपेणाऽदृश्यस्यानुपलब्धस्य शल्यस्य संस्थानमाकृतिं व्रणाकृत्या व्रणसंस्थानेन विभावयेद्विद्यात् ।

अधुनैषामाकर्षणोपायं निरूपयन्नाह ।

**तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ॥ १८ ॥**

तेषामदृश्यानां शल्यानामाकर्षणोपायौ द्वौ प्रतिलोमानुलोमकौ । प्रतिलोमः शरीरांतःप्रवेशविपर्ययः । अनुलोमः शरीरांतःप्रवेशानुगतः ।

प्रतिलोमानुलोमयोर्विनिर्हरणविषयमाह ।

**अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ।**

तयोः प्रतिलोमानुलोमयोर्विपर्ययस्तद्विपर्ययस्तस्माद्विपर्ययादर्वाचीनपराचीने निर्हरेत् । प्रतिलोमेऽर्वाचीनमानयेदनुलोमे पराचीनमानयेदित्यर्थः ।

**सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ॥ १९ ॥**

तिर्यग्गतं शल्यं यतो यस्माद्देहदेशाच्छित्त्वा विलुख्य सुखाहार्यं संपद्यते सुखेनाऽहर्तुं शक्यते ततस्तस्माद्देहदेशाच्छित्त्वोद्धरेत् । छित्त्वेत्यत्र यद्यपि कर्म किंचिन्न निर्दिष्टं तथाऽपि त्वङ्मांसादीनां योग्यत्वात्तेषामेव कर्मत्वं बोध्यम् । मांसादिच्छित्त्वोद्धरेदित्यर्थः ।

**शल्यं न निर्घात्यमुरःकक्षावंक्षणपार्श्वगम् ।**
**प्रतिलोममनुत्तुंडं छेद्यं पृथुमुखं च यत् ॥ २० ॥**

शल्यमुरोगतमुरःस्थं कक्षास्थं वंक्षणस्थं पार्श्वस्थं न निर्घात्यं तन्न निर्घातनीयम् । तथा प्रतिलोममननुलोमगतं तथाऽनुत्तुंडं बाह्ये बुद्बुदवन्नोन्नतं तथा छेद्यं शल्यं न निर्घात्यमहार्यम् । तथा पृथुमुखं विस्तीर्णाननं च न निर्घातनीयम् ।

न च सर्वमेव शल्यमाहरणीयमित्याह ।

**नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ।**

विशल्यं हंतीति विशल्यघ्नम् । तावज्जीवति यावत्सशल्यः । शल्यापाये तु म्रियते तन्नाहरेदेव । विशल्यस्य प्राणहरणत्वात् । एतत्स्वरूपं च मर्मविभागे स्पष्टं कृत्वा वक्ष्यते । नष्टं वेति वाशब्दश्चार्थे । नष्टमदृश्यतां प्राप्तं च यन्निरुपद्रवं तन्निमित्तरोगरहितं नाहरेत् । प्रत्यपायभयात् ।

**अथाऽहरेत्करप्राप्यं करेणैव**

करप्राप्यं हस्तप्राप्यं शल्यं करेणैवाऽहरेन्नापरेण कंकमुखादिना ।

**इतरत्पुनः ॥ २१ ॥**
**दृश्यं सिंहाहिमकरवर्मिकर्कटकाननैः ।**

इतरदकरप्राप्यं तु शल्यं दृश्यं सिंहमुखादिभिर्यन्त्रैराहरेत् ।

**अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः ॥ २२ ॥**
**कंकभृंगाह्वकुररशरारीवायसाननैः ।**

अदृश्यं पुनः शल्यं व्रणस्य संस्थानादाकलय्य कंकमुखादिभिर्ग्रहीतुं शक्यते यतस्ततस्तच्छस्त्रैर्हरेत् । यत्तदोर्नित्यसंबंधात्तदो लाभः ।

**संदंशाभ्यां त्वगादिस्थम्**

त्वगादिस्थं शल्यं संदंशाभ्यां निर्हरेत् । आदिग्रहणात्त्वक्सिरास्नायुमांसादीनां ग्रहणम् ।

**तालाभ्यां शुषिरं हरेत् ॥२३॥**

सुषिरं यच्छल्यं त्वगादिस्थं तत्तालाभ्यां हरेन्न संदंशाभ्याम् ।

**शुषिरस्थं तु नलकैः**

शुषिरस्थं पुनः शल्यं नलकैर्नाडीयंत्रैराकर्षेत् ।

**शेषं शेषैर्यथायथम् ।**

शेषं शल्यं शेषैर्यंत्रैर्यथायोगमाहरेत् ।

**शस्त्रेण वा विशस्याऽदौ ततो निर्लोहितं व्रणम् २४**
**कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ।**

शस्त्रेण वा पूर्वं विशस्य मांसादींश्छित्त्वा ततोऽनंतरमपनीतरक्तं व्रणं विधाय सर्पिषा स्वेदयित्वा वस्त्रपट्टादिना सर्पिर्मधु बद्ध्वा आचारिकं स्नेहविध्युक्तमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् कथयेत् ।

**सिरास्नायुविलग्नं तु चालयित्वा शलाकया ॥२५॥**

सिरास्नायुविलग्नं पुनः शल्यं शलाकया चालयित्वा शिथिलीकृत्याहरेत् ।

**हृदये संस्थितं शल्यं त्रासितस्य हिमांबुना ।**
**ततः स्थानांतरं प्राप्तमाहरेत्तद्यथायथम् ॥ २६ ॥**

हृदये यदाश्रितं शल्यं तच्छीतजलेन त्रासितस्य स्थानांतरगतं ज्ञात्वा यथायथं यथास्वं विशिष्टयंत्रैर्निर्हरेत् ।

**यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ।**

अन्यतोऽप्यन्यदेशस्थमपि शल्यं दुराकर्षं दुःखेनाऽऽक्रष्टुं शक्यते तत्स्वमार्गं नयेत् तदेवमेवाहरेत् । यथा हृदयस्थं शल्यं स्थानांतरं प्राप्तं निर्हार्यं तथा यथामार्गं मार्गानतिक्रमेणान्यदेशस्थमपि शल्यमाकर्षणीयम् ।

**अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ॥२७॥**

अस्थिदष्टेऽस्थि दष्टे स्पष्टे सति शल्ये नरं बलवंतं पद्भ्यां पीडयित्वा आक्रम्य तच्छल्यं विनिर्हरेत् । अस्थिनष्ट इति वा पाठः ।

**इत्यशक्ये सुबलिभिः सुगृहीतस्य किंकरैः ।**

इत्यशक्येऽनेनाऽपि प्रकारेणाऽऽक्रष्टुमशक्ये शल्ये किंकरैर्भृत्यैर्महाबलैः सुगृहीतस्य सुष्ठ्ववष्टब्धस्य नरस्य शल्यं वैद्यः कंकमुखादिना निर्हरेत् ।

**तथाऽप्यशक्ये वारंगं वक्रीकृत्य धनुर्ज्यया ॥ २८ ॥**
**सुबद्धं वक्रकटके बध्नीयात्सुसमाहितः ।**
**सुसंयतस्य पंचांग्या वाजिनः कशयाऽथ तम् ॥२९॥**
**ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ।**
**उद्धरेच्छल्यम्**

तथाप्यशक्य एवमपि शल्य आहर्तुमशक्ये वारंगं शस्त्रादिमयस्य शल्यस्य शिखाकारं तद्वक्रीकृत्य कुटिलतां प्रापय्य ततो धनुर्ज्यया स्नाय्वादिमय्या सुबद्धं कृत्वाऽनंतरं वाजिनोऽश्वस्य वक्रकटके बध्नीयाद्वैद्यः । किंभूतः । सुसमाहितस्तद्गतमनाः । किंभूतस्य वाजिनः । सुसंयतस्य सुष्ठु शोभनं कृत्वा बद्धस्य । कथं सुसंयतस्य । पंचांग्या पंचानामंगानां चतुर्णां पादानां मुखसहितानां समाहारः पंचांगी बंधविशेषस्तया पंचांग्या । बंधस्यानंतरं वाजिनं कशया चर्मवध्र्या इत्येवं ताडयेत् । यथा स वाजी मूर्धानमुन्नमयन्नुत्क्षिपन् वेगेन बलेनाऽऽक्रांत्या शल्यमुद्धरेत् ।

**एवं वा शाखायां कल्पयेत्तरोः ॥ ३० ॥**

अथवैवमनेन प्रकारेण वारंगं वक्रतां नीत्वा धनुर्ज्यया सुबद्धं संपाद्य सुसमाहितो भिषग्वृक्षस्य शाखामानमय्य धनुर्ज्यया सुबद्धं तस्यां बध्नीयाच्छल्याकर्षणार्थम् । अत्र च या शाखा किंकरहस्तादिमुक्तमात्रोर्ध्वमुन्नमय्य मनाक् शल्यमुद्धरति तादृशी कल्पनीया ।

**बद्ध्वा दुर्बलवारंगं कुशाभिः शल्यमाहरेत् ।**

दुर्बलं तनु वारंगं यस्य शल्यस्य तच्छल्यं कुशाभिर्वंशादिकंबिसाभिर्बद्ध्वा शल्यमाहरेत् ।

**श्वयथुग्रस्तवारंगं शोफमुत्पीड्य युक्तितः ॥ ३१ ॥**

श्वयथुना ग्रस्तमाच्छादितं वारंगं यस्य शल्यस्य तच्छल्यमाहरेत् । कथम् । युक्तितो यथा युज्यते तथा शोफमुत्पीड्योर्ध्वं पीडयित्वा ।

**मुद्गराहतया नाड्या निर्घात्योत्तुंडितं हरेत् ।**

उत्तुंडितं शल्यं बुद्बुदवदभिमुखीभूतं नाड्या निर्घात्य चालयित्वा हरेत् । किंभूतया । मुद्गरेणाऽहतया मुद्गरग्रहणमुपलक्षणार्थम् । पाषाणादिभिरप्याऽऽहतयोत्तुंडितमाहरेदिति वेद्यम् ।

**तैरेव चाऽनयेन्मार्गममार्गोत्तुंडितं तु यत् ॥ ३२ ॥**

तैरेव मुद्गरादिभिराहतैरमार्गेणोत्तुंडितममार्गोत्तुंडितं मार्गमानयेत् प्रापयेत् ।

**मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा ।**

कर्णः कर्णौ वा विद्येते येषां ते कर्णिनो भल्लादयस्तेषां कर्णं मृदित्वा भंक्त्वा शल्यं निर्हरेत् । अथवा नाड्यास्येन नाडीमुखेन निगृह्य निर्हरेत् । नाडी पंचमुखाच्छिद्रेत्येवमादिग्रंथनिर्दिष्टैर्नाडीयंत्रैर्निर्हरेदित्यर्थः ।

**अयस्कांतेन निष्कर्णं विवृतास्यमृजुस्थितम् ॥ ३३ ॥**

अयस्कांतेन लोहाकर्षकमणिविशेषेण निष्कर्णं शल्यं तथा विवृतमुखं ऋजु स्पष्टं कृत्वाऽवस्थितं निर्हरेत् ।

**पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत् ।**

पक्वाशये स्थितं शल्यं विरेचनैर्विशेषेण निर्हरेत् ।

**दुष्टवातविषस्तन्यरक्ततोयादिचूषणैः ॥ ३४ ॥**

दुष्टवातादीनि चूषणैर्निर्हरेत् । चूषणैरिति बहुवचननिर्देशाच्छृंगादिभिरिति बोध्यम् ।

**कंठस्रोतोगते शल्ये सूत्रं कंठे प्रवेशयेत् ।**
**बिसेनात्ते ततः शल्ये बिसं सूत्रं समं हरेत् ॥ ३५ ॥**

कंठस्रोतःस्थे शल्ये सूत्रं कार्पासादिजं बिसेन कंठे प्रवेशयेत् । बिससंलग्नं सूत्रं कृत्वा शल्यनिर्हरणाय प्रवेशयेदित्यर्थः । आत्ते गृहीते शल्ये बिससंलग्नेऽनंतरं शल्यं बिससूत्रं समं तुल्यकालमाहरेत् ।

**नाड्याऽग्नितापितां क्षिप्त्वा शलाकामद्भिःस्थिरीकृताम् ।**
**आनयेज्जातुषं कंठात्**

जातुषे शल्ये कंठस्रोतःप्रविष्टे तज्जातुषं शल्यं कंठादानयेत् । कथमित्याह । शलाकां कंठे क्षिप्त्वा । कथम् । नाड्या नाडीयंत्रेण प्रक्षिप्य कंठदाहपरिहरणार्थम् । कीदृशीं शलाकाम् । अद्भिः स्थिरीकृतां निर्वापणद्वारेण । तां तथाविधां शलाकां कृत्वा नाड्यैव जातुषं शल्यं कंठादानयेदाकर्षयेत् । जातुषमित्यत्र त्रपुजतुनोः षुगित्यण् षुगागमश्च ।

**जतुदिग्धामजातुषम् ॥ ३६ ॥**

अजातुषं दारुवेण्वादिमयं शल्यं कंठस्रोतःस्थितं जतुदिग्धां लाक्षालिप्तां शलाकामग्नितापितां नाड्या क्षिप्त्वा पूर्ववदपहरेत् । जतुदिग्धामित्युपलक्षणार्थम् । सिक्थादिदिग्धामपि । यथा शलाकया हर्तुं प्रयुज्यते तथा कृत्वेति वेद्यम् ।

**केशोंदुकेन पीतेन द्रवैः कंटकमाक्षिपेत् ।**
**सहसा सूत्रबद्धेन वमतः**

कंटकं मत्स्यादिकं मांससंगेन भुक्तं कंठस्रोतसि स्थितं द्रवैः पानीयादिभिः सह पीतेन केशोंदुकेनाऽपि क्षिपेत् । केशानां समूहः केशोंदुकं तेन । किंभूतेन केशोंदुकेन । सूत्रबद्धेन सूत्रग्रथितेन । वमतो वमनमाचरतः । कंटकमेकदेशसक्तसूत्रं सहसैवाऽक्षिपेत् । एवं च वमनद्रव्यसंस्कृतैर्द्रवैः केशोंदुकं पातव्यमित्यवतिष्ठते ।

**तेन चेतरत् ॥ ३७ ॥**

तेन कंटकेनेतरत् केशोंदुकं प्रमादपीतमाहरेत् । क्षतकंठश्च त्रिफलां मधुघृतसितोपेतामनुकंठं लिह्यात् । सुश्रुते चोक्तम् । अस्थिशल्यमन्यद्वा तिर्यक्कंठासक्तमवेक्ष्य केशोंदुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकंठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत् । मृदुना वा दंतधावनकूर्चकेनापहरेत् प्रणुदेद्वेति ।

**अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ।**

मुखनासागतं शल्यं मुखनासाभ्यामाक्रष्टुमशक्यमाहर्तुं यन्न शक्यते तत्परतो नुदेत्प्रकृतत्वान्मुखात् परतो नासायाश्च परतः । तस्माद्येनकेनाचिदुपायेन कोष्ठं नयेदिति गम्यते ।

**अप्पानस्कंधघाताभ्यां ग्रासशल्यं प्रवेशयेत् ॥ ३८ ॥**

ग्रासः शल्यमिव ग्रासशल्यं कंठासक्तमंतः कोष्ठांतं नयेत् । कथम् । अपां पानमप्पानं तेन । तथा स्कंधघातेन । स्कंधस्य मुष्ट्यादिना हननं स्कंधघातः ।

**सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ।**

अक्षिणी च व्रणश्च तत्र शल्यान्यक्षिव्रणशल्यानि सूक्ष्माणि च तान्यक्षिव्रणशल्यानि च सूक्ष्माक्षिव्रणशल्यानि तानि क्षौमादिभिर्निर्हरेत् । योग्यतावशात् कदाचित् क्षौमेन कौशेयेन कदाचिद्वालेन कदाचिज्जलेन च निर्हरेत् ।

नदीतडागादिपतितस्याऽकस्मान्नरस्याऽवश्यं यज्जलमंतरे प्रविशेत्तज्जलं शल्यवदंतःस्थितं निर्हार्यमिति तदुपायं दर्शयितुमाह ।

**अपां पूर्णं विधुनुयादवाक्शिरसमायतम् ॥ ३९ ॥**
**वामयेद्वाऽऽमुखं भस्मराशौ वा निखनेन्नरम् ।**

अपां पूर्णं नरं विधुनुयात् । किंभूतम् । अवाक्शिरसमवागधः शिरो मूर्धा यस्य तम् । तथा आयतं दीर्घं कृत्वा । तथा तं नरं वामयेद्वैद्यः । अथवा आमुखं मुखं यावद्भस्मराशौ न्यसेत् । तथोक्तम् । उदकपूर्णस्य चक्राद्यारोपणेनोदकनिःसारः कार्य इति ।

**कर्णेऽबुपूर्णे हस्तेन मथित्वा तैलवारिणी ॥ ४० ॥**
**क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा ।**

कर्णेऽबुना पूर्णे सति तैलवारिणी क्षिपेत् । किंकृत्वा । हस्तेन मथित्वा विलोड्य । तथाऽधोमुखं कर्णं हन्याद्वा । अथवा चूषयेच्छृंगादिभिः ।

**कीटे स्रोतोगते कर्णं पूरयेल्लवणांबुना ॥ ४१ ॥**
**शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः ।**

कीटे पिपीलिकाशतपद्यादौ स्रोतःस्थिते तोदगौरववेदनादिभिरनुमिते कर्णं लवणांबुना पूरयेत् । अथवा शुक्तेन पूरयेत् । किंभूतेन । सुखोष्णेन । मृते पुनस्तस्मिन् कीटे क्लेदहरो विधिः कार्यः ।

**जातुषं हेमरूप्यादिधातुजं च चिरस्थितम् ॥ ४२ ॥**
**ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ।**

जातुषादिशल्यं देहजेनोष्मणा चिरं स्थितं प्रायशो विलीयते ।

**मृद्वेणुदारुशृंगास्थिदंतवालोपलानि च ॥ ४३ ॥**
**शल्यानि न विशीर्यंते शरीरे मृन्मयानि वा ।**

मृद्वेणुदार्वादिशल्यं देहोष्मणा न विलीयते । उपलशब्दस्य नपुंसकत्वं चिंत्यम् ।

**विषाणवेण्वयस्तालदारुशल्यं चिरादपि ॥ ४४ ॥**
**प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ।**

विषाणादिशल्यं प्रायो देहजेनोष्मणा न विलीयते । अपि

निर्भुज्यते पृथग्भवति । चिरादपि न पच्यते । कुत इत्याह । तद्यस्माद्विषाणादिशल्यं शीघ्रमेव पलासृजी पचति । अतो मांसरक्तपाकाद्देहजेन चोष्मणा प्रायो निर्भुज्यते ।

**शल्ये मांसावगाढे च स देशो न विदह्यते ॥ ४५ ॥**
**ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः ।**
**तीक्ष्णोपनाहपानान्नघनशस्त्रपदांकनैः ॥ ४६ ॥**
**पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ।**

मांसावगाढे मांसांतर्निगूढे शल्ये सति यदि स देशो न विदह्यते पच्यते । यत्र तु तिष्ठति शल्यं ततस्तं मर्दनेन स्वेदेन वा कदाचित् शुध्या वमनादिकया कदाचित्कर्षणेन कदाचिद्बृंहणेन कदाचित्तीक्ष्णोपनाहेन कदाचित्तीक्ष्णान्नपानेन । तीक्ष्णशब्दस्य प्रत्येकं संबंधः । कदाचिद्घनशस्त्रपदांकनैः । शस्त्रस्य पदानि । घनानि संहतानि च तानि शस्त्रपदानि च तेषामंकनं लक्षणं तैः । मर्दनादिभिरेकेन द्वाभ्यां सर्वैर्वा यथाक्रमं पूर्वं शल्यं पाचयित्वा ततः पाटनैर्व्रणभेदनैर्हरेत् ।

**शल्यप्रदेशयंत्राणामवेक्ष्य बहुरूपताम् ।**
**तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथा हरेत् ॥ ४७ ॥**

शल्यानि धातुविषाणवेण्वादिजानि । प्रदेशास्त्वङ्मांसादयः । यंत्राणि स्वस्तिकादीनि । तेषां बहुरूपतामवेक्ष्य नानाकारतां ज्ञात्वा तैस्तैरुपायैरुक्तानुक्तैर्विज्ञानसाधनैः कारणैर्मतिमान् भिषक् जानीयात् शल्यं तथाऽऽकर्षेदिति । संग्रहे चोक्तम् । व्रणे प्रसन्ने प्रांतेषु नातिस्पर्शासहिष्णुषु । अल्पे शोफे च तापे च निःशल्यमिति निर्दिशेदिति शल्याहरणविधिः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

अस्मादनंतरं शस्त्रकर्मविध्यध्यायः प्रस्तूयते । यतोऽनंतरातीतेऽध्याये शस्त्रेण वा विशस्याऽऽदावित्युक्तमतस्तस्यैव शस्त्रकर्मणो विधानं वक्तुं युक्तमित्याह ।

**अथाऽतः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ।**

शस्त्रस्य कर्म शस्त्रकर्म शस्त्रावधारणाय क्रिया तस्य विधिरितिकर्तव्यता शस्त्रकर्मविधिस्तम् । शेषं पूर्ववत् ।

अथ ग्रंथारंभे निर्देष्टुं युक्तस्याऽपि शस्त्रविधेः पश्चाद्ययं शस्त्रकर्मविधिस्ततः शस्त्रकर्मग्रंथ एवाऽऽदौ निर्देष्टुं युक्तः प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरमित्यादि न तु व्रणः संजायते प्राय इत्यादि । तत्रोच्यते । शस्त्रकर्मविधेः पूर्वं विषयो निर्देष्टुं युक्तो यः शस्त्रकर्मविधेरुपाय इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह ।

**व्रणः संजायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।**
**तमेवोपचरेत्तस्माद्रक्षन्पाकं प्रयत्नतः ॥ १ ॥**
**सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ।**

प्रायो व्रणः पाकात्संजायते । किंभूतात् । श्वयथुः पूर्वो यस्य पाकस्य स श्वयथुपूर्वकस्तस्मात् । श्वयथुपाकमंतरेणाऽपि शस्त्राद्यभिघाताद्व्रणो जायत इति प्रायोग्रहणम् । यस्माच्छ्वयथुपूर्वकात्पाकाद्व्रणः संजायतेऽतस्तमेव श्वयथुमुपचरेदुपक्रमेत् । किं कुर्वन् । पाकं प्रयत्नेन रक्षन् । कथम् । सुशीतलेपादिभिः । सुशीताभ्यां स्पर्शतो वीर्यतश्च लेपसेकाभ्यां तथाऽस्रमोक्षणेन तथा संशोधनेन वमनेन विरेचनेन वा । आदिग्रहणात्कषायपानघृतपानादीनां ग्रहणम् ।

तस्य च शोफस्याऽऽमपच्यमानपाकाख्या अवस्थास्तिस्रो भवंतीत्याह ।

**शोफोऽल्पोल्पोष्णरुक्चामः सवर्णः कठिनः स्थिरः**

आमो यः शोफः स प्रमाणतोऽल्पस्तथाऽल्पोष्णस्तथाऽल्परुगल्पशूलस्तथा सवर्णस्त्वक्समानवर्णस्तथा कठिनो न मृदुः पक्ववत्तथा स्थिरो न पक्ववच्चलः । स आमः साम इति सोऽचि लोपे चेत्पादपूरणमिति सुलोपः ।

**पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः ।**
**स्फुटतीव सनिस्तोदः सांगमर्दविजृंभिकः ॥ ३ ॥**
**संरंभारुचिदाहोषातृड्ज्वरानिद्रतान्वितः ।**
**स्त्यानं विष्यंदयत्याज्यं व्रणवत्स्पर्शनासहः ॥ ४ ॥**

स शोफः पच्यमानो विवर्णो न त्वक्समानवर्णः । तथा रागी लोहितवर्णः । तथा बस्तिरिवाततस्तब्धो वातपूर्णदृतिवत् । छागादीनां मूत्राधारो बस्तिरित्युच्यते । तथा स्फुटतीव सनिस्तोदः सह निस्तोदेन वर्तते सनिस्तोदः । नियतप्रबंधप्रवृत्ता रुङ्निस्तोदो विच्छिन्ना तु शूलमित्युच्यते । सांगेत्यादि । अंगानां मर्दः क्षोभः । सहांगमर्दविजृंभिकाभ्यां वर्तते सांगमर्दविजृंभिकः । तथा संरंभादिभिर्युतः । अन्वितशब्देन प्रत्येकं संरंभादीनां संबंधः । संरंभो वाग्विषयातीतानां स्वसंवेद्यानामनेकरूपाणां सांगपीडनविघट्टनच्छेदनदंशनादीनां रुजां प्रादुर्भावः । सर्वांगीणस्तीव्रो दाहः । अरतिमान् दाह उषा उच्यते । तथा स पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति । तथा स्पर्शनं न सहते व्रणवत् ।

**पक्वेऽल्पवेगता म्लानिः पांडुता वलिसंभवः ।**
**नामोंऽतेषून्नतिर्मध्ये कंडूशोफादिमार्दवम् ॥ ५ ॥**
**स्पृष्टे पूयस्य संचारो भवेद्बस्ताविवांभसः ।**

पक्वे सत्यल्पवेगता भवति नतु संरंभः । तथा म्लानिर्म्लानत्वम् । तथा पांडुत्वं वलीनां चोद्भवः । तथांऽतेषु पर्यंतेषु नामो निम्नत्वं मध्य उन्नतिः । नामोंऽतेष्वित्युक्तयैव मध्य उन्नतत्वं लब्धमेव पुनरुन्नतित्वग्रहणं त्वतिशयार्थम् । तेनोत्तुंडत्वं गम्यते । तथा कंड्वादिमृदुत्वं स्यात् । तथा स्पृष्टे तस्मिन् सति

पूयस्य संचारो भवति । बस्तेरंतः स्थितस्य यथांऽभसः संचारः ।

**शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ६**
**रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ।**

अनिलं विना शूलं न भवति । पित्तमंतरेण दाहो न स्यात् । कफोदयाद्विना शोफो न स्यात् । शोफः कफादिति वक्तव्य उदयग्रहणं विशेषद्योतनार्थम् । रक्ताद्दते रक्तंविना रागस्य लौहित्यस्य संभवो न । तेन कफाधिकैः सर्वैर्दोषैः शोणितसहितैः श्वयथुपाकः स्यादिति गम्यते ।

**पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षितः ॥ ७ ॥**
**वलीभिराचितः श्यावः शीर्यमाणतनूरुहः ।**

पाके चातिवृत्तेऽतिक्रांते सुषिरोंऽतस्थः शोफदेशः संपद्यते । तथा तनुस्त्वगस्मिन् स तनुत्वक् । तथा दोषभक्षितः । दोषशब्देनेह पूय उच्यते । तेन भक्षितत्वात्सुषिरत्वं तनुत्वक्त्वं चाऽस्य । तथा वलीभिराचितो व्याप्तः । तथा श्यामवर्णः । तथा शीर्यमाणतनूरुहः पतद्रोमा ।

**कफजेषु तु शोफेषु गंभीरं पाकमेत्यसृक् ॥ ८ ॥**
**पक्वलिंगं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।**
**त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥९॥**
**रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।**

यद्यपि त्रिभिरेव दोषैः शोणितान्वितैः पाको जायते तथाऽपि कफजेष्वित्युक्तेरधिकतरकफेष्विति गम्यते । कफजेष्विति बहुवचननिर्देशाद्देहदेशबहुत्वाद्येषु देहदेशेषु कफो जायते तेषु कफजेषु शोफेषु गंभीरं पाकं दुर्लक्ष्यमतिशयेनांतर्निगूढत्वादसृक् पाकमेति । अत एव पक्वलिंगं पक्वलक्षणमस्पष्टं दुर्लक्ष्यं स्यात् । तत्र शीतगुणयोगाच्छीतश्चासौ शोफश्च तस्य भावः शीतशोफता । तथा त्वक्समानवर्णत्वम् । तथा रुजः स्तोकत्वम् । तथा घनस्पर्शत्वं निबिडस्पर्शता स्यादश्मवत् । हस्तादिना स्पृष्टे पाषाणतुल्यः स्पर्श उपलभ्यते । तं तथाभूतं श्वयथुपाकं रक्तपाकमित्येवं प्राज्ञो धीमान् ब्रूयान्न तु शोफं पक्वमिति कथयेत् । कथम् । मुक्तसंशयः । शोणितपाको नाऽत्र शोफ इत्येवं वदेदित्यर्थः ।

**अल्पसत्वेऽबले बाले पाके चाऽत्यर्थमुद्धते ॥ १० ॥**
**दारणं मर्मसंध्यादिस्थिते चाऽन्यत्र पाटनम् ।**

अल्पसत्वे सति तथा दुर्बले तथा बाल एतेषु जाते श्वयथौ तथा पाकाद्वात्यर्थमुद्धतेऽतिक्रांते च श्वयथौ दारणं कार्यं व्रणप्रतिषेधदृष्टैर्दारणद्रव्यैः । यथा । गुग्गुल्वतसिगोदंतस्वर्णक्षीरीकपोतविट् । क्षारौषधानि क्षाराश्च पक्वशोफविदारणमिति । न केवलमल्पसत्व इत्यादिके श्वयथौ दारणं कार्यं यावन्मर्मसंध्यादिस्थितेऽपि । पाटनं शस्त्रेण । अन्यत्रेति दारणविषयानिर्दिष्टे स्थाने शस्त्रेण पाटनं कार्यम् ।

**आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ॥ ११ ॥**
**रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ।**

आमस्य शोफस्य शस्त्रेण छेदे सति सिरास्नायुव्यापदो भवंति । तथाऽसृजोऽतिस्रावः स्यात् । तथा रुजाया अतिवृद्धिस्तथा विदरणं विसर्पो वा क्षतोत्थः स्यात् ।

**तिष्ठन्नंतः पुनः पूयः सिरास्नाय्वसृगामिषम् ॥१२॥**
**विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ।**

अंतरंतरे तु पूयस्तिष्ठन् सन् सिरादीन् दहति । कः कमिव । अनलस्तृणोलपमिव ।

**यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥**
**श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।**

यः पुरुषोऽज्ञानान्मोहादामं छिनत्ति । योऽपि पक्वमुपेक्षते न पाटयति । तौ नरौ श्वपचतुल्यावातुरव्यापादनात् । तद्व्यापादनं तु कुतो विधत्त इत्याह । अनिश्चितकारिणावसमीक्ष्यविधायिनौ यतः ।

**प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४ ॥**
**पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः ।**

शस्त्रकर्मणः प्राक् पूर्वमातुरमिष्टमन्नं यद्व्रणेऽपथ्यमपि तद्बलाधानार्थं भोजयेत् । तथा यो वेदनाक्षमः शस्त्रव्यथामसहिष्णुस्तमातुरं मद्योचितं तीक्ष्णं तीव्रमदं मद्यं पाययेत् ।

एवं सति यत्स्यात्तदाह ।

**न मूर्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५ ॥**

न मूर्छत्यन्नसंयोगादन्नोपयोगान्न मुह्यति । तीक्ष्णमद्यपानान्मत्तः सन् शस्त्रं न्यस्तमंगे न बुध्यते न चेतयते । तत्कदर्थनया न कंपत इत्यर्थः ।

**अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ।**

अश्मशब्देनाऽश्मरी गृह्यते । मूढगर्भादिभिर्य आतुरस्तं वर्जयित्वेष्टभोजनं मद्यपानं च कारयितव्यम् ।

**अथाऽहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६ ॥**
**संमुखो यंत्रयित्वाऽशु न्यस्येन्मर्मादि वर्जयन् ।**
**अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥**
**सकृदेवाऽऽहरेत्तच्च**

अथशब्देन मंगलवाचिना संग्रहोक्तमर्थं सूचयति । यथा सुमुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतमित्यादि । आहृतं ढौकितं समीपानीतमुपकरणं तत्कालयोग्यं यंत्रशस्त्राग्निजांबवौष्टपिचुप्लोतस्नेहनमधुकल्कादिकं यस्य तमातुरं प्राङ्मुखं पूर्वाभिमुखं वैद्यः संमुखः प्रत्यङ्मुखो यंत्रयित्वा शस्त्रमाशु न विलंबितं न्यस्येन्निक्षिपेत् । मर्मादि वर्जयन् मर्मसिरासंध्यादीन् परिहरन् । तथाऽनुलोमं कृत्वा न प्रातिलोम्येन । किंभूतं शस्त्रम् । सुनिशितमतितीक्ष्णम् । तच्च शस्त्रमापूयदर्शनादाहरेन्न त्वधिकं तत्रैव स्थाप्यम् । तच्च सकृदेव न बहून् वारान्न्यसेत् ।

**पाके तु सुमहत्यपि ।**
**पाटयेद्‍द्व्यंगुलं सम्यग्द्व्यंगुलत्र्यंगुलांतरम् ॥ १८ ॥**
**एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।**
**अंगुलीनालवालैर्वा यथादेशं यथाशयम् ॥ १९ ॥**

पाके तु सुमहत्यपि पाटयेत् । द्व्यंगुलं द्व्यंगुलपरिमाणं व्रणं सम्यकुर्यान्नाऽधिकम् । द्व्यंगुलेत्यादि । अंगुलद्वयमथवांऽगुलत्रयमंतरीकृत्य पुनरन्यं व्रणं कुर्यान्न त्वासन्नम् । तथैषिण्या सम्यगेषित्वा परितः समंतात्सुनिरूपितं सुपर्यालोचितम् । न केवलमेषिण्या यावदंगुल्या नालेन पद्मोत्पलादिजेन वालैर्वा वराहादिसंबंधिभिरन्वेष्य यथादेशं यथाशयं व्रणं कुर्यात् ।

तं च प्रदेशं दर्शयितुमाह ।

**यतो गतां गतिं विद्यादुत्संगो यत्र यत्र च ।**
**तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ २० ॥**
**आयतं च विशालं च यथा दोषो न तिष्ठति ।**

यतो यस्मिन्प्रदेशे गतां दूरयातां गतिं नाडीं जानीयात्तस्मिन् प्रदेशे व्रणं कुर्यात् । यत्र यत्र श्वयथुप्रदेश उत्संगमुन्नतिं विद्यात्तत्र तत्र प्रदेशे व्रणं कुर्यात् । किंभूतं व्रणम् । सुष्ठु विभक्तौ पार्श्वापरपार्श्वादिविभागौ यस्य तं तथाविधम् । तथा निराशयम् । न विद्यत आशयः पूयादेर्दोषस्य स्थानं यस्य तथाभूतं निराशयं कुर्यात् । तथाऽऽयतं दीर्घम् । तथा विशालं विस्तीर्णं कुर्यात् । एवं कृते सति दोषः पूयाख्यो न तिष्ठति न संस्थानं लभते ।

**शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथुः ॥ २१ ॥**
**असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।**

वैद्यस शस्त्रकर्मणि पाटनादौ शौर्यं धैर्यं शस्यते । तथा आशुक्रिया चतुरहस्तता । तथा तीक्ष्णं शस्त्रम् । तथा स्वेदश्च वेपथुश्च न विद्यमानौ तौ यस्य स एवम् । स्वेदाभावः कंपाभावश्चेत्यर्थः । असंमोहस्तत्कालोचितकार्यकरणे सम्यक्प्रवृत्तिः । ननु शौर्यं वैद्यस्य शस्यत इत्युक्त्यैव स्वेदकंपाभावः प्रत्यपादि । तथा च स्वेदवेपथू भीरोरेव संभवतो न शूरस्येत्यनर्थकमस्वेदवेपथुरिति । अत्राऽऽचक्ष्महे । सत्यमेवैतौ भीरुगुणौ किंतूष्णकालवशात् प्रकृतिवशाद्वा यस्य स्वेदो वेपथुश्च भवतस्तत्परिहारार्थमेतदुक्तम् । सस्वेदस्य हि वैद्यस्य शस्त्रकर्म कर्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा संपद्यते तद्वत्सकंपस्याऽपि । तस्मात्तत्परिहारो युक्तः ।

**तिर्यक्छिंद्याल्ललाटभ्रुदंतवेष्टकजत्रुणि ॥ २२ ॥**
**कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवंक्षणे ।**

ललाटादिदेशेषु तिर्यक्छेदः कार्यः । दंतवेष्टको दंतपिंडिका दंताधार उच्यते ।

**अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २३ ॥**

अन्यत्र प्रदेशे तिर्यक्छेदनात् सिराणां स्नायूनां व्यापत्तिः स्यात् ।

**शस्त्रेऽवचारिते वाग्भिः शीतांभोभिश्च रोगिणम् ।**
**आश्वास्य परितोंऽगुल्या परिपीड्य व्रणं ततः ॥२४**
**क्षालयित्वा कषायेण प्लोतेनांभोऽपनीय च ।**
**गुग्गुल्वगुरुसिद्धार्थहिंगुसर्जरसान्वितैः ॥ २५ ॥**
**धूपयेत्पटुपत्रग्रंथानिंबपत्रैर्घृतप्लुतैः ।**

शस्त्रेऽवचारिते न्यस्ते सति वाग्भिस्तत्कालोचिताभिर्मधुराभिः स्वस्थो जातोऽसीत्येवंप्रायाभिस्तथा शीतांभोभिः परिषेकादिभिरातुरमाश्वास्याऽनंतरं व्रणं परितः समंतादंगुल्या परिपीड्य पूयादिदोषनिर्हारायाऽनंतरं कषायेण मधुयष्ट्यादिसाधितेन क्षालयित्वा ततः प्लोतेन कार्पासादिजवस्त्रखंडेन जलमपनीय पानीयार्द्रतां निर्हृत्याऽनंतरं व्रणं गुग्गुल्वादिभिर्निंबपत्रांतैर्धूपयेत् । किंभूतैः । घृतप्लुतैः । प्लुतग्रहणाद्बहुघृतैरिति द्योतयति । संग्रहे चोक्तम् । गुग्गुल्वादिभिरेवं शयनासनादि द्विरह्नो धूपयेदिति ।

**तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥**
**दिग्धां वर्तिं ततो दद्यात्तैरेवाऽच्छादयेच्च तम् ।**

ततोऽनंतरं वर्तिं कार्पासादिमयीं व्रणांतः प्रवेशयेद्वैद्यः । किंभूताम् । दिग्धाम् । कैः । तिलकल्काज्यमधुभिः । वातव्रणे तिलपिष्टदिग्धां पित्तव्रणे घृतदिग्धां कफव्रणे मधुदिग्धाम् । केचित्तु सर्वैरेव तैर्युगपद्दिग्धामित्याहुः । नच केवलं तिलादिभिर्यावद्यथास्वं यद्यस्य दोषस्य स्वं भेषजं तेन च दिग्धाम् । तैरेव तिलकल्कादिभिर्व्रणांतः प्रविष्टां तां वर्तिमाच्छादयेत्स्थगयेत् ।

**घृताक्तैः सक्तुभिश्चोर्ध्वम्**

ऊर्ध्वं तदुपरिष्टाद्घृतयुक्तैः सक्तुभिराच्छादयेत् । संग्रहे चोक्तम् । नातिभृष्टयवसक्तुभिर्घृताक्तैर्भोजनांतेंऽभसा दक्षिणांगुलीभिः सुमृदितैरेवाच्छाद्येति ।

**घनां कवलिकां ततः ॥ २७ ॥**
**निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहितम् ।**
**पार्श्वे सव्येऽपसव्ये वा नाऽधस्तान्नैव चोपरि॥२८॥**

ततो व्रणांतःप्रविष्टवर्तिच्छादनानंतरं कवलिकां बहुवस्त्रखंडपुटनिर्वर्तितां निधाय संस्थाप्य पट्टेन निबिडवस्त्रखंडेन प्रकृतत्वाद्व्रणं बध्नीयात् । कथम् । युक्त्या दोषकालानुगुणया । अत एव संग्रहे जगाद । वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् । तथोक्तम् । शस्त्रक्षतरुजायां तु प्रततायां यष्टीमधुकसर्पिषोष्णेन व्रणं सिंचेत् । उदकुंभादापो गृहीत्वा प्रोक्षन् परित इति । कथं बध्नीयात् । सुसमाहितं कृत्वा च न हेलया । वामपार्श्वे दक्षिणपार्श्वे वाऽधस्ताच्च न बध्नीयान्नैव चोपर्यूर्ध्वे बध्नीयात् ।

**शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।**
**धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः॥२९॥**

तथा शुचयः सूक्ष्मसूत्रा दृढाश्च पट्टा हिताः । तथा कवलिकाः सविकेशिकाश्च व्रणे हिताः । किंभूताः । धूपितास्तथा मृदवस्तथा श्लक्ष्णास्तथा वलीरहिताः ।

**कुर्वीताऽनंतरं तस्य रक्षां रक्षोनिषिद्धये ।**
**बलिं चोपहरेत्तेभ्यः**

अनंतरं रोगिणः कृतशस्त्रकर्मणो व्रणे रक्षां कुर्यात् । किमर्थम् । रक्षोनिषिद्धये पिशिताशनराक्षसादिनिषेधाय । तेभ्यश्च रक्षोभ्यो बलिमुपहरेद्द्यात् ।

**सदा मूर्ध्नाऽवधारयेत् ॥३०॥**
**लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।**
**वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१॥**

सर्वकालं चौषधीर्मूर्ध्ना धारयेत् । ता एवाह । लक्ष्मीमित्यादि । लक्ष्मीं पद्मचारिणीम् । गुहां पृश्निपर्णीम् । अतिगुहां शालिपर्णीम् । जटिलां मांसीम् । ब्रह्मचारिणीं ब्रह्मयष्टिकाम् । वचामुग्रगंधाम् । छत्रां शतपुष्पाम् । अतिच्छत्रां विषाणिकाम् ।

**ततः स्नेहदिनेहोक्तं तस्याऽचारं समादिशेत् ।**

ततोऽनंतरं तस्य व्रणिन आचारमादिशेत् । कतमम् । स्नेहदिनेहोक्तम् । स्नेहस्य दिनं स्नेहदिनं स्नेहपानोपलक्षितमहस्तत्रेहा चेष्टा तस्यामुक्तं स्नेहपानविध्युपदिष्टमुष्णोदकोपचारी स्यादित्यादिकम् ।

**दिवास्वप्नो व्रणे कंडूरागरुक्शोफपूयकृत् ॥ ३२ ॥**

दिवास्वप्नो व्रणे कंड्वादिकृत् । तस्माद्व्रणिनाऽहःस्वप्नो न सेव्यः।

**स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।**
**शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात्॥३३॥**

स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैः पूर्वं स्वस्थानाच्चलितं पश्चात्स्रुतं तस्मिंश्चलितस्रुते शुक्रे सत्यसंसर्गेऽपि तासामसंबंधेऽपि मैथुनमंतरेणाऽपि व्यवायजान्मैथुनोत्थान् दोषानवाप्नुयात् । तस्मात्स्त्रीस्मरणसंस्पर्शदर्शनादि वर्जनीयमित्यर्थः ।

**भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।**
**मसूरमुद्गतुवरीजीवंतीसुनिषण्णकाः ॥ ३४ ॥**
**बालमूलकवार्ताकतंडुलीयकवास्तुकम् ।**
**कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥**
**सैंधवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।**
**जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥३६॥**
**भुंजानो जांगलैर्मांसैः शीघ्रं व्रणमपोहति ।**

भोजनं तु यथासात्म्यं यद्यस्य सात्म्यं यवादि । तथा जीवंत्यादिशाकं च तथा सैंधवादिकम् । पुराणशालिभक्तं स्निग्धं सस्नेहं तथाऽल्पं जांगलैर्मांसैः सह भुंजान उष्णोदकोत्तरं यथा भवत्येवं व्रणी शीघ्रं व्रणमपोहति ।

**अशितं मात्रया काले पथ्यं याति जरां सुखम्॥३७**
**अजीर्णे त्वनिलादीनां विभ्रमो बलवान् भवेत् ।**
**ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥**

मात्रया काले भुक्तं पथ्यं सुखेन जरां याति । तस्मात् पथ्यं मात्रया काले भोक्तव्यम् । अजीर्णं तु कथंचिन्न कार्यम् । यतोऽजीर्णाद्वातादीनां बलवान् विभ्रमः क्षोभः स्यात् । तस्मात्क्षोभाच्छोफादीन् प्राप्नुयात् ।

**नवधान्यं तिलान् माषान् मद्यं मांसं त्वजांगलम् ।**
**क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥**
**यच्चाऽन्यदपि विष्टंभि विदाहि गुरु शीतलम् ।**
**वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥**

नवधान्यादि त्यजेत् । यतोऽयं नवधान्यादिवर्गो व्रणिनः सर्वान् दोषान् करोति । संग्रहे चोक्तम् । नवधान्यं विष्टंभि माषकलायकुलत्थनिष्पावशिंबीशीतांबुमद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारानुपामिषाणि वर्जयेदिति। शीतलं शीतांब्वादि ।

**मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणम् ।**

मद्यं तीक्ष्णोष्णादिगुणं द्राग्व्रणं व्यापादयेत् । तस्मान्मद्यमीदृशं वर्ज्यं नापरम् । तथा च तंत्रांतरे । सस्नेहं मधुरप्रायं नातितीक्ष्णमकर्कशम् । तनु यत्सुखपेयं च मार्द्वीकेषु तदुत्तममित्युक्तम् । तस्मान्मार्द्वीकादिप्रायं रोध्रासवादिकं वा यन्मद्यं तत्सात्म्यत्वात्किंचित्पेयमेव ।

**बालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥**
**न तुदेन्न च कंडूयेच्चेष्टमानश्च पालयेत् ।**
**स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः॥४२॥**
**आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ।**

बालोशीरैश्चैनं व्रणं वीजयेत् । न चैनं परिघट्टयेत् । तथा न व्यथयेत् । नापि कंडूयेत् । व्यापारं च कुर्वन् व्रणिनं पालयेद्रक्षेत् । तथा स्निग्धादीनां कथाश्चित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽह्नाय व्रणमपोहति ।

**तृतीयेऽह्नि पुनः कुर्याद्व्रणकर्म च पूर्ववत् ॥ ४३ ॥**
**प्रक्षालनादि दिवसे द्वितीये नाचरेत्**

तृतीये दिवसे पुनरपि प्रक्षालनादि कर्म पूर्ववत् पूर्वेण व्रणकर्मणा तुल्यं कुर्यात् । द्वितीये तु दिवसे प्रक्षालनादि नाचरेत् । किमित्याह ।

**तथा ।**
**तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः ॥ ४४ ॥**

तथा तेन प्रकारेण व्रणस्तीव्रव्यथः संपद्यते । तथा विग्रथितः स प्रदेशो बहुभिर्ग्रंथिभिर्युक्तः स्यात् । तथा चिराच्चिरेण संरोहं याति रूढः संपद्यते ।

**स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम् ।**
**व्रणो न दद्यात्कल्कं च**

व्रणे व्रणाख्ये आधारे स्निग्धादिगुणयुक्तां विकेशिकां व्रणांतःप्रवेशयोग्यां वर्तिं न दद्यात्। श्लथां शिथिलां गाढां निबिडां दुर्न्यस्तां विषमन्यस्ताम्। अत्र चातिशब्दोऽर्थवशाद्गम्यमानो बोध्यत एव। संग्रहे स्पष्टं कृत्वोवाच। अतिस्नेहात्क्लेद इति। कल्कमप्यतिस्निग्धादिगुणयुक्तं व्रणे न योजयेत्। पिष्टमौषधं द्रवाप्लुतं कल्क इत्युच्यते।

किमिति स्निग्धादिगुणयुक्तां विकेशिकां कल्कं वा न दद्यादित्याह।

**स्नेहात्क्लेदो विवर्धते ॥ ४५ ॥**

यतः स्नेहात् क्लेदवृद्धिः।

**मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः।**
**श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४६ ॥**

अतिरूक्षत्वाच्च मांसच्छेदोऽतिव्यथा दरणं च। तथा विशेषाद्रक्तस्रावश्च। श्लथादिगुणयुक्तेन च व्रणमार्गस्याऽवघर्षणं स्यात्।

विकेशिका व्रणे कस्माद्दीयत इत्याह।

**सपूतिमांसं सोत्संगं संगतिं पूयगर्भिणम्।**
**व्रणं विशोधयेच्छीघ्रं स्थिता ह्यंतर्विकेशिका ॥४७॥**

विकेशिका व्रणांतरे स्थिता पूत्यादियुक्तं व्रणं विशोधयेद्यतस्तस्माद्व्रणेऽसौ योज्या। उत्संग उन्नतिः। पूयादिभक्षितमांसादिप्रदेशः शून्यो देहस्य गतिरुच्यते। पूयश्चासौ गर्भश्च स विद्यते यस्य स पूयगर्भी तम्।

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत्।**
**भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८ ॥**

व्यम्लं विदग्धं पक्वं व्रणमपक्वमित्यज्ञानात्पाटितम्। तथाविधैः श्वयथुपाचनैरन्नपानैस्तथाविधैश्चोपनाहैः सोल्बणकिण्वादिकल्पितैरुपाचरेत्। न च सर्वैरेवाविशेषणात्तैरुपाचरेदित्याह। नातीत्यादि। व्रणातिविरोधीन्यतिश्वयथुपाचनान्यम्लकटुकतीक्ष्णोष्णलवणप्रायाणि द्रव्याणि तथैवंप्रायाणि भोजनानि तैरुपचारैरपि तु किंचिदेव व्रणविरोधीनि यानि तैरुचितैरुपक्रमेदिति बोध्यम्। नातिशब्दप्रयोगात्।

**सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान्।**
**मेदोजान् लिखितान् ग्रंथीन् ह्रस्वाः पालीश्च कर्णयोः**
**शिरोक्षिकूटनासौष्ठगंडकर्णोरुबाहुषु।**
**ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥**
**गंभीरेषु प्रदेशेषु मांसलेष्वचलेषु च।**

सद्योव्रणानभिघातजान् विस्तीर्णमुखान् सद्यस्तत्क्षणादेव सीव्येत्। संकुचितवदनास्तु ते न सीव्याः अभिघाताज्जन्म येषां ते। सद्योव्रणानित्यभिघातजेष्वपि चिरकालस्थितेषु नायं विधिरिति द्योतयति। मेदोजान् ग्रंथीनालिख्य सूच्या सीव्येत्।

**न तु वंक्षणकक्षादावल्पमांसचले व्रणान् ॥ ५१ ॥**



**वायुनिर्वाहिणः शल्यगर्भान्क्षारविषाग्निजान्।**

वंक्षणादिस्थितानां व्रणानां गंभीरादिप्रदेशत्वात्सीवनं प्राप्तं तन्निषिध्यते। मांसलेषु स्थितेषु च व्रणान् सीव्येदित्युक्त्यैवाऽल्पमांसे चले स्थाने व्रणान्न सीव्येदित्यर्थे लब्धेऽल्पमांसांश्चलांश्च व्रणान्न सीव्येदिति वचनमतिशयार्थम्। जातुचिदभिघातजान्विवृतानप्येवंविधान् व्रणान्न सीव्येदिति गमयति। तथा वायुं निर्वहंति निःश्वसंति तान् वायुनिर्वाहिणो न सीव्येत्। तथा शल्यं गर्भे येषां तान् शल्यगर्भांस्तथा क्षारविषाग्निभ्यो जातान् व्रणान्न सीव्येत्।

सीवनात्पूर्वं यत्क्रियते तद्दर्शयति।

**सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥५२॥**
**प्रलंबि मांसं विच्छिन्नं निवेश्य स्वनिवेशने।**
**संध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ॥५३॥**
**सीव्येन्न दूरे नाऽसन्ने गृह्णन्नाऽल्पं न वा बहु।**

स्थानाच्चलितमस्थ्यपनीय निरस्य तथा शुष्करक्तं तृणानि रोमाणि चाऽपास्य तथा शस्त्रादिना प्रकर्षेण लंबि व्रणे यद्विद्यते मांसं तत्स्वनिवेशन आत्मीये स्थाने निवेश्य संस्थाप्य संध्यस्थि स्वे स्थाने संस्थाप्य स्थिते रक्तेऽस्रवद्रूपत्वं प्राप्ते सति व्रणं सीव्येत्। केन। स्नाय्वादिना तथा वल्कलैः। वल्कलान्यश्मंतकादित्वगुद्भवानि तैः। कथं सीव्येत्। न दूरे न विप्रकृष्टे न चासन्ने नाऽतिनिकटे गृह्णन्नाल्पं व्रणांशं नच बहु गृह्णन्।

**सांत्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥**
**अंजनक्षौमजमषीफलिनीशल्लकीफलैः।**
**सरोध्रमधुकैर्दिग्धे युंज्याद्बंधादि पूर्ववत् ॥ ५५ ॥**

ततः सीवनादनंतरमातुरं सांत्वयित्वा समाश्वास्य शीतांबुस्पर्शव्यजनादिभिरनंतरमुक्तैर्लिप्ते व्रणे सति। कैः। अंजनादिभिः। किंभूतैः। मधुघृताभ्यां द्रुतैरालोडितैः। पूर्ववद्बंधादि युंज्यात्। तृतीयांताद्वतिः। पूर्वोद्दिष्टेन कर्मणा तुल्यं कषायक्षालनादि कवलिकादिकं च योजयेदित्यर्थः।

**व्रणो निःशोणितौष्ठो यः किंचिदेवावलिख्य तम्।**
**संजातरुधिरं सीव्येत्संधानं ह्यस्य शोणितम् ॥५६॥**

अविद्यमानशोणितौष्ठो यः स्यात्तमेवंभूतं व्रणं किंचिदेवेषन्मात्रमेव शस्त्रेणावलिख्य ततः संजातरुधिरं संतं सीव्येन्न त्वेवमेव। यस्मादस्य व्रणस्य संधानं शोणितमेव।

**बंधनानि तु देशादीन् वीक्ष्य युंजीत तेषु च।**

बध्यते व्रण एभिरिति बंधनान्याविकाजिनादीनि तेषु व्रणेषु देशकालसात्म्यादीन् वीक्ष्य निरूप्य यथायोगमाविकाद्यन्यतमं युंज्यात्।

तेषां च बंधनानां स्वरूपमाह।

**आविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ॥५७॥**
**शीतोष्णं तूलसंतानकार्पासस्नायुवल्कजम्।**

अविरेवाविकस्तस्येदमाविकम् । अवेः क इति कस्तस्येदमित्यण् । अजिनं चर्म । कोशात्संभूतं कौशेयम् । कोशाड्ढञिति ढञ् । आविकादिकं बंधनत्रयमुष्णवीर्यम् । क्षौमं तु बंधनं शीतलं शीतवीर्यम् । तूलसंतानादिजं शीतोष्णमुभयस्वभावम् । तूलं शाल्मलादिजं तस्य संतानः संततिः सूत्ररूपता तेन निष्पादितम् ।

**ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ ५८ ॥**
**भंगे च युंज्यात्फलकं चर्मवल्ककुशादि च ।**

मेदःकफादिके व्रणे ताम्रादीनि लेखनार्थं युंज्यात् । भंग इत्यादि । न केवलं ताम्रादीनि मेदःकफाधिके व्रणे युंज्याद्यावच्च शब्दात्तानि भंगेऽपि युंज्यात् । नच केवलं भंगे ताम्रादीनि युंज्याद्यावत्फलकादि च युंज्यात् । कुशाशब्देन वंशादिकंबिकोच्यते ।

अधुना बंधप्रकारान्निर्दिशति ।

**स्वनामानुगताकारा बंधास्तु दश पंच च ॥ ५९ ॥**
**कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम् ।**
**खट्वाविबंधस्थगिकावितानोत्संगगोफणाः ॥ ६० ॥**
**यमकं मंडलाख्यं च पंचांगी चेति योजयेत् ।**
**यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान्॥६१॥**

स्वं च तन्नाम च स्वनाम तेनानुगतोऽनुबद्ध आकारः संस्थानविशेषो येषां ते पंचदश बंधा वक्ष्यमाणाः । तुशब्दोऽवधारणार्थः । पंचदशैवेति न न्यूनाः । कोशादयः पंचांग्यंतास्तेषां बंधानां मध्ये यो बंधविशेषो यत्र यस्मिन्देहदेशे सुनिविष्टो भवेत्तं बंधं कोशादिकं तत्र तस्मिन्देशे योजयेत् । तत्र कोशोंऽगुलीपर्वसु चर्मादिकृतः । स्वस्तिकं संधिकूर्चभ्रूस्तनांतरकक्षाक्षिकपोलकर्णेषु । मुत्तोली ग्रीवामेढ्रयोः । चीनमपांगयोः । दाम संधिवंक्षणादौ । अनुवेल्लितं शाखासु । खट्वा हनुसंधिगंडेषु । विबंधमुदरोरुपृष्ठेषु । स्थगिकांगुष्ठांगुलीमेढ्रांत्रमूत्रवृद्धिषु । वितानं मूर्धादौ पृथुलांगे । उत्संगमंगविशेषे लंबिनि बाह्वादौ । गोफणं नासौष्ठचिबुकसक्थिषु । यमकं यमलव्रणयोः । मंडलं वृत्तेंऽगे । पंचांगी जत्रूर्ध्वमिति योजना कार्या ।

संप्रत्येषां बंधानां गाढशिथिलादिबंधत्वं देशाद्यनुरोधान्निरूपयति ।

**बध्नीयाद्गाढमूरुस्फिक्कक्षावंक्षणमूर्धसु ।**

ऊरुस्फिगादिषु देशेषु गाढं बध्नीयान्न तु श्लथम् ।

**शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ॥ ६२ ॥**
**समं मेहनमुष्के च**

शाखावदनादिषु समं बध्नीयात् । चशब्दान्मेहनमुष्कयोश्च सममेव ।

**नेत्रे संधिषु च श्लथम् ।**

नेत्रे नयने तथा संधिषु शिथिलं बध्नीयात् ।

**बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥६३॥**
**गाढमेव समस्थाने भृशं गाढं तदाश्रये ।**

यत्र शिथिलस्थाने शिथिलो बंध उपदिष्टस्तत्र स्थाने यौ व्रणौ वातश्लेष्मोद्भवौ तौ समं कृत्वा बध्नीयान्न गाढं न शिथिलम् । यत्र स्थाने समो बंध उपदिष्टस्तत्र स्थाने वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नीयात् । भृशमित्यादि तदित्यनेन गाढाशयः परामृश्यते । गाढबंधोद्दिष्टे स्थाने वातश्लेष्मोद्भवौ व्रणौ भृशं सुतरां गाढं बध्नीयात् ।

**शीते वसंते च तथा मोक्षणीयौ त्र्यहाद्व्यहात्॥६४॥**

तौ वातश्लेष्मोद्भवौ व्रणौ शीते हेमंतशिशिराख्ये काले वसंते च त्र्यहाद्व्यहात्त्रिदिनमंतरीकृत्य मोक्षणीयौ मोक्षणार्हौ भवतः ।

**पित्तरक्तोत्थयोर्बंधो गाढस्थाने समो मतः ।**
**समस्थाने श्लथो नैव शिथिलस्याशये तथा ॥ ६५ ॥**

पित्तरक्तोत्थयोर्व्रणयोर्गाढबंधस्थाने समो बंधो मतो न शिथिलः समस्थाने समो बंधोऽत्रोपदिष्टः शाखावदनादौ । तत्रस्थयोः पित्तरक्तोत्थयोर्व्रणयोः शिथिलो बंधः कार्यः । शिथिलस्य बंधस्याऽशये यत्र शिथिलो बंधः कार्य इत्युक्तं तत्र नैव बंधः कार्य इत्येवकारोऽवधारणार्थः कृतः ।

**सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ।**

तयोः पित्तरक्तोत्थयोः सायं प्रातर्द्वौ कालौ मोक्ष इष्यते । ग्रीष्मे शरदि चाऽन्यदोषोत्थव्रणस्याऽपि सायंप्रातर्मोक्ष इष्यते ।

ननु बंधेन विना व्रणो धार्य इत्याह ।

**अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥**
**दुष्टी भवेच्चिरं चाऽत्र न तिष्ठेत्स्नेहभेषजम् ।**
**कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम्॥६७॥**

अबद्धो व्रणो दंशादिभिः पीडितो व्यथितस्तथा आदिशब्दाद्रजोधूमादिभिर्व्यथितोऽदुष्टोऽपि व्रणो दुष्टीभवति । अत्र च व्रणे बंधमंतरेण व्रणघ्नः स्नेह उपयोजितो भेषजं वा योजितं चिरं न तिष्ठेत् । बंधं च विना सम्यगुपचर्यमाणोऽपि व्रणः कष्टेन शुद्धिं याति रूढिं च कृच्छ्रेण याति रूढोऽपि सन्विवर्णतां याति न शरीरवर्णतामित्यबंधनाद्दोषाः ।

इदानीं बंधनाद्गुणानाह ।

**बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।**
**छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ॥६८॥**
**उत्थानशयनाद्यासु सर्वेहासु न पीडयेत् ।**

तुरवधारणे । बद्ध एव व्रणो बंधनमाहात्म्याच्चूर्णितोऽस्थिसमाश्रितो व्रणस्तथा भग्नोऽस्थिसमाश्रित एव व्रणस्तथा विश्लिष्टः संधिस्थानादन्यथागतो व्रणो नेत्रादिस्तथा पाटितः सर्वदेशस्थितोऽपि तथा छिन्नस्नायुसिरोऽप्याशु व्रणः सुखं सम्यग्रोहति तथोत्थानशयनाद्यासु सर्वास्वीहासु चेष्टासु न पीडयेन्न व्यथयेत् ।

**उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥६९॥**
**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।**

ऊर्ध्वं वृत्तौ वर्तुलावोष्ठौ यस्य स उद्वृत्तौष्ठो न समः । तथा समुत्सन्नः समंतादुत्सन्न उन्नतो यो व्रणो न समः । तथा विषम उद्वृत्तौष्ठसमुत्सन्नाभ्यां व्यतिरिक्तो विषमसंस्थानः । तथा कठिनो यो व्रणो न मृदुः । तथाऽतिरुग्यो व्रणः । स सर्व उद्वृत्तौष्ठादिपंचप्रकारोऽपि बंधमाहात्म्यादशुभरूपतां हित्वा व्रणः शीघ्रं शुद्धिं याति रोहति । ननूद्वृत्तौष्ठसमुत्सन्नावपि विषमशब्देनैव ग्रहीष्येते किमेताभ्यामुपात्ताभ्याम् । अस्त्वेवैतत् किंत्वनयोः पृथङ्निर्देशेनाऽतिदुश्चिकित्स्यतरत्वं गमयति ।

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥ ७० ॥**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।**
**अजीर्णतरुणाच्छिद्रैः समंतात्सुनिवेशितैः ॥ ७१ ॥**
**धौतैरकर्कशैः क्षीरीभूर्जार्जुनकदंबजैः ।**

स्थिराणां व्रणादीनां दीर्घकालानुबंधिनां तथाऽल्पमांसानामनुपचितपलानामत एव हेतोस्तथा रौक्ष्यादनुपरोहतां रूढिमगच्छतामौषधं कल्कस्नेहादिकं यदुपयुज्यते तत्पत्रैः क्षीरीभूर्जार्जुनकदंबजैः प्रच्छाद्यं स्थगितव्यं यथादोषं दोषानतिक्रमेण ऋत्वनतिक्रमेण च तद्वशाद्यथायोगम् । यथा वातव्रणे शीततौ स्निग्धोष्णैः पित्तव्रणे घर्मकाले शीतस्वभावैः कफव्रणे उष्णकाले रूक्षोष्णप्रायैः । एवं साधारणेऽपि काले मिश्रदोषे च कल्पनीयम् । किंभूतैः पत्रैः । अजीर्णान्यजर्जराणि तरुणानि प्रत्यग्राण्यच्छिद्राणि छिद्ररहितानि तैरजीर्णतरुणाच्छिद्रैः । तथा समंतात्सुनिवेशितैः । तथा धौतैर्जलादिना निर्मलीकृतैः । तथाऽकर्कशैरकठिनैः ।

**कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ॥ ७२ ॥**
**कर्णिकाश्चोंदुरुविषे क्षारदग्धा विषान्विताः ।**
**न मांसपाके च बध्नीयाद्गुदपाके च दारुणे ॥ ७३ ॥**
**शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ।**

कुष्ठादीनां ये व्रणास्ते न बंधनीयाः । तथोंदुरुविषे याः कर्णिकाः कोठरूपास्ताश्च न बध्नीयात् । तथा क्षारदग्धा ये व्रणास्ते न बंधनीयाः । तथा मांसपाके व्रणास्तथा दारुणे च गुदपाके व्रणास्ते न बंधनीयाः । मांसपाक इति मांसस्य पचि युट्यञोरित्यलोपः । तथा शीर्यमाणाः शदनावस्थां भजमानाः । तथा सरुग्दाहास्तथा शोफावस्था अनेकावस्था भजंतोऽपि ये शोफावस्थावस्थितास्तथा विसर्पिणो विसर्पावस्थास्थिता ये व्रणास्ते च न बंधनीयाः ।

इदानीं सकृमीणां व्रणानां चिकित्सामाह ।

**अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत्कृमीन्॥७४॥**
**ते भक्षयंतः कुर्वंति रुजाशोफास्रसंस्रवान् ।**

अरक्षयाऽपालनेन यस्मिन् व्रणे मक्षिका कृमीन्निक्षिपेत् । ते तत्रस्थाः कृमयो व्रणं भक्षयंतो रुजादीन् कुर्वंति ।

**सुरसादि प्रयुंजीत तत्र धावनपूरणे ॥ ७५ ॥**
**सप्तपर्णकरंजार्कनिंबराजादनत्वचः ।**
**गोमूत्रकल्कितो लेपः सेकः क्षारांबुना हितः ॥७६॥**
**प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ।**

तत्र तस्मिन् व्रणे सुरसादिगणं धावने पूरणे च तन्निमित्तं प्रयुंजीत । धावनं च पूरणं च तस्मिन् । तथा तस्मिन्व्रणे सप्तपर्णादीनां त्वचो गोमूत्रकल्कितः पिष्टलेपो हितः । तथा क्षारांबुना सेको हितः । अथवा मांसपेश्या व्रणं प्रच्छाद्य पिधाय तान् कृमीनाशु निर्हरेत् ।

**नचैनं त्वरमाणोऽतःसदोषमुपरोहयेत् ॥ ७७ ॥**
**सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ।**

नचैनं व्रणमंतःसदोषं त्वरमाणो वैद्य उपरोहयेत् । कस्मादित्याह । स इत्यादि । यतो यस्मात्सोंऽतःस्थितदोषो व्रणो रूढोऽपि भूयः पुनस्तोकेनाऽप्यपचारेण विकृतिं याति ।

**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥७८॥**
**हर्षं क्रोधं भयं वापि यावदास्थैर्यसंभवात् ।**
**आदरेणानुवर्त्योऽयं मासान्षट् सप्त वा विधिः॥७९॥**

रूढेऽपि सत्यजीर्णादीन् विवर्जयेत् । अयमजीर्णव्यायामादिपरिवर्जनलक्षणो विधिः षट् सप्त वा मासानादरेण रक्षणीयः ।

**उत्पद्यमानासु च तासु तासु**
**वार्तासु दोषादिबलानुसारी ।**
**तैस्तैरुपायैः प्रयतश्चिकित्से-**
**दालोचयन् विस्तरमुत्तरोक्तम् ॥ ८० ॥**

तासु तासु वार्तास्ववस्थास्वनिर्दिष्टस्वरूपाभिधानासूत्पद्यमानासु जायमानासु तैस्तैरुक्तैरुपायैः साधनैश्चिकित्सेद्वैद्यः । यथा मक्षिकाभिः कृमिनिक्षेपात्कृमिप्राबल्ये जाते चिकित्सा विहिता । किंभूतो वैद्यः । दोषादिबलानुसारी दोषादीनां बलं दोषादिबलम् । आदिग्रहणाद्देशकालादयो गृह्यंते । तदनुसरत्येवंविधो यो वैद्यः । तथा प्रयतो यत्नपरः । तथोत्तर उत्तरतंत्रे व्रणभंगविधान उक्तं निर्दिष्टं विस्तरमालोचयन् निरूपयन्न तु यदृच्छयेति भावः । इंद्रवज्रा वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

अतोऽनंतरं क्षाराग्निकर्मविधिरारभ्यते यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते तथैव क्षाराग्निभ्यामित्याह ।

**अथाऽतः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।**

क्षारश्चाऽग्निश्च क्षाराग्नी तयोः कर्म क्षाराग्निकर्म तस्य विधिः। शेषं पूर्ववत्। क्षारस्य बाह्याभ्यंतरोपयोगित्वेन पूर्वमुपन्यासः।

**सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो**

सर्वाणि च तानि शस्त्राण्यनुशस्त्राणि च तान्येवं तेषां सर्वशस्त्रानुशस्त्राणां मध्ये क्षारः श्रेष्ठो ज्यायान्।

कुतोऽस्य श्रेष्ठतेत्याह।

**बहूनि यत्।**
**छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥**
**दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च।**
**अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २ ॥**

यद्यस्माद्बहूनि छेद्यभेद्यादीनि कर्माण्यसौ करोति। आदिशब्देन लेखनपाटनादिपरिग्रहः। विषमेष्वपि देहदेशेषु। दुःखावचार्यशस्त्रेषु नासार्शोऽर्बुदादिषु। दुःखेनावचारयितुं शक्यं शस्त्रं येषु तेषु। अपिशब्दात्समेषु देहेषु युज्यते। तेन च शस्त्रेण सिद्धिमयात्स्वसिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु। किंभूतेष्वतिकृच्छ्रेष्वतिदुःखसाध्येषु। दुष्टव्रणेषु रोगेष्वसौ क्षारो युज्यते योग्यः संपद्यते ततोऽपि हेतोः क्षारः श्रेष्ठः। यच्चेति। यस्माच्च क्षारः पानविषयेऽपि युज्यते शरीरांतःस्थितरोगशांत्यै। अपिशब्दाद्बाह्येऽपि बाह्यरोगस्थितिशांत्यै लेपे स युज्यते।

अधुना क्षारस्य पेयलेपविषयविभागं दर्शयति।

**स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु।**

स क्षारः अर्शःसु विषये पेयः। तथाऽग्निसादे तथाऽश्मर्यां गुल्मादिषु च। आदिग्रहणादानाहशूलादिषु च।

**योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥**
**भगंदरार्बुदग्रंथिदुष्टनाडीव्रणादिषु।**

स क्षारो योज्यः साक्षाल्लेपनेन मषादिषु। आदिग्रहणाच्चर्मकीलासवर्त्मतिलकादिपरिग्रहः।

**न तूभयोऽपि योक्तव्यः पित्ते रक्ते बलेऽबले ॥ ४ ॥**
**ज्वरेऽतिसारे हृन्मूर्धरोगे पांड्वामयेऽरुचौ।**
**तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥**
**भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु।**
**अजीर्णेऽन्ने शिशौ वृद्धे धमनीसंधिमर्मसु ॥ ६ ॥**
**तरुणास्थिसिरास्नायुसेवनीगलनाभिषु।**
**देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखांतरे ॥ ७ ॥**
**वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने।**

पानलेपनभेदेन द्विविधोऽपि क्षारः पित्तादौ न योक्तव्यः। बले सप्राणे। अबले प्राणहीने। ज्वरे। अतिसारे। हृद्रोगे। मूर्धरोगे। पांड्वामये पांडुरोगे। अरुचावरोचके। कृतसंशुद्धौ कृतवमनविरेके। श्वयथौ सर्वगात्रगे सर्वांगोच्छूने। तथा भीरौ। गर्भिण्याम्। ऋतुमत्याम्। प्रोद्वृत्तफलयोनिर्वक्ष्यमाणा उत्तरतंत्रे गुह्यरोगज्ञाने। प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा प्रोद्वृत्तफलयोनिः। रज एव फलं गर्भाख्यफलसाधनोपायत्वात्। प्रोद्वृत्तफलयोनेर्लक्षणमुक्तं यथा। वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः। स फेनिलं रजः कृच्छ्रादुदावृत्तं विमुंचति। इयं व्यापदुदावर्तेत्यादि। शिशौ बाले। वृद्धे गतवयसि। तथा धमन्यादिषु शरीरदेशेषु। देशेऽल्पमांसे स्वल्पपिशिते। तथा वृषणादिषु शरीरदेशेषु। तथाक्ष्णोर्नेत्रयोर्वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो न प्रयोज्यः। वर्त्मरोगे तु क्षारो योज्य एव। शीतवर्षोष्णदुर्दिने न च योज्यः। शीतवर्षोष्णाहानि हेमंतशिशिरप्रावृड्ग्रीष्माः। दुर्दिनं मेघाद्याकुलदिवसम्। एषु क्षारो न योज्यः।

अधुना क्षारक्रियामाह।

**कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥**
**अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान्।**
**इंद्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥**
**काकजंघामपामार्गमग्निमंथाग्नितिल्वकान्।**
**सार्द्रान् समूलशाखादीन् खंडशः परिकल्पितान्॥१०**
**कोशातकीश्चतस्रश्च शूकनालं यवस्य च।**
**निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥**
**प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत्।**
**ततस्तिलानां कुंतालैर्दग्ध्वाऽग्नौ विगते पृथक्॥ १२॥**
**कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः।**
**मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥**
**गालयेदर्धभारेण महता वाससा च तत्।**
**यावत्पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम्॥१४**
**गृहीत्वा क्षारनिस्यंदं पचेल्लौह्यां विघट्टयन्।**
**पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥**
**शुक्तिक्षारपंकशंखनाभीश्चाऽऽयसभाजने।**
**कृत्वाऽग्निवर्णान् बहुशः क्षारोत्थे कुडवोन्मिते॥१६॥**
**निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत्।**
**श्लक्ष्णं शकृद्दक्षशिखिगृध्रकंककपोतजम् ॥ १७ ॥**
**चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च।**
**परितः सुतरां चाऽतो दर्व्या तमवघट्टयेत् ॥ १८ ॥**
**सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्घनः।**
**अवतार्य ततः शीतो यवराशावयोमये ॥ १९ ॥**
**स्थाप्योऽयं मध्यमः क्षारो**

कालमुष्कको मोक्षः। अश्वकर्णः कुशिकः। महावृक्षः स्नुही। आस्फोतो गिरिकर्णिका। वृक्षको नंदीवृक्षः। इंद्रवृक्षः कुटजः।

पूतीकः पूतीकरंजः । नक्तमालः करंजः । अश्वमारः करवीरः । कालमुष्ककादीन् मूलादिसहितान् खंडखंडं कल्पितान् परश्वादिना छिन्नान् । तथा कोशातकीश्वतस्रो यवस्य च शूको नालो द्वैव इव यो भवति तांश्च निवाते देशे शिलातले शिलापृष्ठे पृथङ्मुष्ककादीन्निचयीकृत्य मुष्ककचये च सुधाश्मानि सुधाशर्कराः प्रक्षिप्य दीपयेज्ज्वालयेत् । कैः । तिलानां कुंतलैः पलालैः कांडैः । सुधाश्मानि चेति नपुंसकत्वं चिंत्यम् । पृथग्दीपनं चैषामचिंत्यप्रभावम् । एवं तानि दग्ध्वाऽनंतरमग्नौ विगते सुधाश्मनां भस्म द्रोणं पृथक्कृत्वा व्यस्तं संस्थाप्येतरभस्मनः शम्याकादिद्रव्यभस्मनो द्रोणमादाय गृहीत्वा । किंभूतं द्रोणम् । मुष्कक उत्तरोऽधिको यस्य तमादाय जलमूत्रयोः प्रत्येकमर्धभारेण तद्भस्म गालयेत् । कथं गालयेत् । महता विस्तीर्णेन वाससा । कियंतं कालम् । यावत् क्षारनिष्यंदः क्षारस्रावः पिच्छिलरक्ताच्छस्तथा तीक्ष्णो जातः संपन्नस्तदा तस्मिन्काले तं क्षारनिष्यंदं गृहीत्वा लौह्यां स्नेहपाकविधिना पचेत् । किंकुर्वन् । दर्व्या कुंडलसंज्ञया विघट्टयन्नालोडयन् । ततोऽनंतरं तस्मिन्क्षारनिष्यंदे पच्यमाने ताः स्थापिताः सुधाभस्मशर्करा या मुष्ककमध्ये प्रक्षिप्य दत्तास्तथा शुक्तीः प्राणिविशेषास्थीनि तथा क्षारपंकं प्रलेपकं खटिकासंज्ञं तथा शंखनाभीश्चाग्निवर्णान् कृत्वा क्षारोत्थे क्षारनिष्यंदे पलाष्टकपरिमाणे क्वथितक्षारोत्थ आयसभाजने तीक्ष्णलोहपात्रगते बहून् वारान्निर्वाप्य शीतीकृत्य तेनैव क्षारनिष्यंदेन दृषदि पिष्ट्वा तस्मिन्पच्यमाने क्षारनिष्यंदे प्रतीवापं विनिक्षिपेत्।द्रवद्रव्ये द्रव्यांतरं श्लक्ष्णपिष्टं दीयते स प्रतीवाप उच्यते । नच केवलमेष एव प्रतीवापत्वेन क्षेप्तव्यो यावद्दक्षादीनामपि शकृत् श्लक्ष्णं कृत्वा विनिक्षिपेत् । दक्षः कुक्कुटः । शिखी मयूरः । गृध्रः श्येनः । कंककपोतकौ पक्षिणौ । तथा चतुष्पदां गवादीनां तथा पक्षिणां पित्तं तथा अलमनोह्वालवणानि च । अलं हरितालम् । मनोह्वा मनःशिला । लवणं सैंधवादि । एतानि श्लक्ष्णानि कृत्वा प्रतीवापं विनिक्षिपेत् । अथ प्रतीवापादनंतरं परितः समंताद्दर्व्याऽवघट्टयेत् । सबाष्पैरित्यादि । यदा यस्मिन् काले स क्षारनिष्यंदः सबाष्पैः सोष्मभिर्बुद्बुदैर्घनो लेह इवोत्तिष्ठेदुद्गच्छेत् । यदा सांद्रतया पच्यमानः सन् लेहतुल्यो दर्वीप्रलेपी स्यादित्यर्थः । तदा तस्मिन् कालेऽवतार्याऽयोमये लोहभांडे स्थितो यवराशौ स्थाप्यः । किंकृत्वा । अवतार्य चुल्लीतः । तथा शीतः सन् । अयं मध्यमः क्षारः ।

**न तु पिष्ट्वा क्षिपेन्मृदौ ।**
**निर्वाप्यापनयेत्**

मृदौ क्षारे सुधादीनि निर्वाप्य तस्मिन्निष्यंदे प्रक्षिप्यैवापनयेद्विसर्जयेन्न तु पिष्ट्वा विनिक्षिपेत् ।

**तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २० ॥**
**तथा लांगलिकादंतिचित्रकातिविषावचाः ।**
**स्वर्जिकाकनकक्षीरिहिंगुपूतीकपल्लवाः ॥ २१ ॥**
**तालपत्री विडं चेति सप्तरात्रात्परं तु सः ।**
**योज्यः**

तीक्ष्णे क्षारे पूर्ववन्मध्यमक्षारतुल्यं प्रतिवापनं निर्वाप्य पिष्ट्वा विनिक्षिपेदिति । नचैतावदेवाऽत्र प्रतिवापनमित्याह । तथेत्यादि । लांगलिकादीनि बिडपर्यंतानि च तत्र प्रतिवापं विनिक्षिपेत् । सप्तरात्रात्परमनंतरं स क्षारो योज्यः ।

इति क्षारत्रैविध्यमुक्त्वा विषयं निर्दिदिक्षुराह ।

**तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२॥**

तीक्ष्णः क्षारो वातश्लेष्ममेदःसमुत्थेष्वर्बुदादिषु योज्यः । महत्स्वेव योज्यः । मध्येषु क्षारांतरविधानम् । आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वयं क्षारो योज्यः ।

**मध्येष्वेव च मध्यः ।**

एष्वेवऽनिलकफमेदोजेषु विकारेष्वर्बुदादिषु मध्येषु नोत्कृष्टेषु नाऽपि हीनेषु मध्यः क्षारो योज्यः ।

**अन्यः पित्तास्रगुदजन्मसु ।**

अन्यो मृदुः क्षारः पित्तरक्तसमुत्थेष्वर्शःसु योज्यो न तीक्ष्णमध्यौ क्षारौ ।

**बलार्थं क्षीणपानीये क्षारांबु पुनरापवेत् ॥ २३ ॥**

तस्मिन् क्षारे क्षीणपानीये घनीभूते क्षारे बलाधानार्थं पुनर्भूयः क्षारांबु क्षारविधिस्रुतं जलमावपेद्दद्यात् ।

अधुना क्षारगुणानाह ।

**नातितीक्ष्णो मृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ।**
**शिखरी सुखनिर्वाप्यो न विष्यंदी न चातिरुक् ॥ २४**
**क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ।**

क्षारे नातितीक्ष्णादयो दश गुणा भवंति । शीघ्रं गच्छति प्रसरत्याशु व्याप्नोतीति शीघ्रगः । शिखरी शिखरमुपरिष्टात्पीटिकोत्थानं तद्वान् । सुखेन कांजिकादिना निर्वाप्यते शीतीक्रियते सुखनिर्वाप्यः । विष्यंदोऽस्यास्तीति विष्यंदी स्रुतिमान् । न विष्यंदी न स्रुतिमान् न चातिरुक् न चार्तिमान् । नातितीक्ष्णादयो दश गुणा यस्य स दशगुणः क्षारः । संग्रहे चाऽस्य दशैव दोषा गदिताः । तद्यथा । अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलोविसर्पी हीनौषधो हीनपाकश्चेति । शस्त्रे यत्कर्म छेदनपाटनलेखनादि तथा तेजसो वह्नेरपि यत्कर्म तत्साध्यव्याध्युपशमलक्षणं तत्करोति

अधुना त्वंतरानुभवद्वारेण क्षारस्य गुणान्निर्दिशति ।

**आचूषन्निव संरंभाद्गात्रमापीडयन्निव ॥ २५ ॥**
**सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।**
**कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६ ॥**

संरंभात्क्षोभाद्गात्रमाचूषन्निव तथाऽऽपीडयन्निव तथा सर्वतः

सर्वस्मिन्ननुसरन् गच्छन् दोषान् शस्त्रसाध्यान् मूलत उन्मूलयत्युद्धरति । तथा कर्म स्वीयं दाहादिकं कृत्वा गतरुजः पुरुषस्य स्वयमेव यत्नंविनैवोपशाम्यति ।

**क्षारसाध्ये गदे छिन्ने लिखितेऽस्राविते़ऽथवा ।**
**क्षारं शलाकया दत्त्वा प्लोतप्रावृतदेहया ॥ २७ ॥**
**मात्राशतमुपेक्षेत**

क्षारसाध्ये व्याधावर्शोर्बुदादौ छिन्ने द्विधाकृते लिखिते शस्त्रेण विघृष्टे स्राविते प्रच्छाय निर्हृतशोणिते कर्मणि कृते क्षारो योज्यो नाकृते छेदादाविति क्षारस्य विषयो दर्शितः । क्षारं शलाकया दत्त्वा मात्राशतमुपेक्षेत न कांजिकादिना निर्वापणं कार्यमित्यर्थः । किंभूतया शलाकया । प्लोतेन चैलखंडेन प्रावृतः स्थगितो देहः परिग्रहो यस्याः ।

**तत्रार्शःस्वावृताननम् ।**
**हस्तेन यंत्रं कुर्वीत**

तत्र क्षारसाध्येष्वर्शःसु क्षारपातं कृत्वा मात्राशतं यावत्तावद्धस्तेन यंत्रमावृताननं छादितमुखं कुर्यात् ।

**वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥**
**निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ।**
**पद्मपत्रतनुः क्षारलेपो घ्राणार्बुदेषु च ॥ २९ ॥**

क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य कुटिलीकृत्य ततः क्षारस्पर्शपरिहाराय पिचुना कार्पासादिमयेन कृष्णभागं तारकप्रदेशमाच्छाद्य क्षारं विनिक्षिपेत् । तत्र च पद्मपत्रप्रमाणः क्षारलेपो देयो न गुदार्शःस्विव घनः । पद्मपत्रतनुरित्युपमानानि सामान्यवचनैरिति समासः । घ्राणार्बुदेषु च पद्मपत्रतनुः क्षारलेपः ।

कथं तत्र लेपो देयस्तत्राह ।

**प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।**
**मात्रा विधार्यः पंचाशत्**

घ्राणजेष्वर्बुदेषु प्रत्यादित्यं रविसंमुखं निषण्णस्य संस्थितस्य तथाऽग्रे नासिकाऽग्रनासिका तामुन्नम्योत्क्षिप्य । कियंतं कालं लेपो धार्य इत्याह । मात्राः पंचाशद्विधार्यः । वर्त्मसु चाल्पतरा मात्रा । स्थानस्य सुकुमारत्वात् ।

**तद्वदर्शसि कर्णजे ॥ ३० ॥**

कर्णजेऽर्शसि तद्वत्तेन घ्राणार्बुदेन तुल्यं स एव पद्मपत्रतनुः क्षारलेपस्ता एव पंचाशन्मात्रा धार्यः ।

**क्षारं प्रमार्जनेनानु परिमृज्याऽवगम्य च ।**
**सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकांजिकैः ॥ ३१ ॥**
**निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।**

अनु पश्चात् क्षारलेपदाननियमितात्कालादनंतरं क्षारं प्रमार्जनेन चैलादिना परिमृज्य शोधयित्वा सुदग्धं क्षारस्थानमर्शोर्बुदाद्यधिष्ठानमवगम्य सम्यग्दाहलक्षणेन ज्ञात्वा तत्क्षारदग्धस्थानं घृतमधुलेपितं कृत्वा पयःप्रभृतिभिः साज्यैः सघृतैर्लेपयेत् ।

**अभिष्यंदीनि भोज्यानि भोज्यानि क्लेदनाय च ॥३२॥**

अभिष्यंदीनि स्रुतिरूपश्लेष्मकारीणि भोज्यान्यन्नपानानि मापदध्यादीनि भोज्यानि भक्षयितव्यानि । किमर्थम् । क्लेदनाय क्षारदग्धस्थानविशरणाय । यतः क्षारदग्धं क्लिन्नं सच्छीर्यते ।

**यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।**
**धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः॥ ३३ ॥**

यदि च क्षारदग्धमभिष्यंदिभिर्भोज्यैरुपयुक्तैः स्थिरमूलत्वाद्दृढमूलत्वाद्रोगाधिष्ठानं न शीर्यते ततो धान्याम्लस्य बीजमवयवविशेषस्तेन तथा मधुकतिलाभ्यामालेपयेत् ।

**तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।**

तिलकल्को यष्टियुक्तो घृतान्वितो व्रणस्य रोपणः ।

**पक्वजंबवसितं सन्नं सम्यग्दग्धम्**

पक्वजंबूफलवदसितं कृष्णं तथा सन्नं निम्नं सम्यग्दग्धं स्थानं विद्यात् ।

**विपर्यये ॥ ३४ ॥**
**ताम्रतातोदकंड्वाद्यैर्दुर्दग्धम्**

विपर्यये पक्वजंबवसितादिलक्षणविपर्यये तथा ताम्रतातोदकंड्वाद्यैरादिग्रहणात् शोफविस्फोटादिभिर्दुर्दग्धं स्थानं विद्यात् ।

**तं पुनर्दहेत् ।**

तं तथाभूतं ज्ञात्वा पुनर्दहेत् भूयस्तत्र क्षारं पातयेद्दाहीयम् ।

**अतिदग्धे स्रवेद्रक्तं मूर्छादाहज्वरादयः ॥ ३५ ॥**

अतिदग्धे सति रक्तं स्रवेत् । तथा मूर्छादयो जायंते । आदिग्रहणाद्विसर्पशोफोषविस्फोटादयोऽपि ।

**गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।**
**पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद्ध्रुवम् ॥३६॥**

गुदेऽतिदग्धे विशेषेण विण्मूत्रयोः संरोधस्तथा तयोरेवातिप्रवर्तनं कदाचिद्भवति । विशेषग्रहणात्पूर्वोक्ता रक्तस्रावादयोपि । तथा पुंस्त्वोपघातः शुक्रक्षयात्कांतागमनासामर्थ्यम् । अथवा गुदस्य शातनाद्विदारणान्निश्चयेन मृत्युर्भवति ।

**नासायां नासिकावंशदरणाकुंचनोद्भवः ।**
**भवेच्च विषयाज्ञानम्**

नासायां क्षारातिदग्धायां नासिकावंशस्य दरणाकुंचने उद्भवतस्तथा विषयाज्ञानं गंधस्यावेदनं च भवेत् ।

**तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥**

तद्वत्तेन क्षारातिदग्धेन नासिकाविषयाज्ञानेन तुल्यं क्षारातिदग्धेषु श्रोत्रादिषु श्रोत्रचक्षूरसनेषु स्थानेषु विषयाज्ञानं स्यात् ।

**विशेषादत्र सेकोऽम्लैर्लेपो मधुघृतं तिलाः ।**
**वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥**

तस्मिन्नतिक्षारदग्धे विशेषेणाम्लैः कांजिकादिभिः सेको हितः। मधुघृततिलाश्च लेप इष्टः । तथा सर्वैव च शिशिरा क्रिया वातपित्तहरेष्टा । संग्रहे चोक्तम् । पाययेतातियोगेऽतस्तं शीघ्रं सघृतं दधि । सगुडं वा दधिसरं तैलं वाससितोपलमिति ।

**अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।**
**यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९॥**

तस्माद्धेतोः क्षारदग्धमम्लैः कांजिकादिभिर्निर्वापयेत्तराम् । तस्मादम्लः शीतस्पर्शेन तेन चाऽम्लेन क्षार उपसंहितो युक्त आश्वेव कटुकलवणभूयिष्ठतां त्यक्त्वा स्वादुतां याति । तरांग्रहणमतिशयेनाम्लैर्निर्वापयेत् देशसात्म्यानुरोधात्कदाचित्क्षीरादिभिरपीति गमयति । इति क्षारविधिः ।

अग्निकर्मविधिमाह ।

**अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसंभवात् ।**
**भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ४० ॥**

क्षारादप्यग्नेः प्रशस्यतरत्वम् । कुतः । तेनाग्निना दग्धानां रोगाणामर्शःप्रभृतीनामसंभवात् । भूयोऽग्निदग्धो रोगः प्ररोहं न याति । मूलादुन्मूलनादित्यर्थः । भेषजक्षारशस्त्रैश्च ये रोगा न शांतास्तेषां प्रसाधनाज्ज्वलनो ज्यायान् ।

**त्वचि मांसे सिरास्नायुसंध्यस्थिषु स युज्यते ।**

सोऽग्निदाहस्त्वगादिषु युज्यते ।

**मषांगम्लानिमूर्धार्तिमंथकीलतिलादिषु ॥ ४१ ॥**
**त्वग्दाहो वर्तिगोदंतसूर्यकांतशरादिभिः ।**

तत्र मषादिषु रोगेषु त्वग्दाहः कार्यो वर्त्यादिभिः । वर्तिः पिचुवर्तिः । आदिग्रहणादन्येष्वपि क्षुद्ररोगाध्यायोक्तेषु त्वग्दाहो योज्यः । शरादिभिरित्यादिग्रदणादन्यैरपि देशांतरप्रसिद्धैस्त्वग्दाहः कार्यः ।

**अर्शोभगंदरग्रंथिनाडीदुष्टव्रणादिषु ॥ ४२ ॥**
**मांसदाहो मधुस्नेहजांबवोष्ठगुडादिभिः ।**

अर्शःप्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाहः कार्यः । आदिग्रहणेनार्बुदगंडमालादयो गृह्यंते । तत्र कदाचिन्मधुना कदाचित्पृथक्स्नेहैः कदाचिज्जांबवौष्ठेन । जांबवोष्ठः शलाकाविशेषो यंत्रविधावुक्तो येन क्षारो दीयते कदाचिद्गुडेन कदाचिदेवंप्रायेणान्येनापि देशऽविशेषप्रसिद्धेन ।

**श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४३ ॥**
**सिरादिदाहस्तैरेव**

तैरेव श्लिष्टवर्त्मादिषु सिरादाहः कार्यः । तैरेव मधुस्नेहादिभिः।

**न दहेत्क्षारवारितान् ।**
**अंतःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४४ ॥**

क्षारवारितान्न दहेत् । न केवलं येषु क्षारो वारितस्तान् दहेयावदंतः शल्यं तथांतर्लोहितं येषां तान् ।

**सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।**

सुदग्धमग्निना रोगाधिष्ठानं ज्ञात्वा घृतमधुभ्यामभ्यक्तं कृत्वा स्निग्धशीतैर्मधुयष्टिशालिमूलादिभिः प्रलेपयेत् ।

**तस्य लिंगं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४५ ॥**
**पक्वतालकपोताभं सुरोहं नातिवेदनम् ।**

तस्येत्यनेन सुदग्धं स्थानं परामृश्यते । तस्य सुदग्धस्य स्थानस्य लिंगं लक्षणं स्थिते रक्ते दह्यमानावस्थाप्रवृत्तासृजि निवृत्ते सति शब्दवद्बुद्बुदशब्दवत् स्थानं भवेत् तथा लसिकान्वितम् । लसिका कुशशस्त्रादिविक्षते प्रथमं या दृश्यते जललवाकृतिः । तथा पक्वतालसदृशम् । सुखेन रोहति सुरोहम् । तथा नातिवेदनं नातितीव्ररुक् ।

**प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥**

दुर्दग्धात्यर्थदग्धयोः प्रमाददग्धेन तुल्यं सर्वं लक्षणं बोध्यम् । नच लक्षणमंतरेणैतत्सम्यग्ज्ञायत इति तल्लक्षणार्थं भेदांतरदर्शनार्थमाह ।

**चतुर्धा तत्तु तुत्थेन सह**

तत्प्रमाददग्धं चतुष्प्रकारम् । कथम् । तुत्थेन तुत्थदग्धलक्षणेन सह । अविमृश्यदग्धं हि कदाचित्सम्यग्दग्धलक्षणं कदाचिद्दुर्दग्धलक्षणं कदाचिदतिदग्धलक्षणं कदाचिच्च तुत्थदग्धलक्षणं स्यात् ।

**तुत्थस्य लक्षणम् ।**
**त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥**

तुत्थस्य तुत्थदग्धस्य लक्षणमिति कार्ये कारणमुक्तम् । त्वगित्यादि त्वग्विवर्णा सत्यत्यर्थमुष्यते रुज्यते नच स्फोटानां समुद्भूतिरिति तुत्थदग्धस्थानस्य लक्षणम् । यत्किंचिन्मात्रमेवाग्निना स्पृष्टं तत्तुत्थदग्धमित्युच्यते ।

**सस्फोटदाहतीव्रोषं दुर्दग्धम्**

यत्र प्रदेशे स्फोटानामुद्भवो दाहयुक्ता तीव्रा उषा जायते तद्दुर्दग्धं रोगाधिष्ठानं विद्यात् ।

**अतिदाहतः ।**
**मांसलंबनसंकोचदाहधूपनवेदनाः ॥ ४८ ॥**
**सिरादिनाशस्तृण्मूर्छाव्रणगांभीर्यमृत्यवः ।**

अतिदाहाद्रोगाधिष्ठानस्य मांसलंबनादयः स्युः । संकोचः सिरादीनाम् । धूपनं धूमपानम् । वेदना रुजा । शिरादीनां नाशो व्यापदः । व्रणगांभीर्यं गंभीरव्रणता । मृत्युर्मरणं च । सम्यग्दग्धलिंगं तूक्तमेव तस्य लिंगं स्थिते रक्त इत्यादिना तस्मात्तत्पुनर्न निर्दिष्टम् ।

अधुना चतुर्विधस्याऽस्य चिकित्सितमाह ।

**तुत्थस्याऽग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४९ ॥**

तुत्थदग्धस्याऽग्निना प्रतपनं कार्यम् । तथोष्णं भेषजमौषधम् । रक्तस्य विनयनार्थमेतत् । यतोहि तुत्थदग्धे त्ववश्यं स्यानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह ।

**स्त्यानेऽस्रे वेदनात्यर्थं विलीने मंदता रुजः ।**

लोहिते स्त्याने सत्यतिशयेन रुग्भवति विलीने रक्ते पीडाया मंदता मंदत्वं भवति । अतो हि तुत्थदग्धेऽग्निप्रतपनं योज्यम् ।

**दुर्दग्धे शीतमुष्णं च युंज्यादादौ ततो हिमम् ॥५०॥**

शीतमुष्णं च पर्यायेणौषधं तत्रादौ प्रथमं भेषजं युंज्यात् ।

**सम्यग्दग्धे तुगाक्षीरिप्लक्षचंदनगैरिकैः ।**
**लिंपेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥**

सम्यग्दग्धे तवक्षीर्यादिभिर्लेपयेत् । किंभूतैः । साज्यामृतैर्घृतगुडूचियुक्तैः । आदावित्यत्राऽपि योज्यम् । आदौ तैर्लेपयेदूर्ध्वमनंतरं पित्तविद्रधिवत् क्रिया कार्येति शेषः ।

**अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।**

अतिदग्धे द्रुतं शीघ्रमेव सर्वं बहिरंतश्च भेषजं पित्तविसर्प इव कुर्यात् ।

**स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥**

स्नेहदग्धेऽतितरां रूक्षं योजयेत् । भृशतरं रूक्षं चाऽत्र भेषजं तत्र तु योजयेत् । तुशब्दान्न केवलं भृशतरग्रहणाच्च बाहुल्येन रूक्षं प्रलेपादि तत्र योजयेत् किंतु देहदेशादिसात्म्यवशात्स्निग्धमपि यथावस्थं यथावद्योजयेत् ।

**समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ।**

वक्तव्यं यद्वस्तु तस्य सर्वस्यैवोक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते । किंभूतं स्थानम् । रहस्यवत् रहस्यमत्यर्थं गुह्यरूपं तदस्याऽस्ति तद्रहस्यवत् । कस्य स्थानम् । हृदयस्य । हृदयमिव हृदयम् । हृदयशब्देनाष्टांगहृदयमुपलक्ष्यते यथा सत्यभामा भामेति ।

कुत एतत्स्थानं रहस्यवदित्याह ।

**अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यंते हि सर्वतः॥५३॥**

**इति वैद्यपतिसिंहगुप्तसूनुवाग्भटविरचितायामष्टांगहृदयसंहितायां प्रथमं सूत्रस्थानं संपूर्णम् ।**

यस्मादत्र स्थानेऽर्थाः सूत्रिताः सूचिताः सूचनमात्रेणोक्ताः । किंभूताः । सूक्ष्मास्तीक्ष्णतरमतिसमभिगम्याः । यतोऽत एवार्थाः सर्वस्मिंस्तंत्रे प्रतन्यंते विस्तार्यंते । अस्मादिदं स्थानं तंत्रसंबंधिनामन्यस्थानानां रहस्यवदित्युक्तमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां क्षाराग्निकर्मविधिस्त्रिंशत्तमोऽध्यायः ३०

## समाप्तमिदं सूत्रस्थानम्

# अष्टांगहृदये शारीरस्थानम् ।

## प्रथमोऽध्यायः ।

श्रीगणेशाय नमः । अथ सूत्रस्थानादनंतरं शारीरस्थानमिदमारभ्यते । तत्राऽयं संबंधः । पूर्वस्मिन्स्थाने कायादीन्यष्टावंगानि चिकित्साधारभूतानि सकलतंत्रसारभूतानि सूत्रितानि कायबालेत्यादिना ग्रंथेन । कायश्च निजागंतूनां व्याधीनामधिष्ठानम् । तस्य च कायस्य चतुर्वर्गसाधनस्य पालनार्थं हेतुलिंगौषधस्कंधभेदेन त्रिस्कंधोऽयं ग्रंथो ग्रंथकृता प्रणीतः । ततश्च कायस्य प्रथमं सूत्रितत्वात्प्राधान्याच्च प्राक् सूत्रस्थानादनंतरं शारीरस्थानमिदमारभ्यत इत्याह ।

**अथाऽतो गर्भावक्रांतिशारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

शरीरमधिकृत्य कृतो ग्रंथः शारीरः । गर्भस्याऽवक्रांतिरवक्रमणं संप्राप्तिः । यथाऽगर्भो गर्भतां संपद्यत इत्यर्थः । गर्भाऽवक्रांतिर्विद्यते यस्मिन्नध्याय इति मत्वर्थे छप्रत्ययः । तस्याऽध्यायानुवाकयोर्लुगिति लुक् । अथादिशब्दानामर्था आयुष्कामीयाऽध्याये व्याख्याता एव ।

**शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः ।**
**गर्भः संपद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥**

शुद्ध इति । शुक्रमंत्यो धातुः । ऋतौ भवमार्तवम् । स्त्रीणां यदपत्यमार्गाच्छुद्धमीषत्कृष्णं विगंधं च वायुप्रेरितं लोहितं प्रवर्तते तदार्तवमुच्यते । शुक्रं चाऽर्तवं च शुक्रार्तवं पित्रोः संबंधि गर्भबीजम् । तस्मिन् शुक्रार्तवे शुद्धे वातादिभिरदूषितेऽधिष्ठानभूते सत्वो जीवो गर्भः संपद्यते । किल नाऽसौ गर्भोऽथ च गर्भतामासादयति । कीदृशः सत्वः । स्वकर्मेत्यादि । कर्माणि पूर्वजन्मार्जितानि शुभाशुभानि । स्वानि च तानि कर्माणि । क्लेशयंति लोकान् दुःखयंतीति क्लेशाः । ते चाऽविद्याऽस्मितारागद्वेषाभिनिवेशाः । अतथावस्तुनि तथेति ख्यातिरविद्या । अहमस्मीत्यभिमानोऽस्मिता । एकानेकदर्शनशक्त्योरेकात्मताऽस्मिता । सुखानुशायी रागः । दुःखानुशायी द्वेषः । स्वरसवाही विदुषोऽपि तथा गूढोऽभिनिवेशः । स्वकर्माणि च क्लेशाश्च स्वकर्मक्लेशास्तैश्चोदितः प्रेरितो गर्भः संपद्यते नतु कर्मक्लेशवियुक्तः । अत एव वीतरागाणां जन्मासंभवः कर्मक्लेशरहितत्वात् । तथाचोक्तम् । चित्तमेव हि संसारि रागादिक्लेशदूषितम् । तदेव तैर्विनिर्मुक्तं भवांत इति कथ्यत इति । अथ किं शुद्धे शुक्रार्तवे स्वकर्मक्लेशचोदित एव गर्भः संपद्यतेऽथवाऽन्यदपि किंचिदपेक्षत इत्याह । युक्तिवशादिति । योजनं युक्तिरुपादेयस्याऽर्थस्येतिकर्तव्यतासाधनोपायार्थम् । युक्तेर्वशः सामर्थ्यं प्रभावो युक्तिवशः । ततः शुद्धे शुक्रार्तवे स्वकर्मक्लेशचोदित एव स सत्वो गर्भः संपद्यते नान्यथा । कथमित्याह । अग्निरिवाऽरणौ । तथाहि । मथ्यमंथनमंथानादिसंयोगवशादीदृक्सामग्रीमंतरेणारणावग्निर्यथा न जायते तथा गर्भोऽपि यथोक्तसामग्रीवैकल्यान्न भवति । सकलसामग्रीसद्भावादेव भवतीति भावः ।

एवं गर्भस्य संपत्तिमभिधाय यथा तस्य कुक्षौ वृद्धिः स्यात्तथा वक्ति ।

**बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्वानुगैश्च सः ।**
**मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते ॥ २ ॥**

बीजेति । बीजात्मकैर्गर्भजननसंमुखभावैः शुक्रार्तवरूपतः परिणतैः । कैः । महाभूतैराकाशादिभिः सत्वरजस्तमोमयैः । तत्र सत्वबहुलमाकाशम् । तमोरजोबहुलो वायुः । सत्वरजोबहुलोऽग्निः । सत्वतमोबहुला आपः । तमोबहुला पृथ्वी । इत्येवंरूपैः स गर्भः कुक्षौ विवर्धते विशेषेण वृद्धिं याति । किंभूतैः । सूक्ष्मैरतींद्रियैर्योगिदृश्यैः । तथा सत्वं चेतोऽनुगच्छंति सत्वानुगानि तैः । यत्र सत्वं तिष्ठति तत्राऽवश्यं तान्यपि तिष्ठंति सत्वानुशायित्वात्तेषाम् । तथाचोक्तम् । अतींद्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तपूर्व इत्यादि । चशब्दो हेतुसमुच्चयार्थः । न केवलं महाभूतैर्हेतुभूतैर्गर्भो विवर्धते यावन्मातुश्चाहाररसजैरित्यतो वक्ष्यमाणाद्धेतोरपि वर्धत इत्यर्थः । मातुरित्यादि । मातुः संबंधिभिराहाररसजैश्च कुक्षौ विवर्धते । चशब्दोऽत्राऽनुक्तसमुच्चयार्थः । न केवलं पूर्वोक्ताद्यथानिर्दिष्टाद्धेतोर्गर्भः कुक्षौ विवर्धते यावदनिर्दिष्टादपि मातुः सौमनस्यादेः कललार्बुदपेश्याद्यवस्थाभावेन विशेषतो वृद्धिं यातीति । कथं वर्धत इत्याह । क्रमान्न झटित्येव । ननु मातुश्चाहाररसजैरिति कथमुक्तम् । यतः पंचभूतात्मक एवाऽहाररसो न च यदात्मकोऽसौ स तस्यैव जन्मकारणं भवितुमर्हत्यव्यतिरिक्तत्वात् । तस्मादेवमयं व्याख्यातव्यः । आहाररसे जातैराहाररसजैः । सप्तम्यंतादुपपदाज्जनेर्डः । मातुराहाररसात्मना परिणतैरिति ।

ननु सत्वः कुक्षौ प्रविष्टो गर्भतामाप्नोतीत्युक्तं न चाऽस्य प्रवेश उपलभ्यत इत्यत्राह ।

**तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् ।**
**नेंधनं दृश्यते गच्छत्सत्वो गर्भाशयं तथा ॥ ३ ॥**

तेज इति । न केवलं दृश्यत्वादृश्यत्वाभ्यां वस्तुसद्भावासद्भावौ व्यवस्थाप्येते येनाऽदृश्यत्वात्सत्वस्य कुक्षौ प्रवेशासंभवः । किंतर्हि तत्कार्यान्यथानुपपत्त्याऽपि वस्तुसद्भावो व्यवस्थाप्यत एव । यथाऽर्करश्मीनां संबंधि तेजः स्फटिकेन सूर्यकांताख्येन तिरस्कृतं व्यवहितं स्फटिकस्याधस्तात् स्थितमिंधनं गच्छद्व्रजन्न

दृश्यते । अथ च तेजःकार्यमिंधनगतं दृश्यते नान्यसंबंधि कार्यम् । तदेवं तेजःकार्यान्यथानुपपत्त्या तेजस इंधनगमनं तथा तत्र तस्य सद्भावोऽप्यधिगम्यते । एवं सत्वो गर्भाशयं गच्छन् व्रजन्न दृश्यत एव । वस्तुप्रभावाद्गच्छति च । सत्वशब्द उपलक्षणार्थो महाभूतान्यपि तदंतर्गतानि न दृश्यंत एवाऽथ च कार्येणोपलभ्यंत एव । तदेवं सत्वानुयायिभिर्महाभूतैर्गर्भः कुक्षौ विवर्धते न तु केवलैः सत्वानधिष्ठितैः । चेतोवक्रांत्या हि क्रमात्कललादिना वस्तुजातं विवृद्धिं विपुलतामापद्यते नान्यथा मृतशरीरवत् ।

ननु सत्वो भूतानुग एकरूप एव कथमनेकजात्याकृत्या नरतुरगोरगगजादिमत्याऽऽलिंगितः संपद्यत इत्यस्मिन् पर्यनुयोग इदमाह ।

**कारणानुविधायित्वात्कार्याणां तत्स्वभावता ।**
**नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलोहवत्॥ ४ ॥**

कारणेति । कारणं हेतुमवश्यमनुविदधतीति कारणानुविधायीनि । आवश्यके णिनिः । कारणस्वभावानि कार्याणि भवंति सर्वाण्येव तस्माद्धेतोः कार्याणां तत्स्वभावता । स्वभावशब्दः सदृशार्थः । तच्छब्देन कारणं परामृश्यते । तस्य कारणस्य स्वभावता तत्सादृश्यम् । तस्मात्कार्यकारणसादृश्याद्धेतोः सत्वो महाभूतानुग एकरूप एवानेकरूपनानायोन्याकृतीः प्रतिबिंबविशेषान् धत्ते धारयति । कथमिव । द्रुतलोहवत् । यथाहि रूप्यादिवस्तुजातमग्निना द्रुतरूपतां गतमेकरूपमेव सिकतादिकल्पितायां नानारूपायां मनुष्याद्याकृतौ निषिक्तं तां तामाकृतिं यथाकल्पितां धत्त एवं स सत्वो नानायोनौ गच्छति । तां तां यथास्वमाकृतिं धारयति ।

**अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ।**
**रक्तस्य स्त्री तयोः साम्ये क्लीबः**

अत इति । अत एव च पूर्वोक्तात्कार्यकारणसादृश्याद्धेतोः शुक्रस्य पुंरेतसो बाहुल्याद्बहुत्वात्सामर्थ्यलभ्यत्वाच्च स्त्रीरेतसो रजसोऽल्पत्वात्पुमान् जायते न स्त्री । तथाविधस्य कारणस्याभावात् । तथा पूर्वोक्तात्कार्यकारणसादृश्यात्स्त्रीरेतसो रक्तस्य बाहुल्याद्बहुत्वात्सामर्थ्यलभ्यत्वाच्च पुंरेतसोऽल्पत्वात्स्त्री जायते न पुमान् । तथाविधस्य कारणस्याऽभावात् । पुंरेतो हि बलवदल्पं स्त्रीरजोऽभिभूय पुंगर्भस्य कारणतां याति । यदा तु स्त्रीरजसो बलवत्त्वमल्पत्वं च पुंरेतसस्तदा स्त्रीरजोऽल्पं तु पुंरेतोऽभिभूय स्त्र्याख्यस्य गर्भस्य कारणतामापद्यते । यदा तु शुक्रार्तवयोः साम्यं तुल्यत्वं भवति तदा न स्त्री न पुमान् जायतेऽपितु लिंगद्वयालिंगितः क्लीबः षंढो जायते । एवं पितुः संबंधि शुक्रं स्त्रीरक्तमिश्रितं गर्भकारणं न केवलं पितृसंबंध्येव मातुर्वा । दारुवाहिना तूक्तम् । स्त्रीपुंसयोः सुसंयोगे यद्यादौ विसृजेत्पुमान् । शुक्रं ततः पुमान्वीरो जायते बलवान् दृढः । अथ चेद्वनिता पूर्वं विसृजेद्रक्तसंयुतम् । ततो रूपान्विता कन्या जायते दृढसंहतेति । अत एव च पुंगर्भाः केचित्किंचिन्मातृसदृशा दृश्यंते स्त्रीगर्भाश्च केचित्किंचित्पितृसदृशा दृश्यंते । ननु रसाद्रक्तं ततो मांसं मासान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायत इत्यविशिष्य निर्दिष्टं न तु पुंशुक्राद्गर्भः प्रजायत इत्येवं निर्दिष्टम् । उभयोरपि च स्त्रीपुंसयोरवश्यं सप्तधातुकत्वमभ्युपगंतव्यं न पुंस एव । तदेवं तरुणीनां कुसुमशराक्रांतमानसानां तथाविधेन पुरुषसंयोगेन विनाऽपि केवलात्स्मृतिसंस्पर्शदर्शनाच्चलितप्रस्रुतरेतसां किमिति गर्भो न जायते । शुक्रार्तवं हि गर्भकारणम् । तच्च सन्निहितमेवेति केचित् । तान् ब्रूमहे । पुंशुक्राभावात् । पुंशुक्रं हि स्त्रीरेतोरक्तयुक्तं गर्भकारणम् । न च तदत्राऽस्ति । तदभावाद्गर्भस्याऽनुत्पत्तिः । तथा च संग्रहेऽप्यध्यगीष्ट । योषितोऽपि स्रवंत्येव शुक्रं पुंसः समागमे । गर्भस्य तु न तत्किंचित्करोतीति न चिंत्यत इति ।

सांप्रतं यथाऽनेकगर्भत्वं तुल्यकालं स्यात्तथा प्रतिपादयितुमाह ।

**शुक्रार्तवे पुनः ॥ ५ ॥**
**वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।**

वातेन यथास्वं शुक्रार्तवे बहुशो भिन्ने बहुधाकृते सति बह्वपत्यता भवति । यथास्वमिति । यदा शुक्रमाधिक्येन वर्तमानं वातेन बहुधा भिद्यते तदा पुंगर्भानेकत्वम् । यदा तु स्त्रीरज आधिक्येन वर्तमानं वायुना बहुधा भिद्यते तदा स्त्रीगर्भानेकत्वम् । इति बह्वपत्यता भवति । सूकरसारमेयादिजातिषु त्वनेनैव हेतुना सदाऽनेकापत्यता ।

ननु कथं वियोनयो विकृताकाराश्च गर्भाः स्युरित्याह ।

**वियोनिविकृताकारा जायंते विकृतैर्मलैः ॥ ६ ॥**

वियोनयश्च विकृताकाराश्च वियोनिविकृताकारास्ते तथाविधा गर्भा जायंते । कथमित्याह । विकृतैर्मलैः । वातादिभिर्दुष्टैरुन्मार्गगामिभिः ।

**मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।**
**वत्सराद्द्वादशादूर्ध्वं याति पंचाशतः क्षयम् ॥ ७ ॥**

स्त्रीणां मासि मासि प्रतिमासं रजो रक्तं त्र्यहं स्रवति त्रीणि दिनानि प्रवर्तते । ननु शुद्धे शुक्रार्तव इति पूर्वं शुक्रमेवोद्दिष्टं ततस्तस्यैव निर्देशो न्याय्य इति शुक्रमानुपूर्वीप्राप्तमुल्लंघ्य कस्माद्रक्तं निर्दिष्टम् । उच्यते । बहुवक्तव्यत्वात् । रक्ते हि बहुवक्तव्यमस्त्यतस्तदेव प्राग्वक्तुं युक्तम् । त्र्यहमिति कालाध्वनोरिति द्वितीया । किंभूतं रजः । रसाज्जातं रसजम् । ननु रक्तं रसजमेव । वक्ष्यतिहि । रसाद्रक्तं ततो मांसमित्यादि । तत्किमर्थं रसजमित्युक्तम् । ब्रूमहे । रसादाहाररसात् परिणमतो जातं रसजमित्यत्र निर्दिष्टं न तु रसधातोर्जातमितिबोध्यम् । कुतःप्रभृति तद्रजः प्रवर्तत इत्याह । वत्सरादित्यादि । द्वादशाद्वर्षादूर्ध्वमनंतरं स्रवति । पंचाशतो वर्षादूर्ध्वं परेण क्षयं याति । द्वादशानां पूरणं वर्षमिति

तस्य पूरणे डडिति डट्। द्वादशादिति प्रायिकमेतत्। एकादशवार्षिकाणामपि स्त्रीणां रक्तप्रवृत्तिदर्शनात्। पंचाशतः क्षयमित्यत्राप्येवमेव चिंत्यम्।

**पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता।**
**शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि॥ ८॥**
**वीर्यवंतं सुतं सूते**

पूर्णानि षोडशवर्षाणि यस्याः सैवंविधा स्त्री पूर्णविंशेन नरेण संगता मिथुनतां याता सती गर्भाशयादिषु शुद्धेषु वीर्यवंतं सामर्थ्ययुक्तं पुत्रं सूते जनयति। प्रायिकं चैतदर्वागपि साधुगर्भदर्शनात्। अत एवाऽयमेव तंत्रकारोऽन्यथा संग्रहे जगाद। षोडशवर्षायाः पंचविंशतिवर्षः पुत्रार्थं यतेतेति। विंशतेः पूरण इति डटि तिविंशतेरिति तिलोपे विंशशब्दः। पूर्णो विंशो यस्येति पूर्णविंशः। गर्भस्याशयो गर्भाशयस्तस्मिन् शुद्धे निर्मले वातादिभिरदुष्टे। तथा मार्गे प्रकृतत्वादपत्यमार्गे वातादिभिरदुष्टे। तथा रक्ते स्त्रीरजसि शुद्धे। तथा शुक्रे पुंबीजे शुद्धे। तथाऽनिले शुद्धे पित्तादिभिरनावृते। तथा हृदि शुद्धे दोषानधिष्ठितेऽसंतप्ते।

**ततो न्यूनाब्दयोः पुनः।**
**रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा॥ ९॥**

ततः पूर्वोक्ताद्वयःपरिमाणान्न्यूनाब्दयोर्हीनवर्षयोः स्त्रीपुरुषयोः पंचदशाष्टादशवर्षयो रोगी भवति। रोगीत्यतिशय इनिर्मत्वर्थीयः। तथोत्पन्नोऽल्पायुरधन्यश्चाऽप्रशस्तो गर्भो भवति न भवत्येव वा।

ननु दंपत्योः शुक्रार्तवसंयोगेऽपि सति क्वचिद्गर्भसंभूतिर्न दृश्यते तत्कथमेतदित्याशंकायामाह।

**वातादिकुणपग्रंथिपूयक्षीणमलाह्वयम्।**
**बीजासमर्थं रेतोऽस्रम्**

वातादीति। आदिशब्देन पित्तश्लेष्मणोः परिग्रहः। वातादयश्च कुणपं च ग्रंथिश्च पूयश्च क्षीणं च मलं चेति द्वंद्वः। एतान्याह्वयः संज्ञा यस्य रेतोऽस्रस्य तदेवम्। आह्वयशब्दः प्रत्येकं वातादिषु योज्यः। रेतश्चाऽस्रं च रेतोऽस्रं वाताद्याह्वयम्। वातसंज्ञं शुक्रं वातशुक्रम्। एवं पित्तशुक्रं कफशुक्रम्। एवं कुणपगंधित्वात्कुणपं नाम शुक्रं कुणपशुक्रं तद्रक्तेन दुष्टेन भवति। एवं ग्रंथिशुक्रं पूयशुक्रं क्षीणशुक्रम्। मलाह्वयं तु द्विधा मूत्रपुरीषभेदात्। मूत्रसदृशं शुक्रं मूत्रशुक्रम्। एवं पुरीषशुक्रम्। आर्तवमपि शुक्रवद्दोषदूषितमबीजमेव। तस्य लिंगं नाम च शुक्रवद्वेद्यम्। यथा। वातार्तवं पित्तार्तवमित्यादियावत्पुरीषार्तवमिति। साध्यासाध्यविभागश्च तद्वदेव। शुक्रार्तवदोषेषु च चिकित्सामपि तुल्यां ब्रूते। यत्र तु विशेषं वक्ष्यति तत्र विशेषमभिधास्यति। यथा पिबेद्ग्रंथ्यार्तवे पाठेत्यादि।

**स्वलिंगैर्दोषजं वदेत्॥ १०॥**
**रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रंथिसन्निभम्।**
**पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः॥ ११॥**

स्वलिंगैरिति। स्वानि च तानि लिंगानि लक्षणानि च स्वलिंगानि यथास्वं वातादीनां स्वरूपाणि। यथा रूक्षश्यावारुणादीनि वायोः। विस्रगंधोष्णादीनि पित्तस्य। स्निग्धपांडुपिच्छिलादीनि कफस्य। तैः स्वलिंगैर्वातादिदोषजं वदेज्जानीयाद्वैद्य इति शेषः। रक्तेन दुष्टेन कुणपगंधित्वात्कुणपं कुणपसंज्ञमन्वर्थं रेतोऽस्रं भवति। एवं ग्रंथ्यादीनामप्यन्वर्थसंज्ञता बोध्या। श्लेष्मवाताभ्यां दुष्टाभ्यां ग्रंथिसन्निभं ग्रंथ्याकारम्। रक्तपित्ताभ्यां पूयसदृशं रेतोऽस्रं पूयाख्यं भवति। क्षीणं नाम रेतोऽस्रं मारुतपित्ततो भवति। मारुतपित्ताभ्यां दुष्टाभ्यां दुष्टं तद्दूषणात्क्षीणतां नीतमित्यर्थः।

**कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम्।**

पूर्वोक्तानीमानि वातादिशुक्रार्तवाणि क्षीणशुक्रार्तवांतानि कृच्छ्रसाध्यत्वात्कृच्छ्राणि। असाध्यं त्विति। मूत्रं च विट् च मूत्रविशौ। तयोरिव प्रभा यस्य तदेवं रेतोऽस्रमुभयमपि मलसंज्ञं त्रिदोषदुष्टमसाध्यं साधयितुमशक्यम्।

इदानीमुपक्रममाह।

**कुर्याद्वातादिभिर्दुष्टे स्वौषधम्**

स्वमात्मीयं च तदौषधं च स्वौषधम्। वाताद्यौषधमित्यर्थः। तेन वायोः कुपितस्य यदौषधं प्रशमोपायः स्निग्धोष्णाम्ललवणादि। पित्तस्य मधुरशीतकषायादि। श्लेष्मणः कटुकरूक्षकषायादि। तत्तस्य भेषजमित्यवतिष्ठते। विशेषतस्तु वातजे शुक्रदोषे सुक्तसैंधवफलाम्लसिद्धं यवक्षारप्रतीवापं सर्पिःपानम्[1]। बिल्वविदारीसिद्धं क्षीरयुक्तमास्थापनम्। मधुभद्रदारुसिद्धं तैलमनुवासनम्। क्षीरकुलीररससिद्धं तैलमनुवासनमुत्तरबस्तिश्च। पैत्तिके कांडेक्षुश्वदंष्ट्रागुडूचीक्वाथसिद्धं मूर्वामधूकप्रतीवापं सर्पिःपानम्। त्रिवृच्चूर्णः सघृतो विरेकः। पयस्याश्रीपर्णीसिद्धं क्षीरयुक्तमास्थापनम्। मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च। श्लैष्मिके पाषाणभेदाश्मंतकामलकक्वाथसिद्धं पिप्पलीमधुकचूर्णप्रतीवापं सर्पिःपानम्। मदनफलकषायो वमनम्। दंतीविडंगचूर्णस्तैललीढो विरेकः। राजवृक्षमदनफलकषायप्रगाढमास्थापनम्। मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च। वातजे पुष्पदोषे भार्गीभद्रदारुसिद्धं सर्पिःपानम्। काश्मर्यक्षुद्रसहासिद्धं वा क्षीरं मधुकशृगालविन्नाकल्कं पयःसर्पिःसहितं प्रियंगुतिलकल्कं वा योनौ धारयेत्। सरलमुद्गपर्णीकषायः प्रक्षालनम्। पित्तजे काकोलीद्वयविदारीमूलक्वाथमुत्पलपद्मकक्वाथं मधुकपुष्पकाश्मर्यफलक्वाथं वा सशर्करं पिबेत्। श्वेतचंदनक्वाथं वा सक्षौद्रमित्यादिकं संग्रहे बोध्यम्।

इदानीं कुणपचिकित्सामाह।

**कुणपे पुनः॥ १२॥**
**धातकीपुष्पखदिरदाडिमार्जुनसाधितम्।**
**पाययेत्सर्पिरथवा विपक्वमसनादिभिः॥ १३॥**

१ यवक्षुक्सैंधवकटूष्णाम्ललवणक्षारप्रतीवापं सर्पिरित्यन्यपाठः।

कुणपाह्वये तु रेतसि धातक्यादिद्रव्यसाधितं घृतं पाययेत् । वैद्य इति शेषः । अथवाऽसनादिभिरसनादिगुणोद्दिष्टैर्भेषजैर्विपक्वं घृतं पाययेत् । ननु कुणप इति सामान्योक्तावपि कथं रेतसीति विशेषो लभ्यते । ब्रूमः । रेतःप्रकरणात् । अपिच कुणपाखस्य पुरस्तादुपक्रमं वक्ष्यति । पेयं कुणपपूयास्र इति । तस्माद्रेतस एवेह ग्रहणं युक्तम् । पुनर्ग्रहणमत्र वातादिदुष्टे रेतसस्त्वोक्तां क्रियां न कुर्यादिति द्योतयति ।

सांप्रतं ग्रंथिसंज्ञे रेतस्युपक्रमं ब्रूते ।

**पलाशभस्माश्मभिदा ग्रंथ्याभे**

पलाशस्य भस्म पलाशभस्म । अश्मभित्पाषाणभेदः । पलाशभस्म चाऽश्मभिच्च । तेन विपक्वं घृतं ग्रंथ्याभे ग्रंथिनाम्नि रेतसि पाययेत् ।

**पूयरेतसि ।**

**परूषकवटादिभ्याम्**

पूयाख्ये रेतसि परूषकवटादिभ्यां विपक्वं घृतं पाययेत् । परूषकश्च वटश्च परूषकवटौ तावादी ययोस्तौ परूषकवटादी ताभ्याम् । परूषकं वरा द्राक्षेति परूषकादिः । तथा न्यग्रोधपिप्पलेति वटादिः ।

**क्षीणे शुक्रकरी क्रिया ॥ १४ ॥**
**स्निग्धं वांतं विरिक्तं च निरूढमनुवासितम् ।**
**योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥ १५ ॥**

क्षीणे क्षीणत्वात् क्षीणाह्वये रेतसि शुक्रकरी क्रिया कार्येति शेषः । शुक्रलमतिशयेन सेव्यमित्यर्थः ।

**संशुद्धो विट्प्रभे सर्पिर्हिंगुसेव्यादिसाधितम् ।**
**पिबेत्**

संशुद्धः कृतवमनविरेचनो विट्प्रभे मलसदृशे रेतस्यातुरो घृतं पिबेत् । किंभूतम् । हिंगुसेव्यादिसाधितम् । अत्राऽऽदिशब्दो व्यवस्थावाची । तेन संग्रहोक्तस्य हिंगुशीरचित्रकप्रियंगुसमंगामृणालसिद्धं त्वगेलाचोचचूर्णं प्रतीवापमित्यस्य पाठस्य सूचना भवति । हिंगुसेव्याग्निसाधितमित्यपरे पेठुः । नन्वसाध्यं तु त्रिदोषं मूत्रविट्प्रभमित्युवाच तंत्रकृत् । तत्किमित्यस्य चिकित्सोपदिष्टा । ब्रूमः । किंचित्साध्यताप्यस्यास्तीति प्रतिपादयितुं चिकित्सामुपदिदेश शास्त्रकारः । अत एव मूत्रप्रभस्यासाध्यत्वाच्चिकित्सां नोपादिशत् । मूत्रप्रभार्तवविट्प्रभार्तवयोरप्यसाध्यत्वादेवोपक्रमं नाभ्यधात् ।

वाताद्यार्तवेषु स्वौषधं कुर्यादित्युक्तम् । कुणपग्रंथ्याद्यार्तवेषु विशेषेण चिकित्सां वक्ष्यति ।

**ग्रंथ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १६ ॥**

ग्रंथ्यार्तवे ग्रंथिनाम्न्यार्तवे स्त्रीरजसि जलं पिबेत् । किंभूतम् । पाठादिजातम् । पाठा प्राचीना । व्योषं त्रिकटुकम् । वृक्षकः कुटजः ।

**पेयं कुणपपूयास्रे चंदनं वक्ष्यते तु यत् ।**
**गुह्यरोगे च तत्सर्वं कार्यं सोत्तरबस्तिकम् ॥ १७ ॥**

कुणपाख्ये रजसि पूयाख्ये वाऽपि चंदनं पेयम् । अत्र द्रवानुक्तौ जलं देयमिति परिभाषया जलेन पातव्यमिति बोध्यम् । क्षीणार्तव इह चिकित्सितं नोक्तं तच्च स्वधियोह्यम् । यथा क्षीणरेतसि शुक्रकरी क्रिया कार्येत्युक्तं तथा क्षीणे रक्ते रक्तकरी क्रिया कार्येति । न च केवलमेतत्पूर्वोक्तमेव चिकित्सितं कार्यं यावद्गुह्यरोगप्रतिषेधे यद्वक्ष्यते भणिष्यते तदपि सर्वं साधनं यथायोगं वमनादि योनौ पिचुकधारणादिकं च कार्यम् । किंभूतम् । सोत्तरबस्तिकम् । उत्तरबस्तिरपि तत्र कार्य इत्यर्थः । सोत्तरबस्तिकमिति तेन सहेतितुल्ययोग इति बहुव्रीहिः । शेषाद्विभाषेति कप् । वोपसर्जनस्येति सभावः । उत्तरबस्तिरपि तत्रौषधमित्यर्थः ।

बीजासमर्थं रेतोऽस्रमभिधाय सांप्रतं शुद्धं यच्छुक्रार्तवं बीजसमर्थं तल्लक्षणार्थमाह ।

**शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ।**
**घृतमाक्षिकतैलाभं सद्गर्भाय**

शुद्धे शुक्रार्तव इति पूर्वं शुक्रस्योपदेशात्प्राधान्याच्च शुक्रस्य पूर्वमुपन्यासः । तत्राहाररसस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते । तच्च क्षीर इव सर्पिरिक्षुरस इव गुडः । शरीरे शुक्रधरां कलामाश्रित्य सर्वांगव्यापितया स्थितं विशेषतश्च मज्जमुष्कस्तनेषु हर्षोदीरितं संघट्टनेन हृदयावेशात् पिंडीभूतमंगादंगात्प्रवर्तते तच्च शुक्लादिगुणयुक्तं शुक्रम् । तथा घृताभं माक्षिकाभं तैलाभं वा सद्गर्भाय शोभनगर्भार्थं भवति । तत्र घृताभेन गौरवर्णत्वं गर्भस्य । माक्षिकाभेन श्यामवर्णत्वम् । तैलाभेन कृष्णवर्णत्वं भवति ।

**आर्तवं पुनः ॥ १८ ॥**
**लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।**

रक्तमेव स्त्रीणां मासि मासि गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमाचक्षते । अतिप्रसंगेनानृतौ वा प्रवर्तमानं तदेवास्रग्दरादिसंज्ञां लभते । यदार्तवं लाक्षारसाभमलक्तकरससदृशं तथा शशरुधिरसदृशम् । तथा यच्च धौतं सद्विरज्यते वस्त्रादिलग्नं धौतं सल्लौहित्यं जहातीत्यर्थः । तदीदृशमार्तवं तु सद्गर्भाय संपद्यते ।

शुद्धशुक्रार्तवलक्षणमुक्त्वेदानीं गर्भसंभवात्पूर्वमितिकर्तव्यतामाह ।

**शुद्धशुक्रार्तवं स्वच्छं संरक्तं मिथुनं मिथः ॥ १९ ॥**
**स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितबस्तिकम् ।**

शुक्रं चार्तवं च शुक्रार्तवे । शुद्धे शुक्रार्तवे यस्य मिथुनस्य तच्छुद्धशुक्रार्तवं स्त्रीपुरुषयुगलं समुपाचरेदिति संबंधः । तथा स्वस्थमरोगं रोगलेशेनाप्यनाक्रांतम् । तथा मिथः परस्परं संरक्तमनुरागयुक्तमन्योन्यदर्शनेन कुसुमचापाविष्टमेवंविधम् । स्नेहैः पुंस-

वनैर्यथाभिमतगर्भग्रहणप्रभावैः फलसर्पिर्महाकल्याणकादिभिः स्निग्धम् । शुद्धं कृतवमनविरेचनम् । तथा शीलितबस्तिकम् । शीलिताऽभ्यासेनानुष्ठिता बस्तयो येन मिथुनेन तच्छीलितबस्तिकम् । न सकृदेवानुष्ठितबस्तिकमित्यर्थः ।

एवं दंपत्योस्तुल्यामितिकर्तव्यतामभिधायेदानीमनयोः पृथगुपक्रमं वक्ति ।

**नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २० ॥**

नरमिति । विशेषाद्विशेषेणातिशयेन नरं क्षीरैर्घृतैश्च समुपाचरेदिति संबंधः । विशेषादित्यनेनैतद्द्योतयति । विशेषेण नरं क्षीराज्यैः समुपाचरेन्न पुनर्नारीमपि तैः समुपाचरेदिति । किंभूतैः । मधुरौषधसंस्कृतैः । मधुराणि मधुरप्रायाणि मधुरप्रभावानि च तान्यौषधानि जीवनीयादीनि तैर्मधुरौषधैः संस्कृतैः सिद्धैरित्यर्थः ।

**नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ।**

नारीं तैलेन माषैश्च समुपाचरेत् । चशब्दोऽत्र भिन्नक्रमः । पित्तलैश्च समुपाचरेदित्यर्थः । पित्तलानि हि रक्तवृद्धिहेतवः । उक्तं हि । आश्रयाश्रयिणां मिथः । यदेकस्य तदन्यस्य वर्धनक्षपणौषधमिति । एवं च तैलं पित्तकृत्त्वादेवोपन्यस्तम् । विशेषादित्यत्राऽप्यनुवर्तते । क्षीराज्येभ्योऽपि विशेषेण नारीं तैलादिभिः समुपाचरेदित्यर्थः । पुरुषस्य तु रजसोऽभावात्तद्वृद्धिहेतवस्तैलादयो नोपयुज्यंत एव ।

एवं पूर्वोक्तसकलसामग्रीयुक्तादपि मिथुनाद्विशिष्टकालमंतरेण गर्भस्यासंभव इति स्त्रियमधिकृत्य तद्गर्भग्रहणयोग्यं कालं दर्शयितुमाह ।

**क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २१ ॥**
**स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।**

कार्श्यं हेतुं विना क्षामं तथा प्रसन्नं निर्मलं वदनं मुखं यस्याः सैवंभूता ताम् । श्रोणिश्च पयोधरौ च श्रोणिपयोधरम् । स्फुरत्कंपमानं श्रोणिपयोधरं यस्यास्ताम् । श्रोणिः कटिः । स्रस्ते चलिते इवाक्षिणी कुक्षिश्च यस्यास्ताम् । तथा पुंसि कामोऽभिलाषो यस्यास्ताम् । एवंविधां स्त्रियमृतुमतीमृतुयुक्तां विद्यात् । तस्याः स गर्भग्रहणकाल इत्यर्थः । पुंस्कामामिति संपुंकानां सो वक्तव्य इति मकारस्य सकारादेशाद्रुत्वाभावः ।

सर्वं च हेतुमद्ब्रूयादित्यागमोऽत आह ।

**पद्मं संकोचमायाति दिनेऽतीते यथा तथा ॥ २२ ॥**
**ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ।**

यथा दिवा प्रफुल्लं पद्ममनंतरं दिवसातिक्रांतौ संकोचमायाति मुकुलभावं प्राप्नोति तत्स्वभावत्वात्तस्य । तथा तेनैव प्रकारेण ऋतावतीतेऽतिक्रांते द्वादशरात्रस्वभावे योनिः संकोचमायाति । सा च योनिः संकुचितत्वाच्छुक्रं न प्रतीच्छति ।

विवृताविवृतमुखत्वं हि योनेर्गर्भग्रहणाग्रहणहेतुस्तच्च वायोः क्रियावतः कालसहायस्यायत्तमित्याह ।

**मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २३ ॥**
**ईषत्कृष्णं विगंधं च वायुर्योनिमुखान्नुदेत् ।**

मासेन यदुपचितमाहाररसतो वृद्धिं प्राप्तं रक्तं तत्पुनर्मासोपचितं रक्तमृतौ वायुर्योनिमुखान्नुदेत्प्रेरयेत् । विधौ लिङ् । तदा योनिमुखं विवृतं संपद्यते । केन नुदेत् । धमनीभ्यां स्रोतोविशेषाभ्याम् । किंभूतं रक्तम् । ईषत्कृष्णं तथा विगंधं विस्रगंधरहितम् । प्रकृतिस्थप्रेरकपवनसंपर्कादीषत्कृष्णता न तु कुपितसमीरणप्रेरणसंश्लेषवशादिवात्यंतं कृष्णता नाऽपि पित्तेन तथाभूतेन युक्तं येन विस्रगंधि स्यात् । नाऽपि श्लेष्मणा तथाभूतेन युक्तं येन तद्वर्णयुक्तं स्यात् । तस्माच्छुद्धं विशिष्टे काले योनिमुखात्प्रवर्तमानं रक्तमार्तवसंज्ञां लभते । तदेव वाऽन्यदा योनिमुखात्प्रवर्तमानमसृग्दरसंज्ञामासादयति । शुद्धं च रक्तं पुष्पसंज्ञं गर्भाख्यस्य फलस्य भविष्यतोऽभिव्यंजकत्वात् ।

अत एवाह ।

**ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥२४॥**
**मृजालंकाररहिता दर्भसंस्तरशायिनी ।**
**क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ॥ २५ ॥**
**पर्णे शरावे हस्ते वा भुंजीत ब्रह्मचारिणी ।**

तत इति । पुष्पेक्षणात्पुष्पस्य दर्शनादेव दर्शनानंतरं स्त्री त्र्यहं त्रीणि दिनानि कल्याणं शुभमवश्यं ध्यायति चिंतयतीति कल्याणध्यायिनी स्यात् । आवश्यके णिनिः । तथा मृजा स्नानक्रिया । अलंकारः कटकादिः पुष्पादिर्वा । अलंक्रियते भूष्यते शरीरमेभिरिति कृत्वा गंधमाल्यस्याप्यलंकारत्वम् । तथा च वक्ष्यति । गंधमाल्यादिकां भूषामिति । मृजालंकाराभ्यां रहिता वर्जिता । तथा दर्भाणां संस्तरः शय्या तत्र शेते सा दर्भसंस्तरशायिनी । व्रत इति णिनिः । तथा त्र्यहं क्षैरेयं क्षीरसिद्धं यावकं यवान्नविशेषं पर्णे शरावे हस्ते वा भुंजीत भक्षयेत् । कियन्मात्रम् । स्तोकमल्पमात्रम् । तत्क्षैरेयमुपयुक्तं कीदृशं स्यादित्याह । कोष्ठेत्यादि । शोधनं च कर्षणं च शोधनकर्षणम् । कोष्ठस्य शोधनकर्षणमिति षष्ठीसमासः । शरीरस्य महास्रोतो मध्यमो भाग आमपक्वाशयः कोष्ठशब्दवाच्यः स एव गर्भाधिष्ठानमतस्तस्यैव शोधनम् । तथा तदंगानां कर्षणमिति व्याख्येयम् । न पुनः कोष्ठस्य शोधनमन्येषां चांगानां कर्षणम् । यथा हि त्रिवृतादिना विरिच्यते नैवमनेन यावकेन । वस्तुस्वाभाव्यात् कोष्ठशोधनकर्षणमात्रमेव क्रियते । क्षैरेयमिति क्षीराड्ढञिति ढञ् । याव एव यावक इति यावादिभ्यः कनिति कन् । तथा ब्रह्मचारिणी त्यक्तव्यवाया स्यात् ।

**चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्यांबरा शुचिः २६**
**इच्छंती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ।**

ततस्त्र्यहादूर्ध्वं चतुर्थे वासरे स्नाता तथा शुक्लानि माल्यान्यं-

बराणि च यस्याः सैवम् । तथा शुचिरंतर्बहिश्च पवित्रा सती पुरः पूर्वं पतिं पश्येत् । संग्रहेऽप्युक्तम् । चतुर्थे त्वहन्युद्वर्तिता शीतसलिलस्नाताऽनुलिप्ताऽलंकृता शुक्लमाल्यांबरा कृतमंगलस्वस्त्ययनैवंविधमेव भर्तारं पश्येदनन्यमनाः । तथा हि । यादृशं पश्यति चिंतयति वा तादृशमेव प्रसूत इति ।

तत्किं त्र्यहमेव ऋतुरुतैव पुष्पदर्शनादथोत्तरकालमपीत्याशंक्याह ।

**ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रश्च निंदिताः॥२७॥**
**एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ।**

ऋतुदर्शनात्प्रभृति यावद्द्वादशरात्रयस्तावदृतुर्योषितो न पुनस्त्र्यहमेव यत्र पुष्पं प्रवर्तत इति तुशब्देन दर्शयति । अत्रास्मिन् द्वादशनिशावधावृतुकाले याः पूर्वास्तिस्रो निशा यासु प्रायः पुष्पं प्रवर्तते ता निंद्या गर्ह्याः सद्भिः । न तत्र सन्मतिः स्त्रियं संगच्छेत्। अत एवाऽत्र ब्रह्मचारित्वोपदेशः । तथैकादशी निशा निंद्याऽप्रशस्ता । चशब्दोऽत्रानुक्तायास्त्रयोदश्याः समुच्चयार्थः । त्रयोदश्यां हि मिथुनीभावे नपुंसकस्योत्पत्तिरिति केचिदाहुः । युग्मासु चतुर्थषष्ठाष्टमदशमद्वादशलक्षणासु निशासु संगमे पुत्रः स्यादचिंत्यत्वाद्धेतुभावस्य। तासु हि रात्रिष्वार्तवमल्पीभवति ।अन्यास्वयुग्मासु निशासु पंचमीसप्तमीनवमीषु कन्या जायते । तदा हि शुक्रमल्पीभवति पूर्वोक्ताद्धेतोः । यदि पुनराहारादिवशात् शुक्रस्याधिकत्वमयुग्मासु युग्मासु च न्यूनता स्यात्तदा पुमान् स्त्र्याकृतिर्दुर्बलो हीनांगो वा जायते । स्त्री च पुरुषाकृतिर्दुर्बला हीनांगा वा । उक्तं हि । स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत् । तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च सेवयेत् । एकादशीत्रयोदश्योस्तु नपुंसकमिति । तदेवं दंपतीपुंगर्भमिच्छंतौ युग्मासु निशासु पुंसवनादिकं कर्माचरेताम् । स्त्रीगर्भमिच्छंतौ त्वयुग्मासु रात्रिषु ।

**उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम्॥२८॥**
**नमस्कारपरायास्तु शूद्राया मंत्रवर्जितम् ।**

अथेत्यानंतर्ये मंगलसूचको निर्दिष्टः । अत एवाऽयमत्रार्थः । ऋतुकालादनंतरं मंगलपूर्विकां सर्वामिमां वक्ष्यमाणामितिकर्तव्यतां कुर्यादिति । उपाध्यायः पुरोहितोऽथर्ववेदवित् पुत्रीयं पुत्राय हितं विधिमिष्टिं कुर्वीत । कथम् । विधिवन्न यथाकथंचित् । विधिवदिति प्रशंसायां मतुप् । क्रियाविशेषणं चैतत् । तेन प्रशस्तं वेदोक्तमन्यूनातिरिक्तं विधानं यथा भवति तथा विधिं कुर्वीतेत्यवतिष्ठते । ब्राह्मणादिवर्णत्रयस्यैवं विधिं कुर्वीत शूद्रायाः पुनर्नमस्कारपराया नमस्कारप्रधानाया यथोक्तं सर्वविधिं मंत्रवर्जितं कुर्यात् । पुत्रीयमिति पुत्राच्छ चेति च्छः ।

**अवंध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २९ ॥**

एवं यथोक्तविध्यनुष्ठाने दंपत्योर्यः संयोगो मिथुनीभावः स न वंध्यः स्यात् । अपितु सफलो गर्भसंभवहेतुर्भवेदित्यर्थः । न केवलं दंपत्योः संयोग एव निष्फलो न भवेदपत्यं च कामतो यथाभिमतं पुंगर्भरूपं स्त्रीगर्भरूपं वा स्यात् ।

अत एवाह ।

**संतोऽप्याहुरपत्यार्थं दंपत्योः संगतं रहः ।**

रहःशब्देन ग्राम्यवचसाऽत्र ग्राम्यधर्मं सूचयति । हि यस्मात्संतः साधवोऽपत्यार्थमपत्यजननार्थं दंपत्योः स्त्रीपुरुषयो रह एकांते विशिष्टकालोचितं विशिष्टसंयोगं संगतमाहुः ।

न ग्राम्यसुखलिप्सायै न चापत्यमात्रायेत्याह ।

**दुरपत्यं कुलांगारो गोत्रे जातं महत्यपि ॥ ३० ॥**

दुष्टापत्यं स्त्रीगर्भः पुंगर्भो वा महत्यपि गोत्रे जातमुत्कृष्टेऽपि कुल उत्पन्नमंगारकार्यकरणसामर्थ्यात्समस्तकुलविनाशहेतुत्वात्कुलांगार इत्युच्यते ।

**इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ।**
**चिंतयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३१ ॥**

तौ दंपती यादृशं पुत्रमिच्छेतां कामयेतां तद्रूपचरितान्जनपदांश्चितयेताम् । रूपं वर्णसंस्थानप्रमाणाकृत्यादि । तथा चरितं श्रद्धाश्रुतसत्यार्जवानृशंस्यदानदयादाक्षिण्यस्वभावादि तस्य मनीषितस्य सदृशे रूपचरिते येषां तान् जनपदांश्चितयेतां ध्यायेताम्। पुत्रशब्दोऽपत्यमात्रोपलक्षणार्थोऽत्र ।तथाहि । दुहितरमपि कश्चिदिच्छत्येव। किंभूतौ तौ पितरौ। तदाचारपरिच्छदौ। आचरणमाचारः कुलानुरूपस्य देशानुरूपस्य चेतिकर्तव्यतालक्षणस्य कर्मणोऽनुष्ठानम् । परिच्छदो मनुजगवाश्वधनधान्यवस्त्रालंकाररत्नरथायुधगृहोद्यानवीणापणवगायनशय्यास्तरणादिः ।आचारश्च परिच्छदश्चाचारपरिच्छदौ । तदित्यनेनाभिलषितापत्यं परामृश्यते । तस्यैवाऽऽचारपरिच्छदौ ययोस्तौ दंपती इच्छासदृशरूपचरितान् जनपदान् ध्यायेताम् ।

**कर्मांते च पुमान्सर्पिःक्षीरशाल्योदनाशितः ।**
**प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३२ ॥**
**आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ।**
**तैलमाषोत्तराहारा तत्र मंत्रं प्रयोजयेत् ॥ ३३ ॥**

कर्मांत इति । कर्मांते च पुत्रीयविध्यनुष्ठानावसाने च पुमान् स्त्रीतः प्राक् पूर्वं शय्यामारोहेदाक्रमेत् । किंभूतः । सर्पिःक्षीरशाल्योदनाशितः । सर्पिर्मिश्रक्षीरशाल्योदनेनाऽशितो भोजितः । कथमारोहेद्दक्षिणेन पादेन मौहूर्तिकाज्ञया ज्योतिःशास्त्रविदादिष्टः । स्त्री तु वामेन पादेन तस्य दक्षिणपार्श्वतः शय्यामारोहेन्मौहूर्तिकाज्ञयेति योज्यम् । तुरवधारणे । उभयत्राऽपि पुमान् दक्षिणेनैव पादेन प्रागेव । स्त्री पश्चादेव वामेनैव पादेन पुंसो दक्षिणपार्श्वत एव शय्यामारोहेन्नान्यथाकृत्वेति । पुमान् सर्पिःक्षीरशाल्योदनाशित इत्युक्तम् । स्त्रियास्तु तत्कालोचितमाहारं निरूपयन्नाह । तैलं च माषाश्च ताभ्यामुत्तरोऽधिक आहारो यस्याः सैवम् । उत्तरशब्दोऽत्र तैलमाषौ पित्तलौ रक्तवृद्धिहेतुतया-

ऽत्यंतं सेवितव्यौ न पुनस्तथा शुक्रवृद्धिकराण्यन्यान्यपि क्षीरादीनि द्रव्याणीति प्रतिपादयति । तत्र च मंत्रं वक्ष्यमाणं प्रयोजयेत्पठेत् ।

तमेव मंत्रमाह ।

**अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वाम् दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवेति । ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ । भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ।**

अहिरसीत्यादि वीरं ददतु मे सुतमित्यंतं मंत्रं पठेत् ।

**सांत्वयित्वा ततोऽन्योऽन्यं संविशेतां मुदान्वितौ । उत्ताना तन्मना योषित्तिष्ठेदंगैः सुसंस्थितैः ॥ ३४ ॥**

ततो मंत्रपाठादनंतरं परस्परं सांत्वयित्वा प्रियवचनादिना प्रीतिमुत्पाद्य संविशेतां मिथुनीभावं गच्छेताम् । किंभूतौ । मुदा हर्षेणान्वितौ युतौ । तत्र च संवेशने योषिदुत्ताना तच्चित्ता चाऽवयवैः सुसंस्थितैस्तिष्ठेत् ।

किमेवंसति भवतीत्याह ।

**तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।**

हि यस्मात्तथा तेन प्रकारेण सा बीजं गृह्णाति दोषैर्वातादिभिः स्वस्थानावस्थितैः सद्भिः । संग्रहे तूक्तम् । न चासावधस्तिष्ठेत् । तथाहि स्त्रीचेष्टः पुमान् जायते पुंश्चेष्टा वा स्त्री च । न च न्युब्जां पार्श्वगतां वा सेवेत । न्युब्जाया वातो बलवान् स योनिं पीडयति । दक्षिणपार्श्वगायाः श्लेष्मा पीडितश्च्युतो पिदधाति गर्भाशयम् । वामपार्श्वगायास्तत्पित्तं विदहति रक्तशुक्रे । तस्मादुत्ताना बीजं गृह्णीयादिति ।

**लिंगं तु सद्योगर्भाया योन्यां बीजस्य संग्रहः ॥ ३५॥ तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबंधनम् । हृदयस्पंदनं तंद्रा तृड् ग्लानिर्लोमहर्षणम् ॥ ३६ ॥**

लिंगमिति । सद्यस्तत्क्षणाद्गर्भो यस्याः सैवं तस्याः सद्योगर्भाया लक्षणं बीजस्य गर्भाख्यस्य योन्या करणभूतया संग्रहः सम्यग्ग्रहणम् । तथा तृप्तिरिव तृप्तिः । गुरुत्वं स्फुरणं च कुक्षेर्भवति । तथा शुक्रं चास्रं च शुक्रास्रे । अनुबंधनं प्रवर्तनम् । नानुबंधनमननुबंधनं शुक्रास्रयोर्योनिमुखादवमनं बहिरनिःसरणमत्र च योन्या गृहीतबीजत्वम् । तथा हृदयस्पंदनादयः पंच सद्योगर्भाया हेतवो भवंति । लोमहर्षणं च हर्षवशाद्भवति । तथा च संग्रहे । प्रहर्षो ह्लास इत्यादि ।

इदानीं गर्भस्यावस्थाः प्रदर्शयितुमाह ।

**अव्यक्तः प्रथमे मासि सप्ताहात्कलली भवेत् । गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ३७ ॥**

सप्ताहादर्वाग्गर्भगोलकः श्लेष्मपिंडीभूतो भवेत् । सप्ताहादनंतरं यावन्मासस्तावदव्यक्ताकृतिः कलली भवेत् । अत्र कललीभूते यावत्स्त्री पुरुषाद्युत्पत्तिलक्षणा व्यक्तिर्न भवति तावद्व्यक्तेः प्राक् प्रथमे मासि पुंसवनादि प्रयोजयेत् ।

ननु शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः । गर्भः संपद्यत इत्युक्तम् । तत्र यदि प्राकृतेन कर्मणा स्त्रीगर्भः कर्तुमाक्षिप्तस्तदा पुरुषप्रयत्ने सत्यपि पुंगर्भः कर्तुं न शक्यते । तस्मात्पुंसवनमनर्थकमेवेत्याशंक्याह ।

**बली पुरुषकारो हि दैवमप्यतिवर्तते ।**

हि यस्मात्पुरुषकारो बलवान् दुर्बलं दैवमतिवर्ततेऽतिक्रम्य वर्तते । अपिशब्दात्पुरुषकारोऽपि दुर्बलं दिष्टं बलीयोऽतिक्रम्य वर्तत इति प्रतिपादयति । अत एव प्राकृतेन कर्मणा बलीयसा आक्षिप्तस्य स्त्रीगर्भस्य पुंसवनादिदानेन पौरुषेण कर्मणा शतशोऽपि प्रयोजितेन न कथंचित्पुंगर्भतां कर्तुं पार्यत इति । उक्तंच । दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चेतरत्कर्म प्रकृष्टेनोपहन्यत इति । अत्र पुंसवनादि सम्यक् प्रयोजितं सिद्ध्यसिद्ध्यनुमीयमानं प्राकृतस्य कर्मणो हीनबलत्वं प्रबलत्वमवगमयति ।

अधुना पुंसवनप्रयोगमाह ।

**पुष्ये पुरुषकं हैमं राजतं वाथ वायसम् ॥ ३८ ॥ कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्यांजलिं पिबेत् ।**

पुष्ये पुष्यनक्षत्रयुक्ते काले पुरुषकं पुत्तलकं हेमादिकृतमग्निवर्णं कृत्वा सुध्माततया ततः क्षीरे निर्वाप्य निवेश्य तस्य क्षीरस्यांजलिं पलचतुष्टयाख्यं पिबेत् । पुरुषकमिति पुरुष इवेत्यस्मिन्नर्थे इवे प्रतिकृताविति कन् । हैममिति हेम्नो विकारार्थेऽण् नस्तद्धित इति टिलोपः । राजतमिति प्राणिरजतादिभ्योऽञित्यञ् । आयसमिति तस्येदमित्यण् ।

**गौरदंडमपामार्गं जीवकर्षभसैर्यकान् ॥ ३९ ॥ पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ।**

गौरदंडादींश्चतुरो द्रव्यविशेषान् पिबेत् । किंभूतान् । जले पिष्टान् कल्कीकृतान् । कथं कृत्वा । एकद्वित्रिसमस्तशः । एकादिषु प्रत्येकं शस्प्रत्ययार्थयोगः । तेनैकमेकं कृत्वा द्वौद्वौ कृत्वा त्रींस्त्रीन्कृत्वा चतुरश्चतुरः कृत्वैतान् पिबेदित्यर्थोऽवतिष्ठते । कदा प्राश्यम् । पुष्ये पुष्ययुक्ते काले ।

**क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ ४० ॥ पुत्रार्थं दक्षिणे सिंचेद्वामे दुहितृवांछया ।**

शुक्लपुष्पकंटकारिकाया मूलं क्षीरेण कल्कीकृत्य स्वयं स्त्री दक्षिणे नासापुटे पुत्रार्थं पुत्रसंपत्तये सिंचेत् । दुहितृवांछया सुताकाम्यया वामे नासापुटे सिंचेत् ।

**पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ ४१ ॥ नासयाऽऽस्येन वा पीतं वटश्रृंगाष्टकं तथा । ओषधीर्जीवनीयाश्च बाह्यांतरुपयोजयेत् ॥ ४२ ॥**

पयसेति । पयसा लक्ष्मणामूलं कल्कीकृत्य पीतं पुत्रोत्पादप्रदं पुत्रस्थितिप्रदं च भवति । कथं पीतम् । नासया आस्येन वा कदाचिन्नासिकया कदाचिदास्येन । यस्याः पुत्रो नोत्पद्यते तथो-

त्पन्नो वा स्थितिं न लभते चिरं न जीवति तथैवं पातव्यमित्यर्थः। वटशृंगाष्टकं तथा तेनैव प्रकारेण नासया आस्येन वा पीतं पुत्रोत्पादस्थितिप्रदं भवति। न्यग्रोधस्य प्रथमोद्भिन्नः प्ररोहो वटशृंगस्तस्याऽष्टकमिति। प्रभावस्याऽचिंत्यत्वादेतत्संख्यावच्छिन्नत्वम्। जीवनीया या ओषध्यो जीवंतीकाकोल्याद्या दश याः शोधनादिगणसंग्रहोक्तास्ता बाह्यांतरुपयोजयेत्। तत्र स्नानोद्वर्तनादिना बाह्य उपयोगः। आहारपानादि नांऽतरुपयोगः।

**उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक्।**
**नवनीतघृतक्षीरैः सदा चैनामुपाचरेत्॥ ४३॥**

उपचार उपचरणम्। प्रिया इष्टा हिताः पथ्या आहारविहारास्तैः प्रियहितैर्य उपचारो भर्त्रा पत्या कृतो भृत्यैश्च य एवंभूतः कृतः स गर्भधृक्। तदनुष्ठानाद्गर्भः स्थितिं दधातीत्यर्थः। एनां च स्त्रियं नवनीतादिभिर्यथासात्म्यं सदोपाचरेत्।

**अतिव्यवायमायासं भारं प्रावरणं गुरु।**
**अकालजागरस्वप्नकठिनोत्कटकासनम्॥ ४४॥**
**शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम्।**
**उपवासाध्वतीक्ष्णोष्णगुरुविष्टंभिभोजनम्॥४५॥**
**रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम्।**
**उत्तानशयनं यच्च स्त्रियो नेच्छंति तत्त्यजेत्॥४६॥**
**तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमात्।**
**एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा॥४७॥**

अतीति। गर्भिणी स्त्री अतिव्यवायादीनुत्तानशयनांतांस्त्यजेत्। न केवलमेतानन्यच्चाहारविहारादिवस्तुजातं स्त्रियो बहुशः प्रसूतास्तत्कालव्यापारनिपुणा वा याः काश्चन स्त्रियो नेच्छंति तदपि वर्जयेत्। तथा रक्तस्रुतिं शुद्धिं च वमनविरेचनरूपां त्यजेत्। वस्तिमनुवासनमष्टमं मासं मर्यादीकृत्य वर्जयेत्। अष्टमे मासि बस्तिं प्रयोजयेदेवेत्यर्थः। एभिर्वर्ज्यैर्वस्तुभिरासेव्यमानैर्गर्भ आमोऽसंपूर्णः स्रवेत्पतेत्। कुक्षौ वा शुष्येन् म्रियेत वा मृत्युं वा गर्भः प्राप्नुयात्।

**वातलैश्च भवेद्गर्भः कुब्जांधजडवामनः।**
**पित्तलैः खलतिः पिंगः श्वित्री पांडुः कफात्मभिः॥**

वातलैरिति। वातलैश्चाहारैर्मात्रासेवितैः कुब्जोंऽधो जडो वामनो वा गर्भो भवति। पित्तलैराहारैर्मात्रासेवितैः खलतिः खल्वाटः पिंगो वा स्यात्। कफकृद्भिराहारैर्मात्रासेवितैः श्वित्रवान् पांडुर्वा स्यात्।

**व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत्।**

अस्याश्च गर्भिण्या ये व्याधयो जायंते तान् व्याधीन् मृदुसुखैरौषधैस्तथाऽतीक्ष्णैर्जयेत्। मृदूनि च तानि सुखानि च मृदुसुखानि। मृदून्यकर्कशानि वीर्यादिभिर्नोत्कृष्टसामर्थ्यानि सुकुमारोचितानि। सुखानि सुखोपभोग्यानि प्रियाणीति यावत्। ननु मृदूनि परिहृत्यातीक्ष्णानि चेति निर्देष्टव्यं किमुभयोपादानेन। यतो मृदून्यकर्कशान्यतीक्ष्णान्यप्यकर्कशानीत्यनर्थांतरमेतयोः। अत्रोच्यते। मृदून्यकर्कशानि शर्करादीन्युत्कृष्टशक्तीनि। मरिचादीन्यतीक्ष्णानि। तीक्ष्णानि पुनस्तीक्ष्णगुणयुक्तानि राजिकादीनि दोषोत्क्लेशकराणि भेषजानि भवंतीति द्वयोरुपादानं युक्तम्। तंत्रांतरे तूक्तम्। इत्यनात्ययिके व्याधौ विधिरात्ययिके पुनः। तीक्ष्णैरपि क्रियायोगैः स्त्रियं यत्नेन पालयेदिति। यच्च व्यवायादि गर्भिण्याः परिहार्यत्वेन निर्दिष्टं तथा व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेदिति तदस्मिन् काले विशेषेणेति द्रष्टव्यम्। तथा चाऽन्यदातिव्यवायादिसेवनान्न तथा प्रत्यवायभयम्। तथा तीक्ष्णौषधप्रयोगाच्च। अत एव तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमादित्येतत्पृथङ्गिर्दिशतातिव्यवायादिपरिहार्यगणमध्ये।

प्रथमे मासव्यक्तलिंगः कललावस्थो गर्भो भवेत्। द्वितीये तु मासि गर्भः कीदृशः स्यादित्याह।

**द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदम्॥ ४९॥**
**पुंस्त्रीक्लीबाः क्रमात्तेभ्यः**

द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदं गर्भः स्यादिति योज्यम्। तेभ्यो घनादिरूपेभ्यः क्रमात् परिपाट्या पुंस्त्रीक्लीबाः संपद्यंते। घनात्पुमान्। पेशीतः स्त्री। अर्बुदात् क्लीबः पंढो न स्त्री न पुमानिति।

**तत्र व्यक्तस्य लक्षणम्।**
**क्षामता गरिमा कुक्षौ मूर्छाच्छर्दिररोचकः॥ ५०॥**
**जृंभा प्रसेकः सदनं रोमराज्याः प्रकाशनम्।**
**अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ॥५१॥**
**पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः।**

तत्र व्यक्ताव्यक्तयोर्मध्याद्व्यक्तो निर्धार्यते। व्यक्तस्य गर्भस्य वक्ष्यमाणं लक्षणं क्षामतेत्यादिकम्। गरिमा गुरोर्भाव इति। पृथ्वादिभ्य इमनिज्वेतीमनिच्। प्रियस्थिरेत्यादिना गरादेशः। विदाहोऽन्य इति। अन्ये आचार्या विदाहो देहे भवतीत्याहुः। नानाप्रकाराश्च श्रद्धाः पथ्यापथ्यविषया अभिलाषाः। व्यक्तस्य गर्भस्य लक्षणम्। संग्रहे तूक्तम्। तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यंते गर्भेण तस्मात्ततः परमार्तवं न दृश्यते। ततस्तदधः प्रतिहतमपरमपरं चोपचीयमानमपरेत्याहुरिति।

गर्भिण्याश्च श्रद्धासूत्पन्नासु किमपथ्यं तस्यै देयं न वेत्येवं संदेहे तन्निरासार्थमाह।

**मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत्॥ ५२॥**
**संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविधारणम्।**

हि यस्मादस्य गर्भस्य यद्धृदयं चेतनाधिष्ठानं तन्मातृजम्। तथा चोक्तम्। मृद्वत्र मातृजं रक्तेत्यादि। तच्च गर्भहृदयं मातृहृदयेन संबद्धं संयुक्तं भवति। ततश्च गर्भिणीहृदयेन संतप्तेन गर्भहृदयमपि संतप्यते। परस्परं हृदयस्य संबद्धत्वात्। अत एव

च गर्भिणी द्विहृदया दौर्हृदिनीत्युच्यते । अत एव च परायत्तहृदयत्वात्तत्काले स्वस्वभावोचितमभिलाषं विहाय नानाभिलाषा जायते । यतश्चैवं तेन कारणेन गर्भिण्याः श्रद्धाविमाननमभिलाषाप्रतिपूरणं नेष्टम् ।

तदर्थमाह ।

**देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५३ ॥**

तस्यै गार्भिण्यै हितेन पथ्येन युक्तमहितमपथ्यमपि विदाहिविष्टंभ्यादि पूर्वनिषिद्धं यत्तदपि देयम् । अपिशब्देन किमु तस्यै प्रार्थ्यमानायै हितं देयमिति गमयति किं मात्रामनपेक्ष्यैवाहितं देयम् । नेत्याह । अल्पमतिशयेनाल्पकम् ।

ननु यद्यहितं तत्कस्माद्दीयत इत्याह ।

**श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ।**

यदि चिरकालोषितः कुक्षौ गर्भस्तदा तस्य गर्भस्य विकृतिर्वैरूप्यं भवेत् । अथाऽचिरोषितो गर्भस्तदा तस्य गर्भस्य च्युतिर्विनाशो भवेत् । अत एव श्रद्धाविमानना नोचिता । निदानकुपितपवनत्वाद्धेतोः । लब्धदौर्हृदा वीर्यवंतं चिरायुषं च सुतं सूते ।

**व्यक्तीभवति मासेऽस्य तृतीये गात्रपंचकम्॥५४॥**
**मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्मांगजन्म च ।**
**सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ ५५॥**

व्यक्तीति । अस्य गर्भस्य तृतीये मासि गात्रपंचकं व्यक्तीभवत्यव्यक्तरूपं व्यक्तं तदानीं संपद्यत इति चार्थः । तदेव पंचांगमाह । मूर्धा द्वे सक्थिनी बाहू इति सर्वेषां चांगानां सूक्ष्माणां चेतनाधिष्ठानानां जन्मोत्पत्तिरन्यत्र जन्मोत्तरकालजेभ्यो दंतादिभ्यः । तथा सममेव तुल्यकालमेव मूर्धाद्यैः सुखदुःखयोर्ज्ञानं भवति । तदानीं सुखसंविद्दुःखसंविच्च गर्भस्य जायत इत्यर्थः । चः समुच्चये । हिर्यस्मादर्थे ।

अत्र मात्राऽभ्यवहृताभ्यामन्नपानाभ्यां कथं गर्भो वर्धत इत्याह ।

**गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।**
**यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५६ ॥**

गर्भस्येति । एकैव नाडी गर्भस्य नाभौ मातुश्च हृदये निबध्यतेऽदृष्टवशात्संश्लिष्यते । यया नाड्या स गर्भः पुष्टिमाप्नोत्यावहति । क इव । केदार इव । कुल्यया लघुनाड्या जलं वहंत्या केदारस्थः शाल्यादिर्यथाऽभिवर्धते तथैव मातृहृदयाश्रितया नाड्या मात्राभ्यवहृतादाहाराज्जाठराग्निना पच्यमानात् प्रसादाख्येन रसेन । यस्माद्व्यक्तीभवदंगप्रत्यंगस्य नाभ्यां प्रतिबद्धा नाडी नाड्यामपरा अपरस्यां मातृहृदयम् । ततो मातृहृदयादाहाररससारो धमनीभिः संदमानोऽपरामुपैति । ततः क्रमान्नाभितश्च स पुनर्गर्भस्य पक्वाशये कायाग्निना पच्यमानः प्रसादबाहुल्याद्धात्वादिपुष्टिकरः संपद्यते । तथा रोमकूपैरुपस्नेह एव प्रविशति । साक्षादन्नपानाननुप्रवेशाद्रसस्य कफमलत्वाद्गर्भस्य स्थूलमूत्रपुरीषाद्यसंभवः ।



**चतुर्थे व्यक्ततांगानां चेतनायाश्च पंचमे ।**

गर्भस्येत्यनुवर्तते । चतुर्थे मासि गर्भस्य सर्वेषामंगानां सूक्ष्मत्वादव्यक्तरूपाणां व्यक्तता भवति । चेतनायाः पुनर्मनोद्वितीयनामिकाया अव्यक्तरूपायाः पंचमे मासि व्यक्तता जायते ।

**षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ॥ ५७ ॥**

षष्ठे मास्यव्यक्तरूपाणां स्नाय्वादीनां व्यक्तता जायते ।

**सर्वैः सर्वांगसंपूर्णो भावैः पुष्यति सप्तमे ।**

सप्तमे मासि सर्वैः सकलैर्भावैर्वस्तुभिः सर्वांगसंपूर्णो गर्भः पुष्यति पोषं याति । अंगसंपूर्णः पुष्यतीत्येतावतैव प्रकृतार्थावगतेः सर्वग्रहणमधिकार्थद्योतनाय । तेन सर्वेण जन्मजीवनलक्षणेनार्थेनांगैश्च संपूर्णो भवतीत्यवतिष्ठते । अकालप्रसवत्वात्तु न तथा गर्भस्य जन्मजीवनलक्षणो योऽसावर्थः सोऽप्यस्मिन् भवतीति ज्ञाप्यते । तथा चाऽस्मिन् मासि गर्भो जातो जीवति किंत्वकालप्रसवत्वान्न तथा दीर्घजीवितत्वादिकं स्यात् । वक्ष्यति हि । कालः सूतेरतः परमिति । अमुमेव च न्यायं चेतसि विधायाऽष्टमे मास्योजःस्वरूपनिगदनप्रस्तावे जातो न जीवति शिशुरिति वक्ष्यति । अन्यथाऽकालप्रसवत्वादेवाऽस्मिन् गर्भस्य जीवनं न संभाव्यत एव । जातो न जीवतीत्येतद्वाक्यमनर्थकमिव स्यात् । तस्मात्सप्तमे मासि जातो जीवतीति सुप्रतिपादितमेतत् ।

**गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ।**
**कंडूं विदाहं कुर्वंति गर्भिण्याः किक्किसानि च॥५८॥**

गर्भेणेति । गर्भेणोत्पीडिता दोषा वातादयस्तस्मिन् काले हृदयमाश्रिता गर्भिण्याः कंडूं विदाहं कुर्वंति । तथा किक्किसानि कुर्वंति । ऊरुस्तनोदरे वलिविशेषा रेखाकारास्तत्काले प्रायो ये जायंते ते किक्किससंज्ञाः । कैश्चिच्छ्रूकैरिव पूर्णता किक्किसानीति व्याख्यायि । पाणिपादांसमूलेषु विविधः संतापो विदाह उच्यते ।

**नवनीतं हितं तत्र कोलांबुमधुरौषधैः ।**
**सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ५९ ॥**
**चंदनोशीरकल्केन लिंपेदूरुस्तनोदरम् ।**
**श्रेष्ठया चैणहरिणशशशोणितयुक्तया ॥ ६० ॥**
**अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।**
**पटोलनिंबमंजिष्ठासुरसैः सेचयेत्पुनः ॥ ६१ ॥**
**दार्वीमधुकतोयेन मृजां च परिशीलयेत् ।**

नवनीतेति । तत्र तेषु कंड्वादिषूपशमार्थं नवनीतं हितमंतर्बहिश्चोपयोगितया । कीदृशम् । कोलांबुना मधुरौषधैर्द्राक्षादिभिश्च कल्कीकृतैः सिद्धं पक्वम् । तथा तत्र भोजनं हितम् । किंभूतम् । अल्पं पटुलवणं स्नेहश्च यत्र तदेवम् । तथा लघु मात्रास्वभावाभ्याम् । तथा स्वादु मधुरम् । तथा चंदनोशीरयोर्यः कल्कः पिष्टो जलेनालोडितस्तेनोरुस्तनोदरं लिंपेत् । श्रेष्ठया वा त्रिफलया वा ऊरुस्तनोदरं लिंपेत् । किंभूतया । एणादिरुधिरपिष्टया ।

तथाऽश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्याऽभ्यक्तं कृत्वांऽगमनंतरं पटोलनिंबमंजिष्ठासुरसैर्मर्दयेत् । अश्वघ्नः करवीरः । सेचयेत्पुनः परिषेकं च कुर्यात् । दार्वीमधुकतोयेन दारुहरिद्रामधुयष्टिकाभ्यां क्वथितेन जलेन । तथा मृजां शुद्धिं स्नानादिकां शीलयेत् । संग्रहे तूक्तम् । परिषेकैः पुनर्मालतीमधुकसिद्धेनांभसा । कंडूयनं वर्जयेत् । त्वग्भेदवैरूप्यपरिहारार्थं स्नानोद्वर्तनं शीलयेत् । मधुरं चाऽहारमल्पस्नेहलवणमल्पोदकानुपानं भुंजीतेति ।

**ओजोऽष्टमे संचरति मातापुत्रौ मुहुः क्रमात्॥६२॥**
**तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।**
**शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत् ॥६३॥**

ओज इति । ओजः सर्वधातूनां तेजः कर्तृ मातापुत्रौ कर्मभूतौ संचरति । माता च पुत्रश्चेति द्वंद्वः । आनङ्ऋतो द्वंद्व इत्यानङादेशः । कथं संचरति । मुहुर्मुहुः क्रमात्क्रमेण । कदाचिद्गर्भिणीमोजः संचरति कदाचित्पुत्रमिति । एवं कादाचित्केनोजःसंचरणेन तौ मातापुत्रौ म्लानमुदितौ स्याताम् । तया पूर्वनिरूपितया गर्भगर्भिण्युभयसंबद्धया नाड्योभयत्र संचरत्तदोज उभयसंबंधि यदा गर्भं संचरति तदा गर्भो मुदितो हर्षितो भवेदोजःसंपत्त्या गर्भिणी च म्लाना भवेत् । यदा च तदोजो गर्भिणीं संचरति तदा तयैवोजःसंपत्त्या गर्भिणी मुदिता भवेच्छिशुर्म्लानो भवेदोजःसंपत्त्यभावात् । तस्मिन् काले शिशुर्बालो जात उत्पन्नो न जीवति । कुतः । ओजोऽनवस्थानात् । ओजसस्तदानीं शिशावनवस्थितत्वादचिरकालप्ररूढत्वात् । गर्भिण्यां तु न सर्वमचिरकालमनवस्थितमोजो यथा गर्भे । तस्मान्न तस्या निरोजस्त्वम् । अत एवाह । नारी संशयिता भवेत् । कदाचिज्जीवति कदाचिन्न जीवतीति संशयितेत्यर्थः ।

**क्षीरपेया च पेयाऽत्र सघृतान्वासनं घृतम् ।**
**मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ६४ ॥**
**शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।**
**शताह्वाकल्कितो बस्तिः सतैलघृतसैंधवः ॥ ६५ ॥**

क्षीरेति । अत्राऽष्टमे मासि क्षीरसंस्कृता पेया पातव्या । किंभूता । सघृता । तथाऽन्वासनं घृतं शस्यते । कीदृक् । मधुरैर्द्राक्षादिभिः साधितं पक्वम् । तथा तेनैव प्रकारेण पुराणशकृतः शुद्ध्यर्थं बस्तिर्निरूहः प्रशस्यते युज्यते । तत्र च बस्तौ कः कषायः कः कल्क इत्याह । शुष्कमूलकादीनां कषायेण । तथा शताह्वाकल्कितस्तथा सह तैलेन घृतेन सैंधवेन च ।

**तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ।**

तस्मिन्निति । एकं च तदहश्चैकाहम् । राजाहःसखिभ्यष्टजिति टच् । अह्नष्टखोरेवेति टिलोपः । एकाहेन यातोऽतिक्रांतोऽतरितोऽष्टमो मास एकाहयातस्तस्मिन्नष्टमे मासि पुनरेकदिवसातिक्रांतेऽप्यतःपरं सूतेः प्रसवस्य कालो यावद्वर्षम् । अपिशब्दायाते त्वष्टमे मासतः परं सूतेः काल इति गम्यते । अष्टमान्मासादनंतरं नवमदशमैकादशद्वादशमासान्यावत् । एषु मासेषु गर्भो जातो दीर्घायुरादियुक्तो जीवति ।

**वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः॥ ६६ ॥**

वर्षादिति । आनंतर्ये पंचमी । वर्षाद्वादशमासादनंतरं गर्भः कुक्षौ वातेन धारितो रुद्धनिष्क्रमणो विकारकारी भवेत् । विकारमवश्यं करोति । गर्भस्य संनिवेशोऽपि संग्रहे प्रोक्तो यथा । गर्भस्तु मातृपृष्ठाभिमुखो ललाटे कृतांजलिः संकुचितांगो गर्भकोष्ठे दक्षिणं पार्श्वमाश्रित्यावतिष्ठते पुमान् वामं स्त्री मध्यं नपुंसकम् । तत्र स्थितश्च गर्भो मातरि स्वपंत्यां स्वपिति प्रबुद्धायां प्रबुध्यत इति ।

**शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।**
**बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ॥ ६७ ॥**

शस्त इति । नवमे मासि स्निग्धो मांसरसयुक्त ओदनः शस्तो हितः । अथवा पेया बहुस्नेहा शस्तेति लिंगविपरिणामेन संबंधः । पूर्वोक्तमनुवासनं घृतं मधुरैः साधितमित्यादि तच्च शस्तम् ।

**तत एव पिचुं चाऽस्या योनौ नित्यं निधापयेत् ।**
**वातघ्नपत्रभंगांभः शीतं स्नानेऽन्वहं हितम् ॥ ६८ ॥**

तत इति । तत एवान्वासनघृतात्पिचुं नक्तकमस्या गर्भिण्या योनौ नित्यं सदा निधापयेत्तत्र स्थापयेद्वातविजयार्थम् । पवनेनानाक्रांतयोनिर्हि सुखं गर्भं सूते । तथा वातघ्नानां द्रव्याणां पत्राणि तेषां भंगः समूहस्तेन क्वथितमंभः शीतं कृत्वा स्नानेऽन्वहमहरहर्गर्भिण्यै हितम् । अन्वहमित्यनश्चेति टच् ।

**निःस्नेहांगीं न नवमान्मासात्प्रभृति वासयेत् ।**

निःस्नेहांगीमस्नेहगात्रां तां गर्भिणीं गर्भप्रसवकालं यावन्न वासयेदपि तु सस्नेहांगीं स्थापयेत् । निःशेषेण निरस्तः स्नेहो यस्मादंगात्तदेवं निःस्नेहमंगं यस्याः सा निःस्नेहांगी ताम् । अंगगात्रकंठेभ्यो वक्तव्यमिति ङीप् । कुतः कालादारभ्य । नवमान्मासात्प्रभृति । यद्यपि कालोऽत्र न निर्दिष्टस्तथाऽपि नवमान्मासादारभ्य सामर्थ्याद्यावन्मुक्तगर्भशल्या स्यात्तावन्निःस्नेहांगीं गर्भिणीं न स्थापयेदिति लभ्यते । सस्नेहांगधारणं च तस्याः कुपितवायोर्नित्यं सन्निहितत्वात् ।

इदानीं गर्भिण्या यैर्लक्षणैरव्यभिचारिभिः पुत्रदुहितृनपुंसकयमकप्रसवोऽनुमीयते तान्याह ।

**प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ॥ ६९ ॥**
**पुन्नामदौहृदप्रश्नरतापुंस्वप्नदर्शिनी ।**
**उन्नते दक्षिणे कुक्षौ गर्भे च परिमंडले ॥ ७० ॥**
**पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसंगतिम् ।**
**नृत्यवादित्रगांधर्वगंधमाल्यप्रिया च या ॥ ७१ ॥**

प्रागिति । प्राक्पूर्वं दक्षिणे स्तने स्तन्यं क्षीरं यस्याः प्रादुर्भवति सा पुत्रं सूत इति संबंधः । तथा पूर्वं तत्पार्श्वचेष्टिनी । त-

च्छब्देन दक्षिणपार्श्वं परामृश्यते। तेन दक्षिणेन पार्श्वेन चेष्टितं गमनस्वपनादिकं यस्याः सा तत्पार्श्वचेष्टिनी पुत्रं सूत इति सर्वत्र योज्यम्। तथा गच्छंत्याः पूर्वं दक्षिणपादोत्क्षेपो हस्तकरणीये च पूर्वं दक्षिणेन पाणिना चेष्टत इति तत्पार्श्वचेष्टा बोध्या। पुन्नामेत्यादि। पुंलिंगोपलक्षितं नाम पुन्नाम। दौहृदं च प्रश्नश्च दौहृदप्रश्नौ। पुन्नाम्नोर्दौहृदप्रश्नयो रताभियुक्ता। पुन्नाम्नि दौहृदे रता। दौहृदकाले योऽभिलाषविशेषो गर्भिण्याः स दौहृदशब्दवाच्यः।तथा पुन्नाम्नि प्रश्नेऽभिरता पुनः पुनः पुन्नामप्रश्नं करोति। तथा पुन्नामधेयान् स्वप्नान् पुरुषगजवाजिवराहादीनाम्रदाडिमाशोकवृक्षादीन्वा द्रष्टुं शीलं यस्याः सैवम्। तथा उन्नते दक्षिणे गर्भकोष्ठाख्ये कुक्षौ। तथा गर्भे गर्भस्थाने परिमंडले वर्तुले सति पुत्रं सूते। अन्यथा पुत्रप्रसवसूचकाद्धेतोर्वैपरीत्ये च लक्षणे कन्यां सूते। यथा प्राग्दक्षिणस्तनस्तन्येत्यादि पुत्रप्रसवसूचकं लक्षणमतोऽन्यथा प्राग्वामस्तनस्तन्येत्यादि लक्षणं गर्भिण्याः कन्याप्रसवसूचकम्। न केवलं पुत्रप्रसवलक्षणाद्विपर्ययेण कन्यां सूते यावद्या चेच्छति नृसंगतिम्। या च गर्भिणी पुरुषेण सह संगतिमिच्छति कामयते साऽपि कन्यां सूते। तथा या च नृत्यादिप्रिया सा कन्यां सूते।

इदानीं षंढप्रसवलक्षणमाह।

**क्लीबं तत्संकरे तत्र मध्यं कुक्षेः समुन्नतम्।**
**यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते॥७२॥**

क्लीबमिति। तदित्यनेनाऽत्र पुत्रप्रसूतिलक्षणं दुहितृप्रसूतिलक्षणं च द्वयमपि परामृश्यते। द्वयस्यैतस्य लक्षणस्य संकरे संकीर्णलक्षणतायां क्लीबं नपुंसकं गर्भं सूते। तत्र तस्मिन् क्लीबे गर्भे कुक्षिस्थिते कुक्षेर्मध्यं समुन्नतं भवति। यमौ द्वौ गर्भौ गर्भिणी सूते। कथमिति तल्लक्षणार्थमाह। पार्श्वद्वयोन्नामात् पार्श्वद्वयोत्सेधात्। अत एव कुक्षावुदरे द्रोण्यामिव स्थिते। द्रोणीमध्यनिम्ना कुक्षिरपि पार्श्वद्वयोन्नत्या मध्यनिम्ना भवति।

**प्राक्चैव नवमान्मासात्सूतिकागृहमाश्रयेत्।**
**देशे प्रशस्ते संभारैः संपन्नं साधकेऽहनि॥ ७३॥**

प्रागिति। सा गर्भिणी सूतिकागृहं सूतिकागारं नवमान्मासात्पूर्वमेवाश्रयेत्। कुत्र देशे कृतमित्याह। देशे प्रशस्ते प्राक्प्रवण उदक्प्रवणे वा वास्तुविद्याविद्भिः परीक्ष्य कल्पितम्। कीदृशम्। संभारैः संपन्नं सकलैरुपकरणैर्युक्तम्। तथा साधकेऽहनि शुभपुण्यनक्षत्रे दिवसे सति।

**तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता।**

तत्र सूतिकागृहे स्थिता सूतिमुदीक्षेत। अहमत्र प्रसविष्य इति चेतसि विधाय सा गर्भिणी तत्राऽसीतेत्यर्थः। किंभूता। सूतिकापरिवारिताऽनेकवारप्रसवानुभूततत्कालोचितव्यवहारकुशलाभिः स्त्रीभिः परिवारिता। संग्रहे तूक्तम्। बहुशः प्रसूताभिरनुरक्ताभिरविषादिनीभिरविसंवादिनीभिः क्लेशसहाभिः परिवृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत। स्वल्पेऽपि च विण्मूत्रविबंधे फलवर्तीः प्रयोजयेदिति।

इदानीमासन्नप्रसवाया लक्षणमाह।

**अद्यश्वः प्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः॥७४॥**
**अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता।**
**वेदनोरूदरकटीपृष्ठहृद्बस्तिवंक्षणे॥ ७५॥**
**योनिभेदरुजातोदस्फुरणस्रवणानि च।**

अद्येति। अद्य वा श्वो वा आसन्नः प्रसवस्तस्मिन्नासन्नप्रसवे ग्लान्यादयो भवेयुर्गर्भिण्या इति संबंधः। ग्लानिर्हर्षक्षयः। तथा कुक्षी चाक्षिणी च कुक्ष्यक्षि तस्य श्लथता शिथिलत्वं स्वस्थानाचलितत्वमिव। तथा क्लम उपतापः। तथाऽधो गुरुत्वादीनि भवंति। तथा ऊर्वादिषु वेदना पीडा भवति। तथा योनिभेदादयः स्युः।

**आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः॥ ७६॥**

आवीनामिति। अतोऽस्माद्योनिभेदादेरनु पश्चादावीनां गर्भनिष्क्रमणकालशूलविशेषाणां जन्मोत्पादः। ततोऽनंतरं गर्भोदकस्रुतिस्तत्काले योनितो जलस्रावमात्रः स गर्भोदकसंज्ञः।

**अथोपस्थितगर्भां तां कृतकौतुकमंगलाम्।**
**हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णांबुसेचिताम्॥७७॥**
**पाययेत्सघृतां पेयां**

अथेति। अथ गर्भोदकस्रुतेरनंतरं तां गर्भिणीमुपस्थितगर्भामभिमुखीभूतगर्भामाविजन्मोदकस्रावादिना ज्ञात्वा सघृतां पेयां पाययेत्। किंभूताम्। कृतकौतुकमंगलाम्। विशिष्टकाले यो रक्षाबंधो बाह्वादौ बध्यते स कौतुकशब्दवाच्यः। कौतुकाख्यं मंगलं कौतुकमंगलम्। कृतं कौतुकमंगलं यस्यास्ताम्। तथा हस्तस्थं पुन्नाम दाडिमादिफलं यस्यास्ताम्। तथा सुष्ठ्भ्यक्ताम्। तथोष्णांबुसेचिताम्। इत्यस्यानंतरं पाययेत्पेयामिति पठन्नुष्णांबुसेचनादनंतरं पेयापानं कार्यमिति बोधयति।

**तनौ भूशयने स्थिताम्।**
**आभुग्नसक्थिमुत्तानामभ्यक्तांगीं पुनःपुनः॥ ७८॥**
**अधोनाभेर्विमृद्नीयात्कारयेज्जृंभचंक्रमम्।**

तनाविति। तनौ मृदुनि भूशयने स्थितां मृद्नीयान्न खट्वादिशयनस्थिताम्। तथा संग्रहे चोक्तम्। सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूशयने शयानामित्यादि। कुतोंऽगात्प्रभृतिविशेषेण मृद्नीयात्। नाभेरधो नोर्ध्वं नाभेः। किंभूतां ताम्। आभुग्नसक्थिम्। आसमंताद्भुग्ने कुंचिते सक्थिनी यस्याः साऽऽभुग्नसक्थिस्तां तथाविधां मृद्नीयात्। तथा पुनः पुनरभ्यक्तांगीं वातकोपभयात्। तथा जृंभं चंक्रमं च तां कारयेत्। जृंभो जृंभणम्। चंक्रमश्चंक्रमणं द्रुतगमनम्।

किमेवमनुष्ठिते सति भवतीत्याह ।

**गर्भः प्रयात्यवागेवं तल्लिंगं हृद्विमोक्षतः ॥ ७९ ॥**
**आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ।**

गर्भ इति । एवमनयेतिकर्तव्यतयाऽनुष्ठितया गर्भोऽवाक् प्रयात्यूर्ध्वादधो गच्छति । हृत्स्थानं परित्यज्याधोऽवस्थितिं करोतीत्यर्थः । संग्रहे तूक्तम् । दद्यात्कुष्ठलांगलकीवचाचव्यचित्रकचिरिबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुर्योजयेत्तथा भूर्जपत्रशिंशपासर्जरसानामन्यतमं धूममंतरांतरा च । पार्श्वपृष्ठकटीसक्थिदेशान्कोष्णेन तैलेनाऽभ्यज्यानुसुखमस्या विमृद्गीयादेवमवाक् परिवर्तते गर्भ इति । मुसलेनोलूखलं धान्यपूर्णमाहननीयं गर्भस्याऽवाक्स्थितय इति केचिदाहुस्तदयुक्तम् । यतो गर्भिण्यास्तावद्व्यायामवर्जनं सततमुपदिष्टम् । विशेषतश्च प्रसवकाले प्रचलितसर्वधातुदोषाया: सुकुमाराशयाया नार्या मुसलव्यायामप्रेरितो हि वायुः प्राणान् हिंस्यादिति । विमर्दनादिक्रियां च गर्भिण्यास्तावत्कारयेद्यावद्गर्भनिष्क्रमणं भवति । अथ मातृहृदयान्मुक्तो गर्भः केन लक्षणेन ज्ञायत इत्याह । तल्लिंगमित्यादि । तदित्यनेन गर्भः परामृश्यते । तस्य गर्भस्य लिंगम् । गर्भस्यैतल्लिंगं यद्धृद्विमोक्षतो हृदयमोचनादनंतरं स गर्भो जठरमाविश्य बस्तेरुपरि तिष्ठति ।

**आव्यो हि त्वरयंत्येनां खट्वामारोपयेत्ततः ॥ ८० ॥**

आव्यः प्रसवकालशूलविशेषा यस्मादेनां गर्भिणीमभित्वरयंति । अनवरतमुत्पद्यमानत्वात् । ततस्तस्मादेनां गर्भिणीं खट्वामारोपयेदारोहयेत् ।

**अथ संपीडिते गर्भे योनिमस्याः प्रसाधयेत् ।**

अथ खट्वारोहणादनंतरं खट्वास्थितताया गर्भे संपीडिते वायुना योनिमुखाक्रांततया अस्या गर्भिण्या योनिं प्रसाधयेदभ्यंगादिदानेन विकासयेत् ।

**मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥ ८१ ॥**

ततः सा गर्भिणी गर्भं मृदु कृत्वा पूर्वं प्रवाहेत यावद्योनिमुखेनागतो गर्भः । गर्भं योनिद्वारमागतं ज्ञात्वा बाढं भृशं प्रवाहेत आप्रसवात्प्रसवं यावत् । तथा चोक्तं संग्रहे । शनैःशनैश्च पूर्वं प्रवाहिष्ठाः निर्गमे बाढम् गर्भस्य योनिमुखप्रतिपत्तौ बाढतरम् । आप्रसवादित्याङ्मर्यादावचन इत्याङः कर्मप्रवचनीयत्वे पंचम्यपाङ्परिभिरिति पंचमी ।

**हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ।**

तां गर्भिणीमनंतरं हर्षयेत् सुमनसं मुहुः कारयेत् । केन । पुत्रजन्मशब्देन प्रसूतासि सुभगे धन्यं पुत्रमित्येवंरूपेणासकृत् स्त्रीभिरुच्चारितेन । तथा जलेन शीतलेन । तथाऽनिलेन । संग्रहेऽप्युक्तम् । एनां ब्रूयाच्च सुभगे शनैःशनैः प्रवाहयस्व शोभनस्ते मुखवर्णः पुत्रं जनयिष्यसीति । तथाऽन्या तु वामकर्णेऽस्या मंत्रमिमं जपेत् । क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः । सगर्भां त्वां सदा पातु वैशल्यं वा दधत्यपि । प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने । कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितमिति । तथा । इहामृतं च सोमश्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मंदिरे निवसंतु ते । इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुंचतु स्त्री । तदनलपवनार्कवासवास्ते सहलवणांबुधरैर्दिशंतु शांतिमिति । अपरा स्त्री गर्भिणीमनुशिष्यादनागतायां वेदनायां मा प्रवाहिष्ठाः । अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च । गर्भस्य श्वासकासशोफकुब्जतादिकरत्वादिति ।

अथ किं हर्षाद्युत्पादनेन स्यादित्याह ।

**प्रत्यायांति तथा प्राणाः सूतिक्लेशावसादिताः॥८२॥**

तथा तेन प्रकारेण हर्षादिजननेन प्राणाः सूतेः क्लेशा आवयस्तत्कृतानि दुःखानि तैरवसादिता ग्लानिं नीताः प्रत्यायांति पुनर्नवीभवंति ।

**धूपयेद्गर्भसंगे तु योनिं कृष्णाहिकंचुकैः ।**
**हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥ ८३ ॥**
**सुवर्चलां विशल्यां वा जराय्वपतनेऽपि च ।**
**कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकंपयेत् ॥ ८४ ॥**
**कटीमाकोटयेत्पार्ष्ण्या स्फिजौ गाढं निपीडयेत् ।**
**तालुकंठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥ ८५ ॥**
**भूर्जलांगलिकीतुंबीसर्पत्वक्कुष्ठसर्षपैः ।**
**पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ८६ ॥**
**कुष्ठतालीसकल्कं वा सुरामंडेन पाययेत् ।**
**यूषेण वा कुलत्थानां बिल्वजेनाऽसवेन वा ॥ ८७ ॥**

धूपयेदिति । गर्भस्य संगे सक्तौ योनिं कृष्णसर्पनिर्मोकेण धूपयेत् । धूपनं योनौ कुर्यात् । धूपयेदिति गुपूधूपेत्यादिना आयप्रत्ययः । ततो विधौ लिङ् । तथा हिरण्यपुष्पीमूलं पाणिना पादेन च सा गर्भिणी धारयेत् । अथवा सुवर्चलां विशल्यां वा धारयेत् । एतद्गर्भसंगोक्तं जरायोरपराख्यस्यापतनेऽनिष्क्रांतौ कार्यं विधातव्यम् । न केवलं गर्भसंगोक्तं कार्यं यावदेनामपतितजरायुं बाह्वोर्द्वयोरुत्क्षिप्य विकंपयेत् । संग्रहे तूक्तम् । नचेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुत्पीड्याऽन्येन पृष्ठत उपसंगृह्य विधुनुयादिति । तथा पार्ष्ण्या कटीमाकोटयेदिति । पुनःपुनः कट्यां पार्ष्णिघातं कुर्यादित्यर्थः । तथा स्फिजौ युतौ सुष्ठु निपीडयेत् । तथा वेण्या केशरचनाविशेषाख्यया तालुकंठं स्पृशेत् । संग्रहेऽप्युक्तम् । वेण्यांऽगुल्या वा केशवेष्टितया वा तालुकंठं परामृशेदिति । तथा मूर्ध्नि मस्तके स्नुहीपयः सुधादुग्धं दद्यात् । तथा भूर्जादिभिर्द्रव्यैः पृथक् प्रत्येकमथवा द्वाभ्यां कृत्वा समस्तैर्वा योन्या लेपनं धूपनं च कार्यमिति शेषः । कुष्ठतालीसपत्रयोः कल्कं वा सुरामंडेनोपरिस्थितेन तां पाययेत् । अथवा कुलत्थानां यूषेण क्वाथेन पाययेत् । बिल्वजेनाऽसवेन वा । बिल्वं वा-

रिणा आसुत्य धान्यराशौ धारितं तच्छीतकषायो बिल्वज आसव उच्यते । संग्रहेऽप्युक्तम् । भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत् । भूर्जगुग्गुलुभ्यां वा । शालिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिंबसर्पनिर्मोकैश्च कुष्ठ्यादिधूपयेत् । अनभ्यक्तां वा कटुतैलमिश्रैः कल्कीकृतैर्वा तैलाक्तैरालिंपेत् । गुडनागरकल्केन वा लिंपेत् । तदेव वा भक्षयेत् । लांगलीमूलकल्केन वा पाणिपादमुदरं च लिंपेदिति । तथोक्तम् । कुष्ठैलाकल्कं वा सुरया पाययेत् । अर्कालर्ककषायं वा सुरोन्मिश्रम् । कुष्ठलांगलकीमूलकल्कं वा मद्यमूत्रान्यतरेण । शतपुष्पाकुष्ठमदनाहिंगुसिद्धस्य च तैलस्य पिचुं ग्राहयेदिति ।

**शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।**
**सहिंगुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ८८ ॥**
**तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।**
**शतपुष्पा वचा कुष्ठकणासर्षपकल्कितः ॥ ८९ ॥**
**निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।**
**तत्संगे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात्॥९०॥**

शताह्वेति । शताह्वादिभिर्द्रव्यैः सार्षपं तैलं मूत्रे क्षीरे चोभयस्मिन् सिद्धं पक्वमनुवासनं हितम् । क्व । पायौ गुदे । अथवा योन्यां गर्भनिष्क्रमणद्वारे । तथा शताह्वादिभिर्द्रव्यैः कल्कितैर्निरूहो बस्तिकल्पोक्तो यौगिकः । सह स्नेहेन लवणेन वा वर्तमान आशु शीघ्रमेवापरां जरायुसंज्ञां पातयति । यस्मात्तत्संगेऽनिलो हेतुर्वायुः कारणम् । तज्जयाद्वातजयात्साऽपरा निर्याति कुक्षितो बहिर्निष्क्रामति । पवनविजये च बस्तिः प्रधानम् । तथाचोक्तम् । वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यत इत्यादि । संग्रहे तु । गर्भिण्या आस्थापनेऽनुवासने च सन्निवेशविशेष उक्तः । यथा । गर्भिणीं तु न्युब्जामास्थापयेदनुवासयेच्च । तथाऽस्या विवृतमार्गतया सम्यगौषधमनुप्रविशतीति ।

**कुशला पाणिनाऽक्तेन हरेत्कृत्तनखेन वा ।**

अथवा कुशला तद्व्यापारनिपुणा योषित् पाणिना सर्पिषाऽभ्यक्तेन तां हरेत् । किंभूतेन पाणिना । कृत्तनखेन कृत्ताः कल्पिताः शस्त्रेण नखा यस्य तेन तथाविधेन पाणिना तां नालानुसारत आकर्षेत् । संग्रहेऽप्युक्तम् । शाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयादिति ।

**मुक्तगर्भापरां योनिं तैलेनांगं च मर्दयेत् ॥ ९१ ॥**

गर्भश्चापरा च गर्भापरं मुक्तं गर्भापरं यया योन्या तां तैलेन मर्दयेत् । अंगं शरीरं च मर्दयेत् ।

**मकल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत् ।**
**सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ९२ ॥**
**धान्यांबु वा गुडव्योपत्रिजातकरजोन्वितम् ।**

मकल्लाख्ये रोग उत्पन्ने शिरोबस्तिकोष्ठशूललक्षणे सति यवक्षारं सूक्ष्मचूर्णितं घृतेनाऽथवोष्णजलेन तां सूतां पाययेत् । धान्यांबु वा तां पाययेत् । किंभूतम् । गुडव्योपत्रिजातकरजोन्वितम् । गुड इति सामान्योक्तावपि पुराणोऽत्र गुडो ग्राह्यः पथ्यत्वात् । मकल्लाख्यो रोगः । शिरोबस्तिकोष्ठशूल इति लाघवेन तंत्रकृतास्य लक्षणमुक्तम् ।

**अथ बालोपचारेण बालं योषिदुपाचरेत् ॥ ९३ ॥**

अथ बालं जातमात्रमेवोपाचरेदुपपादयेत् । का । योषिद्वहुकृत्वः प्रसूता न पुमान् । केन । बालोपचारेण बालोपचरणीयोक्तेनाऽहारविहारादिना ।

**सूतिका क्षुद्वती तैलाद्घृताद्वा महतीं पिबेत् ।**
**पंचकोलकिनीं मात्रामनु चोष्णं गुडोदकम् ॥९४॥**

सूतिकेति । सूतिका क्षुद्वती बुभुक्षिता सती तैलादथवा घृतान्महतीं मात्रां पिबेत् । किंभूताम् । पंचकोलकं विद्यते यस्या मात्रायास्तां पंचकोलकिनीम् । सूक्ष्मचूर्णीकृतपंचकोलकयुक्तां तां मात्रां पिबेदित्यर्थः । अष्टभिर्यामैर्या जरां गच्छति सा स्नेहमात्रा महती । अनु चोष्णं गुडोदकं पिबेदिति योज्यम् ।

**वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ।**
**विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥ ९५ ॥**

वातहरद्रव्यक्वाथं वा पश्चात्पिबेत् । तथैवं कृते सति वायुर्न कुप्यति न कोपं याति । शून्यं कोष्ठं प्राप्य दुष्टं रक्तं च विशुध्यति । अयमेव क्रमो द्विरात्रं त्रिरात्रं वा यथायोगं कार्यः ।

**स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ।**
**पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥**

स्नेहेति । स्नेहपानायोग्या तु स्त्री या स्नेहं नार्हति सा निःस्नेहं स्नेहं विनाऽमुमेव पूर्वोक्तं विधिं भजेत् । पीतवत्याश्च तस्या जठरं यमकाक्तं तैलघृताभ्यामभ्यक्तं विवेष्टयेद्वाससेति शेषः । पीतवत्या इत्यविशेषनिर्देशः । कदाचित्स्नेहयोग्या स्नेहं पीतवती स्नेहायोग्या तूष्णं गुडोदकं पीतवत्यथवा वातघ्नौषधतोयं पीतवतीति सामान्यो यो निर्देशस्तस्यार्थः ।

**जीर्णे स्नाता पिबेत्पेयां पूर्वोक्तौषधसाधिताम् ।**
**त्र्यहादूर्ध्वं विदार्यादिवर्गक्काथेन साधिता ॥ ९७ ॥**
**हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाथवा ।**
**सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम् ॥ ९८ ॥**

जीर्ण इति । स्नेहे जीर्णे कवोष्णगुडोदके वातघ्नौषधतोये वाऽनंतरं स्नाता सती पूर्वोक्तौषधसाधितां पंचकोलकृतां पेयां पिबेत् । त्र्यहादूर्ध्वमनंतरं विदार्यादिवर्गोक्तौषधैः सिद्धा यवागूः पेया स्नेहाढ्या हिता । अथवा सात्म्यतः सात्म्यवशात् पयसा क्षीरेण साधिता यवागूर्हिता । सप्तरात्रात्परमनंतरं क्रमशो न सहसा तस्यै बृंहणं हितम् । बृंहणं च जीवनीयबृंहणीयमधुरवर्गसिद्धैरभ्यंगोद्वर्तनपरिषेकावगाहनैर्हृद्यैश्चाऽन्नपानैर्विधातव्यम् ।

**द्वादशाहेऽनतिक्रांते पिशितं नोपयोजयेत् ।**

द्वादशाहेऽनतिक्रांतेऽपरिसमाप्ते पिशितं मांसं नोपयोजयेन्ना-

ऽभ्यवहारयेत् स्कंदादिद्वादशग्रहाभिषंगपरिहारार्थम् । मांसभोजनेन हि कदाचित्तैरभिषंगो भवेत्तेषां मांसादत्वात् ।

**यत्नेनोपचरेत्सूतां दुःसाध्या हि तदामयाः ॥९९॥**
**गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः ।**

यत्नेनेति । सूतां स्त्रीं यत्नेन तात्पर्येणोपचरेदुपक्रमेत् । कुतो हेतोरित्याह । हि यस्मात्तस्या आमया रोगा दुःसाध्याः कृच्छ्रेणोपक्रम्याः । किमिति कृच्छ्रसाध्या इत्याह । गर्भेत्यादि । वृद्धिश्च प्रसवश्च वृद्धिप्रसवौ गर्भस्य वृद्धिप्रसवौ च रुक् च क्लेदास्रस्रुतिश्च पीडनं च गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनानि तैर्हेतुभूतैस्तदामया दुःसाध्याः । रुक्प्रवाहवेदनाः ।

**एवं च मासादध्यर्धान्मुक्ताहारादियंत्रणा ।**
**गतसूताभिधाना स्यात्पुनरार्तवदर्शनात् ॥ १०० ॥**

एवमिति । एवमनेन प्रकारेण सार्धं मासमुपस्कृता क्रमेण मुक्ताहारविहारयंत्रणा स्यात् । अध्यर्धमासात्परेण गतसूताभिधाना व्यपेतप्रसूतिव्यपदेशा पुनरार्तवदर्शनाद्भवेत् । संग्रहे तूक्तम् । जरायुणा मुखे च्छन्ने कंठे च कफवेष्टिते । वायोर्मार्गनिरोधाच्च गर्भस्थो न प्ररोदितीति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां शारीरस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

गर्भावक्रांतिशारीरादनंतरं गर्भव्यापच्छारीरमारभ्यते । गर्भस्य व्यापत्प्रतीकारविज्ञानार्थमाह ।

**अथाऽतो गर्भव्यापदं शारीरं व्याख्यास्यामः ।**

गर्भस्य व्यापद्गर्भव्यापत् । सा विद्यते यस्मिन्निति छः । तस्याध्यायानुवाकयोर्लुगिति लुक् । यद्यपि चाऽत्र गर्भव्यापदश्चिकित्साप्युक्ता न केवलं व्यापत्तथाऽपि बाहुल्यादिदमुक्तमिति वेद्यम् । अथादीनां पूर्ववद्व्याख्या ।

**गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा ।**
**पुष्पे दृष्टेऽथवा शूले बाह्यांतः स्निग्धशीतलम् ॥१॥**
**सेव्यांभोजहिमक्षीरीवल्ककल्काज्यलेपितान् ।**
**धारयेद्योनिबस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥२॥**

गर्भिण्या इति । गर्भिण्याः परिहार्याणामाहारविहाराणां पूर्वोक्तानामतिव्यवायादीनां सेवनेन पुष्पे दृष्टेऽथवा रोगतः पुष्पे दृष्टे । रोगस्य च स्वभावापथ्यसर्षपशाकमंथकदध्यादेराहारान्मात्रादेशकालादिवशाद्वा संभवः । गर्भाख्यफलहेतुत्वाद्रक्तं पुष्पमुच्यते । तस्मिन् दृष्टे चक्षुर्गोचरं प्राप्ते । अथवा शूले दृष्टे प्रश्नादिनोपलब्धे सति । दृशिरत्रोपलब्धिवचनः । बाह्यांतः स्निग्धशीतलं साधनमन्नपानप्रदेहपरिषेकादि कार्यम् । बहिः स्नानावगाहादावंतश्च भोजनानुपानादावित्यर्थः । रोगत इति तृतीयार्थे तसिः । तथा स्त्री योनिबस्तिभ्यां पिचुनक्तकान् धारयेत् । किंभूतान् । सेव्यादिभिर्लेपितान् । सेव्यमुशीरम् । अंभोजं पद्मम् । हिमं चंदनम् । क्षीरं विद्यते येषां ते क्षीरिणो वृक्षाः पिप्पलादयः । येषां शस्त्रादिच्छिन्नानां क्षीरं दृश्यते । वल्कं वल्कलम् । सेव्यं चांभोजं च हिमं च क्षीरिवल्कं च तेषां कल्कं चाज्यं च तैर्लेपितान् । पुनः किंभूतान् । आर्द्रार्द्रानतिशयेनार्द्रीकृतान् । पिचुशब्देन विकेशिकासदृशः कार्पासमयो नक्तकश्चैलखंडः ।

**शतधौतघृताक्तां स्त्रीं तदंभस्यवगाहयेत् ।**
**ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥**
**लिह्यात् क्षीरघृतं खादेच्छृंगाटककसेरुकम् ।**
**पिबेत्कांताब्जशालूकबालोदुंबरवत्पयः ॥ ४ ॥**
**शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ।**
**पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ॥ ५ ॥**
**रसैर्वा जांगलैः**

शतेति । शतशब्दो बहुवारपर्यायः । संख्यावाचीत्यन्ये । तथा च संग्रहेऽधीतम् । सहस्रधौतसर्पिषाऽधोनाभेः सर्वतः प्रदिह्यादिति । शतधौतेन बहुधा प्रक्षालितेन घृतेनाभ्यक्तां स्त्रीं तदंभस्यवगाहयेत् । तत्र तां निमज्जनं कारयेत् । तदित्यनेन हि सेव्यादिद्रव्यपरामर्शः । स्त्रीमिति वाम्शसोरितीयङ्विकल्पात्पूर्वरूपम् । तथा क्षीरं घृतं च लिह्यात् । किंभूतम् । ससितेत्यादि । सह सितया तथा क्षौद्रेण तथा कुमुदकमलोत्पलानां केसरेण । किंजल्केन सहितम् । अन्ये तु क्षीराद्घृतं क्षीरोद्भवं घृतं क्षीरघृतमिति मन्यंते । तथा खादेच्छृंगाटकं कसेरुकं च । तथा पयः क्षीरं पिबेत् । किंभूतम् । कांतेत्यादि । कांता गंधप्रियंगुः । अप्सु जातमब्जम् कमलादि । शालूकमुत्पलमूलम् । बालमुदुंबरमपक्वमुदुंबरफलम् । कांता चाब्जं च शालूकमूलं च बालोदुंबरं च तानि विद्यंते यस्य पयसस्तदेवं तैः शृतं क्षीरं पिबेदित्यर्थः । यैर्हि तत्पयः शृतं तानि तत्राऽवश्यं विद्यंते । क्षीरश्रपणविधिश्चातीसारचिकित्सोक्तः पयस्युत्क्वाथ्य मुस्तावार्विंशतिमित्याद्यनुसारेणाऽत्र कल्प्यः । तंत्रांतरे त्वेवमुक्तम् । द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिरिति । अन्ये तु कांतादिद्रव्याणां चूर्णेन युक्तं कल्केन वा युक्तं पयः पिबेदित्याहुः । पयसा रक्तशाल्यन्नं समधुशर्करं सुशीतं भुंजीत । किंभूतेन क्षीरेण । शाल्यादिभिः शृतेन सिद्धेन । देशसात्म्याद्यनुरोधाज्जांगलैर्वा रसैः शाल्यन्नमद्यात् ।

**शुद्धिवर्ज्यं चाऽस्रोक्तमाचरेत् ।**

शुद्धिं वर्जयित्वाऽस्रोक्तं रक्तपित्ताभिहितं यत्साधनं तद्बाह्यांतराचरेत् सेवेत । अस्रशब्दस्योपलक्षणार्थत्वाद्रक्तपित्तं गम्यते ।

**असंपूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत् ॥ ६ ॥**
**आमान्वये च**

असंपूर्णास्त्रयो मासा यस्या गर्भिण्याः सैवं तस्याः पुष्पदर्शने सति गर्भः प्रायो न तिष्ठत्यसंजातसारत्वात् । तस्मात्प्रत्याख्याय

प्रत्याख्यानं कृत्वा प्रसाधयेत् प्रकर्षेण यत्नेन साधयेत् । आमान्वये च । अत्राऽपि प्रत्याख्याय प्रसाधयेदित्यनुवर्तते । अमानुगते रक्तदर्शने संपूर्णत्रिचतुरादिमासाया अभिसंजातसारेऽपि गर्भे सति विरुद्धोपक्रमत्वात्प्रत्याख्याय साधनं कारयेत् । तथा हि । रूक्षतीक्ष्णोष्णकटुप्रायमामघ्नं गर्भिण्या विरुद्धं शीतस्निग्धप्रायं चामस्य ।

एवमप्यामरक्तयोर्द्वयोर्यदविरुद्धं तदुपदेष्टुमाह ।

**तत्रेष्टं शीतं रूक्षोपसंहितम् ।**
**उपवासो घनोशीरगुडूच्यरलुधान्यकाः ॥ ७ ॥**
**दुरालभापर्पटकचंदनातिविषाबलाः ।**
**क्वथिताः सलिले पानं तृणधान्यादिभोजनम् ॥ ८ ॥**
**मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ।**

तत्र आमान्वये सामतायां सत्यां शीतं यदन्नपानादि तत्सर्वं बाह्यतोंतश्च हितम् । शीतं रक्तस्य पथ्यमामस्य विरुद्धत्वादपथ्यमित्याशंक्याह । रूक्षोपसंहितं रूक्षेण तिक्तकषायादिना युक्तम् । तथा देशसत्वाद्यनुरोधादुपवासो हितो न केवलं शीतं रूक्षोपसंहितम् । तथा घनादयो द्रव्यविशेषाः सलिले क्वथिताः पाने हिताः। घनो मुस्तः । अरलुः स्योनाकः । तथा तृणधान्यानि नीवारकोद्रवश्यामाकादीनि भोजनमाहारस्तत्राऽमान्वये हितम् । कैः सह । मुद्गादियूषैः । आदिग्रहणेन मकुष्टमसूरादयः शिंबीधान्यविशेषाः पित्तश्लेष्महरा गृह्यंते । सामतायामेवोत्पन्नायामयमुपक्रमः । आमे तु जिते स्निग्धादि पूर्ववत् । पूर्वस्मिन्निव पूर्ववत् । सप्तम्यंताद्वतिः । यथा प्रथमं रक्तदर्शने स्निग्धशीतं हितं तथाऽत्रापि पूर्वनिर्दिष्टं स्निग्धादि हितमित्यर्थः । स्निग्धशीतानि बाह्यांतरुपयोज्यानि ।

**गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥**
**गर्भकोष्ठविशुद्ध्यर्थमर्तिविस्मरणाय च ।**
**लघुना पंचमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥**
**पेयाममद्यपा कल्के साधितां पांचकौलिके ।**
**बिल्वादिपंचककाथे तिलोद्दालकतंडुलैः ॥ ११ ॥**
**मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ।**
**लघुरस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥**

गर्भे इति । गर्भिण्या एवमासेवमानाया अप्यदृष्टवशाद्गर्भे निपतिते निःशेषेण पतिते सति तीक्ष्णं कर्कशं मद्यं सामर्थ्येन पिबेत् । बहु पिबेदित्यर्थः । किमर्थमित्याह । गर्भेत्यादि । गर्भकोष्ठविशुद्ध्यर्थमर्तेः पीडाया विस्मृत्यर्थं च । ततो मद्यपरिपानादनंतरं रूक्षां पेयां पिबेत् । किंभूताम् । लघुना पंचमूलेन बृहत्यादिना कृताम् । अमद्यपा तु या स्त्री सा गर्भे निपतिते पेयां पिबेन्न तु मद्यम् । क्व साधिताम् । कल्के । किं संबंधिनि । पांचकौलिके । पंचकोलस्यायं पांचकौलिकस्तस्मिन् । पंचकोलकं कल्कीकृत्य तत्र पेयां साधितामित्यर्थः । तथा बिल्वादिपंचकक्काथे महत्पंचमूलकषाये साधितां पेयां पिबेदिति योज्यम् । कैः साधिताम् । तिलोद्दालकतंडुलैः । उद्दालको व्रीहिविशेषः । मासैस्तुल्यानि दिनानि माससंख्या वासराः । यावंतो मासा गर्भस्य तावंत्यहानि गर्भे निपतिते सत्येवं पूर्वोक्तेन प्रकारेण पेयादिः क्रमः कार्यः । किंभूतः । लघुरस्नेहलवणः । न विद्येते स्नेहलवणे यस्य । तथा दीपनीयैरग्निकृद्भिर्मरिचचित्रकादिभिर्द्रव्यैर्युतः । स तथाविधस्तत्र क्रमो हितः ।

किमर्थः ।

**दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ।**

दोषौ पित्तकफावत्र गृह्येते । वातस्य क्लेदसंभवाभावात् । दोषौ च धातवश्च तेषां परिक्लेदस्तस्य शोषार्थं शोषणायायं विधिरिति ।

**स्नेहान्नबस्तयश्चोर्ध्वं बल्यजीवनदीपनाः ॥ १३ ॥**

ऊर्ध्वमतो दोषधातुपरिक्लेदशोषादनंतरं स्नेहान्नबस्तयो हिताः । स्नेहश्चतुर्विधः पानादौ हितः । तथाऽन्नं स्निग्धमरूक्षं हितम् । बस्तयोऽपि स्निग्धा एव न रूक्षा हिता वातकोपभयात् । किंभूताः स्नेहान्नबस्तयः । बल्यदीपनजीवनाः । बल्या बलाय हिताः । दीपना वह्नेः संधुक्षणकृतः । तथा जीवना ओजोवृद्धिकराः ।

इदानीमुपविष्टकनागोदरयोर्गर्भयोर्हेतुलिंगौषधानि वितानयितुमाह ।

**संजातसारे महति गर्भे योनिपरिस्रवात् ।**
**वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥१४॥**
**उपविष्टकमाहुस्तं वर्धते तेन नोदरम् ।**

संजातः सारो बलं यस्याऽसौ संजातसारो बलवान् गर्भस्तस्मिन् । तथा महति प्रवृद्धे सति । गर्भिण्याः परिहार्यापरिहार्योऽसौ योनेः परिस्रवः परिस्रवणं तस्मात् । परिस्रव इति च सामान्येन निर्देशात्कदाचिद्रक्तरूपः कदाचिदन्यादृशोऽपि गर्भात्स्रवति । परिस्रवाच्च कारणाद्वृद्धिमप्राप्नुवन्नगच्छन् । कोष्ठ एव गर्भाधार एव तिष्ठति गर्भः । यतो योनिपरिस्रवात्कारणाद्वायुः कुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्याऽवतिष्ठते । ततो नाड्यां दोषैः कुल्यायामिव तृणपात्रादिभिः प्रतिच्छन्नायां रसस्यासम्यग्वहनान्नाडीरोधाद्वृद्ध्यभावो गर्भस्य । किंभूतः । कोष्ठे तिष्ठति सस्फुरः । स्फुरणं स्फुरः । अब्विधौ भयादीनामुपसंख्यानमित्यच् । गाङ्कुटादिभ्यो ञ्णिन्ङिदिति ङित्वाद्गुणाभावः । सह स्फुरेण चलनेन वर्तत इति सस्फुरः । एतावन्मात्रविशेषावस्थः कोष्ठे तिष्ठति । तं तथाविधं गर्भमुपविष्टकसंज्ञमाहुः । मुनय इति शेषः । तेन तथाभूतेन गर्भेण कोष्ठे स्थितेन तस्या उदरं न वर्धते न वृद्धिं याति गर्भस्यैवावृद्धेः । नहि यद्यस्य वृद्धौ वर्धते तदवृद्धौ तस्य वृद्धिः स्यात् । तथा हि । चंद्रवृद्ध्यैव समुद्रवेलाया वृद्धिः । उपविष्टकावस्थश्च गर्भो न वर्धते । अतस्तत्कारणाभावादुदरस्याप्यवृद्धिः ।

एवमुपविष्टकमुक्त्वा नागोदराख्यं वक्तुमाह ।

**शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५ ॥**
**वाते क्रुद्धे कृशः शुष्येद्गर्भो नागोदरं तु तत् ।**
**उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥**

शोक इति । शोकोपवासरूक्षाद्यैर्गर्भगर्भिण्यपचयकारिभिः पवनप्रकोपकारिभिर्हेतुभिर्वाते क्रुद्धे कुपितेऽथवा गर्भगर्भिण्योरुपचयप्रदैराहारविहारैरुपचितयोर्गर्भगर्भिण्योरपि कदाचिदत्यर्थं रक्तस्रुतिकारणान्यासेवेत स्त्री । तदानीं तस्या योन्यतिस्रवो जायते । तस्माद्योन्यतिस्रवात्कारणादपि पवने कुपिते कृशो गर्भः संपद्यते । शुष्येदित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । न केवलं कृशो भवति शुष्येच्चेत्यर्थः । तं तथाभूतं गर्भं नागोदरसंज्ञकं केषांचिन्मते चोपशुष्ककसंज्ञं विद्यात् । अत्र नागोदरसंज्ञके गर्भेऽतःस्थित उदरं वृद्धमपि महदपि सद्धीयते हानिं याति । स्फुरणं च चिराच्चिरेण भवति । उपविष्टके तु केवलमवृद्धिर्न तु हानिः ।

**तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।**
**घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ १७ ॥**
**तैरेव च सुतृप्तायाः क्षोभणं यानवाहनैः ।**

तयोरिति । तयोरुपविष्टकनागोदराख्ययोर्गर्भयोर्घृतक्षीररसैस्तृप्तिर्गर्भिण्याः कार्येति शेषः । किंभूतैस्तैः । बृंहणवातघ्नमधुरद्रव्यैः संस्कृतैः सिद्धैः । बृंहणानि च तानि वातघ्नानि च मधुराणि चैवंभूतानि यानि द्रव्याणि द्राक्षाशर्करादीनि न तु व्यस्तानि बृंहणानि वातघ्नानि मधुराणि च । तत्र केवलबृंहणानि प्रियंगुप्रभृतीनि नतु वातघ्नानि । वातघ्नानि च बृंहणानि नतु मधुररसानि । यथा नागरादीनि । मधुराणि च न वातघ्नानि नाऽपि बृंहणानि । यथा तंडुलीयमसूरादीनि । तदेतैर्व्यस्तगुणैर्द्रव्यैः संस्कृतेन घृतादिना तृप्तिर्न कार्या किं तर्हि समस्तबृंहणादिगुणयुक्तैर्द्रव्यैः संस्कृतैरिति बोध्यम् । तथा संग्रहेऽधिजगे । तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धानां सर्पिषामुपयोग इत्यादि । तथा तद्गर्भपुष्ट्यै तां गर्भिणीमामगर्भांश्च खादयेद्वैद्य इति शेषः । आमगर्भान् खादंत्याः कदाचिद्गर्भिण्या जुगुप्सा स्यादतो गर्भगर्भिण्योर्द्वयोरपि व्यापदो भवेयुरिति ण्यंतोऽत्र खादिर्निर्दिष्टः । वैद्यो हि तां तथा युक्त्या खादयेत् यथाऽसौ न जुगुप्सेत । आमगर्भा अपरिपूर्णगर्भा उच्यंते । तथा तैरेव बृंहणादिद्रव्यसंस्कृतैर्घृतक्षीररसैरामगर्भैश्च सुतृप्तायास्तृप्तिं प्राप्तायाः क्षोभणं कार्यम् । कैः । यानै रथादिभिर्वाहनैर्गजतुरगादिभिः । तत्रारोप्य गर्भिणीं वेगेन नयेदित्यर्थः ।

अथ लीनाख्यस्य गर्भस्य चिकित्सामाह ।

**लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः॥१८॥**
**रसा बहुघृता देया माषमूलकजा अपि ।**
**बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत्॥१९॥**
**समेद्यमांसं मधु वा कट्यभ्यंगं च शीलयेत् ।**

अस्योपविष्टकनागोदराभ्यामेव हेतुलक्षणयोरुक्तत्वाद्यदेवेह निःस्फुरणत्वादि विशेषांतरं तदेवेह तंत्रकृतोक्तम् । संग्रहे तु पपाठ । यस्याः पुनर्वातोपसृष्टस्रोतसो लीनो गर्भः प्रसुप्तो न स्पंदते तं लीनमित्याहुरिति । तत्र लीनाख्ये गर्भे सति गर्भिण्याः श्येनादिजा रसा बहुघृता देयाः । आदिशब्देन तित्तिरिकुक्कुटादीनां ग्रहणम् । तथा माषमूलकजा रसा बहुघृता देयाः । तथा सात्म्यादिवशात् बालबिल्वादीन् समस्तानैकध्यं कृत्वा क्षीरेण पिबेत् । तथा सह मेदुरमांसेन मार्द्वीकं वा पिबेत् । कट्यां चाभ्यंगं शीलयेदभ्यसेत् ।

**हर्षयेत्सततं चैनामेवं गर्भः प्रवर्धते ॥ २० ॥**

सततं मुहुर्मुहुश्चैनां गर्भिणीमुपविष्टकनागोदरलीनाख्यगर्भोदरस्थां हर्षयेन्मुदितां कुर्यात् । एवमनयेतिकर्तव्यतया कृतया गर्भः प्रवर्धते वृद्धिं याति ।

**पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा ।**

अन्यथाऽन्यप्रकारेण पूर्वोक्तविपर्ययेण रूक्षात्मना सेवितेन मातुराहाररसेनाल्पेन पुष्टश्चेतनामात्रावशेष एव वत्सरसंदोहैः कृच्छ्राज्जायेत कष्टेन योनितो निष्क्रामेत् । नैववेति । अथवा यावज्जीवं गर्भिण्याः कुक्षावेवावसीदेन्न ततो निष्क्रामेत कुक्षावेवावतिष्ठेत ।

**उदावर्तं तु गर्भिण्याः स्नेहैराशुतरां जयेत् ॥ २१ ॥**
**योग्यैश्च बस्तिभिर्हन्यात्सगर्भा स हि गर्भिणीम् ।**

गर्भिण्या यद्युदावर्ताख्यो व्याधिः स्यात्तं स्नेहैश्चतुर्भिर्यथायोग्यौषधसाधितैः पानादिना सेवितैराशुतरामचिरात्त्वरितं जयेत् । तथा योग्यैस्तत्कालोचितबस्तिभिरनुवासनैर्जयेत् । ननु गर्भिण्या वर्ज्येषु बस्तिमामासतोऽष्टमादिति प्रागुक्तं तत्कथमिह सामान्येनानुवासनं तंत्रकृदुपादिक्षदित्याह । हन्यादित्यादि । स यस्मादुदावर्तो गर्भेण सह गर्भिणीं हन्यादतस्तमाशुतरां जयेत् ।

**गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥ २२ ॥**
**मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम् ।**
**गर्भास्पंदो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः॥२३॥**
**अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।**

गर्भ इति । दोषाणां वातादीनामुपचयः प्रवृद्धत्वम् । अतिशयेन दोषोपचयोऽतिदोषोपचयस्तस्माद्धेतोरथवा अपथ्यैः स्वभावमात्राकालादिविरुद्धस्वभावैरथवा दैवादन्यजन्मार्जितशुभाशुभकर्मवशादंतरुदरमध्ये गर्भे मृते सति गर्भिण्या उदरं शीतमूष्मरहितं भवति तथा स्तब्धं निश्चलं तथा ध्मातं दृतिवद्वातपूरितं तथा भृशव्यथमतिवेदनं भवति तथा गर्भास्पंदो गर्भस्यास्फुरणं भ्रमस्तृष्णा च भवति । तथा कृच्छ्रात् कृच्छ्रेण गर्भिण्या उच्छ्वसनमूर्ध्वश्वसनम् । तथा क्लमो ग्लानिः । तथा अरतिः स्थानासनशयनादिष्वनवस्थितत्वं चेतसः । तथा स्रस्ते च ते नेत्रे च तयोर्भावः स्रस्तनेत्रत्वम् । स्रस्ते स्थानाच्युते इव । तथा आवीनामासन्नप्रसवकालजशूलविशेषाणामसमुद्भवोऽनुत्पादः ।

**तस्याः कोष्णांबुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥**
**गुडं किण्वं सलवणं तथांतः पूरयेन्मुहुः ।**
**घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया ॥ २५ ॥**
**मंत्रैर्योग्यैर्जरायुक्तैर्मूढगर्भो न चेत्पतेत् ।**
**अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥**
**हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।**
**हस्तेन शक्यं तेनैव**

तस्या इति । तस्या अंतर्मृतगर्भाया ईषदुष्णजलसिक्ताया योनिं प्रलेपयेत्प्रदेहयेत् । गुडादिकं पिष्ट्वा सामर्थ्याद्गुडादिकेनैव लेपयेदिति योज्यम् । तथांऽतः पूरयेत् । शाल्मल्यतसिपिच्छयेति संबंधनीयम् । योनेः प्रकृतत्वात्तस्या अंतरभ्यंतरे बहिश्च । कीदृश्या पिच्छया । घृतेन कल्कीकृतया पिष्टया । एवं योनेर्मुहुर्मुहुरभ्यंतरं पूरयित्वाऽनंतरं मूढगर्भपातनार्थं मंत्रान् सिद्धान् प्रयोजयेत् । तथा जरायुक्तान् जराय्वपतने कथितांस्तांश्च योगान् योजयेत् । मंत्रैः संग्रहोक्तैः क्षितिर्जलमित्यादिभिरथवाऽथर्ववेदोक्तैश्च मंत्रैर्जरायोः पातनार्थमुक्तैः । एवमनुष्ठीयमानेऽपि मूढगर्भो यदि न पतत्यथाऽनंतरमीश्वरं नृपमापृच्छ्य तदाज्ञां गृहीत्वा तं मूढगर्भमाशु गर्भिण्या आहरेदाकर्षेत् । कथम् । हस्तमभ्यज्य लेपयित्वा । तथा योनिमभ्यज्य । केन । साज्येत्यादि । शाल्मल्याः पिच्छा निर्यासः । सहाज्येन वर्तत इति साज्या । साज्या चाऽसौ शाल्मलिपिच्छा च तया हस्तं योनिं चाभ्यज्य यत्नेन गर्भमाहरेत् । हस्तेन शक्यमाक्रष्टुं तेनैव हस्तेन साज्यशाल्मलिपिच्छाक्तेन तं गर्भं समाकर्षेत् ।

**गात्रं च विषमं स्थितम् ॥ २७ ॥**
**आंछनोत्पीडसंपीडविक्षेपोत्क्षेपणादिभिः ।**
**अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ २८ ॥**

गात्रमिति । गात्रं च गर्भस्य विषमं कृत्वा स्थितमयथामार्गेण स्थितमांछनादिभिरनुलोम्य स्पष्टत्वं प्राप्ते सति योन्यभिमुखमार्जवेन ऋजुमार्गेणाऽगतं संतमाहरेत् । आंछनेनायामेन दीर्घतयास्थापनेन तथोत्पीडनेनोर्ध्वं पीडनेन । तथा समंतात्पीडनेन । तथा विक्षेपेण विशेषप्रेरणेन । उत्कर्षेण क्षेपणमुत्क्षेपस्तेन । आदिग्रहणादेवंप्रायैरन्यैरपि स्वबुद्धिपरिकल्पितैः स्पष्टत्वं प्राप्त इति ।

इदानीं शस्त्रोपायसाध्यां मूढगर्भचिकित्सामाह ।

**हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।**
**पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ २९ ॥**
**विष्कंभौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।**

हस्तेति । हस्तेन पादेन शिरसा अतुल्यकालं कदाचिद्धस्तेन कदाचित्पादेन कदाचिच्छिरसा योनिं प्रति भुग्नः कुटिलो मूढगर्भः प्रपद्यते आयाति यः स एको विष्कंभो नाम मूढगर्भः । तथा पादेनैकेन योनिं तथा द्वितीयपादेन गुदं पायुं भुग्नः सन् यो मूढगर्भः प्रपद्यते आयाति सोऽपरो विष्कंभकः । तावेतौ द्वौ विष्कंभौ नाम मूढौ मूढगर्भौ शस्त्रदारणमर्हतः । हस्तेनाऽऽक्रष्टुमशक्यत्वात्तयोः शस्त्रदारणं कार्यमित्यर्थः ।

अत एवाऽऽह ।

**मंडलांगुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥**

मंडलं चांगुलिश्च मंडलांगुली । मंडलशब्देन मंडलाग्रं शस्त्रमुपलक्ष्यते । अंगुलिशब्देन चांगुलिशस्त्रम् । ते नामनी ययोः शस्त्रयोस्ते मंडलांगुलिशस्त्रे शस्त्रविध्यध्यायोक्ते ताभ्यां मंडलांगुलिशस्त्राभ्यां तयोर्विष्कंभाख्ययोर्मूढगर्भयोः कर्म प्रशस्यते । ताभ्यां शस्त्राभ्यां दारणमेतयोः कार्यमित्यर्थः ।

**वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ।**

वृद्धिपत्रसंज्ञं शस्त्रं यस्मात्तीक्ष्णाग्रमतस्तद्योनौ नावचारयेत्तेन तत्र विदारणं न विधेयं प्रत्यपायभयात् ।

दारणं यत्र यथा विधेयं तथाऽऽह ।

**पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥३१॥**
**कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे ततः ।**
**समालंब्य दृढं कर्षेत्कुशलो गर्भशंकुना ॥ ३२ ॥**
**अभिन्नशिरसं त्वक्षिकूटयोर्गंडयोरपि ।**

पूर्वमिति । पूर्वं शिरःसंबंधीनि कपालानि विशोधयेत् । किं कृत्वा । शस्त्रेण दारयित्वा छित्त्वा । एवं शिरःकपालानि शोधयित्वा गर्भिणीकोष्ठबाह्यानि कृत्वा ततोऽनंतरं कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे तद्विषये समालंब्य तं गर्भं गृहीत्वा दृढं कृत्वा आकर्षेत् । केन । गर्भशंकुना । कः । कुशलोऽभ्यस्तकर्मा वैद्यः । अभिन्नशिरसमविदारितोत्तमांगं पुनर्गर्भमक्षिकूटयोस्तथा गंडयोस्तद्विषयेऽन्यतमे प्रदेशे कदाचिदक्षिकूटप्रदेशे कदाचिद्गंडप्रदेशे समालंब्य तं गर्भं दृढं गर्भशंकुना गृहीत्वाऽऽकर्षेत् ।

**बाहुं छित्वांऽससक्तस्य वाताध्मानोदरस्य तु ॥३३॥**
**विदार्य कोष्ठमंत्राणि बहिर्वासं निरस्य च ।**

बाहुमिति । अंसाभ्यां सक्तोंऽससक्तस्तस्य बाहुं छित्त्वाऽऽकर्षणं कुर्यात् । वामेनांसेन सक्तस्य वामं बाहुं दक्षिणेनांसेन सक्तस्य दक्षिणं बाहुं छित्त्वेत्यर्थः । वातेनाध्मातं दृतिवत्पूरितमुदरं यस्य मूढगर्भस्याऽसौ वाताध्मातोदरस्तस्य तु कोष्ठमामपक्वाशयाश्रयं विदार्य पाटयित्वांऽत्राणि च बहिः सम्यङ्निरस्य बाह्यतः प्रक्षिप्य कर्षेत् ।

**कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥**

कटीसक्तस्येति तृतीयासमासः । कट्या सक्तस्य ककुद्मत्या लीनस्य तद्वच्चेति । तेन वाताध्मातोदरेण तुल्यं कर्म दारणात्मकं कृत्वा तत्कपालानि तस्य कट्याः कपालानि खंडानि विदारयेत् ।

इति विशेषेण गर्भस्याऽकर्षणमुक्त्वा सामान्येन मूढगर्भचिकित्सामाह ।

**यद्यद्वायुवशादंगं सज्जेद्गर्भस्य खंडशः ।**

**तत्तच्छित्त्वा हरेत्सम्यग्रक्षेन्नारीं च यत्नतः ॥ ३५ ॥**

यदिति । यद्यदंगं मूढगर्भस्य वायुवशात्सन्नेत्संश्लिष्येत्तत्तदंगं खंडशो लवशश्छित्त्वा दारयित्वा सम्यगाहरेत् । किलैकवेलया सकलगर्भशरीरच्छेदनादंतस्थितमूढगर्भाया नार्या अपि बलवच्छस्त्रनिपातनाद्विघातः संभाव्यत इति खंडश इत्युक्तम् । अत एवाऽऽह।रक्षेदित्यादि । नारीं च यत्ने तात्पर्यं कृत्वा रक्षेत् । यथा नार्या अंगं किंचिदपि न छिद्यते तथा विधेयमित्यर्थः ।

**गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।**
**तत्राऽनल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥**

गर्भस्येति । यस्माद्गर्भस्य चित्रां नानारूपां गतिमवस्थितिं विगुणः प्रकुपितः प्रभंजनः करोति तस्माद्योऽनल्पमतिर्महाबुद्धिर्वैद्यः स तत्र तस्यां गतावस्थापेक्षमाचरेत् । मूढगर्भे प्रत्युक्तमप्यवस्थितं कर्म कुर्यादित्यर्थः ।

**छिंद्याद्गर्भं न जीवंतं मातरं स हि मारयेत् ।**
**सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ३७ ॥**

छिंद्यादिति । जीवंतं गर्भिण्यंतर्मृतगर्भलक्षणानभिज्ञो वैद्याभिमानी यः स तं गर्भं न दारयेत् । कुतो हेतोरित्याह । यस्मात्स मातरं मारयेत् । कथम् । सहात्मना मातरमात्मानं च स च्छिन्नो गर्भो व्यापादयेदित्यर्थः । न चाऽस्तजीवितो गर्भिण्या अंतर्मृतो गर्भः क्षणमपि मुहूर्तमात्रमप्युपेक्ष्योऽपि तु तस्य द्रागेव प्रतिक्रियां कुर्यात् ।

इदानीमुपेक्ष्यमूढगर्भा स्त्रियमाह ।

**योनिसंवरणभ्रंशमकल्लश्वासपीडिताम् ।**
**पूत्युद्गारां हिमांगीं च मूढगर्भां परित्यजेत् ॥ ३८ ॥**
**अथापतंतीमपरां पातयेत्पूर्ववद्भिषक् ।**
**एवं निर्हृतशल्यां तु सिंचेदुष्णेन वारिणा ॥ ३९ ॥**
**दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।**
**योनिर्मृदुर्भवेत्तेन शूलं चाऽस्याः प्रशाम्यति ॥४०॥**

योनेः संवरणं संवृतयोनित्वम् । तथा तस्या एव योनेर्भ्रंशः स्वस्थानाच्च्यवनम् । तथा मकल्लः शिरोबस्तिकोष्ठशूललक्षणः प्रागुक्तो व्याधिः तैर्योनिसंवरणादिभिः पीडिताम् । तथा पूत्युद्गाराम् । तथा हिमांगीम् । एवंविधां मूढगर्भां त्यजेन्नोपक्रमेत् । अथ मूढगर्भाहरणादनंतरमपरां जरायुसंज्ञामपतंतीमनिष्क्रामंतीं पूर्ववत्पातयेत् । पूर्वेण तुल्यं पूर्ववत् । पूर्वोक्तेन पातनोक्तविधिना हिरण्यपुष्पीमूलं चेत्यादिनेत्यर्थः । एवमनंतरोक्तेन विधिना निर्हृतं शल्यं गर्भजरायुसंज्ञं यस्यास्तां तु स्त्रियमुष्णेन जलेन सिंचेत् । ततः स्नानादनंतरमनभ्यक्तशरीरायै स्त्रियै योनौ स्नेहपिचुं दद्यात् । तेन दत्तेन स्नेहपिचुना अस्या योषितो योनिर्मृदुर्भवेत् । शूलं रुजा च प्रशाम्यति ।

**दीप्यकातिविषारास्नाहिंग्वेलापंचकोलकान् ।**
**चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥ ४१ ॥**
**कटुकातिविषापाठाशाकत्वग्हिंगुतेजिनीः ।**
**तद्वच्च दोषस्यंदार्थं वेदनोपशमाय च ॥ ४२ ॥**
**त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत् ।**
**सायं पिबेदरिष्टं वा तथा सुकृतमासवम् ॥ ४३ ॥**
**शिरीषककुभक्वाथपिचून् योनौ विनिक्षिपेत् ।**
**उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥४४॥**

दीप्यकेति । ततः स्नानाभ्यंगादनंतरं दीप्यकादेश्चूर्णं स्नेहेन घृतादिना प्रकृत्यादिवशात् यथायोग्येन तां स्त्रियं पाययेत् । कल्कं वा दीप्यकादेर्जलेन पिष्ट्वा स्नेहेन तां पाययेत् । क्वाथं वा दीप्यकादेस्तां पाययेत् । तथा कटुकादीनि तद्वत्तां स्त्रियं पाययेत् । एतानि द्रव्याणि चूर्णीकृत्य स्नेहेन कल्कीकृत्य क्वाथीकृत्य वा पाययेत् । शाकं खरच्छदम् । त्वक् त्वचम् । तेजिनी तेजोवती । किमर्थं पाययेत् । दोषस्यंदार्थम् । दोषस्य रक्तादेः स्यंदः स्रवणं तदर्थं पाययेत् । तथा वेदनायाः पीडाया उपशांत्यर्थं च । त्रिरात्रमेवं मूढगर्भाकर्षणदिनात्प्रभृति कार्यम् । ततस्त्रिरात्रादनंतरं सा मूढगर्भा सप्ताहं स्नेहमेव पिबेन्न तु रूक्षौषधमित्येवकारोऽवधारणार्थो द्योतयति । सायं दिनांतेऽरिष्टं पूर्वोक्तलक्षणं पिबेत् । तथा शोभनं कृत्वा कृतं निष्पादितमासवं मद्यविशेषं तथा शिरीषककुभक्वाथकृतान् पिचून् विकेशिकाप्रायान् कार्पासादिमयान् योनौ विनिक्षिपेत् । उपद्रवा ज्वरादयश्चान्ये ये भवेयुस्तानुपद्रवान् यथास्वमुपाचरेत् । यस्य ज्वरादेर्य आत्मीय उपक्रमस्तेनतेन तमुपक्रमेदित्यर्थः ।

एतच्च पूर्वोक्तमासेव्यानंतरं यत्कर्तव्यं मूढगर्भायाः स्त्रियास्तदाह ।

**पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।**
**रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ ४५ ॥**
**स्वेदाभ्यंगपरा स्नेहान् बलातैलादिकान् भजेत् ।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च॥४६॥**

पय इति । पयः क्षीरमनंतरं तस्यै दशाहं भोजने हितम् । किंभूतम् । वातहरै रास्नादिभिर्द्रव्यैः सिद्धं शृतम् । दशाहादनंतरं द्वितीयं च दशाहं रसो भोजने हितः । अतः परं दिनविंशतेरनंतरं सा स्त्री लघुपथ्याल्पभोजना सती तथा स्वेदाभ्यंगपरा तत्प्रधाना सती स्नेहान् बलातैलादिकान् भजेत् । ऊर्ध्वमनंतरं चतुर्भ्यो मासेभ्यः पंचममासात्प्रभृति सा निष्क्रांतमूढगर्भा स्त्री क्रमेण नतु सहसा सुखान्यन्नपानाहारविहाररूपाणि भजेत् ।

अथ बलातैलं निरूपयति ।

**बलामूलकषायस्य भागाः षट् पयसस्तथा ।**
**यवकोलकुलत्थानां दशमूलस्य चैकतः ॥ ४७ ॥**
**निःक्वाथभागो भागश्च तैलस्य च चतुर्दश ।**
**द्विमेदादारुमंजिष्ठाकाकोलीद्वयचंदनैः ॥ ४८ ॥**
**सारिवाकुष्ठतगरजीवकर्षभसैंधवैः ।**

**कालानुसार्याशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥**
**अश्वगंधावरीक्षीरशुक्लायष्टीवरारसैः ।**
**शताह्वाशूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः ॥५०॥**
**पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।**
**सूतिकाबालमर्मास्थिक्षतक्षीणेषु पूजितम् ॥ ५१ ॥**
**ज्वरगुल्मग्रहोन्मादमूत्राघातांत्रवृद्धिजित् ।**
**धन्वंतरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥**

बलेति । बलाया मूलानि तेषां कषायः क्वाथस्तस्य भागाः षट् । तैलैकभागापेक्षयैतद्बोध्यम् । पयसस्तथा क्षीरस्य षडेव भागाः । यवकोलकुलत्थानां दशमूलस्य चैकत एकत्र क्वथितानां निःक्वाथभागः । यवादीनां तैलसमो निःक्वाथभाग एक इत्यर्थः । एवं त्रयोदशभागा भवंति । तैलस्य चतुर्दशो भागः । चतुर्दशानां पूरणः । तस्य पूरणे डडिति डट् । एतदेव स्पष्टीक्रियते शिष्याणां हितार्थम् । तत्र यदा षोडशपलानि तैलस्य श्रपयितव्यानि तदा बलामूलपलानि चतुर्विंशतिर्भवंति । जलपलशतानि त्रीणि चतुरशीत्यधिकानि । ततश्चतुर्थांशेन षण्णवतिः क्वाथपलानि । क्षीरपलानि षण्णवतिः । यवादीनां पलानि चत्वारि । पानीयपलानि चतुःषष्टिः । षोडशपलानि कषायस्य । द्विमेदादीनि द्रव्याणि प्रत्येकमर्धकर्षप्रमाणानि रक्तिकया पंचमभागसहितया सधानकयाधिकानीति । कालानुसार्या उत्पलसारिवा । क्षीरशुक्ला क्षीरविदारी। वरा त्रिफला । रसो बोलः । योऽयं यवकोलकुलत्थदशमूलैरेको भागः परिकल्पितस्तत्र यवकोलकुलत्थानां त्रयोंऽशा दशमूलस्य दशांशा इति व्याख्येयम् । कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितमिति वचनात् । संग्रहेऽप्युक्तम् । यवकोलकुलत्थदशमूलकषायस्य भाग इति । ये तु यवकोलकुलत्थानां त्रयोंऽशा दशमूलस्य चतुर्थोंऽश इति भागोऽयं कल्प्य इत्याहुस्ते तु पौर्वापर्यं न पर्यालोचयंत्येव । यतः कल्पयेदित्यादिकया परिभाषया द्रव्याणामेषां समांशत्वं नियमितमेव । पृथक् षष्ठ्याऽत्र यो निर्देशः स छंदोऽनुरोधादेव बोध्यः । तथा चानेनैव तंत्रकृता संग्रहे समस्तान्येवैतानि द्रव्याणि निर्दिष्टानि । अपि च । दशमूलस्याऽऽधिक्येन वातरोगहंतृत्वं यथाऽस्य तैलस्य न तथा यवादिभिरिति सर्वथा पूर्वं व्याख्यानं श्रेयः । मृद्वग्निनेति । मृदुशब्दोऽग्निविशेषणाय प्रयुक्तः । किल खरतरदहनसंपर्कात् क्षीरबाहुल्येनाऽस्य तैलस्य झटिति पाकातिक्रांतताऽपि किंचित्संभाव्यते । एतच्च तैलमशेषवातरोगहंतृ च । तथा सूतिकादिषु प्रशस्तम् । तथा ज्वरादिजित् । तथा भगवतो धन्वंतरेरभिमतमतिशयगुणवत्त्वात् । तथा योनिरोगं क्षयं चाऽपहंति ।

**वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पंदते यदि ।**
**जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥५३॥**

वस्तिद्वार इति । गर्भिण्या मृताया यदि कुक्षिः प्रस्पंदतेऽत्यंतं चलति । क्व प्रदेशे । बस्तिद्वारे तत्समीपे । कदा । जन्मकाले गर्भप्रसवोन्मुखे काले । तदा कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पंदनादनंतरं पाटयित्वा शिशुं बालमुद्धरेत् ।

**मधुकं शाकबीजं च पयस्या सुरदारु च ।**
**अश्मंतकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥**
**वृक्षादनी पयस्या च लता चोत्पलसारिवा ।**
**अनंता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५॥**
**बृहतीद्वयकाश्मर्यः क्षीरिशृंगत्वचो घृतम् ।**
**पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥५६॥**
**शृंगाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।**
**सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥ ५७ ॥**
**क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।**

मधुकमिति । मधुकादिद्रव्योपलक्षितान्सप्त योगान् क्रमाद्यथानिर्दिष्टेन क्रमेण सप्तसु मासेषु गर्भे स्रवति तद्रक्षार्थं तान् योजयेत् । कीदृशान् योगानर्धश्लोकेन समापनं समाप्तिर्येषां तानर्धश्लोकसमापनान् । अश्मंतको यमलपत्रकः । ताम्रवल्ली रामतरुणी । मंजिष्ठेत्येके । लता गंधप्रियंगुः । गौरसारिवेत्यन्ये । उत्पलसारिवा कृष्णसारिवा । क्षीरिणां न्यग्रोधादीनां शृंगास्तथा तेषामेव त्वक् चेति द्वंद्वः । द्वंद्वाच्चुदषहांतादिति टच् ।

**कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिजैः ॥ ५८ ॥**
**मूलैः शृतं प्रयुंजीत क्षीरं मासे तथाऽष्टमे ।**
**नवमे सारिवाऽनंतापयस्यामधुयष्टिभिः ॥ ५९ ॥**
**योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।**
**अथवा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥**

कपित्थेति । कपित्थादीनां समाहारद्वंद्वः । कपित्थादेर्द्रव्यान्मूलैः शृतं क्षीरमष्टमे मासि प्रयुंजीत । नवमे मासि सारिवादिभिः सिद्धं क्षीरं प्रयुंजीत । दशमे मासि काकोल्यादिसिद्धं क्षीरमथवा यष्ट्यादिभिः सिद्धं योजयेत् ।

**अवस्थितं लोहितमंगनाया**
**वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।**
**गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः**
**स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥**
**गर्भं जडा भूतहृतं वदंति**
**मूर्तेर्न दृष्टं हरणं यतस्तैः ।**
**ओजोशनत्वादथवाऽव्यवस्थै-**
**र्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥**

अवस्थितमिति । लोहितं वातेन हेतुनाऽवस्थितं कुक्षौ पवनेन रुद्धं गर्भं ब्रुवतेऽनभिज्ञाः । नञत्र पर्युदासे । अभिज्ञसदृशा इत्यर्थः । कुतस्तेषां भ्रांतिरिति तद्बीजमाह । गर्भाकृतित्वादिति । गर्भस्याऽऽकृतिः संस्थानमुन्नत्यादिकम् । तथा हृल्लासदौर्हृदेत्यादिरक्तगुल्मनिदानोक्तं लक्षणं वातरुद्धलोहितावस्थितौ गर्भस्थितौ चोभयत्र समानम् । अतोऽल्पबुद्धित्वादवस्थितं लोहितं गर्भं ब्रुवते ।

कटुकोष्णादिभिरवस्थितलोहितस्रुतिहेतुभिः स्रुते केवल एव रक्ते गर्भरहिते जडा निर्बुद्धयो भूतहृतमिति गर्भं वदंति । पुनःशब्दः शिरसः कंपं कृत्वा तेषामसंभाव्यांगीकारेण सर्वजनप्रथितेन जडत्वं सहेतुकं प्रतिपादयति । अत एवाह । यतो यस्मान्मूर्तेः शरीरस्य हरणं तैर्भूतैर्न दृष्टं न क्वचिदुपलब्धमतोऽसंभाव्यवस्तुप्रतिज्ञानात्तेषां जडत्वमित्यर्थः । नन्वेतदपि कथमुच्यत इत्याह । ओजोऽशनत्वात् । यस्मात्ते भूता ओजोऽशना ओजोभक्षणमर्यादाः । अथवा कदाचित्ते भूता उल्लंघितमर्यादाः स्युः । तैस्तथाभूतैरव्यवस्थैरव्यवस्थावस्थितैर्भूतैर्गर्भस्य माता नोपेक्ष्येतापि तु ह्रियेतैव । तथा हि । यथा गर्भमातोपचितशरीरा न तथा गर्भ इति । उपजातींद्रवज्राख्ये वृत्ते ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां शारीरस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

गर्भव्यापदोऽनंतरमंगविभाग उच्यते । अंगप्रत्यंगविज्ञाने हि सति सम्यग्गर्भस्याऽऽहरणादिकं कर्तुं शक्यते नान्यथेतीदमाह ।

**अथाऽतोऽगविभागं शारीरं व्याख्यास्यामः ।**

अंगस्य शरीरस्य विभागो विभजनमंगप्रत्यंगादिना पृथक्करणमंगविभागः । अथेत्यादि पूर्ववत् ।

अथ तान्येवांगानि विभक्तुकाम आह ।

**शिरोऽतराधिर्द्वौ बाहू सक्थिनी च समासतः ।**
**षडंगमंगं प्रत्यंगं तस्याक्षिहृदयादिकम् ॥ १ ॥**

शिर इति । षडंगं षडवयवमंगं शरीरम् । तान्येव षडंगान्याह । शिरस्तथांऽतराधिस्तथा द्वौ बाहू वामदक्षिणौ तथा सक्थिनी द्वे वामदक्षिण इत्येवं समासतः संक्षेपेण षडंगं विस्तरेण पुनरनेकावयवम् । अंतराधिशब्देन शिरोबाहुसक्थिवर्जः सर्वो मध्यमभाग उच्यते । अंतराधीयंते निबध्यंते यथायथं शरीरस्यांतः स्थाप्यंते प्राकृतेन कर्मणा शिरःप्रभृतयः पंचावयवा यस्मिन्सोंऽतराधिः । तस्य षडवयवस्यांगस्याक्षिहृदयादिकं प्रत्यंगम् । आदिशब्देन कर्णनासापाणिपादादिपरिग्रहः । अवयवमवयवं प्रति योऽवयवस्तत्प्रत्यंगमुच्यते ।

शरीरं व्योमवाय्वादिपंचमहाभूतात्मकं चेतनादीनामधिष्ठानमतस्तमेव प्रत्येकं महाभूतगुणमाह ।

**शब्दः स्पर्शश्च रूपं च रसो गंधः क्रमाद्गुणाः ।**
**खाऽनिलाऽग्न्यब्भुवाम्**

शब्द इति । शब्दादयः पंच गुणाः क्रमात्क्रमेण खादीनां पंचानां भवंति । खं चाऽनिलश्चाग्निश्चापश्च भूश्च तासाम् । तत्र शब्दः खस्याकाशस्य गुणः । सुषिरेऽतिरिक्तस्पर्शादिगुणचतुष्टयायोगित्वेन शब्दमात्रस्यैवोपलंभात् । स्पर्शो वायोः । रूपमग्नेः । रसोऽपां पानीयस्य । गंधो भूमेः । ए तेषां गुणानां खाद्याश्रितत्वात्तेषां गुणा इत्युच्यंते ।

किमेकैक एवाऽकाशस्येव वाय्वादीनां यथोक्तो गुण उताऽन्येऽपि संतीत्याह ।

**एकगुणवृद्ध्यन्वयः परे ॥ २ ॥**

एकेन गुणेन वृद्धिस्तयाऽन्वयः संबंधः । परे वाय्वादौ महाभूते । अथवैकस्य गुणस्य वृद्धिस्तयाऽन्वयोऽनुगमस्तद्भावित्वं पर इति । चतुर्णां महाभूतानां परत्वोक्तिराकाशापेक्षया । तेन वाय्वादौ महाभूते एकगुणवृद्ध्यन्वयः । आकाशस्त्वेकगुण एव । तस्य परत्वासंभवान्न तस्यैकगुणवृद्ध्यन्वयः । आकाशात्परेऽनंतरे महाभूते वाय्वाख्ये एकगुणवृद्ध्यन्वयेन द्विगुणत्वाच्छब्दस्पर्शगुणत्वम् । ततः परे च महाभूतेऽग्न्याख्ये एकगुणवृद्ध्यन्वयेन त्रिगुणत्वाच्छब्दस्पर्शरूपगुणत्वम् । ततः परे जलाख्ये महाभूते एकगुणवृद्ध्यन्वयेन चतुर्गुणत्वाच्छब्दस्पर्शरूपरसगुणत्वम् । ततः परे पृथिव्याख्ये महाभूते एकगुणवृद्ध्यन्वयेन पंचगुणवत्त्वाच्छब्दस्पर्शरूपरसगंधगुणत्वम् । एवं पंचानां खादीनामेकगुणवृद्ध्यैकद्वित्रिचतुःपंचगुणत्वं बोध्यम् ।

इदानीं यथाक्रमनिर्दिष्टेभ्यो भूतेभ्यो ये भावा भवंति तान् दर्शयति ।

**तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।**
**वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥**
**आप्या जिह्वा रसक्लेदा घ्राणगंधास्थि पार्थिवम् ।**

तत्रेति । तेषु पंचसु महाभूतेषु मध्येऽस्मिन् देहे मनुष्यादौ स्थूलतया परिणते नान्यस्मिन्नतींद्रिये भूतादौ । खादाकाशात्सत्वबहुलात् खानि च्छिद्राणि भवंतीति शेषः । एवं श्रोत्रेंद्रियाधिष्ठानं श्रोत्रम् । तथा शब्दो घोषः । तथा विविक्तता शून्यता रिक्तता । खादेव छिद्रविशेषः । यद्यपि छिद्रादिषु सर्वभूतानामेव व्यापारस्तथाप्याकाशस्यैवाऽत्र विशिष्टं कारणत्वम् । यथा घटादौ मृद्दंडचक्रसलिलसूत्रादिकारणसमुदायनिष्पन्नेऽपि मृद एव विशिष्टकारणत्वम् । अत एवाऽसौ मृन्मय एवोच्यते । एवं सर्वेषु वक्ष्यमाणेषु वातादिजेषु स्पर्शादिषु बोध्यम् । वातादनिलाद्रजोबहुलात्स्पर्शादयो भवंति । स्पर्शः स्पर्शनम् । त्वगिह स्पर्शनेंद्रियाधिष्ठानम् । तथोच्छ्वासः प्राणाख्यः । वह्नेः सत्वरजोबहुलाद्दृगादयो भवंति । दृग्दृष्टिश्चक्षुरिंद्रियाधिष्ठानम् । तथा रूपाख्यो गुणः । पक्तिः पाकः । उपलक्षणं चेदम् । तेजःपित्तोष्ममेधावर्णशौर्यादयोऽपि वह्नेरेव वेद्याः । अद्भ्यः सत्वतमोबहुलाभ्यो जाता आप्या जिह्वादयो भवंति । जिह्वाशब्देनाऽत्र जिह्वाया विशिष्ट एकदेशो रसनेंद्रियाधिष्ठानं विवक्षितो न सर्वैव जिह्वा । तथा रसाख्यो गुणः । तथा क्लेदाख्यो भावः । उपलक्षणं चेदम् । स्वेदमूत्रादयोऽप्याप्या एव । घ्राणादि पार्थिवं भवति । घ्राणं नासाया विशिष्ट एकदेशो घ्राणेंद्रियाधिष्ठानम् । गंधो गुणः । तथाऽस्थिभावः । एतानि सर्वाणि पृथिव्याख्यात्तमोबहुलान्महाभूताज्जातानि ।

देहेऽस्मिन् किं मातृजं पितृजमित्याह ।

**मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम् ॥ ४ ॥**
**पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम् ।**
**चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥**

मृद्विति । अत्राऽस्मिन् देहेऽनेकसामग्रीकेऽपि यन्मृदु वस्तु तन्मातृजम् । मातुराधिक्येन कारणभाव इत्यर्थः । मातृजमिति पंचम्यामजाताविति जनेर्डः । किंपुनस्तन्मृद्वित्याह । रक्तेत्यादि । आदिशब्देन नाभिहृदययकृत्प्लीहामाशयादीनां ग्रहणम् । ननु गुदस्य मांसप्रायत्वान्मांसग्रहणेनैव सिद्धं ग्रहणं तत् किं गुदग्रहणेन । ब्रूमः । मांसत्वस्याप्यस्यानिश्चयात् पृथगुपादानं कृतम् । तथा च वक्ष्यति । मांसमर्मगुदोऽन्येषामिति । यद्वस्तु स्थिरं तत् पैतृकं पितृजम् । किं तदित्याह । शुक्रादिकम् । आदिशब्देन शिरास्नायुरोमादीनां ग्रहणम् । पैतृकमिति पितुर्यच्चेति ठक् । इसुसुक्तांतादिति कादेशः । चेतना आत्मैव प्राकृतशुभाशुभकर्मबीजक्षेत्रमित्यर्थः । ततो जातं चैतनमात्मजम् । किं तदित्याह । चित्तमित्यादि । चित्तमिंद्रियसारथिः । तथाऽक्षाणि श्रोत्रादीनि । ननु चैतनान्यक्षणीत्येतत्पूर्वापरव्याहतमिव मन्यामहे । यतः पूर्वमुक्तं खात्खानि देहेऽस्मिन्निति । तत्कथमिह चैतनान्यक्षाणीत्युच्यते । ब्रूमः । नात्र तत्र वाऽवधारणं कृतं यथा चैतनान्येवाक्षाणि खादेव खानीति । तस्मादाकाशं चेतना च द्वयमप्यक्षाणां कारणमित्यवेहि । तथा नानायोनिषु गजाजवाजिबस्तशशशंबरप्रभृतिषु यज्जन्म संभवस्तदपि चैतनम् । उपलक्षणं चेदम् । कामक्रोधलोभभयमदहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहंकारसुखदुःखायुःस्वरविशेषादयोऽपि हि चैतना एव ।

**सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम् ।**

सात्म्यं त्रिविधम् । व्याधिसात्म्यं देशसात्म्यं देहसात्म्यं च । तत्रेह व्याधिसात्म्यं न गृह्यते । यतो देहस्य संभवतः संभूतमात्रस्य चेयं विचारणा प्रस्तुता कुतः किं संभवतीति । अतो व्याधिवर्जदेहप्रस्तावान्नोपयुज्यते । तस्माद्देशसात्म्यं देहसात्म्यं च गृह्यते । देहस्य हि संभवतः संभूतमात्रस्य मात्राऽऽहारविहारादियदपथ्यमप्यतिशयेन शीलितं तदप्यस्य देहस्योचिततां गच्छेत्सुखानुबंधत्वेन सात्म्यमुच्यते । तस्माद्देशसात्म्यं देहसात्म्यं च गृहीतुं युक्तम् । सात्म्याज्जातं सात्म्यजम् । किं तत् । आयुर्जीवितम् । तथाऽऽरोग्यं धातुसात्म्यम् । तथाऽनालस्यं सर्वचेष्टासूद्योग उत्साहः । तथा प्रभा कांतिः । तथा बलं शक्तिः । उपलक्षणं चेदम् । अलोलुपत्वेंद्रियप्रसादस्वरवर्णवीर्यतेजःसंपत्प्रहर्षाद्यपि हि सात्म्यजमेव ।

**रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥**

रसादाहाररसात् परिणताज्जातं रसजम् । किं तत् । जन्म संभवः । कस्य । वपुषः सकलस्य शरीरस्य । तथा वृत्तिर्वर्तनं जीवितानुबंधः । रसेन हि विना जीवितस्याप्यभावः । तथा वृद्धिरायामविस्तराभ्यां यथासंस्थानस्य शरीरस्याधिक्यम् । तथा । अलोलताऽलौल्यम् । अलोलता रसजेति लिंगविपरिणामे सति संबंधः । उदाहरणमात्रं चेदम् । उत्साहपुष्टितृप्तयोऽपि हि रसजा एव ।

**सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः ।**
**राजसं बहुभाषित्वं मानक्रुद्दंभमत्सराः ॥ ७ ॥**
**तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता ।**

सात्विकमिति । सत्वजं शौचादिकम् । शौचं कायवाङ्मनसां शुद्धिः । सत्यवाक्याद्यभिधायित्वं वाक्शुद्धिः मृज्जलादिना क्षालनादि शास्त्रोदितं कायिकं शौचम् । मानसं तु शौचं जगद्बंधुता करुणा शुद्धसंतानत्वम् । आस्तिक्यादि । शौचमिति इगंताच्च लघुपूर्वादित्यण् । आस्तिक्यमिति । अस्ति परलोक इति मतिरस्येत्यास्तिकः । अस्तिनास्तीत्यादिना ठक् । आस्तिकस्य भाव आस्तिक्यम् । ब्राह्मणादित्वात् ष्यञ् । तथा शुक्ले धर्मे निर्व्याजे रुचिर्भक्तिः । मतिः प्रज्ञा । उपलक्षणं चेदम् । शौचकृतज्ञतादाक्षिण्यव्यवसायशौर्यगांभीर्यस्मृतिमेधादयोऽपि हि सात्विका एव । राजसानि बहुभाषित्वादीनि । उपलक्षणं चेदम् । शौर्यदुरुपचारतालोलुपत्वहर्षकामादयोऽपि राजसा एव । तामसानि भयादीनि । उपलक्षणं चेदम् । प्रमादशोकादीन्यपि तामसान्येव । तत्र सत्वं मनस्तस्योपप्लवो रजस्तमश्चेति । सुश्रुते चोक्तम् । वाय्वाकाशधातुभ्यां वायुराग्नेयं पित्तमंभःपृथिवीभ्यां श्लेष्मेति । आयुर्वेदावतारे तूक्तम् । शीतोष्णशमवृद्ध्याप्यं न पित्तं द्रुततांवत् । क्रकांभः कफो भौमो नानिलानलसंहत इति ।

अधुना देहाश्रितसर्वभावोपसंहारं कुर्वन् प्रधानो यो भावो देहस्य तस्य प्राधान्यं दर्शयन्निदमाह ।

**इति भूतमयो देहः**

इति भूतमयो देह इति । सर्वेभ्यो देहाश्रितभावेभ्यो महाभूतानामेव प्राधान्यम् । तन्मयत्वाद्देहस्य सर्वभावाधारभूतस्य ।

इत्येवमनेन ग्रंथेन भूतमयत्वं देहस्याऽभिधायेदानीं देहस्य प्रतिभागशो निरूपयन्नाह ।

**तत्र सप्त त्वचोऽसृजः ॥ ८ ॥**
**पच्यमानात्प्रजायंते क्षीरात्संतानिका इव ।**

तत्र तस्मिन् महाभूतमये देहेऽसृजो रक्तात्सप्तत्वगुत्पादनसमर्थेन धातूष्मणा पच्यमानात् सप्त त्वचः प्रकर्षेण जायंते । कुतः का इव । यथा क्षीरात्पच्यमानाच्छीतीभूतात्तदुपरि घनभागस्वभावाः संतानिका जालिका जायंते तद्वदसृजः पच्यमानात्सप्त त्वचो भवंति । तत्र भासिनी लोहिनी श्वेता ताम्रा त्वग्वेदिनी तथा । स्याद्रोहिणी मांसधारा सप्तमी परिकीर्तिता । व्रीहेरष्टादशांशाद्या द्वितीया षोडशांशका । द्वादशांशा तृतीया तु चतुर्थ्यष्टांशमात्रिका । पंचमी पंचमांशा तु षष्ठी व्रीहिप्रमाणिका । व्रीहिद्वयप्रमाणा तु सप्तमी भिषजां मता । दीर्घच्छायापंचकस्य भासिन्याधारतां गता । मन्यंते षट् त्वचः केचित्तासां बाह्योद-

काश्रया । द्वितीयाऽसृग्धरा सिध्मश्वित्राधारा तृतीयका । चतुर्थी सर्वकुष्ठानामधिष्ठानत्वमागता । विद्रध्यलज्यधिष्ठाना पंचमी रोगकारिणी । षष्ठयत्र यस्यां च्छिन्नायां ताम्यत्यंधं तमो विशेत् । यामधिष्ठाय जायंते स्थूलमूलानि पर्वसु । अरूंषि कृष्णरक्तानि दुश्चिकित्स्यतमानि च ।

इदानीं कला आह ।

**धात्वाशयांतरक्लेदो विपक्वः स्वंस्वमूष्मणा ॥ ९ ॥**
**श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ।**

धातूनां रसादीनामाशया आधारा जलाशयवत्तेषामंतराण्यंतरालानि तेषु धात्वाशयांतरेषु क्लेदो धात्वाशयांतरक्लेदः स विपक्वः कलाख्य उच्यते कलासंज्ञां लभते । केन विपक्वः । स्वंस्वमूष्मणाऽऽत्मीयेनात्मीयेन वह्निना । यथा रसधात्वाशयांतरस्थः क्लेदो रसधातूष्मणा विपक्वः कलैका भवति । यावच्छुक्रधात्वाशयांतस्थः शुक्रधातूष्मणा विपक्वः सप्तमी कला भवति । कीदृशो विपक्वः । श्लेष्मणा स्नाय्वाऽपरया च जराय्वाख्यया छन्नश्छादितः । वा दांतशांतेत्यादौ छदेर्ण्यंतात् छन्नशब्दो निपातितः । किंवत् काष्ठसारवत् । यथा काष्ठस्य सारस्तथाऽयं धातुसारशेषोऽल्पत्वात्कलासंज्ञः । धात्वाशयांतरमर्यादाः सप्त कलाः । तत्र । आद्या मांसधरा यस्यां धमन्यः स्नायवः सिराः । स्रोतांसि च प्ररोहंति प्रतानैर्व्याधिभिः कला । द्वितीयाऽसृग्धराऽस्यां तु मांसांतः शोणितं स्थितम् । विशेषतः सिराप्लीहयकृत्सु क्षतजं क्षतात् । मांसात्प्रवर्तते क्षीरं क्षीरिवृक्षादिव क्षतात् । मेदोधरा तृतीयाऽत्र मेदोस्थमुदरे स्थितम् । भवत्यणुषु मज्जांतः स्थूलास्थिष्वथ मूर्धनि । मस्तुलुंगकपालांतश्चतुर्थी तु कफाश्रया । तत्स्थः कफो द्रढयति संधीनस्थ्नां शरीरजान् । पंचमी स्यात्विडाधारा सामपक्वाशयाश्रया । उंडुकस्थं विभजते मलं पित्तधरा पुनः । षष्ठी पक्वाशयांतस्था वन्ह्यधिष्ठानभावतः । पक्वाशयोन्मुखं कृत्वा बलात्पित्तस्य तेजसा । शोषयंती पचत्यन्नं तदेव च विमुंचति । दोषदुष्टाऽथ दौर्बल्यादाममेव विमुंचति । लभते ग्रहणीसंज्ञामस्याश्चाग्निबलं बलम् । शरीरं धारयत्यग्निबलोपष्टंभबृंहिता । अंत्या कला शुक्रधरा मूत्रमार्गमुपाश्रिता । द्व्यंगुले दक्षिणे पार्श्वबस्तिद्वारस्य चाप्यधः । शरीरं व्याप्य सकलं सा शुक्रं वर्तयत्यपि ।

कलाख्यं भावमाख्यायाधाराख्यान् भावानाह ।

**ताः सप्त सप्त चाधारा रक्तस्याद्यः क्रमात् परे १०**
**कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ।**
**गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयांतरे ॥ ११ ॥**
**कोष्ठांगानि स्थितान्येषु हृदयं क्लोमफुप्फुसम् ।**
**यकृत्प्लीहोंडुकं वृक्कौ नाभिडिंभांत्रबस्तयः ॥ १२ ॥**

ता इति । न केवलं कलाः सप्त यावदाधारा अपि सप्त । रक्तादीनामस्मिन् देहे संभवंतीति वाक्यशेषः । रक्तस्याद्यो रसाख्यो धातुः परेऽन्ये ये धातवः षट् ते क्रमाद्यथाक्रमं कफादीनामाधाराः स्मृताः कथिताः । आमस्यान्नस्य य आधारः सोऽत्रामशब्देनोक्तः । तथा पक्वस्याऽन्नस्य पुरीषतां प्राप्तस्य य आधारः स पक्वशब्देनोच्यते । गर्भाशयो गर्भाधारो यः सोऽष्टमः स्त्रीणामेव देहे संभवति न पुंसाम् । क्व शरीरदेशे स्त्रीणां संभवतीत्याह । पित्तेत्यादि । पक्वशब्देनेह पक्वान्नमुच्यते । पित्तं च पक्वं च पित्तपक्वे तयोराशयावाधारौ । पित्तपक्वाशययोरंतरं मध्यं पित्तपक्वाशयांतरं तस्मिन् गर्भस्याशयः । एषु रक्ताद्याधारेषु कोष्ठांगान्युदरावयवा हृदयादीनि स्थितान्याश्रितानि भवंति । तत्र । कफरक्तप्रसादात्स्याद्धृदयं स्थानमोजसः । चेतनानुगभावानां परमं चिंतितस्य च । मांसपेशीचयो रक्तपद्माकारमधोमुखम् । तस्य दक्षिणतः क्लोमयकृत्फुप्फुसमास्थितम् । समानवायुप्रध्मातादृक्ताद्देहोष्मपाचितात् । किंचिदुच्छ्रितरूपस्तु जायते क्लोमसंज्ञितः । तत्तुल्यहेतुजे प्लीहयकृती भिषजां मते । रक्तकिट्टादुंडुकं स्यात्फुप्फुसो रक्तफेनजः । मेदोसृजः पच्यमानात् स्यातां वृक्कौ प्रसादजौ । नाभिः सर्वशिराणां स्यादाधारः शकृतः पुनः । डिंबं स्याद्रक्तमांसस्य प्रसादादंत्रसंभवः । सार्धत्रिव्याममात्राणि पुरुषाणां तु तानि च । स्त्रीणां त्रिव्याममात्राणि बस्तिर्मूत्रस्य चाशय इति । संग्रहे चोक्तम् । कफरक्तवाहिस्रोतसां महाभूतानां च प्रसादादिंद्रियाणि । तेष्वपि नेत्रे श्लेष्मणः प्रसादाच्छुक्लमंडलं तत्पितृजम् । असृजः कृष्णमंडलं तन्मातृजम् । मध्ये दृष्टिमंडलं तदुभयात्मकम् । पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पंच मंडलानि । तत्संधयश्चत्वारो द्वौद्वावपांगकनीनयोरिति । षट्पलानि द्वे वर्त्मनी । बाह्यं चाश्रितमभ्यंभसी द्वितीयं मांसम् । तृतीयं मेदः । चतुर्थमस्थि । तेषां बहुलता दृष्टेः पंचमांशेन । बंधगुणाश्चत्वारः सिराकंडराभेदकफात्मकाः । श्लेष्मा तु परं सर्वसंधिबंधनमित्युक्तं प्राक् । नेत्राश्रितं तेजो बाह्यतेजसा स्वयोनिना योगाच्छस्त्रमिवाश्मना कर्मण्यं भवति । अतियोगादुपहन्यते । तच्च वैद्युतवद्वडवामुखवच्चांभोमध्यगमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति ।

अधुना यानि विशेषेण जीवितस्य स्थानानि देहावयवास्तान्याह ।

**दश जीवितधामानि शिरोरसनबंधनम् ।**
**कंठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥१३॥**

दशेति । शिरश्च रसनं च शिरोरसनम् । रसनं जिह्वा । बध्यतेऽनेनेति बंधनम् । शिरोरसनस्य बंधनं शिरोरसनबंधनम् । शिरोरसनबंधनादीनि दश जीवितस्य स्थानानि । एतेषु स्थानेषु विशेषेण जीवितं शरीरेंद्रियसत्वात्मसंयोगलक्षणमवतिष्ठते ।

**जालानि कंडराश्चान्ये पृथक् षोडश निर्दिशेत् ।**
**षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः॥१४॥**
**शस्त्रेणैताः परिहरेच्चतस्रो मांसरज्जवः ।**
**चतुर्दशास्थिसंघाताः सीमंताद्विगुणा नव ॥ १५॥**
**अस्थ्नां शतानि षष्टिश्च त्रीणि दंतनखैः सह ।**

जालानीति । जालानीव जालानि शरीरे षोडश आदिशेत् । कंडराश्च पृथगेव षोडश ब्रूयादाचार्य इति शेषः । षट् कूर्चा अंगे स्युः । तथा सेवन्यः सप्तसंख्या मेढ्रादिस्थिताः । ताः शस्त्रेण परिहरेत्प्रत्यपायभयात् । न तासु शस्त्रं पातयेदित्यर्थः । तत्र शिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबंधने । एकत्रैकत्र गुल्फे च जालान्येवं तु षोडश । हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेऽथ पृष्ठतः । प्रत्येकं तु चतस्रः स्युः कंडरा इति षोडश । करयोर्द्वौ पादयोर्द्वौ ग्रीवायां मेहने तथा । एकैकमिति षट् कूर्चाः सीवन्यः सप्त कीर्तिताः । एका मेढ्रेऽथ जिह्वायां भवेयुः पंच मूर्धनि । पृष्ठवंशे ह्युभयतश्चतस्रो मांसरज्जवः । बाह्ये द्वे अंतरे द्वे च गुल्फे जानुनि वंक्षणे । त्रिके शिरसि कक्षायां कूर्परे मणिबंधने । अस्थ्नां भवेयुः संघाता अमी त्वत्र चतुर्दश । सीमंताः पंच मूर्ध्नि स्युर्गुल्फादिष्वस्थिसंघवत् । अस्थ्नां शतानि षष्टिश्च त्रीणि दंतनखैः सह । पंचपादैनखासक्थिप्रत्यंगुल्यस्थिकत्रयम् । एवं पचदशैतानि शलाकाः पंच तु स्मृताः । एकस्तत्प्रतिबंधश्च जंघायां कूर्चगुल्फके । द्वे द्वे इति षडेव स्युः पार्ष्ण्यावूरौ च जानुनि । एकैकमित्येकसक्थ्नि पंचत्रिंशत्तथापरे । भुजयोः सक्थितुल्यानि भेदा एषां तु नामतः । पाणिः स्यात्पादवत्तत्र हस्तमूलं च पार्ष्णिवत् । मणिबंधो गुल्फतुल्यः कूर्चतुल्यो द्वयेऽपि च । प्रकोष्ठौ जंघया तुल्यौ जानुवत्कूर्परो भवेत् । ऊरुवद्बाहुपृष्ठं स्यादंतराधौ तु पार्श्वकाः । चतुर्विंशतिरेतेषु फलकान्यर्बुदानि च। तावंति पृष्ठे त्रिंशत्स्युरुरस्यष्टौ त्रिभागके । एकैकं स्यादक्षकयोरंसयोस्तत्फलाख्ययोः । नितंबे तु द्वे भवेतां शतमेतत्सविंशति । गंडयोः कर्णयोर्द्वे द्वे शंखयोश्चाऽथ तालुनि । तथा जत्रुण्येकमेकं ग्रीवायां तु त्रयोदश । कंठनाड्यां तु चत्वारि हनुबंधे द्वयं भवेत्। द्वात्रिंशदेव दंताः स्युस्तत्संख्योलूखलानि च । त्रीणि घ्राणे षट् शिरसि शतमूर्ध्वमिति स्मृतम् । शाखांतराध्यूर्ध्वभेदादेवं षष्टिशतत्रयम् । कपालं रुचकं चैव तरुणं वलयं तथा । नलकं पंचधेति स्युर्नितंबे गंडजानुनि । तालुमध्ये शिरस्यंसे कपालाख्यानि निर्दिशेत् । दशना रुचकाख्याः स्युर्घ्राणे कर्णेऽक्षिकोशके । तरुणानि पृष्ठपार्श्वे चरणे वलयानि तु । शेषाणि नलकाख्यानि समाख्याताकृतीनि च ।

**धन्वंतरिस्तु त्रीण्याह संधीनां च शतद्वयम् ॥१६॥ दशोत्तरं**

धन्वंतरिसंज्ञः पुनस्तंत्रकृदस्थ्नां शतानि त्रीण्येवाऽह नाधिकानि । तथा संधीनां शतद्वयं दशोत्तरं धन्वंतरिराहेति योज्यम्। संख्यायंते संधयोऽत्र चतस्रोंगुलयः पदे । चतसृष्वंगुलीषु स्युः प्रत्येकं त्रय एव तु । द्वावंगुष्ठे वंक्षणे स्यादेको गुल्फे तु जानुनि । सक्थ्न्येकस्मिन् सप्तदश तावंतोऽपि द्वितीयके । भुजयोः सक्थितुल्यानि यांतराधौ त्विमे मताः । त्रयः कटीकपालेषु विंशतिश्चतुरुत्तरा। पृष्ठे तद्वत्पार्श्वयोश्च वक्षस्यष्टावथोर्ध्वतः। शिरोधरायामष्ट स्युः कंठनाड्यां त्रयः स्मृताः । हृदयक्लोमयकृतां नाडीष्वष्टादश स्मृताः । द्वात्रिंशद्दंतमूलेषु चैकैके घ्राणकाकले । मूर्ध्नि च द्वौ कर्णशंखे गंडनेत्रे च वर्त्मनि । हनुसंधौ च विज्ञेयौ द्वौ भ्रुवोश्चोपरि स्मृतौ । पंच मूर्धकपालेषु चोर्ध्वमेवं त्र्यशीतिका । संधयस्त्वष्टधा ज्ञेया मणिबंधेऽथ जानुनि । गुल्फेंऽगुलौ कोरसंज्ञा द्विजमूलेषु वंक्षणे । कक्षायां चोलूखलाख्या अंसपीठे गुदे भगे । नितंबे चैव सामुद्गा ग्रीवायां पृष्ठवंशके । प्रतराः स्युर्मूर्धकटीकपालेषु तु सीवनाः । हनूभये काकतुंडाः कंठस्य पन्नगस्तथा । हृदयक्लोमनेत्राणां नाड्यां मंडलनामकाः । श्रोत्रशृंगाटकाख्येषु शंखावर्ता इति स्मृताः ।

अथाऽत्रेयमतं ब्रूते ।

**सहस्रे द्वे निजगादाऽत्रिनंदनः ।**

अत्रिनंदनो द्वे सहस्रे संधीनां निजगाद प्रोवाच । सहि स्नायुपेशीसिराश्रितैः संधिभिः सह गणयति । एतच्च बाहुल्येनोक्तम्। तथा हि । नवसु स्नायुशतेषु नवशतानि संधीनाम्। पंचसु पेशीशतेषु पंचशतानि । सप्तसु सिराशतेषु सप्तशतानीत्येकविंशति नामानि प्रायेण प्राप्नुवंतीति मन्यामहे ।

**स्नावानवशती पंच पुंसां पेशीशतानि च ॥ १७ ॥ अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः ।**

स्नायूनामस्मिन् देहे नवशती । नवानां शतानां समाहारो नवशती । द्विगोरिति ङीप् । नवशतानीत्यर्थः । तत्र । पदे पंच स्युरंगुल्यः प्रत्यंगुलि तु तानि षट् । त्रिंशदेवं दशदश कूर्चे पादतले तथा । गुल्फे चेति त्रिंशदेव जंघायां दश जानुनि । चत्वारिंशत्स्युरूरौ च वंक्षणे दश सक्थिनि। सार्धं शतं द्वितीयेऽपि तद्वद्बाह्वोश्च सक्थिवत् । शाखास्वेवं षट्शतानि कट्यां द्वे विंशती स्मृते । विंशतिर्मुष्कयोर्मेढ्रबस्त्यंत्रेषु च कीर्तिताः। अशीतिः पृष्ठभागे स्युः पार्श्वयोः षष्टिरक्षयोः । चत्वार्युरस्यष्टदश त्वष्टावंसयुगे स्मृताः । मध्ये शतद्वयं त्रिंशद्वे द्वे मन्यावटौ स्मृते । नेत्रोष्ठे तालुनि तथा ग्रीवायां त्रिंशदीरिताः । जत्रुणि त्रीणि चत्वारि हन्वोः पंच तु कीर्तिताः। जिह्वायां दंतमांसेषु द्वादशैवाऽथ मूर्ध्नि षट् । एवं शतानि स्नायूनां नवैतेषु विनिर्दिशेत् । आमपक्वाशयांत्रेषु बस्तौ च सुषिराणि तु । प्रतानवंति शाखासु महास्नावानि कंडराः । वृत्तानि पार्श्वपृष्ठोरःशिरसि स्युः पृथूनि च । सिरादिभ्योऽप्यस्थितोऽपि रक्षेत्स्नावानि यत्नतः । तथाचोक्तम् । न ह्यस्थीनि तथा हिंस्युर्न पेश्यो न च संधयः । व्यापादिता अपि सिरा यथा स्नायूनि देहिनाम् । स्नायूनि यो वेत्ति सम्यग्बाह्यान्याभ्यंतराणि च । स गूढं शल्यमाहर्तुं देहाच्छक्नोति देहिन इति । पेश्यः संप्रति भण्यंते पंचांगुल्योऽथ तासु ताः । प्रत्येकं तिस्र इत्येवं ताः पंचदश कीर्तिताः । दश पादतले गुल्फे तथा पादस्य चोपरि । कूर्चे तु विंशतिः स्यात्तु जंघायां पंच जानुनि । ऊरौ विंशतिरित्येवं शतं सक्थ्न्येकतो भवेत् । शतं द्वितीयेऽपि तथा सक्थिवद्भुजयोर्मताः । चत्वार्येवं शतानि स्युः शाखास्वेकैव मेहने । सीवन्यां च वृषणयोर्द्वे स्फिजोस्तु दश स्मृताः । तिस्रो गुदे बस्तिमूर्ध्नि द्वे चतस्रस्तु को-

ष्ठगाः। नाभ्यामेकाऽथ हृद्येका स्यादेकामाशयेऽपि षट्। यकृत्प्लीहोंडुकेषु स्युश्चतस्रः पृष्ठतो दश। पार्श्वयोर्वक्षसि दश चतस्रश्चाक्षकांसयोः। इत्यंतराधौ षष्टिः स्युर्ग्रीवायां दश गंडयोः। अष्टौ हनुप्रदेशेऽष्टावेकैका काकले तथा। जिह्वायां मूर्ध्नि गलके द्वे ललाटेऽथ तालुनि। द्वे ओष्ठयोः कर्णयोर्द्वे नासायां द्वे च कीर्तिते। पुरुषाणां भवेदेतत्पेशीनां शतपंचकम्। दशाधिकाः स्युः स्तनयोर्दश योनौ च योषिताम्। प्रत्येकं स्तनयोः पंच तासां वृद्धिस्तु यौवने। योन्यंतराश्रिते द्वे तु द्वे च वृत्ते मुखाश्रिते। गर्भमार्गाश्रयास्तिस्रो यत्र गर्भोऽवतिष्ठते। शंखनाभ्याकृतिर्योनिस्त्र्यावर्ता जायते स्त्रियाः। तस्यास्तृतीय आवर्ते रोहितास्याकृतिर्भवेत्। गर्भशय्याऽथ तिस्रश्च भवेयुः संप्रवेशिकाः। शुक्रस्य चार्तवस्यैवं पेशीस्तंत्रविदो विदुः। एताभिर्हि शरीरे तनुबहुलस्थूलाणुवक्रवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभिः संध्यस्थिसिरास्नावानि प्रच्छादितानि। सिराधमनीनां चानेकशो विभज्यमानानामेकोनत्रिंशच्छतसहस्राणि नवशतानि षट्पंचाशानि भवंति। ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततं च। तावन्ति च केशश्मश्रुलोमानि। तासां हि मुखानि तत्प्रतिबद्धानि। अतस्तानि ताभिराप्याय्यंते तैश्च ताः स्वेदमभिवहंति। तथाऽभ्यंगा लेपादिवीर्यं त्वचि विपक्वमंतर्नयंति। स्पर्शं च गृह्णंति। स्रोतांसि पुनरसंख्येयान्येवेति। अन्ये त्वाहुः। शरीररोम्णां द्वासप्ततिः कोट्यो भवंति।

इदानीं सिराः संख्यातुमाह।

**दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः॥ १८॥**
**रसात्मकं वहंत्योजस्तन्निबद्धं हि चेष्टितम्।**

हृदि तिष्ठंतीति हृत्स्था दश मूलसिराः। यतोऽन्यासां सिराणां सर्वासां मूलभूतत्वेनैव ताः स्थितास्ततः प्रधानभूता इत्यर्थः। हृत्स्था हृदयसंबद्धाः। ताः सर्वं वपुः सकलं देहमोजो वहंति प्रापयंति। कथम्। सर्वतः सर्वदा। वपुरोजोवहंतीति वहेर्द्विकर्मकत्वाद्वपुरोजश्च कर्म। किंभूतमोजः। रसात्मकं रसस्वभावमाहारात्सारकिट्टतया परिणतात् सारम्। तन्निबद्धं हि चेष्टितम्। तासु दशसु सिरासु निबद्धं निश्चयेन स्थितं चेष्टितं वाक्कायमनोव्यापारः। हिशब्दो यस्मादर्थे। यस्मात्तन्निबद्धं चेष्टितमतस्ता मूलसिराः।

इदानीं संस्थानमासां निर्दिशति।

**स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत्॥ १९॥**
**भिद्यंते तास्ततः सप्तशतान्यासां भवंति तु।**

स्थूलेति। स्थूलं मूलं यासां ता एवम्। सुष्ठु सूक्ष्ममग्रं प्रांतो यासां ता एवम्। स्थूलमूलत्वेन तासां व्यानवायुक्षिप्तो रसः शीघ्रमेव चांतः प्रविशति। सूक्ष्मप्रांतत्वेन रोमराज्यामप्यंतः प्रविश्य तेषां रोम्णां वृद्धिहेतुः संपद्यते। ततश्चास्मिन् देहे स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवद्भिद्यंतेऽनेकधा संपद्यंते। यथा वृक्षस्य पलाशरेखाणां प्रतानाः समूहाः स्थूलमूलाः सुसूक्ष्माग्रा अनेकधा जायंते तथैवैताः सिराः स्थूलमूलाः सुक्ष्माग्रा अनेकधा संपद्यंते नानारूपतः। ततस्तस्माद्धेतोः पलाशरेखाप्रतानवदनेकधा गमनादासां सिराणां सप्तशतानि भवंति। तुशब्दोऽवधारणे भिन्नक्रमः। सप्तैव शतानि।

**तत्रैकैकं च शाखायां शतं तस्मिन्न वेधयेत्॥ २०॥**
**सिरां जालंधरां नाम तिस्रश्चाभ्यंतराश्रिताः।**

तासामेकैकस्मिन्सक्थ्नि शतम्। तस्मिन् सिराशते सिरां जालंधरां नाम या जालानि धारयति तां न विध्येत्। तिस्रश्चेति। याश्चान्यास्तिस्रः सिरा अभ्यंतराश्रिता अंतर्मुखास्ता अपि न वेध्या इति चशब्दार्थः। एवं सक्थ्याश्रिते सिराशते चतस्रः सिरा न वेध्याः। द्वितीयेऽपि सक्थ्नि चतस्र एव। सक्थिवद्बाह्वोरपि। एवं चतुर्षु सिराशतेषु शाखास्वाश्रितेषु षोडश सिरा न वेध्याः।

**षोडशद्विगुणाः श्रोण्यां तासां द्वे द्वे तु वंक्षणे॥ २१॥**
**द्वे द्वे कटीकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः।**

षट्त्रिंशच्छतमंतराधौ। तत्र षोडशद्विगुणाः श्रोण्यां द्वात्रिंशच्छ्रोण्यवयवाश्रिताः सिराः। तासां मध्ये द्वे द्वे तु वंक्षणे द्वयोर्वंक्षणयोः प्रत्येकं द्वे सिरे। द्वे द्वे कटीकतरुणे द्वयोः कटीकतरुणयोः प्रत्येकं द्वे सिरे। एवं श्रोण्याश्रिता अष्टौ सिराः शस्त्रेण न स्पृशेत्।

**पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेत्सिराम्॥ २२॥**

पार्श्वयोः षोडश सिरास्तासामेकैकामूर्ध्वगां पार्श्वसंधिसंज्ञां प्रत्येकं वर्जयेत्।

**द्वादशद्विगुणाः पृष्ठे पृष्ठवंशस्य पार्श्वगे।**
**द्वे द्वे तत्रोर्ध्वगामिन्यौ न शस्त्रेण परामृशेत्॥ २३॥**

द्वादशेति। द्वादशद्विगुणाः पृष्ठे चतुर्विंशतिः सिराः पृष्ठमाश्रिताः। तासां पृष्ठवंशस्य पार्श्वयोः पृष्ठवंशमुभयतो द्वे द्वे तत्रोर्ध्वगामिन्यौ। एवं चतस्रः शस्त्रेण न परामृशेत्।

**पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते।**
**रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत्॥ २४॥**

पृष्ठेति। पृष्ठवज्जठरे पृष्ठेन तुल्याः सिरा उदरे तत्संख्याश्चतुर्विंशतिरित्यर्थः। तासामुदराश्रितानां सिराणां मध्यान्मेहनस्य मेढ्रस्योपरि स्थिते रोमराजीमुभयत उभयपार्श्वयोर्द्वे द्वे सिरे। एवं चतस्रः शस्त्रेण न परामृशेत्।

**चत्वारिंशदुरस्यासां चतुर्दश न वेधयेत्।**
**स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम्॥ २५॥**
**अपस्तंभाख्ययोरेकां तथा पालापयोरपि।**

चत्वारिंशदिति। चत्वारिंशदुरसि सिरास्तासां मध्ये चतुर्दश सिरा न वेधयेत्। ता एव दर्शयति। स्तनरोहितेत्यादि। तयोः

स्तनयोर्मूले तन्मूले । तत्र स्तनरोहितयोस्तथा स्तनमूलयोस्तथा हृदये पृथक् प्रत्येकं द्वयं द्वे द्वे सिरे न विध्येत् । अपस्तंभाख्ययोः प्रत्येकमेकां सिराम् । तथाऽपालापयोः प्रत्येकां सिरां न विध्येत् ।

**ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥**
**विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ।**

ग्रीवायामिति । ग्रीवायां पृष्ठवत् सिराणां संख्या चतुर्विंशतिः सिराः । तासां सिराणां मध्यान्नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वे अष्टौ च मातृका मातृकाख्यानि मर्माणीत्येवं षोडश परित्यजेन्न शस्त्रं तासु पातयेत् ।

**हन्वोः षोडश तासां द्वे संधिबंधनकर्मणी ॥ २७ ॥**

हन्वोर्द्वयोः षोडश सिराः संश्रिताः । तासां सिराणां मध्याद्वे सिरे परित्यजेत् । किंकर्मणी ते आह । संधिबंधनकर्मणी । बध्यतेऽनेनेति बंधनम् । संधेर्बंधनं सधिबंधनम् । अर्थाद्धनुसंबंधिनः संधेर्बंधनं कर्म क्रिया ययोः सिरयोस्ते संधिबंधनकर्मणी सिरे।

**जिह्वायां हनुवत्तासामधो द्वे रसबोधने ।**
**द्वे च वाचःप्रवर्तिन्यौ**

जिह्वायां हनुवत् सिरा संख्या षोडशैव सिराः । तासां मध्ये जिह्वाया अधो ये द्वे स्थिते रसबोधने याभ्यां रसो ज्ञायते मधुरादिरसबोधिन्यौ । द्वे वाचःप्रवर्तिन्यौ ये सिरे । एवं चतस्रो जिह्वाश्रिताः सिराः परित्यजेत् ।

**नासायां चतुरुत्तरा ॥ २८ ॥**
**विंशतिर्गंधवेदिन्यौ तासामेकां च तालुगाम् ।**

नासायां चतुरुत्तरा विंशतिः सिराणामेवं चतुर्विंशतिः सिरा नासाश्रितास्तासां मध्याद्वे गंधवेदिन्यौ गंधं वेदितुं शीलं ययोस्ते गंधवेदिन्यौ सिरे । तथैकां तालुगां सिरामेवं नासाश्रिताः सिरास्तिस्रः परित्यजेत् ।

**षट्पंचाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥**
**द्वे द्वे अपांगयोर्द्वे च तासां षडिति वर्जयेत् ।**

षडिति । षट्पंचाशन्नयनयोः सिरास्तासां मध्यान्निमेषोन्मेषकर्मणी । निमेषोन्मेषौ निर्मीलनोन्मीलने कर्मणी ययोस्ते निमेषोन्मेषकर्मणी सिरे द्वे द्वे प्रत्येकम् । तथा अपांगयोर्द्वे सिरे । एवं षट् सिरा वर्जयेत्तत्र शस्त्रं न पातयेत् ।

**नासानेत्राश्रिताः षष्टिर्ललाटे स्थपनीश्रिताम् ॥ ३० ॥**
**तत्रैकां द्वौ तथाऽऽवर्तौ चतस्रश्च कचांतगाः ।**
**सप्तैवं वर्जयेत्तासाम्**

नासानेत्रगता याः सिरा उक्तास्तासां मध्याल्ललाटे षष्टिः सिरा भवंति । तत्र तासां मध्यात्स्थपनीश्रितां स्थपनीनाम मर्मविशेषस्तत्रस्थामेकां सिरां न विध्येत् । द्वे तथाऽऽवर्तौ मर्मणी तयोरावर्तयोः स्थिते द्वे सिरे न विध्येत् । चतस्रश्च कचांतगाः केशांतस्थाः सिरा न विध्येत् । एवं सप्त सिरा ललाटे वर्जयेत् ।

**कर्णयोः षोडशाऽत्र तु ॥ ३१ ॥**
**द्वे शब्दबोधने शंखौ सिरास्ता एव चाश्रिताः ।**
**द्वे शंखसंधिगे तासाम्**

कर्णयोर्द्वयोः षोडश सिराः । अत्र तस्मिन् षोडशसंख्ये सिरोद्देशे कर्णयोरास्थिते द्वे सिरे शब्दबोधने याभ्यां शब्दो बुध्यते ज्ञायते ते वर्जयेत् । शंखौ शिरास्ता एव कर्णाश्रितास्तासां मध्याद्वे सिरे शंखसंध्याश्रिते वर्जयेत् ।

**मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥**
**एकैकां पृथगुत्क्षेपसीमंताधिपतिस्थिताम् ।**

मूर्ध्निविषये द्वादश सिराः । तत्र तु तासु द्वादशसु सिरासु मध्येऽष्टौ सिराः शस्त्रेण वर्जयेत् । ता एवाऽह । एकैकां पृथगुत्क्षेपसीमंताधिपतिस्थिताम् । एवं प्रत्येकमुत्क्षेपयोर्द्वयोरेकैका सीमंतेषु पंचस्वेकैका अधिपतावेकामित्यष्टौ ।

**इत्यवेध्यविभागार्थं प्रत्यंगं वर्णिताः सिराः ॥ ३३ ॥**

इतीति । इतिः समाप्तौ प्रकारे वा । अवेध्यसिराविभागविज्ञानार्थं तन्निमित्तं प्रत्यंगं शिरस्संतराधौ बाह्वादिषु याः सिरास्ता वर्णिता उक्तास्ता वर्णयितुं समाप्ता इति । अथवाऽनेन प्रकारेण पूर्वोक्तेन वर्णिताः ।

**अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।**
**संकीर्णा ग्रथिताः क्षुद्रा वक्राः संधिषु चाश्रिताः ३४**

अवेध्या इति । तत्र तासु सिरासु मध्ये कार्त्स्न्येन साकल्येनाऽष्टानवतिः सिरा अवेध्या वर्णिताः । देहे शरीरे । न केवलमेता एवाऽवेध्याः । यावत्संकीर्णादयश्चेति तथाशब्दस्याऽर्थः । संकीर्णाः परस्परं निबद्धाः । ग्रथिता इव ग्रथिताः । क्षुद्रा अल्पाः। सूक्ष्मा न महत्यः । वक्राः कुटिलाः । तथा संधिष्वस्थिसंधिषु या आश्रितास्ता अपि न वेध्याः ।

**तासां शतानां सप्तानां पादोऽस्रं वहते पृथक् ।**
**वातपित्तकफैर्जुष्टं शुद्धं चैव स्थिता मलाः ॥ ३५ ॥**
**शरीरमनुगृह्णंति पीडयंत्यन्यथा पुनः ।**

तासामिति । तासां सिराणां संबंधीनि यानि सप्तशतानि तेषां पादः पंचसप्तत्यधिकं शतमस्रं वहते । किंभूतं रक्तम् । वातपित्तकफैर्जुष्टं सेवितं शुद्धं च तैरनाक्रांतमदुष्टम् । पृथक् प्रत्येकं कृत्वा पादोऽस्रं वहते । एवं वातजुष्टं रक्तं सिराशतं पंच सप्तत्यधिकं वहति । पित्तजुष्टं रक्तं पंचसप्तत्यधिकं शतम् । तथा कफजुष्टं पंचसप्तत्यधिकं शतम् । तथा शुद्धं रक्तं पंचसप्तत्यधिकं शतं वहति । एवं पूर्वोक्तेनाऽनेन प्रकारेण मलाः स्थिताः शरीरमनुगृह्णंति वर्तयंति । अन्यथा पुनर्व्यत्ययेन स्थिताः पीडयंति विकारेण योजयंति ।

किंलक्षणाः सिरा वातादिजुष्टमस्रं वहंतीत्याह ।

**तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात्सिराः ३६**
**प्रस्पंदिन्यश्च वातास्रं वहंते**

तत्रेति । तत्र तासु सिरासु मध्ये याः श्यावारुणा वर्णेन सूक्ष्मास्तथा क्षणात्पूर्णरिक्तास्तथा प्रस्पंदिन्यः सिरास्ता वाताख्यं वातरक्तं वहंते । पूर्णरिक्ता इति वायोश्चलत्वात्क्षणात्पूर्णाः क्षणाद्रिक्ताः शून्या इव । किल स्पंदनं सर्वासां विद्यते प्रकर्षेण तु वातरक्तवाहिनीनामिति प्रशब्देन द्योत्यते ।

**पित्तशोणितम् ।**

**स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ ३७ ॥**
**गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिंगसंकरे ।**

पित्तेति । सिराः पित्तशोणितं वहंते । किंविधाः । स्पर्शोष्णाः स्पर्शेनोष्णा न शीताः । तथा शीघ्रवाहिन्यस्तथा नीलपीता वर्णेन । कफं पुनर्गौर्यो वहंति । कफमिति कफशोणितं शोणितशब्दलोपात् । किंविधाः । स्निग्धाः स्निग्धच्छायाः । तथा स्थिरा न तु चलाः । तथा शीताः स्पर्शेन । लिंगसंकरे यथा निर्दिष्टस्य लक्षणस्य संकीर्णत्वे संसृष्टं कफवातजुष्टं वातपित्तजुष्टं कफपित्तजुष्टं त्रिभिरपि दोषैर्जुष्टं रक्तं सिरा वहंति सकलं शरीरं प्रापयंति।

**गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम्**

गूढा अंतर्गतास्तथा समं कृत्वा स्थिताः समा स्थितास्तथा स्निग्धाः स्निग्धच्छाया रोहिण्यः सिरापरसंज्ञा लोहिताभासा वा प्रसरणशीला वा शुद्धं शोणितं देहेऽस्मिन्वहंति ।

**धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तराः ।**
**ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः ॥ ३९ ॥**
**ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।**

धमन्य इति । धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तराश्चतुर्विंशतिरित्यर्थः । ताभिर्धमनीभिर्नाभिः परिवृता परिवेष्टिता । कथम् । चक्रनाभिरिवारकैः । यथा रथांगस्य मध्यमभागो नाभिशब्दवाच्योऽरकैः परिव्रियते तद्वन्नाभिः शरीरमध्यभागो धमनीभिः । ध्मानाद्धमन्यः स्रोतोविशेषा उच्यंते । ताभिर्धमनीभिरयं देह ऊर्ध्वमधस्तिर्यक् चानुगृह्यते । रसादिप्रापणकर्मणा ताः कायस्यानुग्रहं कुर्वंति ताभिरयं देह आप्यायते । आराम इव जलहारिणीभिः । केदार इव कुल्याभिः । संग्रहे चोक्तम् । तासां खलु धमनीनां मध्याद्दश धमन्य ऊर्ध्वं प्रसृता दशाऽधः प्रसृतास्तिर्यक् चतस्रः । ताभिर्यथास्वमंगावयवा ऊर्ध्वाधस्तिर्यक् समाश्रिता धार्यंत आप्याय्यंते च । तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायंते । एवं तास्त्रिंशत् । ततस्त्रिंशतो मध्याद्वे द्वे वातपित्तकफरक्तरसान्वहतः । एवं दश द्वे द्वे शब्दरूपरसगंधान् गृह्णीतः । एवमष्टाभिः शब्दरूपरसगंधा गृह्यंते । द्वाभ्यां द्वाभ्यां भाषते घोषं करोति स्वपिति प्रतिबुध्यते च । एवमष्टौ । द्वे चाश्रु वहतः । तथैव द्वे स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रं वहतः । अधोगमाः पक्वाशयस्था दश त्रिधा जायंते । एवं ता अपि त्रिंशत् । तत्राद्याः पूर्ववद्दश द्वे द्वे वातपित्तकफरक्तरसान्वहतः । द्वे वहतोऽन्नमन्नाश्रयेण द्वे मूत्रं द्वे तोयं द्वे शुक्रं वहतः । द्वे च मुंचतः । ते एव नारीणामार्तवं वहतः द्वे वर्चोनिरसने स्थूलांत्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभिवर्धयंति । तिर्यग्गामिन्यस्तु चतस्रो भिद्यमानाः सुबहुधा भवंतीति ।

इदानीं स्त्रीपुरुषाणां दृश्यानि स्रोतांसि निरूपयितुमाह ।

**स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥**
**स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।**

स्रोतांसीति । स्रोतांसि पुंसां नव । द्वौ नासापुटौ । द्वौ कर्णौ । द्वे नेत्रे । पायुर्गुदम् । आस्यं मुखम् । मेहनं मूत्रनिष्क्रमणद्वारम् । स्त्रीणामेतानि तथाऽन्यानि त्रीणि । द्वौ स्तनौ । तथैको रक्तपथो रक्तमार्गः । प्रतिमासं यतो योनौ रक्तं प्रवर्तते । तदेवं स्त्रीणां त्रीणि स्रोतांसि पुंभ्योऽधिकानि ।

एवं स्रोतांसि दृश्यान्यभिधाय शरीरे यान्यदृश्यानि स्रोतांसि तान्याह ।

**जीवितायतनान्यंतःस्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥**
**प्राणधातुमलांभोऽन्नवाहीनि**

अंतः शरीरस्याभ्यंतरे त्रयोदश स्रोतांसि वदंत्याचार्या इति शेषः । तानि स्रोतांसि जीवितायतनानि विशेषेण जीवितस्याधिष्ठानानि । किंभूतानि । प्राणधातुमलांभोऽन्नवाहीनि । प्राणाख्यं वातं वहंति यानि तानि प्राणवाहीनि । धातुवाहीनि रसादिधातून् यानि वहंति । मलवाहीनि मूत्रशकृत्स्वेदान् यानि वहंति । तथांभोवाहीन्युदकवाहीनि । तथाऽन्नवाहीन्यन्नमभ्यवहृतं यानि वहंति । एवं त्रयोदश । संग्रहे चोक्तम् । तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च । तानि क्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगविधारणादिभिर्दुष्यंति । ततोऽतिसृष्टं प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दमूलमुच्छ्वसनं तत्र श्वासवत्साधनम् । उदकवाहिनां तालुमूलं क्लोम च । तान्याभयाऽतिपानशुष्कान्नविड्विग्रहादिभिर्दुष्यंति । ततोऽतितृष्णा मुखशोषः कर्णक्ष्वेडनं तमोदर्शनं च । तत्र तृष्णोक्तमौषधम् । अन्नवाहिनामामाशयो मूलं वामपार्श्वं च । तेषां सर्वं मात्राशितीयोक्तमनुगच्छेत् । रसवाहिनां हृदयं मूलं दश धमन्यश्च । रक्तवाहिनां यकृत् प्लीहा च । मांसवाहिनां स्नावानि त्वक्च । मेदोवाहिनां वृक्कौ मांसं च । अस्थिवाहिनां जघनं मेदश्च । मज्जवाहिनां पर्वाण्यस्थीनि च । शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च । मूत्रवाहिनां बस्तिर्वंक्षणौ च । शकृद्वाहिनां पक्वाशयः स्थूलांत्रं च । स्वेदवाहिनां मेदोमूलं रोमकूपाश्चेति । स्रोतसामेव विशेषाः सिरा धमन्यः । अपरे त्वन्यत्वमिच्छंति सिराधमनीस्रोतसाम् । सरणात् सिराः । ध्मानाद्धमन्यः । स्रवणात्स्रोतांसि । केवलं परस्परसन्निकर्षात्सदृशकर्मत्वाच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते । अन्ये पुनरेवमाचक्षते । स्रोतांसि सिरा धमन्यो रसायन्यो वाहिन्यो नाड्यः पंथानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृत्तानि स्थानान्याशया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां पर्यायेण नामानीति ।

**अहितसेवनात् ।**
**तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥४२॥**

अहितेति । अहितानामाहारविहारादीनां सेवनाच्छीलनात्तानि स्रोतांसि दुष्टानि रोगाय संपद्यंते । तत्साधनार्थं दोषादिविज्ञानीयोक्तमवगच्छेत् । विशुद्धान्यदुष्टानि स्रोतांसि सुखायारोग्याय संपद्यंते ।

**स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।**
**स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥४३॥**

स्वेति । स्वधातुर्यो यो यस्य स्रोतस आधारस्याधेयत्वेन स्थितो धातुस्तेनतेन स्वधातुना समः समानो वर्णो येषां स्रोतसां तानि स्वधातुसमवर्णानि । यथा रसधातुतुल्यवर्णानि रसवाहिस्रोतांसि । यावच्छुक्रधातुसदृशवर्णानि शुक्रवाहिस्रोतांसि । तथा स्रोतसां मध्ये स्रोतांसि कानिचिद्वृत्तानि वर्तुलानि कानिचित्स्थूलानि कानिचिदणूनि सूक्ष्माणि तथा आकृत्या संस्थानेन दीर्घाणि सर्वाण्येव । तथा प्रतानसदृशानि पत्ररेखातुल्यानि । पत्ररेखातुल्यरूपत्वेन शाखाप्रशाखाभिरनेकधा दूरं प्रसृतानीति गमयति ।

यतश्चाहिताहारविहारसेवनं स्रोतोदुष्टिकारणमतस्तानि तद्दुष्टिकारणानि वक्ति ।

**आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।**
**धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥**

आहार इति । आहारः पानाशनादिलक्षणो दोषगुणैर्वातपित्तश्लेष्मगुणै रौक्ष्यादिभिर्यः समस्तुल्यः समानगुणः स स्रोतसां प्रदूषकः । विहारोऽपि यो वाग्देहमनश्चेष्टालक्षणः सोऽपि दोषगुणैः समानगुणो यथायथं स्रोतसां प्रदूषकः । यश्चाऽहारस्तथा विहारो धातुभी रसादिभिर्विगुणो विरुद्धगुणोऽसमानगुणो विपरीतगुणो यथायथमेव स्रोतसां प्रदूषकः ।

स्रोतसां दुष्टिः कथं ज्ञायत इत्याह ।

**अतिप्रवृत्तिः संगो वा सिराणां ग्रंथयोऽपि वा ।**
**विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥**

अतीति । अतिशयेन प्रवृत्तिर्यथा मूत्रवाहिस्रोतसां प्रमेहवद्बहुमूत्रता । संगोऽप्रवृत्तिः । किंचिद्वा प्रवृत्तिर्मूत्रकृच्छ्रवत् । शकृद्वाहिनां स्रोतसामातीसारवत्पुरीषातिसरणमतिप्रवृत्तिः । संगः स्तोकं कृत्वा पुरीषस्य प्रवृत्तिः । अथवा सर्वथोदावर्तवत्पुरीषस्याप्रवृत्तिः । एवं मूत्रवाहिस्रोतसां मूत्रातिप्रवृत्त्यप्रवृत्ती । तत्स्रोतोदुष्टेर्लक्षणम् । तथैव पुरीषवाहिनां पुरीषातिप्रवृत्त्यप्रवृत्ती पुरीषवाहिस्रोतोदुष्टेर्लक्षणम् । एवमन्येषामपि स्रोतसां यथायथं वस्तुवाहिनां यथास्वं वस्त्वतिप्रवृत्त्यप्रवृत्ती तेषां दुष्टेर्लक्षणम् । अथवा सिराणां स्रोतसां ग्रंथयः कुटिलभावत्वं दुष्टेर्लक्षणम् । विमार्गता वेति । अथवा स्वं मार्गमुज्झित्वा मार्गांतरासादनं स्रोतसां दुष्टेर्लक्षणम् ।

**विसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥**

बिसानामिति । बिसानां मृणालानां यथा सूक्ष्माणि द्वाराणि छिद्राणि दूरं प्रविसृतानि सकलबिसं गतानि तथैव स्रोतसां द्वाराणि मुखानि सूक्ष्माणि देहे दूरं प्रविसृतानि कृत्स्नं देहं प्रकर्षेण गतानि । यैर्द्वारैश्छिद्रैर्देहे शरीरेऽभ्यवहृतस्याहारस्य कायाग्निना पच्यमानस्य प्रसादभावो यः समुद्भवति स रसः प्रसादाख्य उपचीयते वृद्धिं नीयते ।

**व्यधे तु स्रोतसां मोहकंपाध्मानवमिज्वराः ।**
**प्रलापशूलविण्मूत्ररोधो मरणमेव वा ॥ ४७ ॥**
**स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।**
**उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥**

व्यध इति । स्रोतसां तु व्यधे ताडने सति मोहादयो भवंति । मोहादीनामितरेतरद्वंद्वः प्रलापादीनां च । विण्मूत्रयो रोधेन संबंधः । अथवा मरणमेव भवति । अतोऽस्माज्जीवितसंशयाद्धेतोर्वैद्यः प्रत्याख्याय अक्रियायां ध्रुवो मृत्युरित्याद्युक्त्वा शल्यमुद्धृत्य बहिर्निष्कास्य प्रसाधयेत् । कथम् । यत्नेन नावहेलया । केन प्रसाधयेत् । सद्यःक्षतविधानतः सद्योव्रणप्रतिषेधोक्तविधिना ।

**अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।**
**दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥**

अन्नस्येति । तुरवधारणे । अनेकविधस्याहारस्याभ्यवहृतस्य पित्तमेव पक्ता । किंभूतं पित्तम् । पाचकाख्यं पुरेरितं पूर्वं दोषभेदीयेऽध्याय उक्तम् । यथा पक्वामाशयमध्यगमित्यारभ्य यावत्पाचकं नाम तत्स्मृतमिति । तदीदृशं पित्तमाहारं पाचयतीति धन्वंतरिमतम् । एवं दोषादीनामूष्माऽग्निरित्यत्रिपुत्रस्य शासनमाज्ञा । दोषा वातादयः । धातवो रसादयः । मला मूत्रपुरीषस्वेदाः । आदिशब्देन दूषिकादयः । तेषां दोषादीनां संबंधी य ऊष्मा स एवान्नस्य पक्ता नतु पित्तं पाचकाख्यमिति ।

**तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ।**
**सैव धन्वंतरिमते कला पित्तधराह्वया ॥ ५० ॥**
**आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये ।**
**स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥ ५१॥**

तदिति । तस्याग्नेर्जाठरस्याधिष्ठानमाधारो यत्रासौ शारीरोऽग्निस्तिष्ठति सोऽन्नस्य ग्रहणात्तत्संज्ञा ग्रहणीति मता । आमाशयस्थो विशिष्टो धमनीविशेष इत्यर्थः । सैव ग्रहणी धन्वंतरिमते कला पित्तधरा नाम कथ्यते । यत एवं ग्रहण्यग्नेराधारभूता तथाऽन्नग्रहणात्तत्संज्ञाऽत आयुरादिपुष्ट्ये संपद्यत इति वाक्यशेषः । भूतधात्वोरग्निना संबंधः । आयुरादीनां द्वंद्वः । आयुः शरीरेंद्रियसत्वात्मसंयोगविशेषः । आरोग्यं धातुसाम्यम् । वीर्यं शक्तिः कर्मणि सामर्थ्यम् । ओज आहारस्य परं प्रसादजं सर्वधात्वाप्या-

---

* **क्षेपकः ॥** वामपार्श्वाश्रितं नाभेः किंचित्सूर्यस्य मंडलम् ।
**सार्धश्लोकः ॥** तन्मध्ये मंडलं सौम्यं तन्मध्येऽग्निर्व्यवस्थितः ।
जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ॥ १ ॥

यकं यद्वस्तुजातं तदुच्यते । पुष्टिशब्द एषां प्रत्येकं योज्यः । आयुःपुष्ट्ये आरोग्यपुष्ट्ये वीर्यपुष्ट्ये ओजःपुष्ट्ये पंचमहाभूताग्निपुष्ट्ये धात्वग्निपुष्ट्ये चेति पिंडार्थः । पक्वाशयस्य द्वास्तस्यां स्थिता सा हि ग्रहणी भुक्तस्य सहसा पक्वाशयांतःप्रवेशरोधिन्यर्गलेव । यथा द्वारि कपाटमार्गरोधेऽर्गला स्थिता तथा भुक्तं ह्यभ्यवहृतं कंठनाडीलुठितं कायस्य महानिम्नदेशं कोष्ठाख्यमवतीर्णं ग्रहणी गृहीत्वाऽवतिष्ठते । अनंतरं जाठरेणाऽग्निना विपक्वं शनैः पक्वाशये मुंचति । अत एवोच्यते । स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सेति ।

पक्वादन्नादायुरादयः पुष्यंति नापक्वादित्याह ।

**भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ।**
**बलवत्यबला त्वन्नमाममेव विमुंचति ॥ ५२ ॥**

भुक्तमिति । भुक्तमभ्यवहृतमन्नमामाशय आमान्नस्थाने यत्रामममन्नं तत्र सा ग्रहणी रुद्ध्वाऽवष्टभ्याधो नयति । किंकृत्वा । विपाच्य विविधैः प्रकारैः पाचयित्वा । बलवतीति । बलवती भुक्तं विपाच्याधो नयति । अबला पुनः सती सा आममेवापक्वमेव विमुंचति । ननु जाठराग्निरन्नं ग्रहणीस्थं पचति न ग्रहणी ततश्च कथमुक्तं सा विपाच्य नयत्यध इति । अत्रोच्यते । अग्निग्रहण्योराधाराधेयभावेन स्थितत्वाद्युज्यत एवैतद्वक्तुम् । ग्रहणी ह्यग्नेराधारः । तथा च प्रागुक्तम् । कला पित्तधराह्वयेति । पित्तं च वह्निः । तथा चाधुनैव वक्ष्यति । पित्तं वह्निरित्यादि । तदेवं वन्ह्याधारा या कला साऽन्नग्रहणाद्ग्रहणीत्युच्यते । ततश्चाधारतया ग्रहणीमाश्रित्याग्निः पाककरणसमर्थो भवति नाधारमंतरेण केवल एव । तदेवमग्न्याधारस्य ग्रहण्याख्यस्य पाकनिर्वर्तनं प्रति कर्तृत्वं युक्तमेवेति । अतः सा विपाच्य नयत्यध इत्येतदुपपन्नमेव ।

अग्निग्रहण्योराधाराधेयभावतयाऽवस्थानात्परस्परबलाधानेनोपकार्योपकारकभावः संभाव्यत इत्याह ।

**ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः ।**
**दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥**

हि यस्मादर्थे । यस्माद्ग्रहण्या यद्बलं सामर्थ्यं तस्य हेतुरग्निः। अग्नितो ग्रहण्या बलमुत्पद्यते। स चाऽप्यग्निर्ग्रहणीबलः । ग्रहणीबलं यस्याग्नेः स एवम् । अपिशब्दान्न केवलमग्निर्ग्रहण्या बलं ग्रहण्यप्यग्नेर्बलम् । अतो दूषितेऽग्नौ दुष्टा ग्रहणी रोगकारिणी संपद्यते । एवं चार्थाद् ग्रहण्यामपि दुष्टायामग्निर्दुष्यति । दुष्टश्च सोऽपि रोगकारी संपद्यते । एवं या पित्तधरा कला साऽदुष्टा सत्यायुरादीनां पुष्टये भवतीत्युक्तम् । अन्नग्रहणाद्ग्रहण्या एवंरूपता । तथान्नं विपक्वमेव देहधात्वादिपोषणं नापक्वम् ।

तस्य चाऽन्नपाकस्य हेतुरग्निरत आह ।

**यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ।**
**तत्राऽग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५४ ॥**

यदिति । यदन्नमाहारो देहधात्वादिपोषणं भवति तत्राग्निर्हेतुः। कुत इत्याह । नहीत्यादि । हि यस्मादपक्वादाहाराद्रसरुधिरादयो न संभवंत्यतो देहधात्वादिपोषणे सर्वत्राग्निः कारणम् । पाकक्रियानिर्वर्तनात् । तदेवमन्वयव्यतिरेकाभ्यामवगम्यते । अन्नं देहधात्वादिहेतुरग्निप्रभावादेव । तस्मादग्निः पाककारणम् । पक्वमन्नं देहादिपोषणम् । इति परस्परकारणत्वमनयोः ।

न ह्यपक्वाद्रसादय इत्युक्तमतः पाकस्यैवेतिकर्तव्यतां निरूपयन्नाह ।

**अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ।**
**द्रवैर्विभिन्नसंघातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥**
**संधुक्षितः समानेन पचत्यामाशयस्थितम् ।**
**औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतंडुलम्॥५६॥**

अन्नमिति । काले प्रसृष्टे विण्मूत्र इत्यादिना ग्रंथेन प्राङ्निरूपिते । अन्नमभ्यवहृतं कोष्ठं हृदयाद्यंगनिबंधनस्थानं प्राणाख्येन वायुनाऽऽहृतमानीतम् । तथा द्रवैर्द्रवगुणोपलक्षितैस्तोयव्यंजनमद्यक्षीरादिभिर्विभिन्नसंघातमपनीतपिंडितभावम् । तथा स्नेहेन घृतादिना मृदुत्वं प्रापितम् । तथा आमाशयस्थितमग्निः पचति । नाभिस्तनांतरं जंतोरामाशय इति स्मृत इति व्याख्यात आमाशयस्तंत्रांतरे । किंभूतोऽग्निः । औदर्यो जठरभवः । तथा समानाख्येन वायुना संधुक्षित उद्दीपितः । ष्ठीवनक्षवथूद्गारेत्यादिनैव प्राणानिलाहृतत्वे लब्धे पुनरुक्तं स्पष्टार्थम् । कालग्रहणस्योपलक्षणार्थत्वान्मात्रादिसहायेन जाठराग्निना समानोद्दीपितेन पक्वमन्नं देहधात्वादिपोषणम् । नन्वौदर्योऽग्निरदृश्यत्वान्न ज्ञायते कथं पचत्यतस्तदर्थं बाह्यं दृष्टांतं निरूपयितुं ग्रंथकृदाह । यथेत्यादि । यथा बाह्योऽग्निः स्थालीस्थं तोयतंडुलं पचति । तोयं च तंडुलाश्च तोयतंडुलम् । द्वंद्वैकवद्भावः । तथैवाऽसावौदर्योऽग्निः संधुक्षितः समानेनामाशयस्थितं चतुर्विधमन्नमशितपीतलीढखादितभेदभिन्नं प्राणानिलाहृतं पचति । ननु दोषभेदीयेऽध्याये पूर्वमुक्तम् । प्राणोऽत्र मूर्धग इत्यारभ्य यावन्निश्वासान्नप्रवेशकृदिति । अन्नस्य प्रवेशमाहरणं करोतीत्यन्नप्रवेशकृत् । प्राणानिलाहृतमित्यनेनाप्ययमर्थः प्रत्यपादि तत्किमेतत् । अत्रोच्यते । अन्नप्रवेशकृदित्यनेनान्नप्रवेशकरणमात्रमुक्तं नतु कोष्ठप्रापणमिति । प्राणस्य हि वायोर्मूर्धाश्रितस्योरो यावत्संचार उक्तो न ततोऽधः । एवमन्नप्रवेशकरणं तावत्प्राप्तं यावदुरो नतु कोष्ठमिति । कोष्ठं प्राणानिलाहृतमित्यनेन तु कोष्ठप्रापणाख्योऽर्थविशेष उक्तः । अतो द्वयमप्येतद्वक्तुं युक्तम् । संधुक्षितः समानेनेति च न वाच्यम् । यतः प्रागुक्तं समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वत इति । एवं जाठरेणाग्निना सहचरः समानो वायुः संधुक्षयतीत्यर्थोऽवतिष्ठते । तस्मात्संधुक्षितः समानेनेत्यनेन नार्थः । उच्यते । अर्थविशेषसंप्रत्ययार्थमेतदुक्तम् । तथाहि । समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः । अन्नं गृह्णाति पचतीति समानस्यैव पाकक्रियां प्रति वह्निसंधुक्षणद्वारेण कर्तृत्वमुक्तं नाग्नेः । इह पुनः संधुक्षितः समानेनाग्निः पचति न समानो वायुरित्यपौनरुक्त्यमेव । यद्यपि

चैकप्रत्ययजनितं न किंचिदस्ति तथाप्यन्नपाकक्रियां प्रत्यग्नेरेव कर्तृत्वं न समानादेः। समानादयो ह्युपकारका एव। अतो युक्तमिदमग्निः पचतीति।

तस्यान्नस्येदानीमग्निसमीपस्थस्य या अवस्थास्ताः कथयन् पुनस्तमेव पाकं निर्दिशति।

**आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत्।**
**फेनीभूतं कफं यातं विदाहादम्लतां ततः॥ ५७॥**
**पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः।**
**अग्निना शोषितं पक्वं पिंडितं कटुमारुतम्॥ ५८॥**

आदाविति। आदौ प्रथमं षड्रसमपि। अपिशब्दाद्वित्रादिरसमप्यन्नमभ्यवहृतमाशितपीतादिकं तत्पच्यमानं मधुरीभूतममधुरं मधुररससंपन्नं सत्कफमीरयेत्। किंभूतं कफम्। फेनीभूतम्। पानीयादेरपि पच्यमानस्य प्रथमं फेनोत्पत्तिदर्शनादेवमुक्तम्। विदाहादम्लतां ततः पित्तमामाशयात्कुर्याच्च्यवमानम्। ततः प्रथमावस्थाया माधुर्यप्रायाया अनंतरं मध्यमावस्थां प्राप्य जाठरेण वह्निना पक्वं षड्रसमप्यन्नमभ्यवहृतमम्लतां यातमनम्लमम्लं संपन्नं पित्तं विदध्यात्। कस्मात्पुनरम्लतां यातीत्याह। विदाहात्। विरुद्धो विषमो वा दाहो विदाहस्ततो विदाहाद्धेतोरम्लतां यातम्। किंभूतमन्नम्। आमाशयाच्च्यवमानं नामाशयस्थितमेव। च्युतं पुनस्तत आमाशयात्पक्वाशयं प्राप्तं जाठराग्निना पक्वं शोषितं तथा पिंडितं तदानीं पिंडिसंजातं संहतं संपन्नं तथा कटुकं जातमन्नमन्यां तृतीयामवस्थां प्राप्य मारुतं कुर्यादिति योज्यम्। एतच्च सर्वं स्वभावसिद्धं स्वसंवेद्यप्रायं कार्यानुमेयं च। अत एव रसषट्केऽपि यद्द्रव्याणां विपाकत्रैविध्यं मधुराम्लकटुकलक्षणमुक्तं तदनया रीत्योपपन्नतरं भवति। तथाहि। षड्रसस्याप्यन्नस्य जाठराग्निना पच्यमानस्य रसत्रयोपलक्षितेन मधुराम्लकटुकस्वभावेनावस्थात्रयेण परिणामो भवति। अथान्नमित्यत्र कस्माददो जग्धिर्ल्यप्तिकितीति जग्ध्यादेशो न। ब्रूमः। अन्न इति निपातनाद्बहुलं छंदसीति बहुलवचनाद्वा जग्धादेशाभावः। ननु विदाहादम्लतां गतमिति सामान्येनोक्तमयुक्तमिवाभाति। यतो द्राक्षेक्षुशर्करादीनामविदाहित्वं श्रूयते। अपि च। विदाहादीनि च वर्जयेदिति तंत्रकारः पठति। अनया च रीत्या अविदाहिद्रव्याभाव एव स्यात्। तस्मात्सामान्येनाविदाहित्वमभ्युपगम्यमानमन्यार्थमेव मन्यामहे। उच्यते। विदाहस्य द्वैविध्याददोषः। इह हि द्विविधो विदाहः प्रथितो दोषस्थानकृतो द्रव्यकृतश्च। तत्र हि दोषस्थानकृतस्य ग्रहणम्। आमाशयाच्च्युतमग्निना पक्वमिति कथमुक्तम्। यतः पक्वाशयस्थस्याऽग्निना पाकोऽनुपपन्नः। दूरव्यवधानो ह्यग्निरामाशयस्थस्तस्मात्पक्वाशयस्थस्याऽन्नस्य पक्वत्वमुपपन्नम्। अत्रोच्यते। पक्वाशयेप्यस्ति पाकस्तंत्रकारवचनात्। तथाहि प्राग्वस्तिविधावभ्यधात्। यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान्। व्यायामनित्यान् दीप्ताग्नीनित्यादि। तदेवं पक्वाशयस्थस्याऽप्यनुवासनस्य स्नेहपाकोऽभिहितः। तस्मात्पक्वाशयेऽप्यग्निना पक्वस्य पुनः पाको युक्त एव। तंत्रांतरेषु मांसादीनामपि विक्लेददर्शनादन्यत्राऽपि पाकोऽनुभूत एव।

जाठरस्याऽग्नेः कर्माभिधायेदानीमन्येषामप्यग्नीनां कर्माभिधातुमाह।

**भौमाप्याग्नेयवायव्याः पंचोष्माणः सनाभसाः।**
**पंचाहारगुणान्स्वान् स्वान् पार्थिवादीन् पचंत्यनु॥**

भौमेति। भूमेरयं भौमः। आप्य इति चिंत्यम्। आग्नेय इत्यग्नेर्ढगिति ढक्। वायव्य इति सास्य देवतेत्यर्थे वाय्वृतुपित्रुषसो यदिति यत्। तत्रौपम्यार्थो बोध्यः। वायव्य इव वायव्य इति। के पुनस्त इत्याह। पंचोष्माण इति। किंभूताः। सनाभसाः। सह नाभसेनोष्मणा पंचोष्माणः पंचाग्नयः। भौम ऊष्मा यावन्नाभस ऊष्मेति। तदेतेऽग्नयः पंचाहारगुणाननु पश्चात्पचंति। कुतोऽनु। प्रकृतत्वादौदर्याग्निनिर्वर्तितादन्नपाकात्। किंभूतानाहारगुणान्। स्वान्स्वान् पार्थिवादीन्। यो यस्य महाभूतोष्मणः पार्थिवादेरात्मीयो गुणस्तस्य तं गुणं स एव पार्थिवाद्यूष्मा पचति।

अनया चोक्त्या आहारः शरीरगतानां भावानां समानगुणानां गुणद्वारेण वर्धनहेतुर्विपरीतगुणानां च क्षयहेतुरिति प्रतिपादयति।

**यथास्वं ते च पुष्णंति पक्त्वा भूतगुणान् पृथक्।**

यथेति। ते च गुणाः पंचमहाभूताश्रिता यथास्वं ये येषां महाभूतानामात्मीयास्ते यथास्वमात्मीयेन वह्निना पक्वा आत्मीयानेव देहस्थान् महाभूतगुणान् पुष्णंति। कथं पुष्णंतीत्याह। पृथक् प्रत्येकं कृत्वा नैकं सर्वे न सर्वानेकः।

एवं प्रत्येकं भूतगुणपुष्टिं पंचोष्मपक्वाहारगुणकृतां स्पष्टीकुर्वन्नाह।

**पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान्॥६०॥**

पार्थिवा महाभूतगुणाः पार्थिवानेव महाभूतगुणान् देहगान् पुष्णंति वृद्धिं नयंति। शेषाः पार्थिवगुणेभ्यो येऽन्ये महाभूतगुणा आप्यास्तैजसा वायव्या नाभसाश्च ते शेषान् पार्थिवगुणव्यतिरिक्तानाप्यादिमहाभूतगुणान् पुष्णंत्याप्याययंति। गुणानां च निराधाराणामसंभवात्सहाधारेण पृथिव्यादिना महाभूतेन सह पक्वा एते महाभूतगुणांस्तथाविधानेव महाभूतगुणान् पुष्णंतीति सामर्थ्यलभ्योऽर्थः। अत्र चोदयति। ननु पृथिव्यादिमहाभूतचतुष्टयव्यतिरिक्तस्योद्देशमात्रत्वादाकाशस्य सत्तैव दुर्घटा कुतः पुनस्तस्योष्मणः संभव इति। अत्रोच्यते। आकाशस्य सत्ता च द्रव्यनिर्णयप्रस्तावे प्राक् प्रतिपादितैव। तथा नासिकाश्रोत्रास्यादिषु स्थानेषु स्थित ऊष्मा दाहपाकादीन् कुर्वन् नाभस ऊष्मेत्युपचर्यते। इत्यौपचारिक ऊष्माप्यस्योपपन्न एव। एवं पांचभौतिका अग्नय एक उदराग्निः सप्त च धात्वग्नयो वक्ष्यमाणा इति त्रयोदशाऽग्नयः। ननु पार्थिवाद्यूष्मभिः पक्वस्य पुनर्धातूष्मभिः पाकः। धातूनामपि पांचभौतिकत्वात्तत्राऽपि पार्थिवाद्यूष्मभावः। तैश्च पार्थिवाद्यूष्मभिः पुनः पाकः इत्येवमष्टादश प्राप्नुवंति। सत्य-

मेवैतत् । किंतु त एव पंचोष्माणः पार्थिवादयः स्थानांतरप्राप्ता धातूष्माण इति व्यपदेशमासादयंति । यथोदकं स्थानांतरगतं लसीकादिव्यपदेशं लभते । तथाचोक्तम् । तच्छरीरगतं लसीकादिव्यपदेशं प्राप्नोतीति । अन्येत्वेवमाहुः । एते त्रयोदशाग्नयस्तथा सप्तसु सिराशतेषु सप्ताऽग्निशतानि पंचसु मांसपेशीशतेषु च पंचाग्निशतानीति । एवं पंचमहाभूतात्मकादाहाराद्यथास्वमग्निना पक्वाद्रस आहारसारस्तत्रस्थैर्महाभूतगुणैर्देहगा महाभूतगुणा रसधात्वाश्रिता यथास्वमभिवर्धंते ।

**किट्टं सारश्च तत्पक्वमन्नं संभवति द्विधा ।**

तदन्नं पक्वं द्विधा संभवति द्विप्रकारं जायते । किट्टरूपं प्रसादरूपतया सारश्च ।

किट्टमपि जायते यदन्नस्य पक्वस्य तदप्यच्छानच्छभेदेन द्विधेत्याह ।

**तत्राऽच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥ ६१ ॥**

तत्र तयोरच्छानच्छभेदभिन्नयोः किट्टयोर्मध्याद्यदच्छमन्नस्य किट्टं तन्मूत्रं विद्यात् । यद्घनं संहतमन्नस्य किट्टं तच्छकृत्पुरीषं जानीयात् ।

**सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।**

सार इति । सारः पुनः प्रसादाख्यो भागो भूयः सप्तभिरग्निभिः पच्यते । उदराग्निना पंचभिश्च भूताग्निभिः पूर्वं पक्वः सन् पश्चात्सारीभूतो धातूष्मभिः पच्यत इति प्रतिपादनार्थं भूयो ग्रहणम् । कथं पच्यते । यथास्वं यस्य सारस्य रसादिसप्तधातुस्थस्य योऽग्निरात्मीयस्तेन तेन स सारः पच्यत इत्यर्थः । रसधातुस्थः सारो रसधात्वग्निना पच्यत इति भावः । चतुर्विधोप्याहारोऽभ्यवहृतो जठराग्निना भूतसहायेन पक्वः किट्टसारतां याति । ततो यः सारः प्रसादाख्यः स पूर्वं हृदयं याति । ततो हृदयांतःस्थेन व्यानेन विक्षिप्तस्तत्स्थाभिः सिराभिर्दशभिर्मूलभूताभिः कृत्स्नं शरीरमुह्यमानो रसधातुना सहैकतां प्राप्तो रसधात्वाशयस्थेन वह्निना भूताग्निसहायेन पच्यमानो रक्तधातुसारतया परिणमति । रक्तधातुसारतया परिणतो मांसधातुसारतया परिणमते । यावत्स एवाहाररसः क्रमेण गर्भतया परिणमतीति ।

अमुमर्थं द्योतयितुमुवाच ।

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥ ६२**
**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ।**

रसादिति । रसाद्धातुरसादाहाररसेन सहैकतामापन्नाद्रक्तं प्रजायते । स धातुरसो रक्तीभूतो रक्ततया संपद्यते तावद्यावत्स एव गर्भत्वेनेति योज्यम् । अत्र चोदयंति । ननु यद्याहाररसो व्यानविक्षिप्तो रसधातुना सहैकतां प्राप्तः परिणामक्रमेण रक्तादीन् भावान् गर्भावसानान् परिणमति तर्हि कथमुक्तम् । सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिरिति । अत्रोच्यते । कार्ये कारणोपचारादेतदुक्तमित्यवेहि । सारकार्येषु रसरक्तादिषु सप्तभिर्धात्वग्निभिः पच्यमानेषु सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिरित्युक्तम् । तस्माद्रसादिधातव एव साराख्यान्मूलकारणादुत्थिताः परमार्थेन पच्यंत इति बोध्यम् । ननु यदि क्रमेणाहाररसाद्रसो रसाद्रक्तं रक्तान्मांसमित्यादिक्रम आश्रीयते तत्कथमुक्तम् । व्यानेन रसधातुर्हि विक्षेपोचितकर्मणेति । अत्र हि युगपदिति च निर्दिश्यते । युगपदेककालं व्यानेन रसो देहे विक्षिप्यते । विक्षिप्ताच्च रसात्सर्वधातूत्पत्तिरिति । प्रत्यज्ञायि । इह च रसरक्तमांसादिक्रमेणाहाररसाद्धातुनिष्पत्तिरित्युच्यते । तदेतत्परस्परं विरुद्धमिव लक्ष्यते । ब्रूमः । युगपच्छब्दोऽत्र शीघ्रक्रमार्थः । तथाचोवाच सांख्ये । युगपच्चतुष्टयस्यातुवृत्तिः क्रमेण च निर्दिष्टेति । अस्यार्थः । मनोबुद्ध्यहंकारास्त्रयश्चक्षुरादीनां मध्येऽन्यतम इत्येवं चतुष्टयमेतत् । अस्य च वृत्तिर्युगपन्निर्दिष्टा क्रमेण च । तत्र युगपद्वृत्तिरुत्पलपत्रशतपत्रसूचीभेदन्यायेन । क्रमेण च वृत्तिर्यथा चक्षुरादि रूपादिकं पश्यति । मनस्तत्र संशेते । बुद्धिर्निश्चिनोति । अहं करोमीत्यहंकार उद्यमयति । तद्वदत्राऽपि युगपत्क्रमेण च विक्षेपो न विरुद्धः । अस्त्वेतत् । रसधातुरित्येतत्कथमुक्तम् । यतो रसाख्यो धातुस्तेन न विक्षिप्यते किंतर्ह्याहाररसोऽत एव धातुशब्दोपादानमनर्थकम् । ब्रूमः । धातुशब्द आधाराभिधेयत्वेनेहोपात्तो रसस्य देहधारणत्वं दर्शयितुम् । सर्वेषां हि धातूनां यद्देहधारणस्वभावत्वं तदाहाररसाप्यायितानामेषां न त्वनाप्यायितानाम् । अतः स आहाररसो धातूनामाधार उद्भवस्थानम् । यथा लोके हेमादीनां य आधारः प्रतिनियतो विशिष्टा मृत्सधातुसंज्ञया भण्यते । इयं मृद्धेमधातुरियं रजतधातुरिति । एवमाहाररसो व्यानेन विक्षिप्यते न रसाख्यो धातुरिति स्थितमेतत् । किंचाहाररसादेककालं सप्तसु धातुस्रोतःसु प्रवेशिताद्रक्तादयो धातव उत्पद्यंत इति । यद्येष एककालधातुपोषणपक्ष आश्रीयते तदानीमिदं विरुध्यते । पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधमिति । यतः सर्वे धातव आहाररसेन युगपद्व्यानविक्षिप्तेन स्वे स्वे स्रोतस्यवतिष्ठमानाः स्वातंत्र्येणाप्यायिताः पुष्यंत्यनाप्यायिताः क्षयं यांति । तदेवं कथं पूर्वस्य धातोर्वृद्धौ परस्य वृद्धिः पूर्वस्य धातोः क्षये परस्य क्षयः स्यात् । नहि कदाचिद्घटते मैत्रे तृप्ते चैत्रः सुहितः स्यादतृप्ते चाऽसुहितः स्यात् । तथा स्थूलस्य मेद एवोपचीयत इति दृष्टम् । नच समं कृत्वा सप्तसु धातुस्रोतःसु विनिक्षिप्ते रसे मेदसोऽधिका वृद्धिः कथंचिदुपपद्यते । क्रमपरिणामपक्षे तु स्थूलस्याहाररसो रसधातुतया परिणमति । रसधातू रक्ततया रक्तधातुर्मांसतया मांसधातुर्मेदस्तया परिणमति । मेदस आहारपूर्णस्य स आहाररसो मेदस्त्वं प्राप्तः पुनः प्रतिस्रोतन्यायेन मांसस्य विशेषवृद्धिं करोति । अनंतरं रक्तस्य पश्चाद्रसस्य पुनश्च रसधातुरतिपूर्णो रक्तस्य वृद्धिं विधत्ते । रक्तधातुर्मांसस्य मांसधातुर्मेदस इत्येवं स्थूलस्य मेदोवद्रसादयो मांसावसाना अप्युपचीयंते । अस्थ्यादयश्चास्थ्यादिस्रोतसां मेदसावृतत्वान्न तथोपचीयंते । तस्मादाहाररसेन मेदोभावेन परिणमतोदकपरिपूर्णाभिनवमृत्कुंभज-

ललवस्यंदनन्यायेनास्थ्यादयो धातवः केवलमाप्याय्यंते नतु तथोपचीयंते । तथाच मुनिः । स्थूलस्य मेद एवोपचीयते न तथेतरधातव इति । अस्य ह्ययमर्थो मेदसो येऽन्येऽस्थ्यादयः शुक्रावसानास्ते न तथोपचीयंते न पुनः पूर्वे रसादयो धातवः स्थूलस्याऽनुपचायिन इति । अत एवाह मुनिः । मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यत इति । अपिच यदि क्रमपरिणामपक्षो नोररीक्रियते तदानीं गर्भस्य शुक्रधातुरसोत्पन्नस्य रसादयो मज्जावसाना धातवो न स्युः । कारणानुविधायीनि हि कार्याणि भवंतीत्युक्तम् । क्रमपरिणामपक्षे पुनः शुक्रप्रसादस्य सर्वधातुप्रसादरूपतया परिणतत्वात्स शुक्रप्रसादो गर्भतया परिणमंस्तथारूप एव परिणमति । कार्याणां कारणानुरूपत्वात् । यथा बीजकारणे वटधवप्ररोहादौ सकलान्यदृश्यपदार्थजातानि तथा रूपाण्यव्यक्तरूपतया तान्यवतिष्ठंते । यानि कार्यरूपतया परिणमंति तानि सर्वाण्यभिव्यक्तिं यांति कार्ये दृश्यंते । ननु क्रमपरिणामपक्षे धातोर्धात्वंतरोत्पत्तावाश्रीयमाणायां योयो धातुर्धात्वंतरभावेन देहे परिणमति तस्य धातोर्धात्वंतरभावेन परिणतत्वादभावः प्राप्नोति पूर्वस्य पूर्वस्य । शुक्रप्रसादस्यैव देहे सद्भावः स्यान्न रसादीनां धातूनाम् । तथाचाहारविनिवृत्तावपि स्त्रीगमनासामर्थ्यं स्यात् । शुक्रस्याविद्यमानत्वात् । अत्रोच्यते । अनवच्छिन्नप्रवाहसंतानक्रमेणांशांशितया धातूनां धात्वंतरभावोत्पत्तिर्न तुल्यकालं सर्वैरवयवैरुत्पत्तिरिति कृत्वा योयो धातुर्धात्वंतरभावेन देहे परिणमति न तस्य धातोः पूर्वस्याभावः प्राप्नोति । सर्वैरवयवैरपरिणतत्वात् । तदेवं सर्वथा क्रमपरिणामपक्ष एवाऽऽश्रयितुं न्याय्यः । तथाचाऽष्टांगसंग्रहेऽप्यधीतम् । तत्राहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात्पच्यमानः स्वात्मभावप्रच्युतिसमनंतरमेव प्राप्तरक्तादिसंज्ञः कालवदस्खलितप्रमाणो देहमूर्जयन्नित्यादि । तथा चरकसंहितायां दृढबलोऽप्याह । रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः । इत्युक्तवंतमाचार्यं शिष्यस्त्विदमचोदयत् । रसाद्रक्तं विसदृशात्कथं देहेऽभिजायते । रसस्य न च रागोऽस्ति स कथं याति रक्तताम् । रसाद्रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम् । रसाद्रक्तात्तथा मांसान्मेदसः श्वेतता कथम् । श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु । खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा । मज्ज्ञश्च परिणामेन यदि शुक्रं प्रजायते । कथं सर्वगतं शुक्रं प्रवदंति मनीषिणः । अथ प्रसादान्मज्ज्ञश्च शुक्रं भवति देहिनाम् । छिद्रं न दृश्यतेऽस्थ्नां च तन्निःसरति वा कथम् । एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् । तेजो रसानां सर्वेषामंबुजानां यदुच्यते । पित्तोष्मणा सरागेण रसो रक्तत्वमृच्छति । वाय्वग्नितेजसा युक्तं रक्तं मांसत्वमृच्छति । श्लेष्माणं च समाश्रित्य मांसं वाय्वग्निसंयुतम् । स्थिरतां प्राप्य शौक्ल्यं च मेदो देहेऽभिजायते । पृथिव्यग्न्यनिलादीनां संघातः श्लेष्मणा वृतः । खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् । करोति तत्र सौषिर्यमस्थ्नां मध्ये समीरणः । मेदसा तानि पूर्यंते स्नेहो मज्जा ततः स्मृतः । तस्मान्मज्ज्ञश्च यः स्नेहः शुक्रं संजायते ततः । वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु । येन स्रवति तच्छुक्रं नवात्कुंभादिवोदकम् । स्रोतोभिः स्यंदते देहात्समंताच्छुक्रवाहिभिः । हर्षेणोदीरितं रागात्संकल्पाच्च मनोभवात् । बस्तौ संभृत्य निर्याति स्थूलान्निम्नमिवोदकम् । तथा चरकमुनिरपि साक्षादधिजगे । स्रोतसा च यथास्वेन धातुः पुष्यति धातुनेति । तथा धातवो हि धात्वाहाराः प्रकृतिमनुवर्तंत इति । नग्नजिदप्याह । तत्राहारस्सारपूर्वं रसधातुर्विवर्धते । रक्तं धातुरसाच्चैव रक्ताख्यान्मांसमेव च । मेदोधातुस्ततो मांसादस्थ्याख्यो मेदसस्तथा । मज्जधातुस्ततोऽस्थ्याख्यान्मज्ज्ञः शुक्राख्य एव च । शुक्रात्परं च गर्भस्य संभवः परिकीर्तित इति । तस्मात्क्रमपरिणामपक्ष एव युक्तः ।

रसादीनां धातूनां प्रसादं दर्शयित्वा किट्टं यथाक्रमं दर्शयितुमाह ।

**कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च ॥ ६३ ॥**
**स्नेहोऽक्षित्वग्विशामोजोधातूनां क्रमशो मलाः ।**

कफ इति । कफादयो धातूनां क्रमेण मलाः । रसस्य कफो मलः । रक्तस्य पित्तं मलः । खेषु नासिकाविवरादिषु यो मलोंऽतः संभवति स मांसस्य मलः । यः शरीरे प्रस्वेदो रोमभ्यः सलिलसंभवः स मेदसो मलः । नखा रोमाणि चास्थ्नां मलः । मज्ज्ञः स्नेहो मलः । स्नेहः केषां संबंधी । नेत्रयोस्त्वचो विशः पुरीषस्य च । यदोजः सर्वधातूनां तेजः शरीरसंभवं स शुक्रस्य मलः ।

न केवलमाहारस्य प्रसादकिट्टतया द्वैविध्यं यावद्धातूनामप्याहाररसाप्यायितानां प्रसादकिट्टतया द्वैविध्यमिति दर्शयन्नाह ।

**प्रसादकिट्टौ धातूनां पाकादेवं द्विधर्छतः ॥ ६४ ॥**

प्रसादेति । रसादीनां धातूनामेवमनेन प्रकारेण यथादर्शितेन पाकादग्न्याहितात्प्रसादकिट्टौ द्विधा ऋच्छतो द्वैविध्यं व्रजतः । किट्टशब्दस्याऽत्र पुंस्त्वं लोकाश्रयत्वाल्लिंगस्येति बोध्यम् । अर्धर्चादिषु त्वपाठ एवाऽस्य ।

**परस्परोपसंस्तंभाद्धातुस्नेहपरंपरा ।**

धातूनां स्नेहः सारो धातुस्नेहः । आहाररसस्य धात्वात्मना परिणमतो यथायथं धात्वग्निभिः पच्यमानस्य क्षीरस्येव शृतस्य सारस्तथा पाकवशाद्धातूनां यथोत्तरं यथारूपः स्नेहो जायते तस्य धातुस्नेहस्य परंपरा आहाररसाप्यायिततयाऽव्युच्छिन्नप्रबंधप्रवृत्ततया विशिष्टैव यथोत्तरं धातुस्नेहोत्कर्षक्रमपरिणतिः सा धातुस्नेहपरंपरा परस्परमुपसंस्तंभादुपसंश्लेषाज्जायते । अत एव शोणितप्रभृतीनां धातूनामुत्तरोत्तरं गौरवं यथोत्तरं स्नेहोत्कर्षः ।

इदानीं परिणतिकालमाहारस्य निरूपयन्नाह ।

**केचिदाहुरहोरात्रात्षडहादपरे परे ॥ ६५ ॥**

**मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ।**

केचिदाचार्या अहोरात्राद्रात्रिंदिनेनान्नं शुक्रत्वं यातीत्याहुः । कैः । पाकक्रमादिभिः । पाकस्य जाठराग्निना भूताग्निभिर्धात्वग्निभी रसरक्तादिपरिपाक्ये्त्येवंप्रकारः क्रमः स आदिर्येषां वीर्यप्रभावादीनां तैः । अपरेऽन्ये आचार्याः षडहात् षड्भिर्दिनैरन्नं पाकक्रमादिभिः शुक्रत्वं यातीति वदंति । परेऽन्ये त्वहोरात्रात्प्रभृति मासः परः प्रमाणावधिस्तस्य रसादिपाकक्रमादिना परिणमतः शुक्रत्वगमने न तत ऊर्ध्वं कदाचिदपि । तथा च पराशरोऽष्टरात्रेणान्नं परिणमच्छुक्रत्वं यातीति संजगाद । तथा च तद्ग्रंथः। आहारोऽद्यतनो यश्च श्वो रसत्वं स गच्छति । शोणितत्वं तृतीयेऽह्नि चतुर्थे मांसतामपि । मेदस्त्वं पंचमे षष्ठे त्वस्थित्वं सप्तमे व्रजेत् । मज्जतां शुक्रतामेति दिवसे त्वष्टमे नृणाम् । तस्माद्धि पथ्यापथ्याभ्यामाहाराभ्यां नृणां ध्रुवम् । सप्तरात्रेण शुध्यंति प्रदुष्यंति च धातव इति ।

अथैतदन्नं रसादिभावेन परिणमच्छुक्रत्वं याति । किं विच्छन्नं कृत्वाऽथवा कालवशादनवरतं कृत्वा पाकक्रमेणात आह।

**संततं भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥ ६६ ॥**

भोज्याश्च ते धातवो भोज्यधातवः । भोज्यशब्देनेह यस्य धातोर्य आहारस्तस्य सर्वस्य ग्रहणम् । उक्तं हि धातवो धात्वाहारा इति । एतदुक्तं भवति । यस्य धातोर्यस्मादुत्पत्तिः स तस्याहार इति । भोज्यधातूनां परिवृत्तिः परिवर्तनं भ्रमणं गतिः सा चक्रवत्संतता अव्युच्छिन्नप्रबंधस्वरूपाऽऽहाररसेनाप्यायितत्वात् ।

एवं पूर्वोक्तेन कालावधिना वृष्याद्यपि यद्वस्तुजातं तदपि शुक्रत्वं यातीत्याशंकायामिदमाह ।

**वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।**

वृष्याणि क्षीररसमधुकमाषकूष्मांडहंसादिपक्ष्यंडप्रायाणि । तथा आदिग्रहणाद्विषगरप्रशमनमूढगर्भजरायुनिष्क्रमणक्रियाप्रायाणि।सद्यस्तत्क्षणादेव सुसूक्ष्मं दुर्लक्ष्यं तथाविधं प्रभावमासाद्य शुक्रबलादि कुर्वते न परिणमंति ।

**प्रायः करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ॥ ६७ ॥**

प्राय इति । वृष्यादिद्रव्यव्यतिरिक्तमन्यदपि भेषजं चूर्णगुटिकादि दीपनादिक्रियमहोरात्रेण प्रायः स्वं स्वं कर्म करोति । प्रायोग्रहणं किंचिद्भेषजमहोरात्रादप्यूर्ध्वं किंचित्ततोऽप्यर्वाग्वीर्यादिवशात्कर्म करोतीति द्योतनार्थम् ।

आहाररसो रसधातुना सहैकतामापन्नो रसरक्तादिभावेन परिणमति यावच्छुक्रप्रसादो गर्भत्वेनेत्युक्तं तत्कथं कदाचिदेकदेशे रोगकृद्रुधिरमांसाद्येकदेशे वृद्धिक्षयविकारकृद्भवतीति संशयापनोदार्थमिदमाह ।

**व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।**
**युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥**
**क्षिप्यमाणः खवैगुण्याद्रसः सज्जति यत्र सः ।**
**तस्मिन्विकारं कुरुते खे वर्षमिव तोयदः ॥ ६९ ॥**

व्यानेनेति । आहाररसो जठराग्निना पक्वः प्रसादो धात्वाकारत्वाद्धातुवाच्यो यस्माद्व्यानेन सदा सर्वतः सर्वस्मिन् देहे विक्षिप्यते विशेषेण प्रेर्यते । सर्वत इत्याद्यादित्वात्तसिः । किंभूतेन । विक्षेपः प्रेरणमेवोचितं योग्यं कर्म यस्य तेन विक्षेपोचितकर्मणा। कथं विक्षिप्यते । युगपदेककालं तथाऽजस्रमनवरतम् । स रसधातुराहाररसप्रसादाख्यो व्यानेन विक्षिप्यमाणः खवैगुण्यात्स्रोतोदुष्टेर्यत्र प्रदेशे स्वरूपात्प्रच्युतोऽपि सज्जति सक्तः संपद्यते तस्मिन् प्रदेशे देहस्य विकारं कुरुते न सर्वत्र । एतदेव दृष्टांतद्वारेण स्पष्टयति । खे वर्षमित्यादि । यथा खे वियति तोयदो मेघो वातवशात् क्षिप्यते वर्षं वृष्टिं क्वचिदेव देशे कुरुते न सर्वत्र । खस्य वैगुण्यं खवैगुण्यमिति षष्ठीसमासः । पूरणगुणेत्यादिना चाऽत्र यथा समासनिषेधो न भवति तथा शिरोर्तींद्रियदौर्बल्यमित्यत्र प्रतिपादितमेव तस्मिन् विकारं कुरुत इत्यत्रात्मनेपदं न प्राप्नोति रसस्य कर्त्रभिप्रायाभावात् । नहि तस्य चित्रमुत्पद्यत इति करोतीति प्राप्नोति । ब्रूमः । औपचारिकोऽत्र कर्त्रभिप्रायः कल्प्यः । अनेनैव न्यायेन व्रीहीनातपः शोषयतीत्याद्यप्युपपन्नम् । व्यानो रसधातुं यत्र नयति तत्र विकार इति तावद्रसस्य विक्षेपः ।

**दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ।**

एवमिति दोषप्रकोपक्रमातिदेशार्थम् । यथा रसः क्षिप्यमाणः स्ववैगुण्याद्यत्र सज्जति तस्मिन् विकारं कुरुते । एवमनेन न्यायेन दोषाणामपि वातादीनां व्यानेन विक्षिप्यमाणानामेकदेशप्रकोपणं विकारकरणं स्यात् । अत एव सिध्मदद्रुश्वयथ्वाद्येकदेशे जायते एवं क्षेप्याणां स्वभावस्थानामप्यस्वातंत्र्याद्विकारकारित्वं भवति ।

**अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ॥ ७० ॥**

अन्नेति । भूतमेव भौतिकम् । विनयादित्वाट्ठक् । अन्नं च भौतिकं च धातवश्चान्नभौतिकधातवस्तेषामग्निरन्नभौतिकधात्वग्निस्तस्य कर्म कार्यमग्निभौतिकधात्वग्निकर्म । इतिः प्रकारे । इति पूर्वोक्तेन प्रकारेणान्नभौतिकधात्वग्निकर्म परिभाषितमुक्तं निश्चयीकृतम् । तत्रान्नं कालेऽभ्यवहृतमित्यादिना कटुमारुतमित्यंतेन ग्रंथेन तथान्नं सारकिट्टतया यत्परिणमतीत्यंतेन ग्रंथेन यन्निर्दिष्टं तदेतज्जाठराग्नेः कर्म । भौमाप्याग्नेयेत्यारभ्य शेषाः शेषांश्च देहगानित्येवमंतेन ग्रंथेन यन्निर्दिष्टं तद्भूताग्नेः कर्म । सारस्तु सप्तभिर्भूय इत्यारभ्य प्रसादकिट्टौ धातूनामित्यंतेन यन्निर्दिष्टं तद्धात्वग्निकर्मेति ।

**अन्नस्य पक्ता सर्वेषां पक्तृणामधिको मतः ।**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥ ७१ ॥**
**तस्मात्तं विधिवद्युक्तैरन्नपानेंधनैर्हितैः ।**
**पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ ७२ ॥**

अन्नस्येति । सर्वेषां पक्तॄणां मध्ये योऽन्नस्य पक्ता पाचको जाठराग्निः सोऽधिको मतो बलीयानभिप्रेतस्तंत्रकृतामिति शेषः। कुतः श्रेष्ठ इत्याह । तन्मूला इत्यादि । स जाठरोऽनलो मूलं प्रधानं येषां भूताग्न्यादीनां ते तन्मूलाः । मूलमिव मूलम् । यथा वृक्षादीनां प्रधानावयवो मूलं सर्वेषां हि तदवयवानां जन्मादिषु तत्कारणम् । तेन विना तेषां जन्मासंभवात् । यस्माच्चैवं मूलं सर्वावयवेभ्यः प्रधानमवयवस्तस्मात्ते भूतधात्वग्नयस्तद्वृद्धिक्षयवृद्धिक्षयात्मकाः । वृद्धिश्च क्षयश्च वृद्धिक्षयौ । तस्य जाठराग्नेर्वृद्धिक्षयाववयवोपचयापचयौ ताभ्यां यौ वृद्धिक्षयौ तद्वृद्धिक्षयवृद्धिक्षयौ तावात्मा स्वभावो येषां ते तद्वृद्धिक्षयवृद्धिक्षयात्मकाः । एतदुक्तं भवति । जाठरानलवृद्ध्या परेषामग्नीनां वृद्धिस्तत्क्षयेण तेषां क्षयस्तस्मात्तं पाचकमग्निं विधिवत्प्रशस्तेन विधानेन युक्तैर्योजितैरन्नपानेंधनैर्हितैः पथ्यैः पालयेत् । अन्नपानान्येवेंधनानि तैः । कथं पालयेत् । प्रयतो यत्नवानावहेलया । हि यस्मात्तस्यान्नस्य पक्तुः स्थितौ सद्भाव आयुर्बलस्थितिः । तत्स्थितावायुरवतिष्ठते बलं च । तथा चोक्तम् । अग्निमूलं बलं पुंसां बलमूलं हि जीवितमिति ।

जाठराग्निमधुना चतुर्विधं वक्ति ।

**समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।**
**पित्ताभिमूर्छिते तीक्ष्णो मंदोऽस्मिन्कफपीडिते ७३**

सम इति । समाने वायौ स्थानस्थे स्वाशयस्थिते सति समोऽग्निर्भवति । विमार्गगे मार्गमुज्झित्वोत्पथप्रवृत्ते समाने सति विषमोऽग्निर्भवति । पित्तेनाभिमूर्छिते एकलोलीभूते समाने तीक्ष्णोऽग्निर्भवति । अस्मिन्समाने कफपीडिते श्लेष्माभिभूते मंदोऽग्निर्भवति ।

**समोऽग्निर्विषमस्तीक्ष्णो मंदश्चैवं चतुर्विधः ।**

एवं समादिभेदेन चतुर्विधोऽग्निर्भवति ।

इदानीमस्य चतुर्विधस्याऽग्नेर्लक्षणं वक्ति ।

**यः पचेत्सम्यगेवान्नं भुक्तं सम्यक् समस्त्वसौ॥७४॥**
**विषमोऽसम्यगप्याशु सम्यक्क्वापि चिरात्पचेत् ।**
**तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम्॥७५॥**
**मंदस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ।**
**कृत्वाऽस्यशोषाटोपांत्रकूजनाऽध्मानगौरवम्॥७६॥**

य इति । वह्निरिति वक्ष्यमाणेन संबंधः । यो वह्निः सम्यग्यथाविधि भुक्तमन्नं सम्यगेव पचेत् स सम एव भवतीति । तुशब्दोऽवधारयति । अन्नमिति प्रकृतम् । योऽसम्यगपि देशकालमात्राविधिभ्रष्टमप्यन्नं भुक्तमाशु पचेत् । सम्यगप्यन्नं भुक्तं चिरात्पचेत् स विषमः । योऽसम्यगप्यन्नं भुक्तं द्राक्पचेत् स तीक्ष्णः। यस्तु सम्यगप्यन्नमुपभुक्तमास्यशोषादीन् कृत्वा चिरात्पचेत्स मंदः । आटोपः क्षोभः । मंदेऽग्नौ सभक्तमेवौषधं प्रायेणोपयोक्तुं युज्यते । तथा च संग्रहे पपाठ । यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे । पाकोऽग्नौ युक्तयोर्द्राक् तु तीक्ष्णे मंदे पुनश्चिरात् । सभक्तमौषधं तस्मान्मंदाग्नेरवचारयेदिति ।

एवमग्निमुक्त्वाऽग्न्यायत्तत्वाद्बलस्य बलत्रैविध्यं दर्शयति ।

**सहजं कालजं युक्तिकृतं देहबलं त्रिधा ।**

सह जायत इति सहजम् । कालाज्जातं कालजम् । युक्तिभिरुपजातं युक्तिजम् । इति देहबलं त्रिधा ।

**तत्र सत्वशरीरोत्थं प्राकृतं सहजं बलम् ॥ ७७ ॥**
**वयस्कृतमृतूत्थं च कालजं युक्तिजं पुनः ।**
**विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥**

तत्रेति । तत्र तेषु बलेषु मध्ये सत्वरजस्तमःसमुत्थं शरीरोद्भूतं च यद्बलं तत्प्राकृतं स्वाभाविकम् । सत्वशब्देन गुणत्रयमुपलक्ष्यते । शरीरं त्वग्रक्तादिसारमयं यद्वस्तुजातं तत् । वयो बाल्ययौवनादि तेन कृतं वयस्कृतं वयोऽनुसारेण निष्पादितम् । ऋतुभ्यो हेमंतादिभ्य उद्भूतमृतूत्थम् । एतदुभयमपि कालजं बलम् । वयस्कृतमित्यत्राऽतःकृकमीत्यनेन सः । विहरणं विहारो वाङ्मनश्चेष्टालक्षणोऽनेकप्रकारः । आहारः पूर्वमुक्तः । ताभ्यां विहाराहाराभ्यां जनितं विहाराहारजनितं यद्बलं तद्युक्तिजम् । युक्तिर्योग इतिकर्तव्यता ततो जातं युक्तिजम् । तथोर्जस्करास्त्विमे योगाः । तद्यथा । बलवत्पुरुषदेशे जन्म सुखश्च कालयोगो बीजक्षेत्रगुणशरीराहारसत्वसंपत्तयश्च । तथा योगा रसायनवाजीकरणोक्ताः । तेभ्यो जातमूर्जस्करयोगजं यद्बलं तदपि युक्तिजम् ।

संप्रति देशत्रैविध्यं दर्शयति ।

**देशोऽल्पवारिद्रुनगो जांगलः स्वल्परोगदः ।**
**आनूपो विपरीतोऽस्मात्समः साधारणःस्मृतः ७९**

देश इति । स्तोकजलवृक्षशैलाक्रांतः स्वल्परोगदो जांगलो देशः शुद्धस्रोतस्तया । तथा च । मरुदेशोद्भवा अल्परोगाश्चिरजीविनश्च दृश्यंते । अस्माज्जांगलाद्विपरीतो बहूदकतरुगिरिसमधिष्ठितो बहुरोगदश्चाऽऽनूपः । समस्तु देशो यो नात्यंबुवृक्षपर्वतो न चात्यल्पवारितरुगिरिः स साधारणो मध्यस्थरोगारोग्यः ।

एवं भूमिलक्षणदेशमुक्त्वा मज्जादीनां परिमाणार्थमाह ।

**मज्जमेदोवसामूत्रपित्तश्लेष्मशकृत्यसृक् ॥ ८० ॥**
**रसो जलं च देहेऽस्मिन्नेकैकांजलिवर्धितम् ।**

मज्जेति । मज्जादिद्रव्यं जलावसानमस्मिन् पौरुषे देह एकैकांजलिवर्धितम् । तेन मज्ज्ञ एकोऽंजलिर्द्वौ मेदसोयावज्जलस्य देहाश्रितस्य दशांजलयः ।

**पृथक्स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ॥ ८१ ॥**
**द्वावंजली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ।**

पृथगिति । ओजोमस्तिष्कशुक्राणां देहगानां पृथक् प्रत्येकं स्वप्रसृतं प्रमाणम् । स्त्रियाः स्तन्यस द्वावंजली रजसो रक्तसा-

तैवस्य चत्वारोंऽजलयः । स्वेन मानेनांऽजलिप्रसृताविह हस्तसंस्थानविशेषवाच्यौ गृह्येते नतु चतुष्पलद्विपलपरिमाणौ मानवाच्यौ स्वशब्दप्रयोगात् । प्रसृतशब्दे तु मानवाचिनि गृह्यमाणे स्वशब्दोऽनर्थक एवेह स्यात् । ननु यथा मज्जादीनां समत्वाधिक्यहानयो विद्यंते तथा पवनस्याऽपि । तथा च प्रागभ्यधायि । उत्साहोच्छ्वासनिःश्वासेत्यादि । तथा वृद्धस्तु कुरुतेऽनिल इत्यादि । तथा लिंगं क्षीणेऽनिलेंऽगस्येत्यादि । तस्माद्वयोरपि प्रमाणं वाच्यं स्यात्तत्कथमिह नोक्तम् । अत्रोच्यते । पवनस्यामूर्तत्वात्प्रमाणं वक्तुमयुक्तम् । तथा च चरकः । न मानोन्मानता वायोररूपत्वात्तु युज्यत इति । तस्माल्लिंगैरेव समत्वाधिक्यहानयोऽनिलस्य वक्तुं युक्ताः ।

**समधातोरिदं मानं विद्याद्वृद्धिक्षयावतः ॥ ८२ ॥**

समेति । समधातोः समप्रकृतेरिदं मानं विद्यान्नैकदोषाधिकप्रकृतीनां द्विदोषाधिकप्रकृतीनां च । तेषां ह्यत एव यथोक्तादंजलिप्रमाणादिकाद्यथायथं मज्जादीनां वृद्धिक्षयौ विद्यात् ।

अधुना यदुक्तमायुष्कामीयाध्याये शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः । तैश्च तिस्रः प्रकृतय इत्यादि तस्यैव विवरणमाह ।

**शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।**
**यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता॥८३॥**

शुक्रेति । शुक्रं चासृक् चेत्यादिद्वंद्वः । गर्भिणी गर्भमाता तस्या भोज्यचेष्टे आहारविहारावेतदादिषु यो दोषो वातादिरधिकस्तेन प्रकृतिः सप्तधा सप्तप्रकाराऽभिहिता सूत्रस्थाने । य इति जातावेकवचनम् । तेन यो दोषो यौ दोषौ ये दोषा इत्यर्थोऽवतिष्ठते । एकदोषद्विदोषत्रिदोषप्रकृतिषु यथासंख्यमेको दोषो द्वौ दोषौ त्रयो दोषा अधिका इत्यर्थः । ननु समधातोर्वातादीनां समत्वात्कथमिवाधिक्यं स्यात् । ब्रूमः । समधातोरपि समानानां त्रयाणामपि दोषाणां तस्मिन् काले स्वप्रमाणतो यथास्वं तुल्यत्वेनाधिकत्वं भवतीति युक्तं तत्राऽप्याधिक्यम् । अथवा दोषोऽधिक इति बाहुल्येनोक्तं तेन षट्स्वेव प्रकृतिषु दोषाधिकभावो न तु समधाताविति वेद्यम् ।

अधुना वातस्य प्राधान्यं षड्भिः कारणैः प्रदर्श्य वातप्रकृतिं प्रागभिधत्ते ।

**विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।**
**स्वातंत्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥८४॥**

विभुत्वादिति । विभुत्वाद्व्यापित्वात्तथाऽऽशुकारित्वात्तथा बलित्वात् । यथा हि वायुर्व्याप्याशुकारी बली च न तथा पित्तश्लेष्माणौ । तथाऽन्यकोपनात्स्वजातीयापेक्षयाऽन्यौ पित्तश्लेष्माणौ वातेन यथा कोप्येते न ताभ्यां तथाऽयम् । तथा स्वातंत्र्यात्प्रेरकत्वात् । यतो हि नाऽसावन्येन प्रेर्यतेऽतः स्वतंत्रोऽसौ । तथा बहुरोगत्वात् । तथाचोक्तम् । अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः । विंशतिः श्लेष्मजाश्चेति । एवं त्रयाणां दोषाणां मध्येऽनिलः प्रबलः प्रधानम् ।

**प्रायोऽत एव पवनाध्युषिता मनुष्या**
**दोषात्मकाः स्फुटितधूसरकेशगात्राः ।**
**शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टाः**
**सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ८५ ॥**
**अल्पपित्तबलजीवितनिद्राः**
**सन्नसक्तचलजर्जरवाचः ।**
**नास्तिका बहुभुजः सविलासा**
**गीतहासमृगयाकलिलोलाः ॥ ८६॥**
**मधुराम्लपटूष्णसात्म्यकांक्षाः**
**कृशदीर्घाकृतयः सशब्दयाताः ।**
**न दृढा न जितेंद्रिया नचार्या**
**नच कांतादयिता बहुप्रजा वा ॥ ८७ ॥**
**नेत्राणि चैषां खरधूसराणि**
**वृत्तान्यचारूणि मृतोपमानि ।**
**उन्मीलितानीव भवंति सुप्ते**
**शैलद्रुमांस्ते गगनं च यांति ॥ ८८ ॥**
**अधन्या मत्सराध्माताः स्तेनाः प्रोद्बद्धपिंडिकाः ।**
**श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ॥८९॥**

प्राय इति । प्रायोग्रहणं क्वचिद्व्यभिचारार्थम् । अत एवास्मादेव कारणात्पवनाध्युषिता वायुनाऽधिष्ठिता मनुष्याः प्राय एवंरूपा भवंति । कारणानुविधायित्वात्कार्याणाम् । दोषात्मका न तु गुणस्वभावा न शुभस्वभावा भवंति । शुक्रार्तवरूपावस्था आरभ्याऽऽजीवितं पवनाऽध्युषिता मानवाः स्फुटितधूसरकेशगात्राः । स्फुटितानि धूसराणि च केशगात्राणि येषां त एवम् । तथा शीतं द्विषंतीति शीतद्विषः । उष्णाभिलाषित्वात् । तथा चला धृत्यादयो गत्यंता येषां ते तथोक्ताः । तथाऽतिशयेन बहुः प्रलापः संभाषणं येषां त एवम् । वसंततिलका वृत्तम् । अल्पाः पित्तादयो निद्रांता येषां त एवम् । तथा सन्ना सक्ता चला जर्जरा वाग्येषां त एवम् । केषांचित्सन्नाऽवसादं नीता केषांचित्सक्ता भाषणे विलंब्य प्रवृत्ता केषांचिच्चला केषांचिज्जर्जरा भिन्नकांस्यस्वनसदृशी वागिति । तथा नास्ति परलोक इत्येवं मतिर्येषां ते नास्तिकाः । अस्तिनास्तिदिष्टंमतिरिति ठक् । तथा बहुभुजोऽनल्पाशनाः । तथा सविलासाः सलीलाः । तथा गीतहासादिलोलास्तत्प्रियाः । स्वागता वृत्तम् । तथा मधुराम्लपटूष्णसात्म्या मधुराद्यभिलाषिणश्च । कृशाश्च ते दीर्घाकृतयश्च कृशदीर्घाकाराः । तथा सशब्दं यातं गमनं येषां ते सशब्दयाताः । न दृढा न दृढशरीराः । न जितेंद्रियाः । न चाऽऽर्या असंतः । कांतानां स्त्रीणां न च दयिता अभिमताः । न च बहुप्रजा अपितु स्वल्पसंततयः । यावंतः शेषं पूर्ववत्स्यादौपच्छंदसिकं वदंति

संतः । एषां च वातप्रकृतीनां नेत्राणि खराणि परुषाणि तथा धूसराणि पांसुनेवावकीर्णानि । वृत्तानि वर्तुलानि । अचारूणि मृतोपमानि च । तथा सुप्ते स्वप्ने उन्मीलितानीवोद्घाटितानीव भवंति । ते वातप्रकृतयः स्वप्ने सति शैलद्रुमान् गगनं च गच्छंति । इंद्रवज्रा वृत्तम् । तथा धन्या अभव्याः । मत्सरेणाध्माता द्वेषपूर्णाः । तथा स्तेनाश्चोराः । प्रोद्बद्धपिंडिका जंघायाः पश्चिमाद्भागात्प्रकर्षेणोन्नताः पिंडिका एषां त एवम् । अनूकं स्वभावः स्वरूपचेष्टानुकरणम् । श्वादीनामिवानूकं येषां वातिकानां त एवम् । वातिका इति भूम्नि मत्वर्थीयष्ठक् ।

अधुना पित्तप्रकृतिलक्षणं प्रस्तौति ।

**पित्तं वह्निर्वह्निजं वा यदस्मा-**
**त्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः ।**
**गौरोष्णांगस्ताम्रहस्तांऽघ्रिवक्त्रः**
**शूरो मानी पिंगकेशोऽल्परोमा ॥ ९० ॥**
**दयितमाल्यविलेपनमंडनः**
**सुचरितः शुचिराश्रितवत्सलः ।**
**विभवसाहसबुद्धिबलान्वितो**
**भवति भीषुगतिर्द्विषतामपि ॥ ९१ ॥**
**मेधावी प्रशिथिलसंधिबंधमांसो**
**नारीणामनभिमतोऽल्पशुक्रकामः ।**
**आवासः पलिततरंगनीलिकानां**
**भुंक्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ९२ ॥**
**धर्मद्वेषी स्वेदनः पूतिगंधि-**
**र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।**
**सुप्तः पश्येत्कर्णिकारान्पलाशान्**
**दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९३ ॥**
**तनूनि पिंगानि चलानि चैषां**
**तन्वल्पपक्ष्माणि हिमप्रियाणि ।**
**क्रोधेन मद्येन रवेश्च भासा**
**रागं व्रजंत्याशु विलोचनानि ॥ ९४ ॥**
**मध्यायुषो मध्यबलाः पंडिताः क्लेशभीरवः ।**
**व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ९५ ॥**

पित्तमिति । धन्वंतरिमतेन पित्तमेव वह्निः पाकादिकर्मकरणात् । अथवा वह्निजं वह्नेर्जातं पित्तमग्न्याधारत्वात् । ततो जातं किट्टरूपतया असृजः किट्टं पित्तम् । यदस्मायतश्चैवमतो हेतोः पित्ताधिकः पुरुषस्तत्रितृष्णाबुभुक्षो भवति । तथाविधात्कारणादुत्पन्नत्वादग्धात् रसधातुश्च तस्य द्रागेव शुष्यतीति भावः । तथा गौरोष्णांगश्च । तथा ताम्रवर्णं हस्तांघ्रिवक्त्रं यस्य स एवम् । तथा शूरो मानी च । तथा कपिलकेशोऽल्परोमा च । शालिनी वृत्तम् । दयितानि माल्यादीनि यस्य स एवम् । तथा सुचरितः शोभनचेष्टितः । तथा शुचिः कायवाङ्मनोव्यापारैर्मलिनैरसंस्पृष्टः । आश्रितानां वत्सलः प्रियकृत् विभवादियुक्तश्च । तथा भीषु भयेषु द्विषतामपि गतिः शरण्यवान्भवति । अपिशब्दात्सुहृदां मध्यस्थानां किमु स गतिर्न भवतीति द्योतयति । द्रुतविलंबितं वृत्तम् । तथा मेधावी । अत्र प्रशंसार्थे अस्मायामेधास्रज इति विनिः । संधिबंधाश्च मांसानि च तानि प्रशिथिलानि यस्य स एवम् । तथा स्त्रीणामनभीष्टः । अल्पौ शुक्रकामौ यस्य सः । पलितादीनामावासस्तान्यस्य बहूनि संतीत्यर्थः । स च मधुराद्यन्नं भुंक्ते । प्रहर्षिणी वृत्तम् । धर्मं द्वेष्टीत्याभीक्ष्ण्ये णिनिः । स्विद्यतीति स्वेदनः । पूतिर्गंधो यस्य स पूतिगंधिः । गंधस्येदित्यादिना इदादेशः । भूरयः प्रभूता उच्चारादयो यस्य स एवम् । स च पैत्तिकः सुप्तः सन् कर्णिकारादीन् पश्येत् । शालिनी वृत्तम् । एषां च पैत्तिकानां विलोचनानि तनुत्वादिगुणयुक्तानि भवंति तानि च क्रोधाद्यैर्द्रागेव लौहित्यं यांति । उपजातिर्वृत्तम् । ते च पैत्तिका मध्यायुष्यादियुक्ता भवंति । व्याघ्रादीनामिवानूकं येषां त एवम् ।

अथ श्लेष्मप्रकृतिलक्षणार्थमाह ।

**श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो**
**गूढस्निग्धश्लिष्टसंध्यस्थिमांसः ।**
**क्षुत्तृड्दुःखक्लेशधर्मैरतप्तो**
**बुद्ध्या युक्तः सात्विकः सत्यसंधः ॥ ९६ ॥**
**प्रियंगुदूर्वाशरकांडशस्त्र-**
**गोरोचनापद्मसुवर्णवर्णः ।**
**प्रलंबबाहुः पृथुपीनवक्षा**
**महाललाटो घननीलकेशः ॥ ९७ ॥**
**मृद्वंगः समसुविभक्तचारुवर्ष्मा**
**बह्वोजोरतिरसशुक्रपुत्रभृत्यः ।**
**धर्मात्मा वदति न निष्ठुरं च जातु**
**प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ ९८ ॥**
**समदद्विरदेंद्रतुल्ययातो**
**जलदांभोधिमृदंगसिंहघोषः ।**
**स्मृतिमानभियोगवान् विनीतो**
**न च बाल्येऽप्यतिरोदनो न लोलः ॥ ९९ ॥**
**तिक्तं कषायं कटुकोष्णरूक्ष-**
**मल्पं स भुंक्ते बलवांस्तथाऽपि ।**
**रक्तांतसुस्निग्धविशालदीर्घ-**
**सुव्यक्तशुक्लासितपक्ष्मलाक्षः ॥ १०० ॥**
**अल्पव्याहारक्रोधपानाशनेर्ष्यः**
**प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।**
**श्राद्धो गंभीरः स्थूललक्षः क्षमावा-**
**नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ १०१ ॥**

**ऋजुर्विपश्चित्सुभगः सलज्जो**
**भक्तो गुरूणां स्थिरसौहृदश्च ।**
**स्वप्ने सपद्मान्सविहंगमालां-**
**स्तोयाशयान् पश्यति तोयदांश्च ॥ १०२ ॥**
**ब्रह्मरुद्रेंद्रवरुणतार्क्ष्यहंसगजाधिपैः ।**
**श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाऽश्वगोवृषैः॥१०३॥**

श्लेष्मेति । यस्माच्छ्लेष्मा सोमस्तेन हेतुना श्लेष्मलो नरः सोम्यो भवति । कारणानुविधायित्वात्कार्याणाम् । सोम इव सोम्यः । शाखादित्वाद्यत् । तथा गूढस्निग्धश्लिष्टानि संध्यस्थिमांसानि यस्य स एवम् । तथा क्षुदादिभिरतप्तोऽक्षोभितो भवति । तथा बुद्ध्यान्वितः प्रशस्तसत्वश्च । सात्विकः सत्वप्रधानः । तथा सत्यं संदधाति प्रतिजानीत इति सत्यसंधः । आतश्चोपसर्ग इत्यङ् । शालिनीवृत्तम् । प्रियंग्वादितुल्येन वर्णेनैकैकेन युक्तः । कश्चित्प्रियंगुसमानवर्णः कश्चिद्दूर्वासदृशवर्णः कश्चिच्छरस्तंबसदृशवर्णः कश्चिच्छस्त्रतुल्यवर्णः कश्चिद्गोरोचनातुल्यवर्णः कश्चित्पद्मसमानवर्णः कश्चित्सुवर्णसदृशवर्णः । तथा प्रलंबबाहुर्दीर्घभुजः । तथा विस्तीर्णपीवरवक्षाः । तथा महल्ललाटमलिकं यस्य स तथा । तथा घननीलकेशः । उपजातिर्वृत्तम् । मृद्वंगः कोमलावयवः । समः सुष्ठु विभक्तो विभक्तावयवश्चारुर्देहो यस्य स एवम् । बहवस्तेजोरतिरसादयो यस्य स एवम् । तथा धर्मस्वभावः । निष्ठुरं न कदाचिद्वदति । प्रच्छन्नं गूढं कृत्वा वैरं दृढं चिरं वहति नतु शिथिलयति । प्रहर्षिणी वृत्तम् । समदस्य द्विरदेंद्रस्य तुल्यं यातं गमनं यस्य स एवम् । तथा जलदादिसदृशशब्दः । तथा प्रशस्तस्मृतिः शोभनाभियोगी विनयी च भवति । बाल्येऽपि बालत्वेऽपि नाऽतिरोदनो न च लोलुपः । औपच्छंदसिकं वृत्तम् । स चान्नं तिक्तादिरसयुक्तं बलक्षेपकं भुंक्ते तथाऽल्पमपि भुंक्ते तथाऽपि स्वभावाद्बली भवति । रक्तावंतौ ययोस्ते रक्तांते तथा सुस्निग्धे विशाले दीर्घे च तथा सुव्यक्तौ शुक्लासितौ ययोस्ते सुव्यक्तशुक्लासिते तथा पक्ष्मले एवंभूते अक्षिणी यस्य स एवम् । इंद्रवज्रा वृत्तम् । अल्पा व्याहारादयो यस्य स एवम् । व्याहारो भाषणम् । पानं पानीयादि । अशनं भोजनम् । ईहा कायिकचेष्टा । प्राज्ये प्रभूते आयुर्वित्ते यस्य स एवम् । दीर्घदर्शी भावि कार्यं पश्यतीदं कुर्वत इदमवश्यं संपद्यत इति । वदान्यो वल्गुभाषी दाता च । श्राद्धो दानादौ श्रद्धावान् । गंभीरो महाचित्तः । स्थूललक्षो भूरिदाता । क्षमावान् क्षांतियुक्तः । आर्यः सज्जनः । निद्रालुर्बहुनिद्रः । दीर्घसूत्रश्चिरकारी । कृतं जानातीति कृतज्ञः । वैश्वदेवी वृत्तम् । ऋजुरकुटिलचित्तः । विपश्चित्पंडितः । सुभगो जनप्रियः । सुष्ठु लज्जत इति सुलज्जः । गुरूणां पित्रादीनां भक्तः सेवकः । तथा स्थिरं दृढं सौहृदं मैत्री यस्य स एवम् । स्वप्ने तोयाशयांस्तडागादीन् सजलजान् पक्षिपंक्तियुक्तांश्च पश्यति । तोयदांश्च पश्यति । उपजातिर्वृत्तम् । ब्रह्मादिभिः श्लेष्मप्रकृतयः समानाः सिंहादिभिश्च । तार्क्ष्यो गरुडः । गजाधिप ऐरावतः ।

एवं पृथग्वातादिप्रकृतीस्तिस्रोऽभिधाय द्वंद्वसर्वदोषप्रकृतिलक्षणाभिधित्सयेदमाह ।

**प्रकृतीर्द्वयसर्वोत्था द्वंद्वसर्वगुणोदये ।**

प्रकृतीरिति । द्वयात्संसर्गादुत्पन्नास्तिस्रः प्रकृतयः सर्वोत्था सर्वदोषोद्भूतैका प्रकृतिरेवं प्रकृतयो द्वयसर्वोत्थाश्चतस्रः । गुणशब्दोऽत्र धर्मवचनो लिंगवचनो वा । द्वंद्वशब्देन दोषद्वयं लक्ष्यते । सर्वशब्देन दोषत्रयम् । द्वंद्वं च सर्वे च द्वंद्वसर्वे तेषां गुणा दोषद्वयदोषत्रयाणां धर्मा लिंगानि वा तेषामुदयः प्रादुर्भावो द्वंद्वसर्वगुणोदयस्तस्मिन् द्वंद्वसर्वगुणोदये सति द्वयसर्वोत्थाः प्रकृतीर्विदेदादिशेत् । द्वयं च सर्वे च द्वयसर्वे तेभ्य उत्थ उत्थानं यासां ताः । एवं द्वंद्वदोषगुणोदये द्वंद्वोत्थाः प्रकृतीर्विदेत् । सर्वदोषगुणोदये सर्वोत्थां प्रकृतिं वदेत् । उत्थ इत्युत्पूर्वोत्तिष्ठतेः सुपिस्थ इति योगविभागात्कः । उदःस्थास्तंभोः पूर्वस्येति पूर्वसवर्णादेशः । अत्राद्यास्त्रयो नित्यातुरा दोषानुशयितशरीरत्वात् । विशेषतश्च द्वंद्वप्रकृतयः । तेषु हि गुणमिश्रविकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः ।

एवं वातादिप्रकृतीर्निर्दिश्य सत्वादिप्रकृतीर्निर्दिदिक्षुराह ।

**शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीर्वदेत् ॥१०४॥**

शौचेति । चशब्दो भिन्नक्रमो गुणमयीश्चेत्यत्र द्रष्टव्यः । एवं वातादिप्रकृतिवत्पृथग्द्वंद्वसर्वोत्थाः शौचास्तिक्यादिभिः सत्वादिगुणैः सप्त सत्वादिगुणमयीश्च प्रकृतीर्वदेत् । आदिग्रहणात् शुक्लधर्मरुच्यादिभिः सत्वादीनां गुणैर्यथायथं सत्वादिप्रकृतीर्वातादिप्रकृतयः परस्परमनुरुध्यंते सत्वादिप्रकृतयश्च वातादिप्रकृतीरनुरुध्यंते । एवं वातादिप्रकृतयः सप्त सत्वादिप्रकृतयोऽपि सप्तैव । जातिकुलदेशकालवयोबलप्रकृत्यात्मसंश्रयाश्च सप्तैव । तथा हि । दृश्यंते पुरुषाणां जात्यादिनियतास्तेस्ते भावविशेषाः परस्परविलक्षणाः सत्वाद्यसंख्येयभेदवशाच्च रूपस्वरचरितानुकरणमप्यनूकशब्दवाच्यमसंख्यभेदं भवति । सत्वाद्यावेशस्त्वनंतरजन्माभ्यासवासनया जन्यते । तस्माद्देवमानुषतिर्यक्प्रेतनारकाणां तद्विशेषाणां च यथायथमेवानूकं पुरुषस्यान्वीक्षेत । यस्माच्छरीरं सत्वादीननुरुध्यते सत्वादयोऽपि शरीरम् । प्रकृतिविभागश्चायं तदनुरूपचिकित्साप्रवृत्तये वैद्यस्योपयुज्यते । तत्राऽद्यास्त्रयो नित्यातुराः । दोषानुशयितशरीरत्वात् । विशेषतश्च द्वंद्वप्रकृतयः । तस्माद्विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत् । समधातुप्रकृतिस्तु सर्वरसेन सात्म्येनोपचरणीयः । तथा च मुनिः । समसर्वरसं सात्म्यं समधातोः प्रशस्यत इति ।

एवं वातादिप्रकृतीः सत्वादिप्रकृतीश्च परस्परानुरोधिनीर्निर्दिश्य तयोर्ज्ञानार्थमाह ।

**वयस्त्वाषोडशाद्बालं तत्र धात्विंद्रियौजसाम् ।**

**वृद्धिरासप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥**

वय इति । कालकृता शरीरावस्था वयस्तच्च त्रिधा बालमध्यवृद्धभेदेनेत्याह । वयः पुनराषोडशाद्वर्षात्षोडशं वर्षं यावद्बालम्। तदपि त्रिविधं क्षीरक्षीरान्नान्नवृत्त्या । तत्र बाले वयसि धातूनां रसादीनामिंद्रियाणां चक्षुरादीनां तथा सर्वधात्वाप्यायकस्यौजसो वृद्धिः । श्लेष्माधिक्याच्च बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवंति । आसप्ततेर्मध्यं वयः । आङत्र मर्यादायां नाभिविधौ । ततश्चैकोनसप्ततिं यावन्मध्यं वयः । तदपि त्रिविधम्। यौवनं संपूर्णत्वमपरिहानिः । तस्मिन् पित्तोद्रेकस्तेन दीप्ताग्निना प्रज्ञापरिपाको व्यवसायश्चेति भवति । तत्राऽऽत्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विंद्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसंपूर्णत्वम् । अतः परमपरिहानिः । तत्रेत्यादि । तस्मिन्मध्ये वयसि धात्वादीनामवृद्धिरवर्धनं भवति । परं क्षयः । परमेकोनसप्ततेराजीवितं यावद्धात्विंद्रियौजसां क्रमेण क्षयः । तथा बलवीर्यपौरुषवचनस्मरणविज्ञानप्रश्रयगुणानां च । तथा वलीपलितकासश्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्टं सीदति । तस्मिन्मारुतोद्रेकस्तेन श्लथासारमांससंध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः श्लेष्मसिंघाणकोदीरणं धातुक्षयश्चेति ।

**स्वं स्वं हस्तत्रयं सार्धं वपुः पात्रं सुखायुषोः ।**

स्वमिति । स्वंस्वमात्मीयमात्मीयं हस्तत्रयं सार्धं प्रमाणतो यद्वपुः शरीरं तत्सुखायुषोः पात्रं भाजनम् ।

**नच यद्युक्तमुद्रिक्तैरष्टाभिर्निंदितैर्निजैः ॥ १०६ ॥**
**अरोमशासितस्थूलदीर्घत्वैः सविपर्ययैः ।**

न चेति । एवंभूतमपि यद्वपुरुद्रिक्तैरधिकैर्निमित्तैर्निंदितैरप्रशस्तैर्निजैः सहजैरष्टाभिर्न युक्तम् । कैः । अरोमशादिभिः । तेनारोमशं यद्वपुस्तत्सुखायुषोर्न पात्रम् । तथा यदतिरोमशं तच्च सुखायुषोर्न पात्रम् । असितादिष्वप्येवं योज्यम् । एवमीषद्रोमादियुक्तं यद्वपुर्हस्तत्रयं सार्धं तत्सुखायुषोः पात्रम् ।

**सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थिराः कचाः१०७**
**ललाटमुन्नतं श्लिष्टशंखमर्धेंदुसंनिभम् ।**
**कर्णौ नीचोन्नतौ पश्चान्महांतौ श्लिष्टमांसलौ॥१०८॥**
**नेत्रे व्यक्तासितसिते सुबद्धे घनपक्ष्मणी ।**
**उन्नताग्रा महोच्छ्वासा पीनर्ज्वीनासिका समा॥१०९॥**
**ओष्ठौ रक्तावनुद्वृत्तौ महत्यौ नोल्बणे हनू ।**
**महदास्यं घना दंताः स्निग्धाः श्लक्ष्णाः सिताः समाः**
**जिह्वा रक्तायता तन्वी मांसलं चिबुकं महत् ।**
**ग्रीवा ह्रस्वा घना वृत्ता स्कंधावुन्नतपीवरौ ॥१११॥**
**उदरं दक्षिणावर्तगूढनाभि समुन्नतम् ।**
**तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥ ११२ ॥**
**दीर्घाच्छिद्रांगुलि महत्पाणिपादं प्रतिष्ठितम् ।**

सुस्निग्धा इति । केशाः सुस्निग्धादिगुणयुक्ताः श्रेष्ठा इत्यनुक्तमप्यर्थाद्गम्यते । तथाचैवंगुणविशिष्टैरेतैर्युक्तं वपुः सुखायुषोः पात्रं भवति । एवं ललाटादिष्वपि चिंत्यम् । ललाटमुन्नतमूर्ध्वं गतम् । तथा श्लिष्टावुल्बणौ शंखौ यस्मिंस्तदेवम् । तथा अर्धेंदुसन्निभमर्धचंद्राकारम् । कर्णौ नीचोन्नतौ । अधो नीचौ ह्रस्वावूर्ध्वमुन्नतौ पश्चान्महांतौ विस्तीर्णौ तथा श्लिष्टौ च तौ मांसलौ च । श्लिष्टौ रम्यौ मांसलावुपचितमांसौ । नेत्रे व्यक्तौ स्फुटावसितसितौ वर्णौ ययोस्त एवम् । कृष्णो भागः कृष्ण एव शुक्लः शुक्ल एव न वर्णांतरव्यामिश्रे । तथा सुबद्धे सुसंधिनी तथा घने संहते पक्ष्मणी ययोस्त एवम् । नासिका घ्राणमुन्नतमग्रं यस्याः सैवम् । तथा महानुच्छ्वासो यस्याः सा । तथा पीना अशिथिला । तथा ऋजुरवक्रा । तथा समा अनिम्नोन्नता । ओष्ठौ रक्तौ तथाऽनुद्वृत्तौ बहिरनिर्गतौ । हनू महत्यौ नोल्बणे नोन्नते । हनुशब्दस्य स्त्रीत्वमत्र चिंत्यम् । आस्यं मुखं महत् । दंता द्विजा घना अविरलाः । श्लक्ष्णाः कोमलस्पर्शाः । स्निग्धाः स्निग्धरुचयः । सिताः शुक्लाः । समाः समपंक्तयः । जिह्वा रसना रक्ता । तथा आयता दीर्घा । तथा तन्वी न स्थूला । चिबुकं मांसलं महच्च । ग्रीवा शिरोधरा ह्रस्वा अदीर्घा । घना निबिडा । वृत्ता वर्तुला च । स्कंधावंसावुन्नतौ च तौ पीवरौ च । उदरमित्यादि । दक्षिण आवर्तो यस्या नाभेः सा दक्षिणावर्ता गूढा निम्ना नाभिर्यस्य तद्दक्षिणावर्तगूढनाभि जठरम् । तथा समुन्नतं सम्यगुन्नतं श्रेष्ठत्वेनोन्नतम् । तन्वित्यादि । तनवो रक्ता उन्नता नखा यस्य तदेवंभूतं पाणिपादं प्रतिष्ठितं प्रशस्तं भवति । तथा स्निग्धं स्निग्धच्छायम् । तथा आताम्रं च तन्मांसलं चाऽऽताम्रमांसलम् । समंतात्ताम्रमाताम्रम् । मांसलमुपचितमांसम् । तथा दीर्घा आयता अच्छिद्राः परस्परसंश्लिष्टा अंगुलयो यस्य तदेवम् । तथा महद्विस्तीर्णम् ।

**गूढवंशं बृहत्पृष्ठं निगूढा संधयो दृढाः ॥ ११३ ॥**
**धीरः स्वरोऽनुनादी च वर्णः स्निग्धः स्थिरप्रभः।**
**स्वभावजं स्थिरं सत्वमविकारि विपत्स्वपि॥११४॥**

गूढेति । तथा गूढोऽदृश्यो वंशो यस्य तदेवंविधं पृष्ठं प्रशस्तम् । तथा बृहद्विस्तीर्णम् । संधयो निगूढा अंतर्गता दृढा अत्रुटनशीलाः । धीरोऽकृपणः । स्वरः शब्दोऽनुनादी घंटादिवदनुरणनन्यायेन । वर्णः स्निग्धोऽरूक्षः । स्थिरा प्रभा कांतिर्यस्य स एवं प्रशस्तः । सत्वं स्वभावाज्जातं स्वभावजम् । अनाहार्यं प्राकृतमबाह्यहेतुजं न मद्यादिहेतुजम् । स्थिरमहार्यम् । अत एव विपत्स्वप्यविकार्यक्षोभि । अपिशब्दात् किमुत संपत्सु न स्यादेवंविधं सत्वं स्वभावजमहार्यं च ।

**उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ।**
**आयामज्ञानविज्ञानैर्वर्धमानं शनैः शुभम् ॥ ११५ ॥**

उत्तरेति । क्षेत्रमिव क्षेत्रं शोभनं क्षेत्रं सुक्षेत्रम् । तत्र शरीरस्य यथावत्प्रशस्तं प्रमाणलक्षणं स्वं स्वं हस्तत्रयं सार्धमित्यादिग्रंथोक्तम् । तथा तदवयवानां ललाटादीनां यथावत्प्रशस्तं गुणलक्षणं

ललाटमुन्नतमित्यादिग्रंथोक्तम् । तथा प्रशस्तं सत्वलक्षणं स्वभावजं स्थिरमित्यादिग्रंथोक्तम् । उत्तरोत्तरं सुक्षेत्रं यस्मिन् वपुषि तदुत्तरोत्तरसुक्षेत्रं प्रशस्तलक्षणभूमिकं वपुः शुभमित्यत्र योज्यम् । एतदुक्तं भवति । यथोक्तप्रमाणं सुक्षेत्रं वपुः शुभम् । ततोऽपि यथोक्तलक्षणललाटाद्यवयवं सुक्षेत्रं वपुः शुभतरम् । ततोऽपि यथोक्तसत्वलक्षणगुणं सुक्षेत्रं वपुः शुभतममित्युत्तरोत्तरं सुक्षेत्रशब्दस्यार्थः । तथा गर्भादिनीरुजम् । गर्भ आदिर्येषां बालयौवनादीनां वयोवस्थाविशेषाणां त एवम् । गर्भादयो नीरुजा यस्य वपुषस्तद्गर्भादिनीरुजं वपुः शुभम् । आयामेत्यादि । आयामो दैर्घ्यम् । ज्ञानं लौकिको व्यवहारलेशः । विज्ञानं विशिष्टं ज्ञानं शास्त्राभ्यासादिसमुत्थितं परमार्थावबोधपर्यंतम् । तैर्यद्वपुः शनैर्वर्धमानं वृद्धिमाप्नुवन्न सहसा तच्छुभम् ।

**इति सर्वगुणोपेते शरीरे शरदां शतम् ।**
**आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः ॥११६॥**

इतीति । इत्येवं यथोक्तेन प्रकारेण । सर्वगुणैरुपेते युक्ते शरीरे शरदां समानां शतमायुर्जीवितम् । तथैश्वर्यम् । तथेष्टाः शुभा ये केचिद्भावास्ते तत्र तथाभूते देहे सर्वे प्रतिष्ठिता व्यवस्थिता वर्षशतानुबंधिनः ।

एवं वपुषः प्रशस्तलक्षणमुक्त्वा बलप्रमाणज्ञानार्थमाह ।

**त्वग्रक्तादीनि सत्वांतान्यग्राण्यष्टौ यथोत्तरम् ।**
**बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ॥ ११७॥**
**सारैरुपेतः सर्वैः स्यात्परं गौरवसंयुतः ।**
**सर्वारंभेषु चाशावान्सहिष्णुः सन्मतिः स्थिरः॥११८**

त्वगिति । त्वग्रक्तादीनि सत्वांतानि देहिनां साराणि यथोत्तरमग्राणि उत्तरोत्तरश्रेष्ठान्युक्तानि । तेन त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्वानीति बोध्यम् । एवं वर्षशतमायुःप्रमाणम् । अस्मिन् काले संति च पुनः स्वकर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्यास्तेषां यथोक्तैः प्रकृतिविशेषैरायुःप्रमाणमुपलभ्य वयस्त्रिधा विभजेदिति । किमर्थं साराण्युक्तानि । बलप्रमाणज्ञानार्थम् । तथा च देहमात्रदर्शनादेव भिषङ् मुह्येत । अयमुपचयेन महाशरीरत्वाद्बलवानयं कृशत्वादल्पशरीरत्वादल्पबल इति । तच्चोभयमप्यन्यथा दृष्टं गजसिंहे । सर्वैरष्टभिरेतैः सारैर्युक्तः परमतिशयेन गौरवेण संयुतः स्यात् । सर्वेत्यादि । सर्वारंभेष्वशेषचिकीर्षितकार्येष्वाशावान्स्यात् । अस्मात्कर्तव्यात् कृतादिदमिदं संपद्यत इत्याशाशब्दार्थः । तथा सहिष्णुः सहनशीलः । अत एव शारीरमानसैर्दुःखैर्नासावभिभूयत इति यावत् । तथा सन्मतिः सुधीः । तथा स्थिरः कर्तव्येषु स्थिरबुद्धिः । मुनिना च लक्षणमुक्तम् । तद्यथा । त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्वानि । तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगंभीरसुकुमारलोमा सप्रभेव च त्वक्साराणां सासारता।सुखसौभाग्यैश्वर्योपभोगबुद्धिविद्यारोग्यप्रहर्षण्यायुष्याणि त्वग्माचष्टे। कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादतलनखललाटमेहनं च स्निग्धं रक्तं श्रीमद्भ्राजिष्णुरक्तसाराणां सासारता । सुखमुद्ग्रतां मेधां मनस्वित्वं सौकुमार्यमनतिबलमक्लेशसहिष्णुतां चाचष्टे । शंखललाटकृकाटिकाऽक्षिगंडहनुग्रीवास्कंधोदरकक्षवक्षःकक्ष्यापाणिपादसंधयः स्थिरशुभमांसोपचिता मांससाराणां सासारता । क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे । वर्णस्वरनेत्रकेशलोमनखदंतौष्ठमूत्रपुरीषेषु विशेषेण स्नेहो मेदःसाराणां सासारता । वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतां चाचष्टे । पार्ष्णिगुल्फजानूरुजत्रुचिबुकशिरःपर्वस्थूलास्थिनखदंताश्चास्थिसाराः । ते महोत्साहाः क्रियावंतः क्लेशसहाः सारस्थिरशरीरा भवंत्यायुष्मंतश्च । तन्वंगा बलवंतश्च स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसंधयश्च मज्जसाराः । ते दीर्घायुषो बलवंतः श्रुतविज्ञानवित्तापत्या सन्मानभाजश्च सदा भवंति । सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंमतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिजश्च शुक्रसाराः । ते स्त्रीप्रियोपभोगा बलवंतः । सुखैश्वर्यारोग्यवित्तसन्मानापत्यभाजः । स्मृतिमंतो भक्तिमंतः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रांतयोधिनस्त्यक्तविषादाः सुव्यवस्थितगतिगंभीरबुद्धिचेतसः कल्याणाभिनिवेशिनश्च सत्वसाराः । तेषां स्वलक्षणैरेव गुणा व्याख्याताः । तत्र सर्वैः सारैरुपेताः पुरुषा भवंत्यतिबलाः । परमगौरवयुक्ताः क्लेशसहाः सर्वारंभेष्वात्मनि जातप्रत्याशाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगंभीरमहास्वराः सुखैश्वर्यवित्तोपभोगसन्मानभाजो मंदजरसो मंदविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च भवंति । अतो विपरीतास्त्वसाराः । संग्रहे च प्रमाणमप्युक्तम् । यथा । स्वांगुलैः पादांगुष्ठप्रदेशिन्यौ द्व्यंगुलायते । तिस्रोऽन्याः क्रमेणोत्तरोत्तरं पंचमभागहीनास्तन्नखहीना वा । चतुरंगुलायताः पृथक्प्रपदपादतलपार्ष्णयः षट्पंचचतुरंगुलविस्तृताश्च । चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जंघामध्यं च । चतुरंगुलोत्सेधः पादः । अष्टादशायामा जंघा ऊरुश्च । चतुरंगुलं जानु । त्रिंशदंगुलपरिणाह ऊरुः । षडायामौ मुष्कमेढ्रावष्टपंचपरिणाहौ । षोडशविस्तारा कटी पंचाशत्परिणाहा । दशांगुलं बस्तिशिरः । द्वादशांगुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे द्वादशोत्सेधत्रिकम् । अष्टादशोत्सेधं पृष्ठम् । द्वादशकं स्तनांतरम् । द्व्यंगुलः स्तनपर्यंतः । चतुर्विंशत्यंगुलविशालं द्वादशोत्सेधमुरः । द्व्यंगुलं हृदयम् । अष्टकौ स्कंधौ कक्षे च । षट्कावंसौ । षोडशकौ प्रबाहू । पंचदशकौ प्रपाणी । द्वादशांगुलौ पाणी । तत्राऽपि पंचांगुला मध्यमा । ततोऽर्धांगुलहीने प्रदेशिन्यनामिके । सार्धत्र्यंगुलौ कनिष्ठिकांगुष्ठौ । चतुरंकोत्सेधा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम् । पंचांगुलमास्यम् । चतुरंगुलं पृथक् चिबुकौष्ठनासादृष्ट्यंतरकर्णललाटम् । त्रिभागांगुलविस्तारा नासापुटमर्यादा । द्व्यंगुलायतमंगुष्ठोदरविस्तृतं नेत्रम् ।

तत्र शुक्लतृतीयांशः कृष्णः। कृष्णान्नवमांशा मसूरदलमात्रा दृष्टिः। षडंगुलोत्सेधं द्वात्रिंशत्परिणाहं शिर इति। सर्वं पुनः शरीरमंगुलानि चतुरशीतिः। तदायामविस्तारसमं समुच्यते। तत्र यथोक्तपरिमाणमिष्टमनिष्टं हीनमधिकं वेति।

सत्वादिप्रकृतीनां तिसृणां कथं सुखदुःखानुभवः स्यादित्याह।

**अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते।**
**सत्ववांस्तप्यमानस्तु राजसो नैव तामसः॥ ११९॥**

अनुत्सेकमिति। अनुत्सेकं कृत्वा अभिमानं हित्वा सत्ववान् पुरुषः सुखं सेवतेऽनुभवति। अदैन्यमकार्पण्यं हित्वा दुःखं सेवतेऽनुभवति। तप्यमानस्त्विति। तुर्व्यतिरेके भिन्नक्रमे। राजसः पुनः पुरुषः तप्यमानोऽहमेवामुना प्रकृष्टेनानन्यसाधारणेन सुखेन सुखीत्येवं सुखं सेवते। अहंकाराक्रांतमानसोऽहमेवेदं दुःखं सोढुं शक्त इत्येवं राजसो नरो दुःखमनुभवति। तामसः पुनः पुरुषो नैव सुखं सेवते न दुःखमत्यंतमूढत्वात्। नासौ सुखेन सुखी। न च दुःखेन दुःखी। प्राप्तत्वतिमदो यथा पुरुषः। एवं द्वंद्वप्रकृतिरपि सुखं न सेवते नाऽपि दुःखमत्यंतमूढत्वात्। समसत्वादिप्रकृतिस्त्वनुत्सिक्तोऽदीनः सन् सुखदुःखे सेवते।

इदानीं प्रधानफलदायि यत्प्रधानं प्रशस्तं लक्षणं वपुषस्तद्दर्शयितुमाह।

**दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः।**
**रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गुणः॥ १२०॥**

दानेति। दानं धनादित्यागः। तच्छीलयत्यभ्यस्यति दानशीलः। शीलिकामीत्यादिना णः। दया दीनेष्वभ्युपपत्तिः। मैत्री सर्वसत्वानामात्मभावनम्। न केवलं पूर्वोक्तं स्वं स्वं हस्तमित्यादि वर्धमानं शनैरित्येतत्पर्यंतं यल्लक्षणं तच्छरीरस्याऽऽयुर्वृद्ध्यादिहेतुः। यावदयं दानशीलादिगुणो मैत्र्यवसानः पुण्यायुर्वृद्धिकृद्गुणः। दानादयश्च यथासंभवं केचित्पुण्यकृतः केचिदायुर्वृद्धिकृतः केचिदुभयकृतश्च। अन्येभ्यश्च महापुरुषलक्षणेभ्योऽस्यैव गुणस्य ज्यायस्त्वं प्रतिपादयता शास्त्रकृताऽध्यायावसाने ग्रंथस्यास्य निर्देशः कृत इति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तकृतायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां शारीरस्थाने तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।

अंगविभागादनंतरं मर्मविभागाख्यः शारीरः प्रक्रम्यते। मर्मणामंगाश्रितत्वात्। यतो मर्माण्यंगप्रत्यंगसमाश्रितान्यतस्तत्रैव व्याख्यातुं युक्तानि। बहुवक्तव्यत्वात्पृथगुच्यंते। तस्मादस्यैवाध्यायस्य प्रारंभो युक्त इत्याह।

**अथाऽतो मर्मविभागं शारीरं व्याख्यास्यामः।**

म्रियतेऽस्मिन्नंग उपहत इति मर्म। मर्मणां विभागो मर्मविभागः सोऽस्मिन्नध्यायेऽस्तीति मर्मविभागः। अर्शआदित्वादच्। शारीरस्थानप्रतिबद्धत्वाच्च शारीरः। शेषं पूर्ववत्।

सुखग्रहणाद्यर्थं च पूर्वं मर्मणां संख्यां वक्तुमाह।

**सप्तोत्तरं मर्मशतम्**

सप्तोत्तराण्यधिकानि यस्मिन् शते तदेवम्।

**तेषामेकादशादिशेत्।**
**पृथक्सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि॥ १॥**
**पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च।**

तेषामिति। तेषां मर्मणां मध्ये पृथक् प्रत्येकं कृत्वा सक्थ्नोर्द्वयोर्बाह्वोश्च द्वयोरेकादशादिशेत् एवं चतुश्चत्वारिंशन्मर्माणि शाखासु विद्यात्। कोष्ठे जठरे त्रीणि मर्माणि। उरसि वक्षसि नवसंख्यानि पृष्ठे चतुर्दश। जत्रोरूर्ध्वं जत्रुण उपरिष्टात्त्रिंशत्तथा सप्त। एवं सप्तत्रिंशदित्यर्थः। जत्रोरिति पुंस्त्वमत्र चिंत्यम्। अथवा अनित्यमागमशासनमित्यत्र नुम्न कृतः।

इदानीमेषां मर्मणामापादतलान्मस्तकं यावद्विशिष्टदेशसमाश्रयाणां विशिष्टसंज्ञांतराणि विशिष्टकर्माणि मर्माणि दर्शयितुमाह।

**मध्ये पादतलस्याहुरभितो मध्यमांगुलिम्॥ २॥**
**तलहृन्नामरुजया तत्र विद्धस्य पंचता।**
**अंगुष्ठांगुलिमध्यस्थं क्षिप्रमाक्षेपमारणम्॥ ३॥**
**तस्योर्ध्वं द्व्यंगुले कूर्चः पादभ्रमणकंपकृत्।**

मध्य इति। पादतलस्य मध्यप्रदेशे मध्यमांगुलिमभितो मध्यमांगुलेः पादसंबंधिन्या आभिमुख्येन यत्पादतलं पादपृष्ठं तत्र तलहृन्नाम मर्माऽहुः पूर्वाचार्या इति शेषः। मध्यमांगुलिमित्यभितःशब्दप्रयोगे द्वितीया। तत्र तस्मिन्विद्धस्याऽहतस्य पंचता मरणं भवति। कया। रुजया वेदनया। अंगुष्ठश्चांऽगुलिश्च तयोर्मध्यस्थमंगुष्ठांगुलिमध्यस्थितं क्षिप्रं नाम मर्म। तद्विद्धमाक्षेपमारणमाक्षेपकाख्येन वातव्याधिना मारयति। तस्योर्ध्वं तस्य क्षिप्राख्यस्य मर्मण उपरिष्टाद् द्व्यंगुले द्व्यंगुलं विमुच्य कूर्चो नाम मर्म तद्विद्धं पादस्य भ्रमणं कंपं च करोति।

**गुल्फसंधेरधः कूर्चशिरः शोफरुजाकरम्॥ ४॥**
**जंघाचरणयोः संधौ गुल्फो रुक्स्तंभमांद्यकृत्।**
**जंघांतरे त्विंद्रबस्तिर्मारयत्यसृजः क्षयात्॥ ५॥**

गुल्फेति। गुल्फसंधेरधः कूर्चशिरो नाम मर्म तद्विद्धं शोफरुजाकरम्। जंघाचरणयोः संधौ संधिप्रदेशे गुल्फो नाम मर्म तद्विद्धं रुक् च स्तंभश्च मांद्यं च तानि करोति। स्तंभः स्तब्धत्वमिवांगस्य। जंघांतरे जंघामध्ये पार्ष्णिप्रभृतिद्वादशभिरंगुलैरिंद्रबस्तिर्नाम मर्म तद्विद्धं रक्तक्षयान्मारयति नान्यथा। तस्माद्रक्तस्तंभने यतितव्यमिति प्रतिपादनार्थमसृक्क्षयादिति हेतुरुपन्यस्तः। एष एव न्यायोऽन्यत्राऽप्यनुसर्तव्यः। तेन यत्र यद्धेतुकं मारणादिकं मर्मव्यधे कथितं तत्र तच्चिकित्सायां यतितव्यमिति।

**जंघोर्वोः संगमे जानुखंजता तत्र जीवतः ।**
**जानुनस्त्र्यंगुलादूर्ध्वमाण्यूरुस्तंभशोफकृत् ॥ ६ ॥**
**उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसंक्षयात् ।**
**ऊरुमूले लोहिताख्यं हंति पक्षमसृक्क्षयात् ॥ ७ ॥**
**मुष्कवंक्षणयोर्मध्ये विटपं षंढताकरम् ।**

जंघोर्वोरिति । जंघोर्वोः संगमे संधौ जानुनाम मर्म । तत्र जानुनि विद्धे पुरुषो म्रियत एव । अथ जीवति ततोऽस्य जीवतः पुंसः खंजता स्यादित्यर्थात्प्रायेण मरणं पुरुषस्येति बोधयति । जानुनो जानुसंधेस्त्र्यंगुलादूर्ध्वमाणीनाम मर्म तद्विद्धमूरुस्तंभशोफकरम् । उर्वी नाम मर्म ऊरुमध्ये । तद्वेधात्तदभिघातात्सक्थिशोष ऊरुकार्श्यं च । सक्थिशोषोऽस्रसंक्षयात्स्यान्नान्यथा व्यधे सत्यपि । ऊरुमूले ऊर्वोरूर्ध्वं वंक्षणसंधेरधस्ताल्लोहिताख्यं नाम मर्म तद्विद्धं पक्षं हंत्यसृक्क्षयान्नान्यथा व्यधे सत्यपि । मुष्कवंक्षणयोर्मध्ये विटपं नाम मर्म तद्विद्धं पुंसः षंढताकरं निरपत्यताकरम् ।

**इति सक्थ्नोस्तथा बाह्वोर्मणिबंधोऽत्र गुल्फवत् ॥८॥**
**कूर्परं जानुवत्कौण्यं तयोर्विटपवत्पुनः ।**
**कक्षाक्षमध्ये कक्षाधृक् कुणित्वं तत्र जायते ॥ ९ ॥**

इतीति । इत्येवमनेन प्रकारेण सक्थ्नोर्द्वयोः प्रत्येकमेकादश मर्माणि भवंति । तथा तेनैव प्रकारेण बाह्वोस्तलहृदादीन्येकादश मर्माणि भवंति । अथ किंचिन्मात्रमत्र विशेषमाह । मणीत्यादि । अत्र बाहुमर्मसु गुल्फेन तुल्यो मणिबंधः संज्ञामात्रभेदः । जानुतुल्यं कूर्परम् । तयोर्मणिबंधकूर्पराख्ययोर्बाहुमर्मणोर्विद्धयोः कौण्यं पाणिपाण्यंगुलिकुब्जत्वम् । विटपेत्यादि । कक्षा चाक्षश्च कक्षाक्षौ तयोर्मध्ये विटपेन तुल्यं कक्षाधृक्संज्ञं मर्म । तत्र विद्धे सति कुणित्वं बाहुपाण्यंगुलिकुब्जता जायते ।

इति शाखासु मर्माणि चतुश्चत्वारिंशदुक्त्वाऽतराधौ कथयति ।

**स्थूलांत्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ।**

स्थूलांत्रसूक्ष्मांत्रभेदाद्द्विधांऽत्रम् । तत्र स्थूलांत्रबद्धो गुदो नाम मर्मविशेषः । स च विड्वातौ वातवर्चसी वमत्युद्गिरतीति विड्वातवमनः । बाहुलकात्कर्तरि ल्युट् । स गुदः सद्यस्तत्क्षणादेव हंति । सद्योघ्न इत्यमनुष्यकर्तृके चेति ठक् । गुदशब्दस्याऽत्र पुंस्त्वं चिंत्यं न चार्धर्चादिष्वयमस्ति ।

अधुना बस्त्याख्यमाह ।

**मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः ॥ १० ॥**
**एकाधोवदनो मध्ये कट्याः सद्यो निहंत्यसून् ।**
**ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः ॥ ११ ॥**
**मूत्रस्राव्येकतो भिन्नो व्रणो रोहेच्च यत्नतः ।**
**देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ॥ १२ ॥**
**नाभिः सोऽपि हि सद्योघ्नो**

मूत्राशयइति । मूत्रस्याशय आधारो मूत्राशयो यत्र मूत्रं तिष्ठति। स धनुर्वक्रश्चापवत् कुटिलः । तेनास्य संस्थानमुक्तम् । स च बस्तिर्नाम मर्मविशेषः । अस्रं च मांसं चाऽस्रमांसे अल्पे अस्रमांसे गच्छति । अन्येभ्योऽपि दृश्यत इति डः । तत्रस्थो न बहुरक्तमांसप्रदेशस्थ इत्यर्थः । तथैकमधोवदनं यस्यासावेकाधोवदनः । कट्याम-ध्य इति स्थाननिर्देशः । कट्या मध्यप्रदेशेऽसाववतिष्ठते । ऋतेऽश्मरीव्रणात्तं व्रणं वर्जयित्वा । तत्राप्यश्मरीव्रण उभयत उभयपार्श्वतश्च स विद्धस्तदाऽसौ सद्योऽसून्निहंति । तस्मिन् बस्तावेकपार्श्वतो भिन्ने विद्धे सति मूत्रस्रावी व्रणः स्यात् । स च यत्नत आदरेणोपक्रांतो रोहति नान्यथा । देहेत्यादि । आमं च पक्वं चाऽमपक्वे । स्थानं च स्थानं च स्थाने । आमपक्वयोः स्थाने आमपक्वस्थाने । देहश्चामपक्वस्थाने च देहामपक्वस्थानानि तेषां मध्ये । तत्रैकत्वाद्देहस्य देहमध्यप्रदेशे तयोभयोरामपक्वयोर्मध्येंऽतराले नाभिर्नाम मर्म सर्वासां सिराणां सकलशरीरगानामाश्रय आधारः । सोऽपि हि सद्योघ्नः । अपिः समुच्चये । हिर्यस्मादर्थे। न केवलं गुदबस्ती सद्योघ्नौ यावन्नाभिरपि विद्धः सद्योघ्नः । नाभिशब्दस्य पुंस्त्वं चिंत्यम् ।

**द्वारमामाशयस्य च ।**
**सत्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥ १३ ॥**

द्वारमिति । हृदयं नाम यन्मर्म तदपि सद्योघ्नम् । तच्चामाशयस्य द्वारं मुखम् । तेन हि द्वारेणान्नपानमामाशये प्रविशति । तच्च सत्वादीनां सत्वरजस्तमसां तथा विज्ञानस्येंद्रियाणां चार्थपंचकस्य तथाऽऽत्मनश्चेतसो धाम स्थानम् । तच्च स्तनोरःकोष्ठमध्यगम् । स्तनौ चोरश्च कोष्ठश्च स्तनोरःकोष्ठं तस्य मध्यं तत्र गच्छति स्थितिं बध्नाति । कोष्ठवक्षसोः स्तनयोश्च मध्ये स्थितमित्यर्थः ।

**स्तनरोहितमूलाख्ये द्व्यंगुले स्तनयोर्वदेत् ।**
**ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात् १४**

स्तनरोहितेति । स्तनरोहितं च मूलं च प्रकृतत्वात्स्तनस्यैव ते स्तनरोहितस्तनमूले आख्ये संज्ञे ययोस्ते स्तनरोहितमूलाख्ये द्वे मर्मणी वदेत् । क्व प्रदेशे ते । स्तनयोः । क्रमादिति वक्ष्यमाणमिहापि संबध्यते । तेन स्तनयोरूर्ध्वं द्व्यंगुले स्तनरोहिते । स्तनयोरधो द्व्यंगुले स्तनमूले । तयोः स्तनरोहितस्तनमूलाख्ययोर्मर्मणोर्विद्धयोः पुरुषोऽस्रकफापूर्णकोष्ठः क्रमाद्यथाक्रमं नश्येत् । तेन स्तनरोहिते विद्धे सत्यसृजा पूर्णकोष्ठो नरो नश्येत् । स्तनमूले विद्धे कफेन पूर्णकोष्ठो नश्येत् ।

**अपस्तंभावुरःपार्श्वे नाड्यावनिलवाहिनी ।**
**रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति ॥१५॥**

अपस्तंभाविति । उरसः पार्श्वे द्वे नाड्यावपस्तंभाख्ये मर्मणी अनिलवाहिनी वातवहे । अत्र मर्मद्वये विद्धे रक्तेन पूर्णकोष्ठः श्वासकासाभ्यां विपद्यते ।

**पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ।**

**अधोऽसकूटयोर्विद्यादपालापाख्यमर्मणी ॥ १६ ॥**
**तयोः कोष्ठेऽसृजा पूर्णे नश्येद्यातेन पूयताम् ।**

पृष्ठेति । पृष्ठवंशस्य तथोरसोऽनयोर्मध्येंऽतराले तयोरेव च पृष्ठोरसोर्ये पार्श्वे तयोरुपरिभागयोरंसकूटयोरधोऽपालापाख्ये द्वे मर्मणी विद्यात् । तयोर्विद्धयो रक्तेन कोष्ठे पूर्णे तेन पूयतां यातेन गतेन लोहितेन नश्येत् । यावद्रक्तं पूयतां न यातं तावज्जीवति न तु रक्तकोष्ठपूरणमात्रादेव म्रियत इति भावः ।

इदानीं पृष्ठे वक्ति ।

**पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ प्रतिष्ठिते ॥ १७ ॥**
**वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते ।**
**तत्र रक्तक्षयात्पांडुर्हीनरूपो विनश्यति ॥ १८ ॥**

पार्श्वयोरिति । पृष्ठवंशस्य पार्श्वयोरुभयतः श्रोणीकर्णौ प्रतिष्ठिते । वंशाश्रिते वंशप्रतिबद्धे स्फिजोरूर्ध्वमुपरिष्टाद्धे अस्थिनी कटीकतरुणे एव संज्ञे द्वे मर्मणी स्मृत उक्ते । तत्र तस्मिन्मर्मद्वये विद्धे रक्तक्षयात्पांडुर्हीनरूपो विगतकांतिः सन्नरो विनश्यति।

**पृष्ठवंशं ह्युभयतो यौ संधी कटिपार्श्वयोः ।**
**जघनस्य बहिर्भागे मर्मणी तौ कुकुंदरौ ॥ १९ ॥**
**चेष्टाहानिरधःकाये स्पर्शाज्ञानं च तद्व्यधात् ।**

पृष्ठवंशमिति । पृष्ठवंशस्योभयोः कटिपार्श्वयोर्यौ संधी जघनस्य बहिर्भागेनांतस्तौ कुकुंदरौ निम्नाकारौ संधिमर्मणी । तद्व्यधात्तयोर्व्यधादधःशरीरे चेष्टाहानिः । गमनाकुंचनप्रसारणादावधःकायोऽशक्तः संपद्यत इत्यर्थः । तथा स्पर्शाज्ञानं स्पर्शासंवित्तिर्भवति । पृष्ठवंशमुभयत इत्युभसर्वतसोरित्यादिना द्वितीया ।

**पार्श्वांतरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥ २० ॥**
**आशयच्छादनौ तौ तु नितंबौ तरुणास्थिगौ ।**
**अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥**

पार्श्वेति । पार्श्वांतरे पार्श्वमध्ये निबद्धौ प्रतिबद्धौ लग्नौ पार्श्वांतरनिबद्धौ यौ । तथा श्रोणिकर्णयोरुपर्युपरिष्टान्मूत्रादीनां य आशया आधारा बस्त्यादयस्तेषां छादनौ नितंबौ नितंबसंज्ञौ मर्मविशेषौ । तौ च तरुणास्थिगौ तरुणसंज्ञेऽस्थ्नि स्थिताविल्यर्थः । अत्राऽस्मिन्मर्मद्वये विद्धे सत्यधःकाये शोफो भवति । तथा दौर्बल्यं प्रकृतत्वादधःशरीर एव । दौर्बल्यमल्पबलत्वं स्वव्यापाराऽक्षमत्वम् । ततो दौर्बल्यादनंतरं मरणं भवति ।

**पार्श्वांतरनिबद्धौ च मध्ये जघनपार्श्वयोः ।**
**तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसंधी तयोर्व्यधात् ॥२२**
**रक्तपूरितकोष्ठस्य शरीरांतरसंभवः ।**

पार्श्वेति । पार्श्वयोरंतरं मध्यं तत्र निबद्धौ संश्लिष्टौ संधी मर्मविशेषौ पार्श्वसंधी इति निर्दिष्टौ । ततश्चैकस्मिन् पार्श्वांतर एकः संधिर्द्वितीयस्मिन् पार्श्वांतरे द्वितीयः संधिः । क्व स्थितौ कथम् । जघनस्य पार्श्वे जघनपार्श्वे । जघनपार्श्वयोर्मध्ये तिर्यगूर्ध्वं च । एवमेकस्मिन् जघनपार्श्वमध्य एकः संधिर्द्वितीयस्मिन् द्वितीयः स्थित इति । तयोर्व्यधात्पुंसो रक्तपूरितकोष्ठस्य शरीरांतरसंभवोऽपरशरीरोत्पत्तिर्मरणमित्यर्थः ।

**स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे ॥ २३ ॥**
**बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात् ।**

स्तनेति । स्तनयोर्मूलं स्तनमूलं तस्यार्जवे भागे पृष्ठवंशाश्रये सिरे पृष्ठवंशस्योभयपार्श्वप्रतिबद्धे सिरे बृहत्यावितत्संज्ञे मर्मणी । तत्र मर्मद्वये विद्धस्य मरणं भवति रक्तसंक्षयान्नान्यथा ।

**बाहुमूलाभिसंबद्धे पृष्ठवंशस्य पार्श्वयोः ॥ २४ ॥**
**अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात् ।**

बाहुमूलेति । बाह्वोर्मूले बाहुमूले यत्र बाहू प्रतिष्ठितौ । मूले हि प्रतिष्ठा वृक्षमूलवत् । पृष्ठवंशस्य पार्श्वद्वये बाहुमूलयोराभिमुख्येन संबद्धे संश्लिष्टे । के ते । अंसयोः फलके । असमासनिर्देशश्छंदोऽनुरोधात् । फलकस्य च नपुंसकत्वं लोकाश्रयत्वाल्लिंगस्येति । अंसफलकाख्ये द्वे मर्मणी । तयोर्व्यधाद्बाहुस्वापशोषौ भवतः । स्वाप इव स्वापो यथा सुप्तस्य निश्चेतनमंगं भवति तथा बाहू अंसफलके विद्धे भवतः ।

**ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोंतरे ॥ २५ ॥**
**स्कंधांसपीठसंबंधावंसौ बाहुक्रियाहरौ ।**

ग्रीवामिति । ग्रीवाया उभयोः पार्श्वयोः स्नाव्नी द्वे अंसावुच्येते । क्व स्थितौ । ग्रीवाबाहुशिरोंऽतरे । ग्रीवायां तथा बाह्वोः शिरसश्च मध्ये तेषामंतरालस्थितौ । प्रयोजनमाह । स्कंधेत्यादि । अंसयोः पीठे इव पीठे प्रतिष्ठाने यत्रांसौ तिष्ठतः । स्कंधौ चांसपीठे च तेषां संबंधः प्रयोजनं ययोस्तावेवांसौ विद्धौ बाह्वोः क्रिया आकुंचनप्रसारणादिका तां हरतस्तौ बाहुक्रियाहरौ ।

**कंठनाडीमुभयतः सिरा हनुसमाश्रिताः ॥ २६ ॥**
**चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ।**
**स्वरप्रणाशवैकृत्यं रसाज्ञानं च तद्व्यधे ॥ २७ ॥**

कंठेति । कंठनाड्या उभयपार्श्वयोः सिरा याश्चतस्रो हन्वोः समाश्रितास्तासु मध्ये द्वे सिरे नीले नाम द्वे मर्मणी मन्ये नाम द्वे मर्मणी स्मृते।तंत्रकृद्भिरिति शेषः । तासां व्यधस्तद्व्यधतस्मिन् व्यधे स्वरप्रणाशादयो जायंते । स्वरस्य प्रणाशः स्वरप्रणाशः स्वरहानिः । अथवा वैकृत्यम् । तच्च प्रकृतत्वात्स्वरस्यैव । स्वरभावान्यथात्वमित्यर्थः । रसाज्ञानं रसानवबोधः ।

**कंठनाडीमुभयतो जिह्वानासागताः सिराः ।**
**पृथक् चतस्रस्ताः सद्यो घ्नंत्यसून्मातृकाह्वयाः॥२८॥**

कंठेति । कंठनाड्या उभयपार्श्वयोः सिरा जिह्वागतास्तथा नासागताः पृथक् प्रत्येकमेकस्मिन् पार्श्वे चतस्रः द्वितीये पार्श्वे चतस्रस्ता मातृकाह्वया मातृकासंज्ञा विद्धाः सद्योऽसून् घ्नंति । एतानि मातृकाख्यानि सिरामर्माणि ।

**कृकाटिके शिरोग्रीवासंधी तत्र चलं शिरः ।**

शिरश्च ग्रीवा च तयोः संधाने यौ संधी पार्श्वद्वये कृकाटिकाख्ये ते द्वे मर्मणी । तत्र तस्मिन्मर्मद्वये विद्धे चलं सकंपं शिरो भवति ।

**अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥**

अधस्तात्कर्णयोः कर्णपृष्ठयोरधो निम्ने नोन्नते विधुराख्ये द्वे मर्मणी । ते च विद्धे सती श्रुतिं शब्दश्रवणं हरतः श्रुतिहारिणी ।

**फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ ।**
**अंतर्गलस्थितौ वेधाद्गंधविज्ञानहारिणौ ॥ ३० ॥**

फणाविति । फणौ नाम मर्मविशेषौ घ्राणमार्गस्योभयोः श्रोत्रपथानुगौ श्रोत्रमार्गप्राप्तौ । अंतर्गलस्थितौ गलाभ्यंतरे स्थितौ । फणाविव संस्थानं रूपमनयोः फणाविति नाम । तौ वेधाद्गंधविज्ञानं गंधोपलब्धिस्तद्धरतस्तौ गंधविज्ञानहारिणौ ।

**नेत्रयोर्बाह्यतोऽपांगौ भ्रुवोः पुच्छांतयोरधः ।**
**तथोपरि भ्रुवोर्निम्नावावर्तावांध्यमेषु तु ॥ ३१ ॥**

नेत्रयोरिति । अपांगौ नाम मर्मविशेषौ प्रसिद्धावेव । तथा तेनैवापांगोद्दिष्टेन न्यायेन भ्रुवोः पुच्छांतयोरुपरि निम्नावावर्तसंज्ञौ । एषु त्वपांगावर्ताख्येषु चतुर्षु विद्धस्य नरस्यांध्यं भवति ।

**अनुकर्णं ललाटांते शंखौ सद्योविनाशनौ ।**

अत्राऽपि भ्रुवोः पुच्छांतयोरुपरि ललाटावसानेऽनुकर्णं कर्णसमीपे शंखौ मर्मविशेषौ । तौ विद्धौ पुरुषस्य सद्योविनाशनौ भवतः ।

**केशांते शंखयोरूर्ध्वमुत्क्षेपौ स्थपनी पुनः ॥ ३२ ॥**
**भ्रुवोर्मध्ये त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ।**
**स्वयं वा पतिते पाकात्सद्यो नश्यति तूद्धृते॥ ३३ ॥**

केशांत इति । केशावसाने शंखयोरूर्ध्वमुत्क्षेपौ मर्मणी । स्थपनी पुनर्मर्मभ्रुवोर्मध्ये । त्रयेऽप्यत्राऽस्मिन्मर्मत्रये द्वावुत्क्षेपावेका स्थपनी । एवंभूते विद्धे पुरुषोऽनुद्धृते शल्ये जीवेत् । कालांतरेण पाकात् पाकेन हेतुना स्वयं वा पतिते शल्ये सति न तूद्धरणहेतुना जीवेत् पुरुषः । सद्य इत्यादि । उद्धृते तु शल्ये सद्य एव नरो नश्यति वायुकोपादिति भावः ।

**जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसंगमे ।**
**तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु॥ ३४॥**
**विद्धः शृंगाटकाख्येषु सद्यस्त्यजति जीवितम् ।**

जिह्वेति । जिह्वा चाऽक्षिणी च नासिका च श्रोत्रे च तदेवं तस्य खानि तेषां चतुष्टयं चत्वारि स्रोतांसि तस्य संगमः सन्निपातस्तस्मिंस्तालुनि यत्र जिह्वादीनां तर्पणानि स्रोतांसि सन्निपत्यावतिष्ठंति जिह्वादिस्रोतसां चत्वार्यास्यानि शृंगाटकाख्यानि तेषु मर्मसु विद्धः पुरुषः सद्यस्त्यजति जीवितम् । विद्धमात्र एव प्राणैर्वियुज्यते ।

**कपाले संधयः पंच सीमंतास्तिर्यगूर्ध्वगाः ॥ ३५ ॥**
**भ्रमोन्मादतमोनाशैस्तेषु विद्धेषु नश्यति ।**

कपाल इति । शिरःसंबंधिनः पंच संधयः पंचानां कपालखंडानां संश्लेषा ये शिरस्यवतिष्ठंते तिर्यगूर्ध्वगास्त एव सीमंताख्या मर्मविशेषास्तेषु सीमंताख्येषु विद्धेषु भ्रमेण तथोन्मादेन तथा मनोनाशेन विस्मृत्या नश्यति ।

**आंतरो मस्तकस्योर्ध्वं सिरासंधिसमागमः ॥ ३६ ॥**
**रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ।**

आंतर इति । मस्तकस्याभ्यंतरतो यः स्थितस्तथोर्ध्वं प्रकृतत्वान्मस्तकस्यैवोपरि सिरासंधिसमागमः सिरासंधीनां सन्निपातो रोमावर्तलक्षणः सोऽधिपो नाम मर्मविशेषः । मर्मणामधिपो यथार्थनामा । तदायत्तानि हि सर्वाणि मर्माणीत्यर्थः । सोऽधिपो विद्धो नरस्य सद्योऽसून् हरति । पुरुषं मारयतीत्यर्थः ।

इति सप्तोत्तरस्य मर्मशतस्य लक्षणान्युक्त्वा सामान्येन यन्मर्मलक्षणं तदाख्यातुमाह ।

**विषमं स्पंदनं यत्र पीडिते रुक् च मर्म तत् ॥ ३७॥**

यत्र यस्मिन् देहदेशे विषमं स्पंदनं स्फुरणं तन्मर्म । यत्र च देहदेशे पीडिते सति रुक् च विषमा भवति तच्च मर्म। अत्राऽपि विषममिति संबध्यते । विषमं च विषमा च विषमम् । नपुंसकमनपुंसकेनैकवच्चेति नपुंसकशेषः । तदेवं मर्मलक्षणं द्विधा मंतव्यम् । कस्यचिन्मर्मणः सिराधमन्यादिकस्य विषमं स्पंदनं प्रायो लक्षणम् । मांसास्थिजातीयस्य मर्मणः पीडनात्प्रायः पीडोत्पत्तिर्लक्षणमिति । संग्रहे च मर्मविद्धस्य लक्षणमुक्तम् । यथा । देहप्रसुप्तिर्गुरुता संमोहः शीतकामता । स्वेदो मूर्छा वमिः श्वासो मर्मविद्धस्य लक्षणमिति । मरणकारित्वान्मर्म । मरणसदृशदुःखदायित्वाद्वा ।

इदानीं मर्मणां मांसादिप्रभेदं लक्षणं षट्प्रकारमाह ।

**मांसास्थिस्नायुधमनीसिरासंधिसमागमः ।**
**स्यान्मर्मेति च तेनाऽत्र सुतरां जीवितं स्थितम्॥३८॥**

मांसेति । मांसादीनां संध्यंतानां सजात्यपेक्षो यः समागमः सन्निपातः स मर्माख्यो मर्मेति तस्यैव नाम । तदेवम् । मांसपेशीसमागमो मांसमर्म । अस्थ्नां समागमोऽस्थिमर्म । स्नायूनां समागमः स्नायुमर्म । धमनीनां समागमो धमनीमर्म । सिराणां समागमः सिरामर्म । संधीनां समागमः संधिमर्मेति । एष मांसादीनां यः समागमः स एव मर्मेत्युच्यते तेन हेतुनाऽत्र सुतरां जीवितं स्थितं प्राणा व्यवस्थिताः ।

ननु यदि मांसादीनां समागमो मर्मेत्यभिधीयते तदानीमनेकसंख्याकानि मर्माणि शरीरे संभाव्येरन् । मांसपेश्यादिभावानामनेकसंख्याश्रयत्वात् । तथा च । मांसपेशीशतानि पंच पुंसामुक्तानि स्त्रीणां तु विंशत्यधिकानि । एवमस्थ्यादीन्यनेकान्युक्तानि

ततश्च मर्मणामसंख्येयत्वं प्राप्नोति । एवं च सप्तोत्तरं मर्मशतमिति विरुध्यत इत्याह ।

**बाहुल्येन तु निर्देशः षोढैवं मर्मकल्पना ।**
**प्राणायतनसामान्यादैक्यं वा मर्मणां मतम् ॥ ३९ ॥**

सप्तोत्तरमेव मर्मणां शतमित्यनेकांतिकम् । किं तर्हि पूर्वोक्तेन न्यायेन बहूनि मर्माणि । सप्तोत्तरं मर्मशतमित्ययं तु यो निर्देशः स बाहुल्येन भूयसा येषां मर्मणां मर्मत्वेन प्रसिद्धिस्तद्विषय एव । एवमनेन प्रकारेण मांसास्थ्यादीनां समागमो मर्मेति मर्मणां षोढा षड्विधा कल्पना भवति । कल्पनाशब्देनैतत्प्रतिपादयति । तदेवं मनुष्यस्य प्रसिद्धितो जीवितधामत्वेन मर्मणां कल्पना निरूपणा । प्राणेत्यादि । अथवा न मर्मणां षोढा कल्पना किं तर्हि प्राणायतनसामान्याज्जीवितस्याधिष्ठानमित्येवंलक्षणादैक्यमेकत्वं मर्मणां मतं न षट्त्वम् । एवमेकैव मर्मकल्पना । एवं संक्षेपविस्तारकौशलं मर्मसु दर्शितम् ।

मांसादीनां संघातानां यथास्वं प्रतिनियतानि मर्माणि संख्ययाऽभिधातुमाह ।

**मांसजानि दशेंद्राख्यतलहृत्स्तनरोहिताः ।**

मांसेति । जंघयोरिंद्राख्ये द्वे मर्मणी । बाह्वोर्द्वे । एवं तलहृदाख्यानि चत्वारि । तानि पादयोर्द्वे हस्तयोर्द्वे इति । स्तनरोहिते द्वे प्रत्येकं स्तन एकैकम् । एवं दश मांसजानि ।

**शंखौ कटीकतरुणे नितंबावंसयोः फले ॥ ४० ॥**
**अस्थ्यष्टौ**

अस्थ्यष्टौ मर्माणि । शंखौ द्वे मर्मणी । कटीकतरुणे द्वे । नितंबौ द्वे । अंसयोः फलके द्वे । इत्येवमष्टौ मर्माणि ।

**स्नावमर्माणि त्रयोविंशतिराणयः ।**
**कूर्चकूर्चशिरोऽपांगक्षिप्रोत्क्षेपांसबस्तयः ॥ ४१ ॥**

स्नावेति । स्नावमर्माणि त्रयोविंशतिः । कथम् । आणयश्चत्वारि । प्रत्येकमूरुमध्ये एकैकम् । बाह्वोः प्रत्येकमेकैकम् । एवं चत्वार्याणयः । कूर्चाख्यानि चत्वारि । हस्तयोर्द्वे पादयोर्द्वे । कूर्चशिरःसंज्ञानि चत्वारि । पादयोर्द्वे हस्तयोर्द्वे इति चत्वारि । अपांगाख्ये द्वे नेत्रयोर्बाह्यत इत्यादिना निर्दिष्टे । क्षिप्राख्यानि चत्वारि । अंगुष्ठांगुलिमध्यस्थं क्षिप्रमिति । तत्र पादद्वये द्विविधं हस्तद्वये च । उत्क्षेपौ द्वौ । केशांते शंखयोरूर्ध्वमुत्क्षेपाविति । अंसाख्ये द्वे स्कंधांसपीठसंबंधावंसाविति । बस्तिरेको मूत्राशय इत्यादिनोक्तः । एवं स्नावमर्माणि त्रयोविंशतिः ।

**गुदोपस्तंभविधुरशृंगाटानि नवादिशेत् ।**
**मर्माणि धमनीस्थानि**

गुद इति । गुदः स्थूलांत्रबद्ध एकः । अपस्तंभाख्ये द्वे । अपस्तंभावुरःपार्श्वे नाड्यावनिलवाहिनी इति । विधुराख्ये द्वे । अधस्तात्कर्णयोर्निम्ने विधुरे इति । शृंगाटकाख्यानि चत्वारि जिह्वाक्षिनासिकेत्यादिनोक्तानि । एवं धमनीस्थानि धमन्याश्रितानि नव मर्माणि ।

**सप्तत्रिंशत्सिराश्रयाः ॥ ४२ ॥**
**बृहत्यौ मातृकानीले मन्ये कक्षाधरौ फणौ ।**
**विटपे हृदयं नाभिः पार्श्वसंधी स्तनांतरे ॥ ४३ ॥**
**अपालापौ स्थपन्यूर्व्यश्चतस्रो लोहितानि च ।**

सप्तेति । सिराश्रया मर्मविशेषाः सप्तत्रिंशत् । कथमित्याह । बृहत्यौ द्वे स्तनमूलार्जवे भाग इत्यादिनोक्ते । मातृकाख्यानि कंठनाडीमुभयतो जिह्वानासागता इत्यादिनोक्तान्यष्टौ । नीलाख्ये द्वे सिरे । मन्याख्ये द्वे । तानि कंठनाडीमुभयतः सिराहनुसमाश्रितानि चतस्र इत्यादिनोक्तानि । कक्षाधरौ द्वौ । यथोक्तम् । कक्षाक्षमध्ये कक्षाधृगित्यादि । फणौ द्वौ फणावुभयत इत्यादिना कृतलक्षणौ । विटपे द्वे । मुष्कवंक्षणयोर्मध्य एकम् । द्वितीयेऽप्येवम् । हृदयमेकम् । तस्य लक्षणं द्वारमामाशयस्य चेदित्यादि । नाभिरेक एव । तल्लक्षणं देहामपक्वेत्यादि । पार्श्वसंधी द्वौ पार्श्वांतरनिबद्धौ चेत्यादिनोक्तौ । स्तनाधरे स्तनयोरधोऽपालापौ द्वावेव पृष्ठवंशोरसोरित्यादिनोक्तौ । स्थपनी एकैव । तल्लक्षणं भ्रुवोर्मध्य इति । ऊर्व्यश्चतस्रः । ऊर्वोर्द्वयोर्द्वे बाह्वोश्च । ऊर्व्यूरुमध्य इति तस्या लक्षणम् । इति सक्थ्नोस्तथा बाह्वोरिति चातिदेशः । लोहितानि लोहिताक्षनामानि चत्वारि । ऊरुमूले लोहिताख्यम् । सक्थिवद्बाह्वोरिति तल्लक्षणम् ।

संप्रति संधिमर्माण्याह ।

**संधौ विंशतिरावर्तौ मणिबंधौ कुकुंदरौ ॥ ४४ ॥**
**सीमंताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ।**

संधाविति । संधौ विंशतिर्मर्माणि । आवर्ताख्ये द्वे । तयोर्लक्षणं तयोपरि भ्रुवोर्निम्नावावर्ताविति । मणिबंधौ द्वौ । तल्लक्षणं मणिबंधोऽत्र गुल्फवदिति । कुकुंदरौ द्वौ । तल्लक्षणं जघनस्य बहिर्भागे मर्मणी तौ कुकुंदराविति । सीमंताख्यानि पंच । तल्लक्षणं कपालसंधयः पंच सीमंता इति । कूर्परौ द्वौ । तल्लक्षणं कूर्परं जानुवदिति । कूर्परशब्द उभयलिंगः । गुल्फौ द्वे मर्मणी । तयोर्लक्षणं जंघाचरणयोः संधौ गुल्फ इति । कृकाट्यौ द्वे । तल्लक्षणं कृकाटिके शिरोग्रीवासंधी इति । जानुनी द्वे । तयोर्लक्षणं जंघोर्वोः संगमे जान्विति । पतिरधिपतिर्मर्मणां तच्चैकम् । तल्लक्षणमांतरो मस्तकस्योर्ध्वमित्यादिनोक्तम् । एवं सप्तोत्तरं मर्मशतमांसादिपरिकल्पनया कल्पितम् ।

**मांसमर्म गुदोऽन्येषां स्नाव्नी कक्षाधरौ तथा ॥ ४५ ॥**
**विटपौ विधुराख्ये च शृंगाटानि सिरासु तु ।**
**अपस्तंभावपांगौ च धमनीस्थं न तैः स्मृतम् ॥ ४६ ॥**

मांसेति । अन्येषामाचार्याणां मतेन गुदो मांसमर्म न धमनीमर्म । स्नाव्नीत्यादि । तेषामेव मतेन कक्षाधरौ स्नावाश्रितौ न तु

सिराश्रयौ । विटपौ विधुराख्ये च स्नावाश्रितौ । पूर्वमतेन तु विटपौ सिराश्रितौ । विधुरे च धमन्याश्रिते । शृंगाटकानि चत्वार्यपि सिरास्वेव । तुरवधारणे । न तु धमनीस्थानि । अपस्तंभौ तथाऽपांगौ च । एतद्धमनीस्थमन्यैराचार्यैर्न स्मृतमपि तु स्नावाश्रितमभिहितम् ।

इदानीं मांसादिजानां मर्मणां व्यधलक्षणमाह ।

**विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।**
**पांडुत्वमिंद्रियाज्ञानं मरणं चाशु मांसजे ॥ ४७ ॥**

विद्ध इति । मांसजे मर्मणि विद्धे सत्यनवरतमसृक्स्रावो भवति । मांसधावनोदकेन तुल्यस्तथा तनुरच्छो भवति न बहुलः । पांडुत्वं पीताभता शरीरस्य । इंद्रियैश्चक्षुरादिभिश्च विषयाऽज्ञानमनवबोधः । मरणं चाऽऽशु शीघ्रं भवति । तदेवमिंद्रबस्त्यादिजमांसमर्मव्यधे निरंतरस्रावादिसर्वलिंगदर्शनानुमानेन मरणमनुमीयमानं बुध्वा वैद्यः प्रत्याख्याय चिकित्सां प्रयोजयेत् । नियतायुषां क्वचिन्मरणस्य व्यभिचारादिति ।

**मज्जान्वितोऽच्छो विच्छिन्नस्रावो रुक्चास्थिमर्मणि ।**

अस्थिमर्मणि शंखादिके विद्धे मज्जान्वितः स्रावस्तथाऽच्छो न घनो विच्छिन्नो न मांसमर्मव्यध इव निरंतरो भवति । रुक्चेत्यनेनात्यंतं पीडा भवतीति प्रतिपादयति । रुङ्मात्रस्य सर्वमर्मस्वपि सद्भावात् ।

**आयामाक्षेपकस्तंभा स्नावजेऽभ्यधिकं रुजा ॥४८॥**
**यानस्थानासनाशक्तिर्वैकल्यमथवांतकः ।**

स्नावजे उर्वादिके मर्मणि विद्ध आयामादयो भवंति । आक्षेपकः स्तंभो यथास्वमंगानामतिरुजा च । तथा यानस्थानासनाशक्तिः यातुं स्थातुमासितुं चाऽसामर्थ्यम् । वैकल्यं चांगानाम् । अथवांऽतको मरणं भवति ।

**रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥**

धमनीस्थेऽपस्तंभादौ मर्मणि विद्धे सति विचेतसो मूर्छितस्य सतो रक्तं स्रवेत् । कीदृशम् । सशब्दफेनोष्णम् । सशब्दस्याऽत्र प्रत्येकं संबंधः ।

**सिरामर्मव्यधे सांद्रमजस्रं बह्वसृक्स्रवेत् ।**
**तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरंतकः ॥ ५० ॥**

सिरेति । सिरामर्मणो बृहत्यादेर्व्यधे सत्यसृक् सांद्रं घनमजस्रं निरंतरं बहु प्रभूतं स्रवति । तत्क्षयात्तस्यासृजः क्षयात् तृड्भ्रमादिभिरंतको जीवितनाशः ।

**वस्तु शूकैरिवाकीर्णं रूढे च कुणिखंजता ।**
**बलचेष्टाक्षयः शोषः पर्वशोफश्च संधिजे ॥ ५१ ॥**

वस्त्विति । संधिजे मर्मण्यावर्तादौ विद्धे वस्तु शूकैरिवाकीर्णं भवति । वस्तुशब्देनाऽधिष्ठानं विद्धदेश उच्यते । तच्छूकैः शालियवादिसंबंधिभिः किंशारुभिर्व्याप्तमिव भवति । रूढे च सति तस्मिन्मर्मव्यधे कुणिता खंजता वा भवति । तथा बलचेष्टयोः क्षयस्तथा शोषोंऽगस्य पर्वसु शोफः श्वयथुश्च संधिजे भवति ।

इदानीमेषामेव मर्मणां व्यधे जीवितनाशे कालं नियमयति ।

**नाभिशंखाधिपापानहृच्छृंगाटकबस्तयः ।**
**अष्टौ च मातृकाः सद्यो निघ्नंत्येकान्नविंशतिः ॥५२॥**
**सप्ताहः परमस्तेषां कालः कालस्य कर्षणे ।**

नाभीति । नाभिशंखादीनि मर्माण्येकान्नविंशतिः सद्यो घ्नंति । नाभिरेकः । शंखौ द्वौ । अधिप एकः । अपानोऽप्येकः । हृदेकम् । शृंगाटकानि चत्वारि । बस्तिरेकः । अष्टौ मातृकाः । एकान्नविंशतिरेतानि सद्यः प्राणहराणि । तेषां मर्मणां कालस्य मृत्योः कर्षणे आकर्षणे सप्ताहः परमः कालः प्रकृष्टोऽवधिः । नविंशतीति सुप्सुपेति समासः । तत एकेन नविंशतिरिति तृतीयेति योगविभागात्समासः । तत एकादिश्चैकस्येत्यादिना नञःप्रकृतिभाव एकस्याऽदुगागमश्च ऊनार्थेऽत्र नञ् । एकोनविंशतिरित्यर्थः ।

**त्रयस्त्रिंशदपस्तंभतलहृत्पार्श्वसंधयः ॥ ५३ ॥**
**कटीतरुणसीमंतस्तनमूलेंद्रबस्तयः ।**
**क्षिप्रापालापबृहतीनितंबस्तनरोहिताः ॥ ५४ ॥**
**कालांतरप्राणहरा मासमासार्धजीविताः ।**
**उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि**

त्रय इति । त्रयस्त्रिंशदपस्तंभादयः कालांतरप्राणहराः । मासं मासार्धं जीवितं येषु विद्धेष्विति मासमासार्धजीविताः । मासेन प्राणान् हरंति मासार्धेन वेत्यर्थः । संग्रहे चोक्तम् । सोम्याग्नेयत्वात्तेषां पक्षाभ्यंतरं काल इति । त्रयस्त्रिंशदिति । त्रेस्त्रयसिति त्रयसादेशः । तत्रापस्तंभौ द्वौ । तलहृंति चत्वारि । पार्श्वसंधी द्वौ। कटीकतरुणे द्वे । सीमंताः पंच । स्तनमूले द्वे । इंद्रबस्तयश्चत्वारो जंघामध्ययोर्द्वे बाहुमध्ययोर्द्वे । क्षिप्राणि चत्वारि हस्तयोर्द्वे पादयोर्द्वे । अपालापबृहतीनितंबस्तनरोहिताः प्रत्येकं द्वौद्वाविति । उत्क्षेपौ द्वौ स्थपन्येकेत्येतानि त्रीणि विशल्यघ्नानि ।

कोऽत्र हेतुरित्याह ।

**तत्र हि ॥ ५५ ॥**
**वायुर्मांसवसामज्जमस्तुलुंगानि शोषयन् ।**
**शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हंत्यसून् ॥**

तत्र हीत्यादि । हि यस्मात्तत्र व्यधे शल्यापाये वायुर्विनिर्गच्छन्निर्यान् मांसादीन् शोषयन् श्वासकासाभ्यां प्राणान् हंति । तत्र च हेतौ शतृप्रत्ययः । निर्गमेन हि हेतुना मांसादीनां शोषणं भवति ।

**फणावपांगौ विधुरौ नीले मन्ये कृकाटिके ।**
**अंसांसफलकावर्तविटपोर्वीकुकुंदराः ॥ ५७ ॥**
**सजानुलोहिताख्याऽऽणि कक्षाधृकूर्चकूर्पराः ।**

**वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥**
**हरंति तान्यपि प्राणान् कदाचिदभिघाततः ।**

फणाविति । फणादीनि विटपांतानि प्रत्येकं द्वौ द्वौ । ऊर्व्यश्चतस्रः । कुकुंदरौ द्वौ । जानुनी द्वे । लोहिताख्यानि चत्वारि । आणयश्चत्वारः । कक्षाधरौ द्वौ । कूर्चाश्चत्वारो हस्तयोर्द्वौ । पादयोर्द्वौ । कूर्परौ द्वौ । इत्येवं चत्वारि चत्वारिंशच्चेति चतुश्चत्वारिंशन्मर्माणि वैकल्यमंगस्य कुर्वते । कदाचित्त्वभिघाततस्तान्यपि चतुश्चत्वारिंशत्प्राणान् हरंति ।

**अष्टौ कूर्चशिरोगुल्फमणिबंधा रुजाकराः ॥ ५९ ॥**

अष्टाविति । अष्टौ कूर्चादयो मर्मविशेषा रुजाकराः । अग्निवायुसोमगुणबाहुल्यात् । अग्निवायू हि विशेषेण शूलकरौ सोमस्तु प्राणावलंबकः । इति नैतानि प्राणहंतॄणि । तत्र कूर्चशिरांसि हस्तपादेषु चत्वारि गुल्फौ द्वौ मणिबंधौ द्वावित्यष्टौ ।

इदानीं मर्मणां यथायथं प्रमाणमभिधातुमाह ।

**तेषां विटपकक्षाधृगूर्व्यः कूर्चसिरांसि च ।**
**द्वादशांगुलमानानि द्व्यंगुले मणिबंधने ॥ ६० ॥**
**गुल्फौ च स्तनमूले च त्र्यंगुलौ जानुकूर्परौ ।**

तेषामिति । तेषां मर्मणां मध्ये विटपादीनि द्वादश मर्माण्यंगुलमानान्यंगुलप्रमाणानि । मणिबंधने मणिबंधौ द्वौ । द्व्यंगुलप्रमाणौ गुल्फौ स्तनमूले च द्व्यंगुले प्रत्येकम् । एकश्चशब्दः समुच्चयार्थो द्वितीयः पादपूरणे । त्र्यंगुलप्रमाणौ जानू कूर्परौ च ।

**अपानवस्तिहृन्नाभिनीलाः सीमंतमातृकाः ॥ ६१ ॥**
**कूर्चशृंगाटमन्याश्च त्रिंशदेकेन वर्जिताः ।**
**आत्मपाणितलोन्मानाः**

अपानेति । अपानबस्त्यादयस्त्रिंशदेकेन वर्जिता एकोनत्रिंशदात्मपाणितलोन्मानाः स्वहस्तपरिमाणाः ।

**शेषाण्यर्धांगुलं वदेत् ॥ ६२ ॥**
**पंचाशत्षट् च मर्माणि तिलव्रीहिसमान्यपि ।**
**इष्टानि मर्माण्यन्येषाम्**

शेषाणीति । शेषाणि षट्पंचाशन्मर्माणि स्वेनांगुलपरिमाणेनार्धांगुलप्रमाणान्यादिशेत् । अन्येषां तंत्रकृतां तिलप्रमाणानि व्रीहिप्रमाणानि वा मर्माणीष्टान्यभिमतानि । परमतमप्रतिषिद्धमनुमतमेवेत्यस्याऽपि ग्रंथकृत एतदेव मतमिति बोध्यम् ।

इदानीं यथा मर्माभिघातमरणं संपद्यते तथा दर्शयति ।

**चतुर्धोक्ताः सिरास्तु याः ॥ ६३ ॥**
**तर्पयंति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ।**
**तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसंक्षये ॥ ६४ ॥**
**वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ।**
**तेजस्तदुद्धृतं धत्ते तृष्णाशोषमदभ्रमान् ॥ ६५ ॥**
**स्विन्नस्रस्तश्लथतनुं हरत्येनं ततोऽतकः ।**

चतुर्धेति । याः सिराश्चतुर्धा उक्ताः प्राङ्निर्दिष्टा वातपित्तकफशुद्धरक्तवाहिन्यः सप्तशतसंख्याः कृत्स्नमशेषं शरीरं तर्पयंति प्रीणयंति ता मर्माण्याश्रिता गताः प्राप्ताः । तत्क्षतादित्यादि । यत एवं सर्वाः सिरा मर्माणि प्राप्तास्ततः कारणान्मर्माश्रयलक्षणात्तत्क्षतात्तेषां मर्मणां क्षतं तत्क्षतं तस्मान्मर्मक्षतात्कारणात्तत्क्षतजस्य रक्तस्याऽतिप्रवृत्तिकारणाद्धातुसंक्षयः परंपराक्रमायातो मांसादिधात्वपचयस्तस्मिन् धातुक्षये सति यो वृद्धश्चलो वायुः स तीव्रा अत्यंतं दुःखदायिनी रुजः शूलविशेषान् प्रतनोति करोति । किं कुर्वन् । तेजः पित्तं समीरयन्नुदीरयन् वृद्धिं नयन् । तत्तेज उद्धृतं वृद्धिसंपन्नं तृष्णादीन् धत्ते करोति । ततोऽनंतरं तृष्णादिभिरेनं पुरुषं मर्मविद्धमंतको हरति । किंभूतम् । स्विन्ना स्रस्ता श्लथा तनुर्यस्य तम् । तदयमर्थः । मर्माभिघातेन रक्तवाहिनीनां सिराणां मुखविकासो जायते । तद्विकासाज्जीविताधिष्ठानस्याऽसृजोऽत्यर्थं या निःसृतिर्यावत्तस्य क्षयस्तत्क्षयात् जीवितनाश आश्रयाभावात् ।

अधुना मर्माभिघाते चिकित्सामाह ।

**वर्धयेत्संधितो गात्रं मर्मण्यभिहते द्रुतम् ॥ ६६ ॥**
**छेदनात्संधिदेशस्य संकुचंति सिरा ह्यतः ।**
**जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥**

वर्धयेदिति । मर्मण्यभिहते सति गात्रं शरीरमाशु च्छेदयेत् । कुतः । संधितः संधिप्रदेशात् । हि यस्मात्संधिदेशस्य च्छेदनात्सिराः संकुचंति संवृतमुखा भवंति । वर्धयेदिति वर्धच्छेदनादाविति चौरादिकः । अतः सिरासंकोचात्कारणाद्रक्तं न बहिर्निःसरति तिष्ठति । तस्मिंस्तिष्ठति बहिरवहति सति जीवितं तिष्ठति ।

तदनेन प्रकारेण मर्माभिघातक्षतान्मरणं नत्वमर्माभिघातक्षतादत इदमाह ।

**सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ।**
**प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥ ६८ ॥**
**असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।**
**तस्मात्क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९**

सुविक्षत इति । यतो मर्माभिघातक्षतात्प्राणी म्रियते नान्यथा क्षतमात्रादतोऽस्मात्कारणात्सुष्ठु कृत्वा विशेषेण क्षतोऽपि शरशतैर्विद्धोऽप्यमर्मणि विद्धो जीवेन्न तु मर्मणि विद्धो जीवेत् । किंभूते । प्राणघातिनि । द्विविधं हि मर्म । प्राणघात्येकमपरं वैकल्यकरम् । तत्र प्राणघातिनि मर्मणि कुशाग्रेणाऽपि विद्धो न जीवति । अथ पुण्यवान्नियतायुश्च प्राणघातिन्यपि मर्मणि विद्धो वैद्यगुणेनाऽसमग्रस्याऽसकलस्य मर्मणोऽभिघाताच्च कश्चिद्यदि विद्धो जीवेदपि वैकल्यमश्नुते । विकलतां प्राप्य जीवतीत्यर्थः । वैद्यशब्दः प्राधान्याद्द्रव्यादिपादत्रयमुपलक्षयति । वैद्यगुणेन पादत्रयसंपत्येत्यर्थः । यतश्चैवं मर्माभिघातः सोपायः प्राणोपरोधकृत्तस्मात्कारणान्मर्मसु क्षारादीन् यत्नात्तात्पर्येण वर्जयेत्परिहरेत् । अग्न्यादीनित्यादिशब्देन भल्लातकरसकपिकच्छुशूकादीनां ग्रहणम् ।

**मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम्।**
**रोगा मर्माश्रितास्तद्वत्प्रक्रांता यत्नतोऽपि च ॥७०॥**

मर्मेति । तस्मान्मर्माभिघातो रक्ष्यो यस्मान्मर्माभिघातः सुष्ठुतिशयेनाऽपि प्रायशो बाधतेतरामतिशयेन पीडयति । न केवलं मर्माभिघातो यावद्रोगा अपि मर्माश्रयास्तद्वद्बाधंते यत्नतोऽप्यादरेणाऽपि प्रक्रांता उपक्रांता इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तकृतायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां शारीरस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

## पंचमोऽध्यायः।

मर्मविभागादनंतरं विकृतिविज्ञानीयं शारीरमारभ्यते । यतो मर्मविभागे मर्मोपात्तं मरणकारित्वान्मर्मेत्युच्यते । विकृतेरनंतरं मरणं दृश्यत इत्ययमुच्यते ।

**अथाऽतो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः।**

प्रकृतेरन्यथात्वं स्वभावप्रच्युतिर्विकृतिस्तस्या विज्ञानमवबोधः स विद्यते यस्मिन्निति मतौ च्छः सूक्तसाम्नोरिति च्छः । अध्यायानुवाकयोर्लुगिति तस्य पाक्षिकत्वान्न लुक् । विकृतिविज्ञानीयस्तं शारीरं व्याख्यास्यामः । शेषं पूर्ववत् । विकृतिः पुनरत्र रिष्टमेव विज्ञेयम् ।

अत एवाह ।

**पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।**
**यथा भविष्यतो लिंगं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १॥**

पुष्पमिति । यतः फलस्य भाविनो भविष्यतः पुष्पमग्नेर्भाविनो धूमो वर्षस्य भाविनो जलदोदयस्तथा तेनैव दृष्टांतेन मृत्योर्भविष्यतो रिष्टं लिंगं गमकं ध्रुवं निश्चितम् । ध्रुवशब्दनिर्देशादिदं द्योतयति । रिष्टच्छायानुकारि तदाभासरूपं मृत्योर्न लिंगमिति ।

अत एवाह ।

**अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम्।**

अरिष्टमिति । न विद्यते पूर्वं रिष्टं यस्य मरणस्य तदरिष्टं तथाविधं मरणं नास्ति । तथा दृष्टं रिष्टं यस्य जीवितस्य तदेवंभूतं जीवितमपि नास्ति । यत्तु पुष्पादर्शनेऽपि वटवृक्षादौ फलसद्भावो दृश्यते तत्तु क्वचिदेव न सर्वत्रेति नायं दोषोऽत्र चिंत्यः ।

ननु दृष्टरिष्टं जीवितं नास्तीत्ययुक्तमेतद्व्यभिचारात् । तथा च वक्ष्यति । यं नरं सहसा रोगो दुर्बलं परिमुंचति । संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यत इत्याह ।

**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ २ ॥**

अरिष्ट इति । परमार्थेन यद्रिष्टत्वेन च निश्चयीकृतं तस्मिन्नरिष्टे रिष्टविज्ञानं रिष्टत्वावगमः । न च रिष्टेऽपि रिष्टविज्ञानं केषांचिद्भवति । कुतो हेतोरित्याह । अनैपुणात् । निपुणस्य भावो नैपुणम् । हायनांतयुवादिभ्योऽणित्यण् । न नैपुणमनैपुणं तस्मान्मिथ्याज्ञानादित्यर्थः । तदेवं यदभ्रांतं रिष्टं तदव्यभिचारित्वान्मरणं निश्चितं सूचयति । यदन्यद्रिष्टच्छायानुकारि यं नरं सहसा रोग इत्यादि लक्षणं तद्भ्रांतमेव । यथाऽधूमे बाष्पादौ धूम इति ज्ञानम् । न च तस्मान्मिथ्याज्ञानादग्न्युपलब्धिर्निश्चिता भवति । तस्माद्युक्तमुक्तमरिष्टं नास्ति मरणमित्यादि । मुनिरप्याह । अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् । अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणादिति । सुश्रुतस्तु पठति । ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः । रसायनतपोदानतत्परैर्वा निवार्येत इति

कृष्णात्रेयस्तु द्विधा रिष्टमिच्छतीति तन्मतमाविष्कुर्वन्नाह ।

**केचित्तु तद्द्विधेत्याहुः स्थाय्यस्थायिविभेदतः ।**

केचिदिति । केचिदाचार्यास्तद्रिष्टं द्विधा वदंति । कथमित्याह । स्थायीत्यादि । तृतीयार्थे तसिः । स्थाय्यस्थायिविभेदेन द्विप्रकारम् ।

तत्राऽस्थायिरिष्टभेदं दर्शयन्नाह ।

**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥**
**स दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे ।**

दोषाणामिति । अपिशब्दः समुच्चये भिन्नक्रमः । रिष्टाभासश्च दोषाणां बाहुल्यात्समुद्भवेत् । दोषाणां शमे दोषाणां शांतौ सत्यां स रिष्टाभासः शाम्येन्न तु मरणाय संपद्यते । स्थायि तु रिष्टमवश्यं मृत्यवे मरणाय जायते । नन्वरिष्टं नास्ति मरणमित्ययुक्तमिवाभाति । रिष्टमंतरेणाप्यकालमृत्योरम्युदकादिभिर्दर्शनात् । अत्र संचक्ष्महे । कालमृत्योरेव रिष्टपूर्वकत्वात् । तथा च वक्ष्यति । सर्वे ते कालचोदिताः । तथा च । वशगाः समवर्तिन इति । समवर्ती हि कालमृत्युरेव ।

किंतद्रिष्टमित्याह ।

**रूपेंद्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥**
**अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।**
**विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥**

रूपेति । रूपं गौरादिवर्णविशेषो गौरो गौरःश्यामः कृष्ण इति। तद्भेदास्तु यमगौरादयः । देहप्रकृतिवर्णास्तु नीलश्यामताम्रहारिद्रशुक्लादयः । तथा चक्षुषा यद्ग्राह्यं वस्तुजातं संस्थानादि तदपि रूपं विकृतिः । इंद्रियाणि चक्षुरादीनि । स्वरः शब्दः प्रतिपुरुषं विशिष्टो रवः । छाया वर्णप्रभाश्रया वक्ष्यमाणलक्षणा । प्रतिच्छाया प्रतिबिंबम् । क्रिया देहवाङ्मनोव्यापारः । तत्र धावनप्लवनाद्यनेकरूपो व्यायामो नृत्यस्थानकादिः कायिको व्यापारः । गीताध्ययनादिर्वाचिको व्यापारः । रागद्वेषभयेर्ष्यादिर्मानसः । आदिशब्दोऽन्येषामपि शरीरजानां भावानां ग्रहणार्थम् । रूपं चेंद्रियाणि च स्वरश्च च्छाया च प्रतिच्छाया च क्रियादयश्च तेषु रूपादिषु भावेषु । तथाऽन्येष्वपि प्राकृतेषु भावेष्वनिमित्ततोऽकस्मान्निमित्तमंतरेणैव या विकृतिः सा समासेन रिष्टमिति लक्षये-

जानीयात्। प्रकृतौ भवाः प्राकृताः। यथा वातादिप्रकृतौ चलधृतिस्मृत्यादयः। तदेवं रूपादिषु भावेषु क्रियादिपर्यंतेष्वन्येषु च प्राकृतेषु भावेषु या विकृतिः सा संक्षेपेण रिष्टम्। विस्तरतस्त्वनेकधा वक्ष्यमाणम्।

**केशरोम निरभ्यंगं यस्याऽभ्यक्तमिवेक्ष्यते।**

केशेति। केशाश्च रोमाणि च तत्केशरोम यस्य निरभ्यंगमभ्यंगरहितमभ्यक्तमिवेक्ष्यते दृश्यते स कालचोदित इति वचनविपरिणामेन संबंधः। एवमुत्तरत्राऽपि। एतद्रूपविकृतेरुदाहरणम्।

इंद्रियाणामधिष्ठानस्य विकृतिरिंद्रियविकृतिरित्याह।

**यस्यात्यर्थं चले नेत्रे स्तब्धांतर्गतनिर्गते ॥ ६ ॥**
**जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी।**
**उद्भ्रांतदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥**
**कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी।**
**नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥ ८ ॥**
**उच्छूना स्फुटिता म्लाना**

यस्येति। नेत्रशब्देन नेत्राधिष्ठानमिष्टं नेंद्रियम्। यस्य नेत्रे चलेऽत्यर्थमतिशयेनेतश्चेतश्च परिभ्रमतः। तथा यस्य नेत्रे स्तब्धे निश्चले। तथा यस्यांतर्गते अंतःप्रविष्टे। तथा यस्य निर्गते बहिर्याते। तथा यस्य जिह्मे कुटिले। तथा यस्य विस्तृते विस्तरं गते। तथा यस्य नेत्रे संक्षिप्ते संकुचिते। तथा संक्षिप्ते विशेषेण नते भ्रुवौ ययोस्ते संक्षिप्तविनतभ्रुणी। तथोद्भ्रांतदर्शने विभ्रांतदृष्टिनी। तथा हीनदर्शनेऽल्पदर्शने नष्टदृष्टिनी वा तथा नकुलोपमे नकुललोचनाभे। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तंत इति नकुलशब्दोऽत्र नकुललोचनविषयो वेद्यः। यथा च नागानंदनाटके। चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्धत इति। अत्र हि हरिवक्षसा यस्य स्पर्धते वक्षस्थलमित्ययमर्थो वेद्यः। अथवा नकुललोचने उपमा ययोस्ते नकुलोपमे इत्यत्र मध्यमपदलोपी समासः। एवं कपोताभे। तथा अलाताभ उल्मुकसदृशे। तथा स्रुते निर्निमित्तमश्रु परिस्रवतः। तथा लुलिते वातोद्धत इव पक्ष्मणी ययोस्ते लुलितपक्ष्मणी। तथा यस्य नासिका निर्निमित्तमत्यर्थमतिशयेन विवृता अथवा संवृता संकुणिता। तथा पिटिकाचिता पिटिकाभिर्व्याप्ता। तथा उच्छूना ऊर्ध्वं श्वयथुनाऽऽक्रांता। तथा स्फुटिता म्लाना च।

**यस्यौष्ठो यात्यधोऽधरः।**
**ऊर्ध्वं द्वितीयः स्यातां वा पक्वजंबूनिभावुभौ ॥ ९ ॥**
**दंताः सशर्कराः श्यावास्ताम्राः पुष्पितपंकिताः।**
**सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ॥ १० ॥**
**श्वेता शुष्का गुरुः श्यावा लिप्ता सुप्ता सकंटका।**

यस्येति। यस्यौष्ठो दंतच्छदोऽधरोऽनुत्तरोऽधो याति। द्वितीय उपरिष्टाद्भवो यो दंतच्छदः स ऊर्ध्वं याति। यस्य च पक्वजंबूफलनिभौ द्वावोष्ठौ भवतः। तथा यस्य दंताः सशर्कराः शर्कराभिराचितास्तथा श्यावास्तथा ताम्राश्च वर्णतस्तथा पुष्पिताः संजातपुष्पास्तथा पंकिताः संजातपंकाः कर्दमोपलिप्ता इव। तथा सहसैव कारणं विनैव यस्य वा द्विजाः पतेयुर्भ्रंशेयुः। तथा यस्य जिह्वा जिह्वेंद्रियाधिष्ठानं जिह्मा कुटिला तथा श्यावा तथा लिप्ता तथा सुप्ता सुप्तवत्सुप्ता रसाज्ञानाद्विचेतनेत्यर्थः। तथा सकंटका कंटकैराचितेव।

**शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥**
**हनू वा पिंडमास्यस्थं शक्नुवंति न यस्य च।**
**यस्यानिमित्तमंगानि गुरूण्यतिलघूनि वा ॥ १२ ॥**
**विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते।**
**उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥**
**अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ॥**

शिर इति। यस्य पुंसः शिरोधरा ग्रीवा शिरो वोढुं न शक्नोति। तथा यस्य पृष्ठं वा आत्मनो भारं पृष्ठस्य वोढृत्वेनोपर्यारूढं ग्रीवादिकं वोढुं धारयितुं न शक्नोति। यस्य वा पुंसो हनू भक्तपिंडं कवलमास्यस्थं वोढुं न शक्नुतः। एवं शिरोधरादीनि त्रीण्यंगानि स्वमात्मीयं कार्यं यस्य वोढुं न शक्नुवंति स कालचोदित इति योज्यम्। यस्यानिमित्तं कारणं विनांगान्यतिगुरूणि कदाचिदतिलघूनि वा भवंति। तथा यस्य विषदोषमंतरेण खेभ्यश्छिद्रेभ्यो रक्तं प्रवर्तत आयाति। यस्य मेहनं लिंगमुत्सिक्तमूर्ध्वं गतम्। तथा वृषणावतिनिःसृतौ प्रलंबौ। अतोऽन्यथा वा उक्तप्रकाराद्विपरीतः प्रकारो यः सोऽन्यथा। यथा वृषणावुत्सिक्तावतिनिःसृतं मेहनमिति। केशरोमनिरभ्यंगमित्यारभ्य यावदतोऽन्यथा वेत्येतत्पर्यंतग्रंथोक्तं लक्षणं येषां जातं ते पुरुषाः सर्वे कालेन मृत्युना चोदिताः। अंतकेन स्वीकृता इत्यर्थः। नन्वत्र कालनियमो न कृतः कियता कालेन मृत्युर्भवति मासेनार्धमासेन वेति संदेहान्न युक्तमेतत्। अत्र ब्रूमः। अनिर्दिष्टकालानां संवत्सरोऽवधिरिति व्यवस्था वेद्या। तथा चाह। वर्षांतं तस्य जीवितं तथा सोऽपि वर्षं न जीवतीत्यादिवचनान्नास्ति वर्षादूर्ध्वं जातरिष्टस्य जीवितमिति निश्चयः।

**यस्याऽपूर्वाः सिरालेखा बालेंद्वाकृतयोऽपि वा १४**
**ललाटे वस्तिशीर्षे वा षण्मासान्न स जीवति।**
**पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥**
**प्लवते प्लवमानस्य षण्मासं तस्य जीवितम्।**

यस्येति। यस्य पुंसः स्वस्थस्य निर्निमित्तमेव ललाटे बस्तेर्वा शिरस्यपूर्वा अभिनवा नतु प्रागवस्थिताः शिरालेखाः सिराराजयो दृश्यंते। अथवा बालेंद्वाकृतयो वक्राः स पुमान् षण्मासान्न जीवति। तथा यस्य पुंसः प्लवमानस्य जले स्नानं कुर्वतः शरीरे पद्मिनीपत्रवत्पद्मिनीपत्रस्थिततोयवत्तोयं प्लवतेऽनवस्थितस्थिति भवति तस्याऽपि षण्मासान्न जीवितम्। पद्मिनीपत्रवदिति सस-

म्यर्थे वतिर्न षष्ठ्यर्थे । शरीर इति सप्तम्या निर्दिष्टत्वात् । तथा चोक्तं भाष्यकृता । उपमाने यः संशयः स उपमेयाद्यावर्तत इति ।

**हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥१६॥**
**सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ।**

हरिताभा इति । यस्य सिरा हरिताभा रोमकूपाश्च संवृताः स्युः स नरोऽम्लाभिलाषी सन् पित्तेन मृत्युं प्राप्नोति ।

**यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥१७॥**
**सस्नेहं मूर्ध्नि धूमो वा मासांतं तस्य जीवितम् ।**

यस्येति । यस्य पुरुषस्य गोमयस्य चूर्णं सस्नेहं मूर्ध्नि मुखे वा भवेत् । तथा मूर्ध्नि धूमो यस्य वा भवति तस्य मासांतं जीवितं स्यात् ।

**मूर्ध्नि भ्रुवोर्वा कुर्वंति सीमंतावर्तका नवाः ॥ १८ ॥**
**मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ।**
**जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति॥१९॥**
**खगा वा मूर्ध्नि लीयंते यस्य तं परिवर्जयेत् ।**

मूर्ध्नीति । सीमंतानामावर्तका मंडलानि सीमंतावर्तकाः शिरसि भ्रुवोर्वा नवा अपूर्वाः स्वस्थस्य षड्रात्रान्मृत्युं कुर्वंति । आतुरस्य पुनस्त्रिरात्रात् कुर्वंति । अनेकार्थत्वाद्धातूनां सूचयंतीत्यर्थः। ननु विषवन्मारणे तेषां कर्तृत्वम् । तर्हि सूचयंतीत्येतदेव कस्मान्न कृतम् । ब्रूमः । यदोत्पद्यंते सीमंतावर्तकास्तदा निश्चितं स्थायि रिष्टं समुत्पन्नमित्यवगंतव्यमिति प्रतिपादनार्थं कुर्वंतीत्युक्तम् । तथा यस्य जिह्वा श्यावा भवति । तथा मुखं पूति दुर्गंधि । तथा सव्यं वाममक्षि निमज्जत्यंतः प्रविशति । तथा यस्य खगाः पक्षिणश्च मूर्ध्नि लीयंते श्लिष्यंति तं परिवर्जयेद्वैद्य इति शेषः ।

**यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥२०॥**
**आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।**

यस्येति । यस्य स्नातानुलिप्तस्य पूर्वं स्नातः पश्चादनुलिप्तस्तस्यार्द्रेषु सर्वगात्रेषु पूर्वमादौ भृशमुरः शुष्यत्यतिशयेन वक्षः शोषमायाति सोऽर्धमासं न जीवति । नन्वार्द्रेषु सर्वगात्रेष्विति न वक्तव्यं पुनरुक्तत्वात् । तथा हि । पूर्वं शुष्यत्युरो भृशमित्युक्त आर्द्रेषु सर्वगात्रेष्वित्यर्थाद्गम्यत एव । अन्यथा पूर्वग्रहणमनर्थकं स्यात् । नैवम् । अत्र हि भृशग्रहणात्पूर्वमुरो भृशं शुष्यति न पुनरन्यान्यपि गात्राणि शुष्यंतीत्यायाति । न चैतदिष्टं शास्त्रकृतः । अत एवार्द्रेष्वित्याह । तदयमर्थोऽत्राभिप्रेतः। यथैवोरसो भृशं शोषस्तथैव शेषाणामंगानां भृशार्द्रता स्यादित्येतत् प्रतिपादयितुमार्द्रेष्वित्युक्तम् । सर्वगात्रेष्वार्द्रेषु सत्सु पूर्वमुरो भृशं शुष्यतीत्येतदाश्चर्यमाश्चर्यत्वाद्रिष्टम् ।

**अकस्माद्युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥**
**तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।**
**यस्य स्फुटेयुरंगुल्यो नाकृष्टा न स जीवति ॥ २२ ॥**
**क्षवकासादिषु तथा यस्याऽपूर्वो ध्वनिर्भवेत् ।**
**ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा २३**
**आप्लुतानाप्लुते काये यस्य गंधोऽतिमानुषः ।**
**मलवस्त्रव्रणादौ वा वर्षांतं तस्य जीवितम् ॥ २४॥**

अकस्मादिति । तत्र प्राकृतो वर्णो गौरादिः प्रागुक्तः । वैकृतस्तु वर्णो नीलादिः । तौ प्राकृतवैकृतौ वर्णौ यस्य निमित्तमंतरेणाऽपि तुल्यकालं देहे भवतस्तौ मृत्यवे । तथैवोपचयग्लान्यादयः परस्परं प्रतिपक्षभूता युगपद्यस्य जायंते ते तस्य मृत्यवे । आदिशब्देन शैत्योष्णादीनि गृह्यंते । यस्य आकृष्टा अंगुल्यो न स्फुटेयुर्न त्रुटेयुः स न जीवति । यस्य क्षवादिष्वपूर्वो ध्वनिरलौकिकः शब्दः स्यात् स न जीवति । यस्योच्छ्वासोऽतिह्रस्वोऽतिदीर्घो वा भवेदथवोच्छ्वासः पूतिगंधिः सुरभिर्वा यस्य स न जीवति । तथा आप्लुताऽनाप्लुते स्नाताऽस्नाते काये यस्य मानुषमतिक्रांतोऽतिमानुषो गंधः सुरभिरसुरभिर्वा भवति । यस्य मलवस्त्रव्रणादौ वाऽतिमानुषो गंधः स्यात् । वर्षांतं तस्य जीवितम् । तत्क्षणादारभ्य तावदसाववस्थितजीवितो यावद्वर्षं तदंते वत्सरांते मृत्युर्भवेत् । जायेतेत्यर्थः ।

**भजंतेऽत्यंगसौरस्याद्यं यूकामक्षिकादयः ।**
**त्यजंति वाऽतिवैरस्यात्सोऽपि वर्षं न जीवति॥२५॥**
**सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।**
**शीतेषु भृशमौष्ण्यं वा स्वेदःस्तंभोऽप्यहेतुकः ॥२६**

भजंत इति । शोभनरसस्य भावः सौरस्यम् । अंगस्य सौरस्यमंगसौरस्यम् । अतिशयेनांगसौरस्यमत्यंगसौरस्यं तस्माद्धेतोर्यूकामक्षिकादयो यं भजंतेऽथवा यमतिवैरस्यात्त्यजंति सोऽपि वर्षं न जीवति । तथा यस्य संततोष्मसु सदोष्णेषु गात्रेष्ववयवेषु भृशं शैत्यमुपलक्ष्यत उपलभ्यते । शीतेषु वा गात्रेषु भृशमौष्ण्यं यस्योपलभ्यते। भृशशब्दस्याऽत्र हि विषयद्वयेऽपि संबंधः । यस्याऽहेतुको निर्निमित्तोऽगेष्वतिस्वेदस्तथा स्वेदविषयो यः स्तंभः सोऽपि यस्य स्यात्सोऽपि वर्षं न जीवतीति योज्यम् ।

**यो जातशीतपिटिकः शीतांगो वा विदह्यते ।**
**उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥**
**उरस्यूष्मा भवेद्यस्य जठरे चाऽतिशीतता ।**
**भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥**
**मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाप्सु निमज्जति ।**
**निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९॥**

य इति । जाताः शीताः पिटिका यस्य स जातशीतपिटिकः कफोद्भूतपिटिकाक्रांतदेहो यो विदह्यते विदाहमनुभवति । शीतांगः सन् वा यो विदह्यते । तथोष्णं द्वेष्टि यः पुरुषः शीतार्तः सन् स प्रेताधिपगोचरः स मृत्युनाऽऽत्मसात्क्रियत इत्यर्थः । उरसि यस्योष्मा औष्ण्यं भवेत् । जठर उदरे चातिशैत्यम् । पुरीषं भिन्नं तृष्णा च भवति स प्रेततुल्यः प्राप्तमरणत्वादिति भावः ।

यस्य मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वा अप्सु निमज्जति बुडति । यस्य वा निष्ठ्यूतं निष्ठीवनमनेकवर्णं भवत्यसौ मासेन नश्यति ।

**घनीभूतमिवाकाशमाकाशमिव यो घनम् ।**

मरणाभिमुखः पुरुषो विपर्यासकारिभिर्दोषैरघनादि घनादिरूपं मन्यते घनादि त्वघनादि मन्यते तद्विपर्ययेण । अत एवोपमार्थमिवशब्दं प्रायुंक्त । अघनो घनः संपन्नो घनीभूतः । च्विप्रत्ययस्तस्याऽस्य च्वावितीत्वम् । घनीभूतमिवांतरिक्षमंतरिक्षमिव घनं मेदिनीधर्ममंतरिक्षमूर्ध्वस्थं यत्तदधःस्थं पातालस्थमिव पश्यतीति वक्ष्यमाणेन संबंधः ।

**अमूर्तमिव मूर्तं च मूर्तं चाऽमूर्तवत्स्थितम् ॥ ३० ॥**
**तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।**
**अनेत्ररोगश्चंद्रं च बहुरूपमलांछनम् ॥ ३१ ॥**

अमूर्तमिति । चशब्दो भिन्नक्रम इवशब्दश्च । अमूर्तं च वातादिकं मूर्तमिव रूपवंतमिव पश्यति मूर्तं च वन्ह्यादिकममूर्तमिव स्थितं यः पश्यति । भेडोऽप्यधीते । यस्य दर्शनमायाति वायुरंबरगोचरः । वह्निर्नायाति दीप्तोऽपि तस्यायुःक्षयमादिशेदिति । तथा तेजस्वि यद्वस्त्वग्न्यादिकं भास्वरं तदतेजो निस्तेजः पश्यति । तेजस्वीत्यस्मायामेधेत्यादिना विनिः । तद्वच्चेति । तेजस्यतेजोदर्शनेन तुल्यं तद्वत् शुक्लं च कृष्णं यः पश्यत्यसच्च यद्वस्तु तत्सद्यः पश्यति स नश्यति । नेत्रेषु रोगो नेत्ररोगः स न विद्यते यस्य सोऽनेत्ररोगी तिमिरादिकमंतरेण बहुरूपं चंद्रं पश्यति । बहून् शशांकानालोकयत इत्यर्थः । यो वा अलांछनमकलंकं चंद्रं पश्यति स नश्यति । एषु च घनीभूतमित्यादिषु विशिष्टेषु वस्तुविपर्यासदर्शनमात्रलक्षणस्यैकस्मिन्नेवोदाहरणत्वेन रिष्टे दर्शयितुं युक्ते यदनेकरिष्टप्रदर्शनं तत्प्रपंचार्थं वेद्यम् ।

**जाग्रद्रक्षांसि गंधर्वान् प्रेतानन्यांश्च तद्विधान् ।**
**रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति ॥३२॥**

जाग्रदिति । आसन्नमरणो नरो जाग्रदेव यथास्वरूपाणि रक्षःपिशाचादीनि यः पश्यति न विपर्ययवस्तुरूपाणि । यतस्तदानीं तैरेव स उपास्यते । तथा च वक्ष्यति । यमदूतपिशाचाद्यैर्यत्परासुरुपास्यत इति । रक्षांसीति बहुवचननिर्देशो बहुराक्षसदर्शने सुतरामस्य रिष्टस्य परिपूर्णत्वमिति द्योतयितुम् । एकस्मिन्नपि हि राक्षसे दृष्टे रिष्टं भवत्येव । जातौ वा बहुवचनम् । अन्यांश्च तद्विधान् राक्षसादिप्रकारान्यः पश्यति । तथा विकृता द्रष्टुं दुःशक्या आकृतिर्यस्य रूपस्य तद्रूपं व्याकृति रक्षःपिशाचादिव्यतिरिक्तं तदनेकं यः पश्यति स नश्यति ।

**सप्तर्षीणां समीपस्थां यो न पश्यत्यरुंधतीम् ।**
**ध्रुवमाकाशगंगां वा स न पश्यति तां समाम्॥३३॥**

सप्तर्षीति । यो नरोऽरुंधतीं सप्तर्षीणां समीपस्थां न पश्यति स तां समां न पश्यति स तस्य संवत्सरस्यांतरे म्रियत इत्यर्थः । सप्तर्षीणां समीपस्थामित्यरुंधत्या विशेषणं सप्तर्षिसमीपेऽरुंधत्याः स्थितिर्भवतीति वेदयति । तथा चान्यैः सामान्येनैवोक्तम् । यथा । अरुंधतीं ध्रुवं चैव सोमच्छायां महापथम् । यो न पश्येन्न पश्येत्स नरः संवत्सरात्परमिति । तथा यो ध्रुवं न पश्यति तथा आकाशगंगां यो न पश्यति स तां समां न पश्यति ।

इदानीं श्रोत्रेंद्रियस्य विकृतिमाचिख्यासुराह ।

**मेघतोयौघनिर्घोषवीणापणववेणुजान् ।**
**शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ३४**
**निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकस्वनम् ।**

मेघेति । मेघादिजान् वेणुपर्यंतान् शब्दांस्तथाऽन्यांश्च शब्दांस्तथारूपान्महतोऽसतः परैरनुपलभ्यमानान् यः पुरुषः शृणोति । तथा मेघादिजांस्तथाऽन्यांश्च यः शब्दान् सतो विद्यमानान्न शृणोति तेषां मरणमादिशेदिति वक्ष्यमाणस्य वचनविपरिणामेनात्र संबंधः कार्यः । यो धुकधुकशब्दं कर्णावंगुल्या निष्पीड्य न शृणुयात् ।

**तद्वद्गंधरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥**
**सर्वशो वा न यो यश्च दीपगंधं न जिघ्रति ।**

तद्वदिति । तैर्मेघादिजैः शब्दैस्तुल्यस्तद्वत् । यथा मेघादिजान् शब्दान् योऽसतः शृणोति सतश्च न शृणोति तद्वद्यो गंधरसस्पर्शान् विपर्ययाद्वैपरीत्येन मन्यते न यथावस्तु जातान् । तत्र गंधविपर्ययो यथा । सुगंधं दुर्गंधं मन्यते । रसविपर्ययो यथा । मधुरमम्लमम्लं मधुरमित्यादि । स्पर्शविपर्ययो यथा । मृदुस्पर्शं खरस्पर्शं मन्यते । शीतमुष्णं स्निग्धं रूक्षमिति विपर्ययेण मन्यते । सर्वशो गंधादीन् वा योऽपि न मन्यते यश्च तत्कालनिर्वाणस्य दीपस्य गंधं न जिघ्रति घ्राणेंद्रियेण नानुभवति ।

**विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः३६**
**यः पांसुनेव कीर्णांगो योंऽगघातं न वेत्ति वा ।**

विधिनेति । विधिना शास्त्रप्रयुक्तेन प्रयुक्ता रसा यस्य दोषाय रोगायाऽविधिना शास्त्रविधिव्यतिक्रमेण प्रयुक्ताः स्वास्थ्याय स्युः। तथा यः पांसुना रजसेव कीर्णांगो धूलिधूसरितशरीरः । यश्चांगे घातं हतिं न वेत्ति ।

**अंतरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥**
**जानात्यतींद्रियं यश्च तेषां मरणमादिशेत् ।**

अंतरेणेति । तपस्तीव्रमंतरेणोग्रं तपो विना यः पुरुषोऽतींद्रियमिंद्रियेभ्योऽतिक्रांतमिंद्रियाणामगोचरं स्वर्गादि वेत्ति तथा योगं वा विधिपूर्वकमंतरेण योऽतींद्रियं जानाति । तेषां पूर्वोक्तानां सर्वेषां मरणमादिशेत् । योगश्चित्तवृत्तिनिरोधः । विधिपूर्वको यथाशास्त्रं सम्यगुपदेशः । तथाऽन्योऽपि योगो रसायनादिः । युज्यत इति योगो विधिविशेषः । शास्त्रोद्दिष्टरसायनांजनादि विनापि ह्यतींद्रियं दृश्यते दूरव्यवहितादि ।

अधुना स्वरविकृतिमाह ।

**हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपिवा३८**
**सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।**

हीन इति । यस्य पुरुषस्य स्वरः शब्दो निमित्तमंतरेण हीनोऽथवा दीनो दैन्ययुक्तो भवति । अव्यक्तोऽस्फुटो यस्य स्यात् । गद्गदो घर्घरो वा यस्य भवति । यो वा विवक्षुर्वक्तुमिच्छन् कारणमंतरेण विमुह्येद्वक्तुं न शक्नोति स न जीवति ।

**स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः ॥ ३९ ॥**
**रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।**

स्वरस्येति । स्वरस्य शब्दस्य दौर्बल्यं दृष्ट्वा बलवर्णयोश्च हानिमयुक्त्या दृष्ट्वा मरणमादिशेत् । चशब्दः समुच्चये । रोगवृद्धिमयुक्त्या च दृष्ट्वा नरस्य मरणमादिशेत् । अयुक्त्या निर्निमित्तमेवेत्यर्थः ।

**अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥**
**श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।**

अपस्वरमिति । स्वभावस्वरादपगतं भ्रष्टमपस्वरं हीनस्वरं कृत्वा यो नरोऽहं मरिष्यामि मरिष्यामीत्येवमात्मनो मरणं भाषते परस्परं तथाभूतं दूरादेव वर्जयेद्वैद्यो न चिकित्सेत् । तथाऽस्य शब्दस्याऽहं मरिष्यामीत्येवंभूतस्य यो नरः श्रोता तमपि वैद्यो दूरतो वर्जयेत् ।

स्वराश्रयं रिष्टमुक्त्वा छायाश्रयं रिष्टमभिधित्सुराह ।

**संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥**
**छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ।**

संस्थानेनेति । संस्थानं प्रतिपुरुषं विलक्षणं समविषमं रूपमाकृतिरित्यर्थः । तत्र यदि शरीरस्य समं संस्थानं भवति छाया त्वस्य विषमा दृश्यते तदा रिष्टम् । तथा यदि शरीरस्य विषमं संस्थानं छाया तु समा भवति तदपि रिष्टम् । तथा यदि दीर्घप्रमाणस्य सतो ह्रस्वा छाया भवति ह्रस्वप्रमाणस्य वा दीर्घा भवति तदपि रिष्टम् । एवं संस्थानेन प्रमाणेन च छायाविवृतिं विद्यात् । तथा यस्य नाभसी छाया आग्नेयी छाया या वर्णतो दृश्यते सा वर्णविवृतिः । एवं पृथिव्यादिमयीषु छायासु वर्णविवृतिर्योज्या । तथा यस्य यथाभूता प्रभा साऽन्यथाभूता भवति सा प्रभाविवृतिः । एवं संस्थानाद्यन्यतमेन यस्य छाया विवर्ततेऽन्यथा भूताऽन्यथा संपद्यते स्वप्नेऽपि स पुमान् प्रेत एव किं पुनर्जाग्रदवस्थायां न प्रेत इति एवकारेणारिष्टस्याव्यभिचारित्वं सूचयति । उत्पन्नश्चेन्नरस्य छायाया अन्यथाभावस्तदानीं पुरुषो यमसात्संपन्नो मंतव्य इत्यर्थः ।

अस्याश्च छायाया द्वैरूप्यं दर्शयितुमाह ।

**आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥**
**छायांऽगात्संभवत्युक्ता प्रतिच्छायेति सा पुनः ।**
**वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥**

आतपेति । या शरीरादातपादर्शतोयघृतादौ शरीरसंस्थानप्रमाणानुरूपा संभवति प्रतिबिंबकरूपा सा प्रतिच्छायेत्युच्यते । तस्या हि न वर्णप्रभे आश्रयः । यस्याः पुनर्वर्णप्रभे आश्रयश्छायायाः सा शरीरस्यैव च्छाया न प्रतिच्छायावच्छरीरादन्यत्रातपादर्शतोयादौ कुत्रचिदपि याति प्रतिबिंबकरूपतया ।

**भवेद्यस्य प्रतिच्छाया छिन्ना भिन्नाऽधिकाऽकुला ।**
**विशिरा द्विशिरा जिह्मा विकृता यदि वाऽन्यथा४४**
**तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ।**

भवेदिति । यस्य पुंसः प्रतिच्छाया छिन्ना द्विधा दृश्यते । अथवा भिन्ना किंचित्सच्छिद्रेव यस्य दृश्यते । तथा यस्याऽधिका दृश्यते न यथाप्रमाणा । यस्य वा आकुला चलस्वरूपा अनिश्चितप्रतिबिंबा भवति । तथा यस्य विशिरा शिरोरहिता । तथा यस्य द्विशिरा । तथा यस्य जिह्मा कुटिला । विकृतेत्यादि । उक्तप्रकारादन्यथाऽन्येन प्रकारेण यस्य विकृता दृश्यते आतपादर्शतोयादौ तं पूर्वोक्तं च सर्वमेव समाप्तायुषं क्षीणजीवितं विद्यात् । न चेदित्यादि । लक्षयितुं प्रत्यक्षादिभिः प्रमाणैः शक्यं लक्ष्यम् । शक्यार्थे कृत्यः । लक्ष्यं च तन्निमित्तं च तस्मात्तथाविधान्निमित्ताद्विकृता छाया यदि न भवति तदा रिष्टं नान्यथा ।

**प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका॥४५॥**

प्रतीति । प्रतिच्छायामयी कन्यका प्रतिबिंबकुमारिकेति या लोके प्रसिद्धा साऽक्षिण नेत्रे यस्य नेक्ष्येत नोपलभ्येत तं समाप्तायुषं विद्यात् ।

इदानीं यस्य महाभूतस्य कीदृशी छाया स्यात् तां कथयितुमाह ।

**खादीनां पंच पंचानां छाया विविधलक्षणाः ।**

खादीनां महाभूतानां पंचानां पंच छायां भवंति । ननु खादीनां पंचत्वमर्थाल्लब्धमेव तत्किं पंचग्रहणेन । अस्त्वेवैतत् । किंतु यथा खादिभ्यः पंचभ्यो द्रव्यमेकं भूतोत्कर्षापकर्षभेदेनासंख्येयं द्रव्यं तथा छायानामप्येकत्वं भूतोत्कर्षापकर्षभेदाच्चासंख्येयत्वमाशंक्येत तदाशंकानिवृत्त्यर्थं पंचग्रहणम् । पंचैव छाया भवंति नोनाधिका इति । किंभूताश्छायाः । विविधलक्षणाः । विविधं लक्षणं वक्ष्यमाणं यासां ता एवम् ।

**नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च॥४६॥**

आकाशजा छाया निर्मला शुद्धा । तथा आनीला ईषन्नीलेत्याकारप्रश्लेषोऽत्र वेद्यः । शुद्धवैदूर्यविमला हि तोयजेति वक्ष्यति । तथा किंचित्स्निग्धा । सप्रभेत्यनेन शोभनत्वमुक्तम् । एतदेव स्फुटयितुमिवशब्दस्तंत्रकृता प्रागुक्तः । अन्यथा छायाप्रभयोर्भिन्नविषयत्वादनुपपन्नमेतद्वाक्यं स्यात् । भेदश्चानयोरधुनैव वक्ष्यति ।

**वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।**
**विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥**
**शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।**
**स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी॥**

वातादिति। वाताद्रजोरुणादियुक्ता छाया भवति। आग्नेयी विशुद्धरक्तवर्णा दीप्ताभा तथा दर्शनं प्रियं यस्याः सैवंविधा भवति। तोयजा छाया निर्मलवैदूर्यविमला सुस्निग्धा सुखा सुखावहा। पार्थिवी छाया स्थिरादिगुणयुक्ता। ननु चाग्निजलभुवां स्वयं वर्णादियोगादाग्नेय्यादिकानां तद्वर्णकत्वमुपपन्नम्। नभोमारुतयोस्तु स्वयं वर्णाद्ययोगात्कथं तच्छायानां वर्णादियोगो युज्येतेति केचित्। तान् ब्रूमहे। अचिंत्यत्वाद्धेतुफलस्यादोषः। तथा हि। मधुरादयो रसाः कालादमूर्ताद्भवंति ते दृश्यंते यथा तथा तच्छाये आप्येते भविष्यतः। तत्र यस्य नरस्य कर्मादिसहायं नभश्छायामुत्पादयति तस्य नाभसीति युज्यत एव। एवं वायव्यामपि वाच्यम्।

इदानीमासां छायानां गुणनिर्देशमाह।

**वायवी रोगमरणक्लेशायान्याः सुखोदयाः।**

वायवी छाया रोगाद्यर्थं जायते। अन्यास्छायाः सुखोदयाः सुखावहाः।

**प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता॥४९॥**

प्रभा सर्वा सप्तप्रकाराऽपि तैजसाग्नेय्युक्ता तंत्रकृद्भिः स्मृता। तदेव सप्तविधत्वमाह।

**रक्ता पीता सिता श्यामा हरिता पांडुरा सिता।**
**तासां याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः**
**ताः शुभा मलिना रूक्षाः संक्षिप्ताश्चासुखोदयाः।**

रक्तेति। तासामित्यादि। तासां पूर्वोक्तानां प्रभाणां मध्याद्याः प्रभा विकासिन्यः प्रसृता इव तथा स्निग्धा विमलाश्च स्युस्ताः शुभाः कल्याणकारिण्यः। याश्च मलिनादिगुणयुक्तास्ता अशुभोदया अमांगल्यकारिण्यः।

छायाप्रभयोरन्यत्वं दर्शयितुं लक्षणमाह।

**वर्णमाक्रामति छाया प्रभा वर्णप्रकाशिनी ॥ ५१ ॥**

छाया रक्तादिवर्णमाक्रामति परिभूयावतिष्ठते। प्रभा तु वर्णप्रकाशिनी वर्णं प्रकाशयितुं शीलमस्याः सा वर्णप्रकाशिनी।

तथेदमपि छायाप्रभयोरन्यत्वे लक्षणमाह।

**आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते।**

निकटे छाया लक्ष्यते। प्रभा पुनर्विकृष्टे दूरप्रदेशे प्रकाशते। यथा पाषाणादिपरिपूर्णानामपि पर्वतादिप्रदेशानां दूराद्विलक्षणैव कांतिः प्रकाशते।

एवं छायाप्रभयोरन्यत्वं प्रदर्श्य तयोरेव व्याप्तिं प्रदर्शयति।

**नाऽच्छायो नाऽप्रभः कश्चिद्विशेषाश्चिह्नयंति तु ५२**
**नृणां शुभाशुभोत्पत्तिं काले छायासमाश्रयाः।**

नेति। कश्चिदपि पुरुषश्छायारहितः प्रभाहीनश्च नास्ति। विशेषास्तु नृणां शुभाशुभोत्पत्तिं काले विशिष्टे चिह्नयंति। व्यंजयंतीत्यर्थः। किंभूता विशेषाः। छायासमाश्रयाश्छायाश्रिताः।

**निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥**

निकषन्निति। निकषन् घर्षयन्निव यः पादौ च्युतांसः स्रस्तांसः सन् भूमौ परिसर्पति। तथा ये वक्ष्यमाणाश्च ते सर्वे समवर्तिनो यमस्य वशगा इति योज्यमंतकालकारित्वादस्य।

**हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु।**
**योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट्५४**
**योऽल्पाशी वा कफेनार्तो दीर्घं श्वसिति चेष्टते।**
**दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति॥५५॥**
**ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पंदते भृशम्।**
**शिरो विक्षिपते कृच्छ्राद्योऽचयित्वा प्रपाणिकौ५६**
**यो ललाटात्स्रुतस्वेदः श्लथसंधानबंधनः।**
**उत्थाप्यमानः संमुह्येद्यो बली दुर्बलोऽपि वा॥५७॥**
**उत्तान एव स्वपिति यः पादौ विकरोति च।**
**शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५८ ॥**
**अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ।**

हीयत इति। तथा योन्नमश्नन् भक्तं भक्षयन् बलान्नित्यं हीयते। किंभूतमन्नम्। हितं पथ्यम्। बहु भूरि। योऽल्पाशी बहुविण्मूत्रो यश्च बह्वाशी बह्वश्नाति नित्यमल्पविण्मूत्रश्च। यश्चाऽल्पाशी कफेनार्तः पीडितो दीर्घं श्वसिति बहुश्वासं मुंचति। तथा चेष्टते परिलुठति। तथा यो दीर्घमुच्छ्वस्य बहूर्ध्वं श्वासं मुक्त्वाऽनंतरं ह्रस्वं निःश्वस्याऽल्पं श्वासं प्रवर्त्यावृत्तमंतः कृत्वा परिताम्यति दुःखायते। यश्च ह्रस्वं प्रश्वसिति। व्याविद्धं विषमं कृत्वा नाडीभिः स्पंदते भृशमतिशयेन स्फुरति। यः प्रपाणिकौ पाण्योः पश्चाद्भागस्थिताववयवविशेषावंचयित्वा कृच्छ्रेण शिरो मूर्धानं विक्षिपते। यो ललाटादलिकात् स्रुतस्वेदः सन् शिथिलसंधिबंधो भवति। य उत्थाप्यमानो बली दुर्बलो वा संमुह्येन्मोहमुपैति। य उत्तान एव वा जातुचित्पार्श्वे न स्वपिति। यश्च पादौ विकरोति विकृतिं नयति। यः शयनादावसदविद्यमानमेव वस्तु ग्रहीतुमिच्छति। यः अहास्ये हास्यविषयाभावेऽप्यभीक्ष्णं हसन् संमुह्यन् दशनच्छदौ लेढि जिह्वया परिमृशति।

**उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः ॥ ५९॥**
**यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा।**
**भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥**
**वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः।**

उत्तरोष्ठमिति। यश्चोत्तरोष्ठं परिलिहन् फूत्करान्नानाविधान् शब्दान् करोति। यं नरं छायाऽभिद्रवत्यभिभवति। कीदृशी। कृष्णा पीताऽरुणाऽपि वा। ये च भिषगादिद्विषः। एते सर्वे

समवर्तिनो वशगा विज्ञेयाः । समं वर्तते रागद्वेषौ हित्वा समवर्ती यमः । सर्व एवेत्येतन्निकषन्निव यः पादावित्यत आरभ्य यावद्भिषग्भेषजपानान्नगुरुमित्रद्विषश्च य इत्येतत्पर्यंतस्य ग्रंथस्य संबंधार्थम् ।

**ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥ ६१ ॥**
**उष्णोऽपरः प्रदेशश्च शरणं तस्य देवता ।**

ग्रीवेति । यस्य ग्रीवादिकं शीतलं सत् स्विद्यति स्वेदयुक्तं भवति । अपरः प्रदेशश्चोष्णस्तस्य शरणं रक्षणं देवता नान्यत् ।

**योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा॥६२॥**
**बलिं बलिभृतो यस्य प्रणीतं नोपभुंजते ।**
**निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम्॥६३॥**
**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षम् ।**

य इति । यः पुमानणुज्योतिस्तोकदृक् । केचित्स्वल्पतेजा इत्याहुः । तथा अनेकाग्रो व्याकुलचेताः । दुश्छायो विवर्णच्छायो निंदितकांतिर्वा । सदा दुर्मनाः सततमेव शोकाक्रांतमानसः । तथा यस्य पुंसो बलिं प्रणीतं तन्नामोद्दिश्य प्रदत्तं बलिभृतो बलिभुजो वायसादयो नोपभुंजते न खादंति स यमक्षयं प्राप्नोतीति संबंधः । बलिभृत इत्यतिशयार्थम् । किल काका अपि नदंति किंपुनरन्य इत्यर्थः । तथा यो नरो निर्निमित्तं मेधादिजननरसायनादिकारणमंतरेण मेधादीन् प्राप्नोत्यतो वा मेधादिभ्यो भ्रंशं प्राप्नोति सोंऽतकगृहं प्राप्नोति । श्रीरत्र धनं राज्यं वा । उपचयः शरीरपुष्टिः ।

**गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥ ६४ ॥**
**यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ।**

यस्य नरस्य गुणमयी सत्वादिमयी प्रकृतिर्दोषमयी वातादिमयी स्वस्थस्यातुरस्य वाऽन्यथात्वं याति स्वभावं हित्वा स षण्मासान्न जीवति ।

**भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्॥६५॥**
**षडेतानि निवर्तंते षड्भिर्मासैर्मरिष्यतः ।**
**मत्तवद्गतिवाक्कंपमोहा मासान्मरिष्यतः ॥ ६६ ॥**

भक्तिरिति । षड्भिर्मासैर्मरिष्यतो नरस्य भक्त्यादीनि षडहेतुकं कारणमंतरेण निवर्तंते । अहेतुकमिति निवर्तनक्रियाविशेषणम् । षडिति नियमार्थम् । यदा षडपि निवर्तंते नैकैकं तदा रिष्टमित्यर्थः । मासेन मरिष्यतो मत्तवन्मत्तस्येव गतिवाक्कंपमोहा भवंति ।

**नश्यत्यजानन् षडहात्केशलुंचनवेदनाम् ।**
**न याति यस्य चाहारः कंठं कंठामयादृते ॥ ६७ ॥**
**प्रेष्याः प्रतीपतां यांति प्रेताकृतिरुदीर्यते ।**
**यस्य निद्रा भवेन्नित्यं नैव वा न स जीवति ॥ ६८ ॥**
**वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।**
**चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥**
**यैः पुरा रमते भावैररतिस्तैर्न जीवति ।**

नश्यतीति । कचोत्पाटनपीडामविंदन् षडहान्नश्यति । यस्याहारः कंठामयं विना कंठं न याति स च षडहांतरे म्रियते । प्रेष्या भृत्या यस्य प्रतीपतां वैपरीत्यं यांति स नश्यति । यश्च प्रेताकार उपलक्ष्यते सोऽपि न जीवति । यस्य नरस्य नित्यं सततं निद्रा भवति यस्य नैव वा न कदाचिदपि निद्रा भवति स न जीवति । यस्य नरस्याऽस्राणामश्रुस्रोतसां मुखं द्वारमापूर्यते स न जीवति । यस्य चरणौ भृशमत्यर्थं निर्निमित्तं स्विद्यतः स न जीवति । चक्षुरित्यादि । यमराज्यं यास्यतो नयनमाकुलत्वं याति । यैर्भावैः पदार्थैः पुरा पूर्वं रमते सुखायते तैः पदार्थैर्न रतिर्भवति यस्य स न जीवति ।

**सहसा जायते यस्य विकारः सर्वलक्षणः ॥ ७० ॥**
**निवर्तते वा सहसा सहसा स विनश्यति ।**

सहसेति । यस्य पुंसो विकारो ज्वरादिः सहसा कारणंविना सर्वलक्षणः सकललिंगोपेतो जायते । अथवा तादृशो विकारः सहसा शीघ्रमेव निवर्तते नश्यति स पुरुषः सहसा अचिरादेव विनश्यति ।

अधुना प्रतिरोगं रिष्टं वक्तुं सर्वव्याधिप्रधानस्य ज्वरस्यैव तावद्विकृतिं लिलक्षयिषुराह ।

**ज्वरो निहंति बलवान् गंभीरो दैर्घरात्रिकः ॥७१ ॥**
**स प्रलापभ्रमश्वासक्षीणं शूनं हतानलम् ।**
**अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥**
**संशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् ।**
**बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥**

ज्वरो बलवानित्यादिलक्षणः क्षीणादिलक्षणं पुरुषं हंति । बलवान् हेत्वादिभिर्बलवद्भिर्युतो गंभीरोऽशेषधात्वंतर्गतः । दैर्घरात्रिको दीर्घकालानुबंधी । अन्ये तु रात्रिजागरकारीत्याहुः । दीर्घा हि जागरतो रात्रिः । तथा चोक्तम् । दीर्घं श्रांतस्य योजनमिति । तथा प्रलापादियुक्तः । कीदृशमातुरम् । क्षीणं धातुक्षययुक्तम् । तथा अक्षामं सबलम् । तथा रक्तनेत्रम् । हृदयशूलान्वितं हंतीति योज्यम् । यश्च ज्वरः संशुष्ककासः पूर्वाह्णेऽथवाऽपराह्णे भवेत्स द्विविधोऽपि हंति । तथा यः श्लेष्मकाससमन्वितो ज्वरो बलमांसविहीनस्य पुंसः स्यात् स तं निहंतीति रिष्टत्रयमेतत् । ननु च हेतुभिर्बलिभिर्युक्तो बहुभिर्बहुलक्षणः । ज्वरः प्राणांतकृद्यश्च शीघ्रमिंद्रियनाशन इत्येष ज्वरस्य रिष्टप्रकारः कस्मान्नोक्तः । उच्यते । उक्तप्राय एवायं बलवानिति वचनात् ।

रक्तपित्तविकृतिलक्षणं रिष्टमधिकृत्याह ।

**रक्तपित्तं भृशं रक्तं कृष्णमिंद्रधनुःप्रभम् ।**
**ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥**
**रोमकूपप्रविसृतं कंठास्यहृदये सजत् ।**

**वाससो रंजनं पूति वेगवच्चातिभूरि च ॥ ७५ ॥**
**वृद्धं पांडुज्वरच्छर्दिकासशोफातिसारिणम् ।**

रक्तपित्तमिति । रक्तपित्तमीदृग्रूपं कर्तृभूतं नरं हंति । कीदृक् । भृशमत्यर्थं रक्तं लोहितम् । तथा अतिकृष्णं च। भृशशब्दो हि द्वयोरपि युज्यते । तथेंद्रधनुःप्रभं नानावर्णमित्यर्थः । किलेदृशे रक्तपित्ते रसमेदोमज्जादिमिश्रस्य रक्तस्य स्रवणान्नानावर्णत्वं संपद्यते । यच्च रक्तपित्तं कर्तृ ताम्रहारिद्रहरितं रक्तं च रूपं दृश्यमानं वा प्रदर्शयेत्तन्निहंति । यच्च रक्तपित्तं विनापि वर्णं रोमकूपेभ्यः समस्तेभ्यः प्रकर्षेण विसृतं जातं प्रवृत्तं तच्च निहंति । तथा कंठे मुखे हृदये च तुल्यकालं सजत् संश्लिष्यत् सानुषंगं तच्च हंति । वासस इत्यादि वाससः अरंजनमित्यकारप्रश्लेषोऽत्र बोध्यः । वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रंजकमतस्तेन रक्तं वस्त्रं समनंतरं प्रक्षालितं शुद्धं संपद्यते न रागयुक्तम् । तथा ह्यस्मिन् व्याधौ रक्तपित्ताभ्यां परस्परमविभागापन्नत्वाद्वस्त्रस्य रंजनं प्राप्तम् । रक्तेन हि पित्तसहितेन वासो रज्यते नैतद्धौतं शुद्धं संपद्यते । तथा चोक्तम् । शुद्धं वा भावितं वस्त्रमवानं कोष्णवारिणा । प्रक्षालितं विवर्णं स्यात्पित्तं शुद्धं तु शोणितम् । तथा पूति दुर्गंधि । तद्धि धातूनुपक्लेदयति । उपक्लिन्नानां धातूनामत्यर्थं दुष्टत्वं चेति निहंत्येव । तथा वेगवद्वेगेन निर्गत्य रुद्धं पुनर्वेगेन प्रवर्तत इति । तथा भूरि प्रभूतम् । एवंविधं च रक्तपित्तं निहंति । वृद्धमुद्रिक्तं रक्तपित्तं सत् पांड्वादियुतं नरं हंति ।

**कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ७६**

कासेति । कासश्वासौ ज्वरादिपंचविधोपद्रवोपेतं निहत इति वचनविपरिणामेन संबंधः ।

**यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।**

यक्ष्मेति । यक्ष्मा राजयक्ष्मा पार्श्वरुजादियुतं नरं हंति ।

**छर्दिर्वेगवती मूत्रशकृद्गंधिः सचंद्रिका ॥ ७७ ॥**
**सास्रविट्पूयरुक्कासश्वासवत्यनुषंगिणी ।**

छर्दिरिति । छर्दिर्हंतीति । कीदृक् । वेगवती महता वेगेन प्रवर्तमाना । मूत्रशकृतोरिव गंधो यस्याः सा । उपमानाच्चेति गंधस्येदादेशः । तथा सचंद्रिका जलतैलबिंदुसंस्थाना चंद्रिकोच्यते । तथा सहास्रेण वर्तते विट् सास्रविट् । सास्रविट् च पूयश्च रुक् च कासश्च श्वासश्च ते विद्यंते यस्याः सैवम् । तथा अनुषंगिणी दीर्घकालानुवर्तिनी ।

**तृष्णान्यरोगक्षपितं वहिर्जिह्वं विचेतनम् ॥ ७८ ॥**

तृष्णेति । तृष्णेदृशं नरं हंति । कीदृशम् । अपररोगेण क्षपितं कर्षितम् । वहिर्जिह्वं बाह्यतो जिह्वां निःसारयंतम् । तथा विचेतनम् । एतत्समुदितं रिष्टलक्षणम् ।

**मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम् ।**

मदात्ययोऽतिशयेन शीतपीडितं क्षीणं तैलप्रभमुखं च नरं हंति ।

**अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥७९॥**
**हृत्पार्श्वांगरुजाछर्दिपायुपाकज्वरातुरम् ।**

अर्शांसीति । अर्शांसि पाण्यादिशोफयुतं हृदादिरुजाद्यातुरं नरं घ्नंतीति वचनविपरिणामेन संबंधः । हृदयादीनां रुजा संबंधः । हृत्पार्श्वांगरुजा च छर्दिश्च पायुपाकश्च ज्वरश्च तैरातुरं पीडितम् ।

अतीसारविकृतिमाह ।

**अतीसारो यकृत्पिंडमांसधावनमेचकैः ॥ ८० ॥**
**तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ।**
**मस्तुलुंगमषीपूयवेसवारांबुमाक्षिकैः ॥ ८१ ॥**

अतीसार इति । अतीसारो यकृत्पिंडादिभिर्माक्षिकांतैस्तुल्यो हंति । मेचको नीलवर्णः ।

**अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः ।**
**कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट्८२**
**तंतुमान् मक्षिकाक्रांतो राजीमांश्चंद्रकैर्युतः ।**
**शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम् ॥ ८३ ॥**
**स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत् ।**
**सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥ ८४ ॥**

अतिरक्तेति । अतिरक्तासितस्निग्धपूत्यच्छश्चासौ घनवेदनश्चेति कर्मधारयः । कर्बुरो नानावर्णः । कस्मात्पुनरनेकवर्णः। यस्माद्धातून् रक्तमांसादीन्स्रवति । अत एवाह । धातून् प्रस्रवन् । लक्षणे शतृप्रत्ययः। धातुप्रस्रवणेन हेतुना नानावर्णत्वं लक्ष्यते । तथा निष्पुरीषः पुरीषरहितः । अथवाऽतिविट् बहुपुरीषः । तथा तंतुमान् मक्षिकाक्रांतो राजीमांश्चंद्रकैर्युतश्च । ईदृशोऽतीसारो वक्ष्यमाणं नरं हंति । शीर्णा गुदवलयो यस्य तमामुक्तो नालो नालक इव यस्य तं मुक्तनालं मुक्तबंधनमित्यर्थः । तथा पर्वास्थिशूलो विद्यते यस्य तम् । तथा स्रस्तपायुं स्थानाच्च्युतगुदम् । तथा बलेन क्षीणम् । पुनः प्रकृतत्वादतीसारो विशिष्यते । अन्नमेवापक्वमुपवेशयन्सहतृडादिभिः सप्तभिरुपद्रवैर्युक्तः पूर्वोक्तविशेषणमातुरं हंति ।

**अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।**

अश्मरी शूनवृषणादियुक्तं नरं हंति ।

**मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥ ८५॥**

मेहः प्रमेहस्तृडाद्युपद्रवयुक्तं नरं हंति ।

**पिटिकामर्महृत्पृष्ठस्तनांसगुदमूर्धगाः ।**
**पर्वपादकरस्था वा मंदोत्साहं प्रमेहिणम् ॥ ८६ ॥**
**सर्वे च मांससंकोचदाहतृष्णामदज्वरैः ।**
**विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ ८७ ॥**

पिटिकेति । पिटिका मर्मादिगा अथवा पर्वादिस्था मंदोत्साहं प्रमेहातुरं घ्नंति । सर्वं च नरं मांससंकोचादिभिः क्लमांतैर्युक्तं पिटिका घ्नंति ।

**गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।**
**सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः ॥८८॥**
**कासपीनसहृल्लासश्वासातीसारशोफवान् ।**

गुल्मेति । गुल्मः पृथुपरीणाहो यावच्छोफवान् हंति नरम् ।

इदानीमुदरव्याधिनिमित्तं रिष्टमाह ।

**विण्मूत्रसंग्रहश्वासशोफहिध्माज्वरभ्रमैः ॥ ८९ ॥**
**मूर्छाछर्द्यतिसारैश्च जठरं हंति दुर्बलम् ।**
**शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥ ९० ॥**
**विरेचनहृतानाहमानाह्यंतं पुनः पुनः ।**

विडिति । विण्मूत्रादिभिरतीसारांतैरुपद्रवैर्हेतुभूतैर्जठरं च कर्तृभूतमातुरं हंति । कीदृशम् । दुर्बलं हीनबलम् । तथा शूने अक्षिणी यस्य तम् । बहुव्रीहौ सक्थ्यक्ष्णोरिति टच् । कुटिल उपस्थो बस्तमेढ्रवृषणादिरूपो यस्य तम् । तथा उपक्लिन्ने देहत्वचौ यस्य तम् । विरेचनेन हत आनाहो यस्य तम् । मुहुर्मुहुरानह्यंतम् ।

पांडुरोगरिष्टमाह ।

**पांडुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९१ ॥**

पांडुरोगः श्वयथुयुतः पीताक्षिनखदर्शनमातुरं हंति ।

शोफरिष्टं ब्रूते ।

**तंद्रादाहारुचिच्छर्दिमूर्छाध्मानातिसारवान् ।**
**अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ९२ ॥**
**नारीं शोफो मुखाद्धंति कुक्षिगुह्यादुभावपि ।**
**राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम्॥९३॥**

तंद्रेति । तंद्रादियुक्तः शोफोऽनेकैरुपद्रवैर्ज्वरश्वासादिभिर्युतः पादतः प्रसृतो नरं हंति । मुखात्प्रसृतः शोफः पूर्वोक्तविशेषणयुक्तो नारीं हंति । कुक्षिगुह्यात्प्रसृत उभावपि स्त्रीपुंसौ हंति । तथा राजीचितो यथास्वदोषवर्णाभी रेखाभिर्व्याप्तस्तथा स्रवन् यथादोषं स्रुतिं कुर्वन् छर्द्यादियुतं पुरुषं हंति ।

**ज्वरातिसारौ शोफांते श्वयथुर्वातयोः क्षये ।**
**दुर्बलस्य विशेषेण जायंतेऽताय देहिनः ॥ ९४ ॥**

ज्वरेति । ज्वरातिसारौ स्वतंत्रस्य शोफस्यांतेऽवसाने जायेते । अथवा श्वयथुस्तयोर्ज्वरातिसारयोः क्षये जायते । एवं ज्वरातिसारशोफा यस्य शरीरिणो जायंते तस्य तेंऽताय मृत्यवे जायंते । दुर्बलस्य विशेषेणांताय शीघ्रकारित्वात् ।

**श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिंडिके ।**
**सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत्॥९५॥**

श्वयथुरिति । श्वयथुः पादस्थो यस्य पिंडिके च परिस्रस्ते स्थानाच्युते सक्थिनी च सीदतः सादं गच्छतस्तं तादृशं नरं वैद्यो वर्जयेत् ।

**आननं हस्तपादं च विशेषाद्यस्य शुष्यतः ।**
**शूयेते वा विना देहात्स मासाद्याति पंचताम्॥९६॥**

आननमिति । मुखं हस्तचरणं च यस्यैते विशेषेण शुष्यंति देहं विना वा यस्य शूयंते स आतुरो मासेन पंचतां पंचमहाभूतसमत्वं याति ।

**विसर्पः कासवैवर्ण्यज्वरमूर्छांगभंगवान् ।**
**भ्रमास्यशोषहृल्लासदेहसादातिसारवान् ॥ ९७ ॥**

विसर्प इति । विसर्पः कासादिमान् हंति ।

**कुष्ठं विशीर्यमाणांगं रक्तनेत्रं हतस्वरम् ।**
**मंदाग्निं जंतुभिर्जुष्टं हंति तृष्णातिसारिणम् ॥ ९८॥**

कुष्ठमिति । कुष्ठं च कर्तृ विशीर्यमाणांगं रक्तनेत्रादियुक्तं नरं हंति । विशीर्यमाणांगं कोथवच्छरीरम् ।

**वायुः सुप्तत्वचं भग्नं कफशोफरुजातुरम् ।**
**वातास्रमोहमूर्छायमदस्वप्नज्वरान्वितम् ॥ ९९ ॥**
**शिरोग्रहारुचिश्वाससंकोचस्फोटकोथवत् ।**
**शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः ॥ १०० ॥**

वायुरिति । वायुः सुप्तत्वगादियुक्तं नरं हंति ।

**घ्नंति सर्वामयाः क्षीणस्वरधातुबलानलम् ।**

घ्नंतीति । सर्वे च त आमयाश्च ते क्षीणस्वरादिकं नरं घ्नंति ।

**वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥ १०१॥**
**गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्**

वाताख्यो व्याधिर्यस्य स नरस्तथाऽपस्मारवान् कुष्ठवान् रक्तपित्ती जठरी क्षयवान् गुल्मवान् प्रमेही च तानेतान् पुरुषान् क्षीणान्सतोऽल्पेऽपि विकारे सति वर्जयेत् ।

**बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ १०२ ॥**
**यस्यातुरस्य लक्ष्यंते त्रीन् पक्षान्न स जीवति ।**

बलेति । बलमांसयोरत्यंतं क्षयो रोगस्य वृद्धिस्तथाऽरोचक एते यस्याऽतुरस्य लक्ष्यंत उपलभ्यंते स त्रीन् पक्षान्सार्धं मासं न जीवति ।

**वाताऽष्ठीलाऽतिसंवृद्धा तिष्ठंती दारुणा हृदि १०३**
**तृष्णया तु परीतस्य सद्यो मुष्णाति जीवितम् ।**

वातेति । वाताऽष्ठीलाऽत्यंतं प्रवृद्धा हृदि तिष्ठंती दारुणाऽतिरुक्करी तृषायुक्तस्य पुंसः शीघ्रमेव जीवितहारिणी भवति ।

**शैथिल्यं पिंडिके वायुर्नीत्वा नासां च जिह्मताम्१०४**
**क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम् ।**

शैथिल्यमिति । वायुः पिंडिके शैथिल्यं नीत्वा तथा नासां जिह्मतां कुटिलतां नीत्वा तथा क्षीणस्य नरस्य मन्ये आयम्याऽऽयामयित्वा द्राग् जीवितं मुष्णाति ।

**नाभी गुदांतरं गत्वा वंक्षणौ वा समाश्रयन्॥१०५॥**
**गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।**

**मलान् बस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम्१०६**
**कुर्वन् वंक्षणयोः शूलं तृष्णां भिन्नपुरीषताम्।**
**श्वासं वा जनयन् वायुर्गृहीत्वा गुदवंक्षणम्॥१०७॥**

नाभीति। वायुर्वा नाभीगुदयोरंतरं मध्यं गत्वा वंक्षणौ समाश्रयन् जीवितं मुष्णाति। बली वा पवनः पायुं हृदयं च गृहीत्वाऽवष्टभ्य क्षीणदेहस्य पुंसः सद्यो मुष्णाति जीवितम्। वायुर्मलान् विबद्ध्य संनिरुद्ध्य बस्तिशिरो नाभिं च विबद्ध्य रुजं जनयन् सद्यो मुष्णाति जीवितम्। वायुर्वंक्षणयोः शूलं तथा तृष्णां कुर्वन् भिन्नपुरीषतां च विदधदथवा श्वासं जनयन् गुदं वंक्षणौ च गृहीत्वा सद्यो मुष्णाति जीवितम्।

**वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः।**
**स्तिमितस्याततक्षस्य सद्यो मुष्णाति जीवितम्१०८**

वितत्येति। मारुतः पर्शुकानां पार्श्वास्थामग्राणि प्रांतानि वितत्य प्रास्तार्य तथोरो वक्षो गृहीत्वा स्तिमितस्याऽऽर्द्रतां गतस्य सस्वेदस्य निश्चलस्य वा तथा आतताक्षस्य प्रसारितनेत्रस्य सद्यो मुष्णाति जीवितम्।

**सहसा ज्वरसंतापस्तृष्णा मूर्छा बलक्षयः।**
**विश्लेषणं च संधीनां मुमूर्षोरुपजायते॥ १०९॥**

सहसेति। सहसा झटित्येव ज्वरसंतापस्तथा तृष्णा मूर्छा बलक्षयः संधिविश्लेषश्चेत्येतन्मुमूर्षोः सद्योमरिष्यतो जायते।

**गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम्।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम्॥ ११०॥**

गोसर्ग इति। गोसर्गे गवां मोक्षकाले प्रत्यूषसि लेपज्वरेण श्लेष्मज्वरेणोपतप्तस्य वदनात्स्वेदः प्रच्यवते तस्य दुर्लभं जीवितम्। दुर्लभमितीषद्दुःसुष्वित्यादिना खल्। नसुदुर्भ्यामिति नुम्निषेधः। ननु रिष्टानां निश्चितानामिहाभिधानप्रस्तावात्किमिदमनिश्चितमुक्तं दुर्लभमिति। नैवम्। एकांतिक एवार्थेऽयं हि दुर्लभशब्दः। तथा च वाल्मीकिना जगदे। पुत्र वीक्षस्व पितरं सुहृष्टं च कुरु प्रियम्। दुर्लभं जीवितं ह्यस्य पुनः पुत्रो भविष्यतीति। तस्माद्दुर्लभशब्दस्य नास्ति जीवितमित्येष निश्चित एवाऽर्थः प्रसिद्धः।

**प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः।**
**उत्पद्याशु विनश्यंति न चिरात्स विनश्यति॥ १११**

प्रवालेति। मसूरिका मसूरसंस्थानाः पिटिकाः प्रवालगुटिकासदृशा यस्य शरीर उत्पद्य शीघ्रं विनश्यंति स नरो द्रागेव विनश्यति।

**मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः।**
**अंतर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ११२**

मसूरेति। मसूरविदलाकारास्तथा प्रवालसदृशास्तथांऽतर्मध्ये वक्त्रं मुखं येषां ते तथा किणाभा एते चतुःप्रकारा अपि विस्फोटा देहस्य नाशनाः।

**कामलाऽक्ष्णोर्मुखं पूर्णं शंखयोर्मुक्तमांसता।**
**संत्रासश्चोष्णतांऽगे च यस्य तं परिवर्जयेत्॥११३॥**

यस्याक्ष्णोः कामला मुखं च पूर्णं तथा शंखयोर्मुक्तमांसता मांसशैथिल्यं तथा संत्रासः शरीर उष्णता च तं नरं परिवर्जयेन्न चिकित्सेत्।

**अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम्।**

अकस्मात्कारणंविना त्वक्समाश्रयं विघृष्टं यस्यानुधावल्लक्ष्यते तमपि वर्जयेत्।

**यो वातजो न शूलाय स्यान्न दाहाय पित्तजः॥११४॥**
**कफजो न च पूयाय मर्मजश्च रुजे न यः।**
**अचूर्णश्चूर्णकीर्णाभो यत्राऽकस्माच्च दृश्यते॥ ११५॥**
**रूपं शक्तिध्वजादीनां सर्वास्तान्वर्जयेद्व्रणान्।**

य इति। यो व्रणो वातजो लिंगानुमितः शूलाय न भवति पित्तजो न दाहाय कफजश्च न पूयाय मर्मजश्च न पीडायै तथा यो व्रणोऽचूर्णश्चूर्णेनाकीर्णाभश्चूर्णव्याप्त इव दृश्यते तथा यस्मिन् व्रणे कारणंविनाऽकस्माद्रूपं शक्तिध्वजादीनां दृश्यते। आदिशब्देन शल्यतोमरादिपरिग्रहः। तान्सर्वान् व्रणान्वर्जयेत्।

**विण्मूत्रमारुतवहं कृमिणं च भगंदरम्॥ ११६॥**

विण्मूत्रमारुता येन निःसरंति कृमिजुष्टश्च यस्तं च भगंदरं वर्जयेत्। कृमिणमिति पामादित्वान्नप्रत्ययः।

**घट्टयन् जानुना जानु पादावुद्यम्य पातयन्।**
**योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति॥ ११७॥**

यश्चातुरो जानुना जानु घट्टयंस्तथा पादावुद्यम्योत्क्षिप्य पातयन् संक्षिपन् मुहुर्मुहुरात्मीयं वक्त्रं मुखमपास्यति कारणंविनाऽन्यत्र नयति स न जीवति।

**दंतैश्छिदन्नखाग्राणि तैश्च केशांस्तृणानि च।**
**भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ११८**
**हृष्टरोमा सांद्रमूत्रः शुष्ककासी ज्वरी च यः।**
**मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हंति यः॥११९**
**मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति।**

दंतैरिति। यश्चातुरो हृष्टरोमा सांद्रमूत्रस्तथा शुष्ककासी तथा ज्वरी स इदमिदं कुर्वन्न जीवति। किं तदित्याह। दंतैश्छिदन्नखाग्राणि तथा तैरेव दंतैः केशांश्छिदंस्तथा तृणानि च्छिदंस्तथा भुवं काष्ठेन विलिखन् लोष्टमपरलोष्टेन ताडयन्

१॥ **क्षेपकः** चंदनोशीरमदिराकुणपध्वांक्षगंधयः। **सार्धश्लोकः**॥ शैवालकुकुटशिखाकुंदशालिमयप्रभा। अंतर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः १

मुहुर्मुहुः पुनःपुनर्हसंस्तथा मुहुः क्ष्वेडन् शब्दं कुर्वन् मुहुः शय्यां पादेन यो हंति तथा छिद्राण्यपरापराधान्विमृशन् घोषयन्। केचिद्व्याचक्षते । छिद्राणि नासिकादीनि विमृशन्संस्पृशन्निति ।

**मृत्यवे सहसार्तस्य तिलकव्यंगविप्लवः ॥ १२० ॥**
**मुखे दंतनखे पुष्पं जठरे विविधाः सिराः ।**

मृत्यव इति । आर्तस्यातुरस्य सहसा जातो मुखे वदने तिलकव्यंगविप्लवो मृत्यवे मरणाय । तथा दंताश्च नखाश्च तस्मिन् दंतनखे सहसा पुष्पं जातमातुरस्य मृत्यवे । तथा जठरे सहसा विविधा नानाविधा वर्णेन संस्थानेन च सिरा जाता आर्तस्य मृत्यवे मरणं सूचयंतीत्यर्थः ।

**ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवंक्षणम् ॥ १२१ ॥**
**शर्म वाऽनधिगच्छंतं बुद्धिमान् परिवर्जयेत् ।**

ऊर्ध्वमिति । ऊर्ध्वश्वासादिमंतमातुरं सुमतिर्वर्जयेन्न चिकित्सेत् ।

**विकारा यस्य वर्धंते प्रकृतिः परिहीयते ॥ १२२ ॥**
**सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।**

विकारा इति । विकारा ज्वरादयो यस्यातुरस्याऽकस्माद्वर्धंते । प्रकृतिः स्वभावः परिहीयते । यथा शूरः कातरः स्यात्सद्रवो वा तृष्णावानित्यादि । अथवा प्रकृतिर्वातादिः । तेन वातप्रकृतिः पित्तप्रकृतिर्भवेदित्यादि । तस्य सहसा शीघ्रमेव जीवितं मृत्युर्हरति ।

**यमुद्दिश्यातुरं वैद्यः संपादयितुमौषधम् ॥ १२३ ॥**
**यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ।**

यमातुरमुद्दिश्य भिषग्यतमान औषधं संपादयितुं न शक्नोति तस्य दुर्लभं जीवितम् ।

**विज्ञातं बहुशः सिद्धं विधिवच्चावतारितम् ॥१२४॥**
**न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ।**

विज्ञातमिति । यस्यातुरस्यौषधं विज्ञातं बहुशः सिद्धं विधानेन चोपयुक्तं न सिध्यति तस्य चिकित्सितं नास्ति ।

**भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥**
**अकस्माद्वर्णगंधादेः स्वस्थोऽपि न स जीवति ।**

भवेदिति । यस्यौषधे कषायघृतलेहादौ तथाऽन्ने भक्तसूपादिके वा कल्प्यमाने विपर्ययोऽन्यथासंपत्तिवर्णगंधरूपादेरकस्मान्निमित्तंविनाऽपि भवेत् स स्वस्थोऽपि न जीवति ।

**निवाते सेंधनं यस्य ज्योतिश्चाप्युपशाम्यति॥१२६॥**
**आतुरस्य गृहे यस्य भिद्यंते वा पतंति वा ।**
**अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥१२७॥**

निवात इति । यस्य चातुरस्य गृहे निवात इंधनसहितं ज्योतिरग्न्यादिरूपं शाम्यति तस्य दुर्लभं जीवितम् । यस्य चातुरस्य गृहेऽमत्राणि भाजनान्यतिमात्रमत्यंतं भिद्यंतेऽथवा पतंति तस्य दुर्लभं जीवितम् ।

**यं नरं सहसा रोगो दुर्बलं परिमुंचति ।**
**संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥**

यमिति । यं नरं दुर्बलं संशयं प्राप्तं संतं सहसा झटित्येव रोगो मुंचति तस्य नरस्याऽऽत्रेयो ऋषिर्जीवितं संशयप्राप्तं मन्यते प्रतिपादयति ।

**कथयेन्नैव पृष्टोऽपि दुःश्रवं मरणं भिषक् ।**
**गतासोर्बंधुमित्राणां न चेच्छेत्तं चिकित्सितुम् १२९**

कथयेदिति । गतासोर्बंधुमित्राणि तेषां प्रकृतत्वाद्गतासुसंबंधि मरणं दुःश्रवं मरणं पृष्टोऽपि वैद्यो न कथयेत् किमुताऽपृष्टः । तथाहि । वैद्योक्तदुःश्रवमरणशब्दश्रवणात्संताप उत्पद्यते तत्सुहृदाम् । एवं च भिषजः परोपतापकरणान्यायेन योगः स्यात् । न च तं गतासुं चिकित्सितुं वैद्य इच्छेत् । तथाविधातुरचिकित्सनाद्वैद्यस्यायशःसंयोगः स्यात् । गतास्विति भाविनि भूतवदुपचाराद्भविष्यति क्तो वेद्यः । यथा । वृष्टो देवः संपन्नाः शालय इति ।

चिकित्साया निष्फलत्वाच्च तं नोपक्रमेदिति प्रतिपादयन्नाह ।

**यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ।**
**घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ १३० ॥**

यमदूतेति । यद्यस्माद्यमदूतपिशाचाद्यैः परासुर्गतासुरुपास्यते । किंभूतैः । औषधानां रसायनादीनां वीर्याणि शक्तीर्घ्नद्भिर्यथायथं व्याधिप्रशमनसामर्थ्यमन्यथा कुर्वद्भिः । तस्मात्तं परिवर्जयेत् ।

इदानीं रिष्टज्ञानादरस्य हेतुमाह ।

**आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ १३१ ॥**

आयुरिति । यद्यस्मादायुर्वेदज्ञे आयुर्वेदविदि वैद्ये आयुर्वेदफलं सकलं प्रतिष्ठितम् । तस्माद्रिष्टज्ञानादृतो भिषग्भवेत् । आयुर्वेदस्य ह्येतत्फलम् । यदायुषः परिज्ञानं परिपालनं च तच्चोभयं रिष्टज्ञानाज्जायते । तस्मादत्रादरः कार्यः ।

**मरणं प्राणिना दृष्टमायुःपुण्योभयक्षयात् ।**
**तयोरप्यक्षयादृष्टं विषमापरिहारिणाम् ॥ १३२ ॥**

मरणमिति । आयुश्च पुण्यं चोभयं च कृतत्वादायुःपुण्ययोरुभयोस्तेषामायुःपुण्योभयानां क्षय आयुःपुण्योभयक्षयस्तस्मादायुःपुण्योभयक्षयान्मरणं प्राणिनां शरीरिणां दृष्टमुपलब्धं मुनींद्रैः । तत्र सर्वोपकरणसंपन्नानामपि सम्यग्वाह्यमानरथवदुपभोगवशेन यथोचितप्रमाणायुःक्षयाद्यन्मरणं जायते तदायुःक्षयादिति बोध्यम् । ज्योतिःशास्त्रविद्भिर्जातकपरिकल्पितनियतायुषामन्येषां यदाहाराद्यभावेन मरणं तत्पुण्यक्षयाद्बोध्यम् । यत्रायुःक्षयो यथावल्लक्षितो

दृश्यते तथैव च पुण्यक्षयस्तदुभयक्षयान्मरणं बोध्यम् । नचैतदेव हेतुत्रयमायुःपुण्योभयक्षयलक्षणं शरीरिणां मरणे कारणं किंतर्ह्यन्यदपि विद्यत इत्याह । तयोरित्यादि । नन्वायुःपुण्योभयक्षयात्मकं लक्षणत्रितयं प्रकृतं ततश्च तेषामिति निर्देशः प्राप्तः । नैतदेवम् । इह ह्यायुःपुण्ययोरेव परामर्शः सर्वनाम्ना युक्तो नतु तृतीयस्य हेतोस्तदात्मकत्वादुभयस्य । अतस्तयोरप्यक्षयादिति युक्तो द्वयोर्निर्देशः । तयोरायुःपुण्ययोरहानितोऽपि मरणं दृष्टं यस्माद्दीर्घायुषोपेतानां तथा पुण्यवत्त्वलक्षणं यत्सर्वोपकरणत्वं तत्संपन्नानामसेव्योद्भूतम् । विषमं चंडमातंगतुरंगगोमहिषदुर्गंधवेगश्वभ्रप्रपातकेसरीसरीसृपादिसेवनं तत्परिहरंत्येवं शीलं येषां ते विषमापरिहारिणस्तेषां यन्मरणं तद्विषमापरिहरणाद्भवति । यद्यप्यायुःक्षयादेव सर्वं मरणं तथाऽपि पुण्यक्षयविषमापरिहरणाभ्यामायुःक्षयस्यैव कारणभूतत्वादेवमुक्तम् । तदेवं विद्यमानसर्वोपकरणसंपन्नत्वे विषममपरिहरतां यन्मरणं तद्विषमापरिहारिणां बोध्यम् । वाह्यवाहकदोषादिकारणस्थविनाशसदृशमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां शारीरेषु विकृतिविज्ञानीयः पंचमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

विकृतिविज्ञानीयाध्यायादनंतरं दूतादिविज्ञानीयाध्यायारंभेऽयं संबंधः । उक्तमायुःप्रमाणं स्वस्थातुराणां रूपेंद्रियस्वरच्छायादिविकृतिलक्षणैः प्रतिनियतविशिष्टव्याधिलक्षणैरपि । अयं पुनरध्यायो दूताद्याश्रयैः शुभाशुभनिमित्तैः शुभाशुभं सूचयितुमारभ्यते।

**अथाऽतो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः।**

दूतः स्त्रीपुरुषादिर्य आतुरेण प्रेष्यते स कथ्यते । दूत आदिर्येषां ते दूतादयः । आदिग्रहणाद्वैद्यस्य गृहान्निर्गच्छतः पथि गच्छतो यावदातुरगृहे प्रवेशः प्रविष्टस्याऽपि यानि यानि शुभाशुभसूचकानि निमित्तानि दृश्यंते श्रूयंते च तेषां परिग्रहः । दूतादीनां विज्ञानम् । दूतादिविज्ञानं यथैते दूतादयः शुभा एतेऽशुभा इति विशिष्टं निश्चितं ज्ञानमवबोधः । परिच्छेद इत्यर्थः । तस्मै हितो दूतादिविज्ञानीयः । शेषं पूर्ववद्व्याख्येयम् ।

**पाखंडाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥**

पाखंडा इति । पाखंडः पण्णवतिभेदभिन्नो व्रात्यविशेषः । आश्रमा ब्रह्मचारिगृहस्थभिक्षुवैखानसभेदेन चत्वारः । वर्णा ब्राह्मणक्षत्रियविट्शूद्राश्चत्वारः । ते च प्रतिलोमानुलोमतो बहवः । तेषां पाखंडादीनां ये सवर्णाः समानवर्णास्तुल्यजातयो दूतास्ते च कर्मसिद्धये कर्मसिद्ध्यर्थं भवंति । कर्मसिद्धिं सूचयंतीत्यर्थः । यथा पाखंडस्य पाखंडो दूतः । ब्रह्मचारिणो ब्रह्मचारी गृहस्थस्य गृहस्थो वानप्रस्थस्य वानप्रस्थो भिक्षोर्भिक्षुर्यावच्छूद्रस्य शूद्रः शुभ इति । त एव पाखंडादयो विपरीता विजातीयाः सवर्णा ये न भवंति ते कर्मविपत्तये चिकित्सानैष्फल्याय भवंति । चिकित्सानैष्फल्यं सूचयंतीत्यर्थः ।

**दीनं भीतं द्रुतं त्रस्तं रूक्षामंगलवादिनम् ।**
**शस्त्रिणं दंडिनं खंडं मुंडश्मश्रुं जटाधरम् ॥ २ ॥**
**अमंगलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।**
**अनेकव्याधितं व्यंगं रक्तमाल्यानुलेपनम् ॥ ३ ॥**
**तैलपंकांकितं जीर्णविवर्णार्द्रैकवाससम् ।**
**खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम् ॥ ४ ॥**
**नानुगच्छेद्भिषग्दूतमाह्वयंतं च दूरतः ।**

दीनमिति । सवर्णमपि दूतं दीनभीतादिविशेषणविशिष्टं यावत्काष्ठलोष्टादिमर्दिनं भिषग् दृष्ट्वा नानुगच्छेच्चिकित्सानैष्फल्यादिति । रूक्षवादिनं परुषभाषिणम् । अमंगलवादिनं मरिष्यत्यसौ पतिष्यति न जीवतीत्याद्यमंगलवादिनम् । तथा षंढं नपुंसकं तथा मुंडं कृतवपनं श्मश्रुमुखव्यंजनं यस्य स एवम् । मुंडश्मश्रुश्चासौ जटाधरश्च तम् । तथाऽमंगलोऽकल्याण आह्वयो यस्य तम् । व्यंगं हीनांगम् । तैलपंकाभ्यामंकितं दिग्धम् । तथा जीर्णादिकं वासो यस्य तम् । तथा दूरादाह्वयंतमाकारयंतं नानुयायात् ।

**अशस्तचिंतावचने नग्ने छिंदति भिंदति ॥ ५ ॥**
**जुह्वाने पावकं पिंडान् पितृभ्यो निर्वपत्यपि ।**
**सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ॥ ६ ॥**
**वैद्ये दूता मनुष्याणामागच्छंति मुमूर्षताम् ।**

अशस्तेति । चिंता च वचनं च चिंतावचने । अशस्ते चिंतावचने यस्येति मत्वर्थे बहुव्रीहिः । वैद्येऽशस्तचिंतां कुर्वति । अशस्तवचनं चोचारयति । मनुष्याणां मुमूर्षतामासन्नमृत्यूनां संबंधिनो दूता आयांति । मुमूर्षतामित्याशंकायामुपसंख्यानमिति सन् । म्रियतेर्लुङ्लिङोश्चेति नियमादात्मनेपदाभावः । तथा च किंभूते । नग्ने विवस्त्रे छिंदति भिंदति किंचित् । तथा पावकमग्निं जुह्वाने पितृभ्यश्च पिंडान्निर्वपत्यनुप्रयच्छति । यावदप्रयतेऽशुचौ । मनुष्याणामित्युपलक्षणम् । स्त्र्यादयोऽपीह गृह्यंत एव ।

**विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥ ७ ॥**
**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ।**

विकारेणेति । विकारेण ज्वरादिना सामान्यस्तुल्यो गुणो यस्यासौ विकारसामान्यगुणस्तस्मिंस्तथाविधे देशे काले वा दूतमभ्यागतं संमुखमागच्छंतं दृष्ट्वा भिषक्तमातुरं दूतस्य प्रेषकं नोपाचरेत् । यथा कफजे ज्वरादावामये घृतोदकादिद्रवसमीपे देशेऽनूपे वा काले वा प्रत्यूषस्यागतो दूतोऽशुभः । पित्तामये वन्ह्यादिना संतप्ते देशे काले मध्याह्ने दूतोऽशुभः । वातरोगे परुषरूक्षसिकतापाषाणशर्करादिविशिष्टे देशे काले सायाह्ने दूतोऽशुभः । विपरीतस्तु शुभः । छर्दिमेहातीसारादिषु सेतुभंगोऽशुभः । एष्वेव सेतुबंधः शुभः ।

**स्पृशंतो नाभिनासास्यकेशरोमनखद्विजान् ॥ ८ ॥**
**गुह्यपृष्ठस्तनग्रीवाजठरानामिकांगुलीः ।**
**कार्पासबुससीसास्थिकपालमुशलोपलम् ॥ ९ ॥**
**मार्जनीशूर्पचैलांतभस्मांगारदशातुषान् ।**
**रज्जूपानत्तुलापाशमन्यद्वा भग्नविच्युतम् ॥ १० ॥**
**तत्पूर्वदर्शने दूता व्याहरंति मरिष्यताम् ।**

स्पृशंत इति । तदित्यनेन वैद्यः परामृश्यते । तस्य पूर्वदर्शनं प्रथमदर्शनं तस्मिन् सति तत्काल एव मरिष्यतामासन्नमरणानां संबंधिनो दूता नाभ्यादि स्पृशंतो व्याहरंति । लक्षणहेत्वोः क्रियाया इति हेतावत्र शतृप्रत्ययः । नाभ्यादिस्पर्शनं हि मुमूर्षुदूतव्याहरणस्य हेतुः । मुमूर्षोर्वैयं दूता इति प्रतिपादयंतीत्यर्थः । अनामिकांगुलिः कनीयसी निकटस्थिता । दशा वस्त्रवर्तिः । उपानच्चर्मपादुका । तुला मानविशेषः । न केवलं नाभ्यादि स्पृशंतोऽपरमपि च भग्नविच्युतं च स्पृशंत इति योज्यम् ।

**तथाऽर्धरात्रे मध्याह्ने संध्ययोः पूर्ववासरे ॥ ११ ॥**
**षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ।**
**भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापैत्र्यनैर्ऋते॥ १२॥**

तथेति । नाभ्यादिकमस्पृशंतोऽप्यर्धरात्रादिष्वागच्छंतो मरिष्यतां दूता व्याहरंति । अर्धरात्र इत्यहःसर्वैकदेशेत्यत्र चकाराद्च् समासांतः।आगच्छंत इत्यत्राऽपि योज्यम् । पैत्र्यनैर्ऋत इति मघामूलाख्ये नक्षत्रे । आदिशब्देनोत्पातदर्शनकृष्णचतुर्दश्यादयो गृह्यंते । संग्रहेऽप्युक्तम् । मध्याह्नोभयसंध्यार्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राऽऽश्लेषामघामूलपूर्वासु चाशुभ इति ।

**यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।**
**पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥**

यस्मिन्निति । यस्मिन् दूते आतुरसंश्रयमातुरप्रतिबद्धं वाक्यं ब्रुवति सत्यशुभं निमित्तं भिषक् पश्येत् । तं दूतमातुरचिकित्सार्थमागतं नानुव्रजेत् ।

किं तदशुभं निमित्तमित्याह ।

**तद्यथा विकलः प्रेतः प्रेतालंकार एव वा ।**
**छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा॥१४॥**
**रसो वा कटुकस्तीव्रो गंधो वा कौणपो महान् ।**
**स्पर्शो वा विपुलः क्रूरो यद्वान्यदपि तादृशम्॥१५॥**
**तत्सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।**
**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥**

तद्यथेति । तद्यथाशब्दोऽशुभनिमित्तसंदर्शनसंबंधार्थः । विकलोंऽगहीनः काणकुंठादिकः । प्रेतो मृत एव । प्रेतालंकारो यो मृतस्यानुलेपनवस्त्रादिनाऽलंकरो विधीयते । छिन्नं रज्वादिकम् । दग्धं वस्त्रादिकम् । विनष्टं वा भग्नघटभाजनादिकम् । तद्वादीनि छिन्नदग्धविनष्टवाचकानि वचांसि वचनानि श्रोत्रेण श्रूयंते । रसो वा कटुकस्तीव्र इत्यनेन रसाधारद्रव्यमनाहारप्रतिबद्धमुपलक्ष्यते । रसो हि रसनेंद्रियग्राह्य एव । तस्मात् कटुकरसाधिष्ठितं द्रव्यं मरिचादि कटुकरसशब्देनेह गृह्यते । लोकेऽपि रसेन द्रव्यं व्यपदिश्यत एव । यथेदं मधुरं द्रव्यमिदमम्लमिति । तदेवं कटुकरसाधिष्ठितं द्रव्यं यदा चक्षुषा गृह्यते वैद्येन तदा न शुभम् । तीव्रग्रहणादतीव्रस्य कुटेरकादेर्निरासः । गंधश्च कौणपो महान् दुर्गंधोऽतिशयेन तत्काल एव घ्राणेंद्रियेण गृह्यते । स्पर्शो वा विस्तीर्णक्रूरोऽतिदुःसहस्तत्काल एवाम्यादिसंबंधी स्पर्शनेंद्रियेण गृह्यते सोऽशुभः । यद्वेति । अथवाऽपरमपि यत्तादृशं विकलाद्यशुभनिमित्तसदृशमानिर्दिष्टमपि रक्तकरवीरकुसुमादिकं तत्सर्वं वाक्यमभित आतुराश्रयाद्वाक्यादग्रेऽथवा वाक्यकाल आतुराश्रयवाक्यमध्ये विकलाद्यशुभनिमित्तम् । तदानीमशुभसूचकत्वात् । तस्मिन् काले दूतमभ्यागतमाभिमुख्येन तत्कालमेवागतं दृष्ट्वा येनासौ प्रेषितो दूतस्तमातुरं नोपाचरेत् ।

अथान्यदप्यशुभं निमित्तमाह ।

**हाहाक्रंदितमुत्क्रुष्टं रुदितं स्खलनं क्षुतम् ।**
**वस्त्रातपत्रपादत्रव्यसनं व्यसनीक्षणम् ॥ १७ ॥**
**चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।**
**हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥**

हाहेति । हाहाक्रंदितमित्यादिकमशोभनमिति वक्ष्यमाणेन संबंधः । हाहेति क्रंदितं रुदितं क्वणनम् । तथोत्क्रुष्टमुच्चैः क्रुत्वा क्रुष्टमाक्रुष्टमाक्रोशः । स्खलनं पतनं वैद्यस्याऽन्यस्य वा । वस्त्रादीनां वैद्यस्य संबंधिनां व्यसनं विनाशः । व्यसनिनामापद्गतानामीक्षणमालोकनं न शोभनमिति सर्वत्र योज्यम् । चैत्यादीनां निमज्जनं पतनं बुडनं च । तथा हत इत्येवंरूपाणामनिष्टानाममंगलानां प्रवादा उच्चैरुच्चारितानि वाक्यानि । दूषणं भस्मपांसुभिर्वैद्यस्यैव पथि गच्छतो भस्मना पांसुना च विकिरणमशोभनम् । कर्मसिद्ध्यभावादातुरस्याऽपि मरणसूचकत्वात् ।

**पथश्छेदोऽहि मार्जारगोधासरठवानरैः ।**

पथश्छेद इति । पथश्छेदो मार्गस्य छेदोऽशोभन इति योज्यम् । कैः । सर्पमार्जारादिभिः । सरठः सर्पसदृशी रक्तवर्णा द्विमुखी प्राणिजातिश्चक्रलंड इत्यपरपर्यायः ।

**दीप्तां प्रतिदिशं वाचं क्रूराणां मृगपक्षिणाम् ॥१९॥**
**कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ।**
**सर्षपाणां वसातैलतृणपंकेंधनस्य च ॥ २० ॥**
**क्लीबक्रूरश्वपाकानां जालवागुरयोरपि ।**
**छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥**
**निःसारस्य व्यवायस्य कार्पासादेररेरपि ।**
**शयनासनयानानामुत्तानानां तु दर्शनम् ॥ २२ ॥**
**न्युब्जानामितरेषां च पात्रादीनामशोभनम् ।**

दीप्तामिति । यस्यां दिशि सूर्यः स्थितः सा दीप्ता भण्यते । तथा चोक्तम् । अंगारिण्यर्कनिर्मुक्ता दीप्ता यस्यां दिवाकरः । प्रधूमितैष्यत्सूर्या वै शांताः पंचेतरा दिशः । दीप्तां दिशं प्रति या वाचो वाण्यः क्रूराणां क्रव्यभुजां मृगाणां द्वीपिशृगालादीनां पक्षिणां च श्येनादीनां ता अशोभना इति लिंगविपरिणामेन संबंधः । कृष्णेत्यादि । कृष्णधान्यादीनां यद्दर्शनं वैद्यस्य पथि गच्छत आतुरगृहे प्रविशतो वा तदशोभनमशुभसूचकत्वात् । उदश्वित्तक्रम् । सर्षपो रक्ताभासः । क्रूरो निष्ठुरवादी । श्वपाकश्चांडालः । जालमानायः । वागुरा मृगबंधनी । पूतिर्दुर्गंधिः । दुर्दर्शनः करालाकृतिः । निःसारस्य व्यपगतसारस्य वस्तुनः । व्यवायस्य मैथुनस्य । कार्पासादेरित्यादिशब्देन कार्पासबुससीसादेर्दूतचिंतानिर्दिष्टस्य ग्रहणम् । कार्पासादेः पदार्थस्य दर्शनं पथि गच्छत आतुरगृहं प्रविशतो वा वैद्यस्याऽशोभनम् । अरेर्दर्शनमशोभनम् । प्रकृतत्वाद्वैद्यस्यात्मशत्रुदर्शनम् । तथा शय्यादीनामुत्तानानामूर्ध्वमुखस्थितपादानां दर्शनम् । तथेतरेषां पात्रादीनां घटशरावोदंचनादीनामधोमुखानां दर्शनमशोभनम् ।

**पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः२३**

पुमिति । पुंसंज्ञाः पुन्नामानः पक्षिणो वर्तकादयो वामस्थिताः प्रशस्ताः । स्त्रीनामानो बलाकासारिकादयो दक्षिणस्थिताः शुभाः ।

**प्रदक्षिणं खगमृगा यांतो नैवं श्वजंबुकाः ।**
**अयुग्माश्च मृगाः शस्ताः शस्ता नित्यं च दर्शने २४**
**चाषभासभरद्वाजनकुलच्छागबर्हिणः ।**

प्रदक्षिणमिति । वामाद्दक्षिणं गच्छंतः खगमृगाः शुभाः । खगाः काकपारावतादयः । मृगा हरिणैणादयः । यांतो नैवं श्वजंबुकाः किंतर्हि दक्षिणाद्वामं गच्छंतः शुभा इत्यर्थः । अयुग्मा अपि मृगाः शुभाः । चाषादयो मयूरांता नित्यं दर्शने वामतो दक्षिणतो वा शस्ताः ।

**अशुभं सर्वथोलूकबिडालसरटेक्षणम् ॥ २५ ॥**

अशुभमिति । सर्वथा सर्वेण प्रकारेण वामतो दक्षिणतो वा युग्मानामयुग्मानां वोलूकादीनां दर्शनमशुभम् । कीर्तने तु प्रशस्ता इत्येके ।

**प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः ।**
**न दर्शने न विरुते वानरार्क्षवतोऽन्यथा ॥ २६ ॥**

प्रशस्ता इति । कोलादयः कीर्तने प्रशस्ताः । कोलः सूकरः । वानरश्च ऋक्षश्च तौ दर्शने विरुते शस्तौ । अत उक्तन्यायादन्यथा विपरीतौ प्रशस्तौ । कीर्तनं तयोरप्रशस्तमित्यर्थः ।

**धनुरैंद्रं च लालाटमशुभं शुभमन्यतः ।**

धनुरिति । ऐंद्रं धनुर्ललाटमभिमुखमशुभम् । अन्यत् पुरःस्थितं संमुखं वर्जयित्वा तिर्यक्पृष्ठतो वा स्थितं शुभम् । लालाटमिति भवार्थे अण् । ललाटशब्देनेह ललाटसमीपो देशो लक्ष्यते । संमुखमित्यर्थः ।

**अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च २७**

अग्नीति । पात्राण्यग्निपूर्णान्यशोभनानि । तथा भिन्नानि भग्नानि । तथा विशिखान्यंतःशून्यानि न शुभानीति वचनविपरिणामेन संबंधः ।

वैद्यस्यातुरस्य गृहप्रवेशे शुभाशुभसूचकानि निमित्तान्याह ।

**दध्यक्षतादि निर्गच्छन् वक्ष्यमाणं च मंगलम् ।**
**वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥**

दधीति । आदिशब्देनेक्षुनिष्पावादिपरिग्रहः । दध्यक्षतावादी यस्य मंगलस्य तदेवम् । वैद्यः प्रविशन्नेव तत्काल एवातुरगृहाद्ध्यक्षतादि यच्च वक्ष्यमाणं तन्निर्गच्छन्निःसरन् मरिष्यतामासन्नमरणानां पश्यति ।

**दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तमतोऽन्यथा ।**
**करुणाशुद्धसंतानो यत्नतः समुपाचरेत् ॥ २९ ॥**

दूतेति । एवं पूर्वोक्तेन प्रकारेण दूताद्यसाध्वशुभं पूर्वनिर्दिष्टं दृष्ट्वा आर्तमातुरं त्यजेन्न चिकित्सेत् । आदिशब्देन शकुनादेर्ग्रहणम् । अतोऽन्यथेति । दूतादि शुभं दृष्ट्वा तमातुरं वैद्यो यत्नेन समुपाचरेत् । किंभूतः करुणया शुद्धं निर्मलं संतानं चेतो यस्य स एवंभूतः सन् ।

अथ तदेव दध्यक्षताद्याह ।

**दध्यक्षतेक्षुनिष्पावप्रियंगुमधुसर्पिषाम् ।**
**यावकांजनभृंगारघंटादीपसरोरुहाम् ॥ ३० ॥**
**दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्ष्ययोः ।**
**रत्नेभपूर्णकुंभानां कन्यायाः स्यंदनस्य च ॥ ३१ ॥**
**नरस्य वर्धमानस्य देवतानां नृपस्य च ।**
**शुक्लानां सुमनोवालचामरांबरवाजिनाम् ॥ ३२ ॥**
**शंखसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।**
**भूमेः समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥**
**मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।**
**नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रिया अपि ३४**
**जीवंजीवकसारंगसारसप्रियवादिनाम् ।**
**रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥ ३५ ॥**
**गंधः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः ।**
**गोपतेरनुकूलस्य स्वरस्तद्वद्गवामपि ॥ ३६ ॥**
**मृगपक्षिनराणां च शोभिनां शोभना गिरः ।**
**छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ३७ ॥**
**भेरीमृदंगशंखानां शब्दाः पुण्याहनिःस्वनाः ।**
**वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ३८ ॥**
**पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ।**

दधीति । दध्यक्षतादीनां दर्शनं पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणमिति वक्ष्यमाणेन संबंधः । अक्षता यवाः । अखंडितास्तंडुला इत्यन्ये । धान्यमेवाखंडितमक्षतशब्दवाच्यमित्य-

परे । यावकमलक्तकः । भृंगारः कनकालुका । आर्द्रमत्स्यार्द्रमांसम् । आर्द्रग्रहणमत्र शुष्कपरिहारार्थम् । भक्षं मोदकादि । पद्मरागादिकं रत्नम् । इभो हस्ती । नरस्येति । शौर्यत्यागप्रज्ञाराजसत्कारादिभिर्वर्धमानः प्रतिदिनमुपचयं गतस्तथाविधस्य पुरुषस्य दर्शनं शुभम् । शुक्लानां सुमनःप्रभृतीनां दर्शनं शुभम् । वालचामरं केशप्रकीर्णकम् । वाजी तुरंगः । उष्णीषं शिरोवेष्टनम् । मनोज्ञस्य हृदयहारिणोऽन्नपानस्य । शकटस्य रथस्य नृभिर्नरैः पूर्णस्य संभृतस्य । धेन्वा इत्यादि । स्त्रिया अपीत्यपिशब्दः समुच्चये । यथा धेन्वाः सवत्साया दर्शनमेवं वडवायाः स्त्रियाश्च सवत्सायाः सापत्याया इति । रुचको वलय आभरणविशेषः । सिद्धार्थो गौरसर्षपः । गंधः सुष्ठु सुरभिः । वर्णः सुष्ठु शुक्लः सितः । रसो मधुरः । गोपतेर्वृषभस्यानुकूलस्याऽकुपितस्य स्वनो न प्रतिकूलस्य कुपितस्य शब्दः । तद्वद्गोपतिना तुल्यो गवामप्यनुकूलानां शब्द इत्यर्थः । तथा शोभिनां प्रशस्तानां मृगादीनां प्रशस्ता गिरः । विद्यादारोग्यलक्षणमिति योज्यम् । मृगपक्षिनरा ह्यशोभिनोऽपि श्रृगालोलूकपुल्कसचांडालादयः संति तद्व्यवच्छेदनार्थं शोभिनामिति विशेषणम् । शोभिनामपि मृगादीनां क्षामरोगार्ताभिहतानामशोभना वाचः स्युस्तत्त्यागार्थं शोभना इति विशेषणम् । छत्रादीनामुत्क्षेपणमुपरि स्थापनम् । पताका वैजयंती । अभिष्टुतिः प्रयाणकाले जनेन स्तुतिर्जयजयेत्यादिशब्दपूर्वा अभिमुखमुच्चारिता । तथा भेर्यादीनां शब्दाः पुण्याहनिःस्वनाः प्रशस्तशब्दा आरोग्याय नत्वप्रशस्तनिःस्वनाः प्रेतपटहादिजाः । वेदाध्ययनस्य वेदपाठस्य ये शब्दास्ते च शुभाः । प्रदक्षिणोऽनुकूलो वायुः सुखः सुखावहः । पथि वेश्मप्रवेशे चैतदारोग्यलक्षणं विद्यात् ।

**इत्युक्तं दूतशकुनं स्वप्नानूर्ध्वं प्रचक्षते ॥ ३९ ॥**

इत्येवमर्थे परिसमाप्तौ वा । दूतः स्त्रीपुरुषादि शुभाशुभं प्रागुक्तम् । तथा चेतनाचेतनरूपः शुभाशुभसूचको दूतवर्जितो लोकप्रसिद्धः शकुन उक्तः । यथा हाहाक्रंदितमित्यादि । इत्येवमुक्तमभिहितम् । अतो दूतशकुनादूर्ध्वमनंतरं स्वप्नान् प्रचक्षते सम्यग् भणिष्यते तंत्रकार इति शेषः । स्वप्नलक्षणमष्टांगसंग्रहे कथितम् । यथा सर्वेंद्रियव्युपरतौ मनोऽनुपरतं यदा । विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यतीति । तथा श्लेष्मावृतेषु स्रोतःसु श्रमादुपरतेषु च । इंद्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनमिति निद्रालक्षणम् ।

**स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना ।**
**स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥ ४० ॥**

स्वप्न इति । यो मर्त्यः पुरुषः स्वप्ने स्वप्नावस्थायां प्रेतैः सह मद्यं पिबन् शुना कृष्यत आक्रम्यते स मृत्युना ज्वररूपेण शीघ्रमचिरात् कतिपयैरेव दिवसैर्नीयते लोकांतरमिति शेषः ।

**रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ।**
**सोऽस्रपित्तेन**

रक्तेति । रक्तमाल्यो रक्तवपू रक्तवस्त्रश्च यो मर्त्यो हसन् स्त्रिया स्वप्ने ह्रियत आकृष्यत आक्रम्यते सोऽस्रपित्तेन मृत्युना शीघ्रं नीयते ।

**महिषश्ववराहोष्ट्रगर्दभैः ॥ ४१ ॥**
**यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ।**

महिषेति । यो महिषादिभिः करणभूतैर्याम्यां दक्षिणां दिशं स्वप्ने प्रयाति तस्य यक्ष्मणा मरणं भवति ।

**लता कंटकिनी वंशस्तालो वा हृदि जायते ॥ ४२ ॥**
**यस्य तस्याशु गुल्मेन**

लतेति । मर्त्य इति प्रथमांतोऽपीहार्थवशात्षष्ठ्यंतः संबध्यते । यस्य मर्त्यस्य स्वप्ने कंटकयुक्ता लता हृदये जायते । वंशो वाथवा तालस्तस्य शीघ्रं गुल्मेन मरणं भवेत् । संग्रहे त्वेवमुक्तम् । यस्य कंटकिनी लता वंशस्तालो वा हृदि जायते स गुल्मेन । यस्य शिरसि स शिरोरोगेण वा शिरश्छेदनेनेति ।

**यस्य वह्निमनर्चिषम् ।**
**जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥ ४३ ॥**
**पद्मं स नश्येत्कुष्ठेन**

यस्येति । यस्य मर्त्यस्य नग्नस्याज्याभ्यक्तस्य वह्निमनर्चिषं ज्वालारहितं जुह्वत उरसि पद्मं स्वप्ने जायते स नरः कुष्ठेन नश्येत् ।

**चंडालैः सह यः पिबेत् ।**
**स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥ ४४ ॥**

चंडालैरिति । चंडालैः सह बहुविधमनेकप्रकारं स्नेहं घृततैलादिकं यो मर्त्यः स्वप्ने पिबेत् स प्रमेहेण नश्यति । स्वप्ने प्रकृतेऽपि पुनः स्वप्नग्रहणं कृतं स्पष्टार्थम् ।

**उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ।**

उन्मादेन स नश्यति यो राक्षसैः सह नृत्यन् जले मज्जेत् ।

**अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥ ४५ ॥**

स मर्त्योऽपस्मारेण नश्यति यो नृत्यन् प्रेतेन स्वप्ने नीयते ।

**यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ।**
**यस्य प्रेतैः श्रृगालैर्वा स मृत्योर्वर्तते मुखे ॥ ४६ ॥**

यानमिति । यस्य नरस्य स्वप्ने खरादिभिर्यानं भवति स मृत्योर्मुखाभ्यंतरे वर्तते । अत्यासन्नविनाशवान् ।

**अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन् ।**
**न जीवति**

अपूपान् शष्कुलीर्वा जग्ध्वा भक्षयित्वैवं स्वप्ने दृष्ट्वा विबुद्धः संस्तद्विधमपूपशष्कुलिप्रायमेव वमेदुद्गिरेत्स न जीवति ।

**अक्षिरोगाय सूर्येंदुग्रहणेक्षणम् ॥ ४७ ॥**

सूर्यचंद्रयोर्ग्रहणदर्शनमक्षिरोगाय ।

**सूर्याचंद्रमसोः पातदर्शनं दृग्विनाशनम् ।**

स्वप्ने सूर्याचंद्रमसोः पतनदर्शनं मर्त्यस्य दृष्टिविनाशनम् । सूर्याचंद्रमसोरिति देवताद्वंद्वे चेत्यानङादेशः ।

**मूर्ध्नि वंशलतादीनां संभवो वयसां तथा ॥ ४८ ॥**
**निलयो मुंडता काकगृध्राद्यैः परिवारणम् ।**
**तथा प्रेतपिशाचस्त्रीद्रविडांध्रगवाशनैः ॥ ४९ ॥**
**संगो वेत्रलतावंशतृणकंटकसंकटे ।**
**श्वभ्रश्मशानशयनं पतनं पांसुभस्मनोः ॥ ५० ॥**
**मज्जनं जलपंकादौ शीघ्रेण स्रोतसा हृतिः ।**
**नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥ ५१ ॥**
**वयोऽङ्गवृद्धिरभ्यंगो विवाहः श्मश्रुकर्म च ।**
**पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ॥ ५२ ॥**
**हिरण्यलोहयोर्लाभः कलिर्बंधपराजयौ ।**
**उपानद्युगनाशश्च प्रपातः पादचर्मणोः ॥ ५३ ॥**
**हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ।**
**प्रदीपग्रहनक्षत्रदंतदैवतचक्षुषाम् ॥ ५४ ॥**
**पतनं वा विनाशो वा भेदनं पर्वतस्य च ।**
**कानने रक्तकुसुमे पापकर्मनिवेशने ॥ ५५ ॥**
**चितांधकारसंबाधे जनन्यां च प्रवेशनम् ।**
**पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ॥ ५६ ॥**
**काषायिणामसौम्यानां नग्नानां दंडधारिणाम् ।**
**रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ॥ ५७ ॥**

मूर्ध्नीति । जातु नेष्यत इति वक्ष्यमाणेन संबंधः । वंशलतादीनां मूर्ध्नि शिरसि संभवो जन्म जातु नेष्यते । एवमग्रेऽपि योज्यम् । तथा वयसां पक्षिणां मूर्ध्नि निलयो निलयनम् । तथा मुंडता कृतमुंडनत्वम् । काकाद्यैः परिवारणं परिवृतत्वम् । न केवलं काकाद्यैः प्रेताद्यैश्चेति तथाशब्दस्यार्थः । गवाशना गोमांसभक्षास्तैः । वेत्रादिसंकटे संवृते संगो द्वारालाभस्तत्रैव निःसारमपश्यतः श्वभ्रे श्मशाने च शयनं स्वपनम् । पांसौ भस्मनि च पतनम् । जलपंकादिके मज्जनं बुडनम् । आदिशब्देन कूपकलुषोदकादि गृह्यते । स्रोतसा शीघ्रेण हृतिर्हरणम् । नृत्तं च वादित्रं च गीतं च तानि । तथा स्रक् च वस्त्रं च स्रग्वस्त्रे रक्ते च ते स्रग्वस्त्रे च तयोर्धारणम् । वयश्चांगं च तयोर्वृद्धिः । अभ्यंगोऽभ्यंजनम् । विवाहः परिणयः । श्मश्रुकर्म मुखव्यंजनमुंडनम् । पक्वान्नं मंडकादिः । स्नेहस्तैलादिः । मद्यं सीध्वादि । तेषां पक्वान्नादीनामाशो भक्षणम् । प्रच्छर्दनं वमिः । विरेचनं विरेकः । हिरण्यस्य रुक्मादेर्लोहस्य च लाभः । संग्रहे तूक्तम् । लभते वा हिरण्यलोहलवणादय इति । कलिरनर्थः । बंधो बंधनम् । पराजयः परिभवः । उपानद्युगस्य नाशः । पादस्य चर्मणः प्रकर्षेण पतनम् । भृशमतिशयेन हर्षः । पितृभिः प्रकुपितैरवभर्त्सनं संतर्जनम् । प्रदीपादीनां पतनमथवा विनाशः । पर्वतस्य च भेदनम् । कानने वने रक्तपुष्पे प्रवेशनमिति संबंधः । पापकर्मणां पापिनां निवेशने गृहे प्रवेशनम् । चितायामंधकारसंबाधे तमःसंकटे जनन्यां मातरि च प्रवेशनम् । प्रासादात् पर्वताद्वा पातः पतनम् । आदिशब्देन वृक्षगृहादेर्ग्रहणम् । मत्स्येन ग्रसनं निगरणम्। कषायेण रक्तं वस्त्रं काषायं तद्विद्यते येषामितीनिः । तेषां काषायिणां काषायवस्त्रावृतानां तथा असौम्यानां दुर्दर्शानां तथा नग्नानां विवस्त्राणां तथा दंडधारिणां दंडिनां तथा रक्तनयनानां कृष्णवर्णानां च नृणां जातु न कदाचिद्दर्शनमिष्यते स्वप्ने । अशुभहेतुत्वात् ।

**कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ।**
**विरागमाल्यवसना स्वप्नकालनिशा मता ॥ ५८ ॥**
**मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ।**
**दृश्यंते दारुणाः स्वप्ना रोगी यैर्याति पंचताम्॥५९॥**
**अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ।**

कृष्णेति । एवंविधा स्त्री स्वप्ने कालनिशा तद्विधा मता । कृष्णा कृष्णवर्णा । तथा पापमाननमाचारश्च यस्याः सा तथा । दीर्घाः केशा नखाः स्तनौ च यस्याः सैवम् । स्वांगाच्चोपसर्जनादिति ङीप् । माल्यं च वसनं च माल्यवसनम् । विगतो रागो यस्य माल्यवसनस्य तदेवंभूतं माल्यवसनं यस्याः सैवम् । मनोवहानामित्यादि । मनश्चेतो वहंति यानि विशेषेण हृदाश्रितानि स्रोतांसि तानि मनोवहानि तेषां मनोवहानां प्रबलैरतिबलवद्भिर्मलैर्मलिनीकरणस्वभावैर्वातपित्तश्लेष्मभिः पूर्णत्वाद्दारुणा घोरा अप्रशस्ताः स्वप्ना दृश्यंतेऽनुभूयंते । यैः स्वप्नैर्दृष्टै रोगी आतुरः पंचतां याति मरणं प्राप्नोति । तथास्वभावत्वादेषां स्वप्नानाम् । अरोग इत्यादि । स्वस्थो नरः संशयं जीवितसंदेहं प्राप्य कश्चिदेव बहूनां मध्यात्पुण्यवान्नियतायुरेव विमुच्यते मरणादिति शेषः ।

स्वप्नभेदानिदानीमाह ।

**दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥ ६० ॥**
**भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ।**

दृष्ट इति । चः समुच्चये । इतिः प्रकारे । दृष्टत्वादिना प्रकारेण स्वप्नः सप्तविधो मतः । सप्त स्वप्ना इत्यर्थः । यश्चक्षुषा जाग्रदवस्थायां किंचिद्वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं संवित्तिरूपतयाऽनुभूयते स दृष्ट उच्यते । यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेंद्रियेण गृह्यते तदिदानीं सुप्तावस्थायां तादृक्संवित्तिरूपतयाऽनुभूयते स श्रुत उच्यते । यस्तु जाग्रदवस्थायां यथायथमिंद्रियैरनुभूयते सुप्तावस्थायां तादृगंतःसंवित्तिरूपतयाऽनुभूयते सोऽनुभूत उच्यते । यस्मिन् दृष्टे श्रुतेऽनुभूते वा यत्पूर्वं जाग्रदवस्थायां वस्तुजातं मनसाऽभ्यर्थ्यते तथैव च सुप्तावस्थायामंतःसंवित्तिरूपतयाऽनुभूयते स प्रार्थित उच्यते । यस्तु षड्भिः प्रत्यक्षानुमानादिभिर्न दृष्टो नापि श्रुतो नाप्यनुमतो दृष्टश्रुतानुभूतत्वाभावादेव न च प्रार्थितोऽपि तु केवलं मनसा यथेच्छमुत्प्रेक्ष्य यत्किंचनरूपाभिः कल्पनाभिः । कल्पितो जाग्रदवस्थायां वस्तुजातांतःसंवित्तावुपारूढस्तदानीं सुप्तावस्थायां तादृगनुभूयते स कल्पितः । यश्च दृष्टश्रुतादिभ्यः स्वप्नेभ्योऽन्यो विलक्षणः स्वप्नो यथा दृश्यते सुप्तावस्थायामुत्तरकालं तथैव स्वप्नदर्शिना नरेण तन्मुखावगततदर्थैरपि प्रत्यक्षतो दृश्यते स भाविकः । दोषजः स स्वप्नो यो वातजः पित्तजः कफजो वा यथायथं दोषाणामनुरूपोंऽतःसंवित्तावनुभूयते सदोषज उच्यत इति ।

**तेष्वाद्या निष्फलाः पंच यथास्वप्रकृतिर्दिवा ॥ ६१ ॥**
**विस्मृतो दीर्घह्रस्वोऽति**

तेषु स्वप्नेषु स्वमध्याये पंचाद्या आदौ पठिता दृष्टादयस्ते निष्फलाः । न ते यथानुरूपं फलं शुभाशुभं ददति । यथास्वप्रकृतिर्यथादोषजो यः स्वप्नः सोऽपि निष्फलः । नासौ यथानुरूपं

शुभाशुभलक्षणं फलं ददाति वातप्रकृतेर्वातप्रकृत्यनुरूपतः स्वप्नो यावद्द्वंद्वप्रकृतेर्द्वंद्वप्रकृत्यनुरूपतोऽफलः । तथा दिवा दृष्टो यः स्वप्नस्तथा विस्मृतस्तथाऽतिदीर्घोऽतिह्रस्वो वा यः स्वप्नः स पंचविधव्यतिरिक्तोऽप्यफलः ।

**पूर्वरात्रे चिरात्फलम् ॥ ६२ ॥**
**दृष्टः करोति तुच्छं च**

पूर्वरात्रे दृष्टः स्वप्नश्चिराच्चिरेण कालेन फलं तुच्छमल्पं नतु यथापरिभाषितं विदधाति । केचित्त्वाहुः । चेति विकल्पार्थे । चिरेण कालेन तुच्छं वेत्यर्थः । पूर्वरात्र इत्यहःसर्वैकदेशेति समासांतः ।

**गोसर्गे तदहर्महत् ॥ ६३ ॥**
**निद्रया चानुपहतः प्रतीपैर्वचनैस्तथा ।**

गोसर्गे गवां मोक्षकाले यो दृष्टः स्वप्नः स तदहस्तस्मिन्नेवाहनि फलं महत्करोतीति योज्यम् । तदहरित्यहःशब्दः सप्तम्यर्थवृत्तिरव्ययः । तथा शुभः स्वप्नो दृष्टो रात्रिशेषे निद्रया वा यद्यनुपहतो यस्मिन्स्वप्ने दृष्टेऽनंतरं न सुप्यते स स्वप्नो महत्फलं करोति । अन्यथा स्वल्पम् । प्रतीपैरननुकूलैर्वचनैश्चानुपहतोऽनभ्याहतः शुभः स्वप्नो दृष्टो महत् फलं करोति ।

एवं शुभं स्वप्नं प्रत्युक्त्वाऽशुभं स्वप्नं प्रत्याह ।

**याति पापोऽल्पफलतां दानहोमजपादिभिः ॥६४॥**

पापोऽशुभः स्वप्नोऽल्पफलतां याति । कैः । दानादिभिः । आदिग्रहणाद्ध्याननियमादयो गृह्यंते ।

**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।**
**पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ ६५ ॥**

अकल्याणमप्यशुभसूचकत्वादशुभं स्वप्नं दृष्ट्वा तत्रैव तस्मिन्नेवावसरेऽशुभस्वप्नदर्शनसमनंतरे काले सौम्यकरं शुभसूचकत्वाच्छुभं स्वप्नं यः पश्येत्तस्य शुभमेव फलं भवेत् । सौम्यं शुभं स्वप्नं दृष्ट्वा यस्तत्रैव स्वप्नमध्ये सुप्तोऽशुभं च स्वप्नं पश्येत्तस्याशुभमेव फलं भवेन्न पूर्वदृष्टं शुभमिति बोध्यम् । नन्वेवं सति स्वप्नानामनिश्चितफलत्वं प्राप्नोति । ततश्च स्वप्ने मद्यं सहप्रेतैरित्यादिना यदुक्तं तदन्यथाऽपि स्यात् । यतोऽशुभलक्षणोऽप्येवं दानादिभिश्चान्यथा संपद्यते ततश्चानिश्चितफलत्वान्मरणं प्रति नासौ निश्चितो हेतुः । एवमन्येऽपि ये स्वप्नाः प्रतिनियता रक्तपित्तादीनां व्याधीनां हेतवो निर्दिष्टास्तेऽपि तथैव बोद्धव्याः । अत्राचक्ष्महे । निश्चितानिश्चितफलस्वभावत्वात्स्वप्नानामदोषः । तथाहि । केचित्स्वप्ना निश्चितफलस्वभावा निर्दिष्टाः । यथा स्वप्ने मद्यं सहप्रेतैरित्यादयः । केचिदनिश्चितफलस्वभावाः । यथा मूर्ध्नि वंशलतादीनामित्यारभ्य यावद् रक्ताक्षणां च कृष्णानां दर्शनं जातु नेष्यत इत्येवमंतेन ग्रंथेन ये निर्दिष्टास्तत्र ये निश्चितफलस्वभावास्तेषां न कथंचिदप्यन्यथा कर्तुं पार्यते । ते प्राक्तनस्य कर्मणस्तथा रूपस्य बलवत्त्वात् । ये त्वनिश्चितफलस्वभावा मूर्ध्नि वंशलतादीनामित्यादयस्तेषां स्वप्नांतरदर्शनादिभिरन्यथासद्भावः संभाव्यत इति ।

पश्येत्सौम्यमित्युक्तमतस्तानेव सौम्यान्स्वप्नान् दर्शयितुमाह ।

**देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।**
**साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ।**
**कन्यां कुमारकान् गौरान् शुक्लवस्त्रान्सुतेजसः ।**
**नराशनं दीप्ततनुं समंताद्रुधिरोक्षितः ॥ ६७ ॥**
**यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।**
**शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥ ६८ ॥**
**शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।**
**आरोहेद्गोऽश्वयानं च तरेन्नदह्रदोदधीन् ॥ ६९ ॥**
**पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ।**
**संबाधान्निःसृतिर्देवैः पितृभिश्चाभिनंदनम् ॥ ७० ॥**
**रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।**
**यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ॥ ७१॥**

देवानिति । कुमारका बालकाः । विषं वत्सनाभः । आमिषं मांसम् । सुमनसः पुष्पाणि । शुक्लशब्दो वस्त्रमित्यत्राऽपि संबध्यते । अर्थवशाच्चाऽस्य नपुंसकत्वमेकत्वं च बोध्यम् । देवादीन्यः पश्येद्यो वा छत्रादीन् लभते यश्च शैलादीन् समारोहेद्यश्च नदादींस्तरेद्यस्य वा पूर्वोत्तरगमनादिकं स्यात्स पुरुष आयुरादीनश्नुते प्राप्नोति ।

आरोग्यमश्नुत इत्युक्तमतस्तदेवारोग्यं लक्षयितुमाह ।

**मंगलाचारसंपन्नः परिवारस्तथातुरः ।**
**श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ ७२ ॥**
**सत्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।**
**चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ ७३ ॥**

मंगलेति । प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् । एतद्धि मंगलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ।आचरणमाचारः सद्वृत्तानुष्ठानम् । मंगलाचाराभ्यां संपन्नो युक्तः परिवारः । तथा श्रद्दधानोऽवश्यं मे व्याधिरयमनेन भेषजेन नश्यतीत्येवमातुरो मन्यमानः । तथा च परिवारोऽनुकूलो दक्षिणः । तथा प्रभूतस्य द्रव्यस्य संग्रहः संग्रहणम् । तथा सत्वलक्षणयोः संयोगो वैद्यादिषु भक्तिश्चिकित्सायामुपक्रमेऽनिर्वेदः सोत्साहता तदेतदारोग्यलक्षणम् ।

कस्मादिदं स्थानं शारीरमुच्यत इत्यस्य निरुक्तिमाह ।

**इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।**
**शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भट्टस्य कृतावष्टांगहृदयसंहितायां शारीरस्थानं समाप्तमध्यायश्चषष्ठः ॥ ६ ॥**

इतिः परिसमाप्तौ।अत्राऽस्मिन्स्थाने यतो यस्माच्छरीरस्य जन्म सम्यगविपरीतं गर्भावक्रांत्यादिभिश्चतुर्भिरध्यायैः प्रसक्तानुप्रसक्तिकया उदाहृतम् । मरणं विकृतिविज्ञानीयाख्येन तथा दूतादिविज्ञानीयाख्येनाध्यायेन च कथितम् । ततः शरीरस्य जन्ममरणोदाहरणादिदं स्थानं शारीरमुच्यते । यद्यपि सर्व आयुर्वेदाख्यो ग्रंथः शरीरमधिकृत्य प्रवृत्तस्तथापीदं स्थानं साक्षाज्जन्ममरणचिंतनाच्छरीरस्य प्राधान्येन शारीरं स्थानमुच्यत इति ।

इति श्रीमृगांकदत्तसूनुश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां द्वितीयं शारीरस्थानं षष्ठोऽध्यायश्च समाप्तः ॥

# अष्टांगहृदये निदानस्थानम् ।

## प्रथमोऽध्यायः ।

श्रीगणेशाय नमः । अथ निदानस्थानारंभः। अस्य चाऽयं संबंधः । हेतुलिंगौषधस्कंधलक्षणोऽयमायुर्वेदः प्रणीतः । तानि च हेतुलिंगौषधानि सूत्रस्थाने सूचितानि । शरीरलक्षणं चाधारं समुत्पाद्य तानि विस्तरेणोपदेष्टुं शक्यंते । तस्माच्छारीरस्थानं पूर्वमारब्धवान् । तत्रैवं सत्यौषधस्कंध एव प्राक् प्राधान्यादुपदेष्टुं न्याय्यः । नैवम् । हेतुलिंगाभ्यां ह्यामयं परीक्ष्यानंतरं यथायोगमामयप्रशमनार्थमौषधं दातुमुचितम् । तस्माद्धेतुलिंगयोरेवोपादानं प्राग्युक्तं नत्वौषधस्येति चिकित्सितस्थानात् प्रागिदमेव स्थानमुपदेष्टुं युक्तम् । तथोक्तं मुनिना । रोगमादौ परीक्षेत ततोनंतरमौषधमिति । तस्मादौषधाद्धेतुलिंगयोरेवामयं प्रति प्राधान्यमतो निदानस्थानारंभः । तत्र च पूर्वं सर्वरोगनिदानमेवारब्धुं युक्तं प्राधान्यात् । प्राधान्यं च सर्वरोगकारणनिर्देशात् । तथाहि । वातादय एव प्रकुपिताः सर्वरोगकारणम् । वक्ष्यति हि । सर्वेषामेव रोगाणां निदानं कुपिता मला इति । तेषां च कोपकारणमस्मिन्निर्दिश्यत इत्याह ।

**अथाऽतः सर्वरोगनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

अथाऽत इत्यादि । सर्वे च ते रोगाश्च सर्वरोगास्तेषां निदानं सर्वरोगनिदानम् । शेषमायुष्कामीयाध्यायवद्व्याख्येयम् । इतीत्यादिशब्दानामपि पूर्ववद्व्याख्या ।

तत्र रोगाणां सामान्यं निदानं बिभणिषुस्तावद्रोगाणामेव पर्यायान् वदति । रोगपर्यायश्रवणेन हि शिष्याणां तत्र तत्र शास्त्रदेशेषु संमोहो न भवति ।

**रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः॥१॥**
**यक्ष्मातंकगदाबाधशब्दाः पर्यायवाचिनः ।**

रोगादयः शब्दाः पर्यायवाचिन एकार्था इत्यर्थः । ननु चैषां रोगादिशब्दानां प्रवृत्तिनिमित्तं प्रत्यर्थभेदोऽपि दृश्यते । यथा । रुजतीति रोगो दुःखस्य कर्तृत्वाद्दुःखस्याभिधायकः । पाप्मेति किल सर्वे रोगाः पापस्य कर्मणः फलमिति कृत्वा पाप्मेत्युच्यते । ज्वरः प्रधानो रोगाणामुक्तः । प्राधान्यं चाऽस्य दुरुपक्रमत्वादतिदुःसहत्वाच्च । अत एव सर्वकायमनःसंतापकत्वं ज्वरस्याहुः । तथा । ज्यावयोहानावित्यस्य धातोरौणादिके वरप्रत्यये सति ज्वरशब्दस्यार्थांतरत्वमप्यापतति । विविधमाधिं दुःखमादधाति शरीरे मनसि चेति व्याधिः । विकारो बुद्धींद्रियमनःशरीराणां विकृतिमन्यथात्वं जनयतीत्यर्थः । दुःखमित्यनेनोपतापकत्वमनुभवं गमयति । आमय इत्यस्यार्थः किलाऽऽमसमुत्थाः सर्वे व्याधयः । प्रायेण हि लोकोऽखिल एव लौल्याद्देशकालापथ्यातिमात्राशी भवति । तस्य चावश्यमामसंभवाद्बाहुल्येनामसमुत्था व्याधयः । बाहुल्यं चांगीकृत्य शब्दप्रवृत्तिः । यक्ष्मेव यक्ष्मा । यथा यक्ष्मा रोगसमूहानामित्युक्त एवं सर्वोऽपि रोगो रोगसमूह इत्यनेन द्योतयति । तथा च सर्वो विकार उत्पद्यमानोऽनेकैर्व्याधिलक्षणभूतैरुपद्रवभूतैश्च युक्त उत्पद्यते । यथा ज्वरस्यालस्यारोचकादयः । आतंक इति । तकि कृच्छ्रजीवन इत्यस्य धातोराङ्पूर्वस्य रूपम् । रोगोपतप्तत्वाद्धि स्त्रीपानभोजनादिभ्यो निवृत्ताः कृच्छ्रेण जीवंति। गद इव गदोऽनेककारणजन्यत्वात् । यथा हि गदोऽनेककारणजस्तथा गदोऽपीति गदशब्दस्यार्थः । आबाध इति आसमंतात्कायमनसोर्बाधनं पीडेत्यर्थः । एवं प्रवृत्तिनिमित्तं प्रत्यर्थभेददर्शनात्कथमुक्तं पर्यायवाचिन इति । अत्राचक्ष्महे । एवमेवैतत् किंतु पीडाकारित्वात् सामान्यं प्रवृत्तिनिमित्तमुररीकृत्य पर्यायवाचिन इत्युक्तम् ।

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ॥ २ ॥**
**संप्राप्तिश्चेति विज्ञानं रोगाणां पंचधा स्मृतम् ।**

निदानादयः संप्राप्त्यंता रोगाणां विज्ञानं पंचधा स्मृतं मुनींद्रैरिति शेषः । निदानादिविज्ञानेन सर्वे रोगा विशेषेण बुध्यंत इत्यर्थः । उपशयस्तथेति । यथा निदानादयो रोगाणां विज्ञानं तथोपशयोऽपीति तुल्यकक्षतां द्योतयितुं तथाशब्दं तंत्रकृत्प्रयुक्तवान्। एवं संप्राप्तिश्चेत्यत्र चकारमपि । इतिः परिसमाप्तौ । एतावदेव रोगाणां विज्ञानम् । निदानं द्विधा । रोगाणामासन्नं विप्रकृष्टं च । तत्रासन्नं यथा। वातादयः प्रकुपिताः। विप्रकृष्टं कारणं यथा । वातादिचयप्रकोपकरमाहारविहारादि । तत्र निदानं कटुकाम्लदध्यादिकं ज्वरस्य । पूर्वरूपं यथा । ज्वरस्येवालस्यादयः । रूपं यथा । आगमापगमक्षोभमृदुतावेदनोष्मणाम् । वैषम्यं तत्र तत्रांगे तास्ताः स्युर्वेदनाश्चला इत्यादि । उपशयो यथा । ज्वरं स्नेहमर्दनादिनोपशाम्यंतमुपलभ्य स तु तस्योपशय इत्युच्यते । संप्राप्तिस्तु यथा । दुष्टेनेत्यादिलक्षणविनिश्चितज्ञानकारणत्वविज्ञानम् । कारणे कार्योपचारात् । निदानादीनामसमासनिर्देश एकैकस्याऽपि प्राधान्यमिति द्योतनाय । एवमेकैकस्योपलब्धिकारणत्वं भवति । उपचारादेव संख्यायां लब्धायां पंचधेत्युक्तं नियमार्थम् । पंचधैवैतानि तत्त्वतो नान्ये रोगा वबोधहेतवः संतीत्यर्थः ।

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ॥ ३ ॥**
**निदानमाहुः पर्यायैः**

निमित्तादिभिः षड्भिः पर्यायैर्निदानमाहुर्वदंति मुनय इति शेषः । तत्र तत्र शास्त्रप्रदेशे निदानमेतैः पर्यायैर्वेद्यमित्यर्थः ।

**प्राग्रूपं येन लक्ष्यते ।**
**उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ॥ ४ ॥**

येनालस्यारुच्यादिनोत्पित्सुरुद्बुभूषुरामयो ज्वरादिर्लक्ष्यते ज्ञायते तत्प्राग्रूपम् । दोषविशेषेण वातादिनाऽनधिष्ठितोऽनासादितो व्यक्तरूपेणेत्यत्राऽनुक्तमपि गम्यमानत्वादुक्तं बोध्यम् । तथाहि । वातादिदोषेणाऽनधिष्ठितत्वाद्याधेरुत्पित्सुतैव न घटते व्याधिकारणाभावात् । नहि वातादीन् विमुच्य व्याधेः प्रायेणाऽन्यतः संभवः संभाव्यते । वक्ष्यतिहि । सर्वेषामेव रोगाणां निदानं कुपिता मला इति । तस्माद्दोषविशेषानधिष्ठितत्वमुत्पित्सोरामयस्य यदुच्यते तद्व्यक्तरूपदोषापेक्षमवगंतव्यम् ।

अत एवाह ।

**लिंगमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ।**

तदित्यनेन प्राग्रूपं परामृश्यते । तत्प्राग्रूपमुत्पित्सूनां ज्वरादीनामल्पत्वादनासादितबलत्वादव्यक्तं लिंगमस्पष्टं लक्षणं यथायथं यद्यस्य व्याधेर्ज्वराद्यन्यतमस्यात्मीयमात्मीयम् । अतश्च प्राग्रूपं त्रिधा दृश्यते । किंचिच्छारीरं किंचिन्मानसं किंचिच्छारीरमानसं च । तत्र शारीरं यथा । ज्वरस्यालस्यास्यवैरस्यगात्रगौरवजृंभासास्राकुलाक्षतेत्येवंप्रायम् । मानसं च । अरतिर्हितोपदेशेष्वक्षांतिरित्येवंप्रायम् । किंचिच्छारीरमानसं यथा । प्रीतिरम्ले पटूषणे द्वेषः स्वादुषु भक्ष्येष्वित्येवंप्रायं शारीरमानसदोषजनितत्वात् ।

इदानीं रूपं लक्षयितुमाह ।

**तदेव व्यक्ततां यातं रूपमित्यभिधीयते ॥ ५ ॥**

तदेव प्राग्रूपं व्यक्ततां यातं व्यक्तदोषाधिष्ठितं सद्रूपमित्यभिधीयते । तदेवेत्येवशब्देनैतद् द्योतयति । यदेव शारीरं प्राग्रूपं पूर्वोपवर्णितं तदेवेह गृहीतव्यं स्थायित्वात् । तद्धयामयानुबंधि । मानसं शारीरमानसं वा स्थायित्वान्न गृहीतव्यम् । तद्धि द्वयमप्युत्पित्सुव्याधिसमनंतरं प्रायेण नश्यतीति तद्व्यक्ततां न याति । अतः शारीरमेवोत्पित्सुव्याधिप्राग्रूपमिह तदा परामृष्टं युक्तम् ।

**संस्थानं व्यंजनं लिंगं लक्षणं चिह्नमाकृतिः ।**

संस्थानादयः षड्रूपस्य पर्याया इत्यर्थः । इमे च पर्यायाः प्राग्रूपस्याऽपि योज्याः । यथा पूर्वसंस्थानं पूर्वव्यंजनं पूर्वलिंगमित्यादि ।

**हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ॥ ६ ॥**
**औषधान्नविहारणामुपयोगं सुखावहम् ।**
**विद्यादुपशयं**

उपयुज्यत इत्युपयोगः सेवनम् । सुखमावहत्युत्पादयतीति सुखावहः । देहस्य सुखं करोतीत्यर्थः । य उपयोगः सुखावहस्तमुपशयं विद्यान्मुनींद्र इति शेषः । केषामुपयोगः । औषधान्नविहाराणाम् । औषधं हरीतक्यादि । अन्नं रक्तशाल्यादि । विहारो वाग्देहमनोनिर्वर्तितश्चेष्टाविशेषो व्यायामव्यवायजागरणाध्ययनगीतभाषणध्यानधारणादिरूपः । औषधं चान्नं च विहारश्चौषधान्नविहारास्तेषामौषधान्नविहाराणाम् । तेषां किंभूतानाम् । हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । हेतुव्याधिविपर्यस्तानां विपर्यस्तार्थकारिणां च । विपर्यस्ता विपरीताः हेतुव्याध्योर्विपर्यस्ताः । हेतुश्च व्याधिश्च हेतुव्याधी तयोर्विपर्यस्ता हेतुव्याधिविपर्यस्ता निदानरोगयोर्विपरीता ये औषधान्नविहारास्ते तथा विपर्यस्तानामर्थो विपर्यस्तार्थस्तं कुर्वंतीति विपर्यस्तार्थकारिणः । हेतुव्याधिविपर्यस्ताश्च विपर्यस्तार्थकारिणश्च हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणस्तेषाम् । केषां विपर्यस्तानामर्थं कुर्वंति । अत्र प्रकृतत्वाद्धेतुव्याधिविपर्यस्तानाम् । तदयमर्थः । हेतुव्याध्योरविपर्यस्ता अविपरीता अपि हेतुरूपा इव भासमाना व्याधिरूपा इवाभासमाना हेतुव्याधिविपर्यस्तानामर्थं व्याध्युपशमलक्षणं कुर्वंति । यथाहेतुविपरीतैर्व्याधिविपरीतैश्चौषधान्नविहारैर्व्याध्युपशमः क्रियते प्रतिपक्षत्वात्तथा विपर्यस्तार्थकारिभिरपीत्यर्थः । संग्रहे तु जगाद । उभयार्थकारिपुनर्दैवव्यपाश्रयं तथा छर्द्यां छर्दनमित्यादि । एवंविधं ह्यविपरीतमेव भेषजं विपरीतमर्थं करोतीति । तत्र हेतुविपरीता औषधान्नविहारा यथा । गुरुस्निग्धशीतजे व्याधौ लघुरूक्षोष्णमौषधमन्नं वा । तथा संतर्पणोत्थेऽपतर्पणम् । अपतर्पणोत्थे संतर्पणम् । जागरणोत्थे व्याधौ स्वापः । स्वापोत्थे जागरणम् । व्यायामोत्थे आसनेत्यादि । तथा व्याधिविपर्यस्ता औषधान्नविहारा यथा । कफजे ज्वरे सर्पिःपानमौषधम् । तस्मिन्नेव ज्वरेऽन्नं पेयाविहारश्च । तस्मिन्नेव कफजे ज्वरे देहमनोव्यापारोपरमः । तथा पवनसाध्ये ज्वरे दोषानपेक्षमौषधं मुस्तापर्पटकम् । अन्नं रक्तशाल्यादि । प्रमेहे रजनी यवान्नं च । तथा च वक्ष्यति । रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिता इत्यादि । विहारश्च यथा । ज्वरकालस्मृतिं चाऽस्य हारिभिर्विषयैर्हरेत् । तथा मुनिरप्यवोचत् । ज्वरकालं च वेगं च चिंतयन् ज्वर्यते तु यः । तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत्स्मृतिमिति । विपर्यस्तार्थकारिणश्च द्विधा भवंति । व्याधिविपर्यस्तार्थकारिणो हेतुविपर्यस्तार्थकारिणश्च । तत्र व्याधिविपर्यस्तार्थकारिणो यथा । छर्दिव्याधौ तदर्थकार्यौषधं मदनादि । अन्नं च तदुपसृष्टं शाल्यादि । अथवा यदहृद्यमसात्म्यमपरिशुष्कं गुरु च । विहारोऽगुल्युत्पलनालादिना तदुद्वमनम् । यथा वाऽतिसारे विरेचनम् । वमनेन विरेचनेन च छर्द्यतीसारयोर्वृद्धिरेव कर्तुं युक्ता । तद्धेतुकत्वात्तस्य । हेतुविपर्यस्तार्थकारिणश्च यथा मद्योत्थे व्याधौ मद्यमेवोपयुक्तं व्याधिं शमयत्यौषधत्वेन । एवमन्नविहारावप्यूह्यौ । मद्येन मदात्ययस्य वृद्धिरेव कर्तुं युक्ता । तद्धेतुकत्वात्तस्य । इह तु शमनकरणाद्विपर्यस्तार्थकारित्वम् । एतदेव च तदर्थकारीति वदंति । तच्च मात्राशितीये व्याख्यातमेव ।

**व्याधेः स हि सात्म्यमिति स्मृतः ॥७॥**

हि यस्मात्स उपशयो व्याधेरामयस्य सात्म्यमिति स्मृतः । मुनींद्रैरिति वाक्यशेषः । एवं व्याधिगुणविपरीतो य आहारो विहारश्च प्रायेण निदानविपरीतः स व्याधिसात्म्यम् । मुनिस्त्ववो-

चत् । देशानामामयानां च विपरीतगुणं गुणैः । सात्म्यमिच्छंति सात्म्यज्ञाश्चेष्टितं चाद्यमेव चेति ।

उपशयलक्षणकथनप्रस्तावादनुपशयोऽपि लक्ष्य इत्याह ।

**विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ।**

अतो यथानिर्दिष्टलक्षणादुपशयाख्याद्यो विपरीतलक्षण औषधान्नविहाराणामुपयोगः सेवनमसुखावहः सोऽनुपशय उच्यते । स एव व्याधेरसात्म्यमित्यभिसंज्ञित आभिमुख्येन संकेतितः ।

निदानप्राग्रूपरूपोपशयानुक्त्वा संप्रति संप्राप्तिं लक्षयितुमाह ।

**यथा दुष्टेन दोषेण यथा चानुविसर्पता ॥ ८ ॥**
**निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः ।**

येन प्रकारेण दुष्टः कुपितो वाताद्यन्यतमो दोषो यथा दुष्टस्तेन यथा दुष्टेन दोषेण यथा चानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता प्रत्यामयं या निर्वृत्तिर्निष्पत्तिरुद्भव इति यावन्निर्दिष्टा सा संप्राप्तिः । सा च जातिरागतिश्च कथ्यते । यथा ज्वरस्य मलास्तत्रेत्यादिलक्षणलक्षिता । तत्र मलानामामाशयप्रवेशनेन तथा आमानुगमनेन तथा स्रोतोरोधेन तथा पक्तिस्थानाज्ज्वलननिरसनेन तथा तेनैव जाठरेण वह्निना तेषामभिसरणेन तथा सकलदेहतापेन गात्रं चात्युष्णं कुर्वत्येवंविधया संप्राप्त्या ज्वरोऽयमिति निश्चीयते । एवं रक्तपित्तादिष्वपि चिंत्या संप्राप्तिः ।

**संख्याविकल्पप्राधान्यबलकालविशेषतः ॥ ९ ॥**
**सा भिद्यते यथाऽत्रैव वक्ष्यंतेऽष्टौ ज्वरा इति ।**

सा च संप्राप्तिः संख्यादिविशेषेण भिद्यते । संख्या च विकल्पश्च प्राधान्यं च बलं च कालश्च त एवं तेषां विशेषः संख्याविकल्पप्राधान्यबलकालविशेषस्तस्मात्सेयं संप्राप्तिर्बहुधा संपद्यते । तत्र संख्याविशेषा यथा । इहैव वक्ष्यन्तेऽष्टौ ज्वरा इति । एवमन्यत्र पंच कासाः पंच श्वासा अष्टौ गुल्मा इत्येवमादयः संख्याविशेषाः संप्राप्तिभेदः ।

**दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ॥ १० ॥**

दोषाणां वातादीनां समवेतानामेकस्मिन् व्याधौ संघटितानां या अंशांशकल्पना भागेन कार्यादनुमेयेन निरूपणा स विकल्पः । अंशश्चांशश्चांशांशौ ताभ्यां कल्पना अनेकविधो विशेषः । यथाऽस्मिन् व्याधौ वातः कुपितः कदाचिदेकेन गुणेनाधिकेन रूक्षेण कदाचिल्लघुना कदाचिच्छीतेन कदाचिद्वाभ्यां त्रिभिर्वाऽधिकैर्दुष्यति । एवं पित्तं कट्वम्लादिना कुपितं कदाचिदेकेन गुणेन तीक्ष्णेन कदाचिदुष्णेन कदाचिद्वाभ्यां बहुभिर्वाऽधिकैर्दुष्यति । एवं कफेऽपि निरूप्यम् । तदेवंरूपो यो निश्चयः स विकल्प इति । यतश्चैवं ततः सर्वेषु रोगेषु तुल्याः कोपनप्रकारा न भवंति । तथाहि । रूक्षादयो गुणा वातस्य सदा कोपकाः किंतु कदाचित् कस्यचिद्गुणस्य प्रकृष्टत्वं कोपने कस्यचिन्न्यूनत्वमिति । अतो हेतोर्भेदानंत्यं चिकित्साऽनंत्यं च । दोषाणामिति बहुवचनोपादानादेव समवेतानामित्यर्थे लब्धे समवेतग्रहणं पृथग्द्वंद्वसमस्तानामपि चांशकल्पनाविकल्प उच्यत इति प्रतिपादनार्थम् ।

**स्वातंत्र्यपारतंत्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।**

स्वातंत्र्यं च पारतंत्र्यं च ताभ्यां व्याधेः प्राधान्यमादिशेज्जानीयात् । तत्र स्वतंत्रस्य व्याधेः प्राधान्यं यथास्वनिर्दिष्टोपक्रमसाध्यत्वात् । अस्वतंत्रस्य व्याधेरप्राधान्यं प्रधानव्याध्युपक्रमेण प्रायस्तस्याप्युपक्रमत्वात् । यद्यपि प्राधान्यविशेषादसौ संप्राप्तिर्भिद्यत इत्युक्तं तथाप्यप्राधान्यविशेषादप्यसौ संप्राप्तिर्भिद्यत इत्यर्थादुक्तंभवत्येव । प्राधान्याऽप्राधान्ययोः परस्परं सापेक्षत्वात् । यथा ह्यप्राधान्यं प्राधान्यमपेक्ष्य वक्तुं युज्यते । अप्राधान्यं चापेक्ष्य प्राधान्यमिति ।

**हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम् ॥ ११ ॥**

कृत्स्नस्य भावः कार्त्स्न्यम् । कार्त्स्न्यं चावयवाश्च कार्त्स्न्यावयवाः । हेत्वादीनां कार्त्स्न्यावयवा हेत्वादिकार्त्स्न्यावयवाः । आदिशब्देन प्राग्रूपादयो गृह्यंते । बलं चाबलं च बलाबले । व्याधेः संबंधिनी तयोर्विशेषणं विशिष्टता बलाबलविशेषणम् । तद्यथासंख्येन हेत्वादिकार्त्स्न्यावयवैरादिशेत् । तत्र प्रतिरोगं यन्निदानत्वेनोपदिष्टं तत्किं कार्त्स्न्येनास्य व्याधेरुत्पादकमुताऽवयवेन । एवं प्राग्रूपमपि । तथा लक्षणमपि किं समस्तमस्य व्याधेर्लक्ष्यत उताऽवयवेन । उपशयोऽप्यस्य व्याधेः संतर्पणापतर्पणरूपः स किं कार्त्स्न्येन सुखानुबंधं करोत्युतावयवेन । तत्र कार्त्स्न्येन यथा । रक्तशाल्यादिमांसघृतक्षीरदधिवसामज्जतैलादिना । अवयवेन तु रक्तशाल्यादिना मांसाद्यन्यतमेन चैकैकेन । तथापतर्पणरूपोऽपि यवश्यामाकगवेधुककोरदूषनीवारतक्रारनालादिः स किं कार्त्स्न्येन सुखानुबंधं करोत्युताऽवयवेन यवादिनैकैकेन । एवमन्यदपि चिंत्यम् । यथा च ज्वरस्यामाशयं प्रविश्य किं कार्त्स्न्येनाथांशेन । तथाऽऽममनुगम्य किं कार्त्स्न्येनाऽथांशेनेत्यादि । तदेवंभूतैर्मलैरयं ज्वरो निर्वर्तत इत्येवं बलाबलविशेषणमादिशेदिति ।

**नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ।**

नक्तं च दिनं च ऋतुश्च भुक्तं च तानि नक्तंदिनर्तुभुक्तानि तेषामंशा अवयवा नक्तंदिनर्तुभुक्तांशाः । व्याधेः कालो व्याधिकालः । यथामलं यथादोषम् । यो यस्य दोषस्यात्मीयः कालस्तं नक्तंदिनर्तुभुक्तांशैर्व्याधिकालमादिशेत् । यथा श्लेष्मज्वरस्य रात्रिमुखे पूर्वाह्णे वा वसंतऋतावाहारे च भुक्तमात्रे बललाभो भवति एवं मारुतपित्तयोरपि बललाभो निरूप्यः ।

**इति प्रोक्तो निदानार्थः**

इतिशब्दः प्रकारे । अनेन संक्षेपाख्येन प्रकारेण यथानिर्दिष्टेन निदानार्थो निदानाभिधेयः समासतः प्रकर्षेणोक्तो नतु व्यासतः ।

अत एवाह ।

**तं व्यासेनोपदेक्ष्यति ॥ १२॥**

य एव निदानार्थः समासेन प्रोक्तस्तमेव व्यासेनोपदेक्ष्यति तंत्रकृदभिधास्यति ।

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।**

सर्वेषामपि रोगाणां कुपिता मलाः क्रुद्धा वातपित्तकफा निदानं हेतुः ।

**तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ १३ ॥**

तदित्यनेन वातादयः परामृश्यंते । तस्य वातादिप्रकोपस्य निदानं विविधं नानाप्रकारमहितसेवनमहितानुष्ठानं प्रोक्तम् ।

किं तदित्याह ।

**अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ।**

ततस्त्रयाणां कालार्थकर्मणां त्रिविधो हीनमिथ्यातिमात्रलक्षणो योगोऽहितमिति प्राक् सूत्रस्थान उदाहृत उक्तः । यथा । अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतमित्यादि ।

इदानीं वातादीनामन्नपानविहारमहितं कोपकारणमाह ।

**तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः ॥ १४ ॥**
**धारणोदीरणनिशाजागरात्युच्चभाषणैः ।**
**क्रियातियोगभीशोकचिंताव्यायाममैथुनैः ॥ १५ ॥**
**ग्रीष्माहोरात्रिभुक्तांते प्रकुप्यति समीरणः ।**

तिक्तादिभिः समीरणः कुप्यति । नन्वल्पप्रमितभोजनशब्दयोः पर्यायशब्दत्वाद्वयोरुपादानमयुक्तम् । नैतदस्ति । भिन्नार्थत्वादनयोः । तथा ह्यल्पभोजनं हीनभोजनमुच्यते । प्रमितभोजनं तु तदुच्यते यदतिक्रांतवेलं भुक्तम् । तथा चागमः । धान्यं पुलाकनिष्पन्नं ज्ञेयं तत्प्रमिताशनमिति । अतीतकालं यद्भुक्तमित्यादि । धारणोदीरणे वातवेगादीनाम् । क्रियातियोगो वमनविरेचनास्थापनादिक्रियाणामतिसेवनम् । नन्वास्थापनेन च वायोः कोपोऽनुपपन्नः । तथा हि वाते बस्तिरिष्यत इत्युक्तम् । नैवम् । आस्थापनातियोगो हि पित्तश्लेष्मादीनां धातूनामुपचयकृत् । तदुपचयाच्च वायोः कोपः । तथाचोक्तम् । वायोर्धातूदयात् कोपो मार्गस्यावरणेन चेति । तस्माद्युक्तो वायोरास्थापनातियोगेन कोपः । तंत्रकृताप्युक्तम् । स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् । उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयमिति । ग्रीष्मांत इत्यंतशब्दः समीपवचनो वेद्यः । तेन ग्रीष्मसमीपे वर्षाख्ये काले प्रकोप इति युज्यते । अन्यथा च यत्प्रकोपप्रशमा वायोर्ग्रीष्मादिष्वित्येतद्व्याहन्यते ।

**पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः ॥ १६॥**
**शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ।**

पित्तं कट्वादिभिः कुप्यति । अर्धरात्रे पित्तस्य कालस्वभावात्कोपः ।

**स्वाद्वम्ललवणस्निग्धगुर्वभिष्यंदिशीतलैः ॥ १७ ॥**
**आस्यास्वप्नसुखाजिर्णदिवास्वप्नातिबृंहणैः ।**
**प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसंतयोः ॥ १८ ॥**
**पूर्वाह्णे पूर्वरात्रे च श्लेष्मा**

स्वाद्वादिभिः कफः कुप्यति ।

**द्वंद्वं तु संकरात् ।**

द्वंद्वं द्वयं वातपित्ते वातकफौ पित्तकफाविति । संकरान्मिश्रीभावात्तिक्तादीनां कुप्यति । एतदुक्तं भवति । येन तिक्तादिर्वातहेतुः सेवितस्तस्य वातपित्ते प्रकुप्यतः । एवं शेषयोर्योज्यम् ।

**मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ॥ १९ ॥**
**संकीर्णाजीर्णविषमविरुद्धाद्यशनादिभिः ।**
**व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ॥ २० ॥**
**पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ।**
**दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्ततः ॥ २१ ॥**
**धातोर्दुष्टात्पुरोवाताद्ग्रहवेशाद्विषाद्गरात् ।**
**दुष्टान्नात्पर्वताश्लेषाद्ग्रहैर्जन्मर्क्षपीडनात् ॥ २२ ॥**
**मिथ्यायोगाच्च विविधात्पापानां च निषेवणात् ।**
**स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ २३ ॥**

समस्तानां तिक्तादीनां मिश्रीभावात्सन्निपातः कुप्यति । तथेति समुच्चये । संकीर्णाशनादिभिश्च सन्निपातः कुप्यति । आदिशब्देन पर्युषितक्लिन्नादिभोजनादयो गृह्यंते । संकीर्णाशनादीनां लक्षणं प्रागुक्तम् । दोषत्रयकरैस्तैस्तैरिति पूर्वोक्तैर्मंडकदधिफाणितयवकपाटलव्रीहिसर्षपशाकादिभिः । तथेति न केवलमेतैरेव परिवर्तनादिभिश्चेति तथाशब्दस्यार्थः ।

**प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ।**
**रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २४ ॥**

प्रत्यामयमित्यनेन प्रकारेण क्रुद्धाः कुपिता दोषा आशु द्रागेव देहे विकुर्वते शरीरे विकारं जनयंति । किं कृत्वा । रसायनीर्नाडीः प्रपद्य प्राप्य । किंभूताः । रोगस्याधिष्ठानानि स्थानानि रसरुधिरादीनि तानि गंतुं शीलं यासां ता रोगाधिष्ठानगामिन्यस्तास्तथाविधा नाडीः प्रपद्य प्राप्य विकृतिभाजो दोषाः संपद्यंत इत्यर्थः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

सर्वरोगनिदानादनंतरं ज्वरनिदानारंभेऽयं संबंधः । उक्तं सर्वरोगनिदानम् । अतोऽनंतरमवश्यं कस्यचिद्विशिष्टस्य रोगस्य निदानं वक्तुमुचितम् । रोगेषु च ज्वरः प्रधानः । तथा च मुनिः । ज्वरो रोगाणामिति । स्वयमेव चास्य प्राधान्यं तंत्रकृत्प्रतिपादयिष्यतीति ज्वरनिदानमेवारब्धुं युक्तम् ।

**अथाऽतो ज्वरनिदानं व्याख्यास्यामः ।**

अथादिशब्दानां पूर्ववद्व्याख्या ।

**ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽतकः ।**
**क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥**
**जन्मांतयोर्मोहमयः संतापात्माऽपचारजः ।**
**विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ २ ॥**

रोगाणां पती रोगपतिः सर्वरोगप्रधानः । पाप्मा पापस्वभावः । तथा मृत्युः । सर्वप्राणिनो हि मरणेनासावेव योजयति यथा न तथाऽन्ये रोगाः । सर्वधात्वाप्यायकं यदोजस्तदशनं भोजनं यस्येत्योजोऽशनः । अंतको मारणहेतुसामान्यात् । क्रोधो भगवतो महेश्वरस्य दक्षापमानितस्य लोकाग्निदिधक्षोर्ललाटान्निर्गतः । अत एवाह दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भव इति । जन्मांतयोर्मोहमय इति । ज्वरस्य संतापात्मकत्वं लिंगम् । जन्मांतयोश्च क्वचित्संतापानुपलब्धेर्मोहमय इत्युक्तम् । मोहस्वभावादेवान्यजन्मजं कर्म प्राणी न स्मरति । यश्चापचारजस्तथाविधादाहारविहाराद्भूतः । स संतापस्वभावः स च क्रूरो दुश्चिकित्स्यः । नानायोनिषु हस्त्यश्वगोपक्ष्यादिषु च विविधैर्नामभिर्वर्तते । यथा । पाकलस्तु यथेभानामभितापो हयेषु च । गवां गोकर्णकश्चैव पक्षिणां मकरस्तथा । वांतादानामलर्कः स्यादब्जेष्विद्रमदः स्मृतः । ओषधीषु तथा ज्योतिश्चूर्णको धान्यजातिषु । जलेषु नीलिका भूमौ चूषो नृणां ज्वरो मतः । ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् । शेषाः सर्वे विपद्यंते तिर्यग्योनौ ज्वरार्दिताः । कर्मणा लभते जंतुर्देवत्वं मानुषादपि । पुनश्चैव च्युतः स्वर्गान्मानुष्यमभिपद्यते । तस्मात्स देवभावाच्च सहते मानवो ज्वरम् । यथा दंतिशरीरे पाकलोनाम ज्वरः । अश्वशरीरेऽभितापकः । गोशरीरे गोकर्णकः । पक्षिशरीरे मकरः । श्वशरीरेऽलर्कः । मत्स्येष्विंद्रमदः । ओषधीषु ज्योतिः । धान्येषु चूर्णकः । अप्सु नीलिका । भूमौ चूषः । मानुषेषु ज्वर इति । ननु यदि रुद्रोर्ध्वनयनोद्भवस्तर्ह्यपचारज इति कथमुक्तम् । ब्रूमः । पूर्वं कृतयुगे ललाटजलोचनादुत्पन्नो ज्वरः । त्रेतायुगे तु संप्राप्ते परिग्रहदोषाद्धर्मस्य पादेंऽतर्हित इत्यपचारेणासौ प्रथमं प्राणिषूद्भूतोऽपचारज उच्यते । कलियुगेऽप्यन्नपानौषधाद्यपचारेण जात इत्यपचारज उच्यत इति न किंचिदत्राऽयुक्तम् ।

स चाऽपचारजो ज्वरः किमेको वाऽनेकविध इत्याह ।

**स जायतेऽष्टधा दोषैः पृथङ्मिश्रैः समागतैः ।**
**आगंतुश्च**

स संतापलक्षणो ज्वरोऽष्टधाऽष्टप्रकारः संपद्यते । कथम् । पृथग्दोषैर्वातपित्तकफैस्तथा मिश्रैर्द्वाभ्यांद्वाभ्यां तथा समागतैः संनिपतितैस्त्रिभिस्तथाऽऽगंतुकारणजनितो ज्वरः । एवं पृथग्दोषैस्त्रयो मिश्रैस्त्रयः सन्निपतितैरेक आगंतुकश्चैक इत्यष्टौ ।

संप्राप्तिमस्याधुना वक्ति ।

**मलास्तत्र स्वैःस्वैर्दुष्टाः प्रदूषणैः ॥ ३ ॥**
**आमाशयं प्रविश्याममनुगम्य पिधाय च ।**
**स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ४ ॥**
**सह तेनाभिसर्पंतस्तपंतः सकलं वपुः ।**
**कुर्वंतो गात्रमत्युष्णं ज्वरं निर्वर्तयंति ते ॥ ५ ॥**
**स्रोतोविबंधात्प्रायेण ततः स्वेदो न जायते ।**

तत्रेति निर्धारणे । तेष्वष्टसु ज्वरेषु मध्ये निजानां ज्वराणामुत्पत्तिर्निर्धार्यते । मला वातादयः स्वैः स्वैः प्रदूषणैः कोपनैर्दुष्टाः कुपिता ज्वरं निर्वर्तयंत्युत्पादयंति । तत्र यथा वातस्तिक्तादिभिः । पित्तं कटुकादिभिः । कफः स्वाद्वादिभिः । एवं संसर्गे संनिपाते च चिंत्यम् । आगंतुना च केनचित् प्रकुपिता दोषा ज्वरं निर्वर्तयंति । यद्यपि चागंतुकज्वरस्तद्धेतुकस्तथाऽपि तत्रापि वातादय एव हेतवः । न हि वातादीन् विमुच्य व्याधेः समुद्भवः कथमपि संभाव्यते । एतावांस्तु विशेषः । दोषजे व्याधौ पूर्वं वातादयः कुप्यंति पश्चात्कायस्य पीडा भवति । आगंतुके व्याधौ पूर्वं शरीरस्य व्यथा भवति पश्चाद्वातादिकोप इति । कयाऽनुपूर्व्या ज्वरं निर्वर्तयंतीत्याह । आमाशयमित्यादि । आमाशयं प्रविश्य नाभिस्तनांतरे स्थित्वा तथाऽऽमं पूर्वोक्तलक्षणलक्षितमनुगम्य तेन चामेनानुगताः स्रोतांसि रसादिवाहीनि पिधाय छादयित्वा तथा ज्वलनं पक्तिस्थानाद्बहिर्निरस्य निष्कास्य । पक्तिग्रहणमत्र जाठराग्नेर्निःसंदेहेन ग्रहणार्थमन्यथा त्रयोदशानामग्नीनां मध्यात्कतमं ज्वलनं स्थानाद्बहिर्निरस्येति संदिह्येतेति । तेन च निरस्तवह्निना सहैकलोलीभूताः सकलं वपुरभिसर्पंतस्तपंतो गात्रमत्युष्णं कुर्वंतो ज्वरं निर्वर्तयंति । अत्युष्णग्रहणेनैतत्प्रतिपादयति । अत्युष्णगात्रत्वेनैव ज्वरसंभवो नोष्णगात्रमात्रेण । तथा च निरामयस्याऽपि हि प्राणिनो जीवतो गात्रमुष्णं भवत्येव । ननु वायुकृते ज्वरे वायोर्योगवाहित्वात्पित्तकृतेऽपि ज्वरे पित्तस्य वह्निना समानगुणत्वात्संतापोपलब्धिर्युक्ता । श्लेष्मज्वरे तु श्लेष्मणो वह्निप्रतिपक्षत्वात्कथमिव संतापकत्वं युक्तमिति केचित् । अत्रोच्यते । स्वभावादुपपन्नमेतत् । ज्वरस्य ह्ययमचिंत्यः स्वभावो येनावश्यं संतापमुत्पादयति । एवं वातस्यामूर्तिमत्त्वेऽपि गुल्मादिषु श्यावारुणत्वोपलब्धिः । तस्माद्व्याधीनामेव स्वभावविशेषान्न्याय्यमेवेदम् । स्रोतोविबंधादिति । यत एव स्रोतःपिधानं तत एव हेतोः स्वेदो न जायते । प्रायोग्रहणात् क्वचित्पित्तज्वरादौ स्वेदो जायत एवेत्यर्थः । तथा चानंतरमेव तंत्रकृदधीते । स्वेदनिःश्वासवैगंध्यमित्यादि ।

पूर्वरूपं लक्षयितुमाह ।

**तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ॥ ६ ॥**
**आस्यवैरस्यमरुचिर्जृंभा सास्राकुलाक्षता ।**
**अंगमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता ॥ ७ ॥**
**रोमहर्षो विनमनं पिंडिकोद्वेष्टनं क्लमः ।**
**हितोपदेशेष्वक्षांतिः प्रीतिरम्लपटूषणे ॥ ८ ॥**

**द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम् ।**
**शब्दाग्निशीतवातांबुच्छायोष्णेष्वनिमित्ततः ॥ ९ ॥**
**इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत् ।**

तस्य ज्वरस्य प्राग्रूपमालस्यं वाङ्मनःकायकर्मस्वनुद्यमः । सुश्रुते चोक्तम् । यथा । सुखस्पर्शप्रसंगित्वं दुःखद्वेषणलोलता । शक्तस्य चाप्यनुत्साहः कर्मण्यालस्यमुच्यत इति । अरतिरेकत्रानवस्थितिश्चेतसः । तथांगगुरुत्वम् । आस्यवैरस्यं वक्त्रविरसता । अरुचिरन्नाभिलाषाभावः । जृंभा जृंभणम् । सहास्रेण वर्तत इति सास्रे आकुले अक्षिणी यस्य स एवं तस्य भावः सास्राकुलाक्षता । अंगमर्दोऽगभंगः । अविपाकोऽन्नस्याविपक्तिः । अल्पप्राणता स्तोकबलत्वम् । तथा बहुनिद्रता । त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्य इत्यत्र पुंवद्भावः । रोमहर्षो रोमांचः । विनमनमंगानां विनामः । पिंडिकयोरुद्वेष्टनमुद्वेष्टः । क्लमो ग्लानिः । हितस्य गुरुपित्रादेरुपदेशास्तेष्वक्षांतिरसहनत्वम् । तदुपदिष्टं न क्षमते । प्रीतिरित्यादि । अम्लादिषु द्रव्येषु प्रीतिर्भक्तिः । स्वादुषु भक्ष्येषु मधुरेषु द्रव्येषु द्वेषो भवति । तथा बालेषु शिशुषु सकललोकवल्लभेष्वपि ज्वरस्वभावाद्द्वेषो भवति । तथा तृड् भृशं तृष्णात्यर्थम् । शब्दादिष्वनिमित्ततः कारणंविना सज्वरस्य प्रीत्यप्रीती जायेते । कदाचिदप्रियमपि शब्दं न द्वेष्टि कदाचित् प्रियमपि वेणुवीणादिजनितं द्वेष्टि । एवं शीतार्तोऽपि कदाचिदग्निं द्वेष्टि कदाचिदशीतार्तोऽग्निमभिलषति । एवं शीतादिष्वपि योज्यम् । एवं प्राग्रूपमव्यक्तलिंगम् । एतस्य चानु प्राग्रूपाणां पश्चाज्ज्वरस्य व्यक्तता स्फुटता भवेत् स्पष्टलिंगोत्पत्तिः । वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयं संसर्गजोऽयं सन्निपातजोऽयमिति व्यक्तीभवति ।

**आगमापगमक्षोभमृदुतावेदनोष्मणाम् ॥ १० ॥**
**वैषम्यं तत्रतत्रांगे तास्ताः स्युर्वेदनाश्चलाः ।**
**पादयोः सुप्तता स्तंभः पिंडिकोद्वेष्टनं श्रमः ॥ ११ ॥**
**विश्लेष इव संधीनां साद ऊर्वोः कटीग्रहः ।**
**पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ॥ १२ ॥**
**छिद्यंत इव चास्थीनि पार्श्वगानि विशेषतः ।**
**हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ॥ १३ ॥**
**स्कंधयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः ।**
**अशक्तिर्भक्षणे हन्वोर्जृंभणं कर्णयोः स्वनः ॥ १४ ॥**
**निस्तोदः शंखयोर्मूर्ध्नि वेदना विरसास्यता ।**
**कषायास्यत्वमथवा मलानामप्रवर्तनम् ॥ १५ ॥**
**रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ।**
**प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः ॥ १६ ॥**
**कंठौष्ठशोषस्तृट् शुष्कौ छर्दिकासौ विषादिता ।**
**हर्षो रोमोगदंतेषु वेपथुः क्षवथोर्ग्रहः ॥ १७ ॥**
**भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ।**

आगमादीनां वैषम्यमनिलज्वरे लिंगमिति योज्यम् । ज्वरस्यागमः संतापारंभस्तस्य वैषम्यं शिरःभ्रूप्रतीनामंगानां न युगपत्संतापोऽपि तु कदाचिदस्य शिरसि पूर्वमागच्छति कदाचिदंसयोः पादयोर्वेति । अपगमो ज्वरस्य मोक्षस्तस्य वैषम्यं कदाचिदस्य पूर्वं पादयोः संतापमोक्षः कदाचित्त्रिके कदाचिच्छिरसि संतापस्य मुक्तिरिति । तथा क्षोभमृदुतयोर्वैषम्यं कदाचित्तीव्रः संतापः कदाचिन्मृदुरिति । वेदना ज्वरस्य तास्तास्तासां वैषम्यं न युगपत्सर्वांगीणो वेदनोपलंभोऽपि तु क्वचित्कदाचित्कस्मिंश्चिदंग इति । तथा ज्वरस्य य ऊष्मा संतापस्तस्याऽपि वैषम्यात्कदाचिच्छिरस्यस्य संताप उपलभ्यते कदाचित्पादाद्यन्यतमेंऽगे । तत्रतत्रांगे बाहुशिरःप्रभृतौ तास्ता वेदनाः पादयोः सुप्तताद्या वक्ष्यमाणाश्चला अनवस्थिताः स्युर्वायोश्चलरूपत्वात् । ता एवाह । पादयोरित्यादि । पादयोः सुप्तिर्निश्चेतनत्वम् । नखक्षतादिकमपि न चिंतयेतां तावित्यर्थः । स्तंभः स्तब्धता तयोरेव । पिंडिकयोरुद्वेष्टनमुद्वेष्टः । श्रमः खेदः । संधीनां विच्छेदनमिव । ऊर्वोः सादः स्वक्रियायामसमर्थत्वम् । कट्या ग्रहः स्तंभ इव । पृष्ठं क्षोदमिव संक्षुण्णतामिवाप्नोति संक्षुण्णसस्यादिवत् । निष्पीड्यत इवोदरं पिण्याकादिवत् । छिद्यंत इवास्थीनि करपत्रादिना काष्ठवदतिशयेन पार्श्वगान्यस्थीनि छिद्यंत इव । तथा हृदयस्य ग्रहणम् । वक्षस उरसः प्राजनेनेव प्रतोदेनेव तोदो व्यथनम् । स्कंधयोर्मथनमरणेरिव । बाह्वोर्भेदो विदारणमिव । अंसयोः पीडनं तैलादिपीडनकाष्ठैरिव । हन्वोर्भक्षणेऽसामर्थ्यं तथा जृंभणादीनि स्युः । विरसास्यताऽव्यक्तरसत्वं मुखेऽस्य भवति येन मधुराद्यन्यतमं रसं न निश्चिनोति । अथवा कषायरसत्वं वक्त्रस्य । मलानां मूत्रपुरीषादीनामप्रवर्तनमविसर्गः । रूक्षत्वमरुणत्वं त्वगादीनां भवति । रोगस्वभावात् । तथा प्रसेकादयः स्युः । अत्रारोचकाश्रद्धयोः को विशेषः । ब्रूमः । अरोचकेन वक्त्रस्थमपि न भुंक्ते । अश्रद्धया तु केवलं नाभिलषति मुखस्थं तु भक्षयत्येवेति विशेषः । विषादिता विषण्णत्वं दुःखितत्वम् । रोमादीनां हर्षो वेपथ्वादयश्च वातज्वरे स्युः ।

अथ पित्तज्वरलक्षणार्थमाह ।

**युगपद्व्याप्तिरंगानां प्रलापः कटुवक्त्रता ॥ १८ ॥**
**नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ।**
**विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥**
**रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ।**
**स्वेदो निःश्वासवैगंध्यमतितृष्णा च पित्तजे ॥ २० ॥**

पित्तज्वरे युगपत्तुल्यकालमंगानां व्याप्तिः शिरःप्रभृतीन्यंगानि संतापेनैककालं व्याप्यंते । नतु वातज्वर इवागमादीनां वैषम्यमिति व्याप्तिग्रहणेन द्योतयति । प्रलापोऽसंबद्धवचनस्योक्तिः । कटुकरसत्वमास्ये । तथा नासायामास्ये च पाकः । तथा शीतेच्छादयोऽत्र भवंति । मंडलाकारा निर्मुखाः पिटिकाः कोठा इत्युच्यंते । ननु दोषास्त्रयोऽपि ज्वरं निवर्तयंतीत्युक्तम् । पित्तज्वरे

च पित्तेन युक्तस्य कायाग्नेर्भूयो वृद्ध्या भाव्यं नाग्निमांद्येन । वृद्धिः समानैः सर्वेषामिति वचनात् । एवंचाग्निमांद्याभावाज्ज्वरस्य संभवेऽप्युपपत्तिरयुक्ता । नैवम् । स्वस्थानाच्चालनेनाग्नेर्मांद्यापत्तेः । स्थानवशादन्यथात्वस्याप्यग्नेः क्रियासामर्थ्यं दृष्टम् । तथा चाष्टांगसंग्रहे शोषनिदाने वक्ष्यति । योंऽशः शरीरसंधीनाविशति तेन जृंभा ज्वरश्चोपजायत इत्यादि । तस्मात्स एवाग्निः क्वचिदेव देशे पक्तुं शक्तो भवति न सर्वत्र । उष्णगुणेन तु पित्तेन युक्तः पक्ता भवत्येवोष्णतरः । अत एव संतापादीनधिकतरान् करोतीति न किंचिदत्रानुपपन्नम् ।

कफज्वरलक्षणमाह ।

**विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।**
**प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥**
**हृल्लासश्छर्दनं कासः स्तंभः श्वैत्यं त्वगादिषु ।**
**अंगेषु शीतपिटिकास्तंद्रोदर्दः कफोद्भवे ॥ २२॥**

सर्वज्वरेऽरुचिर्भवत्येव । अतिशयेन तु कफजे । तथा जाड्यादयः स्युः । त्वगादिष्वित्यादिशब्द आस्याक्षिनखादीनां ग्रहणाय । उदर्दस्य लक्षणं तंत्रांतर उक्तम् । शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः । श्वयथुः शिशिरार्तानामुदर्दः कफसंभव इति ।

एवं त्रयाणां दोषाणां पृथग्लिंगान्यभिधाय सामान्यलिंगान्यधुना कथयति ।

**काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।**

कालः पूर्वाह्णादिको वर्षादिको वा यो वातादेस्तस्मिन् काले यथास्वं यथायथं वातादिज्वराणामप्रवृत्तानां प्रवृत्तिरुत्पत्तिरुत्पन्नानामाधिक्यं वा स्यात्तदा वातादिज्वरोऽयमित्यवबुध्येत ।

इदानीं सामान्येनान्यदपि लिंगद्वयमाह ।

**निदानोक्तानुपशयो विपरीतोपशायिता ॥**

निदानानि च तान्युक्तानि च तिक्तोषणादीनि वातादीनि ज्वरकारणानि तैरनुपशयो यस्मिन् ज्वरे स एवम् । रोगवृद्ध्या हि रोगिणो दुःखावहत्वम् । ननु निदानानुपशय इत्येतावदस्तु । किमुक्तग्रहणेन । उच्यते । उक्तग्रहणं स्वस्वनिदानग्रहणार्थम् । उक्तग्रहणमंतरेण यानि कानिचिन्निदानानि रक्तपित्तश्वासादीनि तेषामनुपशय इत्येवं प्राप्नुयात् । उक्तशब्दोच्चारणसामर्थ्यात्तु यान्येव वातज्वर उक्तानि तान्येव तत्र ज्वरे गृह्यंते नेतराणि । एवं पित्तकफादिज्वरादिषु । तस्मादुक्तग्रहणं कर्तव्यम् । विपरीतोपशायितेति । उपशेतेऽवश्यमित्युपशायि विपरीतैरुपशायि विपरीतोपशायि तस्य भावो विपरीतोपशायिता सुखानुबंध आरोग्यलक्षणः कस्यचिद्विपरीतैः प्रकृतत्वान्निदानस्यैव । एवं ज्वरनिदानप्रतिपक्षभूतैः सर्वेषां ज्वराणामुपशयः सुखानुबंधो विपरीतोपशायितेति बोध्यम् । ननु निदानोक्तानुपशय इतीदमेवास्तु किं विपरीतोपशायितेत्यनेन । यस्य हि निदानोक्तानुपशयस्तस्याऽवश्यं विपरीतोपशायितया भाव्यम् । नैवमनैकांतिकत्वात् । तथा ह्यतीसारादिषु निदानोक्तानुपशय उपलभ्यते । न च सामावस्थायां विपरीतं संग्राह्युपशायिता । अपि च । मद्योत्थानां विकाराणां मद्यमेव प्रबाधकमित्युक्तम् । नचैवं विपरीतोपशायितेति घटते । तस्माद्व्याप्यमुभयोरुपादानम् । एवं हि लक्षणं सम्यगुक्तं भवति ।

**यथा स्वलिंगसंसर्गे ज्वरः संसर्गजः**

यद्यत्स्वं यथास्वं यानि यस्य ज्वरस्य स्वानि लिंगानि वातज्वरस्य पित्तज्वरस्य श्लेष्मज्वरस्य च तेषां संसर्गो लिंगसंसर्गः । संसृष्टलिंगत्वं तस्मिन्सति संसर्गजो ज्वरो वेद्यः । अत्राऽपि काले यथास्वमित्यादि सर्वं लक्षणं बोध्यम् ।

नचैतावदेव संसर्गलक्षणमित्याह ।

**अपि च ॥ २३ ॥**

**शिरोऽर्तिमूर्च्छावमिदाहमोह-**
**कंठास्यशोषारतिपर्वभेदाः ।**
**उन्निद्रतातृड्भ्रमरोमहर्षा**
**जृंभातिवाक्त्वं च चलात्सपित्तात् ॥ २४ ॥**

चलात्सपित्ताद्वातपित्तसंसर्गजे शिरोर्त्यादयः स्युः । कंठास्ययोः शोषेण संबंधः । वातज्वरे शिरोर्त्यादीनि प्रायो दृष्टानि कानिचित्तु पित्तज्वरे दृष्टानि तानि च वातपित्तज्वरे दृश्यंते । तथाऽन्यान्यप्यधिकान्यत्र वातपित्तज्वरे दृष्टानि यानि न केवले वातज्वरे नाऽपि पित्तज्वरे दृष्टानि । एवमन्ययोः संसर्गज्वरयोर्योज्यम् । उपजातिर्वृत्तम् ।

इदानीं कफानिलसंसर्गलक्षणमाह ।

**तापहान्यरुचिपर्वशिरोरुक्**
**पीनसश्वसनकासविबंधाः ।**
**शीतजाड्यतिमिरभ्रमतंद्राः**
**श्लेष्मवातजनितज्वरलिंगम् ॥ २५ ॥**

तापहान्यादिश्लेष्मवातज्वरस्य लिंगम् । तापहानिस्तापाभावः । विबंधो मूत्रपुरीषादीनाम् । स्वागता वृत्तम् ।

अधुना कफपित्तसंसर्गज्वरं लक्षयति ।

**शीतस्तंभस्वेददाहाव्यवस्था-**
**स्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।**
**मोहस्तंद्रालिप्ततिक्तास्यता च**
**ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २६ ॥**

शीतादीनामव्यवस्थाऽनियमः । तथा तृष्णाप्रवृत्त्यादिकं च श्लेष्मपित्तज्वरस्य वेद्यम् । शालिनी वृत्तम् । अथ द्विदोषजातानां ज्वराणां किमागमापगमवैषम्यादिना क्रमेणोत्पत्तिर्युगपत्सर्वशरीरप्राप्त्या वेत्यत्र संशयः । तत्र संसर्गजत्वादेककालं द्वयोरपि पक्षयोः संभवो युक्तः । किंत्वेतयोः पक्षयोर्विरोधाद्युगपदसंभव इति । अत्रोच्यते । यदि संसर्गजे ज्वरे बलवान् वायुः स्यात्तदाऽऽगमापगमवैषम्यादिना क्रमेण । अथ पित्तस्य बलीयस्त्वं तदा

युगपत्सर्वशरीरव्याप्तिक्रमेण । समौ यदा द्वावपि भवतस्तदाऽपि यस्य देशकालादिना बललाभस्तदा तस्यैवोत्पत्तिक्रमेण ज्वरो भवति । सन्निपाते तु युगपदेव शरीरव्याप्तिः ।

अथ सन्निपातज्वरस्य लक्षणमाह ।

**सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।**
**तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २७ ॥**
**सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ।**
**गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २८ ॥**
**साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।**
**अक्षिणी पिंडिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः ॥ २९ ॥**
**सस्वनौ सरुजौ कर्णौ कंठः शूकैरिवाचितः ।**
**परिदग्धा खरा जिह्वा गुरुः स्रस्तांगसंधिता ॥३०॥**
**रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक् ।**
**कोष्ठानां श्यावरक्तानां मंडलानां च दर्शनम् ॥ ३१॥**
**हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा ।**
**स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥३२॥**
**दोषपाकश्चिरात्तंद्रा प्रततं कंठकूजनम् ।**
**सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥ ३३ ॥**

सर्वेभ्यो जातो वातपित्तकफसमुत्थः सर्वजः सर्वैर्लक्षणैर्युतो भवति । तथा तत्र च सन्निपातज्वरे दाहो मुहुर्मुहुः । तद्वद्दाहवत् पुनःपुनः शीतं भवति । अहनि महती निद्रा । रात्रौ तु जागरणम् । सदा वा दिवसे निशि च नैव चेति द्वयोरपि नक्तंदिवसयोर्निद्रा न भवति । तथा बहुस्वेदोऽतिशयेन नैव वा स्वेदः । तथा गीतादिकाया विकृताया ईहायाश्चेष्टायाः प्रवर्तनम् । तथा नयने सास्रे भवतः । तथा कलुषे रक्ते तथा कुटिले । तथा लुलिते पक्ष्मणी ययोस्त एवम् । तथा पिंडिकादिरुक् । भ्रमो मोहः । कर्णौ सशब्दौ सरुजौ सपीडौ च । कंठः शूकैः किंशारुभिरिव व्याप्तः । जिह्वा परिदग्धा तथा खरा अमृदुः । तथा गुरुः । तथा स्रस्तांगसंधित्वम् । रक्तादिष्ठीवनम् । मूर्ध्नो लोलनं चलनम् । तथा अतिरुक् । कोष्ठानां श्यावरक्तानां मंडलानां च दर्शनम् । नैव चेत्यत्राऽपि योज्यम् । तथा हृदि पीडा । मलानां मूत्रपुरीषादीनामप्रवृत्तिः । अल्पशो वा प्रवृत्तिरतिशयेनाऽथवा । तथा स्निग्धास्यतादि भवति । अथास्य सन्निपातस्य नामद्वयमाह । तं सन्निपातमभिन्यासं हृतौजसं च ब्रूयात् । तत्रौजस्तु तेजोधातूनामित्याद्योजोलक्षणम् । हृतमोजो येन स हृतौजास्तं हृतौजसम् ।

**दोषे विबद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ।**
**असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥**

दोषे विबद्ध इत्येकवचनमयुक्तम् । दोषाणां ह्यत्र च बहुत्वाद्बहुवचनं नाय्यं स्यात् । अत्रोच्यते । जात्यभिप्रायाददोषः । जात्याख्यायामेकस्य बहुत्वसिद्धेर्दोष इत्युक्ते बहुत्वं गम्यते । यथा निष्पन्नो यव इति । तस्माद्दोषे विबद्ध इति युक्तम् । नष्टेऽग्नावित्यसत् । सर्वज्वरेष्वेव ह्यग्निनाशस्य प्रागभिधानात् । तस्मादयुक्तमेतत् । उच्यते । विशेषाभिप्रायात् । कामं सर्वज्वरेष्वग्निनाशो युक्तः । अस्मिंस्तु सान्निपातिके विशेषेणाग्निनाश इत्यभिप्रायः । दोषे वातपित्तकफमूत्रपुरीषादिके विबद्धेऽप्रवृत्तिशीलेऽग्नौ नष्टे सति सर्वसंपूर्णलक्षणः सन्निपातोऽसाध्यः साधयितुमशक्यः । अन्यथाऽसंपूर्णलक्षणत्वेन स ज्वरः कृच्छ्रो भवेद्वैकल्यदो वा भवेत् ।

किमेष एव सन्निपातज्वरप्रकारः संभवत्युतान्योऽपि संभवतीत्याह ।

**अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ।**
**त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनुवा ॥३५॥**

अन्यशब्दार्थोऽन्यदित्ययं निपातः । अपरोऽयं सन्निपातोत्थो ज्वरः । यत्र सन्निपाते पित्तं वातकफाभ्यां पृथग् भिन्नं स्थितं स त्वच्यथवा कदाचित् कोष्ठे दाहं करोति । कथम् । पुरोऽनु वा पूर्वं पश्चाद्वा । अनुवेति स्थानविशेषाभिधायिपदसमीपे श्रूयमाणं स्थानविशेषे विकल्पं करोति । पुरोनुवेत्यत्र कालविशेषाभिधायिपदसमीपे श्रूयमाणं कालं विकल्पयति । तत्र चाऽयं विशेषः । त्वचि स्थितं बहिरधिकं दाहं करोत्यंतरल्पम् । कोष्ठे तु स्थितमंतरधिकं बहिस्त्वल्पमिति ।

**तद्वद्वातकफौ शीतम्**

तद्वदित्यनेन पित्तं परामृश्यते । पित्तेन तुल्यम् । यथा पित्तं पृथक्स्थितं त्वचि कोष्ठेऽथवा दाहं करोति पुरोऽनु वा तथैव वातकफौ त्वचि कोष्ठेऽथवा पुरोऽनुवा शीतं विधत्त इति द्विविधोऽयं सन्निपातः ।

**दाहादिर्दुस्तरस्तयोः ।**

शीतादिदाहाद्योः सन्निपातयोर्मध्ये यो दाहादिः सन्निपातः स दुस्तरः कृच्छ्रसाध्य इत्यर्थः । केचित्तु शीतादिः शीतार्तो दाहादिर्दाहार्त इति त्रिधा सन्निपातं समगिरन् ।

नन्वास्मन् शीतादौ दाहादौ च ज्वरे को विशेष इत्याह ।

**शीतादौ तत्र पित्तेन कफे स्यंदितशोषिते ॥ ३६ ॥**
**शीते शांतेऽम्लको मूर्छा मदस्तृष्णा च जायते ।**

शीतादौ तत्र तस्मिन् सन्निपाते पित्तेन कर्त्रा कफे स्यंदिते स्राविते शोषिते च ग्रीष्म इव खरदिनकरतापेन हिम इव । तथा शीते शांते चार्थाद्दाह उपजायते । अम्लकादयश्च चत्वारः स्युः । पित्तेनेति कर्तरि तृतीया । अत एव च बलवत्त्वेन प्राधान्यात् कफं स्रावयति शोषयति चेति । अम्लोद्गिरणमम्लकः ।

**दाहादौ पुनरंते स्युस्तंद्राष्ठीववमिक्लमाः ॥ ३७ ॥**

दाह आदिर्यस्मिन्स दाहादिः । शीतावसान इत्यर्थाद्गम्यते । दाहादौ च सन्निपातेऽस्य दाहस्यांतेऽवसाने तंद्रादयो भवंति ।

दाहकारि पित्तस्यंदितेनैव कफेन शमिते पित्ते कफोद्रेकादेव कफजास्तंद्रादयो भवंति ।

**आगंतुरभिघाताभिषंगशापाभिचारतः ।**
**चतुर्धा**

आगंतुज्वरश्चतुर्धा भवति । अभिघातजोऽभिषंगजोऽभिशापजोऽभिचारजश्च ।

**अत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥**
**श्रमाच्च तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ।**
**सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३९ ॥**

अत्राऽस्मिन्नागंतौ ज्वरेऽभिघातजो यो ज्वरः स क्षतच्छेदाद्यैः शस्त्रप्रहाराद्यैर्जायते । तथा श्रमाच्चाऽध्वादिकृतादायासात् । तस्मिन्नभिघातजे ज्वरे प्रायो बाहुल्येन पवनो वायुर्ज्वरं कुरुते । किं कुर्वन् । रक्तं प्रदूषयन् । कीदृशं ज्वरम् । सव्यथेत्यादि । व्यथादियुक्तं तथा सरुजम् । प्रायोग्रहणं क्वचिदभिघातजेऽन्योऽपि दोषः कुप्यति बाहुल्येन तु वायुरिति द्योतयति ।

**ग्रहावेशौषधिविषक्रोधभीशोककामजः ।**
**अभिषंगात्**

ग्रहादिजो ज्वरोऽभिषंगाद्भवति ।

इदानीं ग्रहोत्पन्नस्य लिंगमाह ।

**ग्रहेणाऽस्मिन्नकस्माद्धासरोदने ॥ ४० ॥**

ग्रहेण देवदानवादिनाऽष्टादशभेदभिन्नेन यो ज्वरो भवत्यस्मिंश्च ज्वरेऽकस्मान्निर्निमित्तमेव हासरोदने भवतः ।

**ओषधीगंधजे मूर्छा शिरो रुग्वेपथुः क्षवः ।**
**विषान्मूर्छातिसारास्यश्यावतादाहहृद्ग्रदाः ॥ ४१॥**
**क्रोधात्कंपः शिरोरुक् च प्रलापो भयशोकजे ।**
**कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥४२॥**

विषौषधीपुष्पगंधेन वायुनोपनीतेन यो ज्वरस्तस्मिन्मूर्छादयो जायंते । विषाज्जाते तस्मिन् ज्वरे मूर्छादयो जायंते । आस्यश्यावता कृष्णमुखत्वम् । हृद्ग्रदो हृदये पीडा क्रोधात्कंपो वेपथुर्जायते । तथा शिरोऽर्तिश्च भयशोकजे ज्वरे प्रलापः । कामादुद्भूते ज्वरे भ्रमादयो भवंति । ह्रीर्लज्जा । निद्रा स्वप्नः । धीर्बुद्धिः । धृतिर्धैर्यम् । तेषां विघातः ।

**ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।**
**कोपः कोपेऽपि पित्तस्य**

ग्रहादौ ज्वरत्रये ग्रहावेशौषधिविषजे सन्निपातस्य कोपः । भयादौ ज्वरत्रये भीशोककामजे मारुतस्य कोपः । कोपेऽपि पित्तस्य । अपिशब्दाद्वातस्याऽपि कोप इति ।

**यौ तु शापाभिचारजौ ॥ ४३॥**
**सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ।**

तमशब्देनैतद्दर्शयति । अन्येऽपि ये सन्निपातज्वरास्तेऽप्यसह्याः सोढुमशक्याः । एतौ पुनः शापाभिचारजावतिशयेन सोढुमशक्याविति ।

**तत्राभिचारिकैर्मंत्रैर्हूयमानस्य तप्यते ॥ ४४ ॥**
**पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।**
**सदाहमूर्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ॥ ४५ ॥**

आभिचारिकैर्मंत्रैरथर्ववेदाद्युपदिष्टैर्हूयमानस्य पुंसो यन्नामोद्देशेन हविःप्रक्षेपः स हूयमान उच्यते । अभिचारमधिकृत्य प्रणीत इति प्राग्वहतेष्ठगिति ठक् । हूयमानस्य पुंसः प्रथमं चेतस्तप्यते सदुःखं जायते । ततोऽनंतरं देहः शरीरं तप्यते सज्वरं संपद्यते । ततोऽनंतरं विस्फोटतृड्भ्रमैर्दाहमूर्छायुतैर्ग्रस्तस्याक्रांतस्य प्रत्यहं ज्वरो वर्धते ज्वरस्याधिक्यं भवति । तनुत्वचः स्फोटा एव विस्फोटा भण्यंते ।

**इति ज्वरोऽष्टधा दृष्टः**

इति पूर्वोक्तेन प्रकारेण निजः सप्तप्रकार आगंतुश्चेत्यष्टप्रकारो ज्वरो दृष्टो मुनींद्रैरिति शेषः ।

**समासाद्द्विविधस्तु सः ।**
**शारीरो मानसः सौम्यतीक्ष्णोऽतर्बहिराश्रयः॥४६॥**
**प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ।**

तुर्विशेषे । समासात्संक्षेपतः पुनः स ज्वरो द्विविधः । तदेव द्वैविध्यमाह । शारीरो मानस इत्येकं द्विकम् । सौम्यस्तीक्ष्ण इति द्वितीयम् । अंतराश्रयो बहिराश्रय इति तृतीयम् । प्राकृतो वैकृत इति चतुर्थम् । साध्योऽसाध्य इति पंचमम् । सामो निराम इति षष्ठम् । इति द्वैविध्यमेषां द्विकानाम् ।

संप्रत्येतानेव ज्वरान् व्याचष्टे ।

**पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४७ ॥**

शारीरे ज्वरे प्रथमं शरीरे तापो भवति पश्चान्मनसीति पूर्वशब्दस्य संबंधिशब्दत्वाद्गम्यते । एवं मानसे पूर्वं मनसि ज्वरे तापो दुःखं पश्चाद्देहे तापः पीडा विशेषाज्जायते ।

इदानीं सौम्यतीक्ष्णौ व्याचष्टे ।

**पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ।**

पवने श्लेष्मयुते योगवाहित्वाद्धेतोः शीतं भवेत् । तस्माद्वातश्लेष्मज्वरः सौम्य इति बोध्यम् । श्लेष्मा हि सोम इति प्रागुक्तम् ।

तीक्ष्णमिदानीं वक्ति ।

**दाहः पित्तयुते मिश्रं मिश्रे**

दाहः पित्तसंबंधे पवने योगवाहित्वाद्भवेत् । इत्येवं मिश्रे पित्तश्लेष्मयुते पवने योगवाहित्वाच्च पवनस्य मिश्रं दाहशीतं भवेत् । मुहुर्दाहो मुहुः शीतमिति । तदयं सौम्यतीक्ष्णव्यामिश्रस्तृतीयो ज्वर इति वेद्यम् । सौम्यस्तीक्ष्ण इति द्वैविध्यकथनं तु समासादिति मंतव्यम् । योगं वहति तच्छीलो योगवाही । येन येन युक्तो भवति तस्य तस्य स्वभावं भजत इत्यर्थः । एवं च सति स्वयं नोष्णो न च

शीतो वायुरित्यभ्युपगतम् । तदेवमिह योगवाहित्वात्कफेन युक्ते वायौ शीतं भवेदित्युक्तमसौ वायुः शीतं करोतीत्यर्थः । पित्तयुक्तेऽस्मिन् दाहो भवेदसौ दाहं करोतीति । एवं स्वयं नोष्णो न शीत इत्येवावतिष्ठते । तत्र रूक्षो लघुः शीत इत्यत्र च शीत इत्युच्यते । तदिमे वचसी परस्परं व्याजघ्नाते । नैवम् । तत्र रूक्षो लघुः शीतः खरः रूक्षश्चलोऽनिल इत्यत्रैवायमर्थस्तथा व्याख्यातो यथा न पूर्वापरव्याहतत्वं भवेत् । तेनेह पुनर्न प्रतन्यते ।

इदानीमंतराश्रयस्य लक्षणमाह ।

**अंतःसंश्रये पुनः ॥ ४८ ॥**
**ज्वरेऽधिकविकाराः स्युरंतःक्षोभो मलग्रहः ।**

अंतराश्रये तु ज्वरेऽधिकं कृत्वांतर्विकाराः स्युः न बहिरेव । तथा क्षोभस्तीव्रदाहत्वम् । मलानां मूत्रपुरीषादीनां ग्रहो विबंधः।

**बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ ४९ ॥**

बहिर्वेगे तु बहिरेव तापो नत्वंतरे । अपिचेत्यंतःक्षोभमलग्रहावप्यत्र न स्त इति समुच्चिनोति । तत्र च बहिर्वेगेऽत एव सुसाध्यता सुखसाध्यत्वं भवति । अंतराश्रये तु दुःसाध्यतेत्यर्थादुक्तं भवति ।

संप्रति प्राकृतवैकृतौ लक्षयति ।

**वर्षाशरद्वसंतेषु वाताद्यैः प्राकृतः क्रमात् ।**
**वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात्**

वर्षादिषु त्रिषु ऋतुषु यथाक्रमं वाताद्यैस्त्रिभिर्दोषैर्यो ज्वरो जायते स प्राकृतः । वर्षासु वातज्वरः प्राकृतः शरदि पित्तज्वरो वसंते कफज्वर इति परिभाष्यते । अत एव वातप्रकृतेर्वातेन यो ज्वरः पित्तप्रकृतेः पित्तेन श्लेष्मप्रकृतेः श्लेष्मणा स न प्रकृतिभवत्वेन प्राकृत इत्युच्यते । वैकृतोऽन्य इति यो ज्वरो वर्षादिभ्य ऋतुभ्योऽन्यत्र काले जातो वर्षादिष्वपि वा न यथाक्रमं वाताद्यैर्जनितः स यथोक्तप्राकृतलक्षणादन्यः स वैकृत उच्यते । स च कृच्छ्रसाध्यः । प्राकृतस्तु सुसाध्य इत्यर्थाद्गम्यते । प्राय इत्यादि । प्रायो बाहुल्येन प्राकृतोऽपि यो ज्वरोऽनिलाज्जायते सोऽपि दुःसाध्यः । प्रायोग्रहणेनैतद् द्योतयति । कदाचिद्दैवानुकूलत्वात्सुसाध्य एव भवति । ननु वर्षास्वपि प्राकृतोऽपि ज्वरो यथा विकृतिविज्ञानीये कथितस्तथाऽसाध्य एव । ज्वरो निहंति बलवानित्यादि । तदेतत्पूर्वापरव्याहतमिव दृश्यते। नैवम्। अनयोर्वचसोः सामान्यविशेषरूपत्वात् । तथा चेह सामान्येनोक्तं विकृतिविज्ञानीये तु विशेषेणेति । एतदेव च स्फुटीकर्तुं वक्ष्यति विकृतिविज्ञाने प्रागसाध्य उदाहृत इति ।

संप्रति वर्षासु प्राकृतस्य ज्वरस्य स्वरूपं निरूपयति ।

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।**
**कुर्यात्**

प्रावृषि पवनः कुपितः पित्तश्लेष्मयुतो ज्वरं कुर्यात् । प्रावृषि प्राकृतो ज्वरो वातप्रधानः पित्तश्लेष्माणौ त्वनुबलत्वेन वातस्य स्थितौ न तु सन्निपात इव स्वयं ज्वरकारकावित्यर्थः ।

सांप्रतं शरदि प्राकृतस्य ज्वरस्य दोषबलाबलं लक्षयति ।

**पित्तं च शरदि तस्य चानुबलं कफः ॥ ५१ ॥**
**तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।**

पित्तं शरदि प्राकृतं ज्वरं कुर्यादित्यनुवर्तते । प्रावृट्संचितस्य पित्तस्य तदा कोपसंभवात् । तस्य च पित्तस्यानुबलमनुबंधि बलं कफः । अनुबलमिवानुबलम् । यथा कस्यचित् स्वतंत्रस्य राज्ञो गजतुरगरथपुरुषादिबलवतो वैरिभिः सह युध्यमानस्य पश्चादन्यद्बलं तच्छक्तेरनुबृंहणार्थमागच्छत्येवं स्वतंत्रस्य पित्तस्य ज्वरं कुर्वतो बलोपबृंहणं शरदि कफः करोति । तत्प्रकृत्येति तच्छब्देन वर्षाशरदुद्भूतौ मारुतज्वरपित्तज्वरौ परामृश्येते । तयोः प्रकृतिस्तत्प्रकृतिस्तया तत्प्रकृत्या तत्स्वभावेन तत्र प्राकृते ज्वरेऽनशनाल्लंघनाद्भयं न भवतीति शेषः । विसर्गाच्च । वर्षाशरदुपलक्षितो हि कालो विसर्गः सौम्यस्वभावस्तस्माच्च कारणात्तस्मिन् काले ज्वर उत्पन्ने लंघनात् प्रत्यपायशंका न भवति । यथाऽन्यस्मिन् काले ज्वर आदानकालस्वभावाद्वातपित्तोल्बणत्वाच्चानशनाद्भयं भवतीत्यर्थः ।

**कफो वसंते तमपि वातपित्तं भवेदनु ॥ ५२ ॥**

वसंते काले कफो ज्वरं कुर्यादिति वर्तते । तं च कफमनु वातपित्तं भवेत् । वातपित्ते तस्यानुबले भवत इत्यर्थः । नन्वत्र साक्षात्कफस्य कर्तृत्वमुच्यते । कफश्च सौम्यस्वभावस्तस्मादत्र नानशनाद्भयमिति तच्चायुक्तम् । तथाहि वर्षाशरदोः श्लेष्मानुबलत्वं कालश्च विसर्गाख्य इति कारणद्वयसंभवाद्धात्वपचयो न संभाव्यत एव । वसंते तु कालस्याग्नेयत्वाद्वातपित्तानुबलत्वाच्चावश्यंभावी धात्वपचय एव । तस्माद्वसंतेऽनशनाद्भयं शंक्यते । केचित्तु । ज्वरस्यामाशयसमुत्थत्वाद्वातकफोत्थत्वाच्चात्रापि किंचिन्मात्रमनशनाद्भयं नाशंक्यत एवेत्याहुः ।

अथ साध्यासाध्यज्वरलक्षणार्थमाह ।

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।**

बलवत्सु नरेषु यौवनादिसंपत्त्या तथाऽल्पदोषेषु यो ज्वरो जायत उपद्रवेण कासादिना रहितः स साध्यः साधयितुं शक्यः ।

**सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५३ ॥**

सर्वथेति । यादृगातुरस्य यादृशो ज्वरोऽसाध्यो भवति तादृशो विकृतिविज्ञानीये शारीरे ज्वरो निहंति बलवानित्यादिना ग्रंथेन प्राक् पूर्वमुक्तः ।

अधुना सामनिरामौ ज्वरौ लक्षयति ।

**ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।**
**न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ५४**

ज्वरस्योपद्रवाः प्रलापभ्रमादयस्तेषां तीक्ष्णत्वं तीव्रता । तथा

बहुमूत्रता । तथा न प्रवृत्तिर्न पुरीषस्य प्रवर्तनम् । विट्प्रवृत्तावपि हि प्रवृत्तिशब्दः प्रसिद्धः । यथाऽनंतरमधुनैवाधीतं प्रवृत्तिर्वाल्पशोऽतिवेति । अथचेद्विट् प्रवर्तते सा न जीर्णा पक्वा न भवति । तथा न क्षुन्न बुभुक्षा । इयमशेषा लिंगसंहतिः सामज्वराकृतिः सामज्वरस्य लक्षणम् । सहामेन वर्तते यो ज्वरः स सामज्वरस्तस्याकृतिः । ऊष्मणोऽल्पबलत्वेनेत्याद्यामलक्षणम् ।

संप्रति पच्यमानज्वरस्य लक्षणमाह ।

**ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५५ ॥**

अतिशयेन ज्वरवेगस्तृष्णादयश्चेति पच्यमानज्वरस्य लक्षणम् । पच्यमानज्वरस्य च द्विकेष्वनिर्दिष्टस्याऽपीह कथनं मतांतरीयकत्वात् । तथा हि । यावत्पच्यमानावस्था न भवति तावत्कथं निरामावस्था स्यात् । तस्माद्युक्तः पच्यमानज्वरस्य निर्देशः ।

इदानीं निरामज्वरलक्षणमाह ।

**जीर्णतामविपर्यासात्सप्तरात्रं च लंघनात् ।**

आमशब्देनाऽत्र सामज्वरलक्षणमुपलक्ष्यते । तेन सामज्वरोक्तलक्षणविपर्यासाज्ज्वरस्य जीर्णता वेद्येति बोध्यम् । यथा । ज्वरोपद्रवमृदुत्वं ग्लानिरल्पमूत्रता पक्वविट्प्रवृत्तिः क्षुदुपगमनमित्येवंरूपो विपर्यासः । तथा ज्वरवेगोऽधिकमित्यादेः पच्यमानज्वराकृतेश्च विपर्यासाज्जीर्णता पक्वता लक्षयितव्या । तथाहि पच्यमानतायामपि सामता संभाव्यत एव । तथा सप्तरात्रं च लंघनात् । सप्तरात्रमिति सप्तानां रात्रीणां समाहार इत्यच् समासांतः । अत्यंतसंयोगे द्वितीया । तेनाऽयमर्थः । सप्तरात्रीर्लंघयित्वाऽतिवाह्य ततोऽनंतरं यः कालोऽष्टमदिनादिस्तदा ज्वरस्य जीर्णता निरामतेति । तथा च मुनिः । सप्ताहेन तु पच्यंते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनीति । नन्वेवंसति सप्तरात्राप्रवृत्तिरेव निरामज्वरलिंगमस्तु । जीर्णतामविपर्यासादित्यनेन नार्थः। अस्त्येवैतत् । किंतु सन्निपातज्वरे बहुना कालेन मलपाको भवति तस्मात्तल्लक्षणार्थं जीर्णतामविपर्यासादित्युक्तम् । यद्येवं जीर्णतामविपर्यासादित्यस्तु किं सप्तरात्रं च लंघनादित्यनेन । अपि च त्रिदोषजे ज्वरे सप्तरात्रातिक्रमलक्षणं लिंगं नोपयुज्यते । तत्र ह्येवमुच्यते । वातपित्तकफैः सप्तदशद्वादश चेत्यारभ्य यावत् शुद्ध्यशुद्ध्योर्ज्वरः कालं दीर्घमप्यनुवर्तत इति । तस्मात्सप्तरात्रं च लंघनादित्यवाच्यमात्रमिति । उच्यते । अल्पदोषो यो ज्वरस्तस्यामविपर्यासात्सप्ताहादर्वागपि जीर्णतोच्यते । यस्तु बहुदोषो ज्वरस्तस्य तु कृतसप्तलंघनस्य जीर्णतोच्यते । इति लक्षणद्वयेन प्रत्यपादि । अत एव च तत्र पथ्यमनुजज्ञे । वक्ष्यति हि । अत्ययं षडहो ज्ञेयो बलं दोषं च रक्षता । तस्मादेतयोर्लक्षणयोर्द्वयोरप्युपादानं न्याय्यमिति स्थितम् । खरनादेनाप्येवमवादि । न च निःसततैवेह निरामज्वरकारणम् । चिरादपि हि पच्यंते सन्निपातज्वरे मलाः । सप्तरात्रातिवृत्तिश्च क्षामतादि च लक्षणम् । तस्मात्तदुभयं दृष्ट्वा निरामं ज्वरमादिशेदिति । जीर्णः पक्वः पुराण इति पर्यायाः ।

**ज्वरः पंचविधः प्रोक्तो मलकालबलाबलात् ॥ ५६॥**
**प्रायशः सन्निपातेन भूयसा तूपदिश्यते ।**
**संततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ५७ ॥**

पंचप्रकारो ज्वरो वक्ष्यमाणः संततादिभिर्भेदैः प्रोक्तो मुनींद्रैरिति शेषः । कुतः । मलेत्यादि । मलो वातादिः । कालः पूर्वाह्णादिः । बलं च बलं च बलमित्येकशेषः । बलं चाबलं च बलाबलं काले बलाबलं कालबलाबलम् । सप्तमीति योगविभागात् समासः । मलानां कालबलाबलं मलकालबलाबलं तस्मात् द्विबलशब्दोऽत्र निर्दिष्टो द्विविधसंबंधार्थः । कोऽसौ द्विविधः संबंध इति चेत् । ब्रूमः । ज्वरः पंचविधः कथितो मलकालबलात्तथा मलकालबलाबलात् । तदयमत्रार्थः । संततो ज्वरो मलकालबलादुक्तः । तथा चानंतरमेव संततलक्षणं वक्ष्यति । मला बलिनो गुरवः स्तब्धाः संततं निष्प्रतिद्वंद्वा ज्वरं कुर्युरिति । तस्माद्बलवंत एव हि दोषाः संततं ज्वरं कुर्वंति । विषमज्वराश्चत्वारो मलकालबलाबलाद्भवंति । तथा च विषमज्वरलक्षणेऽधुनैवाध्येष्यते । अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतमतो बलम् । सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभागिति । तस्माच्चतुष्प्रकारोऽपि विषमज्वरो मलकालबलाबलाद्भवति । खरनादेनाप्युक्तम्। बलिभिः सर्वगैः सामैः रसस्रोतोविकारिभिः । निष्प्रत्यनीकैर्दोषैर्यैः संततो जायते ज्वर इत्यादि । तथा तत्रैव विषमज्वरे गदितम् । व्याधिक्लिष्टस्येत्यारभ्य यावद्बलाबलविशेषस्तु दोषाणां संप्रवर्तत इति । तथा तत्रैव चोक्तम् । भुव्युत्क्रम्य यथाकालं बीजं काले प्रसूयते । तथा कालक्रमाद्दोषः काले ज्वरकरो भवेदिति । प्रायश इत्यादि । बाहुल्येनायं संततादिज्वरः सन्निपाताद्भवति । अत्र सन्निपातेनेत्यसाधुः । नह्यन्यः कश्चित्संततादिव्यतिरिक्तो ज्वरोऽस्ति यमेकदोषजं द्विदोषजं वा परिकल्पयेदिति । तस्मादसदेतत्। उच्यते । समर्यादया दोषगत्या ये संततादयो ज्वरा उत्पद्यंते त एकदोषजादय उपपद्यंते । ये पुनर्विषमसंप्राप्तिसमुत्पन्नाः संततादयस्ते सन्निपातेनेति प्रायशः सन्निपातेनेति न्याय्यमेतत् । नन्वेवं सति वातिकोऽयं पैत्तिकोऽयं श्लैष्मिकोऽयमयं द्वांद्विक इति कथं व्यपदेश इत्याह । भूयसेति । सन्निपातोद्भवेऽप्यस्मिन् संततादौ भूयानधिको यो दोषस्तद्दोषोपलक्षितां संज्ञामासादयतीत्यर्थः । वातज्वरोऽयं पित्तज्वरोऽयमित्यादि । तुरवधारणे । भूयसैव दोषेण व्यपदेशो नान्येनेति । ततश्चैवं सन्निपातोत्थः संततादिज्वर इति स्थितम् । अत एव तंत्रांतर एवं जगाद । संततो मारुतात्प्रायः पित्तात् प्रायस्तृतीयकः । अन्येद्युश्च कफात्प्रायः सन्निपाताच्चतुर्थकः । सन्निपातकृतत्वात्तु दुश्चिकित्सश्चतुर्थक इति । तथा च । पृष्ठेऽनिलकफोद्भूतः श्लेष्मपित्तोद्भवस्त्रिके । शिरस्यनिलसंभूतो गृह्णातीह तृतीयकः । चतुर्थकस्तु श्लेष्मोत्थः प्रतिगृह्णाति जंघयोः । वातिकः शिरसोऽभ्येति द्विधैवायं

स्वभावतः। प्रस्कंधतस्तु विज्ञेयो विपरीतश्चतुर्थक इति। अथ तदेव पंचविधत्वमाह । संततः संततोऽन्येद्युस्तृतीयकचतुर्थकाविति। ननु पंचविधो ज्वर इत्यनुपपन्नं षष्ठस्य चतुर्थकविपर्ययस्य च वक्ष्यमाणत्वात्। अत्र ब्रूमः। चतुर्थकांतर्गतत्वाददोषः। प्लीहोदरे यकृदुदरवत्। तथा हि। अष्टावुदराणीति प्लीहोदरे च यथा यकृदुदरस्यांतर्भावादष्टधात्वमेवं ज्वरे चतुर्थक एव चतुर्थविपर्ययस्यांतर्भावात्पंचधात्वमेव ज्वरस्य साधु।

अथ महारंभत्वेन प्राधान्यात्संततसंप्राप्तिमेव लक्षयति।

**धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः।**
**तापयंतस्तनुं सर्वां तुल्यदूष्यादिवर्धिताः॥ ५८॥**
**बलिनो गुरवस्तब्धा विशेषेण रसाश्रिताः।**
**संततं निष्प्रतिद्वंद्वा ज्वरं कुर्युः सुदुःसहम्॥ ५९॥**

मला ज्वरं कुर्युरुत्पादयेयुः । कीदृशाः। धात्वादिस्रोतसां व्यापिनः। धातवश्च मूत्रं च शकृच्च तानि वहंति नित्यं यानि स्रोतांसि तेषाम्। मला इत्यनेनैतद्द्योतयति। यदैव वातादयो मलिनीकरणस्वभावाः स्युस्तदा संततं ज्वरं कुर्युर्न तु दोषरूपा धातुरूपा वा। तथा सर्वामशेषां तनुं तापयंतः संतापादिना पीडयंतो न पुनः संतापमात्रमापादयंतः । तथा तुल्यैः समानैर्दूष्यादिभिर्वर्धिता वृद्धिं नीताः। आदिशब्देन देशर्तुप्रकृतयो गृह्यंते। दूष्या रसादिधातवस्ते च त्रयाणामपि दोषाणां यथायथं तुल्यकालमलैः सर्वैरतुल्या अपि भवंति। प्रायेणैकैकस्य मलद्वयस्य चैकैको देशो वा ऋतुर्वा प्रकृतिर्वा तुल्या भवति । अतस्तुल्यदूष्यादिवर्धिता इत्युक्तम् । तथा च धन्वदेशो वातस्यैव वृद्धिहेतुस्तुल्यत्वात् कफस्य त्वतुल्यत्वात्क्षपणहेतुः । अनूपस्तुल्यत्वात् कफस्य वृद्धिहेतुर्वातस्य त्वसमानत्वात्क्षपणहेतुः । ऋतावप्येवं चिंत्यम्। प्रकृतिस्त्रयाणां दोषाणां तुल्यकालं वृद्धिहेतुर्न संभवति विषमदोषजनितत्वात् । येऽप्येवमवोचन्। समाख्या प्रकृतिस्तुल्यत्वादेषां मलानामत्र ज्वरे वर्धनहेतुरिति। तेऽपि मैवं वोचंतेति वचनीयाः। यतो रोगजननोन्मुखानां दोषाणां नासौ वृद्धिहेतुरारोग्यलक्षणत्वात्। किंभूता दोषाः। बलिनः प्रतिपक्षैरखंडितशक्तित्वात्। तथा गुरवः सामत्वात्। स्तब्धा निश्चला ऊर्ध्वमधश्चानिःसरणात्। विशेषेण रसाश्रिताः। विशेषग्रहणं मलानां सर्वधात्वाश्रितत्वं द्योतयति। सकलधातुसमाश्रिता अपि भवंति। अतिशयेन रसाख्यं धातुमाश्रित्यैते संततं कुर्युः। तथा निष्प्रतिद्वंद्वाः प्रत्यनीकरहिताः। कीदृशं ज्वरम्। सुष्ठु दुःखेन कृच्छ्रेण सोढुं शक्यत इति सुदुःसहम्।

**मलं ज्वरोष्मा धातून्वा स शीघ्रं क्षपयेत्**

ज्वरस्योष्माऽनलधर्मः सकलवस्तुक्षपणस्वभावः स कदाचित्तथाभूतादृष्टवशादस्मिन् ज्वरे धातुमलयोरेकलोलीभूतयोर्मलं विडादिकं क्षपयेत् । तथाभूतादृष्टसामर्थ्याद्धातून्वा रसादीन् क्षपयेच्छीघ्रमाश्वेव न तु चिरेण कालेन । अत्र च मलक्षपणोद्यतोयं ज्वरोष्मा न धातुक्षपणोद्यत इति निरामलक्षणेन विज्ञायते । तत्र चैतन्निरामलक्षणमसंरोधस्रोतस्त्वं सप्राणत्वमंगलाघवत्वं वातानुलोमनत्वं वाग्देहमनश्चेष्टास्वनालस्यमग्निदीप्तत्वं विशदास्यत्वं मूत्रपुरीषादिमलप्रवर्तनत्वं क्षुदुपगमो निर्ग्लानितेत्येकं किंचिदुत्पद्यमानमुपलभ्य निश्चीयते ज्वरोष्मणो मलक्षपणोद्यतत्वम्। एतल्लक्षणविपर्ययेण दोषोपक्रमणीयोक्तेन स्रोतोरोधेत्यादिना सामलक्षणमवगम्य निश्चीयते। यथाऽयं ज्वरोष्मा धातुक्षपणोद्यत इति।

ततः।

**सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमात्॥**
**वातपित्तकफैः सप्तदशद्वादशवासरान्।**
**प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च॥ ६१॥**
**इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः।**
**द्विगुणा सप्तमी यावन्नवम्येकादशी तथा॥ ६२॥**
**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च।**

स इत्यनुवर्तते । ततस्तस्मान्मलधातुक्षपणात् कारणाद्रसादीनां धातुमूत्रशकृद्दोषाणां द्वादशानामप्येकलोलीभूतानां सर्वाकारं निःशेषं कृत्वा शुद्ध्या ज्वरोष्मणा निष्पादितया निर्मलतया वातपित्तकफैर्भूयिष्ठैरेकैकश उत्पन्नः स संततो ज्वरः प्रायो मोक्षाय ज्वरमुक्तये मर्यादामवधिं सप्तदश द्वादश वासराननुयात्यनुवर्तते। वासरातित्यत्यंतसंयोगे द्वितीया। सर्वे आकारो यस्मिन् शोधने तत्सर्वाकारं निःशेषरूपम् । क्रियाविशेषणानां नपुंसकत्वं द्वितीया चेति द्वितीया । क्रमाद्यथाक्रमम् । तेन वातभूयिष्ठः संततो ज्वरः सप्त वासरान् पित्तभूयिष्ठो दश वासरान् कफभूयिष्ठो द्वादश वासरानित्यवतिष्ठते। तथा रसादीनामेकलोलीभूतानां केवलं ज्वरोष्मक्षपणमात्रमनुभवतामशुद्ध्या समलतयैष ज्वरोष्मा वातपित्तकफैरेकैकश उत्पन्नः प्रायो वधाय मर्यादां सप्तदशद्वादशवासराननु याति । प्रायो बाहुल्येनैषा मर्यादा कदाचिच्च वातज्वरादिरुक्तेभ्यः सप्तादिवासरेभ्योऽधिकानि दिनान्यनुवृत्त्या मोक्षाय वधाय वा भवति कदाचिन्न्यूनान्यपीति। तंत्रांतरे चोक्तम् । पित्तकफानिलवृद्ध्या दशादिवसद्वादशाहसप्ताहात्। हंति विमुंचति वाशु ज्वरोष्मणा धातुमलपाकादिति। इत्यग्निवेशस्य मतं ज्ञानम् । हारीतस्य पुनरेवं स्मृतिः स्मरणम्। नित्यत्वादायुर्वेदस्य । द्विगुणा सप्तमी चतुर्दशदिनानि यावद्वातज्वरः संततः पितज्वरो द्विगुणा नवमी अष्टादशदिनानि कफज्वरो द्विगुणैकादशी द्वाविंशतिर्दिवसान् । एषा त्रिदोषमर्यादा मोक्षाय च वधाय चेति। सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमादित्यत्राप्यनुवर्तनीयम्। त्रयश्च ते दोषाश्च त्रिदोषास्तेषां मर्यादाऽवधिस्त्रिदोषमर्यादा । द्वयमपि चैतत्तंत्रकृद्वचः प्रमाणम्। तथा दृष्टत्वात्।

इदानीं यथापरिभाषिताद्द्विविधादपि मर्यादाप्रकारादधिकतरं कालं यथाऽस्य ज्वरस्यानुवृत्तिर्भवति तथा दर्शयितुमाह।

**शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते॥ ६३॥**

शुद्धिसहिता अशुद्धिः शुद्धशुद्धिः । शाकपार्थिवादित्वात्समासः । तस्यां सत्यां ज्वरः संतताख्यो दीर्घमपि कालमनुवर्ततेऽनुबध्नाति । कदाचिद्रसाख्यो धातुर्मलरहितो ज्वरोष्मणा क्षपितमलो भवति कदाचिद्रक्ताद्यन्यतमः । कदाचिद्रक्तादयः सर्वे न रसाः कदाचिद्रक्तादयः सर्वे किंचिन्मलरहिता न रसस्तथाभूतः । कदाचित्किंचिन्मलरहितो रक्ताद्यन्यतमः । एवंप्रकारा शुद्धिसहिता अशुद्धिरुच्यते । तस्यां सत्यां संतताख्यो ज्वरो दीर्घकालमनुवर्तते ।

एवं संततस्य लक्षणमाख्याय सततकादीनां विषमज्वरसंज्ञानिमित्तं सामान्येन लक्षणमाह ।

**कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम् ।**
**अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् ६४**
**सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ।**

ईदृशानां पुंसामल्पोऽपि हीनबलोऽपि । अपिशब्दान्महाबलोऽपि दोषो वाताद्यन्यतमो ज्वरं विषमसंज्ञं कुर्यात् । किं कृत्वा । दूष्यादेरन्यतमतो बलं लब्ध्वा । आदिशब्दो देशर्तुग्रहणाय । अन्यतमग्रहणं चोपलक्षणार्थम् । तेन कदाचिद्दूष्यादेरेकस्माद्रसादेः कदाचिद्द्वाभ्यां रसरक्ताद्यन्यतमाभ्यां कदाचिद्दूष्यदेशर्तुभ्यो बलं लब्ध्वेति योज्यम् । किंभूतो दोषः । सविपक्षः सह विपक्षेण प्रत्यनीकेन दूष्याद्यन्यतमेन वर्तते सविपक्षः । तथा च किंभूतः । क्षयश्च वृद्धिश्च ते भजते सेवते क्षयवृद्धिभाक् । सततो हि ज्वरो निष्प्रत्यनीक इति संततादस्य भेदः । मिथ्याहारादिसेविनामित्यत्रादिशब्देन विहारौषधादिपरिग्रहः ।

**दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली ॥ ६५ ॥**
**निवर्तते पुनश्चैष प्रत्यनीकबलाबलः ।**

तेषां कृशादीनां दोषो वाताद्यन्यतमः स्वकाले यो यस्यात्मीयः कालो वृद्धिहेतुर्वयोऽहोरात्रिभुक्तलक्षणस्तस्मिन् स्वे काले दोषः प्रवर्तते । स्वीयं कर्म दर्शयतीत्यर्थः । किंकुर्वन् । ज्वरयन् संतापमुत्पादयन् । कीदृशो दोषः । बली बलवान्सन् प्रवर्तते । पुनश्चैव विषमज्वरदोषः सततकादिरुत्पादको निवर्तते स्वव्यापाराद्विरमति । किंभूतः । प्रत्यनीकस्य बलं प्रत्यनीकबलं तेनाबलः । एतदुक्तं भवति । यद्यसौ दोषो दूष्यादीनां सपक्षाणामन्यतमस्माद्बलं लभते तदाऽसौ स्वव्यापारे प्रवर्तते । यदा तु तस्य विपक्षा भवंति तदा तेषां विपक्षाणामन्यतमस्य बलेनास्य दोषस्य बलं हीयते । तदानीं च प्रत्यनीकबलाबलत्वादसौ दोषो निवर्तते । वटादिबीजवत् । यथा वटादिबीजं जलादिसामग्रीतो बलमासाद्य विशिष्टे काले रोहत्यंकुरादिकमुद्भावयति ततो जलादिविरहाद्भूमावेवावतिष्ठते न तु स्वकार्यमुद्भावयति तथैवैषोऽपि विषमज्वरस्य कर्ता दोषः स्वपक्षतो दूष्यादेर्बलं लब्ध्वा स्वव्यापारं कुरुते । यदा तु विपक्षबलेनासौ प्रतिहतशक्तिस्तदा स्वव्यापारं न कुरुते देह एव निलीय तिष्ठति ।

**क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ॥ ६६॥**
**लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनादधाति सः ।**

दोषे विषमज्वरकारिणि क्षीणे सति सततकादिज्वरः सूक्ष्मो भूत्वा रसादिष्वेव धातुषु लीयते लयं याति । कथं पुनरेतदवगम्यते यदसौ लीनो न पुनर्विनष्ट एवेत्यत्र हेतुमाह । लीनत्वादित्यादि । स तु लीनो ज्वरो लीनत्वात्कार्श्यादीन् करोति । अत एवाऽसौ न विनष्ट एवेत्युच्यते । यतः कार्श्याद्युद्गमवशादुपलभ्यते । निरन्वयविनष्टाद्धि तद्धेतुकार्श्याद्यनुपलब्धिरेव । तस्माल्लीनो दोषो विषमज्वरेषु भवतीति स्थितम् । ननु तुल्येऽपि वातादिदोषप्रकोपे संततज्वर एवाऽशु सकलकायव्याप्तिः । सततकादिषु तु चिरेण विच्छिद्य भवतीति ।

अत्र युक्तिः केत्याह ।

**आसन्नविवृतास्यत्वात्स्रोतसां रसवाहिनाम् ॥६७॥**
**आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते ।**
**संततः स ततस्तेन**

आसन्नं विवृत्तं चास्यं मुखं येषां रसवाहिनां स्रोतसां तान्येवम् । तेषां भाव आसन्नविवृतास्यत्वं तस्माद्धेतोस्तत्र प्रविष्टेन दोषेण शीघ्रं सर्वस्य वपुषः शरीरस्य व्याप्तिर्जायते । तेन कारणेन दोषेणाशु सर्वशरीरव्याप्तिलक्षणेन संतताख्यो ज्वरः सततो निरंतरो भवति ।

**विपरीतो विपर्ययात् ॥ ६८ ॥**

विपरीतः प्रकृतत्वात्संततेन विषमो विषमसंज्ञः संततादिज्वरो विपरीतो भवति न निरंतरं ज्वरयति । कस्माद्विपरीतः । विपर्ययात् । एतदुक्तं भवति । स्थूलान्यासन्नानि विवृतास्यानि च रसवाहीनि स्रोतांसि दूरतराणि संवृतास्यानि सूक्ष्मतराणि च रक्तवाहीनि तैर्दोषश्चिरेण तथा असाकल्येन कायं व्याप्नुवन्विच्छिन्नकालं ज्वरं करोति । अत एवाऽऽह । अहोरात्रस्येति सिद्धिरित्यादि । ततो दूरतराणि संवृततरास्यानि च मांसवाहीनि स्रोतांसि तानि चिरतरेण प्राप्नोति दोषः । न चैतैः स्रोतोभिः साकल्येन युगपद्देहमनुव्याप्नोति । अतोऽनेन कारणेनासावन्यस्मिन् दिने ज्वरं निवर्तयत्यन्येद्युसंज्ञम् । तेनासौ संततादपि विप्रकृष्टो भवति । ततोऽपि सूक्ष्मतराणि संवृततरमुखानि च मेदोवहानि च तानि चिरतरेण दोषः प्राप्नोति । न च तैरशेषदेहं व्याप्नोति । अतोऽसावनेन कारणेन यथाक्रममन्यदिनमेकं हित्वा तृतीयेऽह्नि तृतीयको भवति । ततोऽप्यनेनैव विप्रकृष्टतमेन क्रमेण दिनद्वयं हित्वा चतुर्थको भवति । एवं चतुर्थकविपर्ययम् । संग्रहेऽप्याख्यत् । सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च । दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण च । याति देहं च नाशेषं भूयिष्ठं भेषजेऽपि च । क्रमोऽयं तेन विच्छिन्नसंतापो लक्ष्यते ज्वर इति ।

अधुना विषमज्वरस्य स्वरूपं प्रतिपादयन्नाह ।

**विषमो विषमारंभक्रियाकालोऽनुषंगवान् ।**

विषमो विषमसंज्ञो ज्वरो विषमारंभक्रियाकालो भवति । आरंभश्च क्रिया च कालश्च आरंभक्रियाकालाः विषमा आरंभक्रियाकाला यस्य स एवम् । तत्र विषम आरंभो यथा कश्चित्पूर्वं मूर्धानमारभ्यागच्छति । कश्चित्पृष्ठम् । कश्चिज्जंघाभ्यामिति । विषमक्रियो यथा । कश्चिच्छीतकृत्कश्चिद्दाहकृदिति । विषमकालश्च यथा । कश्चित्पूर्वाह्णे समागच्छति । कश्चिन्मध्याह्ने । कश्चिदपराह्णे । कश्चिन्निशीथ इति । तथाऽनुषंगवान् दीर्घकालानुबंधी ।

**दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम्॥ ६९॥**
**अहोरात्रस्य स द्विः स्यात्**

प्रायो बाहुल्येन रक्ताश्रयो दोषः सततं ज्वरं विदधाति । प्रायोग्रहणं षड्रसाद्याश्रयत्वमस्य सूचयति । तस्मात्सर्वो ज्वरः सर्वधातुव्यापी । भूयांस्तु धातुर्व्यपदिश्यते । अत एव संतते पपाठ । विशेषेण रसाश्रित इति । तस्माद्विशेषेण रक्ताश्रयः सतत इत्यवेहि । स सततोऽहोरात्रस्य मध्ये द्विःस्याद्द्वौ कालावनुवर्तते । अहर्युक्ता रात्रिरहोरात्रः । अहःसर्वैकदेशेत्यादिना अच् समासांतः । रात्राह्नाहाः पुंसीति पुंस्त्वम् । द्वौ वारौ द्विः । द्वित्रिचतुर्भ्यः सुजिति सुच् । अत्र च नायं नियमः । यदह्न्येकवारं रात्रावेकवारमिति किं तर्हि कदाचिदह्न्येव वारद्वयं कदाचिद्रात्रावेव वारद्वयं कदाचिद्द्वयोरपि वारद्वयमिति प्रतीहि ।

**सकृदन्येद्युराश्रितः ।**
**तस्मिन्मांसवहा नाडीः**

सकृदन्येद्युरहोरात्रस्येत्यनुवर्तते । अहोरात्रस्य मध्येऽयमन्येद्युर्नाम विषमज्वरः सकृदेकवारं भवेत् । कदाचिदहन्येकवारमुत्पद्यते कदाचिद्रात्राविति । तस्मिन्नन्येद्युर्ज्वरे सर्वधात्वाश्रयोऽपि दोषो विशेषेण मांसवहा नाडीराश्रितः ।

**मेदोनाडीस्तृतीयके ॥ ७०॥**
**ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ।**
**सपृष्ठस्यानिलकफात्स चैकाहांतरः स्मृतः ॥ ७१ ॥**

तृतीयके मेदोवहा नाडीर्विशेषेण दोष आश्रित इति योज्यम् । मेदोवहा नाडीराश्रित्य दोषस्तृतीयकं कुरुत इत्यर्थः । स च त्रिविधः । पित्तवातादधिकात् कफपित्ताद्वातकफाच्च । तत्र ग्राही मूर्ध्नः शिरसः पित्तानिलात्तृतीयको भवति । मूर्ध्नि वेदनास्तास्ता जनयतीत्यर्थः । यश्च कफपित्तादुत्पद्यते स त्रिकस्य ग्राही त्रिके पीडामुत्पादयति । यश्चानिलकफाज्जायते स पृष्ठसहितस्य त्रिकस्य ग्राही पृष्ठे त्रिके च पीडां जनयति । एवमयं त्रिप्रकारस्वभावः । स च तृतीयक एकाहांतर इति स्मृतो मुनिभिरिति शेषः । एकेनाह्नांऽतरं व्यवधानं यस्य स एवम् । एकस्मिन्नहनि तिरोभूय पुनरुदेतीत्यर्थः ।

**चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ।**
**मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत् ॥ ७२ ॥**
**द्विधा कफेन जंघाभ्यां स पूर्वं शिरसोऽनिलात् ।**

मेदश्च मज्जा चास्थि च मेदोमज्जास्थीनि तेषामन्यतमस्मिन् स्थिते दोषे कदाचिन्मेदसि स्थिते दोषे कदाचिन्मज्जनि कदाचिदस्थिनि स्थिते दोषे चतुर्थको ज्वरो जायते । एकं दिनं ज्वरयित्वा द्व्यहं विमुच्य पुनर्ज्वरयति स चतुर्थको वेद्यः । मज्जस्थ एवेत्यपरे । अन्ये पुनराचार्या एवं स्मरंति । चतुर्थको ज्वरो मज्जस्थ एव दोषे जायते । स पुनश्चतुर्थकः प्रभावं द्विधा द्विप्रकारं दर्शयेत् । कफेनाधिकेन यो जायते स पूर्वं प्रथमं जंघाभ्यां ततोऽन्येभ्योऽगेभ्यः । अनिलाद्यो भवति स पूर्वं शिरसो जायतेऽनंतरमंगांतरेभ्यः ।

**अस्थिमज्जोभयगते चतुर्थकविपर्ययः ॥ ७३ ॥**
**त्रिधा**

अस्थि च मज्जा चास्थिमज्जानौ । अस्थिमज्ज्ञोरुभयं द्वयं तत्र गतो यो मलो वाताद्यन्यतमस्तस्मिंश्चतुर्थकविपर्ययस्तद्विपरीतलक्षणो विषमज्वरो भवति । स च त्रिधा त्रिप्रकारः । सन्निपातोद्भवत्वेऽपि कदाचिद्वातेनाधिकेनाऽथवा पित्तेन श्लेष्मणा वा ।

तमेव च लक्षयितुमाह ।

**द्व्यहं ज्वरयति दिनमेकं तु मुंचति ।**

द्विधातुस्थितदोषोत्पन्नत्वाद्द्वे दिने ज्वरयित्वा दिनमेकं विमुच्य पुनर्द्व्यहं ज्वरयति स चतुर्थकविपर्ययः । अनेनैव लक्षणेन चतुर्थकस्याऽपि लक्षणमुक्तं भवति । स एकमहो ज्वरयित्वा द्व्यहं विमुच्य पुनर्ज्वरयति । द्वे अह्नि समाहृते द्व्यहः । राजाहःसखिभ्यष्टजिति टच् । अह्नष्टखोरेवेति टिलोपः ।

इदानीमेषां विषमज्वराणामिमं शेषभूतं ग्रंथमाह ।

**बलाबलेन दोषाणामन्नचेष्टादिजन्मना ॥ ७४ ॥**
**ज्वरः स्यान्मनसस्तद्वत्कर्मणश्च तदातदा ।**
**दोषदूष्यर्त्वहोरात्रप्रभृतीनां बलाज्ज्वरः ॥ ७५ ॥**
**मनसो विषयाणां च कालं तं तं प्रपद्यते ।**

बलं चाबलं च बलाबलं सामर्थ्यासामर्थ्यमासन्नव्याधिकारणानां दोषाणां वातादीनां तदा तदा बलाबलेन ज्वरः स्यात् । किंभूतेन । अन्नचेष्टादिजन्मना । अद्यत इत्यन्नं रक्तशाल्यादि । अन्नग्रहणमुपलक्षणार्थम् । मांसरसाद्यपि हि पानं गृह्यते । चेष्टयत इति चेष्टा कायवाङ्मनोव्यापारो विहार इत्यर्थः । अन्नं च चेष्टा चान्नचेष्टे । ते आदी येषां कालदूष्यादीनां त एवं तेभ्यो जन्म यस्य बलाबलस्य तेनान्नचेष्टाद्युत्पन्नेन सततकादिर्ज्वरो भवति । मनसस्तद्वत् । तद्वदित्यनेन दोषाणां बलाबलमतिदिश्यते । यथा दोषाणां शारीराणां बलाबलेन सततकादिर्ज्वरः स्यात्तथा मनसोऽपि दोषाणां बलाबलेन ज्वरः स्यात् । चशब्दात् कर्मणोऽपि पूर्वोक्तस्य बलाबलेन । कस्य संबंधिनः कर्मणः । प्रकृतत्वान्मनस एव । तदेवं कर्मणो व्यापारस्य चित्त-

स्यार्थस्य बलाबलेन तद्वशाज्ज्वरोऽसौ भवेत्। अन्ये त्वाचक्षते । कर्मणः पुरा कृतस्य बलाबलेन पुराकृतकर्मवशादिति । यत्तदोर्नित्याभिसंबंधाद्यदन्यदनुक्तमपि लभ्यते तेनायं संबधः । यदा यदाऽन्नचेष्टादिजन्मदोषाणां बलाबलं स्यात्तथा मनसो दोषाणां बलाबलं स्यात्तथा कर्मणः पूर्वकृतस्य बलाबलं स्यात्तदा तदा सततकादिर्ज्वरः स्यादिति । अपिच दोषाणां वातादीनां बलेन । तथा दूष्याणां रसादीनां तथा ऋतूनां शिशिरादीनां तथाऽहोरात्रस्य तथा प्रकृतीनां बलेन मनसो बलेन तथा विषयाणां शब्दस्पर्शरूपरसगंधानां बलेन ज्वरस्तं तं विशिष्टं कालं प्रपद्यते । तेन कदाचित्सततकोऽन्येद्युस्तृतीयकश्चतुर्थको वा भवति। तथा कदाचिच्चतुर्थको भूत्वा तृतीयकोऽन्येद्युः सततको वा भवेत्। संग्रहे च रसादिधातुस्थज्वरलक्षणमुक्तम्। यथा। उत्क्लेशो गौरवं दैन्यं भंगोंऽगानां विजृंभणम्। अरोचको वमिः सादः सर्वस्मिन् रसगे ज्वरे। रक्तनिष्ठीवनं तृष्णा रक्तोष्णपिटिकोद्गमः। दाहरागभ्रममदप्रलापा रक्तसंस्थिते। तृड्ग्लानिः सृष्टवर्चस्त्वमंतर्दाहो भ्रमस्तमः। दौर्गंध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते। स्वेदोऽतितृष्णा वमनं स्वगंधस्यासहिष्णुता । प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम् । दोषप्रवृत्तिरूर्ध्वाधःश्वासांगाक्षेपकूजनम्। अंतर्दाहो बहिः शैत्यं श्वासो हिध्मा च मज्जगे। तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्ता। शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये। उत्तरोत्तरदुःसाध्याः पंचात्रांत्यौ तु वर्जयेत्। प्रलिंपन्निव गात्राणि श्लेष्मणा गौरवेण च। मंदज्वरः प्रलेपस्तु सशीतः स्यात्प्रलेपकः । नित्यं मंदज्वरो रूक्षः शीतः कृच्छ्रेण सिध्यति । स्तब्धांगः श्लेष्मभूयिष्ठो भवेद्वातबलासकः। हरिद्राभेकवर्णाभस्तद्वर्णं यः प्रमेहति। स वै हारिद्रको नाम ज्वरभेदोंऽतकः स्मृतः। कफवातौ समौ यस्य हीनपित्तस्य देहिनः। तीक्ष्णो वा यदि वा मंदो जायते रात्रिको ज्वरः । दिवाकरातिपित्तबले व्यायामाच्च विशोषिते। शरीरे नीयते वाताज्वरः स्यात् पूर्वरात्रिकः। आमाशये यदा दुष्टे श्लेष्मपित्ते व्यवस्थिते । तदार्धं शीतलं देहे त्वर्धं चोष्णं प्रजायते । काये पित्तं यदा दुष्टं श्लेष्मा चांते व्यवस्थितः । उष्णत्वं तेन देहस्य शीतत्वं करपादयोः। खरनादिना तु शुक्रस्थ एव दोषे वर्ज्यता प्रत्यपादि। तथा च तद्ग्रंथः। शुक्रस्थे शुक्रविण्मोक्षः श्वसन् प्राणान् विमोक्ष्यतीति।

**धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते॥७६॥**
**ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते।**
**वेपते प्रलपत्युष्णैः शीतैश्चांगैर्हतप्रभः॥ ७७॥**
**विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्षते।**
**सदोषशब्दं च शकृद्द्रवं सृजति वेगवत्॥ ७८॥**

दोषो वाताद्यन्यतमो धातून् रसादीन् प्रक्षोभयंश्चंडपवनोद्धूतमहाजलाशयानिव कुर्वन् ज्वरमोक्षकाले विलीयते। विलीयमानदोषवशान्नरः श्वसंस्तथा स्विद्यन् रोमकूपेभ्यो जलं स्रवंस्तथा कूजन्नव्यक्तं शब्दं कुर्वन् वमति छर्दयति तथा चेष्टते भूमिशय्यादौ परिलुंठति वेपते लतेव चलति प्रलपत्यसंबद्धं ब्रूते तथा हतप्रभो नष्टकांतिरुष्णैः शीतैश्चांगैस्तुल्यकालमुपलक्षितो भवति । चशब्दोऽत्र तुल्यकालार्थः । तुल्यकालं तस्य कानिचिदुष्णान्यंगानि कानिचिच्छीतानि । विगता संज्ञा यस्यासौ विसंज्ञस्तथा ज्वरवेगार्तः सक्रोध इव वीक्षते सरोष इवालोकनं करोति तथा शकृत् पुरीषं विमुंचति । किंभूतं। शकृत्। दोषश्च शब्दश्च दोषशब्दौ सह ताभ्यां वर्तते सदोषशब्दम्। दोषशब्देनेहामो विवक्षितः। द्रवमकठिनम्। सामं सस्वनं चेत्यर्थः। वेगोऽस्यास्तीति वेगवदिति।

सवेगं कृत्वा शकृत्सृजतीति ज्वरमोक्षकाललक्षणमुक्त्वा विगतज्वरलक्षणमभिधित्सुराह ।

**देहो लघुर्व्यपगतक्लममोहतापः**
**पाको मुखे करणसौष्ठवमव्यथत्वम्।**
**स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा**
**कंडूश्च मूर्ध्नि विगतज्वरलक्षणानि॥ ७९॥**

तस्य विगतज्वरस्य नरस्यैतानि लक्षणानि । यथा । देहो लघुर्भवति। न तु गात्रगौरवम्। तथा व्यपगता नष्टाः क्लममोहतापा यस्यासौ व्यपगतक्लममोहतापस्तदा स संपद्यते । तथाऽस्य मुखे वदने पाकः । करणानां चक्षुरादीनां सौष्ठवं पाटवं जायते । तथा अव्यथत्वादयोऽस्य भवंति । प्रकृत्या योगः प्रकृतियोगः स्वभावेन संबंधः । प्रकृतियोगो यस्यास्ति मनसस्तत्प्रकृतियोगि । यादृग्यस्य चित्तं पूर्वं रजोबहुलं तमोबहुलं वा आसीत्तादृक् तस्य संपद्यत इत्यर्थः । तथाऽन्नलिप्साऽन्नाभिलाषः। संग्रहे च नक्षत्रसमाश्रयणेन च साध्यासाध्यज्वरलक्षणमुक्तम्। यथा। आधानजन्मनिधनप्रत्यराख्यविपत्करे । नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा। ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तते । भरणीषु च पंचाहात्सप्ताहात्कृत्तिकासु च। त्रिःसप्तरात्रादथवा रोहिण्यामष्टरात्रतः। एकादशाद्वा दिवसान्मृगे षण्णवरात्रयः। पंचाहान्मृत्युरार्द्रायां त्रिपक्षे संशयोऽथवा। पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात्। दिवसात्सप्तविंशाद्वा द्व्यहात्सप्ताहतोऽथवा। पुष्याश्लेषासु मरणं चिरेणाऽपि मघासु च। अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्न चेन्मृतः। न चेत्। फाल्गुन्योः पूर्वयोर्मृत्युरन्ययोस्तु दिनेऽष्टमे। नवमे चैकविंशे वा ज्वरः सौम्यत्वमृच्छति। हस्तेऽह्नि सप्तमे शांतिश्चित्रायामष्टमेऽथवा। पुनश्चित्रागमे स्वातौ दशाहादथवा त्रिभिः। पक्षैर्मृत्युर्विशाखासु द्वाविंशेऽहनि निर्दिशेत्। नवमेऽह्नि नचेच्छांतिर्मैत्रे मृत्युस्ततः परम्। ज्येष्ठायां पंचमे मृत्युरूर्ध्वं वा द्वादशात्सुखम्। स्वास्थ्यं दशाहान्मूलेन त्रिःसप्ताहे तथा गते। पूर्वाषाढासु नवमे ततोऽन्यासु तु मासतः। अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवम्। आज्येष्ठाहाद्वनिष्ठासु दशाहाद्वारुणेषु तु। षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु च। उत्तरासु द्विसप्ताहात् प्रशमो रेवतीषु तु। चतूरात्रेऽष्टरात्रे वा क्षेम इत्याह हारितः इति। ज्वर इत्युपलक्षणम्। प्रायः सर्वो व्या-

धिरनया दिशाऽनुसृतो बोध्यः क्षिप्रचिरमोक्षाय जीवितांताय वा। आधानं जन्मतो यद्दशमं नक्षत्रम् । विपत्करं तृतीया तारा । प्रत्यरः पंचमी । निधनसंज्ञा सप्तमी तारा स्मृतेति । अथ किं नक्षत्रसमाश्रयणेन ज्वरस्य साध्यासाध्यविभागोऽगीक्रियतामुत यथानिदानं कुपितदोषलक्षणेन । ब्रूमः । उभयथाऽपि । यतो नक्षत्रं त्रिविधमपि प्राक्तनस्य कर्मणो दैवाख्यस्य शुभरूपस्याशुभस्य शुभाशुभरूपस्य च सौम्यक्रूरमध्यस्वभावसूचकम् । तत्र सौम्येन नक्षत्रेण शुभं क्रूरे चाशुभं मध्यस्वभावेन च शुभाशुभम् । एतदुक्तं भवति । पुरातनकर्मवशान्नक्षत्रेण ज्वर उत्पद्यते । ऐहिककर्मवशान्मिथ्याहारसेवनाख्यायथानिदानं वातादिकुपितदोषलक्षणेन च । तदनयोर्बलाबलेन ज्वरस्य साध्यासाध्यविभागो व्यवस्थाप्यः । प्रत्यपादि च मुनिभिः । यथा । कदाचित्कर्मणो बलवत्त्वं कदाचित्पुरुषकारस्येत्युभयथा ज्वरस्य साध्यासाध्यविभागो न्याय्यः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां ज्वरनिदानं नाम द्वितीयोऽध्यायः॥२॥

---

## तृतीयोऽध्यायः ।

ज्वरनिदानादनंतरं रक्तपित्तनिदानमारभ्यते । यतो ज्वर ऊष्मणा विना न संभवति पित्तेन विना न कदाचिदूष्मा । तस्माज्ज्वरनिदानादूर्ध्वं रक्तपित्तनिदानमिदानीमारब्धुं युक्तमित्याह ।

**अथाऽतो रक्तपित्तकासनिदानं व्याख्यास्यामः ।**

व्याख्याऽस्य पूर्ववत् ।

**भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ।**
**कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥**
**कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्छिते ।**
**ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥**

भृशशब्दस्योष्णादिभिर्विदाह्यंतैः संबंधः । आदिशब्देनाऽत्र क्षारादयो गृह्यंते । भृशोष्णादिभिरन्नैः पित्तलैरतिसेवितैर्द्रवं द्रवस्वभावं यत्पित्तं तत्कुपितं दुष्टं तथा रक्तं कुपितं तैरेवातिसेवितैः । अतिसेवनं चोभयथा भवति । चिरकालमभ्यवहृतैस्तथातिमात्राभ्यवहृतैः । न केवलमेतैर्यावत्कोद्रवोद्दालकैश्चान्नैः । तदित्यनेन भृशोष्णादीनि परामृश्यंते । तैर्युक्तैर्मिश्रितैः कोद्रवोद्दालकैश्चान्नैरतिसेवितैः कुपितं पित्तं भवति रक्तं च । तथा ते द्वे अपि रक्तपित्ते मूर्छिते मिश्रतां गते मिथः परस्परं तुल्यरूपत्वं समवर्णत्वमागम्य प्राप्य सर्वां तनुं देहं व्याप्नुतो व्याप्नुवाते । ननु भृशोष्णादीनां पित्तलत्वाव्यभिचारात्किमर्थं पित्तलैरित्युक्तम् । ब्रूमः । दाडिमामलकसैंधवेष्वम्ललवणादिषु व्यभिचारात् । तथाहि दाडिमामलकसैंधवान्यम्ललवणान्यपि पित्तं न कुर्वते। अपि च न केवलं भृशोष्णादियुक्तैः कुपितं पित्तं रक्तं च यावदन्यैरपि पित्तलैर्भृशोष्णादिस्वभावैर्व्रीहिप्रभृतिभिरतिसेवितैः कुपितं पित्तं रक्तं चेति प्रतिपादनार्थं पित्तलैरित्युक्तम् । नन्वेवंसति पित्तलैरित्येवंनिर्देशः कर्तुं युक्त उभयानुग्रहार्थः । तथा च भृशोष्णादीनि तथाऽन्यान्यप्यभृशोष्णादीनि व्रीहिप्रभृतीन्येवं गृहीतानि भवंति । अस्त्येवैतत्। किं तु पित्तलत्वसामान्याद्गृहीतानामपि भृशोष्णादीनामुपादानं कृतमतिशयद्योतनार्थम् । यथा भृशोष्णादीन्यतिशयेन पित्तं रक्तं च कोपयंति न तथाऽन्यानि व्रीहिप्रभृतीनि ।अत एव कोद्रवोद्दालकौ शीतवीर्यावपि भृशोष्णादिद्रव्ययुतौ पित्तस्य कर्तारौ भवतः । भृशोष्णादीनामतिपित्तलत्वात् । ननु पित्तस्य द्रवमिति विशेषणमयुक्तम् । व्यभिचारासंभवात्।तथा च तंत्रकृज्जगौ । पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवमिति । अत्रोच्यते । पित्तमद्रवमप्यस्ति । कथं ज्ञायते । ग्रंथकारवचनात् । तथाचोवाच तंत्रकृत् । पित्तं पंचात्मकं तत्तु पक्वामाशयमध्यगम् । पंचभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् । त्यक्तद्रवत्वमित्यादि । तस्माद्यद्द्रवरूपं पित्तं तद्भृशोष्णादिभिः कुपितं रक्तपित्ते कारणं न पुनर्यत्त्यक्तद्रवत्वं कठिनतां प्राप्तमिति प्रतिपादयितुं द्रवग्रहणम् ।

ननु यदि तुल्यरूपत्वं पित्तरक्ते प्राप्ते तत्कथमीदृशो निर्देश उपपद्यते । अधोगं यापयेद्रक्तमित्येवमादौ हि रक्तस्य पित्तसहितस्यैव निर्देशो युक्तो रक्तपित्तमधोगं यापयेदित्येवमाशंक्याह ।

**पित्तं रक्तस्य विकृतेः संसर्गाद्दूषणादपि ।**
**गंधवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ ३ ॥**

पित्तं रक्तेन व्यपदिश्यते । यस्मात्पित्तं रक्तस्य विकृतिर्विकारो रक्तादुत्पन्नमित्यर्थः। तथा चोक्तम् । कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च । स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मला इति । तथा संसर्गादन्योन्यमिश्रीभावात्तथा दूषणादपि यस्माद्रक्तं पित्तेनाश्वेव दूष्यते । तथा रक्तदूषणैः पित्तमपि दूष्यते । तात्स्थ्यात् । तथा च ग्रंथः । यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् । अन्ये तु धातवो न तथा दूष्यंते यथा पित्तम् । तथा चोक्तम् । तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोरिति । तथा गंधवर्णानुवृत्तेश्च । गंधश्च वर्णश्च गंधवर्णौ तयोरनुवृत्तिरनुकरणं गंधवर्णानुवृत्तिः । कस्य गंधवर्णौ । प्रकृतत्वाद्रक्तस्य यादृशौ गंधवर्णौ तादृशावपि पित्तस्य । एवं च रक्तेन तद्व्यपदिश्यते । तस्मादधोगं यापयेद्रक्तमित्यादिनिर्देशो युक्त एव ।

ननु रक्तस्य शरीरे स्वाभाविकं प्रमाणमुक्तमष्टावेवांजलयः । प्रकोपमापन्नं त्वाढकादिसंख्यातमपि दृश्यते तत्कथमेतदित्याह ।

**प्रभवत्यसृजः स्थानात्प्लीहतो यकृतश्च तत् ।**

असृजः स्थानात्तत्पित्तमुच्छ्रितं रक्तं प्रभवति प्रकर्षेण भवति वर्धते । तस्माद्बहुत्वमस्य युक्तमेव । किंतदसृजः स्थानं यतस्तत्प्रभवतीत्याह । प्लीहतो यकृतश्चेति ।

अथाऽस्य पूर्वरूपाण्याह ।

**शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ ४ ॥**
**छर्दिश्छर्दितवैभत्स्यं कासः श्वासो भ्रमः क्लमः ।**

**लोहलोहितमत्स्यामगंधास्यत्वं स्वरक्षयः ॥ ५ ॥**
**रक्तहारिद्रहरितवर्णता नयनादिषु ।**
**नीललोहितपीतानां वर्णानामविवेचनम् ॥ ६ ॥**
**स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन्भविष्यति ।**

शिरोगुरुत्वादिकमस्मिन् रक्तपित्ते भविष्यति सति भवति । छर्दिते वमिते बैभत्स्यं जुगुप्सा । स्वप्ने स्वप्नावस्थायां तद्वर्णदर्शित्वं रक्तवर्णाकारं पश्यति ।

तच्च रक्तपित्तं त्रिविधमूर्ध्वगमधोगमुभयमार्गं च । तत्रोर्ध्वगमाह ।

**ऊर्ध्वं नासाक्षिकर्णास्यैर्मेंढ्रयोनिगुदैरधः ॥ ७ ॥**
**कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ।**

ऊर्ध्वं रक्तपित्तं कुपितं नासादिभिः सप्तभिर्द्वारैः प्रवर्तते । अधोगं रक्तपित्तं कुपितं मेढ्रयोनिगुदैस्त्रिभिर्द्वारैः प्रवर्तते । प्राण्यंगानां द्वंद्व एकवदित्यस्य प्रायिकत्वाद्बहुवचनमत्र न दुष्टम् । तथा रोमकूपैः समस्तैः । चशब्दान्नासाक्षिकर्णास्यमेढ्रयोनिगुदैरुभयमार्गमुभयमार्गाभ्यां तद्रक्तपित्तं प्रवर्तते ।

**ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनम् ॥ ८ ॥**
**बह्वौषधं च पित्तस्य विरेको हि वरौषधम् ।**
**अनुबंधी कफो यश्च तत्र तस्यापि शुद्धिकृत् ॥ ९ ॥**
**कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः ।**
**किमु तिक्ताः कषाया वा ये निसर्गात्कफापहाः १०**

ऊर्ध्वमूर्ध्वगं रक्तपित्तं साध्यम् । यस्मात्कारणात्कफादधिकाज्जायते । तच्च विरेचनसाधनम् । साध्यतेऽनेनेति साधनं चिकित्सितम् । तच्चोर्ध्वगं रक्तपित्तं बह्वौषधं बहु औषधं यस्य तद्बह्वौषधमनेकसाधनम् । मधुरकषायतिक्तद्रव्यसाध्यत्वात् । अपिच । यस्माद्विरेकः पित्तस्य वरौषधम् । तथाचोक्तम् । विरेचनं पित्तहरणमिति । यश्च तस्मिन्नूर्ध्वगे रक्तपित्ताख्ये व्याधौ कफोऽनुबंधी तस्यानुबंधिनः कफस्य विरेचनं शुद्धिकृच्छोधनं करोति । अतो हेतोरूर्ध्वगं रक्तपित्तं साध्यम् । कषायाः स्वरसकल्कशृतशीतफांटाख्यास्ते स्वादवोऽपि हिताः । व्याधिप्रतिपक्षत्वात् । ननु दोषप्रतिपक्षताद्वारेण दोषसमानत्वात्तेषाम् । अथवा केवलमकुष्ठतंडुलीयादिसंबंधिनो व्याधिप्रतिपक्षास्तथा रूक्षत्वाद्दोषप्रतिपक्षा इति श्लेष्मणोऽपि हिताः । अपिशब्दात्तिक्तादयोऽपि । विशुद्धो वाताद्यदूषितः श्लेष्मा यस्य स तस्य । किमु किंपुनस्तिक्ताः कषायाश्च ये स्वरसादयस्तेऽप्यस्योर्ध्वगस्य रक्तपित्ताख्यस्य व्याधेरथवा तद्वतो नरस्य विशुद्धश्लेष्मणो हिताः । व्याधिप्रतिपक्षत्वाद्दोषप्रतिपक्षत्वाच्च । ये निसर्गात्स्वभावात्कफघ्नाः ।

**अधो याप्यं चलाद्यस्मात्तत्प्रच्छर्दनसाधनम् ।**
**अल्पौषधं च पित्तस्य वमनं न वरौषधम् ॥ ११ ॥**
**अनुबंधी चलो यश्च शांतयेऽपि न तस्य तत् ।**
**कषायाश्च हितास्तस्य मधुरा एव केवलम् ॥ १२ ॥**

अधो याप्यमधोगं रक्तपित्तं याप्यम् । कस्मात् । यस्माच्चलाद्वातादधिकादुत्पद्यत इत्यध्याहार्यम् । तच्चाधोगं रक्तपित्तं प्रच्छर्दनसाधनं प्रच्छर्दनं वमनं तत् साधनं चिकित्सितं यस्य तदेवम् । तथा स्वल्पमौषधं चिकित्सितं यस्य तदल्पौषधं नोर्ध्वगरक्तपित्तवद्बह्वौषधम् । कथमित्याह । यस्मादयं रोगः पित्तप्रधानः । पित्ते वमनं च श्रेष्ठमौषधं न भवति । कफे हि वमनं प्रधानमुक्तम् । ऊर्ध्वमार्गे यद्वमनं दोषहरणं तत्पित्तस्य न वरौषधम् । अल्पौषधत्वे द्वितीयहेतुमाह । कषायाश्चेत्यादि । तस्याधोगस्य रक्तपित्तस्य मधुरा एव केवलं कषाया हिताः पथ्या न तिक्ताः कषायाश्च तेषां वातकोपकारणत्वात् । तथास्य चलो वायुर्योऽनुबंध्यनुबलत्वेन स्थितस्तस्याऽपि वायोर्न तद्वमनं शांतये शांत्यर्थम् ।

**कफमारुतसंसृष्टमसाध्यमुभयायनम् ।**
**अशक्यप्रातिलोम्यत्वाद्भावादौषधस्य च ॥ १३ ॥**

उभयायनं मार्गद्वयप्रपन्नं कफमारुतसंसृष्टमसाध्यं साधयितुमशक्यम् । असाध्यत्वे हेतुद्वयमाह । अशक्यप्रातिलोम्यत्वादित्यादि । अनुलोमविपरीतः प्रतिलोमस्तस्य भावः प्रातिलोम्यम् । अशक्यं कर्तुमशक्यं प्रातिलोम्यं यस्य रक्तस्य तदशक्यप्रातिलोम्यं । तस्य भावोऽशक्यप्रातिलोम्यत्वं तस्मादुभयायनं रक्तपित्तमसाध्यम् । अभावादौषधस्य च । एतद्योग्यौषधासंपत्तेश्चैतदसाध्यम् ।

ननु कथमेवमुच्यत इत्याह ।

**नहि संशोधनं किंचिदस्त्यस्य प्रतिलोमगम् ।**
**शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम् ॥ १४ ॥**

हि यस्मात्तस्य संशोधनं प्रतिलोमगं न किंचिदस्ति । यच्च प्रतिलोमगं संशोधनं तद्रक्तपित्ते भिषग्जितमौषधम् । तच्च तथाभूतमौषधं न संभवति यत्तद्रक्तसंशमनार्थं दीयते । यद्यधोमार्गापेक्षया दीयते तदानीमूर्ध्वमार्गप्रवृत्तं रक्तं प्रवृद्धं संपद्यते । अथोर्ध्वमार्गापेक्षया विरेचनमुपयुज्यते तदाधोगं रक्तपित्तं वर्धते । एवमस्य प्रतिलोमगमौषधं शोधनं न संभवति । तस्मादौषधस्याभावः । भिषग्जितमितिभिषक्शब्दात् कंड्वादियगंतान्निष्ठा इट्च । स्वभावाचायं भेषजवाची ।

ननूभयायनस्य रक्तपित्तस्य संशोधनरूपमौषधं मा भवतु । शमनरूपं त्वौषधमस्य शमाय भविष्यतीत्यभावादौषधस्य चेत्ययुक्तमुदितमित्याशंक्याह ।

**एवमेवोपशमनं सर्वशो नास्य विद्यते ।**
**संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम् ॥ १५ ॥**

यथा शोधनमस्योभयायनस्य शमनाय न संभवति तथा शमनमपि यदौषधं तदप्येतस्य शमनं न संभवति । कुतो हेतोरित्याह । संसृष्टेष्वित्यादि । हि यस्मात्संसृष्टेषु त्रिदोषेषु यत्सर्वजिच्छमनं तद्धितम् । तच्च संतर्पणापतर्पणरूपत्वाद्द्विविधम् । तत्र यदि संतर्पणं बृंहणं शमनमधोमार्गप्रवृत्तरक्तपित्तदोषापेक्षया मारु-

तशांत्यर्थमुपयुज्यते तदा तच्छांतिं कुर्वतो रक्तपित्तविकारकरणस्य श्लेष्मणो वृद्धये संपद्यते । अथापतर्पणमूर्ध्वभागप्रवृत्तदोषापेक्षया कफशांत्यर्थमुपयुज्यते तदानीं तस्य शांतिं कुर्वतोऽधोगरक्तपित्तस्य कारणं वायुं प्रकोपयेत् । न चोभयात्मकमेकं नृसिंहरूपवच्छमनमस्ति यत्प्रयोजितमुभयायनस्य शमनाय स्यात् । तस्मादुभयायनमसाध्यम् ।

**तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।**
**उपद्रवांश्च विकृतिज्ञानतः**

तस्मिन् रक्तपित्ते दोषानुगमनं वातपित्तश्लेष्मणामनुबंधं सिरास्र इव सिराव्यधविध्युक्तम् । वातच्छयावारुणं रूक्षमित्यादिग्रंथनिर्दिष्टेन लक्षणेन लक्षितं लक्षयेत् । उपद्रवांश्च विकृतिज्ञानतो लक्षयेदिति योज्यम् । विकृतिज्ञानशब्देन विकृतिविज्ञानीय उपलक्ष्यते ।

**तेषु चाधिकम् ॥ १६ ॥**
**आशुकारी यतः कासस्तमेवाऽतः प्रवक्ष्यति ।**

तेषु चोपद्रवेषु मध्ये यः कासाख्य उपद्रवः स आशुकारी क्षिप्रं मारयति यतोऽतस्तमेव रक्तपित्तनिदानादनंतरं प्रकर्षेण निदानप्राग्रूपादिभिर्वक्ष्यति भणिष्यति तंत्रकृत् ।

**पंच कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ १७॥**

पृथग्दोषैस्त्रयः क्षतेनैकः क्षयेणैक इति कासाः पचैव स्मृताः । ननु यदि पंचैव कासास्तत्कथं भणिष्यति केवलानिलजं कासं स्नेहैरादावुपाचरेदिति । नह्यन्यदोषयुक्तो वातिकः कासोऽभिहितोऽपि तु त्रिभिरेव दोषैः पृथगेवोक्ताः कासाः । तथा पित्तकासे तु सकफे वमनं सर्पिषा हितम् । तथा पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् । युंज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैरित्यादि । तथाऽस्मिन्नेवाध्यायेऽध्येष्यते । साध्या दोषैः पृथक् त्रयः मिश्रा याप्या द्वयादिति । तदेतत्पूर्वापरव्याहतमिव । अत्रोच्यते । कासाः पंचैव वक्ष्यमाणया संप्राप्त्या जायंते । वस्तुस्वाभाव्यात् । अनंतरं वातिककासे कदाचिदाहारविहारवशात्पित्तेनानुबंधः कदाचित् श्लेष्मणा जायते । पित्तकासे तथैवाहारविहारवशात् कदाचिद्वातेनानुबंधः कदाचिच्छ्लेष्मणेति । कफकासेऽपि तद्वदाहारविहारवशाद्वातेनानुबंधः कदाचित्पित्तेन । इति न किंचिदत्र पूर्वापरव्याहतम् ।

**क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ।**

सर्व एव कासा उपेक्षिताश्चिकित्सां विना क्षयाय संपद्यंते । उत्तरोत्तरक्रियावस्थाकर्षणात् क्षयजोऽप्युपेक्षितः क्षयायैवेति बोध्यम् । उत्तरोत्तरं चैते कासा बलिनः ।

तेषां कासानां पूर्वरूपमाह ।

**तेषां भविष्यतां रूपं कंठे कंडूररोचकः ॥ १८ ॥**
**शूकपूर्णाभकंठत्वम्**

तेषां कासानां भविष्यतामुत्पित्सूनां गले कंडूः खर्जूस्तथाऽरोचकस्तथाशूकपूर्णसदृशकंठत्वं च भवति ।

अधुना सर्वकासानां संप्राप्तिं दर्शयति ।

**तत्राधो विहतोऽनिलः ।**
**ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कंठे च संसजन्॥१९॥**
**शिरःस्रोतांसि संपूर्य ततोऽगान्युत्क्षिपन्निव ।**
**क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ॥ २०॥**
**प्रवर्तते स वक्रेण भिन्नकांस्योपमध्वनिः ।**

तत्र तेषु कासेष्वनिलोऽधोधस्ताद्विहतो विशेषेणात्यर्थं हत ऊर्ध्वं प्रवृत्तोऽनंतरं क्रमेणोरो हृदयं प्राप्य तस्मिन्नुरसि संसजन्निष्वजमानस्तथा कंठेऽपि संसजन्ननंतरं शिरःस्रोतांसि संपूर्य मस्तकशिरा आध्माप्य ततोऽनंतरमंगानि सर्वानवयवानुत्क्षिपन्निवोर्ध्वं प्रेरयन्निव तथाऽक्षिणी क्षिपन्निव बहिरिव शरीरात्प्रेरयंस्तथा पृष्ठमुरश्च पार्श्वे च पीडयन्स वायुर्वक्रेण प्रवर्तते । किंभूतः । भिन्नकांस्योपमध्वनिः भिन्नं भग्नं यत् कांस्यं तत्तुल्यशब्दः ।

ननु कथमेकरूपायां कासंसंप्राप्तौ सत्यामनेकरूपता कासरुग्ध्वनीनां जायत इत्याह ।

**हेतुभेदात्प्रतीघातभेदो वायोः सरंहसः ॥ २१ ॥**
**यद्रुजाशब्दवैषम्यं कासानां जायते ततः ।**

हेतुभेदान्निदानविशेषात्कासंसंप्राप्तौ वर्तमानस्य वायोः प्रतिघातभेदः प्रत्याहारविशेषः । किंभूतस्य वायोः । सरंहसो वेगवतः। यद्यस्मात्तस्तस्माद्रुजाशब्दयोः शूलध्वन्योर्वैषम्यं न समता कासानां जायते । अन्यादृशौ रुक्शब्दौ वातकासे । अन्यादृशावेवान्येषु ।

अधुना तु वातकासस्य निदानादिनिर्देशार्थमाह ।

**कुपितो वातलैर्वातः शुष्कोरःकंठवक्त्रताम् ॥ २२ ॥**
**हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ।**
**करोति शुष्कं कासं च महावेगरुजास्वनम् ॥ २३ ॥**
**सोऽगहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ।**

वातलैर्वातः कुपितः शुष्कोरःकंठवक्त्रतां हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् करोति । तथाऽतिवेगपीडाशब्दयुतं शुष्कं च कासं करोति । वातलैरिति निर्देशेऽत्यंतवातलैः कुपितो वायुरिति बोध्यम् । वातिके कासेऽन्येष्वपि हि कासेष्वीषद्वातलैः कुपितस्य वातस्यानुज्ञाऽस्त्येव । कुपितं वातमंतरेण हि कासानां जन्मासंभवः । कोपस्तु कोपकारणैर्विना यथायथं दोषाणां न जायते । तस्मादत्रातिवातलैः कुपित इति बोध्यम् । तथा स वायुरंगं हर्षयति । तथा कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ।

**पित्तात्पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः २४**
**पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः ।**
**प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ २५ ॥**

पित्तात्पित्तकासात्पीताक्षिकफतादिकं जायते। ज्योतींषि तारकास्तेषां दर्शनमिव।

**कफादुरोऽल्परुङ्मूर्ध्नि हृदयं स्तिमितं गुरु।**
**कंठोपलेपः सदनं पीनसच्छर्द्यरोचकाः॥ २६॥**
**रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम्।**

कफात्कफकासादुरोऽल्परुगित्यादि जायते। पित्तलैः कुपितात्पित्तात्तथा श्लेष्मलैः कुपितात्कफादित्यनिर्दिष्टमपि पित्तकफकासयोर्निर्दिष्टं बोध्यम्।

इदानीं क्षतकासस्य निदानादि निरूपयति।

**युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम्॥ २७॥**
**उरस्यंतः क्षते वायुः पित्तेनानुगतो बली।**
**कुपितः कुरुते कासं कफं तेन सशोणितम्॥ २८॥**
**पीतं श्यामं च शुष्कं च ग्रथितं कुथितं बहु।**
**ष्ठीवेत्कंठेन रुजता विभिन्नेनेव चोरसा॥ २९॥**
**सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना।**
**पर्वभेदज्वरश्वासतृष्णावैस्वर्यकंपवान्॥ ३०॥**
**पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च।**
**क्रमाद्वीर्यं रुचिः पक्तिर्बलं वर्णश्च हीयते॥ ३१॥**
**क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः।**

युद्धं बाहुयुद्धमत्र। युद्धमाद्यं येषां साहसानां कठिनधनुराकर्षणादीनां तैः साहसैरयथाबलं शक्त्यतिक्रमेण सेवितैराचरितैरुरस्यंतर्मध्ये क्षते सति वायुः पित्तेनानुगतः कासं करोति। तैस्तैरिति। सर्वनाम्ना दुःशंकं हस्त्यश्वादिसाधनं तथोच्चभाषणं गुरुभारोद्यमनं वेगवन्नदीषु प्रतिस्रोतस्तरणादिकमुरःक्षत्युत्पादनं गृह्यते। पित्तानुगतमात्रेण च वायोरतिकोपं प्रतिपादयति। अत एवाह। बलीति। पित्तानुगतत्वेनैव रक्तदूषणं कासं कुर्वन् वायुः कफं सशोणितं रक्तयुतं तथा पीतं कुथितं पूतिगंधि बहु ष्ठीवेत्। तथा कुपितवायुवशात् कफं बहुश्यावं शुष्कं ग्रथितं पिंडितं च ष्ठीवेत्। तथा कंठेन रुजता शूलवता तथोरसा विभिन्नेनेव द्विधेव विदीर्णेन तथा सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना रुजायुक्तेन च वक्षसोपलक्षितः पर्वभेदादिमान् पुरुषस्तथा पारावत इवाकूजन्नव्यक्तं शब्दं कुर्वन्। तथाऽस्य कासिनः क्रमेण वीर्यादि हीयते। क्षीणस्य चास्य सासृङ्मूत्रता स्यात् पृष्ठकटीग्रहश्चेति।

इदानीं क्षयकासलक्षणं निरूपयति।

**वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः॥ ३२॥**
**कुर्वंति यक्ष्मायतनैः कासं ष्ठीवेत्कफं ततः।**
**पूतिपूयोपमं पीतं विस्रं हरितलोहितम्॥ ३३॥**
**लुंच्येते इव पार्श्वे च हृदयं पततीव च।**
**अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः॥ ३४॥**
**स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता।**
**ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवंति च॥ ३५॥**

राजयक्ष्मिणो राजयक्ष्मवतो नरस्य वायुः प्रधानो बली येषां ते वायुप्रधानाः। तथा कुपिताः क्रुद्धाः। के ते। धातवो वातादयः। कासं कुर्वंति। कैः कुपिताः क्रुद्धाः। यक्ष्मायतनैर्यक्ष्मनिदानोक्तैः साहसादिभिः। ततोऽनंतरं पूतिपूयोपमं पीतं विस्रं तथा हरितलोहितं ष्ठीवेत्। तथा पार्श्वे लुंच्येते इव स्थानात्प्रच्याव्येते इव। हृदयं च पततीव भ्रश्यतीव। तथाऽस्य क्षयजकासिनोऽकस्मान्निमित्तमंतरेणाप्युष्णशीतेच्छा भवति। कदाचिच्छीतार्तोऽपि नोष्णमभिलषति कदाचिदत्युष्णक्लांतोऽपि न शीतमभिलषति। तथा बह्वाशित्वादयः स्युः। ततोऽनंतरं सर्वाणि क्षयरूपाणि पीनसश्वासादीन्यस्याविर्भवंति।

**इत्येष क्षयजः कासः क्षीणानां देहनाशनः।**
**याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ॥३६**
**सिध्येतामपि सानाथ्यात्**

इत्येष एवमादिरूपः क्षयजः कासः क्षीणानां देहनाशनः। बलिनामक्षीणानां याप्यो वा देहनाशनो वेति वाशब्दार्थः। तद्वत् क्षयजकासवत्क्षतजः कासः क्षीणानां देहनाशनो बलवतां याप्यो वा देहनाशनो वा भवति। अभिनवौ तु तौ नवोत्थितौ पुनः क्षयक्षतजकासौ बलिनां सिध्येतामपि न केवलमसाध्ययाप्यावित्यपिशब्देन द्योत्यते। कुतः सिध्येताम्। सानाथ्याच्चतुष्पात्संपत्तेरित्यर्थः।

इदानीं शेषाणामपि कासानां साध्ययाप्यविभागं निरूपयति।

**साध्या दोषैः पृथक् त्रयः।**
**मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च॥३७॥**

पृथग्दोषैर्वातपित्तश्लेष्मभिर्ये जातास्त्रयः कासास्ते साध्याः। ये पुनरुत्तरकालमाहारविहारादिना मिश्रा मिश्रलक्षणसंपन्नास्ते याप्याः। किं सर्व एव मिश्रदोषोत्पन्ना याप्या नेत्याह। द्वयाद्दोषद्वयाद्ये मिश्राः संपन्नास्ते याप्या न पुनर्दोषत्रयाद्ये मिश्रलक्षणास्तेऽपि याप्या इति द्वयग्रहणात्प्रतिपादयति। सर्वे कासा ये साध्या उक्ताः पृथग्दोषजास्तेऽपि जरसा जरया हेतुभूतया स्थविरस्योत्पन्ना याप्याः। वृद्धोहि निष्कास एव याप्यानाम्। तथा चोवाच संग्रहे। वृद्धो याप्यानामिति।

**कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः।**
**भवंत्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्॥ ३८॥**

यतः कारणात्कासादुपेक्षया सहकारिकारणभूतया श्वासादयो रोगाः संभवंति तस्मात्तं कासं त्वरया शीघ्रमेव जयेत्। आदिशब्देनाऽत्र पीनसादयो यक्ष्मनिदानोक्ता गृह्यंत इति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां रक्तपित्तनिदानं नाम तृतीयोऽध्यायः॥

## चतुर्थोऽध्यायः ।

कासनिदानानंतरं श्वासनिदानारंभेऽयं संबंधः । कासादुपेक्षया श्वासो भवति । तथाऽनंतरमुक्तम् । कासाच्छ्वासक्षयच्छर्दीत्यादि । तस्माच्छ्वासनिदानारंभो युक्तः । श्वासेन तु सहैकीकृत्य हिध्मायाः कथने युक्तया तंत्रकृत्कारणं वक्ष्यति श्वासैकहेतु प्राग्रूपेत्यादिना ।

**अथाऽतः श्वासहिध्मानिदानं व्याख्यास्यामः ।**

पूर्ववदेतद्व्याख्येयम् ।

अथ श्वासस्य निदानादि लक्षयति ।

**कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ।**
**आमातिसारवमथुविषपांडुज्वरैरपि ॥ १ ॥**
**रजोधूमानिलैर्मर्मघातादतिहिमांबुना ।**
**क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पंचमः ॥ २ ॥**

कासाधिक्येन श्वासो जायत इत्येतदस्येति । एतदप्यप्रधानं निदानम् । तथा पूर्वैः सर्वरोगनिदानोक्तैर्वातादिदोषकोपनैस्तिक्तोषणादिभिः । न केवलमेतैर्यावदामातिसारादिभिः । आमातिसारेण वमथुना विषेण पांडुरोगेण ज्वरेण च । श्वासः क्षुद्रकादित्वेन पंचविधो भवेत् ।

अधुना श्वासस्य पंचविधस्याऽपि संप्राप्तिमाह ।

**कफोपरुद्धगमनः पवनो विष्वगास्थितः ।**
**प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ॥ ३ ॥**
**उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ।**

कफेनोपरुद्धं स्थगितं गमनं मार्गो यस्य स एवम् । तथा विष्वगास्थितः समंताद्देहं व्याप्यास्थितः श्वासं कुरुते । किं कुर्वन् । प्राणाश्चोदकं चान्नं च तानि वोढुं शीलं येषां तानि स्रोतांसि दूषयन् दुष्टानि विदधत् । यतो दुष्टः कुपितस्तथोरसि तिष्ठतीत्युरःस्थः । किंभूतं श्वासम् । आमाशयसमुद्भवम् । आमाशयात्समुद्भवो जन्म यस्य तमामाशयसमुद्भवम् । शास्त्रकारश्चैवंविधां संप्राप्तिं दर्शयन् यदौषधं वातजित् पाचनदीपनं तदत्र शस्तमिति द्योतयति । एवं सर्वरोगाणामपि संप्राप्त्यनुरूपमौषधं रोगोपशांत्यै इति वेद्यम् । पवनो विष्वगास्थित इत्यनेनैवोरःस्थत्वे लब्धे उरःस्थग्रहणं प्रकर्षार्थमतिशयेनोरःस्थितः श्वासं करोतीत्यर्थः ।

**प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ॥ ४ ॥**
**आनाहः शंखभेदश्च**

तस्य पंचविधस्याऽपि श्वासस्य पूर्वरूपं हृच्छूलादिकं शंखभेदावसानम् ।

**तत्रायासातिभोजनैः ।**
**प्रेरितः प्रेरयेत् क्षुद्रं स्वयं संशमनं मरुत् ॥ ५ ॥**

तत्र पंचसु श्वासेषु मध्ये मरुत् पवन आयासातिभोजनैः क्षुद्राख्यं श्वासं करोति । आयासो व्यायामादिरूपस्तेन तथाऽतिभोजनेन प्रेरितः प्रकर्षेणेरित उन्मार्गगामी कृतः । कोपित इत्यर्थः । किंभूतं श्वासम् । स्वयं संशमनं चिकित्सांविना किंचित्कालातिवाहनेन शाम्यतीत्यर्थः । अचिरकालावस्थायित्वात् । स्वयं संशमनादल्पबलत्वाच्च क्षुद्रसंज्ञोऽयम् ।

अथ तमकं लक्षयति ।

**प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।**
**परिगृह्य शिरोग्रीवमुरः पार्श्वे च पीडयन् ॥ ६ ॥**
**कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम् ।**
**करोति तीव्रवेगं च श्वासं प्राणोपतापिनम् ॥ ७ ॥**
**प्रताम्येत्तस्य वेगेन निष्ठ्यूतांते क्षणं सुखी ।**
**कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ८**
**उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान् ।**
**विशुष्कास्यो मुहुः श्वासी कांक्षत्युष्णं सवेपथुः ९॥**
**मेघांबुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।**
**स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत्॥१०॥**

पवनः प्रतिलोमं विपर्ययं कृत्वा शिरास्रोतांसि गच्छन् श्वासं करोति । तथा कफमुदीर्योर्ध्वं प्रेर्य तथा शिरो ग्रीवां परिगृह्य समंताद्गृहीत्वा तथोरःपार्श्वे च पीडयन्निर्मथयन् कासादीन् श्वासं च तीव्रवेगं तथा प्राणोपतापिनं करोति । प्राणाख्यो वायुरुपतप्यते येन तच्छीलत्वादसौ प्राणोपतापी श्वासः । तस्य तमकस्य वेगेन बलेन पुरुषः प्रताम्येद्दुःखी संपद्यते । श्लेष्मणा रुद्धमार्गत्वात् । अत एवाह । निष्ठ्यूतांते क्षणं सुखीति । स च तमकश्वासी शयानः शय्यामासीनः कृच्छ्राद्दुःखेन श्वसिति श्वासं मुंचति । निषण्ण उपविष्टः सन् स्वास्थ्यमृच्छति नीरुक्त्वं प्राप्नोति । उच्छ्रितेऽक्षिणी यस्य स उच्छ्रिताक्षः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । उच्छ्रिताक्ष ऊर्ध्वदृक् । ललाटेन स्विद्यता स्वेदयुक्तेनोपलक्षितः । भृशमतिशयेनार्तिमान् पीडावान् । तथा विशुष्कमास्यं यस्य स एवम् । मुहुः पुनःपुनः श्वासो यस्य स मुहुःश्वासी । उष्णं कांक्षत्यभिलषति । तथा सवेपथुः कंपवान् । स च तमको मेघादिभिः पृथग्यथाश्लेष्मलैर्गुडादिभिर्वर्धते वृद्धिं याति । मेघशब्देनात्रोभयं गृह्यते मेघोन्नमनं वर्षणं च तेन मेघोन्नमनेन वर्धते तदुपलक्षितेन कालेन वर्षाख्येन च वर्धते । एवं शीतशब्देनाऽपि द्वयं गृह्यते । शीतलक्षणः कालो हेमंतशिशिराख्यस्तथा शीतगुणयुक्त औषधाहारविहारादिस्तेनोभयेनाऽपि विवर्धते । स तमकः श्वासो याप्यो नासौ सुखसाध्यः कृच्छ्रसाध्यो वा दुर्बलस्य पुंसः । स एवाभिनवोत्पन्नो बलवतः पुंसः साध्यो वा भवेत् । संभावनायां लिङ् । साध्यत्वेन संभाव्यत इत्यर्थः ।

**ज्वरमूर्छायुतः शीतैः शाम्येत्प्रतमकस्तु सः ।**

स एव तमकाख्यो ज्वरमूर्छायुतो यदा भवति शीतैश्चौषधाहारविहारैः शाम्येच्छमं याति न तमकवद्वर्धते तदा स च प्रत-

मक उच्यते। अयं च तमकस्यैव भेद इति षट्त्वं श्वासानां नाशंक्यम्।

अथ छिन्नं लक्षयति।

**छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः॥ ११॥**
**सस्वेदमूर्च्छः सानाहो बस्तिदाहनिरोधवान्।**
**अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः॥ १२॥**
**शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः।**

छिन्नाख्याच्छ्वासाद्विच्छिन्नं कृत्वा नरः श्वसिति न निरंतरम्। मर्मच्छेदतुल्यया रुजाऽर्दितः। तथा सह स्वेदमूर्छाभ्यां वर्तते सस्वेदमूर्छः। तथा आध्मानवान्। दाहश्च निरोधश्च दाहनिरोधौ बस्तौ दाहनिरोधौ बस्तिदाहनिरोधौ तौ विद्येते यस्य स एवम्। अधोऽधस्ताद्दृग्दृष्टिर्यस्य स एवम्। तथा विप्लुत एकत्रानवस्थितेऽक्षिणी यस्य स एवम्। तथा मुह्यन् मोहं गच्छन्। तथा रक्तमेकं लोचनं यस्य स एवम्। तथा शुष्कास्यः सन् प्रलपन्। तथा नष्टकांतिर्विचेतनश्च।

अधुना महदाख्यं श्वासं लक्षयति।

**महता महतादीनो नादेन श्वसिति क्रथन्॥ १३॥**
**उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम्।**
**प्रणष्टज्ञानविज्ञानो विभ्रांतनयनाननः॥ १४॥**
**वक्षः समाक्षिपन् बद्धमूत्रवर्चा विशीर्णवाक्।**
**शुष्ककंठो मुहुर्मुह्यन् कर्णशंखशिरोऽतिरुक्॥ १५॥**

महता श्वासेनार्तः पुरुषो महता नादेन शब्देन श्वसिति यावत्कर्णशंखशिरोऽतिरुगिति। ज्ञानं तत्त्वावबोधः। विज्ञानं कर्मसु कौशलम्। क्रथन् क्वणन्। उद्धूयमान उत्कंप्यमानः। संरब्धः संक्षुभितः।

अधोर्ध्वलक्षणार्थमाह।

**दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः।**
**श्लेष्मावृत्तमुखस्रोताः क्रुद्धगंधवहार्दितः॥ १६॥**
**ऊर्ध्वदृग्वीक्षते भ्रांतमक्षिणी परितः क्षिपन्।**
**मर्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक्॥ १७॥**

ऊर्ध्वाख्योच्छ्वासादीर्घमूर्ध्वं श्वसिति। ऊर्ध्वं श्वासं मुक्त्वा पुनरधोनिश्वासवन्न तं श्वासं प्रत्याहरति। यथाऽन्येषु श्वासेषु नर ऊर्ध्वं दीर्घं श्वासं मुक्त्वा पुनरधः प्रत्याहरति पुनरंतः प्रवेशयितुं शक्नोति नैवमस्मिन्नूर्ध्वश्वास इत्यर्थः। किंभूतो नरोऽत्र स्यादित्याह। श्लेष्मेत्यादि। श्लेष्मणाऽऽवृतानि मुखानि येषां तान्येवं श्लेष्मावृतमुखानि स्रोतांसि यस्य स एवम्। तथा क्रुद्धगंधवहेन कुपितमारुताऽर्दितः पीडितः। तथोर्ध्वा दृग् दृष्टिर्यस्य स ऊर्ध्वदृक्। तथाऽक्षिणी परितः समंतात्क्षिपन्। भ्रांतं कृत्वा वीक्षते। तथा मर्मसु छिद्यमानेष्विव परिदेवी दुःखार्तः संपद्यते। तथा निरुद्धवागंतःप्रविष्टवागित्यर्थः।

**एते सिद्ध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम्।**

एते तमकादयः श्वासा अव्यक्ता अस्फुटरूपाः सिद्ध्येयुश्चिकित्स्यमानाः। व्यक्ताः स्फुटलक्षणाः पुनर्ध्रुवं निश्चितं प्राणहराः स्युः।

अथ हिध्मास्वरूपं दर्शयति।

**श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः॥ १८॥**
**हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च।**
**गंभीरा च**

एकशब्दस्तुल्यार्थः। श्वासानां तुल्या हेत्वादयो यासां हिध्मानां ताः श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः। श्वासानां हेतुः कासवृद्ध्या भवेच्छ्वास इत्यादिग्रंथेन प्रतिपादितः स एव हिध्मानां हेतुः। श्वासानां प्राग्रूपं हृत्पार्श्वशूलमित्यादि तदेव हिध्मानाम्। तथा। श्वासाः पंच हिध्मानोऽपि पंच। श्वासानां प्रकृतिरासन्नं कारणम्। कफोपरुद्धगमन इत्यादिविशेषणविशिष्टः पवनस्तादृश एव वातो हिध्मनां प्रकृतिः। श्वासानां संश्रय आश्रयो यमधिष्ठाय संभवंति श्वासा यथा आमाशयसमुद्भवमिति स एव हिध्मानाम्। प्रायिकत्वं वास्य बोध्यम्। जत्रुमूलादप्युत्पत्तेः क्षुद्रायाः। तदेवं श्वासानां तुल्या हेत्वादयो हिध्मानाम्। हिध्मेत्यादि। भक्तोद्भवाद्याः पंच हिध्माः। इतिशब्दो व्यवच्छेदे। चः समुच्चये। एवं गंभीरा चेत्यत्राऽपि।

भक्तोद्भवां लक्षयितुमाह।

**मरुत्तत्र त्वरया युक्तिसेवितैः॥ १९॥**
**रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः।**
**करोति हिध्मामरुजां मंदशब्दां क्षवानुगाम्॥ २०॥**
**शमं सात्म्यान्नपानेन या प्रयाति च साऽन्नजा।**

तत्र तासु हिध्मासु मध्येऽन्नजां हिध्मामेवंप्रकारां मरुत्करोति। किंभूतो मरुत्। अन्नपानैः प्रपीडितो बाधितः। किंभूतैः। रूक्षतीक्ष्णखरासात्म्यैः सामर्थ्यादभ्यवहृतैः। तथा त्वरया क्रममनपेक्ष्याऽयुक्त्या यथेच्छया सेवितैः। किंभूतां हिध्माम्। अरुजां पीडया रहितां तथा मंदशब्दां मंदवेगां तथा क्षवेन क्षुत्याऽनुगतामनुबद्धाम्। न केवलमेवंलक्षणोपेता या साऽन्नजा या च सात्म्येनान्नपानेन शमं याति साप्यन्नजैव। अत्र चान्नपानैरिति हेतुनिर्देशः। अरुजां मंदशब्दां क्षवानुगामिति लक्षणनिर्देशः। शमं सात्म्यान्नपानेनेत्युपशयनिर्देशः।

अथ क्षुद्राख्यां लिलक्षयिषुराह।

**आयासात्पवनः क्षुद्रः क्षुद्रां हिध्मां प्रवर्तयेत्॥२१॥**
**जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा।**
**वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम्॥२२॥**

आयासाद्व्यायामात् पवनः स्वल्पप्रकोपात्क्षुद्रोऽल्पः क्षुद्रां हिध्मां प्रवर्तयेद्विदध्यात्। किंभूताम्। जत्रुमूलात् प्रकर्षेण वि-

सृतां प्रवृत्ताम्। अत एव क्षुद्रत्वादल्पवेगां तथा मृदुं नातिरुजाकरीम्। सा चायासत अयासं कुर्वतो वृद्धिं याति। भुक्तमात्रे च सद्यो भुक्ते मार्दवं मृदुत्वं याति।

अधुना यमलां व्याचष्टे।

**चिरेण यमलैर्वेगैराहारे या प्रवर्तते ॥ १५ ॥**
**परिणामोन्मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥**
**कंपयंती शिरो ग्रीवामाध्मातस्यातितृष्यतः।**
**प्रलापश्छर्द्यतीसारनेत्रविप्लुतजृंभिणः ॥ २४ ॥**
**यमला वेगिनी हिध्मा परिणामवती च सा।**

चिरेण कालेनाहारे परिणामोन्मुखे प्रत्यासन्नपरिणामे तथा परिणामे वाऽऽहारस्य या वृद्धिं गच्छति यमलैश्च वेगैर्न केवलैर्या प्रवर्तते सा यमलवेगप्रवर्तनाद्यमलाख्या हिध्मा। किं कुर्वती सा प्रवर्तते। शिरश्च ग्रीवां च कपयंती। किंभूतस्य नरस्य। आध्मातस्य तथाऽतितृष्यतस्तृडार्तस्य तथा प्रलापादिमतः। सैव च यमला वेगिनी सैव परिणामवतीत्येवं संज्ञात्रयमस्या बोध्यम्।

महाहिध्मां व्याचिख्यासुराह।

**स्तब्धभ्रूशंखयुग्मस्य सास्रविप्लुतचक्षुषः ॥ २५ ॥**
**स्तंभयंती तनुं वाचं स्मृतिं संज्ञां च मुष्णती।**
**रुंधती मार्गमन्नस्य कुर्वती मर्मघट्टनम् ॥ २६ ॥**
**पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्तते।**
**महामूला महाशब्दा महावेगा महाबला ॥ २७ ॥**

स्तब्धं भ्रूयुग्मं शंखयुग्मं च यस्य तस्य तथाविधस्य महाहिध्मा प्रवर्तते। तथा सास्रे विप्लुते चले चक्षुषी यस्य तस्येदमिदं कुर्वाणा प्रवर्तते। तनुं देहं स्तंभयंती निश्चलं कुर्वती। तथा वाचं स्तंभयंती मूकत्वं वाचः कुर्वाणा। स्मृतिं संज्ञां च मुष्णती स्मृतिसंज्ञयोरपहरणं विदधती। तथाऽन्नस्य चतुर्विधस्य मार्गं रुंधती। तथा मर्मणां हृदयादीनां घट्टनं चालनं कुर्वती। तथा पृष्ठतो नमनं तथा शोषं शरीरस्य कुर्वती महाहिध्मा प्रवर्तत इति योज्यम्। तथा महन्मूलमुत्पत्तौ कारणं यस्याः सा महामूला तथा महाशब्दा महावेगा महाबला चेयं भवति। एतैश्च विशेषणैरस्याः शीघ्रप्राणहारित्वं द्योत्यते।

अथ गंभीरां लक्षयति।

**पक्काशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्तते।**
**तद्रूपा सा मुहुः कुर्याज्जृंभामंगप्रसारणम् ॥ २८ ॥**
**गंभीरेणानुनादेन गंभीरा**

पक्काशयान्नाभेरधस्तादथवा नाभेर्नाभिदेशाद्या प्रवर्तते। पूर्ववदिति महाहिध्मावत्। यथा महाहिध्मास्तब्धभ्रूशंखयुग्मास्येत्यादिविशेषणविशिष्टा प्रवर्तते तथैवेयं तथाभूतस्य पुरुषस्येत्यादि। तथा तद्रूपा तस्या महाहिध्मायाः सदृशं रूपं लक्षणं यस्याः सा तद्रूपा महाहिध्मातोऽस्या इदमधिकं लक्षणं मुहुर्जृंभां तथांगप्रसरणं कुर्यात्। गंभीरेणानुनादेनेति। अनुनादोऽनुरणनं घंटादीनामिव। गंभिरेणानुनादेन हेतुना गंभीराख्येयम्।

**तासु साधयेत्।**
**आद्ये द्वे वर्जयेदंत्ये सर्वलिंगां च वेगिनीम् ॥ २९ ॥**
**सर्वाश्च संचितामस्य स्थविरस्य व्यवायिनः।**
**व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ ३० ॥**

तासु पंचसु हिध्मासु मध्ये आद्ये द्वे ये हिध्मे भक्तोद्भवाक्षुद्राख्ये ते साधयेच्चिकित्सेत्साध्यत्वात्। अंत्ये ये द्वे महाहिध्मागंभीराख्ये ते वर्जयेन्नोपक्रमेदसाध्यत्वात्। आदौ भवे आद्ये। एवमंत्ये। दिगादित्वाद्यत्। तथा वेगिनीं च यमलाख्यां सर्वलिंगां यथोक्तलक्षणां वर्जयेत् न केवलमेता एव वर्जयेद्यावत्सर्वा अपि हिध्मा एवंभूतस्य पुरुषस्य जाता वर्जयेत्। किंभूतस्य। चिरकालसंभृतामस्य तथा स्थविरस्य वृद्धस्य तथा व्यवायिनः स्त्रीगमनशीलस्य तथा भक्तस्य छेदो भक्तच्छेदो भोजननिवृत्तिस्तेन क्षतः क्षीणो दुर्बलो भक्तच्छेदक्षतस्तस्य च वर्जयेत्।

अधुना हिध्माश्वासयोरेकयोगक्षेमत्वादन्यरोगातिशयित्वं दर्शयितुमाह।

**सर्वेऽपि रोगा नाशाय नत्वेवं शीघ्रकारिणः।**
**हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ३१**

सर्वे रोगा नाशाय स्युर्न केवलं हिध्माश्वासावित्युपदर्शनार्थोऽपिशब्दः। न पुनरेवं शीघ्रविनाशकारिणः सर्वे यथा हिध्माश्वासौ शीघ्रविनाशकारिणौ। यस्मात्तौ मृत्युकाले मरणावसरे कृतालयौ विहितवसती। तस्मिन् काले तयोरवश्यंभावित्वाच्छीघ्रमारणस्वभावत्वाच्च तयोस्तच्चिकित्सायां सत्वरं यतितव्यमिति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने श्वासहिध्मानिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पंचमोऽध्यायः।

श्वासहिध्मानिदानानंतरं राजयक्ष्मादिनिदानारंभेऽयं संबंधः। कासादुपेक्षया श्वासक्षयच्छर्दीत्युक्तम्। हिध्माश्वासयोश्चैकयोगक्षेमत्वाच्छ्वासनिदानानंतरं राजयक्ष्मनिदानमारभ्यते।

**अथाऽतो राजयक्ष्मादिनिदानं व्याख्यास्यामः।**

पूर्ववदत्र व्याख्या। आदिशब्देन स्वरभेदादीनां ग्रहणम्।
राजयक्ष्मा क उच्यते यस्येदं निदानमारभ्यत इत्याह।

**अनेकरोगानुगतो बहुरोगपुरोगमः।**
**राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥ १ ॥**

अनेकैर्ज्वरातीसारादिभिः परिवृतस्तथा बहूनां रोगाणां गुल्मातीसारादीनां पुरोगमः प्रधानश्च। यथाहि राजा प्राक् पश्चाज्जनैरनुगम्यते तथाऽयं रोगो रोगैः। राजयक्ष्मेत्यादयश्चतस्रः संज्ञाः

तत्राद्यां संज्ञां व्युत्पादयन्नाह ।

**नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा ।**
**यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ २ ॥**
**देहौषधक्षयकृतेः क्षयस्तत्संभवाच्च सः ।**
**रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥३॥**

नक्षत्राणामश्विन्यादीनां तथा द्विजानां ब्राह्मणानां च यो राजा चंद्रस्तस्य पुरा पूर्वमभवत् । पूर्वकल्पे हि रोहिण्यामतिसक्तस्य चंद्रस्य श्वशुरं दक्षमनृतवादेन वंचयतोऽपमानितदुहितृस्नेहवशादुद्भूतक्रोधे प्रजापतौ दक्षे क्षयोऽस्याभवदिति श्रूयते । तस्माद्राज्ञो यक्ष्मा राजयक्ष्मेत्युच्यते षष्ठीसमासव्युत्पत्त्या । यच्च राजा च यक्ष्मा च राजा च रोगाणां मध्ये अनेकरोगानीकपरिवृतत्वेन यक्ष्मा ततो राजा चासौ यक्ष्मा च राजयक्ष्माऽभिमतो मुनीनामिति शेषः । तथा देहश्चौषधं च तयोर्यः क्षयस्तस्य कृतिः करणं ततो देहौषधक्षयकृतेः क्षय इत्युच्यते । अनेन चास्य व्याधेर्बहुकालस्थायित्वं द्योतयति । किलायं व्याधिर्बहुतरं कालमवतिष्ठते न च शांतिमवगच्छति । यावद्देहः क्षीयते औषधान्यपि क्षीयंते न पुनरयं व्याधिरिति देहौषधक्षयकृतेः क्षय इत्युच्यते । तत्संभवाच्च सः । तदित्यनेन देहौषधक्षयः प्रत्यवमृश्यते । स संभवो जन्म यस्यासौ तत्संभवस्तस्मादपि क्षय इत्युच्यते । एवमन्योऽपि यो व्याधिर्देहौषधक्षयकारी सोऽपि क्षयाख्यस्य व्याधेः संभवः कारणं तस्माज्जायत इत्यर्थः । रसादीनां शोषणाच्छोष इति भण्यते । रोगेत्यादि । बहुषु रोगेषु मध्ये रोगत्वेनैष एव राजते तस्माद्रोगराडित्युच्यते ।

**साहसं वेगसंरोधः शुक्रौजःस्नेहसंक्षयः ।**
**अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ४ ॥**

साहसं कायेन वाचा वा यथाबलमारंभः । वेगसंरोधो वातविण्मूत्रादीनामुन्मुखीभूतानां लज्जया धारणम् । शुक्रं च ओजश्च स्नेहश्च तेषां संक्षयो विनाशः । अत्र स्नेहशब्देन देहस्नेहो ग्राह्यो देहशब्दलोपं कृत्वाऽयं निर्दिष्टः । तथा च मुनिः । देहस्नेहपरिक्षयादिति । तथाऽन्नपानयोर्यथाशास्त्रं यो विधिस्तस्य त्यागोऽन्यथासेवनमन्यथाभ्यवहारः । तस्य राजयक्ष्मणश्चत्वारः साहसादयो हेतवः । पाठादेव चतुःसंख्यात्वे लब्धे चतुर्ग्रहणं नियमार्थम् । यद्यपि साहसादय एते प्रत्येकमनेकप्रकारतया भिन्नास्तथाऽपि साहसादि चतुष्टयं नातिक्रामंतीत्यर्थः ।

अथास्मिन् राजयक्ष्माख्ये साहसजे वेगसंरोधजे शुक्रौजःस्नेहसंक्षयजेऽन्नपानविधित्यागजे वा चतुर्विधेऽपि विशेषेण पवनो हेतुरत एवाह ।

**तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।**
**शरीरसंधीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ५ ॥**
**मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य च ।**
**सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद्गदान् ॥ ६ ॥**

तैः साहसादिभिरुदीर्णोऽनिल इदमिदं कुर्वन् यथास्वं गदान् जनयेत् । उदीर्ण उल्बणः पित्तश्लेष्मभ्यामधिकः । अत एव पित्तमुदीर्य स्वस्थानाच्च्यावयित्वा तथा कफं सर्वतः सर्वस्मादुदीर्य तथा शरीरसंधीन् दशाधिकशतद्वयसंख्यातानात्रेयमतेन तु द्विसहस्रसंख्यातानाविश्य तेषामंतःप्रवेशं कृत्वा तांश्च संधीन् प्रपीडयन् प्रकर्षेण मंथयंस्तथा सिरा अपि सकलशरीरगाः प्रपीडयंस्तथाऽन्येषां स्रोतसां मुखानि द्वाराणि रुद्ध्वा तथैव तानि वा कदाचिदतिविवृत्य प्रसार्य स्रोतोमुखानि । सर्पन्नित्यादि । ऊर्ध्वं सर्पन् वायुः पीनसादीन् व्याधीन् जनयेत् । अधः सर्पन् विड्भ्रंशं विट्शोषं वा कुर्यात् । तिर्यक् सर्पन् पार्श्वरुजं विदध्यात् । इति यथास्वंशब्दस्यार्थः ।

**रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।**
**प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ७ ॥**
**स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम् ।**
**मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ ८ ॥**
**हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।**
**पाण्योरवेक्षा पादास्यशोफोऽक्ष्णोरतिशुक्लता ॥९॥**
**बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ।**
**स्त्रीमद्यमांसप्रियता घृणित्वं मूर्धगुंठनम् ॥ १० ॥**
**नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ।**
**पतंगकृकलासाहिकपिश्वापदपक्षिभिः ॥ ११ ॥**
**केशास्थितुषभस्मादिराशौ समधिरोहणम् ।**
**शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥ १२ ॥**
**ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ।**

तस्य राजयक्ष्मणो भविष्यत उत्पित्सो रूपमग्ररूपं प्रतिश्यायादि । वह्नेः सदनं पाकासामर्थ्यम् । देहस्य सादो निर्बलता । स्थाल्यमत्रान्नपानादीनां शुद्धानामप्यशुचिदर्शनमिति । तदानीं पुरुषस्य मिथ्याज्ञानं जायत इत्यर्थः । पाण्योरवेक्षा भूयसा स्वपाणी पश्यति । बाह्वोः प्रमाणजिज्ञासा कियत्प्रमाणौ मे बाहू इति ज्ञातुमिच्छति । काये शरीरे शोभनेऽपि बैभत्स्यदर्शनमिति मिथ्याज्ञानं तदानीं रोगस्वभावादस्योत्पद्यते । मूर्ध्नो मस्तकस्यावगुंठनं वस्त्रादिना संछादनम् । स्वप्ने च तस्य यक्ष्मिणः पतंगादिभिरभिभवो भवेत् पतंगाद्यैः पराभूयते । पतंगः कीटभेदः । तथा केशादिराशिष्वधिरोहणं तथा शून्यग्रामदेशादीनां दर्शनं स्वप्ने भवेत् ।

प्राग्रूपमुक्त्वा संप्रत्येकादशरूपमधिकृत्याह ।

**पीनसश्वासकासांऽसमूर्धस्वररुजोऽरुचिः ॥ १३ ॥**
**ऊर्ध्वं विड्भ्रंशसंशोषावधश्छर्दिश्च कोष्ठगे ।**
**तिर्यक्स्थे पार्श्वरुग्दोषे संधिगे भवति ज्वरः ॥१४॥**
**रूपाण्येकादशैतानि जायंते राजयक्ष्मिणः ।**

अंसौ च मूर्धा च स्वरश्च तेषां रुजोंऽसमूर्धस्वररुजः । पीन-

सश्च श्वासश्च कासश्चांऽसमूर्धस्वररुजश्च ताः । तथा अरुचिरित्यूर्ध्वमूर्ध्वस्थिते दोषे भवति । अरुचेः पृथगुपन्यासः प्राधान्यख्यापनार्थः । यथा अस्मिन् व्याधावतिभयावहोऽरुच्याख्य उपद्रवो न तथा पीनसादय इति । अधःस्थिते दोषे विशः पुरीषस्य भ्रंशसंशोषौ विड्भ्रंशसंशोषौ भवतः । विड्भ्रंशो भिन्नवर्चस्त्वं विट्शोषो बद्धविट्कत्वम् । एतयोश्च परस्परं विरुद्धत्वान्न तुल्यकालं संभवस्तस्मात्कदाचिद्विड्भ्रंशः कदाचिद्विट्शोषो भवति । छर्दिस्तु कोष्ठस्थिते दोषे स्यात् । तिर्यक्स्थे दोषे पार्श्वरुग्भवति। संधिगे च ज्वरः । रूपाण्येतानि पीनसादीन्येकादश शोषिण उत्पद्यंते । मुनिस्त्वेवमवोचत् । प्रतिश्यायं ज्वरं कासमंगमर्दं शिरोरुजम् । श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् । कुरुते चांससंतापमेकादशेत्यादि ।

**तेषामुपद्रवान् विद्यात्कंठोध्वंसमुरोरुजम् ॥ १५ ॥**
**जृंभांगमर्दनिष्ठीववह्निसादास्यपूतिताः ।**

तेषामेकादशसंख्यानां पीनसादीनां पूर्वोत्पन्नानां कंठोध्वंसादीन् पश्चादुत्थितान् सप्तोपद्रवान् जानीयात् । व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमविघाती च स उपद्रव उच्यत इत्युपद्रवलक्षणम् ।

**तत्र वाताच्छिरःपार्श्वशूलमंसांगमर्दनम् ॥ १६ ॥**
**कंठोध्वंसः स्वरभ्रंशः पित्तात्पादांसपाणिषु ।**
**दाहोऽतिसारोऽसृक्छर्दिर्मुखगंधो ज्वरो मदः॥१७॥**
**कफादरोचकश्छर्दिः कासो मूर्धांगगौरवम् ।**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता॥१८॥**

तस्मिन् राजयक्ष्माख्ये व्याधौ वातादधिकाच्छिरःशूलादयः स्युः । पित्तादधिकात् पादादिषु दाहोऽतीसारादयश्च भवंति । कफादधिकादरोचकादयो दश भवंति ।

यक्ष्मिणो मांसाद्यभ्यवहारतोऽपि धातुक्षयो जायते न धातुपुष्टिरित्यत्र युक्तिमाह ।

**दोषैर्मंदानलत्वेन सोपलेपैः कफोल्बणैः ।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ।**
**कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥२०॥**
**पच्यते कोष्ठ एवान्नमन्नपक्तैव चाऽस्य यत् ।**
**प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये ॥ २१ ॥**

दोषैर्वातपित्तकफैः कफोल्बणत्वात् स्रोतोद्वारेषु रुद्धेषु पिहितेषु सत्सु रसः स्वस्थान एव विदह्यमानो न सम्यग्रक्ततां प्राप्नुवंस्तांस्ताननेकान् कंठोध्वंसादीनुपद्रवान् कुर्यात् । किंभूतैर्दोषैः । कफोल्बणैः श्लेष्माधिकैः । अतश्च कफाधिकत्वात्सहोपलेपेन श्लेष्मलेपेन वर्तते सोपलेपास्तैस्तथाविधैर्दोषैस्तदानीं मंदानलत्वेन हेतुना धातूष्मसु रसाद्यग्निष्वल्पकेष्वतिशयेनाल्पेषु । एवमनेककारणसद्भावाद्रसः स्वस्थान एव विदह्यमानः पित्तकारिणीं मध्यमां पाकावस्थामनुभवन् सम्यक् पाकमगच्छन् यथोचितान् विकारांस्तांस्तान् कुर्वन्मांसमेदःप्रभृतीन् धातूनगच्छन्नप्राप्नुवन् विदह्यमानतया रक्ततामापन्नस्तदसृक् चोर्ध्वं प्रधावत्यूर्ध्वं प्रसर्पति केवलं निष्ठीवनसहितं वा । तस्मात् क्षयिणो न तन्मांसादि धातुपुष्टये । किंचास्मादपि हेतोः स रसो न धातुपुष्टये । यस्मात् पच्यतेऽन्नं सारकिट्टत्वं नीयते । अन्नस्य पक्त्रैव जाठराग्निना कोष्ठ एवामपक्वाशयाख्ये । उभयत्रैवकारोऽवधारणे । कोष्ठ एव न धातुषु जाठराग्निनैव धात्वग्निभिरिति । यत एवं ततोऽस्मात् प्राङ्निरूपिताद्धेतुकदंबकात् प्रायो मलतामाधिक्येन मूत्रपुरीषतां प्राप्तमन्नं नैव धातुपुष्टयेऽलं समर्थम् । धातुपुष्टिग्रहणेनैतत्सूचयति । अभिनवमृत्कुंभजललवस्यंदनन्यायेन सूक्ष्मस्रोतोऽनुप्रवेशितया सोऽन्नरसो धात्वाप्यायनमात्रं करोत्येव । अन्यथा वर्षगणानुबंधि जीवितं क्षयिणो न संभाव्येत तस्माद्धातुस्थितिमात्रं भवति न तु धातुपोषणमिति स्थितम् ।

**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु ।**

रसस्तावदुभयरूपोऽन्नरसो धातुरसो वाऽस्य क्षयिणो निकटस्य रक्तधातोर्न पुष्टये मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् । एवं संभाव्यत इत्यपिशब्दार्थः ।

ननु यद्येवं तत्कथमन्येभ्यो धातुभ्यो विशेषेण धारणस्वभावाभ्यां रक्तमांसाभ्यां विना क्षयी जीवेदित्याशंक्याह ।

**उपस्तब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥**

क्षयी स शकृता पुरीषेण केवलमुपस्तब्धः कृतावष्टंभो वर्तते प्राणिति पूर्वोक्तन्यायेन किंचिदाहाररसाप्यायितैर्धातुभिर्धारणस्वभावैर्धृतमात्रः । ननु विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावतीत्यनेन रक्तस्य सत्ता प्रतिपादिता । रसोऽप्यस्य न रक्तायेत्यनेन क्षयिणो रक्तस्याभावः प्रत्यपादि । तदिमे वाक्ये परस्परं व्याघ्राते । अत्रोच्यते । नानयोर्वाक्ययोः परस्परं विरोधः । यतोऽसृक्चोर्ध्वं प्रधावतीत्यनेन न तद्धातुरूपतां प्राप्तमुक्तं किंतर्हि रसस्य विदह्यमानतया स्वस्थानस्थितस्य रक्तधात्वाशयमगच्छतो रक्तोद्भूतिरुक्ता । अनेनैवाभिप्रायेणोत्तरत्र वाक्ये रसोऽप्यस्य न रक्तायेत्युवाच । अनेन हि रसो धातुरूपाय रक्ताय शोषिणो न संपद्यत इति प्रत्यपादि ।

अथास्य क्षयिणः साध्यासाध्यतां निरूपयति ।

**लिंगेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।**
**वर्जयेत्**

क्षयिणं बलमांसाभ्यां क्षीणं लिंगेषु पीनसादिष्वल्पेष्वपि सत्सु न सर्वेषूत्पन्नेषु वर्जयेन्नोपक्रमेत् । किंभूतम् । व्याध्यौषधयोर्बलं व्याध्यौषधबलं तस्याक्षमम् । क्षयाख्यस्य व्याधेर्यद्बलं तथाऽस्य शमनोपायस्यौषधस्य यद्बलं तत्राक्षममसहं यतस्ततो वर्जयेदित्यर्थः ।

**साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ २३ ॥**

अन्यथाऽतो विपरीतलक्षणं यक्ष्मिणं बलमांसाभ्यामक्षीणमत एव व्याध्यौषधबलक्षमं सर्वेष्वपि पीनसादिषु लिंगेषु सत्सु साधयेदेव किंपुनर्द्वित्र्यादिष्वेषु साधयेदित्यपिशब्दार्थः ।

अथास्य व्याधेरुपद्रवभूतानामादिशब्दगृहीतानां पंचानां स्वरसादादीनां रोगाणां निदानान्याह ।

**दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा ।**
**स्वरभेदो भवेत्**

दोषैः पृथग्वातपित्तकफैः समस्तैः सन्निपतितैस्तथा क्षयात्तथा षष्ठः स्वरभेदो मेदसा स्यात् ।

**तत्र क्षामो रूक्षश्चलः स्वरः ॥ २४ ॥**
**शूकपूर्णाभकंठत्वं स्निग्धोष्णोपशयोऽनिलात् ।**

तत्र तेषु षट्सु स्वरभेदेषु मध्ये वातात्स्वरभेदे सति क्षामादिमान् स्वरः स्यात् । तथा शूकपूर्णसदृशगलत्वं स्निग्धोष्णोपशयश्च भवति ।

**पित्तात्तालुगले दाहः शोष उक्तावसूयनम् ॥ २५ ॥**

पित्तात् स्वरभेदे सति तालुनि गले च दाहस्तथा शोषः प्रस्तुतत्वात्तालुगलयोरेव । तथा उक्तावसूयनं वाक्यविषयेऽसहनम् । पित्तस्वरभेदे वाक्यं वक्तुमसमर्थ इत्यर्थः ।

**लिंपन्निव कफात्कंठं मंदः खुरखुरायते ।**
**स्वरो विबद्धः**

कफात्स्वरभेदे कंठं लिंपन्निवोपलेपमिव गलस्य कुर्वन् खुरखुरायते प्रकृतत्वात् कंठस्यैव । खुरखुरमित्यव्यक्तं शब्दं करोति । तथा सर्वेभ्यः स्वरभेदेभ्यो मंदस्वरो नोच्चैः श्रूयते । तथा विबद्धो वदतो मध्ये स्खलनरूपः ।

**सर्वैस्तु सर्वलिंगः**

सर्वैस्त्रिभिर्दोषैः समुदितैः सर्वलिंगस्त्रिदोषलक्षणः स्वरभेदो भवति ।

**क्षयात्कषेत् ॥ २६ ॥**
**धूमायतीव चात्यर्थम्**

क्षयात् स्वरभेदः कषेद्विध्वस्तः स्यात् । कंठमर्मघटनादित्यर्थः । अनुक्तमपि प्रकृतत्वात् कंठमिति लक्ष्यते । तथा क्षयस्वरभेदी धूमायतीवातिशयेन । अत्यर्थशब्देन पित्तस्वरभेदेऽपि धूमायनं भवतीति गमयति । धूमायतीति धूमनिःसरणमिव नासिकादिदेशेष्वनुभवति ।

**मेदसा श्लेष्मलक्षणः ।**
**कृच्छ्रलक्ष्याक्षरश्च**

मेदसा स्वरभेदः श्लेष्मस्वरभेदलक्षणः । तथा कृच्छ्रेण कथंचिल्लक्ष्याणि ज्ञेयान्यक्षराणि यत्र स एवम् । एतदेव कृच्छ्रलक्ष्याक्षरत्वं कफस्वरभेदादधिकम् ।

**अत्र सर्वैरंत्यं च वर्जयेत् ॥ २७ ॥**

सर्वैर्दोषैर्यः स्वरभेदस्तथांते पठितत्वान्मेदःस्वरभेदोऽन्त्यस्तं च वर्जयेत् । चतुरस्त्वन्यान् साधयेदित्यर्थाद्गम्यते ।

**अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः ।**
**सन्निपातेन मनसः संतापेन च पंचमः ॥ २८ ॥**

जिह्वा च हृदयं च जिह्वाहृदयं तत्संश्रय आश्रयो येषां तैस्तत्रस्थैः पृथग्वातपित्तकफैररोचकः स्यात् । तथा सन्निपातेनार्थाजिह्वाहृदयसंश्रितेनारोचकः स्यादिति योज्यम् । तथा मनसः संतापेनानेकविधेन क्रोधशोकादिनोपतप्तेन पंचमोऽरोचक आगंतुर्भवेत् । अत्राऽपि यथास्वं दोषाणां जिह्वाहृदयसंश्रितत्वमवश्यमाश्रयणीयम् । उपादानादेव पंचत्वे लब्धे मनःसंतापजः पंचम एवेति नियमार्थं पंचमग्रहणम् । मन्युशोकाद्यनेकप्रकारमनःसंतापजत्वेऽप्येक एव मनःसंतापजोऽरोचक इत्यर्थः ।

**कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ।**
**सर्वोत्थे चिरसंशोकक्रोधादिषु यथामलम् ॥ २९ ॥**

वाताद्युद्भवेष्वरोचकेषु मुखमास्यं क्रमेण कषायतिक्तमधुरं भवति । व्याधिस्वभावात् पित्तारोचकेऽपि तिक्तवक्त्रता भवति न कटुकास्यत्वम् । सर्वोत्थे सन्निपातजेऽरोचके विरसमास्यं भवति निश्चितरसाज्ञानात् । शोकक्रोधादिसमुत्थेष्वरोचकेषु यथामलं यथादोषं मुखं भवेत् । तत्र शोकभयकामलोभेर्ष्यादिसंतप्तमनःसमुत्थे वातप्रकोपात् कषायं क्रोधसंतप्तमनसः समुत्थे पित्तप्रकोपात्तिक्तं ग्रहोपतप्तमनःसमुत्थे संनिपातप्रकोपाद्विरसास्यत्वमिति यथामलशब्दस्यार्थः ।

**छर्दिर्दोषैः पृथक्सर्वैर्द्विष्टैरर्थैश्च पंचमी ।**

पृथक् प्रत्येकं दोषैर्वातपित्तकफैश्छर्दिर्भवेत् । सन्निपतितैस्त्रिभिरपि छर्दिः स्यात् । तथा द्विष्टैरनभिप्रेतैः शब्दादिभिश्च पंचमी छर्दिर्भवेत् । पूर्ववत्पंचमीत्येतन्नियमार्थम् । द्विष्टानां ह्यर्थानां बहुत्वाद्बह्वयश्छर्द्यो भवंतीत्याशंक्येत तथा शंकानिवृत्तये द्विष्टार्थयोगजा एकैव छर्दिरित्युक्तम् ।

**उदानो विकृतो दोषान् सर्वानप्यूर्ध्वमस्यति ॥ ३० ॥**

उदानाख्यो वायुर्विकृतः सर्वानपि दोषान् वातपित्तकफानूर्ध्वमस्यति क्षिपति । अपिशब्द एवार्थः । सर्वास्वेव छर्दिष्वित्यर्थः ।

**तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः ।**

तासु छर्दिषूत्क्लेशादयोऽग्रगाः । अग्रे गच्छंति प्राग्रूपतयोद्भवंति । उत्क्लेशः स्वस्थान एव मूर्तस्य दोषस्योदयो बुद्बुदवदुत्थानम् ।

**नाभिपृष्ठं रुजन् वायुः पार्श्वे चाहारमुत्क्षिपेत् ॥ ३१ ॥**
**ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ।**

**शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत् ॥ ३२ ॥**
**कासास्यशोषहृन्मूर्धस्वरपीडाक्लमान्वितः ।**

वायुः कासादिमान् इदमिदं कुर्वन् वमेत् । छर्दिं करोति नाभिपृष्ठं च रुजन् पीडयन् पार्श्वे च रुजन्नाहारमुत्क्षिपेदूर्ध्वं नयेत् । ततस्तस्मादाहारस्योर्ध्वगमनादनंतरं विच्छिन्नं कृत्वा न निरंतरमल्पाल्पमल्पं कृत्वा कषायं वमेन्न मधुरादन्यतमम् । तथा फेनिलं फेनयुक्तम् । फेनिलमिति फेनादिलजितीलच् । तथा शब्दयुतमुद्गारयुतम् । तथा कृष्णं कृष्णवर्णम् । तथा अच्छम् । तथा कृच्छ्रेण कथंचिन्न यथासुखम् । तथा वेगवद्वेगयुतम् ।

**पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकम् ॥ ३३ ॥**
**सासृगम्लं कटूष्णं च तृण्मूर्छातापदाहवत् ।**

पित्तात् क्षारोदकसदृशादिकं वमेत् । तथा तृण्मूर्छातापदाहा विद्यंते यस्मिंस्तदेवं तृष्णादियुक्तं यथा भवति तथा वमेत् ।

**कफात् स्निग्धं घनं शीतं श्लेष्मतंतुगवाक्षितम् ३४**
**मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ।**
**मुखश्वयथुमाधुर्यतंद्राहृल्लासकासवत् ॥ ३५ ॥**

कफात्स्निग्धादिकं वमेत् । तथा श्लेष्मणः संबंधिना तंतुजालेन गवाक्षितं तथा मधुरादिकं वमेत् । मुखश्वयथ्वादिमत् ।

**सर्वलिंगा मलैः सर्वैरिष्टोक्ता या च तां त्यजेत् ।**

सर्वलिंगा छर्दिः सर्वैर्मलैर्वातपित्तकफैः सन्निपतितैर्भवेत् । न केवलं त्रिभिर्दोषैः सर्वलिंगा या च रिष्टोक्ता विकृतिविज्ञानीयाध्याये छर्दिर्वेगवतीत्यादिना ग्रंथोक्ता साऽपि सर्वलिंगा दोषत्रयलक्षणोपेता तां त्यजेन्न चिकित्सेत् । ननु रिष्टोक्ता या छर्दिस्तां त्यजेदिति व्याख्येयम् । तस्यारिष्टत्वेनैवासाध्यत्वस्य प्रतिपादितत्वात् ।

**पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ ३६ ॥**
**तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ।**

पूत्यादिभिस्तप्ते चित्ते उत्तप्ते मनसि तथा तैरेव पूत्यादिभिः क्लिष्टे पीडिते हृदि या जायते छर्दिः सा द्विष्टार्थयोगजा छर्दिरुच्यते । आदिः प्रकारे यथा आकृतिगणेषु ।

ननु कृम्यादिजान्यन्यानि छर्दींषि संभवंत्येव लक्षणं कस्मान्नोक्तमित्याह ।

**वातादीनेव विमृशेत्कृमितृष्णामदौहृदे ॥ ३७ ॥**
**शूलवेपथुहृल्लासैर्विशेषात् कृमिजां वदेत् ।**
**कृमिहृद्रोगलिंगैश्च**

कारणे कार्योपचारात् कृम्यादिशब्दैरेव छर्दय उच्यंते । कृमितृष्णामगर्भिणीदौहृदजे छर्दिषि वातादीनेव यथायथं स्वलक्षणैर्विमृशेद्विचारयेल्लक्षयेत् । नहि वातादीनंतरेणैतादृछर्दयः कथंचिदपि संभवंति । अत एवैवकारोऽत्रावधारणार्थो व्यधायि । एवं कृमिजां कदाचिद्वायुच्छर्दिलक्षणोपेतामथवा पित्तच्छर्दिलक्षणोपेतां कफच्छर्दिलक्षणोपेतां वा यथायथं लक्षयेत् । एवं तृष्णामदौहृदच्छर्दिषि वातादीन् विमृशेत् । विशेषेण शूलवेपथुहृल्लासैः कृमिजां वदेत् । कृमिहृद्रोगलक्षणैश्चानंतरमवेक्ष्यमाणैः कृमिजां वदेत् ।

अधुना हृद्रोगं लिलक्षयिषुराह ।

**स्मृताः पंच तु हृद्गदाः ॥ ३८ ॥**
**तेषां गुल्मनिदानोक्तैः समुत्थानैश्च संभवः ।**

हृद्गदाः पंच स्मृताः । तंत्रकृद्भिरिति शेषः । तेषां हृद्रोगाणां गुल्मनिदानोक्तैर्वक्ष्यमाणैः समुत्थानैः कारणैः संभव उत्पत्तिः ।

**वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥**
**भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ।**
**अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥४०॥**
**वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ।**

वातेन हृद्रोगेऽत्यर्थं हृदयं शूल्यते । अत्यर्थशब्देनेदं गमयति । अन्येष्वपि हृद्रोगेषु हृदयं शूल्यतेऽतिशयेन तु वातजे हृद्रोग इति तथा तुद्यते प्राजनेनेव । शूलं संतता पीडा । तोदो विच्छिन्नोतिशयेन रुगुद्भवः । तथा हृदयं स्फुटतीत्यादिक्रियायुतं भवति । तथा शून्यता द्रवश्च प्रकृतत्वाद्धृदयस्यैव स्यादिति बोध्यम् ।

**पित्तात्तृष्णा भ्रमो मूर्छा दाहः स्वेदोऽम्लकः क्लमः ।**
**छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ।**

पित्तात् पित्तेन तृष्णादयः स्युः ।

**श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥४२॥**
**कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः ।**

श्लेष्मणा हृद्रोगे हृदयं स्तब्धं तथा भारिकं गुरु भवति । कथम् । साश्मगर्भवदंतर्विद्यमानाश्मगर्भसदृशम् । तथा कासादयः स्युः ।

**सर्वलिंगस्त्रिभिर्दोषैः**

सर्वलिंगो हृद्रोगस्त्रिभिर्दोषैः स्यात् ।

**कृमिभिः श्यावनेत्रता ॥ ४३ ॥**
**तमःप्रवेशो हृल्लासः शोषः कंडूः कफस्रुतिः ।**
**हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥**
**चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ।**

कृमिभिश्च हृद्रोगे श्यावाक्षतादयाः स्युः । अत्र कृमिहृद्रोगे हृदयं क्रकचेनेव करपत्रेणेव संततं दार्यते । तं कृमिहृद्रोगाख्यमामयं घोरमतिदुःसहं शीघ्रकारिणमाशुव्याघातकारिणं शीघ्रमेव चिकित्सेत् । महामर्मणो हृदयस्य कृमिभिर्भक्षणात् ।

उक्ता हृद्रोगाः शीघ्रकारित्वसामान्यात्तृष्णाऽनंतरं व्याख्यायते ।

**वातात्पित्तात्कफात्तृष्णा सन्निपाताद्रसक्षयात् ४५**
**षष्ठी स्यादुपसर्गाच्च**

वातादिभिः पंच तृष्णाः स्युः । षष्ठी स्यादुपसर्गाच । उपदानादेव षट्संख्याया लब्धत्वात् षष्ठीत्येतद्वचनं नियमार्थम् । आमोद्भवाद्या या वक्ष्यमाणास्तृष्णास्ताः सर्वास्तृष्णानां षट्त्वं नातिक्रामंति वातपित्तजत्वात् । प्रायेणाऽऽसामास्वेवांतर्भावः ।

**वातपित्ते तु कारणम् ।**
**सर्वासु**

पूर्वोक्तासु वक्ष्यमाणासु च तृष्णासु वातपित्ते कारणम् ।

ते एव वातपित्ते हेतू कुत एवमित्याह ।

**तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ॥ ४६ ॥**
**सर्वदेहभ्रमोत्कंपतापतृड्दाहमोहकृत् ।**

हि यस्मात् सौम्यस्य शरीरगतस्य रसादेर्धातोराहारविहारादिना यत्प्रशोषणं तस्मात्तयोर्वातपित्तयोः प्रकोपो जायत इत्यध्याहार्यम् । किंभूतः प्रकोपः । सर्वदेहभ्रमोत्कंपतापतृड्दाहमोहकृत् ।

सौम्यधातुप्रशोषणपूर्वकं तृष्णानां यतो जन्म तस्मादिदमाह ।

**जिह्वामूलगलक्लोमतालुतोयवहाः सिराः ॥ ४७ ॥**
**संशोष्य तृष्णा जायंते**

जिह्वादिसिराः संशोष्य तृष्णाः समुत्पद्यंते ।

**तासां सामान्यलक्षणम् ।**
**मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ॥ ४८ ॥**
**कंठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः ।**
**प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमयाः ४९**

मुखशोषादिकं तृड्ग्रहोक्तामयपर्यंतं निर्दिष्टं तासां तृष्णानां सामान्यलक्षणम् । तृड्ग्रहोक्ता रोगानुत्पादनीयोक्ताः शोषांगसादबाधिर्यादयः ।

**मारुतात् क्षामता दैन्यं शंखतोदः शिरोभ्रमः ।**
**गंधाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ॥ ५० ॥**
**शीतांबुपानाद्वृद्धिश्च**

वातात्तृष्णायां क्षामतादैन्यादयः स्युः ।

**पित्तान्मूर्छास्यतिक्तता ।**
**रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ ५१ ॥**

पित्तात्तृष्णायां मूर्छादयः स्युः ।

कफतृष्णामाह ।

**कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ।**
**स्रोतःसु सकफस्तेन पंकवच्छोष्यते ततः ॥ ५२ ॥**
**शूकैरिवाचितः कंठो निद्रा मधुरवक्त्रता ।**
**आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ५३**
**आलस्यमविपाकश्च**

कफः कुपितो जलवाहिषु स्रोतःसु यदा मारुतं रुणद्धि । स च कफस्तेन मरुता पंक इव शोष्यते । ततस्तस्मिन् कफे शुष्के सति कंठः शूकैरिवाचितो व्याप्तः स्यात् । तथा निद्रादयश्च स्युः ।

**सर्वैः स्यात्सर्वलक्षणा ।**

सर्वैः सन्निपतितैः सर्वलिंगा तृष्णा स्यात् ।

**आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ॥ ५४ ॥**

आमोद्भवा च तृष्णा भक्तस्याहारस्य संरोधात् स्यात् । साच वातपित्तजा ।

**उष्णक्लांतस्य सहसा शीतांभो भजतस्तृषम् ।**
**ऊष्मा रुद्धो गतः कोष्ठं या कुर्यात्पित्तजैव सा ५५**
**या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ।**

उष्णेन म्लानस्य नरस्य सहसा झटित्येव शीतं जलं सेवमानस्योष्मा रुद्धः कोष्ठं गतो यां तृषं तृष्णां कुर्यात् सा पित्तजैव तृष्णा नत्वन्या बोध्या । या च तृट् पानस्य मद्यस्यातिपानोद्भवा या च तीक्ष्णाग्नेः पुरुषस्य स्नेहजा तृट् सापि पित्तजैव ।

**स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥ ५६ ॥**

स्निग्धादिगुणयुक्तेन भोजनेन या तृट् स्यात् सा कफसंभवा बोध्या ।

**तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका**

रसक्षयोक्तेन लक्षणेन रसे रौक्ष्यं श्रम इत्यादिग्रंथनिर्दिष्टेन लक्षणेन क्षयात्मिका तृष्णा बोध्या ।

**शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ।**
**या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ५७**

शोषमोहाद्यपरदीर्घरोगोपसर्गाद्दीर्घकालानुबंधाया तृष्णा स्यात् सोपसर्गात्मिका स्मृता मुनींद्रैरिति शेषः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां राजयक्ष्मनिदानं नाम पंचमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

राजयक्ष्मनिदानादनंतरं मदात्ययनिदानारंभो यतो यथा राजयक्ष्मा दोषत्रयजस्तथा मदात्ययोऽपि । वक्ष्यति हि । तत्र सर्वेऽपि सर्वैर्जायंते व्यपदेशस्तु भूयसेति । तस्मान्मदात्ययनिदानमुच्यत इत्याह ।

**अथाऽतो मदात्ययनिदानं व्याख्यास्यामः ।**

पूर्ववद्व्याख्या ।

मदात्ययस्य निदानमुच्यत इत्याह ।

**तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।**
**विकाशि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ १ ॥**

तीक्ष्णोष्णादिगुणं मद्यमस्मान्मद्यादोजसो विपर्ययो वैपरीत्यम् । यथा मंदशीतस्निग्धसांद्रस्थूलमधुरस्थिरचिरकृद्गुरुश्लक्ष्णपिच्छिलत्वम् ।

**तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।**
**जीवितांताय जायंते विषे तूत्कर्षवृत्तितः ॥ २ ॥**

एते च तीक्ष्णादयो दश गुणा विषेऽप्युक्ताः । चित्तमुपप्लावितुं शीलं येषां ते चित्तोपप्लाविनश्चित्तविभ्रमकारिणः । न केवलं मद्य इत्यपिशब्दार्थः । ननु यदि त एव तीक्ष्णादयो गुणा विषे त एव मद्ये तत्कथं विषस्था एव तीक्ष्णादयो मारयंति न मद्यस्था इत्यत्र युक्तिमाह । जीवितांतायेत्यादि । विषस्थास्तीक्ष्णादयो ये गुणास्ते मारणाय संपद्यंते । उत्कर्षवृत्तित उत्कर्षवर्तनात् ।

कथं कृत्वा मद्यं चेतो विकारं नयतीत्याह ।

**तीक्ष्णादिभिर्गुणैर्मद्यं मंदादीनोजसो गुणान् ।**
**दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ३ ॥**
**आद्ये मदे**

मद्यं हृदयमोजसः स्थानं द्रव्यप्रभावादाविश्य तीक्ष्णादिभिर्गुणैर्मंदादीनोजसःसंबंधिनो गुणान् संक्षोभ्य समंताद्दुष्टतामापद्य चेतो विक्रियां विकारं नयत्याद्ये मदे तनुमदे । ननु तीक्ष्णादिभिर्मंदादीनित्येतावदेवास्तु किं दशभिर्दशेत्यनेन । पाठादेव हि दशसंख्या च गमिष्यते । अस्त्येवैतत् । किं तु सर्वैरेव तीक्ष्णादिभिः सर्वानपि मदादीन्संक्षोभ्य चेतो विक्रियां मद्यं नयति नतु कियद्भिरपि तीक्ष्णादिभिः कियत एव मंदादीनिति प्रतिपादनाय संख्याग्रहणम् । उत्कर्षतारतम्यकृतस्त्वस्त्येव विशेषः । तेन सर्वत्र मदेनैव तुल्यः क्षोभ इति बोध्यम् । आद्ये च मदे यथास्वं प्रबोधजनके पुमान् स्थितो मद्यपानात्तादात्विकं सुखं समधिगच्छतीत्यनुक्तमपि संभाव्यते । तथा च मुनिः । पंचस्वर्थेषु कांतेषु या रतिः प्रथमे मदे । यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवीति ।

**द्वितीये स प्रमादायतने स्थितः ।**
**दुर्विकल्पहतो मूढः सुखमित्यधिमुच्यते ॥ ४ ॥**

अनंतरं द्वितीये मदे स्थितः प्राप्तः स्वार्थैर्दुष्टैस्तैस्तैर्विकल्पैर्हतः पुरुषार्थाद्विनष्टोऽत एव मूढः कार्याकार्यानभिज्ञः सुखमित्यधिमुच्यते सुखमिति ज्ञानेन प्रथममदोत्पन्नेन तदानीमधिमुच्यतेऽधिकं कृत्वा तेन सुखेन परित्यज्यते । तादात्विकमप्येकं तत्सुखं नानुभवति । ओजसो विहतत्वात् । अन्ये त्वाहुः । अधिमुच्यते निश्चिनोति सुखं मे भवेदित्यभिनिविशते । किंभूते मदे स्थितः । प्रमादायतने स्थितः प्रमादानां साहसानामिहामुत्र चाशुभहेतूनां स्थाने ।

**मध्यमोत्तमयोः संधिं प्राप्य राजसतामसः ।**
**निरंकुश इव व्यालो न किंचिन्नाचरेज्जडः ॥ ५ ॥**

मध्यमोत्तमयोर्द्वितीयतृतीययोः संधिं प्राप्यांतरं लब्ध्वा पुरुषो राजसतामसो न किंचिदशुभं नाचरेदपि तु सर्वमशुभमाचरेत् । राजससहितस्तामसो राजसतामसः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । राजसो वा तामसो वेत्यर्थः । राजसतामसग्रहणात्सात्विकः पुरुषो नेदृशीमवस्थामवाप्नोतीति गमयति । निरंकुश इव व्यालः । यथा व्यालो दुष्टो हस्ती जडो बधिरस्तथा निरंकुशो न किंचिदशुभं नाचरेदुन्मार्गप्रवृत्तत्वात् । तंत्रांतरे चैवमुक्तम् । सात्विके शौचदाक्षिण्यहर्षमंडनलालसः । गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः । राजसे दुःखशीलत्वमात्मत्यागं ससाहसम् । कलहं सानुबंधं च करोति पुरुषे मदः । अशौचनिद्रामात्सर्यागम्यागमनलोलताः । असत्यभाषणं चापि कुर्याद्धि तामसे मद इति । व्यालग्रहणाद्यः शुद्धस्वभावो हस्ती स सृणिरहितोऽपि कदाचिद्धस्त्यारोहशब्दश्रवणात्कालोचितं संकेतमुपलभ्य युक्तमाचरत्येवेत्यतो व्यालो निरंकुश इति द्वयमुपन्यस्तम् । तेजसः किंचिच्छेषत्वान्निद्यामिमामवस्थां प्राप्तः ।

अत एवाह ।

**इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम् ।**
**एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम् ॥ ६ ॥**

अवद्यानां निंद्यानामियं मदावस्था भूमिराकारः । तथा दौःशील्यस्यासमाहितत्वस्य इदं मदावस्थांतरमास्पदमावसथः । एकोऽयं मदविशेषो बहुमार्गाया अनेकमुखाया दुर्गतेः परं कृत्वा देशिक आचार्यः ।

**निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः ।**
**मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ७ ॥**

तृतीये उत्तमे मदे स्थितो नरस्तेजसो विहतत्वान्निश्चेष्टश्चेष्टया कायवाङ्मनोलक्षणया रहितोऽत एव शववच्छेते मृतानुकल्पः स्वपिति । एवं च सत्यसौ पापात्मा मरणादपि पापतरामवस्थां प्राप्तः । यतो मृतो मरणात्समनंतरमेव शरीरांतरं प्राप्य सुखादीन् विंदते । तृतीयां मदावस्थां प्राप्तस्तु पुरुषोऽपरशरीराप्राप्तेर्न कथंचित्सुखाद्यनुभवतीति मरणादप्यस्य निकृष्टत्वम् ।

**धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितम् ।**
**यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ८ ॥**

यस्मिन्नासक्तो यदासक्तो धर्मादीन्न जानाति । तत्तथाविधं मद्यं बुधो मतिमान् कथं शीलयेदभ्यसेत् । अत्र धर्मो दानाध्ययनदेवगुरुपूजादिकः । अधर्मो हिंसादिः । सुखमाह्लादकोऽनुभवः । दुःखमुपतापः । अर्थ उभयलोकहितम् । अनर्थोऽहितम् । शीलयेदित्यनेन तत्र सक्तिं निषेधति नतु मद्यपानमपि ।

**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः ।**
**सोन्मादमदमूर्छायाः सापस्मारापतानकाः ॥ ९ ॥**
**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ।**

मद्येऽतिपीते मोहादयः संश्रिता आश्रिताः । मद्यातिपानादनंतरं मोहादीनां संभवात् । अथवा किमत्र बहुनाऽभिहितेन यत्र यस्मिन् मद्ये स्मृतेर्विभ्रंशो लोपस्तत्र यत्किंचिद्विद्यते तत्सर्वम-

साध्वशोभनम् । यत्रौजसो न विहतिर्हृत्प्रबोधश्च स प्रथमो मदः । यत्राऽल्पा विहतिरोजसः स मध्यमः । यत्र समस्ततेजोविहतिः स उत्तमः । तथा च मुनिः । ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते । मध्यमो विहतेऽल्पे तु विहते तूत्तमो मद इति ।

**अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ १० ॥**
**मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम् ।**

यस्मादयुक्त्या योजितमन्नमपि यत्प्राणकरं तदपि कर्मवशाद्व्याधये मरणाय वा संपद्यते । मद्यं त्वयुक्तियोजितं त्रिवर्गादेरपि नाशनम् । युक्तिपीतं पुनस्तदेव त्रिवर्गादीनां साधनमित्यपिशब्देन द्योतयति ।

तामेव युक्तिं वक्ष्यमाणेन ग्रंथेन प्रतिपादयन्नाह ।

**नातिमाद्यंति बलिनः कृताहारा महाशनाः ॥ ११ ॥**
**स्निग्धाः सत्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ।**
**मेदःकफाधिका मंदवातपित्ता दृढाग्नयः ॥ १२ ॥**

यत एवंविधा नरा नातिमाद्यंत्यतो बलवद्भिः पुरुषैः कृताहारैर्महाशनैः स्निग्धैः सत्वयुक्तैर्वयोयुक्तैर्मद्योचितैस्तदन्वयैर्मद्यपकुलप्रसूतैर्मेदोऽधिकैः कफाधिकैः स्वल्पवातपित्तैर्दृढाग्निभिर्मद्यं पेयं नातो विपर्यस्तैः । इत्यन्यतंत्रकारकथिताया युक्तेरत्रैवांतर्भावोऽनेन तंत्रकृता कृतः ।

**विपर्ययेऽतिमाद्यंति विश्रब्धाः कुपिताश्च ये ।**
**मद्येन चाम्लरूक्षेण साजीर्णे बहु नाति च ॥ १३ ॥**

यथा निर्दिष्टाद्विपरीत्येन यथा अबलिनो यावद्दृढाग्नय इति तथा विश्रब्धा अमृतमिवेदं स्पृहणीयं सुरेभ्योऽपि दीयतेऽस्माभिरिति तद्गतमनसो विश्वस्तास्तथा कुपिताः क्रुद्धा ये तेऽतिमाद्यंति । मद्येनेत्यादि । अम्लरूक्षेण च मद्येन पीतेन सर्व एवातिमाद्यंति । अत्र चात्यम्लेनेति वेद्यम् । मद्यस्य सर्वस्यैवाम्लप्रायत्वात् । रूक्षेण नत्वीषत्स्निग्धेन । तथा साजीर्णे । सशब्द ईषदर्थे इषदजीर्णे । तस्मिन्नेव मद्ये पीतेऽतिमाद्यंति । तथा अतिबहुना पीतेन मद्येनातिमाद्यंति ।

**वातात्पित्तात्कफात्सर्वैश्चत्वारः स्युर्मदात्ययाः ।**
**सर्वेऽपि सर्वैर्जायंते व्यपदेशस्तु भूयसा ॥ १४ ॥**

वातपित्तादिभिः पृथक्स्थितैर्दोषैः सन्निपातेन चेति चत्वारो मदात्यया वस्तुस्वभावाज्जायंते । न्यूनाधिकाः सर्वेऽपि मदात्ययाः सर्वैरपि दोषैर्जायंते भूयसा बाहुल्येन तु व्यपदेशः संज्ञा भवत्ययं वातमदात्ययो यावत्सन्निपातमदात्ययोऽयमिति ।

**सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा ।**
**विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः १५**
**शिरःपार्श्वास्थिहृत्कंपो मर्मभेदस्त्रिकग्रहः ।**
**उरोविबंधस्तिमिरं कासः श्वासः प्रजागरः ॥ १६ ॥**
**स्वेदोऽतिमात्रं विष्टंभः श्वयथुश्चित्तविभ्रमः ।**
**प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥**

तेषां मदात्ययानां सामान्यं लक्षणमविभागेन प्रमोहादिदुःस्वप्नदर्शनपर्यंतम् ।

**विशेषाज्जागरश्वासकंपमूर्धरुजोऽनिलात् ।**
**स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥**

वातेन मदात्यये जागरादिकं प्रेतैः सह भाषत इतिपर्यंतं स्यात् ।

**पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ।**
**देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १९ ॥**

पित्तेन मदात्यये दाहादिकं रक्तनेत्रकपोलतापर्यंतं स्यात् ।

**श्लेष्मणश्छर्दिहृल्लासनिद्रोदर्दांगगौरवम् ।**

श्लेष्ममदात्यये छर्द्यादिकमंगगौरवपर्यंतं स्यात् ।

**सर्वजे सर्वलिंगत्वम्**

सर्वजे मदात्यये सर्वलिंगत्वं भवति ।

संप्रति ध्वंसकविक्षयौ लक्षयति ।

**मुक्त्वा मद्यं पिबेत्तु यः ॥ २० ॥**
**सहसाऽनुचितं चान्यत्तस्य ध्वंसकविक्षयौ ।**
**भवेतां मारुतात्कष्टौ दुर्बलस्य विशेषतः ॥ २१ ॥**

उचितं मद्यं चिरकालं परित्यज्य यः पुरुषस्तदेव सहसाऽतिमात्रया पिबेदऽथवान्यन्मद्यं यदनुचितमसात्म्यं मद्यं तत्सहसाऽतिमात्रं पिबेत्तस्य पुरुषस्य ध्वंसकविक्षयौ व्याधी मारुताद्भवेतां जायेयाताम् । किंभूतौ । कष्टौ कृच्छ्रसाध्यत्वात् । दुर्बलस्य पुनः पुंसस्तौ विशेषेण भवेताम् ।

**ध्वंसके श्लेष्मनिष्ठीवः कंठशोषोऽतिनिद्रता ।**
**शब्दासहत्वं तंद्रा च**

ध्वंसके श्लेष्मनिष्ठीवादयः स्युः ।

**विक्षयेंऽगशिरोऽतिरुक् ॥ २२ ॥**
**हृत्कंठरोगः संमोहः कासस्तृष्णावमिर्ज्वरः ।**

विक्षये अंगातिरुगाद्याः स्युः ।

**निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् २३**
**विकारैः स्पृश्यते जातु न स शारीरमानसैः ।**

शारीरमानसानां रोगाणां मद्यं कारणमिति कृत्वा यः पुमान् जितात्मा मद्येभ्यो निवृत्तो बुद्धिपूर्वकृद्विमृश्यकारी स न कदाचिच्छारीरैर्मानसैर्वा विकारैः स्पृश्यते ।

अथ मद्यवच्चेतोविहतिकारणसामान्यान्मदादीन् लक्षयति ।

**रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ २४ ॥**
**रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।**
**मदमूर्छायसंन्यासा यथोत्तरबलोत्तराः ॥ २५ ॥**

रजःप्रधानस्य मोहप्रधानस्य तथाऽपथ्याहारपरस्य त्रयो गदाः

स्युर्जायेरन् । किंभूताः । रसश्चासृक् च चेतना च ता वहंति यानि स्रोतांसि तेषां रोधःसमुद्भवो हेतुर्येषां ते रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः । मदमूर्छायसंन्यासा एतत्संज्ञाः । ते च यथोत्तरबलोत्तराः । यथा उत्तरो यथोत्तरम् । बलस्योत्तरमुत्कर्षः। यथोत्तरं बलोत्तरं येषां त एवम् । मदान्मूर्छायो बलवांस्तस्मादपि संन्यास इत्यर्थः ।

**मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।**

अत्रैषु मदादिषु मध्ये मदः सप्तधा पृथग्दोषैः सन्निपातेन रक्तेन मद्येन विषेण च ।

**सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः ॥ २६ ॥**
**रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ।**

वातोद्भवे मदे सति पुमान् सक्तानल्पद्रुताभाषणादिलक्षणो भवति ।

**पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २७ ॥**

पित्तेन क्रोधनादिलक्षणः ।

**स्वल्पासंबद्धवाक्पांडुः कफाद्ध्यानपरोऽलसः ।**

कफात् स्वल्पासंबद्धवागादिलक्षणः ।

**सर्वात्मा सन्निपातेन**

सर्वात्मा सर्वदोषलक्षणः सन्निपातेन ।

**रक्तात्स्तब्धांगदृष्टिता ॥ २८ ॥**
**पित्तलिंगं च**

रक्तोद्रक्तमदात्स्तब्धांगत्वं स्तब्धदृष्टिता तथा पित्तमदलिंगं च स्यात् ।

**मद्येन विकृतेहास्वरांगता ।**

मद्येन मदे विकृता चेष्टा तथा स्वरस्य विकृतत्वमंगस्य च ।

**विषे कंपोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु सः२९**

विषे विषोत्थे मदे कंपोऽतिनिद्रा च स्यात् । स च विषमदः सर्वेभ्यो मदेभ्योऽधिकः ।

**लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु ।**

शोणिताद्युत्थेषु मदेषु वातादीन् लक्षयेत् । कुतः । लक्षणोत्कर्षात् स्वस्वलक्षणोत्कर्षेण ।

अथ मूर्छायं लक्षयति ।

**अरुणं कृष्णनीलं वा खं पश्यन्प्रविशेत्तमः ॥ ३० ॥**
**शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ।**
**कार्श्यं श्यावारुणा छाया मूर्छाये मारुतात्मके ३१**

मारुतोद्भवे मूर्छाये अरुणाद्यन्यतमवर्णमाकाशं पश्यन् पुमांस्तमः प्रविशेन्मूढावस्थां प्राप्नोति । शीघ्रं च प्रतिबुध्येत संज्ञां लभेत । हृत्पीडावेपथुर्भ्रमस्तथा कार्श्यादि च स्यात् ।

**पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः ।**
**विबुध्येत च सस्वेदो दाहतृट्तापपीडितः ॥ ३२ ॥**
**भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः ।**

पित्तेन मूर्छाये रक्तं पीतं वा नभः पश्यंस्तमः पुमान् विशेन्मूढावस्थां प्राप्नुयात् । सह स्वेदेन विबुध्येत संज्ञां लभते । तथा दाहादिपीडितस्तथा भिन्नविडादिकः ।

**कफेन मेघसंकाशं पश्यन्नाकाशमाविशेत् ॥ ३३ ॥**
**तमश्चिराच्च बुध्येत सहृल्लासः प्रसेकवान् ।**
**गुरुभिः स्तिमितैरंगैरार्द्रचर्मावनद्धवत् ॥ ३४ ॥**

कफेन मूर्छाये मेघाभमाकाशं पश्यंस्तम आविशेच्चिरेण च बुध्येत संज्ञां लभते । हृल्लासादिमांस्तथाऽऽर्द्रेण चर्मणाऽवनद्धो वेष्टित इव ।

**सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवाऽपरः ।**
**पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३५ ॥**

त्रिभिर्दोषैर्यो मूर्छायः सर्वाकारः सोऽपरोऽपस्मार इवाशु शीघ्रं पुरुषं निश्चेष्टं पातयति । विना बीभत्सचेष्टितैरपस्मारोत्थानि निंद्यानि चेष्टितानि वर्जयित्वा । अन्यत्सर्वं समानम् ।

इदानीं संन्यासं लक्षयितुमाह ।

**दोषेषु मदमूर्छायाः कृतवेगेषु देहिनाम् ।**
**स्वयमेवोपशाम्यंति संन्यासो नौषधैर्विना ॥ ३६ ॥**

मदाश्च मूर्छायाश्च मदमूर्छायाः कृतवेगेषु दोषेषु सत्सु स्वयमेवौषधं विनाऽपि शाम्यंति । संन्यासः पुनरौषधैर्विना न शांतिमेति ।

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।**
**संन्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३७ ॥**
**कुर्वंति तेन पुरुषः काष्ठभूतो मृतोपमः ।**
**म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३८ ॥**

वाक् च देहश्च मनश्च तेषां चेष्टां यथास्वलक्षणामाक्षिप्य मला वातपित्तकफाः सन्निपतिताः संतस्त्रय एककार्योद्यताः संन्यासं कुर्वंति । किंभूताः । अतिबलास्तथा प्राणायतनसंश्रया विशेषेण हृदयाश्रयाः । तेन संन्यासेन पुरुषः काष्ठभूतः स्थाणुकुड्यकल्पस्तथा मृतोपमस्तत्सदृशो भूत्वाऽनंतरं शीघ्रं म्रियते । यदि शीघ्रं चिकित्सा न प्रयुज्यते । म्रियत इति संभावनायां लिङ् ।

शीघ्रं चिकित्सनाज्जीवेदित्यत्रैवोदाहरणार्थमाह ।

**अगाधे ग्राहबहुले सलिलौघ इवातटे ।**
**संन्यासे विनिमज्जंतं नरमाशु निवर्तयेत् ॥ ३९ ॥**

अगाधेऽनास्ते सलिलौघे तथा ग्राहबहुले मकरादिप्राणहरप्राणिभूयसि । तथाऽतटेऽरोधसि । यथा तस्मिन्निमज्जंतं नरमाशु शीघ्रं निवर्तयेत्तस्मादुद्धरेदेवं संन्यासेऽपि निमज्जंतं नरमाशु निव-

तैयेत् । अनेनोदाहरणेन मदात्ययत्वमस्य व्याधेः प्रदर्शयन् स्वल्पकालहापनमप्यत्र व्याधौ न कार्यमिति द्योतयति ।

इदानीं मदात्ययनिदानत्वान्मद्यस्य मद्येनैवोपसंहारं कुर्वन्नाह ।

**मदमानरोषतोष-**
**प्रभृतिभिररिभिर्निजैः परिष्वंगः ।**
**युक्तायुक्तं च समं**
**युक्तिवियुक्तेन मद्येन ॥ ४० ॥**

युक्तिवियुक्तेन मद्येन मदादिभिर्निजैः शत्रुभिर्दृष्टादृष्टविनाशकारिभिः परिष्वंगोऽतिसंश्लेषो भवति । न केवलं मद्येन मदाद्यतिसंगो यावद्युक्तायुक्तं समं तुल्यं संपद्यते । युक्तमनुष्ठेयमयुक्तमननुष्ठेयम् । तदुभयं समानं जायते । यतश्चैवं ततो मद्यपाने युक्तेर्गरीयस्त्वम् । युक्तिश्च प्रागेव दर्शिता । आर्या । द्वितीयदलभवलक्ष्म प्रतिनियतमवगम्य । उभयत्राप्युपगीतिं वदंति यत्यंशकैर्गदितैः ।

पुनरपि युक्तिं प्रदर्शयन्नाह ।

**बलकालदेशसात्म्य-**
**प्रकृतिसहायामयवयांसि ।**
**प्रविभज्य तदनुरूपं**
**यदि पिबति ततः पिबत्यमृतम् ॥ ४१ ॥**

बलकालादीन् प्रविभज्य बुद्ध्या विमृश्य तदनुरूपं तद्योग्यं यदि पिबति ततोऽमृतं पिबति । मद्यव्याजेनामृतमास्वादयतीत्यर्थः । आर्या ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां मदात्ययनिदानं नाम षष्ठोऽध्यायः ६

---

## सप्तमोऽध्यायः ।

मदात्ययनिदानानंतरमर्शोनिदानारंभो युक्तः । यतोऽरिभिर्निजैः परिष्वंग इत्युक्तम् । अर्शांसि रिपुसदृशानीति च वक्ष्यति । तस्मादर्शोनिदानं प्रक्रम्यते ।

**अथाऽर्शसां निदानं व्याख्यास्यामः ।**

व्याख्या पूर्ववत् ।

**अरिवत्प्राणिनो मांसकीलका विशसंति यत् ।**
**अर्शांसि तस्मादुच्यंते गुदमार्गनिरोधतः ॥ १ ॥**
**दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।**
**मांसांकुरानपानादौ कुर्वंत्यर्शांसि तान् जगुः ॥ २ ॥**

अनेन सर्वेषामप्यर्शसां गुदमेढ्रादिजानां सामान्येन संप्राप्त्याकृती निरूपयति । दोषा वातादयस्त्वङ्मांसमेदांसि दूषयित्वाऽपानादौ यन्मांसांकुरान् कुर्वंति तानर्शांसि जगुस्तंत्रकृत इति शेषः । आदिशब्देन कर्णनासादीनां ग्रहणम् । किंभूतान्मांसांकुरान् । विविधाकृतीन्नानासंस्थानान् ।

**सहजन्मोत्तरोत्थानभेदाद्द्वेधा समासतः ।**
**शुष्कस्राविविभेदाच्च**

तानि च समासतः संक्षेपतो द्वेधा द्विप्रकाराणि । कथमित्याह । सहेत्यादि । सह जन्मना सहजन्म चोत्तरं च सहजन्मोत्तरे तयोरुत्थानं सहजन्मोत्तरोत्थानं तेन भेदो विशेषस्तस्मात् । कानिचिच्छरीरेण सहजातानि कानिचिज्जन्मोत्तरभावीनि । तथा शुष्कस्राविविभेदाच्च द्वेधा । कानिचिच्छुष्काणि कानिचित्स्रावीणि ।

अपानादावित्युक्तमथ तदेव गुदापरपर्यायं लक्षयति ।

**गुदस्थूलांत्रसंश्रयः ॥ ३ ॥**
**अर्धपंचांगुलस्तस्मिंस्तिस्रोऽध्यर्धांगुलाः स्थिताः ।**
**वल्यः प्रवाहिणी तासामंतर्मध्ये विसर्जनी ॥ ४ ॥**
**बाह्या संवरणी तस्या गुदोष्ठो बहिरंगुले ।**
**यवाध्यर्धप्रमाणेन रोमाण्यत्र ततः परम् ॥ ५ ॥**

स्थूलांत्रं संश्रय आश्रयो यस्य स एवंविधो गुदः । स्थूलं यदंत्रं तत्र प्रनिबद्ध इत्यर्थः । किंप्रमाणोऽसौ । अर्धपंचांगुलः । अर्धेनोनानि पंचार्धपंच । शाकपार्थिवादित्वात्समासः । अर्धपंच अंगुलानि यस्य सोर्धपंचांगुलः सार्धचतुरंगुलपरिमाणः । तस्मिन् गुदे तिस्रो वल्यस्त्रिसंख्याः स्थिताः । किंपरिमाणाः । अध्यर्धांगुलाः । अधिकमर्धमंगुलं प्रत्येकं परिमाणं यासां ता एवम् । अथ तासां तिसृणामर्थानुगतानि नामान्याह । तत्र मलप्रवाहणादंतरंते स्थिता वली प्रवाहिणीति कथ्यते । मध्ये मध्यस्थिता वली मलस्य प्रवहतो बहिर्विसर्जनाद्विसर्जनीति भण्यते । गुदस्य बाह्ये स्थिता मलस्य संवरणात्संवरणीत्युच्यते । तस्याः संवरणीसंज्ञाया वलेरंगुले तत्परिमाणे बहिर्बाह्ये गुदोष्ठः स्थितः । प्रमाणेन परिमाणतो गुदोष्ठोऽध्यर्धो यवः सार्धयवप्रमाणः । ततो गुदोष्ठात्परं परतो रोमाण्यत्र गुदे जायंते ।

**तत्र हेतुः सहोत्थानां वलीबीजोपतप्तता ।**
**अर्शसां बीजतप्तिस्तु मातापित्रपचारतः ॥ ६ ॥**
**दैवाच्च ताभ्यां कोपो हि सन्निपातस्य नान्यतः ।**
**असाध्यान्येवमाख्याताः सर्वे रोगाः कुलोद्भवाः ७**

तत्रेति निर्धारणे । सहजोत्तरकालभाविष्वर्शःसु मध्ये सहोत्थानामर्शसां वलीबीजोपतप्तता । वल्याः संबंधि बीजं शुक्रार्तवांशो यस्मात्सा वली उत्पद्यते । उपतप्तस्य भाव उपतप्तता । अर्शोविकारकरणसमर्थैर्वातपित्तकफैः पीडनं वलीबीजस्योपतप्ततोच्यते । सा च बीजोपतप्तिर्बीजोपतापो मातापित्रपचारतः । माता च पिता च तौ तयोरपचारोऽपराध आहारविहारादिकृतस्तस्मात् । तथा दैवात्प्राक्तनादशुभकर्मणो बीजोपतप्तिः । ताभ्यां मातापित्रपचारदैवाभ्यां यस्मात्सन्निपातस्य कोपस्तस्मात्तान्यर्शांस्यसाध्यानि । एवमनेन पूर्वोक्तेन मार्गेण प्राणिनां सर्वे रोगाः कुलोद्भवा आख्याताः । बीजोपतप्तत्वादसाध्या इत्यर्थः ।

**सहजानि विशेषेण रूक्षदुर्दर्शनानि च ।**
**अंतर्मुखानि पांडूनि दारुणोपद्रवाणि च ॥ ८ ॥**

सहजान्यर्शांसि विशेषेण रूक्षादिगुणयुतानि भवंति । विशेषेणेत्यनेनैतद्द्योतयति । उत्तरजातान्यप्येवंभूतानि भवंतीति ।

**षोढान्यानि पृथग्दोषसंसर्गनिचयास्रतः ।**

अन्यानुत्तरजातान्यर्शांसि षट्प्रकाराणि पृथग्दोषैर्वातपित्तकफैस्त्रीणि तथा संसर्गेणैकं तथा निचयेन तथा रक्तेनेति षट्कम् । षोढाशब्दः पृषोदरादिः ।

**शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ९ ॥**

शुष्कस्राविविभेदाच्च द्विधेत्युक्तं तत्र शुष्काणि प्रायेण वातकफाभ्यां व्यस्तसमस्ताभ्याम् । यानि त्वार्द्राणि तान्यस्रपित्ततस्तथैव व्यस्तसमस्ताभ्यां भवंति ।

**दोषप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते ।**
**अग्नौ मलेऽतिनिचिते पुनश्चातिव्यवायतः ॥ १० ॥**
**यानसंक्षोभविषमकठिनोत्कटकासनात् ।**
**वस्तिनेत्राश्मलोष्टोर्वीतलचैलादिघट्टनात् ॥ ११ ॥**
**भृशं शीतांबुसंस्पर्शात्प्रततातिप्रवाहणात् ।**
**वातमूत्रशकृद्वेगधारणात्तदुदीरणात् ॥ १२ ॥**
**ज्वरगुल्मातिसारामग्रहणीशोफपांडुभिः ।**
**कर्शनाद्विषमाभ्यश्च चेष्टाभ्यो योषितां पुनः ॥ १३ ॥**
**आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात् ।**
**ईदृशैश्चापरैर्वायुरपानः कुपितो मलम् ॥ १४ ॥**
**पायोर्वलीषु संधत्ते तास्वभिष्यण्णमूर्तिषु ।**
**जायंतेऽर्शांसि**

पूर्वं सर्वरोगनिदाने दोषप्रकोपहेतुर्दर्शितस्तेन दोषप्रकोपकारणेन वह्नौ सादिते मंदत्वं गमिते । अग्निमांद्यादाहारः सम्यक्पाकमगच्छन् भूयसा मलत्वेनैव संपद्यते । अत इदमाह । मलेऽतिनिचिते । मले पुरीषाख्येऽतिनिचिते प्रवृद्धे मांसांकुरजननयोग्यवायुरपानाख्यः पायुसंबंधिनीषु वलीषु तं मलं निचितं धत्ते तद्देशे मलव्यतिसंपर्कात्ता वलयोऽभिष्यण्णमूर्तयः प्रक्लिन्नदेहाः संपद्यंते तासु चाभिष्यण्णमूर्तिष्वर्शांसि जायंते । इत्युत्तरकालजानामर्शसां संप्राप्तिः । तथा च केन वायुः कुपितो मलं धत्त इत्याह । पुनश्चातिव्यवायत इत्यादि । पुनरिति निर्देशात् पूर्वोक्तेन हेतुना वायुः कुपितस्तथाऽतिव्यवायादिभिः कुपित इति गमयति । बस्त्यादीनां घट्टनेन संबंधः । प्रततातिप्रवाहणेन दोषादिवेगानां प्रवर्तनम् । वातमूत्रशकृतामुदीरणमिहोक्तमिति प्रवाहोदीरणयोर्द्वयोरुपादानम् । ज्वरादिभिः कर्षणादिति योज्यम् । विषमाभ्यश्च चेष्टाभ्य इति । साहसादिपादचरणादिकाभ्यः । योषितां पुनरिति पुनःशब्देन पूर्वकेभ्यः प्रकारेभ्यः प्रकारांतरमामगर्भप्रपतनादि गृह्यते । ईदृशैरपरैरप्यनिर्दिष्टैरिह तत्प्रकोपहेतुभिर्वायुः कुपित इति योज्यम् ।

**तत्पूर्वलक्षणं मंदवह्निता ॥ १५ ॥**
**विष्टंभः सक्थिसदनं पिंडिकोद्वेष्टनं भ्रमः ।**
**सादोऽगे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः १६**
**मारुतः प्रचुरो मूढः प्रायो नाभेरधश्चरन् ।**
**सरुक् सपरिकर्तश्च कृच्छ्रान्निर्गच्छति स्वनन् १७**
**अंत्रकूजनमाटोपः क्षामतोद्गारभूरिता ।**
**प्रभूतं मूत्रमल्पा विट् श्रद्धावैधूमकोऽम्लकः ॥ १८ ॥**
**शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।**
**तथेंद्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥ १९ ॥**
**आशंकाग्रहणीदोषपांडुगुल्मोदरेषु च ।**

तेषामर्शसां पूर्वलक्षणं तत्पूर्वलक्षणं मंदवह्नितेत्यादिकं शकृद्ग्रहपर्यंतम् । अत्र पूर्वलक्षणमध्ये शकृद्भेदोऽथवा ग्रह इति निर्दिष्टम् । कस्यचित्पुरुषस्योत्पित्सुष्वर्शःसु भिन्नवर्चस्त्वं कस्यचिद्बद्धवर्चस्त्वमित्यथवाशब्दस्यार्थः । मारुत इति सामर्थ्यादपानाख्यः प्रायो भूयिष्ठं कृत्वा नाभेरधश्चरन् गच्छन् प्रचुरो भवति तथा मूढ इव मूढः क्रियात्मकतां हित्वैव वर्तमानस्तथा सरुक् सशूलस्तथा सह परिकर्तेन वर्तते सपरिकर्तश्छिंदन्निव कृच्छ्रान्निर्गच्छति स्वनन् शब्दायमानः । तथा अंत्रकूजनादिकं भवति । तथा च ग्रहणीदोषादिष्वाशंका भवति ।

**एतान्येव विवर्धंते जातेषु हतनामसु ॥ २० ॥**

इतान्येव ग्रहणीदोषादीनि हतनामस्वर्शःसु जातेषु विवर्धंते वृद्धिमाप्नुवंति ।

**निवर्तमानोऽपानो हि तैरधोमार्गरोधतः ।**
**क्षोभयन्ननिलानन्यान् सर्वेंद्रियशरीरगान् ॥ २१ ॥**
**तथा मूत्रशकृत्पित्तकफान् धातूंश्च साशयान् ।**
**मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥२२॥**
**कृशो भृशं हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः ।**
**असारो विगतच्छायो जंतुजुष्ट इव द्रुमः ॥ २३ ॥**
**कृत्स्नैरुपद्रवैर्ग्रस्तो यथोक्तैर्मर्मपीडनैः ।**
**तथा कासपिपासास्यवैरस्यश्वासपीनसैः ॥ २४ ॥**
**क्लमांगभंगवमथुक्षवथुश्वयथुज्वरैः ।**
**क्लैव्यबाधिर्यतैमिर्यशर्कराश्मरिपीडितः ॥ २५ ॥**
**क्षामभिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ।**
**सर्वपर्वास्थिहृन्नाभिपायुवंक्षणशूलवान् ॥ २६ ॥**
**गुदेन स्रवता पिच्छां पुलाकोदकसन्निभाम् ।**
**विबद्धमुक्तं शुष्कार्द्रं पक्वामं चांतरांतरा ॥ २७ ॥**
**पांडुपीतं हरिद्रक्तं पिच्छिलं चोपवेश्यते ।**

तैरर्शोभिरधोमार्गरोधादपानो निवर्तमान ऊर्ध्वं प्रवृत्तः सर्वाननिलान् समानोदानव्यानप्राणान् सर्वेंद्रियशरीरगान् प्रत्याहरणरूपतया क्षोभयन् संरंभान् कुर्वंस्तथा मूत्रादींस्तथा धातून् रसा-

दींश्च साशयान् सहाधारेण वर्तमानान् क्षोभयन्नग्निं मृद्नाति मंदीकरोति । ततोऽग्निमर्दनादिकात् कारणात् प्रायेणार्शसो दुर्नामवान् कृशादिकः स्यात् । अर्शस इत्यत्रार्शआदित्वादच् । विगतच्छायो द्रुमो जंतुजुष्टः पत्रौघविरहाद्यथा छायारहितस्तथैवार्शसः शोभारहित इति श्लेषोपमालंकारः । तथेति । न केवलं पूर्वोक्तरुपद्रवैर्ग्रस्तः कासादिभिरपीत्यर्थः । क्लैब्येत्यादि । अश्मरिपीडित इत्यत्र ङ्यापोरित्यादिना बहुलवचनाद्ध्रस्वः । अथवा अश्मनि पीडित इति पाठः । क्षामो भिन्नश्च स्वरो यस्य स एवम् । तथा ध्यायश्चिताव्याप्तः। तथा निष्ठीवनादिभिर्युतः। तथा गुदेन पिच्छां पुलाकोदकसन्निभां स्रवता विबद्धादिकमुपवेश्यते । अप्राप्तपाकं पुलाकशब्दवाच्यम् । आगमः । धान्यं पुलाको निष्पन्नमिति । अथवा पुलाकः कुत्सितं धान्यं तस्योदकेन तुल्यम् । अन्ये तु यवगोधूमादिस्वेदः पुलाकोदकमित्याहुः । तेन तुल्यम् । विबद्धमुक्तमिति कदाचिदुदावृत्तं कदाचित्तद्द्रुतं भवति ।

वातार्शसां लक्षणमाह ।

**गुदांकुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः॥२८॥**
**म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः।**
**मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः२९**
**बिंबीकर्कंधूखर्जूरकार्पासीफलसन्निभाः ।**
**केचित्कदंबपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥३०॥**
**शिरःपार्श्वांसकट्यूरुवंक्षणाभ्यधिकव्यथाः ।**
**क्षवथूद्गारविष्टंभहृद्ग्रहारोचकप्रदाः ॥ ३१ ॥**
**कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ।**
**तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥ ३२॥**
**रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ।**
**कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ॥ ३३ ॥**
**गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ।**

वाताधिका गुदजाः शुष्कादिगुणयुक्ताः । विषमा विषमसंस्थाना ऊर्ध्वाधस्तिर्यगादिदिङ्संस्थिताः । परुषाः शाकपत्रादितुल्यस्पर्शाः । मिथो विसदृशाः परस्परमतुल्यसन्निवेशाः । वक्रा धनुष्कोट्यादिवत् । तथा तीक्ष्णा दर्भांकुरवत् । विस्फुटितं केसरादिवदाननं येषां त एवम् । बिम्ब्याद्यनेकोपमानोपादानं तेषां विचित्ररूपदर्शनार्थम् । शिरआदिष्वधिकव्यथाः । तथा क्षवथ्वादिप्रदाः । तथा कासादिकृतः । तैरार्तः पीडितो ग्रथिदादिकमुपवेश्यते । कृष्णत्वगादिश्च स्यात् । तत एव गुदांकुरेभ्यो गुल्मादिसंभवः ।

**पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ ३४ ॥**
**तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ।**
**शुकजिह्वायकृत्खंडजलौकावक्त्रसंनिभाः॥ ३५ ॥**
**दाहपाकज्वरस्वेदतृण्मूर्छारुचिमोहदाः ।**
**सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥ ३६ ॥**
**यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ।**

पित्तार्शसां नीलमुखा इत्यादि लक्षणं हारिद्रत्वङ्नखादय इतिपर्यंतम् । तन्वच्छमस्रं रक्तं नित्यं स्रवंतीत्याभीक्ष्ण्ये णिनिः । तथा तनवो न घनाः । श्लेष्मगुदांकुरवत् । मृदवः शिरीषपुष्पादिवत् । श्लथाः स्विन्नमांसादिवत् । शुकजिह्वेत्यादि बहूपमात्वं पूर्ववत्संस्थानवर्णवैचित्र्यार्थम् । द्रवादीनां वर्चसा संबंधः । यवमध्या यवमध्यसंस्थानाः । हरितो दूर्वावर्णाः । पीता हारिद्राश्च त्वगादयो येषु त एवम् । आदिशब्देन नयनविण्मूत्रादयो गृह्यंते ।

**श्लेष्मोल्बणा महामूला घना मंदरुजाः सिताः ३७**
**उच्छूनोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ।**
**पिच्छिलाः स्तिमिताः श्लक्ष्णाः कंड्वाढ्याः स्पर्शनप्रियाः ॥ ३८ ॥**
**करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ।**
**वंक्षणानाहिनः पायुबस्तिनाभिविकर्तिनः ॥ ३९ ॥**
**सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ।**
**मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥ ४० ॥**
**क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ।**
**वसाभाः सकफप्राज्यपुरीषाः सप्रवाहिकाः ॥ ४१॥**
**न स्रवंति न भिद्यंते पांडुस्निग्धत्वगादयः ।**

श्लेष्मार्शसां महामूलादिकं लक्षणं पांडुस्निग्धत्वगाद्यंतम्। बह्वनिला इत्यनेन पित्तोल्बणा इत्यनेन च निर्देशेन सर्वेषामर्शसां त्रिदोषजत्वं द्योतयति । तेन सर्वाण्यर्शांसि त्रिदोषजानि भूयसा तु व्यपदेश इति वेद्यम् ।

**संसृष्टलिंगाः संसर्गात्**

संसर्गाद्गुदांकुराः संसृष्टलिंगाः संसृष्टरूपाः स्युः ।

**निचयात्सर्वलक्षणाः॥ ४२॥**

निचयात्सन्निपातात् सर्वलक्षणा दोषत्रयलक्षणयुताः ।

**रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः ।**
**वटप्ररोहसदृशा गुंजाविद्रुमसन्निभाः ॥ ४३ ॥**
**तेऽत्यर्थं दुष्टमुष्णं च गाढविट्प्रतिपीडिताः ।**
**स्रवंति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४४ ॥**
**भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ।**
**हीनवर्णबलोत्साहो हतौजाः कलुषेंद्रियः ॥ ४५ ॥**

रक्तोल्बणा रक्ताधिका गुदे कीलाः पित्तस्याकृत्या लक्षणेन समन्विता इत्यादिकं कलुषेंद्रिया इति यावदेषां लक्षणं बोध्यम् । कुदांकुरा इति प्रकृतेऽपि गुदे कीला इत्युक्तं वैचित्र्यार्थम् । ते च गुदे कीला अतिदुष्टमुष्णं च सहसा अचिंतितमेव शूलादिलिंगै रक्तं स्रवंति । गाढविट्प्रतिपीडिताः संतस्तस्य च रक्तस्यातिप्रवृत्तितो भेकाभो भवति । चोऽवधारणे । तस्यैव रक्तस्यातिप्रवर्तनान्मंडूकाभः स्यान्न कारणांतरेणेत्यर्थः । शोणितक्षयसंभवैर्दुःखै रोगैः

पीड्यते । रक्तेऽम्लशिशिरप्रीतिः सिराशैथिल्यरूक्षता इति रक्तक्षयजा उक्ताः । तथा हीनवर्णबलोत्साहादि स्यात् ।

**मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः ।**
**रूक्षैः संग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥४६॥**
**अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ।**
**पुरीषं वातविण्मूत्रसंगं कुर्वीत दारुणम् ॥ ४७ ॥**
**तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ।**
**आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ ४८ ॥**
**बस्तौ च सुतरां शूलं गंडः श्वयथुसंभवः ।**
**पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ ४९ ॥**
**हृद्रोगग्रहणीदोषमूत्रसंगप्रवाहिकाः ।**
**बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ ५० ॥**
**मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः ।**
**ते ते च वातजा रोगा जायंते भृशदारुणाः ॥ ५१ ॥**
**दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।**
**वाताभिभूतकोष्ठानां तैर्विनाऽपि स जायते॥ ५२ ॥**

आदिशब्देन मसूरादीनां ग्रहणम् । मुद्गादिभी रूक्षैः संग्राहिभिर्वायुरपानाख्यः स्वस्थाने बस्त्यादिलक्षणे कुपितोऽत एव बलवान् स्वस्थाने कुपितो बली स्यात् । बली पवनो वा वातादिसंगं कुर्वीत । किं कृत्वा । अधोवहानि स्रोतांसि संरुध्य । किं कुर्वन् । अधः पुरीषं प्रशोषयन् । तेन वातविण्मूत्रसंगेन हेतुना तेन वा तथाविधेन वायुकोपेन तीव्रा दारुणा पीडा कोष्ठादिका भवेत् । तथा आध्मानादयः स्युः परिकीर्तनं च । बस्तौ चेति चशब्दो भिन्नक्रमः । शूलं चेत्यर्थः । गंडयोः श्वयथुर्गंडश्वयथुस्तस्य संभवः । पवनस्य प्रकृतत्वादपानाख्यस्योर्ध्वगामित्वं स्यात् । तत ऊर्ध्वगमनाच्छर्द्यादयः स्युः । तैरेव वातजा रोगा अनेके नखभेदादयो भृशदारुणा अतिदुःखावहा जायंते । दुर्नाम्नामित्येवं पूर्वोक्तेन प्रकारेणायं गुदावर्तः परमो महानुपद्रवः स्मृतो मुनींद्रैरिति शेषः । वातेत्यादि । वातेनाभिभूतो व्याप्तः कोष्ठो येषां त एवं तेषां दुर्नामभिर्विनाऽपि स उदावर्तो जायते न केवलमेतैरित्यपिशब्दार्थः ।

अधुना साध्यासाध्यविभागमेषामाह ।

**सहजानि त्रिदोषाणि यानि चाभ्यंतरे वलौ ।**
**स्थितानि तान्यसाध्यानि याप्यंतेऽग्निबलादिभिः॥५३**

सहजान्यर्शांसि तथा त्रिदोषजानि यथोत्तरकालजान्यभ्यंतरे वलौ यानि स्थितान्येकदोषजद्विदोषजानि तान्यप्यसाध्यानि । वलिशब्दः पुंस्त्रीलिंगः । अर्शसामसाध्यानां किं कार्यमित्याह । याप्यंत इत्यादि । अग्निबलमादि येषां त एवं तैर्याप्यंते । अग्निबलेऽक्षीण आयुषि च । पादसंपदि चेत्यर्थः ।

**द्वंद्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च॥५४॥**

द्वंद्वजानि संकरोत्पन्नानि यानि च द्वितीयायां वलौ संश्रितानि तानि कृच्छ्रसाध्यान्याहुर्मुनय इति शेषः । तथा परिसंवत्सराणि परिगतानि संवत्सरं परिसंवत्सराणि । प्रादिसमासः । वर्षातिक्रांतानीत्यर्थः ।

**बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ।**
**अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ५५**

बाह्यायां वलौ जातानि यानि तथैकदोषोल्बणानि च तथा नचिरोत्पतितानि संवत्सरादर्वाग्जातानि च सुखसाध्यानि ।

**मेढ्रादिष्वपि वक्ष्यंते यथास्वं**

मेढ्रभगनासाकर्णादिषु चार्शांसि वक्ष्यंते । यथास्वं स्वीयेऽध्याये गुह्यरोगविज्ञाने नासारोगविज्ञाने कर्णरोगविज्ञानादौ चेति ।

**नाभिजानि तु ।**
**गंडूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥**

नाभिजानि तु नाभौ जातानि पुनर्गंडूपदास्यरूपाणि गंडूपदानां किंचुलुकानामास्यं तदिव रूपं येषां तान्येवम् । पिच्छिलानि पिच्छावंति तथा मृदूनि च भवंति ।

चर्मकीलान्याह ।

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ ५७ ॥**

व्यानाख्यो वायुः श्लेष्माणं गृहीत्वाऽर्शः करोति । क्व । त्वचो बहिर्बाह्यप्रदेशे । किंभूतम् । कीलोपमं तथा स्थिरं खरं च । तं च गुदांकुरं चर्मकीलं विदुर्मुनय इति शेषः ।

**वातेन तोदः पारुष्यं पित्तादसितरक्तता ।**
**श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥५८॥**

वातेनाधिकेन तोदपारुष्ये भवतः । पित्तादसितरक्तता भवति । श्लेष्मणा तस्य चर्मकीलस्य स्निग्धतादिकं स्यात् । ग्रथितत्वं ग्रंथिसदृशत्वम् । सवर्णता प्रकृतशरीरतुल्यवर्णता ।

**अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।**
**तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ५९ ॥**

अर्शसां प्रशमे शांतौ सुमतिः शीघ्रं यत्नं कुर्वीत । किमितिचेत्याह । तानीत्यादि । यस्मात्तान्यर्शांसि गुदं बद्ध्वा निरुद्ध्य बद्धगुदोदरं शीघ्रं कुर्युरिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थानेऽर्शसां निदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अर्शोनिदानानंतरमतिसारग्रहणीरोगनिदानारंभः। यतो वक्ष्यति। अर्शोतिऽसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूता इति । तस्मादतिसारग्रहणीरोगनिदानं प्रक्रम्यत इत्याह ।

अथातोऽतीसारग्रहणीरोगयोर्निदानं व्याख्यास्यामः

पूर्ववद्व्याख्या ।

**दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।**
**अतीसारः**

दोषैर्व्यस्तैः पृथग्वातपित्तकफैः समस्तैः सन्निपातेन तथा भयाच्छोकाच्चेति षड्विधोऽतीसारः ।

**स सुतरां जायतेऽत्यंबुपानतः ॥ १ ॥**
**कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ।**
**मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ २ ॥**
**कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ।**
**विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ ३ ॥**
**व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ।**
**प्रकल्पतेऽतिसाराय**

स च सुतरामत्यंबुपानाज्जायते । कृशशुष्कामिषादिभिस्तथा स्नेहविभ्रमः स्नेहव्यापत्तिस्तद्विधैर्वातप्रकोपहेतुभिरिहानुक्तैरप्यनिलः कुपितोऽब्धातुं शरीरगतमधो विस्रंसयत्यधस्तान्नयति । तेनैवाऽब्धातुनाऽनलं जठराग्निं हत्वा मंदत्वं नीत्वा तथा कोष्ठं व्यापद्य शून्यतां कोष्ठस्य कारयित्वाऽनुशकृच्छकृतः समीपे नतु सर्वं कोष्ठं पुरीषं च तेनैव धातुना द्रवतां नयन् प्रापयन्नतीसाराय कल्पते संपद्यते । अनिल इति योज्यम् ।

**लक्षणं तस्य भाविनः ॥ ४ ॥**
**तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।**
**आध्मानमविपाकश्च**

तस्यातिसारस्य भाविनो भविष्यतो लक्षणं तोदो हृदादिषु गात्रसादादि च ।

**तत्र वातेन विज्जलम् ॥ ५ ॥**
**अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ।**
**रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः ॥ ६ ॥**
**तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम् ।**
**शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् ॥ ७ ॥**

तेषु षडतिसारेषु वातेनातिसारे विज्जलादिकं शुष्कमुखादिको नर उपवेश्यते । किं कुर्वन् । विनिष्टनन् । कोऽर्थः । विकुष्यन्नुपवेश्यते ।

**पित्तेन पीतमसितं हारितं शाद्वलप्रभम् ।**
**सरक्तमतिदुर्गंधं तृण्मूर्छास्वेददाहवान् ॥ ८ ॥**
**सशूलपायुसंतापं पाकवान्**

पित्तेन तृडादिमान्नरः पीतादिकमुपवेश्यते ।

**श्लेष्मणा घनम् ।**
**पिच्छिलं तंतुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥९॥**



**अभीक्ष्णं गुरु दुर्गंधं विबद्धमनुबद्धरुक् ।**
**निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम् ॥ १० ॥**
**सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः ।**
**कृतेऽप्यकृतसंज्ञश्च**

श्लेष्मणा घनादिगुणमनुबद्धरुगंतं निद्राल्पादिविशेषणाऽल्पादिगुणं च नर उपवेश्यते । निद्रालुस्तथालसोऽन्नद्वेषी च स्तोकंस्तोकं सहप्रवाहिकं चोपवेश्यते । तथा सरोमहर्षादिकः स्यात् । तथा कृतेऽप्यकृतसंज्ञश्च । कृतेऽपि पुरीषोत्सर्गेऽकृतसंज्ञः कृतपुरीषोत्सर्ग इति संवेदना न भवति ।

**सर्वात्मा सर्वलक्षणः ॥ ११ ॥**

सन्निपातेन सर्वात्मा सर्वदोषलिंगः ।

**भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ।**
**वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम् ॥ १२ ॥**
**वातपित्तसमं लिंगैराहुस्तद्वच्च शोकतः ।**

भयेन चित्ते क्षोभिते सति पित्तसहितो वायुः शकृद्द्रावयेत् । ततोऽनंतरमतिसार्येत क्षिप्रादिगुणयुक्तं लिंगैर्वातपित्ततुल्यम् । तद्वच्च भयेन तुल्यलिंगं शोकादतिसार्यते ।

**अतीसारः समासेन द्विधा सामो निरामकः ॥ १३॥**
**सासृङ्निरस्रः**

अतीसारः षोढा भवन् द्विप्रकारः संक्षेपेण । एकः सामो द्वितीयो निरामकः । तथा एकः सरक्तो द्वितीयो निरस्रः ।

**तत्राऽद्ये गौरवादप्सु मज्जति ।**
**शकृद्दुर्गंधमाटोपविष्टंभार्तिप्रसेकिनः ॥ १४ ॥**

तत्राऽस्मिन्नाद्ये सामेऽतीसारे गौरवादप्सु पतितं पुरीषं मज्जति बुडति दुर्गंधं च स्यात् । आटोपादियुतस्य पुंसः ।

**विपरीतो निरामस्तु कफात्पक्वोऽपि मज्जति ।**

अतीसारोऽतो विपरीतोऽप्सु प्लवति । आटोपादिरहितस्य पुंसः कफात्पुनः स्वभावगुरुत्वात्पक्वोऽपि मज्जति ।

अथ ग्रहणीरोगं लक्षयति ।

**अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ॥ १५ ॥**
**तस्य स्यादग्निविध्वंसकरैरत्यर्थसेवितैः ।**

अतीसारेषु योऽतियत्नवान्न भवति तस्य ग्रहणीगदो भवेदिति ग्रहण्या निदानम् । अन्यऽस्यानतिसारिणोऽग्निविध्वंसकरैर्वह्निमांद्यहेतुभिरन्नपानैः शीलितैर्ग्रहणीरोगः स्यात् ।

अतीसारग्रहणीरोगयोः समानाभासत्वात् को विशेष इत्याह ।

**सामं शकृन्निरामं वा जीर्णे येनातिसार्यते ॥ १६ ॥**
**सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ।**

सामं पुरीषमथवा निरामं जीर्णे आहारे सति येन व्याधिनाऽतिसार्यतेऽत्यर्थं बहिर्निःसार्यते स व्याधिरतीसारः । अतिसरणा-

द्धेतोः । अतिसरणशब्दनिर्देशेन चास्याऽन्वर्थत्वं द्योतितम् । तदेवमतिसरणादतीसार इत्युच्यते । नन्वेवं सति यदा ग्रहणीदोषेऽप्यतिसरणं कथंचित्स्यात्तदा तस्याप्यतीसारत्वं स्यादित्याशंक्याह । आशुकारीत्यादि । भावप्रधानोऽयं निर्देशः । हेतौ प्रथमा । स्वभावेनाशुकारित्वादतीसारो ग्रहणीदोषादन्य इत्यर्थः । ग्रहणीदोषो हि नाशुकारी किंतर्हि चिरकारी । तथा चाऽह । चिरकृद्ग्रहणीदोष इति ।

अथ ग्रहणीदोषस्य स्वरूपं वर्णयन्नतीसाराद्भूयो भेदमाह ।

**सामं सान्नमजीर्णेऽन्ने जीर्णे पक्कं तु नैव वा ॥ १७॥**
**अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ।**
**चिरकृद्ग्रहणीदोषः संचयाच्चोपवेशयेत् ॥ १८ ॥**

ग्रहणीदोषोऽजीर्णेऽन्ने सामं कदाचित्सान्नं कदाचिज्जीर्णेऽन्ने पक्कं तथा नैव वाऽतिसार्यते । अकस्मात्कदाचिन्निमित्तमंरेणाऽपि मुहुर्मुहुः पुनःपुनर्बद्धं कदाचिन्निमित्तंविना मुहुः शिथिलं संचयादुपवेशयेदिति योज्यम् । अयं तु ग्रहणीदोषश्चिरकृत् ।

**स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ।**

स ग्रहणीदोषः पृथग्दोषैर्वातपित्तकफैः सन्निपातेन चेति चतुष्प्रकारो जायते ।

**प्राग्रूपं तस्य सदनं चिरात्पचनमम्लकः ॥ १९ ॥**
**प्रसेको वक्त्रवैरस्यमरुचिस्तृट्क्लमो भ्रमः ।**
**आनद्धोदरता छर्दिः कर्णक्ष्वेडोऽन्त्रकूजनम् ॥ २० ॥**

तस्य ग्रहणीदोषस्य प्राग्रूपं सदनं चिरात्पचनादि च ।

**सामान्यं लक्षणं कार्श्यं धूमकस्तमको ज्वरः ।**
**मूर्छा शिरोरुग्विष्टंभः श्वयथुः करपादयोः ॥ २१ ॥**

चतुर्विधस्याऽस्य ग्रहणीगदस्य सामान्यं लक्षणं कार्श्यादिकम् ।

**तत्राऽनिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ।**
**पार्श्वोरुवंक्षणग्रीवारुजाऽभीक्ष्णं विसूचिका ॥ २२ ॥**
**रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकीर्तिका ।**
**जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते २३**
**वातहृद्रोगगुल्मार्शःप्लीहपांडुत्वशंकितः ।**
**चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ २४॥**
**पुनःपुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ।**

तत्र तेषु चतुर्षु गदेषु मध्ये वातात्तालुशोषादि स्यात् ।

**पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ॥२५॥**
**पूत्यम्लोद्गारहृत्कंठदाहारुचितृडर्दितः ।**

पित्तेन पीताभः संस्तथा पूत्यम्लोद्गाराद्यर्दितो नीलवर्णादिकं वर्चः सृजति ।

**श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥ २६ ॥**
**आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ।**
**हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ २७ ॥**
**उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ।**
**भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ २८ ॥**
**अकृशस्यापि दौर्बल्यम्**

श्लेष्मणा दुःखं कृच्छ्रेणान्नं पच्यते । छर्यादि च स्यात् । तथा हृदयं स्त्यानं पिंडितमिव मन्यते । जठरं निश्चलं गुरु च । उद्गारश्च दुष्टमधुरः स्यात् । सदनं शरीरस्य । स्त्रीष्वहर्षणादि च स्यात् ।

**सर्वजे सर्वसंकरः ।**

सर्वजे सन्निपातजे सर्वेषां लक्षणानां संकरो मिश्रत्वं भवति ।

**विभागेऽगस्य ये चोक्ता विषमाद्यास्त्रयोऽग्नयः २९**
**तेऽपि स्युर्ग्रहणीदोषाः**

अंगस्य विभागे च ये विषमाद्या विषमतीक्ष्णमंदास्त्रयोऽग्नय उक्तास्तेऽपि ग्रहणीदोषाः स्युः । नन्वेवं सति सप्त ग्रहणीदोषा इति प्राप्नोति । मैवम् । मुख्या संप्राप्तिः पूर्वरूपरूपनिर्देशादियुक्ताश्चत्वार एव ग्रहणीगदा ये तु विषमाद्यास्त्रयस्ते ग्रहणीरोगाभासा इति बोध्यम् ।

**समस्तु स्वास्थ्यकारणम् ।**

समः पुनरग्निः स्वास्थ्यस्याऽरोग्यस्य कारणम् ।

**वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः ।**
**अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ३०॥**

वातव्याध्यादयोऽष्टौ महारोगाः सुदुस्तरा विषमास्तस्मात्तेषु यत्नः कार्य इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां निदानस्थानेऽतिसारग्रहणीरोगयोर्निदानं नामाऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अतीसारग्रहणीरोगनिदानादनंतरं मूत्राघातनिदानमेकसंबंधनत्वादुच्यत इत्याह ।

**अथाऽतो मूत्राघातनिदानं व्याख्यास्यामः ।**
**बस्तिबस्तिशिरोमेढ्रकटीवृषणपायवः ।**
**एकसंबंधनाः प्रोक्ता गुदास्थिविवराश्रयाः ॥ १ ॥**

बस्त्यादीनां द्वंद्वः । बस्त्यादय एकसंबंधनाः प्रोक्ताः । एकं संबंधनं ग्रंथनं येषां त एवम् । तदेवैकसंबंधनत्वमेषां प्रकटयति । गुदेत्यादि । गुदास्थिविवरमाश्रयो येषां त एवम् । तत्राश्रिता इत्यर्थः ।

नन्वत्र मूत्राश्रिता दोषा अवश्यं बस्तिं प्राप्य विकुर्वते । बस्तेश्चाधोमुखत्वान्मूत्रांतःप्रवेशो बस्तिमुखेन न संभाव्यते तस्मान्मूत्राघातानुत्पत्तिरेवेत्याशंक्याह ।

**अधोमुखोऽपि बस्तिर्हि मूत्रवाहिसिरामुखैः ।**

**पार्श्वेभ्यः पूर्यते सूक्ष्मैः स्यंदमानैरनारतम् ॥ २ ॥**
**यैस्तैरेव प्रविश्यैनं दोषाः कुर्वंति विंशतिम् ।**
**मूत्राघातान् प्रमेहांश्च कृच्छ्रान्मर्मसमाश्रयान् ॥ ३ ॥**

हियस्मादर्थे । अपिश्च हेत्वभ्युपगमे । यद्यप्यधोमुखो बस्तिस्तथाऽपि जलमध्यस्थिताधोमुखनवमृत्कुंभवद्धि यस्मात्पार्श्वेभ्यो मूत्रवाहिसिरामुखैः स्रोतोद्वारैः सूक्ष्मैः प्रकृतत्वान्मूत्रं स्यंदमानैः स्रवद्भिरनारतमनवरतं यैरेव मूत्रस्रोतोद्वारैर्बस्तिः पूर्यते । तैरेव मूत्रस्रोतोद्वारैर्दोषा एनं बस्तिं प्रविश्य विंशतिं मूत्राघातान् कुर्वंति तावतश्च प्रमेहान् । किंभूतान् । बस्त्याख्यमर्मसमाश्रयान् । हेतौ द्वितीया । मर्मसमाश्रितत्वात् । कृच्छ्रान् कृच्छ्रसाध्यान् ।

**बस्तिवंक्षणमेढ्रार्तियुक्तोऽल्पाल्पं मुहुर्मुहुः ।**
**मूत्रयेद्वातजे कृच्छ्रे**

अत्र चत्वारो मूत्राघाता वातपित्तकफसन्निपातात्मकास्तत्र वातजे कृच्छ्रे मूत्राघाते बस्त्याद्यार्तियुक्तः पुमानल्पाल्पं कृत्वा मुहुर्मुहुर्मूत्रयेत् ।

**पैत्ते पीतं सदाहरुक् ॥ ४ ॥**
**रक्तं वा**

पैत्ते कृच्छ्रे पुमान् मूत्रं पीतं सदाहरुङ्मूत्रयेत् । अथवा रक्तम् ।

**कफजे बस्तिमेढ्रगौरवशोफवान् ।**
**सपिच्छं सविबंधं च**

कफजे कृच्छ्रे बस्तिमेढ्रगौरवशोफयुक्तः सन् सपिच्छं सविबंधं च रुद्ध्वा मूत्रं मूत्रयेत् ।

**सर्वैः सर्वात्मकं मलैः ॥ ५ ॥**

सर्वैस्त्रिभिर्दोषैः सन्निपतितैर्जाते कृच्छ्रे सर्वात्मकं दोषत्रयलक्षणालिंगितं मूत्रं मूत्रयेत् ।

इदानीमश्मरीं लक्षयति ।

**यदा वायुर्मुखं बस्तेरावृत्य परिशोषयेत् ।**
**मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ ६ ॥**
**संजायतेऽश्मरी घोरा पित्ताद्गोरिव रोचना ।**
**श्लेष्माश्रया च सर्वा स्यात्**

यदा यस्मिन् काले वायुः कुपितो बस्तेर्मुखमावृत्य रुद्ध्वा परिशोषयेन्मूत्रं केवलं कदाचित्सपित्तं कदाचित्सकफमथवा सशुक्रं मूत्रं तदा संजायतेऽश्मरी क्रमाद्यथोत्तरं घोरा । मूत्राश्मरी घोरा । ततोऽपि घोरतरा पित्ताश्मरी । घोरतमा श्लेष्माश्मरी । ततो घोरा घोरतमा शुक्राश्मरीति क्रमशब्दस्यार्थः । वायुना पित्तं संशोष्य गोर्यथा रोचना संजायते तथाऽश्मरीति । सर्वा चाश्मरी श्लेष्माश्रया । श्लेष्मा आश्रय आधारो यस्याः सैवम् । कफमाश्रित्य सर्वाऽश्मरी स्यादित्यर्थः ।

**अथाऽस्याः पूर्वलक्षणम् ॥ ७ ॥**
**बस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ।**
**मूत्रे च बस्तगंधत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ८ ॥**

अथानंतरमस्याः पूर्वलक्षणं प्राग्रूपं बस्त्याध्मानादि ।

**सामान्यलिंगं रुङ्नाभिसेवनीबस्तिमूर्धसु ।**
**विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने ॥ ९ ॥**
**तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ।**
**तत्संक्षोभात् क्षते सास्रमायासाच्चातिरुग्भवेत् १०**

सामान्यलक्षणं नाभ्यादिषु रुग्भवति । तथाऽश्मर्या मार्गनिरोधे सति मूत्रं विशीर्णधारं विच्छिन्नधारं भवेत् । तद्व्यपायादश्मर्यपगमान्नरः सुखमकृच्छ्रेण मेहेन्मूत्रं मुञ्चेत् । कीदृशम् । अच्छं निर्मलम् । गोमेदकोपमम् । गोमेदको रत्नविशेष उपमा यस्य तदेवम् । तस्याः संक्षोभस्तत्संक्षोभो हस्त्यश्वादिनाऽनेकवेदनाप्रादुर्भावस्तस्मात्तत्संक्षोभाद्यत्क्षतं भवति तस्मिन्क्षते सति सास्रं सलोहितं मेहेत् । आयासादध्वादिकृतादतिरुग्भवेत् ।

**तत्र वाताद्भृशार्त्यार्तो दंतान् खादति वेपते ।**
**मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ११ ॥**
**सानिलं मुंचति शकृन्मुहुर्मेहति बिंदुशः ।**
**श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कंटकैरिव १२**

तत्र तास्वश्मरीषु मध्ये वाताद्याऽश्मरी तस्यामुत्पन्नायां सत्यां पुमान् भृशार्त्यार्तोऽत्यंतं पीडया पीडितो दंतान् खादति तथा वेपते कंपते मेहनं मेढ्रं मृद्नाति मलयति नाभिं च हस्ताभ्यां पीडयति । किं कुर्वन् । अनिशमनवरतं क्वणन्नानाविधदुःखोद्भावकं शब्दं विदधत् । तथा सहानिलेन वातसहितं शकृन्मुंचति । तथा मुहुर्मेहति मूत्रं पुनःपुनः सृजति बिंदुशो बिंदुंबिंदुं कृत्वा । अस्य च नरस्याश्मरी श्यावा वर्णतस्तथा रूक्षा कंटकैश्चितेव व्याप्ता भवेत् ।

**पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ।**
**भल्लातकास्थिसंस्थाना रक्तपीताऽसिताऽश्मरी १३॥**

पित्तेन याऽश्मरी तया बस्तिर्दह्यते । पच्यमान इव ऊष्मवान् संतापयुक्तो भवति । सा चाश्मरी भल्लातकास्थिसंस्थाना तदाकारा स्यात् । तथा वर्णतो रक्तपीता । तथाऽसिता कृष्णच्छाया ।

**बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।**
**अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ॥१४॥**

श्लेष्मणा जातायामश्मर्यां बस्तिर्निस्तुद्यत इव शीतलो गुरुश्च स्यात् । अश्मरी च महती स्थूला वातपित्तोत्थाभ्यां सकाशात् । तथा श्लक्ष्णा कोमला । मधुवर्णा माक्षिकाभा । अथवा सिता शुक्ला ।

**एता भवंति बालानां तेषामेव च भूयसा ।**
**आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ॥ १५ ॥**

एतास्तिस्रोऽश्मर्यो बालानामेव भवंति । तथा च तंत्रांतरे ।

तिस्रोऽश्मर्यो दिवास्वप्रशीलनाध्यशनशीतस्निग्धमधुराहारप्रियत्वाद्बालानामेव भवंतीति । तेषां च बालानां जातास्ता भूयसा ग्रहणाहरणे सुखाः । ग्रहणं बडिशादिना आहरणं शस्त्रादिना तस्मिन्सुखाः सुखोपायाः । अत्रैव हेतुमाह । आश्रयेत्यादि । आश्रय आधार उपचयो वृद्धिस्तयोरल्पत्वं तस्माद्धेतोर्बालानामश्मर्या आश्रयोऽल्पो भवति यत्रासावश्मरी जायते । अत एव चाश्रयानुसारेणोपचयोऽप्यश्मर्या बालानामल्पो भवति । अतस्ता ग्रहणाहरणे सुखाः। महतां तु यथोक्तहेत्वभावाद्ग्रहणाहरणे ता दुःखावहाः।

**शुक्राश्मरी तु महतां जायते शुक्रधारणात् ।**
**स्थानाच्च्युतममुक्तं हि मुष्कयोरंतरेऽनिलः ॥ १६ ॥**
**शोषयत्युपसंगृह्य शुक्रं तच्छुष्कमश्मरी ।**
**बस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ॥ १७ ॥**
**तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ।**
**पीडिते त्ववकाशेऽस्मिन्**

तुरवधारणे । महतामेव शुक्राश्मरी जायते न बालानाम् । तथाविधस्य तेषां शुक्रस्याभावात् । कुतो जायते । शुक्रधारणाद्धर्षायुदीरणात्स्थानच्युतस्य शुक्रस्य धारणतः । अत एवाह । स्थानादित्यादि । यस्मात्स्थानाच्च्युतं परिभ्रष्टं बहिरमुक्तमत्यक्तं तदानीं वायुर्मुष्कयोर्वृषणयोरंतरे मध्ये शोषयति । किं कृत्वा । उपसंगृह्य शुक्रं सर्वतो गृहीत्वा । तच्च शुष्कं सदश्मरीति भण्यते। सा च बस्तिरुगादिकारणी । तस्यामुत्पन्नमात्रायां न चिरकालोत्पन्नायां पीडितेऽभिभूतेऽस्मिन्नवकाशे शुक्राश्मरीस्थाने शुक्रमेत्यागच्छति । तथा विलीयते चेति चशब्दो लुप्तनिर्दिष्टो बोध्यः । विशेषेण लीयते तत्रैव सुष्ठु श्लिष्यते कठिनत्वात् ।

**अश्मर्येव च शर्करा॥ १८॥**
**अणुशो वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ।**
**निरेति सहमूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥**

अश्मर्येव च पवनेनाणुशो भिन्ना सती शर्करा स्यात्। नतु तस्या अन्यदुपादानकारणमित्यर्थः । सा शर्करा वातेऽनुलोमगेऽनुलोमं कृत्वा स्थिते सति मूत्रेण सह निरेति बहिर्निष्क्रामति । प्रतिलोमे वायौ सा शर्करा विबध्यते न तु बहिर्निष्क्रामति । अश्मरीत्वनुलोमगेऽपि मरुति न निरेति मूत्रेण सह न निष्क्रामतीत्यनयोर्भेदः । अश्मरीणां भल्लातकादिसंस्थाननिर्देशस्तदनुसारेणाहरणार्थं बस्त्यवयवविपाटनमुपयुज्यते । श्यावादिवर्णनिर्देशश्च बहिर्निष्क्रान्तानां श्यावादिवर्णनिदर्शनेन वातादीननुमाय तत्कृतानां व्रणानां चिकित्सार्थमुपयुज्यते । ननु च संस्थानेनैव वातायनुमानमश्मरीव्रणस्य भविष्यतीति वर्णनिर्देशोऽनर्थकः । नैवम् । संस्थानं प्रायिकमिति केचिन्मन्यंते तस्माद्वर्णनिर्देशोऽपि वाच्यः । प्रायिकत्वे च द्वयोरुपादानं लिंगम् ।

अथ वातबस्त्यादीनाह ।

**मूत्रसंधारिणः कुर्याद्रुद्ध्वा बस्तेर्मुखं मरुत् ।**
**मूत्रसंगं रुजं कंडूं कदाचिच्च स्वधामतः ॥ २० ॥**
**प्रच्याव्य बस्तिमुद्वृत्तं गर्भाभं स्थूलविप्लुतम् ।**
**करोति तत्र रुग्दाहस्पंदनोद्वेष्टनानि च ॥ २१ ॥**
**बिंदुशश्च प्रवर्तेत मूत्रं बस्तौ तु पीडिते ।**
**धारया द्विविधोऽप्येष वातबस्तिरिति स्मृतः॥२२॥**
**दुस्तरो दुस्तरतरो द्वितीयः प्रबलानिलः ।**

मूत्रसंधारिणः पुरुषस्य बस्तेर्मूत्राधारस्य मुखं द्वारं रुद्ध्वा मारुतो मूत्रसंगं कुर्याद्रुजं कंडूं च । स वातबस्तिर्मूत्राघातविशेषः कदाचिददृष्टवशाद्वायुस्तं बस्तिं स्वधामतः स्वस्थानात्प्रच्याव्य च्यावयित्वोद्वृत्तमूर्ध्वमुखं गर्भाभं गर्भसदृशं स्थूलं स्वप्रमाणात् प्रवृद्धं तथा विप्लुतं चंचलं करोति । चशब्दान्न केवलं बस्तिभ्रंशमेवंविधं करोति यावत्तत्र रुगादीनपि । मूत्रं च बिंदुशः बिंदुर्बिंदुः प्रवर्तते । बस्तौ च पीडिते हस्तादिना मूत्रं धारयाऽविच्छिन्नं प्रवर्तते । एष द्विविधो वातबस्तिरिति नाम्ना स्मृतः स च प्रथमो दुस्तरो दुःखेन कृच्छ्रेण तरितुं शक्यते । द्वितीयो वातबस्तिर्दुस्तरतरो यतः प्रबलानिलः।अत एव चाऽत्र प्रबलानिलत्वान्मूत्रस्य बिंदुशः प्रवर्तनम् ।

**शकृन्मार्गस्य बस्तेश्च वायुरंतरमाश्रितः ॥ २३ ॥**
**अष्ठीलाभं घनं ग्रंथिं करोत्यचलमुन्नतम् ।**
**वाताष्ठीलेति साऽऽध्मानविण्मूत्रानिलसंगकृत् २४**

शकृन्मार्गस्य गुदस्य बस्तेश्चांतरं मध्यं वायुराश्रितः सन् ग्रंथिमष्ठीलाभं घनमचलमुन्नतं करोति । सा वाताष्ठीलेत्युच्यते । सा चाध्मानादिकृत् ।

**विगुणः कुंडलीभूतो बस्तौ तीव्रव्यथोऽनिलः ।**
**आविश्य मूत्रं भ्रमति सस्तंभोद्वेष्टगौरवः ॥ २५ ॥**
**मूत्रमल्पाल्पमथवा विमुंचति शकृत्सृजन् ।**
**वातकुंडलिकेत्येषा**

विगुणः कुपितो नत्वनुलोमगः । तथा दोषदेशादिसहकारिकारणवशात् कुंडलाकारगतिः । तथा तीव्रव्यथः । कार्ये कारणोपचारादेवमुक्तः । तथा सह स्तंभेन स्तब्धतया तथोद्वेष्टेन गौरवेण च वर्तते । स एवंभूतो वायुर्मूत्रमाविश्य क्षोभयित्वा बस्तौ भ्रमति । अथवा मूत्रमाविश्य भ्रमति । किंतर्हि शकृत्पुरीषं सृजन्नुद्गमन्मूत्रमल्पाल्पं स्तोकं कृत्वा मुंचति । एवंरूपा वातकुंडलिकोच्यते ।

**मूत्रं तु विधृतं चिरम् ॥ २६ ॥**
**न निरेति विबद्धं वा मूत्रातीतं तदल्परुक् ।**

मूत्रं तु चिरं विधृतं न निरेति न प्रवर्तते । अथवा पवनवशाद्विबद्धं निर्गच्छत्यल्परुक् तन्मूत्रातीतं कथ्यते ।

**विधारणात्प्रतिहतं वातोदावर्तितं यदा ॥ २७ ॥**
**नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा ।**

**कुर्यात्तीव्ररुगाध्मानमपक्तिमलसंग्रहम् ॥ २८ ॥**
**तन्मूत्रजठरम्**

विधारणान्मूत्रवेगस्य रोधात्प्रतिहतं मूत्रं कर्दभूतं वातेनोदावर्तितं यदा नाभेरधस्तादुदरं कर्मभूतमापूरयेत्तदा तीव्ररुजादिकं कुर्यात्तन्मूत्रजठरमित्युच्यते ।

**छिद्रवैगुण्येनानिलेन वा ।**
**आक्षिप्तमल्पं मूत्रं तु बस्तौ नालेऽथवा मणौ ॥२९॥**
**स्थित्वा स्रवेच्छनैः पश्चात्सरुजं वाऽथवाऽरुजम् ।**
**मूत्रोत्संगः स विच्छिन्नतच्छेषगुरुशेफसः ॥ ३० ॥**

छिद्रवैगुण्येन मूत्रद्वारदोषेणाऽनिलेन वा तथाभूतेन यदाक्षिप्तं मूत्रमल्पं किंचिच्छेषं मूत्रं तद्बस्तौ स्थितमथवा नाले मणिकंदे वा स्थितं मणौ वा स्थितम् । तत्र स्थित्वा पश्चादनंतरं शनैर्मंदं मंदं कृत्वा सरुजमथवा नीरुजं स्रवेत् । पुंसः किंभूतस्य । विच्छिन्नतच्छेषगुरुशेफसः । तदिति प्रकृतं मूत्रं परामृश्यते । तस्य मुक्तमूत्रस्य शेषस्तच्छेषः । विच्छिन्नश्चासौ तच्छेषश्च विच्छिन्नतच्छेषस्तेन गुरु शेफो मेढ्रं यस्य स विच्छिन्नतच्छेषगुरुशेफास्तस्य विच्छिन्नतच्छेषगुरुशेफसः । य एवंविधः स मूत्रोत्संग उच्यते ।

**अंतर्बस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।**
**अश्मरीतुल्यरुक् ग्रंथिर्मूत्रग्रंथिः स उच्यते॥ ३१ ॥**

बस्तेर्मुखस्य मध्ये ग्रंथिर्वृत्तो वर्तुलस्तथा स्थिरोऽल्पश्च सहसा झटित्येव भवेत् । अश्मरीतुल्यरुग् ग्रंथिः स मूत्रग्रंथिरुच्यते ।

**मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।**
**स्थानाच्युतं मूत्रयतः प्राक्पश्चाद्वा प्रवर्तते ॥ ३२ ॥**
**भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।**

संजातमूत्रस्य पुंसः स्त्रियं गच्छतो मूत्रयतो मूत्रं कुर्वतः स्थानाच्युतं शुक्रं वायुनोद्धतं ध्मातं भस्मोदकेन प्रतीकाशं तुल्यं प्राङ्मूत्रितात् पश्चाद्वा यत् प्रवर्तते शुक्रं तन्मूत्रशुक्रमुच्यते ।

**रूक्षदुर्बलयोर्वातादुदावृत्तं शकृद्यदा ॥ ३३ ॥**
**मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ।**
**मूत्रं विट्तुल्यगंधं स्याद्विड्विघातं तमादिशेत्॥३४॥**

रूक्षदुर्बलयोः पुंसोर्वातादुदावृत्तं पिंडितं शकृद्यदा मूत्रस्रोतोऽनुपर्येति मूत्रस्रोतोऽभित आगच्छति तदा शकृता संसृष्टं मूत्रं पुरीषसदृशगंधं स्यात्तं विड्विघातमित्यादिशेत् ।

**पित्तं व्यायामतीक्ष्णोष्णभोजनाध्वातपादिभिः ।**
**प्रवृद्धं वायुना क्षिप्तं बस्त्युपस्थार्तिदाहवत् ॥ ३५ ॥**
**मूत्रं प्रवर्तयेत्पीतं सरक्तं रक्तमेव वा ।**
**उष्णं पुनःपुनः कृच्छ्रादुष्णवातं वदंति तम् ॥ ३६ ॥**

पित्तं कर्तृ व्यायामादिभिः प्रवृद्धं वातेनाक्षिप्तं बस्त्युपस्थार्तिदाहयुक्तं मूत्रं कर्मभूतं प्रवर्तयेत् । किंभूतम् । पीतं तथा सह रक्तेन सरक्तं रक्तमेव वा केवलं तथोष्णं मुहुर्मुहुः कृच्छ्रेण मूत्रयेत्तमुष्णवातं वदंति ।

**रूक्षस्य क्लांतदेहस्य बस्तिस्थौ पित्तमारुतौ ।**
**मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७ ॥**

रूक्षस्य पुंसस्तथा क्लांतदेहस्य ग्लानशरीरस्य बस्तिस्थौ पित्तमारुतौ सरुग्दाहं मूत्रस्य क्षयं जनयेतामुत्पादयेताम् । तदाह्वयं मूत्रक्षयसंज्ञम् । मूत्रक्षयमित्यर्थः ।

**पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन च ।**
**कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥३८॥**
**सदाहं रोचनाशंखचूर्णवर्णं भवेच्च तत् ।**
**शुष्कं समस्तवर्णं वा मूत्रसादं वदंति तम् ॥ ३९ ॥**

पित्तमथवा कफो व्यस्तोऽनिलेन तं हन्यते समंतात्पीड्यत आक्रम्यते । अथवा द्वावपि संसर्गरूपौ तेन हन्येते यदि तदा कृच्छ्रेण मूत्रं पीतादिनैकैकेन वर्णेन श्वेतांतेन युक्तं घनं सदाहं सृजेन्मुंचेत् । तच्च शुष्कं कालांतरेण रोचनाशंखचूर्णवर्णं भवेत् । कदाचिद्रोचनाचूर्णवर्णं कदाचिच्छंखचूर्णवर्णं कदाचित्पीतादिसमस्तवर्णं वा स्यात्तं मूत्रसादं वदंति ।

**इति विस्तरतः प्रोक्ता रोगा मूत्राऽप्रवृत्तिजाः ।**
**निदानलक्षणैरूर्ध्वं वक्ष्यंतेऽतिप्रवृत्तिजाः ॥ ४० ॥**

इत्येवं विस्तरेण मूत्राप्रवृत्तिजा मूत्रस्याप्रवृत्तिरप्रवर्तनं ततो जाता रोगा निदानानि च लक्षणानि च तैः प्रकर्षेणोक्ताः । ऊर्ध्वमित्यतोऽध्यायादनंतरं तुल्यस्थानसंख्यादित्वान्मूत्रातिप्रवृत्तिजाः प्रमेहाख्या रोगा वक्ष्यंते वदिष्यंते । अनेनास्य ग्रंथकृता युक्त्या संबंधोऽभिहित इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने मूत्राघातनिदानं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अश्मरीनिदानानंतरं प्रमेहनिदानमारभ्यते ।

**अथाऽतः प्रमेहनिदानं व्याख्यास्यामः ।**
**प्रमेहा विंशतिस्तत्र श्लेष्मतो दश पित्ततः ।**
**षट् चत्वारोऽनिलात्**

प्रमेहा विंशतिर्भवंति । तत्र विंशतिप्रमेहेषु दश श्लेष्मतः प्रमेहाः । षट् पित्ततः । चत्वारो वातात् ।

**तेषां मेदोमूत्रकफावहम् ॥ १ ॥**
**अन्नपानक्रियाजातं यत्प्रायस्तत्प्रवर्तकम् ।**
**स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ २ ॥**
**नवधान्यसुरानूपमांसेक्षुगुडगोरसम् ।**
**एकस्थानासनरतिः शयनं विधिवर्जितम् ॥ ३ ॥**

तेषां प्रमेहाणां मेदोमूत्रकफकरं यदन्नपानक्रियाजातं प्रायो

बाहुल्येन तत्प्रवर्तकमुत्पादकम् । जातशब्दः प्रकारे । क्रिया चेष्टा शय्यासननिद्रालस्यादिका कफकरी । तदेवात्रादिदर्शयितुमाह । स्वाद्वम्लेत्यादि । एकस्थानासने रतिः प्रीतिः । शयनं स्वप्नो विधिवर्जितम् । यथोक्तम् । अकालेऽतिप्रसंगाच्च न च निद्रा निषेविता । सुखायुषी पराकुर्यात्कालरात्रिरिवापरेति ।

**बस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः ।**
**दूषयित्वा वपुः क्लेदस्वेदमेदोरसामिषम् ॥ ४ ॥**

कफः प्रमेहकारणैर्दूषितो बस्तिमाश्रित्य प्रमेहान् कुरुते । किं कृत्वा । वपुरादीन् दूषयित्वा ।

कफजप्रमेहाणां संप्राप्तिमुक्त्वा पित्तप्रमेहसंप्राप्तिमाह ।

**पित्तं रक्तमपि क्षीणे कफादौ मूत्रसंश्रयम् ।**

पित्तं कर्तृ रक्तं मूत्रसंश्रयं दूषयित्वा प्रमेहान् कुरुते । अपिशब्दाद्वपुरादींश्च । कदा । कफादौ सौम्यधातौ क्षीणे सति ।

**धातून् बस्तिमुपानीय तत्क्षयेऽपि च मारुतः ॥ ५ ॥**

मारुतश्च दूषितो धातून् वातप्रमेहसंपादनयोग्यान्बस्तिमुपनीय समंतान्मूत्राधारसमीपं नीत्वा तत्क्षयेऽपि च प्रमेहान् कुरुते । तेषां धातूनां क्षयस्तस्मिंश्च सति । न केवलं धातून्बस्तिमुपानीय यावदधःक्षरणत्वादिना तेषामपि क्षयं कृत्वेत्यपिचेत्यस्याऽर्थः ।

अथ साध्यासाध्यविभागमाह ।

**साध्ययाप्यपरित्याज्या मेहास्तेनैव तद्भवाः ।**
**समासमक्रियतया महात्ययतयाऽपि च ॥ ६ ॥**

स श्लेष्मादिर्भवो जन्म येषां ते तद्भवाः कफादिसमुत्थास्तेनैव विशिष्टेन संप्राप्तिविशेषेण साध्ययाप्यपरित्याज्याः स्युः । तथा च कफप्रमेहा वपुरादिदूषणमात्रोत्थितत्वात्साध्याः । पित्तप्रमेहाणां सौम्यधातुक्षये वपुरादे रक्तस्य च दूषणेन समुत्थानाद्याप्यत्वम् । वातप्रमेहास्तु सर्वधातुक्षयोद्भूतत्वादसाध्याः । अन्यदपि हेत्वंतरं साध्ययाप्यासाध्यान् वक्ति । समेत्यादि । समं चाऽसमं च समासमे समानासमाने । समासमे क्रिये ययोस्तावेवम् । तयोर्भावः समासमक्रियता तया । तथा महात्ययतया । महांश्चासावत्ययो विनाशः शरीरविघटनरूपो महात्ययस्तस्य भावो महात्ययता तया । तत्र कफस्य तथा शरीरक्लेदादेः प्रमेहदूष्यस्याप्यपतर्पणरूपयैकयैव क्रियया साध्यत्वात्कफप्रमेहाः साध्याः । पित्तस्य शीतमधुरादिरूपा क्रिया प्रमेहाणां रूक्षतीक्ष्णादिका दूष्यप्रतिपक्षत्वादौपयिकीति तस्मात्ते पित्तमेहा याप्याः । वातप्रमेहाणां रूक्षतीक्ष्णादि पथ्यम् । वातस्य स्निग्धमधुरादिकं संतर्पणरूपं पथ्यम् । तदेवं विरुद्धक्रियत्वाद्वातमेहा असाध्याः । अपिचेति समुच्चये ।

**सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।**

तेषां मेहानां सामान्यलक्षणं प्रभूतमूत्रताऽऽविलमूत्रता च । ननु दोषस्य कफादेर्दूष्यस्य च वपुःक्लेदादेस्तुल्यत्वात्कथं प्रतिदोषं प्रमेहानेकत्वं स्यादित्याह ।

**दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ७ ॥**
**मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।**

दोषदूष्याविशेषेऽपि समानत्वेऽपि सति तत्संयोगविशेषतो मेहेषु भेदोऽनेकत्वं कल्प्यते । तयोर्दोषदूष्ययोः संयोगः संश्लेषः तत्संयोगस्तस्य विशेषः प्राक्तनकर्मवशाद्भेदो दोषदूष्ययोः संयोगानेकत्वमित्यर्थः । तस्मान्मूत्रस्य यो वर्णादिभेदो वर्णगंधरसस्पर्शादिविशेषस्तेन भेदेन भेदो मेहेषु कल्प्यते निरूप्यते ।

अथोदकमेहादीन् लक्षयति ।

**अच्छं बहु सितं शीतं निर्गंधमुदकोपमम् ॥ ८ ॥**
**मेहत्युदकमेहेन किंचिच्चाविलपिच्छिलम् ।**

उदकमेहेनाऽच्छादिगुणयुक्तं मेहति । किंचिच्चाविलपिच्छिलमिति । एतत्स्वच्छमूत्रादाविलं पिच्छिलं भवति ।

**इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ९ ॥**

इक्षोर्मेहादिक्षुरससदृशं मेहति । अत्यर्थं मधुरं चेतीक्षुरसाद्विशेषमाह ।

**सांद्रीभवेत्पर्युषितं सांद्रमेही प्रमेहति ।**

सांद्रमेही यन्मेहति तत्पर्युषितं रात्रिस्थितं घनीभवेत् ।

**सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ १० ॥**

सुरामेही सुरातुल्यं मेहति । तच्च मूत्रं पर्युषितमेवोपरिभागेऽच्छमधोऽधस्ताद्घनं भवेत् ।

**संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ।**

पिष्टेन पिष्टमेहेन संहृष्टरोमा सन् पिष्टवत् पिष्टसदृशं बहुलं शुक्लं च मेहति ।

**शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ ११ ॥**

शुक्रमेही शुक्राभं शुक्रमिश्रं वा प्रमेहति ।

**मूत्राणून् सिकतामेही सिकतारूपिणो मलान् ।**

सिकतामेही मूत्राणूनसंहतान् सूक्ष्मांश्च मलान् सिकतादृशान् मेहति । मलानिति बहुवचनं जातौ । कफाख्यो ह्येक एव मलोऽत्र गृह्यते ।

**शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १२ ॥**

शीतमेही सुष्ठु बहुशो मधुरमतिशीतलं च मेहति ।

**शनैः शनैः शनैर्मेही मंदं मंदं प्रमेहति ।**

शनैर्मेही शनैर्मेहतीत्युद्देशे मंदं मंदमिति निर्देश इत्यपि पौनरुक्त्यम् ।

**लालातंतुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १३ ॥**

लालामेहेन लालातंतुयुतं पिच्छिलं च मूत्रं प्रमेहति । इति कफप्रमेहा दश ।

पित्तजानाह ।

**गंधवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।**

क्षारतोयमिव गंधवर्णरसस्पर्शैः क्षारमेहेन मेहति ।

**नीलमेहेन नीलाभं**

नीलमेहेन नीलाभं गंधादिभिर्मेहति ।

**कालमेही मषीनिभम् ॥ १४ ॥**

कालमेही मषीसदृशं मूत्रं मेहति ।

**हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ।**

हारिद्रमेही हरिद्रासदृशं कटुकं दहद्दहदिव मूत्रं मेहति ।

**विस्रं मांजिष्ठमेहेन मंजिष्ठासलिलोपमम् ॥ १५ ॥**

मांजिष्ठमेही मंजिष्ठाजलसदृशं विस्रं च मेहति ।

**विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।**

रक्तमेहेन विस्रकं मेहति ।

अधुना वातजान् वक्ति ।

**वसामेही वसामिश्रं वसां वा मूत्रयेन्मुहुः ॥ १६ ॥**

वसामेही वसामिश्रं वसां वा पुनःपुनर्मूत्रयेत् ।

**मज्जानं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।**

मज्जमेही मज्जानं मज्जमिश्रं वा पुनःपुनर्मेहति ।

**हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥ १७ ॥**
**सलसीकं विबद्धं च हस्तिमेही प्रमेहति ।**

हस्तिमेही मत्तगज इवानवरतं वेगरहितं लसीकया सह विबद्धं च मूत्रं प्रमेहति ।

**मधुमेही मधुसमम्**

मधुमेही मधुसमं प्रमेहति ।

**जायते स किल द्विधा ॥ १८ ॥**

**क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ।**

स तु मधुमेहो वायौ धातुक्षयात्कुपिते सत्यथवा दोषावृतपथे मरुति किल द्विधा जायते । अत्र च केचिदेवाचार्या द्विधा आहुः । बहवस्त्वेकमेव । धातुक्षयं वातकोपजमाहुर्न तु मार्गावृतवातकोपजमिति सूचनार्थः किलशब्दः । वायोस्तु द्विधा कोपः । तथाचोक्तम् । वायोर्धातुक्षयात्कोपो मार्गस्यावरणेन चेति ।

**आवृतो दोषलिंगानि सोऽनिमित्तं प्रदर्शयेत् ॥१९॥**
**क्षीणः क्षणात्क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ।**

स वायुरावृत्तमार्गो लिंगानि वातावरकदोपलक्षणानि वातशोणितनिदानोक्तान्यनिमित्तमकस्मात् प्रदर्शयेच्चलस्वभावत्वाद्वायोः । अत एव च क्षणात्क्षीणो बस्तेरपूरणाद्रिक्तः । क्षणाच्च पूर्णो मूत्राशयपूरणात्पूर्णो नतु रिक्तः । अत एव दोषावृतमार्गवातकोपजत्वादसौ कृच्छ्रसाध्यतां भजते नतु धातुक्षयवातकोपजवदत्यंतासाध्यताम् ।

**कालेनोपेक्षिताः सर्वे यद्यांति मधुमेहताम् ॥ २० ॥**
**मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ।**
**सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥ २१ ॥**

यद्यस्मात्सर्वे मेहाः कालेनोपेक्षिताः संतो मधुमेहतां यांति । यच्च यस्माच्च सर्वेषु मधुरं मध्विव मधुसदृशं मेहति । तनोः शरीरस्य च स्वभावादेव माधुर्यमतोऽस्मात्कारणसंदोहात्सर्वेऽपि मधुमेहसंज्ञाः ।

**अविपाको रुचिश्छर्दिर्निद्राकासः सपीनसः ।**
**उपद्रवाः प्रजायंते मेहानां कफजन्मनाम् ॥ २२ ॥**

कफजानां मेहानामविपाकादय उपद्रवाः प्रजायंते ।

**बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।**
**दाहस्तृष्णाम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम्**

पित्तजन्मनां बस्त्यादितोदादयो जायंते ।

**वातिकानामुदावर्तकंठहृद्ग्रहलोलताः ।**
**शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥२४॥**

वातिकानामुदावर्तादयः स्युः ।

प्रमेहिणां च पिटिकाः शराविकाद्याः प्रायेण भवंतीति ता एवाह ।

**शराविका कच्छपिका जालिनी विनताऽलजी ।**
**मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २५ ॥**
**विद्रधिश्चेति पिटिकाः प्रमेहोपेक्षया दश ।**
**संधिमर्मसु जायंते मांसलेषु च धामसु ॥ २६ ॥**

शराविकादयो दश पिटिकाः प्रमेहाणामुपेक्षया जायंते । संधिमर्मसु मांसलेषु च बहुमांसेषु स्थानेषु ।

**अंतोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।**
**शरावमानसंस्थाना पिटिका स्याच्छराविका ॥२७॥**

शराविकासंज्ञा पिटिकाऽतोन्नतत्वादिगुणयुक्ता भवति । तथा शरावस्येव प्रमाणं संस्थानमाकारश्च यस्याः सैवम् ।

**अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ।**
**श्लक्ष्णा कच्छपपृष्ठाभा पिटिका कच्छपी मता॥२८॥**

अर्तिः पीडा । निस्तोदो विच्छिन्नव्यथनम् । अवगाढावर्तिनिस्तोदौ यस्याः सैवम् । तथा महावस्तुपरिग्रहा शरीरावयवविशेष आश्रयो यस्याः सैवम् । तथा श्लक्ष्णा कच्छपपृष्ठतुल्या च कच्छपीसंज्ञा पिटिका मता । तंत्रकृतामिति शेषः ।

**स्तब्धा सिराजालवती स्निग्धस्रावा महाशया।**
**रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी॥२९॥**

स्तब्धादिगुणयुक्ता जालिनीसंज्ञा।

**अवगाढरुजा क्लेदा पृष्ठे वा जठरेऽपि वा।**
**महती पिटिका नीला विनता विनता स्मृता॥३०॥**

अवगाढरुजादियुक्ता पिटिका महतीसंज्ञा नीला नीलवर्णा विनता नतून्नता। सा च विनतासंज्ञा पृष्ठे जठरे वा स्यात्।

**दहति त्वचमुत्थाने भृशं कष्टा विसर्पिणी।**
**रक्तकृष्णातितृट्स्फोटदाहमोहज्वराऽलजी॥ ३१॥**

अलजीसंज्ञा उत्थाने सति त्वचं दहति। अतिदुःसहा विसर्पणशीला तथा रक्तकृष्णाऽतितृडादियुक्ता च।

**मानसंस्थानयोस्तुल्या मसूरेण मसूरिका।**

मसूरिकासंज्ञा मसूरेण प्रमाणाकृतिभ्यां तुल्या।

**सर्षपामानसंस्थाना क्षिप्रपाका महारुजा॥ ३२॥**
**सर्षपा सर्षपातुल्यपिटिकापरिवारिता।**

सर्षपासंज्ञा सर्षपातुल्यप्रमाणाकारा तथा शीघ्रपाका महारुजा च। तथा सर्षपासदृशीभिः पिटिकाभिः परिवारिता च।

**पुत्रिणी महती भूरिसुसूक्ष्मपिटिकावृता॥ ३३॥**

पुत्रिणीसंज्ञा प्रमाणेनाऽपरपिटिकापेक्षया महती तथा भूरिभिः सुसूक्ष्माभिः पिटिकाभिराचिता च।

**विदारीकंदवद्वृत्ता कठिना च विदारिका।**

विदारिकासंज्ञा विदारीकंद इव वर्तुला कठिना च स्यात्।

**विद्रधिर्वक्ष्यतेऽन्यत्र**

विद्रधिरन्यत्रेत्यतोऽध्यायादन्यस्मिन्ननंतराध्याये वक्ष्यते भणिष्यते।

**तत्राद्यं पिटिकात्रयम्॥ ३४॥**
**पुत्रिणी च विदारी च दुःसहा बहुमेदसः।**

तत्र तासु पिटिकासु मध्ये आद्यं शराविकाकच्छपिकाजालिनीत्येतत्पिटिकात्रयं तथा पुत्रिणी विदारिका चेति पंच दुःसहाः कृच्छ्रसाध्यत्वात्। यतो बहुमेदस एताः संभवंति।

**सह्याः पित्तोल्बणास्त्वन्याः संभवंत्यल्पमेदसः॥३५॥**

अन्या एताभ्योऽपरास्तु पित्तोल्बणाश्चतस्रः सह्याः सोढुं शक्याः। सुखसाध्यत्वात्। ताश्चाल्पमेदसः संभवंति।

**तासु मेहवशाच्च स्याद्दोषोद्रेको यथायथम्।**

तासु पिटिकासु मेहानुरोधाद्दोषोद्रेको यथायथं यथास्वं स्यात्। वातमेहजासु वाताधिक्यं पित्तमेहजासु पित्ताधिक्यं कफमेहजासु कफाधिक्यम्। उद्रेकशब्देनैतद्द्योतयति। त्रिदोषजाः सर्वा एता इति।

**प्रमेहेण विनाप्येता जायंते दुष्टमेदसः।**
**तावच्च नोपलक्ष्यंते यावद्वस्तुपरिग्रहः॥ ३६॥**

एताः पूर्वोक्ताः पिटिकाः प्रमेहेण विनाप्यप्रमेहिणोऽपि पुंसो दुष्टमेदसो जायंते। जाता अपि तास्तथाविधस्य नरस्य तावन्न लक्ष्यंते यथायथं लक्षणं नोत्पद्यते। यावद्यथास्वं पृष्ठोदरादिवस्त्वासामाधारत्वेन तंत्रकृता यत्परिभाषितं तन्न परिगृहीतम्। एवं चिरेण कालेन चोत्पन्ना अपि ज्ञायंत इत्यर्थः।

**हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम्।**
**यो मूत्रयेन्न तं मेहं रक्तपित्तं तु तद्विदुः॥ ३७॥**

मेहस्य यत् प्राग्रूपं तेन वर्जितं हारिद्रवर्णं रक्तं वा यो मूत्रयेत्तं मेहं न विदुः किंतर्हि रक्तपित्तमित्याहुः।

**स्वेदोऽगगंधः शिथिलत्वमंगे**
**शय्यासनस्वप्नसुखाभिषंगः।**
**हृन्नेत्रजिह्वाश्रवणोपदेहो**
**घनांगता केशनखातिवृद्धिः॥ ३८॥**
**शीतप्रियत्वं गलतालुशोषो**
**माधुर्यमास्ये करपाददाहः।**
**भविष्यतो मेहगणस्य रूपं**
**मूत्रेऽभिधावंति पिपीलिकाश्च॥ ३९॥**

एतद्भविष्यतो भाविनो मेहगणस्य विंशतिसंख्यस्य स्वेद इत्यादिरूपम्। न केवलमेतत्प्राग्रूपं यावत्पिपीलिका मूत्रेऽभिधावंति। मधुररसप्रियत्वात्तेषाम्। मुनिस्त्वत्र नखवृद्धिं न जगाद।

**दृष्ट्वा प्रमेहं मधुरं सपिच्छं**
**मधूपमं स्याद्द्विविधो विचारः।**
**संतर्पणाद्वा कफसंभवः स्यात्**
**क्षीणेषु दोषेष्वनिलात्मको वा॥ ४०॥**

मधूपमं माक्षिकतुल्यं मधुरं तथा सह पिच्छया शाल्मलीनिर्यासेन तुल्यया वर्तत इति सपिच्छमेवंविधं प्रमेहं दृष्ट्वा तदानीं द्विविधो विचारः स्यात्। संपूरणात्कारणात्किमयं कफसंभवो मेहोऽपतर्पणसाध्यः। उत क्षीणेषु दोषेषु कदाचित्कफादिदोषक्षयात्तर्पणसाध्योऽनिलात्मकः स्यादिति संदिहीत मंदबुद्धिः। तीक्ष्णमतिस्तु कफमेहान् वातमेहांश्च लिंगांतरैः सम्यग्वेत्त्येव।

---

* यद्यपि निदानानंतरं पूर्वरूपं वक्तव्यं तथापि निदानलक्षणानंतरमत्र निदानलिंगयोश्चिकित्सांगत्वप्रतिपादनार्थं त्वनयोः पूर्वमभिधानम्। अथवा। अवश्यं च वक्तव्यानां कामचारमभिधानम्। एवमन्यत्रापि व्यतिक्रमे द्रष्टव्यम् इति मधुकोशभाष्ये।

अधुना यदुक्तं साध्ययाप्यपरित्याज्याः कफादिसंभवा इत्यस्यापवादमाह ।

**सपूर्वरूपाः कफपित्तमेहाः**
**क्रमेण ये वातकृताश्च मेहाः ।**
**साध्या न ते पित्तकृतास्तु याप्याः**
**साध्यास्तु मेदो यदि नातिदुष्टम् ॥४१॥**

सह पूर्वरूपैः स्वेदोऽङगंध इत्यादिभिर्वर्तंतेऽनवरतं कृत्वाऽनुबध्यंते ये ते सपूर्वरूपा असाध्याः । सर्वेषां पूर्वरूपाव्यभिचारेऽपि विशेषणं साकल्यप्रापणार्थम् । सर्वैः पूर्वरूपैः सह ये वर्तंते ते कफादिमेहाः पित्तमेहाश्चासाध्याः साधयितुमशक्यत्वात् । उपलक्षणं चेदम् । अपरेऽपि रोगाः सपूर्वरूपाः प्रायेणासाध्या एव । तथा क्रमेण कफानुपूर्व्या ये वातकृता मेहास्तेऽसाध्याः । ननु वातकृता मेहा असाध्या इति प्रागुक्तमेव तत्किमनेन ग्रंथेनेति । ब्रूमः । अक्रमेण प्रथममेव ये वातोत्पन्नास्ते त्याज्या इति पूर्वमुक्तम् । इह तु क्रमेण प्रथमं कफप्रमेहास्ततः पित्तप्रमेहास्ततः कालेन त एव ये वातप्रमेहाः संपन्नास्ते पूर्वकफप्रमेहत्वात्साधयितुमपि शक्यंत इत्याशंकायां क्रमेण ये वातकृतास्तेऽसाध्या इत्युक्तम् । पित्तकृतास्त्वसपूर्वरूपा अपि याप्या असमक्रियत्वादिति प्राङ्निर्दिष्टम् । तेषां यदि मेदो नातिदुष्टं भवेत्तदा तेऽपि याप्याः संतः साध्या भवंति । मेदो नाऽतिदुष्टमित्यनेनैतज्ज्ञापयति । सर्वमेहेषु मेदोदुष्टिरवश्यंभाविनीति मेहिनो राजयक्ष्मिणश्च केशनखातिवृद्धिः किट्टबाहुल्याद्भवति । रोगस्वभावादित्यन्ये । वृत्तान्युपजातिसंज्ञानि ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां निदानस्थाने प्रमेहनिदानं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

प्रमेहनिदानादनंतरं विद्रधिनिदानारंभो यतोऽनंतरेऽध्याये पिटिकालक्षणावसरे विद्रधिर्वक्ष्यत इत्युक्तमतस्तमेव विद्रधिं लक्षयितुमस्याध्यायस्य प्रसंग इत्याह ।

**अथाऽतो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः**
**भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः ।**
**जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ १ ॥**
**दुष्टं त्वङ्मांसमेदोस्थिस्नावासृक्कंडराश्रयः ।**
**यः शोफो बहिरंतर्वा महामूलो महारुजः ॥ २॥**
**वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः ।**
**दोषैः पृथक्समुदितैः शोणितेन क्षतेन च ॥ ३ ॥**

पर्युषितादिभिर्भुक्तैस्तथा जिह्मशय्याविचेष्टाभिः । विविधाश्चेष्टा विचेष्टाः । शय्या च विचेष्टाश्च शय्याविचेष्टाः । जिह्माश्च ताः शय्याविचेष्टाश्च ताभिः । तथा तैस्तैस्तत्रतत्रासृक्प्रदूषणैश्च निर्दिष्टैः शोफो जायते दुष्टत्वगाद्याश्रयो बहिर्बहिर्भागेऽतरंतर्भागे वा स शीघ्रविदाहित्वाच्छोफः षट्प्रकारो विद्रधिः स्मृतोऽभिहितः । शोफशब्दः पृषोदरादित्वात्साधुः । त्वक् च मांसं च मेदश्च अस्थि च स्नाव चासृक् च कंडरा च ता एवम् । सुमहान् स्नायुसंघातः कंडरेत्यभिधीयते । दुष्टा दोषैर्दूषितास्त्वङ्मांसादय आधारो यस्य शोफस्य स दुष्टत्वङ्मांसमेदोस्थिस्नावासृक्कंडराश्रयः । तथा महामूलस्तथा महारुजः । अनेनाऽस्य दुरुपक्रमत्वमुक्तम् । तथा वृत्तः स्यादथवा आयतो न वर्तुलः । इत्यनेनास्य संस्थानमुक्तम् । षोढेत्युक्तमथ तदेव षोढात्वं प्रतिपादयितुमाह । दोषैरित्यादि । पृथग्दोषैर्वातपित्तकफैस्त्रयः । समुदितैः सन्निपातेनैकः । तथा शोणितेन दोषाधिष्ठितेन क्षतेन शस्त्रादिघातादिना ।

षड्विधस्याऽपि शोफस्य विद्रध्याख्यस्यांतर्बहीरूपतया द्विधात्वमित्याह ।

**बाह्योऽत्र तत्रतत्रांगे दारुणो ग्रथितोन्नतः ।**
**आंतरो दारुणतरो गंभीरो गुल्मवद्घनः ॥ ४ ॥**
**वल्मीकवत्समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ।**

अत्रानयोर्बाह्याभ्यंतरभेदभिन्नयोर्विद्रध्योर्बाह्यो विद्रधिस्तत्रतत्र नाभ्यादावंगे जायते । तथा दारुणो ग्रथितोन्नतः । ग्रथित इव ग्रथितः । उन्नत उत्तुंडितः । शोफस्य स्वभावोन्नतत्वादुन्नतग्रहणमतिशयार्थम् । आंतरो दारुणतरः । तथा गंभीरोऽतर्निगूढः । तथा गुल्मवद्घनो गुल्मेन तुल्यः । तथा समुच्छ्रायी उन्नतो वल्मीकशिखरवत् । तथा शीघ्रघाती बाह्यविद्रधितः शीघ्रव्यापादकः । अग्निशस्त्रवदग्निशस्त्रतुल्यः ।

**नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवंक्षणे ॥ ५ ॥**
**स्याद्वृक्कयोरपाने च**

नाभ्याद्यन्यतमे देशे चायं स्यात् ।

**वातात्तत्राऽतितीव्ररुक् ।**
**श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः ॥ ६ ॥**
**व्यधच्छेदभ्रमानाहस्पंदसर्पणशब्दवान् ।**

तत्र तेषु विद्रधिषु मध्ये वातात्तीव्ररुगादिः शब्दवानित्येतदंतलक्षणः स्यात् ।

**रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान् ॥ ७ ॥**
**क्षिप्रोत्थानप्रपाकश्च**

पित्ताद्रक्तताम्रासितादिकः क्षिप्रोत्थानप्रपाकश्चेत्यंतलक्षणः ।

**पांडुः कंडूयुतः कफात् ।**
**सोत्क्लेशशीतकस्तंभजृंभारोचकगौरवः ॥ ८ ॥**
**चिरोत्थानविदाहश्च**

कफात् पांडुवर्णेन तथा कंडूयुत इत्यादिचिरोत्थानविदाहश्चेत्यंतलक्षणः स्यात् ।

**संकीर्णः सन्निपाततः ।**

सन्निपातजो विद्रधिः संकीर्णो वातादिदोषव्यामिश्रलक्षणः ।

**सामर्थ्याच्चाऽत्र विभजेद्बाह्याभ्यंतरलक्षणम् ॥ ९ ॥**

अत्र विद्रधौ पूर्वोक्ताद्दारुणाद्दारुणतरत्वादिलक्षणात् सामर्थ्याद्बाह्याभ्यंतरस्य लक्षणं विभजेत् । बाह्यस्य विद्रधेस्तथाऽभ्यंतरस्य लक्षणं वदेत् ।

**कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः ।**
**पित्तलिंगोऽसृजा बाह्यः स्त्रीणामेव तथांतरः ॥१०॥**

रक्तेन विद्रधिः कृष्णस्फोटैरावृतश्चितो यावत्तीव्रदाहरुजाज्वरः तथा पित्तलिंगो रक्तताम्रासित इत्यादिलक्षणः स च बाह्यो बाह्य एव नांऽऽतरो नराणां वस्तुस्वभावात् । आंतरो यो विद्रधिरसृजा जायते स स्त्रीणामेव न नराणां वस्तुस्वभावात् ।

क्षतविद्रधिं लक्षयति ।

**शस्त्राद्यैरभिघातेन क्षते वाऽपथ्यकारिणः ।**
**क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन् ॥ ११ ॥**
**पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्युपद्रवम् ।**

शस्त्रलोष्टाद्यैर्योऽभिघातस्तेन हेतुना यः क्षतोष्माऽथवा योऽभिघातमंतरेणाऽपि व्रणाद्युद्भवात्क्षते जाते सत्यपथ्यकारिणः पुंसो यः क्षतोष्माऽग्निः स वायुना विक्षिप्तः पित्तमीरयन् कोपयन् । किंभूतं पित्तम् । सरक्तम् । पित्तासृग्भ्यामुत्पन्नयोर्विद्रध्योर्यल्लक्षणं तत्समानलक्षणं विद्रधिं कुर्यात् । तथा भूर्युपद्रवम् । इयानेव चास्य विशेषः पित्तासृग्विद्रध्योः सकाशात् ।

**तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ १२ ॥**

तेषु विद्रधिषूपद्रवविशेषोऽधिष्ठानविशेषाद्भवति ।

तमेवोपद्रवभेदं दर्शयति ।

**नाभ्यां हिध्मा भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च ।**
**श्वासो यकृति रोधस्तु प्लीन्ह्युच्छ्वासस्य तृट् पुनः१३**
**गलग्रहश्च क्लोम्नि स्यात्सर्वांगप्रग्रहो हृदि ।**
**प्रमोहस्तमकः कासो हृदये घट्टनं व्यथा ॥ १४ ॥**
**कुक्षिपार्श्वांतरांसार्तिः कुक्षावाटोपजन्म च ।**
**सक्थ्नोर्ग्रहो वंक्षणयोर्वृक्कयोः कटिपृष्ठयोः ॥ १५ ॥**
**पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ।**

नाभ्यां जाते विद्रधौ हिध्मा विशेषेण भवेत् । बस्तौ जाते मूत्रं पूतिं कृच्छ्रेण भवेत् । यकृति जाते श्वासः स्यात् । प्लीह्नि जात उच्छ्वासस्य रोधः । क्लोम्नि जाते गलग्रह इव गलग्रहो व्याधिविशेषः स्यात्तृष्णा च । हृदि जाते सर्वस्यांऽगस्य प्रकर्षेण ग्रहः स्यात् । तथा प्रमोहादयः स्युः । तमकः श्वासविशेषः । हृदये घट्टनं व्यथा च । कुक्षौ जाते सति कुक्षिपार्श्वयोरंतरेंऽसयोश्च पीडा भवति । तथा कुक्षावाटोपसंभवः । वंक्षणयोर्जाते सक्थ्नोर्ग्रहो निश्चल इव सक्थिनी जायेते । वृक्कयोर्जाते कट्याः पृष्ठस्य च ग्रहः पीडा च पार्श्वयोः स्यात् । पायौ गुदे जाते पवनस्याऽपानाख्यस्य वायोर्निरोधः स्यात् ।

**आमपक्वविदग्धत्वं तेषां शोफवदादिशेत् ॥ १६ ॥**

तेषां विद्रधीनामामत्वं पक्वत्वं विदग्धत्वं पाकातिक्रांतत्वं शोफवदादिशेत् । शोफानामिव शोफवत् । षष्ठ्यंताद्वतिः । तत्र शोफस्य शस्त्रकर्मविधौ शोफोऽल्पोऽल्पोष्मरुगित्यादिना ग्रंथेनामादिलक्षणमुक्तं तथैव विद्रधिषु बोध्यम् ।

**नाभेरूर्ध्वं मुखात्पक्वाः प्रस्रवंत्यधरे गुदात् ।**
**उभाभ्यां नाभिजो**

नाभेरूर्ध्वमूर्ध्वप्रदेशेषूत्पन्नाः पक्वाः संतो मुखादास्यात् स्रावं स्रवंति । नाभेरधरेऽधस्तात् पक्वाः संतो गुदात् स्रावं स्रवंति । नाभिजः पुनर्विद्रधिरुत्पन्नो गुदास्यानुभयतः स्रावं स्रवति । गुदं चास्यं च गुदास्यं तस्मात् ।

**विद्याद्दोषं क्लेदाच्च विद्रधौ ॥१७॥**
**यथास्वं व्रणवत्**

विद्रधौ व्रण इव यथास्वं वातादिदोषं क्लेदाद्विद्यात् । व्रणप्रषेधोक्तया रीत्या मस्तुलुंगपुलाकांबुतुल्यतन्वल्पसंस्रुत्यादिकया वातिकं विद्रधिं विद्यात् । मूत्रकिंशुकभस्मांबुतैलांभोष्णबहुस्रुतेत्यादिकया च पित्तविद्रधिं विद्यात् । बहुश्वेतघनस्रुत्यादिकया च कफजं विद्रधिं विद्यात् । चशब्दान्न, केवलं पूर्वोक्ताद्वातात्तत्रातितीव्ररुगित्यादेर्वातादिलक्षणाद्वातादिदोषविद्रधिं जानीयात् । क्लेदाच्चेत्यर्थः । व्रणवदिति सप्तम्यंताद्वतिः । विद्रधाविति सप्तम्यंतनिर्देशात् । तथाचोक्तं भाष्ये । उपमाने यः संशयः स उपमेयाद्व्यावर्तत इति ।

अथैषां साध्यासाध्यविभागार्थमाह ।

**तत्र विवर्ज्यः सन्निपातजः ।**
**पक्वो हृन्नाभिबस्तिस्थो भिन्नोंऽतर्बहिरेव वा ॥ १८ ॥**
**पक्वश्चांतः स्रवन्पक्वात् क्षीणस्योपद्रवान्वितः ।**

सन्निपातजो यो विद्रधिः स विवर्ज्योऽसाध्यत्वात् । तथा पक्वोंऽतर्बहिरेव वा भिन्नोंऽतरंतर्भिन्नो बाह्यो बहिर्भिन्नो हृन्नाभिबस्तिस्थो वर्ज्य एव । पक्वश्चांतरो हृदादिभ्योऽन्यत्रापि जातो वक्त्रेण स्रवन् क्षीणस्योपद्रवैर्हिध्मादिभिर्युक्तो वर्ज्य एव ।

इदानीं स्तनविद्रधिर्योषितो यथा स्यात् तथा वक्ति ।

**एवमेव स्तनसिरा विवृताः प्राप्य योषिताम् ॥१९॥**
**सूतानां गर्भिणीनां वा संभवेच्छ्वयथुर्घनः ।**
**स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ॥ २० ॥**
**नाडीनां सूक्ष्मवक्त्रत्वात्कन्यानां तु न जायते ।**

यथैव विद्रध्याख्यः श्वयथुविशेषो भुक्तैः पर्युषितादिभिस्तैस्तैश्चासृक्प्रदूषणैः । दुष्टत्वङ्मांसमेदोऽस्थिस्नावासृक्कंडराश्रयस्तथैव सूतानां गर्भिणीनां वा स्त्रीणां स्तने सदुग्धेऽथवाऽदुग्धे स्तनसिराः विवृताः प्राप्याऽऽक्रम्य बाह्यविद्रधिलक्षणः । बाह्योऽत्र तत्रत-

त्रांग इत्यादिलक्षणो घनो निबिडो यः श्वयथुः संभवेत् स स्तनविद्रधिसंज्ञः । नाडीनां स्तनसिराणां सूक्ष्मवक्त्रत्वात्स कन्यानां न जायते ।

अथ श्वयथुसामान्यादिदानीं वृद्धिवध्मीपरनामानं व्याधिं वक्तुमुपक्रमते ।

**क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन् ॥ २१ ॥**
**मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः ।**
**प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ २२ ॥**

वायुः कुपितो वृद्धिं करोति । किं धातुक्षयात् कुपितो नेत्याह । रुद्धगतिः । रुद्धा गतिर्यस्येति रुद्धगतिरावृतमार्ग इत्यर्थः । किंभूतः । शोफशूलकरः । तथा चरन् देशाद्देशांतरं गच्छन् । वंक्षणतस्ततो देशान्मुष्कौ वृषणौ प्राप्य तथा फलकोशाभिवाहिनीः सिराः प्रकर्षेण पीडयित्वा । कस्य वृद्धिं करोतीत्याह । फलकोशयोर्वृषणयोः ।

अधुनास्य व्याधेः संख्यां कुर्वन्नाह ।

**दोषास्रमेदोमूत्रांत्रैः स वृद्धिः सप्तधा गदः ।**
**मूत्रांत्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥ २३ ॥**

पृथग्वातपित्तकफैर्दोषैस्तथाऽस्रेण मेदसा मूत्रेण वा तथाऽऽन्त्रेण वा । एवं दोषास्रमेदोमूत्रांत्रैः स वृद्ध्याख्यो गदः सप्तधा सप्तप्रकारो मतः । न केवलं वृद्ध्याख्यो यो गदः स एवानिलजो यावन्मूत्रांत्रजावपि यौ वृद्ध्याख्यौ गदौ तावप्यनिलजौ । नन्वेवं पृथङ्निर्देशो मूत्रांत्रजयोः कर्तुमयुक्तोऽनिलजत्वादित्याह । हेतुभेदस्तु केवलम् । सत्यम् । मूत्रांत्रजावप्यनिलाज्जायेते । किंतु कारणभेदान्मूत्रांत्रजाविति निर्दिष्टौ । यतो मूत्रांत्रेऽधिष्ठाय वायुर्मूत्रांत्रजगदौ वृद्ध्याख्यौ करोति । एवं तौ परमार्थतो वातजावपि मूत्रांत्रजावुच्येते । तथारूपाद्धेतुभूतादुत्पन्नत्वात् । एतच्चोपलक्षणमात्रम् । मेदोरक्तजावपि वृद्धिगदौ दोषजावेव । कफपित्ताभ्यां दूष्यसंज्ञके मेदोरक्तेऽधिष्ठाय कृतत्वात् । तस्मान्मेदोरक्तहेतुवशान्मेदोरक्तजाविति संज्ञया तावुक्तौ । एवमन्येऽप्येवंरूपा व्याधयो वाच्याः ।

**वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ।**

तत्र वाताद्वृद्धिर्वातेन पूरिता या दृतिर्भस्त्रा तस्या इव स्पर्शो यस्य स एवंभूतो भवति । तथा रूक्षस्तथाऽहेतुर्निमित्तं विना रुक् पीडा यस्मिन्स एवम् ।

**पक्वोदुंबरसंकाशः पित्ताद्दाहोष्मपाकवान् ॥ २४ ॥**

पित्ताद्वृद्धिः पक्वोदुंबरफलतुल्यो दाहादिमांश्च स्यात् ।

**कफाच्छीतो गुरुः स्निग्धः कंडूमान् कठिनोऽल्परुक् ।**

कफाद्वृद्धिः शीतादियुक्तः स्यात् ।

**कृष्णस्फोटावृतः पित्तवृद्धिलिंगश्च रक्ततः ॥ २५ ॥**

रक्ताद्वृद्धिः कृष्णस्फोटैश्चितः पित्तवृद्धिलिंगश्च । पित्त वृद्धिलिंगानीव लिंगानि यस्य स एवम् । सप्तम्युपमानपूर्वस्येत्यादिनोत्तरपदलोपी समासः ।

**कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ।**

मेदसा वृद्धिः कफवदिति कार्ये कारणोपचारात्कफकार्यो रोगः कफ उक्तः । विशेषमत्राह । मृदुस्तालकफोपम इति ।

**मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ॥ २६ ॥**
**अंभोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः ।**
**मूत्रकृच्छ्रमधस्ताच्च वलयं फलकोशयोः ॥ २७ ॥**

मूत्रजो वृद्धिर्मूत्रधारणशीलस्य जलपूर्णभस्त्रेव स्यात् । स तु मूत्रजो वृद्धिर्गच्छतो व्रजतः क्षोभं याति सरुक् मृदुश्च स्यात् । तथा मूत्रकृच्छ्रं स्यात् । फलकोशयोरधस्ताच्च वलयं कटकं स्यात् ।

**वातकोपिभिराहारैः शीततोयावगाहनैः ।**
**धारणेरणभाराध्वविषमांगप्रवर्तनैः ॥ २८ ॥**
**क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रांत्रावयवं यदा ।**
**पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ।**
**कुर्याद्वंक्षणसंधिस्थो ग्रंथ्याभं श्वयथुं तदा ॥ २९ ॥**
**उपेक्ष्यमाणस्य च मुष्कवृद्धि-**
**माध्मानरुक्स्तंभवतीं स वायुः ।**
**प्रपीडितोऽतः स्वनवान् प्रयाति**
**प्रध्मापयन्नेति पुनश्च मुक्तः ॥ ३० ॥**
**अंत्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ।**

वातकोप्याहारादिभिरन्यैश्च पूर्वोक्तैः क्षोभणैः कोपनैः क्षुभितः कुपितो यदाल्पस्यांत्रस्यावयव एकदेशस्तं स्वनिवेशात् स्वस्थानाद्विगुणीकृत्याधो नयेत्तदा पवनो वंक्षणसंधिस्थो ग्रंथ्याभं श्वयथुं कुर्यात् । उपेक्ष्यमाणस्येत्यादि । उपेक्ष्यमाणस्याचिकित्स्यमानस्य वृद्ध्याख्यस्य गदस्य स पूर्वनिर्दिष्टो वायुर्मुष्कयोर्वृद्धिं वर्धनं कुर्यात् । किंभूताम् । आध्मानरुक्स्तंभवतीम् । तथा प्रपीडितो बाह्यादंतः स्वनवान् सशब्दः प्रयाति । मुक्तोऽप्रपीडितः प्रध्मापयन् पुनरेत्यागच्छति । उपजातिर्वृत्तम् । अयमेवंलक्षणोंऽत्रवृद्धिरसाध्यो न पुनः सर्व एवेत्ययंशब्देन द्योतयति । किमस्य लक्षणमित्याह । वातवृद्धिसमाकृतिः । वातपूर्णदृतिस्पर्श इत्यादिलक्षणक्षितः ।

वध्मीख्यव्याधेरनंतरं शोफसामान्याद्गुल्मस्यावसर इति तं लक्षयितुमाह ।

**रूक्षकृष्णारुणसिरातंतुजालगवाक्षितः ॥ ३१ ॥**
**गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः ।**
**आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३२ ॥**

सर्वगुल्मानां सामान्यलक्षणं रूक्षकृष्णेत्यादिग्रंथनिर्दिष्टम् । गवाक्षितो निरंतराक्रांतः । गुल्मोऽष्टधेति संख्यारूपा संप्राप्तिः । तदेवाऽष्टधात्वं प्रतिपादयितुमाह । पृथग्दोषैर्वातपित्तकफैस्त्रयः । तथा

संसृष्टैः संसर्गेण त्रयः । निचयंगतैः सन्निपातैनैकः । तथाऽल्पो नारीणां चार्तवस्य दोषेण दुष्टतया स्यात् ।

**ज्वरच्छर्द्यतिसाराद्यैर्वमनाद्यैश्च कर्मभिः ।**
**कर्शितो वातलान्यत्ति शीतं वांबु बुभुक्षितः ॥३३॥**
**यः पिबत्यनु चान्नानि लंघनं प्लवनादिकम् ।**
**सेवते देहसंक्षोभि छर्दिं वा समुदीरयेत् ॥ ३४ ॥**
**अनुदीर्णामुदीर्णान्वा वातादीन्न विमुंचति ।**
**स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवते ॥ ३५ ॥**
**शुद्धो वाशुविदाहीनि भजते स्यंदनानि वा ।**
**वातोल्बणास्तस्य मलाः पृथक्कुद्धा द्विशोऽथवा३६**
**सर्वे वा रक्तयुक्ता वा महास्रोतोऽनुशायिनः ।**
**ऊर्ध्वाधोमार्गमावृत्य कुर्वते शूलपूर्वकम् ॥ ३७॥**
**स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं ग्रंथिरूपिणम् ।**

ज्वरच्छर्दीत्यादि यावद्भजते स्यंदनानि वेति निदानम् । अतीसाराद्यैरित्यादिशब्देन ग्रहण्यादयो गृह्यंते । वमनाद्यैरित्यत्र च विरेचनास्थापनादयः । ज्वरादिभिर्व्याधिभिर्वमनादिभिश्च कर्शितो यो वातलान्यन्नानि भुंक्ते । अथवा बुभुक्षितो भोजनं विनैव शीतमपक्वमंबु यः पिबति । तथा चोक्तम् । अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृदिति । अनुचान्नानि भोजनादनंतरं लंघनादिकं यत्कर्म देहसंक्षोभि शरीरसंरंभोत्पादकं तत्सेवते । छर्दिं वा योऽनुदीर्णामनुत्क्लिष्टां समुदीरयेत्समंतादूर्ध्वं नयेत् । उदीर्णान् वातादीन् वातमूत्रपुरीषादीनागतान्न विमुंचति । तथा यः कश्चित्स्नेहस्वेदावनभ्यस्य पुनःपुनरकृत्वा शोधनवमनविरेचनादि निषेवते । अथवा शुद्धः कृतवमनविरेचन आशु समनंतरमेव विदाहीन्यन्नपानानि भजते संतापनान्यन्नपानानि भुंक्ते । पच्यमानान्यन्नपानानि विदाहावस्थां प्राप्य यान्यामाशय एव चिरमवतिष्ठंते तानि विदाहीन्युच्यंते । अथवा कृतवमनविरेचनोऽनंतरमेव स्यंदनानि स्रुतिरूपश्लेष्मकारीण्यन्नपानानि भजते । तस्य मला वातादयो गुल्मसंज्ञं व्याधिं कुर्वते । कीदृशाः । वातोल्बणा वातकारणाः । नहि पवनकारणमंतरेण श्लेष्मपित्तरक्तानां संघट्टना घटते । तस्मात्पित्तादीनामुत्पत्तिकारणानां वातस्य च पित्तादिगुल्मेषु वातस्य गुल्मनिष्पादनं प्रति तुल्यकक्षतामनेन विशेषणेन प्रतिपादयत्याचार्यः । यदि पुनरुल्बणोधिक इति व्याख्यायते । तदानीं वातगुल्मेऽप्यधिकत्वं वातस्येति वातगुल्मपित्तगुल्मादीनां विषयविभागो न स्यात् । तस्माद्वातकारणत्वं वातोल्बणा इत्यनेन विवक्षितमिति वेद्यम् । किंभूता दोषाः । क्रुद्धाः कुपिताः । कथम् । पृथक् प्रत्येकं कृत्वा । अथवा द्विशो द्वौकृत्वा संसर्गस्था इत्यर्थः । सर्वे वा समस्ता रक्तयुक्ता वेति । वाशब्दः समुच्चये । रक्तयुक्ताश्चेत्यर्थः । तथा च खरणादेऽभिहितम् । वायुः क्रुद्धः कफं रक्तपित्तं चादाय पिंडितम् । गुल्मं कुर्यादित्यादि । यावद्रक्तपित्तकफा वातपिंडिता गुल्म उच्यत इति । तथा महास्रोतोऽनुशायिनः । महास्रोत आमपक्काशयस्थानं तदनुशेरते महास्रोतोऽनुशायिनः । किं कृत्वा गुल्मं निष्पादयंतीत्याह । ऊर्ध्वाधोमार्गमावृत्यापूर्य । अनेनास्य संप्राप्तिरुक्ता । शूलं पूर्वं यस्मिन् स एवं तं शूलपूर्वकम् । पूर्वं शूलं कृत्वा पश्चाद्दोषा गुल्मं कुर्वंति । अनेनास्य प्राग्रूपमुक्तम् । तथा स्पर्शोपलभ्यमश्मादिसदृशम् । तथा उत्प्लुतमूर्ध्वं गतम् । तथा ग्रंथिरूपिणं ग्रंथ्याकारमित्यनेनास्य संस्थानमुक्तम् ।

अधुना वातगुल्मं लक्षयति ।

**कर्शनात्कफविट्पित्तैर्मार्गस्यावरणेन वा ॥ ३८ ॥**
**वायुः कृताशयः कोष्ठे रौक्ष्यात्काठिन्यमागतः ।**
**स्वतंत्रः स्वाश्रये दुष्टः परतंत्रः पराश्रये ॥ ३९ ॥**
**पिंडितत्वादमूर्तोऽपि मूर्तत्वमिव संश्रितः ।**
**गुल्म इत्युच्यते बस्तिनाभिहृत्पार्श्वसंश्रयः ॥ ४० ॥**

कर्शनाद्धातुक्षयाद्वायुर्दुष्टः कदाचित्कफविट्पित्तैः कृतेन मार्गस्यावरणेन रोधेन कोष्ठे आमपक्काशयाख्ये कृताश्रयो गृहीतास्पदस्तथा रौक्ष्यात्कारणात्काठिन्यमागतः पिंडितत्वं प्राप्तः स्वाश्रये पक्काशयस्थाने दुष्टः स्वतंत्रः पराश्रय आमाशयस्थाने दुष्टः परतंत्रः पित्तकफयोरायत्तः पिंडितत्वात्कारणात् स्पर्शोपलभ्यमानः सन्नमूर्तोऽप्यकठिनोऽपि मूर्तत्वमिव काठिन्यमिव संश्रितः संपन्नो गुल्म इत्यभिधीयते तंत्रकृद्भिरिति शेषः । बस्तिनाभिहृत्पार्श्वसंश्रयः । बस्त्यादिसंश्रय आधारो यस्य स एवम् ।

**वातान्मन्याशिरःशूलं ज्वरप्लीहांत्रकूजनम् ।**
**व्यधः सूच्येव विट्संगः कृच्छ्रादुच्छ्वसनं मुहुः॥४१॥**
**स्तंभो गात्रे मुखे शोषः कार्श्यं विषमवह्निता ।**
**रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च ॥ ४२ ॥**
**अनिरूपितसंस्थानस्थानवृद्धिक्षयव्यथः ।**
**पिपीलिकाव्याप्त इव गुल्मस्फुरति तुद्यते ॥ ४३ ॥**

वाताद्गुल्मे सति मन्याशूलादयो भवंति तथा चलत्वाच्च वायोर्गुल्मोऽनिरूपितसंस्थानस्थानवृद्धिक्षयव्यथः स्यात् । अनिरूपिताः संस्थानादयो यस्य स एवम् । संस्थानमाकारः । स्थानमाश्रयः । तथा पिपीलिकाभिर्व्याप्तश्चित इव गुल्मः स्फुरति तुद्यते च । तुद्यत इति कर्मकर्तरि ।

**पित्ताद्दाहोऽम्लको मूर्छाविड्भेदस्वेदतृड्ज्वराः ।**
**हारिद्रत्वं त्वगाद्येषु गुल्मश्च स्पर्शनासहः ॥ ४४ ॥**
**दूयते दीप्यते सोष्मा स्वस्थानं दहतीव च ।**

पित्ताद्गुल्मे दाहादयः स्युः । तथा त्वङ्नखादिषु हारिद्रो वर्णः स्यात् । गुल्मश्च स्पर्शनं न सहते स्पर्शनासहः स्यात् । तथा दूयत उपतप्यते दीप्यते ज्वलतीव । सोष्मा च । स्वस्थानं गुल्माश्रितमास्पदं दहतीव तप्तायःपिंड इव । दूयत इति दूङ्परितापे दिवादिः ।

**कफात्स्तैमित्यमरुचिः सदनं शिशिरज्वरः ॥ ४५ ॥**

**पीनसालस्यहृल्लासकासशुक्लत्वगादिताः ।**
**गुल्मोऽवगाढः कठिनो गुरुः सुप्तः स्थिरोऽल्परुक् ॥**

कफाद्गुल्मे सति स्तैमित्यादयः स्युः । गुल्मोऽवगाढादिगुक्तः स्यात् ।

**स्वदोषस्थानधामानः स्वे स्वे काले च रुक्कराः ।**
**प्रायः**

ते च गुल्माः स्वदोषस्थानधामानो दोषस्य वातादेः स्थानं पक्वाशयादि स्वमात्मीयमात्मीयं दोषस्थानं तद्धाम स्थानं येषां वातपित्तकफगुल्मानां ते प्रायो बाहुल्येन स्वदोषस्थानधामानः । तथा स्वकाल आत्मीये वयोऽहोरात्रिभुक्तानामंतमध्यादिलक्षणे यथासंख्यं वातपित्तकफगुल्मा रुक्कराः शूलकरा भवंति ।

**त्रयस्तु द्वंद्वोत्था गुल्माः संसृष्टलक्षणाः॥४७॥**

द्वंद्वोत्थाः संसर्गजा गुल्मास्त्रयः संसृष्टलक्षणाः स्युः ।

**सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ।**
**सोऽसाध्यो**

सर्वजस्त्रिदोषजो गुल्मस्तीव्ररुगादियुक्तः सोऽसाध्यः ।

**रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥ ४८॥**

रक्तगुल्मः पुनः स्त्रिया एव प्रजायते ।

अत्रैवोपपत्तिमाह ।

**ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।**
**सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥४९॥**
**निरुणद्ध्यार्तवं योन्यां प्रतिमासमवस्थितम् ।**
**कुक्षिं करोति तद्गर्भलिंगमाविष्करोति च ॥ ५० ॥**
**हृल्लासदौहृदस्तन्यदर्शनं क्षामतादिकम् ।**

ऋतावार्तवकाले नवप्रसूता वा योनिरोगिणी वा स्त्री वातलान्यन्नपानानि यदि सेवते तस्याः स्त्रियाः समीरणः कुपितो योन्यां प्रतिमासं यदवस्थितमार्तवं तदुपरुणद्धि । तदार्तवं कुक्षिं करोति गर्भलिंगं चाविष्करोति प्रकटयति । गर्भलिंगमिव लिंगं यस्येति । सप्तम्युपमानपूर्वस्येति बहुव्रीहिरुत्तरपदलोपश्च । अथ तदेव गर्भलिंगमाह । हृल्लासेत्यादि । मुनिस्तु रक्तगुल्मे पादयोः श्वयथुर्भवतीत्यूचे । आदिशब्देन मूर्छादीनां ग्रहणम् ।

**क्रमेण वायुसंसर्गात्पित्तयोनितया च तत् ॥ ५१ ॥**
**शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ।**
**रुक्स्तंभदाहातीसारतृड्ज्वरादीनुपद्रवान् ॥ ५२ ॥**
**गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ।**
**योन्याश्च स्रावदौर्गंध्यतोदस्पंदनवेदनाः ॥ ५३ ॥**

क्रमेणानंतरं वायुसंसर्गान्मरुत्संश्लेषात्तथा पित्तयोनितया च पित्तस्य कारणत्वेन तच्छोणितं वातपित्तोत्थगुल्मजानुपद्रवान् कुरुते रुक्स्तंभदाहातीसारतृड्ज्वरादीन् । अनया च भंग्या वातपित्तगुल्मयोरुपद्रवा अप्युक्ता भवंति । गर्भाशय इत्यादि । गुल्मश्च गर्भाशये सुतरां शूलं करोति । किंभूते । दुष्टस्यासृज आश्रय आधारभूते । योन्याश्च स्रावादीन् कुरुते ।

गर्भलक्षणाद्रक्तगुल्मस्य विलक्षणं लक्षणमाह ।

**नचांगैर्गर्भवद्गुल्मः स्फुरत्यपि तु शूलवान् ।**
**पिंडीभूतः स एवास्याः कदाचित्स्पंदते चिरात् ५४**
**न चास्या वर्धते कुक्षिर्गुल्म एव तु वर्धते ।**

नच गर्भ इवांगैः पाण्यादिभिरवयवैः स्फुरति निःस्पंदते गुल्मेंऽगाभावादपि तु शूलवान् । स एव गुल्मः पिंडीभूतः कदाचिच्चिरेणास्या स्पंदते गर्भवच्छीघ्रम् । तथा गर्भेऽतः स्थिते कुक्षिरस्या वर्धते । गुल्म त्वंतःस्थिते स एव वर्धते । गुल्मो न कुक्षिः । इति गर्भरक्तगुल्मयोर्लक्षणभेदः ।

**स्वदोषसंश्रयो गुल्मः सर्वो भवति तेन सः ॥ ५५ ॥**
**पाकं चिरेण भजते नैव वा विद्रधिः पुनः ।**
**पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयत्वतः ॥ ५६ ॥**
**अतः शीघ्रविदाहित्वाद्विद्रधिः सोऽभिधीयते ।**
**गुल्मेंऽतराश्रये बस्तिकुक्षिहृत्प्लीहवेदनाः ॥ ५७ ॥**
**अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्तनम् ।**
**अतो विपर्ययो बाह्ये कोष्ठांगेषु तु नातिरुक् ॥५८॥**
**वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम् ।**

सर्वो गुल्मः स्वदोषः संश्रयो यस्य स एवम् । येन येन दोषेण वातायन्यतमेनाथवा द्वंद्वस्वरूपेण सन्निपातेनान्येन वा गुल्मो जन्यते स दोषस्तस्य गुल्मस्याश्रयः । तदेवं वातगुल्मस्य वात एवाश्रयो न तस्य पित्तादयः । पित्तादिकृतानां त एवाश्रया न पवन आश्रयः । एवं स्वदोषसंश्रयो गुल्मः सर्वो भवति । तेन स्वदोषसंश्रयाख्येन कारणेन गुल्मश्चिरेण कालेन पाकं भजते । एतच्च पित्तगुल्मं प्रति प्रायेण तथैकीयमतेनोक्तम् । अत एवाह नैव वेति । अथवा गुल्मः पाकं न भजत एव । विद्रधिस्तु शीघ्रमचिरेणैव कालेन पाकं भजतेऽत्यर्थं दुष्टरक्ताश्रयत्वात् । अतः शीघ्रविदाहित्वात्कारणादसौ विद्रधिरभिधीयते । तथा चागमः । मांसशोणितभूयस्त्वात् पाकं गच्छति विद्रधिः । मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति । तथा प्रायेण वातात्मकः सर्वो गुल्मो जायते । वात एवामूर्तोऽपि मूर्तत्वमिव संश्रितो गुल्म इत्युच्यते । अत एव वातस्यैव सर्वगुल्मकारणं प्रति प्राधान्यम् । तस्माद्गुल्मस्य पाकानुपपत्तिः । अथ गुल्मस्य बाह्याभ्यंतरलक्षणमाह । गुल्मेंऽतराश्रयेऽभ्यंतरे बस्त्यादिवेदनादयः स्युः । तथा अग्न्यादिभ्रंशो विनाशो वेगानां च प्रवर्तनं न भवति । अतोऽस्माद्बाह्ये विपर्ययो वैपरीत्यम् । यथाऽग्न्यादिभ्रंशाभावो वेगानां च प्रवर्तनं भवति । तथा बस्तिहृदादिषु कोष्ठांगेष्वतिरुङ्न भवति यथांतरे तथाऽवकाशस्य गुल्मप्रदेशस्य वैवर्ण्यं शरीरादन्यवर्णत्वम् । बहिर्बाह्यभाग उन्नतत्वमधिकं भवति ।

गुल्मानामानाहभूयिष्ठत्वादानाहलक्षणमाह ।

**साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ ५९ ॥**
**ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ।**

ऊर्ध्वाधो वातरोधेन कारणभूतेनोदरे भृशमाध्मानं यत्तमानाहं प्रचक्षते । मुनय इति शेषः । किंभूतम् । साटोपं सशब्दं तथाऽत्युग्रा रुक् पीडा यत्र तदेवम् । सुश्रुतेन प्रत्याध्मानस्यापि लक्षणमभ्यधायि । विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् । प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलमिति ।

**घनोऽष्ठीलोपमो ग्रंथिरष्ठीलोर्ध्वं समुन्नतः ॥ ६० ॥**
**आनाहलिंगस्तिर्यक्तु प्रत्यष्ठीला तदाकृतिः ।**

निबिडो यो ग्रंथिरष्ठीलयोपमीयते तथोर्ध्वं समुन्नतस्तथानाहलिंगो यः स ग्रंथिरानाहलिंगोऽष्ठीला भण्यते । तिर्यक् च यो ग्रंथिर्नोर्ध्वं समुन्नतस्तदाकृतिरष्ठीलासदृशः स ग्रंथिः प्रत्यष्ठीलोच्यते ।

तूनिप्रतून्यौ लक्षयति ।

**पक्वाशयाद्गुदोपस्थं वायुस्तीव्ररुजः प्रयान् ।**
**तूनीप्रतूनी तु भवेत्स एवातो विपर्यये ॥ ६१ ॥**

गुदं चोपस्थश्च गुदोपस्थम् । पक्वाशयात्ततो देशाद्वायुस्तीव्ररुजः सन् गुदोपस्थं प्रयान् गच्छंस्तूनीत्युच्यते । स एव वायुरतो विपर्यये गुदोपस्थात्पक्वाशयं गच्छंस्तीव्ररुजः सन् प्रतूनीति गद्यते ।

**उद्गारबाहुल्यपुरीषबंध-**
**तृप्त्यक्षमत्वांत्रविकूजनानि ।**
**आटोपमाध्मानमपक्तिशक्ति-**
**मासन्नगुल्मस्य वदंति चिह्नम् ॥ ६२ ॥**

उद्गारबाहुल्यादीनासन्नगुल्मस्य चिह्नं प्राग्रूपं च वदंति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां निदानस्थाने विद्रधिगुल्मनिदानं नामैकादशोऽध्यायः ११

---

## द्वादशोऽध्यायः ।

अथोदरनिदानमारभ्यते । यतोऽनंतरेऽध्याय आनाहलक्षणमुक्तम् । उदरं च कुक्षिमाध्माप्यानह्य दोषाः कुर्वते । तस्मादतोऽनंतरमुदरनिदानमुच्यत इत्याह ।

**अथाऽत उदरनिदानं व्याख्यास्यामः ।**
**रोगाः सर्वेऽपि मंदेऽग्नौ सुतरामुदराणि तु ।**
**अजीर्णान्मलिनैश्चान्नैर्जायंते मलसंचयात् ॥ १ ॥**

सर्वेऽपि ज्वरातीसारादयो रोगा मंदेऽग्नौ सति जायंतेऽतिशयेन पुनरुदराणि । अन्येभ्यश्चोदरहेतुभ्यो मंदाग्नित्वं प्रधानमुदराणां कारणमिति मंदेऽग्नावित्यनेन प्रागुद्दिष्टेन द्योतयति । अजीर्णादित्यादि । चतुर्विधादजीर्णादामविष्टब्धविदग्धरसशेषाख्यात्तथा । मलिनैश्चान्नैः पूतिपर्युषितसंकीर्णादिलक्षणैस्तथा मलसंचयाच्चिरकालसंभृताद्दोषाणां प्रचयादुदराणि जायंते ।

अधुना संप्राप्तिमेषामाह ।

**ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीरंबुवाहिनीः ।**
**प्राणाग्न्यपानान् संदूष्य कुर्युस्त्वङ्मांससंधिगाः॥२॥**
**आध्माप्य कुक्षिमुदरम्**

अंबुवाहिनीर्वाहिनीर्जलवाहीनि स्रोतांस्यूर्ध्वाधो रुद्ध्वा धातवो वातादय उदरं कुर्युः । कीदृशाः । त्वक् च मांसं च त्वङ्मांसे तयोः संधिरंतरं तत्र गच्छंतीति त्वङ्मांससंधिगास्तत्रस्था इत्यर्थः । किं कृत्वा । कुक्षिमाध्माप्यानह्य । तथा प्राणश्चाग्निश्चापानश्च तान् प्राणाग्न्यपानान् संदूष्य दूषयित्वा । प्रकृत्या मंदोऽग्निः पुनर्वातादिभिः संदूषितो जठरं करोतीत्यर्थः ।

**अष्टधा तच्च भिद्यते ।**
**पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ३ ॥**

तच्चोदरमष्टधा स्यात् । पृथग्दोषैर्वातपित्तकफैस्त्रयः । समस्तैः सन्निपातेन चैकः । प्लीहोदरं बद्धोदरं क्षतोदरं जलोदरमिति । वातादिकृतान्यपि प्लीहाद्युदराणि प्लीहादिनिमित्तसंज्ञयोक्तानि । यथा वृद्ध्याख्यो रोगः संज्ञाविशेषश्च चिकित्साविशेषप्रतिपत्त्यर्थः ।

**तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः ।**
**नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः ॥ ४ ॥**
**स्युः प्रेतरूपाः पुरुषाः**

तेनोदरेणार्ताः पीडिताः पुरुषाः शुष्कताल्वोष्ठाः शूनपादादयो नष्टचेष्टादयः कृशादयश्च स्युः ।

**भाविनस्तस्य लक्षणम् ।**
**क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते ॥ ५ ॥**
**जीर्णाजीर्णं न जानाति सौहित्यं सहते नच ।**
**क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते ॥ ६ ॥**
**वृद्धिर्विशोऽप्रवृत्तिश्च किंचिच्छोफश्च पादयोः ।**
**रुग्बस्तिसंधौ ततता लघ्वल्पाभोजनैरपि ॥ ७ ॥**
**राजीजन्म वलीनाशो जठरे**

तस्य भाविनो भविष्यतो लक्षणं क्षुन्नाशादिकं स्यात् । तथा बस्तिसंधौ रुक् शूलं तथा लघुभोजनैरल्पभोजनैरभोजनैरपि बस्तिसंधौ ततता विस्तीर्णता आध्माततेत्यर्थः । तथा राजीनां जन्म संभवो वलीनां च नाशो जठरे स्यात् ।

**जठरेषु तु ।**
**सर्वेषु तंद्रा सदनं मलसंगोऽल्पवह्निता ॥ ८ ॥**
**दाहः श्वयथुराध्मानमंते सलिलसंभवः ।**

जठरेषु जठराख्येषु सर्वेषु तु रोगेषु तंद्राऽलस्यं तथा सदनं देहस्य भवति । तथा मलस्य संगः पुरीषस्याप्रवृत्तिः । तथा-

ऽल्पवह्नित्वम् । तथा दाहः श्वयथुराध्मानं च । अंतेऽवसाने सलिलसंभवः ।

अतोयमुदरं किंलक्षणमित्याह ।

**सर्वं त्वतोयमरुणमशोफं नातिभारिकम् ॥ ९ ॥**
**गवाक्षितं सिराजालैः सदा गुडगुडायते ।**
**नाभिमंत्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ १० ॥**
**मारुतो हृत्कटीनाभिपायुवंक्षणवेदनः ।**
**सशब्दो निश्चरेद्वायुर्विड्बंधो मूत्रमल्पकम् ॥ ११ ॥**
**नातिमंदोऽनलो लौल्यं न च स्याद्विरसं मुखम् ।**

सर्वमुदरमतोयं जलोदरतामप्राप्तं वर्णतोऽरुणं तथाऽशोफं शोफेनानाक्रांतं तथा नातिभारिकं नातिशयेन गुरु तथा सिराजालैः सिरासमूहैर्जालाकृतिभिर्गवाक्षितं निरंतरमाक्रांतं सदा सर्वकालं गुडगुडायते गुडगुडइतीदृशमव्यक्तं शब्दमाचरति। तथा मारुतो नाभिं विष्टभ्य स्तब्धतां नीत्वा तथांत्रं च विष्टभ्य वेगं कृत्वा हृत्कटीनाभिपायुवंक्षणवेदनेत्येवंरूपमात्मीयं संरंभं प्रदर्श्यानंतरं प्रणश्यति नोपलभ्यते । तथा सशब्दो वायुरंतर्निश्चरेन्निर्याति । तथा विड्बंधस्तथा मूत्रमतिशयेनाल्पं स्यान्नातिमंदोऽग्निस्तथा लौल्यं गृद्धिर्न च विरसं मुखं स्याद्यत्र तदतीवसंभवं वेद्यम् । अस्माच्च विपरीतलक्षणं सामर्थ्यात्सतोयम् ।

**तत्र वातोदरे शोफः पाणिपान्मुष्ककुक्षिषु ॥ १२ ॥**
**कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम् ।**
**शुष्ककासांगमर्दोऽधोगुरुता मलसंग्रहः ॥ १३ ॥**
**श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ।**
**सतोदभेदमुदरं तनु कृष्णसिराततम् ॥ १४ ॥**
**आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।**
**वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतोगतिः ॥ १५ ॥**

तत्र तेषूदरेषु मध्ये वातोदरे शोफः पाण्यादिषु तथा कुक्ष्यादिरुक् पर्वभेदनं तथा शुष्ककासादयः स्युः । अकस्मान्निमित्तं विनोदरं वृद्धिह्रासयुतं स्यात्तथा सतोदभेदं तथा तनुकृष्णसिराभिस्ततं व्याप्तमाहतं च तदुदरमाध्मातदृतिरिव शब्दं करोति । अत्र च वातोदरे वायुः सरुक् सशब्दः सर्वतोगतिश्च सन् विचरेद्रमते ।

**पित्तोदरे ज्वरो मूर्छा दाहस्तृट् कटुकास्यता ।**
**भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ॥ १६ ॥**
**पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते ।**
**धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १७ ॥**

पित्तोदरे ज्वरादयः स्युः । तथा त्वगादौ पीतत्वं भवति । जठरं हरिद्वर्णं तथा पीतताम्राभिः सिराभिर्नद्धं युक्तं सस्वेदं सोष्म च स्यात् । दह्यते तप्यते च । तथा धूमायति । तथा मृदुरकठिनः स्पर्शो यस्य तदेवम् । तथा क्षिप्रपाकं स्यात् । प्रदूयत उपतप्यते च ।

**श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ।**
**निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता**
**उदरं स्तिमितं श्लक्ष्णं शुक्लराजीततं महत् ।**
**चिराभिवृद्धि कठिनं शीतस्पर्शं गुरुस्थिरम् ॥ १९ ॥**

श्लेष्मोदरेऽङ्गसादादयः स्युः । तथोदरं स्तिमितं निश्चलं तथा श्लक्ष्णं कोमलस्पर्शं तथा शुक्लराजीभिस्ततं व्याप्तं तथा बृहत्तथा चिराभिवृद्धि कठिनं च तथा शीतस्पर्शं तथा गुरु तथा स्थिरं न तु चलम् ।

अधुना सन्निपातोदरं लक्षयितुमाह ।

**त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः ।**
**गरदूषीविषाद्यैश्च सरक्ताः संचिता मलाः ॥ २० ॥**
**कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्छाभ्रमान्वितम् ।**
**कुर्युस्त्रिलिंगमुदरं शीघ्रपाकं सुदारुणम् ॥ २१ ॥**
**बाधते तच्च सुतरां शीतवाताभ्रदर्शने ।**

मला वातादयः सरक्ताः संचितास्त्रिलिंगं त्रिदोषलक्षणं तथा शोषादियुक्तं तथा शीघ्रपाकमाशुजरणमुदरं कुर्युः । किंभूताः संचिताः । त्रिदोषकोपनैः संकीर्णादिभोजनैस्तैस्तैः सर्वरोगनिदानोक्तैस्तथा स्त्रिया दत्तै रजोमलैः कार्मणापरपर्यायैस्तथा गरेण दूषीविषाद्यैश्च । आदिशब्देन विरुद्धाभ्यवहारादेर्ग्रहणम् । अनेनास्य हेतुविशेषकथनम् । कीदृशा दोषाः । कोष्ठं प्राप्याश्रित्य विकुर्वाणा विक्रियां याताः । तच्च जठरं सुतरां शीतवाताभ्रदर्शने बाधते । इत्यनेनास्य विशेषलक्षणं कथितम् ।

प्लीहोदरादीन्यधुना लक्षयति ।

**अत्याशितस्य संक्षोभाद्यानयानादिचेष्टितैः ॥ २२ ॥**
**अतिव्यवायकर्माध्ववमनव्याधिकर्शनैः ।**
**वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्धते ॥२३॥**
**शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ।**
**सोऽष्ठीलेवातिकठिनः प्राक्तः कूर्मपृष्ठवत् ॥ २४ ॥**
**क्रमेण वर्धमानश्च कुक्षावुदरमावहेत् ।**
**श्वासकासपिपासास्यवैरस्याध्मानरुग्ज्वरैः ॥ २५ ॥**
**पांडुत्वछर्दिमूर्च्छार्तिदाहमोहैश्च संयतम् ।**
**अरुणाभं विवर्णं वा नीलहारिद्रराजिमत् ॥ २६ ॥**

अतितृप्तस्य नरस्य यानगमनादिचेष्टितैर्यः संक्षोभस्तस्मात्तथाऽतिव्यवायादिभिः कर्शनैः प्लीहा स्थानात् स्वाशयाच्युतो विवर्धते विशेषेण वृद्धिं गच्छति । किंभूतः प्लीहा । वामपार्श्वाश्रितः । अथवा रसादिभ्यो धातुभ्यः शोणितं विवृद्धं वृद्धिहेतुभिरधिकं कृत्वा वृद्धिं प्रापितं समनंतरं तं प्लीहानं स्वस्थानच्युतमच्युतं वा विशेषेण वर्धयेत्स्वप्रमाणादाधिक्यं जनयेत् । स प्लीहाऽष्ठीलेवातिकठिनः । प्रागभूत्वा ततोऽनंतरं कच्छपपृष्ठाकृतिः क्रमेण सहसैव वर्धमान आधिक्यं गच्छन् कुक्षौ स्वीये स्थान उदरं विदध्यात् । कीदृशम् । श्वासादिभिर्दाहमोहपर्यंतैः संयुतम् । तथाऽरुणाभम-

रुणवर्णमथवा विवर्णमनिश्चितवर्णं तथा नीलहारिद्रराजिमत्। एवंविधा राजयो विद्यंते यस्मिंस्तदेवम्।

**उदावर्तरुगानाहैर्मोहतृड्दहनज्वरैः।**
**गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात्॥२७**

तत्र प्लीहोदरे पृथग्लक्षणलक्षितान्मलान् वातादीन् क्रमेणोदावर्तादिना विद्यात्। तत्रोदावर्तरुगानाहैर्वातं विद्यात्। मोहतृड्दहनज्वरैः पित्तं विद्यात्। गौरवारुचिकाठिन्यैः कफं विद्यात्।

अथ यकृल्लक्षयति।

**प्लीहवद्दक्षिणात्पार्श्वात् कुर्याद्यकृदपि च्युतम्।**

यथापूर्वोक्तैर्हेतुभिः प्लीहा वामपार्श्वाच्च्युतो विवर्धते। विवृद्धो भूत्वाऽनंतरमुदरमावहेत्तद्वद्यकृदपि दक्षिणपार्श्वाच्च्युतं सद्वर्धते वृद्धं सदुदरं कुरुते। अथवा शोणितं स्वहेतुतो विवृद्धं यकृद्विवर्धयेत्। तच्च विवृद्धमुदरमावहेत्। इति प्लीहोदरयकृदुदरयोः सादृश्यम्।

अथ बद्धोदरं लक्षयति।

**पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे॥ २८॥**
**दुर्नामभिरुदावर्तैरन्यैर्वान्त्रोपलेपिभिः।**
**वर्चःपित्तकफान् रुद्ध्वा करोति कुपितोऽनिलः २९**
**अपानो जठरं तेन स्युर्दाहज्वरतृड्क्षवः।**
**कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक्॥ ३०॥**
**मलसंगोऽरुचिश्छर्दिरुदरं मूढमारुतम्।**
**स्थिरं नीलारुणसिराराजिवद्धेमराजि वा॥ ३१॥**
**नाभेरुपरि च प्रायो गोपुच्छाकृति जायते।**

पक्ष्माणि च वालाश्च पक्ष्मवालास्तैरन्नेन सह भुक्तैर्बद्धायने गुदे सत्यपानो वायुर्विगुणः कुपितो जठरं करोति। बद्धमयनं द्वारं पुरीषानिलवाहि यस्य तदेवंविधे गुदे। तथा दुर्नामभिर्गुदे बद्धायने तथोदावर्तैर्बद्धायने तथाऽन्यैर्वान्त्रोपलेपिभिरुपदेहिभिर्दध्योदनमाषोमादिभिर्गुदे बद्धायनेऽपानो जठरं करोति। किं कृत्वा। वर्चःपित्तकफान् रुद्ध्वाऽऽवृत्य। तद्बद्धोदरमुच्यते। तेन बद्धोदरेण दाहज्वरतृट्क्षवः स्युः। तथा कासश्वासावूरुसदनं शिरोहृन्नाभिपायुरुक् स्यात्। तथा मलानां मूत्रपुरीषादीनां संगोऽप्रवर्तनम्। अरुचिस्तथा छर्दिः स्यात्। तथोदरं मूढमारुतं भवेत्। मूढो बहिरनिःसरणरूपो मारुतो यस्मिंस्तदेवम्। मूढमारुतत्वस्य सामान्यलक्षणेनैव गृहीतत्वात्पुनर्ग्रहणमतिशयार्थम्। तथा स्थिरमचलम्। तथा नीलारुणसिराराजिभिर्नद्धं व्याप्तमथवाऽराजि स्यात्। तच्चोदरं प्रायो नाभेरुपरिष्टाद्गोपुच्छाकृति जायते। यथायथोर्ध्वं तथातथा सूक्ष्ममित्यर्थः। अनेनास्य संस्थानमुक्तम्।

अधुना छिद्रोदरं लक्षयति।

**अस्थ्यादिशल्यैः सान्नैश्चेद्भुक्तैरत्यशनेन वा॥ ३२॥**
**भिद्यते पच्यते वांत्रं तच्छिद्रैश्च स्रवन्बहिः।**
**आम एव गुदादेति ततोऽल्पाल्पं स विड्रसः॥३३॥**
**तुल्यः कुणपगंधेन पिच्छिलः पीतलोहितः।**
**शेषश्चापूर्य जठरं जठरं घोरमावहेत्॥ ३४॥**
**वर्धते तदधो नाभेराशु चैति जलात्मताम्।**
**उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः॥ ३५॥**
**छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे।**

अस्थितृणकंटकपाषाणधातुशृंगदार्वादिशल्यैः सान्नैः सहभोजनेन भुक्तैरथवाऽत्यशनेनातिमात्रभोजनेन यदंत्रं भिद्यते सच्छिद्रं संपद्यतेऽथवा पच्यते पाकं याति तच्छिद्रैश्चांत्रच्छिद्रैर्भेदोत्पन्नैः पाकतो वा बहिराम एवापरिपक्व एव विड्रसः स्रवन्नल्पाल्प एव गुदादेत्यायाति। तुल्यः सदृशः कुणपगंधेन शवगंधेन तथा पिच्छिलः पीतलोहितश्च वर्णेन। शेषश्च रसो यो गुदान्नागच्छति स जठरमापूर्य पूरयित्वा घोरं कष्टतरं जठराख्यं व्याधिं कुर्यात्। तदुदरमधो नाभेर्वर्धयद्वृद्धिं गच्छेत्। वर्धिश्चुरादिः। तथा आशु शीघ्रमेव जलात्मतां जलोदरत्वमेति। उद्रिक्तदोषरूपं च। उद्रिक्तमधिकं दोषाणां वातपित्तकफानां रूपमाकृतिर्यस्य तदेवम्। तथा श्वासतृड्भ्रमैर्व्याप्तमिदमुदरं छिद्रोदरं प्राहुराचार्याः। अपरे त्वाचार्याः परिस्रावीत्याहुः।

अथोदकोदरदर्शनार्थमाह।

**प्रवृत्तस्नेहपानादेः सहसाऽऽमांबुपायिनः॥ ३६॥**
**अत्यंबुपानान्मंदाग्नेः क्षीणस्यातिकृशस्य वा।**
**रुद्ध्वांऽबुमार्गाननिलः कफश्च जलमूर्छितः॥ ३७॥**
**वर्धयेतां तदेवांबु तत्स्थानादुदराश्रितौ।**
**ततः स्यादुदरं तृष्णा गुदस्रुतिरुजायुतम्॥ ३८॥**
**कासश्वासारुचियुतं नानावर्णसिराततम्।**
**तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु॥ ३९॥**
**दकोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत्।**

प्रवृत्तमारब्धं स्नेहपानादि येन स प्रवृत्तस्नेहपानादिः। आदिग्रहणाद्वमनादिकं कर्म पंचविधं गृह्यते। तस्य तथाभूतस्य सहसाऽऽमांबुपायिनः सहसैवापक्वपानीयपस्य तथा मंदाग्नेर्नष्टवह्नेस्तथा क्षीणस्य विशिष्टव्याध्याक्रांततया धात्वपचयतस्तथाऽतिकृशस्यानशनादिना क्षीणमेदोमांसस्यैवंविधस्य पुरुषस्यात्यंबुपानादंबुमार्गास्तोयवाहीनि स्रोतांसि रुद्ध्वाऽनिलः कफश्च। किंभूतो जलमूर्छितस्तोयमिश्रितः। तावुभौ वातकफौ जलमूर्छितावुदराश्रितौ तदेवांबु तत्स्थानादुदकस्थानात् क्लोमतो वर्धयेताम्। ततोऽनंतरमुदरं तृष्णादियुतं स्यात्तथा कासादियुतं तथा नानावर्णाभिरनेकवर्णाभिः सिराभिस्ततं व्याप्तम्। तोयेत्यादि। शब्दस्य प्रक्षोभः संरंभः। वेपथुः कंपः। स्पर्शश्च शब्दप्रक्षोभश्च वेपथुश्च त एवम्। तोयेन पूर्णा तोयपूर्णा सा चासौ दृतिश्च तोयपूर्णदृतिस्तोयपूर्णदृतिवत्। स्पर्शशब्दप्रक्षोभवेपथवो यस्मिन्नुदरे तत्तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु दकोदरं जलोदरं स्यात्। तच्च महदन्येभ्य उदरेभ्यो विस्तीर्णं तथा स्निग्धं तथा स्थिरमचलम्। आवृत्तनाभि तत्। आसमंताद्वृत्ता वर्तुला नाभिर्यस्य तदेवम्।

अधुना जठरेऽप्यवसाने यथा जलसंभवः स्यात्तथाह ।

**उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ॥ ४० ॥**
**पाकाद्द्रवाद्द्रवीकुर्युः संधिस्रोतोमुखान्यपि ।**
**स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ॥ ४१ ॥**
**तदेवोदकमाध्माप्य पिच्छां कुर्यात्तदा भवेत् ।**
**गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ॥ ४२ ॥**
**मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति ।**
**तदनूदकजन्मास्मिन्कुक्षिवृद्धिस्ततोऽधिकम् ॥ ४३॥**
**सिरांतर्धानमुदकजठरोक्तं च लक्षणम् ।**

उपेक्षयाऽचिकित्सनात्सर्वेषूदरेषु दोषा वातपित्तकफाः स्वस्थानत आत्मीयात् स्थानाच्युताः स्थानांतरं गतास्तथा पाकाद्धेतोस्ते दोषा द्रवा अधिकं द्रवा द्रवीकुर्युः संधिस्रोतोमुखान्यपि । संधयश्च स्रोतोमुखानि च संधिस्रोतोमुखानि द्वाराणि । न केवलं स्वयं दोषा द्रवत्वं गता यावत्संधिस्रोतोमुखान्यपि द्रवीकुर्युरित्यपिशब्दार्थः । स्वेदश्च बाह्यस्रोतःसु संवृतेषु विहतो निरुद्धस्तिर्यगास्थितस्तिर्यक् प्रवृत्तश्च तदेवोदकं प्राक् कुक्षौ वृद्धिं गतमाप्याय्य वृद्धिं गमयित्वा पिच्छां कुर्यात्तदा भवेद्गुरूदरं स्थिरमचलं वृत्तं वर्तुलं च तथाऽऽहतं च पाण्यादिना न शब्दवन्न शब्दयुक्तं तथा मृद्वकठिनं तथा व्यपेता राज्यो यस्माद्व्यपेतराजीकं स्यात् । नाभ्यां च स्पृष्टं सत् सर्पति प्रसारि संपद्यते । तदनु ततोऽनंतरमस्मिन्नुदराख्ये व्याधावुदकजन्म जलसंभवः । ततोऽनंतरमधिकं कृत्वा कुक्षिवृद्धिर्भवेत्तथा सिरांतर्धानं सिराणामदर्शनम् । किमेतावदेव लक्षणम् । नेत्याह । उदकजठरोक्तं च लक्षणम् । न केवलं यदधुनोक्तं लक्षणं यावज्जलोदरोक्तं चेति चशब्दस्यार्थः ।

इदानीमुदराणां सुखसाध्यत्वाभावात् कृच्छ्रसाध्यासाध्यत्वे वेदयति ।

**वातपित्तकफप्लीहसंनिपातोदकोदरम् ॥ ४४ ॥**
**कृच्छ्रं यथोत्तरम्**

वाताद्युद्भवमुदरं यथोत्तरं कृच्छ्रम् । तेन वातोदरात् पित्तोदरं यावदुदकोदरमत्यंतं कृच्छ्रं कृच्छ्रसाध्यं स्यात् ।

**पक्षात्परं प्रायोऽपरे हतः ।**

पाठापेक्षया ये द्वे अपरे बद्धक्षतोदरे ते प्रायः पक्षात्परमनंतरं हतो मारयतः । प्रायोग्रहणात्कदाचिन्नियतायुष्युत्पन्नेनैव मारयतः ।

**सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम् ॥ ४५॥**

किलेपेक्षया सर्वेषूदरेष्वंते सलिलसंभव इत्युक्तम् । सर्वं च जठरं जातोदकं यद्वातादिसमुत्थं कृच्छ्रमुक्तं तदपि हंत्येव । अत्राऽपि प्रायोग्रहणमनुवर्तनीयम् । कदाचिज्जातोदकमपि न मारयेदपितु यापयत्येव । तथा रिष्टोक्तोपद्रवान्वितं रिष्टाध्यायोक्तैरुपद्रवैर्युक्तं जठरं हंति । शूनाक्षं कुटिलोपस्थमित्यादिभिश्च तदपि हंति ।

**जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।**
**बलिनस्तदजातांबु यत्न साध्यं नवोत्थितम् ॥ ४६ ॥**

जन्मनैव जात्यैव स्वभावेनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतं व्याधिस्वभावात् । प्रायोग्रहणात्किंचिदुदरं कृच्छ्रमेव भवति न कृच्छ्रतमम् । अत एवाह । बलिन इत्यादि । बलिनो बलवतस्तदुदरमुत्थितं नवमजातोदकं सयत्नसाध्यमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने उदरनिदानं नाम द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

उदरनिदानादनंतरं पांडुशोफविसर्पनिदानमारभ्यते । यतो यथैवोदरं दोषसंघातजं तथैतेऽपीत्याह ।

**अथाऽतः पांडुरोगशोफविसर्पनिदानं व्याख्यास्यामः**
**पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।**
**तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥ १ ॥**
**धमनीर्दश संप्राप्य व्याप्नुवत्सकलां तनुम् ।**
**श्लेष्मत्वग्रक्तमांसानि प्रदूष्यांतरमाश्रितम् ॥ २ ॥**
**त्वङ्मांसयोस्तत्कुरुते त्वचि वर्णान् पृथग्विधान् ।**
**पांडुहारिद्रहरितान् पांडुत्वं तेषु चाधिकम् ॥ ३ ॥**
**यतोऽतः पांडुरित्युक्तः स रोगः**

यत्र मला वातादयः पित्तप्रधाना यथोक्तैः सर्वरोगनिदानायुक्तैः कोपनैः कुपिताः क्रुद्धाः पांडुरोगहेतवः । कथमित्याह । तत्रेत्यादि । तेषु तथाभूतेषु सत्सु वातेन बलिना बलवता क्षिप्तं पित्तं हृदि स्थितमनंतरं तत्पित्तं धमनीर्दश हृदाश्रिताः संप्राप्याश्रित्य सकलां तनुं व्याप्नुवदश्नुवानम् । सकलशब्दोपादानं मूत्रपुरीषादीनामपि ग्रहणार्थम् । अत एवाख्यास्यति । कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रतेति । तथा श्लेष्मत्वग्रक्तमांसादि प्रदूष्य । किंभूतं पित्तम् । त्वङ्मासयोरंतरं मध्यमाश्रितम् । तत्पित्तं त्वचि वर्णान् पृथग्विधान्नानाप्रकारान् पांडुहारिद्रहरितान् कुरुते । एतेषु वर्णेषु मध्ये यतो यस्मादतिशयेन पांडुत्वमधिकमतोऽस्मात्स रोगः पांडुरित्युक्तः संज्ञितः । ननु पित्तप्रधाना इति कथमुक्तम् । यावता वायोर्बलीयस्त्वाद्वातप्रधाना इति वक्तुं युक्तं स्यात् । बलीयस्त्वं चानंतरमेव प्रतिपादितं तत्राऽनिलेन बलिना क्षिप्तमिति । असदेतत् । यतो नाऽत्र बलीयस्त्वाबलीयस्त्वकृते प्राधान्याप्राधान्ये विवक्षिते किं तर्हि पांडुरोगकरणं प्रति कर्तृत्वाकर्तृत्वे । पित्तस्य च पांडुरोगकरणं प्रति मुख्यं कर्तृत्वमतः पित्तप्रधाना इति युक्तमुक्तम् । ननु यदि त्रयो दोषाः पांडुरोगहेतवः कथं तर्हि वक्ष्यति । स पंचधा पृथग्दोषैः समस्तैर्मृत्तिकादनादिति । उच्यते । सर्वः पांडुरोगस्त्रिदोषज एव किंतु दोषहेतुविशेषैर्यो रूपभेदस्तेन पंचात्मकः शोफवदिति न किंचिदत्राऽयुक्तम् ।

तेन गौरवम् ।
**धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ४ ॥**
**ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेंद्रियः ।**
**मृद्यमानैरिवांगैर्ना द्रवता हृदयेन च ॥ ५ ॥**
**शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक् ।**
**अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ॥ ६ ॥**
**सन्नसक्थो ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी श्रमी ।**

तेन पांडुरोगेण धातूनां रसरुधिरादीनां गौरवं शैथिल्यं च स्यात् । तथौजसो गुणक्षयो माधुर्यशैत्यादीनामोजोगुणानां विनाशः । तत एवौजःक्षयात्पांड्वामयी नरोऽल्परक्तमेदस्कः । अल्पे रक्तमेदसी यस्य स एवम् । तथा निःसारो निर्बलः स्यात् । तथा श्लथेंद्रियः शिथिलानींद्रियाणि वाक्पाणिपादपायूपस्थरूपाणि यस्यासौ श्लथेंद्रियः । तथेंद्रियशब्देन बुद्धींद्रियाणां चक्षुरादीन्यधिष्ठानान्युपलक्ष्यंते । ननु पित्तप्रधानाः कुपिता इति पित्तवृद्धिरुक्ता । पित्तवृद्ध्या च रक्तवृद्ध्या भवितव्यम् । तत्कथमुक्तमल्परक्ततेति । अत्रोच्यते । दोषाणामन्योन्यदूषणाद्दूष्यस्य च दोषैर्दूषितत्वात्प्रसादपरंपरयाऽपुष्टौ सत्यां किट्टबाहुल्यात् पित्ताधिक्यं न रक्तस्य प्रसादात्मकस्येति पित्ताधिक्यमल्परक्तता चेत्युपपन्नम् । तथा अंगैरवयवैर्मृद्यमानैरिवासौ नर उपलक्षितः । तथा हृदयेन द्रवता च । तथा शूनावक्षिकूटौ यस्य स एवम् । तथा सदनोंऽगसादवान् । तथा कोपनादिकः स्यात् ।

**स पंचधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ ७ ॥**

स पांडुरोगः पंचधा स्यात् । कथमित्याह । पृथग्दोषैः सन्निपातेन मृद्भक्षणाच्च । ननु मृत्तिकादनात् । पांडुरोगः पृथग्वाच्यः । पृथग्वातादिदोषजे पांडुरोगेंऽतर्भूतत्वात् । मृदा हि वातादिप्रकोपो विधीयते तिक्तोषणादिभिरिव वातादिप्रकोपश्च पांडुरोगकृत् । तस्मात्पृथङ्मृदो न युक्तो निर्देशः । अत्र ब्रूमः । मृदोऽन्ये ये वातादिप्रकोपहेतवः पांडुरोगसंपादने संभावनयोग्यास्ते पांडुरोगं संपाद्य हेतुस्वरूपसत्तया विनिवर्तंते । मृत्तिका तु तीक्ष्णैः संशोधनैर्विना पांडुरोगं यावत्काये बेभिद्यते । इत्ययं वातादिकोपहेतुभ्योऽन्येभ्यो मृदः पांडुरोगं प्रति विशेषः । तस्मात्पृथक् पृथक् पांडुरोगो वक्तुं न्याय्यः ।

**प्राग्रूपमस्य हृदयस्पंदनं रूक्षता त्वचि ।**
**अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥ ८ ॥**
**सादः श्रमो**

अस्य पांडुरोगस्य हृदयस्पंदनादि प्राग्रूपम् ।

**अनिलात्तत्र गात्ररुक्तोदकंपनम् ।**
**कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता ॥ ९ ॥**
**शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्धरुक् ।**

तत्र तेषु पांडुरोगेषु मध्ये वातात्पांडुरोगे गात्ररुगादयः स्युः ।

**पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ १० ॥**
**तृट्स्वेदमूर्छाशीतेच्छा दौर्गंध्यं कटुवक्त्रता ।**
**वर्चोभेदोऽम्लको दाहः**

पित्ताद्धरितपीताभसिरादित्वं स्यात् ।

**कफाच्छुक्लसिरादिता ॥ ११ ॥**
**तंद्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ।**
**कासश्छर्दिश्च**

कफाच्छुक्लसिरादिता च स्यात् ।

**निचयान्मिश्रलिंगोऽतिदुःसहः ॥ १२ ॥**

निचयात्सन्निपातात् मिश्रलिंगः पांडुरोगः सोऽतिदुःसहो घोरतमः ।

**मृत्कषायानिलं पित्तमूषरामधुराकफम् ।**
**दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च ॥१३॥**
**स्रोतांस्यपक्वैवापूर्य कुर्याद्रुद्ध्वा च पूर्ववत् ।**
**पांडुरोगं ततः शूननाभिपादास्यमेहनः ॥ १४ ॥**
**पुरीषं कृमिमन्मुंचेद्भिन्नं सासृक्कफं नरः ।**

मृद्भक्षिता कषायरसा वातं दूषयित्वा पांडुरोगं कुर्यात् । ऊषरा सक्षारा मृत्तिका पित्तं दूषयित्वा पांडुरोगं कुर्यात् । मधुरा मृत्तिका कफं दूषयित्वा पांडुरोगं कुर्यात् । तथा रसादींश्च धातून् दूषयित्वा रौक्ष्याच्च हेतोर्भुक्तं विरूक्षयति । यतः स्वभावत एव मृत्तिका रूक्षा तस्माद्भुक्तं विरूक्षयति । स्रोतांसि चापूर्य रुद्ध्वाऽपक्वैव सती पांडुरोगं पूर्ववत् पित्तप्रधाना कुपिता इत्यादिना न्यायेन कुर्यात् । मृत्तिकाया दुष्पाकत्वात्पाकाभावः । अथवा अशब्दोऽत्रेषदर्थे । अलोमिका एलाकृतिर्यथा । तेन किंचित्पक्वेति गम्यते । ततस्तेन पांडुरोगेण शूननाभ्यादिकः सन् कृम्यादियुतं पुरीषं मुंचेत् ।

अथ प्रतिज्ञावाक्येऽनुक्तामपि कामलां तुल्यहेत्वादिकत्वात्प्रदर्शयन्नाह ।

**यः पांडुरोगी सेवेत पित्तलं तस्य कामलाम् ॥ १५॥**
**कोष्ठशाखाश्रयं पित्तं दग्ध्वासृङ्मांसमावहेत् ।**
**हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया ॥ १६ ॥**
**दाहाविपाकतृष्णावान् भेकाभो दुर्बलेंद्रियः ।**

यो नरः पांडुरोगी सन् पित्तलं मरिचिकादिद्रव्यमत्यर्थं सेवेतोपयुंक्ते तस्य पांडुरोगिणः पित्तं कर्तृ कामलामावहेत् । कीदृशम् । कोष्ठशाखाश्रयात् । कोष्ठो महास्रोतः । शाखारक्तादयस्त्वक्चेत्येतदुक्तमाश्रयो यस्यास्ताम् । किं कृत्वा । रक्तं मांसं च दग्ध्वा । कथम् । हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया । तदा च पुरुषो दाहादिमान्मंडूकच्छायो दुर्बलेंद्रियश्च स्यात् । दुर्बलानि स्वविषयेष्वशक्तानींद्रियाणि यस्य स एवम् ।

किं पांडुरोगिण एव पित्तलान्यासेवमानस्य कामला भवेदुतापांडुरोगिणोऽपीत्याह ।

**भवेत्पित्तोल्बणस्याऽसौ पांडुरोगादृतेऽपि च ॥१७॥**

पांडुरोगमंतरेणापि पित्ताधिकस्य नरस्य पित्तलान्यासेवमानस्यासौ कोष्ठशाखाश्रया कामला स्यान्न केवलं पांडुरोगिणः ।

**उपेक्षया च शोफाढ्या सा कृच्छ्रा कुंभकामला।**

उपेक्षया चिकित्सां विना सैव कामला यदा शोफाढ्या श्वयथुबाहुल्या स्यात्तदा कुंभकामलेत्युच्यते । सा कृच्छ्रसाध्या ।

हलीमकं लक्षयति ।

**हरितश्यावपीतत्वं पांडुरोगे यदा भवेत् ॥ १८ ॥**
**वातपित्ताद्भ्रमस्तृष्णास्त्रीष्वहर्षो मृदुर्ज्वरः ।**
**तंद्राबलानलभ्रंशो लोढरं तं हलीमकम् ॥ १९ ॥**
**अलसं चेति शंसंति**

पांडुरोगे सति यदा हरितश्यावपीतता भ्रमादयश्च वातपित्तात्स्युः । अतश्च तं हलीमकं शंसंति । मुनय इति शेषः । तं च हलीमकं लोढरं तथा अलसं वाचक्षते ।

**तेषां पूर्वमुपद्रवाः ।**
**शोफप्रधानाः कथिताः स एवातो निगद्यते॥ २० ॥**

तेषां पांडुरोगप्रकाराणां पूर्वमुपद्रवा यतः शोफप्रधानाः कथिताः अतोऽस्माद्धेतोः पांडुरोगनिदानादनंतरं शोफ एव भण्यते न विसर्पः । शोफः प्रधानः प्रथमो येषां त एवं कथिताः। क्व । इहैव । यथोक्तम् । शूनाक्षिकूट इत्यादि । तथा शूननाभिपादास्यमेहन इति ।

**पित्तरक्तकफान्वायुर्दुष्टो दुष्टान् बहिः शिराः ।**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥२१ ॥**
**उत्सेधं संहतं शोफं तमाहुर्निचयादतः ।**
**सर्वं**

बहिर्भूताः सिरा बहिःसिरा बाह्याः सिराः । वायुः पित्तरक्तकफान् कर्मभूतान् बहिःसिराः कर्मभूता नीत्वोत्सेधं कुर्यात् । नयतेर्द्विकर्मकत्वात्पित्तादयो बहिःसिराश्च कर्म । यथा अजां नयति ग्राममिति । तेनायमर्थोऽवतिष्ठते । बहिःसिराः पित्तादीन्नीत्वेति । किंभूतो वायुः । दुष्टः सन् कोपनैः कुपितः । किंभूतमुत्सेधम् । त्वक् च मांसं च त्वङ्मांसे ते संश्रय आश्रयो यस्य तमेवम् । तैर्हीति हिशब्दोऽवधारणे । तैरेव बहिःसिराः प्राप्तैः पित्तरक्तकफैः रुद्धगतिः । अत एव संहतं समंताद्वृत्तं निश्चलमिव संपन्नमुत्सेधम् । यतश्चैवं वातपित्तकफैः शोफः संजायते तस्मात्सर्वं शोफं निचयाद्दोषत्रयादाहुः ।

नन्वेवं सतीदं विरुध्यते दोषैः पृथग्द्वयैः सर्वैरित्यत आह ।

**हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २२ ॥**
**दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।**
**द्विधा वा निजमागंतुं सर्वांगैकांगजं च तम् ॥ २३॥**
**पृथून्नतग्रथिततविशेषैश्च त्रिधा विदुः ।**

तुशब्दो विशेषार्थे। यद्यपि सर्वस्त्रिदोषजः शोफस्तथाऽपि हेतुविशेषैर्यो रूपभेदस्तस्मान्नवात्मकं शोफमाहुः । तथा हि । योऽयं संनिपातः शोफहेतुरेष कदाचित्समं कृत्वा कुप्यति कदाचिद्विषमं कृत्वैकदोषद्विदोषत्रिदोषस्वरूपतया । एवं च हेतुविशेषैर्यो लक्षणभेदस्तस्मान्नवप्रकारत्वं शोफस्य न्याय्यमेव । लक्षणभेदश्चैषां स्पष्ट एव । तथा चाभिघाताद्धेतोश्च यथावदन्यल्लक्षणं विषाद्धेतोरन्यल्लक्षणं तद्वत् पृथग्वातजैश्च यथा चान्यद्द्वंद्वजे चान्यत्सन्निपातजे चान्यदिति । एवं लक्षणविशेषान्नवात्मकमाहुः । उपलक्षणं चेदम् । चिकित्साविशेषादपि हि नवात्मक एव शोफः । अथवा निजागंतुभेदेन द्विधा श्वयथुमाहुः । तथा तं शोफं सर्वांगजं सर्वशरीरजमेकांगजमेकावयवजं चेति पुनर्द्विःप्रकारमाहुः । पृथुश्चोन्नतश्च ग्रथितश्च तेषां भावः पृथून्नतग्रथितता तया विशेषास्तैस्त्रिधा त्रिप्रकारं शोफं विदुः । विदुरिति विद ज्ञान इत्यस्मादुसादेशः । पृथुत्वेन विस्तीर्णकृतत्वेन विशेषेण तथोन्नतत्वेन विशेषेण तथा ग्रथितत्वेन ग्रथितविशेषेण स्वरूपत्वेनेति योज्यम् ।

**सामान्यहेतुः शोफानां दोषजानां विशेषतः ॥ २४॥**

वक्ष्यमाणो गुर्वम्लस्निग्धादिको वर्गः श्वयथूनां निजानामागंतूनां च सामान्यहेतुरुत्पत्तौ कारणम् । दोषजानां श्वयथूनां पुनरतिशयेन हेतुर्न तथाऽऽगंतूनामिति विशेषशब्देन द्योतयति ।

**व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम् ।**
**अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम् ॥ २५ ॥**
**लवणक्षारतीक्ष्णोष्णं शाकांबु स्वप्नजागरम् ।**
**मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम् ॥ २६ ॥**
**पदातेर्मार्गगमनं यानेन क्षोभिणाऽपि वा ।**
**श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ २७ ॥**
**विषूच्यलसकच्छर्दिगर्भवीसर्पपांडुताः ।**
**अन्ये च मिथ्योपक्रांतास्तैर्दोषा वक्षसि स्थिताः२८**
**ऊर्ध्वं शोफमधोवस्तौ मध्ये कुर्वंति मध्यगाः ।**
**सर्वांगगाः सर्वगतं प्रत्यंगेषु तदाश्रयाः ॥ २९ ॥**

व्याधिकर्मोपवासादिभिः क्षीणस्य व्याधिना ज्वरादिना क्षीणस्य तथा कर्मणा पंचविधेन वमनविरेचननिरूहानुवासननस्याख्येन तथोपवासेन । आदिग्रहणादन्येन च मार्गादिना क्षीणस्य द्रुतं कृत्वा सहसैव गुर्वादिकं भजतः । अथेति समुच्चये । व्याध्यादिक्षीणलक्षणेभ्यः सकाशादन्यस्य स्वस्थादेरप्यतिमात्रं मात्रामतिक्रम्य भजतो दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वंति । प्रकृतत्वाद्वक्षस ऊर्ध्वम् । बस्तौ स्थिता अधः शोफं कुर्वंति । मध्ये स्थिता दोषा मध्ये शोफं कुर्वंति । ग्राम्याणां चटककुक्कुटादीनां

मांसं ग्राम्यमांसम् वल्लूरं शुष्कमांसम् । स्वप्नोऽत्राह:स्वप्नो जागरश्च रात्रिजागरो बोध्यः । यानेन तुरगादिना क्षोभिणा शरीरसंरंभजनकेन । तथा श्वासादयः पांडुपर्यंता रोगाः प्राधान्येन तथाऽन्येऽपि श्वासकासादिव्यतिरिक्ता रोगा मिथ्योपक्रांता मिथ्योपचरिता अयथाशास्त्रमुपक्रांताः शोफहेतवः । एतैरपि दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वंति । बस्तौ स्थिता अधो मध्यगा मध्ये सर्वांगगाः सर्वगतं प्रत्यंगेषु तदाश्रया दोषाः शोफं कुर्वंति ।

**तत्पूर्वरूपं दवथुः सिरायामोऽगगौरवम् ।**

तस्य श्वयथोः पूर्वरूपं तत्पूर्वरूपम् । दवथुश्चक्षुरादिषु यस्तीव्र ऊष्मा स भण्यते । यदुक्तम् । दवथुश्चक्षुरादिभ्यस्तीव्रमूष्मप्रवर्तनमिति । तथा सिरायामो यत्र प्रदेशे श्वयथुरुद्बुभूषुस्तत्र सिराणां दैर्घ्यमिव । तथांगगौरवं स्यात् ।

**वाताच्छोफश्चलो रूक्षः खररोमारुणासितः॥ ३० ॥**
**संकोचस्पंदहर्षार्तितोदभेदप्रसुप्तिमान् ।**
**क्षिप्रोत्थानशमः शीघ्रमुन्नमेत्पीडितस्तनुः ॥ ३१ ॥**
**स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।**
**त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ॥ ३२ ॥**

वाताच्छोफश्चलादिलक्षणः ।

**पीतरक्तासिताभासः पित्तादाताम्ररोमकृत् ।**
**शीघ्रानुसारप्रशमो मध्ये प्राग्जायते तनुः ॥ ३३ ॥**
**सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः ।**
**शीताभिलाषी विड्भेदी गंधी स्पर्शासहो मृदुः ३४**

पित्ताच्छोफः पीतरक्तासिताभासादिलक्षणः । स च मध्ये मध्यप्रदेशे प्राक् पूर्वं जायते । प्राग्ग्रहणं पश्चात्सकलेऽपि देहदेशे स्यादिति द्योतयति ।

**कंडूमान् पांडुरोमत्वक्कठिनः शीतलो गुरुः ।**
**स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसादकृत् ॥ ३५ ॥**
**आक्रांतो नोन्नमेत्कृच्छ्रशमजन्मा निशाबलः ।**
**स्रवेन्नासृक्चिरात्पिच्छां कुशशस्त्रादिविक्षतः ३६**
**स्पर्शोष्णकांक्षी च कफात्**

कफाच्छोफः कंडूयुतादिलक्षणः स्यात्तथाऽऽक्रांतः पीडितः सन् । वातिक इव नोन्नमेत् । तथा कृच्छ्रेण शमजन्मनी यस्य स एवम् । तथा निशाबलो रात्रावधिक इत्यर्थः । तथा कुशशस्त्रादिभिर्विक्षतः सशोफो न रक्तं स्रवेत् । किं तर्हि चिरेण पिच्छां लसीकापरपर्यायां स्रवेत् । तथा स्पर्शोष्णाभिलाषी च स्यात् ।

**यथास्वं द्वंद्वजास्त्रयः ।**
**संकराद्धेतुलिंगानाम्**

हेतवश्च लिंगानि च तेषां संकरात् संकीर्णत्वेन यथास्वं द्वंद्वजास्त्रयः शोफाः स्युरिति शेषः ।

**निचयान्निचयात्मकः ॥ ३७ ॥**

निचयात्मको दोषत्रयजः शोफो निचयाद्धेतुलिंगनिचयात्स्यात् ।

**अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ।**
**हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ३८ ॥**
**रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।**
**भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ३९**

तथा शस्त्रादिच्छेदभेदक्षतादिभिर्यः शोफः सोऽभिघातेन वेद्य इति शेषः । तथा हिमं च हिमानिलश्चोदध्यनिलश्च तैस्तथा रसैः शूकैश्च भल्लातकपिकच्छुजैः संस्पर्शाच्छ्वयथुर्विसर्पवान् भवेत् । स च भृशोष्मा लोहिताभासश्च बाहुल्येन च पित्तलक्षणः स्यात् । पित्तशोफस्य लक्षणं पित्तशोफलक्षणमिव लक्षणं यस्य स पित्तलक्षणः । सप्तम्युपमानपूर्वस्येति बहुव्रीहिरुत्तरपदलोपश्च ।

**विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।**
**दंष्ट्रादंतनखापातादविषप्राणिनामपि ॥ ४० ॥**
**विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरात् ।**
**विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ ४१ ॥**
**मृदुश्चलोऽवलंबी च शीघ्रो दाहरुजाकरः ।**

विषजः शोफः सविषाणां प्राणिनामंगे परिसर्पणाद्गमनात्तथा तेषामेव मूत्रणात्तथा दंष्ट्रादंतनखानामापातादविषप्राणिनामपि शोफः स्यात् । अपिशब्दान्न केवलं सविषप्राणिनां तथा विण्मूत्रशुक्रैरुपहतं तत्स्पर्शदूषितमप्रशस्तम् । विण्मूत्रशुक्रोपहतं च तन्मलवच्च विण्मूत्रशुक्रोपहतमलवत्तथाविधं च तद्वस्त्रं च तस्य संकरः संस्पर्शस्तस्मादपि शोफः स्यात् । तथा विषवृक्षाणामनिलस्तस्य संस्पर्शात्तथा गरयोगस्यावचूर्णनमवध्वंसनं तस्माच्च मृद्वादिगुणयुक्तः श्वयथुः स्यात् ।

**नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः ४२**

नवोऽचिरोत्पन्नस्तथाऽनुपद्रव उपद्रवरहितः शोफः साध्यः । असाध्यः पुरा विकृतिविज्ञानीयेऽभिहितः । यथोक्तम् । अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् । नारीं शोफो मुखाद्धंति कुक्षिगुह्यादुभावपीति ।

श्वयथुवद्दोषैर्दूष्यैश्च यतो विसर्पो भवत्यतस्तन्निदानं प्रक्रम्यते ।

**स्याद्विसर्पोऽभिघातांतैर्दोषैर्दूष्यैश्च शोफवत् ।**

विसर्पः सर्व एव शोफवद्दोषैः पृथग्वातपित्तकफैर्द्वंद्वैः समस्तैस्तथा अभिघातादेवमभिघातोत्पन्नैर्दोषैः शोफवद्विसर्पसंभवः । दूष्यैरपि शोफवत् । एवं पित्तरक्तकफान् वायुरित्यादिरपि ग्रंथोऽत्र योज्यः ।

त्र्यधिष्ठानं च तं प्राहुर्बाह्यांतरुभयाश्रयात् ॥ ४३ ॥
यथोत्तरं च दुःसाध्याः

तं च विसर्पं त्र्यधिष्ठानं प्राहुरात्रेयादय इति शेषः । बाह्यांतरुभयाश्रयात् पूर्वार्जितकर्मवशात्कदाचिद्बाह्याश्रयो विसर्पो जायते । बाह्य आश्रयो यस्य स तथा । एवं कदाचिदंतराश्रयः । कदाचिदुभयाश्रयः । ते च बाह्यांतरुभयाश्रया विसर्पा यथोत्तरं दुःसाध्या दुःखेन साध्यंत इति दुःसाध्याः ।

तत्र दोषा यथायथम् ।
प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ॥ ४४ ॥
देहे शीघ्रं विसर्पंति तेंऽतरंतः स्थिता वहिः ।
बहिस्था द्वितये द्विस्थाः

तस्मिन् विसर्पे यथायथं प्रकोपणैस्तिक्तोषणादिभिः प्रकुपिता विशेषेण पुनर्विदाहिभिरत्यर्थं कृत्वा प्रकुपिता देहे शीघ्रमाश्वेव विसर्पंति । तेंऽतःस्थिता अंतर्विसर्पंति । बहिस्था दोषा बहिः सर्पंति । द्वितये द्वयेंऽतर्बहीरूपे द्विस्था उभयस्थाः संतो विसर्पंति ।

विद्यात्तत्रांतराश्रयम् ॥ ४५ ॥
मर्मोपतापात्संमोहादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ ४६ ॥
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ।

तत्र तेषु विसर्पेषु मध्येंऽतराश्रयं विसर्पं मर्मोपतापादिभिर्विद्यात् । मर्मणां हृदयादीनामुपतापो दुःखं तस्मात् । तथा संमोहान्मूर्छोद्भवात् । अयनानां कर्णनासादीनां विघट्टनाद्विशेषेण चलनादतिशयेन परिस्फुरणादित्यर्थः । तथा तृष्णाया अतियोगात् । तथा वेगानां नानारूपाणां विषमं कृत्वा विच्छिद्य विच्छिद्य कृत्वा प्रवर्तनात् । आशु च शीघ्रमेवाग्निबलयोर्भ्रंशाद्विनाशात् । अतो लक्षणविपर्ययाद्बाह्यं बाह्याश्रयं विसर्पं विद्यात् ।

तत्र वातात्परीसर्पो वातज्वरसमव्यथः ॥ ४७ ॥
शोफस्फुरणनिस्तोदभेदो यामार्तिहर्षवान् ।

तेषु विसर्पेषु मध्ये वाताद्यो विसर्पः स वातज्वरतुल्यव्यथः स्याच्छोफादियुतश्च ।

पित्ताद्द्रुतगतिः पित्तज्वरलिंगोऽतिलोहितः ॥ ४८ ॥

पित्ताद्विसर्पो द्रुतगतिः सर्वव्यापी तथा पित्तज्वरलिंगोऽतिलोहितश्च स्यात् । पित्तज्वरलिंगानीव लिंगानि यस्येति सप्तम्युपमानपूर्वस्येत्यादिना बहुव्रीहिरुत्तरपदलोपश्च ।

कफात्कंडूयुतः स्निग्धः कफज्वरसमानरुक् ।

कफाद्विसर्पः कंडूमान् स्निग्धः कफज्वरतुल्यरुक् । वातादिज्वरलक्षणं यथोक्तम् । तत्र तत्रांगे तास्ताः स्युर्वेदानाश्चला इत्यादि ।

स्वदोषलिंगैश्चीयंते सर्वस्फोटैरुपेक्षिताः ॥ ४९ ॥
ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम् ।

सर्वे च विसर्पा उपेक्षिता उपक्रमरहिताः स्फोटैश्चीयंते व्याप्यंते । किंभूतैः । स्वदोषलिंगैर्यथायथं स्वदोषलक्षणैः । तथा पक्वभिन्नाः स्वंस्वमात्मीयमात्मीयं दोषं व्रणलक्षणं बिभ्रति धारयंति । पूर्वं पक्वाः पश्चाद्भिन्नाः पक्वभिन्नाः । पूर्वकालेत्यादिना समासः । तत्र मारुताच्छ्यावकृष्णारुणतेत्यादिग्रंथनिर्दिष्टं व्रणलक्षणम् । पित्तेन क्षिप्रप्ररुज इत्यादिग्रंथनिर्दिष्टम् । एवं कफादिलक्षणमपि बोध्यम् ।

अधुना द्वंद्वजं लक्षयति ।

वातपित्ताज्ज्वरच्छर्दिमूर्छातीसारतृड्भ्रमैः ॥ ५० ॥
अस्थिभेदाग्निसदनतमकारोचकैर्युतः ।
करोति सर्वमंगं च दीप्तांगारावकीर्णवत् ॥ ५१ ॥
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः ।
शांतांगारासितो नीलो रक्तो वाशु च चीयते॥५२॥
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं च सः ।
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥५३॥
व्यथेतांगं हरेत्संज्ञां निद्रां च श्वासमीरयेत् ।
हिध्मां च स गतोऽवस्थामीदृशीं लभते नना ५४
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ।
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ॥ ५५ ॥
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ।

वातपित्ताद्विसर्पो ज्वरादिभिर्युतः सकलमंगं च दीप्तांगारावकीर्णवज्ज्वलितांगारव्याप्तसदृशं करोति । यं यं च शरीरदेशं विसर्पो विसर्पति प्रसरति स स शांतागारासितो नीलो रक्तो वा भवेत् । तथा स विसर्पो द्रागेवाग्निदग्ध इव स्फोटैश्चीयते व्याप्यते । स च विसर्पः शीघ्रगत्वात्तत्स्वभाववशान्मर्मानुसारी द्रुतं त्वरितं कृत्वा स्यात् । तत एव च वातोऽतिबलो बलीयानंगं शरीर व्यथेत् पीडयेत् । संज्ञां संविदं हरेन्नाशयेत् । निद्रां च हरेत् । श्वासमीरयेत् । कुर्यात् । तथा हिध्मां च । स विसर्पी पुरुष ईदृशीमवस्थां गतः प्राप्तश्चेतोऽनवस्थालक्षणयाऽरत्या ग्रस्तोऽभिभूतो न क्वचिद्भूमिशय्यासनादिषु शर्म सुखं लभते । अरतिग्रस्त इति हेतौ प्रथमा । अरतिग्रस्तत्वादित्यर्थः । एवं क्वचिदपि सुखालाभाद्भूम्यादिषु चेष्टमानः परिलुठंस्ततः क्लिष्टो मनसा कायेन च मनोदेहश्रमोद्भवां तदुत्थां निद्रामश्नुते । किंभूतः । दुष्प्रबोधः । दुःखेन प्रबोधो निद्रापगमो यस्य स एवम् । एष चाग्न्याख्यो विसर्प उच्यते ।

कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥५६॥
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम् ।
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम् ॥ ५७॥
ग्रंथीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ।
श्वासकासातिसारास्यशोषहिध्माबमिभ्रमैः ॥ ५८॥

**मोहवैवर्ण्यमूर्छांगभंगाग्निसदनैर्युतम् ।**
**इत्ययं ग्रंथिवीसर्पः कफमारुतकोपजः ॥ ५९ ॥**

कफेन पवनो रुद्धस्तमेव कफं बहुधा भित्त्वा ग्रंथीनां मालां कुरुते । रक्तं च वृद्धरक्तस्य नरस्य दूषयित्वा ग्रंथीनां मालां कुरुते । किंभूतं रक्तम् । त्वक्सिरास्रावमांसगम् । किंभूतानां ग्रंथीनाम् । दीर्घाणुवृत्तस्थूलखरस्वभावानां तथा रक्तवर्णानाम् । किंभूतां मालाम् । तीव्ररुग्ज्वराम् । तीव्रौ रुग्ज्वरौ यस्यास्तां तथा श्वासादिभिर्युताम् । इत्ययमनंतरोक्तो ग्रंथिवीसर्प उच्यते । कफवातकोपजश्चायं वेद्यः ।

**कफपित्ताज्ज्वरः स्तंभो निद्रातंद्राशिरोरुजः ।**
**अंगावसादविक्षेपप्रलापारोचकभ्रमाः ॥ ६० ॥**
**मूर्छाग्निहानिर्भेदोऽस्थ्नां पिपासेंद्रियगौरवम् ।**
**आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥**
**प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ।**
**पिटकैरवकीर्णोऽतिपीतलोहितपांडुरैः ॥ ६२ ॥**
**मेचकाभोऽसितस्निग्धो मलिनः शोफवान् गुरुः ।**
**गंभीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ६३**
**पंकवच्छीर्णमांसश्च स्पृष्टस्नायुसिरागणः ।**
**शवगंधिश्च वीसर्पं कर्दमाख्यमुशंति तम् ॥ ६४ ॥**

कफपित्तात्कर्दमाख्यो जायते । तत्र च ज्वरादयः स्युः । स च विसर्पः प्रायेण बाहुल्येनामाशये नाभिस्तनांतरमध्य एकदेशं गृह्णन्नाक्रामन्ननंतरं सर्पति व्याप्नोति । न चातिरुक् स्यात् । तथा पिटकैरवकीर्णो व्याप्तः स्यात् । किंभूतैः । अतिपीतलोहितपांडुरैः । तथा मेचकाभादिकः स्यात् । मेचको मयूरकंठसदृशो वर्णः । तं तादृशं विसर्पं कर्दमाख्यं कर्दमसंज्ञमुशंति । मुनय इति शेषः ।

**सर्वजो लक्षणैः सर्वैः सर्वधात्वतिसर्पणः ।**

सर्वैस्त्रिभिर्दोषैर्जातः सर्वजः सन्निपातोद्भवो वीसर्पः सर्वैर्लक्षणैरुपलक्षितः । स च सर्वान् धातूनतिशयेन सर्पति सर्वधात्वतिसर्पणः स्यात् ।

**बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ ६५ ॥**
**विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम् ।**
**स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ६६**

मारुतो वातः क्षताद्बाह्यकारणात्क्रुद्धः सन् विसर्पं कुर्यात् । किं कुर्वन् । पित्तं सह रक्तेन प्रेरयन् । तथा स्फोटैः पिटकैश्चितं व्याप्तम् । किंभूतैः । कुलत्थसदृशैः । तथा शोफादिभिराढ्यमतिशयेन युतम् । तथा श्यावलोहितं वर्णेन ।

**पृथग्दोषैस्त्रयः साध्या द्वंद्वजाश्चानुपद्रवाः ।**
**असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रांतमर्मकाः ॥ ६७ ॥**
**शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगंधयः ।**

पृथग्दोषैर्वातपित्तकफैः केवलैस्त्रयो विसर्पाः साधयितुं शक्याः । द्वंद्वजाश्चानुपद्रवाः कासवैवर्ण्यज्वरादिभिरुपद्रवै रहितास्त्रयः साध्याः । क्षतसर्वोत्थौ द्वौ विसर्पावसाध्यौ । तथा स्वभावत्वात्सर्वे विसर्पाश्चाक्रांतमर्मकाश्चासाध्याः । तथा शीर्णानि स्नायुसिरामांसानि यैस्तेऽप्यसाध्याः । तथा प्रकर्षेणातिशयेन क्लिन्नास्तथा शवगंधयः कुणपगंधतुल्या ये तेऽप्यसाध्याः । शवस्येव गंधो येषामित्युपमानाच्चेति गंधस्येदादेशः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां निदानस्थाने पांडुकामलाशोफविसर्पनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

विसर्पनिदानादनंतरं तुल्यहेत्वादित्वात्कुष्ठनिदानमारभ्यते ।

**अथाऽतः कुष्ठश्वित्रकृमिनिदानं व्याख्यास्यामः ।**
**मिथ्याहारविहारेण विशेषेण विरोधिना ।**
**साधुनिंदावधान्यस्वहरणाद्यैश्च सेवितैः ॥ १ ॥**
**पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः ।**
**सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम् ॥२॥**
**दूषयंति श्लथीकृत्य निश्चरंतस्ततो बहिः ।**
**त्वचः कुर्वंति वैवर्ण्यं दुष्टाः कुष्ठमुशंति तत् ॥ ३ ॥**

मिथ्याहारादिना तथा साधुनिंदावधादिभिः पाप्मभिः कर्मभिः सद्यः सेवितैरनुष्ठितैः प्राक्तनैर्वाऽन्यजन्माचरितैः । सेवितग्रहणेन सातत्यानुष्ठानं द्योतयति । तेन कदाचित्करणत्वमेषां न कुष्ठहेतुत्वमिति गम्यते । तैस्तथाभूतैः कर्मभिर्मिथ्याहारादिना चेरिता दुष्टा मला वातपित्तकफाः शिरास्तिर्यग्गामिनीः प्रपद्याश्रित्य त्वग्लसीकासृगामिषं दूषयंति । तदेव च त्वगादिकं शिथिलीकृत्य ततोऽनंतरं बहिर्निश्चरंतो बाह्यदेशे प्रसरंतस्त्वचो वैवर्ण्यं कुर्वंति । तत्कुष्ठमुशंति मुनय इति शेषः ।

कुतोऽस्य रोगस्य कुष्ठमिति संज्ञेत्याह ।

**कालेनोपेक्षितं यस्मात्सर्वं कुष्णाति तद्वपुः ।**
**प्रपद्य धातून्व्याप्यांतः सर्वान् संक्लेद्य चावहेत्॥४॥**
**सस्वेदक्लेदसंकोथान् कृमीन्सूक्ष्मान्सुदारुणान् ।**
**रोमत्वक्स्नायुधमनी तरुणास्थीनि यैः क्रमात् ॥ ५ ॥**
**भक्षयेच्छ्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतम् ।**

यतोऽस्माद्धेतोरुपेक्षितमनुपक्रांतं सत् कालेन सर्वं वपुः शरीरं कुष्णाति तस्मात्तत्कुष्ठमित्युच्यते । तच्च कुष्ठं धातून्सर्वान्प्रपद्य प्राप्यानंतरमंतर्व्याप्य प्रकृतत्वात्तेषामेवांतरं व्याप्य तथा सर्वांस्तानेव धातून् संक्लेद्य संक्लेदयित्वा कृमीनावहेत्कुर्यात् । किंभूतान् । स्वेदादिभिर्युतान् । तथा सुदारुणान् दुश्चिकित्स्यान् । यैः कृमिभिस्तत्कुष्ठं लोमादीन् भक्षयेत् । श्वित्रस्येदृग्रूपता न विद्यते या कुष्ठस्योक्ता । अस्माच्च कारणाच्छ्वित्रं कुष्ठबाह्यमुदाहृतम् । कुष्ठबाह्यं त्वग्गतमात्रमेवोक्तमित्यर्थः ।

**कुष्ठानि सप्तधा दोषैः पृथग्द्विश्रैः समागतैः ॥ ६ ॥**

कुष्ठानि सप्तधा सप्तप्रकाराणि । कथमित्याह । पृथग्वातपित्तकफैः । तैरेव च मिश्रैर्वातपित्ताभ्यां वातकफाभ्यां पित्तकफाभ्याम् । तैरेव दोषैः समागतैः संनिपतितैः ।

नन्वेवं सत्येकदोषजं द्विदोषजं कुष्ठं न सर्वं त्रिदोषजं स्यादित्याशंक्याह ।

**सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।**

सर्वेष्वपि कुष्ठेषु त्रिदोषेषु सन्निपातजेष्वप्यधिकत्वेन व्यपदेशः । सन्निपातस्य समविषमात्मकत्वात् ।

अत आह ।

**वातेन कुष्ठं कापालं पित्तादौदुंबरं कफात् ॥ ७ ॥**
**मंडलाख्यं विचर्ची च ऋक्षाख्यं वातपित्तजम् ।**
**चर्मैककुष्ठं किटिभसिध्मालसविपादिकाः ॥ ८ ॥**
**वातश्लेष्मोद्भवा श्लेष्मपित्ताद्दद्रुशतारुषी ।**
**पुंडरीकं सविस्फोटं पामा चर्मदलं तथा ॥ ९ ॥**
**सर्वैः स्यात्काकणं पूर्वं त्रिकं दद्रुसकाकणम् ।**
**पुंडरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥**

वातोल्बणेन सन्निपातेन कापालं नाम कुष्ठं भवति । पित्तात्पित्ताधिकात्सन्निपातादौदुंबरं नाम कुष्ठं जायते । कफात् कफाधिकात्सन्निपातान्मंडलाख्यं कुष्ठं जायते । तथा विचर्ची च कफादेवेति चार्थः । ऋक्षाख्यं कुष्ठं वातपित्तजम् । ऋक्षजिह्वेव प्रकाशखरा आकृतिर्यस्य ऋक्षजिह्वस्य तथैवम् । वातपित्तोल्बणात्सन्निपाताज्जातम् । एवमग्रेऽपि योज्यम् । चर्मैककुष्ठं किटिभसिध्मालसविपादिका वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी द्वे कुष्ठे । न केवलं दद्रुः शतारुश्च श्लेष्मपित्तात् । यावत्पुंडरीकं तथा विस्फोटस्तथा पामा तथा चर्मदलं जायते । सर्वैस्त्रिभिरेव समैर्दोषैः काकणं नाम कुष्ठमुत्पद्यते । एवमेतान्यष्टादश कुष्ठानि भवंति । पूर्वं त्रिकं कपालोदुंबरमंडलाख्यं तथा दद्रुः काकणं पुंडरीकमृक्षजिह्वं चेति महाकुष्ठानि सप्त स्युः ।

**अतिश्लक्ष्णखरस्पर्शस्वेदस्वेदविवर्णताः ।**
**दाहः कंडूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ११**
**व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।**
**रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् १२**
**रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।**

अतिश्लक्ष्णादिकं कुष्ठलक्षणमग्रजं प्राग्रूपमित्यर्थः ।

अधुनैतेषां लक्षणान्याह ।

**कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ १३ ॥**
**विस्तृतासमपर्यंतं दूषितैर्लोमभिश्चितम् ।**
**तोदाढ्यमल्पकंडूकं कापालं शीघ्रसर्पि च ॥ १४ ॥**

कृष्णारुणकपालाभमित्यादिकं कापालस्य लक्षणम् ।

**पक्वोदुंबरताम्रत्वग्रोमगौरसिराचितम् ।**
**बहलं बहुलक्लेदं रक्तं दाहरुजाधिकम् ॥ १५ ॥**
**आशूत्थानावदरणकृमि विद्यादुदुंबरम् ।**

पक्वोदुंबरताम्रेत्यादिकमुदुंबरस्य लक्षणम् ।

**स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम् ॥ १६ ॥**
**अन्योन्यसक्तमुत्सन्नं बहुकंडूस्रुतिक्रिमि ।**
**श्लक्ष्णपीताभपर्यंतं मंडलं परिमंडलम् ॥ १७ ॥**

स्थिरं स्त्यानमित्यादिकं मंडलस्य लक्षणम् ।

**सकंडूपिटिका श्यावा लसीकाढ्या विचर्चिका ।**

सकंडूपिटिकेत्यादिकं विचर्चिकाया लक्षणम् ।

**परुषं तनु रक्तांतमंतः श्यावं समुन्नतम् ॥ १८ ॥**
**सतोददाहरुक्क्लेदं कर्कशैः पिटिकैश्चितम् ।**
**ऋक्षजिह्वाकृतिप्रोक्तमृक्षजिह्वं बहुक्रिमि ॥ १९ ॥**

परुषमित्यादिकं ऋक्षजिह्वस्य लक्षणम् ।

**हस्तिचर्मखरस्पर्शं चर्म**

हस्तिचर्म खरस्पर्शं चर्माख्यं कुष्ठम् ।

**एकाख्यं महाश्रयम् ।**
**अस्वेदं मत्स्यशकलसंनिभम्**

एकसंज्ञं कुष्ठं महाश्रयं विस्तीर्णाशयम् । तथा अस्वेदं स्वेदरहितम् । तथा मत्स्यशकलसंनिभं मत्स्यत्वक्खंडसदृशम् । सुश्रुते त्वेककुष्ठस्यैवं लक्षणमभ्यधायि । कृत्स्नो देहो यस्य रक्तोऽरुणो वा तदेकाख्यं कुष्ठमाहुः । सकुष्ठमिति । खरनादेऽप्युक्तम् । महदस्वेदनं मत्स्यशकलाकारमेकजमिति ।

**किटिभं पुनः ॥ २० ॥**
**रूक्षं किणखरस्पर्शं कंडूमत्परुषासितम् ।**

किटिभं तु रूक्षं किणखरस्पर्शं कंडूमत्परुषासितम् ।

**सिध्मं रूक्षं बहिः स्निग्धमंतर्घृष्टं रजः किरेत् ॥२१॥**
**श्लक्ष्णस्पर्शं तनु श्वेतताम्रं दौग्धिकपुष्पवत् ।**
**प्रायेण चोर्ध्वकाये स्यात्**

सिध्मं नाम कुष्ठं बही रूक्षम् । अंतः स्निग्धं घृष्टं सद्रजः किरेत्क्षिपेत् । तथा श्लक्ष्णस्पर्शम् । तथा तनु । वर्णेन श्वेतताम्रं दौग्धिकपुष्पवदलाबुकुसुमाभम् । तच्च प्रायेण बाहुल्येनोर्ध्वकाये स्यात् । खरनादेऽप्युक्तम् । अलाबुपुष्पवत्सिध्म घृष्टं यच्चोद्गमेद्रज इति ।

**गंडैः कंडूयुतैश्चितम् ॥ २२ ॥**
**रक्तैरलसकम्**

अलसकं नाम कुष्ठं गंडैरक्तवर्णैः कंडूयुतैश्च व्याप्तं भवेत् ।

**पाणिपाददार्यो विपादिकाः ।**
**तीव्रार्त्यो मंदकंड्वश्च सरागपिटिकाचिताः ॥ २३ ॥**

विपादिकाः पाणिपाददार्यः स्युः । तथा तीव्रार्त्योऽत्यंतपीडया युताः । तथा परे मंदकंड्वोऽल्पखर्जूकाः । तथा सरागपिटिकाचिताश्च । पाणिपादौ दारयंतीति कर्मण्यणंतान्ङीप् ।

**दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ।**
**उत्सन्नमंडला दद्रूः कंडूमत्यनुषंगिणी ॥ २४ ॥**

दूर्वावद्दीर्घप्रताना दद्रूः । तथाऽतसीपुष्पाभा । तथोत्सन्नमंडला च । तथा कंडूमती । तथाऽनुषंगिणी प्रसक्तानुप्रसक्तया संश्लेषवती शरीरमनुधावती ।

**स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ।**
**शतारुः क्लेदजं त्वाढ्यं प्रायशः पर्वजन्म च ॥ २५ ॥**

शतारुर्नाम कुष्ठं स्थूलमूलादिलक्षणं यावत् । प्रायशः पर्वजन्म चेति ।

**रक्तांतमंतरा पांडु कंडूदाहरुजान्वितम् ।**
**सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः ॥ २६ ॥**
**घनभूरिलसीकासृक्प्रायमाशु विभेदि च ।**
**पुंडरीकम्**

पुंडरीकं नाम कुष्ठं रक्तपर्यंतम् । तथांऽतरा मध्ये पांडु । तथा कंडूदाहरुजायुतं तथोन्नतियुक्तम् । तथा रक्तैरंशुभिः सूक्ष्मरेखाभिरिवाचितं व्याप्तम् । पद्मपत्रमिव । तथा घनभूरिलसीकासृक्प्रायम् । आशु च विभेदि ।

**तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ॥ २७ ॥**
**विस्फोटम्**

विस्फोटं नाम कुष्ठं तनुत्वग्भिः स्फोटैश्चितं व्याप्तम् । किंभूतैः सितारुणैः श्वेतलोहितैः ।

**पिटिकाः पामा कंडूक्लेदरुजाधिकाः ।**
**सूक्ष्माः श्यावारुणा बव्ह्यः प्रायः स्फिक्पाणिकूर्परे२८**

पिटिकाः कंडूक्लेदरुजाधिकाः पामेत्युच्यते । किंभूताः । सूक्ष्माः श्यावारुणा बव्ह्यश्च प्रायो बाहुल्येन सा च पामा स्फिजोः पाण्योः कूर्परयोश्च स्यात् ।

**सस्फोटमस्पर्शसहं कंडूषातोददाहवत् ।**
**रक्तं दलच्चर्मदलम्**

चर्मदलं नाम कुष्ठं स्फोटवत् तथा स्पर्शाक्षमम् । तथा कंड्वादियुतम् । तथा रक्तं वर्णेन । तथा दलत्स्फुटत् ।

**काकणं तीव्रदाहरुक् ॥ २९ ॥**
**पूर्वं रक्तं च कृष्णं च काकणंतीफलोपमम् ।**
**कुष्ठलिंगैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ॥ ३० ॥**

काकणं नाम कुष्ठं तीव्रदाहरुक् । तथा पूर्वं प्रथमं रक्तं तथा कृष्णं काकणंतीफलोपमं मुंजाफलसदृशम् । ततोऽनंतरं सर्वैः कुष्ठलिंगैर्युतम् । नैकवर्णमपि तु श्वेतपीतादिवर्णमपि स्यादित्यर्थः । सुश्रुते तु मंडलशतारुर्विपादिकालसकचर्मदलविस्फोटाख्यानि नोदितानि । स्थूलारुष्कमहाकुष्ठपरीसर्पविसर्पराकसारुणाख्यानि तत्रोक्तानि । एषां च तल्लक्षणम् । यत्र स्थूलमूलान्यरूंषि जायंते संधिपूप्राणि तत् स्थूलारुष्कं कुष्ठम् । उत्पद्यंते सर्वदेहे महाख्ये त्वक्संकोचस्वापतोदांगसादाः । यस्मिन् दीर्घाः स्फोटिकाः स्राववत्यः संसर्पयुक्तं परीसर्पमाहुः । तुल्यः सर्पेयो विसर्पेण शीघ्रं त्वग्रक्तादीन् व्याप्य स स्याद्विसर्पः । कृत्स्ने देहे स्फोटिकाः स्रावहीनाः कंडूप्राया राकसास्ताः प्रदिष्टाः । अरुणानि तनूनि विसर्पीणि तापयुतान्यरुणानीति । तदेतेषु कुष्ठभेदेषु यथा नामविपर्ययस्तथा लक्षणविपर्ययोऽपि किंत्वेतेऽपि कुष्ठभेदा दृश्यंत एवेत्येतदपि लक्षणमादरणीयमेवेति मन्यामहे । कुष्ठेष्वित्यादि । कुष्ठेषु दोषजेषु सत्स्विदं वाताधिकं कुष्ठमिदं पित्ताधिकं कुष्ठमिदं कफाधिकं कुष्ठमिति कथं ज्ञातव्यमित्याह ।

**दोषभेदीयविहितैरादिशेल्लिंगकर्मभिः ।**
**कुष्ठेषु दोषोल्वणताम्**

कुष्ठेषु दोषोल्बणतां दोषाधिक्यं दोषभेदीयविहितैर्यथायथं लिंगकर्मभिरादिशेत् । लिंगानि च तानि कर्माणि च लिंगकर्माणि यथा वायोः स्रंसादीनि पित्तस्य रागदाहादीनि श्लेष्मणः स्नेहकाठिन्यादीनि यथायथमात्मीयैरेव कर्मभिर्यतस्ते लिंग्यंते लक्ष्यंते ततस्तेषां दोषाणां कर्माण्येव लिंगान्युच्यंते । अत एव च स्रंसादीनि कर्माणि दोषाणामुक्त्वेदमनंतरमुवाच । इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् । दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेदिति ।

**सर्वदोषोल्वणं त्यजेत् ॥ ३१ ॥**
**रिष्टोक्तं यच्च यच्चाऽस्थिमज्जशुक्रसमाश्रयम् ।**

सर्वदोषोल्बणं संनिपातजं कुष्ठं त्यजेन्न चिकित्स्येत् । रिष्टोक्तमिति । यच्च विकृतिविज्ञानीये कथितं कुष्ठं विशीर्यमाणांगमित्यादि तच्च नोपक्रमेत् । यच्च कुष्ठमस्थिमज्जशुक्रसमाश्रयं तच्च त्यजेत् ।

**याप्यं मेदोगतम्**

मेदोगतं कुष्ठं याप्यं पथ्यादिना यापयितुं शक्यम् ।

**कृच्छ्रं पित्तद्वंद्वास्रमांसगम् ॥ ३२ ॥**

पित्तस्य द्वंद्वं पित्तद्वंद्वम् । पित्तद्वंद्वजं तथा रक्तगं मांसगं च कुष्ठं कृच्छ्रं कृच्छ्रसाध्यम् ।

**अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ।**

कफवाताढ्यमकृच्छ्रं सुखसाध्यम् । तथा त्वक्स्थं तथा एकदोषाधिकं च यत्कुष्ठं तच्च सुखसाध्यम् ।

**तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ॥ ३३ ॥**
**स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः ।**
**पाणिपादाश्रिताः स्फोटाः क्लेदः संधिषु चाधिकम्**

**कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ।**
**नासाभंगोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ॥ ३५॥**
**क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम् ।**

तत्र तेषु कुष्ठेषु मध्ये त्वचि प्राप्ते कुष्ठे तोदादयः स्युः । रक्तस्थे कुष्ठे स्वेदाद्याः स्युः । मांसस्थे कुष्ठे पाणिपादाश्रिताः स्फोटाः स्युः । संधिषु चातिशयेन क्लेदो भवति । मेदसि स्थिते कुष्ठे कौण्यं कुणिता तथा गतिक्षयः । अंगानां दलनं छेदनमिव स्यात् । अस्थिमज्जस्थे कुष्ठे नासाया घ्राणस्य भंगस्तथा नेत्रयो रागः स्वरस्य च क्षयः स्यात् । क्षते च कृमयः स्युः । शुक्रस्थे कुष्ठे दाराणामपत्यानां च बाधनमुपद्रवैः स्वेदादिभिः पीडनं स्यात् ।

**यथापूर्वं च सर्वाणि स्युर्लिंगान्यसृगादिषु ॥ ३६ ॥**

असृगादिषु धातुषु कुष्ठाक्रांतदेहानां नराणां यानि लिंगान्युक्तानि तानि यथापूर्वं स्युः । यथा स्वेदादीनि रक्तस्थे कथितानि पाण्याद्याश्रिताः स्फोटादयश्च मांसस्थे स्युः । एवं मेदःप्रभृतिषु योज्यम् । एवं च स्वेदस्वापादीनि सर्वाण्यपि शुक्रस्थे कुष्ठे दाराणामपत्यानां च स्युरिति यथापूर्वशब्दस्यार्थः ।

कुष्ठनिदानादनंतरं श्वित्रस्योच्यते कुष्ठश्वित्रयोरेककारणत्वादत एवाह ।

**कुष्ठैकसंभवं श्वित्रं किलासं दारुणं च तत् ।**
**निर्दिष्टमपरिस्राावि त्रिधातूद्भवसंश्रयम् ॥ ३७ ॥**

कुष्ठानामेकः समानः संभवो यस्य तच्छ्वित्रं कुष्ठैकसंभवं किलासं दारुणं च तन्निर्दिष्टं न केवलं श्वित्रमिति । तच्चापरिस्रावि न कुष्ठवत् स्रवति । उद्भवो जन्म । संश्रय आश्रयः । उद्भवश्च संश्रयश्चोद्भवसंश्रयौ । धातुशब्देनोभयं परिगृह्यते । वातादयस्त्रयो दोषास्तथा रक्तादयस्त्रयो धातवः । धातवश्च धातवश्च धातवः । त्रयो धातवो यथाक्रममुद्भवसंश्रयौ यस्य तत्त्रिधातूद्भवसंश्रयम् ।

**वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।**
**सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ३८ ॥**
**सकंडु च क्रमाद्रक्तमांसमेदःसु चादिशेत् ।**

वाताद्रूक्षारुणं श्वित्रं स्यात् । पित्तात्कमलपत्रमिव ताम्रं वर्णेन तथा सदाहम् । तथा रोमविध्वंसि रोमशातनस्वभावम् । कफाच्छ्वेतम् । तथा घनम् । तथा गुरु अंगेनानुभूयते । तथा सह कंड्वा वर्तत इति सकंडु । क्रमाद्यथाक्रमं वाताद्युद्भवं श्वित्रं रक्तमांसमेदःसु चादिशेत् । तत्र वातोद्भवं श्वित्रं रक्ताश्रयम् । पित्तोद्भवं मांसाश्रयम् । मेदोधात्वाश्रयं कफोद्भवमिति क्रमशब्दस्यार्थः ।

**वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३९ ॥**

एवेति चार्थे । उभयं दोषोद्भवं रक्ताद्याश्रयं श्वित्रं वर्णेन चेदृगरुणं ताम्रं श्वेतं यथाक्रमम् । न पुनर्वाताद्युद्भवत्वादन्यवर्णं रक्तादिसंश्रयत्वादन्यवर्णमित्यर्थः । तच्च श्वित्रं वातोद्भवं रक्तसंश्रयं चात्तरोत्तरं कृच्छ्रसाध्यमादिशेदिति प्रकृतम् । रक्ताश्रयाद्वातजात्कृच्छ्रान्मांसाश्रयं पित्तजं कृच्छ्रतरं ततोऽपि मेदःसंश्रितं कफजं कृच्छ्रतममिति ।

अधुना साध्यासाध्यविभागार्थमाह ।

**अशुक्लरोमाऽबहुलमसंसृष्टं मिथो नवम् ।**
**अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥४०॥**
**गुह्यपाणितलोष्ठेषु जातमप्यचिरंतनम् ।**

अशुक्लरोम यच्छ्वित्रं तथा अबहुलमघनं तथा मिथः परस्परमसंसृष्टममिलितं तथा नवमवर्षातिक्रांतं तथाऽनग्निदग्धजमग्निदग्धजं यन्न भवति तच्च साध्यम् । वर्ज्यमतोऽन्यथा शुक्लरोम श्वित्रं बहुलं तथा परस्परसंसृष्टं तथा चिरकालोत्पन्नमग्निदग्धजं च तच्चासाध्यम् । गुह्यपाणितलोष्ठेषु जातमचिरंतनमप्यचिंत्यप्रभावत्वेन वर्ज्यम् ।

**स्पर्शैकाहारशय्यादिसेवनात्प्रायशो गदाः ॥ ४१ ॥**
**सर्वे संचारिणो नेत्रत्वग्विकारा विशेषतः ।**

सर्वे रोगाः प्रायशो बाहुल्येन संचारिणः संचरणशीलाः । कुतः । एके च त आहारशय्यादयश्चैकाहारशय्यादयः । आदिशब्देनाऽऽसनादीनां ग्रहणम् । स्पर्शः संश्लेषः । स्पर्शश्च एकाहारशय्यादयश्च तेषां सेवनं भजनं तस्मात् । नेत्रे च त्वक् च नेत्रत्वक् तत्र विकारा गदास्ते विशेषेण संचारिणः ।

अधुना क्रमप्राप्तान् कृमीनधिकृत्याह ।

**कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यंतरभेदतः ॥ ४२॥**

कृमयो द्विधा प्रोक्ताः । मुनिभिरिति शेषः । तुरवधारणे । द्विधैवेत्यर्थः । कथमित्याह । बाह्याभ्यंतरभेदतः । एके बाह्या ये केशवस्त्रादिजा यूकालिक्षादयः । अन्य इतरा यथांत्रादादयः ।

जन्मभेदेन चतुःप्रकाराः कथमित्याह ।

**बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।**
**नामतो विंशतिविधाः**

बहिर्मलजन्मानः केशवस्त्रेभ्यः शरीरबाह्येभ्य उत्पन्नत्वात्तथा कफजन्मानो रक्तजन्मानो विड्जन्मानश्चेति चतुर्धा । विट् पुरीषम् । नामतो नामभेदात्कृमयो विंशतिप्रकाराः ।

**बाह्यास्तत्राऽसृगुद्भवाः ॥ ४३ ॥**
**तिलप्रमाणसंस्थानवर्णाः केशांबराश्रयाः ।**
**बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥४४॥**
**द्विधा ते कोठपिटिकाकंडूगंडान् प्रकुर्वते ।**

तत्र तेषु बाह्याभ्यंतरेषु कृमिषु मध्येऽसृगुद्भवा असृजा रक्तेन बाह्यमलरूपेणोत्पन्ना बाह्याः । ते च तिलानामिव प्रमाणसंस्थानवर्णा येषां त एवम् । केशा वस्त्रं वाश्रयो येषां त एवम् । तथा बहुपादाः सूक्ष्माश्च । नामतो नाम्ना यूका लिक्षाश्चेति द्विधा । ते च । कोठादीन् विदधति ।

**कुष्ठैकहेतवोंतर्जाः श्लेष्मजास्तेषु चाधिकम् ॥ ४५ ॥**
**मधुरान्नगुडक्षीरदधिसक्तुनवोदनैः ।**

अंतर्जा आंतराः क्रमयः कुष्ठैकहेतवः कुष्ठेन सहैकस्तुल्यो हेतुर्निदानं मिथ्याहारविरुद्धभोजनादिकं येषां त एवम् । तेष्वेवांतर्जेषु क्रमिषु मध्ये श्लेष्मजा अधिकमतिशयेन मधुरान्नादिभिः स्युः ।

रक्तजानां निदानविशेषो वक्ष्यमाण इति पुरीषोत्थांस्तावदाह ।

**शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभिः ॥ ४६ ॥**

शकृज्जाः शकृदुद्भूतास्ते कुष्ठैकहेतुसामान्येऽप्यधिकं बहुविड्धान्यैर्यवमाषादिभिर्बहुविड्रिव पर्णशाकैः पालंक्यादिभिस्तथोलकादिभिः । उलकः स्वेदपर्यायः । अपरे तु उलुकादिभिरिति जगुः । उलुकं हरितावस्थं शिंबीधान्यमिति व्याचक्षते ।

**कफादामाशये जाता वृद्धाः सर्पंति सर्वतः ।**
**पृथुवध्रनिभाः केचित् केचिद्गंडूपदोपमाः ॥ ४७ ॥**
**रूढधान्यांकुराकारास्तनुदीर्घास्तथाऽणवः ।**
**श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥४८॥**
**अंत्रादा उदरावेष्टा हृदयादा महाकुहाः ।**
**कुरवो दर्भकुसुमाः सुगंधास्ते च कुर्वते ॥ ४९ ॥**
**हृल्लासमास्यस्रवणमविपाकमरोचकम् ।**
**मूर्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ५० ॥**

कफादामाशये जाता न पक्वाशये । तत्र हि पृथगध्येष्यते । पक्वाशये पुरीषोत्था इति । ते च वृद्धाः संतः सर्वतः सर्वस्मिन् शरीरे सर्पंति प्रसरंति । सर्वत इत्याद्यादित्वात्तसिः । पृथुवध्रनिभा इत्यादिना संस्थानकथनम् । श्वेता इत्यादिना वर्णकथनम् । नामतो नाम्ना च ते सप्तधा सप्तप्रकाराः । तुश्चार्थे । तान्येव सप्त नामान्याह । अंत्रादा इत्यादिना । अंत्राण्यदंतीत्यंत्रादाः । इत्यादीन्यर्थानुगतानि नामानि । कानिचियादृच्छिकानि कुरव इत्यादीनि । ते च कफजाः क्रमयो हृल्लासादिकं कुर्वंति ।

अधुना रक्तजानाह ।

**रक्तवाहिशिरोत्थाना रक्तजा जंतवोऽणवः ।**
**अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः॥५१॥**
**केशादा लोमविध्वंसा लोमद्वीपा उदुंबराः ।**
**षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ ५२ ॥**

रक्तजाः क्रमयो रक्तवाहिसिरोत्थानाः स्युः । तथा अपादा वृत्तास्ताम्रवर्णाश्च । सौक्ष्म्यात्सूक्ष्मत्वात्कारणात्केचिददर्शनाः प्रत्यक्षप्रमाणासमधिगम्याः कार्येणैवानुमीयंते । तेषां नामान्याह । केशादा लोमविध्वंसा लोमद्वीपा उदुंबरा इति । तथा सहसौरसमातरः । सह सौरसमातृभ्यां वर्तत इति सहसौरसमातरः । सौरसमातृसंज्ञं नामद्वयम् । एवं षडेते रक्तजाः क्रमयः । अन्येत्वेवं पठंति । सहजा रसमातर इति । सह शरीरेण जायंत इति सहजाः । रसो माता जननी येषां तत्प्रभवत्वात्ते रसमातर इति । कुष्ठेन सहैकं कर्म रोमहर्षकंडूतोदादिकं केशलोमध्वंसादिकं त्वक्सिरास्नायुमांसतरुणास्थिभक्षणं वा येषां त एवम् ।

**पक्वाशये पुरीषोत्था जायंतेऽधोविसर्पिणः ।**
**वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ५३**
**तदास्योद्गारनिःश्वासा विड्गंधानुविधायिनः ।**
**पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ ५४ ॥**
**ते पंच नाम्ना क्रमयः ककेरुकमकेरुकाः ।**
**सौसुरादाः सलूनाख्या लेलिहा जनयंति च ॥५५॥**
**विड्भेदशूलविष्टंभकार्श्यपारुष्यपांडुताः ।**
**रोमहर्षाग्निसदनगुदकंडूर्विनिर्गमात् ॥ ५६ ॥**

पुरीषोत्थाः पक्वाशय एव जायंते । पुरीषस्य पक्वाशयस्थत्वात् । ते चाधोविसर्पिणः स्युर्नोर्ध्वगाः । वृद्धाः संतो वृद्धिं गता यदाऽऽमाशयोन्मुखास्ते स्युस्तदाऽस्य क्रमिमतो रोगिण उद्गारनिःश्वासा विड्गंधानुविधायिनः पुरीषगंधानुकारिणो भवेयुः । तथा ते पृथुवृत्ततनुस्थूलाः संस्थानेन श्यावपीतसितासिता वर्णेन । तथा नाम्ना पंच संख्यया । तान्येव नामान्याह । ककेरुकेत्यादिना । ते च विनिर्गमाद्धेतोर्विड्भेदादीन् जनयंति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने कुष्ठश्वित्रक्रमिनिदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पंचदशोऽध्यायः ।

कुष्ठनिदानानंतरं वातव्याधिनिदानमारभ्यते । वातरोगाणां कुष्ठवद्बहुप्रकारत्वाद्विविधदुःखदायित्वाचेत्यत आह ।

**अथाऽतो वातव्याधिनिदानं व्याख्यास्यामः ।**
**सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।**
**अदुष्टदुष्टः पवनः शरीरस्य विशेषतः ॥ १ ॥**

अर्थाश्चानर्थाश्चार्थानर्थाः शुभाशुभाः । सर्वे च तेऽर्थानर्थाश्च सर्वार्थानर्थास्तेषां करणं निर्वृत्तिस्तस्मिन् विश्वस्य जगत एकं प्रधानं कारणं वातः । किंभूतः । अदुष्टो यथाक्रमं सर्वार्थकरणे जगतः स्थितिलक्षणे वायुः प्रधानं कारणम् । सर्वानर्थकरणे जगदुत्पत्तिविनाशकरणलक्षणे दुष्टः पवनः प्रधानो हेतुः । शरीरस्य पुनर्विशेषतोऽतिशयेनार्थानर्थकरणे प्रधानं कारणमिति शेषः । पंचधात्वं गतेन प्राणादितया शरीरजननाद्धारणाचाऽतस्तददुष्टौ यतितव्यमिति संबंधः ।

कथं वायुः कारणमित्यवगम्यत इत्याह ।

**स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ।**
**स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरंतकः ॥ २ ॥**
**तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ।**

यतोऽसौ वायुर्विश्वकर्मा विश्वानि शरीरजननवर्धनधारणभं-

जनशोषणादीन्यर्थानर्थकरणानि कर्माणि यस्य स विश्वकर्मा। कस्माद्विश्वकर्मेत्याह। विश्वात्मा विश्वेषां शुभानामात्मा हेतुः। हेत्वर्थोऽत्रात्मशब्दः। ननु विश्वात्मेति कथं ज्ञायत इत्याह। विश्वरूप इति। यतो विश्वं रूपं बाह्याध्यात्मिकं स्वभावाख्यं यस्य स एवम्। तथा प्रजापतिः प्रजानां पालकः। तथा स्रष्टा प्रकृतत्वाद्विश्वस्य। तथा धाता विश्वस्य धारकः। तथा हि बाह्यो लोको वायुमंडलेन धार्यते। सत्यलोकोऽपि प्राणापानादिभिः। कस्माद्विश्वरूपः। यस्माद्विभुः। अतस्तदर्थानर्थकरणे प्रभुरित्यर्थः। कस्मात्प्रजापतिः। यस्माद्विष्णुर्व्यापी। विष्लृ व्याप्तावित्यस्यौणादिके क्नुप्रत्यये विष्णुशब्दः। संहर्ता बाह्याध्यात्मिकसर्गसंहरणात्। मृत्युर्यमरूपस्तत्कार्यकरणात्। तथांऽतको यमो मारक एव साक्षात्। यतश्चैवमतस्तददुष्टौ तस्याप्रकोपे सदा सर्वकालं यतितव्यम्।

**तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम्॥ ३॥**
**समासाद्व्यासतो दोषभेदीये नाम धाम च।**
**प्रत्येकं पंचधा चारो व्यापारश्च**

तस्य पवनस्य कर्मोक्तम्। क्व। दोषविज्ञाने दोषविज्ञानीयाध्याये। किंभूतं कर्म। प्राकृतवैकृतम्। प्रकृतौ भवं प्राकृतं स्वाभाविकमुत्साहोच्छ्वासादिलक्षणम्। वैकृतं तु वृद्धस्तु कुरुतेऽनिलः। कार्श्यकार्ष्ण्योष्णेत्यादिग्रंथनिर्दिष्टम्। एतत्समासात्संक्षेपतो वायोः कर्म। व्यासतो विस्तरतः पुनर्दोषभेदीये नाम धाम चोक्तमित्यनुवर्तनीयम्। प्रत्येकं पंचधा। एकमेकं प्रति प्रत्येकं नाम धाम च। प्राणादिभेदेन नाम पंचधा। धाम स्थानमपि पंचधा मूर्धादिभेदेन। प्राणस्य मूर्धा स्थानम्। प्राणोऽत्र मूर्धग इति वचनात्। तथा उरः स्थानमुदानस्येति। तथा व्यानो हृदि स्थित इति। तथा समानोऽग्निसमीपस्थ इति। तथाऽपानोऽपानग इति। तथा चारोऽपि पंचधा। चरणं चारो गतिः। तथा चोक्तम्। प्राण उरःकंठचरः। उदानो नासानाभिगलचरः। व्यानः कृत्स्नदेहचरः। समानः कोष्ठचरः। अपानो बस्तिमेढ्रोरुगोचर इति। व्यापारोऽपि वायोः प्राणादिभेदेन पंचधा। तत्र प्राणस्य व्यापारो बुद्धिहृदयेंद्रियचित्तधृगित्यादिः। उदानस्य व्यापारो वाक्प्रवृत्तिरित्यादिः। व्यानस्य व्यापारो गत्यपक्षेपणोत्क्षेपणादिकः। समानस्य व्यापारोऽन्नग्रहणादिकः। अपानस्य व्यापारः शुक्रार्तवादीनां निष्क्रमणरूपः। एवं विस्तरेण दोषभेदीयेन वातः प्राणादिभेदेन पंचधा नामभिरुक्तः।

**इह वैकृतम्॥ ४॥**
**तस्योच्यते विभागेन सनिदानं सलक्षणम्।**

इहास्मिन्नध्याये तस्य वातस्य वैकृतं कर्म विभागेन पृथक्पृथक्तयोच्यते। किंभूतम्। सनिदानं सलक्षणं सह निदानेन सनिदानं तथा सह लक्षणेन सलक्षणम्।

वायोश्चोभयथाऽपि कोपः संभवति तमिदानीं दर्शयन्नाह।

**धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः॥ ५॥**
**चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्।**
**तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वाऽऽवरणं बली॥ ६॥**

धातुक्षयकरैराहारविहारादिभिरतिनिषेवितैरतिमात्रसेवितैश्चिरकालसेवितैश्च पवनः कुप्यति। किंकुर्वन्। स्रोतःसु रिक्तेषु चरन्। धातुक्षयकरैरतिसेवनाद्यतस्तदानीं स्रोतसां शून्यता भवति। तथाभूतेषु स्रोतःसु प्रभंजनस्तदंतःप्रवेशात्तान्येव स्रोतांसि रिक्तानि भृशं पूरयन्नेवं धातुक्षयात् कुप्यति मरुत्। तथा तेभ्यः स्रोतोभ्योऽन्यदोषपूर्णेभ्य आवरणं प्राप्य बली वायुरेवं वा कुप्यति।

**तत्र पक्वाशये क्रुद्धः शूलानाहांत्रकूजनम्।**
**मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम्॥ ७॥**
**करोत्यधरकायेषु तांस्तान्कृच्छ्रानुपद्रवान्।**

एवमुभयथा वायुः पक्वाशये क्रुद्धः शूलानाहावंत्रकूजनादींश्च करोति। तथाऽधरकाये च शरीरस्याधस्तान्नानाविधानुपद्रवान् व्याधीन् कृच्छ्रान् कृच्छ्रसाध्यान् करोति। कायस्याधर इति पूर्वापरेत्यादिना समासः।

**आमाशये तृड्वमथुश्वासकासविसूचिकाः॥ ८॥**
**कंठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः।**

आमाशये क्रुद्धस्तृडादींस्तथाऽन्यानप्यनुक्तान् व्याधीन्नाभेरूर्ध्वकाये करोति।

**श्रोत्रादिष्विंद्रियवधं**

श्रोत्रादिष्विंद्रियाधारेषु क्रुद्ध इंद्रियाणां वधं विनाशं करोति।

**त्वचि स्फुटनरूक्षणे॥ ९॥**

त्वचि क्रुद्धस्तस्यास्त्वचः स्फुटनं रूक्षतां च करोति।

**रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णताम्।**
**अरूंष्यन्नस्य विष्टंभमरुचिं कृशतां भ्रमम्॥ १०॥**

रक्ते क्रुद्धस्तीव्रा रुजस्तथा स्वापादीन् करोति।

**मांसमेदोगतो ग्रंथींस्तोदाढ्यान् कर्कशान् भ्रमम्।**
**गुर्वंगं चातिरुक्स्तब्धमुष्टिदंडहतोपमम्॥ ११॥**

मांसमेदोगतस्तत्रस्थः क्रुद्धो ग्रंथींस्तोदादियुतांस्तथा भ्रमादींश्च करोति। सुश्रुते चाऽत्र विशेष उक्तः। तथा च तद्ग्रंथः। कर्कशांस्तोदबहुलान्ग्रंथीन्मांससमाश्रितः। वायुर्मेदोयुतः कुर्याद्ग्रंथीन्मंदरुजो नृणामिति।

**अस्थिस्थः सक्थिसंध्यस्थिशूलं तीव्रं बलक्षयम्।**

अस्थिस्थः क्रुद्धः सक्थिसंध्यस्थिशूलं तीव्रं दारुणं बलक्षयं च करोति।

**मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं स्तब्धतां रुजम् १२**

मज्जस्थः क्रुद्धोऽस्थिसौषिर्यादीन् करोति।

**शुक्रस्य शीघ्रमुत्सर्गं संगं विकृतिमेव च।**
**तद्वद्गर्भस्य शुक्रस्थः**

शुक्रस्थः कुद्धः शुक्रस्य शीघ्रमुत्सर्गं संगादीन्वा करोति । तद्वत्तथैव गर्भस्याऽपि । तथाभूतबीजोत्पन्नत्वाच्छीघ्रोत्सर्गादीन्करोति ।

**सिरास्वाध्मानरिक्तते ॥ १३ ॥**

**तत्स्थः**

तत्स्थः सिरास्थितः कुद्धस्तास्वेव सिरास्वाध्मानरिक्तते करोति।

**स्नावस्थितः कुर्याद्गृध्रस्यायामकुब्जताः ।**

स्नावस्थितः कुद्धो गृध्रसादीन् करोति ।

**वातपूर्णदृतिस्पर्शं शोफं संधिगतोऽनिलः ॥ १४ ॥**
**प्रसारणाऽऽकुंचनयोः प्रवृत्तिं च सवेदनाम् ।**

संधिगतोऽनिलः कुद्धः शोफं कुर्यात् । किंभूतम् । वातपूर्णदृतिस्पर्शं तत्तुल्यम् । तथा प्रसारण आकुंचने च सवेदनां प्रवृत्तिं करोति ।

**सर्वांगसंश्रयस्तोदभेदस्फुरणभंजनम् ॥ १५ ॥**
**स्तंभमाक्षेपणं स्वापं संध्याकुंचनकंपनम् ।**

सर्वांगसंश्रयोऽनिलस्तत्रस्थः कुद्धस्तोदादीन् करोति ।

**यदा तु धमनीः सर्वाः कुद्धोऽभ्येति मुहुर्मुहुः १६**
**तदांगमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ।**

यदा तु सर्वा धमनीर्वायुः कुद्धोऽभ्येत्याभिमुख्येनागच्छति । पुनःपुनस्तदांगं शरीरमाक्षिपत्याक्रामति । एष वातव्याधिराक्षेपकः स्मृतः ।

अथाऽपतंत्रकं लक्षयति ।

**अधः प्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रयाः ॥ १७ ॥**
**नाडीः प्रविश्य हृदयं शिरः शंखौ च पीडयन् ।**
**आक्षिपेत्परितो गात्रं धनुर्वच्चास्य नामयेत् ॥ १८ ॥**
**कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक्ततः ।**
**कपोत इव कूजेत्स निःसंज्ञः सोऽपतंत्रकः ॥ १९ ॥**
**स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।**
**अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥२०॥**

अधः प्रतिहत ऊर्ध्वं व्रजन्मारुतो हृदाश्रिता हृदयस्थिता नाडीरंतः प्रविश्य हृदयं तथा शिरश्च शंखौ च पीडयेत् । आक्षिपेत् परितोगात्रं समंतात्कायमाक्षिपेत्संहरेत् । तथा धनुर्वच्चास्य नामयेत् । प्रकृतत्वाद्गात्रमेवास्यापतंत्रकवतो नरस्य नामयेत् । तथा स पुमान् कृच्छ्रादुच्छ्वसिति । दृक् चक्षुरिंद्रियाधिष्ठानं दृक्शब्देनेह गृह्यते । स्तब्धा स्रस्ता मीलिता च दृग्यस्यासौ स्तब्धस्रस्तमीलितदृक् । ततोऽनंतरं कपोत इव कूजेदव्यक्तं शब्दं विदध्यात् । तथा निःसंज्ञो विचेतनः संपद्यते । स एवंरूपो वातव्याधिरपतंत्रको भण्यते । स एव चापतानकसंज्ञो निगद्यते । मुक्ते त्वित्यादि । वायुनाऽनाक्रांते हृदये क्षणं स्वास्थ्यमाप्नुयात् । मुहुरस्वास्थ्यं तेनावृते ह्यस्वास्थ्यमाप्नुयात् ।

**गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।**
**अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥२१॥**

स चाकालगर्भपातात्समनंतरं योषितां प्रायो जायते । कदाचिच्छोणितातिस्रवात् स्त्रीणां पुरुषाणां चाभिघातात्स्यात् । सोऽपतंत्रको गर्भपातनिमित्तोत्पन्नो दुश्चिकित्स्यः स्यात् । शोणितातिस्रवोत्थितो दुश्चिकित्स्यतरः । अभिघातसमुत्थो दुश्चिकित्स्यतमः ।

**मन्ये संस्तभ्य वातोऽतरायच्छन् धमनीर्यदा ।**
**व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥ २२ ॥**
**अंतर्धनुरिवांगं च वेगैः स्तंभं च नेत्रयोः ।**
**करोति जृंभां दशनं दशनानां कफोद्वमम् ॥ २३ ॥**
**पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहम् ।**
**अंतरायाम इत्येष**

मन्ये द्वे ग्रीवापार्श्वाश्रिते नाड्यौ वायुः संस्तभ्यांतरायच्छन् धमनीर्यदा गृह्णन् सकलं देहं व्याप्नोति तदा जत्रुरायम्यते वक्रीक्रियते । जत्रुशब्दस्य पुंस्त्वं लोकाश्रयत्वाल्लिंगस्येति । तथांतर्मुखतो भागादंगं शरीरं च धनुरिवायम्यत इति चार्थः । वेगैरुच्छ्रिय पुनरुद्धवैर्भजत इव त्रुट्यत इव नानाव्यथारूपैः । तथा स्तंभं च नेत्रयोः करोति । तथा जृंभाम् । तथा दशनानां दंतानां दशनं खादनम् । दशनमित्यत्र दाम्नीशसयुयुजेत्यादौ दंशेरनुनासिकलोपनिर्देशो ज्ञापनार्थः कृतोऽन्यस्मिन्नपि प्रत्यये लोपो भवतीति तेन ल्युट्यपि भवति । दशनमिति वचनादत्र नलोपः । प्रायिकं चैतज्ज्ञापकमिति हितं कीटैश्च दंशनमित्यपि भवति । तथा कफस्योद्वमन् । तथा पार्श्वयोर्द्वयोर्वेदनां शूलम् । तथा वाक्यादीनां ग्रहं स्तंभम् । इत्येष वातव्याधिरंतरायामसंज्ञोऽगस्यांतरायमनाद्वक्रीकरणादुच्यत इति शेषः ।

**बाह्यायामश्च तद्विधः ॥ २४ ॥**
**देहस्य बहिरायामात्पृष्ठतो नीयते शिरः ।**
**उरश्चोत्क्षिप्यते तत्र कंधरा चावमृद्यते ॥ २५ ॥**
**दंतेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ।**
**बाह्यायामं धनुष्कंभं ब्रुवते वेगिनं च तम् ॥ २६ ॥**

बाह्यायामश्च तद्विधस्तादृशो देहस्य बहिरायामादंगस्य धनुर्वद्बहिर्वक्रीकारणाद्बहिरायाम उच्यत इति शेषः । तमेव प्रदर्शयितुमाह । पृष्ठत इत्यादि । शिरः पृष्ठाभिमुखं नीयते । तथा तत्र बाह्यायाम उरो वक्ष उत्क्षिप्यत उन्नतिं नीयते । तथा कंधरा ग्रीवा चाऽवमृद्यते क्षुद्यते । तथा दंतेषु वक्त्रे च वैवर्ण्यं प्रकृताद्वर्णाद्वर्णांतरापत्तिः । तथा प्रकर्षेण स्वेदः । तथा स्रस्तगात्रता श्लथांगता । तं तथाभूतं वातव्याधिं बाह्यायामं धनुष्कंभं च ब्रुवते । तमेव केचिद्वेगिनमित्याचक्षते ।

अधुना व्रणायाममाह ।

**व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।**

**व्यायच्छंति तनुं दोषाः सर्वामापादमस्तकम्॥२७॥**
**तृष्यतः पांडुगात्रस्य व्रणायामः स वर्जितः।**

दोषा व्रणं मर्माश्रितं प्राप्यानंतरं समीरणस्य समीरणात्प्रेरणात्सर्वां तनुं सकलं देहमापादमस्तकं व्यायच्छंति विशेषेणाक्रामंति। एष व्रणायामस्तृष्यतस्तथा पांडुगात्रस्य नरस्य वर्जितोऽसाध्यत्वात्।

**गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकेषु च ॥ २८ ॥**

सर्वेष्वाक्षेपकेषु यदा धमनीः सर्वा इत्यादिग्रंथनिर्दिष्टेषु व्रणायामपर्यंतेषु वेगे गते सति वेगानां शांतौ सत्यां स्वास्थ्यं भवेन्नान्यदा।

**जिह्वातिलेखनात् शुष्कभक्षणादभिघाततः।**
**कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥२९॥**
**करोति विवृतास्यत्वमथवा संवृतास्यताम्।**
**हनुस्रंसः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ ३०॥**

जिह्वातिलेखनादिभिः कुपितो हन्वोर्मूले स्थितो वायुर्हनू स्रंसयित्वा स्थानाचालयित्वा विवृतास्यत्वं प्रसारितमुखत्वमथवा संवृतास्यत्वं करोति। स एवंभूतो हनुस्रंस उच्यते तेन च हनुस्रंसेन कृच्छ्रात्कथमपि चर्वणं भाषणं च स्यात्।

**वाग्वाहिनीशिरासंस्थो जिह्वां स्तंभयतेऽनिलः।**
**जिह्वास्तंभः स तेनान्नपानवाक्येष्वनीशता ॥ ३१ ॥**

वाग्वाहिनीसिरासंस्थो वायुर्जिह्वां स्तंभयते। स एव जिह्वास्तंभ उच्यते। तेन जिह्वास्तंभेनान्नपानवाक्येष्वनीशताऽसमर्थता भवति।

**शिरसा भारहरणादतिहास्यप्रभाषणात्।**
**उत्रासवक्रक्षवथुखरकार्मुककर्षणात् ॥ ३२ ॥**
**विषमादुपधानाच्च कठिनानां च चर्वणात्।**
**वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ॥ ३३ ॥**
**वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम्।**
**ततोऽस्य कंपते मूर्धा वाक्संगः स्तब्धनेत्रता ॥३४॥**
**दंतचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः।**
**गंधाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥ ३५ ॥**
**निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनम्।**
**जत्रोरूर्ध्वं रुजा तिव्रा शरीरार्धेऽधरेऽपि वा ॥३६॥**
**तमाहुरर्दितं केचिदेकायाममथापरे।**

शिरसा भारहरणादिभिर्वायुर्विवृद्धो विशेषेण वृद्धिं गतस्तथा तैस्तैश्च वातलैः सर्वरोगनिदानायुक्तैरूर्ध्वमास्थितः शरीरस्योपरिभागे आसमंतात्स्थितो वक्त्रार्धं वक्रीकरोति। तथा उक्तं हसितमीक्षितं च वक्रीकरोति। ततोऽनंतरमस्य नरस्य मूर्धा कंपते। तथा वाक्संगो जायते। तथा स्तब्धनेत्रतादयश्च। तथा निष्ठीवो निष्ठीवनं पार्श्वे गच्छेत्। एकस्य चाक्ष्णो निमीलनं स्यात्। जत्रोरूर्ध्वं तीव्रा रुजा दारुणा पीडा भवति। शरीरार्धेऽधरेऽपि वाऽधस्ताद्वा तमीदृशं वातव्याधिं केचिदर्दितमाहुः। अपरे तंत्रकृत एकायामं वदंति।

**रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ॥ ३७ ॥**
**रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिराग्रहः**

पवनो रक्तमाश्रित्य श्रयित्वा मूर्धाश्रिताः सिरा रूक्षादिगुणयुक्ताः कुर्यात्। स शिराग्रह उच्यते। स चासाध्यः।

**गृहीत्वार्धं तनोर्वायुः सिराः स्नायुर्विशोष्य च ३८**
**पक्षमन्यतरं हंति संधिबंधान् विमोक्षयन्।**
**कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः॥३९॥**
**एकांगरोगं तं केचिदन्ये पक्षवधं विदुः।**

वायुस्तनोः शरीरस्यार्धं गृहीत्वा सिराः स्नायूंश्च विशोष्य ततोऽन्यतरं वामं दक्षिणं वा पक्षं हंति। किंकुर्वन्। संधीनां बंधान् विमोक्षयन्विघट्टयन्। तस्यैव च व्याधिमतः कृत्स्नः सर्वोऽर्धकायो वा अकर्मण्यः क्रियायामशक्तो विचेतनश्च स्यात्। तमीदृशं वातव्याधिं केचिदेकांगरोगं वदंति। अन्ये पक्षवधमाहुः। अर्धकाय इत्यर्धं नपुंसकमिति समासः।

**सर्वांगरोगं तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४० ॥**

सर्वकायाश्रिते वायौ तेन पूर्वोक्तेनैकांगरोगोक्तेन लक्षणेन तुल्यं वर्तते तद्वत् सर्वांगरोगमप्याहुः।

**शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः।**
**कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ॥ ४१ ॥**

शुद्धवातेन हतः पक्ष एकांगरोगः कृच्छ्रसाध्यतमो मतोऽतिशयेन कृच्छ्रसाध्यः। अन्येन संयुक्तो वातः कृच्छ्रसाध्यः क्षयहेतुकः। पक्षो विवर्ज्यः स नोपक्रम्योऽसाध्यत्वात्।

**आमबद्धायनः कुर्यात्संस्तभ्यांगं कफान्वितः।**
**असाध्यं हतसर्वेहं दंडवद्दंडकं मरुत् ॥ ४२ ॥**

आमेन बद्धानि स्थगितान्ययनानि द्वाराणि प्रकृतत्वात् स्रोतसां येन स आमबद्धायनः कफान्वितो मारुतोंऽगं संस्तभ्य स्तंभयित्वा दंडवद्दंडकाख्यं वातव्याधिविशेषं कुर्यात्। तमसाध्यं तथा हताः सर्वा ईहाश्चेष्टा यस्मिंस्तमेवंभूतम्।

**अंसमूलस्थितो वायुः सिराः संकोच्य तत्रगाः।**
**बाहुप्रस्पंदितहरं जनयत्यवबाहुकम् ॥ ४३ ॥**

वायुरंसमूले स्थितस्तत्रगा अंसमूलस्तिथाः सिराः संकोच्यावबाहुकाख्यं वातव्याधिं जनयति। किंभूतम्। बाहुप्रस्पंदितं हरतीति बाहुप्रस्पंदितहरम्। हरतेरनुद्यमनेजित्यच्।

**तलं प्रत्यंगुलीनां या कंडरा बाहुपृष्ठतः।**
**बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ॥४४॥**

तलं हस्ततलं प्रति तल्लक्षणं कृत्वा या कंडरा सुमहान् स्नायुसंघातः सा बाहुपृष्ठतो गता तथा मारुतार्दिता वातेन पीडिता सती बाहुचेष्टां भुजव्यापारमपहरति बाहुचेष्टापहरणी। बाहुलकादत्र कर्तरि ल्युट् स्त्रीत्वं च। एवंभूता विश्वाचीसंज्ञा स्मृता मुनिभिरिति शेषः।

**वायुः कट्यां स्थितः सक्थ्नः कंडरामाक्षिपेद्यदा।**
**तदा खंजो भवेज्जंतुः पंगुः सक्थ्नोर्द्वयोरपि ॥ ४५ ॥**

कट्यां स्थितो मारुतो यदा सक्थ्न ऊरोः संबंधिनीं कंडरामाक्षिपेदाकर्षेत्तदा प्राणी खंजो भवेत्। द्वयोरपि सक्थ्नोः संबंधिनीं कंडरां यदाऽऽक्षिपेत्तदा पंगुः स्यात्।

**कंपते गमनारंभे खंजन्निव च याति यः।**
**कलायखंजं तं विद्यान्मुक्तसंधिप्रबंधनम् ॥ ४६ ॥**

तथा यो गमनारंभे कंपते वेपते खंजन्निव च याति। कलायखंजाख्यं तमेवंभूतं व्याधिं विद्यात्। किंभूतम् मुक्तं संधिप्रबंधनं यत्र तं तथाभूतम्।

**शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः।**
**जीर्णाजीर्णे तथाऽऽयाससंक्षोभस्वप्नजागरैः ॥४७॥**
**सश्लेष्ममेदःपवनमाममत्यर्थसंचितम्।**
**अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ ४८ ॥**
**सक्थ्यस्थीनि प्रपूर्यांतः श्लेष्मणा स्तिमितेन तत्।**
**तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ॥४९॥**
**परकीयाविव गुरू स्यातामतिभृशव्यथौ।**
**ध्यानांगमर्दस्तैमित्यतंद्राच्छर्द्यरुचिज्वरैः ॥ ५० ॥**
**संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः।**
**तमूरुस्तंभमित्याहुराढ्यवातमथापरे ॥ ५१ ॥**

जीर्णेन सहितमजीर्णं जीर्णाजीर्णं पक्वापक्वमाहारकदंबकं केनचिन्निमित्तेन जाठराग्निसंयोगादाहारराशेः कश्चिद्भागः पक्वः कश्चिद्विदग्ध इति जीर्णाजीर्णं तस्मिन्सति शीतोष्णादिभिस्तथाऽऽयाससंक्षोभादिभिर्निषेवितैश्चिरमभ्यस्तैराममत्यर्थं संचितं बहु संभृतमूरू यदि प्रतिपद्यत उभावाश्रित्यास्ते तदा तस्मिन्काले तेन यथोक्तेन हेतुना तावूरू स्कभ्नाति स्तंभयति। किंभूतमामम्। सश्लेष्ममेदःपवनम्। सह श्लेष्मणा मेदसा पवनेन च वर्तत इति सश्लेष्ममेदःपवनं नतु केवलमेव। तथेतरं दोषं वातश्लेष्मापेक्षया पित्ताख्यमभिभूयाक्रम्यन् वातं कफं वा। ते हि तयोरभिभवो न मुक्तस्तत्सहवर्तमानत्वात्। तथा तेन सहवर्तमानेनापि श्लेष्मणा च स्तिमितेन स्त्यानेन सक्थिसंबंधीन्यस्थीन्यंतः प्रपूर्य तानि निर्भराणि कृत्वा तदाममूरू स्कभ्नातीति योज्यम्। तेन हेतुना तदा तस्मिन्काले तावूरू स्तब्धौ निश्चलौ तथा स्पर्शतः शीतौ तथाऽचेतनौ सूच्यादिभिस्तुद्यमानावपि पीडां न वेदयेतामत एव परकीयाविव गुरू स्याताम्। तथाऽतिभृशव्यथावत्यंतशूलान्वितौ। परकीयाविति। जनस्य परस्य चेति ईयः कुगागमश्च। तथा ध्यानादिभिः संयुतौ ध्यानं चिंता। दौर्मनस्यमित्यर्थः। तथा पादसदनादिभिः संयुतौ। एवंलक्षणो यो व्याधिविशेषस्तमूरुस्तंभमाहुस्तंत्रकृत इति शेषः। अपरे आचार्या आढ्यवातमिति तमाहुः। आमशब्दस्य नपुंसकत्वं लोकाश्रयत्वाल्लिंगस्येति बोध्यम्।

**वातशोणितजः शोफो जानुमध्ये महारुजः।**
**ज्ञेयः क्रोष्टुकशीर्षश्च स्थूलः क्रोष्टुकशीर्षवत् ॥ ५२॥**

जानुमध्ये महारुजः शोफो वातशोणिताज्जातः क्रोष्टुकशीर्षाख्यो वातव्याधिभेदः। स च स्थूलसृगालशिरःसदृशो भवति।

**रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा।**
**वातेन गुल्फमाश्रित्य तमाहुर्वातकंटकम् ॥ ५३ ॥**

पादे चरणे विषमन्यस्ते सत्यथवा श्रमेण यदा गुल्फमाश्रित्य वातेन रुग्जायते तं वातकंटकाख्यं वातव्याधिमाहुः।

**पार्ष्णिं प्रत्यंगुलीनां या कंडरा मारुतार्दिता।**
**सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५४॥**

पार्ष्णिं प्रति पार्ष्ण्यभिमुखं या अंगुलीनां कंडरा सा मारुतेन वायुनाऽर्दिता व्यथिता चरणोद्धरणावसरे यः सक्थ्युत्क्षेप ऊर्ध्वं प्रेरणं तं निगृह्णात्यवगृह्णाति सक्थ्नोर्निश्चलत्वमिवोत्पादयति। तां कंडरां व्याधिविशेषसंज्ञां गृध्रसीं प्रचक्षते तंत्रकृत इति शेषः।

**विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता।**

विश्वाची चोक्ता बाहुचेष्टापहारिणीत्यादिना ग्रंथेन गृध्रसी चाधुनैवोक्ता। ते द्वे तीव्ररुजान्विते सत्यौ खल्ली भण्येते।

**हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ॥ ५५ ॥**
**पादहर्षः स विज्ञेयः कफमारुतकोपजः।**

यस्य पुंसश्चरणौ हृष्येते प्रसुप्ताविव च स्यातां स एवंभूतो वातव्याधिः पादहर्षाख्यः स च वातश्लेष्मकोपजो वेद्यः।

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः॥५६॥**
**विशेषतश्चंक्रमिते पाददाहं तमादिशेत्।**

अनिलः पित्तरक्तसहितः पादयोर्दाहं कुरुते विशेषेण तु चंक्रमिते सति। तमेवंभूतं पाददाहमादिशेद्ब्रूयाद्भिषगिति शेषः।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने वातव्याधिनिदानं नाम पंचदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः।

वातशोणितनिदानं वातव्याधिनिदानात्पृथगारभ्यते। बहुवक्तव्यत्वात्। अन्यथा वातव्याधिविशेष एव वातशोणिताख्यो व्याधिरिति तत्रैव वक्तुं युक्तः स्यात्। तस्माद्वातशोणितनिदानं प्रक्रम्यत इत्याह।

**अथाऽतो वातशोणितनिदानं व्याख्यास्यामः ।**
**विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।**
**भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥ १ ॥**
**प्रायेण सुकुमाराणामचंक्रमणशीलिनाम् ।**
**अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ २ ॥**
**वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।**
**तादृशेनासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥ ३ ॥**
**आढ्यरोगं खुडं वातबलासं वातशोणितम् ।**
**तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥ ४ ॥**
**विशेषाद्यानयानाद्यैः प्रलंबौ**

मद्याम्लतक्रदधिनिष्पावव्रीहिवारिचरमांसकुलत्थकुठेरादिकं विदाह्यन्नं तथा विरुद्धमन्नं संयोगमात्रादिवशाद्यथाऽनूपमामिषं माषक्षीरेत्यादिकं प्रागुक्तं तत्तच्चासृक्प्रदूषणमन्यदप्याहारविहारजातं यत्तत्रतत्रोक्तं तद्भजतां शीलयतां नृणां पुरुषाणां तथा विधिहीनमयथाशास्त्रं स्वप्नजागरमैथुनं भजतां प्रायेण सुकुमाराणाम् । प्रायोग्रहणमन्येषामपि रक्तहेत्वाहारसेविनां तथा अचंक्रमणशीलिनामत्यंतमास्यादिसुखसेविनामभिघातादनेकविधात्प्रहारविशेषात्तथा अशुद्धेरशोधनान्मलानिर्हरणात्तेषामसृजि दूषिते तद्दूषणहेतुभिर्यथोक्तैर्दुष्टे संपन्ने ततो वातलैस्तिक्तोषणादिभिः सर्वरोगनिदानोक्तैस्तथाऽतिशयेन शीतलैर्वायुर्वृद्धोऽत्यंतमुपचयं प्राप्य पश्चात्क्रुद्धः कुपितोऽत एव विमार्गगो विशेषेणोन्मार्गगामी तादृशेन तथाभूतेनैवासृजा दुष्टेन क्रुद्धेन रुद्धो विहतगतिः कृतात्यंतसंश्लेषात्तत एव शोणितं प्राक् पूर्वं प्रदूषयेत् । प्राग्ग्रहणादनंतरं सर्वान् धातून् मांसादीन् प्रदूषयेत् तच्च तथाविधं रक्तमत्युपचितं प्रदुष्टमाढ्यरोगं खुडं वातबलासं वातशोणितमिति नामभिराचार्या आहुः । तच्च रोगस्वभावात् पूर्वं पादौ प्रधावति समुत्पद्यते । तौ च पादौ विशेषादतिशयेन यानयानाद्यैः प्रलंबावुच्छूनौ संतौ प्रधावति । यानेन हस्त्यश्वादिना यानं गमनम् । आदिग्रहणादन्यैरपि पादप्रलंबितापादकैर्गजतुरगादिसदृशैः ।

**तस्य लक्षणम् ।**

**भविष्यतः कुष्ठसमं तथा सादः श्लथांगता ॥ ५ ॥**
**जानुजंघोरुकट्यंसहस्तपादांगसंधिषु ।**
**कंडूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ ६ ॥**
**भूत्वा भूत्वा प्रणश्यंति मुहुराविर्भवंति च ।**

तस्य वातशोणितस्य भविष्यतो भाविनो लक्षणं प्राग्रूपं कुष्ठसमं कुष्ठेन तुल्यम् । कुष्ठस्य यत् प्राग्रूपमतिश्लक्ष्णखरस्पर्शेत्यादिना कुष्ठनिदानोक्तं तदस्यापि । न केवलमेतदेव यावत्तथा सादः श्लथांगतेत्यादि च यावन्मुहुराविर्भवंति चेत्येतदपि भविष्यतो लक्षणम् ।

**पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ ७ ॥**
**आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ।**

तद्वातशोणितं पादयोर्मूलमास्थाय तत्र पूर्वं स्थितिं कृत्वा कदाचिद्धस्तयोरपि प्रतिष्ठां कृत्वा आखोर्मूषिकस्य संबंधि यथा विषं क्रुद्धं देहैकदेशे पूर्वं स्थितिं कृत्वाऽनंतरं कृत्स्नं देहं विधावति विशेषेण प्रसरति ।

तच्च वातशोणितमुत्तानगंभीरभेदेन द्विधा स्यादित्याह ।

**त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ ८ ॥**
**कालांतरेण गंभीरं सर्वान् धातूनभिद्रवत् ।**

त्वक् च मांसं च ते आश्रयो यस्य वातरक्तस्य तदेवंभूतं तद्वातशोणितमुत्तानं पूर्वं प्राग् जायते । ततः पश्चात्कालांतरेण पुनः सर्वान्धातूनपरानपि मेदःप्रभृतीनभिद्रवद्गंभीरं जायते ।

**कंड्वादिसंयुतोत्ताने त्वक्ताम्रश्यावलोहिता ॥ ९ ॥**
**सायामा भृशदाहोषा**

उत्ताने वातशोणिते त्वक् कंड्वादिसंयुता भवति । कंडूस्फुरणनिस्तोदादियुक्ता । तथा ताम्रश्यावलोहिता व्यामिश्रवर्णा भवति । तथा सहायामेन वर्तत इति सायामा । तथा भृशदाहोषा अत्यर्थं दाहरुग्युक्ता ।

**गंभीरेऽधिकपूर्वरुक् ।**
**श्वयथुर्ग्रथितः पाकी वायुः संध्यस्थिमज्जसु ॥ १० ॥**
**छिंदन्निव चरत्यंतर्वक्रीकुर्वंश्च वेगवान् ।**
**करोति खंजं पंगुं वा शरीरे सर्वतश्चरन् ॥ ११ ॥**

गंभीरे वातशोणितेऽधिकपूर्वरुक् श्वयथुः स्यात् । अधिकं कृत्वा पूर्वा रुग्यस्य श्वयथोरसावधिकपूर्वरुक् । कुतोऽधिकपूर्वरुक् । प्रकृतत्वादुत्तानवातशोणितात् । तथा श्वयथुर्ग्रथितस्तथा पाकी पाकयुक्तः स्यात् । तथा तस्मिन् गंभीरे वायुर्वेगवान् बलवान् शरीरे सर्वतश्चरन् गच्छन् वक्रीकुर्वन् स्वसामर्थ्यात्तदेव शरीरं खंजं पंगुं वा करोति तथाऽसौ संध्यस्थिमज्जसु छिंदन्निवांतश्चरति ।

**वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।**
**शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ १२ ॥**
**धमन्यंगुलिसंधीनां संकोचोऽगग्रहोऽतिरुक् ।**
**शीतद्वेषानुपशयौ स्तंभवेपथुसुप्तयः ॥ १३ ॥**

तत्र वातशोणिते वाताधिकेऽधिकं शूलस्फुरणतोदनं भवति । शूलं संतता रुक् । तोदनं तु व्युच्छिन्ना रुक् प्रतोदेनेव। तथा शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः स्युर्वातस्य चलस्वभावत्वात् । तथा धमनीनां सिराविशेषाणामंगुलिसंधीनां च संकोचः स्यात् । तथांऽगग्रहोंऽगान्यवबद्धानि च स्युः । तथाऽतिरुक् शीतद्वेषानुपशयौ च भवतः । शीतद्वेषः शीतासहिष्णुत्वम् । तथा तेन च शीतेनोपशयः सुखानुबंधो जायते । अनुपशयोऽसुखानुबंधः । केनानुपशयः । प्रकृतत्वाच्छीतद्वेषेणोष्णकामितयोष्णसेवनेन भवति । तथा स्तंभवेपथुसुप्तयः स्युः । स्तंभ इव स्तंभो देहस्तब्धता । वेपथुः कंपनम् । देहसुप्तिरंगानामचैतन्यम्।

वातोत्तरस्य लक्षणमुक्त्वा रक्तोत्तरं वक्तुमाह ।

**रक्ते शोफोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।**
**स्निग्धरूक्षैः शमं नैति कंडूक्लेदसमन्वितः ॥ १४ ॥**

अधिक इत्यत्रानुवर्तते । रक्तेऽधिके शोफोऽतिरुक् तोद इति । वातेऽप्यधिके शोफः सरुग्भवति किंतु रक्तेऽधिकेऽतिरुक्तोदः शोफः स्यादिति विशेषः । तथा ताम्रो वर्णेन भवति । चिमिचिमामिवाचरति चिमिचिमायते । तथा स्निग्धरूक्षैरसौ शोफः शमं नैति न याति कंडूक्लेदयुक्तः सन् ।

**पित्ते विदाहः संमोहः स्वेदो मूर्छा मदः सतृट् ।**
**स्पर्शाक्षमत्वं रुग्रागः शोफपाको भृशोष्मता ॥१५॥**

पित्ते पित्तानुविद्धे वातशोणिते विदाहादयः स्युः ।

**कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।**
**कंडूर्मंदा च रुग्**

कफानुविद्धे वातशोणिते स्तैमित्यादयः स्युः ।

**द्वंद्वसर्वलिंगं च संकरे ॥ १६ ॥**

द्वंद्वशब्देन च वातपित्तकफरक्तानां द्वंद्वानीति प्रायेण गृह्यंते । इह सर्वशब्देन च वातपित्तरक्तकफा गृह्यंते । द्वंद्वं च सर्वे च द्वंद्वसर्वे तयोर्लिंगं लक्षणं द्वंद्वसर्वलिंगम् । संकरे व्यामिश्रत्वे सति द्वंद्वसर्वलिंगं वातशोणितं भवति । कस्य संकरे । प्रकृतत्वाद्वातपित्तरक्तकफानां द्वंद्वसंकरे द्वंद्वलिंगं वातशोणितं भवति । सर्वसंकरे सर्वेषां वातादीनां संकरे सर्वलिंगं वातशोणितं भवति ।

**एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।**
**त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च ॥ १७ ॥**

एकदोषानुगं वातशोणितं नवं साध्यं साधयितुं शक्यम् । द्विदोषोद्भवं याप्यं यापनार्हम् । त्रिदोषजं वातशोणितं त्यजेत्तदसाध्यत्वान्नोपक्रमेत् । तथा स्रावि यद्वातरक्तमर्बुदकारि च तच्चासाध्यम् ।

**रक्तमार्गं निहंत्याशु शाखासंधिषु मारुतः ।**
**निविश्यान्योन्यमाचार्य वेदनाभिर्हरत्यसून् ॥ १८ ॥**

शाखासंधिषु मारुतो निविश्य तत्र स्थितिं कृत्वा तथा रक्तमार्गमाशु शीघ्रं निहत्यानंतरमन्योन्यमाचार्य प्रकृतत्वाद्रक्तं कर्तृ वातमाचार्य वातोऽपि रक्तम् । ततो वेदनाभिर्वातरक्तोचिताभिः पीडाभिरसून् प्राणान्हरति ।

**वायौ पंचात्मके प्राणो रौक्ष्यव्यायामलंघनैः ।**
**अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ १९ ॥**
**कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत् ।**
**पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् ॥२०॥**

पंचात्मके प्राणादिभेदात् पंचस्वभावे वाते सति प्राणो नाम वातो रौक्ष्यादिभिः कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेद्विदधाति । तथा पीनसादींश्च बहून रोगान् कुर्यात् । आदिशब्देन हिध्मादयो गृह्यंते ।

**उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः ।**
**गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥ २१ ॥**
**कंठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान् ।**
**कुर्याच्च गलगंडादींस्तांस्तान् जत्रूर्ध्वसंश्रयान् ॥२२॥**

उदानः क्षवथुविधारणादिभिर्विकृतः कुपितः कंठरोधादीन् गदान् कुर्यात् । चशब्दोऽत्र भिन्नक्रमः । गलगंडादींश्च गदांस्तांस्ताननेकविधान् जत्रूर्ध्वसंश्रयान् कुर्यात् ।

**व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः ।**
**विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ २३ ॥**
**पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान् ।**
**सर्वांगरोगनिस्तोदरोमहर्षांगसुप्तताः ॥ २४ ॥**
**कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वांगगान् गदान् ।**

व्यानोऽतिगमनादिभिर्विरोध्यादिभिश्च दूषितो दुष्टिं प्राप्तः पुंस्त्वोत्साहादीन् भ्रंशादीनपरानपि सर्वांगगान् गदान् कुर्यात् ।

**समानो विषमाजीर्णशीतसंकीर्णभोजनैः ॥ २५ ॥**
**करोत्यकालशयनजागराद्यैश्च दूषितः ।**
**शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् २६**

समानो विषमादिभोजनादिभिरकालशयनादिभिश्च दूषितः शूलादीन् पक्वामाशयजान् गदान्करोति ।

**अपानो रूक्षगुर्वन्नवेगघातातिवाहनैः ।**
**यानयानासनस्थानचंक्रमैश्चातिसेवितैः ॥ २७ ॥**
**कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ।**
**मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान्बहून् ॥ २८ ॥**

अपानो रूक्षान्नादिभिरतिसेवितैर्वेगघातादिभिश्चातिसेवितैः । कुपितः कृच्छ्रान् दारुणान् पक्वाशयाश्रयान् मूत्रशुक्रप्रदोषादीन् बहून् गदान् कुर्यात् ।

**सर्वं च मारुतं सामं तंद्रास्तैमित्यगौरवैः ।**
**स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥२९॥**
**कटुरूक्षाभिलाषेण तद्विधोपशयेन च ।**
**युक्तं विद्यान्निरामं तु तंद्रादीनां विपर्ययात् ॥ ३० ॥**

सर्वमपि मारुतं तंद्रादिभिर्लक्षणैर्युतं सामं विद्यात् । तंद्रादिलक्षणविपर्ययेण तु निरामं जानीयात् ।

**वायोरावरणं वातो बहुभेदं प्रवक्ष्यते ।**

अतः सामादिलक्षणादनंतरं वातस्यावरणं बहुभेदमनेकप्रकारं प्रकर्षेण वक्ष्यते । किल नासाम एवावरणमपि त्वन्यदप्यस्तीति द्योतयति ।

**लिंगं पित्तावृत्ते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ ३१॥**
**कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ।**

पित्तेनावृते मरुति दाहादिकं लिंगम् ।

**शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥ ३२ ॥**
**लंघनायासरूक्षोष्णकामता च कफावृते ।**

कफावृते वायौ शैत्यादिकं लिंगं लंघनादिकामता च ।

**रक्तावृते सदाहार्तिस्त्वङ्मांसांतरजा भृशम् ॥३३॥**
**भवेच्च रागी श्वयथुर्जायंते मंडलानि च ।**

रक्तावृते पवनेऽर्तिः पीडा भृशं त्वङ्मांसांतरजा दाहयुक्ता स्यात् । रागवांश्च श्वयथुः स्यात्तथा मंडलानि च जायंते ।

**मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा ॥३४॥**
**हर्षः पिपीलिकानां च संचार इव जायते ।**

मांसेनावृते वायौ कठिनो विवर्णश्च शोफस्तथा पिटिकाः स्युः हर्षश्च तथा पिपीलिकानां गात्रेषु संचार इव जायते ।

**चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ॥**
**आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽऽवृते ।**

मेदासा आवृते वायावंगेषु शोफश्चलस्तथा स्निग्धस्तथा शीतो मृदुश्च स्यात् । तथाऽरोचकः । स एवंविध आढ्यवात इति वेद्यः । स च कृच्छ्रः कृच्छ्रसाध्यः ।

**स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनंदति ॥ ३६॥**
**सूच्येव तुद्यतेऽत्यर्थमंगं सीदति शूल्यते ।**

अस्थ्यावृते समीरणे स्पर्शमत्युष्णं पीडनं चाभिनंदत्यभिलषति। तथांगमतिशयेन सूच्येव तुद्यते । तथा सीदति शूल्यते च ।

**मज्जावृते विनमनं जृंभणं परिवेष्टनम् ॥ ३७ ॥**
**शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम् ।**

मज्जावृते समीरे विनमनादिकं स्यात् । विनमनमंगानाम् । तथा पाणिभ्यां पीड्यमानेन च प्रकृतत्वादंगेन सुखं लभते ।

**शुक्रावृतेऽतिवेगो वा न वा निष्फलताऽपि वा ३८**

शुक्रावृते प्रभंजनेऽतिवेगो वा प्रकृतत्वाच्छुक्रस्य न वा वेगो निष्फलता तस्य स्यात् ।

**भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृत्तेऽनिले ।**

अन्नावृते वाते भुक्ते सति रुजा कुक्षौ भवति । जीर्णेऽन्ने सति रुजा शाम्यति ।

**मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृते भवेत् ॥ ३९ ॥**

मूत्रावृते वायौ मूत्रस्याप्रवृत्तिराध्मानं च वस्तेः स्यात् ।

**विडावृते विबंधोऽधः स्वस्थाने परिकृंतति ।**
**व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ४० ॥**
**शकृत्पीडितमन्नेन दुःखं शुष्कं चिरोत्सृजेत् ।**

विडावृते मातरिश्वनि स्वे स्थानेऽपानाख्येऽधोविबंधो जातविबंधत्वात् परिकृंतति । स्नेहश्चाशु जरां याति । भुक्ते च सति नर आनह्यत आध्माप्यते । शकृदन्नेन पीडितं चिरेण शुष्कं दुःखं कृच्छ्रेण सृजेत् ।

**सर्वधात्वावृते वायौ श्रोणीवंक्षणपृष्ठरुक् ॥ ४१ ॥**
**विलोमो मारुतो स्वस्थं हृदयं पीड्यतेऽति च ।**

सर्वधात्वावृतेऽनिले श्रोण्यादिरुक् स्यात् । तथा पवनो विगुणो भवति । हृदयं च व्याकुलं पीड्यते च ।

**भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ॥४२॥**
**विदग्धेऽन्ने च वमनम्**

प्राणे पित्तेनावृते भ्रमाद्याः स्युः । अन्ने च विदाहावस्थां प्राप्ते सति वमनं स्यात् ।

**उदानेऽपि भ्रमादयः ।**
**दाहोंऽतरूर्जा भ्रंशश्च**

उदाने च पित्तेनावृते सति भ्रमाद्याः पूर्वोक्ताः स्युः । तथा अंतर्दाह ऊर्जाया बलस्य च विनाशः ।

**दाहो व्याने च सर्वगः ॥ ४३ ॥**
**क्लमोंऽगचेष्टासंगश्च ससंतापः सवेदनः ।**

व्याने च पित्तेनावृते सर्वशोंऽतर्बहिश्च दाहः क्लमादयश्च स्युः ।

**समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ॥ ४४ ॥**

समाने पित्तेनावृते ऊष्मणोऽग्नेरुपहतिरुपघातोऽतिस्वेदादयश्च स्युः ।

**दाहश्च स्यादपाने तु मले हारिद्रवर्णता ।**
**रुजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ॥ ४५ ॥**

अपाने पुनः पित्तेनावृते सति मलेषु पुरीषादौ हारिद्रवर्णता स्यात् । योन्यादिषु रुजः पीडाया अतिवृद्धिस्तापश्च स्यात् ।

**श्लेष्मणा त्वावृते प्राणे सादस्तंद्रारुचिर्वमिः ।**
**ष्ठीवनक्षवथूद्गारनिःश्वासोच्छ्वाससंग्रहः ॥ ४६ ॥**

प्राणे च श्लेष्मावृते सादादयः स्युः ।

**उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।**
**बलवर्णप्रणाशश्च**

उदाने च श्लेष्मावृते गुरुगात्रत्वादयः स्युः ।

**व्याने पर्वास्थिवाग्ग्रहः ॥ ४७ ॥**
**गुरुतांऽगेषु सर्वेषु स्खलितं च गतौ भृशम् ।**

व्याने कफावृते पर्वास्थिवाग्ग्रहस्तथांऽगेषु गौरवं गतौ च स्खलनं स्यात् ।

**समानेऽतिहिमांगत्वमस्वेदो मंदवह्निता ॥ ४८ ॥**

समाने कफावृतेऽतिशीतांगत्वमस्वेदो मंदाग्नित्वं च स्यात्।

**अपाने सकफं मूत्रशकृतः स्यात्प्रवर्तनम्।**

अपाने कफावृते मूत्रशकृतः प्रवर्तनं सकफं स्यात्।

**इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ४९ ॥**

इत्यनेन प्रकारेण वायोरावरणं द्वाविंशतिप्रकारं जानंति। तंत्रकृत इति शेषः।

**प्राणादयस्तथाऽन्योन्यमावृण्वंति यथाक्रमम्।**
**सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥५०॥**

प्राणादयः पंच वायवोऽन्योन्यं परस्परमावृण्वंति यथाक्रमं यथासंख्यं तथा तेनोक्तेन प्रकारेण। यथा पित्तकफाभ्यां प्राणादय आवृतास्तथा प्राणादयोऽन्योन्यमावृण्वंतीति तथाशब्दस्यार्थः। तत्र यथा प्राणेनोदानादयश्चत्वार आव्रियंते तथैवोदानादिभिरपि प्राण आव्रियते। एवमुदानेन व्यानादयस्त्रय आव्रियंते। व्यानादिभिश्च त्रिभिरुदानः। तथा व्यानेन समानापानौ। तथा समानापानाभ्यां व्यानः। समानेनापानः। अपानेनाऽपि समान आव्रियत इत्येकद्वित्रादिक्रमेणाप्येवमावरणं निरूप्यम्। एवं च सर्वेऽपि परस्परमावृण्वंति। तच्चावरणं विंशतिविधं विद्यात्।

अथाऽस्यावरणस्य लिंगान्याह।

**निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः।**
**हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ ५१ ॥**

प्राणेनोदान आवृते निःश्वासोच्छ्वाससंरोधादयः स्युः।

**उदानेनावृते प्राणे वर्णौजोबलसंक्षयः।**

उदानेन प्राण आवृते सति वर्णौजोबलसंक्षयः स्यात्। ननु च पित्तादिभिः प्राणादीनामावरणं युक्तम्। परस्परं तु प्राणादीनां यदावरणं तदमूर्तत्वादनुपपन्नमिव मन्यामहे। ब्रूमः। द्वयोर्वातयोरन्योन्यमुपसर्पतोर्बलवता दुर्बलस्याभिघातेन गतिभंगात्स तेनावृतमार्ग इत्युच्यते। तस्माद्वातानामपि परस्परमावरणं युक्तमेव।

**दिशाऽनया च विभजेत्सर्वमावरणं भिषक् ॥ ५२ ॥**
**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम्।**

अनया दिशा दिङ्मात्रप्रदर्शनेन सर्वमावरणं विभजेद्भिषक्। इयं चात्र दिक्। उदानेनावृतेऽपाने छर्दिश्वासकासादयः स्युस्तथाल्पोऽग्निरतिसारश्च। उदानेऽपानेनावृते बस्त्याध्मानोदावर्तगुल्माल्पाग्निपरिकीर्तिताः स्युः। अपाने व्यानेनावृते विण्मूत्ररेतसामतिप्रवृत्तिः। व्याने समानेनावृते मूर्छातंद्राप्रलापांगसादवन्ह्योजोबलक्षयः। व्यान उदानेनावृते च श्यावास्यता स्तब्धताऽल्पाग्निता स्वेदश्चेष्टाहानिर्निमीलनमिति। एवमन्यदप्यावरणं भिषक् स्वमनीषया शास्त्रसंस्कारवत्या विभजेत्। ग्रंथकृता तु ग्रंथगौरवभयान्नोक्तम्। कथं विभजेदित्यत्र युक्तिं दर्शयति। स्थानानीत्यादि। स्थानानि पक्वाशयादीनि दोषभेदीयोक्तानि वातानां प्राणादीनामवेक्ष्य तथा वृद्धिमावरकवायुसंबंधिनां वैकृतकर्मणामवेक्ष्य ज्ञात्वा तथा आवार्य मरुतां हानिमवेक्ष्य ज्ञात्वा सर्वमावरणमनुक्तमपि विभजेत्। यथोत्साहोच्छ्वासचेष्टादीनि कर्माणि प्राणादिसंबंधीनि यदा हीनानि दृश्यंते उदानादीनां कर्माणि वाक्प्रवृत्यादीनि वृद्धानि तदैवं ज्ञातव्यम्। यथा प्राण उदानादीनामेकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा आवृत इति। एवमुदानादिष्वपि प्राणादिभिरावरणं विभागीकार्यम्।

अधुना अस्या आवृतेरसंख्येयत्वमपि दर्शयन्नाह।

**प्राणादीनां च पंचानां मिश्रमावरणं मिथः ॥ ५३ ॥**
**पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः।**

प्राणादीनां पंचानां वायूनां परस्परमावार्यावरकत्वेन स्थितानां मिश्रं द्वयेन त्रयेण चतुष्टयेन च मिथः परस्परमावरणमवेक्ष्य यात्यावृत्तिरसंख्यातामिति संबंधः। तथा पित्तादिभिर्द्वादशभिर्धात्ववसानैर्मिश्राणां प्राणादीनां मिश्रं मिथ आवरणमवेक्ष्य यात्यावृत्तिरसंख्यातामिति योज्यम्। अत्र चैषामुदाहरणदिग्द्रष्टव्या। प्राणेन द्वादशविधेन पित्तादिभिर्मिश्रितत्वाच्चतुर्णामुदानादीनामावरणं विभजेत्। तथा चतुर्भिरुदानादिभिः पित्तस्यावरणं प्रत्येकं द्वादशविधैर्द्वादशविधस्यैकस्य प्राणस्यावरणमिति। तैरित्यनेन प्राणादयः परामृश्यंते। तैः पित्ताद्यावरणमिश्रितैः प्राणादिभिः परस्परमावार्यावरकस्थितैर्मिश्रमावरणमवेक्ष्य यात्यावृत्तिरसंख्यतामिति योज्यम्। चः समुच्चये।

**मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥ ५४ ॥**
**तारतम्यविकल्पाच्च यात्यावृत्तिरसंख्यताम्।**
**तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ ५५ ॥**
**शनैःशनैश्चोपशयाद्गूढामपि मुहुर्मुहुः।**

तैस्तुल्यं तद्वत्। यथा प्राणादीनां पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रमावरणं मिथस्तथा मिश्रैश्च तैः प्राणादिभिर्यथामिश्रमावरणं मिथस्तथैव मिश्रैः संयुक्तैरेतैः पित्तादिभिर्न केवलैः प्राणादीनां मिश्रमावरणं मिथस्तथा मिश्रैः पित्तादिभिर्ये प्राणादयो मिश्रितास्तैस्तथाभूतैः प्राणादीनामावरणम्। एवमनेकधा मिश्रणाभिर्बहुभिः संयोजनैर्यात्यावृत्तिरसंख्यताम्। तथा तारतम्यविकल्पाच्च प्राणादीनामावृत्तिरसंख्यतां याति संख्यामतिक्रम्य गच्छति। तामावृत्तिं तेषां प्राणादीनां गूढां दुर्लक्ष्यामप्यवहितस्तज्ज्ञानाय तत्परः सन् लक्षयेज्जानीयात्। कथम्। यथास्वं लणक्षोदयात्। तेषां प्राणादीनां यथायथं लक्षणोदयादात्मीयाल्लिंगोद्भवाच्छनैःशनैर्न झटित्येव तथा मुहुर्मुहुः क्षणे क्षणे लक्षयेन्न तु सकृदेव यथास्वं प्राणादीनां लक्षणोदयाज्जानीयादिति। न केवलं केवलाद्यथास्वं लक्षणोदयात्प्राणादीनामावृतिं लक्षयेद्यावदुपशयादप्येषां गूढामप्यावृतिमंतर्लक्षयेत्। तत्र प्राणादीनामेकैकेनान्योन्यावरणाद्विंश-

तिर्भेदा उक्ता एव भवंति । एवमेकेन द्वयोर्द्वाभ्यां चैकस्यावरणे निरूप्यमाणे त्वमी भेदाः । प्राणस्योदानव्यानाभ्यामन्योन्यावरणाद्वौ भेदौ । एवमुदानसमानाभ्यां व्यानापानाभ्यामुदानापानाभ्यां च सहान्योन्यावरणपराणि पंचद्विकादीनि । प्राणस्य द्वादश भेदा भवंति । उदानस्य षट् । व्यानस्य द्वौ । एवं व्यानस्योदानादिभिस्त्रिभिरन्योन्यावरणे षट् । उदानस्य द्वौ । प्राणस्योदानादिभिश्चतुर्भिर्द्वौ वान्योन्यावरणाद्भेदौ भवतः । तथा प्राणादीनां पित्तादिभिर्द्वादशभिरावृतत्वाद्द्वादश प्रकारः । अन्योन्यमिश्रणाच्चत्वारि शतानि विंशत्युत्तराणि भवंति । एवमन्यदप्यावरणं निरूप्यम् ।

**विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥ ५६ ॥**
**स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।**

प्राणादयः सर्व एव वाता जीवितं विशेषेण तु प्राणाख्यो वायुर्जीवितमुच्यते । तथोदानाख्यो वायुर्विशेषेण बलमुच्यते । यतश्चैष मतस्तयोः प्राणोदानयोः पीडनात्क्षोभणाद्यथास्वमायुषो बलस्य च हानिर्भवेत् । तस्मादेतौ प्राणोदानाख्यौ पवनावाहारादिना यत्नेन भिषजा रक्ष्यौ । तथाच वक्ष्यति । प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिरिति ।

**आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ५७**
**प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपक्रमाः ।**

वातादीनामन्यतमेनावृता इत्येवमज्ञाता असम्यग्विनिश्चिता वर्षोषिताः प्रयत्नेनाऽपि दुःसाध्याः कृच्छ्रसाध्या भवेयुः । ज्ञाता वा पित्तादिना आवृता यथावत्सम्यङ्निश्चयं गता वत्सरं स्थिताः । वाशब्द एवार्थः । अनुपक्रमा एव भवेयुः । ततो वाता आवृताः प्रयत्नेन रक्षणीयाः ।

**विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ।**
**भवंत्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ ५८ ॥**

**इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टांगहृदयसंहितायां तृतीयं निदानस्थानं समाप्तम् ।**

तेषां वायूनामन्यतमेनावृतानामुपेक्षणादचिकित्सनाद्विद्रध्यादय उपद्रवा जायंते । तस्मात्तदुपक्रमे यतितव्यमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां निदानस्थाने षोडशोऽध्यायः ॥१६॥

## समाप्तमिदं निदानस्थानम्

# अष्टांगहृदये चिकित्सास्थानम् ।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः । अथेदानीं चिकित्सितस्थानमारभ्यते ।

तस्य चायं संबंधः । रोगपरीक्षा निदानस्थाने गदिता । सांप्रतं चिकित्सा वक्तुं युक्ता । तथा च मुनिः । रोगमादौ परीक्षेत ततोऽनंतरमौषधमिति । तस्माच्चिकित्सितस्थानारंभो न्याय्यः । तत्र यथोद्देशो व्याधीनां निदानस्थाने तेनैव क्रमेणाऽस्य स्थानस्य विरचना युक्तेति ज्वरचिकित्सितमेव विवक्षुराह ।

**अथाऽतो ज्वरचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

इति ह स्माहुरात्रेयादयो महर्षय इत्यनेनागमशरणत्वमात्मनः प्रतिपादयति ।

**आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधाय यत् ।**
**विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लंघनम् ॥ १ ॥**
**प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन् ।**

आमाशयस्थो दोषो वह्निं हत्वा । सहामेन वर्तत इति सामः । तथा मार्गान् पिधाय स्रोतांसि स्थगयित्वा यद्यस्माद्धेतोर्ज्वरं विदधाति तस्मात्कारणाल्लंघनं कुर्वीत । लंघनमत्रोपवासः । तथा चोक्तम् । लंघनस्याविशेषोक्तावुपवासं प्रकल्पयेदिति । अत एवायमपि वक्षति । तस्मादादोषपचनाज्ज्वरितानुपवासयेदिति । कदा लंघनं कुर्वीतेत्याह । प्राग्रूपेषु पूर्वलक्षणेषूत्पन्नमात्रेष्वेव ज्वरादौ वा । उत्पन्नमात्रे ज्वरे सति । किं कुर्वन् लंघनं कुर्वीतेत्याह । बलं यत्नेन पालयन् प्राणांस्तात्पर्येण रक्षन् तदविरोधेनेत्यर्थः ।

ननु कुत एवं विधीयत इत्याह ।

**बलाधिष्ठानमारोग्यमारोग्यार्थं क्रियाक्रमः ॥ २ ॥**

यस्मादारोग्यं स्वास्थ्यं बलाधिष्ठानं बलमधिष्ठानमाश्रयो यस्य तदेवम् । तथा क्रियाक्रम आरोग्यार्थः स्वास्थ्यप्रयोजनः ।

लंघन उपवासे विहिते सति यत्स्यात्तदाह ।

**लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ।**
**स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते॥३॥**

लंघनैरुपवासैर्दोषे पूर्वोक्ते क्षपिते क्षयं नीते । तथाग्नौ दीप्ते सति समिद्धे सति । तथा लाघवेऽगानां सति स्वास्थ्यादि जायते । स्वास्थ्यं यथाप्रकृतित्वम् । रुचिरन्नाभिलाषः । पक्तिः पाक आमस्य । बलमुत्साहः । ओजः परं धातुतेजः । क्षपिधातुरनुक्तोऽपि धातुगणे शिष्टप्रयोगवशादंगीकृतः । लंघनैरिति जातौ बहुवचनम् । तेन कदाचिदेकेनैव लंघनेन कदाचिदनेकैर्दोषक्षयो जायत इति ज्ञेयम् ।

**तत्रोत्क्लिष्टे समुत्क्लिष्टे कफप्राये चले मले ।**
**सहृल्लासप्रसेकान्नद्वेषकासविषूचिके ॥ ४ ॥**
**सद्योभुक्तस्य संजाते ज्वरे सामे विशेषतः ।**
**वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥ ५ ॥**
**श्वासातीसारसंमोहहृद्रोगविषमज्वरान् ।**

तत्र तस्मिन्मल उत्कृष्टे स्वजन्मगुणकर्मलक्षणतोऽधिके । तथा कफप्राये कफबहुले वाताख्ये पित्ताख्ये वेति सामर्थ्याद्गम्यते। समुत्क्लिष्टे स्वस्थानाच्चलिते बहिर्निर्याते । तथा चले शिथिल उत्क्लिष्टेऽपि हि कदाचित् स्थानावष्टंभादचलः स्यात् । एतदेव कफोत्क्लिष्टादिकं दर्शयति । सहृल्लासेत्यादि । हृल्लासादीनां द्वंद्वः । सह तैर्वर्तते यस्मिन् । हृल्लास उद्वमनमिवानुभवः । उद्वमनं हृदयस्य प्रसेकः पानीयस्यैव निष्ठीवनम् । सद्योभुक्तस्येत्यादि । ईदृशे मले सति सद्यः कृताहारस्य ज्वरे संजाते विशेषेण सामे ज्वरे वमनार्हस्य वमनं शस्तम् । वमनार्हा वमनविरेचनविधौ प्रोक्ताः । अन्यथोक्तविधिविपर्ययेण तद्वमनं कृतं श्वासादीन् कुर्यात् । तथानुत्क्लिष्टः कफप्रधानः स्थिरो हृल्लासादिरहितो विपरीतः ।

वमनद्रव्याण्याह ।

**पिप्पलीभिर्युतान् गालान् कलिंगैर्मधुकेन वा ॥ ६ ॥**
**उष्णांभसा समधुना पिबेत्सलवणेन वा ।**
**पटोलनिंबकर्कोटवेत्रपत्रोदकेन वा ॥ ७ ॥**
**तर्पणेन रसेनेक्षोर्मद्यैः कल्पोदितानि वा ।**
**वमनानि प्रयुंजीत बलकालविभागवित् ॥ ८ ॥**

गालान्मदनान् । अस्य निरपायत्वाच्छ्रेष्ठत्वाच्च पिप्पल्यादिद्रव्येभ्योऽनेन सहोपयोगिभ्यो बहूपयोगितया प्रधानविभक्त्या प्रागुपन्यासः । अन्यथा । कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितमिति मदनफलेन पिप्पल्यादीनां च तुल्यं प्रमाणं प्राप्नुयात् । पिप्पलीभिर्युतान् गालानथवा शक्रयवैर्युतानथवा मधुयष्टिकया वा युतानथवोष्णांबुना माक्षिकयुतेन वा सह पिबेत् । अथवा पटोलादीनां पत्रोदकेन वा सह पिबेत् । अथवा तर्पणादिभिः पिबेत् । अथवा कल्पोदितानि वमनकल्पोक्तानि वमनयोग्यानि प्रयुंजीत । बलकालविभागविदिति । अस्यां देहबलाबलावस्थायां तथा व्याधिबलावस्थायां चेदं वमनं दातुं योग्यमिति । यो विभागं वेत्ति स बलकालविभागवित् ।

**कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम् ।**
**दोषाणां समुदीर्णानां पाचनाय शमाय च ॥ ९ ॥**

वमनयोग्यो यो ज्वरी स कृते वमनेऽपरस्तु वमनेऽयोग्यः सोऽकृते वमने विशोषणमुपवासलक्षणं कुर्यात् । एवं कृतवमनोऽकृ-

तवमनो वा ज्वरी सर्वथा लंघनं कुर्यात् । किमर्थमित्याह । दोषाणां वातादीनां समुदीर्णानां समंतात्समुत्थानामुत्पन्नानां पाचनाय पत्त्यर्थे शमाय शांत्यर्थं च । निरामाणां पुनः समुदीर्णानां शांत्यर्थमेव ।

**आमेन भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते ।**
**तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ॥ १० ॥**

दोषेणामाख्येन वातादिना वा सहैकलोलीभूतेनाग्नौ छन्न आच्छादितेऽन्नमामाशयस्थं न विपच्यते भस्मनेव यथा बाह्येऽग्नौ स्थगिते तोयतंडुलादिकं स्थालीस्थं न विपच्यते । यतश्चैवं तस्माद्धेतोरामदोषस्य पूर्वोक्तस्य पचनं पाककर्मविधिं कृत्वा ज्वरितान्नरानुपवासयेत् ।

**तृष्णगल्पाल्पमुष्णांबु पिबेद्वातकफज्वरे ।**
**तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ॥ ११॥**
**उदीर्य चाऽग्निं स्रोतांसि मृदूकृत्य विशोधयेत् ।**
**लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम् ॥ १२ ॥**
**निद्राजाड्यारुचिहरं प्राणानामवलंबनम् ।**
**विपरीतमतः शीतं दोषसंघातवर्धनम् ॥ १३ ॥**

तृष्णावान्नरोऽल्पाल्पं स्तोकं वातकफज्वर उष्णांबु पिबेत् । तृष्णगिति स्वपितृषोर्नजिङिति नजिङ् । अल्पाल्पमिति प्रकारे गुणवचनस्येति द्वित्वम् । तदुष्णांबु पित्तं कफं वा स्त्यानं विलयं नीत्वा विलीनविग्रहतामापाद्य तृष्णामाशु निवर्तयेत् । तर्पणस्वभावत्वात् । तथाग्निमुदीर्य समिद्धं कृत्वा स्रोतांसि विशोधयेत् । किं कृत्वा मृदूकृत्य तेषां स्रोतसां मार्दवमुत्पाद्य । तथा लीनान्यप्रवृत्तस्वरूपाणि च तानि पित्तानिलस्वेदशकृन्मूत्राणि च । तेषामनुलोमनं प्रवर्तनम् । तथा प्राणानां जीविताख्यानामवलंबनम् । तदुष्णं जलमाश्रित्य तथा प्राणाः प्रवर्तंत इत्यर्थः । अनेन चोष्णांबुकर्मकथनव्याजेन वातकफज्वरस्वरूपमपि किंचित् प्रकाशयति। तथा वातशोषितेन कफेन स्त्यानीभूतेनाऽत्र तृष्णा जायते । तथाधिकमग्निमांद्यम् । स्रोतसामशुद्धत्वम् । तथा लीनानि पित्तादीन्यत्र स्युरिति ।

**उष्णमेवंगुणत्वेऽपि युंज्यान्नैकांतपित्तले ।**
**उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥ १४ ॥**
**विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि ।**

एवंगुणमुष्णांबु । एकांतपित्ते पित्तले केवलपित्ते ज्वरिणि वा न युंज्यादिति । तथोद्रिक्तमधिकं पित्तं तस्मिंश्च न युंज्यात्। तथा तदुष्णांबु दवथ्वादिमति नरे न युंज्यात् । चक्षुरादिभ्यो यस्तीव्र ऊष्मा प्रवर्तते स दवथुः । सर्वांगीणस्तीव्र ऊष्मा दाहः । मोहो भ्रमः । तथा विषमद्याभ्यामुत्थिते जाते ज्वरे । तथा ग्रीष्मकाले तथा क्षतश्च क्षीणश्च क्षतक्षीणः । क्षत उरःक्षतः । क्षीणो धात्वपचयवान् । तस्मिंस्तथाभूते नरे न युंज्यात् । तथास्रपित्तिनि रक्तपित्तवति नेति ।

**घनचंदनशुंठ्यंबु पर्पटोशीरसाधितम् ॥ १५ ॥**
**शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम् ।**

तेभ्य उद्रिक्तपित्तादिभ्यः पिपासितेभ्यो घनादिसाधितं शीतं तोयं हितम् । पानीयसाधने च तंत्रांतरे विधिरुक्तः । यथा । कर्षं गृहीत्वा द्रव्यस्य तोयस्य प्रस्थमावपेत् । अर्धावशेषं तद्ग्राह्यं तोयपाने त्वयं विधिरिति ।

**ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना१५**
**तस्मात्पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम् ।**

पित्तं विना ऊष्मा न विद्यते । ज्वरश्चोष्मणा विना नास्ति । संतापलक्षणत्वाज्ज्वरस्य । यतश्चैवं तस्माद्यानि पित्तस्य विरुद्धान्याहारविहारादीनि तानि सर्वस्मिन् ज्वरे त्यजेत् । पित्ताधिके पुनरधिकं कृत्वाऽतिशयेन त्यजेत् । पित्ताधिक इत्यत्राधिकग्रहणेनेदं प्रतिपादयति । सर्वो ज्वरस्त्रिदोषजो भूयसा व्यपदेश इति ।

**स्नानाभ्यंगप्रदेहांश्च परिशेषं च लंघनम् ॥ १७ ॥**

न केवलं ज्वरे पित्तविरुद्धानि त्यजेत् । यावत् स्नानादींश्च त्यजेत् । स्नानादीनां पित्तहरत्वशंकया सेव्यत्वे प्राप्तेऽचिंत्यप्रभावत्वाज्ज्वरे विरुद्धानीति तत्सेवनं निषेधयति । प्रदेहश्चंदनाद्यनुलेपः । परिशेषं च लंघनं त्यजेत् । यल्लंघनमुपयुक्तमुपवासलक्षणं ततो यदन्यत्तत्परिशेषम् । शुद्ध्याद्येकादशप्रकारं च तत्त्यजेत् । उपवासलक्षणं तु लंघनं नवज्वरे कर्तव्यमेव ।

**अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे ।**
**न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ १८ ॥**
**आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।**

यथाऽजीर्णे सामे तीव्ररुज्यपि शूलघ्नमौषधं न पिबेत्प्रत्यवायभयात् । तथैव सामे ज्वरे दारुणपीडावति तदानीमामपक्त्यर्थं मुस्तापर्पटकाद्यौषधं क्वाथ्यादिकल्पनाकल्पितं न पिबेत् । हि यस्मात्तदौषधं पीतमस्यामवस्थायामामाभिभूतकोष्ठस्य प्रयुक्तं भूय एवाममावहेत् । अत्र च साम इत्युक्ते बह्वाम इति गम्यते । अल्पे ह्यजीर्णे भेषजमनुज्ञातमेव । तथा चोवाच तंत्रकारः । जीर्णेऽशने तु भैषज्यं युंज्यात्स्तब्धगुरूदरे । दोषशेषस्य पाकार्थमग्नेः संधुक्षणाय चेति । तस्माद् बह्वाम इति बोध्यम् । अथात्र दृष्टांतमाह । क्षीरं विषमहेरिव । यथा क्षीरं विषघ्नमप्यभिहितमहीनां तदेव विषं कुर्यात् ।

**सोदर्दपीनसश्वासे जंघापर्वास्थिशूलिनि ॥ १९ ॥**
**वातश्लेष्मात्मके स्वेदः प्रशस्तः संप्रवर्तयेत् ।**
**स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् ॥ २० ॥**

उदर्दादयः प्रागुक्ताः । उदर्दश्च पीनसश्च श्वासश्च तैः सह वर्तते यो ज्वरस्तस्मिन् । तथा जंघा च पर्वाणि चास्थीनि च तत्र शूलं तद्विद्यते यस्य तस्मिंश्च । तथा वातश्लेष्मात्मके वातकफोद्भवे स्वेदः शस्तो हितः स आचरितः स्वेदादीन् प्रवर्तयेत् । अग्नेश्च पाटवं दीप्ततरत्वं विदध्यात् ।

**स्नेहोक्तमाचारविधिं सर्वशश्चानुपालयेत् ।**

तथा स्नेहोक्तं स्नेहविध्यध्याये कथितमाचारविधिं वा सर्वशश्चानुपालयेत् । कुर्यादित्यर्थः ।

**लंघनं स्वेदनं कालो यवागूस्तिक्तको रसः ॥ २१ ॥**
**मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ।**

मलानां सामानां वातादीनां पृथक्स्थितानां संसर्गस्थितानां सन्निपातस्थितानां च सामर्थ्याल्लंघनादयस्तिक्तरसावसानाः पाचनानि स्युः । यथावस्थमवस्थानतिक्रमेण कस्यांचिज्ज्वरावस्थायां लंघनमुपवासलक्षणं मलानां पाचनं स्यात् । कस्यांचित् स्वेदनं स्यात् । कालः षडहाख्यः । कस्यांचिद्यवाग्वः पेयाः कस्यांचित्तिक्तको रसः । तिक्तरसाद्यस्तद्द्रव्योपयोगः । एवमवस्थावशाल्लंघनादयस्तिक्तरसांता मलानामेकैकशः पाचनानि स्युः । अथवा क्रमेणैव पाचनानि स्युः । यथा लंघनं च स्वेदनं च कृत्वा षडहादूर्ध्वं यवाग्वस्तिक्तको रसः पाचनान्यविपक्वानां मलानां तरुणे ज्वरे स्युः । तत्रामाशयस्थमित्यादिना ग्रंथेन निर्दिष्टा लंघनयोग्यावस्था । सोदर्दपीनस इत्यादिना च स्वेदनयोग्याऽवस्था । इत्ययं षडहं नेय इत्यादिना च निर्दिष्टा कालयोग्यावस्था । युक्तं लंघितलिंगैस्तुतमित्यादिना पेयायोग्यावस्था । उद्रिक्तपित्तादिना च तिक्तरसोपयोगयोग्यावस्थेति यथावस्थं द्रव्यम् । क्रमस्तु यथा वातश्लेष्मके सामे ज्वरे प्रथमं लंघनं कुर्वन्नेव स्वेदनं द्वित्रादिदिनलक्षणं च कालं लंघितलक्षणयुक्तस्य यवाग्वादिपेयाद्यन्नं भुक्तस्यानंतरं मुस्तापर्पटकादितिक्तरसोपयोग इति क्रमार्थः । ज्वरे लंघनं कुर्वीतेत्युक्तम् ।

अस्य विशिष्टविषयेऽपवादमाह ।

**शुद्धवातक्षयागंतुजीर्णज्वरिषु लंघनम् ॥ २२ ॥**
**नेष्यते**

शुद्धेन वातेनामदोषाद्यदुष्टेन यो ज्वरः स शुद्धवातज्वरः । क्षयेण धात्वपचयादिलक्षणेन यो ज्वरः स क्षयज्वरः । यश्च भूतविषवाय्वग्निसंप्रहारादिसमुद्भवः स आगंतुज्वरः । यथाऽतरुणो ज्वरः स जीर्णः । ते विद्यंते येषां त एवंभूताः । तेषु लंघनं नेष्यते ।

तेषु तर्हि किं कार्यमित्याह ।

**तेषु हि हितं शमनं यन्न कर्शनम् ।**

हि यस्मात्तेषु शुद्धवातादिज्वरेषु शमनं हितम् । शमनस्य संतर्पणापतर्पणरूपेण द्वैविध्यात् । किं तच्छमनं तेभ्यो हितमित्याह । यन्न कर्षणं बृंहणमित्यर्थः । यद्येवं स्पष्टमेव बृंहणमित्येतदेव कस्मान्न कृतम् । किं शमनं यन्न कर्षणमिति पदद्वयोपादानेन । ब्रूमः । अर्थांतरद्योतनार्थमेतदुक्तम् । तथा चायमार्थे विशिष्ट उभययोरुपादानेन प्रकाश्यते । तथा न सर्वसर्विकया यद्बृंहणं शमनं तत्तेभ्यो हितम् । किं तर्हि किंचिद्बृंहणं शमनं तत्तेभ्यो हितमिति ।

**तत्र सामज्वराकृत्या जानीयादविशोषितम् ॥ २३ ॥**
**द्विविधोपक्रमज्ञानमवेक्षेत च लंघने ।**

तत्रेत्यादि । तेषु ज्वरेषु मध्ये सामज्वरस्याकृत्या लक्षणेन ज्वरोपद्रवतीक्ष्णत्वमित्यादिनाऽविशोषितमलंघितं विद्यात् । लंघने लंघनं लक्षणापेक्षया द्विविधोपक्रमज्ञानं द्विविधोपक्रमणीयाध्यायोक्तलक्षणं चावेक्षेत । तल्लक्षणं च विमलेंद्रियता सर्गो मलानामित्याद्यतिकार्श्यादिभिरतिलंघितं च ।

**युक्तं लंघितलिंगैस्तु तं पेयाभिरुपाचरेत् ॥ २४ ॥**
**यथास्वौषधसिद्धाभिर्मंडपूर्वाभिरादितः ।**
**तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥२५॥**
**षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ।**

लंघितलिंगैर्विशोषितलक्षणैर्युक्तं ज्वरितं नरं ज्ञात्वा तं पेयाभिरुपाचरेत् । किंभूताभिः । यथास्वौषधसिद्धाभिः । यद्यत्स्वं यथास्वमिति वीप्सायामव्ययीभावः । यथास्वं च तदौषधं च यथास्वौषधम् । वातादेः पृथग्रूपसंसृष्टस्य सन्निपातितस्य यद्यस्य योग्यमौषधं तेन सिद्धाभिर्वक्ष्यमाणैः पेयादिद्रव्यैर्यथायथं योग्यैः कृताभिरित्यर्थः । किंभूताभिः मंडः पूर्वं प्रधानोत्थतया याभ्यस्ताभिरिति समासः । एवं मंडात् किंचिद्घनाः पेयाः कार्येत्यर्थोऽवतिष्ठते । ननु मंडः पूर्वः प्रथमोऽभ्यवहारे यासां ता मंडपूर्वेति व्याख्येयम् । एवं हि व्याख्यायमाने सर्वासां पेयानां मंडपूर्वाणां ज्वरेऽभ्यवहारः प्राप्नोति । ततश्च सृष्टविड्बहुपित्तो वा सशुंठीमाक्षिकां हिमां पेयां पिबेत् । तामपि मंडपूर्वां पिबेन्न केवलामिति । एतच्च क्रियमाणं विरुद्धं स्यात् । यथा क्वथितामलकेऽस्यर्थपित्तशमने क्व मंडः । तथा क्व बहुपित्तो ज्वरी वा मंडः शृतः पिप्पलीशुंठीभ्यां युक्तो लाजांबुदाडिमैरिखेवंस्वरूपः । पेयायाश्च ज्वरघ्नत्वमुक्तम् । तथा क्षुधिते सम्यग्लंघितं ज्ञात्वा मंडात् किंचिद्घनाभिः पेयाभिरसावुपाचरणीयः । तस्य ज्वरिणस्ताभिः पेयाभिरग्निर्दीप्यते समिध्यते समिद्भिरेधैर्यथा बाह्यः पावकः । मुनिना चोक्तम् । ताश्च भेषजसंयोगाल्लघुत्वादग्निदीपनाः । वातमूत्रपुरीषाणां दोषाणामनुलोमनाः । स्वेदनाय द्रवोष्णत्वाद्द्रवत्वात्तृट्प्रशांतये । आहारभावात् प्राणाय सरत्वाल्लाघवाय च । ज्वरघ्न्यो ज्वरसात्म्यत्वात्तस्मात्पेयाभिरादितः । ज्वरानुपाचेरद्धीमानिति । खरनादेऽप्युक्तम् । पिबेदच्छां संसिद्धां वा स्वां स्वां पेयां नवज्वरे इति । कियंतं कालं ज्वरिणं पेयाभिरुपाचरेदित्याह । षडहमित्यादि । पेयाभिर्ज्वरिणं षडहं यावदुपाचरेत् । षण्णामह्नां समाहारस्तद्धितार्थोत्तरपदेत्यादिना समासः । राजाहःसखिभ्यष्टजिति टच् । तथा षडहादर्वागपि यदि शांतो ज्वरस्तदा दोषदूष्याद्यपेक्षया भक्तयूषादिभिरुपाचरेदिति वाशब्देन गमयति । मृदुत्वं चेति । अथवा षडहेऽतीतेऽपि यावज्ज्वरो मार्दवं गच्छति तावत्पेयाभिरुपाचरेत् । ननु तर्हि किं षडहं वेत्यनेन । अत्र केचिदेवमाहुः । षडहादर्वाक्प्रायेण मृदुतायामपि जातायां षडहं यावज्ज्वरिणं पेयाभिरुपाचरेदिति द्योतनार्थं षडहं चेति कृतम् । अपरे तु काल एव बाहुल्येन ज्वरमार्दवस्येति ज्ञापनार्थमिदं कृतमिति मन्यंते । ज्वरमार्दवे तु ज्ञाते पाचनादियोगः कार्यः । तथा च वक्ष्यति । ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते कषाय इति ।

अथ ता पेया वक्तुमुपक्रमते ।

**प्राग्लाजपेयां सुजरां सशुंठीधान्यपिप्पलीम् ॥ २६॥**
**ससैंधवां तथाम्लार्थी तां पिबेत्सह दाडिमाम् ।**

प्राक् पूर्वं सर्वाभ्यः पेयाभ्यो लाजपेयां पिबेत् । न तु यवादिप्रकृतिजां पेयाम् । कीदृशीम् । सुजरामल्पलाजत्वाद्यस्याः शीघ्रं जरा याति ताम् । तथा सशुंठीधान्यपिप्पलीं शुंठ्यादिभिः सृतामिति बोध्यम् । अत एव ससैंधवामिति पृथग् निर्दिष्टम् । अन्यथा सशुंठी धान्यपिप्पलीं सैंधवामिति निर्देशं कुर्यात् । मुनिरप्याह । लाजपेयां च सुजरां पिप्पलीं नागरैः सृतामित्यादि । ससैंधवामित्यत्र सशब्दस्येषत्पर्यायत्वादल्पसैंधवामिति बोध्यम् । तथाऽम्लार्थी यो ज्वर्यम्लं प्रार्थयते स तां पूर्वोक्तां पेयां सहदाडिमां पिबेत् । पूर्वस्याः पेयायाः सदाडिमत्वमेवास्या विशेषः ।

**सृष्टविड्बहुपित्तो वा सशुंठीमाक्षिकां हिमाम् २७**

पिबेदिति वर्तते । सृष्टविड्भिन्नवर्चा ज्वरी बहुपित्तो वा सशुंठीमाक्षिकां हिमां पेयां पिबेन्नोष्णां नान्यथा यो ज्वरी धान्यपिप्पल्यावत्रान्याग्यौ शुंठीग्रहणात् । अत्र च शुंठ्या द्रव्येभ्योऽसंयोगान्मधुरपाकत्वादग्निमांद्योत्सारणोपक्षीणशक्तित्वाद् युक्तः पित्ते प्रयोगः । एवमन्यत्रापि शुंठ्याः प्रयोगे चिंत्यम् । सैंधवं तु तावन्मात्रं सर्वत्राऽविरुद्धमेव ।

**बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम् ।**

बस्त्यादिशूली व्याघ्रीगोक्षुरसाधितां पेयां पिबेत् ।

**पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ २८ ॥**
**सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम् ।**

पृश्निपर्ण्यादिसाधितां पेयां दीपनपाचनीं ज्वरातिसार्यनम्लां पिबेत् । दीपनी चासौ पाचनी चेति पुंवत्कर्मधारयेति पुंवद्भावः । अत्राम्लग्रहणं न कर्तव्यम् । यतः सर्वत्र पेयाप्रसंगेऽम्लार्थी यो ज्वरी सदाडिमां पेयां पिबेदित्युक्तम् । तस्मात्किमनेन । ब्रूमः । अम्लाभिलाषी भवतु वा मा भवतु । तथाप्यम्लामेव ज्वरातिसारी पिबेदित्यस्यार्थस्य द्योतनार्थमम्लामित्युक्तम् ।

**ह्रस्वेन पंचमूलेन हिक्कारुक्श्वासकासवान् ॥ २९ ॥**
**पंचमूलेन महता कफार्तो यवसाधिताम् ।**
**विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् ॥३०॥**
**यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम् ।**

पिबेत्सिद्धामित्यत्र वर्तते । ह्रस्वेन बृहत्यादिना पंचमूलेन सिद्धां पेयां हिध्मादिवान् पिबेत् । कफार्तो नरो बिल्वादिना महता पंचमूलेन सहयवसाधितां पिबेत् । तंडुला एवात्र प्रकृतित्वेन योज्याः । यवास्तु क्वाथ एव । विबद्धं विष्टब्धं वर्चः पुरीषं यस्य स नरः सयवां यवप्रधानां पिबेत् । किंभूतां पिप्पल्यामलकैः शृताम् । तथा सर्पिषा भृष्टां सम्यगाज्येन संस्कृताम् । तथा मलः पुरीषादिर्दोषो वातादिस्तेषामनुलोमनीं स्वमार्गप्रवर्तिनीम् ।

**चविकापिप्पलीमूलद्राक्षामलकनागरैः ॥ ३१ ॥**
**कोष्ठे विबद्धे सरुजि**

कोष्ठे विबद्धे विबद्धदोषाधिष्ठाने । तथा सरुजि चविकादिभिः साधितां पेयां पिबेत् ।

**पिबेत्तु परिकर्तनि ।**
**कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम् ॥ ३२॥**
**अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः ।**
**सितावदरमृद्वीकासारिवामुस्तचंदनैः ॥ ३३ ॥**
**तृष्णाच्छर्दिपरो दाहज्वरघ्नीं क्षौद्रसंयुताम् ।**

तुः पुनरर्थे । परिकर्तनं परिकर्तिकाछेदनमिवानुभवः स यस्यास्ति स परिकर्तिकोष्ठस्तस्मिन्परिकर्तनि तु कोष्ठे कोलादिभिः साधितां पेयां पिबेत् । श्रीफलं बिल्वफलम् ।

**कुर्यात्पेयौषधैरेव रसयूषादिकानपि ॥ ३४ ॥**

पेयोद्दिष्टैरेवौषधैर्मांसरसादयोऽपि यथोपयोगं कर्तव्याः । तथाच संग्रहेऽध्यगीष्ट । कुर्यात् पेयौषधैरेव रसयूषादिकानपि । रसोऽत्र मांसरसः । यूषा मुद्गादिसंबंधिनः क्वाथाः । आदिग्रहणात् पानीयमस्तुतक्रव्यंजनादयो गृह्यंते । पेयादिषु च द्रव्यपरिमाणादिकं पूर्वोक्तं सूदशास्त्रादिभ्यो वाऽवगंतव्यम् । तथा च तंत्रांतरे । पेयापरसाद्येषु रसाला पानकादिषु । द्रव्यमात्रां प्रयुंजीत लोकसिद्धां यथार्हत इति । यस्य पुंसो यत्परिमाणैर्द्रव्यैर्मात्रा योग्या तस्य तत्परिमाणैरेव पेयादयः कार्या इत्यर्थः । अन्ये त्वेवं मन्यंते । पेयायूषरसाद्येषु द्रव्यपरिमाणमल्पमेव कल्पयितव्यम् । पानार्थे च यद् द्रव्यैः साधितं तोयमुक्तं तदल्पपरिमाणद्रव्यैरेव साधनीयम् । अल्पपरिमाणेनैव द्रव्येण तत्तोयं सम्यक् पाच्यते । तथा च खारणादिरपठीत् । बहुद्रव्यो घनः क्वाथः स्वच्छमल्पौषधं जलमिति । श्रपणक्रियासामान्येऽप्यस्योभयस्य पृथक्संज्ञाविनिर्देशो द्रव्यपरिमाणभेदादयं क्वाथ इदं जलमिति । ज्वरिणां च प्रथमं यथाच्छाः पेया देयाः । तथा यूषरसा अप्यच्छा एव देया अग्निमांद्यभयात् । क्वाथोऽप्यत एव बहुपरिमाणद्रव्यसाध्यत्वाद्घनतया तिक्तरसद्रव्यकृतोऽपि प्रथमं ज्वरे निषिद्धः । अस्वेदनिद्रो नरस्तृष्णार्तश्च सितादिभिः साधितां पेयां पिबेत् ।

किं सर्वत्र ज्वरे सर्वाः सर्वदा सर्वस्मिन्देशे पेया देयाः । नेत्याशंक्याह ।

**मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ।**
**ग्रीष्मे तयोर्वाधिकयोस्तृट्छर्दिदाहपीडिते ॥ ३५ ॥**
**ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छंति**

मद्योद्भव इत्यादिष्वर्थेषु पेयां नेच्छंति । मुनय इति शेषः । मद्येनोद्भवति यस्तस्मिन्मद्योद्भवे ज्वरे । तथा मद्यनित्ये पुरुषे । तथा कफे पित्तस्थानगते सति । तथा ग्रीष्मकाले । तथा तयोर्वाधिकयोः । तथा तयोरिति पित्तकफौ परामृश्येते । पित्तकफयोश्चा-

धिक्ये पित्तस्थाने गते कफ इत्यतस्तयोरेव प्रकृतत्वात्। तथा तृट्छर्दिदाहैः समुदितैः पीडिते पुरुषे यो ज्वरस्तस्मिंश्च प्रत्येकं तु तृडार्तेऽनुज्ञातैव। अस्वेदनिद्रस्तृष्णार्त इत्युक्तेः। दाहार्तेऽपि स्रष्टविड्बहुपित्ते चेत्याह। तथा यस्योर्ध्वं प्रवृत्ते रक्ते ज्वरस्तस्मिंश्च पेयां नेच्छंति।

तेषु तर्हि किं कार्यमित्याह।

**तेषु तु।**
**ज्वरापहैः फलरसैरद्भिर्वा लाजतर्पणम्॥ ३६॥**
**पिबेत्सशर्कराक्षौद्रं**

तेषु पुनर्विषयभूतेषु लाजतर्पणान् लाजसक्तून् पिबेत्। पेयावसरे। नतु यवसक्तून् पिबेत्। ज्वरापहैः। फलरसैः द्राक्षामलकादीनां ज्वरघ्नानां फलानां रसैः स्वरसैः। अथवा तद्रसैः क्वाथैः। अथवाद्भिर्जलैः क्वथितशीतलैरित्यर्थाद्गम्यते। किंभूतान् लाजतर्पणान्। सशर्कराक्षौद्रान्।

**ततो जीर्णे च तर्पणे।**
**यवाग्वामोदनं क्षुद्वानश्नीयाद्भृष्टतंडुलम्॥ ३७॥**
**दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः।**

ततस्तर्पणपानादनंतरं जीर्णे तर्पणे। यवाग्वां वेति। यवागूपानार्हे नरे यवाग्वां जीर्णायां क्षुद्वान् पुरुषो जातबुभुक्षः सन् द्वितीयेऽन्नकाल ओदनमश्नीयात्। किंभूतं भ्रष्टास्तंडुला यस्मिन्। किं केवलमोदनं भुंजीत नेत्याह। दकेत्यादि। दकलावणिकैर्मुद्गकुलित्थादीनां संबंधिभिर्यूषैः क्वाथैरोदनमद्यात्। अथवाऽवस्थावशान्मुद्गलावजैरोदनमद्यात्। मुद्गलावजैरिति वक्तव्ये रसैरिति पृथङ्निर्देशो लावजरसानां प्राधान्यज्ञापनार्थम्। तथा लावरसाः संस्कार्याः। संस्कारकाश्च मुद्गाः। अत एव बहुमात्राणां लावानामल्पानां च मुद्गानामत्रोपयोगः कार्य इत्यवतिष्ठते। नातिमांसास्तनुरसा दकलावणिकाः स्मृता इति केचिदाहुः। अन्ये त्वाचक्षते। अल्पमांसपटुस्नेहा दकलावणिकाः स्मृता इति।

**इत्ययं षडहो नेयो बलं दोषं च रक्षता॥ ३८॥**

इति पूर्वोक्तेन प्रकारेण प्रथमो ज्वरस्य षडहो नेयोऽतिवाह्यो नान्यो ज्वरस्य संबंधीत्ययमिति निर्देशाल्लभ्यते। किंकुर्वता भिषजा षडहो नेयः। बलं रक्षता। तथा दोषं तत्काले सामं वातायन्यतमं पृथक् संसृष्टं सन्निपतितं वा तज्ज्वरकारणं रक्षता तत्र तद्रक्षां कुर्वता। तथाऽसौ दोषः कृच्छ्रसाध्यतामसाध्यतां वा न याति। अत्र च यदि किल बलरक्षार्थं संतर्पणं क्रियते तदा संतर्पणस्यामवृद्धिहेतुत्वात्सामो दोषो वर्धेत। अथाऽमदोषक्षपणार्थमपतर्पणं कुर्वीत। तदा बलहानिः स्यात्। तस्मान्मध्यमया वृत्त्यावहितेन वैद्येनोभयं रक्षतोपक्रमः कार्यो नात्रावहेला कार्येत्यर्थः।

**ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते।**
**कषायो दोषशेषस्य पाचनः शमनो यथा॥ ३९॥**

लंघनाद्यैस्तिक्तरसावसानैस्तत्कालोचितैर्ज्वरकारीसाममलपाकहेतुभिः। पक्वेषु दोषेषु ततः षडहादूर्ध्वं कषायः प्रशस्यते। मुस्तापर्पटकादिः पाचनः प्राधान्येन पाचनसंज्ञया विहितत्वात्। तथा वक्ष्यमाणः कलिंगकादिरर्धश्लोकसमापनः पंचप्रकारः शमनः प्रशस्यते। प्राधान्येन शमनसंज्ञया विहितत्वात्। तथा चाध्येष्यते तंत्रकृत्। पंचैते संततादीनां पंचानां शमना मता इति। तदेतदुभयं पाचनशब्दश्रुत्याक्षिप्तो मुस्तापर्पटकादिः शमनश्रुत्याक्षिप्तः कलिंगकादिः कषायः क्वाथः प्रशस्यते। कस्य पाचन इत्याह। दोषशेषस्य। अत एव पक्वेषु दोषेषु लंघनाद्यैरित्यल्पपक्वेषु पक्वप्रायेष्वीषदामेषु दोषेष्विति बोध्यम्। अन्यथा पक्वस्य पाचनमयुक्तमिव स्यात्। पिष्टपेषणन्यायेनानर्थकत्वात्। तथा चापक्वं यद्वस्तुजातं तदग्निः पचति पचंतमग्निं पाचनः पाचयति। एवं च पाचक्याभावात् किमग्निः पचतु किं वा कषायः पाचयत्वित्यनुपपन्नमेवैतत्स्यात्। यदा पुनर्मुस्तापर्पटकादिः कलिंगादिरन्यो वा कश्चित्कषायस्तिक्ताद्यन्यतमो वातादिदोषज्वरशांत्यर्थं प्रयुज्यते तदा पाचनो भवन्नपि शमनसंज्ञो न पाचनसंज्ञः। ननु प्रथम एव दिने तिक्तरसकषायमनुजज्ञौ तंत्रकृत्। तथा चोवाच। घनचंदनशुंठ्यंबुपर्पटोशीरसाधितम्। शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहमिति। तत्कथमेतदत्रोच्यते ज्वरिणः प्रसक्ततृषोऽवश्यं पानं किंचिद्वितरणीयम्। न च मद्येक्षुरसदधिमस्त्वारनालक्षीरादीनामत्र योग्यत्वेऽपि ज्वरे ह्येवंविधानि निषिद्धानि तंत्रकृद्भिः शिशिरजलमथामदोषस्रोतःसंरोधाग्निसादादीनावहेद् ज्वरं गाढतरं कुर्यात्। तस्मात्पानार्थं तिक्तसाधितमुष्णमंब्वनुमेने। द्रव्याणि चाऽत्र स्वल्पमात्रयैव योज्यानीत्यनंतरमेव प्रत्यपादि। किंच ज्वरितस्तृषितो जलं बह्वौषधं पातुमपि न क्षमेत। किंच कतिपयान्येव घनादीनि जलसंस्कारेण पातुमनुमतानि न सकलान्यपीति कान्यनुक्तानि किं तर्हि विशिष्टप्रभावं दर्शयति। घनादीन्येव विशिष्टप्रभावत्वं चान्यत्राऽपि द्रव्याणां दृष्टम्। यथा शमीफलं मधुरमपि केशघ्नम्। तथाम्लमामलकं पित्तकफघ्नम्। सैंधवं लवणमपि चक्षुष्यमित्याद्यन्यदप्यूह्यम्। तस्माद् घनादीनां पानीयसंस्कारोपयोगो नवज्वरेऽपि हितः।

**तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे।**

कषाय इति वर्तते। ज्वरस्य प्रकृतत्वात् पित्ते पित्तज्वरे तिक्तकषायकल्पनाप्रकारः प्रयोज्यः। तिक्तः पित्तविशेषेणेत्यतो विशेषनिर्देशेऽन्यदोषोत्थेऽपि ज्वरे तिक्तरसाधिष्ठितो द्रव्यकषायो यथावस्थं प्रयोज्यो न केवलं पित्तज्वराख्ये व्याधिदोषघ्नत्वात्। तथा तिक्तो रसो निसर्गत एव ज्वरघ्नः शास्त्रेऽस्मिन्पठितः। यथा। तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम्। कुष्ठमूर्छाज्वरोत्क्लेददाहपित्तकफान् जयेदिति। मुनिरप्यवोचत्। तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः क्रिमिघ्नो मूर्छादाहप्रशमनस्तृष्णाप्रशमनस्त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्न इत्यादि। तस्माद्रसेषु यथा तिक्तरसस्य ज्वरघ्नत्वं तथा नान्येषां रसानामित्यवेहि। गुडूच्या-

देश्च द्रव्यस्य तिक्तरसत्वादेव ज्वरघ्नत्वस्य प्रतिपादितत्वात्पुनर्यज्ज्वरघ्नत्वमुक्तं तच्छक्त्युत्कर्षायेति बोध्यम् । गुडूच्यादेश्च मुनिर्गुणानाह । यथा । तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरतृड्दाहकामलावातरक्तनुदिति । एवमन्येषामपि द्रव्याणामाधेयसामर्थ्यायुत्कर्षसिद्धमपि पुनरुच्यते । तत्तेषां तस्य कर्मणा शक्त्युत्कर्षार्थं बोध्यम् । कटुक इत्यादि । कटुरसाधिष्ठितो ज्वरघ्नद्रव्यविशेषजः क्वाथः कफे ज्वरे प्रयोज्यो ननु यः कश्चित्कटुकद्रव्यकषायः । सर्वस्य ज्वरघ्नत्वानुपपत्तेः । यस्माद्द्रव्यप्रभावाद्विशिष्टमेव कटुरसाधिष्ठितं किमपि यद् द्रव्यं तज्ज्वरघ्नमिति मंतव्यम् । एतदेव च तस्माचायं ग्रंथकृत्कफे कटुको योज्य इति जगाद ।

**पित्तश्लेष्महरत्वेऽपि कषायस्तु न शस्यते ॥ ४० ॥**
**नवज्वरे मलस्तंभात्कषायो विषमज्वरम् ।**
**कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ॥ ४१ ॥**

कषायः कषायरसाधिष्ठितद्रव्यजः कषायः स पित्तश्लेष्महरत्वेऽपि नवज्वरे तरुणज्वरे न शस्यते । कुत इत्याह । मलेत्यादि। कषायो ह्यत्र योजितो मलस्तंभात्कारणाद्विषमज्वरं सततकादिकं कुरुते । कषायस्तंभिता हि मलाः । कोष्ठमप्रतिपन्नत्वात् सम्यक्पाकमायांतः संधिस्रोतोलीनाः कषायपानविहितवेगा असक्तत्वाद्विषममेव ज्वरं कुर्वंति । यदि हि तेषां कषायदानेन शक्तिहानिर्न कृता स्यात् तदा संततमेव ज्वरं कुर्युः । तस्मात् स्वल्पत्वात्सततादिकं विषमज्वरं कर्तुमेषां युक्तम् । ननु पित्तश्लेष्महरत्वेपीत्यनर्थम् । यतः कषायः पित्तकफहेतिपूर्वमुक्तम् । अस्त्येवैतत् । अर्थविशेषज्ञापनार्थं तु पुनरुक्तं नवज्वर एकदोषजे सन्निपातजे वातकफजे वातपित्तजे केवलं कषायो न शस्तोऽपि तु पित्तश्लेष्मज्वरेऽपि न शस्तः । तस्मात् पित्तकफजेऽपि ज्वरे नायं योज्य इत्यर्थः । तथा कषायोऽयं योजितो न केवलं विषमज्वरं करोति । यावदरुच्यादींश्च करोति । अत्राऽपि मलस्तंभादिति संबध्यते । तेन यद्यथादिशब्देनानियतरूपाणामनेकानां व्याधीनां ग्रहणं प्राप्तम् । तथापि मलस्तंभाद्ये व्याधय उत्पद्यंतेऽरुच्यादिरूपास्तेषामेवेह ग्रहणार्थमेवं संबंधः कृतः । तथा । विषमज्वरारुचिहृल्लासहिध्माध्मानादिकानपीत्येकविभक्त्यैव निर्देशः कर्तु व्यवच्छिद्य पृथङ्निर्देशो यः कृतस्तेनेदं द्योत्यते । कषायः प्रयोजितोऽवश्यमेव विषमज्वरं कुरुते । अरुच्यादीन्पुनर्नावश्यं कुरुत इति । तदेवं कषायो रसविशेषो मलस्तंभादेव नवज्वरे निषिध्यते । ननु कल्पनावशात् । तथा च मुनिः । यः कषायकषायस्तु स वर्ज्यस्तरुणे ज्वरे । न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यत इति।

**सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।**
**केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥ ४२ ॥**

सप्ताहादनंतरमष्टमेऽहन्यौषधं ज्वरघ्नं यथायोग्यं शृतादिकल्पनया कल्पितं योज्यमिति केचिदेवाचार्या आहुः । अन्ये तु दशाहादूर्ध्वमौषधं मुस्तापर्पटकादिकं योज्यमिति । केचिदाचार्या लघ्वन्नभुक्तस्य नरस्यौषधं योज्यमित्याहुः । लघ्वन्नशब्देन मंडपेयादिकं भण्यते । ओदनतस्तस्य लघुत्वोक्तेः । लघ्वन्नं भुक्तं येनासौ लघ्वन्नभुक्तः । आहिताग्न्यादित्वान्निष्ठांतस्य परनिपातः । परमतमप्रतिषिद्धमनुमतमेवेति सर्वमेतत्प्रमाणमवस्थावशेन प्रयोगार्हत्वात् । आमोल्बणे तु नामाधिकज्वरिणि पुरुषे पुनरौषधं ज्वरघ्नं मुस्तापर्पटकादिकं षडहादूर्ध्वं सप्ताहाद्दशाहाद्वा न योज्यम् ।

किमिति चेत्याह ।

**तीव्रज्वरपरीतस्य दोषवेगोदये यतः ।**
**दोषेऽथवाऽतिनिचिते तंद्रास्तैमित्यकारिणि ॥४३॥**
**अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ।**

तीव्रज्वरेण परीतस्य ज्वरिणः पुंसो दोषवेगोदये दोषस्यामाख्यस्योल्बणस्य वेगो मुस्ता च पर्पटकादिनोत्क्लेशाद्दोषवेगस्तस्योदयः प्रादुर्भावो दोषवेगोदयः । अथ चोल्बणामस्य वातादेर्दोषस्य वेगोदयस्तस्मिन्दोषवेगोदये सति । अथवा तथैव दोष आमाख्येऽतिनिचितेऽतिशयेन संचयं प्राप्ते वातादौ वा दोष उल्बणे । अत एव तंद्रास्तैमित्येऽवश्यं करोति । तस्मिंस्तंद्रास्तैमित्यकारिणि यतो यस्मात्तदानीमामच्छन्नतया पावकेनापच्यमानं भैषज्यमौषधं मुस्तापर्पटकादिश्शृतादिकल्पनाकल्पितं तदौषधं प्रयुक्तं भूयः पुनरपि ज्वरं ज्वलयत्युत्तेजयति न शमयति । तस्मादामोल्बणे ज्वरे न षडहादूर्ध्वं नाऽपि सप्ताहान्न च दशाहादूर्ध्वं भैषज्यम् योज्यम् ।

कदा तर्हि योज्यमित्याह ।

**मृदुज्वरो लघुर्देहश्चलिताश्च मला यदा ॥ ४४ ॥**
**अचिरज्वरितस्याऽपि भेषजं कारयेत्तदा ।**

मृदुज्वर उपद्रवमृदुतया । लघुः पटुर्देहः । चलिता मला मूत्रपुरीषादयः । मृदुज्वर इत्यादिलक्षणावस्था यदा भवति तदाऽस्यामवस्थायामचिरज्वरितस्याऽप्यनतिक्रांतषडाहस्याऽपि भैषज्यं योज्यम् । अपिशब्दात् किंपुनः षडहातीतज्वरितस्यैवंलक्षणायामवस्थायामुत्पन्नायां तदौषधं च योज्यमित्येवं व्याध्यवस्था कालतो गरीयसीत्युक्तं भवति ।

अथ तदौषधमाह ।

**मुस्तया पर्पटं युक्तं शुंठ्या दुःस्पर्शयाऽपि वा॥४५॥**
**पाक्यं शीतकषायं वा पाठोशीरं सवालकम् ।**
**पिबेत्तद्वच्च भूनिंबगुडूचीमुस्तनागरम् ॥ ४६ ॥**

मुस्तया सह पर्पटं युक्तमथवा शुंठ्या धन्वयासेन युक्तं पाक्यं शृतं शीतकषायं शीतकल्पनाकल्पितं वा कृत्वा पिबेदिति वक्ष्यमाणेन संबंधः । पाठा चोशीरं वालकेन सह शृतं शीतं वा पिबेत् । स्वरसकल्कफांटाख्यकल्पनाभ्यः शृतः शीतस्य कल्पनाद्वयकल्पितस्याऽस्य तथा सामर्थ्यस्य दृष्टत्वादेतत्कल्पनायुगलमुपन्यस्तवान् । वा समुच्चये भिन्नक्रमः । तद्वदित्यादि । न केवलं मु-

स्तापर्पटकं पिबेत् । तथा पाठोशीरं सवालकं पिबेद्यावद्भूनिंबं गुडूचीमुस्तानागरमपि पिबेदिति ।

**यथायोगमिमे योज्याः कषाया दोषपाचनाः ।**
**ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ॥ ४७ ॥**

इमे पूर्वोक्ता मुस्तापर्पटकादयः कषाया यथायोगं योगानतिक्रमेण योज्याः । कषायो यस्मिन् ज्वरे दातुं युक्तः स तत्र योज्य इति यथायोगं योज्याः । किंक्रिया एते स्युरित्याह । दोषपाचनाः दोषस्यामाख्यस्य पक्वप्रायस्य पाचनाः । तंत्रांतरे चोक्तम् । प्रयुक्तं पाचयेदामं यत्तत्पाचममुच्यते । पित्तादिजिन्निरामस्य यत्स्यात्तच्छमनं मतमिति । अत्र मुस्तापर्पटस्य पूर्वमुपन्यासो ज्वरनाशनेभ्योऽन्येभ्योऽस्य मुस्तापर्पटस्य प्राधान्यप्रदर्शनार्थः । तथा चाचार्योऽग्र्याणां मध्ये मुस्तापर्पटकं ज्वर इति निर्देक्षते तस्मान्मुस्तापर्पटस्यैव ज्वरनाशने ज्यायस्त्वमित्यवेहि व्याधिप्रतिपक्षत्वात् ।

**कलिंगकाः पटोलस्य पत्रं कटुकरोहिणी ॥ ४८ ॥**
**पटोलं सारिवा मुस्ताः पाठाः कटुकरोहिणी ।**
**पटोलं निंबत्रिफलामृद्वीकामुस्तवत्सकाः ॥ ४९ ॥**
**किराततिक्तममृता चंदनं विश्वभेषजम् ।**
**धात्रीमुस्तामृताक्षौद्रमर्धश्लोकसमापनाः ॥ ५० ॥**
**पंचैते संततादीनां पंचानां शमना मताः ।**

कलिंगकादयोऽर्धश्लोके समापनं येषां तेऽर्धश्लोकसमापनाः पंचैते पंचानां संततादीनां यथासंख्यं शमना मताः । मुनीनामिति शेषः ।

**दुरालभाऽमृता मुस्ता नागरं वातजे ज्वरे ॥ ५१ ॥**
**अथवा पिप्पलीमूलगुडूची विश्वभेषजम् ।**
**कनीयः पंचमूलं च**

दुरालभादि पाचनं वातजे ज्वरे । अथवा पिप्पल्यादिकं वातजे ज्वरे । कनीयो बृहत्यादिकं पंचमूलं च वातजे ज्वर इति योज्यम् ।

**पित्ते शक्रयवा घनम् ॥ ५२ ॥**
**कटुका चेति सक्षौद्रं मुस्तापर्पटकं तथा ।**
**सधन्वयासभूनिंबं**

पित्ते पित्तजे ज्वरे शक्रयवादयः समाक्षिका मताः । पित्तजेऽपि मुस्तापर्पटकं धन्वयासकिराततिक्तकाभ्यां सहितं हितम् ।

**वत्सकाद्यो गणः कफे ॥ ५३ ॥**
**अथवा वृषगांगेयीशृंगवेरदुरालभाः ।**

वत्सकमूर्वाभार्ङ्गीदिद्याः कफे मतः । अथवा वृषादिर्गांगेयी मुस्तः ।

**रुग्विबंधानिलश्लेष्मयुक्ते दीपनपाचनम् ॥ ५४ ॥**
**अभया पिप्पलीमूलशम्याककटुकाघनम् ।**

रुग्विबंधादियुक्ते ज्वरेऽभयादिघनावसानं दीपनपाचनम् ।

**द्राक्षामधूकमधुकं रोध्रकाश्मर्यसारिवाः ॥ ५५ ॥**
**मुस्तामलकह्रीबेरपद्मकेसरपद्मकम् ।**
**मृणालचंदनोशीरनीलोत्पलपरूषकम् ॥ ५६ ॥**
**फांटो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ।**
**युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ॥ ५७ ॥**
**ज्वरं मदात्ययं छर्दिमूर्छादाहं श्रमं भ्रमम् ।**
**ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ॥ ५८ ॥**

द्राक्षादिरयं गणः फांटः सद्योभिषुतपूत इत्येवंलक्षणस्तथा हिमः शीतो वा रात्रिं द्रवे स्थित इत्येवंलक्षणस्तथा जातिकुसुमैः सुगंधीकृतो मधुसितालाजैर्युक्तो वातपित्तज्वरं जयति । महात्ययादींश्च ।

**पाचयेत्कटुकां पिष्ट्वा कर्परेऽभिनवे शुचौ ।**
**निष्पीडितो घृतयुतस्तद्रसो ज्वरदाहजित् ॥ ५९ ॥**

कटुकां पानीयेन पिष्ट्वा कर्परे मृद्घटखंडेऽभिनवे तथा शुचौ पाचयेत् । तस्या रसो निष्पीडितः सर्पिर्युक्तो ज्वरदाहौ जयति ।

**कफवाते वचातिक्तापाठाऽरग्वधवत्सकाः ।**
**पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः ६०**

वातश्लेष्मणि कषायकल्पनया कल्पिता वचादयो मताः । अथवा गुडूचीसंभवः क्वाथः पिप्पलीचूर्णयुतो मतः ।

**व्याघ्रीशुंठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः ।**
**वातश्लेष्मज्वरश्वासकासपीनसशूलजित् ॥ ६१ ॥**

व्याघ्र्यादिक्वाथः कणाचूर्णसंयुक्तो वातश्लेष्मज्वरादिजित् ।

**पथ्याकुस्तुंबरीमुस्ताशुंठीकट्तृणपर्पटम् ।**
**सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिंगुमत् ॥ ६२ ॥**
**कफवातज्वरेष्वेव कुक्षिहृत्पार्श्ववेदनाः ।**
**कंठामयास्यश्वयथुकासश्वासान्नियच्छति ॥ ६३ ॥**

पथ्यादिपाचनं सिद्धचूर्णं मधुहिंगुभ्यां द्विशाणमात्राभ्यां संयुतं कफवातज्वरेष्वेवादीन् पराकरोति ।

**आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ।**
**तथा तिक्तावृषोशीरत्रायंतीत्रिफलामृताः ॥ ६४ ॥**

आरग्वधेंद्रयवादिभिर्माक्षिकसहितः कफपित्तज्वरं जयति । तथा तिक्तादयः कफपित्तज्वरं घ्नंति ।

**संनिपातज्वरे व्याघ्री देवदारुनिशाघनम् ।**
**पटोलपत्रनिंबत्वक्त्रिफलाकटुकायुतम् ॥ ६५ ॥**

संनिपातज्वरे व्याघ्र्यादिकटुकांतं पाचनम् ।

**नागरं पौष्करं मूलं गुडूची कंटकारिका ।**
**सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ॥६६ ॥**

नागरादिपाचनं वातश्लेष्माधिके ज्वरे कासादीन्निहंति ।

**मधूकपुष्पं मृद्वीका त्रायमाणा परूषकम् ।**
**सोशीरतिक्ता त्रिफला काश्मर्यं कल्पयेद्धिमम् ॥६७॥**
**कषायं तं पिबन् काले ज्वरान्सर्वान्व्यपोहति ।**

मधूकपुष्पादिकं काले शास्त्रोक्ते शीतकषायं पिबन् ज्वरान्सर्वानेकदोषद्विदोषत्रिदोषजानपोहति । उपसर्गादस्यत्यूह्योर्वेति वाच्यमिति परस्मैपदम् ।

**जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ॥ ६८ ॥**
**बद्धविट् कटुकाद्राक्षात्रायंतीत्रिफलागुडान् ।**

जाती पल्लवा । आमलकानि मुस्तं धन्वयासकम् । तद्वत्पूर्ववच्छीतकषायं कल्पयित्वा पिबेत्सर्वान् ज्वरान्हंति । धन्वयवासकं चेति । चशब्दोऽत्र लुप्तो द्रष्टव्यः। तदेतैश्चतुर्भिर्द्रव्यैरेतत् पाचनम् । केचित्तु धन्वयवासकं पृथगेवेच्छंति तस्मादेतत्कृतोऽपि कषायः पूर्ववद्बोध्यः । तथाच बद्धविट्पुरुषः कटुकादिकं कषायं पिबेदिति वर्तते नतु हिममिति । शीतस्य मलस्तंभहेतुत्वादस्य चौषधस्य शोधनरूपत्वाद्गुडासुधा गुड इत्यन्ये ।

**जीर्णौषधोऽन्नं पेयाद्यमाचरेच्छ्लेष्मवान्नतु ॥ ६९ ॥**
**पेया कफं वर्धयति पंकपांसुषु वृष्टिवत् ।**

जीर्णे परिणतमौषधं यस्य स जीर्णौषधः सन् पेयाद्यमेव पूर्वोक्तमन्नं भुंजीत।अद्यत इत्यन्नमिति कृत्वा पेयादेरप्यन्नत्वम् । आदिशब्देन यूषादिग्रहः । नच सर्वः कश्चित्पेयादिकमाचरेदित्याह । श्लेष्मवान्न तु । जीर्णौषधोऽपि श्लेष्मवान्नरः पेयादिकं नाश्नीयात्। किमित्याह । पेयेत्यादि । यतः पेया कफं वर्धयति । विलीनरूपस्य कफस्य स्त्यानभावतामुत्पादयति । स्थानविशेषमुपर्युपरिभावयतो यदा यमुत्पादयति न तु सा कफं साक्षाद्वर्धयति वर्धयतेरर्थोऽनेकार्थत्वाद्धातूनामिति। एष एवार्थोऽनुरूपतंत्रकारदृष्टांतदर्शनादवगम्यते । तथाचाह । पंकं पांसुषु वृष्टिवदिति । यथा पांसुषु वृष्टिः पतति नतु पंकं वर्धयतीति शिथिलरूपतां पांसूनामपास्य निबिडरूपतामिव तेषामुत्पादयति । न पांसुन् वृष्टिर्वर्धयत्याधिक्यं नयति । न वर्धयतेरत्रार्थस्तंत्रकारस्यार्थ एवं विवक्षतो भविष्यतः । तदानीमत्रैवं स्पष्टमेव दृष्टांतमदर्शयिष्यत । यथा पेया कफं वर्धयति यथा वृष्टिर्नदीजलमिति ।

तच्च तंत्रकारोऽमुनैवानुसारेणाह ।

**श्लेष्माभिष्पन्नदेहानां मतः प्रागपि योजयेत् ॥७०॥**
**यूषान् कुलत्थचणकदाडिमादिकृतान् लघून्**
**रूक्षांस्तिक्तरसोपेतान् हृद्यान्रुचिकरान् पटून् ७१**

अभिष्पन्न इति । अभिपूर्वात्स्पंदः स्रवणार्थो व्युत्पादितः । श्लेष्मणांस्तु निरूपेणैवाभिष्पन्नः क्लिन्न इव देहो येषां ते श्लेष्माभिष्पन्नदेहास्तेषामतो ज्वरिणां प्रागपि प्रथमपथ्यावसरेऽपि यूषान् योजयेदित्यपिशब्दस्यार्थः । किंभूतान् यषान् । कुलत्थादिकृतान् । तथा लघून् । न कुलत्थादीनां लघुत्वात्तत्कृता यूषा लघव एव भविष्यंति । तत्किं लघूनित्यनेनात्रोच्यते । शिंबिधान्यानां मध्ये गुरवोऽपि राजमाषादयः संति तन्निवृत्त्यर्थमेतत् । अपि च । लघूनित्यनेन यूषप्रकृतिद्रव्यैरल्पपरिमाणैः कृतानि द्योतयति । यतोऽल्पपरिमाणैः कुलत्थादिभिः कृता लघुतराः स्युस्तस्माल्लघूनिति युक्तम् । तथा रुक्षान् घृतभर्जनकादिरहितान् तथा तिक्तरसयुक्तान् तथा हृद्यानिष्टरसगंधवर्णस्पर्शयुक्तत्वाच्चेतस आह्लादकरान् । तथा रुचिकरान् ज्वरिणोऽन्यस्य वा रोचिष्णून् । तथा पटून्सलवणान् ।

**रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः ।**

रक्ताद्या रक्तो महान् सकलम इत्यादयः । तथा षष्टिका व्रीह्यादयोऽपि जीर्णाः पुराणा हिताः पथ्याः ।

**श्लेष्मोत्तरे वीततुषास्तथा वाद्यकृता यवाः ॥ ७२ ॥**

श्लेष्मोत्तरे प्रभूते श्लेष्मणि ज्वरे वीततुषा अपनीतत्वचो यवाश्च पथ्याः । कीदृशा वाद्यकृताः। भृष्टविदलीकृता इत्यर्थः ।

**ओदनस्तैः शृतो द्वित्रिः प्रयोक्तव्यो यथायथम् ।**
**दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः॥ ७३ ॥**

ओदनस्तै रक्तशाल्यादिभिः पूर्वोक्तैश्च कृतो ज्वरिणो यथायथं यो यस्य दानयोग्यः स तस्य प्रयोक्तव्यः । किंभूतः द्वित्रिः शृतो द्वौ वारौ त्रीन् वारान् जलं दत्त्वा धौतश्शृतः । कथं प्रयोज्यः। दोषदूष्यादिबलेन ज्वरघ्नैर्ज्वरापहैर्द्रव्यैः क्वाथं कृत्वा तेन क्वाथेन साधितो दोषस्य वातादेर्बलं तथा दूष्यस्य रसादेर्बलमपेक्ष्यादिग्रहणाद्देशकालवयःसत्त्वसात्म्यशरीराहारबलं गृह्यते । एकाहादिकानां ज्वरिणामकृतपेयानामेककुलत्थमुद्गचणकादियूषा उक्ताः ।

संप्रति सामान्येन ज्वरिणां कृतपेयानां यूषादीनाह ।

**मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ।**

मुद्गाद्यैः शिंबिधान्यैर्लघुभिः कृता यूषास्तथा कुलत्थैः कृता यूषा ज्वरघ्नाः । मुद्गाद्यैरित्यादिः प्रकारे । तेन सुजरा मुद्गमाषचणककुलत्थमकुष्ठमसुरादयो गृह्यंते । मुद्गशब्दस्यादौ निर्देश इदं बोधयति । यूषसाध्ये व्याधौ बाहुल्येन मुद्गयूषः कार्यो मुद्गानां पथ्यतमत्वात् । तथा चोवाच मुनिः । मुद्गः शिंबिधान्यानां पथ्यत्वे श्रेष्ठतम इति । ननु मुद्गाद्यैरित्यादिशब्देनैव कुलत्था गृहीता एव किं पृथङ्निर्देशेन । ब्रूमहे । कुलत्थयूषस्य ज्वरविषये विरलः प्रयोगः कार्य इति सूचयितुं पृथक्कृतो निर्देश इति । तथा च कुलत्था एवंगुणाः । उष्माः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् । कासार्शःकफवातांश्च घ्नंति पित्तास्रदाः परम् । इत्येवमुष्णत्वादम्लविपाकित्वादतिपित्तास्रकारित्वात्कुलत्थानां यूषो बहुद्रव्यपरिमाणो बहुमात्रो युक्तो ज्वरस्य न शांतये संपद्यते। प्रत्युत वृद्धये स्यादिति संभाव्यते पित्तविरुद्धत्वात् । तस्मादल्प-

परिमाणद्रव्यसाधितोऽल्पमात्रया कुलत्थयूषः श्लेष्माद्युपशमक्रियावन्मात्रः स्यात्तावानेव प्रयोज्यत इति स्थितम् ।

**कारवेल्लककर्कोटबालमूलकपर्पटैः ॥ ७४ ॥**
**वार्ताकनिंबकुसुमपटोलफलपल्लवैः ।**
**अत्यंतलघुभिर्मांसैर्जांगलैश्च हिता रसाः ॥ ७५ ॥**
**व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः ।**
**संस्कृतापिप्पलीशुंठीधान्यजीरकसैंधवैः ॥ ७६ ॥**

कारवेल्लकादिभी रसा ज्वरे हिताः । मुनिस्तु कारवेल्लकादीनां शाकत्वमेवेच्छति । खारणादेऽप्युक्तम् । पटोलं सकलं निंबं कर्कोटककठिल्लकम् । शाकं पर्पटकं च स्यादिति । तथा जांगलैर्जांगलदेशप्राणिजैस्तदभावात्तत्तुल्यैरन्यदेशप्राणिजैरपि मांसैर्हिता रसा व्याघ्र्यादिभिः संस्कृतास्तथा पिप्पल्यादिभिः संयुता इति वक्ष्यमाणेन संबंधः । संस्कारमात्रयोगभाजः पिप्पल्यादयोऽत्र योज्या इत्यर्थः ।

**सितामधुभ्यां प्रायेण संयुता वा कृताकृताः ।**

प्रायेण केचिदेव सितामधुभ्यां युक्ता अवस्थावशान्नतु सर्व एव । किंभूता रसा यूषाश्चैवंविधाः कार्याः । कृताकृताः । दाडिमाजाजिशुंठ्याद्यैरपि संस्कृता यूषा रसाश्च कृताः । विपरीतास्त्वतोऽकृताः ।

**अनम्लतक्रसिद्धानि रुच्यानि व्यंजनानि च ॥ ७७॥**
**अच्छान्यनलसंपन्नानि**

अनम्लेन तक्रेण सिद्धानि तथा रुच्यान्यभ्यवहर्तुमभिलषितानि । तथाऽच्छानि तनूनि न घनानि । तथाऽनलसंपन्नानि वह्निपक्वानि । केचिद्वी तक्रमपक्वमेवाच्छीकृत्य च संस्कृत्य शुंठीजीरकादिनाभ्यवहरंति तन्निषेधायैतदुक्तम् । एवंविधानि व्यंजनानि तेमनानि रसकषायाण्यौदनेन सहावहर्तव्यानि ।

**अनुपानेऽपि योजयेत् ।**
**तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः ॥७८**

अनुपानेऽप्यातुरस्य पश्चात्पानेऽपि तानि योजयेत् । तथा क्वथितशीतं च वारि । मद्यं च सात्म्यतः सात्म्यवशादनुपानेऽपि योजयेत् ।

**सज्वरं ज्वरमुक्तं वा दिनांते भोजयेल्लघु ।**
**श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा ॥ ७९ ॥**

सज्वरं नरं दिनांते भोजयेदथवा ज्वरमुक्तमचिरकालज्वरत्यक्तम् । किंभूतं भोजनं भोजयेत् । लघुमात्रया स्वभावादुभयथा यल्लघु किमित्यस्मिन् काले भोजयेदित्याह । श्लेष्मेत्यादि । तदा तस्मिन्दिनांताख्ये काले यस्तेन विवृद्ध ऊष्मा स्वभावो यस्यानलस्य जठराग्नेरसौ श्लेष्मक्षयविवृद्धोष्माऽनलः । अत एव बलवान् तदा पक्तुं शक्तः ।

**यथोचितेऽथवा काले देशसात्म्यानुरोधतः ।**
**प्रागल्पवह्निर्भुंजानो न ह्यजीर्णेन पीड्यते ॥ ८० ॥**

अथवा यथोचिते काले सज्वरं ज्वरयुक्तमातुरं भोजयेत् । यस्य यस्य य उचितः सात्म्य आहारकालस्तस्मिन् भोजयेत् । यथोचिते हि काले प्रायः क्षुदुपगमो जायते । कथं भोजयेदित्याह । देशेत्यादि । देशसात्म्यवशात्तं भोजयेदेव । नन्वेवं सति यस्य पूर्वाह्णे काले भोजनमुचितं तदा तस्य भोजने दीयमाने को गुणः स्यादित्याह । प्रागित्यादि । यस्मादल्पवह्निर्मंदाग्निः पूर्वाह्णे भुंजानोऽजीर्णेन न पीड्यते न बाध्यते ।

अधुना सर्पिःपानकालं निरूपयति ।

**कषायपानपथ्यान्नैर्दशाह इति लंघिते ।**
**सर्पिर्दद्यात्कफे मंदे वातपित्तोत्तरे ज्वरे ॥ ८१ ॥**
**पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा ।**
**दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत् ॥ ८२ ॥**
**लंघनादिक्रमं तत्र कुर्यादाकफसंक्षयात् ।**

कषायस्य मुस्तापर्पटकादेः पानं कषायपानं तेन । तथा पथ्यान्नैः पेयायूषादिभिर्दशाह इत्यनेन प्रकारेण लंघितेऽतिक्रांते । तथेति प्रायेण क्षीणः कफः संभाव्यतेऽतो दशाहे लंघित इत्युक्तम् । आमज्वरसंज्ञानिवृत्तिस्तु षडहादूर्ध्वं सप्तमे ह्यष्टमे वाऽहनि ज्वरस्य जायते । तथा च मुनिः । सप्ताहेन हि पच्यंते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनीति । तस्मात्कषायपानपथ्यान्नैरित्यादितो दशाहे लंघिते कफे मंदे क्षीणप्राये सर्पिर्दद्यात् । किंभूते ज्वरे । वातपित्तोत्तरे वातपित्ताधिके । अस्यामवस्थायां पक्वेषु निरामेषु वातादिदोषेषु सर्पिर्दद्यात् । पक्वेषु सर्पिर्दत्तममृतं महागुणमित्यर्थः । अन्यथा पुनरपक्वेषु दोषेषु कफोत्तरे तत्सर्पिर्दत्तं विषोपमं विषतुल्यं दशाहेऽतिक्रांतेऽपि स्यादतोऽस्यामवस्थायां सर्पिर्दत्तं ज्वरस्य तदुपद्रवाणां च वृद्धिं करोति । तस्मादस्यामवस्थायां सर्पिःपानमयुक्तम् । तत्र कफोत्तरे ज्वरे सति लंघनादिक्रमं कुर्यात् । कियंतं कालमाकफसंक्षयाद्यावत्कफस्य ज्वरकारिणोऽधिकस्य संक्षयः सम्यक् क्षयः । न धातुक्षयोऽपि यावद्यतः कफज्वरेऽपि विडंगादिसर्पिर्वक्ष्यति ।

अथ जीर्णज्वरचिकित्सामाह ।

**देहधात्वबलत्वाच्च ज्वरो जीर्णोऽनुवर्तते ॥ ८३ ॥**

जीर्णः पुराणो ज्वरो दीर्घकालमनुवर्ततेऽनुबध्नाति । कुतः । देहधात्वबलत्वात् । देहधातवस्तदारंभका रसरुधिरादयः । देहग्रहणाद्वातपित्तश्लेष्माणोऽपि धारणाद्धातव उच्यंते । देहधातूनामबलत्वं स्वल्पत्वम् । तस्माच्च जीर्णो ज्वरोऽनुबध्नाति । तत्स्वभावमात्रादेवेति चशब्दस्यार्थः ।

जीर्णज्वरस्य शांत्यर्थं देहबलाधानार्थं च सर्पिःपानं हितमिति प्रतिपादयन्नाह ।

**रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ।**
**वमनस्वेदकालांबुकषायलघुभोजनैः ॥ ८४ ॥**

**यः स्यादतिबलो धातुः सहचारी सदागतिः।**
**तस्य संशमनं सर्पिर्दीप्तस्यैवांबुवेश्मनः ॥ ८५ ॥**

रूक्षं यत्तेजस्तज्ज्वरकृत्। रूक्षमिति वचनाद्देहोष्मा जाठरोऽनलो गृह्यते। तस्यैव ज्वरकृतत्वात्तथोक्तम्। मलास्तत्र स्वैःस्वैर्दुष्टा इत्यादि यावज्ज्वरं निवर्तयंति। तेजसेत्यादि। जाठरानलस्यैव ज्वरकृतत्वेन ज्वरकृता रूक्षेण तेजसा रूक्षितस्य च पुंसः सर्पिः संशमनम्। चशब्दाचान्यस्यापि। अत एवाह। वमनेत्यादि। वमनादिभी रौक्ष्यकृद्भिः कृतैस्तदानीं यः स्याद्भवेदतिबलः प्रवृद्धत्वादतिसमर्थो धातुः। को धातुः। सहचारी यः सह चरति तच्छीलो वाताख्यो धातुरग्निना सह चरति। नन्वेवं परस्परसहचरभावत्वेऽग्निरपि वायुना सह चरति ततोऽग्निस्वभावत्वात्पित्ताख्योऽपि धातुरिह सहचारी प्राप्तस्तन्निवृत्त्यर्थं सदागतिरित्याह। सदागतित्वं वायोरेवान्वर्थत्वेनोपपद्यत इति पित्तस्याग्रहणम्। किंकस्य। यथा संशमनमंबुवेश्मनो गृह्यस्य दीप्तस्य ज्वलितस्य जलं यथा।

**वातपित्तजितामग्र्यं संस्कारमनुरुध्यते।**
**सुतरां तद्धृतो दद्याद्यथा स्वौषधसाधितम् ॥८६॥**

यस्माद्धृतं सर्वेषां वातपित्तजितामग्र्यं यथा न तथाऽन्यान्यौषधानि वातपित्तजितीत्यत एव प्रागभ्यधात्। सर्पिर्दद्यात्कफे मंदे वातपित्तोत्तरे ज्वर इत्यादि। यस्माच्च घृतं संस्कारमनुरुध्यतेऽनुवर्तते। गुणांतराधानं संस्कारम्। ननु यथा घृतं स्वशैत्यमजहदेव संस्कारमनुवर्तत इत्येतच्च स्नेहविधौ प्रतिपादितमेव। अनुमेव च न्यायमंगीकृत्य मुनिरप्यवोचत्। नान्यस्नेहस्तथा कश्चित् संस्कारमनुवर्तते। यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतमिति। हि यस्मात् सुतरां संस्कारमनुरुध्यते घृतं तस्माद्धृतं जीर्णे वातपित्तोत्तरे निर्विकल्पं दद्यात्। कीदृशं यथा स्वौषधसाधितं यथायथं व्याधिप्रतिपक्षैरौषधैः पक्कम्।

**विपरीतं ज्वरोष्माणं जयेत्पित्तं च शैत्यतः।**
**स्नेहाद्वातं घृतं तुल्ययोगसंस्कारतः कफम् ॥ ८७ ॥**

घृतं विपरीतं ज्वरोष्माणं जयेत्। ज्वरनिवर्तक ऊष्मा जाठरोऽनलो रूक्षतीक्ष्णादिगुणः स पक्तिस्थानान्निरस्तो ज्वरनिवर्तको घृतस्य स्निग्धशीतत्वादिगुणयोगाद्विपरीतः। एवं विपरीतं ज्वरोष्माणं घृतं जयेत्पित्तं च। शैत्यतः शैत्याद्धृतं जयेन्न स्नेहात्। पित्तं सस्नेहमिति वचनात्। स्नेहात्स्निग्धत्वाद्धृतं वातं जयेन्न तु शैत्यात्। शीतोऽनिल इति वचनात्। कफं स्निग्धशीतत्वादिना तुल्ययोगसंस्काराभ्यां जयेत्। योगो युक्तिः। कफज्वरहरैर्द्रव्यैः सह योजनात्संस्कारो गुणाभिधानम्। योगश्च संस्कारश्च योगसंस्कारौ ताभ्यां घृतं कफं जयेत्। ननु विपरीतं ज्वरोष्माणं घृतं जयेदिति न घटते घृतस्याग्निवृद्धिहेतुत्वात्। तथा च वक्ष्यति। स्नेहमेव परं विद्याद्दुर्बलानलदीपनम्। नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपीति। अत्राचक्ष्महे। घृतं स्नेहनत्वदीपनत्वाभ्यां वातशमनं कुर्वज्ज्वरोष्माक्षेपत्वं वातस्य विनिवार्य ज्वरोष्मणोऽपि रौक्ष्यतैक्ष्ण्यादियुतस्य घृतं विपरीतगुणत्वाच्छमं करोति न वृद्धिम्। ननु तथा स्नेहाद्वातं शमयति तथा तत एवं स्नेहात्किमिति घृतं समानगुणत्वान्न पित्तं शमयति। ब्रूमः। जीर्णज्वरे लंघनादिभिरतिरूक्षेण ज्वरोष्मणा पित्तं रूक्षमेव संपन्नं स्नेहभागपरिक्षयान्न स्नेहमतः कथं कृत्वा त्वरयेत्तच्च घृतं पित्तमेव शमयति न वातं कोपयति। द्रव्यप्रभावत्वात्संस्नेहनत्वाच्च।

**पूर्वे कषायाः सघृताः सर्वे योज्या यथामलम्।**

पूर्वे कषायाः। प्रागुक्तानि पाचनानि सहघृतेन यथादोषं प्रयुंज्यात्। कथम्। यथामलं दोषानतिक्रमेण।

**त्रिफलापिचुमंदत्वङ्मधुकं बृहतीद्वयम्।**
**समसूरदलं क्वाथः सघृतो ज्वरकासहा ॥ ८८ ॥**

त्रिफलादीनि मसूरदलानि चैषः क्वाथो घृतेन सहोपयोजितो ज्वरकासहा स्यात्।

**पिप्पलींद्रयवधावनितिक्ता**
**सारिवामलकतामलकीभिः।**
**बिल्वमुस्तहिमपालतिसेव्यै-**
**र्द्राक्षयातिविषया स्थिरया च ॥ ८९ ॥**
**घृतमाशु निहंति साधितं**
**ज्वरमग्निं विषमं हलीमकम्।**
**अरुचिं भृशतापमंसयो-**
**र्वमथुं पार्श्वशिरोरुजं क्षयम् ॥ ९० ॥**

पिप्पलीत्यादिभिर्द्रव्यैः कल्कीकृतैर्घृतचतुर्थांशैस्तोयेन चतुर्गुणेन घृतापेक्षया साधितं घृतमाशु ज्वरं हंति विषमाग्न्यादींश्च।

**तैल्वकं पवनजन्मनि ज्वरे**
**योजयेत्त्रिवृतया वियोजितम्।**
**तिक्तकं वृषघृतं च पैत्तिके**
**यच्च पालनिकया शृतं हविः ॥ ९१ ॥**

तैल्वकं घृतं वातव्याधिचिकित्सितोक्तं त्रिवृतया रहितं पिबेत्। पैत्तिके ज्वरे तिक्तकं कुष्ठचिकित्सितोक्तं तथा वृषघृतं रक्तपित्तचिकित्सतोक्तमत्रैव वा वक्ष्यमाणं योजयेत्। पालनिकया त्रायंत्या यद्धृतं पक्कं तच्च पित्तज्वरे योजयेत्।

**विडंगसौवर्चलचव्यपाठा**
**व्योषाग्निसिंधूद्भवयावशूकैः।**
**पलांशकैः क्षीरसमं घृतस्य**
**प्रस्थं पचेज्जीर्णकफज्वरघ्नम् ॥ ९२ ॥**

विडंगादिभिः पलप्रमाणैर्घृतप्रस्थं क्षीरतुल्यं चतुर्गुणजलं पचेत्। तच्चोपयुक्तं जीर्णकफज्वरं हंति।

**गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च।**
**मृद्वीकाया बलायाश्च स्नेहाः सिद्धा ज्वरच्छिदः॥९३**

गुडूच्यादीनां पंचानां पृथक्पृथग्रसकल्काभ्यां सिद्धाः पंचस्नेहाः ज्वरच्छिदो जीर्णज्वरघ्नाः स्युरित्यर्थः ।

**जीर्णे घृते च भुंजीत मृदुमांसरसौदनम् ।**
**बलं ह्यलं दोषहरं परं तच्च बलप्रदम् ॥ ९४ ॥**

घृते च परिणते सति मृद्वतीक्ष्णमांसरसाशनं भुंजीत । हि यस्मादलं बलं जातं दोषहरं भवति । तच्च रसाशनमतिशयेन बलकरं स्यात् ।

**कफपित्तहरा मुद्गकारवेल्लादिजा रसाः ।**
**प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे ॥ ९५ ॥**
**शूलोदावर्तविष्टंभजनना ज्वरवर्धनाः ।**

अत एव तस्मात्कारणान्मुद्गकारवेल्लादिरसाः कफपित्तहरा जीर्णज्वरे वातोत्तरे प्रायेण न हितास्ते ह्युपयुक्ताः शूलादिकृतो ज्वरवर्धनाश्च स्युः ।

**न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम् ॥९६॥**
**शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत् ।**
**आमाशयगते दोषे बलिनः पालयन्बलम् ॥ ९७ ॥**

एवमपि कृते सति यदि ज्वरो न शाम्यति तदा शोधनार्हस्य नरस्य प्रागुक्तं पिप्पलीभिर्युतान्गालानित्यादिकं वमनं योजयेत् । कदा दोषे आमाशयगते सति । बलवतः पुंसो । वमनं योजयेद्बलं पालयन्रक्षयन् ।

**पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे ।**
**मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ॥९८॥**
**ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम् ।**
**आरग्वधं वा पयसा मृद्वीकानां रसेन वा ॥ ९९ ॥**

पक्वे पुनर्दोषे तथा शिथिलेऽविष्टब्धेऽथवा विषजे मद्योत्थे वा वातज्वरे मोदकं त्रिफलादिभिर्विरेचनं दद्यात् । व्योषाद्यं वा व्योषत्रिजातकांभोदकृमिघ्नामलकैस्त्रिवृत्समैः समा समसिताक्षौद्रेण गुटिकाः कृता इति दद्यादथवा पयसा क्षीरेण मृद्वीकानां रसेन वाऽऽरग्वधं विरेचनं दद्यात् ।

**त्रिफलां त्रायमाणं वा पयसा ज्वरितः पिबेत् ।**

त्रिफलां त्रायंतीं वा पयसा ज्वरी पिबेत् ।

**विरिक्तानां च संसर्गी मंडपूर्वा यथाक्रमम् ॥१००॥**

विरिक्तानां ज्वरिणां शब्दाद्वमितानां च यथाक्रमं क्रमानतिक्रमेण संसर्गी कर्तव्येत्यध्याहार्यम् ।मंडः पूर्वः प्रथमो यस्यां सैवम् । मंडं प्रथमं दत्त्वाऽनंतरं पेयविलेप्यादयो यथाक्रमं देयाः । कृतवमनविरेचनानंतरं यः पेयाद्यवचारणाक्रमः स संसर्गीत्युच्यते ।

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ।**
**पक्वेऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः॥१०१॥**
**अतिप्रवर्तमानं वा पाचयन्संग्रहं नयेत् ।**

ज्वरेणोत्क्लिष्टमुत्क्लेशितं ज्वरोत्क्लिष्टं मलं पुरीषाख्यं च्यवमानं पतंतमुपेक्षेत । तद्विधारणे प्रयत्नमौषधैः कुर्यान्न त्वौषधनिमित्तम् । किमित्यसौ न विधीयत इत्याह । दोषः पुरीषः पुरीषाख्यो यतः पक्वः । अशब्दात्किमुतापक्वः कोष्ठे आमपक्वाशयाश्रयाख्ये कृतं गृहीतमास्पदमवस्थितिर्येन स सवंभूतो विकुर्वीत विकारं कुर्यात् । अतिप्रवर्तमानं वा तं मलमपक्वं पाचयन् संग्रहं नयेत् ।

नत्वाम एवं संगृहीतव्य इत्याह ।

**आमसंग्रहणे दोषा दोषोपक्रम ईरिताः ॥ १०२ ॥**

आमशब्दः पुरीषाख्यदोषस्यापच्यमानावस्थोपलक्षणार्थः । आमस्याऽपक्वस्य दोषस्य संग्रहणमामसंग्रहणं तस्मिन्नामसंग्रहे ये दोषा भवंति ते दोषोपक्रमणीयाध्याय ईरिता उक्ताः । तथा च तत्रोक्तम् । उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम् । धारयेदौषधैर्दोषान् विधृतास्ते हि दोषदा इति । तस्मादामसंग्रहार्थमौषधं न देयम् ।

तथामज्वरेऽप्यामनिर्हरणार्थमौषधं न देयमिति प्रतिपादयन्नाह ।

**पाययेद्दोषहरणं मोहादामज्वरे तु यः ।**
**प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत् ॥ १०३ ॥**

तुर्व्यतिरेके भिन्नक्रमः । यस्तु मोहादज्ञानाद्भिषक् पापो दोषहरणमामज्वरे पाययेत्स स्वयमनर्थकारी सुप्तं कृष्णसर्पं करस्याग्रेण परामृशेत्स्पृशेत् । अतिप्रत्यवायं पश्यतैवमुक्तं तंत्रकृता । तत्रच वाक्ये रूपकाख्योऽलंकारस्तस्य ह्येतल्लक्षणम् । तदपरमौपम्ये सति यस्मिन् स्याद्वाक्ययोर्योगः । अस्योदाहरणम् । यः सेवते कुनृपतिं कुरुते बधिरस्य कर्णजापं स इति ।

**ज्वरक्षीणस्य न हितं वमनं च विरेचनम् ।**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥१०४॥**

ज्वरेण क्षीणस्य पुंसो न हितं वमनं विरेचनं च । तर्हि कथं दोषनिर्हरणं तस्येत्याह । काममित्यादि । तस्य कामं यथेष्टं कृत्वा पयसा निरूहैर्वा मलान् हरेत् ।

**क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ।**
**क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः ॥१०५॥**

क्षीरमुचितं सात्म्यं यस्य तस्य क्षीरोचितस्य तथा प्रकर्षेण क्षीणः श्लेष्मा यस्य तस्य प्रक्षीणश्लेष्मणतस्तथा दाहश्च तृट् च ते विद्येते यस्य तस्य दाहतृड्वतः । एवं पित्तानिलाभ्यामार्तस्य पीडितस्य क्षीरं पथ्यमप्यतिसारिणोऽपि पथ्यं किं पुनः प्रक्षीणः श्लेष्मा यस्य । तस्य क्षीरोचितस्य पूर्वोक्तविशेषणविशिष्टस्य क्षीरं पथ्यमित्यपिशब्दार्थः ।

**तद्वपुर्लंघनोत्तप्तं प्लुष्टं वनमिवाग्निना ।**
**दिव्यांबु जीवयेत्तस्य ज्वरं चाशु नियच्छति॥१०६॥**

तच्च क्षीरं लंघनोत्तप्तं वपुर्जीवयेत्कायस्य सप्राणतामुत्पादयेत् । किं किमिव । अग्निना दावेन प्लुष्टं वनं यथांबु जीवयेत्प्ररोहयेत्तथा वपुः क्षीरमिति । लंघनशब्देनाऽत्र सामान्यं लंघनं वाच्यवस्तु

भण्यते । शरीरलाघवकरं यत्तद्द्रव्यं कर्म वा पुनः । तल्लंघनमिति ज्ञेयमित्यर्थैवं लक्षणं नतु विशिष्टमुपवासलक्षणं योग्यतावशात् । तस्य ज्वरिणः पुंसस्तत्क्षीरमाशु ज्वरं च नियच्छति । न केवलं वपुर्जीवयेदिति चार्थः ।

**संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ।**
**विभज्य काले युंजीत ज्वरिणं हंत्यतोऽन्यथा १०७**

यत एवं महागुणं क्षीरं तस्माद्धेतोः संस्कृतं द्रव्यांतरेण तथा शीतमुष्णं चेति कृत्वाऽथवा धारोष्णमेव । काले विभज्य युंजीत यथाविषयं काले प्रयोजयेत् । अतोऽन्यथा निरूपितात्क्षीरोपयोगविषयादन्यथाऽन्येन प्रकारेण प्रयुक्तं क्षीरं ज्वरिणं हंति ।

**पयः सशुंठीखर्जूरमृद्वीकाशर्कराघृतम् ।**
**शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम् ॥ १०८ ॥**

क्षीरं शुंठ्यादियुतं शृतमनंतरं शीतं मधुयुतं तृड्दाहादिजित्यर्थः ।

**तद्वद् द्राक्षाबलायष्टीसारिवाकणचंदनैः ।**
**चतुर्गुणेनांभसा वा पिप्पल्या वा शृतं पिबेत् १०९**

तद्वदिति । तेनैव पूर्वोक्तेन पयसा तुल्यं तद्वद्यथा पूर्वोक्तं शृतशीतं तृड्दाहज्वरहृत्तथा द्राक्षादिभिः शृतमनंतरं शीतं मधुयुतं तृड्जिदित्यर्थः । अथवा क्षीरं चतुर्गुणेन जलेन शृतं पिबेदथवा पिप्पल्या शृतं पिबेत् ।

**कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ।**
**मुच्यते ज्वरितः पीत्वा पंचमूलीशृतं पयः ॥११०॥**

पंचमूलेन शृतं क्षीरं पीत्वा कासादिभ्यो मुच्यते । मुच्यत इति कर्मकर्तरि तङ् । चिरज्वरो दीर्घकालानुबंधी ज्वरः ।

**शृतमेरंडमूलेन बालबिल्वेन वा ज्वरात् ।**
**धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः॥१११॥**
**सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात् ।**

एरंडमूलेनाऽथवा बिल्वेन शृतमथवा धारोष्णं क्षीरं पीत्वा पुरुषो ज्वराद्विमुच्यते । किंभूताज्ज्वरात् । विबद्धानिलवर्चसः । विबद्धे विशेषेण बद्धेऽसम्यक्प्रवर्तनादनिलवर्चसी यस्मिन्ज्वरे स बद्धानिलवर्चास्तस्माज्ज्वराद्विमुच्यते । तथा रक्तं च पिच्छा च यो रक्तपिच्छास्रावस्ताभ्यामुपलक्षिता । अतिसृतिरतीसारः सह तया वर्तते यो यस्मात्तस्मात्तथाविधाज्ज्वरात्तथा सह तृषा सहशूलेन तथा प्रवाहिकया निश्चारिकापरसंज्ञया वर्तते यस्तस्मात्तथाविधाज्ज्वरात्प्रमुच्यते ।

**सिद्धं शुंठीबलाव्याघ्रीगोकंटकगुडैः पयः ॥ ११२ ॥**
**शोफमूत्रशकृद्वातविबंधज्वरकासजित् ।**

शुंठ्यादिभिः साधितं पयः शोफादिजित् ।

**वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत् ॥ ११३॥**

वृश्चीवादिभिः साधितं पयो ज्वरशोफनुदिति । वृश्चीवः सूक्ष्मपुनर्नवः । स्थूलपुनर्नवस्तु वर्षाभूः । पुनर्नवद्वयं बिल्वं चात्र योज्यम् ।

**शिंशिपासारसिद्धं वा क्षीरमाशु ज्वरापहम् ।**

शिंशिपासारेण सिद्धं शृतं क्षीरमुपयुक्तमाशु न तु चिरेण ज्वरहृत् । क्षीरस्य श्रपणे विधिरतीसारचिकित्सितोक्तः । पयस्युत्क्वाथ्य मुस्ताविंशतिमित्यनुसारेणानुकल्प्यः । तंत्रांतरे त्वेवमुक्तम् । द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरक्वाथे त्वयं विधिरिति । ननु किं वातपित्तोत्तरे ज्वरे घृतं प्रधानमाश्रीयतां पूर्ववचनप्रामाण्यादथवा क्षीरं प्रधानमेतद्वचनप्रामाण्यादित्यत्र संशयः । अत्रोच्यते । उभयमपीदं घृतं क्षीरं च वातपित्तोत्तरे ज्वरे प्रधानमवस्थावशात्सात्म्यवशाच्च क्वचित्किंचिदुपयुज्यते ।

**निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम् ॥११४॥**
**दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते ।**

निरूहो युक्तो दोषे पक्वे तथा पक्वाशयं गते सति बलादीन् द्रागेव करोति ।

**पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत् ॥ ११५॥**
**स्रंसनं त्रीनपि मलान् बस्तिः पक्वाशयाश्रयान् ।**

पित्तं केवलं कफपित्तं वा पक्वाशयाश्रितं स्रंसनं विरेचनं हरेत् । बस्तिः प्रयोजितस्त्रीनपि मलान्वाताद्यान् हरेत् । कीदृशान् । पक्वाशयमाश्रितान् ।

**प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटिग्रहे ॥ ११६ ॥**
**दीप्ताग्नेर्बद्धशकृतः प्रयुंजीतानुवासनम् ।**

प्रक्षीणे कफपित्ते यस्य पुंसस्तथा दीप्ताग्नेर्बद्धवर्चसस्त्रिकपृष्ठकटिग्रहे सत्यनुवासनं प्रयुंजीत ।

**पटोलनिंबच्छदनकटुकाचतुरंगुलैः ॥ ११७ ॥**
**स्थिराबलागोक्षुरकमदनोशीरवालकैः ।**
**पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम् ॥ ११८ ॥**
**कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः ।**
**बस्तिं मृदुघृताभ्यां च पीडयेज्ज्वरनाशनम् ॥११९॥**

पटोलादिभिः क्वाथं क्षीरार्धोदके क्षीरशेषं तथा मिश्रितं कल्कीकृतैर्द्रव्यैर्मुस्तादिभिर्मधुघृताभ्यां वा योजितं बस्तिं ज्वरनाशनं दद्यात् ।

**चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान् ।**
**क्वाथयेत्कल्कयेद्यष्टीशताह्वाफलिनीफलम् ॥ १२० ॥**
**मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः ।**

चतस्र इति । मुद्गपर्णी माषपर्णी शालिपर्णी पृश्निपर्णीत्यादि चतस्रः पर्णिनीः फलादींश्च क्वाथयेत् । फलं मदनफलम् । तथा यष्ट्यादीन् कल्कयेदित्येष सगुडादिर्बस्तिर्ज्वरहृत् ।

**जीवंती मदनं मेदां पिप्पलीं मधुकं वचाम् ॥१२१॥**

**ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम्।**
**पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम् १२२**
**ज्वरेऽनुवासनं दद्याद्यथा स्नेहं यथामलम्।**

जीवंत्यादीनि द्रव्याणि स्नेहस्य चतुर्भागमात्राणि जलेन पिष्ट्वा क्षीरं स्नेहसमं च तैलात्सर्पिषश्चतुर्गुणं जलं तैलसर्पिर्द्रव्याच्चतुर्गुणमित्येकत्र साधितं पक्वमेतज्ज्वरेऽनुवासनं दद्यात्। यथा स्नेहं यथामलं यो यस्मिन् ज्वरे दोषे वातादौ यः स्नेहो योग्यस्तत्र तं दद्यात्।

**ये च सिद्धिषु वक्ष्यंते बस्तयो ज्वरनाशनाः॥१२३॥**

ये च बस्तयः सिद्धिषु बस्तिकल्पनाध्याये वक्ष्यंते ज्वरनाशनास्ते च देया इति शेषः।

**शिरोरुग्गौरवश्लेष्महरमिंद्रियबोधनम्।**
**जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम्॥ १२४॥**
**स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम्।**

जीर्णज्वरे विरेचनाख्यं नस्यं दद्यात्। कीदृशं तन्नस्यं स्यात्। शिरसो रुजं गौरवं च श्लेष्माणं च हरति तच्छीलं तत्। तथेंद्रियाणां चक्षुरादीनां च बोधनम्। तथा रुचिकृत्। शून्यशिरसः पुंसः स्नैहिकं स्नेहेन मिश्रं स्निग्धं नस्यं दद्यात्। दाहार्ते शिरसि पित्तहरं नस्यं दद्यात्।

**धूमगंडूषकवलान् यथादोषं च कल्पयेत्॥ १२५॥**
**प्रतिश्यायास्यवैरस्यशिरःकंठामयापहान्।**

धूमादींश्च यथायोगं कल्पयेत्। किंभूतान्। प्रतिश्यायादिघ्नान्।

**अरुचौ मातुलुंगस्य केसरं साज्यसैंधवम्॥ १२६॥**
**धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्।**

अरुचौ सत्यां बीजपूरकस्य केसरं सघृतसैंधवमास्येन धारयेदिति संबंधः। अथवा धात्र्यादीनां कल्कं धारयेत्।

**यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान् १२७**
**अभ्यंगालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते।**
**कुर्यादंजनधूमांश्च तथैवागंतुजेऽपि तान्॥ १२८॥**

त्वगाश्रिते जीर्णज्वरेऽभ्यंगादीन्कुर्याद्यथोपशयं यथासुखावहं संस्पर्शो येषां तांस्तथा शीतवीर्यैरुष्णवीर्यैश्च द्रव्यैः कल्पितांस्तथाऽञ्जनधूमांश्च कुर्यात्। अंजनधूमानागंतुजेऽपि ज्वरे तथैव कुर्यात्। सद्योगत्वादागंतुजेऽप्येतेऽनिषिद्धा एव। तानिति पुनः कृतमतिशयार्थम्।विशेषेणागंतुजेऽपि ज्वरे भूतविषाद्युद्भवे तान्कुर्यादित्यर्थः।

**दाहे सहस्रधौतेन सर्पिषाऽभ्यंगमाचरेत्।**

दाहे सति सर्पिषा सहस्रधौतेनाभ्यंगमाचरेत्।

**सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः॥ १२९॥**
**दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः।**
**शीतवीर्यैर्हिमस्पर्शैः क्वाथः कल्कीकृतैः पचेत्॥१३०॥**
**तैलं सक्षीरमभ्यंगात्सद्यो दाहज्वरापहम्।**

सूत्रोक्तैः सूत्रस्थानोदितैर्मधुराम्लकषायकैर्गणैः।तत्र मधुरो गणो घृतहेमेत्यादिः। अम्लो गणो धात्रीफलाम्लिकेत्यादिः। कषायो गणः पथ्याक्षमित्यादिः। तत्र चैतैर्मधुराम्लकषायैर्वर्गैः। तत्र दूर्वादिभिर्गणैर्दूर्वानंतेति निर्दिष्ट एकः। न्यग्रोधादिर्द्वितीयः। तृतीयस्तु पद्मकपुंड्रेत्यादिः। चतुर्थः सारिवोशीरेत्यादिः। एतैः पूर्वोक्तैर्गणैः पित्तघ्नैः शोधनादिग्रहणं संग्रहोक्तेः शीतवीर्यैर्हिमस्पर्शैर्भेषजैस्तथा स्पर्शतो वीर्यतश्च शीतैर्गणैरक्वाथाः क्वाथाः कृता अकल्ककृतास्तैः क्वाथकल्कीकृतैरेतैर्गणैस्तैलं क्षीरेण सह पचेत्। तच्च पक्वमभ्यंगान्म्रक्षणात्सद्यो न चिरेण कालेन दाहज्वरं जयेत्।

**शिरो गात्रं च तैरेव नाऽतिपिष्टैः प्रलेपयेत्॥१३१॥**

न केवलमेतैर्गणैस्तैलं पचेद्दाहज्वरशांत्यै यावत्तैरेव शिरो मूर्धानं गात्रं च नाऽतिपिष्टैः किंचित्पिष्टैः प्रलेपयेत्। सुपिष्टैर्ह्येतैः प्रत्युत दाह उत्पद्यते। तथाचोक्तम्। शुष्कपिष्टघनो लेपश्चंदनस्याऽपि दाहकृत्। त्वग्यातस्योष्मणो रोधाच्छीतकृत्त्वन्यथा गुरोः। इत्यनेनैवाभिप्रायेण शीतज्वरे वक्ष्यति तैः सुपिष्टैर्लेपयेदिति। गात्रग्रहणेनैव शिरोग्रहणे लब्धे पुनः शिरोग्रहणं विशेषार्थम्। विशेषेण शिरो लेपयेत्तस्य विशेषेण ज्वराश्रयत्वात्। तथाचोक्तम्। विमुक्तस्याऽपि हि शिरोज्वरो यस्य न मुंचति। अविमुक्तः स विज्ञेयो ज्वरः पुनरुपैति तमिति। तस्माच्छिरसो विशेषेण लेपनार्थं पृथगुपादानम्।

**तत्क्वाथेन परीषेकमवगाहं च योजयेत्।**
**तथाऽऽरनालसलिलक्षीरशुक्तघृतादिभिः॥१३२॥**

तेषां गणानां क्वाथस्तत्क्वाथस्तेन परिषेकमवगाहं च क्वाथपूर्णायां द्रोण्यां योजयेत्तथाऽऽरनालादिभिः परिषेकादि योजयेत्।

**कपित्थमातुलिंगाम्लविदारीरोध्रदाडिमैः।**
**बदरीपल्लवोत्थेन फेनेनारिष्टजेन वा॥ १३३॥**
**लिप्तेंऽगे दाहरुङ्मोहच्छर्दिस्तृष्णा च शाम्यति।**

कपित्थादिभिर्बदरीपल्लवोद्भवेन वा फेनेन लिप्तेंऽगे सति दाहादयः शाम्यंति।

**यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः॥ १३४॥**
**तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः।**

यश्च दोषोपक्रमणीयाध्याये पित्तहरः क्रमो वर्णित उक्तस्तं च क्रमं शीलयतोऽभ्यसतो ज्वरो दाहेन सह नश्यति।

**वीर्योष्णैरुष्णसंस्पर्शैस्तगरागुरुकुंकुमैः॥ १३५॥**
**कुष्ठस्थौणेयशैलेयसरलामरदारुभिः।**
**नखरास्नामुरवचाचंडेलाद्वयचोरकैः॥ १३६॥**
**पृथ्वीकाशिग्रुसुरसाहिंस्राध्यामकसर्षपैः।**
**दशमूलामृतैरंडद्वयपत्रूररोहिषैः॥ १३७॥**
**तमालपत्रभूतिक्तशल्लकीधान्यदीप्यकैः।**
**मिशिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः॥ १३८॥**

**अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् ।**
**क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः॥१३९॥**
**तेनाभ्यंज्यात्सुखोष्णेन**

वीर्योष्णैरुष्णसंस्पर्शैरुभयथा । वीर्यतः स्पर्शतश्चोष्णैस्तगरादिभिर्द्रव्यैरपरैरपि तद्विविधैरुष्णसंस्पर्शैश्च क्वाथीकृतैः कल्कीकृतैश्च सुरादिभिरम्लपाकरसैः शीतज्वर एतद्विषये तैलं पचेत् । तेन तैलेन सुखोष्णेनाभ्यंज्यान्म्रक्षयेत् ।

**तैः सुपिष्टैश्च लेपयेत् ।**
**कवोष्णैस्तैः परीषेकमवगाहं च कल्पयेत् ॥ १४० ॥**
**केवलैरपि तद्वच्च सुक्तगोमूत्रमस्तुभिः ।**
**आरग्वधादिवर्गं च पानाभ्यंजनलेपनैः ॥ १४१ ॥**
**धूपानगरुजांस्तांश्च वक्ष्यंते विषमज्वरे ।**

तैश्च पूर्वोक्तैर्द्रव्यैः सुपिष्टैरतिश्लक्ष्णैर्लेपयेत्तैश्च किंचिदुष्णैः परिषेकमवगाहं कल्पयेद्योजयेत् । तद्वच्च तथैव सुक्तादिभिः केवलैश्च परिषेकादि कल्पयेत् । आरग्वधेंद्रयवेत्यादिश्च पानाभ्यंजनलेपने कल्पयेत् । अगरुजान् धूपान् यांश्च धूपान् विषमज्वरे वक्ष्यंते तांश्च कल्पयेत् ।

**अङ्ग्यनग्निकृतान्स्वेदान् स्वेदिभेषजभोजनम् ॥१४२॥**
**गर्भभूवेश्मशयनं कुथाकंबलरल्लकान् ।**
**निर्धूमदीप्तैरंगारैर्हसंतीश्च हसंतिकाः ॥ १४३ ॥**
**मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ।**
**संशीलयेद्वेपथुमान् यच्चाऽन्यदपि पित्तलम् ॥१४४॥**
**दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः ।**
**यौवनासवमत्ताश्च तमालिंगेयुरंगनाः ॥ १४५ ॥**
**वीतशीतं च विज्ञाय तास्ततोऽपनयेत्पुनः ।**

तथा स्वेदान् शीलयेत् । किंभूतान् । अग्निकृताननग्निकृतांश्च स्वेदविध्युक्तांस्तथा स्वेदयति साधुस्वेदि यद्भेषजं भोजनं तच्च शीलयेत् । गर्भे गर्भगृहाभ्यंतरे यद्भूवेश्म भूमिगृहं तत्र शयनं शय्याम् । तथा कुथादीनावरणविशेषांस्तथा हसंतिका वह्निशकटिकाः शीलयेत् । किंभूताः । निर्धूमदीप्तैरंगारैर्हसंतीरिव । तथा मद्यादींश्च शीलयेत् । वेपथुमंतमंगना आलिंगयेयुर्दयितादिगुणयुक्ताः । गतशीतं च विदित्वा ततस्ता योषाः पुनरपनयेदेतच्चानुब्रुवंस्ताभिः संभोगाभिलाषं निवारयति ।

अधुना सन्निपातचिकित्सितं ब्रूते ।

**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य च ॥ १४६ ॥**
**कफस्थानानुपूर्व्या वा तुल्यकक्षाञ्जयेन्मलान् ।**

हीनाधिकभावत्वेन विषमदोषजे सन्निपाते वर्धनेनैकदोषस्यार्थात् क्षीणस्य क्षीणयोर्वोच्छ्रितस्योच्छ्रितयोर्वा देशकालबलान्मलान् जयेत् । कथं विषमदोषजे सन्निपाते वर्धनमेकदोषस्य सन्निपातज्वरस्योपशांतिस्तस्माद्वर्धनमयुक्तम् । अत्राचक्ष्महे । सन्निपातस्थेन दोषेण सतावक्षीणौ दोषौ ज्वरकारिणौ न तौ सुखेन जेतुं शक्येते विषमाश्रयत्वात् । क्षीणस्य दोषस्य वर्धनेन दोषसाम्यमुत्पाद्यैकरूपया क्रियया सन्निपातः सुखेन जेतुं शक्यते । तस्माद्वर्धनेनैकदोषस्येति वक्तुं युक्तम् । तथा च । वाताख्ये यतो दोषे शीतलघुरूक्षादिरूपैर्द्रव्यैर्वृद्धिर्भवति । वर्धमानेन च तत्रस्थौ पित्तकफावप्येवं प्रायेण किंचित् क्षयं यातस्तत्क्षयाच्चासौ ज्वरोऽपि मृदुतां गतः सुखेन शक्यते जेतुम् । तथैव पित्ताख्यस्य सन्निपातस्थस्य ज्वरघ्नया तीक्ष्णोष्णकटुरूपया क्रियया वर्धनेन वातकफावपि किंचित्क्षयं यातस्तत्क्षयाज्ज्वरोऽप्यसौ मृदुतां गतः सुखेन जेतुं शक्यते । एवं कफाख्यस्य दोषस्य सन्निपातस्थस्य ज्वरघ्नस्निग्धमधुरशीतादिकया क्रियया वर्धनेन तत्रस्थौ वातपित्ताख्यौ दोषौ किंचित् प्रायः क्षयं यातस्तत्क्षयाच्च ज्वरोऽप्यसौ मार्दवं गतः सुखेन जेतव्यः । इत्येवं दोषत्रयस्याऽपि ज्वरकारणे तथा युक्त्या प्रतीकारः कृतो भवति । एवमुच्छ्रितस्याऽपि क्षपणैकरूपया क्रियया सुखेन संनिपातो जीयते । तदेवं द्व्युल्बणैकोल्बणैर्दोषैर्जनिते संनिपाते चिकित्साक्रम उक्तः । संप्रति समदोषजे संनिपाते चिकित्साक्रमं दर्शयितुमाह । कफेत्यादि । स्थितिः स्थानं । कफश्च स्थानं च कफस्थाने । तयोरानुपूर्वीक्रमस्तया च तुल्यकक्षान् समान् संनिपातान् ज्वरे मलान् जयेत् । तत्र कफः प्राग्जेतव्यस्ततः पित्तं ततो वायुरिति कफानुपूर्वीत्युच्यते । उक्तं च । स्थानतः केचिदिच्छंति प्राक् तावच्छ्लेष्मणो वधम् । शिरस्युरसि कंठे च प्रलिप्तेऽन्नरुचिः कुतः । तदभावे कथं भोज्यपानद्रव्यावचारणा । असत्यभ्यवहारे च कुतो दोषविनिग्रहः । तस्मादादौ कफो घात्यः कायद्वारार्गलो हि सः । मध्यस्थायि यतः पित्तमाशुकारि च चिंत्यते । अतो वातसखस्यास्य कुर्यात्तदनुनिग्रहम् । अधःस्थायी च तदनु निग्राह्यः स्यात्समीरण इति । सुश्रुतस्त्वाह । जयेज्ज्वरेऽतिसारे च क्रमात्पित्तकफानिलान् । प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते । विशश्च सरता पित्तात्तथा च मृदुकोष्ठता । तस्य चानुगतः श्लेष्मा गौरवापक्तिजाड्यकृत् । वायुश्च वर्धतेऽवश्यं येष्वहःसु तयोः क्षये । ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः । कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि । यस्मादामाशयोद्भेदाद्भूयिष्ठं तत्समुद्भवः । क्रमेणाद्येन तत्राऽपि प्रवृद्धाः स्वाशये स्थिताः । स्वाश्रयेषु प्रदुष्टानां स्थितैर्बह्व्याशुकारिता । विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथामलम् । भेषजं योजयेत्तत्तु स्वीकुर्यान्न क्रमं भिषगिति । अन्ये त्वाहुः । क्रमान्मरुत्पित्तकफाः सर्वत्र सदृशे बले । वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् । ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् । यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम् । नेतृभंगेन दृष्टो हि समं सैन्यपराजय इति । स्थानानुपूर्व्या वा दोषांस्तुल्यकक्षान् मलान् जयेत् । स्थानं च यद्यप्यविशेषेणैव संभवति तथापीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते । तेनामाशयस्थो दोषः प्राग्जेतव्यस्ततः पक्वाशयस्थः । इति स्थानानुपूर्वीस्थानमाहात्म्यस्य चिकित्साक्रमः कार्यः । तथा च प्रागध्यगीष्ट । आमाशयगते वायौ कफे पक्वा-

शयाश्रिते । रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधत इति । तदेवं कफस्थानानुपूर्व्या वा तुल्यकक्षान् मलान् जयेत् । अन्ये त्वेवं व्याख्यानयंति । कफस्य स्थानं कफस्थानम् । कफस्थानलक्षणा चासावानुपूर्वी च तया कफस्थानानुपूर्व्या वा तुल्यकक्षान् मलान् जयेद्यपि कफस्थानानि कंठादीन्यपि तथापीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते । तथा चोक्तम् । आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत् । विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लंघनमिति । तदेवं रूक्षोष्णपाचनादिक्रमोऽत्र कार्य इत्यवतिष्ठते । ननु कफस्थानानुपूर्व्या वेत्येतन्न वाच्यं यतस्तुल्यकालं त्रिदोषहरैर्द्रव्यैः संनिपातस्य क्रिया कार्या । द्रव्याणि दोषघ्नान्यत्रोच्यंते । ज्वरनाशनानि द्रव्याणि त्रिदोषघ्नानि विरलानि । एकदोषघ्नानि पुनर्ज्वरहंतॄणि त्रिदोषघ्नेभ्यः समर्थतराणि बहुतराणीति ।

कफस्थानानुपूर्व्या चेत्युक्तमपि च दोषकालादिवशाच्चिकित्साप्रकारांतरोऽयमुपयुज्यत इति संनिपातचिकित्साप्रक्रमादिदमप्याह ।

**संनिपातज्वरस्यांते कर्णमूले सुदारुणः ॥ १४७ ॥**
**शोफः संजायते तेन कश्चिदेव प्रमुच्यते ।**

संनिपातज्वरस्यावसाने कर्णमूलप्रदेशे सुष्ठु दारुणः शोफः संजायते । येन शोफेनोत्पन्नेन कश्चिदेव विमुच्यते । कश्चिदेवेत्यनेनास्य रोगस्य नावश्यमसाध्यतेति ब्रूते ।

अत एव चिकित्सामत्राह ।

**रक्तावसेचनैः शीघ्रं सर्पिःपानैश्च तं जयेत् ॥ १४८॥**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ।**

रक्तावसेचनादिभिः कवलग्रहांतैराशु तं जयेत् । प्रदेहः प्रलेपः ।

**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति १४९**
**शाखानुसारी तस्याशु मुंचेद्बाह्वोः क्रमाच्छिराम् ।**

आदिशब्देन स्तंभस्वेदनादयो गृह्यंते । शीतोष्णादिभिरुपक्रमैर्यथायथं पृथग्वातपित्तश्लेष्मसंसर्गसन्निपातज्वरप्रशमनैः सम्यक्प्रयोजितैर्ज्वरो यस्य शमं न गच्छति तस्य शाखानुसारित्वाद्धेतोर्बाह्वोः क्रमादेकैकस्मिन्न युगपद् द्वयोर्भुजयोः शिरां मुंचेत् । शाखाशब्देनात्र केवलं रक्तं विवक्षितं न मांसादयः । अत एव रक्तस्यैव चिकित्सामुवाच मुंचेच्छिरामिति । मांसजानां हि शस्त्रक्षाराग्निकर्मादिचिकित्सा । तस्माच्छाखाशब्देन रक्तस्यैव ग्रहणं युक्तम् ।

**अयमेव विधिः कार्यो विषमेऽपि यथायथम् ॥१५०॥**
**ज्वरे विभज्य वातादीन् यश्चानंतरमुच्यते ।**

अयमेव पूर्वोक्तो विधिर्विषमज्वरे सततकादौ यथास्वं वातादीन् विभज्य कार्यः । अनंतरमधुनैव च यो विधिरुच्यते पटोलकटुकादिभिः सोऽपि विषमज्वरे कार्यः ।

**पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ॥ १५१ ॥**
**त्रिचतुरः पंचशः क्वाथा विषमज्वरनाशनाः ।**

पटोलादिभिस्त्रिभिश्चतुर्भिः पंचभिर्वा कृताः क्वाथा विषमज्वरघ्नाः ।

**योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलीं पृथक् ॥१५२॥**

त्रिफलां वा पथ्यां वा गुडूचीं पिप्पलीं वा पृथक्पृथक् योजयेत्सततकादिके विषमज्वरे ।

**तैस्तैर्विधानैः सगुडैर्भल्लातकमथाऽपि वा ।**
**लंघनं बृंहणं चाऽपि ज्वरागमनवासरे ॥ १५३ ॥**

अथवा तैस्तै रसायनाद्युक्तैर्विधिभिर्गुडसहितं भल्लातकं वा योजयेत् । यदि वा ज्वरागमनदिवसे ह्यादौ प्रथमं लंघनं बृंहणं वा योजयेत् ।

**प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम् ।**
**जीर्णं तद्वद्दधिपयस्तक्रं सर्पिश्च षट्पलम् ॥ १५४ ॥**
**कल्याणकं पंचगव्यं तिक्ताख्यं वृषसाधितम् ।**

विषमज्वरे प्रागेव सहतैलेन लशुनं योजयेत् । प्राग्भक्तमित्यादि । भक्तात्प्रथमं प्रातर्वा घृतं च जीर्णं पुराणं योजयेत्तथैव दधिसर्पिस्तथा पयस्तथा तक्रं षट्पलं च सर्पिः क्षयचिकित्सितोक्तं प्रातः प्राग्भक्तं वा योजयेदित्यर्थः । कल्याणकमुन्मादप्रतिषेधोक्तं पंचगव्यमपस्मारप्रतिषेधोक्तं तिक्ताख्यं कुष्ठचिकित्सितोक्तं तथा वृषसाधितं रक्तपित्तचिकित्सितोक्तं प्रातः प्राग्भक्तं वा योजयेत् ।

**त्रिफलाकोलतर्कारीक्वाथदध्ना श्टतं घृतम् ॥१५५ ॥**
**तिल्वकत्वक्कृतावापं विषमज्वरजित्परम् ।**

त्रिफलादिक्वाथे चतुर्गुणे सर्पिर्दधिसमं शाबररोध्रत्वक्कृतावापमतिशयेन विषमज्वरजित् ।

**सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिकुक्कुटान् १५६**
**मांसं मध्योष्णवीर्यं च सहान्नेन प्रकामतः ।**
**सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत् ॥ १५७॥**

सुरां च तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजं च मांसं मध्योष्णवीर्यमन्नेन सह बहु सेवित्वा तदहः स्वप्यात् । यस्मिन् दिने तद्भुक्तं तं दिवसं शयीत । तदहः स्वप्यादिति कालाध्वनोरत्यंतसंयोग इति द्वितीया । अथवा पूर्वोक्तपीतभुक्तभक्तो नरः पुनरुल्लिखदुद्वमेत् ।

**सर्पिषो महतीं मात्रां पीत्वा तच्छर्दयेत्पुनः ।**

सर्पिषो वा महतीमुत्तमां मात्रां पीत्वा पुनश्छर्दयेदुद्वमेत् ।

**नीलिनीमजगंधां च त्रिवृतां कटुरोहिणीम् ॥१५८॥**
**पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ।**

नीलिन्यादीन् पृथग्ज्वरागमनवासरे कृतः स्नेहः स्वेदः पिबेत् ।

**मनोह्वा सैंधवं कृष्णा तैलेन नयनांजनम् ॥ १५९ ॥**
**योज्यं**

मनोह्वादिकं तैलं तैलेन नयनांजनं योज्यम् । अंजनशब्दो म्रक्षणेऽपि दृश्यत इति नयनशब्दे प्रयुक्तः ।

**हिंगुसमा व्याघ्री वसानस्यं ससैंधवम् ।**
**पुराणसर्पिः सिंहस्य वसा तद्वत्ससैंधवा ॥ १६० ॥**

हिंगुतुल्या व्याघ्रीवसा नस्यं ससैंधवं योज्यम् । व्याघ्रीति स्त्रीलिंगनिर्देशः स्त्रियाग्रहणार्थोऽचित्यत्वात्प्रभावस्यान्यथा पुल्लिंगेनैव निर्देशं कुर्यात् । यथा वक्ति । पुराणं सर्पिः सिंहस्य वसा तद्वत्ससैंधवेति ।

**पलंकषा निंबपत्रं वचाकुष्ठहरीतकी ।**
**सर्षपा सयवा सर्पिर्धूपो विड्वा विडालजा ॥१६१ ॥**
**पुरध्यामवचासर्जनिंबार्कागरुदारुभिः ।**
**धूपो ज्वरेषु सर्वेषु प्रयोक्तव्योऽपराजितः ॥ १६२ ॥**

पलंकषादिधूमः सर्वेषु ज्वरेषु कार्यः । अथवा विडालजाता विडालजा विट् । पुरीषादिभिः सहापराजिताख्योऽयं धूमो ज्वरेषु कार्यः ।

**धूपनस्यांजनत्रासा ये चोक्ताश्चित्तवैकृते ।**

ये च चित्तवैकृत उन्मादापस्मारे धूपादय उक्तास्ते च विषमज्वरे योज्याः । विकृतमेव वैकृतम् । प्रज्ञादित्वात्स्वार्थेऽण् ।

**दैवाश्रयं च भैषज्यं ज्वरान्सर्वान्व्यपोहति ॥ १६३ ॥**
**विशेषाद्विषमान्प्रायस्ते ह्यागंत्वनुबंधजाः ।**

न केवलं धूपादयो ज्वरं नाशयंति । दैवाश्रयं चौषधं मणिमंगलबल्युपहारप्रायश्चित्तजपदानस्वस्त्ययनादिकं सर्वान्ज्वरानागंतून्निजांश्च व्यपोहति । उपसर्गादसत्यूह्योवर्वाचनमिति तङभावः । विशेषेण विषमान् व्यपोहति । यस्मात्ते विषमज्वरा आगंतूनां भूतादीनामनुबंधाज्जाताः ।

**यथास्वं च सिरां विध्येदशांतौ विषमज्वरे ॥१६४ ॥**

विषमज्वरशांतौ सत्यां यथास्वं दोषाद्यपेक्षया सिरां विध्येत् । संग्रहे च रसादिधातुस्थज्वरे चिकित्सितोक्ता । यथा । रसस्थे तु सर्वस्मिन् कुर्याद्वमनलंघने । सेकसंशमनालेपरक्तमोक्षमसृक्स्थिते । तीक्ष्णं विरेकं मांसस्थे मेदोघ्नं मेदसि स्थिते । अस्थिस्थे वातशमनमभ्यंगस्वेदमर्दनम् । ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च । मज्जस्थशुक्रस्थयोर्ज्वरयोरसाध्यत्वात्तत्र चिकित्सा नोक्ता ।

**केवलानिलवीसर्पविस्फोटाभिहतज्वरे ।**
**सर्पिःपानाहमालेपसेकमांसरसाशनम् ॥ १६५ ॥**
**कुर्याद्यथास्वमुक्तं च रक्तमोक्षादिसाधनम् ।**

केवलानिलादिभिर्ज्वरे सर्पिःपानादिकं कुर्यात् । यच रक्तमोक्षादिसाधनं यथास्वमुक्तं तच कुर्यात् ।

**ग्रहोत्थे भूतविद्योक्तं बलिमंत्रादिसाधनम् ॥ १६६ ॥**

ग्रहोत्थे ज्वरे भूतविद्योक्तं बलिमंत्रादिसाधनं चिकित्सितम् ।

**ओषधीगंधजे पित्तशमनं विषजिद्विषे ।**

ओषधीगंधजे पित्तशमनं चिकित्सितम् । विषे विषजे ज्वरे विषजिच्चिकित्सितम् ।

**इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च ॥ १६७ ॥**
**हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् ।**

क्रोधादिजे ज्वरे इष्टैरभिमतैरर्थैर्विषयैस्तथा मनोज्ञै रम्यैस्तथा यथादोषं यः शमः शमनं तेन तथा हिताहितविवेकैश्च जयेत् । आदिशब्दोऽत्र भीशोकादिपरिग्रहार्थः ।

अधुना क्रोधजादीनां पृथगप्युपक्रममाह ।

**क्रोधजो याति कामेन शांतिं क्रोधेन कामजः॥१६८॥**
**भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ ।**

क्रोधजो ज्वरः कामोपभोगेन शांतिं याति । कामजश्च ज्वरः क्रोधेन शाम्यति । भयशोकजौ ज्वरौ कामक्रोधाभ्यां शांतिं यातः । तथेतरौ कामक्रोधजौ भीशोकाभ्यां शाम्यतः ।

**शापाथर्वणमंत्रोत्थे विधिर्दैवव्यपाश्रयः ॥ १६९ ॥**

शापाद्युत्थे ज्वरे दैवव्यपाश्रयो विधिः कार्यः । शापो मुनिपित्रादिभिः सक्रोधैर्दत्तः ।

**ते ज्वराः केवलाः पूर्वं व्याप्यंतेऽनंतरं मलैः ।**
**तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत्॥१७० ॥**

ओषधाद्युत्थज्वराः पूर्वं केवला भवंति । अनंतरं मलैर्वातादिभिर्व्याप्यंते । तस्माद्धेतोस्तेषु ज्वरेषु दोषानुसारेणाहारादि कल्पयेत् ।

ननु शापाद्युत्थेषु वातादिकोपो नाशंक्यत एव तत्किमिति । तेष्वाहारादिकं दोषानुसारेण कल्प्यत इत्याह ।

**न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विनाकृतः ।**

यस्माद्वातादीनंतरेण विना कृतो ज्वरो नानुबध्नाति तस्मादवश्यं तेष्वपि वातादिकोपः संभाव्यते । अत एव च तदनुसारेणाहारादिककल्पनम् ।

**ज्वरकालं स्मृतिं चास्य हारिभिर्विषयैर्हरेत्॥१७१॥**

ज्वरकालं स्मृतिं चास्य हारिभिर्विषयैर्हरेत् । ज्वरकालं च वेगं च यश्च चिंतयन् ज्वर्यतेऽस्य च ज्वरिणो ज्वरकालस्मरणं हारिभिर्मनोहरैर्विषयैः शब्दादिभिर्हरेद्विस्मारयेत् ।

**करुणार्द्रं मनः शुद्धं सर्वज्वरविनाशनम् ।**

शुद्धं रागद्वेषाद्यनुपहतं तथा करुणयाऽऽर्द्रं कृपापरं चेतः सर्वज्वरविनाशनं स्यात् ।

**त्यजेदाबललाभाच व्यायामस्नानमैथुनम् ॥ १७२ ॥**
**गुर्वसात्म्यविदाह्यन्नं यच्चान्यज्ज्वरकारणम् ।**

बललाभादाबललाभमवधीकृत्य व्यायामादि त्यजेन्नाचरेत् । स्नानं च यद्यपि दीपनादिगुणयुक्तं प्रागधीतं तथाऽपि प्रभावाज्ज्वरं करोतीति तद्वर्जनम् । एवं व्यायामादिष्वपि चिंत्यम् । अपरमनु-

क्तमपीह यज्ज्वरकारणं तदपि त्यजेत्। खरणादेऽप्युक्तम्। पिष्टान्नं हरितं शाकं मांसं शुष्कं तिलान्दधि । ग्राम्यानूपोदकाजाविगव्यसूकरमाहिषम् । मांसं शुष्काणि शाकानि सर्वमेव त्यजेज्ज्वरी । तथोक्तम्। ज्वरितैस्तित्तिरिक्रौंचशिखिवर्तककुक्कुटाः । गुरूणत्वाद्विवर्ज्याः स्युरत्र सोपद्रवे ज्वर इति ।

**न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्तथा ।**
**निवृत्तोऽपि ज्वरः शीघ्रं व्यापादयति दुर्बलम् १७३**

तथा विज्वरोऽपि पूर्वानुभूतज्वरः सहसाऽक्रमेणैव सर्वान्नभक्षो न स्यात्। सर्वान्नीन इत्युपपदसर्वान्नेत्यादिना खः । यतो निवृत्तोऽप्यपगतो ज्वरः शीघ्रमेव दुर्बलं व्यापादयति ।

**सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः ।**
**तस्यां तस्यामवस्थायां तत्तत्कुर्याद्भिषग्जितम् १७४**

यस्माच्च ज्वरः सद्य एव प्राणहृद्भवति तस्मात्कारणात्तस्य ज्वरिणो विशेषणान्यरोगेभ्यः सकाशात्तस्यां सामपच्यमानपक्वजीर्णविषमचिरनिवृत्तज्वराद्यवस्थायां च तल्लंघनस्वेदनयवागूपाचनक्षीरसर्पिःपानादिकं भिषग्जितमौषधं कुर्यात् ।

**ओषधयो मणयश्च सुमंत्राः**
**साधुगुरुद्विजदैवजपूजाः ।**
**प्रीतिकरा मनसो विषयाश्च**
**घ्नन्त्यपि विष्णुकृतं ज्वरमुग्रम् ॥ १७५ ॥**

ओषध्यादयो विष्णुकृतमप्युग्रं ज्वरं घ्नंति । किं पुनरपचारादिकृतं ज्वरं न घ्नंतीत्यपिशब्दार्थः । भौतुभामोगिति दोधकमेतत् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां ज्वरचिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

ज्वरचिकित्सितानंतरं रक्तपित्तचिकित्सितमुच्यते । यतो महेश्वरस्य ललाटाज्ज्वरो बभूव तत्संतापाद्रक्तपित्तमित्युक्तमतो रक्तपित्तचिकित्सितस्यैवारंभो युक्तः । तथा निदाने यद्विशेषेण नोक्तं तदिह विशेषेण स्पष्टं कृत्वा निदानप्रायमपि भण्यते रक्तपित्तस्य क्षिप्रकारित्वात् ।

**अथाऽतो रक्तपित्तचिकित्सितं व्याख्यास्यामः ।**
**ऊर्ध्वगं बलिनो वेगमेकदोषानुगं नवम् ।**
**रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् ॥ १ ॥**

बलिनो बलवतः पुंसो न स्त्रिया यदुत्पन्नमूर्ध्वगं रक्तपित्तं तत्साधयेदुपक्रमेत्तथा यदेवोर्ध्वगमवेगवत्तथैको दोषः कफाख्योऽनुगोऽनुबलो यस्य तदेकदोषानुगम्। निदानेऽप्युक्तम्।ऊर्ध्वं साध्यं कफाद्यस्मादिति । तथा नवमचिरोत्पन्नं तथा यत्सुखे काले तद्व्याधिप्रतिपक्षभूते हेमंते शिशिरे वा जातं तथा यन्निरुपद्रवं विकृतविज्ञानीयाध्यायोक्तैः रक्तपित्तं भृशं रक्तमित्यादिग्रंथनिर्दिष्टैरुपद्रवै रहितमतो लक्षणाद्यद्विपर्ययलक्षणमूर्ध्वगमपि रक्तपित्तं तदर्थादसाध्यं साध्यं वा स्यादिति गम्यते ।

**अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम् ।**

अधोगं रक्तपित्तमूर्ध्वगरक्तपित्तोक्तैकदोषानुगाद्विशेषणविशिष्टमपि यापयेत् । यच्च दोषद्वयानुगं वातकफाभ्यां हीनबलाभ्यामनुगतमूर्ध्वगमपि तच्च यापयेत् ।

**शांतं शांतं पुनः कुप्यन्मार्गान्मार्गांतरं च यत् ॥ २॥**
**अतिप्रवृत्तं मंदाग्नेस्त्रिदोषं द्विपथं त्यजेत् ।**

शांतं शांतमतिशयेन शांतं पुनः कुप्यत्कोपं गच्छदूर्ध्वगमेकदोषानुगमधोगं वा त्यजेत् । अथ मार्गादूर्ध्वं नासाक्षिकर्णस्य लक्षणान्मार्गांतरं गुदमेंढ्रलक्षणं यद्गच्छदेवं यत्प्रवृत्तं तच्च त्यजेत् । तस्मादपि चाधोमार्गात्पुनर्मार्गांतरमूर्ध्वं याति तदुभयं यापयेदिति चंद्रिकाव्याख्या । यदिति इणः शतरि इणो यणिति यादेशे यदिति रूपम् । तथाऽतिप्रवृत्तमूर्ध्वमार्गादधोमार्गाद्वा यद्रक्तपित्तं तत्त्यजेद्रक्तस्य प्राणायतनत्वात् । उक्तं च । जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठतीति । तथा मंदाग्नेर्यत्प्रवृत्तमधोगमूर्ध्वगं वा तदपि विरुद्धोपक्रमत्वात्त्यजेत् । तथा हि मंदाग्नेः कटुकाम्लोष्णरूक्षतीक्ष्णाद्यौषधमग्निसंधुक्षणं यत्तद्धितं रक्तपित्ते वाऽतो विपरीतप्रायं यत्तत्पथ्यम् ।तथा त्रिदोषमूर्ध्वगमधोगं वा तदपि त्यजेद्विषमत्वात् । यतो न तद्वमनविषयं भवितुमर्हति नापि विरेचनविषयम् । तथा यद्विपथगं तुल्यकालं द्विमार्गप्रवृत्तं युगपद्रक्तपित्तं तदपि त्याज्यं प्रतिलोमौषधाभावात् । तथा चोक्तम् ।असाध्यमुभयायनमशक्यप्रतिलोम्यत्वादिति । ज्ञात्वा निदानमयनं मलावनुबलौ बलम् । देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् । लंघनं बृंहणं चादौ शोधनं शमनं तथा । निदानादि ज्ञात्वाऽनंतरं रक्तपित्त ऊर्ध्वगेऽधोगे वाऽऽदौ प्रथमत एव लंघनं प्रयोजयेदथवा बृंहणमथवा शोधनं शमनं वा । तत्र निदानं तीक्ष्णोष्णकटूम्लादिसेवनमेतज्ज्ञानं हि तन्निदानवर्जन उपयुज्यते । तथा च वक्ष्यति । यत्किंचिद्रक्तपित्तस्य निदानं तच्च वर्जयेदिति । अयनमूर्ध्वाधोलक्षणं ज्ञात्वा । तथा च वक्ष्यति । ऊर्ध्वगे तर्पणं योज्यं प्रागपि तथा । रक्तपित्ते तु सकफे ग्रथिते कंठमार्गगे । लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजमिति । तथा । गुदागमे विशेषेण शोणिते बस्तिरिष्यत इत्यादि । तथा पित्ताख्यस्य मलस्यात्रमूलभूतत्वात्सामर्थ्यान्मलौ वातकफाख्यावनुबलौ ज्ञात्वा चिकित्साविशेषं प्रयोजयेत् । तथा च वक्ष्यति । रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः । युंज्याच्छागमित्यादि । तथा त्रिविधं बलं ज्ञात्वा । यतो वक्ष्यति । तथा स्वं मंथपेयादिः प्रयोज्यो रक्षता बलमिति । देशो द्विविधः । शारीरो भूमिदेशश्च । तत्र शारीरो मुखनासाद्यवयवरूपः । ऊर्ध्वगे हि रक्तपित्ते सत्यपि नासाप्रवृत्ते विशेषेणान्यदौषधमन्यप्रवृत्तेऽन्यत् । तथाऽधोगे रक्तपित्ते सत्यपि गुदप्रवृत्तेऽन्यदौषधं मेढ्रप्रवृत्ते चान्यत् । भूमिदेशश्च त्रिविधो व्याख्यातो जां-

गलानूपसाधारणभेदेन । तत्र जांगलेऽन्यदौषधमनूपेऽन्यत्साधारणे चान्यत् । कालो मुहूर्तादिः शीतोष्णवर्षलक्षण आवस्थिकश्च। तथा च शीते कालेऽन्यदेशमन्यस्मिन् कालेऽन्यदेशमौषधं रक्तपित्ते । आदिग्रहणेनानलाहारसत्वसात्म्यवयःप्रकृतिप्रभृतयो गृह्यंते । अवस्थां च ज्ञात्वाऽवस्थावशाद्रक्तपित्तस्य ह्यवस्थाविशेषेणान्यदौषधं स्यात् ।

**संतर्पणोत्थं बलिनो बहुदोषस्य साधयेत् ॥ ३ ॥**
**ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम् ।**
**शमनैर्बृंहणैश्चान्यल्लंघ्यबृंह्यानवेक्ष्य च ॥ ४ ॥**

संतर्पणोत्थं बलिनो बहुदोषस्य नरस्य रक्तपित्तमूर्ध्वगं विरेकेण साधयेदधोगतं तु वमनेन साधयेदन्यदपतर्पणोत्थं रक्तपित्तं दुर्बलस्याल्पदोषस्योर्ध्वगं शमनैरधोगं बृंहणैरुपाचरेत् । बृंहणैर्वा शमनैः । नचेदं चिकित्सितं निरपेक्षं युंजीतेत्याह। लंघ्यबृंह्यानवेक्ष्य चेति । लंघनादुत्पन्नमधोगमपि शमनैरुपाचरेत् । बृंहणादुत्पन्नमूर्ध्वगमपि लंघनैरुपाचरेदित्यर्थः ।

**ऊर्ध्वे प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ।**
**उपवासश्च निःशुंठीषडंगोदकपायिनः ॥ ५ ॥**

ऊर्ध्वे प्रवृत्ते रक्तपित्ते शुंठीरहितं षडंगोदकं पिबतः पुंसस्तिक्तकषायौ रसौ शमनं तथोपवासः ।

**अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ।**

अधोगे तु रक्तपित्ते बृंहणो मधुरो रसो हितः ।

**ऊर्ध्वगे तर्पणं योज्यं पेयापूर्वमधोगते ॥ ६ ॥**

ऊर्ध्वगे रक्तपित्ते प्राक् पूर्वं तर्पणं योज्यं तथा सात्म्यत्वात् । एवमधोगे रक्तपित्ते प्राक् पूर्वं पेया योज्याः ।

**अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ।**
**धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ॥ ७ ॥**

बलिनो नरस्याऽश्नतो रक्तमशुद्धं दुष्टं तन्न धार्यं न स्तंभनीयम् । तद्धि धृतं सिराव्यधविध्युक्तान्विसर्पविद्रधिप्लीहादीन् रोगान् करोति । अन्यथा विधिविपर्यये सति दुर्बलस्याभोजनस्य च शीघ्रं धारयेद्यस्मादग्निवच्छीघ्रं मरणकारि तद्रक्तमस्तंभितं स्यात् ।

**तृवृच्छयामाकषायेण कल्केन च सशर्करम् ।**
**साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः ॥ ८ ॥**

तृवृता शुक्लगोपीत्युच्यते । श्यामा मालविका तृवृदुच्यते । तयोः कषायेण तथा तयोरेव मात्रामाश्रित्यैतदुक्तमत्र च कंटकारिकालेहवत्काथकल्कशर्कराणां परिमाणं वेद्यमिति वृद्धवैद्यव्यवहारः ।

**तृवृता त्रिफला श्यामा पिप्पली शर्करा मधु ।**
**मोदकः संनिपातोर्ध्वरक्तशोफज्वरापहः ॥ ९ ॥**
**तृवृत्समसिता तद्वत् पिप्पली पादसंयुता ।**

तथा त्रिवृतादिभिर्मोदको वटकः शर्करापरिमाणं च पद्मकाद्यचूर्णवदवबोध्यम्। स च मोदकः सन्निपातोत्थरक्तशोफज्वरहृद्भवति। पूर्वोक्तस्य लेहस्य विषयनिर्देशादेव विषयो वेद्यस्त्रिवृत्समसिता पिप्पली पादसंयुता तद्वत्सन्निपातादिहृदित्यर्थः ।

एवमूर्ध्वगरक्तपित्तचिकित्सामुक्त्वाधोगरक्तपित्तचिकित्सितमाह ।

**वमनं फलसंयुक्तं तर्पणं ससितामधु ॥ १० ॥**
**ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम् ।**
**क्षीरं वा रसमिक्षोर्वा**

मदनफलेन संयुक्तं तर्पणं सितामधुभ्यां सह वमने देयं वातकोपभयादित्यभिप्रायः । अथवा सशर्करं जलं फलसंयुक्तं मधुकोदकमथवा क्षौद्रसंयुक्तमथवा क्षीरमथवेक्षुरसांतं सर्वमेतन्मदनफलसंयुक्तं पृथक् प्रत्येकं देयम् ।

**शुद्धस्यानंतरो विधिः ॥ ११ ॥**
**यथास्वं मंथपेयादिः प्रयोज्यो रक्षता बलम् ।**

ऊर्ध्वरक्तपित्तिनोऽधोक्तरपित्तिनो वा यथाक्रमं विरेकवमनाभ्यां शुद्धनंतरं यथायोगं यथाविधिमंथपेयादिराहारार्थं प्रयोक्तव्यः । ऊर्ध्वगे मंथादिरधोगे पेयादिरिति यथार्थः ।

**मंथो ज्वरोक्तो द्राक्षादिः पित्तघ्नैर्वा फलैः कृतः १२**
**मधुखर्जूरमृद्वीकापरूपकसितांभसा ।**

मंथो ज्वरोक्तो द्राक्षादिर्द्राक्षामधूकमधुकेत्यादिपित्तघ्नैर्वा द्राक्षामलककाश्मर्यमधुकादिभिः फलैः कृतः प्रयोक्तव्यः ।

**मंथो वा पंचसारेण सघृतैर्लाजसक्तुभिः ॥ १३ ॥**
**दाडिमामलकाम्लो वा मंदाग्न्यम्लाभिलाषिणाम् ।**

अथवा मध्वादिना द्रव्यपंचकेन कृतेन पंचसाराख्येन लाजासक्तुभिः ससर्पिष्कैर्मंथो हितः । मंदाग्नीनामम्लाभिलाषिणां च दाडिमामलकाभ्यामम्लश्च मंथः प्रयोज्यः ।

अधोगे प्राक्पेया प्रयोज्या इत्युक्तम् । अतस्ता एव पेया ब्रूते।

**कमलोत्पलकिंजल्कपृश्निपर्णीप्रियंगुकाः ॥ १४ ॥**
**उशीरं शावरं रोध्रं शृंगबेरं कुचंदनम् ।**
**ह्रीबेरं धातकीपुष्पं बिल्वमध्यं दुरालभा ॥ १५ ॥**
**अर्धार्धे विहिता पेया वक्ष्यंते पादयौगिकाः ।**
**भूनिंबसेव्यजलदा मसूराः पृश्निपर्ण्यपि ॥ १६ ॥**
**विदारिगंधा मुद्गाश्च बला सर्पिर्हरेणुका ।**

कमलोत्पलेत्यादिभिर्वर्गैरर्धश्लोकैः पेया विहिताः । पादयौगिका वक्ष्यंते । भूनिंबसेव्येत्यादयः ।

**जांगलानि च मांसानि शीतवीर्याणि साधयेत् १७**
**पृथक्पृथग्जले तेषां यवागूः कल्पयेद्रसे ।**
**शीताः सशर्कराक्षौद्रास्तद्वन्मांसरसानपि ॥ १८ ॥**
**ईषदम्लाननम्लान्वा घृतभृष्टान्सशर्करान् ।**

मांसानि जांगलानि शीतवीर्याणि शशादिसंबंधीनि पूर्वोक्तपेयोपयोगिनां पृथक्पृथग्जले साधयेत्। अनंतरं तस्मिन् रसे यवागूः कल्पयेत्। कीदृशीः। शीतास्तथा सशर्कराक्षौद्राः। तद्वदित्यनेन शीतत्वं मांसरसानामतिदिशति न तु सशर्कराक्षौद्रत्वमप्ययोगार्हत्वात्। अत एवाह। तान्मांसरसानीषदम्लानाम्लाभिलाषिणोऽनम्लाभिलाषिणोऽनम्लानेव तथा घृतभृष्टान् सशर्करान् शर्करायुक्तान्।

**शूकशिंबीभवं धान्यं रक्ते शाकं च शस्यते ॥ १९ ॥**
**अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम्।**

तथा शूकशिंबीजं धान्यं शाकं च रक्तपित्ते शस्यते। अन्नस्वरूपविज्ञानीयेऽध्याये यदुक्तं लघु च शीतलं च।

**पूर्वोक्तमंबुपानीयं पंचमूलेन वा श्रृतम् ॥ २० ॥**
**लघुना श्रृतशीतं वा मध्वंभो वा फलांबु वा।**

पूर्वोक्तमंबु षडंगं शुंठीरहितं पानीयं पातव्यमथवा लघुना पंचमूलेन श्रृतम्। पानीयस्य श्रपणे तंत्रकारैर्विधिरुक्तः। यथा। कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत्प्रास्थिकेऽम्भसि। अर्धश्रृतं प्रयोक्तव्यं जलपाके त्वयं विधिरिति। केवलं वा जलं श्रृतशीतं हितम्। मध्वंभो माक्षिकयुक्तं पानीयम्। फलांबु वा द्राक्षादिभिर्वा पित्तघ्नैः फलैः कृतम्।

**शशः सवास्तुकः शस्तो विबंधे तित्तिरिः पुनः॥२१॥**
**उदुंबरस्य निर्यूहे साधितो मारुतेऽधिके।**
**प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः ॥ २२ ॥**

शशः शशस्य मांसं सहवास्तुकेन विड्बंधे सति रक्तपित्तिनः शस्तः। तित्तिरस्तु मारुतेऽधिक उदुंबरस्य क्वाथे साधितः शस्तः। प्लक्षस्य क्वाथे साधितो बर्हिणो मयूरस्तद्वन्मारुतेऽधिके शस्तः। बर्हिण इति फलबर्हाभ्यामिनच्। तथैव न्यग्रोधस्य निर्यूहे कुक्कुटः शस्तः। उदुंबरादिक्वाथसाधनं तित्तिर्यादीनामौष्ण्यं प्रतिहंतुम्।

**यत्किंचिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् ॥ २३ ॥**

यत्किंचिद्रक्तपित्तस्य कारणं येन सेवितेन तज्जातं तच्च वर्जयेत्परिहरेत्।

**वासारसेन फलिनी मृद्रोध्रांजनमाक्षिकम्।**
**पित्तासृक् शमयेत्पीतं निर्यासो वाऽटरूपकात्॥२४॥**
**शर्करामधुसंयुक्तः केवलो वा श्रृतोऽपि वा।**
**वृषः सद्यो यजत्यस्रं स ह्यस्य परमौषधम् ॥ २५ ॥**

वासकस्य रसेन फलिन्यादिकं पीतं रक्तपित्तं शमयति। अथवाऽटरूपकस्य रसः शर्करामधुयुक्तः पीतो रक्तपित्तं जयेत्। अथवा केवलो वासारसः। अथवा क्वथितो वृषः शीघ्रं रक्तं जयेत्। स वृषो यस्मादस्य रक्तस्य परमौषधम्।

**पटोलमालतीनिंबचंदनद्वयपद्मकम्।**
**रौध्रो वृषस्तंदुलीयः कृष्णमृन्मदयंतिका ॥ २६ ॥**
**शतावरी गोपकन्याकाकोल्यौ मधुयष्टिका।**
**रक्तपित्तहराः क्वाथास्त्रयः समधुशर्कराः ॥ २७ ॥**

पटोलादयोऽर्धश्लोकास्त्रयः क्वाथा मधुशर्करायुता रक्तपित्तं जयंतीति योज्यम्। अत्र च वासक आर्द्रोऽपि द्विगुणो न योज्यः। एवं ह्युक्तं तंत्रांतरे। वासाकुटजकूष्मांडशतपुष्पासहाचराः। नित्यमार्द्राः प्रयोक्तव्यास्तथा हि द्विगुणा न त इति।

**पलाशवल्कक्वाथो वा सुशीतः शर्करान्वितः।**
**पिबेद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ २८ ॥**

अथवा पलाशत्वक्क्वाथः। शीतः शर्करायुतः पूर्वोक्तो गुणोऽथवा मधुसर्पिर्भ्यां गवाश्वशकृतो रसं पिबेत्। गवाश्वेत्यवङ्स्फोटायनस्येत्यवङादेशः।

**सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावतं शकृत्।**

ग्रंथिते ग्रथितवति रक्तपित्ते पारावतस्य शकृत् क्षौद्रेण सह लिह्यात्।

**अतिनिःसृतरक्तश्च क्षौद्रेण रुधिरं पिबेत् ॥ २९ ॥**
**जांगलं भक्षयेद्वाजमामपित्तयुतं यकृत्।**

अतिस्रुतरक्तश्च जांगलं रक्तं क्षौद्रेण सह पिबेत्। आजं यकृदपक्वं पित्तयुतं भक्षयेत्।

**चंदनोशीरजलदालाजामुद्गकणायवैः ॥ ३० ॥**
**बलाजले पर्युषितैः कषायो रक्तपित्तहा।**

चंदनादिभिर्बलाजले पर्युषितैः कषायो रक्तपित्तजित्।

**प्रसादश्चंदनांभोजसेव्यं मृद्भृष्टलोष्टजः ॥ ३१ ॥**
**सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित्।**

चंदनादिजः प्रसादः सुशीतः शर्करामाक्षिकाभ्यां सहरक्तस्यातिप्रवृत्तिं जयेत्।

**आपोथ्य वा नवे कुंभे प्लावयेदिक्षुगंडिकाः ॥ ३२ ॥**
**स्थितं तद्गुप्तमाकाशे रात्रिं प्रातः श्रृतं जलम्।**
**मधुमृद्वीकजांभोजकृतोत्तंसं च तद्गुणम् ॥ ३३ ॥**

इक्षुगंडिका आपोथ्य भृशमादौ संकुट्य जले प्लावयेत्। नवे कुंभे रात्रिमाकाशे गुप्तं कीटाद्युपहतं यथा न स्यात्तथा स्थितं तदिक्षुगंडिकाजलं प्रातः श्रृतं समाक्षिकं विकसितपद्मेन कृतशेखरं तद्गुणं पूर्ववद्गुणमित्यर्थः।

**ये च पित्ते ज्वरे चोक्ताः कषायास्तांश्च योजयेत्।**

पित्तज्वरे च ये कषाया उक्ताः शक्रयवाद्यनंता कटुका चेति सक्षौद्रा इत्यादयस्तांश्च कषायानत्र योजयेत्।

**कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे।**
**रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्वणे पयः ॥ ३४ ॥**
**युंज्याच्छागं श्रृतं तद्वद्गव्यं पंचगुणेऽम्भसि।**
**पंचमूलेन लघुना श्रृतं वा ससितामधु ॥ ३५ ॥**

**जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः ।**
**पृथक्पृथक्शृतं क्षीरं सघृतं सितयाऽथवा ॥ ३६ ॥**

एभिर्विविधैर्नानाप्रकारैः कषायैरग्नौ दीप्ते च कफे च विजिते सति यदि रक्तपित्तं न शाम्यति तत्र वातोल्बणे रक्तपित्ते सति पंचगुणेंऽभसि शृतं छागं पयो युंज्यात् । पंचगुणेंऽभसि गव्यं क्षीरं कथितं तद्वत्तेन छागेन समानगुणं तच्च युंज्यात् । अथवा लघुना पंचमूलेन शृतं गव्यं सशर्करमधु तद्गुणम् । तथा जीवकर्षभकादिभिः पृथक् शृतं घृतेनाथवा शर्करया सह तद्गुणम् ।

**गोकंटकाभीरुसृतं पर्णिनीभिस्तथा पयः ।**
**हंत्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ॥ ३७ ॥**

गोकंटकादिभिस्तथा शालिपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीभिः शृतं शीघ्रमेव रक्तं सवेदनं हंति । विशेषान्मूत्रमार्गगतम् । विशेषग्रहणादन्यमार्गगमपि रक्तं हंतीति द्योतयति ।

**विण्मार्गगे विशेषेण हितं मोचरसेन तु ।**
**वटप्ररोहैः शृंगैर्वा शुंठ्युदीच्योत्पलैरपि ॥ ३८ ॥**

विण्मार्गगे गुदगते रक्तपित्ते तु विशेषेण मोचरसेन शृतं क्षीरं हितम् । वटप्ररोहैर्वा शृतं क्षीरमथवा वटशृंगैः प्रथमोद्भूतमुकुलितैः पल्लवप्रायैः शुंठ्युदीच्योत्पलैर्वा शृतं पयो हितम् ।

**रक्तातिसारदुर्नामचिकित्सां चाऽत्र कल्पयेत् ।**

रक्तशब्दस्यातिसारदुर्नाम्नोः संबंधः । रक्तातिसारस्य रक्तार्शसश्च या चिकित्सा तामत्र रक्ते योजयेत् ।

**पीत्वा कषायान् पयसा भुंजीत पयसैव च ॥ ३९ ॥**
**कषाययोगैरेभिर्वा विपक्वं पाययेद्घृतम् ।**

कषायान्पूर्वोक्तान्पयसा पीत्वा पयसैवाश्नीयात् । एतैर्वा कषायाख्यैर्योगैर्विपक्वं घृतं रक्तपित्तिनं पाययेत् ।

**समूलमस्तकं क्षुण्णं वृषमष्टगुणेंऽभसि ॥ ४० ॥**
**पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ।**
**पुष्पगर्भं च तच्छीतं सक्षौद्रं पित्तशोणितम् ॥४१॥**
**पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः ।**
**तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ॥ ४२ ॥**

मूलपल्लवादियुक्तं क्षुण्णं चूर्णितं वृषमष्टगुणे जले पक्त्वा तेनाष्टांशावशेषेण क्वाथेन घृतं विपाचयेत् । किंभूतम् । तत्पुष्पगर्भं तस्य वृषस्य पुष्पाणि गर्भः कल्को यस्य तदेवम् । तच्च शीतीभूतं क्षौद्रेण सह पित्तशोणितादीन्नाशयेत् ।

**पालाशवृंतस्वरसे तद्गर्भं च घृतं पचेत् ।**
**सक्षौद्रं तच्च रक्तघ्नं तथैव त्रायमाणया ॥ ४३ ॥**

पालाशवृंतानां स्वरसे तद्गर्भं पलाशवृंतकल्कं घृतं पचेत् । तच्च क्षौद्रेण सह रक्तघ्नं भवति । तदेव त्रायमाणाया शृतं रक्तपित्तघ्नम् ।

**रक्ते सपिच्छे सकफे ग्रथिते कंठमार्गगे ।**
**लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम् ॥ ४४ ॥**

रक्ते पिच्छवति पिच्छाशाल्मल्या रससदृशी तथा सकफे तथा ग्रथिते ग्रंथिसदृशे तथा कंठमार्गगे सति क्षारमुत्पलनालजं माक्षिकसर्पिर्भ्यां लिह्यात् । ननु क्षारस्य तैक्ष्ण्यादिगुणयोगाद्रक्तपित्तेन युक्त उपयोगस्तत्कथमिह तमनुमेने तंत्रकृत् । ब्रूमः । उत्पलादीनि शीतस्वभावानि तत्समुत्थश्च क्षारः स्वयोनिमनुकरोति । तथा चोक्तम् । कारणानुविधायित्वात्कार्याणां तत्स्वभावतेति । क्षारस्वरूपं च विष्यंदनात्मकं धत्ते । तदेवं कंठमार्गगस्य कफानुबंधस्य ग्रथितस्य रक्तस्य क्षारो घृतमाक्षिकाभ्यां संयुक्तो विष्यंदनपूर्वं शोधयत्येव नतु तस्य कोपाय स्यादिति युक्तोऽत्र क्षारोपयोगः ।

**पृथक्पृथक् तथांभोजरेणुश्यामामधूकजम् ।**

अंभोजरेण्वादिकं पृथक् तथा माक्षिकघृताभ्यां लिह्यात् ।

**गुदागमे विशेषेण शोणिते बस्तिरिष्यते ॥ ४५ ॥**

गुदागमे रक्ते विशेषेण बस्तिरिष्यते ।

**घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत् ।**
**कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसप्लुतान् ॥४६॥**
**क्षीरादीन्ससितांस्तोयं केवलं वा जलं हितम् ।**
**रसो दाडिमपुष्पाणामाम्रोत्थः शाड्वलस्य वा ॥४७॥**

घ्राणगे रुधिरे शुद्धे सति नावनमनुषेचयेन्नस्यं दद्यात् । कषाययोगान्पूर्वोक्तान्वासकादीन् घ्राणगेऽनुषेचयेत् । किंभूतान्क्षिरेक्ष्वादिरसेनाप्लुतान् सद्रवान् । आदिशब्देन मांसरसघृतादि गृह्यते । क्षीरादीन् वा सशर्करादीन् दद्यात् । तथा तोयमर्थात्ससितं वा केवलं जलं हितमिति हि वक्ष्यति । तथा दाडिमपुष्पाणां रसस्तथा चूतफलोत्थस्तथा दूर्वारसो नस्यं पृथक्पृथग्घितम् ।

**कल्पयेच्छीतवर्गं च प्रदेहाभ्यंजनादिषु ।**

शीतवीर्यवर्गं च प्रलेपाभ्यंजनादिषु कल्पयेत् । यच्च पित्तज्वरे प्रोक्तं बहिरंतश्च भेषजम् । रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् । पित्तज्वरेऽभिहितमौषधं बहिरंतरे तच्च रक्तपित्ते हितम् । तथा यच्च क्षते क्षीणे च हितं तदपि रक्तपित्ते हितमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां रक्तपित्तचिकित्साध्यायो द्वितीयः ॥२॥

---

## तृतीयोऽध्यायः ।

रक्तपित्तचिकित्सानंतरं कासचिकित्सितस्यारंभः । तस्य च संबंधो निदाने स्वयं ग्रंथकृतैवोक्तः ।

**अथाऽतः कासचिकित्सितं व्याख्यास्यामः ।**
**केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।**
**वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥ १ ॥**
**लेहैर्धूमैस्तथाभ्यंगैः स्वेदसेकावगाहनैः ।**

**बस्तिभिर्बद्धविड्वातं सपित्तं त्वौर्ध्वभक्तिकैः ॥ २॥**
**घृतैः क्षीरैश्च सकफं जयेत्स्नेहविरेचनैः ।**

केवलानिलजं कासं दोषांतरासंसृष्टं स्नेहैर्वातघ्नसिद्धैरादावुपाचरेत् नतु शुद्धस्य वातस्य स्नेहैरेव प्रधानोपक्रम आदिमध्यावसानेषु न पुनरन्य उपक्रमस्तस्मादादावित्यनेनार्थोऽत्रोच्यते । वातः केवलो दोषांतरावृतमार्गः कासस्य कारणं न त्वनावृतमार्गः । तथा च काससंप्राप्तावुक्तम् । तत्राधो विहितोऽनिल ऊर्ध्वं प्रवृत्त इत्यादि । एवं वातस्य विहितो यो दोषः कारणं कफादिस्तस्य रूक्षाद्युपक्रमेणैव शमं कृत्वाऽनंतरं कासेन सहोपक्रममस्य भिषजः कुर्युरिति तेषां भ्रांतिनिरासार्थमादावित्युक्तम् । तथा पेयादिभिरुपाचरेत् । तथा बद्धौ विड्वातौ यस्मिन्कासे तं बस्तिभिरुपाचरेत् । सपित्तं च वातकासमौर्ध्वभक्तिकैर्भक्तसमनंतरं पीयमानैर्घृतैर्भोजयेत् क्षीरैश्च । और्ध्वभक्तिकैरिति । ऊर्ध्वभक्तादिभिः पेयादिभिः। मयूरव्यंसकादित्वात्समासः । अध्यात्मादित्वाट्ठञ् । तथा वातघ्नसिद्धैरित्येतदेष्वपि योज्यम् । तथा सकफं वातकासं स्नेहविरेचनैरुपाचरेत् ।

अथ स्नेहानाह ।

**गुडूचीकंटकारीभ्यां पृथक्त्रिंशत्पलाद्रसे ॥ ३ ॥**
**प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ।**

गुडूच्याः कंटकार्याश्च पृथक् प्रत्येकं त्रिंशत्पलं तस्माद्यो रसस्तस्मिन् घृतात् प्रस्थः सिद्धो वातकासादिजित् । तिस्रोऽपि पंचम्य एता अपेक्षितक्रियेऽपादाने बोध्याः ।

**क्षाररास्नावचाहिंगुपाठायष्ट्याह्वधान्यकैः ॥ ४ ॥**
**द्विशाणैः सर्पिषः प्रस्थं पंचकोलयुतैः पचेत् ।**
**दशमूलस्य निर्यूहे पीतो मंडानुपायिना ॥ ५ ॥**
**सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ।**

क्षारादिभिः पंचकोलयुतैर्द्विशाणमात्रैः कल्कैर्दशमूलक्काथे सर्पिषः प्रस्थं पचेत् । स च सर्पिःप्रस्थो मंडानुपायिना पीतः कासादिजित् ।

**द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ॥ ६ ॥**
**पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम् ।**
**तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ॥ ७ ॥**
**समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ।**
**प्रयुक्तं वातरोगेषु पाननावनवस्तिभिः ॥ ८ ॥**
**पंचकासान् शिरःकंपं योनिवंक्षणवेदनाम् ।**
**सर्वांगैकांगरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ॥ ९॥**

रास्नादीनि पलोन्मितानि कुलत्थबदरयवान् द्विकुडवोन्मितानाजमांसस्य पंचाशत्पलानि जलद्रोणे पाचयेत् । तेन क्काथेन घृताढकं साध्यं तुल्यक्षीरं पालिकैर्जीवनीयैर्जीवंतीकाकोल्यादिभिस्तद्घृतं समीक्ष्य देशकालादीनालोच्य पानादिभिः प्रयुक्तं पंचकासादीन् जयति ।



**विदार्यादिगणक्काथकल्कसिद्धं च कासजित् ।**

विदार्यादिगणस्य क्काथकल्काभ्यां च सिद्धं सर्पिः कासजित् ।

**अशोकबीजक्षवकजंतुघ्नांजनपद्मकैः ॥ १० ॥**
**सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृतप्लुतम् ।**
**लिह्यात्पयश्चानुपिबेदाजं कासादिपीडितः ॥ ११ ॥**

अशोकबीजादिभिर्बिडसहितैर्घृतं सिद्धं कासजित् । तेषां वाऽशोकबीजादीनां चूर्णं घृतप्लुतं लिह्यात् । अनु पश्चाच्च छागं क्षीरं कासेनाभिपीडितः पिबेत् ।

**विडंगं नागरं रास्नापिप्पलीहिंगुसैंधवम् ।**
**भार्गी क्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥ १२ ॥**
**सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ।**

अथवा विडंगादिचूर्णं घृतस्य मात्रया यथायोगं ह्रस्वमध्योत्तमया पिबेद्वातजे सकफे कासे श्वासादिषु च ।

**दुरालभां शृंगबेरं शठीं द्राक्षां सितोपलाम् ॥ १३ ॥**
**लिह्यात्कर्कटशृंगीं च कासे तैलेन वातजे ।**

दुरालभादीन् कर्कटशृंगीं च वातजे कासे तैलेन लिह्यात् ।

**दुस्पर्शां पिप्पलीं मुस्तां भार्गीं कर्कटकीं शठीम् १४**
**पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ।**
**तद्वत्सकृष्णां शुंठीं च सभार्गीं तद्वदेव च ॥ १५ ॥**

दुस्पर्शादीनि चूर्णितानि वातजे कासे पुराणगुडतैलाभ्यामवलेहयेत् । तथैव पिप्पलीसहितां शुंठीं पुराणगुडतैलाभ्यां लेहयेत् । तद्वच्च पुराणगुडतैलाभ्यां भार्गीसहितां शुंठीं लेहयेत् ।

**पिबेच्च कृष्णां कोष्णेन सलिलेन ससैंधवाम् ।**
**मस्तुना ससितां शुंठीं दध्ना वा कणरेणुकाम् ॥१६॥**

पिप्पलीं कदुष्णेन जलेन सैंधवसहितां पिबेत् । मस्तुना सशर्करां शुंठीं वा पिबेत् । अथवा दध्ना युक्तां पिप्पलीं रेणुकां पिबेत् ।

**पिबेद्बदरमज्ज्ञो वा मदिरादधिमस्तुभिः ।**
**अथवा पिप्पलीकल्कं घृतभृष्टं ससैंधवम् ॥ १७ ॥**

अथवा बदरस्य मज्ज्ञो मदिरादिभिः पिबेत् । बहुवचनोपादानाच्च मदिरया अथवा दध्ना मस्तुना वेत्येवं द्रष्टव्यं न तु दध्नो मस्त्विति । पिप्पलीकल्कं वा घृतभृष्टं सैंधवयुक्तं पिबेन्मदिरादिभिः ।

**कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत् ।**
**हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥ १८ ॥**

कासी पीनसी च स्नैहिकं धूमं विधिना पिबेत् । क्षीरमांसरसाशने हिध्मोक्तान् श्वासोक्तांश्च धूमान् पिबेत् ।

**ग्राम्यानूपोदकैः शालियवगोधूमषाष्टिकान् ।**
**रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धि तान् ॥ १९ ॥**

ग्राम्यादिजैर्मांसरसैरथवा माषात्मगुप्तानां यूषैः शाल्यादीन् हितानाशयेत् । हितानिति देशकालादिसात्म्यवशाद्यवाद्यन्यतमं यत् पथ्यं तद्भुंजीतेति प्रतिपादयति ।

**यवानीपिप्पलीबिल्वमध्यनागरचित्रकैः ।**
**रास्नाजाजीपृथक्पर्णीपलाशशठिपौष्करैः ॥ २० ॥**
**सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ।**
**कटिहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशनीम् ॥ २१**

यवान्यादिभिः सिद्धां स्निग्धामम्ललवणां पेयां वातजे कासे पिबेत् । किंभूताम् । कट्याद्यार्तिश्वासहिध्माप्रणाशनीम् ।

**दशमूलरसे तद्वत् पंचकोलगुडान्विताम् ।**
**पिबेत्पेयां समतिलां क्षैरेयीं वा ससैंधवाम् ॥२२॥**

तद्वत्पूर्वोक्तगुणे दशमूलक्वाथेऽतिसिद्धां पंचकोलगुडयुतां पेयां पिबेत् । क्षैरेयीं क्षीरसंस्कृतां वा पेयां वातजे कासे पिबेत् । किंभूताम् । समतिलां तिलसहितां तथा ससैंधवाम् ।

**मात्स्यकौकुटवाराहैर्मांसैर्वा साज्यसैंधवाम् ।**

अथवा मात्स्याद्यैर्मांसैः साधितां सघृतसैंधवां पेयां पिबेत् ।

**वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः ॥२३॥**
**कंटकार्याः फलं पत्रं बालं शुष्कं च मूलकम् ।**
**स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥२४॥**
**दधिमस्त्वारनालाम्लफलांबुमदिराः पिबेत् ।**

वास्तुकादयः शाकविशेषास्तैलादयः स्नेहा भक्ष्याः क्षीरादिसंबंधिनो हिताः । क्षीरं चेक्षुरसश्च गुडश्च तेषामिमे क्षीरेक्षुरसगौडिकाः । द्वंद्वांते पदं यच्छ्रूयते तत्सर्वैः संबध्यत इति भाष्यकारवचनात्सर्वैरप्यत्र संबंधः। तेन क्षीरसंबंधिनश्चेक्षुरससंबंधिनश्च भक्ष्या हिता इत्यवतिष्ठते । तथा दधिमस्त्वादीनि पिबेत् । इति वातजे कासे प्रायेणोपयोग्यन्नपानमुद्दिष्टम् ।

**पित्तकासे तु सकफे वमनं सर्पिषा हितम् ॥ २५ ॥**
**तथा मदनकाश्मर्यमधुककथितैर्जलैः ।**
**फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥ २६ ॥**

पित्तजे कासे । किंभूते कफयुक्ते तु सर्पिषा वमनं हितम् । अत एव वक्ष्यति । पित्तकासे तनुकफे विरेकाय त्रिवृतामिति । तस्मादत्रार्थाद्बहुकफत्वं बोध्यम्। न केवलं सर्पिषा वमनं हितम् । यावन्मदनादिभिः कथितैर्जलैर्वमनमवस्थावशाद्धितमथवा मदनफलमधुककल्कैर्विदार्यादिरसप्लुतैर्वमनं हितम् ।

**पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।**
**युंज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥२७॥**

पित्तजे कासे तनुकफे घनश्लेष्मणि त्रिवृतां मधुरैर्युतां विरेकाय युंज्यात् । घनकफे तिक्तकैः सह त्रिवृतां युंज्यात् ।

**हृतदोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत् ।**
**घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥ २८ ॥**

हृतदोषो नरो हिमं मधुरं स्निग्धं संसर्जनं विरेकादनंतरं पेयादिक्रमं भजेत् । घने तु कफे शीतं तथा रूक्षं तिक्तयुतं संसर्जनं भजेत् ।

**लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षा हिमोत्पलैः ।**
**सकफे साब्दमरिचः सघृतः सानिले हितः ॥ २९ ॥**
**मृद्वीकार्धशतं त्रिंशत्पिप्पलीः शर्करा पलम् ।**
**लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥ ३० ॥**

पित्तकासे सितादिभिर्लेहो हितः । सकफे पित्ते साब्दमरिचो लेहो हितः । सानिले पित्ते सघृतो लेहो हितः । तथा मृद्वीकागुलीका पंचाशत् त्रिंशत्पिप्पलीः शर्करापलं च मधुना लेहयेत् । गोर्वा वत्सस्य क्षीरपस्य क्षीरवृत्तेः शकृद्रसं मधुना लेहयेत् ।

**त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।**
**लाजमुस्ताशठीरास्नाधात्रीफलविभीतकैः ॥ ३१ ॥**
**शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा ।**

त्वगेलादिभिर्लेहो हृद्रोगकासहा भवति ।

**मधुरैर्जांगलरसैर्यवश्यामाककोद्रवाः ॥ ३२ ॥**
**मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ।**
**घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः ॥ ३३ ॥**

घनश्लेष्मणि पित्तकासे जांगलैः रसैर्मधुरैस्तथा मुद्गकुलत्थादयूषैस्तथा तिक्तैः शाकैश्च सह यवादयो मात्रया परिमिता हिताः। घनश्लेष्मणि लेहाश्च तिक्तद्रव्ययुक्ताः ।

**शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ।**
**शर्करांभोऽनुपानार्थं द्राक्षेक्षुस्वरसाः पयः ॥ ३४ ॥**

तनुकफे पित्ते शालयः षष्टिकाश्च रसादिभिर्हिताः स्युर्भवेयुः । अनुपानार्थं शर्करांभो हितं द्राक्षेक्षुरसाः पयश्च ।

**काकोलीबृहतीमेदाद्वयैः सवृषनागरैः ।**
**पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत् ॥ ३५ ॥**

काकोल्यादिभिर्मांसरसादीन् पित्तकासे प्रकल्पयेत् ।

**द्राक्षां कणां पंचमूलं तृणाख्यं च पचेज्जले ।**
**तेन क्षीरं शृतं शीतं पिबेत्समधुशर्करम् ॥ ३६ ॥**
**साधितां तेन पेयां वा सुशीतां मधुनाऽन्विताम् ।**

पित्तकासे तथा द्राक्षादीन् चतुर्गुणे जले पचेत् । तेन पादावशिष्टेन द्राक्षादीनां क्वाथेन समं जलेन क्षीरं कथितं मधुशर्करायुतं पिबेत् । तेन वा जलेन साधितां पेयां सुशीतां माक्षिकयुतां पिबेत् ।

**शठीह्रीबेरबृहतीशर्कराविश्वभेषजम् ॥ ३७ ॥**
**पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्छितम् ।**

शठ्यादीन् जले पिष्ट्वा वस्त्रेण पूतं रसं घृतमिश्रितं पिबेत्।

**शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम्॥ ३८॥**
**कल्कीकृत्य पचेत्सर्पिः क्षीरेणाष्टगुणेन तत्।**
**पानभोजनलेहेषु प्रयुक्तं पित्तकासजित्॥ ३९॥**
**लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत्।**

शर्करादीन् कल्कीकृत्याष्टगुणेन क्षीरेण सर्पिः पचेत्। तच्च सर्पिः पानादिषु युक्तं पित्तकासजित्। एतेषां च शर्करादीनां चूर्णं लिह्यात्। अथवैषामेव कषायं पिबेत्।

**कफकासी पिबेदादौ सुरकाष्ठात्प्रदीपितात्॥४०॥**
**स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम्।**
**स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः॥ ४१॥**
**तीक्ष्णैर्विरेकैर्बलिनं संसर्गीं चास्य योजयेत्।**
**यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः॥ ४२॥**
**कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः।**
**धान्वबैलरसैः स्नेहैस्तिलसर्षपनिंबजैः॥ ४३॥**

कफकासी पूर्वं सुरकाष्ठात्प्रदीपितायः स्रुतः स्नेहस्तं व्योषयवक्षारावचूर्णितं पिबेत्। स्निग्धं च संतमनंतरं विरेचयेत्। ऊर्ध्वमधो मूर्ध्नि च युक्तितो यथाबलहानिर्न स्यादिति भावः। कैर्विरेचयेत्। तीक्ष्णैर्विरेकैः। किंभूतमातुरं बलवंतम्। संसर्गीं च पेयादिपरिपाटीं चास्य योजयेत्। यवादिभिर्यथायोगमुष्णरूक्षैस्तथा कटूत्कटैः प्रभूतकटुकैः कासमर्दकादियुक्तैः। धन्वनि भवा धान्वा जांगलाः। बिलेषु भवा बैला बिलेशयास्तेषां रसास्तैर्मांसरसैः सहेत्यर्थः। तथा स्नेहैस्तिलादिजैः सह।

**दशमूलांबु घर्मांबु मद्यं मध्वंबु वा पिबेत्।**
**मूलैः पौष्करशम्याकपटोलैः संस्थितं निशाम्॥४४॥**
**पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु।**

दशमूलांब्वादीन् पिबेत्। अथवा मूलैः पौष्करादिभिर्निशां संस्थितं रात्रिस्थितं वारि क्षौद्रेण सह प्रातः पिबेत्। अथवाऽन्नस्य त्रिषु कालेष्वादिमध्यावसानलक्षणेषु पिबेत्।

**पिप्पली पिप्पलीमूलं शृंगवेरं बिभीतकम्॥ ४५॥**
**शिखिकुक्कुटपिच्छानां मषी क्षारो यवोद्भवः।**
**विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः॥४६॥**
**कफकासहरा लेहास्त्रयः श्लोकार्धयोजिताः।**

पिप्पल्यादयस्त्रयो लेहाः श्लोकार्धैर्योजिता मधुना सह कफकासहरा भवंति।

**मधुना मरिचं लिह्यान्मधुनैव च जोंगकम्॥ ४७॥**
**पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृंगजान्।**
**कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च॥ ४८॥**

तथा कफकासे मधुना मरिचं लिह्यात्। माक्षिकेनैवागुरुं लिह्यात्। व्याघ्र्यादिजान् रसान् पृथक्पृथङ्मधुना लिह्यात्।

**देवदारुशठीरास्नाकर्कटाख्यादुरालभाः।**
**पिप्पली नागरं मुस्तं पथ्या धात्री सितोपला॥४९॥**
**लाजासितोपलासर्पिः शृंगी धात्रीफलोद्भवा।**
**मधुतैलयुता लेहास्त्रयो वातानुगे कफे॥ ५०॥**

देवदार्वादयो मधुतैलयुता लेहास्त्रयः श्लोकार्धगदिता वातानुगे कफे स्युः। अत्र शृंगीधात्रीफलोद्भवेति केचिद्विशिष्टमामलकमाहुः। अन्ये तु शृंगी कर्कटशृंगीति व्याचक्षते।

**द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयम्।**
**रोचनं दीपनं स्वर्यं पीनसश्वासकासजित्॥ ५१॥**

दाडिमस्य पले द्वे तु गुडादष्टौ त्रिकटुकात् पलत्रयमित्येतद्दाडिमाद्यं चूर्णं रोचनादिगुणं पीनसादिजित्।

**गुडक्षारोषणकणादाडिमं श्वासकासजित्।**
**क्रमात्पलद्वयार्धाक्षकर्षाक्षार्धपलोन्मितम्॥ ५२॥**

गुडादिकं क्रमेण पलद्वयमर्धकर्षं कर्षं पलप्रमाणं पूर्वोक्तगुणम्।

**पिबेज्ज्वरोक्तं पथ्यादि सशृंगीकं च पाचनम्।**

तथा ज्वरचिकित्सितोक्तं पथ्याकुस्तुंबर्यादिकं पाचनं कर्कटशृंगीसहितं पिबेत् पूर्वगुणम्।

**अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम्॥ ५३॥**
**सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा।**

दीप्यकादिकं गोमूत्रे क्वथितं जलेऽथवा क्वथितं पिप्पलीसहितं कफकासी पिबेत्।

**तैलभ्रष्टं च वैदेहीकल्काक्षंससितोपलम्॥ ५४॥**
**पाययेत्कफकासघ्नं कुलित्थसलिलाप्लुतम्।**

पिप्पलीकल्ककर्षं सशर्करं तैलेन पक्वं कुलत्थसलिलाप्लुतं कफकासघ्नं पाययेत्।

**दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्॥ ५५॥**
**पुष्कराह्वशठीबिल्वसुरसाव्योषहिंगुभिः।**
**पेयानुपानं तत्सर्पिर्वातश्लेष्मामयापहम्॥ ५६॥**

दशमूलक्वाथाढके घृतस्य प्रस्थं पुष्करमूलादिभिः प्रत्येकं कर्षप्रमाणैः कल्कीकृतैः पचेत्। तच्च पेयानुपानं सर्ववातकफामयघ्नम्।

**निर्गुंडीपत्रनिर्याससाधितं कासजिद्घृतम्।**

निर्गुंडीपत्रस्वरससाधितं घृतं कासजित्स्यात्।

**घृतं रसे विडंगानां व्योषगर्भं च साधितम्॥ ५७॥**

विडंगानां रसे व्योषगर्भे च साधितं घृतं पूर्वोक्तगुणम्।

**पुनर्नवशिवाटिकासरलकासमर्दामृता**
**पटोलबृहतीफणिज्झकरसैः पयःसंयुतैः।**

**घृतं त्रिकटुना च सिद्धमुपयुज्य संजायते**
**न कासविषमज्वरक्षयगुदांकुरेभ्यो भयम् ॥ ५८ ॥**

पुनर्नवादिरसैः पयसा युतैस्त्रिकटुना कल्केन च सिद्धं घृतमुपयुज्य पीत्वा कासादिभ्यो भयं न जायते । वसुग्रहयुता जसौ जसयलाश्च पृथ्वी गुरुः । अत्र पुनर्नवादिरसो घृताच्चतुर्गुणः क्षीरं घृतसमं घृतं व्योषाच्चतुर्गुणमिति पाकक्रमः ।

**समूलफलपत्रायाः कंटकार्या रसाढके ।**
**घृतप्रस्थं बलाव्योषविडंगशठिदाडिमैः ॥ ५९ ॥**
**सौवर्चलयवक्षारमूलामलकपौष्करैः ।**
**वृश्चीवबृहतीपथ्यायवानीचित्रकर्धिभिः ॥ ६० ॥**
**मृद्वीका चव्यवर्षाभूदुरालंभाम्लवेतसैः ।**
**शृंगीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥ ६१ ॥**
**कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ।**

कंटकार्याः समूलफलपत्राया रसाढके बलादिभिः कल्कैर्घृताचतुर्थांशप्रमाणैर्घृतप्रस्थं पचेत् । तच्च सर्पिः सर्वकासादिष्विष्यतेऽभिहितम् । इदं च कंटकारीघृतं कफव्याधिविनाशनम् ।

**पचेद्व्याघ्रीतुलां क्षुण्णां वहे पामाढकस्थिते ॥ ६२ ॥**
**क्षिपेत् पूते तु संचूर्ण्य व्योषरास्नामृताग्निकान् ।**
**शृंगीभार्गीघनग्रंथिधन्वयासान् पलार्धकान् ॥६३॥**
**सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ।**
**मत्स्यंडिकायाः शुद्धायाः पुनश्च तदधिश्रयेत्॥६४॥**
**दर्वीलेपिनि शीते च पृथग् द्विकुडवं क्षिपेत् ।**
**पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ॥ ६५॥**
**लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ।**

व्याघ्र्यास्तुलां क्षुण्णां मर्दितां जलस्य वहे चतुर्द्रोणे पचेत् । आढकस्थिते जले संचूर्ण्य व्योषादीनि पलप्रमाणानि प्रत्येकं क्षिपेत् । अग्निरेवाग्निकश्चित्रकः । घृतस्य च षोडश पलानि । मत्स्यंडिकाया विमलायाश्चत्वारिंशत्पलानि । भूयश्च तत्सर्वं पचेत् । दर्वीं लिंपतीति दर्वीलेपी । तस्मिन् दर्वीलेपिनि शीतेऽवलेहे सति प्रत्येकं द्विकुडवप्रमाणं पिप्पल्यादि क्षिपेत् । अयं लेहो दुर्नामादिजित् ।

**शमनं च पिबेद्धूमं शोधनं बहुले कफे ॥ ६६ ॥**

तथा कफकासे शमनं धूमं पिबेत् । घनश्लेष्मणि शोधनं धूमं पिबेत् ।

अथ तमेव धूममाह ।

**मनःशिलालमधुकमांसीमुस्तेंगुदित्वचः ।**
**धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु ॥ ६७ ॥**
**निष्ठ्यूतांते गुडयुतं कोष्णं धूमो निहंति सः ।**
**वातश्लेष्मोत्तरान् कासानचिरेण चिरंतनान् ॥६८॥**

एतेषां संबंधिनं धूमं कासघ्नविधिना सूत्रोदितेन पीत्वाऽनु पश्चान्निष्ठ्यूतांते कोष्णं क्षीरं गुडान्वितं पिबेत् । सधूमः पीतो वातश्लेष्मोत्तरान् कासांश्चिरंतनानाश्वेव हंति । चिरंतनानिति सायंचिरमित्यादिना व्युः ।

**तमकः कफकासे तु स्याच्चेत्पित्तानुबंधजः ।**
**पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ६९ ॥**

कफकासे यदि तमकः पित्तानुबंधजः स्यात् । तत्र तमके पित्तकासक्रियामवस्थावशात्प्रयोजयेत् ।

**कफानुबंधे पवने कुर्यात्कफहरां क्रियाम् ।**
**पित्तानुबंधयोर्वातकफयोः पित्तनाशनीम् ॥ ७० ॥**

पवने कफानुबंधे सति कफकासहरां क्रियां कुर्यात् । पित्तानुबंधयोर्वातकफयोः पित्तकासनाशनीं क्रियां विदध्यात् ।

**वातश्लेष्मात्मके शुष्के स्निग्धं चार्द्रे विरूक्षणम् ।**
**कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥ ७१ ॥**

वातश्लेष्मात्मके शुष्के कासे स्निग्धं कर्म । आर्द्रे तु कासे विरूक्षणं कर्म ।

**उरस्यंतःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ।**
**क्षीरेण शालीन् जीर्णेऽद्यात्क्षीरेणैव सशर्करान् ७२**

अंतःक्षत उरसि सति सद्यः शीघ्रमेव लाक्षां माक्षिकयुक्तां क्षीरेण पिबेत् । उरःसंधानजनने लाक्षायाः प्राधान्यात् । तथा चाष्यसंग्रहे । लाक्षा सद्यः क्षतघ्नानां जीर्णे परिणते तस्मिन्नौषधं क्षीरेणैव सहशालिमद्यात् सशर्करम् ।

**पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम् ।**
**भिन्नविट्कः समुस्तातिविषापाठां सवत्सकाम् ७३**

पार्श्वबस्त्यादिरुगल्पोग्निश्च तां लाक्षायुतां सुरां पिबेत् । भिन्नपुरीषः पुरुषो नरो मुस्तातिविषापाठावत्सकान्वितां लाक्षां पिबेत् ।

**लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयं गणं सितम् ।**
**त्वक्क्षीरीसंमितं क्षीरे पक्त्वा दीप्तानलः पिबेत् ७४**
**इक्ष्वारिकाविषग्रंथिपद्मकेसरचंदनैः ।**
**शृतं पयो मधुयुतं संधानार्थं क्षती पिबेत् ॥ ७५ ॥**

लाक्षादीनि हि क्षीरेण पक्त्वा तत् क्षीरं दीप्ताग्निः पिबेत् । इक्ष्वारिकादिभिः शृतं क्षीरं मधुयुतं संधानार्थमुरसि क्षतः पुमान् पिबेत् ।

**यवानां चूर्णमामानां क्षीरे सिद्धं घृतान्वितम् ।**
**ज्वरदाहे सिताक्षौद्रसक्तून्वा पयसा पिबेत् ॥७६॥**

यवानामामानां चूर्णं क्षीरे सिद्धं घृतयुतं ज्वरदाहे पिबेत् । अथवा शर्करामाक्षिकयुतान् सक्तून् पयसा पिबेत् ।

**कासवांश्च पिबेत्सर्पिर्मधुरौषधसाधितम् ।**
**गुडोदकं वा क्वथितं सक्षौद्रमरिचं हिमम् ॥ ७७ ॥**

**चूर्णमामलकानां वा क्षीरपक्वं घृतान्वितम् ।**
**रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ ७८ ॥**

कासवांश्च मधुरौषधैः साधितं सर्पिः पिबेत् । अथवा गुडोदकं क्वथितं सक्षौद्रमरिचं शीतं पिबेत् । आमलकानां वा चूर्णं क्षीरसिद्धं सर्पिर्युक्तं पिबेत् । रसायनोक्तविधिना वा पिप्पलीः प्रयोजयेत् ।

**कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकान् ।**
**मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलान् ॥ ७९ ॥**

कासी पर्वास्थिशूलवांश्च सघृतमाक्षिकान् मधूकादीन् लिह्यात् ।

**त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।**
**द्राक्षामधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥ ८० ॥**
**मधुना गुटिका घ्नंति ता वृष्याः पित्तशोणितम् ।**
**कासश्वासारुचिच्छर्दिमूर्छाहिध्मावमिभ्रमान् ॥८१॥**
**क्षतक्षयस्वरभ्रंशप्लीहशोफाढ्यमारुतान् ।**
**रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ८२ ॥**

त्रिजातकमर्धकर्षप्रमाणं कणा कर्षद्वयमात्रा सितादिकं प्रत्येकं पलांशं श्लक्ष्णचूर्णितं मधुना कृता गुटिका वृष्याः पित्तशोणितादीन् घ्नंति ।

**वर्षाभूशर्करारक्तशालितंडुलजं रजः ।**
**रक्तष्ठीवी पिबेत्सिद्धं द्राक्षारसपयोघृतैः ॥ ८३ ॥**
**मधूकमधुकक्षीरसिद्धं वा तंडुलीयकम् ।**

पुनर्नवादिचूर्णं सपयोघृतैः सिद्धं रक्तष्ठीवी पिबेत् । अथवा मधुकादिभिः सिद्धं तंडुलीयकं पिबेत् ।

**यथा स्वमार्गविसृते रक्ते कुर्याच्च भेषजम् ॥ ८४ ॥**

मार्गेण च मुखादिना विसृते रक्ते यथायथं रक्तपित्तचिकित्सितोक्तमौषधं कुर्यात् ।

**मूढवातस्त्वजामेदः सुराभृष्टं ससैंधवम् ।**

मूढवातस्तु पुरुषोऽजाया मेदः सुरया भृष्टमीषत्सैंधवमद्यात् ।

**क्षामः क्षीणक्षतोरस्को मंदनिद्रोऽग्निदीप्तिमान् ॥८५॥**
**शृतक्षीरसरेणाद्यात्सघृतक्षौद्रशार्करम् ।**

क्षामः क्षीणः क्षतोरस्को मंदनिद्रो दीप्ताग्निः शृतक्षीरस्य संबंधिना सरेण सघृतक्षौद्रशर्करमजामेदमद्यात् ।

**शर्करां यवगोधूमं जीवकर्षभकौ मधु ॥ ८६ ॥**
**शृतक्षीरानुपानं वा लिह्यात्क्षीणक्षतः कृशः ।**

अथवा क्षीणक्षतः कृशो वा शर्करादिकं लिह्यात् । क्षीरक्वाथं शृतक्षीरानुपानम् ।

**क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ॥ ८७ ॥**
**पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ।**

स च क्षामः क्षीणादिः क्रव्यात्पिशितस्य निर्यूहं घृतेन भृष्टं पिबेत् । किंभूतम् । पिप्पलीक्षौद्रान्वितं तच्च मांसशोणितवर्धनं स्यात् ।

**न्यग्रोधोदुंबराश्वत्थप्लक्षशालप्रियंगुभिः ॥ ८८ ॥**
**तालमस्तकजंबूत्वक्प्रियालैश्च सपद्मकैः ।**
**साश्वकर्णैः शृतात्क्षीरादद्याज्जातेन सर्पिषा ॥८९॥**
**शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेंद्रियः ।**

न्यग्रोधादिभिः घृतात्क्षीरात्समुद्भूतेन सर्पिषा शाल्योदनं क्षतोरस्कः क्षीणशुक्रादिश्च नरोऽद्यात् ।

**वातपित्तार्दितेऽभ्यंगो गात्रभेदे घृतैर्मतः ॥ ९० ॥**
**तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना ।**

वातपित्तपीडिते गात्रभेदे वाऽभ्यंगो घृतैर्मतः । मातरिश्वना वातेन पीडिते सति तैलैर्वातरोगघ्नैरभ्यंगो मतः । चशब्दाद्घृतैरपीति द्योतयति ।

**हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ॥९१॥**
**कुर्याद्वा वातरोगघ्नं पित्तरक्तविरोधि यत् ।**

हृत्पार्श्वपीडासु जीवनीयस्य सर्पिषः पानं स्यात् । इति संभावनायां लिङ् । अथवा वातरोगघ्नं यत् पित्तरक्तविरोधि तत् कुर्यात् ।

**यष्ट्याह्वनागबलयोः क्वाथे क्षीरे समे घृतम् ॥ ९२ ॥**
**पयस्यापिप्पलीवांसीकल्कैः सिद्धं क्षते हितम् ।**

यष्ट्याह्वयस्य नागबलायाश्च क्वाथे क्षीरे तुल्ये पयस्यादिकल्कैः सिद्धं घृतं क्षतकासे हितम् ।

**जीवनीयो गणः शुंठी वरी वीरा पुनर्नवा ॥ ९३ ॥**
**बला भार्गी स्वगुप्तार्धशठी तामलकी कणा ।**
**शृंगाटकं पयस्या च पंचमूलं च यल्लघु ॥ ९४ ॥**
**द्राक्षाक्षौडादि च फलं मधुरस्निग्धबृंहणम् ।**
**तैः पचेत्सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः ॥९५॥**
**क्षीरधात्रीविदारीक्षुछागमांसरसान्वितम् ।**
**प्रस्थार्धं मधुनः शीते शर्करार्धं तुलारजः ॥ ९६ ॥**
**पलार्धकं च मरिचं त्वगेलापत्रकेसरम् ।**
**विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथाबलम् ॥९७॥**
**अमृतप्राशमित्येतन्नराणाममृतं घृतम् ।**
**सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥ ९८ ॥**
**नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ।**
**स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥९९॥**
**कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत् ।**
**पुत्रदं छर्दिमूर्छाहृद्योनिमूत्रामयापहम् ॥ १०० ॥**

जीवनीयो गणस्तथा शुंठ्यादयस्तैर्जीवनीयादिगणादिभिः कर्षांशैः सूक्ष्मचूर्णितैः क्षीरधात्र्यादिरसयुक्तं घृतस्य प्रस्थं द्वात्रिं-

शतपलानि पचेत् । द्राक्षाक्षोडादीन्यत्रादिशब्देन नालिकेरनिकोचादिपरिग्रहः । शीते घृते माक्षिकस्य षोडशपलानि शर्कराचूर्णपलानि पंचाशन्मरिचादीनि द्विकार्षिकाणि चूर्णितानि प्रक्षिप्य तस्मान्मात्रां यथाबलं लिह्यात् । अमृतप्राशमेतत्संज्ञं घृतं नराणाममृततुल्यं महागुणत्वात् । यथा नागानां सुधा देवानाममृतम् । अत एवैतत्सुधाममृतरसं प्राश्यं भोज्यं क्षीरमांसरसाशिना । एतच्चामृतं नष्टशुक्रादीन् बृंहयेत् । कासादिनुत् । पुत्रदं छर्द्यादिघ्नम् । अत्र च मधुरस्निग्धबृंहणानां द्राक्षादीनामपि यथालाभं कर्षप्रमाणमधिकं वा योज्यम् । यथा सामान्यपरिभाषोक्ता कर्षमात्रापरिपूर्णा स्यादिति ।

**श्वदंष्ट्रोशीरमंजिष्ठाबलाकाश्मर्यकत्तृणम् ।**
**दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥ १०१ ॥**
**पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे ।**
**कल्कैः स्वगुप्ताजीवंतीमेदकर्षभजीवकैः ॥ १०२ ॥**
**शतावर्यर्धमृद्वीकाशर्कराश्रावणीबिसैः ।**
**प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ १०३ ॥**
**मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।**
**धनुस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ १०४ ॥**

श्वदंष्ट्रादीनि पालिकानि तेषां रसे क्षीरचतुर्गुणे स्वगुप्तादिभिः कल्कैर्घृतात् प्रस्थः सिद्धो वातपित्तहृद्रोगशूलनुत् । मूत्रकृच्छ्रादिघ्नः । तथा धनुरादिखिन्नानां बलमांसदः ।

**मधुकाष्टपलद्राक्षाप्रस्थक्वथे पचेद्घृतम् ।**
**पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥१०५॥**
**पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।**
**समसक्तुक्षतक्षीणरक्तगुल्मेषु तद्धितम् ॥ १०६ ॥**

मधुयष्ट्या अष्टौ पलानि द्राक्षायाः षोडश एतत्क्वाथे पिप्पल्यष्टपले पृथग् घृतप्रस्थं पचेत् । घृते च सिद्धे सुशीते सति क्षौद्रशर्करयोः पृथगष्टपलं विमिश्रयेत् । एतच्च घृतं समसक्तु क्षतक्षीणे रक्तगुल्मे च हितम् ।

**धात्रीफलविदारीक्षुजीवनीयरसाद्घृतात् ।**
**गव्याजयोश्च पयसोः प्रस्थं प्रस्थं विपाचयेत् ॥१०७॥**
**सिद्धपूते सिताक्षौद्रं द्विप्रस्थं विनयेत्ततः ।**
**यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥ १०८ ॥**
**वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।**

धात्र्यादिरसस्य प्रस्थं गव्याजयोः क्षीरयोः प्रस्थौ च विपाचयेत् । सिद्धपूते च ततस्तस्मिन् घृते शर्कराक्षौद्रयोः प्रस्थौ द्वौ विनयेत् क्षिपेत् । एतच्च घृतं यक्ष्मादिहरं तथा वयःस्थापनादिगुणम् ।

**घृतं तु पित्तेऽभ्यधिके लिह्याद्वाताधिके पिबेत् १०९**
**लीढं निर्वापयेत्पित्तमल्पत्वाद्धंति नानलम् ।**
**आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ ११० ॥**

पित्तेऽभ्यधिके घृतं लिह्यात् । वातेऽधिके घृतं पिबेत् । लीढं तु घृतं पित्तं निर्वापयेत्संशमयेत् । अनलं च न हंति लीढं घृतम् । कुतोऽल्पत्वात् । अत्रायं सद्भावार्थः किल पीतेनाधिकेनार्द्रवत्तया वह्नेर्मांद्येनावश्यं भवितव्यम् । तथा च वक्ष्यति । अग्नेर्निर्वापके पित्ते रेकेन वमनेन वा तच्चाभ्यधिकं पित्तं लीढं घृतं संशमयति । अल्पत्वाच्च हेतोरग्निं न हंति । मंदस्याग्नेरधिकं मांद्यं जनयति । पीतं सद्घृतमनिलमाक्रामति प्रसह्य जयति । ऊष्माणं जाठरं वह्निं जाज्वल्यमानं रुणद्धि । आश्वेव स्थगयति शमं किंचिन्नयति ।

**क्षामक्षीणकृशांगानामेतान्येव घृतानि तु ।**
**त्वक्क्षीरीपिप्पलीलाजचूर्णैः पानानि योजयेत् ॥**
**सर्पिर्गुडान्समध्वंशान् कृत्वा दद्यात्पयो नु च ।**
**रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ११२ ॥**

क्षामाणां क्षीणानां कृशांगानां च नृणामेतान्येव पूर्वोक्तानि पानानि त्वक्क्षीरीशर्करालाजाचूर्णैः सह नियोजयेत् । सर्पिर्मिश्रान् गुडान्समध्वंशान् कृत्वा च दद्यात् । शर्करायाः पलानि पंचाशन्मधुनः पलानि षोडशात्र देयानि । मुनिना ह्येवमुक्तम् । विदारीक्षुरसः प्रस्थैः प्रस्थं द्रव्याद्घृतात्पचेत् । शर्करार्धतुलां शीते क्षौद्रार्धप्रस्थमेव च । क्षिप्त्वा सर्पिर्गुडान् कुर्याद्धिक्काश्वासज्वरापहानिति । पय इत्यादि । अनंतरं पयः पिबेत् । तैः सर्पिर्गुडैरेते वीर्यादीन् शीघ्रतरं प्राप्नोति ।

**वीतत्वगस्थिकूष्मांडतुलां स्विन्नां पुनः पचेत् ।**
**घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ॥११३॥**
**खंडाच्छतं कणाशुंठ्योर्द्विपलं जीरकादपि ।**
**त्रिजातधान्यमरिचं पृथगर्धं पलांशकम् ॥ ११४ ॥**
**अवतारितशीते च दत्वा क्षौद्रं घृतार्धकम् ।**
**खजेनामथ्य च स्थाप्य तन्निहंत्युपयोजितम् ॥११५॥**
**कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ।**
**उरःसंधानजननं मेधास्मृतिबलप्रदम् ॥ ११६ ॥**
**अश्विभ्यां विहितं हृद्यं कूष्मांडकरसायनम् ।**

वीतान्यपासितानि त्वगस्थीनि यस्मात्कूष्मांडात्तस्य तुलां स्विन्नां सतीं पुनः सर्पिषः प्रस्थे चालयन् पचेत् । अत्र च कूष्मांडे माक्षिकवर्णे जाते सति खंडाच्छतं कणाशुंठ्या द्विपलं जीरकाच्च पलद्वयं त्रिजातकादि प्रत्येकमर्धपलांशकं क्षिपेत् । अवतारिते शीते चास्मिन् क्षौद्रस्य षोडशपलानि दत्वा खजेन दर्व्या आमथ्य विलोड्य पश्चाद् भांडे स्थाप्यम् । एवं ह्यस्य सम्यग् घृतादिसमयोगः स्यात् । उपयोजितं च तत्कासादीन् हंति । उरःसंधानं करोति । मेधादिप्रदम् । अश्विभ्यां दस्राभ्यां निर्दिष्टं कूष्मांडकाख्यं रसायनम् ।

**पिबेन्नागबलामूलस्यार्धकर्षाभिवर्धितम् ॥ ११७ ॥**

पल क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ।
एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम् ॥ ११८ ॥
मंडूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च ।

नागबलामूलस्य पलं क्षीरयुतं पिबेत् । किंभूतम् । अर्धकर्षादिवर्धितं मासं यावत् । किंभूतो नरः क्षीरवर्तनोऽनन्नदः सन् । अयं प्रयोगः सुष्टु पुष्ट्यादिकरः । एवमेव कल्पो मंडूकपर्ण्याः यष्ट्याः शुंठ्याश्च कार्यः ।

पादशेषं जलद्रोणे पचेन्नागबलातुलाम् ॥ ११९ ॥
तेन क्राथेन तुल्यांशं घृतं क्षीरेण पाचयेत् ।
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ॥ १२० ॥
प्रपौंडरीककाश्मर्यप्रियालकपिकच्छुभिः ।
अश्वगंधासिताभीरुमेदायुग्मत्रिकंटकैः ॥ १२१ ॥
काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः ।
एतन्नागबलासर्पिः पित्तरक्तक्षतक्षयान् ॥ १२२ ॥
जयेत्तृड्भ्रमदाहांश्च बलपुष्टिकरं परम् ।
वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम् ॥ १२३ ॥
उपयुज्य च षण्मासान् वृद्धोऽपि तरुणायते ।

नागबलायास्तुला वारिद्रोणे पादशेषं यथा भवति तथा पचेत् । तेन नागबलाक्राथेन तुल्यांशं घृतं तथा क्षीरं तथा पलार्धप्रमाणैरतिबलादिभिः कल्कैश्च साधयेत् । एतन्नागबलासर्पिः पित्तरक्तादिकं जयेत् । तथा सुष्टु बलादिकरम् । तच्च वर्णाय हितमायुष्यमोजस्यं वलीपलितघ्नं च । तथा षण्मासानुपयुज्येदं घृतं वृद्धोऽपि तरुण इवाचरति ।

दीप्तेऽग्नौ विधिरेषः स्यान्मंदे दीपनपाचनः ॥१२४॥
यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे ।

दीप्ते समिद्धेऽग्नौ सत्येष विधिः स्यात् । मंदेऽग्नौ दीपनपाचनः यक्ष्मोक्तो राजयक्ष्मण्युक्तः क्षतिनां शस्त उपक्रमः । द्रवे तु शकृति ग्राही उपक्रमः ।

दशमूलं स्वयं गुप्तां शंखपुष्पीं शठीं बलाम्॥१२५॥
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ।
भार्गीं पुष्करमूलं च द्विपलांशान् यवाढकम्॥१२६॥
हरीतकीशतं चैकं जले पंचाढके पचेत् ।
यवस्विन्ने कषायं तं पूतं तच्चाभयाशतम् ॥ १२७ ॥
पचेद्गुडतुलां दत्त्वा कुडवं च पृथग्घृतात् ।
तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥
लेहं द्वे चाभये नित्यमतः खादेद्रसायनात् ।
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ॥ १२९ ॥
पंचकासान् क्षयं श्वासं सहिध्मं विषमज्वरम् ।
मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥ १३० ॥
अगस्तिविहितं धन्यमिदं श्रेष्ठं रसायनम् ।

दशमूलादिपुष्करांतं पृथग्द्विपलप्रमाणम् । यवानामाढकं चतुःषष्टिपलानि । हरीतकीफलानामेकं शतम् । एतत्सर्वं जलस्य पंचाढके पचेत् । यवस्वेदे सति तं कषायं पूतं गालितं तच्च स्विन्नमभयाशतं गुडतुलां दत्त्वा तथा घृततैलपिप्पलीचूर्णानां प्रत्येकं कुडवं दत्त्वा पचेत् । सिद्धे शीते च लेहे माक्षिककुडवं दत्त्वा । अतो लेह्याख्याद्द्रव्याद्रसायनात्सत्रिभागपलद्वयमात्रं द्वे च हरीतक्यौ नित्यं खादेत् । तच्च भुक्तं वलीपलितं हन्यात् । वर्णादिवर्धनं तथा पंचकासादीन् हंति । अगस्त्येन महर्षिणा निर्मितमेतद्रसायनं धन्यं श्रेष्ठम् । अत्र च तैलघृतमधूनां समांशानामप्यविरोधः । पाकाच्छत्तयंतरोत्पत्तेः ।

दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम् ॥ १३१ ॥
पाठाश्वगंधापामार्गस्वगुप्तातिविषामृतम् ।
बालबिल्वं त्रिवृद्दंतीमूलं पत्रं च चित्रकात् ॥१३२॥
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात् ।
बोटस्थविरभल्लातविकंकतशतावरी ॥ १३३ ॥
पूतीकरंजशम्याकचंद्रलेखासहाचरम् ।
सौभांजनकनिंबत्वगिक्षुरं च पलांशकम् ॥ १३४ ॥
पथ्यासहस्रं सशतं यवानां चाढकद्वयम् ।
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ॥ १३५ ॥
पूते क्षिपेत्समथ्ये च तत्र जीर्णगुडात्तुलाम् ।
तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः ॥ १३६ ॥
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च ।
शीते प्रस्थद्वयं क्षौद्रात्पिप्पलीकुडवं क्षिपेत् ॥१३७॥
चूर्णीकृतं त्रिजाताच्च त्रिपलं निखनेत्ततः ।
धान्ये पुराणकुंभस्थं मासं खादेच्च पूर्ववत् ॥ १३८ ॥
रसायनं वसिष्ठोक्तमेतत्पूर्वगुणाधिकम् ।
स्वस्थानां निःपरीहारं सर्वर्तुषु च शस्यते ॥ १३९ ॥

दशमूलादि इक्षुरकांतं पलप्रमाणम् । बोटोऽलंबुसा । स्थविरं शैलीयम् । चंद्ररेखा बाकुची । हरीतकीनामेकादशशतानि । यवानामाढकौ द्वौ । अष्टगुणे जले पचेत् । यवस्वेदे सति चावतारयेत् । तस्मिन् क्राथे पूतें पथ्यासहितां पुराणगुडात्तुलाम् । तैलादीनां पृथक्पृथक् प्रस्थं क्षिपेत् । ततोऽनंतरं पुनः पचेन्मृदौ वह्नौ दर्वीलेपे सत्यवतार्य शीते सति प्रस्थद्वयं क्षौद्रात्पिप्पलीनां चतुष्पलं चूर्णितं त्रिजाताच्च त्रिपलं क्षिपेत् । ततोऽनंतरं पुराणकुंभस्थं घृतरूढस्थं धान्यमध्ये मासं निखनेत् । मासादूर्ध्वं पूर्ववत् खादेत् । एतद्रसायनं वसिष्ठेन कथितम् । अगस्त्यलेहाद्गुणैरधिकं स्वस्थानां निःपरीहारं सर्वर्तुष्विष्यते तंत्रकृद्भिरिति शेषः ।

पालिकं सैंधवं शुंठी द्वे च सौवर्चलात्पले ।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमार्जकम्॥१४०॥
एकैकां मरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके ।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ १४१॥

**कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत् ।**
**रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासजित् १४२**

सैंधवं लवणं पलप्रमाणम् । शुंठी पलप्रमाणा । पालिकामिति पलं परिमाणमस्येति ठक्।पालीकं पालिकी चेति नपुंसकमनपुंसकेनेत्येकशेषः । सौवर्चललवणाच द्वे पले कुडवप्रमाणानि वृक्षाम्लादीनि । आर्जकं कुबेरकं तस्मात्पत्रम् । एकामेकां मरिचाजाज्योश्चतुर्थिकां पलसंज्ञकां धान्यकाद् द्वे चतुर्थिके शर्करापलानि च द्वादशात्र देयानि । तथा च मुनिः । पालिकं सैंधवं शुंठीमित्यारभ्य यावच्छर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् कृत्वा चूर्णमतो मात्रामित्यादि । तस्मादत्राप्ययं ग्रंथो निर्दिष्टो बोध्यः । प्रमादाच्च केचिन्न पठंति । अयं चात्रैवं वक्तिरुच्यते । दीपनमित्यादि । शर्करामंतरेण तु रुच्यत्वमस्य कथमिवोपपद्यते । तस्माद्युक्तोऽत्र शर्कराप्रयोग इति । एतच्चूर्णं कृत्वाऽतोऽस्माच्चूर्णान्मात्रां यथोचितामन्नपानेषु दापयेद्वैद्य इति शेषः । एतच्चूर्णं रुच्यं दीपनं बल्यं पार्श्वाद्यार्तिजित् ।

**एकां षोडशिकां धान्याद् द्वे द्वे वाऽजाजिदीप्यकात्।**
**ताभ्यां दाडिमवृक्षाम्लैर्द्विर्द्विसौवर्चलात्पलम् १४३**
**शुंठ्याः कर्षं दधित्थस्य मध्यात्पंच पलानि च ।**
**तच्चूर्णं षोडशपलैः शर्कराया विमिश्रयेत् ॥ १४४ ॥**
**खांडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ।**

धान्यकादेकां षोडशिकां कर्षसंज्ञाम् । अजाजीदीप्यकाद् द्वे द्वे षोडशिके ताभ्यामजाजीदीप्यकाभ्यां मिश्रिताभ्यां सकाशाद् दाडिमवृक्षाम्लैर्द्विर्द्विः प्रत्येकं चतस्रः षोडशिका इत्यर्थः । एवमष्टौ कर्षा दाडिमस्य अष्टौ वृक्षाम्लस्य । तथा सौवर्चलात् पलं शुंठ्याः कर्षं कपित्थस्य मज्जतः पंचपलानि । तदेव चूर्णं शर्करायाः षोडशपलैः संमेलयेत् । अयं खांडवोऽन्नपानेषु पूर्ववत् प्रदेयः स्यात् । अर्होर्थे कृत्यः । केचित् षोडशिकां पलमित्याहुः ।

**विधिश्च यक्ष्मविहितो यथावस्थं क्षते हितः ॥१४५॥**

क्षते चावस्थावशाद्यक्ष्मणि यो विहितो विधिः स हितः ।

**निवृत्ते क्षतदोषे तु कफे वृद्धे उरः शिरः ।**
**दाल्यते कासिनो यस्य स धूमानापिबेदिमान् १४६**

क्षतदोषे च निवृत्ते शांते सति कफे वृद्धे यस्य कासवतः पुंस उरः शिरश्च दाल्यते पाट्यत इव स कासी धूमानिमान् द्विमेदादीनां पिबेत् ।

**द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते ।**
**वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः ॥ १४७ ॥**

द्विमेदादिभिः कल्कैः क्षौमे सुभाविते वर्तिं कृत्वा धूमं पिबेत् । जीवनीयाख्यं घृतमनु पश्चात् पिबेत् ।

**मनःशिलापलाशाजगंधात्वक्क्षीरनागरैः ।**
**तद्वदेवाऽनुपानं तु शर्करेक्षुगुडोदकम् ॥ १४८ ॥**

मनःशिलादिभिस्तद्वदेव द्विमेदादिभिर्यथा धूमं पिबेत् । अनु शर्करोदकमिक्षुरसं गुडोदकं वा पिबेत् । उदकसाहचर्यादिक्षुरसोऽपीक्षूदकशब्देन गृहीतः ।

**पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशृंगया ।**
**ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनम् ॥ १४९ ॥**

मनःशिलामार्द्रया वटशृंगया तुल्यां पिष्ट्वा सह सर्पिषा धूमं सतित्तिरिप्रतिभोजितं पिबेत् ।

**क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम् ।**
**बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम् ॥ १५० ॥**

क्षयजे कासे पूर्वोक्तं बृंहणं कुर्यादग्निसंदीपनं च । बहुदोषाय प्रभूतदोषाय क्षयकासिने स्नेहेन सह मृदु विरेचनं दद्यात् ।
तदेवाह ।

**शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ।**
**तिल्वकस्य कषायेण विदारीस्वरसेन च ॥ १५१ ॥**
**सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ।**

शम्याकेनाऽथवा त्रिवृतया द्राक्षारसयुक्तया तिल्वकस्य कषायेण विदारीस्वरसेन च सर्पिः सिद्धं युक्त्या देशकालादिबलेन क्षीणदेहो विशोधनं पिबेत् ।

**पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान्॥१५२॥**
**घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ।**

पित्ते क्षीणे कफादिषु च क्षीणेषु क्षयकासी कर्कटक्यादिपक्वं घृतं पिबेत् ।

**विदारीभिः कदंबैर्वा तालसस्यैश्च साधितम्॥१५३॥**
**घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ।**

विदारीभिरिति बहुवचनं क्षीरविदार्यादिव्यक्तिविशेषाणां ग्रहणार्थम् । एवं कदंबैरित्यत्राऽपि धाराकदंबादिग्रहणार्थम् । जातौ बहुवचनमित्यन्ये । तालसस्यैस्तालफलैर्वा साधितं घृतं पयो वा पिबेत् । मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे सति ।

**शूने सवेदने मेढ्रे पायौ सश्रोणिवंक्षणे ॥ १५४ ॥**
**घृतमंडेन लघुनाऽनुवास्यो मिश्रकेण वा ।**

तथा मेढ्रे शूने सवेदने पायौ श्रोण्यां वंक्षणे चैवंविधे सति नरो लघुना घृतमंडेनानुवास्यः । मिश्रकेण वा घृततैलेनानुवास्यः ।

**जांगलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः ॥१५५॥**
**क्रमशः प्रसहास्तद्वत्प्रयोज्याः पिशिताशिनः ।**
**औष्ण्यात्प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयंति ते१५६**
**कफं शुद्धैश्च तैः पुष्टिं कुर्यात्सम्यग् वहन् रसः ।**

अनुवासनानंतरं जांगलैर्मांसैर्हरिणैणाजादिभिः । तदभावात्तत्सदृशैरपि । प्रतिभुक्तस्यानंतरं तथैव पिशिताशिनः प्रसहा द्वीपिव्याघ्रादयः प्रयोज्याः । नानुवासितमात्रस्य जांगलमांसप्रतिभुक्तस्यैव प्रसहाः पिशिताशिनश्च योज्याः । अग्निमांद्यभयात् । ते

प्रसहाः प्रमाथिभावात्तथौष्ण्यात्कफोपलिप्तेभ्यः स्रोतोभ्यः कफं च्यावयंति । प्रमाथिद्रव्यलक्षणं च खारणादे गदितम् । तथा । स्रोतांसि दोषलिप्तानि प्रमथ्य विवृणोति यत् । प्रविश्य सौक्ष्म्यात्तैक्ष्ण्याच्च तत्प्रमाथीति संज्ञितम् । तैश्च स्रोतोभिः शुद्धैः सम्यग्वहन् रसः पुष्टिं कुर्यात् ।

**चविकात्रिफलाभार्गीदशमूलैः सचित्रकैः ॥ १५७॥**
**कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ।**
**शृतैर्नागरदुःस्पर्शापिप्पलीशठिपौष्करैः ॥ १५८ ॥**
**पिष्टैः कर्कटशृंग्या च समैः सर्पिर्विपाचयेत् ।**
**सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पंचलवणानि च१५९**
**दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ।**

चविकादिभिर्जले शृतैर्नागरादिभिः पिष्टैः समैः सर्पिर्विपाचयेत् । सिद्धेऽस्मिन् घृते क्षारौ द्वौ पंच सैंधवादीनि लवणानि च दत्त्वा मात्रां प्रकृतत्वात् घृतस्य पिबेत्कफकासार्तः पुरुषः ।

**कासमर्दाभयामुस्तापाठाकट्फलनागरैः ॥ १६० ॥**
**पिप्पल्या कटुरोहिण्या काश्मर्या स्वरसेन च ।**
**अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ॥ १६१ ॥**
**पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ।**

कासमर्दादिभिरक्षप्रमाणैः क्षीरद्राक्षारसयोर्मिश्रितयोराढकयो रसाढके घृतप्रस्थं पचेत् । शोषादिहरं शिवं चारोग्यकरम् ।

**वृषव्याघ्रीगुडूचीनां पत्रमूलफलांकुरान् ॥ १६२ ॥**
**रसकल्कैर्घृतं पक्वं हंति कासज्वरारुचीः ।**

वृषादीनां प्रत्येकं पत्रमूलफलांकुरान् रसकल्कैः पक्वं घृतं कासादीन्हरति ।

**द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतम् ॥१६३॥**
**पिबेदुपरिभुक्तस्य यवक्षारघृतं नरः ।**
**पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतम् ॥ १६४॥**

अथवा दाडिमस्वरसे द्विगुणे व्योषकल्कसंयुतं सिद्धं घृतं भुक्तस्याहारस्योपरि यवक्षारयुतं पिबेत् । पिप्पलीगुडाभ्यां वा चतुर्गुणे घृते घृताच्चतुर्गुणे जले घृतसमे छागक्षीर इति पक्वं पिबेत् ।

**एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ।**
**स्युर्दोषबद्धः कंठोरःस्रोतसां च विशुद्धये ॥ १६५ ॥**

एतानि पूर्वोक्तानि चव्यादिभिर्विपक्वानि घृतान्यग्निवर्धनानि क्षयकासिनां स्युः । दोषोपलिप्तकंठोरःस्रोतसां च विशुद्धये स्युः ।

**प्रस्थोन्मिते यवक्वाथे विंशतिर्विजयाः पचेत् ।**
**स्विन्ना मृदित्वा तास्तस्मिन्पुराणात्पट्पलं गुडात् ॥**
**पिप्पल्या द्विपलं कर्षं मनोह्वाया रसांजनात् ।**
**दत्त्वार्धाक्षं पचेद्भूयः स लेहः श्वासकासनुत् १६७**

यवक्वाथे प्रस्थप्रमाणे हरीतकीर्विंशतिं पचेत् । स्विन्नास्ता हरीतकीस्तस्मिन् यवक्वाथे मृदित्वा पुराणाद् गुडात् पट्पलं पिप्पल्या द्विपलं कर्षं मनःशिलाया रसांजनादर्धकर्षं दत्त्वाऽस्मिन्क्वाथे पुनः पचेत् । स लेहः श्वासकासजित् ।

**श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।**
**श्वासकासहरा बर्हिपादौ वा मधुसर्पिषा ॥ १६८॥**
**एरंडपत्रक्षारं वा व्योषतैलगुडान्वितम् ।**
**लेहयेत् क्षारमेवं वा सुरसैरंडपत्रजम् ॥ १६९ ॥**
**लिह्यात् त्र्यूपणचूर्णं वा पुराणगुडसर्पिषा ।**
**पद्मकं त्रिफला व्योषं विडंगं देवदारु च ॥ १७० ॥**
**बला रास्ना च तच्चूर्णं समस्तं समशर्करम् ।**
**खादेन्मधुघृताभ्यां च लिह्यात्कासहरं परम् १७१**
**तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ।**

श्वाविधां संबंधिभ्यः सूचयो दग्धा घृतक्षौद्रशर्करान्विताः श्वासकासहराः । बर्हिणो मयूरस्य वा पादौ दग्धौ मधुसर्पिषा सह श्वासकासहरौ । अथवा एरंडपत्रस्य क्षारं व्योषतैलगुडयुतं लेहयेत् । एवं पूर्वोक्तेन प्रकारेण सुरसैरंडपत्रजं क्षारं व्योषतैलगुडान्वितं लेहयेत् । अथवा त्र्यूषणचूर्णं पुराणगुडसर्पिषा लिह्यात् । पद्मकादीनां समस्तं चूर्णं समशर्करम् । पद्मकादीनां चूर्णमेकतः । एकतः शर्कराचूर्णम् । तदुभयं संयोज्य खादेद्भक्षयेत् । अथवा समशर्करमेव मधुघृताभ्यां मिश्रयित्वा लिह्यात् । तथैव मरिचचूर्णं घृतक्षौद्रशर्करायुतं खादेद्वा लिह्यात् ।

**पथ्याशुंठीघनगुडैर्गुटिकां धारयेन्मुखे ॥ १७२ ॥**
**सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ।**

पथ्याशुंठीघनगुडैर्गुटिकां मुखे धारयेत्सर्वेष्वेव श्वासकासेषु केवलं वा बिभीतकं मुखे धारयेदिति योज्यम् ।

**पत्रकल्कं घृतभृष्टं तिल्वकस्य सशर्करम् ॥ १७३ ॥**
**पेया वोत्कारिका छर्दितृट्कासामातिसारनुत् ।**

पत्रकल्कं तिल्वकस्य घृते भृष्टं सशर्करं छर्दितृडादिजित् । पेया वा पत्रस्य कल्के सिद्धा तद्वत् । अथवोत्कारिका पत्रकल्ककृता छर्द्यादिजित् ।

**कंटकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ॥ १७४ ॥**
**सगौरामलकः साम्लः सर्वकासभिषग्जितम् ।**

कंटकार्याः क्वाथे मुद्गयूषः संस्कृतो हिंगुसैंधवादिना सह गौरामलकैर्वर्तत इति सगौरामलकान्वितः । तथा सहाम्लैर्दाडिमादिभिर्वर्तत इति साम्लः । सुसंस्कृत आर्द्रकनागरघृतादिभिः शोभनं कृत्वा संस्कृत इत्युक्तम् । सर्वकासेषु भिषग्जितमौषधम् ।

**वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि ॥ १७५॥**
**वैष्किरान् प्रातुदान् बैलान् दापयेत्क्षयकासिने ।**

वातघ्नौषधानां निःक्वाथे सिद्धं क्षीरमथवा यूषान् रसांश्च वि-

ष्किरमांसजान्प्रतुदजान् वा । तथा बिलेषु भवा बैलाः प्राणिनस्तेषां रसान् क्षयकासिने वैद्यो दापयेत् ।

**क्षतकासे च ये धूमाः सानुपाना निदर्शिताः॥१७६॥**
**क्षयकासेऽपि ते योज्या वक्ष्यंते यच्च यक्ष्मणि ।**
**बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम्॥१७७॥**
**व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ।**

क्षतकासे च ये धूमा द्विमेदेत्यादयः सानुपाना उक्तास्ते च क्षयकासेऽपि योज्याः । यच्च यक्ष्मणि वक्ष्यते बृंहणमग्निदीपनं स्रोतोविशोधनं तच्च क्षयकासेषु योज्यम् । तथा क्षयकासिभ्यो व्यत्यासेन सर्वं चिकित्सितं बल्यं प्रशस्यते ।

**सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।**
**यथा दोषबलं तस्य संनिपातहितं हितम् ॥ १७८ ॥**

सन्निपातोद्भवः क्षयकासो घोरो दारुणो यतो भवति तस्माद् यथा दोषबलं तस्य यत्सन्निपाते हितं तदत्र हितमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कासचिकित्सितं नाम तृतीयोऽध्यायः३

---

## चतुर्थोऽध्यायः।

कासचिकित्सितानंतरं श्वासहिध्माचिकित्सितं व्याख्यास्यामः । संबंधोऽत्र निदान एवोक्तः ।

**अथाऽतः श्वासहिध्माचिकित्सितं व्याख्यास्यामः ।**
**श्वासहिध्मा यतस्तुल्यहेत्वाद्याः साधनं ततः ॥१॥**
**तुल्यमेव**

यस्मात् श्वासहिध्मास्तुल्यहेत्वाद्याः । आदिग्रहणात्प्राग्रूपादयो गृह्यंते । निदानेप्युक्तम् । श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रया इति। ततस्तस्माद्धेतोः साधनं चिकित्सितं श्वासहिध्मायास्तुल्यमेव विहितम् ।

**तदार्तं च पूर्वं स्वेदैरुपाचरेत् ।**
**स्निग्धैर्लवणतैलाक्तं तैः खेषु ग्रथितः कफः ॥ २ ॥**
**सुलीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ।**
**स्रोतसां स्यान्मृदुत्वं च मारुतस्यानुलोमता ॥३॥**

तदार्तं श्वासहिध्मातुरं पूर्वमुपक्रमेभ्यः सर्वेभ्योऽपि प्राक् स्वेदैरुपाचरेत् । किंभूतैः । स्निग्धैर्न रूक्षैर्वातकोपभयात् । किंभूतम् । लवणान्वितेन तैलेनाभ्यक्तम् । किमेवं सति स्यादित्याह । तैस्तैः स्वेदैः खेषु स्रोतःसु योऽस्य श्वासहिध्मावतो ग्रथितः पिंडितः कफः सुलीनोऽप्यतिशयेन श्लिष्टोंऽतर्भूतो नीयते कर्तव्यतया विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः स्यात् । सुखेन निर्हर्तुं शक्यते । तथा स्रोतसां वायुस्तब्धानां मृदुत्वं च स्यात् । मारुतश्चानुलोमता स्वमार्गगामित्वं स्यात् ।

**स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः ।**
**दध्युत्तरेण वा दद्यात्ततोऽस्मै वमनं मृदु ॥ ४ ॥**

**विशेषात्कासवमथुहृद्ग्रहस्वरसादिने ।**
**पिप्पलीसैंधवक्षौद्रयुक्तं वाताविरोधि यत् ॥ ५ ॥**

स्विन्नं च संतमातुरं स्निग्धं शाल्यादिकं न रूक्षं यवादिजमानूपजैः सूकरादिमांसजै रसैः सह भोजयेत् । अथवा स्वेदानंतरमस्मै श्वासहिध्मावते दध्युत्तरेण दधिसारेण वमनं मृदु दद्यात् । विशेषेण कासादिवेत वमनं दद्यात् । तच्च वमनं पिप्पलीसैंधवक्षौद्रयुक्तं वातादिविरोधि वातं न करोति यत्तद्द्यात् ।

**निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।**
**स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥ ६ ॥**

निर्हृते कफेऽसौ श्वासहिध्मावान् सुखमश्नुते । छर्दिवृत्तेः । किंभूते कफे । दुष्टो विग्रहः शरीरं येन तस्मिन् । तथा स्रोतःसु विशुद्धेषूपलेपादिरहितेषु वायुरविहतो न केनचिद्रुद्धगतिः स्रोतःसु चरति ।

**ध्मानोदावर्ततमके मातुलिंगाम्लवेतसैः ।**
**हिंगुपीलुबिडैर्युक्तमन्नं स्यादनुलोमनम् ॥ ७ ॥**
**ससैंधवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ।**

ध्मानमानाहः । उदावर्तः शकृदादीनामप्रवृत्तिः । तमकः श्वासविशेषः । ध्मानं चोदावर्तश्च तमकश्च ध्मानोदावर्ततमकं तस्मिन्प्रकृतत्वात् तथाविधे हिध्माश्वासवति मातुलुंगाद्यैस्तथा हिंगुपीलुबिडैर्युक्तमन्नमनुलोमकारि स्यात् । अथवाऽस्यामवस्थायां सैंधवेन सह फलाम्लं फलेन वातानुलोमनेन बीजपूरादिनाम्लमम्लीकृतं कोष्णमीषदुष्णं विरेचनं दद्यात् स्रोतःशुद्ध्यर्थम् ।

किमेवं क्रियत इत्याह ।

**एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ॥ ८ ॥**
**तस्मात्तन्मार्गशुद्ध्यर्थमूर्ध्वाधः शोधनं हितम् ।**

यस्मादेते हिध्माश्वासाः । कफेन संरुद्धा गतिर्यस्य स एवं कफसंरुद्धगतिः प्राणः श्वासस्तस्य प्रकोपस्ततो जाताः । यत एवं तस्माद्धेतोस्तन्मार्गशुद्ध्यर्थं तस्य प्राणस्य वायोर्मार्गविशुद्धिनिमित्तमूर्ध्वमधश्च शोधनं हितम् ।

एतच्च दृष्टांतद्वारेण स्पष्टयति ।

**उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ॥ ९ ॥**
**यथाऽनिलस्तथा तस्य मार्गमस्माद्विशोधयेत् ।**

यथा मार्गस्य रोधाज्जलं वहत् भृशतरं सुतरामुदीर्यते वृद्धिं याति । तथाऽनिलः स्वभावतो वहन्मार्गरोधान्मार्गस्यावरणाद्भृशतरमुदीर्यते वृद्धिं याति तस्य वायोर्मार्गमस्मात् यथोक्तात्कारणाद्विशोधयेत् ।

**अशांतौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत् ॥ १० ॥**

पूर्वस्यां क्रियायां कृतायामप्यशमे सति । कृतसंशुद्धेः श्वासहिध्मातस्य लीनं सूक्ष्मस्रोतःश्लिष्टं मलं कफाख्यं धूमैर्वक्ष्यमाणैर्हरेत् ।

**हरिद्रापत्रमेरंडमूलं द्राक्षां मनःशिलाम्।**
**सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ॥ ११ ॥**
**तां घृताक्तां पिबेद्धूमं यवान्वा घृतसंयुतान्।**
**मधूच्छिष्टं सर्जरसं घृतं वा गुरु वाऽगुरु ॥ १२ ॥**
**चंदनं वा तथा शृंगं बालान्वा स्नाव वा गवाम्।**
**ऋक्षगोधकुरंगैणचर्मशृंगखुराणि वा ॥ १३ ॥**
**गुग्गुलुं वा मनोह्वां वा शालनिर्यासमेव वा।**
**शल्लकीं गुग्गुलुं लोहं पद्मकं वा घृतप्लुतम् ॥ १४ ॥**

हरिद्रादीनि पिष्ट्वा जलेन वर्तिं प्रकल्पयेत्। तां वर्तिं घृताक्तां कृत्वा धूमं पिबेत्सामर्थ्यादग्निप्लुष्टाम्। अथवा यवान् घृताक्तान् धूमं पिबेत्। मधूच्छिष्टं सिक्थकं सर्जरसं घृतं वा एकीकृत्य धूमं पिबेत्। अथवा गुरु श्रेष्ठमगरु कृष्णागरुधूमं पिबेत्। अथवा चंदनम्। अथवा गवां शृंगं धूमं पिबेत्। अथवा स्नावजान् गलकंबलजातान् बालान् रोमाणां धूमं पिबेत्। ऋक्षादीनां चर्मादीनां वा धूमं पिबेत्। स्नाव वा स्नायुर्वा गवाम् धूमं पिबेत्। सामर्थ्यादग्निप्लुष्टम्। खुरशब्दस्यार्धर्चादित्वान्नपुंसकत्वम्। गुग्गुलुं वा। अथवा मनःशिलां शालनिर्यासं धूमं वा पिबेत्। शल्लक्यादिघृतप्लुतं वा।

**अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम्।**
**स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः ॥ १५ ॥**
**उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः।**
**उरः कंठं च मृदुभिः सामे त्वामविधिं चरेत् ॥१६॥**

अवश्यं स्वेदनीयानां तथा स्वेदार्हाणामपि क्षणमुरः कंठं च मृदुभिः स्वेदैः स्वेदयेत्। कैः सशर्कराक्षीरैः सुखोष्णैः स्नेहसेचनैः। तथा स्वेदाध्याये यान्युक्तानि द्रव्याणि तत्कृतैरुत्कारिकोपनाहैश्च स्वेदयेत्। सामे च श्वासे हिध्मावत्यामविधिं लंघनपाचनादिकं चरेन्निरामीकरणाय।

**अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः।**
**स्निग्धै रसाद्यैर्नात्युष्णैरभ्यंगैश्च शमं नयेत् ॥ १७ ॥**

अतियोगाद्वमनविरेचनयोर्नराणामुद्धतं वातं दृष्ट्वा पवननाशनैः स्निग्धै रसाख्यैर्मांसरसघृतक्षीरादिभिराहारैस्तथा किंचिदुष्णैरभ्यंगैश्च शमं नयेत्।

**अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात्।**
**वायुर्लब्धास्पदो मर्मसंशोष्याशु हरेदसून् ॥ १८ ॥**

अनुत्क्लिष्टकफानामस्विन्नानां दुर्बलानां च हि शोधनाद्धेतोः पवनो लब्धास्पदः सन् व्यवस्थानाश्रयवशादासादितसामर्थ्योऽत एव लब्धास्पदः। शोषणस्वभावत्वाद् मर्म हृदयाख्यं संशोष्य शीघ्रमसून् हरेत्। तस्मादेवंविधान् हिध्माश्वासवतो न शोधयेत्। अतोऽन्यथाभूतांश्च शोधयेदित्यर्थादुक्तं भवति। तथा च तेषां संशोधनादारोग्यं संपद्यते।

अनुत्क्लिष्टकफादीनां शोधनायोग्यानां तर्हि किं कार्यमित्याह।

**कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः।**

यतो यस्मात्ते संशोधनायोग्यास्तस्मात्तेषां कषायादिः संशमयेच्छ्वासहिध्मा इति शेषः।

**क्षीणक्षतातिसारासृक् पित्तदाहानुबंधजान् ॥१९॥**
**मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत्।**

क्षीणक्षतातिसारासृक् पित्तदाहानुबंधजान् मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत्।

**कुलत्थदशमूलानां क्वाथे स्युर्जांगला रसाः ॥ २० ॥**
**यूषाश्च**

कुलत्थदशमूलानां क्वाथे जांगलरसा यूषाश्च स्युः।

**शिग्रुवार्ताककासघ्नवृषमूलकैः।**
**पल्लवैर्निंबकुलकबृहतीमातुलिंगजैः ॥ २१ ॥**
**व्याघ्रीदुरालभाशृंगीबिल्वमध्यत्रिकंटकैः।**
**पेया च चित्रकाजाजीशृंगीसौवर्चलैः कृता ॥ २२॥**
**दशमूलेन वा कासश्वासहिध्मारुजापहा।**

पेया च चित्रकादिभिः कृताऽथवा दशमूलेन कृता सा च कासादिहरा।

**दशमूलशठीरास्नाभार्गीबिल्वर्धिपुष्करैः ॥ २३ ॥**
**कुलीरशृंगीचपलातामलक्यमृतौषधैः।**
**पिबेत्कषायं जीर्णेऽस्मिन्पेयां तैरेव साधिताम्॥२४॥**

दशमूलादिभिः कषायं पिबेत्। अस्मिन्कषाये परिणते तैरेव दशमूलादिभिः साधितां पेयां हिध्माश्वासी पिबेत्।

**शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक्।**
**कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशांतये ॥ २५ ॥**

तथा शाल्यादिभुक् स्यात्कासादिशांत्यर्थम्।

**सक्तून् वार्कांकुरक्षीरभावितानां समाक्षिकान्।**
**यवानां दशमूलादि निक्वाथलुलितान् पिबेत्॥ २६॥**

अथवाऽर्कांकुरक्षीरभावितानां यवानां संबंधिनः सक्तून् समाक्षिकान् दशमूलशठीरास्नादीनामनन्तरोक्तानां क्वाथेनालोडितान्निर्यूहान्वितान्पिबेत्।

**अन्ने च योजयेत् क्षारं हिंग्वाज्यबिडदाडिमान्।**
**सपौष्करशठीव्योषमातुलिंगाम्लवेतसान् ॥ २७ ॥**

अन्न आहारे च क्षारादीन् योजयेत्।

**दशमूलस्य वा क्वाथमथवा देवदारुणः।**
**पिबेद्वा वारुणीमंडं हिध्माश्वासी पिपासितः॥ २८॥**

हिध्माश्वासवान् पिपासितो दशमूलस्य क्वाथं देवदारुणो वाऽथवा वारुणीमंडं पिबेत्।

**पिप्पलीपिप्पलीमूलपथ्याजंतुघ्नचित्रकैः ।**
**कल्कितैर्लेपिते रूढे निःक्षिपेद्घृतभाजने ॥ २९ ॥**
**तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित् ।**

पिप्पल्यादिभिः कल्कितैर्लेपिते घृतभाजने रूढे शुष्के तक्रं निःक्षिपेत् । तच्च तक्रं मासस्थितं दीपनं श्वासकासजित् ।

**पाठां मधुरसां दारु सरलं निशि संस्थितम् ॥ ३०॥**
**सुरामंडेऽल्पलवणं पिबेत्प्रसृतिसंमितम् ।**
**भार्गीशुंठ्यौ सुखांभोभिः क्षारं वा मरिचान्वितम्३१**
**स्वक्वाथपिष्टां लुलितां बाष्पिकां पाययेत वा ।**

पाठादिकं सुरामंडे निशि स्थितं किंचिल्लवणं प्रसृतिसंमितं पलद्वयमात्रं पिबेत् । अथवा भार्गीशुंठ्यावुष्णांबुना पिबेत् । यवक्षारं मरिचयुक्तं वा । बाष्पिकां हिंगुपत्रिकां हिंगुपत्रक्वाथेन पिष्टां तेनैवालोडितां वा पाययेत् ।

**स्वरसः सप्तपर्णस्य पुष्पाणां वा शिरीषतः ॥३२ ॥**
**हिध्माश्वासे मधुकणायुक्तः पित्तकफानुगे ।**

सप्तपर्णस्याऽयुग्मच्छदस्य स्वरसः शिरीषात् पुष्पाणां वा स्वरस एतौ मधुकणायुतौ पित्तकफानुगे हिध्माश्वासे सति पाययेत् ।

**उत्कारिकातुगाकृष्णामधूलीघृतनागरैः ॥ ३३ ॥**
**पित्तानुबंधे योक्तव्या पवने त्वनुबन्धिनि ।**
**श्वाविच्छशामिषकणाघृतशल्यकशोणितैः ॥ ३४ ॥**

पित्तानुबंधिनि हिध्माश्वासे तुगादिभिरुत्कारिका योज्या । मधूली जलजा मधुयष्टी गोधूमविशेषो वा । पवने पुनरनुबंधिनि चतुर्गुणांबुसिद्धं वा पयच्छागं सगुडनागरं हिध्माश्वासे वातपित्तानुबंधिनि सति सुवर्चलारसादिभिः सिद्धं पयोनुशाल्योदनं भुक्त्वा पश्चात् क्षीरं पेयम् । गव्यं छागं वा देशसात्म्यादिवशात् । अथवा चतुर्गुणांबुसिद्धं छागं क्षीरं सहगुडनागरं पिबेत् ।

**पिप्पलीमूलमधुकगुडगोश्वशकृद्रसान् ।**
**हिध्माभिस्पंदकासघ्नान् लिह्यान्मधुघृतान्वितान् ॥**

पिप्पलीमूलादीन्मधुघृतान्वितान् संमिश्र्य हिध्माभिष्यंदकासघ्नान् लिह्यात् ।

**गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसम् ।**
**समध्वेकैकशो लिह्याद्बहुश्लेष्माऽथवा पिबेत् ॥३६॥**
**चतुष्पाच्चर्मरोमास्थिखुरशृंगोद्भवां मषीम् ।**
**तथैव वाजिगंधाया लिह्यात् श्वासी कफोल्बणः ३७**
**शठीपुष्करधात्रीर्वा पौष्करं वा कणान्वितम् ।**
**गैरिकांजनकृष्णां वा स्वरसं वा कपित्थजम् ॥ ३८ ।**
**रसेन वा कपित्थस्य धात्रीसैंधवपिप्पलीः ।**
**घृतक्षौद्रेण वा पथ्याविडंगोषणपिप्पलीः ॥ ३९ ॥**
**कोललाजामलद्राक्षापिप्पलीनागराणि वा ।**
**गुडतैलनिशाद्राक्षाकणारास्नोपणानि वा ॥ ४० ॥**
**पिबेद्रसांबुमद्याम्लैर्लेह्यौषधरजांसि वा ।**

गोगजादीनां शकृद्रसं बहुकफः समाक्षिकमेकैकशो लिह्यात् । अथवा पिबेत् । अथवा चतुष्पदां चर्मादिजां मषीं पिबेत् । श्वासी कफाधिकेऽश्वगंधायाश्च मषीं तद्वन्मधुना लिह्यात् । शठीपौष्करादीन्वा मधुना लिह्यात् । पौष्करं सकणं वा लिह्यात् । गैरिकादीन्वा लिह्यात् कपित्थजं स्वरसं वा । कपित्थस्वरसेन धात्र्यादीन् लिह्यात् । पथ्याविडंगादीन् घृतक्षौद्रेण वा लिह्यात् । कोलादीन्वा पूर्ववल्लिह्यात् । गुडादीन्वा । अथवा लेह्यस्यागस्त्यादेरौषधानां चूर्णानि मांसरसादिभिः पिबेत् ।

**जीवंतीमुस्तसुरसत्वगेलाद्वयपौष्करम् ॥ ४१ ॥**
**चंडातामलकीलोहभार्गीनागरवालकम् ।**
**कर्कटाख्या शठी कृष्णा नागकेसरचोरकम् ॥ ४२ ॥**
**उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम् ।**
**पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ॥ ४३ ॥**

जीवंत्यादिकं चूर्णं भुक्तं पार्श्वरुगादिघ्नं सुष्ठु हिध्मादिहरम् । लोहमगुरु ।

**शठी तामलकी भार्गी चंडावालकपौष्करम् ।**
**शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ॥ ४४ ॥**

शठ्यादिकं चूर्णं पूर्वगुणम् ।

**तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ।**

तुल्यां सगुडशुंठीं च भक्षयेन्नस्यं वा दद्यात् ।

**लशुनस्य पलांडोर्वा मूलं गृंजनकस्य वा ॥ ४५ ॥**
**चंदनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ।**
**स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा ॥ ४६ ॥**

लशुनादीनां मूलं पिष्ट्वा नारीक्षीरेण पृथङ्नावनं च स्यात् । हिध्माश्वासार्ताय चंदनाद्वा रसं नारीक्षीरेण सह नस्यं दद्यात् । मक्षिकाविष्ठां स्तन्येन सह नस्यं दद्यात् । अलक्तकरसेन वा ।

**कणासौवर्चलक्षारवयस्थाहिंगुचोरकैः ।**
**सकायस्थैर्घृतं मस्तु दशमूलरसे पचेत् ॥ ४७ ॥**
**तत्पिबेज्जीवनीयैर्वा लिह्यात्समधु साधितम् ।**

कणादिभिः कल्कैर्मस्तु दशमूलरसे स्नेहपानविध्युक्तपरिभाषामाश्रित्य घृतं पक्त्वा हिध्माश्वासार्तः पिबेत् । जीवनीयैर्वा द्रव्यैः कल्कैर्घृतं पक्त्वा समाक्षिकं लिह्यान्न पिबेत् । विषयभेदादेवं कार्यम् । अथवा वस्तुस्वभावादेकस्मिन्नपि विषये कणादिभिः पक्वं घृतं पीतं हिध्माश्वासार्तानामारोग्याय । जीवनीयैः पुनः कल्कैः पक्वं घृतं लीढं तेषामारोग्यायेति ।

**तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ ४८ ॥**
**भूतिकं पौष्करं मूलं पलाशश्चित्रकः शठी ।**
**पटुद्वयं तामलकी जीवंती बिल्वपेशिका ॥ ४९ ॥**

**वचापत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत् ।**
**हिंगुपादैर्घृतप्रस्थं पीतमाशु निहंति तत् ॥ ५० ॥**
**शाखानिलार्शो ग्रहणी हिध्मा हृत्पार्श्ववेदनाः ।**

तेजोवत्यादिभिः कल्कैः कर्षांशैर्हिंगुपादैर्हिंगुतः पादश्चतुर्थांशो येषां तैरेवंविधैर्घृतं पचेत् । तत्पीतं दुष्टकफावृतस्रोतसां प्रमाथितया तेषां विवृतत्वमुत्पादयन् शाखानिलादीन्हंति ।

**अर्धांशेन पिबेत्सर्पिः क्षारेण पटुनाऽथवा ॥ ५१ ॥**
**धान्वंतरं वृषघृतं दाधिकं हपुषादि वा ।**

धान्वंतरादिघृतस्यार्धांशेन क्षारेण । अथवा पटुना लवणेन वार्धांशेन सर्पिः पिबेत् । धान्वंतरं प्रमेहोक्तम् । वृषघृतं रक्तपित्तोक्तम् । दाधिकं गुल्मोक्तम् । हपुषादिकमुदरोक्तम् ।

**शीतांबुसेकः सहसा त्रासविक्षेपभीशुचः ॥ ५२ ॥**
**हर्षेर्ष्योच्छ्वाससंरोधा हितं कीटैश्च दंशनम् ।**

सहसा झटित्येवाज्ञातसेकस्यैव हिध्माश्वासार्तस्य शीतांबुना सेको हितः । त्रासश्चित्तस्योद्वेगकृत्कर्म । विक्षेपोऽवधूननम् । भीर्भयम् । शुक्शोकश्चेतसः संतापः । त्रासादयश्चतस्रस्तामसगुणोद्भवाः । ईर्ष्या असूया परगुणासहिष्णुता रजोगुणादयः । तथा श्वासस्य रोधः । एते च सर्वे हिध्माश्वासार्ताय हिताः । तथा कीटैः पिपीलिकादिभिस्तस्मिन् दंशनं हितम् । वातवेगविघाताय ।

एवं हिध्माश्वासानां विशेषेण चिकित्सामुक्त्वा सामान्येनाह ।

**यत्किंचित्कफवातघ्नमुष्णं वातानुलोमनम् ।**
**तत्सेव्यं प्रायशो यच्च सुतरां मारुतापहम् ॥ ५३ ॥**

यत्किंचिदाहारविहारौषधादिकं कफवातौ पृथक् सहितौ वा निहंति तत्कफवातघ्नम् । तथोष्णं न शीतं कफवातघ्नं हि प्रायेणोष्णमेव भवति । उष्णमिति यदिह तदतिशयेनोष्णं नत्वीषदुष्णमिति प्रतिपादनार्थम् । तथा वातानुलोमनं कफवातघ्नत्वेनैव वातानुलोमकारित्वे लब्धे प्राधान्येन वातप्रतिपक्षेण स्निग्धेन यद्युक्तं तद्धिध्माश्वासार्तैः सेव्यम् ।

किमित्येवं क्रियत इत्याह ।

**सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ।**
**नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्षणे ॥५४॥**
**शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ।**

सर्वेषां हिध्माश्वासार्तानां हि यस्माद् बृंहणे विधीयमाने कदाचिद्दैववशाद् यो यो रोगाधिक्यमन्यरोगप्रादुर्भावो वा भवेत् स प्रायशोऽल्पस्तथा शक्यः साधयितुं सुखसाध्यः । तथा तेषां शमने भेषजादौ क्रियमाणेऽपायो यदि दैवात्स्यात् स नात्यर्थं नातिशयेन किं तर्हि मध्यमया वृत्त्या हिध्माश्वासशांत्यर्थम् । कर्षणे भिषजा क्रियमाणे यो रागो जायते स भृशो दुःसहोऽत एवाशक्यः साधयितुं न शक्यते । यत एवं कर्षणे भृशोऽशक्यश्चापायो भवति । अतोऽस्मात्कारणाद् हिध्माश्वासान् भूयिष्ठं बाहुल्येन शमनैर्भेषजाद्यैस्तथा बृंहणैरुपाचरेत् ।

अधुना कासादीनां पंचानामप्येषां सामान्येन चिकित्सितं वक्तुमाह ।

**कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः ॥ ५५ ॥**

कासोक्तैर्भेषजैः श्वासादीनुपाचरेत् । श्वासायुक्तैः कासानुपाचरेत् । एवं परस्परं सर्वैर्यथोक्तैर्भेषजैः सर्वानेतानुपाचरेदिति ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां श्वासहिध्माचिकित्सितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

श्वासहिध्माचिकित्सितादनंतरं राजयक्ष्माचिकित्सितारंभः । यतः कासश्वासक्षयादीनन्योन्यभेषजैरुपाचरेदित्युक्तम् । क्षयश्च राजयक्ष्मातस्मादेतदारभ्यते ।

**अथाऽतो राजयक्ष्मादिचिकित्सितं व्याख्यास्यामः ।**
**बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।**
**ऊर्ध्वाधो यक्ष्मिणः कुर्यात्सस्नेहं यन्न कर्शनम् ॥१॥**

बहुदोषस्य बलिनो राजयक्ष्मिण ऊर्ध्वाधः शोधनं वमनं विरेचनं च कुर्यात् । अस्निग्धस्विन्नस्य शोधनानर्हत्वात् । स्निग्धस्विन्नग्रहणं त्वतिशयार्थम् । किंभूतं शोधनम् । सस्नेहमीषत्स्निग्धं तथा यन्न कर्शनं देहस्य न क्षपणम् । यक्ष्मिण इति द्वंद्वोपतापेत्यादिना इनिर्मत्वर्थीयः ।

तत्र वमनमाह ।

**पयसा फलयुक्तेन मधुरेण रसेन वा ।**
**सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ २ ॥**
**वमेत्**

पयसा क्षीरेण मदनफलान्वितेन राजयक्ष्मी वमेत् । एवं तेन वमनं कार्यं मधुरेण वा मांसरसेन मदनफलयुक्तेन वमेत् । अथवा यवाग्वा घृतवत्या तथा वमनद्रव्येण मदनफलादिना सिद्धया वमेत् ।

**विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ।**
**शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥ ३ ॥**
**द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान् ।**

त्रिवृतादीनेकैकशः शर्करामधुसर्पिर्युतान् विरेचनं दद्यात् । अथवा पयसा त्रिवृतादीन् दद्यात् । तर्पणेन वा सह त्रिवृतादीन् विरेचनं दद्यात् । रसैरिति बहुवचननिर्देशाद् द्राक्षादीनां पृथग्रसैरिति बोध्यम् ।

**शुद्धकोष्ठस्य युंजीत विधिं बृंहणदीपनम् ॥ ४ ॥**
**हृद्यानि चाऽन्नपानानि वातघ्नानि लघूनि च ।**
**शालिषष्टिकगोधूमयवमुद्गं समोषितम् ॥ ५ ॥**

शुद्धकोष्ठस्य सतो यक्ष्मिणे बृंहणं दीपनं च विधिं प्रयुंजीत ।

तथाऽन्नपानानि हृद्यानि हृदयाय प्रियाणि तथा वातघ्नानि लघूनि च युंजीत । बाहुल्येनैतदुक्तम् । तथा चाह। शालिषष्टिकगोधूमयवमुद्गमिति । तथा शाल्यादीकं वर्षोषितं युंजीत ।

**आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोपजित् ।**

आजं क्षीरं घृतं मांसं तथा क्रव्यान्मांसं च क्षयजित् ।

**काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् ॥ ६ ॥**
**गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितम् ।**
**ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे ॥ ७ ॥**

काकोलूकादिकमेतन्मांसं हितम् । किंभूतं छद्मनोपसंहितम् । काकादयस्तित्तिर्यादिशब्देन देया इत्यर्थः । किमित्येवं क्रियत इत्याह । यस्मात्तज्जुगुप्सितं ज्ञातं सच्छर्दिषे संपद्यते । न बलाय न वौजसे ।

**मृगाद्याः पित्तकफयोः पवने प्रसहादयः ।**
**वेसवारीकृताः पथ्या रसादिषु च कल्पिताः ॥ ८ ॥**
**भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ।**
**रसिका मृदवः स्निग्धाः मृदुद्रव्याभिसंस्कृताः॥९॥**
**हिता मौलककौलत्थास्तद्वद्यूषाश्च साधिताः ।**

मृगाद्या मृगविष्किरप्रतुदाः पित्तकफयोर्हिताः । वाते प्रसहा महामृगाश्वरादयो हिताः। किंभूताः वेसवारीकृताः पिष्टाः पथ्याः । तथा रसादयो मांसरसादयः कल्पिताः । तथा सर्षपतैलेन भृष्टाः । सर्पिषा वा देशकालाद्यपेक्षया यथायथं भृष्टाः । तथा रसिकाः प्रशस्तरसवंतः । प्रशंसायां ह्येष मत्वर्थीयः । मृदवो न तीक्ष्णाः । तथा स्निग्धाः सैंधवादिभिः कृतसंस्कारा हिताः । तद्वत्तथैव मूलकादिकृता यूषाः ।

**सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ १० ॥**
**सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।**
**तेन षड्विनिवर्तंते विकाराः पीनसादयः ॥ ११ ॥**

पिप्पल्यादिभिः संस्कृतमाजं मांसरसं घृतादिस्नेहेन स्निग्धं पिबेदित्यत्र मांसानामवश्यं स्निग्धत्वेऽपि स्निग्धग्रहणमेषां घृतादिस्नेहेन स्निग्धत्वं कार्यमिति प्रतिपादयति । तेन रसेन पीतेन सप्त विकाराः पीनसादयः पीनसश्वासकासकाशांसमूर्ध्वस्वररुचिरिति शाम्यंति ।

**पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम् ।**
**पित्तादिषु विशेषेण मध्वरिष्टासववारुणीः ॥ १२ ॥**
**सिद्धं वा पंचमूलेन तामलक्याथवा जलम् ।**
**पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ॥ १३ ॥**
**कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान् ।**

अतितरां पुराणं च मद्यं जीर्णं स्रोतोविशुद्धिकरं पिबेत् । पित्तादिषु पित्तकफवातेषु यथायुक्त्या मध्वादीन् विशेषेण पिबेत् । अथवा पंचमूलेन ह्रस्वेन सिद्धं जलं पिबेत् । तामलक्या वा जलं पर्णिनीभिश्चतसृभिर्वा जलं पक्वं पिबेत् । धान्यकनागराभ्यां वा शृतं पिबेत् । अस्य च यक्ष्मिणोऽनुकूलो यत्नवान् परिचारकोऽन्नं शुचि तेन पंचमूलादिजलेन कल्पयेत् । अनुकूलादिग्रहणमत्रातिशयार्थम् ।

**दशमूलेन पयसा सिद्धं मांसरसेन वा ॥ १४ ॥**
**बलागर्भं घृतं योज्यं क्रव्यान्मांसरसेन वा ।**
**सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥ १५ ॥**

दशमूलक्काथेन तथा पयसाऽथवा मांसरसेन बलाकल्केन घृतं साधितं योज्यम् । क्रव्यान्मांसरसेन वा बलागर्भं पक्वं घृतं योज्यम् । क्षीरेण वा दशगुणे जलं बलागर्भं सिद्धं घृतं सक्षौद्रं योज्यम् ।

**जीवंतीमधुकं द्राक्षां फलानि कुटजस्य च ।**
**पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम्॥१६॥**
**नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।**
**कल्कीकृत्य घृतं पक्वं रोगराजहरं परम् ॥ १७ ॥**

जीवंत्यादीन् कल्कीकृत्य घृतं चतुर्गुणे जले पक्वं रोगराजहरं परम् ।

**घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।**
**सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ १८ ॥**

कल्कीकृत्य पक्वमित्यनुवर्तते । खर्जूरादिभिः कल्कीकृत्य घृतं पक्वं पिप्पलीचूर्णेन युक्तं वैस्वर्यादिहरम् ।

**दशमूलशृतात्क्षीरात्सर्पिर्यदुदियान्नवम् ।**
**सपिप्पलीकं सक्षौद्रं तत्परं स्वरबोधनम् ॥ १९ ॥**
**शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।**
**पंचभिः पंचमूलैर्वा शृताद्यदुदियाद्घृतं ॥ २० ॥**

दशमूलक्वथितात्क्षीराद्यत्सर्पिरुदियादुद्गच्छेत्तत्प्रत्यग्रं पिप्पलीक्षौद्रान्वितमतिशयेन स्वरबोधनं शिरःपार्श्वांसशूलघ्नं कासादिहरम् । अथवा पंचभिः पंचमूलैः शृतात्क्षीरात्तु यदुद्भवेद्घृतं तत्पूर्वगुणम् ।

**पंचानां पंचमूलानां रसे क्षीरचतुर्गुणे ।**
**सिद्धं सर्पिर्जयत्येतद्यक्ष्मिणः सप्तकं बलम् ॥ २१ ॥**

पंचानां पंचमूलानां रसे क्षीरचतुर्गुणे पक्वमेतद्यक्ष्मिणः सप्तकं बलम् । पीनसादिकमेतद्घृतं जयेत् ।

**पंचकोलयवक्षारषट्पलेन पचेद्घृतम् ।**
**प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम् ॥२२॥**
**गुल्मज्वरोदरप्लीहग्रहणीपांडुपीनसान् ।**
**श्वासकासाग्निसदनश्वयथूर्ध्वानिलाञ्जयेत् ॥ २३ ॥**

पंचकोलादिना षट्पलेन कल्केन घृतप्रस्थं तुल्यक्षीरं पचेत् । तत्स्रोतसां विशोधनं स्यात् । अत्र चानुक्तमपि जलं स्नेहाच्चतुर्गुणं त्रिगुणं वा देयं पूर्वोक्तन्यायात् । तथा गुल्मादीन् जयेत् ।

**रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ।**
**जीवंती पिप्पलीगर्भं सक्षीरं शोषजिद्धृतम् ॥ २४ ॥**

रास्नादिक्वाथे जीवंती पिप्पलीकल्कं क्षीरपक्वं सहितं घृतं शोषजित् ।

**अश्वगंधाच्छृतात्क्षीराद्धृतं च ससितापयः ।**

अश्वगंधया शृतात्क्षीरादुद्धृतं घृतं शर्कराक्षीरयुतं पूर्वोक्तगुणम् ।

**साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥ २५ ॥**
**तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ।**
**साधयेत्सर्पिषः प्रस्थं वातपित्तामयापहम् ॥ २६ ॥**
**मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ।**
**कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥ २७ ॥**

साधारणस्य बिलेशयप्रसहानां मांसस्य तुलां पलशतं जलद्रोणद्वये पचेत् । तेनाष्टभागशेषेण क्वाथेन जीवनीयैः पालिकैः सर्पिषः प्रस्थं पचेत् । मांससर्पिःसंज्ञमेतत् केवलं पीतं मांसरसेन वा युक्तं पीतं वातपित्तघ्नं कासादिजित् ।

**एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान् ।**
**सारानरिष्टगायत्रीशालबीजकसंभवान् ॥ २८ ॥**
**भल्लातकं विडंगं च पृथगष्टपलोन्मितम् ।**
**सलिले षोडशगुणे षोडशांशस्थिते पचेत् ॥ २९ ॥**
**पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन्पलानि षट् ।**
**तवक्षीर्याः क्षिपेत्त्रिंशत्सिताया द्विगुणं मधु ॥ ३० ॥**
**घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ।**
**पयोनुपानं तत्प्राह्णे रसायनमयंत्रणम् ॥ ३१ ॥**
**मेध्यं चक्षुष्यमायुष्यं दीपनं हंति चाचिरात् ।**
**मेहगुल्मक्षयव्याधिपांडुरोगभगंदरान् ॥ ३२ ॥**

एलादिप्रत्येकमष्टपलप्रमाणं षोडशगुणे जले षोडशांशस्थितं षोडशावशेषितं यथा स्यात्तथा पचेत् । तेन क्वाथेन पुनर्घृतप्रस्थं पचेत् । सिद्धे चाऽस्मिन् घृते तुगाक्षीर्याः पलानि षट् सितायास्त्रिंशत्पलानि माक्षिकं घृताद्द्विगुणं प्रस्थौ द्वावित्यर्थः । त्रिजातकात् पलत्रयं तदेतस्मिन् क्षिपेत् । खजाहतं समीकरणाय दर्व्याऽऽलोडितं पूर्वाह्णे लीढं पयोऽनुपानं रसायनमयंत्रणं मेध्यादिगुणं च स्यात् । आश्वेव च गुल्मादीन् हंति ।

**ये च सर्पिर्गुडाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते ।**

ये च क्षते सर्पिर्गुडा गदितास्ते च क्षयेऽपि योज्याः ।

**त्वगेलापिप्पलीक्षीरीशर्कराद्विगुणाः क्रमात् ॥३३॥**
**चूर्णिता भक्षिताः क्षौद्रसर्पिषा च वले हिताः ।**
**स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ ३४ ॥**

त्वगेलादयः क्रमेण द्विगुणाश्चूर्णिता भुक्ता माक्षिकसर्पिर्भ्यां वाऽवलेहिताः स्वर्याः स्वराय हिताः स्युः । कासादिघ्नाश्च ।

**विशेषात्स्वरसादेऽस्य नस्यधूमादि योजयेत् ।**

अस्य क्षयिणः स्वरसादेः विशेषेण नस्यधूमादि योज्यम् ।

**तत्राऽपि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ॥३५॥**
**कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम् ।**
**साधितं कासजित्स्वर्यं सिद्धमार्तगलेन वा ॥ ३६ ॥**

तेषु च स्वरसादेषु मध्ये वातजे स्वरसादे कासमर्दादि स्वरसैः साधितमौत्तरभक्तिकं भक्तादूर्ध्वं घृतं पिबेत् । मार्कवो भृंगराजः। तच्च सर्पिः कासजित् स्वर्यं च स्यात् । उत्तरभक्तादिति मयूरव्यंसकादित्वात्समासः । ततश्चाध्यात्मादित्वाट्ठञ् । अथवा आर्तगलेन नीलपुष्पसहचरेण सिद्धं घृतमेवं पिबेत् ।

**बदरीपत्रकल्कं वा घृतभृष्टं ससैंधवम् ।**

अथवा बदर्याः पत्रकल्कं घृतभृष्टं ससैंधवमुत्तरभक्तिकं योजयेत् ।

**तैलं वा मधुकं द्राक्षापिप्पलीक्रमिनुत्पलैः ॥ ३७ ॥**
**हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।**

अथवा तैलं मधुकादिभिः पक्वं नस्तोऽवसेचयेत् । क्रमिघ्नं विडंगम् । फलं मदनफलम् । हंसपादी कीटमारीका । नस्त इति नस्नासिकाया यत्तस्क्षुद्रेष्वित्यनेन तसि नसादेशः ।

**सुखोदकानुपानं च सर्पिष्कं च गुडौदनम् ॥ ३८ ॥**
**अश्नीयात्पायसं चैवं स्निग्धं स्वेदं नियोजयेत् ।**

तथा गुडोदनं सर्पिषा सह सुखोदकमनुपानमश्नीयात् । पायसं चैवं ससर्पिष्कं सुखोदकानुपानमद्यात् । स्वेदं च स्निग्धं योजयेत् ।

**पित्तोद्भवे पिबेत्सर्पिः शृतशीतपयोनुपः ॥ ३९ ॥**
**क्षीरीवृक्षांकुरक्वाथकल्कसिद्धं समाक्षिकम् ।**
**अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥ ४० ॥**

पित्तोद्भवेऽपित्सर्पिः समाक्षिकं क्षीरीवृक्षांकुरादिक्वाथकल्कसिद्धं शृतशीतक्षीरानुपः पिबेत् । मधुयष्टिकान्वितं पायसं ससर्पिष्कं भुंजीत ।

**बलाविदारीगंधाभ्यां विदार्या मधुकेन च ।**
**सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥ ४१ ॥**

बलादिभिः सिद्धं सर्पिः ससैंधवं परं स्वर्यं स्यान्नस्यम् । विदारीगंधा शालिपर्णी ।

**प्रपौंडरीकं मधुकं पिप्पली बृहती बला ।**
**साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ॥ ४२ ॥**
**लिह्यान्मधुरकाणां च चूर्णं मधुघृताप्लुतम् ।**

पित्तजे स्वरसादे प्रपौंडरीकादिसाधितं क्षीरोद्भवं सर्पिः श्रेष्ठं नस्यं मधुकाणां च मधुररसद्रव्याणां चूर्णं मधुघृतान्वितं लिह्यात् ।

**पिबेत्कटूनि मूत्रेण कफजे रूक्षभोजनः ॥ ४३ ॥**
**कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ।**
**व्योषक्षाराग्निचविकाभार्गी पथ्यामधूनि वा ॥ ४४॥**

कफोद्भवे कटूनि कटुकासानि द्रव्याणि मूत्रेण पिबेत्। रूक्षभोजनश्च स्यात् । तथा कट्फलादिकं तैलमधुप्लुतं लिह्यात् । व्योषादीनि वा एवं लिह्यात् ।

**यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत् ।**
**भुक्त्वाद्यात्पिप्पलीं शुंठीं तीक्ष्णं वा वमनं भजेत् ॥**

यवैरुपादानैर्यमके स्नेहद्वये कणाधात्रीकृतामेतत् क्वाथे सिद्धां यवागूं पिबेत् । तथा भुक्त्वा पिप्पलीं शुंठीं वाद्यात् । अथवा तीक्ष्णं वमनं भजेत् ।

**शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह ।**
**पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ४६ ॥**

यस्योच्चैर्भाषमाणस्य स्वरोऽभिहतः स मधुरैः सह शृतानि शर्करामाक्षिकमिश्राणि पयांसि पिबेत् ।

**विचित्रमन्नमरुचौ हितैरुपहितं हितम् ।**

अरोचके विचित्रं नानाविधमन्नं हितं पथ्यम् । किंभूतम् । हितैः पथ्यैरुपहितं मिश्रितम् । एवमरुच्याख्यो व्याधिविशेषः सर्वव्याधिभ्यो गरीयान् । येनापथ्यामपि यदन्नं तस्मै तदपि देयम् । प्राणसंधारणार्थमन्नमेव प्राणिनां हि प्राणा इत्याह । एवं च सर्वव्याधिष्वरुचिरेव पूर्वं जेतव्या । ततो ज्वरादय इत्यर्थादुक्तं भवति ।

**बहिरंतर्मृजाचित्तनिर्वाणं हृद्यमौषधम् ॥ ४७ ॥**
**द्वौ कालौ दंतधवनं भक्षयेन्मुखधावनैः ।**
**कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥ ४८॥**

बहिर्मृजा बहिःशुद्धिः स्नानादिना बहिः परिमार्जनम् । अंतर्मृजा अंतःशुद्धिः । तथा चित्तनिर्वाणमरुचौ हितं हृद्यमौषधं च । तथा द्वौ कालौ सायंप्रातराख्यौ दंतधावनं भक्षयेत् । तथा मुखधावनैः कषायैरास्यं क्षालयेत् । प्रायोगिकं स्नैहिकं धूमं पिबेत् ।

**तालीसचूर्णवटकाः सकर्पूरसितोपलाः ।**
**शशांककिरणाख्याश्च भक्ष्या रुचिकरा भृशम् ४९**

तथा तालीसचूर्णवटकाश्च तथा सकर्पूरसितोपलाः शशांककिरणाख्याश्च भक्ष्या भृशमतिशयेन रुचिकराः ।

सामान्येनारुचौ चिकित्सितान्युक्त्वा विशेषमाह ।

**वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ।**
**हरेणुकृष्णाकृमिजिद्द्राक्षासैंधवनागरात् ॥ ५० ॥**
**एलाभार्गीयवक्षारहिंगुयुक्ता घृतेन वा ।**
**छर्दयेद्वा वचांभोभिः**

वातेनारुचौ सत्यां हरेण्वादिभ्यश्चूर्णम् प्रसन्नया पिबेत् । एलाभार्ग्यादियुक्तघृतेन वा पेयम् । वचाजलैर्वा वमेत् ।

**पित्ताच्च गुडवारिभिः ॥ ५१ ॥**
**लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम् ।**

पित्तादरुचौ गुडवारिणा वमेत् । शर्करादिकं लिह्यात् ।

**कफाद्वमेन्निंबजलैर्दीप्यकारग्वधोदकम् ॥ ५२ ॥**
**पानं समध्वरिष्टाश्च तिक्ष्णाः समधुमाधवाः ।**
**पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥ ५३ ॥**

कफादरोचके निंबजलैर्वमेत् । दीप्यकर्णिकारयोरुदकं पानम् । समाक्षिकमरिष्टाश्च तीक्ष्णाः समार्द्वीकमाधवाः । पानं च हरेण्वादिचूर्णं च पूर्वोक्तमुष्णांबुना पिबेत् ।

**एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।**
**भागवृद्धं क्रमाच्चूर्णं निहंति समशर्करम् ॥ ५४ ॥**
**प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान् ।**

एलादिकं चूर्णं क्रमेण भागवृद्धं समशर्करं प्रसेकादीन् हंति ।

**यवानीतित्तिडीकाम्लवेतसौषधदाडिमम् ॥ ५५ ॥**
**कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम् ।**
**धान्यसौवर्चलाजाजीवरांगं चार्धकार्षिकम् ॥५६ ॥**
**पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।**
**चूर्णमेतत्परं रुच्यं ग्राहि हृद्यं हिनस्ति च ॥ ५७ ॥**
**विबंधकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ।**

यवानीत्यादि कोलांतादिप्रत्येकं कार्षिकाणि । शर्करायाः पलानि चत्वारि धान्यकादिकमर्धकार्षिकं शतमेकं पिप्पली द्वे शते मरिचस्य चूर्णमिदं परं रुच्यं तथा हृदयाय हितम् । ग्राहि विबंधादीन् हंति ।

**तालीसपत्रं मरिचं नागरं पिप्पली कणा ॥ ५८ ॥**
**यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ।**
**तद्द्रव्यं दीपनं चूर्णं कणाष्टगुणशर्करम् ॥ ५९ ॥**
**कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलनुत् ।**
**पांडुज्वरातिसारघ्नं मूढवातानुलोमनम् ॥६० ॥**

तालीसपत्रादयो यथोत्तरमुत्तरोत्तरभागवृद्धाः कार्याः । त्वक् च एला च एतेऽर्धभागप्रमाणाः । एतच्चूर्णं पिप्पल्यष्टगुणशर्करं दीपनं कासादिजिच पांड्वादिघ्नं मूढवातानुलोमनं च ।

**अर्कामृताक्षीरजले शर्वरीमुषितैर्यवैः ।**
**प्रसेके कल्पितान्सक्तून् भक्ष्यांश्चाद्याद्बली वमेत् ६१**
**कटुतिक्तैस्तथा शूल्यं भक्षयेज्जांगलं पलम् ।**
**शुष्कांश्च भक्ष्यान् सुलघूंश्चणकादिरसानुपः ॥६२॥**

अर्कादिजले रात्रिस्थितैर्यवैः सक्तून् कल्पितान् भक्ष्यांश्च प्रसेके भक्षयेत् । बलवान् कटुतिक्तकैर्वमेत् । तथा शूल्यं जांगलं

मांसं भक्षयेत् । शुष्कांश्च भक्षान् भोजयेत् । भोज्यविशेषान् लघुतरान् भक्षयेत् । चणकादिरसमनु पश्चात् पिबेत् ।

**श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।**
**कफप्रसेकं तं विद्वान्स्निग्धोष्णैरेव निर्जयेत् ॥ ६३॥**

वायुः श्लेष्माणं क्षिपति। श्लेष्मणोऽतिप्रसेकेन हेतुभूतेन तं कफप्रसेकं विद्वान् स्निग्धोष्णैरेव निर्जयेत् ।

**पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत् ।**

इमं कफप्रसेकोक्तक्रियाक्रमं पीनसे वमथौ च प्रयोजयेत् ।

**विशेषात्पीनसेऽभ्यंगान् स्नेहस्वेदांश्च शीलयेत् ६४**
**स्निग्धानुत्कारिकापिंडैः शिरःपार्श्वगलादिषु ।**
**लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान्॥६५॥**

विशेषेण पीनसेऽभ्यंगान् स्नेहान्स्वेदांश्च स्निग्धान् शीलयेत् । कैः । उत्कारिकापिंडैः । केषु । शिरःपार्श्वगलादिषु । लवणादींश्च रसान् स्नेहोपसंहितान् शीलयेत् ।

**शिरोंसपार्श्वशूलेषु यथा दोषविधिं चरेत् ।**
**औदकानूपपिशितैरुपनाहाः सुसंस्कृताः ॥ ६६ ॥**
**तत्रेष्टाः सचतुःस्नेहाः**

शिरोंसपार्श्वशूलेषु दोषानुसारेणोपक्रमः कार्यस्तेष्वौदकानूपमांसैश्चतुःस्नेहयुताः सुसंस्कृता उपनाहा इष्टाः ।

**दोषसंसर्ग इष्यते ।**
**प्रलेपो नतयष्ट्याह्वशताह्वाकुष्ठचंदनैः ॥ ६७॥**
**बलारास्नातिलैस्तद्वत्ससर्पिर्मधुकोत्पलैः ।**

दोषसंसर्गे च द्वंद्वे तगरादिभिः प्रलेप इष्यते । तथैव बलादिभिः सघृतमधुकोत्पलयुतैः ।

**पुनर्नवाकृष्णगंधाबलावीराविदारिभिः ॥ ६८ ॥**
**नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः ।**
**तैलान्यभ्यंगयोगीनि बस्तिकर्म तथा परम् ॥ ६९ ॥**

पुनर्नवादिभिर्नस्यं तथा धूमपानानीष्यंते । तथा औत्तरभक्तिकाश्च स्नेहाः । तैलान्यभ्यंगयोगीन्यभ्यंगयोगप्रशस्तानि तथा बस्तिकर्म प्राक्स्नेह इत्यादिकं परं चेष्टम् ।

**शृंगाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ।**

शृंगाद्यैः शृंगतुंबप्रच्छन्नजलौकालाबुभिर्यथायोगं वातपित्तकफदुष्टं रक्तमेषां यक्ष्मिणां हरेत् ।

**प्रदेहः सघृतैः श्रेष्ठः पद्मकोशीरचंदनैः ॥ ७० ॥**
**दूर्वामधुकमंजिष्ठाकेसरैर्वा घृतप्लुतैः ।**

प्रलेपः पद्मकादिभिः सघृतैः श्रेष्ठः । दूर्वादिभिर्वा घृताप्लुतैः ।

**वटादिसिद्धतैलेन शतधौतेन सर्पिषा ॥ ७१ ॥**
**अभ्यंगः पयसा सेकः शस्तश्च मधुकांबुना ।**

वटादिना न्यग्रोधादिना सिद्धेन तैलेनाभ्यंगः प्रशस्तः । शतधौतेन वा घृतेन तथा क्षीरेणासेकः शस्तः । मधुयष्टिकाजलेन वा ।

**प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते ॥ ७२ ॥**
**तस्यातिसारग्रहणीविहितं हितमौषधम् ।**

बाहुल्येनोपहताग्नित्वात्कारणात् पिच्छया सहातिसार्यते यक्ष्मी । तस्यातिसारे ग्रहण्यां च यदुक्तमौषधं तद्धितम् ।

**पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥ ७३ ॥**
**सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ।**

तथा राजयक्ष्मिणः शुष्यतः सतः पुरीषं यत्नतो रक्षेत् । किमित्याह । यस्मात्तस्य शोषिणः सर्वधातुक्षयार्तस्य सतो विड्बलमेव बलं न धात्वादिजं बलम् ।

**मांसमेवाश्नतो युक्त्या मार्द्वीकं पिबतो नु च ॥७४॥**
**अविधारितवेगस्य यक्ष्मा न लभतेऽतरम् ।**

मांसमेव युक्त्या देशकालसात्म्यादिलक्षणया भक्षयतो मार्द्वीकं च पश्चात् पिबतो वेगमधारयतो यक्ष्मा अंतरमवकाशं न लभते ।

**सुरां समंडां मार्द्वीकमरिष्टान्सीधुमाधवान् ॥ ७५॥**
**यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ।**
**स्रोतोविबंधमोक्षार्थं बलौजःपुष्टये च तत् ॥ ७६ ॥**

तथा सुरादीननुपानार्थं पिबेत् । मांसानि भक्षयेत् । तत्सुराद्यनुपानं मांसभक्षणं च स्रोतोविबंधमोक्षार्थं बलायौजसश्च पुष्ट्यै ।

**स्नेहक्षीरांबुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।**
**उत्तीर्णमिश्रकैः स्नेहैर्भूयोऽभ्यक्तं सुखैः करैः ॥७७॥**
**मृद्गीयात्सुखमासीनं सुखं चोद्वर्तयेत्परम् ।**

स्नेहादिकोष्ठेषु स्वभ्यक्तं संतमवगाहयेत् निमग्नं स्थापयेत् । ततः कोष्ठादुत्तीर्णं भूयः पुनर्मिश्रकैः स्नेहैर्गुल्मोक्तैरभ्यक्तं सुखैः सुखावहैर्न दुष्करैः सुखेन तिष्ठंतं मृद्गीयात् परमतिशयेन सुखं यथा भवति तथोद्वर्तयेत् ।

**जीवंतीं शतवीर्यां च विकसां सपुनर्नवाम् ॥७८ ॥**
**अश्वगंधामपामार्गं तर्कारीं मधुकं बलाम् ।**
**विदारीं सर्षपान् कुष्टं तंडुलानतसीफलम् ॥ ७९ ॥**
**माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ।**
**यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ॥ ८० ॥**
**एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदम् ।**

जीवंत्यादिकं किण्वपर्यंतं सर्वमेकत्र चूर्णयेत् । विकसा मंजिष्ठा । यवचूर्णं सर्वेभ्यस्त्रिगुणं दध्ना युक्तं समाक्षिकमेतदुद्वर्तनं कार्यं पुष्ट्यादिप्रदम् ।

**गौरसर्षपकल्केन स्नानीयौषधिभिश्च सः ॥ ८१ ॥**
**स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ।**

**गंधमाल्यादिकं भूषामलक्ष्मीनाशनीं भजेत् ॥ ८२ ॥**
**सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतिः ।**
**बस्तयः क्षीरसर्पींषि मद्यमांससुशीलता ॥ ८३ ॥**
**दैवव्यपाश्रयं तत्तदथर्वोक्तं च पूजितम् ।**

गौरसर्षपाणां कल्केन स्नानीयैः स्नानार्हैर्गंधद्रव्यविशेषैरौषधिभिश्च सहदेवादिभिर्ऋतौ हेमंतादिके सुखावहैरुष्णादिभिस्तोयैर्जीवनीयद्रव्यसृतैः स्नायात् । तथा गंधैश्चंदनकुंकुमादिभिर्माल्यैः कुसुमैरादिशब्देनालंकारादिग्रहणं तैर्भूषामलक्ष्मीघ्नां सेवेत । तथा सुहृदां बंधूनां दर्शनम् । गीतस्य वादित्राणां तथोत्सवस्य पुत्रजन्मविवाहादेः संश्रवणम् । तथा बस्तयः क्षीराणां घृतानि क्षीरसर्पींषि मद्यमांसानां सुशीलता । तथा दैवव्यपाश्रयं बलिमंगलहोमप्रायश्चित्तादिकम् । तथा अथर्वोक्तमथर्ववेदविहितं यागादिकं च पूजितं प्रशस्तमेतदत्रेत्यर्थः ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां राजयक्ष्मस्वरभेदारोचकचिकित्साख्यः पंचमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

राजयक्ष्मचिकित्सितादनंतरं छर्द्यादिचिकित्सितमारभ्यते । यतो यक्ष्मिण एव प्रायेणैत उपद्रवभूता जायंते । अत एतदारंभो युक्त इत्याह ।

**अथाऽतच्छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः ।**
**आमाशयोत्क्लेशभवाः प्रायच्छर्यो हितं ततः ।**
**लंघनं प्रागृते वायोर्वमनं तत्र योजयेत् ॥ १ ॥**
**बलिनो बहुदोषस्य वमतः प्रततं बहु ।**

उत्क्लेशनमुत्क्लेशो दोषाणामुच्छूनावस्थैव । अमाशयोत्क्लेशात्संभवो जन्म यासां ता आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो यतस्तस्मात् प्राक् प्रथमं लंघनं हितम् । प्रायोग्रहणं वातजायां छर्द्यामामाशयोत्क्लेशात्संभवार्थं वायोर्ऋते योजयेत् । छर्द्यामामाशयोत्क्लेशाभावार्थं वायोर्ऋते तत्तद्योजयेत् । कार्यकारणोपचारादेवं निर्दिष्टम् । वातजां हि छर्दिं मुक्त्वाऽन्यासु छर्दिषु लंघनं कार्यम् । लंघने कृतेऽप्यनुपशांतवेगासु तत्र तासु छर्दिषु वमनं कार्यम् । बलिनः पुंसो न दुर्बलस्य । अथवा बहुदोषस्य तथा प्रततमनारतं बहु वमतो वमनं योजयेत् ।

**ततो विरेकं क्रमशो हृद्यं मद्यैः फलांबुभिः ॥ २ ॥**
**क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः ।**
**शमनं चौषधं रूक्षदुर्बलस्य तदेव तु ॥ ३ ॥**

ततो वमनादनंतरं विरेकौषधं क्रमशो न सहसा योजयेत् । किंभूतं विरेकद्रव्यम् । हृद्यं हृदयाय हितम् । कैः सह । मद्यैर्मार्द्वीकादिभिः । तथा फलांबुभिः । शोभनद्राक्षादिफलनिष्पादितवारिभिः । अथवा क्षीरैर्गोक्षीरादिभिः सह किमेवं स्यादित्याह । सह्यूर्ध्वमित्यादि । यस्मात्स विरेक ऊर्ध्वं गतं दोषं छर्द्यनुगमधो नयति । न केवलं शोधनं वमनं विरेचनं वा तत्र योजयेत् । यावच्छमनमपि यदौषधं तदपि तत्र योजयेत् । रूक्षदुर्बलस्य पुनः पुंसस्तदेव शमनमेव योजयेच्छोधनासहत्वात् ।

**परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते ।**
**उपवासस्तथा यूषा रसाः कांबलिकाः खलाः ॥४॥**
**शाकानि लेहभोज्यानि रागखांडवपानकाः ।**
**भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम् ५**
**गंधाः सुगंधयो गंधफलपुष्पान्नपानजाः ।**
**भुक्तमात्रस्य सहसा मुखे शीतांबुसेचनम् ॥ ६ ॥**

तत्र सर्वास्वपि छर्दिषु परिशुष्कादिगुणयुक्तमन्नं शस्यते । कांबलिकादिलक्षणं कृतान्नवर्गे कथितम् । तथा फलानि स्नानमुद्वर्तनादिरूपेण घर्षः । सुगंधयः शोभना गंधाः । गंधद्रव्यपुष्पफलान्नपानजाः शस्यंते । अत्र गंधशब्देन गंधद्रव्याणि भुक्तमात्रस्य सहसा झटित्येवाज्ञातसेकस्य मुखे शीतांबुसेचनमिति सामान्येन छर्दीनामुपक्रमाः ।

अधुना विशेषेणाह ।

**हंति मारुतजां छर्दिं सर्पिः पीतं ससैंधवम् ।**
**किंचिदुष्णं विशेषेण सकासहृदयद्रवाम् ॥ ७ ॥**
**व्योषत्रिलवणाढ्यं वा सिद्धं वा दाडिमांबुना ।**
**सशुंठीदधिधान्येन शृतं तुल्यांबु वा पयः ॥ ८॥**
**व्यक्तसैंधवसर्पिर्वा फलाम्लो वैष्किरो रसः ।**
**स्निग्धं च भोजनं शुंठीदधिदाडिमसाधितम् ॥९॥**
**कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ।**

वातजां छर्दिषं सर्पिः पीतं सैंधवान्वितं किंचिदुष्णं विशेषेण हंति । पीतं नतु लीढमशक्तत्वात् । तथा चोक्तम् । आक्रामत्यनिलं पीतमिति । तस्मात् पीतं घृतं छर्दिं हंतीति युक्तम् । अथवा त्रिकटुत्रिलवणोत्कटं सर्पिः पीतं पूर्वोक्तगुणम् । दाडिमांबुना वा शुंठीदधिधान्येन सह सामान्येन कल्पनया सिद्धं घृतं पीतं पूर्वोक्तगुणम् । जलतुल्यं वा पयःसृतं पूर्ववत् । अथवा वैष्किरः कौक्कुटादिजो रसो बहुसर्पिः सधैंधवो मारुतजां छर्दिं हंति । किंभूतः । फलेन दाडिममातुलुंगादिनाऽम्लोऽम्लतां प्रापितः । स्निग्धं च भोजनमशनं दधिदाडिमेन संस्कृतं तु हितं । छर्दिं हंति । अत्र च मारुतछर्दिषि स्नेहनैरंडतैलादिना विरेचनं स्नेहविरेचनं कोष्णं सलवणं च हितम् ।

**पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ॥ १० ॥**
**सर्पिर्वा तैल्वकं योज्यं वृद्धं च श्लेष्मधामगम् ।**
**ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान् ॥११॥**
**पिबेन्मंथं यवागूं वा लाजैः समधुशर्कराम् ।**
**मुद्गजांगलजैरद्याद्व्यंजनैः शालिषष्टिकम् ॥ १२ ॥**

**मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।**
**मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम् १३**
**द्राक्षारसं रसं वेक्षोर्गुडूच्यंबुपयोऽपि वा ।**

पित्तजायां छर्द्यां विरेकार्थं विरेकप्रयोजनाय द्राक्षेक्षुस्वरसैस्त्रिवृद्देया । तैल्वकं वा सर्पिर्योज्यम् । पित्तजे छर्दिषि वृद्धे श्लेष्मधामगे पित्तमूर्ध्वमेव हरेद्वमनं तत्र देयमित्यर्थः । कैर्द्रव्यैः । स्वादुतिक्तैः । आतुरो विशुद्धिमान् कृतवमनविरेको लाजैर्मंथं पिबेत् । किंभूतम् । समधुशर्करमथवा यवागूं लाजैः समधुशर्करां पिबेत् । सह मधुशर्करश्च समधुशर्करा चेति । पुमान् स्त्रियेत्येकशेषः । तथा मुद्गजैर्व्यंजनैर्जांगलमांसैश्च व्यंजनैः शालिषष्टिकमद्यात् । मृद्भृष्टलोष्टजं सुशीतलं जलं पिबेत् । मुद्गादिभिर्वा सह निशास्थितं जलं पिबेत् । द्राक्षारसादि वा यथायोगं पिबेत् ।

**जम्ब्वाम्रपल्लवोशीरवटशृंगावरोहजः ॥ १४ ॥**
**काथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति ।**
**छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम् १५**

जम्ब्वाम्रादिजः क्वाथः क्षौद्रान्वितः शीतो वा शीतकषायः पीतः क्षौद्रयुतश्छर्द्यादीन्हंति ।

**धात्रीरसेन वा शीतं पिबेन्मुद्गदलांबु वा ।**
**कोलमज्जसितालाजामक्षिकाविट्कणांजनम् ॥ १६॥**
**लिह्यात्क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा ।**

मुद्गदलैः शृतमंबु मुद्गदलांबु तद्धात्रीरसेन सह पिबेत् । अथवा मुद्गदलानामंबु मुद्गदलांबु शीतं शीतकषायं पिबेत् । कोलादिकं क्षौद्रेण लिह्यात् । पथ्यां वा क्षौद्रेण लिह्यात् । द्राक्षां वा बदराणि वा लिह्यात् ।

**कफजायां वमेन्निंबकृष्णापीडितसर्षपैः ॥ १७ ॥**
**युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ।**
**आरग्वधादिनिर्यूहं शीतं क्षौद्रयुतं पिबेत् ॥ १८ ॥**
**मंथान्यवैर्वा बहुशः छर्दिघ्नौषधभावितैः ।**
**कफघ्नमन्नं हृद्यं च रागाः सार्जकभूस्तृणाः ॥ १९ ॥**
**लीढं मनःशीलाकृष्णामरिचं बीजपूरकात् ।**
**स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ॥ २० ॥**
**खादेत्कपित्थं सव्योषं मधुना वा दुरालभाम् ।**

कफजायां छर्द्यां निंबादिभिर्युक्तेन कोष्णजलेन वमेत् । दुर्बलं च नरमुपवासयेत् । आरग्वधादिनिर्यूहं शीतं क्षौद्रान्वितं पिबेत् । बहून्वासंश्छर्दिघ्नौषधभावितैर्यवैर्मन्थान्पिबेत् । कफघ्नमन्नं हृद्यं च भुक्तं सद्वमिं जयेत् । रागाः सकुठेरकभूस्तृणा वमिं जयंति पीताः । मनःशिलादिकं बीजपूररसेन सक्षौद्रेण वमिं जयेत् । कपित्थस्य वा रसेन माक्षिकान्वितेन मनःशिलादिकं लीढं वमिं जयेत् । कपित्थं वा सत्रिकटुकं मधुना खादेत् । धन्वयवासं वा मधुना लिह्यात् ।

**अनुकूलोपचारेण याति द्विष्टार्थजा शमम् ॥ २१ ॥**

द्विष्टार्थजा छर्दिर्मनसोऽनुकूलोपचारेण शाम्यति ।

**कृमिजा कृमिहृद्रोगगदितैश्च भिषग्जितैः ।**
**यथास्वं परिशेषाश्च तत्कृताश्च तथामयाः ॥ २२ ॥**

कृमिभ्यो जाता छर्दिः कृमिहृद्रोगगदितैरौषधैः शमं याति । न केवलं कृमिजा छर्दिरेवं शमं याति । यथास्वं परिशेषा अप्यामयाः कृमिहृद्रोगकृता येऽपि कृमिहृद्रोगगदितैर्भेषजैः शमं यांति ।

**छर्दिप्रसंगेन हि मातरिश्वा**
**धातुक्षयात्कोपमुपैत्यवश्यम् ।**
**कुर्यादतोऽस्मिन् वमनातियोग-**
**प्रोक्तं विधिं स्तंभनबृंहणीयम् ॥ २३ ॥**
**सर्पिर्गुडा मांसरसा घृतानि**
**कल्याणकत्र्यूषणजीवनानि ।**
**पयांसि पथ्योपहितानि लेहा-**
**च्छर्दिं प्रसक्तां प्रशमं नयंति ॥ २४ ॥**

हि यस्माच्छर्दिप्रसंगेनानुबंधेन यो धातुक्षयः । तस्माद्धेतोर्मातरिश्वा अवश्यं कोपमायाति । अतो हेतोर्वमनातियोगप्रोक्तं विधिं स्तंभनं बृंहणं च कुर्यान्न पुनस्तदुक्तमन्यं विधिम् । इंद्रवज्रावृत्तम् । तथा सर्पिर्गुडादयो दोषदूष्यानुरोधतो यथाकालमुपयुक्ताश्छर्दिप्रसक्तां शमयंति । उपजातिर्वृत्तम् । तत्रांतरे चोक्तम् । अंजनं चंदनोशीरमज्जासृक्शर्करोदकम् । लाजाचूर्णैः पिबेन्मंथमतियोगहरं परमिति ।

छर्दिचिकित्सादनंतरं हृद्रोगसाधनमुच्यते । हृद्रोगशब्दश्रवणसंबंधात् ।

**हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ।**
**पिबेत्सुखोष्णं सविडं गुल्मानाहार्तिजिच्च तत् ॥२५॥**

वातजे हृद्रोगे तैलं सुखोष्णं किंचिदुष्णं पिबेत् । किंभूतं मस्तुसौवीरतक्राणि विद्यंते यस्मिंस्तदेवम् । तथा सहबीडलवणेन सविडं गुल्मादिजित् ।

**तैलं च लवणैः सिद्धं समूत्राम्लं तथागुणम् ।**

लवणैः पंचभिः सैंधवादिभिर्गोमूत्रेण कांजिकेन वा तैलं सामान्यपरिभाषया पक्कं तथागुणं गुल्मादिजित् ।

**बिल्वं रास्नां यवान्कोलं देवदारुं पुनर्नवाम् ॥ २६ ॥**
**कुलत्थान्पंचमूलं च पक्त्वा तस्मिन्पचेज्जले ।**
**तैलं तन्नावने पाने वस्तौ च विनियोजयेत् ॥ २७ ॥**

बिल्वादिजले पक्त्वा तस्मिन् जले क्वाथीभूते तैलं पचेत् । तत्तैलं नस्ये पानेऽनुवासने च विनियोजयेत् । तच्च पूर्वसमम् ।

**शुंठीवयस्थालवणकायस्थाहिंगुपौष्करैः ।**
**पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्धृतम् ॥ २८ ॥**

शुंठ्यादिभिः पक्वं च घृतं पार्श्वहृद्रुजादिजित्। वयस्था आमलकी। कायस्था काकोली।

**सौवर्चलस्य द्विपले पथ्यापंचाशदन्विते।**
**घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मजित्॥२९॥**

सौवर्चलस्य पलद्वयं पथ्यापंचाशद्युक्तो घृतप्रस्थो हृद्रोगादिजित्।

**पुष्कराह्वशठीशुंठीवीजपूरजटाभयाः।**
**पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः॥३०॥**
**विकर्तिकाशूलहराः क्राथः कोष्णश्च तद्गुणः।**
**यवानीलवणक्षारवचाजाज्यौषधैः कृतः॥ ३१॥**
**सप्ततिर्दारुबीजाह्वविजयाशठिपौष्करैः।**

पुष्कराह्वादयः कल्कीकृताः पिष्टास्तथा घृतादियुक्ताः पीता विकर्तिकाशूलहराः। विकर्तिकाहृदयस्यावर्ताच्छेदनिका इव रुग्विशेषः। हृद्रोगप्रसंगादेतच्चिकित्साप्युक्ता। क्राथश्च कोष्णो यवान्यादिभिर्देवदारुसंयुतैस्तद्गुणो विकर्तिकाशूलहरः। औषधं शुंठी। बीजाह्वः बीजसारं बीजपूरकमित्यन्ये।

**पंचकोलशठीपथ्यागुडवीजाह्वपौष्करम्॥ ३२॥**
**वारुणीकल्कितं भृष्टं यमके लवणान्वितम्।**
**हृत्पार्श्वयोनिशूलेषु खादेद्गुल्मोदरेषु च॥ ३३॥**

पंचकोलादिकं वारुण्या प्रसन्नया सुरया कल्कितं पिष्टं यमके भृष्टं सैंधवयुतं हृदादिशूलेषु गुल्मादिषु च खादेत्।

**स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च।**

इह वातजे हृद्रोगे स्वेदाश्च स्निग्धा हिताः। घृतानि पक्वानि वा।

**लघुना पंचमूलेन शुंठ्या वा साधितं जलम्॥३४॥**
**वारुणीदधिमंडं वा धान्याम्लं वा पिबेत्तृषि।**

तृषि सत्यां ह्रस्वेन पंचमूलेन शुंठ्या वा साधितं जलं पिबेत्। वारुणीमंडं वा दधिमंडं वा पिबेत्।

**सायामस्तंभशूलामे हृदि मारुतदूषिते॥ ३५॥**
**क्रियैषा सद्रवायामप्रमोहे तु हिता रसाः।**
**स्नेहाढ्यास्तित्तिरिक्रौंचशिखिवर्तकदक्षजाः॥३६॥**

आयाम आक्षेपः सह आयामादिभिर्वर्तते यद् हृदयं तस्मिंस्तथाविधे हृदि तथा मारुतदूषिते सति क्रियैषा चिकित्सेयं पूर्वोक्ता। सद्रवायामप्रमोहे पुनः हृदि मारुतदूषिते रसा तित्तिर्यादिजाः। स्नेहाढ्या बहुस्नेहा हिताः।

**बलातैलं सहृद्रोगः पिबेद्वा सुकुमारकम्।**
**यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम्॥ ३७॥**

सहृद्रोगो नरो बलातैलं पिबेत्। सुकुमारकं वा प्रमेहोक्तं घृतं यष्ट्याह्वं च तच्छतपाकं यष्ट्याह्वशतपाकं शतकृत्वः पक्वं तत्तैलं वातशोणितोक्तं पिबेत्। महास्नेहं तथोत्तमं पिबेत्।

तदेव चाह।

**रास्नाजीवकजीवंतीबलाव्याघ्रीपुनर्नवैः।**
**भार्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत्॥ ३८॥**
**दधिपादं तथाम्लैश्च लाभतः स निषेवितः।**
**तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः॥ ३९॥**

रास्नादिभिः कल्कीकृतैर्महास्नेहं दधिपादं विपाचयेत्। दधिपादश्च तु दध्नः पादश्चतुर्थभागप्रमाणो यस्मिंस्तथाभूतम्। तथाम्लैः कांजिकादिभिर्लाभतो यथालाभम्। अनयैव कल्पनया स महास्नेहो निषेवितस्तर्पणो बृंहणो बल्यो वातहृद्रोगघ्नश्च स्यात्।

**दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम्॥४०॥**
**क्षीरं दधिगुडः सर्पिरौदकानूपमामिषम्।**

दीप्तेऽग्नौ सति वातहृद्रोगे सद्रवायामे सह द्रवेणाऽयामेन च वर्तते यस्तस्मिंस्तथाभूते क्षीरादि हितम्। औदकामिषं मत्स्यादिमांसमानूपामिषवराहादिजं मांसम्।

**एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि।**
**शेषेषु स्तंभजाड्यामसंयुक्तेऽपि च वातिके॥ ४१॥**

वातहृद्रोगं मुक्त्वाऽन्येषु चतुर्षु हृद्रोगेष्वेतानि क्षारादीनि वर्ज्यानि न प्रयोज्यानि। न केवलमेष्वेतानि वर्ज्यानि यावत्स्तंभजाड्यामसंयुक्ते वातिकेऽपि हृद्रोग एतानि वर्ज्यानि।

**कफानुबंधे तस्मिंस्तु रूक्षोष्णामाचरेत्क्रियाम्।**

तस्मिन्वातिके हृद्रोगे कफानुबंधे तु सति रूक्षोष्णां क्रियां सेवेत।

**पैत्ते द्राक्षेक्षुनिर्याससिताक्षौद्रपरूषकैः॥ ४२॥**
**युक्तो विरेको हृद्यः स्यात्क्रमः शुद्धे च पित्तहा।**
**क्षतपित्तज्वरोक्तं च बाह्यांतः परिमार्जनम्॥ ४३॥**
**कट्वीमधुककल्कं च पिबेत्ससितमंभसा।**

पैत्ते हृद्रोगे द्राक्षेक्षुनिर्यासादियुक्तो विरेको हृद्यः स्यात्। शुद्धे सत्यनंतरं क्रमः पित्तहा स्यात्। स तु पेयादिकः कार्यः। क्षते पित्तज्वरे च या बहिरंतश्च शुद्धिरुक्ता सा चाऽत्र कार्या। कटुकीमधुकल्कं शर्करान्वितमंभसा पिबेत्।

**श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः॥ ४४॥**
**बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम्।**
**सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम्॥ ४५॥**

श्रेयस्यादिभिः साधितं क्षीरान्वितं माहिषं सर्पिः पित्तहृद्रोगघ्नम्। श्रेयसी हस्तिपिप्पली। महिषघृतस्याऽत्र निर्देशः शीततमत्वात्।

**प्रपौंडरीकमधुकबिसग्रंथिकसेरुकाः।**
**सशुंठीशैवलास्ताभिः सक्षीरं विपचेद्घृतम्॥ ४६॥**

**शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ।**
**बस्तिं च दद्यात्सक्षौद्रं तैलं मधुकसाधितम् ॥४७॥**

प्रपौंडरीकादिभिः क्षारयुतं पक्कं घृतं शीतीभूतं सन्माक्षिकोपेतं तच्चेष्टमत्रारोगस्वादुवर्गेण द्राक्षादिना यच्च कृतं तथा बस्तिं मधुकसाधितं मधुकेन पक्कं माक्षिकान्वितं दद्यात् ।

**कफोद्भवे वमेत्स्विन्नः पिचुमंदवचांबुना ।**
**कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ॥ ४८ ॥**

कफोद्भवे हृद्रोगे स्विन्नो निंबवचाभ्यां क्वथितेन जलेन वमेत् कुलत्थजांगलादिरसभुक् ।

**पिबेच्चूर्णं वचाहिंगुलवणद्वयनागरान् ।**
**सैलायवानीककणायवक्षारान् सुखांबुना ॥ ४९ ॥**
**फलं धान्याम्लकौलत्थयूषमूत्रासवैस्तथा ।**
**पुष्कराह्वाभयाशुंठीशठीरास्नावचाकणाः ॥ ५० ॥**
**क्वाथं तथाऽभयाशुंठीमाद्रीपीतद्रुकट्फलात् ।**

चूर्णं वचादिभ्य उष्णोदकेन पिबेत् । यवानीको यवानीभेदः। तथा फलधान्याम्लादिभिर्वैकतरेण पिबेत् । तथा पुष्करादेश्चूर्णं पूर्वोक्तैरुष्णाम्लादिभिः पिबेत् । तथा हरीतक्यादेः क्वाथं पिबेत् ।

**क्वाथे रौहीतकाश्वत्थखदिरोदुंबरार्जुने ॥ ५१ ॥**
**सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः ।**
**सुखोदकानुपानस्य लेहः कफविकारहा ॥ ५२ ॥**

रौहीतकादीनां क्वाथे त्रिकटुत्रिवृच्चूर्णयुते कृतो लेह उष्णोदकानुपानः कफविकारहा । अर्शचिकित्सितोक्तां तुलां दिव्यांभसि पचेदिति । प्रमाणानुसारेण परिमाणमत्र निरूपितम् ।

**श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत् ।**

कफहृद्रोगश्लेष्मगुल्मे यानि गदितान्याज्यानि सर्पींषि तत्रैवोक्तान् क्षारांश्च नानाविधांस्तान्पिबेत् ।

**प्रयोजयेच्छिलाह्वं वा ब्राह्मं चात्र रसायनम् ॥५३॥**
**तथामलकलेहं वा प्राश्यं वाऽगस्तिनिर्मितम् ।**

शिलाजतुं प्रयोजयेत् । वा ब्राह्मं रसायनं रसायनाध्यायोक्तं तथाऽऽमलकलेहं च रसायनोक्तम् । अथवा प्राश्यं लेहमगस्त्यनिर्मितं कासचिकित्सितोक्तं प्रयोजयेत् ।

**स्याच्छूलं यस्य भुक्तेऽन्ने जीर्यत्यल्पं जरां गते॥५४॥**
**शाम्येत्सकुष्ठकृमिजिल्लवणद्वयतिल्वकैः ।**
**सदेवदार्वतिविषैश्चूर्णमुष्णांबुना पिबेत् ॥ ५५ ॥**

यस्य पुंसो भुक्तेऽन्नकाल एवातिशूलं स्यात् । जीर्यत्यन्ने मध्यमायां पाकावस्थायामल्पं शूलं स्यात् । जरां गते किट्टसारतया परिणतेऽन्ने तु शाम्येत् । स नरः कुष्ठादिभिश्चूर्णमुष्णांबुना पिबेत्।

**यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैः पुनः ।**
**जीर्यत्यन्ने तथा मूलैस्तीक्ष्णैः शूले सदाधिके ॥५६॥**

यस्य पुंसो जीर्णे सत्यभ्यधिकं शूलं भवेत् सस्नेहैर्विरेचनद्रव्यसिद्धैर्विरेचनीयैर्जीर्यत्यन्ने पच्यमानावस्थायामधिकशूले सति फलैर्विरेच्यः । तथा च मुनिः । मृद्वीकाथ विडंगानि खर्जूराणि परूषकम् । आरग्वधोऽथामलकं हरीतक्यो बिभीतकम् । कंपिल्लकोपचित्रे च त्रपुसं च मकूलकम् । नीलिकाकुवलं पीलु भवेत्फलविरेचनमिति । यस्य पुनः सदाधिकमेव शूलं केवलं न भुक्तमात्रे जीर्णे जीर्यति वा स पुरुषो मूलैस्तीक्ष्णैर्मूलविरेचनैर्दंतीत्रिवृच्छ्यामासप्तलादिद्रव्यैः समन्वितैर्विरेच्यः । तथा चोक्तम् । सप्तलाशंखिनीदंतीद्रवंतीगिरिकर्णिकाः । त्रिवृच्छ्यामोदकीर्या च प्रकीर्या क्षीरिणी तथा । छगलांडी गवाक्षी च कुचाक्षी गिरिकर्णिका । मसूरविदला चैव भवेन्मूलविरेचनमिति ।

**प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गतः ।**
**तस्यानुलोमनं कार्यं शुद्धिलंघनपाचनैः ॥ ५७ ॥**

बाहुल्येन मारुतो रुद्धमार्ग आमाशयं गतः कुप्यति । तस्य मरुतः शुद्ध्यादिभिरेवावस्थावशाद्व्यस्तैः समस्तैर्वाऽनुलोमनं कार्यम् ।

**कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये ।**

कृमिजे हृद्रोगे सर्वमेव च कृमिघ्नमौषधम् ।

**तृष्णासु वातपित्तघ्नो विधिः प्रायेण युज्यते॥५८॥**
**सर्वासु शीतो बाह्यांतस्तथा शमनशोधनम् ।**

तृष्णासु सर्वासु वातपित्तहरः सर्वोऽपि विधिरिष्यते । तथा बाह्यतोऽभ्यंतरे च शीतो विधिः । तथा शमनशोधनं च शस्यते ।

**दिव्यांबु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणम् ॥५९॥**
**निर्वापितं तप्तलोष्टकपालसिकतादिभिः ।**
**सशर्करं वा क्वथितं पंचमूलेन वा जलम् ॥ ६० ॥**
**दर्भपूर्वेण मंथश्च प्रशस्तो लाजसक्तुभिः ।**
**वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः॥६१॥**
**यवागूः शालिभिस्तद्वत्कोद्रवैश्च चिरंतनैः ।**
**शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ॥६२॥**
**हिमांबुपरिषिक्तस्य पयसा ससिता मधु ।**
**रसैश्चानम्ललवणैर्जांगलैर्घृतभर्जितैः ॥६३॥**
**मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ।**
**नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसः ॥ ६४ ॥**
**निर्वापणाश्च गंडूषाः सूत्रस्थानोदिता हिताः ।**
**दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ ६५ ॥**
**महासरिद्ध्रदादीनां दर्शनस्मरणादि च ।**

दिव्यांबु आंतरिक्षं जलं शीतं माक्षिकेण सह शस्यते । भौमं च जलं तद्गुणं दिव्यांबुसमानगुणं शुचिपृथ्वसितश्वेते देश इत्यादिलक्षणलक्षितम् । तच्च शस्यते । तस्य दिव्यजलस्येव गुणा यस्य तत्तद्गुणं तप्तलोष्टकमुपलसिकतादिभिस्तप्तं तन्निर्वापितं शीती-

कृतं शस्यते । अथवा तदेव समशर्करं शस्यते । अथवा दर्भपूर्वेण तृणाख्येन पंचमूलेन क्वथितं शस्यते । तथा लाजासक्तुभिः कृतो मंथः प्रशस्तः । तथा आमैरभ्रष्टैर्यवैर्वाट्यः प्रशस्ताः । शीतीभूतः शर्करामाक्षिकयुक्तः । यवागूः शालिभिस्तथैव शर्करामाक्षिकान्विताः शस्ताः । तथा चिरंतनैः कोद्रवैः शर्करामधुयुक्ता यवागूः शस्ताः । तथा शीतेन शीतीकृतेन द्रव्येण शीतवीर्यैर्द्रव्यैः सिद्धेन भोजनं हितम् । अथवा शिवशीतजलैः परिषिक्तस्य पुंसः पयसा सशर्करामाद्वींकं भोजनं हितम् । अथवा न केवलं पयसा सात्म्यादिवशान्मांसरसैर्जांगलैः किंचिदम्ललवणैर्धृतभर्जितैर्भोजनं हितम् । तथा मुद्गमसूरादिकानां यूषैर्जीवनीयरसयुतैर्भोजनं हितम् । तथा शीतैः शीतवीर्यैश्चंदनादिभिस्तथेक्षुरसे सिद्धं क्षीरघृतं नस्यं हितम् । क्षीरोद्भवं घृतं क्षीरघृतम् । तथा सूत्रस्थानोदिता निर्वापणा रोपणा गंडूषा हिताः । तथा दाहज्वरे य उक्ता लेपाद्या दूर्वादिभिर्वातपित्तघ्नैरित्यादिग्रंथनिर्दिष्टास्ते च हिताः । तथा निरीहत्वं निर्व्यापारत्वं हितम् । तथा मनसो रतिनिर्वृत्तत्वात् । तथा महासरितां महाह्रदानां महातडागानां च दर्शनस्मरणानि हितानि।

इति तृष्णासु सामान्येन चिकित्सितमुक्तं विशेषेणाह ।

**तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥ ६६ ॥**
**रसाश्च बृंहणाः शीता विदार्यादिगणांबु वा ।**

पवनोत्थायां तृष्णायां दधि गुडेन सह शस्यते । मांसरसाश्च बृंहणाः शस्ताः । तथा विदार्यादिगणांबु विदारिपंचांगुलेत्यादिभिः शृतं तोयं पानीयं शस्तम् ।

**पित्तजायां सितायुक्तः पक्वोदुंबरजो रसः ॥ ६७ ॥**
**तत्क्वाथो वा हिमस्तद्वत्सारिवादिगणांबु वा ।**
**तद्विधैश्च गणैः शीतकषायान् ससितामधून् ॥६८॥**
**मधुरैरौषधैस्तद्वत् क्षीरिवृक्षैश्च कल्पितान् ।**
**बीजपूरकमृद्वीका वटवेतसपल्लवान् ॥ ६९ ॥**
**मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतम् ।**
**ज्वरोदितं वा द्राक्षादिपंचसारांबु वा पिबेत् ॥७०॥**

पित्तोत्थायां शर्करान्वितः पक्वोदुंबरफलजो रसस्तेषामुदुंबराणां वा क्वाथो हिमस्तद्वत्सितायुक्तः शस्यते । तथैव सारिवादिगणांबु सारिवोशीरेत्यादि प्रशस्यते । तद्विधैः शीतवीर्यैश्च गणैः कृतान् शीतकषायान् ससितामाक्षिकान् पिबेत् । तथैव मधुररसैर्द्राक्षादिभिर्द्रव्यैः कल्पितान् । क्षीरीवृक्षैश्चाश्वत्थन्यग्रोधादिभिः कल्पितान् शीतकषायान् सशर्करामधून् पिबेत् । बीजपूरकादिपल्लवान् कुशकाशानां मूलानि मधुकं चैतज्जले शृतं पिबेत् । शीतमिति प्रकृतत्वाद्योग्यत्वाचात्र योज्यम् । अथवा ज्वरचिकित्सितोक्तं द्राक्षामधूकेत्यादिकं फांटं शीतकषायं पिबेत् । पंचसारांबु वा मधुरखर्जूरमृद्वीकेत्यादि रक्तपित्तचिकित्सिते पठितं पिबेत् ।

**कफोद्भवायां वमनं निंबप्रसववारिणा ।**
**बिल्वाढकी पंचकोलदर्भपंचकसाधितम् ॥ ७१ ॥**
**जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम् ।**
**मुद्गयूषं च सव्योषपटोलीनिंबपल्लवम् ॥ ७२ ॥**
**यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत् ।**

श्लेष्मजायां तृष्णायां निंबपत्रपानीयेन वमनं शस्तम् । बिल्वादिभिर्जलं साधितं कफतृष्णायां पिबेत् । रजन्या हरिद्रया जलं सिद्धं पिबेत् । सक्षौद्रशर्करं कफतृष्णायां मुद्गयूषं च त्रिकटुपटोलं निंबपल्लवान्वितं पिबेत् । यवान्नं तीक्ष्णकवलं तीक्ष्णनस्यं तीक्ष्णलेहं च शीलयेत् ।

**सर्वैरामाच्च तद्वत्री क्रियेष्टा वमनं तथा ॥ ७३ ॥**
**त्र्यूषणारुष्करवचाफलाम्लोष्णांबुमस्तुभिः ।**

सर्वैरामाच्च तृष्णायां सत्यां तद्वत्सन्निपातघ्यामघ्नी च क्रियेष्टा । तथा च वमनमिष्टम् । त्र्यूषणारुष्करवचादियुक्तेन फलाम्लेनोष्णजलेन वा मस्तुना वा इष्टम् ।

**अन्नात्ययान्मंडमुष्णं हिमं मंथं च कालवित् ॥७४॥**

अन्नात्ययादन्नविरहात्तृष्णायां सत्यां मंडमुष्णशीतं मंथं च कालप्रकृतिसात्म्यादिवत् पिबेत् । वातकफप्रकृतिना पित्तश्लेष्मप्रकृतिना पित्तप्रकृतिना च हिमो मंथः पेयः । एवं कालसात्म्यादिषु निरूप्यम् । सक्तवः सर्पिषाभ्यक्ताः शीतोदकपरिप्लुताः । नातिद्रवो नातिसांद्रो मंथ इत्यभिधीयते ।

**तृषि श्रमान्मांसरसं मद्यं वा ससितं पिबेत् ।**

श्रमात्तृषि जातायां मांसरसं मद्यं सशर्करं पिबेत् ।

**आतपात्ससितं मंथं यवकोलांबुसक्तुभिः ॥ ७५ ॥**
**सर्वाण्यंगानि लिंपेच्च तिलपिण्याककांजिकैः ।**

आतपात्तृषि यवकोलोद्भवैः सक्तुभिः सशर्करं मंथं पिबेत् । सर्वाणि चांगानि तिलपिण्याककांजिकैर्लिंपेत् ।

**शीतस्नानात्तु मद्यांबु पिबेत्तृण्मान् गुडांबु वा॥७६॥**

शीतस्नानाच्च तृण्मान्मद्यांबु पिबेत् । तृण्मानिति चिंत्यमेतत् । गुडजलं वा पिबेत् ।

**मद्यादर्धजलं मद्यं स्नातोऽम्ललवणैर्युतम् ।**

मद्यात्तृण्मानर्धजलं मद्यं स्नातश्चाम्ललवणाभ्यां युतं पिबेत् ।

**स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिरं जलम् ॥ ७७॥**

स्नेहेन तीक्ष्णतरोऽग्निर्यस्य स नरस्तृण्मान्निसर्गशीतलं जलं पिबेत् ।

**स्नेहादुष्णांबु जीर्णात्तु जीर्णान्मंडं पिपासितः ।**

स्नेहात् पुनरजीर्णात् पिपासित उष्णांबु वा पिबेत् । जीर्णात्तु स्नेहात्तृषि मंडं पिबेत् ।

**पिबेत्स्निग्धान्नतृषितो हिमस्पर्धि गुडोदकम् ॥७८॥**

स्निग्धान्नेन भुक्तेन तृषितो हिमस्पर्धि तु हिमशीतलं गुडोदकं पिबेत् ।

**गुर्वाद्यन्नेन तृषितः पीत्वोष्णांबु तदुल्लिखेत् ।**

गुर्वाद्यन्नेन भुक्तेन तृषितः पीत्वोष्णांबु तद्गुर्वाद्यन्नमुद्वमेत् ।

**क्षयजायां क्षयहितं सर्वं बृंहणमौषधम् ॥ ७९ ॥**

क्षयजायां तृषि क्षये हितं यद् बृंहणमौषधं तत्सर्वं हितं शस्तम् ।

**कृशादुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ।**

कृशादीनां तृषि जातायां क्षीरं हितमथवा छागो रसो हितः ।

**क्षीरं च सोर्ध्ववातायां क्षयकासहरैः श्टतम् ॥ ८० ॥**

सोर्ध्ववातायां तृषि क्षयकासहरैः शृतं क्षीरं हितम् । चशब्दान्मांसरसश्च ।

**रोगोपसर्गजातायां धान्यांबुससितामधु ।**
**पाने प्रशस्तं सर्वाश्च क्रिया रोगाद्यपेक्षया ॥ ८१ ॥**

रोगोपसर्गजातायां तृषि धान्यांबु ससितामाक्षिकं पाने प्रशस्तम् । सर्वा च क्रिया रोगाद्यपेक्षया शस्ता ।

**तृष्यन् पूर्वामयक्षीणो न लभेत जलं यदि ।**
**मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं ततः ॥ ८२ ॥**
**सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुरः ।**
**तस्यां जितायामन्योऽपि शक्यो व्याधिश्चिकित्सितुम् ॥ ८३ ॥**

पूर्वामयेन क्षीणः सन् तृष्णक् पिपासितो यदि जलं न लभेत तदा मरणं दीर्घरोगं वा प्राप्नुयात् । ततश्च हेतोस्त्वरितं शीघ्रतरं तस्य नरस्य पूर्वमन्येभ्यो रोगेभ्यः सात्म्यान्नपानभेषजैस्तृषं जयेत् । ततोऽपरं रोगं किमेवं क्रियत इत्याह । तस्यां तृषि जितायां सत्यामन्योऽपि रोग उपक्रमितुं शक्यः ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां चिकित्सास्थाने छर्दिचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

छर्द्यादिचिकित्सितादनंतरं मदात्ययचिकित्सितारंभश्चिकित्सासामान्यहेतुर्यतस्तृष्णाया यथा वातपित्ते कारणं तथा मदात्ययस्याऽपि ।

**अथाऽतो मदात्ययचिकित्सितं व्याख्यास्यामः ।**
**यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।**
**कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥ १ ॥**

यं दोषं तत्र मदात्यये वातादिकमुल्बणं पश्येल्लक्षयेज्जानीयात्तस्य दोषस्यादौ प्रथमत एव प्रतिकारयेत् प्रतिकारं कुर्यात् । एवं समविषमदोषो मदात्ययश्चिकित्स्यः । तुल्यदोषे पुनर्मदात्यये कफस्थानानुपूर्व्या दोषान् प्रतिकारयेत् ।

किमित्येवं क्रियत इत्याह ।

**पित्तमारुतपर्यंतः प्रायेण हि मदात्ययः ।**

हि यस्मात्कालक्रमेण पित्तमारुतावसानो बाहुल्येन मदात्ययः स्यात् । प्रथमं कफस्याधिक्यम् । ततः पित्तमारुतावधिकौ भवतः । कफस्थानानुपूर्वीव्याख्यानं ज्वरचिकित्सिते व्याख्यातम् ।

**हीनमिथ्यातिपीतेन यो व्याधिरुपजायते ॥ २ ॥**
**समपीतेन तेनैव स मद्येनोपशाम्यति ।**
**मद्यस्य विषसादृश्यात्**

हीनमिथ्यातिपीतेन मद्येन यो व्याधिरुत्पद्यते स व्याधिस्तेनैव मद्येन समपीतेन सम्यङ्मात्रया पीतेन शाम्यति । यावद् दृष्टेर्न संभ्रांतिर्यावन्न क्षोभ्यते मनः । तावदेव विरंतव्यं मद्यादात्मवता सदेत्येवं लक्षणं पानं सममेव पीतम् । येनैव मार्द्वीकेनाथवा माधवेन गौडादिना वा यो जातो व्याधिः स तेनैव मार्द्वीकादिना शाम्यति । कुत एवं सादित्याह । मद्यस्य विषसादृश्यात् । यथा तीक्ष्णादिभिर्दशभिर्गुणैर्विषं युक्तं तथैव तत्संख्यातैरेव गुणैर्मद्यमपि युक्तम् । ततश्च मद्यस्य मद्येनैव शांतिर्युक्ता ।

ननु यदि विषसादृशं मद्यस्य ततो यथा विषस्य विषांतरेण शांतिस्तथा मद्यस्याऽपि मद्यांतरेण शांतिः प्राप्तेत्याशंक्याह ।

**विषं तूत्कर्षवृत्तिभिः ॥ ३ ॥**
**तीक्ष्णादिभिर्गुणैर्योगाद्विषांतरमपेक्षते ।**

सत्यमेतत् । एवं प्राप्तम् । किंतु गुणैर्दशभिरुत्कर्षवृत्तिभिरधिकशक्तिस्वरूपैर्योगात्संबंधाद्विषं विषांतरमपेक्षते । न तु तद्विना तदेव स्वोत्थे रोगप्रशमायालम् । मद्यं तु हीनवृत्तिभिर्दशभिर्गुणैर्योगान्न मद्यांतरमपेक्षते । एवं तीक्ष्णादीनां गुणानां हीनोत्कर्षभेदाद्विषान्मद्यस्य वैलक्षण्यम् ।

**तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥ ४ ॥**
**मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ।**
**यान्कुर्यान्मंदतृण्मोहज्वरांतर्दाहविभ्रमान् ॥ ५ ॥**
**मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः ।**
**सुतीव्रा वेदना याश्च शिरस्यस्थिषु संधिषु ॥ ६ ॥**
**जीर्णाममद्यदोषस्य प्रकांक्षालाघवे सति ।**
**यौगिकं विधिवद्युक्तं मद्यमेव निहंति तान् ॥ ७ ॥**

स्वभावत एव तीक्ष्णोष्णेन तथाऽतिमात्रेण तथाऽम्लविदाहिना मद्येन पीतेनान्नरसक्लेदो विदग्धः क्षारतां च गतो यान्मदादीन् कुर्यात् । तथा भोजनतो मद्योत्क्लिष्टेन दोषेण स्रोतःसु रुद्धो या दारुणा मूर्धादिषु वेदनाः कुर्यात् तान्मदादीन् ताश्च वेदनाः मद्यमेव यौगिकं विधिना युक्तं निहंति । किंभूतस्य पुरुषस्य । जीर्णमद्यदोषस्य तथा प्रकांक्षायां लाघवे सति ते च ताश्च तान् । पुमान् स्त्रिया इत्येकशेषः । ननु यदि मद्यमेव तान्निहंति ततश्चिकित्सांतरारंभो न युक्तः । नैवम् । बह्व्यो हि चिकित्साः प्रतिरोगं प्रोक्ताः । तस्माच्चिकित्सांतरोपन्यासो युक्त एव ।

ननु कथं तान्मद्यमेव निहंतीत्याह ।

**क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः ।**
**मद्यमम्लेषु च श्रेष्ठं दोषविष्पंदनादलम् ॥ ८ ॥**

यस्मात् क्षारोऽम्लोपसंहितो द्रागेव माधुर्यं याति । अम्लेषु मध्ये मद्यं श्रेष्ठं दोषविष्पंदनात्पर्याप्तम् ।

**तीक्ष्णोष्णाद्यैः पुरा प्रोक्तैर्दीपनाद्यैस्तथा गुणैः ।**
**सात्म्यत्वाच्च तदेवास्य धातुसाम्यकरं परम् ॥ ९ ॥**

पुरा मदात्ययनिदानोक्तैस्तीक्ष्णोष्णाद्यैर्गुणैस्तथा मद्यवर्गोक्तैर्दीपनाद्यैर्गुणैः करणभूतैस्तदेव मद्यं सुष्ठु धातुसाम्यकरम् । धातुसाम्यकरमिति एतच्चिंत्यम् ।

**सप्ताहमष्टरात्रं वा कुर्यात्पानात्ययौषधम् ।**
**जीर्यत्येतावता पानं कालेन विपथा श्रुतम् ॥ १० ॥**

सप्ताहमथवाष्टरात्रं पानात्ययौषधं कुर्यान्नाधिकं कालम् । यत एतावता कालेन विमार्गस्थं पानं परिणमति ।

**परं ततोनुवध्नाति यो रोगस्तस्य भेषजम् ।**
**यथायथं प्रयुंजीत कृतपानात्ययौषधः ॥ ११ ॥**

तत एतस्मात्कालादनंतरमूर्ध्वं यो रोगोनुबध्नाति तस्य रोगस्य कृतपानात्ययौषधश्च यथास्वं भेषजं प्रयुंजीत ।

इति सामान्येन चिकित्सितमुक्त्वा विशेषेणाह ।

**तत्र वातोल्वणे मद्यं दद्यात्पिष्टकृतं युतम् ।**
**बीजपूरकवृक्षाम्लकोलदाडिमदीप्यकैः ॥ १२ ॥**
**यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।**
**शूल्यैर्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभिः ॥ १३ ॥**
**उष्णस्निग्धाम्ललवणा मद्यमांसरसा हिताः ।**
**आम्राम्रातकपेशीभिः संस्कृता रागखांडवाः ॥१४॥**
**गोधूममाषविकृतीर्मृदुश्चित्रा मुखप्रियाः ।**
**आर्द्रिकार्द्रककुल्माषसूक्तमांसादिगर्भिणी ॥ १५ ॥**
**सुरभिर्लवणा शीता निगदा वाच्छवारुणी ।**
**स्वरसो दाडिमः क्वाथः पंचमूलात्कनीयसः ॥१६ ॥**
**शुंठी धान्यात्तथा मस्तुसूक्तांभोत्थाम्लकांजिकम् ।**
**अभ्यंगोद्वर्तनस्नानमुष्णं प्रावरणं घनम् ॥ १७ ॥**
**घनश्चागुरुजो धूपः पंकश्चागुरुकुंकुमः ।**
**कुचोरुश्रोणिशालिन्यो यौवनोष्णांगयष्टयः ॥ १८ ॥**
**हर्षेणालिंगनैर्युक्ताः प्रियाः संवहनेषु च ।**

तेषु मदात्ययेषु मध्ये वाताधिके मदात्यये पिष्टकृतं मद्यं दद्यात् । बीजपूरकादिभिर्देशसात्म्यादिवशात् समस्तैर्व्यस्तैर्यथा योगयुक्तं तथा मेध्यस्य मेदुरस्य मांसस्य रसा हिताः । किंभूताः । उष्णाः स्निग्धाम्ललवणाश्च । तथा रागाः खांडवाश्चाम्रातकपेशीभिः संस्कृता हिताः । लक्षणमेषामृतुचर्यायामुक्तम् । तथा गोधूममाषाणां विकृतीर्हिताः । किंभूताः । मृदवोऽतीक्ष्णाः चित्रा नानाप्रकारा मुखप्रिया वदनरुचिकृतः । तथा आर्द्रिकादिगर्भिण्यच्छवारुणी च हिता । किंभूता । सुरभिर्लवणा शीता च । तथा निगदा पुराणा तथा दाडिमात्स्वरसो हितः । पंचमूलात् कनीयसो ह्रस्वात् क्वाथः शुंठीधान्यांबुक्वाथो हितः । तथा मस्त्वादि हितम् । तथाभ्यंजनादि उष्णं हितम् । प्रावरणमाच्छादनं घनं हितम् । अगरुजश्च धूपो घनो बहुलो हितः । अगरुः कुंकुमपंकोनुपानं हितम् । तथा प्रिया हर्षेण प्रीत्याऽऽलिंगनं परिष्वंगस्तत्र युक्ताः । संवाहनेषु शरीरमर्दनेषु च युक्ता हिताः । कुचाश्चोरवश्च श्रोणयश्चैतैः शालंते यास्ता एवम् । तथा यौवनेनोष्णांगयष्टिः शरीरलता यासां ता एवम् ।

**पित्तोल्वणे बहुजलं शार्करं मधुना युतम् ॥ १९ ॥**
**रसैर्दाडिमखर्जूरभव्यद्राक्षापरूपकैः ।**
**सुशीतं ससितासक्तुयोज्यं तादृक् च पानकम्॥२०॥**
**स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ।**

पित्ताधिके मदात्यये बहुजलं शार्करं मद्यविशेषं योज्यम् । मधुमाक्षिकं वा रसैर्दाडिमादिजैर्युक्तैः । तच्च सुष्ठु शीतं कृत्वा योज्यम् । परूपकाण्यत्र मधुराणि योज्यानि नाम्लानि । तेषां कफपित्तकरत्वात् । तथा च मुनिः । अम्लं परूपकं द्राक्षाबदराण्यारुकानि च । पित्तश्लेष्मप्रकोपीनीति । तादृक् च सुशीतं पानकं योज्यम् । किंभूतम् । सह सितासक्तुभिर्वर्तते यत्तदेवम् । सक्तवश्च लाजा नियोज्या योग्यतरत्वान्नतु यवानाम् । तथा स्वादुवर्गस्य क्वाथेन संयुक्तं मद्यं समाक्षिकं योज्यम् ।

**शालिषष्टिकमश्नीयाच्छशाजैणकपिंजलैः ॥ २१ ॥**
**सतीनमुद्गामलकपटोलीदाडिमैरपि ।**

शालिषष्टिकं भुंजीत । कैः सह । शशादिजै रसैर्देशादिसात्म्यवशात् सतीनादिजैश्च रसैः ।

**कफपित्तं समुत्क्लिष्टमुल्लिखेत्तृड्विदाहवान् ॥ २२ ॥**
**पीत्वांबु शीतं मद्यं वा भूरीक्षुरससंयुतम् ।**
**द्राक्षारसं वा संसर्गी तर्पणादिपरं हितः ॥ २३ ॥**
**तथाग्निर्दीप्यते तस्य दोषशेषान्नपाचनः ।**

तड्विदाहवान्मदात्ययी कफपित्तं समुत्क्लिष्टं समुत्थितं स्वस्थानाच्युताभासं सम्यग्वमेत् । किं कृत्वा । अंबु शीतं पीत्वा मद्यं वा भूरिणेक्षुरसेन संयुतं पीत्वा । अथवा द्राक्षारसं पीत्वा । परमनंतरं संसर्गी तर्पणादिभिः सुष्ठु हितः । कृतवमनादिकस्यानंतरं पेयादिक्रमः संसर्गीत्युच्यते । एवं कृते सति तस्य मदात्ययिनोऽग्निर्दीप्यते । किंभूतः । दोषशेषस्यान्नाहारस्य पाचनः ।

**कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च ॥ २४ ॥**
**तृष्णायां सविदाहायां सोत्क्लेशे हृदयोरसि ।**
**गुडूचीभद्रमुस्तानां पटोलस्याथवा रसम् ॥ २५ ॥**
**सशृंगवेरं युंजीत तित्तिरिप्रतिभोजनम् ।**

पित्तमदात्यये कासे रक्तनिष्ठीवसहिते पार्श्वादिरुजासु च तृष्णायां विदाहसहितायां हृदय उरसि च सोत्क्लेशे सति गुडूच्यादीनां रसमथवा पटोलस्य रसं सनागरं युंजीत । अल्पस्तित्तिरिस्तित्तिरिप्रति सुप्रतिनामात्रार्थ इत्यव्ययीभावः ।

**तृष्यते चाऽतिवलवद्वातपित्ते समुद्धते ॥ २६ ॥**
**दद्याद्द्राक्षारसं पानं शीतं दोषानुलोमनम् ।**
**जीर्णेऽद्यान्मधुराम्लेन छागमांसरसेन च ॥ २७ ॥**

अतितृष्यते च पुरुषाय वातपित्तेऽधिके सति द्राक्षारसपानं दद्यात् । किंभूतम् । शीतलं तथा दोषानुलोमनम् । जीर्णे च तस्मिन् छागमांसरसेन मधुराम्लेनाश्नीयात् ।

**तृष्यल्पशः पिबेन्मद्यं मेदं रक्षन् बहूदकम् ।**
**मुस्तदाडिमलाजांबु जलं वा पर्णिनीशृतम् ॥ २८ ॥**
**पटोल्युत्पलकंदैर्वा स्वभावादेव वा हिमम् ।**

तृषि सत्यामल्पं मंदं मेदं रक्षन् बहूदकं मद्यं पिबेत् । मुस्तादिजलं वा पिबेत् । पर्णिनीभिः क्वथितं वा पटोल्यादिशृतं वा सर्वमेतच्छीतं पातव्यम् । यत्तोयं स्वभावादेव वा हिममिति ।

**मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते ॥२९॥**
**यः शुष्कगलताल्वोष्ठो जिह्वां निःकृष्य चेष्टते ।**
**पाययेत्कामतोऽभस्तं निशीथपवनाहतम् ॥ ३० ॥**

मद्यातिपानाद्धेतोरब्धातौ क्षीणेऽल्पीभूते तेजसि चोद्धते क्षोभिते सति यः पुरुषः शुष्कगलताल्वोष्ठः सन् जिह्वां निःकृष्य निःसार्य चेष्टत इतश्चेतश्च लुठति तं नरं कामत इच्छयांऽभो निशीथे यः पवनस्तेनाहतं पाययेत् ।

**कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।**
**पंचाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति॥३१॥**

कोलादिभिः पंचाम्लको मुखालेपो द्राक् तृष्णां शमयति ।

**त्वचं प्राप्तश्च पानोष्मा पित्तरक्ताभिमूर्छितः ॥३२॥**
**दाहं प्रकुरुते घोरं तत्राऽतिशिशिरो विधिः ।**
**अशाम्यति रसैस्तृप्ते रोहिणीं व्यधयेच्छिराम्॥३३॥**

पानस्य मद्यस्योष्मा त्वचं प्राप्तः पित्तरक्ताभ्याममभिमूर्छितो मिश्रितो दाहं दारुणं प्रकर्षेण कुरुते । तत्र दाहे शीतो विधिः कार्यः । शीतोपचारेणाप्यशाम्यति सति दाहे मांसरसैस्तृप्ते नरे रोहिणीसंज्ञां शिरां व्यधयेद् वैद्य इति शेषः । व्यधयेदिति घटादित्वान्मित्वे ह्रस्वः ।

**उल्लेखनोपवासाभ्यां जयेच्छ्लेष्मोल्वणं पिबेत् ॥ ३४ ॥**
**शीतं शुंठीस्थिरोदीच्यदुःस्पर्शान्यतमोदकम् ।**

श्लेष्माधिकं मदात्ययं वमनोपवासाभ्यां जयेत् । शुंठ्याद्यन्यतमोदकं शीतकषायं पिबेत् ।

**निरामं क्षुधितं काले पाययेद्बहुमाक्षिकम् ॥ ३५ ॥**
**शार्करं मधु वा जीर्णमरिष्टं सीधुमेव च ।**

**रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम् ॥ ३६ ॥**

ततो निरामं जातक्षुधं संतं काले यथोचिते शार्करं बहुमाक्षिकं बहुक्षौद्रं पाययेत् । मधुमार्द्वीकं वा बहुक्षौद्रम् । द्वयमप्येतत् पुराणम् । तथारिष्टमभयादिकृतं पाययेत् । सीधुं वा पाययेत् । किंभूतम् । रूक्षा ये तर्पणास्तैः संयुक्तं यवानीशुंठीभ्यां संयुक्तम् ।

**यूषेण यवगोधूमं तनुनाऽल्पेन भोजयेत् ।**
**उष्णाम्लकटुतिक्तेन कौलत्थेनाल्पसर्पिषा ॥ ३७ ॥**
**शुष्कमूलकजैश्छागै रसैर्वा धन्वचारिणाम् ।**
**साम्लवेतसवृक्षाम्लपटोलीव्योषदाडिमैः ॥ ३८ ॥**

तथा कौलत्थेन यूषेण यवगोधूमं भोजयेत् । किंभूतेन । तनुना स्वच्छेन । तथाऽल्पेनोष्णेनाम्लकटुतिक्तेनाम्लघृतेन । अथवा शुष्कमूलकजै रसैश्छागैर्वा रसैर्धन्वचारिणां वा रसैर्भोजयेत् । किंभूतैः । सहाम्लवेतससैंधवपटोलपत्रत्रिकटुकदाडिमैः ।

**प्रभूतशुंठीमरिचहरितार्द्रकपेशिकम् ।**
**बीजपूररसाद्यम्लभृष्टनीरसवर्तितम् ॥ ३९ ॥**
**करीरकरमर्दादिरोचिष्णु बहुशालनम् ।**
**प्रव्यक्ताष्टांगलवणं विकल्पितनिमर्दकम् ॥ ४० ॥**
**यथाग्नि भक्षयन्मांसं माधवं निगदं पिबेत् ।**

मांसं यथाग्नि अग्न्यनतिक्रमेण भक्षयन्माधवं निगदं पुराणं पिबेत् । किंभूतं मांसम् । विविधैः प्रकारैः कल्पितो निष्पादितो निमर्दको येन मांसेन तद्धि कल्पितनिमर्दकम् । तदेवं विविधप्रकारत्वं निमर्दकस्याह । प्रभूता उत्कटाः शुंठीमरीचहरितार्द्रकपेशयो यस्मिंस्तदेवम् । हरितार्द्रकस्य शस्त्रकृतांत्रा दीर्घाकारा अवयवाः पेशय उच्यंते । बीजपूररसादिभिरम्लैस्तथा भृष्टो यथायथं स्नेहादिना नीरसः शुष्कप्रायो वर्तितो व्यंजनप्रकारो यत्तत्तदेवम् । करीरादिरोचिष्णु रोचनशीलं बहु प्रभूतं शालनं हरितकं यस्मिन् तथा प्रकर्षेण व्यक्तं स्पष्टं वक्ष्यमाणमष्टांगलवणं यत्र तदेवं विविधं कल्पनं कृतम् । क्रियाविशेषणान्येतानि ।

**सितासौवर्चलाजाजीतिंत्तिडीकाम्लवेतसम् ॥४१॥**
**त्वगेलामरिचार्धांशमष्टांगलवणं हितम् ।**
**स्रोतोविशुद्ध्यग्निकरं कफप्राये मदात्यये ॥ ४२ ॥**

सितायैरष्टांगलवणमन्वर्थसंज्ञं कफाधिके मदात्यये हितम् । स्रोतःशुद्धिकृदग्निदीपनं च ।

**रूक्षोष्णोद्वर्तनोद्धर्षस्नानभोजनलंघनैः ।**
**सकामाभिः सह स्त्रीभिर्युक्त्या जागरणेन च ॥४३॥**
**मदात्ययः कफप्रायः शीघ्रं समुपशाम्यति ।**

रूक्षोष्णैरुद्वर्तनादिभिर्लंघनेन तथा युक्त्या देशकालाद्यपेक्षिण्या सकामाभिर्दयिताभिः सह यज्जागरणं तेन तेन च कफाधिको मदात्ययो द्रागेव शमं याति ।

**यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति ॥ ४४ ॥**
**संनिपाते दशविधे तच्छेषेऽपि विकल्पयेत् ।**

तत्र वातोल्बणे मद्यमित्यादि । पित्तोल्बणे बहुजलमित्यादि । तथा उल्लेखनोपवासाभ्यां जयेत् । श्लेष्मोल्बणमित्यादि च त्रिविधं संनिपातं पृथग्दोषबलं प्रति लक्षणीकृत्य कर्म निर्दिष्टं कर्मेदमुक्तम्। न केवलमत्र त्रिविधे संनिपाते शेषेऽपि दशविधे संनिपाते विकल्पयेद् द्विविधं कृत्वा कल्पयेत् कुर्याद्वैद्य इति शेषः । एतदुक्तं भवति । वातोल्बणे मदात्ययजे संनिपाते यत्कर्म निर्दिष्टं तथा पित्तोल्बणे मदात्ययजे संनिपाते यत्कर्म निर्दिष्टं तदेव वातपित्तोल्बणे कुर्यात् । एवं दोषबलमपेक्ष्य सर्वस्मिन् मदात्यये चिकित्सितं कुर्यात् । स दशविधः संनिपातः शिष्यहितायाद्येह प्रदर्श्यते । उत्कर्षेण यदा त्वेको मध्येन द्वौ तदा हिमः । उत्कर्षेण यदा द्वौ तु मध्येनैको द्वितीयकः । एको मध्येन दोषः स्याद् द्वावल्पेन तृतीयकः । उत्कर्षेणैक एव स्यादल्पेन द्वौ चतुर्थकः । उत्कर्षेण यदा द्वौ तु अल्पेनैकश्च पंचमः । एकोऽल्पेन तु मध्येन द्वौ दोषाविति षष्ठकः । उत्कर्षिणः समस्ताः स्युरेवं भवति सप्तमः । मध्येन सर्वेऽपि यदा तदा भवति चाष्टमः । अल्पेन सर्वेऽपि यदा तदा तु नवमः स्मृतः । अल्पेनैको मध्येनैकस्तरामन्य इति स्फुटाः । संनिपातस्य मुनिना दश भेदाः प्रकीर्तिताः ।

**त्वङ्नागपुष्पमगधामरीचाजाजिधान्यकैः ॥ ४५ ॥**
**परूषकमधूकैलासुराह्वैश्च सितान्वितैः ।**
**सकपित्थरसं हृद्यं पानकं शशिबोधितम् ॥ ४६ ॥**
**मदात्ययेषु सर्वेषु पेयं रुच्यग्निदीपनम् ।**

त्वगादिभिः शर्करान्वितैः कपित्थरसयुक्तं कर्पूरकृताधिपानकं सर्वेषु मदात्ययेषु पातव्यं रुच्यग्निवृद्धिकरम् ।

**नाविक्षोभ्य मनो मद्यं शरीरमविहन्य वा ॥ ४७ ॥**
**कुर्यान्मदात्ययं तस्मादिष्यते हर्षणी क्रिया ।**

मद्यं यस्मान्मानसं नाऽविक्षोभ्याऽपि तु मनसः प्रक्षोभणं कृत्वा न च शरीरस्य विहननमकृत्वैव यथाकथंचिन्मदात्ययं कुर्यात् । यतश्चैतस्माद्धेतोर्हर्षोत्पादिका क्रिया एष्टव्या नाक्षोभ्येत्ययं पाठो न श्रेयान् । ल्यबादेशस्यात्र दुर्लभत्वात् ।

**संशुद्धिशमनाद्येषु मददोषः कृतेष्वपि ॥ ४८ ॥**
**न चेच्छाम्येत्कफे क्षीणे जाते दौर्बल्यलाघवे ।**
**तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च ॥ ४९ ॥**
**ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ।**

संशुद्धिशमनाद्येषूपक्रमेषु कृतेष्वपि यदि मददोषान्मद्योत्थो व्याधिर्न शाम्येत् तस्य मद्येन विदग्धस्यात एव च कफे सौम्ये धातौ क्षीणेऽत एव जाते दौर्बल्यलाघवेऽल्पप्रमाणत्वे कार्श्ये च सति तदानीं सामर्थ्याद्वातपित्तयोरतिरिक्तता वातपित्ताधिकस्य च क्षीणौजस्त्वात्तथा पयः पथ्यम् । यथा ग्रीष्मोपतप्तस्य तरोर्यथावर्षम् । वर्षमिति द्वेषः कृद्विधौ भयादीनामुपसंख्यानमित्यच् ।

**मद्यक्षीणस्य हि क्षीणं क्षीरमाश्वेव पुष्यति ॥ ५० ॥**
**ओजस्तुल्यं गुणैः सर्वैर्विपरीतं च मद्यतः ।**

हि यस्मात्तस्य तुल्यगुणैः सर्वैर्गुर्वादिभिरोजसः क्षीरं मद्याच्च विपरीतं गुणैः । तथा च मुनिः । स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् । गुरु मंदं प्रसन्नं च गव्यं दशगुणं पयः । तदेवंगुणमेवोजः सामान्यादभिवर्धयेदिति । यतश्चैवम् । तस्मान्मद्यक्षीणस्य क्षीणमोजः क्षीरमाश्वेव पुष्यति वृद्धिं प्रापयति । नत्वपरं द्रव्यं यथोक्तहेत्वभावात् ।

**पयसा विजिते रोगे बले जाते निवर्तयेत् ॥ ५१ ॥**
**क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ।**
**न विड्क्षयध्वंसकोत्थैः स्पृश्येन्नोपद्रवैर्यथा ॥ ५२ ॥**

पयसा रोगे मदात्ययाख्ये निवर्तते बले जाते सति मद्योचितः पुमान् क्षीरप्रयोगं निवर्तयेत् । मद्यं चाल्पाल्पं क्रमेणोपयुंजीत । यथा विड्क्षयध्वंसकोद्भवैरुपद्रवै रसो न स्पृशेत् । विड्क्षयोद्भवा विकाराः कायशिरोरोगाद्या ध्वंसकोपद्रवाः श्लेष्मनिष्ठीवादयः ।

**तयोस्तु स्याद्घृतं क्षीरं वस्तयो बृंहणाः शिवाः ।**
**अभ्यंगोद्वर्तनस्नानमन्नपानं च वातजित् ॥ ५३ ॥**

तयोर्विड्क्षयध्वंसकयोर्घृतं क्षीरं च चिकित्सितं स्यात् । तथा बस्तयो बृंहणाः शिवा निरपायाः । तथाभ्यंगादीनि यच्च वातपित्तजिदन्नपानं तच्च स्यात् ।

**युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ।**
**अतोऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ॥५४**

युक्तमद्यस्य पुंसो मद्योत्थो व्याधिर्नोपजायते । युक्तमद्यत्वायतोऽतोस्माद्धेतोरस्य मद्यस्य संयोगो वक्ष्यते । यः केवलं सुखायैव स्यात् ।

अधुना सुरां संपन्नामाह । तथा चोक्तं संग्रहेऽश्विनग्रहे ।

**आश्विनं या महत्तेजो बलं सारस्वतं च या ।**
**दधात्यैंद्रं च या वीर्यं प्रभावं वैष्णवं च या ॥५५॥**
**अस्त्रं मकरकेतोर्या पुरुषार्थो बलस्य या ।**
**सौत्रामण्यां द्विजमुखे या हुताशे च हूयते ॥ ५६ ॥**
**या सर्वौषधिसंपूर्णान्मथ्यमानात्सुरासुरैः ।**
**महोदधेः समुद्भूता श्रीशशांकामृतैः सह ॥ ५७ ॥**
**मधुमाधवमैरेयसीधुगौडासवादिभिः ।**
**मदशक्तिमनुञ्झंती या रूपैर्बहुभिः स्थिता ॥ ५८ ॥**
**यामासाद्य विलासिन्यो यथार्थं नाम बिभ्रति ।**
**कुलांगनाऽपि यां पीत्वा नयत्युद्धतमानसा ॥५९ ॥**
**अनंगालिंगितैरंगैः काऽपि चेतो मुनेरपि ।**

**तरंगभंगभृकुटीतर्जनैर्मानिनी मनः ॥ ६० ॥**
**एकं प्रसाद्य कुरुते या द्वयोरपि निर्वृतिम् ।**
**यथाकामं भटावाप्तिपरिहृष्टाप्सरोगणे ॥ ६१ ॥**
**तृणवत्पुरुषा युद्धे यामासाद्य त्यजंत्यसून् ।**
**यां शीलयित्वाऽपि चिरं बहुधा बहुविग्रहाम्॥६२॥**
**नित्यं हर्षातिवेगेन तत्पूर्वामिव सेवते ।**
**शोकोद्वेगारतिभयैर्या दृष्ट्वा नाभिभूयते ॥ ६३ ॥**
**गोष्ठीमहोत्सवोद्यानं न यस्याः शोभते विना ।**
**स्मृत्वा स्मृत्वा च बहुशो वियुक्तः शोचते यया ॥**
**अप्रसन्नाऽपि या प्रीत्यै प्रसन्ना स्वर्ग एव या ।**
**अपींद्रं मन्यते दुःस्थं हृदयस्थितया यया ॥ ६५ ॥**
**अनिर्देश्यसुखास्वादा स्वयंवेद्यैव या परम् ।**
**इति चित्रास्ववस्थासु प्रियामनुकरोति या ॥ ६६ ॥**
**प्रियातिप्रियतां याति यत्प्रियस्य विशेषतः ।**
**या प्रीतिर्या रतिर्या वाग्या पुष्टिरिति च स्तुता ६७**
**देवदानवगंधर्वयक्षराक्षसमानुषैः ।**
**पानप्रवृत्तौ सत्यां तां सुरां तु विधिना पिवेत्॥६८॥**

या सुराऽऽश्विनं महत्तेजो दीप्तं दधाति । आश्विनमित्यश्विनोरिदमित्यण् । नस्तद्धित इति टिलोपे प्राप्ते इनण्यनपत्य इति प्रकृतिभावः । या च सुरा सारस्वतं बलमुत्साहमैंद्रं च वीर्यं शक्तिं वैष्णवं च प्रभावं माहात्म्यं दधाति । या च मदनस्यास्त्रं प्रहरणं बलभद्रस्य या पुरुषार्थः परं प्रयोजनम् । या च सौत्रामण्यां यज्ञे द्विजास्ये हुताशे च या हूयते । या च महोदधेः सर्वौषधिसंपूर्णाद्देवदानवैर्विलोड्यमानाल्लक्ष्म्यादिभिः सहोत्पन्ना । या च सुरा मदशक्तिमत्यजंती बहुभिर्मध्वादिभिराकारैः स्थिता । यां सुरां पीत्वा विलासिन्यो मृगलोचना यथार्थमन्वर्थं नाम बिभ्रति विलासो विद्यते यासामिति । यां पीत्वा कुलवामलोचनाप्युद्धतमानसा सत्यनंगालिंगितैरंगैर्मुनेरपि चेतः क्वाऽपि नयति । तरंगभंगा कुटिला भृकुटिस्तरंगभंगाभृकुटिस्तया तर्जनानि प्रणयकलहविशेषास्तैर्मानिन्यो मानसमेकं प्रसाद्य द्वयोरपि स्त्रीपुंसोर्या निर्वृत्तिं सौख्यं या सुरा करोति । यां सुरामास्वाद्य नराः समरे तृणमिव प्राणांस्त्यजंति । कीदृशि युद्धे । यथेच्छं भटस्य शूरपुरुषस्य याऽवाप्तिरिष्टिस्तया परिहृष्टो मुदितोप्सरःसंघो यस्मिन्नाहवे तस्मिन् । यां सुरां बहुभिः प्रकारैराहारादिमध्यावसानलक्षणैस्तथा यां बहुविग्रहां मधुमाधवादिभिरनेकशरीरां शीलयित्वाऽपि नित्यं हर्षस्याऽतिवेगेन तत्पूर्वमिव तत्प्रथममिव सेवते । यां दृष्ट्वा उपलभ्यास्वादादिना शोकादिभिर्नाभिभूयते । यस्याः सुराया ऋते गोष्ठ्यादिर्न शोभते यया च वियुक्तः शोचते । शोचत इति नङिभ्यस्तङ् । या चाऽप्रसन्ना कलुषाऽपि प्रीत्यै प्रसन्ना स्वस्था सती स्वर्ग एव स्यात् । यया चांतःस्थितयेंद्रमपि दुःस्थितं मन्यते । अनिर्देश्यमप्यवर्णनीयं सुखं यस्मिन्नास्वादे स तथाविध आस्वादो यस्याः सैवम् । या केवलमात्मनैव वेद्या इति पूर्वोक्तेन प्रकारेण चित्रासु नानाविधास्ववस्थासु प्रियां वल्लभामनुकरोत्यनुहरति । प्रियापक्षे नर्मार्थः । प्रणयकलहार्थः । अप्रसन्ना कुपिता । प्रसन्ना त्यक्तकोपा । अनिर्देश्यः सुखास्वादः सुखोपलंभो यस्या इति योज्यम् । एवं यां शीलयित्वेत्यादिः सर्वोऽपि ग्रंथः प्रियायामपि योज्यः । तथा यद्यस्मात्सुरा प्रियेष्टाऽतिप्रियतां सुष्ठुवल्लभत्वं याति । यत्प्रियस्य प्रकृतत्वात्सुरा प्रियस्य विशेषेण प्रियतां याति । या सुरा प्रीतिरिति या वागिति या पुष्टिरिति या देवादिभिः स्तुता । पानप्रवृत्तौ सत्यां येषां पानाधिकारोऽस्ति धर्मशास्त्रेष्वनिषिद्धत्वात् तां पूर्वोक्तगुणां सुरां विधिना वक्ष्यमाणेन पिबेत् ।

**संभवंति च ये रोगा मेदोऽनिलकफोद्भवाः ।**
**विधियुक्ताद्दते मद्यात्ते न सिध्यंति दारुणाः ॥६९॥**

ते मेदोऽनिलकफोद्भवा रोगा न संभवंति । दारुणा दुःसहा ये विधियुक्तान्मद्यादृते न सिध्यंति । विधियुक्तेन मद्येन सर्वे मेदोऽनिलकफजा रोगाः सिध्यंतीति भावः ।

**अस्ति देहस्य सावस्था यस्यां पानं निवार्यते ।**
**अन्यत्र मद्यान्निगदाद्विविधौषधसंभृतात् ॥ ७० ॥**

देहस्य साऽवस्था प्रक्लिन्नदेहमेहादिकाऽस्ति यस्यां पानं निवार्यते । मद्यादन्यथा किंभूतात् निगदात् । तथा विविधौषधसंस्कृतात् । मद्यमेवंविधं वर्जयित्वा पानं निषिध्यत इत्यर्थः ।

**आनूपं जांगलं मांसं विधिनाऽप्युपकल्पितम् ।**
**मद्यं सहायमप्राप्य सम्यक् परिणमेत्कथम् ॥ ७१ ॥**

आनूपं जांगलं मांसं विधानेनाप्युपकल्पितं मद्यं विनोपयुक्तं कथं संपरिणमति ।

पुनरपि मद्यमेव श्लेषयन्नाह ।

**सुतीव्रमारुतव्याधिघातिनो लशुनस्य च ।**
**मद्यमांसवियुक्तस्य प्रयोगः स्यात्कियान् गुणः॥७२॥**

लशुनस्य च दारुणतरवातव्याधिविनाशिनः मद्यमांसरहितस्य कियान् गुणः स्यात् । अल्प एवेत्यर्थः ।

**निगूढशल्याहरणे शस्त्रक्षाराग्निकर्मणि ।**
**पीतमद्यो विषहते सुखं वैद्यविकत्थनाम् ॥ ७३ ॥**

तथा निगूढस्याऽत्यर्थं प्रणष्टस्य शल्यस्याऽऽहरणे तथा शस्त्रादिकर्मणि पीतमद्यो नरः सुखमक्लेशेन वैद्यविकत्थनां कदर्थनां सहते ।

**अनलोत्तेजनं रुच्यं शोकश्रमविनोदकम् ।**
**न चाऽतः परमस्त्यन्यदारोग्यबलपुष्टिकृत् ॥ ७४ ॥**

तथाऽनलस्याऽग्नेरुत्तेजनं रुच्यं शोकादिघ्नम् न च कदाचित् तस्मान्मद्यात् परमन्यत् श्रेष्ठमस्त्यारोग्यादिकृत् ।

**रक्षता जीवितं तस्मात्पेयमात्मवता सदा ।**
**आश्रितोपाश्रितहितं परमं धर्मसाधनम् ॥ ७५ ॥**

यत एवं महागुणं मद्यम् । तस्माज्जीवितं रक्षता नरेण तथाऽऽत्मवता सुधीमता सदा पेयमाश्रितानामुपाश्रितानां च हितम् । परमं धर्मसाधनमुपायः ।

अथास्य पाने विधिमाह ।

**स्नातः प्रणम्य सुरविप्रगुरून्यथास्वं**
**वृत्तिं विधाय च समस्तपरिग्रहस्य ।**
**आपानभूमिमथ गंधजलाभिषिक्ता-**
**माहारमंडपसमीपगतां श्रयेत ॥ ७६ ॥**

**स्वास्तृतेऽथ शयने कमनीये**
**भृत्यमित्ररमणीसमवेतः ।**
**स्वं यशः कथकचारणसंघै-**
**रुद्धतं निशमयन्नतिलोकम् ॥ ७७ ॥**

**विलासिनीनां च विलासशोभि**
**गीतं सनृत्तं कलतूर्यघोषैः ।**
**कांचीकलापैश्चलकिंकिणीकैः**
**क्रीडाविहंगैश्च कृतानुनादम् ॥ ७८ ॥**

**मणिकनकसमुत्थैरावनेयैर्विचित्रैः**
**सजलविविधलेखक्षौमवस्त्रावृतांगैः ।**
**अपि मुनिजनचित्तक्षोभसंपादिनीभि-**
**श्चकितहरिणलोलप्रेक्षणीभिः प्रियाभिः ॥ ७९ ॥**

**स्तननितंबकृतादतिगौरवा-**
**दलसमाकुलमीश्वरसंभ्रमात् ।**
**इति गतं दधतीभिरसंस्थितं**
**तरुणचित्तविलोभनकार्मणम् ॥ ८० ॥**

**यौवनासवमत्ताभिर्विलासाधिष्ठितात्मभिः ।**
**संचार्यमाणं युगपत्तन्वंगीभिरितस्ततः ॥ ८१ ॥**

**तालवृंतनलिनीदलानिलैः**
**शीतलीकृतमतीव शीतलैः ।**
**दर्शनेऽपि विदधद्वशानुगं**
**स्वादितं किमुत चित्तजन्मनः ॥ ८२ ॥**

**चूतरसेंदुमृगैः कृतवासं**
**मल्लिकयोज्ज्वलया च सनाथम् ।**
**स्फाटिकशुक्तिगतं सतरंगं**
**कांतमनंगमिवोद्वहदंगम् ॥ ८३ ॥**

**तालीसाद्यं चूर्णमेलादिकं वा**
**हृद्यं प्राश्य प्राग्वयःस्थापनं वा ।**
**तत्प्रार्थिभ्यो भूमिभागे समृष्टे**
**तोयोन्मिश्रं दापयित्वा ततश्च ॥ ८४ ॥**

**धृतिमान् स्मृतिमान्नित्यमनूनाधिकमाचरन् ।**
**उचितेनोपचारेण सर्वमेवोपपादयन् ॥ ८५ ॥**

**जितविकसितासितसरो-**
**जनयनसंक्रांतिवर्धितश्रीकम् ।**
**कांतामुखमिव सौरभ-**
**हृतमधुपगणं पिबेन्मद्यम् ॥ ८६ ॥**

स्नातो नरः सुरादीन् प्रणम्य यथास्वं यथायोग्यं समस्तस्य परिकरस्य वृत्तिं कृत्वाऽथ पानभूमिं गंधजलेन कर्पूरोशीरादिना वा शीतांबुनाऽभिषिक्तामाश्रयेत् । कीदृशीम् । आहारमंडपस्य निकटस्थिताम् । पीतमद्यस्य दूरे व्रजत आयासादि स्यात् । वसंततिलकं वृत्तम् । अथ भूमिश्रयणादनंतरं शयनीये स्थितो मद्यं पिबेदिति वक्ष्यमाणेन संबंधः । किंभूते । सुष्ठु आस्तृते प्रदत्तप्रच्छदपटे। तथा कमनीये रम्ये । मित्रादिसहितः । स्वं यश इत्यादि । किं कुर्वन् स्वमात्मीयं यशःकथकादिसंघैर्निशमयन् श्रावयन् । कीदृशम् । उद्धतं तथाऽतिलोकमुद्भूतरूपम् । स्वागतावृत्तम् । तथा विलासिनीनां संबंधि गीतं निशमयन् । किंभूतम् । सह नृत्तेन सनृत्तम् । द्वयमपि विलासशोभि विलासलक्षणं प्रोक्तम् । स्थानासनगमनानां हर्षभ्रूनेत्रकर्मणां चैवोत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् । तथा तद्गीतं मधुरतूर्यशब्दैस्तथा कांचीकलापैः स्फुटास्तथा स्फुरंत्यः किंकिण्यः सूक्ष्मघंटिका येषां तैस्तथाविधैस्तथा क्रीडाविहंगैः सारसादिभिश्च कृतानुनादम् । उपजातिर्वृत्तम् । रोचनीयैर्दौलुंगकैस्तन्वंगीभिर्युगपदितस्ततः संचार्यमाणम् । एवं ह्यनुभूयमानं रामणीयकं धत्ते । किंभूतैरावनेयैः । मणिकनकसमुत्थैः । तथा विचित्रैर्नानाविधैः । तथा सजलं नानाप्रकारलेखं यत् क्षौमवस्त्रं तेनावृत्तमंगं येषां तैः । किंभूताभिः । तन्वंगीभिः । मुनिजनचित्तक्षोभसंपादिनीभिः । तथा चकितस्त्रस्तो यो हरिणस्तद्वन्नेत्रैः साधु प्रेक्षंते यास्ताभिः । बाहुलकात् कर्तरि ल्युट् । तथा वल्लभाभिः । मालिनीवृत्तम् । तथा गतमिति।असंस्थितमनवस्थितं स्वरूपं दधतीभिः ।यतः स्तनाभ्यां नितंबेन च कृतादधिकं गौरवादलसम् । तथेश्वरस्य प्रभोर्यः संभ्रमो भयं तस्मादाकुलगमनम् । अत एव च तरुणचित्तानां विलोभने कार्मणं वशीकरणम् । द्रुतविलंबितमाह नभौ भरौ । तथा तन्वंगीभिरितस्ततो युगपत्संचार्यमाणम् । किंभूताभिः । यौवनासवाभ्यां मत्ताभिः । तथा विलासेनाधिष्ठित आत्मा चित्तं यासां ताभिः । तथा च कीदृशं मद्यम् । तालवृन्तादिभिरतिशीतैः शीतलीकृतम् । दर्शनेप्येवंरूपं मद्यं कामस्य वशानुगं जनं विदधत्कंदर्पोद्दीपनत्वात् । किमुत किंपुनः पीतं सत्कामवशं जनं कुर्यात् । नौरलौ युगयुता रथोद्धता । तथा चूतरसादिभिः कृताधिवासं सुगंधीकृतम् । तथा मल्लिकया पुष्पविशेषेणोज्ज्वलया विकसितया सनाथं युक्तम् । यथा स्फटिकस्य विकारा स्फाटिकी । स्फाटिकी चासौ शुक्तिश्च तस्यां गतं स्थितम् । स्फटिकस्येयं स्फाटिकीत्युच्यते । पुंवद्भावो दुर्निवारः स्यात् । तथा सतरंगम् । एवं च कांतं रम्यमंगमुद्वहन् । उत्प्रेक्षते । अनंगं पंचशरमिव चारुतरत्वेन कामोत्पादकत्वात् । दोधकवृत्तम् । प्राक्पूर्वं तालीसाद्यं चूर्णमलादिकं वा हृद्यमथवा वयःस्थापनं रसाय-

नोक्तं प्राश्य भक्षयित्वा । तथा सुमृष्ट उपलिप्ते भूमिभागे तत्प्रार्थितेभ्यो मद्यपानाधिकृतेभ्यो देवदानवकूष्मांडादिभ्यस्तोयोन्मिश्रं मद्यं दापयित्वा पश्चाज्जलं दापयितव्यमित्यर्थः । ततश्चानंतरं पिबेत् । शालिनीवृत्तम् । किं कुर्वन् । अनूनाधिकं पूर्वोक्तं नित्यमाचरेत् । धृतिमान् स्मृतिमांश्च सन् । उचितेन योग्येनोपचारेण सर्वमेवोपपादयेत् । किंभूतं मद्यम् । विकसितं च तत् सितासितं सरोजं च विकसितासितसरोजम् । जितं न्यकृतं विकसितासितसरोजं याभ्यां नयनाभ्यां ते तथाविधे तयोः संक्रांतः प्रतिबिंबत्वेन । तथा संवर्धिता श्रीर्यस्य सरकस्य तदेवम् । तथा सौरभेण हृतो रम्यगतित्वाद् भ्रमरसार्थो येन तदेवम् । सुरभेर्भावः सौरभम् । इगंताच्च लघुपूर्वादित्यण् । तच्च कांतामुखमिव । ततो जितविकसितासितसरोजनयनयोर्या संक्रांतिः संचारः स कटाक्षेक्षितादिना । तया संविवर्धिता श्रीः शोभा यस्य तदेवम् । सकटाक्षेक्षितं हि मुखं नितरां राजते । तथोत्तमस्त्रीणां मुखं सुगंधिर्भवतीति । सौरभहृतमधुपगणा विपुलतयान्यथा पादभाक् ।

**पीत्वैवं चषकद्वयं परिजनं सन्मान्य सर्वं ततो**
**गत्वा हारभुवं पुरः सुभिषजो भुंजीत भूयोऽत्र च।**
**मांसापूपघृतार्द्रकादिहरितैर्युक्तं ससौवर्चलै-**
**र्द्विस्त्रिर्वा निशि वाल्पमेव वनिता संचालनार्थं पिबेत्**

एवमनेन प्रकारेण चषकद्वयं पीत्वा ततोऽनंतरं परिजनं सर्वं वेश्यादिकमपि सन्मान्य तथाऽऽहारभुवं गत्वा सुभिषजः शोभनवैद्यस्य पुरोऽग्रे भुंजीत। अत्र चाहारं तु विमांसापूपादिभिर्युक्तं द्विस्त्रिर्वा सरकं पिबेत् । मांसापूरेति केचित् पेठुः । निशि तु कांतायाः संचालनार्थं रंजनार्थमल्पमेव पिबेन्न तु बहु । शार्दूलविक्रीडितम् ।

कांतारंजनपानं श्लाघयन्नाह ।

**रहसि दयितामंके कृत्वा भुजांतरपीडना-**
**त्पुलकिततनुं जातस्वेदां सकंपपयोधराम् ।**
**यदि सरभसं सीधूद्गारं न पाययते कृती**
**किमनुभवति क्लेशप्रायं ततो गृहतंत्रताम् ॥ ८८ ॥**

कृती प्रवीणो यदि प्रियां मधोः सरकं न पाययते । ततः किं कस्माद्गृहतंत्रतां गृहोपकरणसंपादनक्लेशमनुभवति । किं कृत्वा । रहस्यंक उत्संगे दयितां कृत्वा । किंभूताम् । भुजांतरपीडनात् पुलकितशरीराम् । तथा जातस्वेदाम् । तथा सवेपथुकुचाम् । रोमांचस्वेदकंपाः सात्विका भावाः शृंगाररसाविर्भाविकाः । दयितायामिति गतिबुद्धीत्यादिना कर्मत्वम् । पाययेत् इति निगरणचलनार्थेभ्यश्चेति परस्मैपदे प्राप्ते न पादम्येत्यादिना निषिद्धे च स्वेत्याद्यात्मनेपदम् । भवति हरिणी न्सौम्रौम्लौ गोरसोदधिसप्तभिः ।

**वरतनुवक्त्रसंगतिसुगंधितरं सरकं**
**द्रुतमिव पद्मरागमणिमासवरूपधरम् ।**
**भवति रतिश्रमेण च मदः पिबतोऽल्पमपि**
**क्षयमतनुजोजसः परिहरन् स शयीत परम् ॥८९॥**

किंभूतं मद्यम् । वरतनुवदनसंगत्या सुरभितरम् । तथा । पद्मरागमणिं द्रुतमिव द्रवत्वमिव प्राप्तमासवरूपधरम् । यतश्च रतिश्रमेणाल्पमपि मद्यं पिबतो मदो भवति ततो मद्यमोजसश्च क्षयहेतुः । अतनुजः क्षयं परिहरन् स मद्यपायी पानानंतरं शयीत स्वप्यात् । नजभजजलगाश्च यदि नर्कुटकं तु तदा ।

**इत्थं युक्त्या पिबन्मद्यं न त्रिवर्गाद्विहीयते ।**
**असारसंसारसुखं परमेवाधिगच्छति ॥ ९० ॥**
**ऐश्वर्यस्योपभोगोऽयं स्पृहणीयः सुरैरपि ।**

इत्थमेवंप्रकारया युक्त्या मद्यं पिबन् पुरुषस्त्रिवर्गाद्धर्मार्थकामलक्षणाद्यस्मान्न हीयत इति कर्मकर्तरि तङ् । असारसंसारस्य परमं सुखं चाधिगच्छति प्राप्नोति । अयं मद्यपानलक्षण ऐश्वर्यस्योपभोगः सुरैरपि स्पृहणीयः ।

**अन्यथा हि विपत्सु स्यात्पश्चात्तापेंधनं धनम्॥९१॥**
**उपभोगेन रहितो भोगवानिति निंद्यते ।**
**निर्मितोऽतिकदर्योऽयं विधिना निधिपालकः ९२**
**तस्माद्व्यवस्थया पानं पानस्य सततं हितम् ।**
**जित्वा विषयलुब्धानामिंद्रियाणां स्वतंत्रताम्॥९३॥**

अन्यथा एवमपि भोगमकुर्वतो हि विपत्सु सतीषु धनं द्रव्यं पश्चात्तापेंधनं स्यात् । स ह्येवं विपदि चिंतयति । किं मया धनं प्राप्योपभोगोऽस्मिन्न कृत इति । उपभोगं विना भोगवानिति सोल्लुंठमुच्यमानो गर्ह्यते । निंदितत्वमेवास्य प्रकटयति । निर्मित इत्यादि । अयमतिकदर्यः कुस्वामी विधिना निधिपालको निर्मितः कृतः । यत एवं तस्मात् पानस्य मद्यस्य व्यवस्थया नियमेन पानं हितम् । ननु कथं निसर्गतो विषयलुब्धेंद्रियेषु व्यवस्था पालयितुं शक्यत इत्याह । जित्वेत्यादि । विषयाभिलाषिणामिंद्रियाणां स्वातंत्र्यं जित्वा नियमेन व्यवस्थया पानं कर्तुं शक्यत इत्यर्थः ।

**विधिर्वसुमतामेष भविष्यद्वसवस्तु ये ।**
**यथोपपत्ति तैर्मद्यं पातव्यं मात्रया हितम् ॥ ९४ ॥**

वसुमतां धनिनामेष विधिः । ये तु भविष्यद्वसवस्तेषां च तैर्यथोपपत्ति यथायुक्ति हितं मद्यं मात्रया पातव्यम् ।

**यावद्दृष्टेन संभ्रांतिर्यावन्न क्षोभते मनः ।**
**तावदेव विरंतव्यं मद्यादात्मवता सदा ॥ ९५ ॥**

यावदेव दृष्टेन संभ्रांतिर्यावदेव मनो न क्षोभं याति तावदेव मद्याद्धीमता सर्वदा विरंतव्यं निवृत्तिः कार्या । एष एव समयोगः । एतदतिक्रमोऽतियोगः । यथोक्ता समयोगाद्धीनस्य लक्षणो हीनयोगः दोषदेशप्रकृत्यादीन् परीक्ष्य मिथ्यायोगः ।

**अभ्यंगोद्वर्तनस्नानवासधूपानुलेपनैः ।**
**स्निग्धोष्णैर्भाविनश्चान्नैः पानं वातोत्तरः पिबेत् ९६**

वाताधिको नरोऽभ्यंगोद्वर्तनादिभिः स्निग्धोष्णैर्भावितो मद्यं पिबेत् ।

**शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ।**
**पैत्तिको भावितश्चान्नैः पिबेन्मद्यं न सीदति ॥ ९७॥**

पैत्तिको विविधैः शीतोपचारैश्चंदनानुलेपनादिभिर्मधुरस्निग्धशीतलैश्चान्नैः सह मद्यं पिबन्न सीदति ।

**उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।**
**श्लेष्मिको जांगलैर्मांसैर्मद्यं मरिचकैः सह ॥ ९८ ॥**

श्लेष्मिको यवगोधूमभुक् सन्मद्यमशिशिरैरुपचारैस्तथा मांसैर्धन्वोद्भवैर्मरिचसंकृतैः सह पिबेत् ।

**तत्र वाते हितं मद्यं प्रायः पैष्टिकगौडिकम् ।**
**पित्ते सांभो मधु कफे मार्द्वीकारिष्टमाधवम् ॥९९॥**

तत्र तेषु मद्येषु मध्ये वाताधिके नरे प्रायो बाहुल्येन मद्यं पैष्टिकं गौडिकं च हितम् । पित्ते सजलं समाक्षिकं च मद्यं हितम् । कफे मार्द्वीकारिष्टमाधवं हितम् ।

**प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ।**
**वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छया ॥१००॥**

श्लैष्मिकः प्राग्भक्तं मद्यं पिबेत् । पैत्तिको भक्तं भुक्त्वा पिबेत् । वातोत्तरः पुनर्मध्ये भक्तस्य पिबेत् । समदोषो यथेच्छया भक्तस्य पूर्वं मध्येऽन्ते वा पिबेत् ।

**मदेषु वातपित्तघ्नं प्रायो मूर्छासु चेष्यते ।**
**सर्वत्राऽपि विशेषेण पित्तमेवोपलक्षयेत् ॥ १०१ ॥**

मदेषु प्रायेण वातपित्तघ्नं चिकित्सितम् । मूर्छासु मूर्छायेषु चेष्यते । सर्वत्रैव मदे मूर्छाये च पित्तमेवाधिकं जानीयात् । एवं तेषामुपक्रमः ।

**शीताः प्रदेहा मणयः सेका व्यजनमारुताः ।**
**सिताद्राक्षेक्षुखर्जूरकाश्मर्यः स्वरसाः पयः ॥ १०२॥**
**सिद्धं मधुरवर्गेण रसा यूषाः सदाडिमाः ।**
**षष्टिकाः शालयो रक्ता यवाः सर्पिश्च जीवनम् १०३**
**कल्याणकं महातिक्तं षट्पलं पयसाग्निकः ।**
**पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः॥१०४॥**
**त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ।**

शीताः प्रदेहाः । पयो मधुरवर्गेण द्राक्षादिना सिद्धम् । तथा रसा मांसरसादयः । यूषाश्च दाडिमान्विताः । तथा शालयो रक्तशालय इत्यर्थः । षष्टिकादयश्च । तथा घृतं कल्याणकादिकमुन्मादप्रतिषेधोक्तम् । महातिक्तं कुष्ठचिकित्सितोक्तम् । षट्पलं राजयक्ष्मचिकित्सितोक्तम् । तथा क्षीरेण चित्रकम् । तथा पिप्पल्यो रसायनविधानेन । अथवा शिलाजतुरसायनेन विधिना । अथवा त्रिफला सघृतक्षौद्रशर्करा प्रयोक्तव्या ।

**प्रसक्तवेगेषु हितं मुखनासावरोधनम् ॥ १०५ ॥**
**पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनम् ।**
**मृणालबिसकृष्णा वा लिह्यात्क्षौद्रेण साभया॥१०६**
**दुरालभां वा मुस्तां वा शीतेन सलिलेन वा ।**
**पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरम् ॥ १०७ ॥**
**धात्रीफलरसे सिद्धं पथ्याक्काथेन वा घृतम् ।**

प्रसक्तवेगेषु मदादिषु मुखस्य नासायाश्च पाण्यादिना विरोधनं हितम् । मानुष्या वा क्षीरं पिबेत् । अनेन च मानुषीक्षीरेण नस्यं दद्यात् । मृणालादीन्सहरीतकीन्माक्षिकेण वा लिह्यात् । अथवा धन्वयवासं मुस्तं वा मधुना लिह्यात् । अथवा शीतेन जलेन मरिचादीन् पिबेत् । अहिकेसरं नागकेसरम् । अथवामलकरसे सिद्धं घृतं हरीतकीक्काथेन वा सिद्धं पिबेत् ।

**कुर्यात्क्रियां यथोक्तां च यथादोषबलोदयम्॥१०८॥**

यथोक्तां च क्रियां दोषबलोदयानुसारेण कुर्यात् ।

**पंचकर्माणि चेष्टानि सेचनं शोणितस्य च ।**
**सत्त्वस्यालंबनं ज्ञानमगृद्धिर्विषयेषु च ॥ १०९ ॥**

पंचकर्माणि वमनविरेकास्थापनान्वासननस्याख्यानि चेष्टानि रक्तमोक्षश्च । सत्वस्यालंबनमाश्रयणं तथा ज्ञानं महाभूतेंद्रियतन्मात्रमनोबुद्ध्यहंकारपुरुषादीनां विषयेष्वगृद्धिरनभिलाषः ।

**मदेष्वतिप्रवृद्धेषु मूर्छायेषु च योजयेत् ।**
**तीक्ष्णं संन्यासविहितं विषघ्नं विषजेषु च ॥११०॥**

मदेषु मूर्छायेषु च अतिप्रवृद्धेषु तीक्ष्णं नस्यादिसंन्यासोक्तं योजयेत् । तथा विषजेषु मदेषु विषघ्नं चिकित्सितं योजयेत् ।

**आशु प्रयोज्यं संन्यासे सुतीक्ष्णं नस्यमंजनम् ।**
**धूमप्रधमनं तोदः सूचीभिश्च नखांतरे ॥ १११ ॥**
**केशानां लुंचनं दाहो दंशो दशनवृश्चिकैः ।**
**कट्वम्लगालनं वक्त्रे कपिकच्छ्वघर्षणम् ॥ ११२ ॥**
**उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत् ।**
**खादेत्सव्योषलवणं बीजपूरककेसरम् ॥ ११३ ॥**
**लघ्वन्नकटुतीक्ष्णोष्णमद्यात्स्रोतोविशुद्धये ।**

संन्यासे शीघ्रं सुष्ठु तीक्ष्णं नस्यमंजनं धूमप्रधमनं च प्रयोज्यम् । सूचीतोदादिकं च । नखमध्ये तथा वक्त्रे कटूनां मरिचादीनां मुस्तानां मातुलिंगादीनां च गालनं प्रयोज्यम् । तथा कपिकच्छ्वघर्षणम् । एवमुपक्रांतः समुत्थितो लब्धचेतनश्च संल्लशुनस्वरसं पिबेत् । तथा बीजपूरककेसरं सव्योषलवणं भक्षयेत् । स्रोतोविशोधनार्थं लघ्वन्नं प्रतिभुंजीत । कीदृशं तीक्ष्णोष्णम् । लघ्वन्नप्रतीति अल्पलघ्वन्नम् । सुप्रतिना मात्रार्थ इति समासः ।

**विस्मापनैः संस्मरणैः प्रियश्रवणदर्शनैः ॥ ११४ ॥**
**पटुभिर्गीतवादित्रशब्दैर्व्यायामशीलनैः ।**

**स्रंसनोल्लेखनैर्धूमैः शोणितस्रावसेचनैः ॥ ११५ ॥**
**उपाचरेत्तं प्रततमनुबंधभयात्पुनः ।**
**तस्य संरक्षितव्यं च मनः प्रलयहेतुतः ॥ ११६ ॥**

तं मदादिमंतमुपाचरेत् । कैः स्मरणैः । विस्मापनैर्विस्मयकारिभिः विपूर्वात् स्मिङो णिचि नित्यं स्मयतेरित्यात्वे पुकि ल्युटि च विस्मापनैरिति रूपम् । तथा प्रियस्य श्रवणेन दर्शनेन च गीतवादित्रशब्दैः पटुभिर्मनोहरैः । तथा व्यायामशीलनैः । तथा वमनविरेचनाभ्यां धूमेन शोणितस्रावेण चाऽनुबंधभयाच्च कारणात्तस्यातुरस्य प्रलयहेतुतो मनः सम्यग्रक्ष्यं यतस्तत इदं कार्यमिति।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां मदात्ययचिकित्सितो नामाध्यायः सप्तमः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अस्मादनंतरमर्शश्चिकित्सितमारभ्यते । संबंधश्चास्य निदान एवोक्तः ।

**अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।**
**काले साधारणे व्यभ्रे नातिदुर्बलमर्शसम् ।**
**विशुद्धकोष्ठं लघ्वल्पमनुलोमनमाशितम् ॥ १ ॥**
**शुचि कृतस्वस्त्ययनं मुक्तविण्मूत्रमव्यथम् ।**
**शयने फलके वान्यनरोत्संगे व्यपाश्रितम् ॥ २ ॥**
**पूर्वेण कायेनोत्तानं प्रत्यादित्यगुदं समम् ।**
**समुन्नतकटीदेशमथ यंत्रणवाससा ॥ ३ ॥**
**सक्थ्नोः शिरोधरायां च परिक्षिप्तमृजुस्थितम् ।**
**आलंबितं परिचरैः सर्पिषाभ्यक्तपायवे ॥ ४ ॥**
**ततोऽस्मै सर्पिषाभ्यक्तं निदध्यादृजुयंत्रकम् ।**
**शनैरनुसुखं पायौ ततो दृष्ट्वा प्रवाहणात् ॥ ५ ॥**
**यंत्रे प्रविष्टं दुर्नामप्लोतगुंठितयाऽनु च ।**
**शलाकयोत्पीड्य भिषक् यथोक्तविधिना दहेत्॥६॥**
**क्षारेणैवार्द्रमितरत्क्षारेण ज्वलनेन वा ।**
**महद्वा बलिनश्छित्वा वीतयंत्रमथातुरम् ॥ ७ ॥**
**स्वभ्यक्तपायुजघनमवगाहे निधापयेत् ।**
**निर्वातमंदिरस्थस्य ततोऽस्याचारमादिशेत् ॥ ८ ॥**
**एकैकमिति सप्ताहात्सप्ताहात्समुपाचरेत् ।**

साधारणे शरद्वसंतिके काले तथा व्यभ्रे विगताब्दे । तथा नातिदुर्बलमर्शसमपि तु किंचित्सप्रमाणमत्र योग्यपरं दत्वा तत्कृत्वेत्यध्याहृत्य संबंधः कार्यः।तथा विशुद्धकोष्ठादिकं कृत्वा ततोऽस्मै अर्शसाय यंत्रं निदध्यादिति । संग्रहे चोक्तम् । अथ खलु बलवंतमर्शोभिरुपद्रुतं यथार्हस्नेहोपस्निग्धस्विन्नमनिलवेदनावृद्धिशमनार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवंतं शुचिं कृतस्वस्त्ययनंमुक्तविण्मूत्रमव्यथं समे शुचौ विविक्ते देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्संगे निषण्णपूर्वकायमुन्नतकटिकं यंत्रणशाटकेन परिक्षिप्तग्रीवासक्थिसंधिदेशमलज्याहैराप्तपरिचारकैः सुपरिगृहीतं कृत्वा ततोऽस्मै घृताभ्यक्तं यंत्रकं निदध्यादिति । अर्शसमिति । अर्शांसि विद्यंते यस्येत्यर्थः । अर्शआदित्वादच् । किंभूतम् । विशुद्धो वमनविरेचनादिना कोष्ठो यस्य तम् । तथान्नमाशितं कृत्वा । किंभूतम् । लघुस्वभावादल्पं च मात्रया तथानुलोमनं वातवर्चसां प्रायेण प्रवर्तकम् । तथा शुचि मृज्जलाभ्यां कृत्वा । तथा कृतं स्वस्त्ययनं यस्य तम् । तथा मुक्ते विसृष्टे विण्मूत्रे येन तम् । तथाऽव्यथं व्यथारहितमन्येन व्याधिनाऽपीडितम् । तथा शयने व्यपाश्रितं शय्यामाश्रित्य स्थितम् । अथवा फलक आसनविशेषे व्यपाश्रितम् । अथवाऽन्यनरोत्संगे व्यपाश्रितम् । उच्छिन्नविशेषान्नस्थानकविशेषः । नरोत्संगे व्यपाश्रितमित्येवं सिद्धेऽन्यग्रहणं वैद्यस्य निरासार्थम् । अन्योत्संगे व्यपाश्रितमिति । कथं कृत्वा पूर्वेण कायेनोत्तानं कृत्वा नाधारेण । तथा प्रत्यादित्यगुदम् । प्रत्यभिमुखेनाऽऽदित्यं प्रत्यादित्यं गुदं यस्य तम् । यस्यां दिश्यादित्यो गतः तस्यां दिश्यर्शसेन संमुखगुदं कृत्वा स्थातव्यमित्यर्थः । समं च तथा सम्यगुन्नतः कटिदेशो यस्य तम् । अथ समुन्नतकटीदेशकरणादनंतरमर्शसं सक्थ्नोस्तथा शिरोधरायां परिक्षिप्तमाक्रांतं कृत्वा । केन केन । यंत्रणवाससा यंत्रणार्थं वासः कार्पासादिमयं यंत्रणवासस्तेन । ऋजु स्पष्टं कृत्वा स्थितम् । तथा तमातुरं परिचारकैरालंबितं निश्चलं कृत्वा। अवष्टभ्य सम्यक् स्थापितम् । ततोऽनंतरमस्मै दुर्नामवते सर्पिषाभ्यक्तपायवे घृताभ्यक्तं यंत्रकमृज्वनुसुखं कृत्वा शनैर्निदध्यात्प्रणयेत् । ततोऽनंतरं गुदं प्रणिहितं यंत्रांते प्रवाहणात्प्रवाहणेन हेतुना यंत्रे प्रविष्टदुर्नाम दृष्ट्वा । अथ पश्चाच्च शलाकया चेलखंडप्रावृतदेहयोत्पीड्य प्रकृतत्वाद्दुर्नामदूर्ध्वं पीडयित्वा । वैद्यो यथोक्तविधिना सूत्रस्थानोदितेन क्षारेणार्द्रमर्शो दहेत् । एवेत्यवधारणे । क्षारेणैव नाग्निना । इतरदशुष्कं दुर्नाम क्षारेण ज्वलनेन वा दहेत् । यथोक्तविधिनेत्यत्राऽपि योज्यम् । महद्वेति । बृहद्दुर्नाम तु बलवतः पुंसः छित्वा वा शस्त्रेण क्षाराग्निभ्यां यथायोगं दहेत् । अथानंतरमातुरम् । वीतयंत्रं विधाय स्वभ्यक्तपायुजघनमवगाहे निधापयेत् । तत्र निहितं विदध्यादित्यर्थः । ततोऽनंतरमस्याचारमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् । एकैकं दुर्नाम इत्यनेन पूर्वोक्तेन प्रकारेण सप्ताहात्समुपाचरेन्न तुल्यकालं सर्वाणि ।

अथैषां कर्मादिक्रमं दर्शयितुमाह ।

**प्राग्दक्षिणं ततो वाममर्शपृष्ठाग्रजं ततः ॥ ९ ॥**
**बह्वर्शसः**

बह्वर्शसः प्राक् पूर्वं दक्षिणदेशस्थमर्श उपाचरेत् । अनंतरं वामं ततः पृष्ठाग्रे जातमुपाचरेत् ।

**सुदग्धस्य स्याद्वायोरनुलोमता ।**
**रुचिरन्नेऽग्निपटुता स्वास्थ्यं वर्णबलोदयः ॥ १० ॥**

सुदग्धार्शसो वातस्यानुलोमनं स्यात् । तथाऽन्नेऽभिलाषः । अग्नेः पाटवं स्वास्थ्यं बलवर्णयोरुद्भूतिश्च ।

**वस्तिशूले त्वधोनाभेर्लेपयेच्छ्लक्ष्णकल्कितैः ।**
**वर्षाभूकुष्ठसुरभिमिशिलोहामराह्वयैः ॥ ११ ॥**

वस्तिशूले सति पुनर्नाभेरधः वर्षाभ्वादिभिः सुपिष्टैर्लेपयेत् ।

**शकृन्मूत्रप्रतीघाते परिषेकावगाहयोः ।**
**वरणालंबुषैरंडगोकंटकपुनर्नवैः ॥ १२ ॥**
**सुषवीसुरभीभ्यां च क्वाथमुष्णं प्रयोजयेत् ।**
**सस्नेहमथवा क्षीरं तैलं वा वातनाशनम् ॥ १३ ॥**
**युंजीतान्नं शकृद्भेदि स्नेहान् वातघ्नदीपनान् ।**

शकृतो मूत्रस्य प्रतिघाते विबंधे सति वरणादिभिः क्वाथं परिषेकावगाहयोरुष्णं सस्नेहं प्रयोजयेत् । अथवा क्षीरं वातनाशनम् । बलातैलादिकं तैलं परिषेकावगाहयोः प्रयोजयेत् । अन्नं च पट्वादिकं शकृद्विबंधघ्नं तथा स्नेहान् वातघ्नान् दीपनांश्च प्रयोजयेत् ।

**अथाऽप्रयोज्यदाहस्य निर्गतान् कफवातजान् ॥१४॥**
**संस्तंभकंडूरुक्शोफानभ्यज्य गुदकीलकान् ।**
**बिल्वमूलाग्निकक्षारकुष्ठैः सिद्धेन सेचयेत् ॥ १५ ॥**
**तैलेनाहिबिडालोष्ट्रवराहवसयाथवा ।**
**स्वेदयेदनुपिंडेन द्रवस्वेदेन वा पुनः ॥ १६ ॥**
**सक्तुना पिंडिकाभिर्वा स्निग्धानां तैलसर्पिषा ।**
**रास्नाया हपुषाया वा पिंडैर्वा कार्ष्ण्यगंधिकैः॥१७॥**

न प्रयोज्यो निषिद्धो दाहो यस्य स चाऽप्रयोज्यदाहो दाहानर्हस्तस्य निर्गतान्बहिर्भूतांस्तथा कफवातजान् गुदकीलकानर्शांस्यभ्यज्य बिल्वादिसिद्धेन तैलेन सेचयेत् । किंभूतान् । संस्तंभकंडूरुक्शोफान् । एवंभूतानन्यलक्षणान् । अथवा भुजंगादिवसया सेचयेत् । अनुसेकाभ्यंगाभ्यां पश्चात्पिंडेन पिंडस्वेदान् प्रयोजयेत् । पिंडस्वेदो मुनिनोक्तः । यथा । तिलमाषकुलत्थाम्लघृततैलामिषौदनैः । पायसैः कृशरैर्मांसैः पिंडस्वेदान् प्रयोजयेदिति । अथवा द्रवस्वेदेन स्वेदविध्युक्तेन स्वेदयेत् । पुनःशब्दोऽत्र लौकिक्या उक्त्या प्रयुक्तः । यथेदं सारमिदं पुनरसारमिति पिंडस्वेदेनाथवा सक्तूनां तैलसर्पिषा स्निग्धानां पिंडिकादिभिः स्वेदयेत् । अथवा रास्नाया हपुषायाश्च पिंडैः कार्ष्ण्यगंधिकैर्वा स्वेदयेत् । तैलसर्पिषा स्निग्धैरित्यत्रानुवर्तनीयम् । कृष्णगंधाया इमे कार्ष्ण्यगंधिकास्ते । अध्यात्मादित्वाट्ठञ् ।

**अर्कमूलं शमीपत्रं नृकेशाः सर्पकंचुकम् ।**
**मार्जारचर्मसर्पिश्च धूपनं हितमर्शसाम् ॥ १८ ॥**
**तथाश्वगंधा सुरसा बृहती पिप्पली घृतम् ।**

अर्कमूलादिचर्म सर्पिरंतं धूपनं हितम् । तथा अश्वगंधादिकं पृथगेव धूपनं हितम् ।

**धान्याम्लपिष्टैर्जीमूतबीजैस्तज्जालकं मृदु ॥ १९ ॥**
**लेपितं छायया शुष्कं वर्तिर्गुदजशातनी ।**

कांजिकेन पिष्टैर्जीमूतस्य बीजैस्तथा तस्य जीमूतफलस्य जालकं तज्जालकं जालककाकारं फलबहिर्भागो मृद्वकर्कशं लेपितं छायाशुष्कमित्येषा वर्तिर्गुदजशातनी ।

**सजालमूलजीमूतस्नेहे वा क्षारसंयुते ॥ २० ॥**
**गुंजासूरणकूष्मांडबीजैर्वर्तिस्तथागुणा ।**

सजालमूलजीमूतेन कृतो यो स्नेहस्तस्मिन्स्नेहे क्षारसंयुते कृते सति गुंजादिबीजैः कृता वर्तिस्तथागुणा गुदजशातनी ।

**स्नुक्क्षीरार्द्रनिशालेपस्तथा गोमूत्रकल्कितैः ॥ २१ ॥**
**कृकवाकुशकृत्कृष्णानिशागुंजाफलैस्तथा ।**

स्नुक्क्षीरेणार्द्रीकृता निशा हरिद्रा तया लेपः स्नुक्क्षीरार्द्रनिशालेपस्तथा पूर्वगुणः । गोमूत्रेण कल्कितैः पिष्टैः कुक्कुटशकृदादिभिर्लेपः पूर्वगुणः ।

**स्नुक्क्षीरपिष्टैः षड्ग्रंथाहलिनीवारणास्थिभिः ॥२२॥**
**कुलीरशृंगीविजयाकुष्ठारुष्करतुत्थकैः ।**
**शिग्रुमूलकजैर्बीजैः पत्रैरश्वघ्ननिंबजैः ॥ २३ ॥**
**पीलुमूलेन बिल्वेन हिंगुना च समन्वितैः ।**

स्नुक्क्षीरपिष्टैः षड्ग्रंथादिभिर्लेपो हितः । पिलुमूलेन बिल्वेन हिंगुना च युक्तैर्लेपो हितः ।

**कुष्ठं शिरीषबीजानि पिप्पल्यः सैंधवं गुडः ॥ २४ ॥**
**अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम् ।**

कुष्ठादिभिः कल्पितं प्रलेपनं पूर्वगुणम् ।

**आर्कं पयः स्नुहीकांडं कटुकालांबुपल्लवाः ॥ २५ ॥**
**करंजो बस्तमूत्रं च लेपनं श्रेष्ठमर्शसाम् ।**

अर्कक्षीरादिबस्तमूत्रांतं प्रलेपनमर्शसां श्रेष्ठं स्यात् ।

**आनुवासनिकैर्लेपः पिप्पल्याद्यैश्च पूजितः ॥ २६ ॥**

आनुवासनिकैरिति । अनुवासने भवान्यानुवासनिकानि । अध्यात्मादित्वात् ठञ् । तैर्द्रव्यैः पिप्पलीमदनमित्यादिभिर्वक्ष्यमाणैर्लेपोऽर्शःसु पूजितः ।

**एभिरेवौषधैः कुर्यात्तैलान्यभ्यंजनानि च ।**

एभिरेव पूर्वोक्तैर्लेपनद्रव्यैरभ्यंजनानि तैलानि च कुर्यात् ।

**धूपनालेपनाभ्यंगैः प्रस्रवंति गुदांकुराः ॥ २७ ॥**
**संचितं दुष्टरुधिरं ततः संपद्यते सुखी ।**

धूपनादिभिर्गुदांकुराः संचितं दुष्टं रुधिरं प्रस्रवंति । ततस्तेन स्रुतेन सुखी रुजाविरहितः संपद्यते ।

**अवर्तमानमुच्छूनकठिनेभ्यो हरेदसृक् ॥ २८ ॥**
**अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैः पुनः पुनः ।**

अर्शोभ्य उच्छूनकठिनेभ्यो रुधिरमवर्तमानं जलौकाशस्त्रादिभिरसकृद्धरेत् ।

शीतोष्णादिरुपक्रमः कस्मादत्र न क्रियत इत्याह ।

**शीतोष्णस्निग्धरूक्षाद्यैर्न व्याधिरुपशाम्यति ॥२९॥**
**रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ।**

यस्माच्छीतादिभिरुपक्रमैरुपक्रांतोऽर्शोव्याधिर्न शाम्यति । रक्ते दुष्टे सति तस्माद्धेतो रक्तमेवावसेचयेन्न तु शीतादिर्योज्यः ।

**यो जातो गोरसः क्षीराद्वह्निचूर्णावचूर्णितात् ३०**
**पिबंस्तमेव तेनैव भुंजानो गुदजान् जयेत् ।**

यो गोरसः क्षीराज्जात उत्पन्नः । किंभूतात् । वह्निचूर्णावचूर्णिताच्चित्रकचूर्णावकीर्णात् । तमेव गोरसं पिबन्नरस्तेनैव च गोरसेन भुंजानो गुदजान् जयेत् । बहुमूलावचूर्णितादिति क्वचित् पठंति । बहुमूला शतावरी ।

**कोविदारस्य मूलानां मथितेन रजः पिबेत् ॥ ३१ ॥**
**अश्नन् जीर्णे च पथ्यानि मुच्यते हतनामभिः ।**

कोविदारमूलचूर्णं मथितेन पिबन् जीर्णे च तस्मिन् पथ्यान्यश्नन् दुर्नामभिर्मुच्यते । नश्यंति तान्यस्येत्यर्थः ।

**गुदश्वयथुशूलार्तो मंदाग्निर्गौल्मिकान् पिबेत् ॥३२॥**
**हिंग्वादीननुतक्रां वा खादेद्गुडहरीतकीम् ।**
**तक्रेण वा पिबेत्पथ्यावेल्लाग्निकुटजत्वचः ॥ ३३ ॥**
**कलिंगमगधाज्योतिः सूरणान्वांशवर्धितान् ।**
**कोष्णांबुना वा त्रिपटुव्योषहिंग्वाम्लवेतसम् ॥३४॥**

गुदे श्वयथुशूलार्तो मंदाग्निर्नरो गौल्मिकान् गुल्मचिकित्साभवान् हिंग्वादीन् चूर्णान् पिबेत् । इह द्रवनिर्देशादनंतरं च मथितशब्दश्रवणादर्शोविकारे च हिंग्वादीन् चूर्णान् तक्रेण वा पिबेदिति योज्यम् । अनुतक्रां वा तक्रानुपानात्क्षुद्रहरीतकीं भक्षयेत् । अथवा पथ्यादींस्तक्रेण पिबेत् । अथवा कलिंगादीन्वांशवर्धितान्मूलद्रव्यापेक्षया भागेन यथोत्तरं वर्धितांस्तक्रेण पिबेत् । ज्योतिश्चित्रकः । अथवोष्णजलेन त्रिपट्वादि पिबेत् ।

**युक्तं बिल्वकपित्थाभ्यां महौषधविडेन वा ।**
**आरुष्करैर्यवान्या वा प्रदद्यात्तक्रतर्पणम् ॥ ३५ ॥**
**दद्याद्वा हपुषा हिंगु चित्रकं तक्रसंयुतम् ।**
**मासं तक्रानुपानानि खादेत्पीलुफलानि वा ॥ ३६ ॥**
**पिबेदहरहस्तक्रं निरन्नो वा प्रकामतः ।**

तक्रेण तर्पणं यवसक्तून् दद्यात् । किंभूतम् । बिल्वकपित्थाभ्यां युक्तमथवा महौषधविडेन युक्तं भल्लातकैर्वा युक्तमथवा यवान्या वा युक्तं प्रदद्यात् । तक्रतर्पणमेव बिल्वादिभिर्यथोक्तैः सह भुंजीत । नान्यत्किंचिदिति सूचयितुं प्रशब्दोऽत्र न्यस्तः । अथवा हपुषादि तक्रान्वितं दद्यात् । मासं पीलुफलानि तक्रानुपानानि खादेत् । अथवा इच्छयाऽहरहरनन्नाशी तक्रं पिबेत् ।

**अत्यर्थं मंदकायाग्नेस्तक्रमेवावचारयेत् ॥ ३७ ॥**

अत्यर्थं मंदकायाग्नेर्नरस्य सायं प्रातर्वा तक्रमेवावचारयेद्देयो नत्वन्नम् । अत एवैवकारोऽत्र निर्दिष्टः ।

**सप्ताहं वा दशाहं वा मासार्धं मासमेव वा ।**
**बलकालविकारज्ञो भिषक् तक्रं प्रयोजयेत् ॥ ३८ ॥**
**सायं वा लाजसक्तूनां दद्यात्तक्रावलेहिकाम् ।**
**जीर्णे तक्रे प्रदद्याद्वा तक्रपेयां ससैंधवाम् ॥ ३९ ॥**
**तक्रानुपानं सस्नेहं तक्रोदनमतः परम् ।**
**यूषै रसैर्वा तक्राढ्यैः शालीन् भुंजीत मात्रया ॥ ४०**

सप्ताहं दशाहं मासार्धं मासं वा यावद्बलादिविद्वैद्यो मथितं योजयेत् । अथवा केवलेन तक्रेणाशितुमशक्तस्तदा सायं दिनांते लाजसक्तूनां संबंधिनीं तक्रावलेहिकां दद्यात् । अथवा तक्रे जीर्णे तक्रसिद्धां पेयां सैंधवान्वितां दद्यात् । सैंधवशब्दस्यांते श्रुतत्वादुभयोरप्यवलेहिकापेययोः सैंधवेन योगो वेद्यः । अतः परमवलेहिकापेयातोऽनंतरं तक्रेण सहोदनमीषत्स्नेहं तक्रानुपानं दद्यात् । अथवा यूषै रसैर्वा तक्रभूयिष्ठैः शालीन्मात्रया भुंजीत । कार्ये भक्तादौ कारणत्वेनोपचाराच्छालीनभक्तत्वेन परिणता न दद्यादिति वेद्यम् ।

सर्वत्र तक्रप्रयोगः प्रायेण पूजित इत्यत एवाह ।

**रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ।**
**तक्रं दोषाग्निबलवत्त्रिविधं तत्प्रयोजयेत् ॥ ४१ ॥**

यथायोगं कदाचिद्रूक्षं निःशेषमुद्धृतस्नेहमथवार्धोद्धृतस्नेहं कदाचिदनुद्धृतं यस्माद्धृतं कारणे नवनीते कार्योपचारादेवमुक्तम् । तदेतत्त्रिविधं तक्रं दोषादिजित्प्रयोजयेत् ।

एवं तक्रप्रयोगे कृते को गुण इत्याह ।

**न विरोहंति गुदजाः पुनस्तक्रसमाहताः ।**
**निषिक्तं तद्विधं हंति भूमावपि तृणोलुपम् ॥ ४२ ॥**

तक्रेण समाहता उन्मीलिता गुदजाः पुनर्न प्ररोहंति । समूला नश्यंतीत्यर्थः । कथमेतदवगम्यत इत्याशंक्याह । हि यस्मात्तत्तक्रं भूमावपि निषिक्तं तृणोलुपं विशेषेण दहत्यपुनरुत्पादनात् । भूमावपीत्यपिशब्दो न केवलं शरीरबाह्यामयानपि भुवीति संदर्शनार्थः । तृणोलुपं कठिनं यद्दहति तदवश्यमर्शांसि मृदूनि मांसप्रायाणि दहत्येव ।

**स्रोतःसु तक्रशुद्धेषु रसो धातूनुपैति यः ।**
**तेन पुष्टिर्बलं वर्णः परं तुष्टिश्च जायते ॥ ४३ ॥**
**वातश्लेष्मविकाराणां शतं च विनिवर्तते ।**

वातश्लेष्मणाऽऽवृतेषु स्रोतःसु तक्रेण विशुद्धेषु सत्सु यो रस आहाररसो धातून् व्युपैति संप्राप्नोति तेन रसेन प्राप्तेन पुष्ट्यादयो जायंते । तथा वातश्लेष्मविकाराणां शतं विनिवर्तते शाम्यति ।

**मथितं भाजने क्षुद्रबृहतीफललेपिते ॥ ४४ ॥**
**निशां पर्युषितं पेयमिच्छद्भिर्गुदजक्षयम् ।**

कंटकारिकाफललेपिते भाजने मथितं निशां स्थितं गुदजक्षयमिच्छुभिः पेयम् ।

**धान्योपकुंचिकाजाजीहपुषापिप्पलीद्वयैः ॥ ४५ ॥**
**कारवीग्रंथिकशठीयवान्यग्नियवानकैः ।**
**चूर्णितैर्घृतपात्रस्थं नात्यम्लं तक्रमासुतम् ॥ ४६ ॥**
**तक्रारिष्टं पिबेज्जातं व्यक्ताम्लकटुकामतः ।**
**दीपनं रोचनं वर्ण्यं कफवातानुलोमनम् ॥ ४७ ॥**
**गुदश्वयथुकंड्वार्तिनाशनं बलवर्धनम् ।**

धान्योपकुंचिकादिभिश्चूर्णितैर्घृतपात्रस्थं नात्यम्लं तक्रमासुतं कृत्वाऽनंतरं व्यक्ताम्लकटु यस्य तद् व्यक्ताम्लकटुजातं सत्तक्रारिष्टं कामतः पिबेत् । तच्च पीतं दीपनादिगुणं स्यात् । अत्र च तक्रे पलशतमात्रे धान्यकादीनि पालिकानि देयानीति वृद्धवैद्यव्यवहारः ।

**त्वचं चित्रकमूलस्य पिष्ट्वा कुंभं प्रलेपयेत् ॥ ४८ ॥**
**तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ।**

चित्रकमूलस्य त्वचं जलेन पिष्ट्वा कुंभं प्रलेपयेत् । तक्रं तत्र जातमथवा दधिजातमर्शोहरं पिबेत् ।

**भार्ग्यास्फोतामृतापंचकोलेष्वप्येष संविधिः ॥ ४९ ॥**

भार्ग्यादिष्वप्येष संविधिरेतत्त्वगादिभाजनलेपनादिकं कार्यमित्यर्थः ।

**पिष्टैर्गजकणापाठाकारवीपंचकोलकैः ।**
**तुंबर्यजाजीधनिकाबिल्वमध्यैश्च कल्पयेत् ॥ ५० ॥**
**फलाम्लान्यमकस्नेहान् पेयायूषरसादिकान् ।**
**एभिरेवौषधैः साध्यं वारि सर्पिश्च दीपनम् ॥५१॥**

हस्तिपिप्पल्यादिभिः पिष्टैः कल्कितैस्तथा फलैर्बीजपूरादिभिरम्लान्यमकस्नेहांस्तथा पेयादिकान् कुर्यात् । एभिरेव हि हस्तिपिप्पल्यादिभिर्वारि साध्यं श्रपणीयं सर्पिश्च साध्यं तच्च द्वयं वह्नेर्दीपनं स्यात् ।

**क्रमोऽयं भिन्नशकृतां वक्ष्यते गाढवर्चसाम् ।**

अयं पूर्वोक्तः क्रमो भिन्नशकृतां कठिनपुरीषाणां तु वक्ष्यते भणिष्यते ।

तमेवाह ।

**स्नेहाढ्यैः सक्तुभिर्युक्तां लवणां वारुणीं पिबेत् ॥५२॥**
**लवणा एव वा तक्रसीधुधान्याम्लवारुणीः ।**

स्नेहाढ्यैर्बहुस्नेहसंपृक्तैः सक्तुभिर्युक्तां लवणां वारुणीं पिबेत् । तक्रादीन्वा लवणांतं पृथग्योगं पिबेत् । एवशब्दोऽत्र केवलानेवैतान् सक्तुरहितान् पिबेदिति द्योतयति ।

**प्राग्भक्तं यमके भृष्टान् सक्तुभिश्चावचूर्णितान् ५३**
**करंजपल्लवान् खादेद्वातवर्चोनुलोमनान् ।**

तथा करंजपल्लवान् भक्षयेत् । किंभूतान् । प्राग्भक्तान् । मयूरव्यंसकादित्वात्समासः । करंजपल्लवान् भुक्त्वाऽन्नं भोक्तव्यमित्यर्थः । किंभूतान् । यमके स्नेहद्वये भृष्टान् पक्वान् तथा सक्तुभिः सुष्ठ्ववचूर्णितान् तांश्च भुक्तान् वातवर्चोनुलोमनान् ।

**सगुडं नागरं पाठां गुडक्षारघृतानि वा ॥ ५४ ॥**
**गोमूत्राध्युषितामद्यात्सगुडां वा हरीतकीम् ।**

तथा गुडेन सह शुंठीं पाठां वाऽश्नीयात् । अथवा गुडयवक्षारसर्पींष्यद्यात् । गुडेन वा सह हरीतकीमद्यात् । किंभूताम् । गोमूत्रेऽध्युषिताम् ।

**पथ्याशतद्वयं मूत्रद्रोणेनामूत्रसंक्षयात् ॥ ५५ ॥**
**पक्वान् खादेत्समधुना द्वे द्वे हंति कफोद्भवान् ।**
**दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रमीन् ॥ ५६ ॥**
**ग्रंथ्यर्बुदापचीस्थौल्यपांडुरोगाढ्यमारुतान् ।**

पथ्यानां शतद्वयं पथ्याशतद्वयम् । तस्माद्गोमूत्रद्रोणेन मूत्रसंक्षयं यावन्मूत्रक्षयावधि पक्वान् । द्वे द्वे पथ्याख्ये फले खादेत् । किंभूते । समधुनि माक्षिकयुक्ते । पथ्याशतद्वयं वोपयुक्तं कफोद्भवानामयान् दुर्नामादीन् हंति ।

**अजशृंगीजटाकल्कमजामूत्रेण यः पिबेत् ॥ ५७ ॥**
**गुडवार्ताकभुक्तस्य नश्यंत्याशु गुदांकुराः ।**

अजशृंगीमूलकल्कं यः पुरुषोऽजामूत्रेण पिबेत् । किंभूतः । गुडवार्ताकभुगेतदाहारस्तस्य पुरुषस्य द्राग्दुर्नामानि नश्यंति ।

**श्रेष्ठारसेन त्रिवृतां पथ्यां तक्रेण वा सह ॥ ५८ ॥**
**पथ्यां वा पिप्पलीयुक्तां घृतभृष्टां गुडान्विताम् ।**
**अथवा सत्रिवृद्दंतीं भक्षयेदनुलोमनीम् ॥ ५९ ॥**
**हते गुदाश्रये दोषे गुदजा यांति संक्षयम् ।**

श्रेष्ठारसेन त्रिफलाक्काथेन त्रिवृतां दद्यात् । अभयां वा तक्रेण सहाद्यात् । पथ्यां वा पिप्पलीयुक्तां घृतभृष्टां गुडयुक्तां भुंजीत । अथवा पथ्यां त्रिवृद्दंतीभ्यां सहानुलोमकृतां भक्षयेत् । गुदाश्रये दोषे हते सति गुदजाः संक्षयं यांति । आश्रयाभाव आश्रितानुपपत्तेः । तस्मादनुलोमनमर्शःसु हितमित्यर्थः ।

**दाडिमस्वरसाजाजीयवानीगुडनागरैः ॥ ६० ॥**
**पाठया वा युतं तक्रं वातवर्चोनुलोमनम् ।**
**सीधुं वा गौडमथवा सचित्रकमहौषधम् ॥ ६१ ॥**
**पिबेत्सुरां वा हपुषापाठासौवर्चलान्विताम् ।**

दाडिमादिभिर्युक्तं तक्रं पाठया वा वातवर्चोनुलोमनं स्यात् । अथवा सीधुं चित्रकशुंठीयुतं पिबेत् । गौडं वा चित्रकशुंठीयुतं पिबेत् । अथवा सुरां हपुषादियुक्तां पिबेत् ।

**दशादिदशकैर्वृद्धाः पिप्पलीर्द्विपिचुं तिलान् ॥६२॥**
**पीत्वा क्षीरेण लभते बलं देहहुताशयोः ।**

दशादिदशकैर्वृद्धा पिप्पलीभिस्तथा तिलान् द्विपिचुं पीत्वा देहस्य वह्नेश्च बलं प्राप्नोति । दशपिप्पल्य आदिः प्रथमं दिनं येषां दशकानां त एवम् । दशादयश्च ते दशकाश्च दशादिदशकाः । ते वृद्धाः प्रथमे दिने दशपिप्पलीस्तिलकर्षद्वयं च क्षीरेण पेयाः । अनंतरं प्रतिदिनं दशदश पिप्पलीः पिप्पलीवर्धमानन्यायेन वृद्धतिलकर्षद्वयेन सह क्षारेण पीत्वा देहस्याग्नेश्च बलं लभते ।अत्र कालस्यानिर्दिष्टत्वाद्देहाग्न्योर्बलमिच्छता यथेष्टकालः प्रयोगः कार्यः । क्षीरस्य चाऽत्र प्रमाणेऽनुक्ते सामान्यपरिभाषया पेष्यस्य कर्षमालोड्यं तत्तद्द्रवस्य पलत्रयमिति परिमाणं कल्प्यम् ।

**दुस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ६३ ॥**
**एकैकेनाऽपि संयुक्ता पाठा हंत्यर्शसां रुजम् ।**

धन्वयवासकेन बिल्वेन यवान्या शुंठ्या वैकैकेनाऽप्येवं पाठा युक्ता दुर्नाम्नां रुजं हंति । एकैकेनाऽपीत्यपिशब्दात् द्वाभ्यां त्रिभिश्चतुर्भिश्च । एकैकेनेत्येकशब्दस्यैकं बहुव्रीहिवदिति द्वित्वबहुव्रीहिवद्भावात्सुपो लुक् ।

**सलिलस्य वहे पक्त्वा प्रस्थार्धमभयात्वचम् ॥ ६४ ॥**
**प्रस्थं धात्र्या दशपलं कपित्थानां ततोऽर्धतः ।**
**विशालारोध्रमरिचकृष्णावेल्लैलवालुकम् ॥ ६५ ॥**
**द्विपलांशं पृथक्पादशेषे पूते गुडात्तुले ।**
**दत्त्वा प्रस्थं च धातक्या स्थापयेद्घृतभाजने ॥ ६६ ॥**
**पक्षात्स शीलितोऽरिष्टः करोत्यग्निं निहंति च ।**
**गुदजग्रहणीपांडुकुष्ठोदरगरज्वरान् ॥ ६७ ॥**
**श्वयथुप्लीहहृद्रोगगुल्मयक्ष्मवमीकृमीन् ।**

सलिलस्य वहे द्रोणचतुष्टये पक्त्वा हरीतकीत्वचं प्रस्थार्धमष्टपलान्यामलकदलानां प्रस्थं कपित्थस्य पलानि दश ततः कपित्थादर्धेन विशालां पंचपलां रोध्रादिकं द्विपलांशं पृथक्पृथगेतत्सर्वं पक्त्वा तस्मिन् पादशेषे द्रोणशेषे पूते गालिते पादशेषे पूते चास्मिन् गुडात्तुले द्वे दत्त्वा धातक्याः प्रस्थं च ततो घृतरूढे भाजने स्थापयेत् । पक्षादूर्ध्वं शीलितः सोऽभयारिष्टसंज्ञोऽग्निं करोति दीपयति । गुदजादींश्च हंति ।

**जलद्रोणे पचेद्दंतीदशमूलवराग्निकान् ॥ ६८ ॥**
**पालिकान्पादशेषे तु क्षिपेद्गुडतुलां परम् ।**
**पूर्ववत्सर्वमस्य स्यादानुलोमितरस्त्वयम् ॥ ६९ ॥**

जलस्य द्रोणे दंत्यादीन् प्रत्येकं पालिकान् पचेत् । पादशेषे चाऽस्मिन् गुडात्तुलां क्षिपेत् । परमन्यत्सर्वमस्य दंत्यरिष्टस्य पूर्ववदभयारिष्टतुल्यं धातकीपरिमाणं घृतभाजने स्थापनं पक्षोत्तरकालपानादि स्यात् । आनुलोमित्यादि । आनुलोमि वातविबंधनुत् । अभयारिष्टः । अयं पुनस्ततोप्यानुलोमितरः ।

**पचेद्दुरालभाप्रस्थं द्रोणेऽपां प्रास्तैः सह ।**
**दंतीपाठाग्निविजयावासामलकनागरैः ॥ ७० ॥**
**तस्मिन् सिताशतं दद्यात्पादस्थेऽन्यच्च पूर्ववत् ।**
**लिंपेत्कुंभं तु फलिनीकृष्णाचव्याज्यमाक्षिकैः॥७१॥**

अपां द्रोणे धन्वयासप्रस्थं दंत्यादिभिः द्विपलिकैः सह पचेत् । तस्मिन् पादस्थे क्वाथे सितायाः शतं पचेत् । अन्यद् धातकीपरिमाणादिकं पूर्ववदभयारिष्टवत्कार्यम् । लिंपेदित्यादि । तुर्विशेषे । विशेषस्तु फलिन्यादिभिः कुंभं लिंपेद्यत्रायं निक्षिप्यते दुरालभारिष्ट इति ।

**प्राग्भक्तमानुलोम्याय फलाम्लं वा पिबेद्घृतम् ।**
**चव्यचित्रकसिद्धं वा यवक्षारगुडान्वितम् ॥ ७२ ॥**
**पिप्पलीमूलसिद्धं वा सगुडक्षारनागरम् ।**

प्राग्भक्तं भक्तात् पूर्वं घृतं फलैर्मातुलुंगादिभिरनुलोमनप्रायैरम्लं तैः पक्वं पिबेत् । चव्यचित्रकाभ्यां सिद्धं पक्वं यवक्षारगुडाभ्यां युक्तं घृतं पिबेत् । अथवा पिप्पलीमूलसिद्धं गुडयवक्षारनागरसहितं पिबेत् ।

**पिप्पलीपिप्पलीमूलधानकादाडिमैर्घृतम् ॥ ७३ ॥**
**दध्ना च साधितं वातशकृन्मूत्रविबंधहृत् ।**

पिप्पल्यादिभिर्दधिसहितैः साधितं घृतं वातशकृन्मूत्रविबंधजित् ।

**पलाशक्षारतोयेन त्रिगुणेन पचेद्घृतम् ॥ ७४ ॥**
**वत्सकादिप्रतीवापमर्शोघ्नं दीपनं परम् ।**

पलाशक्षारस्य जलेन त्रिगुणेन वत्सकादिप्रतीवापं घृतं पचेत् । तच्चार्शोघ्नं परं दीपनं च ।

**पंचकोलाभयाक्षीरयवानीविडसैंधवैः ॥ ७५ ॥**
**सपाठाधान्यमरिचैः सबिल्वैर्दधिमद्घृतम् ।**
**साधयेत् तज्जयत्याशु गुदवंक्षणवेदनाम् ॥ ७६ ॥**
**प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।**

पंचकोलादिभिर्दधिसहितं घृतं पचेत् । तच्च गुदादिवेदनादीन् जयति ।

**पाठाजमोदधनिकाश्वदंष्ट्रापंचकोलकैः ॥ ७७ ॥**
**सबिल्वैर्दधि चांगेरीस्वरसे च चतुर्गुणे ।**
**हंत्याज्यं सिद्धमानाहं मूत्रकृच्छ्रं प्रवाहिकम् ॥ ७८ ॥**
**गुदभ्रंशार्तिगुदजग्रहणीगदमारुतान् ।**

पाठादिभिश्चांगेरीस्वरसे दधि च चतुर्गुणे घृतं पक्वं चांगेरीघृतमेतदानाहादीन् हंति ।

**शिखितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ॥**
**दक्षाणां वर्तकानां वा दद्याद्विड्वातसंग्रहे ।**

मयूरतित्तिर्यादीनां सुसंस्कृतानम्लान् मांसरसान् विड्वातसंग्रहनिवृत्त्यर्थं दद्यात् ।

**वास्तुकाग्नित्रिवृद्दंतीपाठाम्लीकादिपल्लवान् ॥ ८० ॥**
**अन्यच्च कफवातघ्नं शाकं च लघु भेदि च ।**
**सहिंगु यमके भृष्टं सिद्धं दधिसरैः सह ॥ ८१ ॥**
**धनिकापंचकोलाभ्यां पिष्टाभ्यां दाडिमांबुना ।**
**आर्द्रिकायाः किसलयैः शकलैरार्द्रकस्य च ॥ ८२ ॥**
**युक्तमंगारधूपेन हृद्येन सुरभीकृतम् ।**
**सजीरकं समरिचं बिडसौवर्चलोत्कटम् ॥ ८३ ॥**
**वातोत्तरस्य रूक्षस्य मंदाग्नेर्बद्धवर्चसः ।**
**कल्पयेद्रक्तशाल्यन्नव्यंजनं शाकवद्रसान् ॥ ८४ ॥**
**गोगोधाछगलोष्ट्राणां विशेषात्क्रव्यभोजिनाम् ।**

वास्तुकादीनां शाकं तथाऽपरमपि शाकं यत्कफवातघ्नं कोशातकादिकं लघु भेदि तच्च सहिंगु च । तथा यमके भृष्टं संतलितम् । तथा दधिसरेण धनिकापंचकोलाभ्यां पिष्टाभ्यां दाडिमांबुना च सिद्धं तथार्द्रिकाया धनिकायाः किसलयैः पल्लवैर्युक्तम् । तथाऽर्द्रकस्य शकलैर्युक्तम् । तथा हृद्येन मनःप्रियेणांगारधूपेनांगारैर्यो धूपो यो हिंग्वादिना प्रसिद्धस्तेन सुरभीकृतम् । तथा सजीरकं समरिचं बिडसौवर्चललवणाभ्यामुत्कटमधिकं वातोत्तरस्य पवनाधिकस्य पुरुषस्य । तथा रूक्षस्य । तथा मंदाग्नेस्तथा बद्धवर्चसः कल्पयेत् । रक्तशालिभक्तस्य व्यंजनं तेमनाख्यं शाकवत्कल्पयेच्छाकसंस्कारेण कुर्यादित्यर्थः । व्यंजनानिति पाठे पुंस्त्वं चिंत्यम् । तथा रसान् । केषां रसान् । गोगोधादीनां विशेषेण क्रव्यभोजिनां मांसभक्षिणाम् ।

तदेवमाहारं निरूप्यमानं निरूपयन्नाह ।

**मदिरां शार्करं गौडं सीधुं तक्रं तुषोदकम् ॥ ८५ ॥**
**अरिष्टं मस्तु पानीयं पानीयं चाल्पकं शृतम् ।**
**धान्येन धान्यशुंठीभ्यां कंटकारिकयाऽथवा ॥ ८६ ॥**
**अंते भक्तस्य मध्ये वा वातवर्चोनुलोमनम् ।**

मदिरादिपानीयं पातव्यम् । अथवा पानीयं जलमतिशयेनाल्पकं शृतं यथायोगं कदाचिद्धान्येन कदाचिद्धान्यशुंठीभ्यां कदाचित्कंटकारिकायाः शृतं कदाचिद्भक्तस्यांते कदाचिन्मध्ये योग्यतावशायेषां मारुतावस्थादिरूपत्वं तेषां भक्तस्य मध्येऽन्येषामंते मदिरादिपानं वातवर्चोनुलोमनम् । तयोरप्रवर्तनोपारूढयोर्यथामार्गप्रवर्तनमित्यर्थः । वातस्यानुलोमनं च यत्तत्कफपित्तयोरप्यनुलोमनम् । पवनो हि क्रियावानक्रियावतां देहगतानां भावानामनुलोमनः संभाव्यते । तथा च प्रागभ्यधायि । विट्श्लेष्मपित्तादिमलायनानां विक्षेपसंहारकर इत्यादि ।

अर्शःसु चानुलोमनं कार्यमिति दर्शयितुमाह ।

**विड्वातकफपित्तानामानुलोम्ये हि निर्मले ॥ ८७ ॥**
**गुदे शाम्यंति गुदजाः पावकश्चाभिवर्धते ।**

यस्माद्विड्वातादीनामानुलोम्ये सति गुदं निर्मलं भवति । गुदे च निर्मले गुदजाः शाम्यंति । पावकः कायाग्निश्चाभिवर्धते यतस्तस्मादर्शसां विड्वातकफपित्तानुलोमनं भेषजान्नपानादि यत्तद्देयमिति भावः ।

**उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः ॥ ८८ ॥**
**विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम् ।**

ये पुरुषा उदावर्तयुक्ता ये चाऽतिशयेन विरूक्षितास्तथा विगुणपवनाः शूलपीडिताश्च तेष्वनुवासनमिष्टं तंत्रकृतामिति शेषः ।

तदेवानुवासनमाह ।

**पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ॥ ८९ ॥**
**कुष्ठं शुंठीं पुष्कराख्यं चित्रकं देवदारु च ।**
**पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ॥ ९० ॥**
**अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ।**
**गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ९१ ॥**
**कट्युरुपृष्ठदौर्बल्यमानाहं वंक्षणाश्रयम् ।**
**पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम् ॥ ९२ ॥**
**उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ।**

पिप्पल्यादीनि पिष्ट्वा जलेन तैलं द्विगुणक्षीरेण युतं पक्तव्यम् । जलस्याऽत्रानुक्तस्याऽपि चतुर्गुणोंऽशः प्रकल्प्यः । एवं हि द्रव्याणि सम्यग्युक्तरसानि स्युः । तंत्रांतरे चाक्तम् । स्नेहसक्षीरमांसाद्यैः पाको यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र बीजादानार्थमावपेत् । न मुंचति रसं द्रव्यं क्षीरादिभिरुपस्कृतम् । सम्यक्पाको न जायेत तस्मात्तोयं विनिःक्षिपेदिति । तच्च तैलं विगुणपवनानामर्शसां श्रेष्ठं हितम् । अनुवासनाच्च तत्तैलं गुदनिःसारणादीन् जयेत् ।

**निरूहं वा प्रयुंजीत सक्षीरं पांचमूलिकम् ॥ ९३ ॥**
**समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ।**

अथवा निरूहं पांचमूलिकं समानक्षीरं मूत्रस्नेहलवणान्वितं फलादिभिः पूर्वोक्तैः कल्कैर्युक्तं प्रयुंजीत । स च पूर्वोक्तगुणः । समानं क्षीरं यस्मिन् तत्सक्षीरम् । समानस्य छंदसेवेति योगविभागात्सभावः । सहमूत्रस्नेहलवणैर्वर्तते समूत्रस्नेहलवणस्तम् । फलादिभिः पूर्वोक्तैः । वोपसर्जनस्येति सभावः । सहशब्दश्चेषच्छब्दार्थः । अर्शसां शुष्कार्द्रत्वेन द्वैविध्यम् ।

तत्र शुष्कार्शसां चिकित्सितमुक्त्वाऽधुनाऽऽर्द्राणां रक्तार्शसामाह ।

**अथ रक्तार्शसां वीक्ष्य मारुतस्य कफस्य वा ॥ ९४ ॥**
**अनुबंधं ततः स्निग्धं रूक्षं वा योजयेद्धिमम् ।**

रक्तार्शोऽधिकारे पित्तस्य सर्वदा व्यभिचारित्वात्कदाचिन्मारुतानुबंधं कदाचित्कफानुबंधं स्वलिंगतो वीक्ष्योपलभ्य स्निग्धं रूक्षं वा पानाद्यौषधं योजयेत् । एतच्चोभयमपि शीतं नतूष्णं पित्तस्याऽत्र नित्यं सन्निहितत्वात् । वातानुबंधं वीक्ष्य स्निग्धं कफानुबंधं वीक्ष्य रूक्षचिकित्सितं योज्यम् ।

वातानुबंधकफानुबंधयोर्लक्षणमाह ।

**सकृच्छ्यावं खरं रूक्षमधो निर्याति नानिलः॥९५॥**
**कट्यूरुगुदशूलं च हेतुर्यदि च रूक्षणम् ।**
**तत्रानुबंधो वातस्य श्लेष्मणो यदि विट् श्लथा॥९६॥**
**श्वेता पीता गुरुः स्निग्धा सपिच्छा स्तिमितो गुदः।**
**हेतुस्निग्धगुरुर्विद्याद्यथास्वं चास्रलक्षणात् ॥ ९७ ॥**

शकृच्छ्यावादिशूलपर्यंतं लक्षणं यदि स्यात् तत्रानुबंधो वातस्येत्येवं बोध्यम् । हेतुर्यदि रूक्षणं रूक्षणं च हेतुरासेवितः । शकृच्छ्यावादिलक्षणं चोत्पन्नं तदा वातानुबंधत्वं ज्ञेयम् । तथैव विट्श्लथादिलक्षणं स्निग्धगुरुणा सेवितेन हेतुना सहितं श्लेष्मणोनुबंधस्याऽनुमापकम् । अस्रस्य लक्षणाच्च सिराव्यधविध्युक्ताद्वाताच्छ्यावारुणमित्यादिकाच्च लक्षणाद्वातस्यानुबंधं विद्यात् । कफात् स्निग्धमित्यादिकाल्लक्षणात्कफस्यानुबंधं विद्यात् ।

**दुष्टेऽस्रे शोधनं कार्यं लंघनं च यथाबलम् ।**

दुष्टे वातादिदूषितेऽस्रे यथाबलं बलानतिक्रमेण कदाचिल्लंघनं शोधनं च कार्यम् । बहुदोषस्य शोधनमितरस्य लंघनमुपवासलक्षणं कार्यम् ।

**यावच्च दोषैः कालुष्यं स्रुतेस्तावदुपेक्षणम् ॥ ९८ ॥**

यावच्च दोषेणास्रस्य कालुष्यमनैर्मल्यं सामदोषदुष्टत्वात् तावत्स्रुतेः प्रकृतत्वादस्रस्योपेक्षणं कार्यम् । तथाभूताया रक्तस्रुतेः संग्रहणाय यत्नो न कार्य इत्यर्थः ।

**दोषाणां पाचनार्थं च वह्निसंधुक्षणाय च ।**
**संग्रहाय च रक्तस्य परं तिक्तैरुपाचरेत् ॥ ९९ ॥**

कालुष्यरहिताया रक्तस्रुतेः परमनंतरं दोषाणां सामानां पक्त्यर्थं तथा वह्नेः संधुक्षणाय तथा रक्तसंग्रहार्थं तिक्तैस्तिक्तरसाग्रातैर्द्रव्यैस्तमर्शसमुपाचरेदिति सामान्योपक्रमः । अन्योपक्रमो रक्तार्शोविकारशांत्यर्थमुपदिष्टः ।

**यत्तु प्रक्षीणदोषस्य रक्तं वातोल्बणस्य वा ।**
**स्नेहैस्तच्छोधयेद्युक्तैः पानाभ्यंजनबस्तिषु ॥ १०० ॥**

यत्पुनः प्रक्षीणदोषस्य निरामयस्य रक्तं स्रवेत वाताधिकस्य वा पुरुषस्य यद्रक्तं स्रवेत तत्स्नेहैः पानादियुक्तैर्घृतैश्चिकित्सेत् ।

**यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते ।**
**स्तंभनीयं तदेकांतान्न चेद्वातकफानुगम् ॥ १०१ ॥**

यत्पुनः पित्तोल्बणं रक्तं ग्रीष्मर्तौ प्रवर्तते तदेकांतेनावश्यं स्तंभनीयं नोपेक्षणीयं शीघ्रकारित्वात् । सर्वदैव घर्मर्तौ रक्तं स्तंभनीयं नेत्याह । नचेद्वातकफानुगं वातकफानुबद्धं तु लंघनादिभिरेव चिकित्सेत ।

**सकफेऽस्रे पिबेत्पाक्यं शुंठीं कुटजवल्कलम् ।**
**किराततिक्तकं शुंठीधन्वयासं कुचंदनम् ॥ १०२ ॥**
**दार्वीत्वङ्निंबसेव्यानि त्वचं वा दाडिमोद्भवाम् ।**

कफानुगते रक्ते शुंठीकुटजवल्कलं क्वथितं पिबेत् । किराततिक्तकादिना क्वथितं पिबेत् । अथवा दाडिमजां त्वचं पिबेत् ।

**कुटजत्वक्पलं तार्क्ष्यं माक्षिकं घुणवल्लभाम् ॥१०३॥**
**पिबेत्तंडुलतोयेन कल्कितं वा मयूरकम् ।**

कुटजत्वचमिंद्रयवान् रसांजनादींश्च तंडुलजलेन पिबेत् । घुणप्रियाऽतिविषा । अथवा तेनैव तंडुलजलेन पिष्टमपामार्गं पिबेत् ।

**तुलां दिव्यांभसि पचेदार्द्रायाः कुटजत्वचः॥१०४॥**
**नीरसायां त्वचि क्वाथे दद्यात्सूक्ष्मरजीकृतान् ।**
**समंगाफलिनीमोचरसान्मुष्ट्यंशकान्समान् ॥१०५॥**
**तैश्च शक्रयवान्पूते ततो दर्वीप्रलेपनम् ।**
**पक्त्वावलेहं लीढ्वा च तं यथाग्निबलं पिबेत्॥१०६॥**
**पेयां मंडं पयश्छागं गव्यं वा छागदुग्धभुक् ।**
**लेहोऽयं शमयत्याशु रक्तातीसारपायुजान् ॥१०७॥**
**बलवद्रक्तपित्तं च स्रवदूर्ध्वमधोऽपि वा ।**

कुटजत्वच आर्द्रायास्तुलां दिव्य आंतरिक्षे जले पचेत् । दिवि भवं दिव्यम् । दिगादित्वाद्यत् । एतच्च द्रव्यं सामान्यपरिभाषापरिमाणकल्पनयैव क्वाथ्यसामान्यपरिमाणेन च क्वथितमेकत्वं प्राप्तमिति तदपवादार्थमाह । नीरसायामित्यादि । तावत्पचेद्यावदेषा कुटजस्य त्वक् नीरसा स्यात् । नीरसत्वं च प्रायेणाष्टांशशेषे क्वाथे भवति । तस्यां च नीरसायां सत्यां यत्परिमाणक्वाथोऽवशिष्यते तस्मिन् क्वाथे श्लक्ष्णसूक्ष्मीकृतान् समंगादीन् मुष्ट्यंशकान् पलपरिमाणान् दद्यात् । तैश्च समंगादिभिः सर्वैः समानि द्रव्याणि दद्यात् । ततोऽनंतरं पूतं दर्वीप्रलेपनं पक्त्वा लीढ्वा च तमवलेहमनंतरं यथाग्निबलं बलानुसारेण पेयादिकं पिबेत् । किंभूतः सन् । दुग्धभुक् दुग्धेन भोजनः । अयं लेहो रक्तातीसारं रक्तार्शांसि च शमयति । रक्तपित्तं च प्रवृद्धमूर्ध्वमधो वाऽस्रं च जयेत् ।

**कुटजत्वक्तुलां द्रोणे पचेदष्टांशशेषिताम् ॥ १०८ ॥**
**कल्कीकृत्य क्षिपेत्तत्र तार्क्ष्यशैलं कटुत्रयम् ।**
**रोध्रद्वयं मोचरसं बलां दाडिमजां त्वचम् ॥ १०९ ॥**
**बिल्वकर्कटिका मुस्तं समंगां धातकीफलम् ।**
**पलोन्मितं दशपलं कुटजस्यैव च त्वचः ॥ ११० ॥**
**त्रिंशत्पलानि गुडतो घृतात्पूते च विंशतिः ।**
**तत्पक्वं लेहतां यातं धान्ये पक्षस्थितं लिहन् ॥१११॥**
**सर्वार्शोग्रहणीदोषश्वासकासान्नियच्छति ।**

वत्सकत्वक्तुलां जलद्रोणे पचेदष्टांशशेषितां यावच्च । तत्राष्टांशशेषिते क्वाथे पूते सति कल्कयित्वा तार्क्ष्यशैलादीन् पलप्रमाणान् क्षिपेत् । एवं बिल्वकर्कटिका लघूनि बिल्वफलानि । कुटजत्वचश्च दशपलानि । घृतस्य पलानि विंशतिः । गुडपलानि त्रिंशत् । एतत्सर्वं लेहतां यातं पक्वं सद्धान्यराशिमध्ये मासार्धस्थितं लिहन् सर्वानर्शःप्रभृतीन् जयेत् ।

**रोध्रं तिलान्मोचरसं समंगां चंदनोत्पलम् ॥ ११२॥**
**पाययित्वाऽजदुग्धेन शालींस्तेनैव भोजयेत् ।**

रोध्रादीनजादुग्धेन पाययित्वाऽऽतुरं शालींस्तेनाऽजक्षीरेण भोजयेत् । एतच्चोपयुक्तं पूर्वगुणम् ।

**यष्ट्याह्वपद्मकानंतापयस्याक्षीरमोरटम् ॥ ११३ ॥**
**ससितामधु पातव्यं शीततोयेन तेन वा ।**

यष्ट्याह्वादि सशर्करामाक्षिकं शीतजलेन तेनाऽजपयसा वा पातव्यम् । क्षीरमोरटा मधुस्रवा ।

**रोध्रकट्वंगकुटजसमंगाशाल्मलीत्वचम् ॥ ११४ ॥**
**हिमकेसरयष्ट्याह्वं सेव्यं वा तंडुलांबुना ।**

लोध्रादिकं तंडुलांबुना रक्तार्शःसु पातव्यम् । अथवा चंदननागकेसरमधुकोशीरं तंडुलांभसा पातव्यं पूर्वोक्तगुणम् ।

**यवानींद्रयवाः पाठा बिल्वं शुंठीरसांजनम् ॥११५॥**
**चूर्णश्च लेहितः शूले प्रवृत्ते चाऽतिशोणिते ।**

यवान्यादीनां चूर्णो जलेन पीतो वाते शूले प्रवृत्ते चाऽतिशयेन रक्ते हितः ।

**दुग्धिकाकंटकारीभ्यां सिद्धं सर्पिः प्रशस्यते॥११६॥**
**अथवा धातकीरोध्रकुटजत्वक्फलोत्पलैः ।**
**सकेसरैर्यवक्षारदाडिमस्वरसेन वा ॥ ११७ ॥**

दुग्धिकाकंटकारीभ्यां पक्वं सर्पिरस्मिन्विषये प्रशस्यतेऽथवा धातक्यादिभिः सिद्धं घृतं हितम् । यवक्षारदाडिमस्वरसेन वा सिद्धं घृतं हितम् ।

**शर्करांभोजकिंजल्कसहितं सह वा तिलैः ।**
**अभ्यस्तं रक्तगुदजान् नवनीतं नियच्छति ॥ ११८ ॥**

शर्करापद्मकेसरसहितमभ्यस्तं बहून्यहानि भुक्तं नवनीतं रक्तार्शांसि शमयति । तिलैर्वा सहाभ्यस्तं नवनीतं रक्तार्शांसि शमयति ।

**छागानि नवनीताज्यक्षीरमांसानि जांगलः ।**
**अनम्लो वा कदम्लो वा सवास्तुकरसो रसः ११९**
**रक्तशालिः सरो दध्नः षष्टिकस्तरुणी सुरा ।**
**तरुणश्च सुरामंडः शोणितस्यौषधं परम् ॥ १२० ॥**

छागसंबंधीनि नवनीतादीनि तथा जांगलरसादीनि रक्तस्य परमौषधम् । जांगलो वा रसः । सहवास्तुकरसेन वर्तत इति सवास्तुकरसोऽनम्लोऽम्लरहितः कदम्ल ईषदम्लो वा । अभ्यस्तो रक्तगुदजान्नियच्छति । रक्तशालिस्तज्जो भक्त इत्यर्थः । दध्नः सरो दध्युत्तरः । षष्टिको व्रीहिः । तरुणीसंजातमधुरप्राया सुरा मंडश्च । एतद्रक्तशाल्यादि शोणितस्य परमौषधम् ।

**पेयायूषरसाद्येषु पलांडुः केवलोऽपि वा ।**
**स जयत्युल्वणं रक्तं मारुतं च प्रयोजितः ॥ १२१ ॥**

पेयादिषु प्रयोजितः पलांडुः केवलो वा रक्तमल्युल्बणं वातं च जयति ।

**वातोल्बणानि प्रायेण भवंत्यस्रेऽतिनिःस्रुते ।**
**अर्शांसि तस्मादधिकं तज्जये यत्नमाचरेत् ॥१२२॥**

प्रायेण रक्तेऽतिस्रुते वाताधिकानि दुर्नामानि यतो भवंति तस्माद्धेतोस्तज्जये पवनजये यत्नं कुर्यात् ।

**दृष्ट्वाऽस्रपित्तं प्रबलमबलौ च कफानिलौ ।**
**शीतोपचारः कर्तव्यः सर्वथा तत्प्रशांतये ॥ १२३ ॥**

रक्तपित्तं प्रवृद्धं दृष्ट्वा कफानिलावबलावुपलभ्य तत्प्रशांत्यर्थं शीतोपचारः कर्तव्यः ।

**तावदेवं समस्तस्य स्निग्धोष्णैस्तर्पयेत्ततः ।**
**रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः ॥ १२४ ॥**
**सेचयेत्तं कवोष्णैश्च कामं तैलपयोघृतैः ।**

यद्येवं शमो न स्यात्तदा रसैस्तर्पयेत् । रस इत्यविशेषोक्ते योज्यो मांसभवो रसः । किंभूतैः स्निग्धोष्णैः । तथा कोष्णैर्घृतैश्च पुनस्तर्पयेत् । किंभूतैः । अवपीडकैर्न रोगानुत्पादनीयोक्तेन प्रयोजितैः । तं च कवोष्णैर्यथायोगं तैलपयोघृतैः सेचयेत् ।

**यवासकुशकाशानां मूलं पुष्पं च शाल्मलेः॥१२५॥**
**न्यग्रोधोदुंबराश्वत्थशुंगाश्च द्विपलोन्मिताः ।**
**त्रिप्रस्थे सलिलस्यैतत्क्षीरप्रस्थे च साधयेत् ॥ १२६ ॥**
**क्षीरशेषे कषाये च तस्मिन्पूते विमिश्रयेत् ।**
**कल्कीकृतं मोचरसं समंगां चंदनोत्पलम् ॥ १२७ ॥**
**प्रियंगुं कौटजं बीजं कमलस्य च केसरम् ।**
**पिच्छाबस्तिरयं सिद्धः सघृतक्षौद्रशर्करः ॥ १२८ ॥**
**प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः ।**

यवासादीनां मूलं शाल्मलेः पुष्पं तथा न्यग्रोधादीनां च शुंगा एतद् द्रव्यकदंबकं प्रत्येकं द्विपलप्रमाणं जलप्रस्थत्रये क्षीरप्रस्थे च पाचयेत् । क्षीरे शेषे च कषाये तस्मिन्पूते सति कल्कीकृतं मोचरसादि मिश्रयेत् । मोचरसादयोऽत्र सत्रिभागमत्र शाणकर्षमात्रा ग्राह्याः । बस्तिकल्पे कोशातकादौ निरूहे विंशतिपलप्रमाणे कार्षिकाणामेव द्रव्याणामभ्यनुज्ञानात् । अयं पिच्छाबस्तिः सिद्धो घृतमाक्षिकशर्करान्वितः प्रवाहिकादिहरः । अल्पया मात्रया निरूहो बस्तिरेव पिच्छाबस्तिरुच्यते ।

**यष्ट्याह्वपुंडरीकेण तथा मोचरसादिभिः ॥ १२९ ॥**
**क्षीरद्विगुणितः पक्वो देयः स्नेहोऽनुवासनम् ।**

मधुयष्टिकया प्रपौंडरीकेण तथा मोचरसादिभिः पूर्वोक्तैः कल्कीकृतैः क्षीरद्विगुणितः सन् स्नेहोऽनुवासनं देयः ।

**मधुकोत्पलरोध्रांबुसमंगा बिल्वचंदनम् ॥ १३० ॥**
**चविकातिविषामुस्तं पाठा क्षारो यवाग्रजः ।**
**दार्वीत्वङ्नागरं मांसी चित्रको देवदारु च ॥१३१॥**

**चांगेरिस्वरसे सर्पिः साधितं तैस्त्रिदोषजित्।**
**अर्शोऽतिसारग्रहणीपांडुरोगज्वरारुचौ ॥ १३२ ॥**
**मूत्रकृच्छ्रे गुदभ्रंशे बस्त्यानाहे प्रवाहणे ।**
**पिच्छास्रावेऽर्शसां शूले देयं तत्परमौषधम् ॥ १३३**

मधुकादिद्रव्यैः स्नेहचतुर्थभागप्रमाणैश्चांगेरीस्वरसे घृताच्चतुर्गुणे घृतं साधितं त्रिदोषजित्। अर्शःप्रभृतिष्वेतद् घृतं देयम् । यतः परमौषधम् ।

**व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ।**
**नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान् ॥१३४॥**

व्यत्यासेन विपर्ययेण मधुराण्यम्लानि च शीतोष्णानि च नित्यमग्निबलापेक्षी योजयेत् । एवं चार्शःकृतामतिशयिनीं रुजं जयति ।

**उदावर्तार्तमभ्यज्य तैलैः शीतज्वरापहैः ।**
**सुस्निग्धैः स्वेदयेत्पिंडैर्वर्तिमस्मै गुदे ततः ॥ १३५॥**
**अभ्यक्तां तत्करांगुष्ठसन्निभामनुलोमनीम् ।**
**दद्याच्छ्यामात्रिवृद्दंतीपिप्पलीनीलिनीफलैः १३६**
**विचूर्णितैर्द्विलवणैर्गुडगोमूत्रसंयुतैः ।**
**तद्वन्मागधिकाराठग्रहधूमैः ससर्षपैः ॥ १३७ ॥**

उदावर्तेनार्तं नरं तैलैः शीतज्वरापहैस्तगरागुरुकुंकुमादिद्रव्यसाधितैरभ्यज्य सुस्निग्धैः पिंडैः स्वेदयेत् । ततः स्वेदादनंतरमस्मा उदावर्तवते गुदेऽभ्यक्तेऽभ्यक्तां वर्तिं दद्यात् । तत्करांगुष्ठसन्निभामातुरहस्तांगुष्ठसदृशीम् । तथाऽऽनुलोमकरीं दद्यात् क्षिपेत् । कैः कृतां वर्तिमित्याह । श्यामेत्यादि । श्यामादिभिः सैंधवाख्यलवणयुक्तैः सूक्ष्मरजीकृतैर्गुडगोमूत्रसंयुक्तैः कृतां वर्तिं क्षिपेत् । तथैव मागधिकामदनफलगृहधूमसर्षपैर्गुडगोमूत्रान्वितैर्वर्तिं क्षिपेत् ।

**एतेषामेव वा चूर्णं गुदे नाड्या विनिर्धमेत् ।**

अथवैतेषां च पूर्वोक्तानां चूर्णं नाड्या गुदे विनिर्धमेत् ।

**तद्विघाते सुतीक्ष्णं तु बस्तिं स्निग्धं प्रपीडयेत्॥१३८**
**ऋजू कुर्याद्गुदशिरो विण्मूत्रमरुतोऽस्य सः ।**
**भूयोऽनुबंधे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ १३९ ॥**
**अनुवास्यश्च रौक्ष्याद्धि संगो मारुतवर्चसोः ।**

तद्विघाते कार्यं कर्तुमशक्ते तस्मिंश्चूर्णे बस्तिं स्निग्धं स्नेहबस्तिं सुतीक्ष्णं दद्यात् । सो बस्तिरस्यातुरस्य गुदशिरोविण्मूत्रवातानुलोमयेत् । पुनरनुबंधे सति स्नेहरेचनैर्विरेचनीयश्चानुवासनीयश्च । हि यस्माद्रौक्ष्याद्धेतोर्मारुतस्य पुरीषस्य च संगो भवति ।

**त्रिकटुत्रिपटुश्रेष्ठादंत्यरुष्करचित्रकम् ॥ १४० ॥**
**जर्जरं स्नेहमूत्राक्तमंतर्धूमं विपाचयेत् ।**
**शरावसंधौ मृल्लिप्ते क्षारः कल्याणकाह्वयः ॥१४१॥**
**स पीतः सर्पिषा युक्तो भक्ते वा स्निग्धभोजिना ।**
**उदावर्तविबंधार्शोगुल्मपांड्वुदरकृमीन् ॥ १४२ ॥**
**मूत्रसंगाश्मरीशोफहृद्रोगग्रहणीगदान् ।**
**मेहप्लीहरुजानाहश्वासकासांश्च नाशयेत् ।**

त्रिपट्वादिजर्जरीकृतं स्नेहमूत्राभ्यामक्तमंतर्धूमं कृत्वा विपाचयेच्छरावसंपुटे । अत एवाह । शरावसंधौ मृल्लिप्त इति । अयं च कल्याणको नाम क्षारः सर्पिषा पीतः स्नेहभोजिना वा भक्तयुक्तः सन्नुदावर्तादीन् नाशयेत् ।

**सर्वं च कुर्याद्यत्प्रोक्तमर्शसां गाढवर्चसाम् ॥१४३॥**

यच्च गाढवर्चसामर्शसां प्रोक्तं तच्च सर्वं कुर्यात् ।

**द्रोणेऽपां पूतिवल्कद्वितुलमथ पचे-**
**त्पादशेषे च तस्मिन्**
**देयाशीतिर्गुडस्य प्रतनुकरजसो**
**व्योषतोऽष्टौ पलानि ।**
**एतन्मासेन जातं जनयति परमा-**
**मूष्मणः पक्तिशक्तिं**
**शुक्तं कृत्वाऽनुलोम्यं प्रजयति गुदज-**
**प्लीहगुल्मोदराणि ॥ १४४ ॥**

द्वयोस्तुलयोः समाहारो द्वितुलम् । पूतिकरंजस्य त्वचस्तुलाद्वयं पलशतद्वयं जलद्रोणे पचेत् । तस्मिंश्च पादशेषे सति गुडस्याशीतिः पलानि क्षेप्तव्यानि । त्रिकटुकस्य सूक्ष्मचूर्णस्याष्टौ पलानि देयानि । एतत्सर्वं मासेन शुक्तं जातं प्रबलमग्निं कुरुते । आनुलोम्यकृतत्वात् । गुदजादीन् जयति । स्रग्धरावृत्तम् ।

**पचेत्तुलां पूतिकरंजवल्काद्-**
**द्वे मूलतश्चित्रककंटकार्योः ।**
**द्रोणत्रयेऽपां चरणावशेषे**
**पूते शतं तत्र गुडस्य दद्यात् ॥ १४५ ॥**
**पलिकं च सुचूर्णितं त्रिजात-**
**त्रिकटुग्रंथिकदाडिमाश्मभेदम् ।**
**परपुष्करमूलधान्यचव्यं**
**हपुषामार्द्रकमम्लवेतसं च ॥ १४६ ॥**
**शीतीभूतं क्षौद्रविंशत्युपेत-**
**मार्द्रद्राक्षाबीजपूरार्धकैश्च ।**
**युक्तं कामं गंडिकाभिस्तथेक्षोः**
**सर्पिः पात्रे मासमात्रेण जातम् ॥ १४७ ॥**
**चुक्रं क्रकचमिवेदं दुर्नाम्नां वह्निदीपनं परमम् ।**
**पांडुगरोदरगुल्मप्लीहानाहाश्मकृच्छ्रघ्नम् ॥ १४८ ॥**

पूतीकरंजत्वचस्तुलां द्वे तुले चित्रककंटकारीमूलयोर्जलद्रोणत्रये पचेत् । पादशेषे च तस्मिन् पूते गुडस्य पलशतं दद्यात् । उपजातिर्वृत्तम् । त्रिजातकादि सूक्ष्मरजीकृतं प्रत्येकं पलप्रमाणं

निःक्षिपेत्। एतत्सर्वं चूर्णितं श्लक्ष्णपिष्टं दद्यात्। औपच्छंदसिकम्। एतच्च शीतीभूतं सक्षौद्रविंशत्योपेतमार्द्रद्राक्षादिभिश्चोपेतमिक्षुगंडिकाभिश्च यथेच्छं युक्तं सर्पिः पात्रे मासमात्रेण जातं चुक्रमिति वक्ष्यमाणेन संबंधः। शुक्तमिदमर्शसां क्रकचमिव करपत्रतुल्यं कर्तनशक्तिसामर्थ्यात्। तथाऽपरं वह्निदीपनं पांड्वादिघ्नं च। शालिनी वृत्तम्। आर्या च।

**द्रोणं पीलुरसस्य वस्त्रगलितं न्यस्तं हविर्भाजने**
**युंजीत द्विपलैर्मदामधुफलाखर्जूरधात्रीफलैः।**
**पाठामाद्रिदुरालभाम्लविदुलव्योषत्वगेलोल्लकैः**
**स्पृक्काकोललवंगवेल्लचपलामूलाग्निकैः पालिकैः॥**
**गुडपलशतयोजितं निवाते**
**निहितमिदं प्रपिबंश्च पक्षमात्रात्।**
**निशमयति गुदांकुरान् सगुल्मा-**
**ननलबलं प्रबलं करोति चाशु॥ १५०॥**

पीलुफलानां रसस्य द्रोणं वस्त्रपूतसर्पिर्भांडे न्यस्तं मदादिभिर्द्विपलप्रमाणैः पाठादिभिश्च पालिकैर्युंजीत। मदा धातकी। मधुफला द्राक्षा। माद्री रेणुका। विदुलो वेतसः। शार्दूलविक्रीडितम्। तथा गुडपलशतेन योजितं निवाते धृतं पक्षमात्रादनंतरं प्रपिबन्नर इदमर्शांसि गुल्मं च शमयति। द्रागग्निबलं च प्रकृष्टं विधत्ते। पुष्पिताग्रा।

**एकैकशो दशपले दशमूलकुंभ-**
**पाठाद्वयार्कघुणवल्लभकट्फलानाम्।**
**दग्धे श्रृते नु कलशेन जलेन पक्के**
**पादस्थिते गुडतुलां पलपंचकं च॥ १५१॥**
**दद्यात्प्रत्येकं व्योषचव्याभयानां**
**वह्नेर्मुष्टी द्वे यवक्षारतश्च।**
**दर्वीमालिपन् हंति लीढो गुडोऽयं**
**गुल्मप्लीहार्शः कुष्ठमेहाग्निसादान्॥ १५२**

दशमूलादीनां प्रत्येकं दशपले दग्धे जलद्रोणेन शृते जले पक्के पादशेषे चाऽस्मिन् गुडतुलां व्योषादीनां च प्रत्येकं पलपंचकं दद्यात्। चित्रकस्य पलद्वयम्। यवक्षारस्य च पलद्वयं दद्यात्। दर्वीमालिपन् दर्वीलेपी सन्नयं गुडो लीढो भक्षितो गुल्मादीन् पराकरोति। वसंततिलकं वैश्वदेवीयवृत्तम्।

**तोयद्रोणे चित्रकमूलतुलार्धं**
**साध्यं यावत्पादजलस्थमप्येदम्।**
**अष्टौ दत्त्वा जीर्णगुडस्य पलानि**
**क्वाथ्यं भूयः सांद्रतया सममेतत्॥ १५३॥**
**त्रिकटुकमिसिपथ्याकुष्ठमुस्तावरांग-**
**कृमिरिपुदहनैलाचूर्णकीर्णोऽवलेहः।**
**जयति गुदजकुष्ठप्लीहगुल्मोदराणि**
**प्रबलयति हुताशं शश्वदभ्यस्यमानः॥१५४॥**

तोयस्य द्रोणे चित्रकमूलस्य तुलार्धं साध्यं यावदष्टांशशेषमिदं स्यात्। ततः पुराणगुडपलान्यष्टौ दत्त्वा पुनरपि क्वाथ्यं यावत्सांद्रत्वं गतम्। म्लौज्यौभद्रा वेदवसू च विरामः। त्रिकटुकादिचूर्णयुक्तोऽयं लेहो नित्यमभ्यस्यमानो दारुणकुष्ठादीनि जयति। अग्निं च प्रकृष्टं कुरुते। मालिनीवृत्तम्।

**गुडव्योषवरावेल्लतिलारुष्करचित्रकैः।**
**अर्शांसि हंति गुटिका त्वग्विकारं च शीलिता॥**

गुडादिभिर्गुलिका कृता अभ्यस्ता दुर्नामानि हंति त्वग्विकारं वा।

**मृल्लिप्तं सौरणं कंदं पक्त्वाऽग्नौ पुटपाकवत्।**
**अद्यात्सतैललवणं दुर्नामविनिवृत्तये॥ १५६॥**

सौरणं कंदं मृदा लिप्तमग्नौ पुटपाकवत् पक्कं तैललवणान्वितमश्नीयाद् दुर्नामोपशमाय।

**मरिचपिप्पलिनागरचित्रकान्**
**क्रमविवर्धितभागसमाहृतान्।**
**शिखिचतुर्गुणसूरणयोजितान्**
**कुरु गुडेन गुडान् गुदजच्छिदः॥ १५७॥**

मरिचादीनि क्रमवर्धितभागानि चित्रकचतुर्गुणसूरणयोजितानि गुडेन गुदांकुरच्छिदः। द्रुतविलंबितम्।

**चूर्णीकृताः षोडश सूरणस्य**
**भागास्ततोऽर्धेन च चित्रकस्य।**
**महौषधाद्वौ मरिचस्य चैको**
**गुडेन दुर्नामजयाय पिंडी॥ १५८॥**

सूक्ष्मरजीकृताः सूरणभागाः षोडश। चित्रकभागा अष्टौ। नागरस्य द्वौ। मरिचस्य चैको। गुडेनैषां पिंडीकृता दुर्नामजयाय स्यात्। उपजातिर्वृत्तम्।

**पथ्यानागरकृष्णा करंजवेल्लाग्निभिः सितातुल्यैः।**
**वडवामुख इव जरयति बहुगुर्वपि भोजनं चूर्णम्॥**

पथ्यादिभिः सितातुल्यैश्चूर्णैर्बहुगुरु च भोजनं वडवामुख इव जरयति। आर्यायाः पूर्वार्धे यथोक्तमात्रादतो मया लक्ष्मीगीतिं विधिविदो वदंति संवीक्ष्य तदितरत्राऽपि।

**कलिंगलांगलीकृष्णावन्ह्यपामार्गतंडुलैः।**
**भूनिंबसैंधवगुडैर्गुडा गुदजनाशनाः॥ १६०॥**

कलिंगकादिभिर्गुडा वटिका अर्शोघ्नाः।

**लवणोत्तमवह्निकलिंगयवां-**
**श्चिरबिल्वमहापिचुमंदयुतान्।**
**पिब सप्तदिनं मथितालुडितान्**
**यदि मर्दितुमिच्छसि पायुरुहान्॥ १६१॥**

सैंधवादीनि तक्रलोडितानि पिब यद्यर्शांसि जिघांससि। अथ त्रोटकमब्धिसकारचितम्।

**शुष्केषु भल्लातकमग्र्यमुक्तं**
**भैषज्यमार्द्रेषु तु वत्सकत्वक् ।**
**सर्वेषु सर्वर्तुषु कालशेय-**
**मर्शःसु बल्यं च मलापहं च ॥ १६२ ॥**

शुष्केष्वप्यर्शःसु भल्लातकं भैषज्यं समग्र्यं प्रधानमुदितम् । आर्द्रेषु पुनरर्शःसु कुटजत्वग्भैषज्यमग्र्यं कथितम् । सर्वेष्वर्शःसु शुष्केष्वार्द्रेषु च सर्वकालं सर्वर्तुषु कालशेयं मथितमग्र्यं बल्यं बलावहं मलापहं दोषापहं च । इंद्रवज्रावृत्तम् ।

**भित्त्वा विबंधाननुलोमनाय**
**यन्मारुतस्याऽग्निबलाय यच्च ।**
**तदन्नपानौषधमर्शसेन**
**सेव्यं विवर्ज्यं विपरीतमस्मात् ॥ १६३ ॥**

विबंधांस्त्यानकफादिरूपान् भित्त्वा यदन्नपानौषधमासेवितं मारुतस्यानुलोमनाय स्ववर्त्मप्रवर्तनाय तथा यच्चाग्निबलायाग्निवर्धनाय संपद्यते तदेवान्नपानौषधं दुर्नामवता सेव्यम् । अस्माद्यथोक्ताद्विपरीतं यदन्नपानौषधं मारुतस्य विबंधकरमग्निसाधनं च तत्तेन विवर्ज्यं न सेव्यम् । उपजातिर्वृत्तम् ।

**अर्शोतिसारग्रहणीविकाराः**
**प्रायेण चान्योन्यनिदानभूताः ।**
**सन्नेऽनले संति न संति दीप्ते**
**रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ १६४ ॥**

अर्शोतिसारग्रहण्योऽन्योन्यनिदानभूताः परस्परं हेतुभूता बाहुल्येनाऽनले च सन्न एते रोगा भवंति । दीप्ते त्वग्नौ न संति । यतस्ततोऽस्मात्कारणात्तेषु विशेषेणाग्निं रक्षेदिति । इंद्रवज्रावृत्तम् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामर्शश्चिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अस्मादनंतरमतिसारविचिकित्सितं प्रारभ्यते । अर्शोतीसारयोः परस्परं निदानभूतत्वेन चिकित्सासामान्यात् । अत आह ।

**अथातोऽतीसारविचिकित्सितं व्याख्यास्यामः ।**
**अतीसारो हि भूयिष्ठं भवत्यामाशयान्वयः ।**
**हत्वाग्निं वातजेऽप्यस्मात्प्राक् तस्मिँल्लंघनं हितम् १**

हि यस्माद्बाहुल्येनाऽग्निं हत्वा मंदीकृत्यामाशयान्वयो भवत्यतीसारः । अस्मात्कारणादस्मिन्नतीसाराख्ये व्याधौ वातजेऽपि पूर्वं लंघनं हितम् । आमाशयोऽन्वयो जन्मभूरुत्पत्तिर्यस्य स आमाशयान्वयः । अपिशब्दात्कदाचित्कफादिजे सुतरां लंघनं हितमिति द्योतयति । लंघनशब्देन चोपवास एवेह गृह्यते । शोधनादीनां लंघनानामवस्थावशादुच्यमानत्वाद्भूयिष्ठग्रहणेन क्वचिद्भयजादावतीसारे व्यभिचारे नासावामाशयान्वयः । प्राग्ग्रहणेन नोत्तरकाले लंघनं हितम् । तदा हि रोगस्वभावाद्धात्वपचयोऽवश्यंभावी लंघनमपि धात्वपचयहेतुः । अतस्तत्र युक्तम् ।

**शूलानाहप्रसेकार्तं वामयेदतिसारिणम् ।**

शूलादिभिरार्तमतिसारिणं वामयेत्तत्र प्राग् लंघनं हितम् । वमनं चैतत्सामान्यं पित्तजातिष्वप्येवंरूपेषु चिकित्सितं बोध्यं न केवलं वातजे ।

**दोषाः संनिचिता ये च विदग्धाहारमूर्छिताः ॥२॥**
**अतीसाराय कल्प्यंते तेषूपेक्षैव भेषजम् ।**
**भृशोत्क्लेशप्रवृत्तेषु स्वयमेव चलात्मसु ॥ ३ ॥**

ये च दोषाः सन्निचिता अतिशयेन वृद्धिं गतास्तथा विदग्धेन पक्वापक्वरूपेणाहारेण मूर्छिता एकतां प्राप्ता अतीसाराय कल्प्यंते संपद्यंते । तेषु तथोत्क्लेशनमुत्क्लेशाख्यविकारकरणं प्रत्युन्मुखता बीजस्यांकुरोत्पत्तावुच्छूनावस्थैवातिशयेनोत्क्लेशो भृशोत्क्लेशस्तेन प्रवृत्तातीसारकरणं प्रति समुद्यतास्तेषु तथा स्वयमेव यत्नं विना चलात्मसु चलस्वभावेषु तेषु तथाभूतेषु दोषेषूपेक्षा पथ्याशित्वं सम्यक् प्रवर्तनमेव भेषजं नतु पाचनादिकमित्यर्थः । संग्रहणौषधं कुटजत्वगादिकं व्याधिप्रतिपक्षभूतं कस्मादत्र न प्रयुज्यते । अपि चाग्र्यसंग्रहे पठिष्यति । कुटजोतीसार इति ।

तस्मादत्र संग्राह्यौषधं दातुमुचितमिति यो मन्यते तं प्रत्याह ।

**प्रयोज्यं नतु संग्राहि पूर्वमामातिसारिणि ।**

संग्रहणं भेषजं पूर्वमामातीसारिणि पुरुषे न योज्यम् । तुशब्दोऽवधारणार्थः। अत्र पूर्वग्रहणं पश्चादीषदामातीसारिणि दीयमानं युज्यत एवेति द्योतयति । सामे दोषेऽतीसारकारिणि प्रथममपि भेदनं चौषधं दातुं विशिष्टायामवस्थायां समानकार्यमपि कदाचिदतीसारिणो गुणाय संपद्यते नातिसारप्रतिपक्षभूतमपि च संग्रहणमौषधमितिकृत्वा ।

**अपि चाध्मानगुरुता शूलस्तैमित्यकारिणि ॥ ४ ॥**
**प्राणदा प्राणदा दोषे विबद्धे संप्रवर्तिनी ।**

विबद्धेऽल्पाल्पं कृत्वा प्रवर्तमाने दोषेऽत एव विबंधत्वादाध्मानादिकारिणि तथाभूतेऽस्मिन्दोषे संग्रहणमपथ्यमपि प्राणदा हरीतकी । प्राणान् ददातीति प्राणदा भवतीति । एवं बहुदोषाणामतीसारिणां प्रायेणैष उपक्रमो बोध्यः ।

मध्यदोषाल्पदोषयोस्त्वाह ।

**पिबेत्प्रक्वथितांस्तोये मध्यदोषो विशोषयन् ॥ ५ ॥**
**भूतीकपिप्पलीशुंठीवचाधान्यहरीतकीः ।**
**अथवा बिल्वधनिकामुस्तानागरवालकम् ॥ ६ ॥**
**विडपाठावचापथ्याक्रमिजिन्नागराणि वा ।**
**शुंठीघनवचामाद्रीबिल्ववत्सकहिंगु वा ॥ ७ ॥**

मध्यदोषोऽतीसारी भूतीकादीन् पिबेत् । किंभूतांस्तांस्तोये प्र-

क्वथितान्। ननु क्वथिता इत्येतावदेवास्तु किंप्रशब्देन। ब्रूमः। प्रकर्षेण क्वथिताः प्रमथ्यारूपेण श्रृताः प्रक्वथिता इत्यस्यार्थस्य प्रतिपादनार्थं प्रशब्दोऽकारि। प्रमथ्यायाश्च तंत्रांतरे लक्षणमुक्तम्। यथा। श्रृतः कषायो निर्यूहः क्वाथो यूषो कृतश्च सः। कृतयूषः प्रमथ्या च द्रव्यात्कल्कीकृताच्छृत इति। तदेवं द्रव्यं कल्कीकृत्य पिष्ट्वा यत्क्रियते स कृतयूषो भण्यते। स एव च प्रमथ्याशब्दवाच्यः। तस्मान्मध्यदोषोऽतीसारी भूतीकादीनि पिष्ट्वा प्रकर्षेण क्वाथयित्वा प्रमथ्यारूपेण पिबेदित्यवतिष्ठते। मुनिनाप्युक्तम्। प्रमथ्यां मध्यदोषेभ्यो दद्याद्दीपनपाचनीमिति। किं कुर्वन् पिबेत्। विशोषयन् लंघयन्। प्रकृतत्वादात्मानमेव। अथवा बिल्वधातक्यादीनि पिबेत्। अथवा बिडादीनि शुंठ्यादीनि वा पिबेत्।

**शस्यते त्वल्पदोषाणामुपवासोऽतिसारिणाम्।**

अल्पदोषाणामतीसारिणामुपवासः शस्यते। तुशब्दोऽवधारणार्थः। अत्रोपवास एवाल्पदोषाणां शस्यते न बहुदोषमध्यदोषोक्तोऽपर उपक्रमः सन् तथा तेषां शस्यत इति। सर्वमतीसारिणं दोषदेशाद्यनुरोधेन कदाचिल्लंघयेत्।

**वचाप्रतिविषाभ्यां वा मुस्तापर्पटकेन वा ॥ ८ ॥**
**ह्रीवेरनागराभ्यां वा विपक्वं पाययेज्जलम्।**

तृषि संजातायां दोषदेशाद्यनुरोधेन कदाचिद्वचाप्रतिविषाभ्यां विपक्वं जलं पाययेत्कदाचिन्मुस्तापर्पटकेन कदाचिद्वालकनागराभ्याम्। पाययेदित्यत्र कर्त्रभिप्राये क्रियाफले परस्मैपदमन्यथा नपादम्येत्यादिना परस्मैपदनिषेधः स्यात्।

**युक्तेऽन्नकाले क्षुत्क्षामं लघ्वन्नं प्रतिभोजयेत् ॥९॥**
**तथा स शीघ्रं प्राप्नोति रुचिमग्निबलं बलम्।**

युक्तेऽन्नकाले क्षुत्क्षाममतिसारिणं लघ्वन्नं प्रतिभोजयेत्। तथा शीघ्रं प्राप्नोति रुचिमग्निबलं बलम्। नापरव्याध्यार्तमिव लंघनोचितं सम्यग्लंघनादनंतरमेव भोजयेत्। अपि तु सम्यग्लंघितलक्षणोत्पन्नमप्यतीसारिणं किंचित्कालप्रतीक्षणं कृत्वा भोजयेदिति क्षामशब्देन द्योतयति। अल्पं लघ्वन्नं लघ्वन्नंप्रति। सुप्रतिना मात्रार्थ इति समासोऽव्ययीभावः। एवं क्रियमाणः सोऽतिसारी द्रागेव रुचिं प्राप्नोति तथा वह्निबलं देहबलम्।

एवं च भुंजानस्य पानमुपदिश्यते।

**तक्रेणावंतिसोमेन यवाग्वा तर्पणेन वा ॥ १० ॥**
**सुरया मधुना चाऽथ यथा सात्म्यमुपाचरेत्।**

कदाचित्तक्रेण कदचित्कांजिकेन कदाचित्पेयया कदाचित्तर्पणेन कदाचित्सुरया कदाचिन्माद्वींकेणेति यथा सात्म्यमुपाचरेत्।

**भोज्यानि कल्पयेदूर्ध्वं ग्राहिदीपनपाचनैः ॥ ११ ॥**
**बालबिल्वशठीधान्यहिंगुवृक्षाम्लदाडिमैः।**
**पलाशहपुषाजाजीयवानीबिडसैंधवैः ॥ १२ ॥**
**लशुना पंचमूलेन पंचकोलेन पाठया।**

अस्मात्क्रमादूर्ध्वमनंतरं भोज्यानि भोक्तव्यानि कल्पयेदतीसारिणे। ग्राहिदीपनपाचनैरेव संग्रहणानि दीपनानि पाचनानि च यानि द्रव्याणि तानि सर्वाण्यतीसारिणे पथ्यानीति। एवं संक्षेपेण सामान्येन चिकित्सितमुक्तम्। तदेव दिङ्मात्रं दर्शयति। बालेत्यादि। बालबिल्वादिभिर्भोज्यानि कल्पयेत्।

**शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता १३**
**दाडिमाम्ला हिता पेया कफपित्ते समुल्बणे।**
**अभयापिप्पलीमूलबिल्वैर्वातानुलोमनी ॥ १४ ॥**

शालिपर्ण्यादिभिः साधिता दाडिमाम्ला पेया कफपित्तादिके हिता। अभयादिभिः पेया वातानुलोमनी।

**विबद्धं दोषबहुलो दीप्ताग्निर्योऽतिसार्यते।**
**कृष्णाविडंगत्रिफलाकषायैस्तं विरेचयेत् ॥ १५ ॥**
**पेयां युंज्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम्।**

यो बहुदोषो विबद्धमल्पाल्पं कृत्वाऽतिसार्यते स कृष्णादिकषायैर्विरेचयेत्। विरिक्तस्य च तस्य सतः पेयां वातघ्नैर्दीपनैश्च द्रव्यैः कृतां युंज्यात्।

**आमे परिणते यस्तु दीप्तेऽग्नावुपवेश्यते ॥ १६ ॥**
**सफेनपिच्छं सरुजं सविबंधं पुनः पुनः।**
**अल्पाल्पमल्पं समलं निर्विड्वा सप्रवाहिकम् ॥ १७ ॥**
**दधितैलघृतक्षीरैः स शुंठीं सगुडां पिबेत्।**
**स्विन्नानि गुडतैलेन भक्षयेद्बदराणि वा ॥ १८ ॥**
**गाढविड्विहितैः शाकैर्बहुस्नेहैस्तथा रसैः।**
**क्षुधितं भोजयेदेनं दधिदाडिमसाधितैः ॥ १९ ॥**
**शाल्योदनं तिलैर्माषैर्मुद्गैर्वा साधु साधितम्।**
**शुंठ्या मूलकपोतायाः पाठायाः स्वस्तिकस्य वा२०**
**सुषायवानीकर्कारुक्षीरिणीचिर्भटस्य वा।**
**उपोदकाया जीवंत्या वाकुच्या वास्तुकस्य वा २१**
**सुवर्चलायाश्चुंचोर्वा लोणिकाया रसैरपि।**
**कूर्मवर्तकलोपाकशिखितित्तिरिकौकुटैः ॥ २२ ॥**

योऽतीसार्यामे परिणते दीप्तेऽग्नौ सत्युपवेश्यते सफेनपिच्छं तथा सरुजं तथा सविबंधं पुनः पुनस्तथाऽल्पमल्पं तथाऽल्पपुरीषं निर्विड्वा पुरीषरहितम्। तथा सप्रवाहिकं निस्तारिकासहितं स्रुते रक्ते पुरीषे च वायुना विड्विवर्जितं प्रवहिकेति विख्यातं यत् फेनाभं प्रवर्तत इति प्रवाहिकालक्षणम्। य एवंविधोऽतीसारी स दधितैलघृतक्षीरैः समुदितैः शुंठीं सगुडां पिबेत्। अथवा स्विन्नानि बदराणि गुडतैलेनाश्नीयात्। एवं दोषादिवशाच्छुंठीं पाययित्वा कदाचित् पूर्वोक्तानि बदराणि भक्षयित्वाऽनंतरं क्षुधितमतिसंजातबुभुक्षमेनमतीसारिणं गाढविड्विहितैर्वास्तुकादिभिः शाकैस्तथा मांसरसैर्बहुस्नेहैर्दधिदाडिमसंस्कृतैः शाल्योदनं भोजयेत्। अथवा तिलैर्माषैर्मुद्गैर्वा साधु शोभनं कृत्वा साधितं शाल्योदनं

भोजयेत् । मूलकपोता लघुमूलं तोतिकासंज्ञं देशांतरे प्रसिद्धं कुरुक्षेत्रादौ देशे । अत्र भास्यं कियदित्युक्तम् ।

**बिल्वमुस्ताक्षिभैषज्यधातकीपुष्पनागरैः ।**
**पक्वातीसारजित्तक्रे यवागूर्दाधिकी तथा ॥ २३ ॥**
**कपित्थकच्छुराफंजीयूथिकावटशैलुजैः ।**
**दाडिमीशणकार्पासीशाल्मलीमोचपल्लवैः ॥ २४ ॥**

बिल्वादिभिस्तक्रे सिद्धा यवागूः पक्वातीसारजित् । दाधिकी कपित्थादिजैः पल्लवैर्दाडिमादीनां पल्लवैर्दाधिकी यवागूस्तथा पक्वातीसारजित् ।

**कल्को बिल्वशलाटूनां तिलकल्कश्च तत्समः ।**
**दध्नः सरोऽम्लः सस्नेहः खलो हंति प्रवाहिकाम् २५**

तथा बिल्वशलाटूनां स्तोककालजातानां लघूनां बिल्वानां कल्कस्तथा तिलकल्कस्तत्समो बिल्वशलाटुसमस्तथा दध्नः सरोऽम्लो न मधुरः सस्नेहो देशाद्यनुरोधाद्घृतादिना स्नेहेन यथायथं युक्तोऽयं खलः सिद्धः प्रवाहिकां हंति ।

**मरिचं धनिकाजाजीतित्तिडीकशठीबिडम् ।**
**दाडिमं धातकी पाठा त्रिफला पंचकोलकम् ॥२६॥**
**यावशूकं कपित्थाम्रजंबूमध्यं सदीप्यकम् ।**
**पिष्टैः षड्गुणबिल्वैस्तैर्दध्नि मुद्गरसे गुडे ॥ २७ ॥**
**स्नेहे च यमके सिद्धः खलोऽयमपराजितः ।**
**दीपनः पाचनो ग्राही रुच्यो बिंबिशिनाशनः ॥२८॥**

मरिचादिभिः पिष्टैः षड्गुणं बिल्वं बिल्वमज्जा येषां मरिचादीनां तै सिद्धः । तथा रसपक्वश्च दध्नि तथा मुद्गरसे गुडे तथा यमके च स्नेहे खलोऽयमपराजितो नाम दीपनादिगुणः । बिंबिशिनाशनः प्रवाहिकाघ्नः ।

**कोलानां बालबिल्वानां कल्कैः शालियवस्य च ।**
**मुद्गमाषतिलानां च धान्ययूषं प्रकल्पयेत् ॥ २९ ॥**
**ऐकध्यं यमके भृष्टं दधिदाडिमसारिकम् ।**
**वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३० ॥**
**दध्नः सरं वा यमके भृष्टं सगुडनागरम् ।**
**सुरां वा यमके भृष्टां व्यंजनार्थं प्रयोजयेत् ॥ ३१ ॥**
**फलाम्लं यमके भृष्टं यूषं गृंजनकस्य वा ।**
**भृष्टान्वा यमके सक्तून् खादेद्व्योषावचूर्णितान् ३२**
**माषान् सुसिद्धांस्तद्वद्वा घृतमंडोपसेवनान् ।**
**रसं सुसिद्धं पूतं वा छागमेषांतराधिजम् ॥ ३३ ॥**
**पचेद्दाडिमसाराम्लं सधान्यस्नेहनागरम् ।**
**रक्तशाल्योदनं तेन भुंजानः प्रपिबंश्च तम् ॥ ३४ ॥**
**वर्चःक्षयकृतैराशु विकारैः परिमुच्यते ।**

कोलादीनां कल्कैः शालेर्यवस्य च कल्कैर्मुद्गादीनां च कल्कैरैकध्यं व्यतिमिश्रं धान्ययूषं प्रकल्पयेत् । किंभूतम् । यमके भृष्टं तथा दधिदाडिमसारिकम् । अम्लं दाडिमसारं दाडिमसारो वियते यस्मिन्निति दधिदाडिमसारकम् । वर्चःक्षये पुरीषक्षये सति शुष्कमुखं मुखशोषोपद्रवान्वितमतीसारिणं तेन यूषेण शाल्यन्नं भोजयेत् । शालिग्रहणेन रक्तशाल्यादीनां ग्रहणम् । अथवा दध्नः सरं यमके पक्वं गुडनागरसहितं व्यंजनार्थं प्रकल्पयेत् । अथवा यमके भृष्टां सुरां व्यंजनार्थं प्रकल्पयेत् । अथवा गृंजनकस्य हरितकविशेषस्य यूषं फलैर्दाडिमादिभिरम्लैरम्लमम्लीकृतं व्यंजनार्थं प्रकल्पयेत् । यमके स्नेहद्वये वा सक्तून् भृष्टान् व्योषावचूर्णितान् भक्षयेत् । तथैव माषान् सुस्विन्नान् घृतमंडोपसेवनान् खादेत् । अथवा छागमेषयोरंतराधिजं रसं सुसिद्धपूतं शोभनं कृत्वा पूर्वं सिद्धं पश्चात्पूतं निर्मलीकृतं तथा दाडिमसारेणाम्लं धान्यकस्नेहं शुंठीयुतं व्यंजनार्थं पचेत् । तेन रसेन रक्तशाल्यन्नं भुंजानस्तमेव मांसरसं पिबन् वर्चःक्षयकृतैर्विकारैः पुरीषे वायुरंत्राणीत्यादिभिः सूत्रस्थानोदितैर्मुच्यते । प्रवाहिका वर्चःक्षये सति स्यात् । तस्मात्तयाऽपि मुच्यते ।

**बालबिल्वं गुडं तैलं पिप्पलीविश्वभेषजम् ॥ ३५ ॥**
**लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ।**

वाते प्रतिहते प्रवाहिकाशूलवान् बालबिल्वादिकं लिह्यात् ।

**वल्कलं शाबरं पुष्पं धातुक्या बदरीदलम् ॥ ३६ ॥**
**पिबेद्दधिसरक्षौद्रकपित्थस्वरसाप्लुतम् ।**

रोध्रत्वक्धातुकीपुष्पं बदरीपत्रमेतद्दधिसरादिभिराप्लुतमालोडितं पिबेत् ।

**विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः ॥ ३७ ॥**
**सरक्तपिच्छस्तृष्णार्तः क्षीरसौहित्यमर्हति ।**
**यमकस्योपरि क्षीरं धारोष्णं वा प्रयोजयेत् ॥ ३८ ॥**
**शृतमेरंडमूलेन बालबिल्वेन वा पुनः ।**

विबद्धे वातवर्चसी यस्य तथा प्रभृते शूलप्रवाहिके यस्य तथा सहरक्तेन पिच्छया च यो वर्तते तथा तृष्णयाऽऽर्त एवंविधो नरः क्षीरसौहित्यं दुग्धतृप्तिमर्हति । अथवा यमकं पीत्वाऽनु धारोष्णं क्षीरं प्रयोजयेत् । एरंडमूलेन वा बालबिल्वेन वा शृतं क्षीरं प्रयोजयेत् ।

**पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणेऽम्भसि ॥३९॥**
**क्षीरावशिष्टं तत्पीतं हन्यादामं सवेदनम् ।**

क्षीरे त्रिगुणेऽम्भसि मुस्ताविंशतिं प्रक्वाथ्य क्षीरावशिष्टं पीतमामं सरुजं हन्यात् । अत्र च विंशतिभिर्मुस्तैः प्रायेण पलं भवति । सामान्यकल्पनया च मुस्तापलं षोडशभिर्द्रवपलैरुत्क्वाथ्य चत्वारि पलानि चतुर्भागावशेषितया कार्याणि । तदेवं क्षीरपलानि चत्वारि पानीयपलानि द्वादश । मुस्ताविंशतिं दत्त्वा क्षीरावशिष्टपेयमित्ययमत्र क्रमो वेद्यः ।

**पिप्पल्या पिबतः सूक्ष्मं रजो मरिचजन्म वा ॥४०॥**
**चिरकालानुषक्ताऽपि नश्यत्याशु प्रवाहिका ।**

पिप्पल्याः सूक्ष्मं चूर्णं जलेन पिबतो मरिचस्य वा सूक्ष्मं चूर्णं जलेन पिबतो बहुकालानुषक्ताऽपि प्रवाहिका नश्यति ।

**निरामरूपं शूलार्तं लंघनाद्यैश्च कर्शितम् ॥ ४१ ॥**
**रूक्षकोष्ठमपेक्ष्याग्निं सक्षारं पाययेद् घृतम् ।**

निरामरूपं तथा शूलेन पीडितं लंघनाद्यैः कर्शितं तथा रूक्षकोष्ठं वह्निमपेक्ष्य क्षारसहितं घृतं पाययेत् ।

**सिद्धं दधिसुरामंडे दशमूलस्य चांभसि ॥ ४२ ॥**
**सिंधूत्थं पंचकोलाभ्यां तैलं सद्योऽतिनाशनम् ।**

दधिसुरामंडे दशमूलक्काथे वा सैंधवं पंचकोलकल्केन तैलं सिद्धं सद्यो रुजापहम् ।

**षड्भिः शुंठ्याः पलैर्द्वाभ्यां द्वाभ्यां ग्रंथ्यग्निसैंधवात्**
**तैलप्रस्थं पचेद्दध्ना निःसारकरुजापहम् ।**

शुंठ्याः पलैः षड्भिः पिप्पलीमूलपलद्वयेन चित्रकपलद्वयेन सैंधवपलद्वयेन च तैलप्रस्थं दध्ना पचेन्निःसारकरुजापहम् ।

**एकतो मांसदुग्धाज्यं पुरीषग्रहशूलजित् ॥ ४४ ॥**
**पानानुवासनाभ्यंगप्रयुक्तं तैलमेकतः ।**
**तद्धि वातजितामग्र्यं शूलं च विगुणोऽनिलः ॥४५॥**

एकत एकस्मिन् पुरीषग्रहशूलजित्त्वपक्षे मांसदुग्धाज्यं त्रयमेतत्प्रयुक्तम् । पुरीषग्रहशूलजित् । एकत एकस्मिन् शूलजित्त्वपक्षे पानानुवासनाभ्यंगैः प्रयुक्तं तैलं पुरीषग्रहशूलजित् संपद्यत इति वाक्यशेषः । कथमेवमित्याह । तद्धीत्यादि । तत्तैलं यस्मात्सर्वेषां वातजितामग्र्यं प्रधानम् । शूलं च विगुणोऽनिलः प्रकुपितः पवनो नापरः कश्चित् । शूलानिलयोः कार्यकारणभावातिरेके सत्यपि शूलस्य वातकार्यस्य वातप्रकोपे सत्यविनाभावित्वं सूचयितुं शूलं च विगुणोऽनिल इत्येवमुक्तम् । कुपितश्चेद्वायुरुत्पन्नमेव शूलमित्यर्थः ।

वायोर्वैगुण्ये कोपधातुक्षय एवात्र हेतुरत एवाह ।

**धात्वंतरोपमर्दाद्धि चलो व्यापी स्वधामगः ।**
**तैलं मंदानलस्याऽपि युक्त्या शर्मकरं परम् ।**
**वाय्वाशये सतैले हि बिंबिसी नावतिष्ठते ॥ ४६ ॥**

वायुमपेक्ष्यान्ये पित्तश्लेष्मादयो धात्वंतरास्तेषामुपमर्दोऽन्यभावस्तेन उद्धतश्चलो वाय्वाख्यः स व्यापी सकलशरीरव्यापनशीलोऽपि स्वधामगः पक्वाशयस्थस्तत्राऽधिकेन तस्य वृत्तेः । अस्यामवस्थायामस्यातीसारिणस्तैलं मंदानलस्याऽपि युक्त्या योगविशेषेण परमतिशयेन शर्मकरं रोगस्य दुःखहेतोः शमनात् । अपिशब्दात्किमु दीप्ताग्नेरतीसारिणो न सुखकरं भवति । तत्रैव हेतुमाह । वाय्वाशये पक्वाशयाख्ये सतैले बिंबिसी प्रवाहिका नाऽवतिष्ठते न स्थितिं प्राप्नोति ।

**क्षीणे मले स्वायतनच्युतेषु**
**दोषांतरेष्वीरण एकवीरे ।**
**को निष्टनन्प्राणिति कोष्ठशूली**
**नांतर्बहिस्तैलपरो यदि स्यात् ॥ ४७ ॥**

मले पुरीषाख्ये क्षीणे तथा दोषांतरेषु वातविवर्जितेषु पित्तकफादिष्वायतनच्युतेषु स्वाधारभ्रष्टेषु । व्यक्त्यपेक्षया बहुवचनम् । ईरणे वायावेकवीर एकनायके शेषाणां स्वस्थानभ्रष्टत्वात्कोऽतीसारी निष्टनन्प्रवाहिकां कुर्वन् प्राणिति न कश्चिज्जीवति । यदि नांतर्बहिरुभयत्र पानानुवासनाभ्यंगैस्तैलपरोऽतिशयेन तैलसेवी न स्यात् । आक्रंदनपूर्वं सशूलमुपवेशनं निष्टनन्मुच्यते । इंद्रवज्रा वृत्तम् ।

**गुदरुग्भ्रंशयोर्युंज्यात्सक्षीरं साधितं हविः ।**
**रसे कोलाम्लचांगेर्योर्दध्नि पिष्टे च नागरे ॥ ४८ ॥**

गुदरुजि गुदभ्रंशे च घृतं सक्षीरं कोलादिरसे दध्नि नागरे च कल्कितैः पक्वं युंज्यात् । अत्र च क्षीरं सर्पिः प्रमाणं घृतात्कोलादि रसादिकं चतुर्गुणं घृतमिति पाकक्रमः ।

**तैरेव चाऽम्लैः संयोज्य सिद्धं सुश्लक्ष्णकल्कितैः ।**
**धान्योषणबिडाजाजीपांचकोलकदाडिमैः ॥ ४९ ॥**

तैरेव पूर्वोक्तैः कोलादिभिरम्लैः संयोज्य सूक्ष्मरजीकृतैश्च धान्यकादिभिः सिद्धं घृतं पूर्वगुणम् ।

**योजयेत्स्नेहबस्तिं वा दशमूलेन साधितम् ।**
**शठीशताह्वाकुष्ठैर्वा वचया चित्रकेण वा ॥ ५० ॥**

गुदशूली च दशमूलेन साधितं हविर्घृतं स्नेहबस्तिं च योजयेत् । शठ्यादिभिर्वा मूलेन साधितं चित्रकेण वा साधितं स्नेहं योजयेत् । तच्च पूर्वगुणम् ।

**प्रवाहणे गुदभ्रंशे मूत्राघाते कटिग्रहे ।**
**मधुराम्लैः शृतं तैलं घृतं वाप्यनुवासनम् ॥ ५१ ॥**

प्रवाहणादिषु मधुराम्लैः शृतं तैलं घृतं वाऽनुवासनं योजयेत् ।

**प्रवेशयेद्गुदं ध्वस्तमभ्यक्तं स्वेदितं मृदु ।**
**कुर्याच्च गोःफणाबंधं मध्यच्छिद्रेण चर्मणा ॥ ५२ ॥**

गुदं ध्वस्तं सदभ्यक्तं स्वेदितं च मृदुकृत्वांतः प्रवेशयेत् । गोःफणाबंधं चर्मणा मध्यच्छिद्रवता कुर्यात् ।

**पंचमूलस्य महतः क्वाथं क्षीरे विपाचयेत् ।**
**उंदुरुं चांत्ररहितं तेन वातघ्नकल्कवत् ॥ ५३ ॥**
**तैलं पचेद्गुदभ्रंशं पानाभ्यंगेन तज्जयेत् ।**

महतः पंचमूलस्य बिल्वादेः क्वाथं तैलसमं कृत्वा क्षीरे विपाचयेत् । उंदुरुं चांत्ररहितं तस्मिन्नेव क्षीरे विपाचयेत् । तेनैव क्षीरेण तैलं पचेत् । किंभूतं वातघ्नकल्कवत् । वातघ्नानां रास्नैरंडादीनां कल्कः स यस्याऽस्ति वातघ्नकल्कवत् । उंदुरोरत्र रास्नाघृतानुसारेण प्रमाणं निरूप्य कार्यम् । तत्रैवं संपद्यते । तुल्यार्ध-

माजमांसस्येति । एवं मायूरादिष्वपि घृतेषु मयूरादीनां प्रमाणं चिंत्यं । तेन तैलं पचेदिति वचनाच्च क्षीरं तैलाच्चतुर्गुणं कार्यम् । अत्र द्रवस्यापरस्याभावात्तैलाच्च द्रवं चतुर्गुणं कार्यमिति पाकक्रमः । तस्मान्नान्यस्नेहवदत्र क्षीरं ग्राह्यम् । अन्यत्र ह्येवमधीतम् । द्रव्याच्चतुर्गुणः स्नेहः स्नेहात्क्वाथश्चतुर्गुणः । क्षीरं स्नेहसममिति । बहुक्षीरत्वेन वातकार्यस्य गुदभ्रंशाख्यस्य शीघ्रं शमं करोति । चतुर्गुणमेवात्र क्षीरं न्याय्यम् ।

**पैत्ते तु सामे तीक्ष्णोष्णवर्ज्यं प्रागिव लंघनम्॥५४॥**

पैत्ते त्वतीसारे सामे प्रागिव यथा वातातीसारे पूर्वं लंघनं शरीरलाघवं कर्तुं यत्कर्म द्रव्यं वा निर्दिष्टं तत्सर्वं तीक्ष्णोष्णवर्ज्यं यल्लंघनं शरीरलाघवकरं पेयादिकमस्मिन् कार्यमिति शेषः ।

**तृड्वान् पिबेत् षडंगांबु सभूनिंबं ससारिवम् ।**
**पेयादि क्षुधितस्यान्नमग्निसंधुक्षणं हितम् ॥ ५५ ॥**
**बृहत्यादिगणाभीरुद्विवलाशूर्पपर्णिभिः ।**

सपित्तातीसारी तृड्वान् षडंगांबु ज्वरचिकित्सितोक्तं भूनिंबसारिवाभ्यां सहितं पिबेदर्धमष्टांगजलं तेन पेयमित्येवं तिष्ठते । क्षुधितस्याऽतिशयेन बुभुक्षितस्य पेयाद्यन्नमग्निसंधुक्षणं हितम् । बृहत्यादिना गणेनाभीरुणा तथा बलाद्वयेन शूर्पपर्णीद्वयेन च साधितम् ।

**पाययेदनुबंधे तु सक्षौद्रं तंडुलांभसा ॥ ५६ ॥**
**पाठा वत्सकबीजत्वग्दार्वी ग्रंथिकशुंठि वा ।**
**वत्सकस्य फलं पिष्टं सवल्कं सघुणप्रियम् ॥ ५७ ॥**
**क्वाथं चाऽतिविषाविल्ववत्सकोदीच्यमुस्तजम् ।**
**अथवाऽतिविषामूर्वानिशेंद्रयवताक्ष्र्यजम् ॥ ५८ ॥**
**समध्वतिविषाशुंठीमुस्तेंद्रयवकट्फलम् ।**

एवं लंघनपेयादिके कृतेऽप्यनुबंधेऽतीसारस्य सति तमतीसारिणं कुटजस्य फलं शक्रयवाख्यं पिष्टं सकल्कं प्रकृतत्वात्तस्यैव कुटजस्य त्वचायुक्तं तथा सघुणप्रियं तथा सक्षौद्रं तंडुलांभसा पाययेत् । अथवा पाठादिपिष्टं तंडुलांभसा सक्षौद्रं तमतीसारिणं पाययेत् । अथवा क्वाथमतिविषादिजं तं पाययेत् । अथवा अतिविषा मूर्वादिजं पाययेत् । ताक्ष्र्यं रसांजनम् । समध्वित्यादि । समाक्षिकमतिविषादिकं क्वाथीकृतं वा पाययेत् ।

**पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ॥ ५९ ॥**
**यो रसाशी जयेच्छीघ्रं सपैत्तं जठरामयम् ।**
**मुस्ताकषायमेवं वा पिबेन्मधुसमायुतम् ॥ ६० ॥**
**सक्षौद्रं शाल्मलीवृंतकषायं वा हिमाह्वयम् ।**

वत्सकबीजस्य वा पलं जलेन क्वाथयित्वा तद्रसं यो मांसरसाशी सन् पिबेत् स पित्तजमतीसारं जयेत् । एवं प्राग्वन्मुस्ताकषायं मुस्तानां पलं श्रपयित्वा मधुसमायुतं रसं शीतं क्वाथं पिबेत् सपैत्तं जठरामयं जयेत् । शाल्मलीवृंतकषायं वा हिमाह्वयं शीतकषायं सक्षौद्रं वा पिबेत् ।

**किराततिक्तकं मुस्तं वत्सकं सुरसांजनम् ॥ ६१ ॥**
**कटंकटेरी ह्रीबेरं बिल्वमध्यं दुरालभाम् ।**
**तिलान् मोचरसं रोध्रं समंगां कमलोत्पलम् ॥६२॥**
**नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम् ।**
**अर्धश्लोकैः स्मृता योगाः सक्षौद्रास्तंडुलांबुना ६३**

किराततिक्तादयश्चत्वारो योगा अर्धश्लोकैः स्मृताः समाक्षिकास्तंडुलजलेन योज्याः ।

**निशेंद्रयवरोध्रैलाक्वाथः पक्वातिसारनुत् ।**

निशादिक्वाथः पक्वातीसारजित् ।

**रोध्रांबष्ठाप्रियंग्वादिगणांस्तद्वत् पृथक् पिबेत् ६४**

रोध्रादीन् गणान् पृथक् समाक्षिकांस्तथैव तंडुलांभसा पिबेत् ।

**कट्वंगवल्कयष्ट्याह्वफलिनीदाडिमांकुरैः ।**
**पेया विलेपी खलकान् कुर्यात्सदधिदाडिमान् ६५**
**तद्वद्दधित्थबिल्वाम्रजंबुमध्यैः प्रकल्पयेत् ।**

कट्वंगत्वगादिभिः पेयादीन् सदधिदाडिमान् कुर्यात् । तथैव सदधित्थादिभिः पेयादीन्सदधिदाडिमान् कल्पयेत् । दधित्थः कपित्थः ।

**अजापयः प्रयोक्तव्यं निरामे तेन चेच्छमः ॥ ६६ ॥**
**दोषाधिक्यान्न जायेत बलिनं तं विरेचयेत् ।**

अथाऽजापयः पथ्यं निरामये स्मृतम् । तेनाजक्षीरेण यदि दोषाधिक्याद्धेतोः शमो न भवति तदा तं बलवंतं विरेचयेन्न दुर्बलम् ।

**व्यत्यासेन शकृद्रक्तमुपवेश्येत योऽपि वा ॥ ६७ ॥**
**पलाशफलनिर्यूहं युक्तं वा पयसा पिबेत् ।**
**ततोऽनु कोष्णं पातव्यं क्षीरमेव यथाबलम् ॥ ६८ ॥**
**प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ।**

व्यत्यासः परस्परक्षेपणम् । शकृद्रक्तं क्षिपति रक्तं शकृत्क्षिपत्येवं व्यत्यासस्तेन य उपवेश्यते स पलाशफलक्वाथं केवलं पिबेदथवा पयसा युक्तम् । ततस्तत्कषायं पीत्वाऽनंतरं कोष्णं क्षीरमेव यथाबलं बलानतिक्रमेण पेयम् । तेन क्षीरेण मले प्रवाहिते निःसारिते सत्यतीसारः शाम्यति ।

**पलाशवत्प्रयोज्या वा त्रायमाणा विशोधनी ॥६९॥**

पलाशं यथा तथा त्रायमाणा विशोधनाय प्रयोज्या ।

**संसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्तते ।**
**स्रुतदोषस्य तं शीघ्रं यथावन्ह्यनुवासयेत् ॥ ७० ॥**

स्रुतदोषस्याऽपचितमलस्याऽतीसारिणः संसर्ग्यां क्रियमाणायां पेयादिके क्रमे विधीयमाने यदि शूलमनुवर्तते निर्वृतिं न याति तमातुरमाशु यथा वन्ह्यग्न्यनतिक्रमेणानुवासयेत् ।

तदेवानुवासनघृतमाह ।

**शतपुष्पावरीभ्यां च बिल्वेन मधुकेन च ।**
**तैलपादं पयोयुक्तं पक्कमन्वासनं घृतम् ॥ ७१ ॥**

शतपुष्पादिभिस्तैलपादं क्षीरयुतं घृतं पक्कमनुवासनं स्यात् ।

**अशांतावित्यतीसारे पिच्छाबस्तिः परं हितः ।**

इत्यनेन प्रकारेण कृतेनाऽतीसारस्याऽशांतौ सत्यां परमनंतरं पिच्छाबस्तिर्वक्ष्यमाणो हितः । अल्पया मात्रया निरूहाख्यो बस्तिः पिच्छाबस्तिः ।

**परिवेष्ट्य कुशैरार्द्रैरार्द्रवृंतानि शाल्मलेः ॥ ७२ ॥**
**कृष्णमृत्तिकयाऽऽलिप्य स्वेदयेद्गोमयाग्निना ।**
**मृच्छोषे तानि संक्षुद्य तत्पिंडं मुष्टिसंमितम् ॥७३॥**
**मर्दयेत्पयसः प्रस्थे पूतेनास्थापयेत्ततः ।**
**नतयष्ट्याह्वकल्काज्यक्षौद्रतैलवताऽनु च ।**
**स्नातो भुंजीत पयसा जांगलेन रसेन वा ॥ ७४ ॥**

**पित्तातिसारज्वरशोफगुल्म-**
**समीरणास्रग्रहणीविकारान् ।**
**जयत्ययं शीघ्रमतिप्रवृत्तिं**
**विरेचनास्थापनयोश्च बस्तिः ॥ ७५ ॥**

आर्द्रैरशुष्कैर्दर्भैः शाल्मलेरार्द्रवृंतानि कुसुमबंधनानि परिवेष्ट्य ततः कृष्णमृत्तिकयाऽऽलिप्य गोमयाग्निना स्वेदयेत् । मृच्छोषे सति तानि संक्षुद्य संचूर्ण्य तं पिंडं मुष्टिसंमितं पलप्रमाणं पयसः प्रस्थे मर्दयेत् । तेन पूतेनाऽनंतरं नतादिमताऽऽस्थापयेत् । नतं तगरम् । पुटपाकानां च सर्वेषामयमेव विधिः । आस्थापितः पश्चात् स्नातः पयसा भुंजीत । सात्म्यादिवशाज्जांगलरसेन वा । अयं बस्तिः प्रयुक्तः पित्तातीसारादीन् विरेचनास्थापनयोश्चातिप्रवृत्तिं दोषाणामतियोगं जयति । एतदुक्तं भवति । बहुदोषस्य या प्रवृत्तिर्विरेचनविषय आस्थापनविषये वा तां च प्रयुक्तोऽयं जयति ।

**फाणितं कुटजोत्थं च सर्वातीसारनाशनम् ।**
**वत्सकादिसमायुक्तं सांबष्ठादिसमाक्षिकम् ॥ ७६ ॥**

कुटजोत्थं च फाणितं च वत्सकादियुक्तमंबष्ठादिसहितं माक्षिकयुक्तं सर्वातीसार आमातीसारः पक्कातीसारश्च तस्य नाशनं स्यात् ।

**निरुङ्क्रामं दीप्ताग्नेरपि सास्रं चिरोत्थितम् ।**
**नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ७७ ॥**

निरुक् चासौ निरामश्च निरुङ्निरामस्तमतीसारमपि सास्रमपि शब्दात्किमुत निरस्रं तथा चिरोत्थं तथा नानावर्णमनेकवर्णं दीप्ताग्नेः पुटपाकैरुपाचरेत् ।

**त्वक्पिंडाद्दीर्घवृंतस्य श्रीपर्णीपत्रसंवृतात् ।**
**मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ७८**

**अतीसारी पिबेद्युक्तं मधुना सितयाऽथवा ।**

त्वचः पिंडस्त्वक्पिंडः दीर्घवृंतस्य त्वक्पिंडः काश्मर्यपत्रसंछादितान्मृल्लिप्तात्सामान्योक्तावपि कृष्णमृत्तिकया लिप्तादिति वेद्यम् । प्रागुक्तं हि कृष्णमृत्तिकया लिप्तेति । अनंतरमग्निना स्विन्नाद्रसं निष्पीडितं शीतं कृत्वाऽतीसारी मधुना युक्तमथवा सितायुक्तं पिबेत् । दीर्घवृंतः श्योनाकः ।

**एवं क्षीरद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ॥ ७९ ॥**
**कट्वंगत्वग्घृतयुता स्वेदिता सलिलोष्मणा ।**
**सक्षौद्रा हंत्यतीसारं बलवंतमपि द्रुतम् ॥ ८० ॥**

एवमनेन प्रकारेण क्षीरद्रुमाणां त्वग्भिस्तत्प्ररोहैः कोमलैर्विगतमूलैश्च कल्पयेत् । प्ररोहा अंकुरा इत्यन्ये । श्योनाकत्वक्घृतयुता तथोष्णसलिलोष्मणा स्वेदिता माक्षिकयुक्ताऽतीसारं बलवंतमपि शीघ्रं हंति ।

**पित्तातिसारी सेवेत पित्तलान्येव यः पुनः ।**
**रक्तातिसारं कुरुते तस्य पित्तं सतृड्ज्वरम् ॥ ८१ ॥**
**दारुणं गुदपाकं च तत्र छागं पयो हितम् ।**
**पद्मोत्पलसमंगाभिः शृतं मोचरसेन वा ॥ ८२ ॥**
**सारिवायष्टिरोध्रैर्वा प्रसवैर्वा वटादिजैः ।**
**सक्षौद्रशर्करं पाने भोजने गुदसेचने ॥ ८३ ॥**

पित्तातीसारी पित्तलान्येवान्नपानानि यः सेवते तस्य पित्तं कर्तृ रक्तातीसारं कुरुते । किंभूतं तृष्णाज्वरयुतम् । तथा दारुणं गुदपाकं करोति । तत्रैवंविधेऽतीसारे छागं क्षीरं पद्मादिभिर्मोचरसेन च शृतं हितम् । अथवा सारिवादिभिः शृतं छागं क्षीरं हितम् । अथवा वटादिजैः पल्लवैः शृतं क्षौद्रशर्करान्वितं पाने भोजने गुदसेके च छागं पयो हितम् ।

**तद्वद्रसाद्योऽनम्लाः साज्याः पानान्नयोर्हिताः ।**
**काश्मर्यफलयूषश्च किंचिदम्लः सशर्करः ॥ ८४॥**

तथैव रसा यूषादयोऽनम्लाः सघृताः पानान्नयोर्हिताः । काश्मर्यफलयूषश्च किंचिदम्लः सशर्करो हितः ।

**पयस्यर्धोदके छागे ह्रीवेरोत्पलनागरैः ।**
**पेया रक्तातिसारघ्नी पृश्निपर्णी रसान्विता ॥ ८५॥**
**प्राग्भक्तं नवनीतं वा लिह्यान्मधुसितायुतम् ।**

छागे पयस्यर्धोदके वालकोत्पलनागरैः पृश्निपर्णीक्काथेन च युक्ता पेया रक्तातीसारं हंति । अथवा नवनीतं प्राग्भक्तं मधुशर्करान्वितं लिह्यात् ।

**बलिन्यस्रेऽस्रमेवाजं मार्गं वा घृतभर्जितम् ॥ ८६ ॥**
**क्षीरानुपानं क्षीराशी त्र्यहं क्षीरोद्भवं घृतम् ।**
**कपिंजलरसाशी वा लिहन्नारोग्यमश्नुते ॥ ८७ ॥**

प्रवृद्धरक्ते छागं रक्तमथवा मार्गं मृगसंबंधि रक्तं घृतभर्जितं

भुंजीत । एवकारान्न त्वपरं किंचिदजस्य मृगस्य चेति गम्यते । उभयमपि क्षीरानुपानं क्षीराशीव सन् भर्जितं भुंजीत । अथवा क्षीरोद्भवं घृतं त्र्यहं लिहन् कपिंजलरसाशनो नर आरोग्यं प्राप्नोति ।

**पीत्वा शतावरीकल्कं क्षीरेण क्षीरभोजनः ।**
**रक्तातीसारं हंत्याशु तया वा साधितं घृतम्॥ ८८॥**

शतावरीकल्कं क्षीरेण पीत्वा क्षीराशी सन् रक्तातीसारं द्रागेव पराकरोति । अथवा तया शतावर्या पक्वं घृतं पीत्वा क्षीरभोजन आशु रक्तातीसारं हंति ।

**लाक्षानागरवैदेहीकटुकादार्विवल्कलैः ।**
**सर्पिः सेंद्रयवैः सिद्धं पेयामंडावचारितम् ॥८९॥**
**अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ।**

लाक्षादिभिः सिद्धं घृतं पेयामंडेनावचारितं शीघ्रं त्रिदोषमप्यतीसारं घोरं जयति । अपिशब्दाद्रक्तातीसारमपि ।

**कृष्णमृच्छंखयष्ट्याह्वक्षौद्रासृक्तंडुलोदकम्॥९०॥**
**जयत्यस्रं प्रियंगुश्च तंडुलांबु मधुप्लुता ।**

कृष्णमृदादिकं तंडुलजलालोडितं रक्तं जयति । तथा तंडुलांबु मधुयुक्ता प्रियंगू रक्तं जयति ।

**कल्कस्तिलानां कृष्णानां शर्करापांचभागिकः ९१**
**आजेन पयसा पीतः सद्यो रक्तं नियच्छति ।**

पंचमो भागः पंचभागः स यस्याऽस्ति स पांचभागिकः । कोऽसौ कृष्णतिलानां कल्कः । शर्करायाः पांचभागिकः कृष्णतिलानां कल्कः छगलीक्षीरेण पीतः सन् सद्यो रक्तं नियच्छति ।

**पीत्वा सशर्कराक्षौद्रं चंदनं तंडुलांबुना ॥ ९२ ॥**
**दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ।**

तंडुलजलेन चंदनं शर्करामाक्षिकान्वितं पीत्वा दाहादिभ्यो मुच्यते । मुच्यत इति कर्मकर्तरि तङ् ।

**गुदस्य दाहे पाके वा सेकलेपा हिता हिमाः ॥९३॥**

गुदस्य दाहे पाके च सति सेकलेपा हिमा हिताः ।

**अल्पाऽल्पं बहुशो रक्तं सशूलमुपवेश्यते ।**
**यदा विबद्धो वायुश्च कृच्छ्राच्चरति वा न वा॥९४॥**
**पिच्छाबस्तिं तदा तस्य पूर्वोक्तमुपकल्पयेत् ।**

अल्पमल्पं पुनः पुनः शूलेन सह यश्च बहुशो रक्तमुपवेश्यते । वायुश्च यदा विबद्धो नानुलोमगोऽत एव कृच्छ्रेण चरति । न वा चरति तदा तस्य पुरुषस्य पूर्वोक्तं त्वक्पिंडादिकं पिच्छाबस्तिमुपकल्पयेत् ।

**पल्लवान् जर्जरीकृत्य शिंशिपाकोविदारयोः॥९५॥**
**पचेद्यवांश्च स क्वाथो घृतक्षीरसमन्वितः ।**

**पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ ९६॥**
**पिच्छाबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ।**

शिंशिपाकोविदारयोः पल्लवान् जर्जरीकृत्य यवांश्च पचेत् । स क्वाथो घृतक्षीरसंयुक्तः पिच्छास्रुत्यादिषु पिच्छाबस्तिः प्रयोक्तव्यः । स च क्षतक्षीणानां बलप्रदः ।

**प्रपौंडरीकसिद्धेन सर्पिषा चाऽनुवासनम् ॥९७॥**

प्रपौंडरीकपक्वेन घृतेनाऽनुवासनं प्रयोक्तव्यम् ।

**रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।**
**शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥ ९८ ॥**

रक्तं विशा सहितमथवा पूर्वं पश्चाद्वा योऽतिसार्यते तस्य लेहार्थं शतावरीघृतमुपकल्पयेत् ।

**शर्करार्धांशकं लीढं नवनीतं नवोद्धृतम् ।**
**क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः॥९९॥**

नवनीतं नवं शर्करया अर्धभागेन युक्तं माक्षिकचतुर्थप्रमाणं माक्षिकस्य चतुर्थेन भागेनान्वितं लीढं पूर्वोक्तं विकारं हिताहारस्य जयेत् ।

**न्यग्रोधोदुंबराश्वत्थशृंगानापोथ्य वासयेत् ।**
**अहोरात्रं जले तप्ते घृतं तेनांभसा पचेत् ॥ १००**
**तदर्धशर्करायुक्तं लेहयेत्क्षौद्रपादिकम् ।**
**अधो वा यदि वाप्यूर्ध्वं यस्य रक्तं प्रवर्तते १०१**

न्यग्रोधादीनां शृंगान् जर्जरीकृत्य तप्ते जलेऽहोरात्रं वासयेत् । तेनांबुना घृतं पचेत् । तच्च घृतं शर्करया अर्धभागेन युक्तं माक्षिकचतुर्थांशकं लेहयेत् । पूर्वगुणम् । अधो वा चोर्ध्वं वा यस्य रक्तं प्रवर्तते ।

**श्लेष्मातीसारे वातोक्तं विशेषादामपाचनम् ।**
**कर्तव्यमनुबंधस्य पिबेत्पक्त्वाऽग्निदीपनम् १०२**
**बिल्वकर्कटिकामुस्तप्राणदाविश्वभेषजम् ।**
**वचाविडंगभूतीकधानकामरदारु वा ॥ १०३ ॥**
**अथवा पिप्पलीमूलं पिप्पलीद्वयचित्रकाः ।**

श्लेष्मातीसारे वातातीसारोक्तं यदामपाचनं तद्विशेषात्तत्कर्तव्यं न तथा वातातीसारोक्तोऽन्य उपक्रमः कार्य इति विशेषशब्दस्यार्थः। अस्याऽतीसारस्याऽनुबंधे चिकित्सायां सम्यक्कृतायामप्यशमयति बिल्वकर्कटिकादिकं पक्त्वा पानमग्निदीपनं पिबेत् । अथवा वचादीनि पिबेत् । अथवा पिप्पलीमूलादिकं पक्त्वाऽग्निदीपनं पिबेत् ।

**पाठाग्निवत्सकग्रंथितिक्ताशुंठीवचाभयाः ॥१०४॥**
**क्वथिता यदि वा पिष्टाः श्लेष्मातीसारभेषजम् ।**

एते पाठादयः क्वथिताः पाचनन्यायेन चूर्णं पाचनन्यायेन वा

श्लेष्मातीसारभेषजमिति । अत्राऽपि वक्ष्यमाणं सिंहावलोकितन्यायेन कोष्णवारिणेत्येतत्संबध्यते ।

**सौवर्चलवचाव्योषहिंगुप्रतिविषाभयाः ॥ १०५॥**
**पिबेच्छ्लेष्मातिसारार्तश्चूर्णिता कोष्णवारिणा ।**

सौवर्चलादींश्चूर्णितान्कोष्णजलेन श्लेष्मातीसारार्तः पिबेत् ।

**मध्यं लीढ्वा कपित्थस्य सव्योषक्षौद्रशर्करम् १०६**
**कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ।**

कपित्थस्य मध्यं सव्योषमाक्षीकशर्करं लीढ्वाऽथवा कट्फलं माक्षीकान्वितं लीढ्वा जठररोगान्मुच्यते ।

**कणां मधुयुतां लीढ्वा तक्रं पीत्वा सचित्रकम्॥१०७॥**
**भुक्त्वा वा बालबिल्वानि व्यपोहत्युदरामयम् ।**

कणां माक्षिकान्वितां लीढ्वा तक्रं च सचित्रकं पीत्वा बालबिल्वानि वा भुक्त्वा जठररोगं व्यपोहति । उपसर्गादस्यत्यूहोर्वा-वचनमिति वा तङ् ।

**पाठामोचरसांभोदधातकीबिल्वनागरम् ॥ १०८ ॥**
**सुकृच्छ्रमप्यतीसारं गुडतक्रेण नाशयेत् ।**

पाठादि गुडतक्रेण पीत्वाऽतीसारं सुकृच्छ्रमपि नाशयेत् । श्लेष्मातीसारे प्रकृतेऽप्यतीसारग्रहणमन्यस्याऽपि निरामस्य च तन्नाशनमिति द्योतनार्थम् ।

**यवानीपिप्पलीमूलचातुर्जातकनागरैः ॥ १०९ ॥**
**मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः ।**
**वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥ ११०**
**त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ।**
**चूर्णोऽतीसारग्रहणीक्षयगुल्मोदरामयान् ॥ १११ ॥**
**कासश्वासाग्निसादार्शःपीनसारोचकान्जयेत् ।**

यवान्यादिभिर्द्रव्यैः समैर्वृक्षाम्लादिभिस्त्रिगुणैर्मूलद्रव्यापेक्षया । किंभूतैरेतैः । षड्गुणा सिता येषां वृक्षाम्लादीनां त एवं तैः । षड्गुणसितैश्चूर्णीकृत इति योज्यम् । एवं शर्कराभागानां शतमष्टाधिकं भवति । किंभूतश्चूर्णः । मूलद्रव्यापेक्षयाऽष्टगुणैः कपित्थैः । केचित्त्वेवं पठंति । षड्गुणसिते कपित्थेऽष्टगुण इति । तत्र चेदं व्याख्यानम् । मूलद्रव्यापेक्षया कपित्थेऽष्टगुणे तथा किंभूते । षड्गुणसिता यस्मात्तथा तस्मिन् । एवं शर्कराभागा अष्टचत्वारिंशत्स्युरिति । अयं चूर्णोऽतीसारादीन् जयेत् ।

**कर्षोन्मिता तवक्षीरी चातुर्जातं द्विकार्षिकम् ११२**
**यवानीधान्यकाजाजीग्रंथिव्योषं पलांशकम् ।**
**पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः॥११३॥**
**गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ।**
**भोज्यो वातातिसारोक्तैर्यथावस्थं खलादिभिः ११४**

तुगाक्षीरी चतुर्जातं च कर्षोन्मितं कर्षप्रमाणम् । यवानी च धान्यकं वाऽजाजी च यवानीधान्यकाजाजी द्विकार्षिकं ग्रंथिश्च व्योषं च तत्पलांशकं पलभागिकं पलानि दाडिमादष्टौ । चशब्दात्सिताया अप्यष्टौ पलानि । एवमयमेकत एकस्मिन् कृतश्चूर्णो दाडिमाष्टक एतत्संज्ञः । तेन चतुर्जातकमेकमेवास्य समुदायाद्यथोक्त एक एव भागः । व्योषमप्येकमेवास्याऽपि समुदायाद्यथोक्त एक एव भागः । एवं द्रव्यसमुदायस्यैकत्वे कल्पनाप्यत्राचार्यस्याभिमतैव । यथा । त्रिकटूत्तमातिलारुष्कराज्यामाक्षिकासितोपलाविहिता गुलिका रसायनं कुष्ठजिच्च वृष्या च सप्तसमेति साप्त चेति । तुगाक्षीर्येका । चतुर्जातं द्वितीयम् । यवानी तृतीया । धान्यकं चतुर्थम् । अजाजी पंचमी । पिप्पलीमूलं षष्ठम् । व्योषं सप्तमम् । दाडिममष्टममिति । अन्ये त्वेवं व्याचक्षते।पलमिति प्रकृतम् । दाडिममष्टकमष्टपलप्रमाणं यस्मिन् चूर्णे सदाडिमाष्टक इति। यथा वाऽक्षिरोगे सितमरिचभागमेकं चतुर्मनोह्वमित्यत्र तच्चूर्णं वातातीसारार्तैर्नरैरवस्थावशात् खलपेयादिभिः सह भोजनीयम् ।

**सविडंगः समरिचः सकपित्थः सनागरः ।**
**चांगेरीतक्रकोलाम्लः खलः श्लेष्मातिसारजित् ॥**

खलः श्लेष्मातीसारजित् । किंभूतः । विडंगादियुक्तः चांगेरीतक्रकोलाम्लः ।

**क्षीणे श्लेष्मणि पूर्वोक्तमम्लं लाक्षादिषट्पलम् ।**
**पुराणं वा घृतं दद्याद्यवागूं मंडमिश्रिताम् ११६**

क्षीणश्लेष्मणि पूर्वोक्तमम्लं घृतं गुदरुग्भ्रंशयोर्युज्यात् । सक्षीरं साधितं हविरित्यादि । तथा लाक्षादिः । लाक्षानागरवैदेहीत्यादि षट्पलं यक्ष्मोक्तं पुराणं वा घृतं यवागूमंडमिश्रितं दद्यात् ।

**वातश्लेष्मविबंधे च स्रवत्यतिकफेऽपि वा ।**
**शूले प्रवाहिकायां वा पिच्छावस्तिः प्रशस्यते११७**
**वचाबिल्वकणाकुष्टशताह्वालवणान्वितः ।**

वातकफविबंधे वाऽतिशयेन कफे स्रवति तथा शूले सति प्रवाहिकायां वा सत्यां पिच्छावस्तिः पूर्वोक्त एव पल्लवान् जर्जरीकृत्येत्यादिको वचादिभिर्युक्तः प्रशस्यते ।

**बिल्वतैलेन तैलेन वचाद्यैः साधितेन वा ॥११८**
**बहुशः कफवातार्ते कोष्णेनान्वासनं हितम् ।**

बिल्वमज्जभ्य उत्पन्नं तैलं बिल्वतैलं तेन वचाद्यैः पक्वेनाऽथवा तैलेन तिलतैलेन वचाद्यैः साधितेनोभयेनाप्युष्णेन बहुशोऽनुवासनं कफवातार्ते हितम् ।

**क्षीणे कफे गुदे दीर्घकालातीसारदुर्बले ॥११९॥**
**अनिलः प्रबलोऽवश्यं स्वस्थानस्थः प्रजायते ।**
**सबली सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥१२०॥**

**वायोरनंतरं पित्तं पित्तस्याऽनंतरं कफम्।**
**जयेत्पूर्वं त्रयाणां वा भवेद्यो बलवत्तमः॥ १२१॥**

कफे क्षीणे गुदे च दीर्घकाले योऽतीसारस्तेन दुर्बले बलहीने सत्यनिलः स्वस्य स्थानस्थितः पायुस्थितोऽवश्यं प्रबलो जायेत। स वायुर्बलवान्सहसा झटित्येनं व्यापादयेत्। तस्मात्तं वायुं शीघ्रं जयेत्। तं वायुं जित्वाऽनंतरं पित्तं जयेत्। पित्तस्यानंतरं कफं जयेत्। अथवा त्रयाणां मध्ये यो बलवत्तमो दोषस्तमेव पूर्वं जयेत्।

**भीशोकाभ्यामपि चलः शीघ्रं कुप्यत्यतस्तयोः।**
**कार्या क्रिया वातहरा हर्षणाश्वासनानि च॥ १२२**

भयशोकाभ्यामप्यनिलो यस्मात् कुप्यति। अतस्तयोर्भयशोकातीसारयोर्वातहरा क्रिया कार्या। न केवलं वातहरा। हर्षणाश्वासनानि च कार्याणि भयशोकनिवृत्तये।

**यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्तते।**
**दीप्ताग्नेर्लघुकोष्ठस्य शांतस्तस्योदरामयः॥१२३॥**

यस्याऽतीसारिणः पुरुषस्योच्चारात्प्रवृत्तेर्विना मूत्रमथवा वातः प्रवर्तते दीप्ताग्नेर्लघुकोष्ठस्य यतस्तस्य जठररोगः शांत इति।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामतीसारचिकित्सितं नाम नवमोऽध्यायः॥ ९॥

---

## दशमोऽध्यायः।

अतीसारचिकित्सितादनंतरं ग्रहणीदोषचिकित्सितमुच्यते। निदानसामान्यात्। तथा च प्रागुक्तमर्शोऽतिसारग्रहणीविकारा इत्यादि। अत आह।

**अथाऽतो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः।**

ग्रहण्यामाश्रितो दोषो ग्रहणीदोषस्तदाश्रितस्थानो हितकारी वाताद्यन्यतमस्तस्य चिकित्सितं ग्रहणीदोषचिकित्सितम्। शेषं पूर्ववत्।

**ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।**
**अतीसारोक्तविधिना तस्यामं च विपाचयेत्॥ १॥**

ग्रहणीं दोषमाश्रितमजीर्णवदुपाचरेत्। तत्तुल्यसाधनेन लंघनोपचारादिनोपक्रमेत्। अतीसारोक्तविधिना तस्य ग्रहणीदोषवतः पुंसो यथादोषमामं विपाचयेत्।

**अन्नकाले यवाग्वादि पंचकोलादिभिर्युतम्।**
**वितरेत्पटुलघ्वन्नं पुनर्योगांश्च दीपनान्॥ २॥**

अन्नकाले सम्यग् जातायां क्षुधि देहे च सुलघौ यवाग्वाद्यन्नं पेयाविलेप्योदनलक्षणं वितरेद्दद्यात्। किंभूतम्। पंचकोलादिभिर्दीपनैर्द्रव्यैर्युतम्। आदिशब्देनान्यैरप्येवंप्रकारैर्द्रव्यैर्दीपनादिगुणयुक्तैर्युक्तं तथा पटुलवणम्। लघूभयथा मात्रया प्रकृत्या च। पुनर्भूयो दीपनान् खांडवादीन्योगान् वितरेत्।



**दद्यात्सातिविषां पेयामामे साम्लां सनागराम्।**
**पानेऽतीसारविहितं वारि तक्रं सुरादि च॥ ३॥**

तथाऽऽमे सति पेयां दद्यात्। किंभूताम्। नागरातिविषायुताम्। तथा साम्लामीपदम्लाम्। पानेऽतीसारविहितं वारि तक्रं च सुरादि च सात्म्यादिवशाद् यथायोग्यं तस्मै दद्यात्।

**ग्रहणीदोषिणां तक्रं दीपनग्राहि लाघवात्।**
**पथ्यं मधुरपाकित्वान्न च पित्तप्रदूषणम्॥ ४॥**
**कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम्।**
**वाते स्वाद्वम्लसांद्रत्वात्सद्यस्कमविदाहि तत्॥५॥**

ग्रहणीदोषिणां तक्रं पथ्यम्। कस्माद्दीपनग्राहिलाघवात्। दीपनग्राहिशब्दयोरत्र भावप्रधानयोर्निर्देशः। यथा द्व्येकयोर्द्विवचनैकवचन इत्यत्र। अत एवैतौ भावप्रत्ययांतेन लाघवशब्देन सह निर्दिष्टौ। भाष्यकारस्त्वाह। द्वंद्वात्परो यः श्रूयते स सर्वैः संबध्यत इति। तेन दीपनग्राहिशब्दयोरपि भावप्रत्ययार्थसंबंधो भवतीति। मधुरपाकित्वात् पित्तप्रदूषणं च न भवति। नपदेन प्रकर्षदूषणं पित्तस्य तक्रं निषिध्यते। तेनार्थात् किंचित् पित्तकरमित्युक्तं भवति। कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम्। तक्रं रूक्षत्वाच्चेति पृथङ्निर्देशाद्रूक्षत्वस्य तक्रगतस्य यथा कफे हितत्वं द्रव्यस्वभावान्न तथा कषायादीनामेतद् द्योतयति। वाते स्वाद्वम्लं सांद्रत्वात्तक्रं पथ्यम्। किंभूतम्। सद्यस्कं सद्यो विलोडितम्। अत एव न विदाहि। ननु ग्रहणीदोषिणां तक्रं पथ्यमित्येतावदस्तु। किं हेतुनिर्देशेन। अत्रोच्यते। लघ्वादिगुणेभ्यः प्राङ्निरूपितेभ्योऽधिकान् विकाशित्वमधुरपाकादीनभिधातुं दीपनादयोऽपि तत्प्रसंगान्निर्दिष्टाः। अपि च। ग्रहणीदोषिणां तक्रं पथ्यं दीपनादिगुणयोगात्तथान्यदपि यद्द्रव्यमेवंगुणं ग्रहणीदोषचिकित्सितेनोक्तं तदपि ग्रहणीदोषिणां पथ्यमिति हेतुनिर्देशेन द्योत्यते। द्रव्यस्वभावात्तु विशेषेण ग्रहणीदोषिणां तक्रं पथ्यमिति। एष एव न्यायोऽन्यत्राऽपि सहेतुकद्रव्यकथने योज्यः। किंच यत्तदोर्नित्याभिसंबंधादेवंनिर्देशाच्चाऽयमर्थोऽवतिष्ठते। यदेवंविधं तक्रं तद् ग्रहणीदोषिणां पथ्यं नान्यादृशं यदनुद्धृतस्नेहमथवा वर्धितस्नेहं तथाऽतिजातत्वादम्लं तथा सद्यस्कं विदाहि च। तत्सर्वं ग्रहणीदोषिणामपथ्यमेव। तक्रे च रूक्षस्वाद्वम्लादयो गुणाः परस्परविरुद्धा अपि द्रव्यप्रभावात्कफविजयित्वं वातविजयित्वं च यथायोगं कुर्वत्येव। स्वं स्वं कर्म यथा सत्वरजस्तमःसंज्ञा गुणाः।

**चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम्।**
**लवणानां च चत्वारि शर्करायाः पलाष्टकम्॥ ६॥**
**तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत्।**
**कासाजीर्णारुचिश्वासहृत्पार्श्वामयशूलनुत्॥ ७॥**

अम्लानां चतुर्णां कोलदाडिमवृक्षाम्लचुक्रीकाणां प्रस्थम्। केचित्तु वृक्षाम्लाम्लवेतसदाडिमबदराणामित्याहुः। त्रिकटुकात्प-

लत्रयम् । लवणानां चत्वारि पलानि । शर्करायाः पलान्यष्टौ । तदेतच्चूर्णं शाकादिष्ववचारयेन्मिश्रयेत् । तच्च कासादिजित् ।

**नागरातिविषामुस्तं पाक्यमामहरं पिबेत् ।**
**उष्णांबुना वा तत्कल्कं नागरं वाऽथवाऽभयाम्॥८॥**
**ससैंधवं वचादिं वा तद्वन्मदिरयाऽथवा ।**

नागरादि पाक्यं क्राथयित्वाऽऽमघ्नं पिबेत् । अथवा तेषां नागरादीनां कल्कमुष्णांबुना पिबेत् । अथवा शुंठीमुष्णांबुना पिबेत् । हरीतकीं वा वचादिं वा गणं सैंधवान्वितं तद्वदुष्णांबुना पिबेत् । वचादिमेव मदिरया वा पिबेत् ।

**वर्चस्यामे सप्रवाहे पिबेद्वा दाडिमांबुना ॥ ९ ॥**
**बिडेन लवणं पिष्टं बिल्वचित्रकनागरम् ।**
**सामे कफानिले कोष्ठाऽरुक्करे कोष्णवारिणा ॥ १०**

पुरीष आमे तथा सप्रवाहे बिडेनोपलक्षितं लवणं बिडलवणं पिष्टं दाडिमांबुना वा पिबेत् । सामे वातकफे कोष्ठरुजाकरे बिल्वादीनि कोष्णवारिणा पिबेत् ।

**कलिंगहिंग्वतिविषावचासौवर्चलाभयम् ।**
**छर्दिहृद्रोगशूलेषु पेयमुष्णेन वारिणा ॥ ११ ॥**
**पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ।**

छर्द्यादिषु कलिंगादिकं कोष्णेन वारिणा पेयम् । पथ्यादिकं चूर्णं समरिचमुष्णजलेन पिबेत् । पूर्वगुणम् ।

**पिप्पलीं नागरं पाठां सारिवां बृहतीद्वयम् १२॥**
**चित्रकं कौटजं क्षारं तथा लवणपंचकम् ।**
**चूर्णीकृतं दधिसुरा तन्मंडोष्णांबुकांजिकैः ॥१३॥**
**पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ।**

पिप्पल्यादिकं सूक्ष्मरजीकृतं दध्यादिभिरग्निदीप्त्यर्थं पिबेत् । तस्याः सुराया मंडस्तन्मंडः । कोष्ठवातहरं चैतच्चूर्णं स्यात् ।

**पटूनि पंच द्वौ क्षारौ मरिचं पंचकोलकम् १४॥**
**दीप्यकं हिंगुगुलिका बीजपूररसे कृता ।**
**कोलदाडिमतोये वा परं पाचनदीपनी ॥ १५ ॥**

लवणपंचकादिभिर्गुटिका बीजपूररसे कृता कोलदाडिमजले वा कृताऽतिशयेन पाचनी दीपनी च स्यात् ।

**तालीसपत्रचविकामरिचानां पलं पलम् ।**
**कृष्णा तन्मूलयोर्द्वे द्वे पले शुंठी पलत्रयम् ॥१६॥**
**चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ।**
**गुडेन वटकान्कृत्वा त्रिगुणेन सदा भजेत् १७॥**
**मद्ययूषरसारिष्टमस्तुपेया पयोनुपः ।**
**वातश्लेष्मात्मनां छर्दिग्रहणीपार्श्वहृद्रुजाम् ॥१८॥**
**ज्वरश्वयथुपांडुत्वग्गुल्मपानात्ययार्शसाम् ।**
**प्रसेकपीनसश्वासकासानां च निवृत्तये ॥ १९ ॥**
**अभयां नागरस्थाने दद्यादत्रैव विड्ग्रहे ।**
**छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विताः ॥२०॥**
**पक्केन वटकाः कार्या गुडेन सितयाऽपि वा ।**
**परं हि वह्निसंपर्काल्लघिमानं भजंति ते ॥ २१ ॥**

तालीसपत्रादीनां प्रत्येकं पलम् । पिप्पली पले द्वे । पिप्पलीमूलस्य द्वे । शुंठी पलत्रयम् । चतुर्जातमुशीरं च पृथक् कर्षभागं । गुडेन त्रिगुणेन वटकान् कृत्वा सदा मद्यादीन् पिबन् भजेत् । किमर्थमित्याह । वातकफात्मकच्छर्द्यादीनां शांत्यर्थम् । तत्र चैतेष्वेव च वटकेषु विड्ग्रहे विड्विबंधे सत्यभयां नागरस्थाने दद्यात् । छर्द्यादिषु पूर्वोक्तेषु पित्तोद्भवेषु सत्सु गुडवर्जं चतुर्गुणसितया युक्ता वटकाः कार्याः । वटकानां विधानमाह । पक्केन गुडेन वटकाः कार्याः । सितया वा पक्कया कार्याः । किमिति पक्केन क्रियंत इत्याह । यस्मात्कारणादग्निसंपर्कात्ते वटकाः परं लघुत्वं भजंति । लघोर्भावो लघिमा । पृथ्वादिभ्य इमनिच् । टेरिति टिलोपः ।

सामचिकित्सामुक्त्वा निरामचिकित्सां विशेषेणाह ।

**अथैनं परिपक्वाममारुतग्रहणीगदम् ।**
**दीपनीययुतं सर्पिः पाययेदल्पशो भिषक् ॥२२॥**
**किंचित्संधुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ।**
**द्व्यहं त्र्यहं वा संस्नेह्य स्विन्नाभ्यक्तं निरूहयेत्२३**
**तत एरंडतैलेन सर्पिषा तैल्वकेन वा ।**
**सक्षारेणाऽनिले शांते स्रस्तदोषं विरेचयेत् ॥२४॥**

मारुतग्रहणीगदो विद्यते यस्येत्यर्शआदित्वादच् । एनं मारुतग्रहणीगदवंतं दीपनीयौषधयुतं पंचकोलप्रायद्रव्यान्वितं वह्निसंधुक्षणार्थमल्पमात्रया घृतं पाययेत् । किंचित्संधुक्षिते मनाक् संदीपिते त्वग्नौ सति सक्तविण्मूत्रपवनं नरं द्वे दिने त्रीणि वा संस्नेह्य स्नेहयित्वाऽनंतरं स्विन्नाभ्यक्तं कृत्वा निरूहयेत् । ततो निरूहादनंतरं मारुते शांते सत्येरंडतैलेनाऽथवा तैल्वकेन घृतेन सक्षारेण स्रस्तदोषं प्रच्युतदोषं विरेचयेत् ।

**शुद्धरूक्षाशयं बद्धवर्चस्कं चाऽनुवासयेत् ।**
**दीपनीयाम्लवातघ्नसिद्धतैलेन तं ततः ॥ २५ ॥**
**निरूढं च विरिक्तं च सम्यक्चाऽप्यनुवासितम् ।**
**लघ्वन्नप्रतिसंयुक्तं सर्पिरभ्यासयेत्पुनः ॥ २६ ॥**

शुद्धो रूक्ष आशयो यस्य स एवं । तथा बद्धं वर्चः पुरीषं यस्य तम् । शुद्धरूक्षाशयमिति हेतौ प्रथमा । शुद्धरूक्षाशयत्वेन बद्धवर्चस्कमित्यर्थः । तथाविधं नरमनुवासयेत् । केन । दीपनीयानि नागरादीन्यम्लानि वृक्षाम्लमातुलुंगदाडिमादीनि वातघ्नानि कुष्ठ-

रास्नैरंडादीनि तैर्दीपनीयाम्लवातघ्नैः सिद्धतैलेन निरूढं विरिक्तं च विधिना चानुवासितं मात्रयेत्यर्थः । सम्यग्वाप्यनुवासितं लध्वन्नप्रतिसंयुक्तं पुनः सर्पिः शीलयेत् ।

**पंचमूलाभयाव्योषपिप्पलीमूलसैंधवैः ।**
**रास्नाक्षीरद्वयाजाजीविडंगशठिभिर्घृतम् ॥ २७ ॥**
**शुक्तेन मातुलिंगस्य स्वरसेनार्द्रकस्य वा ।**
**शुष्कमूलककोलाम्लचुक्रिकादाडिमस्य च ॥ २८ ॥**
**तक्रमस्तुसुरामंडसौवीरकतुषोदकैः ।**
**कांजिकेन च तत्पक्वमग्निदीप्तिकरं परम् ॥ २९ ॥**
**शूलगुल्मोदरश्वासकासानिलकफापहम् ।**

पंचमूलादिभिः कल्कैर्द्रव्यैः शुक्तादिभिर्द्रवद्रव्यैः सामान्यपरिभाषया घृतं पचेत् । पंचमूलमिह महद्ग्राह्यं सुतरां वातघ्नत्वात् । एतच्च घृतं परमग्निदीप्तिकरं शूलादिघ्नम् ।

**सबीजपूरकरसे सिद्धं वा पाययेद्घृतम् ॥ ३० ॥**

बीजपूरकरसेन सह सिद्धं वा घृतं पाययेत् ।

**तैलमभ्यंजनार्थं च सिद्धमेभिश्चलापहम् ।**

एभिः पंचमूलादिभिर्घृतौषधैः सिद्धं तैलं वाभ्यंजनार्थं हितम् ।

**एतेषामौषधानां वा पिबेच्चूर्णं सुखांबुना ॥ ३१ ॥**
**वातश्लेष्मावृते सामे कफे वा वायुनोद्धते ।**

एतेषामौषधानां पंचमूलादीनां चूर्णमुष्णांबुना वा पिबेत् । कस्यामवस्थायामित्याह । वाते । किंभूते । श्लेष्मावृते । तथा सामे कफे वा वातेनोद्धते । सामे वा ।

अधुना पित्तग्रहणीरोगचिकित्सामाह ।

**अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा ॥ ३२ ॥**
**हत्वा तिक्तलघुग्राहिदीपनैरविदाहिभिः ।**
**अम्लैः संधुक्षयेदग्निं चूर्णैः स्नेहैश्च तिक्तकैः ॥ ३३ ॥**

अग्निपित्तयोर्ग्रहण्याश्रयत्वाद् द्रवत्वाच्च यदग्नेः प्लावकं पित्तमूर्ध्वाधः प्रपन्नं तद्यथासन्नदोषं वमनेन विरेकेण च हत्वा । अनंतरं तमग्निमन्नैस्तिक्तलघुग्राहिदीपनैः संधुक्षयेत् । किंभूतैः । अविदाहिभिर्ऋतुसामान्येन दीपनैर्न केवलमेवंविधैरन्नैरग्निं संधुक्षयेत् । अम्लैश्चूर्णैः स्नेहैश्च तं संधुक्षयेत् । किंभूतैः । तिक्तकैस्तिक्तद्रव्यभूयिष्ठैश्चूर्णैस्तिक्तद्रव्यसाधितैः स्नेहैश्च ।

चूर्णैरग्निं संधुक्षयेदित्युक्तम् । अतश्चूर्णान्याह ।

**पटोलनिंबत्रायंतीतिक्तातिक्तकपर्पटम् ।**
**कुटजत्वक्फलं मूर्वामधुशिग्रुफलं वचा ॥ ३४ ॥**
**दार्वीत्वक्पद्मकोशीरयवानीमुस्तचंदनम् ।**
**सौराष्ट्र्यतिविषाव्योपत्वगेलापत्रदारु च ॥ ३५ ॥**
**चूर्णितं मधुना लेह्यं पेयं मद्यैर्जलेन वा ।**
**हृत्पांडुग्रहणीरोगगुल्मशूलारुचिज्वरान् ॥ ३६ ॥**
**कामलां संनिपातं च मुखरोगांश्च नाशयेत् ।**

मधुशिग्रुः सोभांजनकविशेषः । तस्य फलं श्वेतमरिचाख्यम् । एतत्पटोलादिकं चूर्णितं मधुना लेह्यमथवा जलेन पेयं मद्यैर्वा । तच्च हृद्रोगादीन् नाशयेत् ।

**भूनिंबकटुकामुस्तात्र्यूषणेंद्रयवान् समान् ॥ ३७ ॥**
**द्वौ चित्रकाद्वत्सकत्वग्भागान् षोडश चूर्णयेत् ।**
**गुडशीतांबुना पीतं ग्रहणीदोषगुल्मनुत् ॥ ३८ ॥**
**कामलाज्वरपांडुत्वमेहारुच्यतिसारजित् ।**

भूनिंबाद्यान् समभागान् चित्रकाद् द्वौ कुटजत्वचां षोडशभागाश्चूर्णं गुडयुतेन शीतांबुना पीतं ग्रहणीरोगादिहरम् ।

**नागरातिविषामुस्तापाठाबिल्वं रसांजनम् ॥ ३९ ॥**
**कुटजत्वक्फलं तिक्ता धातकी च कृतं रजः ।**
**क्षौद्रतंडुलवारिभ्यां पैत्तिके ग्रहणीगदे ॥ ४० ॥**
**प्रवाहिकार्शोगुदरुग्रक्तोत्थानेषु चेष्यते ।**

नागरादिद्रव्यं चूर्णितं क्षौद्रतंडुलजलाभ्यां सह पैत्तिकग्रहणीगद इष्यते । प्रवाहिकादिषु च ।

**चंदनं पद्मकोशीरं पाठां मूर्वां कुटंनटम् ॥ ४१ ॥**
**षड्ग्रंथासारिवाऽस्फोतासप्तपर्णाटरूषकान् ।**
**पटोलोदुंबराश्वत्थवटप्लक्षकपीतनम् ॥ ४२ ॥**
**कटुकां रोहिणीं मुस्तां निंबं च द्विपलांशकान् ।**
**द्रोणेऽपां साधयेत्तेन पचेत्सर्पिः पिचून्मितैः ॥४३॥**
**किराततिक्तेंद्रयववीरामागधिकोत्पलैः ।**
**पित्तग्रहण्यां तत्पेयं कुष्ठोक्तं तिक्तकं च यत् ॥४४॥**

चंदनादिद्रव्यं प्रत्येकं द्विपलांशकमपां द्रोणे पचेत् । तेन क्काथेन पिचुप्रमाणैश्च किराततिक्तकादिभिः कल्कैः सर्पिः पचेत् । कुटंनटः श्योनाकः । आस्फोत उत्पलसारिवा । कपीतनो वानीरः । अत्र च सर्पिःप्रमाणं क्काथापेक्षया द्वात्रिंशत्पलानि कल्प्यानि नतु कल्कापेक्षया पंच पलानि । क्काथादिद्रवद्रव्यस्य स्नेहपाकप्राधान्यात् । यतः क्काथादिद्रवमंतरेण स्नेहपाकोऽपि नोपपद्यते नतु तथा कल्कं विना । तस्मात् क्काथस्य प्राधान्यात् क्काथापेक्षयैव सर्पिर्ग्राह्यम् । तदेतद्घृतं पित्तग्रहण्यां पेयम् । यच्च कुष्ठचिकित्सिते गदितं तिक्तकं घृतं तच्च पेयम् । चशब्दो महातिक्तकस्याऽपि ग्रहणार्थः ।

श्लेष्मग्रहणीचिकित्सार्थमाह ।

**ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ।**
**कट्वम्ललवणक्षारैः क्रमादग्निं विवर्धयेत् ॥ ४५ ॥**

श्लेष्मदुष्टायां ग्रहण्यां तीक्ष्णैर्द्रव्यैः प्रच्छर्दने वमने कृते सति प्रथमं कट्वम्ललवणक्षारैरग्निं विवर्धयेत् ।

**पंचकोलाभयाधान्यपाठागंधपलाशकैः ।**
**बीजपूरप्रवालैश्च सिद्धैः पेयादि कल्पयेत् ॥ ४६ ॥**

पंचकोलादिभिः सिद्धैः क्वथितैः पेयादिकं कल्पयेत् । गंधपलाशं गंधपत्रम् ।

**द्रोणं मधूकपुष्पाणां विडंगं च ततोऽर्धतः ।**
**चित्रकस्य ततोऽर्धं च तथा भल्लातकाढकम् ॥४७॥**
**मंजिष्ठाऽष्टपलं चैतज्जलद्रोणत्रये पचेत् ।**
**द्रोणशेषं श्रृतं शीतं मध्वर्धाढकसंयुतम् ॥ ४८ ॥**
**एलामृणालागुरुभिश्चंदनेन च रूक्षिते ।**
**कुंभे मासं स्थितं जातमासवं तं प्रयोजयेत् ॥ ४९ ॥**
**ग्रहणीं दीपयत्येष बृंहणः पित्तरक्तनुत् ।**
**शोषकुष्ठकिलासानां प्रमेहाणां च नाशनः ॥ ५० ॥**

मधूककुसुमानां द्रोणं ततो मधुकपुष्पेभ्योऽर्धेन विडंगं ततो विडंगाच्चित्रकस्यार्धं भल्लातकस्य चाढकं मंजिष्ठायाः पलान्यष्टौ । एतत्सर्वं पानीयद्रोणत्रये पचेत् । एतच्च द्रोणशेषं श्रृतं शीतं मधुनोऽर्धाढकेन संयुक्तमेलादिभिः कुंभे रूक्षिते लिप्ते मासं स्थितं तमेवंविधं जातमासवं प्रयोजयेत् । एष आसवो ग्रहणीं दीपयति बृंहणोऽस्रपित्तादिनाशनः ।

**मधूकपुष्पस्वरसं श्रृतमर्धक्षयीकृतम् ।**
**क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥ ५१ ॥**
**तत्पिबन् ग्रहणीदोषान् जयेत्सर्वान् हिताशनः ।**

मधूकपुष्पाणां कुडवं स्वरसं च क्वथितमर्धक्षयीकृतमर्धावशेषं शीतं माक्षिकचतुर्थभागयुतं पूर्ववत् पूर्वेण तुल्यमेलादिरूक्षिते भांडे मासं यावत्संनिधापयेत्सम्यक् स्थापयेत् । मधूकपुष्पकुडवमित्यादि योऽयं परिमाणनिर्देशः स इह दिङ्मात्रप्रदर्शनपरः । अनया दिशाऽयं संधातव्यो बहुनं त्वेतावान्यथा ह्यल्पसंभृतत्वादयमासवो न शोभनः स्यात् । अन्यत्र त्वासवारिष्टलेहादौ परिपूर्णत्वात् । यथानिर्दिष्ट एवमासवो यथोक्तगुणकलापं करोति । न न्यूनाधिकमिति वेद्यम् । तदेतत् पिबन्नातुरो हितभोजी सन् सर्वान् ग्रहणीदोषान् जयति ।

**तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासुतान् पिबेत् ॥ ५२ ॥**

यथैष मधूकपुष्पक्वाथ आसवस्तथैव द्राक्षादिस्वरसानासुतान् पिबेत् । यथा च मधूकपुष्पाणां क्वाथ आदिष्टो ग्रंथकृता तथैव द्राक्षादीनां स्वरसाभावे क्वाथो ग्राह्यस्तस्य दिक्प्रदर्शनपरत्वात् ।

**हिंगुतिक्तावचामाद्रीपाठेंद्रयवगोक्षुरम् ।**
**पंचकोलं च कर्षांशं पलांशं पटुपंचकम् ॥ ५३ ॥**
**घृततैलद्विकुडवे दध्नः प्रस्थद्वये च तत् ।**
**आपोथ्य क्वाथयेदग्नौ मृदावनुगते रसे ॥ ५४ ॥**
**अंतर्धूमं ततो दग्ध्वा चूर्णीकृत्य घृताप्लुतम् ।**
**पिबेत्पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ॥ ५५**
**वातश्लेष्मामयान् सर्वान् हन्याद्विषगरांश्च सः ।**

हिंग्वादिकर्षप्रमाणं लवणानि पंचपलप्रमाणानि तदेतद्घृततैलयोः कुडवद्वये दधिप्रस्थद्वये चापोथ्य संक्षुद्य मृदावग्नौ क्वाथयेत् । रसे चाऽनुगते प्रविष्टे सत्यनंतरमंतर्धूमं कलशे दग्ध्वा ततश्चूर्णीकृत्य कर्षमात्रं घृतालोडितं पिबेत् । तस्मिन् जीर्णे मधुरभोजी स्यात् । स च क्षारो वातकफरोगादीन् हंति ।

**भूनिंबं रोहिणीं तिक्तां पटोलं निंबपर्पटम् ॥ ५६ ॥**
**दग्ध्वा माहिषमूत्रेण पिबेदग्निविवर्धनम् ।**

भूनिंबादीनि दग्ध्वा माहिषमूत्रेण पिबेत् । तच्च पीतं वह्निं वर्धयति ।

**द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ॥ ५७ ॥**
**मुस्ता च छागमूत्रेण सिद्धः क्षारोऽग्निवर्धनः ।**

कटुरोहिणी कटुका । हरिद्राद्वयादेश्छागमूत्रेण सिद्धः पूर्ववदग्निवृद्धिकृत्क्षारः ।

**चतुःपलं सुधाकांडात्त्रिपलं लवणत्रयात् ॥ ५८ ॥**
**वार्ताककुडवं चार्कादष्टौ द्वे चित्रकात्पले ।**
**दग्ध्वा रसेन वार्ताकाद्गुटिका भोजनोत्तराः ॥ ५९ ॥**
**भुक्तमन्नं पचंत्याशु कासश्वासार्शसां हिताः ।**
**विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ॥ ६० ॥**

सुधास्तंभाच्चत्वारि पलानि । लवणत्रयात्त्रीणि पलानि । पक्वशुष्कवार्ताककुडवम् । अर्कादष्टौ पलानि । चित्रकपले द्वे । एतत्सर्वं दग्ध्वा । ततो वार्ताकानां रसेन कृता गुलिका भुक्तमुपभुक्तं भोजनं पचंत्याशु। कासादिभ्यो हिताः । विसूचिकादिभ्यश्च स्मृताः।

**मातुलुंगशठी रास्ना कटुत्रयहरीतकी ।**
**स्वर्जिकायावशूकाख्यौ क्षारौ पंचपटूनि च ॥ ६१ ॥**
**सुखांबुपीतं तच्चूर्णं बलवर्णाग्निवर्धनम् ।**

मातुलुंगादिकं चूर्णमुष्णोदकेन पीतं बलादिवर्धनम् ।

**श्लैष्मिके ग्रहणीदोषे सवाते तैर्घृतं पचेत् ॥ ६२ ॥**
**धान्वंतरं षट्पलं च भल्लातकघृताभयम् ।**

श्लैष्मिके ग्रहणीदोषे वातान्विते तैर्मातुलुंगादिभिर्घृतं पचेत् । अथवा धान्वंतरं घृतं प्रमेहचिकित्सिते दशमूलशठीत्यादिकं षट्पलं राजयक्ष्मचिकित्सिते पंचकोलयवक्षारेत्यादिकं भल्लातकघृतं गुल्मोक्तं भल्लातकानां द्विपलमित्यादिकमभयाघृतमुदरचिकित्सिते हरीतकीसूक्ष्मरज इत्यादिकम् ।

**बिडं कालोषलवणं स्वर्जिकायावशूकजान् ॥ ६३ ॥**
**सप्तलां कंठकारीं च चित्रकं चैकतो दहेत् ।**
**सप्तकृत्वः स्रुतस्याऽस्य क्षारस्याऽर्धाढके पचेत् ॥६४**
**आढकं सर्पिषः पेयं तदग्निबलवृद्धये ।**

बिडं लवणं काचलवणं क्षारलवणं स्वर्जिकादींश्चैकस्मिन् कृत्वा दहेत् । सप्तवारानस्य क्षारस्य स्रुतस्य चार्धाढके सर्पिष आढकं पचेत् । तद्घृतमग्निबलादिवृद्धये पेयम् ।

**निचये पंचकर्माणि युंज्याच्चैतद्यथाबलम् ॥ ६५ ॥**

निचये संनिपातजे ग्रहणीदोषे पंचकर्माणि वमनविरेचनस्थापनानुवासननस्यानि यथाबलं युंज्यात् । यद्यपि शिरोविरेचनाख्यस्य कर्मणो बाहुल्येन ग्रहणीदोषे प्रयोजनं न तथा दृश्यते यथा वमनादीनां तथाऽपि भूयस्त्वमुररीकृत्य पंचकर्माणीत्युक्तम् । चशब्दाद्यदेतद्ग्रहणीत्रये प्रतिदोषमाश्रित्योक्तं कर्म तदपि निचयोत्थे ग्रहणीदोषे युंज्यात् ।

इति ग्रहणीदोषस्य चतुर्विधस्य चिकित्सामभिधायेदानीं प्रतिपुरुषं प्रतिदोषं मंदाग्नित्वमाश्रित्य यथावस्थं चिकित्सितं निर्दिशन्नाह ।

**प्रसेके श्लैष्मिकेऽल्पाग्नेर्दीपनं रूक्षतिक्तकम् ।**
**योज्यं कृशस्य व्यत्यासात्स्निग्धरूक्षं कफोदये॥६६॥**
**क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतम् ।**
**दीपनं बहुपित्तस्य तिक्तं मधुरकैर्युतम् ॥ ६७ ॥**

प्रसेको द्विविधो वातिकः श्लैष्मिकश्च । तत्र मंदाग्नेः श्लेष्मप्रकोपजे प्रसेके मंदवह्नेर्दीपनं रूक्षतिक्तं यद् द्रव्यं तत्प्रयोज्यम् । न घृतं नाऽपि मधुराम्ललवणादिकम् । श्लेष्मजप्रसेकस्य च लक्षणम् । श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यतीत्यादि । कृशस्य पुनर्मंदाग्नेः कफोदये सति व्यत्यासात् पर्यायेणाऽप्यतिकर्मव्यतिहारार्थः । व्यत्यासात् स्निग्धरूक्षं योज्यम् । स्निग्धं योजयित्वा रूक्षं योज्यम् । रूक्षं योजयित्वा स्निग्धं योज्यमित्यर्थः । यदि हि कृशे बहुकफे रूक्षे च नरे रूक्षमेव युंज्यात् । ततो रूक्षे केवले युज्यमाने कार्श्यस्य वृद्धिः स्यात् । अथ स्नेहमेव युंज्यात् । ततः स्नेहे केवले युज्यमाने कफवृद्धिः स्यादिति व्यत्यासेन स्निग्धरूक्षमुपयुक्तम् । क्षीणक्षामशरीरस्य तु कफोदये दीपनं द्रव्यं पंचकोलादिकं स्नेहैर्घृतादिसंयुतं स्नेहसंयुक्तं युंज्यात् । बहुपित्तस्य मंदाग्नेस्तिक्तं मधुरकैर्द्रव्यैर्युक्तं दीपनं योज्यम् । बहुवातस्य मंदाग्नेर्नरस्य स्नेहोऽम्ललवणैर्युक्तः प्रायेण शस्यते ।

स्नेहस्य मंदाग्निविषयेभ्योऽन्यद्रव्येभ्यः प्रायेण प्राधान्यं सर्वपुरुषं प्रति द्योतयितुमिदं ब्रूते ।

**स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ।**
**स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ ६८ ॥**
**नाऽलं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ।**

एवेत्यवधारणे । परं प्रधानम् । स्नेहमेव मंदाग्नेर्विद्यान्न ततोन्यद्द्रव्यम् । तस्मान्मंदाग्नेर्दोषप्रतिपत्तिपक्षैरौषधैर्युक्तः स्नेहो बाहुल्येन पथ्यः। अत एवेदं कारणं निर्दिशन्नाह । नाऽलमित्यादि । यस्मात्स्नेहोद्दीपितस्याऽग्नेः सुष्ठु गुर्वप्यन्नं शमाय नाऽलं पर्याप्तम् । तस्मात् स्नेह एव दुर्बलानलदीपनाय श्रेष्ठः ।

**योऽल्पाग्नित्वात्कफे क्षीणे वर्चः पक्वमपि श्लथम् ॥**
**मुंचेद्यद्वौषधयुतं स पिबेदल्पशो घृतम् ।**
**तेन स्वमार्गमानीतः स्वकर्मणि नियोजितः ॥ ७० ॥**
**समानो दीपयत्यग्निमग्नेः संधुक्षको हि सः ।**

यो नरोऽल्पाग्नित्वात्कफे क्षीणे सति पुरीषं पक्वमपि शिथिलं मुंचेत् स नरोऽल्पमल्पं घृतं पिबेत् । किंभूतम् । यद्द्वौषधयुतं सैंधवशुंठीयुक्तम् । तेन सर्पिषा समानः स्वमार्गमानीय स्वकर्मण्यन्नपचनाख्ये नियोजितोऽग्निं संदीपयति यतोऽसौ समानोऽग्नेः संधुक्षकः ।

**पुरीषं यश्च कृच्छ्रेण कठिनत्वाद्विमुंचति ॥ ७१ ॥**
**स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ।**

यश्च पुरुषः पुरीषं काठिन्यात्संहतत्वाद्धेतोः कृच्छ्रेण मुंचति । स नरो लवणैः पंचभिर्युक्तं घृतं पिबेत् । किंभूतम् । अन्नावग्रहमन्नेनावग्रहः सहसोर्ध्वकायगमनप्रतिबंधोऽवष्टंभो यस्य तदेवं घृतं पीत्वाऽन्नं भोक्तव्यमित्यर्थः ।

**रौक्ष्यान्मंदेऽनले सर्पिस्तैलं वा दीपनैः पिबेत्७२**

रौक्ष्याद्धेतोर्मंदेऽग्नौ सति सर्पिरथवा तैलं दीपनैर्युतं पिबेत् ।

**क्षारचूर्णासवारिष्टान् मंदे स्नेहातिपानतः ।**

स्नेहातिपानाद्धेतोर्मंदेऽग्नौ सति क्षारादीन् पिबेत् ।

**उदावर्तात्प्रयोक्तव्या निरूहस्नेहबस्तयः ॥ ७३ ॥**

उदावर्तात्पुनर्मंदेऽग्नौ सति निरूहस्नेहबस्तयः प्रयोक्तव्याः ।

**दोषाऽतिवृद्ध्याऽमंदेऽग्नौ संशुद्धोऽन्नविधिं चरेत्**

दोषाऽतिवृद्ध्या मंदेऽग्नौ सति वमनविरेचनादिभिर्हृतदोषः कृतशुद्धिपेयादिक्रममाचरेत् ।

**व्याधिमुक्तस्य मंदेऽग्नौ सर्पिरेव तु दीपनम् ७४**

व्याधिमुक्तस्य मंदेऽग्नौ सर्पिरेव दीपनं स्यान्नान्यत्तथाद्रव्यम् ।

**अध्वोपवासक्षामत्वैर्यवाग्वा पाययेद्धृतम् ।**
**अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥७५॥**

अध्वोपवासक्षामत्वैर्मंदेऽग्नौ यवाग्वा सहघृतं पाययेद्वैद्य इति शेषः । किंभूतम् । अन्नेनावपीडितमन्नावपीडितं मध्यभक्तं घृतमित्यर्थः । एवं पीतं बल्यं बृंहणं दीपनं च तद्भवति ।

**दीर्घकालप्रसंगात्तु क्षामक्षीणकृशान्नरान् ।**
**प्रसहानां रसैः साम्लैर्भोजयेत्पिशिताशिनाम्७६**
**लघूष्णकटुशोधित्वाद् दीपयंत्याशु तेऽनलम् ।**
**मांसोपचितमांसत्वात्परं च बलवर्धनम् ॥ ७७ ॥**

दीर्घकालप्रसंगात्तु मंदेऽग्नौ सत्यसम्यगाहाररसपरिणत्या हेतुभूतया क्षामक्षीणकृशान्नरान् पिशिताशिनां प्रसहादीनां रसैः साम्लैर्भोजयेत् । कस्मात्तानेतान् भोजयेदित्याह । लघूष्णेत्यादि । लघुत्वादुष्णत्वादित्यादि लघुत्वात्कटुत्वाच्छोधनत्वाच्च ते रसाः

शीघ्रमग्निं दीपयंति । भावप्रधाननिर्देशः पूर्वश्चात्र योज्यः । ननु प्रागभ्यधायि । गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरमिति । इह च प्रसहानां लघुत्वमुच्यतस्तदिमे वचसी परस्परं व्याघ्नाते । अत्र ब्रूमः । लाघवशब्दोऽत्र क्रियाविशेषार्थो धावनप्लवनलंघनादिका चेष्टा तस्याः पाटवविशेषो लाघवम् । यथा च प्रागध्यगीष्ट । लाघवं कर्म सामर्थ्यमिति । एवं चाऽत्राऽविरोधः । हेतुनिर्देशादन्येप्येवंप्राया ये मांसरसास्तानप्येतान् भोजयेदिति । ते च प्रसहा मांसोपचितमांसत्वाद्धेतोः सुष्ठु बलं वर्धयंति ।

**स्नेहासवसुरारिष्टचूर्णकाथहिताशनैः ।**
**सम्यक् प्रयुक्तैर्देहस्य बलमग्नेश्च वर्धते ॥ ७८ ॥**

स्नेहादिभिः सम्यक् प्रयुक्तैः शरीरस्याग्नेश्च बलं वर्धते । तस्मात् स्नेहादयो यथावस्थं प्रयोज्या इति भावः ।

अधुना स्नेहस्याग्निवृद्धिकरत्वं दृष्टांतेन दर्शयति ।

**दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभिः ।**
**सस्नेहैर्जायते तद्वदाहारैः कोष्ठगोऽनलः ॥ ७९ ॥**

यथा येन प्रकारेण सारदारुभिः शमीखदिरादिभिः सस्नेहैर्बाह्योऽग्निर्दीप्तः स्थाणुः स्थिरश्च जायते तथैव कोष्ठकोऽग्निः सस्नेहैः पथ्यरूपैराहारैः पटुतरः स्थिरश्च संपद्यते ।

**न भोजनेन कायाग्निर्दीप्यते नाऽतिभोजनात् ।**
**यथा निरिंधनो वह्निरल्पो वाऽतींधनान्वितः ८०**

न भोजनेन कायाग्निर्दीप्यते । नचाऽतिभोजनेन । अत्रैव दृष्टांतमाह । यथा बाह्योग्निर्निरिंधनो न दीप्यते नश्यति । अल्पोग्निर्बाह्योऽतींधनेन बहुभिर्दारुभिरावृतो नश्यति न दीप्यते । एवं कोष्ठाग्निरप्यभोजनातिभोजनाभ्यां नश्यति न दीप्यत इत्यर्थः ।

**यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम् ।**
**प्रवृद्धं वर्धयत्यग्निं तदाऽसौ सानिलोऽनलः ८१**
**पक्त्वान्नमाशु धातूंश्च सर्वानोजश्च संक्षिपन् ।**
**मारयेत्स्याशनात्स्वस्थो भुक्ते जीर्णे तु ताम्यति८२**
**तृट्कासदाहमूर्छाद्या व्याधयोऽत्यग्निसंभवाः ।**

यस्मिन् काले कफे क्षीणे क्षयं यातेऽत एव स्वस्थान आमाशयाख्ये पित्तं वृद्धम् । किंभूतम् । पवनानुगम् । मारुतेन धमनस्वभावेन पश्चाद्युक्तम् । अत एव तत्पित्तमग्निं वर्धयति । तदा तस्मिन्कालेऽसावनलो जाठराग्निः सानिलः पवनसहितोऽन्नं पक्त्वाऽनंतरं पक्तव्याभावात्सर्वान् धातून् पक्त्वाऽऽशु पुरुषं मारयेत् । किं कुर्वन् । ओजश्च संक्षिपन् संहरन् । विनाशयन्नित्यर्थः । ननु पित्तानिलयोर्वृद्धयोः प्रकृतत्वात्सपित्ताऽनिलोऽनल इति वक्तुं युक्तं स्यात् । नैवम् । पित्तं वह्निर्वह्निजं चेति कृत्वा तदानीं जठराग्निना सहैकतां प्राप्तं पित्तमिति सानिलोऽनल इति निर्दिष्टम् । सोऽत्यग्निपीडितो ना पुरुषो भुक्ते स्वस्थः स्यात् । जीर्णे तु ताम्यत्युपतप्यते । अनेकार्थत्वाद्धातूनामुपतापार्थस्ताम्यति तमकलक्षणेऽपि प्रागध्यगीष्ट । अथाऽस्योपद्रवान् वक्ति तृष्णादयो रोगा अत्यग्नेः संभवंति ।

**तमत्यग्निं गुरुस्निग्धमंदसांद्रहिमस्थिरैः ॥ ८३ ॥**
**अन्नपानैर्नयेच्छांतिं दीप्तमग्निमिवांबुभिः ।**

तमत्यग्निं भस्मकाख्यं गुरुस्निग्धादिभिरन्नपानैः शांतिं नयेत् । कमिव । दीप्तमिद्धमग्निं बाह्यं यथा जलैः ।

**मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ ८४॥**
**निरिंधनोऽतरं लब्ध्वा यथैनं न विपादयेत् ।**

मुहुर्मुहुः क्षणे क्षणेऽजीर्णेऽपि भोज्यानि कृशरादीन्युपहारयेदाहारार्थं प्रकल्पयेत् । अजीर्णेऽपीत्यपिशब्दात्किमुत जीर्णे भोज्यानुपहारयेदिति । किमित्येवं क्रियत इत्याह । यथेत्याह । यस्मात्तस्मात्तथा तेन प्रकारेणाजीर्णेऽपि पुनः पुनराहारोपयोगेन निरिंधनोऽग्निरंतरमवकाशं लब्ध्वा यथा एनं न विपादयेत् ।

कानि भोज्यानीत्याह ।

**कृशरां पायसं स्निग्धं पैष्टिकं गुडवैकृतम् ॥८५॥**
**अश्नीयादौदकानूपपिशितानि भृतानि च ।**
**मत्स्यान्विशेषतः श्लक्ष्णान् स्थिरतोयचराश्च ये॥**

कृशरामित्यादीनि भुंजीत । गुडवैकृतमिति । विकृतमेव वैकृतम् । प्रज्ञादित्वादण् । तथौदकानां कच्छपादीनां पिशितानि । तथाऽऽनूपानि । वराहादीनां भृतानि मेदुराणि भक्षयेत् । विशेषेण मत्स्यान् । श्लक्ष्णानपरुषान् । चशब्दाद्ये च स्थिरतोयचरा अवहजलाश्रितास्तानप्यश्नीयात् ।

**आविकं सुभृतं मांसमद्यादत्यग्निवारणम् ।**

आविकं मांसं सुभृतमतीवमेदुरमत्यग्निवारणमद्यात् ।

**पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत्८७॥**
**गोधूमचूर्णं पयसा बहुसर्पिःपरिप्लुतम् ।**
**आनूपरसयुक्तान्वा स्नेहांस्तैलविवर्जितान् ॥ ८८**
**श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ।**
**असकृत्पित्तहरणं पायसं प्रतिभोजनम् ॥ ८९ ॥**

तथा तृषितः सन् पयः पिबेत् । किंभूतम् । सहमधूच्छिष्टं समदनं सर्पिर्वा । एवंभूतं पिबेत् । गोधूमचूर्णं बहुघृतं क्षीरेणालोडितं पिबेत् । अथवाऽऽनूपमांसरसान्वितान् स्नेहान् पिबेत् । किंभूतान् । तैलस्य पित्तकृत्त्वान्निषेधः । अथवा श्यामात्रिवृद्भ्यां विपक्वं क्षीरं विरेचनं दद्यात् । तथा पुनः पुनः पित्तस्याहरणे पायसस्य प्रतिभोजनं हितम् ।

अधुना संक्षेपेण चिकित्सामाह ।

**यत्किंचिद्गुरु मेध्यं च श्लेष्मकारि च भोजनम् ।**

**सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥ ९० ॥**

यद्गुरु भोजनं मेदस्करं श्लेष्मकरं च तदत्यग्नये हितम्। भुक्त्वा च यद्दिवा स्वपनं तच्च हितम् ।

ननु किमिति गुर्वादिभोजनमत्यग्नये दीयत इत्याह ।

**आहारमग्निः पचति दोषानाहारवर्जितः ।**
**धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्षये ॥ ९१ ॥**

अग्निः पूर्वमाहारं पचति। आहाररहितस्त्वग्निर्दोषान् पचति । तदभावाद्धातून् पचति । धातुसंक्षये सति जीवितं पचति नाशयतीत्यर्थः ।

**एतत्प्रकृत्यैव विरुद्धमन्नं**
**संयोगसंस्कारवशेन चेदम् ।**
**इत्याद्यविज्ञाय यथेष्टचेष्टा-**
**श्चरंति यत्साऽग्निबलस्य शक्तिः ॥ ९२ ॥**
**तस्मादग्निं पालयेत्सर्वयत्नै-**
**स्तस्मिन्नष्टे याति ना नाशमेव ।**
**दोषैर्ग्रस्ते ग्रस्यते रोगसंघै-**
**र्युक्ते नु स्यान्नीरुजो दीर्घजीवी ॥ ९३ ॥**

एतदन्नं प्रकृत्या स्वभावेनैव विरुद्धमपथ्यं यथा करमर्दकदधिसर्षपशाकफाणितशुष्कमांसविरूढकाममूलकलकुचादिकम् । संयोगविरुद्धं यथा । क्षीरमम्लेन सहानूपमामिषं माषैः सहेत्यादि। संस्कारविरुद्धं यथा । हारीतमांसं हारिद्रशूलं प्रोतं हारिद्रादिवह्निना पाचितमित्यादि । एवमिदं प्रकृत्यादिविरुद्धं संयोगस्य संस्कारस्य च वशेन सामर्थ्ये चेदं विरुद्धम् । आदिग्रहणान्मात्राकालादिपरिग्रहः । तत्र मात्राविरुद्धं यथा । मधुघृतम् । समकालवशेनेदं यथा । रात्रिपर्युषिता काकमाची । पात्रवशेनेदं यथा। कांस्ये दशाहमुषितं सर्पिः । इत्याद्यविज्ञायाबुद्ध्वाऽपर्यालोच्य यथेष्टचेष्टा यथाभिलाषमाहारमासेवमाना यच्चरंति साऽग्निबलस्य शक्तिः सामर्थ्यम्।यत एवं तस्मादग्निं पालयेत्सर्वान्नैरखिलक्रियानुष्ठानैः । तस्मिन्नग्नौ नष्टे क्षीणे ना पुरुषो नाशं याति दोषैर्ग्रस्तवह्नौ ना पुरुषो रोगसंघैर्ग्रस्यते पीड्यते । युक्ते स्वच्छे पुनरग्नौ नीरुजो दीर्घजीवी च भवेदिति शेषः । उपजातिशालिन्यौ वृत्ते ।

इति श्रीमदरुणदत्तविरचितायां चिकित्सितस्थाने ग्रहणीदोषचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

ग्रहणीदोषचिकित्सितादनंतरं मूत्राघातचिकित्सितमारभ्यते । संबंधश्चात्र स्तंभनत्वात् । तथा च प्रागध्यैष्ट । बस्तिबस्तिशिरोमेढ्रकटीवृषणपायवः । एकसंबंधनाः प्रोक्ता गुदास्थिविवराश्रया इति । तेनेदमाह ।

**अथाऽतो मूत्राघातचिकित्सितं व्याख्यास्यामः ॥**

**कृच्छ्रे वातघ्नतैलाक्तमधोनाभेः समीरजे ।**
**सुस्निग्धैः स्वेदयेदंगं पिंडसेकावगाहनैः ॥ १ ॥**

कृच्छ्रे मूत्रकृच्छ्रे । आदिपदलोपं कृत्वा एवं निर्दिष्टम् । यथा । मांसरसे रस इति । मूत्रकृच्छ्रे वातोल्बणेऽगं शरीरं वातघ्नतैलेन बलातैलेन बलातैलादिनाऽभ्यक्तमधो नाभेः समंतात् स्वेदैः पिंडादिभिः सुष्टुस्निग्धैर्न रूक्षैः स्वेदयेत् ।

**दशमूलबलैरंडयवाभीरुपुनर्नवैः ।**
**कुलत्थकोलपत्तूरवृश्चीवोपलभेदकैः ॥ २ ॥**
**तैलसर्पिर्वराहर्क्षवसाः क्वथितकल्कितैः ।**
**सपंचलवणाः सिद्धाः पीताः शूलहराः परम् ३**

दशमूलादिभिः क्वथितकल्कितैस्तैलसर्पिर्वराहर्क्षवसाः सिद्धाः पक्वाः सहपंचलवणैर्वर्तंत इति सपंचलवणाः पीताः परं सुष्टु शूलहराः ।

**द्रव्याण्येतानि पानान्ने तथा पिंडोपनाहने ।**
**सहतैलफलैर्युंज्यात्साम्लानि स्नेहवंति च ॥ ४ ॥**

एतानि दशमूलादीनि द्रव्याणि पानान्ने तद्विजयाय तथा पिंडोपनाहाख्यं स्वेदद्वयं तैलफलैः सह युंज्यात् । सार्थानि फलानि नालिकेराक्षोडादीनि तैलफलानि । यथा यूपाय दारु । तैः सह । केचित्तु तैलफलानि तिलानाहुः । किंभूतानि । साम्लानि सहाम्लैस्तक्रारनालादिभिर्वर्तंत इति साम्लानि । तथा स्नेहवन्ति बहुस्नेहानि । भूम्निमतुप् ।

**सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम् ।**

तथा मदिरां बहुसौवर्चलां मूत्ररुजापहां पिबेत् ।

**पैत्ते युंजीत शिशिरं सेकलेपावगाहनम् ॥ ५ ॥**

पैत्ते मूत्रकृच्छ्रे शीतलं सेकलेपावगाहनं युंजीत ।

**पिबेद्वरीं गोक्षुरकं विदारीं सकसेरुकाम् ।**
**तृणाख्यं पंचमूलं च पाक्यं समधुशर्करम् ॥ ६ ॥**

तथा शतावर्यादिकं पाक्यं कृत्वा समधुशर्करं पिबेत् ।

**वृषकं त्रपुसैर्वारु लट्वाबीजानि कुंकुमम् ।**
**द्राक्षांभोभिः पिबेत्सर्वान्मूत्राघातानपोहति ॥ ७ ॥**

वृषकादिकं कल्कीकृत्य द्राक्षाजलेन पिबन् सर्वान् मूत्राघातान्पराकरोति । अपोहतीत्युपसर्गादस्यत्यूहोर्वावचनमिति परस्मैपदम् । वृषकः पाषाणभेदकः । लट्वाबीजं कुसुंभबीजम् ।

**एर्वारुबीजयष्ट्याह्वदार्वीर्वा तंडुलांबुना ।**
**तोयेन कल्कं द्राक्षायाः पिबेत्पर्युषितेन वा ॥ ८ ॥**

एर्वारुबीजादिकं वा तंडुलांभसा पिबेत् । पूर्वगुणम् । पर्युषितेन वा जलेन द्राक्षाकल्कं पिबेत् ।

**कफजे वमनं स्वेदं तीक्ष्णोष्णकटुभोजनम् ।
यवानां विकृतीः क्षारं कालशेयं च शीलयेत् ॥ ९**

कफजे मूत्रकृच्छ्रे वमनादीन् शीलयेत् ।

**पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा ।
सारसास्थिश्वदंष्ट्रैलाव्योषं वा मधुमूत्रवत् ॥ १० ॥
स्वरसं कंटकार्या वा पाययेन्माक्षिकान्वितम् ।
शितिवारकबीजं वा तक्रेण श्लक्ष्णचूर्णितम् ॥ ११ ॥
धवसप्ताह्वकुटजं गुडूचीचतुरंगुलम् ।
कटुकैलाकरंजं च पाक्यं समधुसाधितम् ॥ १२ ॥
तैर्वा पेयां प्रवालं वा चूर्णितं तंडुलांबुना ।
सतैलं पाटलाक्षारं सप्तकृत्वोऽथवा स्रुतम् ॥१३॥**

तथा मद्येन सूक्ष्मैलां पिबेत् । आमलकरसेन वा सूक्ष्मैलां पिबेत् । सारसास्थ्यादीनि मधुयुक्तानि गोमूत्रेण पिबेत् । अथवा कंटकार्याः स्वरसं समाक्षिकं पाययेत् । शितिवारकस्य करंजस्य बीजं श्लक्ष्णपिष्टं तक्रेण सह पाययेत् । धवादिभिः कृतं पाक्यं क्वाथं वा समधु पाययेत् । तैर्धवादिभिः साधितां पेयां पाययेत् । प्रवालं विद्रुमं रजीकृतं तंडुलांभसा पाययेत् । पाटलायाः क्षारं सप्तवारान् स्रुतं तैलेन वा पाययेत् ।

**पाटलीयावशूकाभ्यां पारिभद्रं तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोषकसंयुताम् ॥ १४ ॥
पिबेद्गुडोपदंशान्वा लिह्यादेतान् पृथक् पृथक् ।**

पाटलीयवक्षाराभ्यां क्षारोदकेन तथा पारिभद्रं तिलक्षारोदकेन मदिरां त्वगेलोषकसंयुक्तां पिबेत् । ऊषकः कल्लरः । गुडोपदंशान्वेति । अथवा गुडमुपदंश्य एतान् त्वगादीन् पृथक् पृथक् लिह्यात् ।

**संनिपातात्मके सर्वं यथावस्थमिदं हितम् ॥ १५ ॥
अश्मन्यथ चिरोत्थाने वातबस्त्यादिकेषु च ।**

सन्निपातात्मके मूत्रकृच्छ्रे सर्वमिदं पूर्वोक्तं पृथग् दोषात्मकमूत्रकृच्छ्रनिर्दिष्टं यथावस्थमवस्थामपेक्ष्य हितम् । न केवलं सन्निपातात्मके कृच्छ्रे प्राङ् निर्दिष्टं पृथक् दोषात्मकमूत्रकृच्छ्रचिकित्सितं हितम् । यावदश्मर्यामप्यचिरोत्थानमचिरकालं उत्थानं जन्म यस्य तस्मिन् हितम् । चशब्दाद्वातबस्त्यादिकेषु मूत्राघातेषु हितम् । आदिशब्देन वातकुंडलिकादयो गृह्यंते ।

**अश्मरी दारुणो व्याधिरंतकप्रतिमो मतः ॥ १६ ॥
तरुणो भेषजैः साध्यः प्रवृद्धश्छेदमर्हति ।**

अश्मरी दारुणो व्याधिरंतकप्रतिमस्तत्तुल्यो मतः । शीघ्रप्राणहरत्वात् । स चाऽश्मरी तरुणोऽचिरोत्पन्न औषधैः साध्यः साधयितुं शक्यः । प्रवृद्धः स पुनश्छेदनं पाटनं शस्त्रेणार्हति ।

**तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ १७ ॥**

तस्याश्मर्याख्यस्य व्याधेः प्राग्रूपेषु स्नेहादिक्रम इष्यते । आदिशब्दः स्वेदनवमनादीनां ग्रहाय ।

अथ स्नेहमाह ।

**पाषाणभेदो वसुको वशिरोऽश्मंतको वरी ।
कपोतवंकातिबलाभल्लूकोशीरकंतकम् ॥ १८ ॥
वृक्षादनी शाकफलं व्याघ्री गुंठत्रिकंटकम् ।
यवाः कुलत्थाः कोलानि वरुणः कतकात्फलम् १९
ऊषकादिप्रतीवापमेषां क्वाथे स्रुतं घृतम् ।
भिनत्ति वातसंभूतां तत्पीतं शीघ्रमश्मरीम् ॥ २०॥**

पाषाणभेदादीनां क्वाथे घृतं स्रुतमूषकादिगणोक्तं द्रव्यप्रतिवापेन कल्कं तत्पीतं वातजामश्मरीं भिनत्ति । वसुक ईश्वरमल्लिका। वशीरं सामुद्रलवणम् । अश्मंतको मालुकपर्णः । कपोतवंका सुवर्चला । भल्लूकः श्योनाकः ।

**गंधर्वहस्तबृहती व्याघ्रीगोक्षुरकेक्षुरात् ।
मूलकल्कं पिबेद्दध्ना मधुरेणाऽश्मभेदनम् ॥ २१ ॥**

गंधर्वहस्तादीनां समाहारद्वंद्वः । अनित्यमागमशासनमिति तु प्रकृतम् । एरंडादीनां द्रव्याणां यन्मूलं तत्कल्कीकृत्य मधुरेण दध्ना पिबेदश्मभेदनं चाऽत्र प्रकृतत्वाद्वाताश्मरीभेदनं गम्यते ।

**कुशः काशः शरो गुंठ इत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शाली मूलं त्रिकंटका॥२२॥
भल्लूकः पाटली पाठा पत्तूरः सकुरंटकः ।
पुनर्नवा शिरीषश्च तेषां क्वाथे पचेद्घृतम् ॥ २३ ॥
पिष्टेन त्रपुसादीनां बीजेनेंदीवरेण वा ।
मधुकेन शिलाजेन तत्पित्ताश्मरिभेदनम् ॥ २४ ॥**

कुशादीनां क्वाथे त्रपुसादीनां पूर्वोक्तानां त्रपुसैर्वारुलट्वादीनां बीजेन नीलोत्पलबीजेन मधुकेन च पिष्टेन शिलाजतुना च घृतं पिबेत् । तत्पित्ताश्मरीभेदनं भवति । शोधनादिगणसंग्रहोक्तास्तु त्रपुसादयोऽत्र न गृह्यंते तदंतःपातिनां पित्तविरोधिनां सर्पिरादीनां द्रव्याणां तत्र पाठात् ।

**वरुणादिः समीरघ्नौ गुणावेलाहरेणुका ।
गुग्गुलुर्मरिचं कुष्ठं चित्रकःससुराह्वयः ॥ २५ ॥
तैः कल्कितैः कृतावापमूषकादिगणेन च ।
भिनत्ति कफजामाशु साधितं घृतमश्मरीम् ॥२६॥**

वरुणसैर्यकेत्यादिवरुणादिर्गणः । समीरणघ्नौ गणौ वीरतरादिस्तथा विदार्यादिरेतैर्वरुणादिभिर्द्रव्यैः कल्कीकृतैस्तथोषकादिगणेन ऊषकशुद्धमित्यादिना कृतावापं कल्कवत्कृत्वा घृतं साधितमाशु कफजामश्मरीं हंति ।

**क्षारक्षीरयवाग्वादि द्रव्यैः स्वैः स्वैश्च कल्पयेत् ।**

क्षारादि च स्वैः स्वैस्तद्योग्यैर्द्रव्यैः कल्पयेत् ।

**पिचुकांकोल्लकतकशाकेंदीवरजैः फलैः ॥ २७ ॥**

**पीतमुष्णांबु सगुडं शर्करापातनं परम् ।**

पिचुकादिभिरुष्णांबु सगुडं पीतं शर्करायाः परं पातनम् । पिचुकः शितिवारकः ।

**क्रौंचोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालपत्रिका ॥ २८ ॥**
**अजमोदाकदंबस्य मूलं बिल्वस्य चौषधम् ।**
**पीतानि शर्करां भिद्युः सुरयोष्णोदकेन वा ॥ २९ ॥**

क्रौंचास्थ्यादीनि पीतानि सुरयोष्णजलेन वा शर्करां हन्युः ।

**नृत्यकुंडकबीजानां चूर्णं माक्षिकसंयुतम् ।**
**अविक्षीरेण सप्ताहं पीतमश्मरिपातनम् ॥ ३० ॥**

तुवरीबीजानां चूर्णं माक्षिकान्वितमविक्षीरेण सप्ताहं पीतमश्मरिपातनम् । अत्राऽश्मरीशब्दस्य ङ्यापोः संज्ञाछंदसोरिति ह्रस्वः ।

**क्वाथश्च शिग्रुमूलोत्थः कदूष्णोऽश्मरिपातनः ।**

सोभांजनकमूलक्वाथश्च कोष्णः पीतोऽश्मरिपातनः ।

**तिलापामार्गकदलीपलाशयवसंभवः ॥ ३१ ॥**
**क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ।**

तिलादिसंभवः क्षारोऽविमूत्रेण शर्करास्वश्मरीषु च विषये पेयः ।

**कपोतवंकामूलं वा पिबेदेकं सुरादिभिः ॥ ३२ ॥**
**तत्सिद्धं वा पिबेत्क्षीरं वेदनाभिरुपद्रुतः ।**
**हरीतक्यस्थिसिद्धं वा साधितं वा पुनर्नवैः ॥ ३३ ॥**
**क्षीरान्नभुग्बर्हिशिखामूलं वा तंडुलांबुना ।**

कपोतवंकाया मूलं केवलं सुरोष्णजलादिभिः पिबेत् । तया कपोतवंकया सिद्धं श्रुतं वा क्षीरं वेदनोपद्रुतः पिबेत् । हरीतक्यस्थिभिः सिद्धं वा क्षीरमथवा पुनर्नवपक्वं क्षीरं पिबेत् । मयूरशिखामूलं तंडुलांभसा पिबेत् । किंभूतः । क्षीरान्नाशी सन् ।

**मूत्राघातेषु विभजेदतः शेषेष्वपि क्रियाम् ॥ ३४ ॥**

अतोऽस्मात्पूर्वोक्ताचिकित्सितात् तद्यथायोगं शेषेष्वपि मूत्राघातेषु मूत्रातीतादिष्वपि क्रियां विभजेन्निरूप्य कुर्यात् ।

**बृहत्यादिगणे सिद्धं द्विगुणीकृतगोक्षुरे ।**
**तोयं पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ॥ ३५ ॥**

बृहत्यादिगणे द्विगुणीकृतगोक्षुरे जलं पक्वं क्षीरं वा सर्पिर्वा सर्वान्मूत्रविकारान् जयति ।

**देवदारुं घनं मूर्वां यष्टीं मधु हरीतकीम् ।**
**मूत्राघातेषु सर्वेषु सुराक्षीरजलैः पिबेत् ॥ ३६ ॥**

देवदार्वादीन् सुरादीनामन्यतमेन सर्वेषु मूत्राघातेषु पिबेत् ।

---

* भृंगकंटकबीजचूर्णमिति संग्रहः पाठः । सश्रुतस्तु । त्रिकंटकस्य बीजानां चूर्णं माक्षिकसंयुतम् । अविक्षीरेण सप्ताहमश्मरीभेदनं परमिति पठति ।



**रसं वा धन्वयासस्य कषायं ककुभस्य वा ।**
**सुखांभसा वा त्रिफलां पिष्टां सैंधवसंयुताम् ३७**
**व्याघ्रीगोक्षुरकक्काथे यवागूं वा सफाणिताम् ।**
**क्वाथे वीरतरादेर्वा ताम्रचूडरसेऽपि वा ॥ ३८ ॥**
**अद्याद्वीरतराद्येन भावितं वा शिलाजतु ।**

धन्वयवासकस्य रसं वा ककुभस्य क्वाथं वा त्रिफलामुष्णोदकेन पिष्टां सैंधवान्वितां पिबेत् । कंटकारिकागोक्षुरक्वाथसिद्धां वा यवागूं सफाणितां पिबेत् । वीरतरादेः क्वाथे वा सिद्धां पेयां पिबेत् । अथवा ताम्रचूडस्य कुक्कुटस्य मांसरसे सिद्धां पेयां पिबेत् । शिलाजतु वीरतराद्येन गणेन वा भावितमद्यात् ।

**मद्यं वा निगदं पीत्वा रथेनाश्वेन वा व्रजन् ॥ ३९ ॥**
**शीघ्रवेगेन संक्षोभात्तथाऽस्य च्यवतेऽश्मरी ।**

अथवा पुराणं मद्यं पीत्वा रथेनाऽश्वेन वा शीघ्रवेगेन गच्छेत् । तथा तेन प्रकारेण संक्षोभितस्य तस्याऽश्मरी च्यवते ।

**सर्वथा चोपयोक्तव्यो वर्गो वीरतरादिकः ॥ ४० ॥**
**रेकार्थं तैल्वकं सर्पिर्बस्तिकर्म च शीलयेत् ।**
**विशेषादुत्तरान् बस्तीन्**

सर्वेण च प्रकारेण क्वाथपेयाजलादिषु वीरतरादिको योज्यः । विरेचनार्थं तैल्वकं शम्याकेनेत्यादिना साधितं सर्पिरुपयोक्तव्यम् । तथा बस्तिकर्म प्राक् स्नेह एक इत्यादि शीलयेत् । विशेषेणोत्तरबस्तीनभ्यसेत् ।

**शुक्राश्मर्यां च शोधिते ॥ ४१ ॥**
**तैर्मूत्रमार्गे बलवान् शुक्राशयविशुद्धये ।**
**पुमान् सुतृप्तो वृष्याणां मांसानां कुक्कुटस्य च ॥ ४२ ॥**
**कामं सकामाः सेवेत प्रमदा मददायिनीः ।**

शुक्राश्मर्यां च तैरुत्तरबस्तिभिर्मूत्रमार्गे शोधिते सति पुमान् वृष्याणां द्रव्याणां कुक्कुटस्य मांसानां च सुहितः सन् यथेच्छं मददायिनीः प्रमदाः सेवेत । शुक्राशयविशुद्धये कुक्कुटस्य वृष्यत्वेनैव ग्रहणमतिशयेन कुक्कुटस्याऽत्र पथ्यत्वमिति ज्ञापनार्थमुपादानम् ।

**सिद्धैरुपक्रमैरेभिर्न चेच्छान्तिस्तदा भिषक् ॥ ४३ ॥**
**इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ।**

एभिः पूर्वोक्तैरुपक्रमैः सिद्धैरश्मरीहरैर्यदि शमो न स्यात् । तदेति राजानमापृच्छ्याऽश्मर्या हरणं शस्त्रं साध्ववचारयेत् ।

किमापृच्छ्येत्याह ।

**अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ४४**
**निश्चितस्याऽपि वैद्यस्य बहुशः सिद्धकर्मणः ।**

हे नृपते जातव्याधावक्रियायां चिकित्सां विना ध्रुवोऽवश्यं मृत्युः स्यात् । अपरं च क्रियायां चिकित्सायां क्रियमाणायां निश्चितस्याऽपि शास्त्रार्थविदोऽपि वैद्यस्य तथा बहुशोऽनेकशः सिद्धकर्मणो निष्पन्नक्रियाक्रमस्याऽपि संशयो भवेत् । कदाचिज्जीवति न वा एवंप्रकारेण राजानमापृच्छ्य ।

**अथाऽऽतुरमुपस्निग्धशुद्धमीषच्च कर्शितम् ॥ ४५ ॥**
**अभ्यक्तस्विन्नवपुषमभुक्तं कृतमंगलम् ।**
**आजानुफलकस्थस्य नरस्यांके व्यपाश्रितम् ॥ ४६ ॥**
**पूर्वेण कायेनोत्तानं निषण्णं वस्त्रचुंभले ।**
**ततोऽस्याऽऽकुंचिते जानुकूर्परे वाससा दृढम् ॥४७॥**
**सहाश्रयमनुष्येण बद्धस्याऽऽश्वासितस्य च ।**
**नाभेः समंतादभ्यज्यादधस्तस्याश्च वामतः ॥ ४८ ॥**
**मृदित्वा मुष्टिना कामं यावदश्मर्यधोगता ।**
**तैलाक्ते वर्धितनखे तर्जनीमध्यमे ततः ॥ ४९ ॥**
**अदक्षिणे गुदेऽङ्गुल्यौ प्रणिधायाऽनुसेवनीम् ।**
**आसाद्य वलयं नाभ्यामश्मरीं गुदमेढ्रयोः ॥ ५० ॥**
**कृत्वांतरे तथा बस्तिं निर्वलीकमनायतम् ।**
**उत्पीडयेदंगुलिभ्यां यावद्ग्रंथिरिवोन्नतम् ॥ ५१ ॥**
**शल्यं स्यात्सेवनीं मुक्त्वा यवमात्रेण पाटयेत् ।**
**अश्ममानेन न यथा भिद्यते सा तथा हरेत् ॥ ५२ ॥**
**समग्रं सर्पवक्त्रेण स्त्रीणां वस्तिस्तु पार्श्वगः ।**
**गर्भाशयाश्रयस्तासां शस्त्रमुत्संगवत्ततः ॥ ५३ ॥**
**न्यसेदतोऽन्यथा ह्यासां मूत्रस्रावी व्रणो भवेत् ।**
**मूत्रप्रसेकक्षरणान्नरस्याऽप्यपि चैकधा ॥ ५४ ॥**
**बस्तिभेदोऽश्मरीहेतुः सिद्धिं याति न तु द्विधा ।**

अथ राजपृच्छनादनंतरमातुरमुपस्निग्धादिरूपं कृत्वा ततोऽस्य नाभेरधोऽभ्यज्यात् । पूर्वमुपस्निग्धः पश्चाद्धद्धस्तमुपस्निग्धशुद्धम् । तथा मनाक् कर्शितम् । तथाऽभ्यक्तस्विन्नशरीरं च । तथाऽभुक्तमकृताहारम् । तथा कृतमंगलं विहितस्वस्त्ययनम् । तथा नरस्याऽन्यस्यांकमाश्रितम् । किंकृतस्य । आजानुफलकस्थस्य । फलक आसनविशेषः । आजानु जानुप्रसारणो यः फलकस्तस्मिन् स्थितस्य । तथा पूर्वेण कायेनोत्तानं तथा वस्त्रचुंभले निषण्णम् । चुंभलस्तृणमयो घटादीनां चलनरक्षणार्थमाधारविशेषो यः क्रियते स उच्यते । तथारूपो वस्त्रमयचुंभलो वस्त्रचुंभले वस्त्रं वेष्टयित्वा कृत आसनविशेषस्तस्मिन्नुपविष्टस्य । तथाभूतस्याऽनंतरमाकुंचित ईषत्कुटिलीकृते जानुकूर्परे सति । जानुनी च कूर्परे च जानुकूर्परे तस्मिन् । तथाऽऽश्रयमनुष्येण सह वाससा सूत्रैर्वा बद्धस्य दृढं कृत्वा । एवं यंत्रितस्याऽऽश्रयश्चासौ मनुष्यश्च । कस्याश्रयः । प्रकृतत्वादातुरस्य । तमाश्रित्याऽऽतुरस्य स्थितत्वात् । तथाऽऽश्वासितस्य निरामयो भवसीत्येवंप्रायाभिर्वाग्भिः । शीतपवनादिभिश्च सांत्वितस्य । ततो नाभेरधः समंतात् परितोऽभ्यज्यात् । तस्याश्च नाभेर्वामतो वामपार्श्वे मृदित्वा मुष्टिनाऽऽक्रमेत् पीडयेत्तावद्यावदश्मर्यधो गताऽधः प्रतिपन्ना । ततोऽनंतरमदक्षिणे वामे तर्जनीमध्यांगुल्यौ वर्धितनखे तथा तैलाभ्यक्ते कृत्वा गुदे प्रणिधायाऽनुसेवनीमनंतरं वलयं ताभ्यामासाद्याऽश्मरीं प्राप्य गुदमेढ्रयोरंतरे मध्ये कृत्वा तत्र नीत्वा तथा बस्तिं निर्वलिकं कृत्वा तथा तमनायतमविस्तीर्णं संनिवेश्याऽनंतरमंगुलिभ्यां वामहस्ततर्जनीमध्यमाभ्यां प्रकृतत्वादश्मरीमुत्पीडयेत् । तावद्यावच्छल्यमश्मर्याख्यं ग्रंथिरिवोन्नतं स्यात् । अनंतरं सेवन्यां वामपार्श्वे सेवनीं यवमात्रेण त्यक्त्वा वर्जयित्वा पाटयेच्छस्त्रेण । कियन्मात्रम् । अश्मर्याऽनुमानेनाऽश्मरीप्रमाणेन । नतु ततोऽधिकमूनं वा । व्रणं च कृत्वाऽश्मरीं समग्रं निरवशेषं यथा भवत्येवं सर्पफणवदग्रवक्त्रेण यंत्रेण हरेत् । तथा चाकर्षेद्यथा सा ह्रियमाणा न भिद्यते । भिन्ना हि पुनर्वृद्धिमियात् । स्त्रीणां बस्तिस्तु पार्श्वगो गर्भाशयाश्रयः सन्निकृष्टः । तस्मात्तासामुत्संगवच्छस्त्रं पातयेत् । अतोऽस्माच्छस्त्रपातनविधानादन्यथाऽश्मर्याहरणार्थं शस्त्रपातनेन मूत्रस्रावी व्रणो भवेत् । न केवलं स्त्रीणां मूत्रप्रसेकक्षरणान्मूत्रस्रावी व्रणो भवेत् । यावद् दीर्घकालानुबंधी मूत्रप्रसेकक्षरणान्नरस्याऽपि । अपि चान्यच्चैकधैकतो बस्तिभेदोऽश्मरीहेतुस्तन्निमित्तः सिध्यति । क्रियाभ्यासान्नित्यमतिवृद्धत्वाच्च शल्यस्येति नतु सहसा शस्त्राद्यभिघातहेतुज एकतोऽपि संभिन्नो बस्तिः सिध्यति । मर्मविभागेऽप्यवादीत् । धनुर्वक्त्रो बस्तिः सद्यो निहंतीति । अश्मरीहेतुरपि यो बस्तिभेदो द्विधोभयतः सोऽपि न सिध्यति व्रणस्वभावात् ।

**विशल्यमुष्णपानीयद्रोण्यां तमवगाहयेत् ॥ ५५ ॥**
**तथा न पूर्यतेऽस्रेण वस्तिः पूर्णे तु पीडयेत् ।**
**मेढ्रतः क्षीरिवृक्षांबु**

विशल्यं निर्गताश्मरीकमुष्णपानीयद्रोण्यां तमातुरमवगाहयेत् । तथा तेनावगाहनेन बस्तिरस्रेण न पूर्यते । एवमपि कृते दैवादस्रेण तु पूर्णे बस्तौ क्षीरिवृक्षांबुमेढ्रांतः मेढ्रे पीडयेत् । क्षीरीवृक्षकषायेणोत्तरबस्तिं दद्यादित्यर्थः । न्यग्रोधोदुंबराश्वत्थकपीतनप्लक्षाः क्षीरिणः ।

**मूत्रं संशुद्धयेत्ततः ॥ ५६ ॥**
**कुर्याद्गुडस्य सौहित्यं मध्वाज्याक्तव्रणः पिबेत् ।**
**द्वौ कालौ सघृतां कोष्णां यवागूं मूत्रशोधनैः ॥५७**
**त्र्यहं दशाहं पयसा गुडाढ्येनाऽल्पमोदनम् ।**
**भुंजीतोर्ध्वं फलाम्लैश्च रसैर्जांगलचारिणाम् ॥५८**

ततोऽनंतरं मूत्रस्य संशुद्ध्यर्थं गुडस्य सौहित्यं तृप्तिं कुर्यात् । ततो मध्वाज्याक्तव्रणो नरो द्वौ कालौ त्रपुसैर्वारुककूष्मांडगोक्षुरादिभिः कृतां यवागूं सघृतां कोष्णां त्र्यहं पिबेत् । अनंतरं दशाहं गुडाढ्येन बहुगुडेन क्षीरेणाऽल्पमोदनमद्यात् । ऊर्ध्वं दशाहादनंतरं जांगलचारिणां प्राणिनां रसैर्मांसरसैौदनं च मात्रया भुंजीत । फलाम्लैरिति । कोलदाडिमाद्यम्लैर्न तु मस्तुकांजिकाद्यम्लैरित्यर्थः ।

**क्षीरीवृक्षकषायेण व्रणं प्रक्षाल्य लेपयेत् ।**
**प्रपौंडरीकमंजिष्ठायष्ट्याह्वनयनौषधैः ॥ ५९ ॥**

**व्रणाभ्यंगं पचेत्तैलमेभिरेव निशान्वितैः ।**

क्षीरीवृक्षकषायेण व्रणं प्रक्षाल्य प्रपौंडरीकादिभिर्लेपयेत् । नयनौषधं पट्टिकारेद्धम् । एभिरेव प्रपौंडरीकादिभिर्हरिद्रान्वितैर्व्रणाभ्यंगविषये तैलं पचेत् ।

**दशाहं स्वेदयेच्चैनं स्वमार्गे सप्तरात्रतः ॥ ६० ॥**
**मूत्रे त्वऽगच्छति दहेदश्मरीव्रणमग्निना ।**
**स्वमार्गप्रतिपत्तौ तु स्वादुप्रायैरुपाचरेत् ॥ ६१॥**
**तं वस्तिभिः**

एवं च व्रणं दशाहं स्वेदयेत् । स्वेदनादनंतरं तु पुनः सप्तरात्रेण स्वमार्गे मूत्रेऽगच्छति सत्यश्मरीव्रणमग्निना दहेद्वैद्य इति। मूत्रस्य स्वमार्गप्रतिपत्तौ सत्यां तमातुरं स्वादुप्रायैर्मधुरभूयिष्ठद्रव्यसाधितैर्बस्तिभिरुत्तरबस्त्यादिभेदभिन्नैरुपाचरेदुपक्रमेत् ।

**न चारोहेद्वर्षं रूढव्रणोऽपि सः ।**
**नगनागाश्ववृक्षस्त्रीरथान्नाप्सु प्लवेत सः ॥ ६२ ॥**

रूढव्रणोऽप्यश्मर्यातुरो वर्षं यावन्नगादीन्नारोहेत् । अप्सु च न प्लवेत ।

**मूत्रशुक्रवहौ वस्तिवृषणौ सेवनीं गुदम् ।**
**मूत्रप्रसेकं योनिं च शस्त्रेणाऽष्टौ विवर्जयेत्॥६३॥**

अश्मरीव्रणावसरे तदर्थमन्यार्थमपि मूत्रवहादीनि मर्माणि शस्त्रेण वर्जयेत् । तत्र मूत्रवहस्रोतोच्छेदान्मूत्रपूर्णबस्तेर्मरणं स्यात् । शुक्रवहस्रोतसश्छेदान्मरणं क्लैब्यं वा । बस्तिगुदच्छेदात्सद्यो मरणम् । वृषणस्रोतश्छेदाद्ध्वजाभंगः । सेवनीयोनिच्छेदाद्रुजाप्रादुर्भावः । मूत्रप्रसेकस्रोतश्छेदान्मूत्रप्रस्रवणमिति ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयव्याख्यायां सर्वांगसुंदराख्यायां मूत्राघातचिकित्सितं नामैकादशोऽध्यायः ॥११॥

---

## द्वादशोऽध्यायः ।

मूत्राघातचिकित्सितादनंतरं प्रमेहचिकित्सितव्याख्यानमुपक्रम्यते ।

**अथाऽतः प्रमेहचिकित्सितं व्याख्यास्यामः ।**

संबंधश्चाऽस्य पूर्ववद्बोध्यः ।

**मेहिनो बलिनः कुर्यादादौ वमनरेचने ।**
**स्निग्धस्य सर्षपारिष्टनिकुंभाक्षकरंजकैः ॥ १ ॥**
**तैलैस्त्रिकंटकाद्येन यथास्वं साधितेन वा ।**
**स्नेहेन मुस्तदेवाह्वनागरप्रतिवापवत् ॥ २ ॥**
**सुरसादिकषायेण दद्यादास्थापनं ततः ।**
**न्यग्रोधादेस्तु पित्तार्तं रसैः शुद्धं च तर्पयेत् ॥३॥**

बलवतो मेहिनः पुंसोऽपरेभ्य उपक्रमेभ्यस्तत्तद्योगेभ्यः प्रथमं वमनविरेचने कुर्यान्मेहक्लेदप्रशमनाय । किंभूतस्य । सर्षपादिजैस्तैलैः स्निग्धस्य । त्रिकंटकाद्येन वा स्नेहेन स्निग्धस्य । त्रिकंटकनिशारोध्रेत्यादि स्नेहो वक्ष्यमाणः । यथास्वं दोषसात्म्यादिवशाद्द्रव्यैः साधितेन वा स्नेहेन स्निग्धस्य । ततो वमनविरेचनकरणादनंतरं जातबलाय मेहिने सुरसयुगेत्यादेः संबंधिना कषायेणाऽऽस्थापनं दद्यात् । किंभूतम् । मुस्तादिप्रतिवापवत् । स प्रतिवापो विद्यते यस्य तदेवम् । पित्तले पुनर्न्यग्रोधपिप्पलीत्यादेः कषायेणाऽऽस्थापनं दद्यात् । प्रतिवापांतरानिर्देशादत्र पूर्वोक्त एव प्रतिवापो योज्यः । अनंतरं शुद्धं प्रमेहिनं रसैस्तर्पयेत् । यद्यपि रसैरिति सामान्यनिर्देशात्त्रिविधदेशसंजातप्राणिमांसरसैस्तर्पणं प्राप्तं तथापि योग्यतावशाज्जांगलप्राणिमांसरसैस्तर्पयेदिति बोध्यम् । नत्वानूपादिमांसरसैरिति । तेषां मेदोमूत्रकफावहत्वेन व्याधिवर्धनहेतुत्वात् ।

**मूत्रग्रहरुजागुल्मक्षयाद्यास्त्वपतर्पणात् ।**
**ततोऽनुबंधरक्षार्थं शमनानि प्रयोजयेत् ॥ ४ ॥**

यतोऽपतर्पणान्मूत्रग्रहादीनि जायंते ततोहेतोरनुबंधरक्षार्थं शमनानि प्रयोजयेत् । अन्यथा प्रमेह उपशांतोऽपि निदानलेशमासाद्य पुनः प्रादुर्भवेत् । ननु मूत्रग्रहादीन्येतावदस्तु । शेषा आदिशब्देनैव ग्रहीष्यंते । किं मूत्रग्रहरुजा गुल्मक्षयाद्या इति । सत्यम् । मूत्रग्रहरुजा गुल्मक्षया यथाऽऽवश्यमपतर्पणात्प्रमेहिणो जायंते तथा नापरे तज्जातीया इति ।

**असंशोध्यस्य तान्येव सर्वमेहेषु पाययेत् ।**

असंशोध्यो वमने गर्भिण्यादिः । विरेके नवज्वरादिः । एतस्यासंशोध्यस्य तान्येव शमनानि सर्वेषु प्रमेहेषु पाययेत् । एवेत्यवधारणे । नतु शोधनादिरूपमित्यर्थः ।

तान्येवाह ।

**धात्रीरसप्लुतां प्राह्णे हरिद्रां माक्षिकान्विताम् ॥ ५॥**
**दार्वीसुराह्वत्रिफला मुस्ता वा क्वथिता जले ।**
**चित्रकत्रिफलादार्वीकलिंगान्वा समाक्षिकान् ।**
**मधुयुक्तं गुडूच्या वा रसमामलकस्य वा ॥ ६ ॥**

आमलकीरसालोडितां हरिद्रां समाक्षिकां प्रभाते पाययेत् । दार्वीदेवदारुवरामुस्ता जले क्वथिता वा पाययेत् । चित्रकादीन्वा क्वथितान् समाक्षिकान् पाययेत् । समाक्षिकं गुडूचीरसं धात्रीरसं वा ।

**रोध्राभयातोयदकट्फलानां**
**पाठाविडंगार्जुनधान्यकानाम् ।**
**गायत्रिदार्वीकृमिहृद्वचानां**
**कफे त्रयः क्षौद्रयुताः कषायाः ॥ ७ ॥**

उशीररोध्रार्जुनचंदनानां
पटोलनिंबामलकामृतानाम्।
रोध्रांबुकालीयकधातकीनां
पित्ते त्रयः क्षौद्रयुताः कषायाः ॥ ८ ॥

रोध्रादीनां श्लोकपादोक्तानां कषायाः क्षौद्रयुतास्त्रयः कफे हिताः। एवमुशीरादीनां माक्षिकान्विताः कषायास्त्रयः पित्ते हिताः। उपजातीवृत्ते।

यथास्वमेभिः पानान्नं यवगोधूमभावनम्।

एभी रोध्रादिभिर्यथायोगं पानमन्नं च कल्पयेत्। यवगोधूमभावनाश्च कल्पयेत्।

वातोल्बणेषु स्नेहांश्च प्रमेहेषु प्रकल्पयेत् ॥ ९ ॥

वाताधिकेषु प्रमेहेषु स्नेहांश्च तैरेव कल्पयेत्। न केवलमन्नभावनाम्।

अपूपसक्तुवाट्यादिर्यवानां विकृतिर्हिता।
गवाश्वगुदमुक्तानामथवा वेणुजन्मनाम् ॥ १० ॥
तृणधान्यानि मुद्गाद्याः शालिजीर्णः सषष्टिकः।
श्रीकुक्कुटोऽम्लः खलकस्तिलसर्षपकिट्टजः ॥ ११ ॥
कपित्थं तिंदुकं जंबूस्तत्कृता रागखांडवाः।
तिक्तं शाकं मधु श्रेष्ठा भक्ष्याः शुष्काः ससक्तवः ॥
धन्वमांसानि शूल्यानि परिशुष्काण्ययस्कृतिः।
मध्वरिष्टासवा जीर्णाः सीधुः पक्वरसोद्भवः ॥ १३॥
तथाऽसनादिसारांबुदर्भांभो माक्षिकोदकम्।

यवानां विकृतिरपूपादिः प्रमेहे हिता। अथवा यवानां गवाश्वगुदमुक्तानामपूपादिविकृतिर्हिता। वेणुजानां वा यवानां विकृतिर्हिता। तृणधान्यानि नीवारश्यामाकादीनि तथा मुद्गाद्यास्तथा पुराणशालिः षष्टिकश्चेति हितानि। श्रीकुक्कुटसंज्ञोऽम्लः खलको हितः। किंभूतः। तिलसर्षपकिट्टजस्तिलसर्षपपिण्याकजन्मा तदुपादानकारणेन मुद्गाद्युपादानकारणः। स च मालवकेषु प्रसिद्धः।आर्द्रकशकलनिस्तुषगोधूमादिना च क्रियते।तथा कपित्थादयो हिताः।तैः कपित्थादिभिः कृता रागाः खांडवाश्च हिताः। तिक्तकादीनि शाकानि च हितानि। श्रेष्ठा त्रिफला। शूल्यानीति शूलायां पक्कानि। शूलात्पाक इति यत्। तानि च सुपक्वत्वात् परिशुष्काणि। तथाऽयस्कृतिर्वक्ष्यमाणा। तथा मध्वादयः पुराणाः। पक्वरसः सीधुः। तथाऽसनादिसारवर्गस्यांभो दर्भजलं माक्षिकोदकं च हितम्।

वासितेषु वराक्वाथे शर्वरीशोषितेष्वहः ॥ १४ ॥
यवेषु सुकृतान्सक्तून्सक्षौद्रान्सीधुना पिबेत्।

तथा यवेषु सुकृतान् सक्तून् कृत्वा सक्षौद्रान् सीधुना पचेत्। आलोड्य पिबेत्। पक्वरसोद्भवेन तस्य यो गतः स न स्यात्। यवेष्विति निमित्तसप्तमी। किंभूतेषु यवेषु। वराक्वाथे त्रिफलाकषाये शर्वरीं सकलां रात्रिं वासितेष्वभिषुतेष्वनंतरमहःशोषितेषु। तत्राऽत्यंतसंयोगे द्वितीया।

शालसप्ताह्वकंपिल्लवृक्षकाक्षकपित्थजम् ॥ १५ ॥
रोहीतकं च कुसुमं मधुनाऽद्यात्सचूर्णितम्।
कफपित्तप्रमेहेषु पिबेद्धात्रीरसेन वा ॥ १६ ॥

शालादिजं पुष्पं सूक्ष्मरजीकृतं मधुनाऽद्यात्। कफपित्तप्रमेहेषु धात्रीरसेन वा पिबेत्।

त्रिकंटकनिशारोध्रसोमवल्कवचार्जुनैः।
पद्मकाश्मंतकारिष्टचंदनागुरुदीप्यकैः ॥ १७ ॥
पटोलमुस्तमंजिष्ठामाद्रीभल्लातकैः पचेत्।
तैलं वातकफे पित्ते घृतं मिश्रेषु मिश्रकम् ॥ १८ ॥

त्रिकंटकादिभिः कल्कीकृतैस्तैलं पचेद्वातकफजे प्रमेहे। पित्तज एभिरेव घृतं पचेत्। मिश्रेषु दोषेषु मिश्रकं घृततैले पचेत्।

दशमूलं शठीं दंतीं सुराह्वं द्विपुनर्नवम्।
मूलं स्नुगर्कयोः पथ्यां भूकदंबमरुष्करम् ॥ १९ ॥
करंजवरुणान्मूलं पिप्पल्याः पौष्करं च यत्।
पृथग् दशपलं प्रस्थान् यवकोलकुलत्थतः ॥ २० ॥
त्रींश्चाष्टगुणिते तोये विपचेत्पादवर्तिना।
तेन द्विपिप्पलीचव्यवचानिचुलरोहिषैः ॥ २१ ॥
त्रिवृद्विडंगकंपिल्लभार्गीविल्वैश्च साधयेत्।
प्रस्थं घृताज्जयेत्सर्वांस्तन्मेहान् पिटिकाविषम्॥२२॥
पांडुविद्रधिगुल्मार्शःशोफशोषगरोदरम्।
श्वासं कासं वमिं वृद्धिं प्लीहानं वातशोणितम् ॥२३॥
कुष्ठोन्मादावपस्मारं धान्वंतरमिदं घृतम्।

स्नुगर्कमूलं करंजमूलम्। वरणमूलं पिप्पलीमूलम्। पौष्करं च यदिति। पुष्करमूलं चेत्यर्थः। दशमूलादिकं पृथक् प्रत्येकं दशपलप्रमाणं यवकोलकुलत्थांस्त्रीन् प्रस्थांश्चाऽष्टगुणिते जले च विपचेत्। तेन जलेन पादवर्तिना पादशेषेण द्विपिप्पल्यादिभिश्च सामान्यपरिभाषोक्तात्प्रमाणाद्घृतात्प्रस्थं पचेत्। तद्घृतं सर्वान् प्रमेहान् पिटिकादींश्च जयेत्।

रोध्रमूर्वाशठीवेल्लभार्गीनतनखप्लवान् ॥ २४ ॥
कलिंगकुष्ठक्रमुकप्रियंग्वतिविषाग्निकान्।
द्वे विशाले चतुर्जातं भूनिंबं कटुरोहिणीम् ॥२५॥
यवानीं पौष्करं पाठां ग्रंथिं चव्यं फलत्रयम्।
कर्षांशमंबुकलशे पादशेषे स्रुते हिमे ॥ २६ ॥
द्वौ प्रस्थौ माक्षिकात्क्षिप्त्वा रक्षेत्पक्षमुपेक्षया।
रोध्रासवोऽयं मेहार्शःश्वित्रकुष्ठारुचिक्रमीन् ॥२७॥
पांडुत्वं ग्रहणीदोषं स्थूलतां च नियच्छति।

रोध्रादि प्रत्येकं कर्षप्रमाणं जलकलशे पादशेषे स्रुते शीते च माक्षिकात् द्वौ प्रस्थौ क्षिप्त्वा पक्षमात्रमचलं कृत्वा रक्षेत्। अयं रोध्रासवो मेहादीन्नाशयेत्।

**साधयेदसनादीनां पलानां विंशतिं पृथक् ॥ २८ ॥**
**द्विवहेऽपां क्षिपेत्तत्र पादस्थे द्वे शते गुडात्।**
**क्षौद्राढकार्धं पलिकं वत्सकादि च कल्कितम् ॥२९॥**
**तत्क्षौद्रपिप्पलीचूर्णं प्रदिग्धे घृतभाजने।**
**स्थितं दृढे जतुस्रृते यवराशौ निधापयेत् ॥ ३० ॥**
**खदिरांगारतप्तानि बहुशोऽत्र निमज्जयेत्।**
**तनूनि तीक्ष्णलोहस्य पत्राण्यालोहसंक्षयात् ॥३१॥**
**अयस्कृतिः स्थिता पीता पूर्वस्मादधिका गुणैः।**

असनादीनामसनतिनिशयेत्यादिगणोक्तानां द्रव्याणां पृथक् प्रत्येकं पलानां विंशतिं विंशतिपलान्यपां द्विवहे जलद्रोणाष्टके साधयेत्। तत्र तस्मिन्पादशेषे स्रुते शीते च सति गुडस्य द्वे शते क्षिपेत्। माक्षिकस्याऽर्धाढकम्। वत्सकमूर्वेत्यादिकं च पृथक् पालिकं कल्कितं कृत्वा क्षिपेत्। अनंतरमंतर्माक्षिकपिप्पलीचूर्णप्रलिप्ते घृतभाजने दृढे जतुलिप्ते स्थितं यवराशौ स्थापयेत्। अनंतरं खदिरांगारतप्तानि तीक्ष्णलोहपत्राणि तनूनि पुनः पुनरत्र निमज्जयेत्। यावत्संक्षयं विलीनवृत्तित्वमायाति। अयस्कृतिरियं स्थिता संपन्ना पीता पूर्वस्माद्रोध्रासवाद्गुणैरधिकाः। अत्र च संग्रहोक्ता दशमूलारिष्टादयसः परिमाणं कल्प्यं प्रायोऽत्र प्रस्थमात्रम्। एवमन्यत्राऽपि द्रवद्रव्यमपेक्ष्य नारसिंहघृतादावनयैव दिशाऽयसः परिमाणं कल्पनीयम्।

**रूक्षमुद्वर्तनं गाढं व्यायामो निशि जागरः ॥ ३२ ॥**
**यच्चाऽन्यच्छ्लेष्ममेदोघ्नं बहिरंतश्च तद्धितम्।**

तस्मिन्प्रमेह उद्वर्तनं रूक्षं तथा गाढं नतु शिथिलं हितम्। तथा व्यायामरात्रिजागरौ च। अपरमपि यदेवंप्रायं श्लेष्ममेदोहरं बहिरंतश्च तच्च प्रमेहिणे हितम्।

**सुभावितां सारजलैस्तुलां पीत्वा शिलोद्भवात् ३३**
**सारांबुनैव भुंजानः शालिजांगलजै रसैः।**
**सर्वानभिभवेन्मेहान् सुबहूपद्रवानपि ॥ ३४ ॥**
**गंडमालार्बुदग्रंथिस्थौल्यकुष्ठभगंदरान्।**
**कृमिश्लीपदशोफांश्च परं चैतद्रसायनम् ॥ ३५ ॥**

सारा असनखदिरादयस्तेषां जलैः क्वाथैः शिलाह्वाया तुलां सुभावितां पीत्वा सारांबुनैव जांगलप्राणिमांसजै रसैः शाल्योदनैः सर्वान्मेहान्सुबहूपद्रवानपि जयेत्। गंडमालादींश्च। इदं चोत्कृष्टं रसायनम्।

**अधनश्छत्रपादत्ररहितो मुनिवर्तनः।**
**योजनानां शतं यायात्खनेद्वा सलिलाशयान् ॥३६॥**
**गोशकृन्मूत्रवर्तिर्वा गोभिरेव सह भ्रमेत्।**

धनरहितः प्रमेही छत्रपादत्ररहितो मुनिवृत्तिः सन् योजनानां शतं यायात्। अथवा सलिलाशयान् खनेत्। अथवा गोशकृन्मूत्रवर्तनो गोभिरेव सह भ्रमेत्।

**बृंहयेदौषधाहारैरमेदोमूत्रलैः कृशम् ॥ ३७ ॥**

कृशं नरमौषधयुक्तैराहारैर्बृंहयेत्। किंभूतैः। अमेदोमूत्रकरैः।

**शराविकाद्याः पिटिकाः शोफवत्समुपाचरेत्।**
**अपक्वा व्रणवत्पक्वाः**

शराविकाकच्छपिकेत्याद्याः पिटिका अपक्वाः सतीः शोफवदुपक्रमेत्। व्रणवत्पक्वाः पुनर्व्रणवदुपाचरेत्।

**तासां प्राग्रूप एव च ॥ ३८॥**
**क्षीरिवृक्षांबु पानाय बस्तमूत्रं च शस्यते।**
**तीक्ष्णं च शोधनं प्रायो दुर्विरेच्या हि मेहिनः ॥३९॥**

तासां च पूर्वरूपावस्थायामेव क्षीरिवृक्षांबु पानाय शस्यते। छागमूत्रं च। तथा शोधनं विरेचनं तीक्ष्णं शस्यते। कुत इत्याह। यस्मात् प्रमेहिणो दुःखेन विरेचयितुं शक्यंते।

**तैलमेलादिना कुर्याद्गणेन व्रणरोपणम्।**
**उद्वर्तने कषायं तु वर्गेणारग्वधादिना ॥ ४० ॥**
**परिषेकोऽसनाद्येन पानान्ने वत्सकादिना।**

एलायुग्मेत्यादिना गणेन तैलं व्रणरोपणं कुर्यात्। उद्वर्तन आरग्वधेंद्रयवेत्यादिना गणेन कषायं तूद्वर्तनार्थं कुर्यात्। असनतिनिशेत्यादिना परिषेकः स्यात्। पानमन्नं च वत्सकगुर्वेत्यादिना संस्कृतं कुर्यात्।

**पाठा चित्रकशार्ङ्गेष्टा सारिवा कंटकारिका ॥ ४१ ॥**
**सप्ताह्वं कौटजं मूलं सोमवल्कं नृपद्रुमम्।**
**संचूर्ण्य मधुना लिह्यात्तद्वच्चूर्णं नवायसम् ॥ ४२ ॥**

पाठादीन् संचूर्ण्य मधुनाऽवलेहयेत्। नवायसं चूर्णं तद्वन्माक्षिकेण लिह्यात्।

**मधुमेहित्वमापन्नो भिषग्भिः परिवर्जितः।**
**शिलाजतुतुलामद्यात्प्रमेहार्तः पुनर्नवः ॥ ४३ ॥**

मधुमेहित्वमपि प्राप्तो भिषग्भिश्च परिवर्जितो मेही शिलाजतु पलशतं कुर्यात्। कृतशिलाजतुतुलश्चासौ पुनर्नवो भवति। खारणादे च विशेषोपक्रमा उक्ताः। यथा। अश्वत्थचंदनागरुपाठाक्वाथो जलाभमेहे तु। इक्षुरसाभे पाठाकृमिहंतृसंबंधनः क्वाथः। सांद्राकारे मेहे हिताढकी कर्णिकारो वा। क्वाथस्तथाऽर्जुनस्य पातव्यो वारुणीमेहे। पिष्टे ससिता रजनी पातव्या शिशिरतोयेन। निंबश्च शुक्रमेहे तप्तजलेनाऽथवा सुरया। सिकतामेहे चित्रकबाल्हीककुष्ठनिःक्वाथः। शीतलमेहे क्वाथः पिचुमंदकृतश्च पातव्यः। पाषाणभित्तु सुरया क्वथितः शस्तः शनैर्मेहे। गोक्षुरकस्य कषायो लालामेहे फलत्रिकेन सह। शल्लकुशीर-

सैंधववचा हिताः क्षारमेहिनः पिष्टाः । क्वथिताश्च नीलमेहे रौध्रसमंगाकदंबाः स्युः । क्वाथो बिभीतकस्य तु कल्को वा कालमेहिनां शस्तः । धातकिपद्मकविकसाक्वाथः कल्कोऽपि वा निशामेहे । मांजिष्ठे स्युस्त्रिफला जलदं जलपद्मकं रोध्रम् । लोहितमेहे युंज्यात्त्रिफलाक्वाथेन संयुतं गिरिजम् । वालकं त्रिवृता धात्री मुस्तं च सरसांजनम् । कटुकातिविषारोध्रं खदिरेणांभसा पिबेत् । प्रायः शोधनमेतद्धि प्रधानं समुदाहृतमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने प्रमेहचिकित्सितो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अस्मादनंतरं विद्रधिवृद्धिचिकित्सितमारभ्यते प्रमेहोपद्रवभूतत्वाद्विद्रधेरित्याह ।

**अथाऽतो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः।**
**विद्रधिं सर्वमेवामं शोफवत्समुपाचरेत् ।**
**प्रततं च हरेद्रक्तं पक्के तु व्रणवत्क्रिया ॥ १ ॥**

आमं सर्वमेव विद्रधिं शोफवदुपक्रमेत् । अनवरतं च रक्तमाहरेत् । अनंतरं पक्के सति व्रणवत्क्रिया ।

विशेषेण चिकित्सितमाह ।

**पंचमूलजलैर्धौतं वातिकं लवणोत्तरैः ।**
**भद्रादिवर्गयष्ट्याह्वतिलैरालेपयेद्व्रणम् ॥ २ ॥**

वातिकं व्रणं वातविद्रधावर्थाज्जातं पंचमूलजलैः प्रक्षालितं भद्रदारुनतेत्यादिना मधुयष्टिकया तिलैश्च लवणाद्यैर्लेपयेत् ।

**वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च ।**
**विदारीवर्गसिद्धेन त्रैवृतेनैव रोपयेत् ॥ ३ ॥**

वैरेचनिकयुक्तेन निकुंभकुंभेत्यादिवर्गोक्तेन त्रैवृतेन त्रैवृताख्येन विशोधयित्वा ततो विदारीपंचांगुलेत्यादिद्रव्यसिद्धेन त्रैवृतेनैव स्नेहेन व्रणं रोपयेत् ।

**क्षालितं क्षीरितोयेन लिंपेद्यष्ट्यमृतातिलैः ।**
**पैत्तं घृतेन सिद्धेन मंजिष्ठोशीरपद्मकैः ॥ ४ ॥**
**पयस्याद्विनिशाश्रेष्ठायष्टीदुग्धैश्च रोपयेत् ।**
**न्यग्रोधादिप्रवालत्वक्फलैर्वा**

पैत्तं व्रणं क्षीरितोयेन धौतम् । क्षीरिणो न्यग्रोधादयः । मधुयष्टिकागुडूचीतिलैर्लिंपेद्बहिः । घृतेनेत्यादि । मंजिष्ठादिभिर्घृतेन सिद्धेन रोपयेत् । सामान्यपरिभाषोक्तप्रमाणेन द्रवं जलं घृतं समं क्षीरमित्यत्र पाकक्रमः । न्यग्रोधेत्यादि । प्रवालश्च त्वक् च फलं च प्रवालत्वक्फलानि । न्यग्रोधादीनां प्रवालत्वक्फलैः सिद्धेन वा घृतेन रोपयेत् ।

**कफजं पुनः ॥ ५ ॥**
**आरग्वधांबुना धौतं सक्तुकुंभनिशातिलैः ।**
**लिंपेत्कुलत्थिकादंतीत्रिवृच्छ्यामाग्नितिल्वकैः ॥६॥**
**ससैंधवैः सगोमूत्रैस्तैलं कुर्वीत रोपणम् ।**

कफजं तु व्रणमारग्वधांबुना धौतं सक्त्वादिभिर्लिंपेत् । कुलत्थिकादिभिर्द्रव्यैस्तैलं रोपणं कुर्वीत ।

**रक्तागंतूद्भवे कार्या पित्तविद्रधिवत्क्रिया ॥ ७ ॥**

रक्तोद्भवे तथाऽऽगंतुजे क्षतोद्भवे च विद्रधौ पित्तविद्रधितुल्या क्रिया कार्या ।

**वरुणादिगणक्वाथमपक्वेऽभ्यंतरे स्थिते ।**
**ऊषकादिप्रतीवापं पूर्वाह्णे विद्रधौ पिबेत् ॥ ८ ॥**

अंतरे विद्रधौ वरुणादिगणक्वाथमूषकादिप्रतीवापं पूर्वाह्णे पिबेत् ।

**घृतं विरेचनद्रव्यैः सिद्धं ताभ्यां च पाययेत् ।**
**निरूहं स्नेहवस्तिं च ताभ्यामेव प्रकल्पयेत् ॥ ९ ॥**

विरेचनद्रव्यैर्यथादोषं घृतं च सिद्धं तथा ताभ्यां वरणादिगणाभ्यां वरणादिगणोषकादिगणाभ्यां सिद्धं घृतमपक्वाभ्यंतरोत्थिते विद्रधौ पाययेत् । ताभ्यामेव गणाभ्यां निरूहान्वासने निरूपयितव्ये ।

**पानभोजनलेपेषु मधुशिग्रुः प्रयोजितः ।**
**दत्तावापो यथादोषमपक्वं हंति विद्रधिम् ॥ १० ॥**

पानादिषु मधुशिग्रुः प्रयोजितो दत्तावापो वितीर्णकल्कः सामर्थ्यात्तत्क्वाथः पक्वं विद्रधिं हंति ।

**त्रायंतीत्रिफलानिंबकटुकामधुकं समम् ।**
**त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशाः पृथक् पृथक्॥११**
**मसूरान्निस्तुषादष्टौ तत्क्वाथः सघृतो जयेत् ।**
**विद्रधीगुल्मवीसर्पदाहमोहमदज्वरान् ॥ १२ ॥**
**तृण्मूर्छाछर्दिहृद्रोगपित्तासृक्कुष्ठकामलाः ।**

त्रायंत्यादिकं समं समांशं त्रिवृतायाश्चत्वारोंऽशाः पटोलमूलाच्च निस्तुषमसूरादष्टावित्येतैः क्वाथो घृतसहितो विद्रध्यादीन् पराकुर्यात् ।

**कुडवं त्रायमाणायाः साध्यमष्टगुणेऽभसि ॥ १३ ॥**
**कुडवं तद्रसाद्धात्रीस्वरसात्क्षीरतो घृतात् ।**
**कर्षांशं कल्कितं तिक्तात्रायंतीधन्वयासकम् ॥ १४॥**
**मुस्तातामलकीवीराजीवंतीचंदनोत्पलम् ।**
**पचेदेकत्र संयोज्य तद्घृतं पूर्ववद्गुणैः ॥ १५ ॥**

त्रायमाणायाः कुडवमष्टगुणे जले साध्यम् । तद्रसात्त्रायमाणाक्वाथात् कुडवं धात्रीस्वरसात्क्षीराद्घृताच्च प्रत्येकं कुडवं कर्षांशं

प्रत्येकं कल्कीकृतं तिक्तादि एकत्र मिश्रयित्वा पचेत् । तदेतद् घृतं पूर्वगुणम् ।

**द्राक्षा मधूकं खर्जूरं विदारी सशतावरी ।**
**पुरूषकाणि त्रिफला तत्काथे पाचयेद्घृतम् ॥ १६ ॥**
**क्षीरेक्षुधात्रीनिर्यासे प्राणदाकल्कसंयुतम् ।**
**तच्छीतं शर्कराक्षौद्रपादिकं पूर्ववद्गुणैः ॥ १७ ॥**

द्राक्षादिभिः क्वाथे क्षीर इक्षुरसे धात्रीरसे हरीतकीकल्कयुतं घृतं सामान्यपरिभाषया पचेत्। तद्घृतं शीतं सच्छर्कराक्षौद्रपादयुतं पूर्वगुणम् । शर्कराक्षौद्रपादिकमित्यत इनिठनाविति ठन् ।

**हरेच्छृंगादिभिरसृक् सिरया वा यथांतिकम् ।**

शृंगादिभी रक्तं हरेत् । सिरया वा यथासमीपमस्रं हरेत् ।

**विद्रधिं पच्यमानं च कोष्ठस्थं बहिरुन्नतम् १८**
**ज्ञात्वोपनाहयेत्**

विद्रधिं कोष्ठस्थं कोष्ठगतं बहिरुन्नतं पच्यमानं बुद्ध्वोपनाहयेत् । उपनद्धं कुर्यात् ।

**शूले स्थिते तत्रैव पिंडिते ।**
**तत्पार्श्वपीडनात्सुप्तौ दाहादिष्वल्पकेषु च ॥ १९ ॥**
**पक्वः स्याद्विद्रधिं भित्त्वा व्रणवत्तमुपाचरेत् ।**

तत्रैव शूले पिंडिते स्थिते यं दोषमाश्रित्योन्नद्धस्तिष्ठति तथा तत् पार्श्वे पीडनेन सुप्तौ स्वपने तथा दाहादिष्वल्पकेषु । आदिशब्देनोषादयो गृह्यंते । एतेषु सत्सु पक्वो विद्रधिः स्यात् । तं भित्त्वा संछेद्य व्रणवदुपक्रमेत् ।

**अंतर्भागस्य चाप्येतच्चिह्नं पक्वस्य विद्रधेः ॥ २० ॥**

अंतर्भागस्य च विद्रधेरेतदेव चिह्नम् ।

**पक्वः स्रोतांसि संपूर्य स यात्यूर्ध्वमधोऽथवा ।**
**स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशिनः ॥ २१ ॥**
**दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।**
**असम्यग्वहति क्लेदे वरणादिसुखांभसा ॥ २२ ॥**
**पाययेन्मधुशिग्रुं वा यवागूं तेन वा कृताम् ।**

तदाऽसौ पक्वः सन् स्रोतांसि क्लेदयित्वोर्ध्वं प्रयात्यधो वा तं दोषं स्वयं प्रवृत्तं पततं हिताशिन उपेक्षेत न किंचिदुपक्रमांतरं कुर्वीत । दशाहं द्वादशाहं वा वैद्य उपद्रवान्रक्षेत् । क्लेदे च यथावदवहति सति वरणादिमुष्णांबुना पाययेद्वैद्य इति शेषः । दशाहमिति दशानामह्नां समाहार इति समासे राजाहःसखिभ्यष्टजिति टच् । न संख्यादेः समाहार इत्यह्नादेशनिषेधः । नस्तद्धित इति टिलोपः । स नपुंसकमिति नपुंसकत्वम् । कालाध्वनोरिति द्वितीया । अथवा मधुशिग्रुं पाययेत् । तेन वा मधुशिग्रुणा कृतां पेयां पाययेत् ।

**यवकोलकुलत्थोत्थयूषैरन्नं च शस्यते ॥ २३ ॥**

यवादिजैर्यूषैः सहान्नं च शस्यते ।

**ऊर्ध्वं दशाहात्त्रायंतीसर्पिषा तैल्वकेन वा ।**
**शोधयेद्बलतः शुद्धः सक्षौद्रं तिक्तकं पिबेत् २४**

दशाहादनंतरं त्रायंतीघृतेन कृतेन कुडवं त्रायमाणाया इत्यादिनाऽथवा तिल्वकेन शम्याकेन त्रिवृतयोरित्यादिना शोधयेयथाबलम् । शुद्धः सन् क्षौद्रेण सह तिक्तकं पिबेत् ।

**सर्वशो गुल्मवच्चैनं यथादोषमुपाचरेत् ।**

सर्वेण प्रकारेण गुल्मवदेनं विद्रधिं यथादोषमुपक्रमेत् ।

**सर्वावस्थासु सर्वासु गुग्गुलुं विद्रधीषु च ॥ २५ ॥**
**कषायैर्योगिकैर्युंज्यात्स्वैः स्वैस्तद्वच्छिलाजतु ।**

विद्रधीषु सर्वासु सर्वावस्थास्वेव गुग्गुलुं यौगिकैः स्वैः स्वैर्योग्यैः कषायैर्युंज्यात् । तद्वत्तथैव कषायैः सह शिलाजतु युंज्यात् ।

**पाकं च वारयेद्यत्नात्सिद्धिः पक्वे हि दैविकी ॥ २६ ॥**
**अपि चाऽऽशु विदाहित्वाद्विद्रधिः सोऽभिधीयते ।**
**सति चालोचयेन्मेहे प्रमेहाणां चिकित्सितम् ॥ २७ ॥**

पाकं च यत्नेन वारयेत् । हि यस्मात्पक्वे सति दैविकी सिद्धिर्न तु भिषग्वशानुगेत्यर्थः । आशु च विदाहित्वात्सोऽयं रोगो विद्रधिरित्युच्यते । तस्मात्तस्य पाकरक्षायां यतितव्यमित्यर्थः । मेहे च सति प्रमेहाणां चिकित्सितमालोचयेत् । चशब्दाद्विद्रधिचिकित्सितोक्तमपि कुर्यात् ।

**स्तनजे व्रणवत्सर्वं नत्वेनमुपनाहयेत् ।**
**पाटयेत्पालयन्स्तन्यवाहिनीः कृष्णचूचुकौ ॥ २८ ॥**
**सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ।**

स्तनजे विद्रधावुपनाहं वर्जयित्वा सर्वमेव व्रणक्रियाक्रमं कुर्यात् । विद्रधिशब्दः पुंस्त्रीलिंगः । स्तनविद्रधिं च पाटयेद्वैद्यः । स्तन्यवाहिनीः सिराः कृष्णचूचुकौ च पालयन् । सर्वासु चामाद्यवस्थासु तस्य विद्रधेः संबंधिनं स्तनं निर्दुहीत । आदिशब्दः पच्यमानपाकावस्थयोर्ग्रहणार्थः ।

इति विद्रधिचिकित्सितमुक्त्वा वृद्धिचिकित्सितमाह ।

**शोधयेत्त्रिवृतास्निग्धं वृद्धौ स्नेहैश्चलात्मके ॥ २९ ॥**
**कौशाम्रतिल्वकैरंडसुकुमारकमिश्रकैः ।**

चलात्मके वृद्धौ सति वृद्ध्यामयिनं त्रिवृताख्येन स्नेहेनासमन्तात् स्निग्धं संतं शोधयेत् । अत्र च सामान्योक्तावप्यपक्वस्य त्रैवृतस्य न तथा प्रयोगः प्रशस्यत इति पूर्वोक्तया रीत्या विदारिवर्गसिद्धस्योपयोगः कार्य इति केचिन्मन्यंते । कैः स्नेहैः । कौशाम्रादिभिः सिद्धैः सुकुमारकमत्रैव वक्ष्यमाणं मिश्रकं च गुल्मचिकित्सिते ।

**ततोऽनिलघ्ननिर्यूहकल्कस्नेहैर्निरूहयेत् ॥ ३० ॥**
**रसेन भोजितं यष्टितैलेनान्वासयेदनु ।**
**स्वेदप्रलेपा वातघ्नाः पक्के भित्त्वा व्रणक्रियाः ॥ ३१ ॥**

ततः शोधनादनंतरं वातघ्नकषायकल्कस्नेहैर्निरूहयेत् । अनु निरूहस्य पश्चान्मांसरसेन भोजितं संतं मधुयष्टिकातैलेनानुवासयेत् । स्वेदाः प्रलेपाश्च वातघ्ना हिताः । पक्के वृद्धौ भित्त्वा पाटयित्वा व्रणक्रियां कुर्यात् ।

**पित्तरक्तोद्भवे वृद्धावामपक्के यथायथम् ।**
**शोफव्रणक्रियां कुर्यात् प्रततं च हरेदसृक् ॥ ३२ ॥**

पित्तरक्तोत्थिते वृद्धावामे पक्के च यथास्वमामशोफक्रियां कुर्यात् । पक्के व्रणक्रियां कुर्यात् । सततं च रक्तमाकर्षेत् ।

**गोमूत्रेण पिबेत्कल्कं श्लैष्मिके पीतदारुजम् ।**
**विम्लापनादृते चाऽत्र श्लेष्मग्रंथिक्रमो हितः ॥३३॥**
**पक्के च पाटिते तैलमिष्यते व्रणशोधनम् ।**
**सुमनोरुष्करांकोल्लसप्तपर्णेषु साधितम् ॥ ३४ ॥**
**पटोलनिंबरजनीविडंगकुटजेषु च ।**

श्लैष्मिके वृद्धौ दार्वीकल्कं गोमूत्रेण पिबेत् । अस्य च श्लैष्मिकवृद्धेर्विम्लापनमंतरेण श्लेष्मग्रंथिचिकित्सितं हितम् । विम्लापनं तैस्तैर्मर्दनोपायैर्विमर्दनम् । पक्के पाटिते सति सुमनोरुष्करादिभिः कुटजांतैः साधितं तैलं व्रणशोधनमिष्यते ।

**मेदोजं मूत्रपिष्टेन सुस्विन्नं सुरसादिना ॥ ३५ ॥**
**शिरोविरेकद्रव्यैर्वा वर्जयन्फलसेवनीम् ।**
**दारयेद्वृद्धिपत्रेण सम्यङ्मेदसि सूद्धृते ॥ ३६ ॥**
**व्रणं माक्षिककासीससैंधवप्रतिसारितम् ।**
**सीव्येदभ्यंजनं चाऽस्य योज्यं मेदोविशुद्धये ॥ ३७॥**
**मनःशिलैलासुमनोग्रंथिभल्लातकैः कृतम् ।**
**तैलमाव्रणसंधानात्स्नेहस्वेदौ च शीलयेत् ॥ ३८ ॥**

मेदोजं वृद्धिरोगं गोमूत्रपिष्टेन सुरसादिना गणेन सुस्विन्नं शिरोविरेकद्रव्यैर्वा सुस्विन्नं वृद्धिपत्रेण सम्यक् कृत्वा दारयेत् । किं कुर्वन् । फलसेवनीं वर्जयन् परिहरन् । अनंतरं मेदसि सूद्धृते सति माक्षिकादिभिः प्रतिसारितं व्रणं सीव्येत् । अनंतरमस्याभ्यंजनं तैलं मनःशिलादिभिः कृतं सिद्धं मेदोविशुद्धये योज्यम् । व्रणसंधानं यावत् स्नेहं स्वेदं च शीलयेत् ।

**मूत्रजं स्वेदितं स्निग्धैर्वस्त्रपट्टेन वेष्टितम् ।**
**विध्येदधस्तात्सेवन्याः स्रावयेच्च यथोदरम्॥३९॥**
**व्रणं च स्थगिकाबद्धं रोपयेत्**

मूत्रजं वृद्धिं सेवन्या अधस्तात् स्निग्धैः स्वेदितं तथा वस्त्रपट्टेन वेष्टितं विध्येत् । जलोदरवच्च स्रावयेत् । द्विद्वारनलिकया पिच्छनलिकया वा क्रमेण व्रणं च स्थगिकाख्येन बंधविशेषेण बद्धं रोपयेत् ।

**अंत्रहेतुके ।**
**फलकोशमसंप्राप्ते चिकित्सा वातवृद्धिवत् ॥४०॥**

अंत्रजे वृद्धौ फलकोशमसंप्राप्ते सति वातवृद्धिसदृशीं चिकित्सां कुर्यात् ।

**पचेत्पुनर्नवतुलां तथा दशपलाः पृथक् ।**
**दशमूलपयस्याश्च गंधैरंडशतावरीः ॥ ४१ ॥**
**द्विदर्भशरकाशेक्षुमूलपोटगलान्विताः ।**
**वहेऽपामष्टभागस्थे तत्र त्रिंशत्पलं गुडात् ॥ ४२ ॥**
**प्रस्थमेरंडतैलस्य द्वौ घृतात्पयसस्तथा ।**
**आवपेद् द्विपलांशं च कृष्णातन्मूलसैंधवम् ॥४३॥**
**यष्टीमधुकमृद्वीकायवानी नागराणि च ।**
**तत्सिद्धं सुकुमाराख्यं सुकुमारं रसायनम् ॥ ४४ ॥**
**वातातपाध्वयानादिपरिहार्येष्वयंत्रणम् ।**
**प्रयोज्यं सुकुमाराणामीश्वराणां सुखात्मनाम्॥४५॥**
**नृणां स्त्रीवृंदभर्तॄणामलक्ष्मीकलिनाशनम् ।**
**सर्वकालोपयोगेन कांतिलावण्यपुष्टिदम् ॥ ४६ ॥**
**वर्ध्मविद्रधिगुल्मार्शोयोनिमेढ्रानिलार्तिषु ।**
**शोफोदरखुडप्लीहविड्विबंधेषु चोत्तमम् ॥ ४७ ॥**

पुनर्नवस्य तुलां जलस्य वहे पचेत् । तथा दशमूलादीनि पृथग्दशपलप्रमाणानि । पोटगलो नलः । अष्टभागशेषे च तस्मिन् गुडात्त्रिंशत्पलान्येरंडतैलात् प्रस्थं घृतस्य प्रस्थौ द्वौ क्षीरप्रस्थौ द्वौ क्षिपेत् । द्विपलप्रमाणं पिप्पल्यादिकं तदेतत्पक्कं सुकुमारसंज्ञं घृतं रसायनं सुकुमारम् । अत एव वातातपादिष्वयंत्रणं सुकुमाराणामीश्वरादीनां प्रयोज्यम् । अलक्ष्मीकलिघ्नं सर्वकालोपयोगात्कांत्यादिदं वध्मार्द्यातिषु श्रेष्ठम् ।

**यायाद्वर्ध्म न चेच्छांतिं स्नेहरेकानुवासनैः ।**
**वस्तिकर्म पुरः कृत्वा वंक्षणस्थं ततो दहेत्॥४८॥**
**अग्निना मार्गरोधार्थं मरुतः**

यदि स्नेहादिभिर्वर्ध्म शांतिं न गच्छेत् ततो बस्तिकर्म कृत्वा वंक्षणस्थितं वर्ध्म मरुतो मार्गरोधार्थमग्निना दहेत् ।

**अर्धेंदुवक्रया ।**
**अंगुष्ठस्योपरि स्नावपीतं तंतुसमं च यत् ॥४९॥**
**उत्क्षिप्य सूच्या तत्तिर्यग्देहे छित्वा यतो गदः ।**
**ततोऽन्यपार्श्वेऽन्ये त्वाहुर्दहेद्वाऽऽनामिकांगुलेः ५०**
**गुल्मेऽन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ।**
**कनिष्ठिकानामिकयोर्विश्वाच्यां च यतो गदः॥५१॥**

यतो यस्मिन्पार्श्वे गदो विद्यते तत्पार्श्वस्थस्यांगुष्ठस्योपरि पृष्ठे स्नावपीतं यत्तंतुतुल्यम् । ततः स्नावोत्क्षिप्यार्धेंदुवक्रया सूच्या तिर्यक् छित्त्वाऽनंतरं तद्दहेदित्येके वदंति । अन्य आचार्या एव

माहुः । ततः पार्श्वात् यतोऽसौ गदस्तिष्ठति ततो यदन्यत्पार्श्वं तस्मिन् पार्श्वेऽगुष्ठस्योपरि यत्स्नाव तथाविधं यत्तत्पूर्वं दहेदिति । अन्ये त्वेवं वदंति । अनामिकाया अंगुलेरुपरि यत्स्नाव तथारूपं तत्पूर्ववद्दहेदिति । अन्यैराचार्यैर्वातकफजे गुल्मे प्लीह्नि च एष एवाऽनंतरोक्तो विधिः स्मृतः । तथा विश्वाच्यां वातव्याधिविशेषे यतो यस्मिन् पार्श्वेऽसौ गदस्तस्मिन् पार्श्वे कनिष्ठिकाऽनामिकयोरुपरि यत्स्नाव पीतं तंतुसमं तदुत्क्षिप्य तिर्यक्छित्त्वा दहेदिति ।

इति श्रीमदरुणदत्तविरचितटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने विद्रधिवृद्धिचिकित्सितं नाम त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः ।

अस्मादनंतरं गुल्मचिकित्सितमारभ्यते । संबंधश्चाऽस्य प्रायेणैकयोगक्षमत्वं वातकारणत्वात् ।

**अथाऽतो गुल्मचिकित्सितं व्याख्यास्यामः ।**
**गुल्मं बद्धशकृद्वातं वातिकं तीव्रवेदनम् ।**
**रूक्षशीतोद्भवं तैलैः साधयेद्वातरोगिकैः ॥ १ ॥**
**पानान्नान्वासनाभ्यंगैः स्निग्धस्य स्वेदमाचरेत् ।**
**आनाहवेदनास्तंभविबंधेषु विशेषतः ॥ २ ॥**
**स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।**
**भित्त्वा विबंधं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ ३ ॥**

वातिकं गुल्मं तीव्ररुजं पुरीषवातग्रहं रूक्षशीतोद्भूतं वातचिकित्सितोक्तैस्तैलैः साधयेत् । पानान्नान्वासनाभ्यंगैः स्निग्धस्य गुल्मिनः स्वेदमाचरेत् । पानशब्देन स्नेहपानं वेद्यम् । स्निग्धस्येति वचनात् । आनाहादिषु विशेषेण स्वेदमाचरेत् । यस्मात्स्वेदः स्निग्धस्य पुंसः स्रोतोमृदुत्वं विधाय मारुतमुल्बणं च जित्वा तथा विबंधं भित्त्वा गुल्ममपोहति ।

**स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।**
**पक्वाशयगते बस्तिरुभयं जठराश्रये ॥ ४ ॥**

गुल्मे स्नेहपानं हितम् । ऊर्ध्वनाभिजे गुल्मे विशेषेण स्नेहपानं हितम् । पक्वाशयगते बस्तिर्हितः । जठराश्रित उभयं स्नेहपानं बस्त्याख्यं हितम् ।

**दीप्तेऽग्नौ वातिके गुल्मे विबंधेऽनिलवर्चसोः ।**
**बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रदापयेत् ॥ ५ ॥**
**पुनः पुनः स्नेहपानं**

वातिके गुल्मे वह्नौ समिद्धे सति वातशकृतोश्च विबंधे सति बृंहणान्यन्नादीनि स्निग्धोष्णानि च प्रयोजयेत् । तथा पुनः पुनः स्नेहपानं प्रदापयेत् ।

**निरूहाः सानुवासनाः ।**
**प्रयोज्या वातजे गुल्मे कफपित्तानुरक्षिणः ॥ ६ ॥**



निरूहाश्च सहानुवासना वातिके गुल्मे कफपित्तानुरक्षिणो नरस्य प्रयोज्याः ।

**बस्तिकर्म परं विद्याद्गुल्मघ्नं तद्धि मारुतम् ।**
**स्वस्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥ ७ ॥**
**तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।**
**प्रयुज्यमानैः शाम्यंति वातपित्तकफात्मकाः ॥ ८ ॥**

बस्तिकर्म परमतिशयेन गुल्मघ्नं विद्यात् । यस्मात्तद्बस्तिकर्म स्वस्थाने पक्वाशयाख्ये प्रथमं पवनं जित्वा सद्यः शीघ्रं गुल्मं जयति । यत एवं तस्मात्कारणान्नित्यं गुल्मा निरूहैः सानुवासनैः प्रयुज्यमानैः शाम्यंति वातपित्तकफोत्थाः ।

**हिंगुसौवर्चलव्योषविडदाडिमदीप्यकैः ।**
**पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ ९ ॥**
**शठीवचाजगंधैलासुरसैर्दधिसंयुतैः ।**
**शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ १० ॥**

हिंग्वादिभिर्दधियुक्तैर्घृतं साधयेत् । तच्च पीतं वातगुल्मवतां शूलादिजित् । द्रव्येभ्यश्चतुर्गुणं घृतम् । घृतसमं दधि । घृताच्चतुर्गुणं जलमित्यत्र पाकक्रमः ।

**हपुषोषणपृथ्वीकापंचकोलकदीप्यकैः ।**
**साजाजीसैंधवैर्दध्ना दुग्धेन च रसेन च ॥ ११ ॥**
**दाडिमान्मूलकात्कोलात्पचेत्सर्पिर्निहंति तत् ।**
**वातगुल्मोदरानाहपार्श्वहृत्कोष्ठवेदनाः ॥ १२ ॥**
**योन्यर्शोग्रहणीदोषकासश्वासारुचिज्वरान् ।**

हपुषादिभिर्घृताच्चतुर्थांशैर्द्रव्यैर्दधिदुग्धाभ्यां दाडिममूलकबदररसैः समैः सर्पिः पचेत् । तच्च वातगुल्मादीन् पराकुर्यात् ।

**दशमूलं बलां कालां सुपर्वीं द्वौ पुनर्नवौ ॥ १३ ॥**
**पौष्करैरंडरास्नाश्वगंधभार्ग्यमृताशठीः ।**
**पचेद्गंधपलाशं च द्रोणेऽपां द्विपलोन्मितम् ॥ १४ ॥**
**यवैः कोलैः कुलत्थैश्च माषैश्च प्रास्थिकैः सह ।**
**क्वाथेऽस्मिन्दधिपात्रे च घृतप्रस्थं विपाचयेत् ॥ १५ ॥**
**स्वरसैर्दाडिमाम्रातमातुलुंगोद्भवैर्युतम् ।**
**तथा तुषांबुधान्याम्लयुतैः श्लक्ष्णैश्च कल्कितैः ॥१६॥**
**भार्गीतुंबुरुषड्ग्रंथाग्रंथिरास्नाग्निधान्यकैः ।**
**यवानकयवान्यम्लवेतसासितजीरकैः ॥ १७ ॥**
**अजाजीहिंगुहपुषाकारवीवृषकोषकैः ।**
**निकुंभकुंभमूर्वेभपिप्पलीवेल्लदाडिमैः ॥ १८ ॥**
**श्वदंष्ट्रात्रपुसैर्वारुबीजहिंस्राश्मभेदकैः ।**
**मिसिद्विक्षारसुरससारिवानीलिनीफलैः ॥ १९ ॥**
**त्रिकटुत्रिपटूपेतैर्दाधिकं तद्व्यपोहति ।**
**रोगानाशुतरान्पूर्वान्कष्टानपि च शीलितम् ॥ २० ॥**

**अपस्मारगरोन्मादमूत्राघातानिलामयान् ।**

दशमूलादीन् पृथग्द्विपलप्रमाणान् यवादिभिः प्रस्थप्रमाणैः सह जलद्रोणे पचेत् । काला नीलिनी । सुषवी स्थूलजीरकः । गंधपलाशो गंधपत्रम् । अस्मिन् काथे सामान्यपरिभाषया कृते दधिपात्रे च घृतप्रस्थं विपाचयेत् । किंभूतम् । दाडिमादिजैः स्वरसैस्तथा तुषांब्वादिभिश्च सर्पिःसमैर्युतम् । तथा भार्ग्यादिभिः कल्कीकृतैरुपेतम् । यवानको यवानीभेदः । कारवी अजमोदः । वृषको वासकः । उषक ऊरुः । इभपिप्पली गजपिप्पली । अश्मभेदः पाषाणभेदः । तदेतद्दाधिकं नाम घृतं पूर्वोक्तानामयान् द्राक्तरां हंति । अपस्मारादींश्च कृच्छ्रानप्यभ्यस्तं हंति । यदि चाऽत्र स्वरसालाभस्तदा तंत्रांतरोक्ता कल्पना कार्या । तंत्रांतरे चोक्तम् । प्रस्थं गृहीत्वा चूर्णस्य तोयस्य प्रस्थमावपेत् । अहोरात्रं स्थितं पूतं तत्स्यात्स्वरसवद्गुणैः । मुनिरप्यूचे । स्वरसानामलाभे त्वयं विधिः । चूर्णानामाढकमाढकमुदकस्याहोरात्रस्थितं मृदितपूतमावपेत् तत्स्वरसवत् प्रयोज्यमिति ।

**त्र्यूषणत्रिफलाधान्यचविकावेल्लचित्रकैः ॥ २१ ॥**
**कल्कीकृतैर्घृतं पक्वं सक्षीरं वातगुल्मनुत् ।**

त्र्यूषणादिभिः कल्कीकृतैर्घृतं समानक्षीरं चतुर्गुणजलपक्वं वातगुल्मं नुदति ।

**तुलां लशुनकंदानां पृथक्पंचपलांशकम् ॥ २२ ॥**
**पंचमूलं महच्चांबुभारार्धे तद्विपाचयेत् ।**
**पादशेषं तदर्धेन दाडिमस्वरसं सुराम् ॥ २३ ॥**
**धान्याम्लं दधि चाऽऽदाय पिष्टांश्चार्धपलांशकान् ।**
**त्र्यूषणत्रिफलाहिंगुयवानीचव्यदीप्यकान् ॥ २४ ॥**
**साम्लवेतससिंधूत्थदेवदारून्पचेद्घृतात् ।**
**तैः प्रस्थं तत्परं सर्ववातगुल्मविकारजित् ॥ २५ ॥**

लशुनमूलतुलां पलशतं महत्पंचमूलं च प्रत्येकं पंचपलदघ्नम् । तदेतत्तोयाद्द्रशते पादशेषं विपाचयेत् । पादशेषादर्धेन दाडिमस्वरसं सुरां धान्याम्लं दधि च गृहीत्वा त्र्यूषणादींश्च द्विकार्षिकानादाय तैर्घृतात् प्रस्थं पचेत् । तद्घृतं सर्ववातगुल्मविकारजित् ।

**षट्पलं वा पिबेत् सर्पिर्यदुक्तं राजयक्ष्मणि ।**
**प्रसन्नया वा क्षीरार्थः सुरया दाडिमेन वा ॥ २६ ॥**
**घृते मारुतगुल्मघ्नः कार्यो दध्नः सरेण वा ।**

राजयक्ष्मचिकित्सिते यदुक्तं षट्पलं घृतं तद्वा पिबेत् । राजयक्ष्मणीति विशेषणं स्पष्टार्थम् । घृते षट्पलाख्ये क्षीरार्थः प्रसन्नया वा कार्यः । अथवा सुरया दाडिमेन वा । दधिसरेण वा । एवं क्षीरं हित्वा प्रसन्नाद्यन्यतमेन साधितं घृतं षट्पलं वातगुल्मजित्स्यात् ।

**वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ॥ २७ ॥**
**हृल्लासं गौरवं तंद्रां जनयेदुल्लिखेत्तु तम् ।**

वातजे गुल्मे श्लेष्मा वृद्धः सन्नग्निं हत्वा यद्यरुच्यादीन् जनयेत्तदा तं कफमुल्लिखेदुद्वमेत् ।

**शूलानाहविबंधेषु ज्ञात्वा सस्नेहमाशयम् ॥ २८ ॥**
**निर्यूहचूर्णवटकाः प्रयोज्या घृतभेषजैः ।**

शूलादिषु सत्सु सस्नेहमाशयं ज्ञात्वा घृतोक्तैरौषधैरनंतरोक्तानां घृतानामौषधैः क्वाथचूर्णगुटिका वा सह प्रयोज्याः ।

**कोलदाडिमघर्मांबुतक्रमद्याम्लकांजिकैः ॥ २९ ॥**
**मंडेन वा पिबेत्प्रातश्चूर्णान्यन्नस्य वा पुरः ।**

कोलाद्यंबुभिस्तक्रादिभिर्वा प्रातश्चूर्णानि घृतौषधीनां संबंधीनि मंडेन सह पिबेत् । अथवाऽन्नस्याऽऽहारस्य पुरः पूर्वं पिबेत् ।

**चूर्णानि मातुलुंगस्य भावितान्यसकृद्रसे ।**
**कुर्वीत कार्मुकतरान् वटकान् कफवातयोः ॥ ३० ॥**

चूर्णानि मातुलुंगरसेन मुहुर्मुहुर्भावितानि वटकान् कर्मकरणसमर्थान् कुर्वीत । कफवातयोः कफवातिके गुल्म इत्यर्थः ।

**हिंगुवचाविजयापशुगंध-**
**दाडिमदीप्यकधान्यकपाठाः ।**
**पुष्करमूलशठीहपुषाग्नि-**
**क्षारयुगत्रिपटुत्रिकटूनि ॥ ३१ ॥**
**साजाजिचव्यं सहतित्तिडीकं**
**सवेतसाम्लं विनिहंति चूर्णम् ।**
**हृत्पार्श्वबस्तित्रिकयोनिपायु-**
**शूलानि वाय्वामकफोद्भवानि ॥ ३२ ॥**
**कृच्छ्रान् गुल्मान्वातविण्मूत्रसंगं**
**कंठे बंधं हृद्ग्रहं पांडुरोगम् ।**
**अन्नाश्रद्धाप्लीहदुर्नामहिध्मा-**
**वर्ध्माध्मानश्वासकासाग्निसादान् ॥ ३३ ॥**

हिंग्वादिकमेतच्चूर्णं हृच्छूलादीन्निहंति तथा कृच्छ्रगुल्मादींश्च । दोधकोपजातिशालिन्यः ।

**लवणयवानीदीप्यक-**
**कणनागरमुत्तरोत्तरं वृद्धम् ।**
**सर्वसमांशहरीतकि-**
**चूर्णं वैश्वानरः साक्षात् ॥ ३४ ॥**

लवणादिकं क्रमेणोत्तरोत्तरं भागवृद्धं सर्वसमभागा हरीतकीति चूर्णमेतत्साक्षाद्वैश्वानरो दीपनगुणसामान्यात् । आर्या वृत्तम् ।

**त्रिकटुकमजमोदा सैंधवं जीरके द्वे**
**समधरणधृतानामष्टमो हिंगुभागः ।**
**प्रथमकवलभोज्यः सर्पिषा चूर्णकोऽयं**
**जनयति भृशमग्निं वातगुल्मं निहंति ॥ ३५ ॥**

त्रिकटुकादीनां सप्तानां समधरणधृतानां समप्रमाणस्थापितानां हिंगुभागोऽष्टमो देय इत्यध्याहार्यम् । केचित्त्वेवं व्याख्यानयंति । धरणशब्देन पलस्य दशमो भाग उच्यते । धरणे धृता धरणधृताः । समाश्च ते धरणधृताश्च तेषां समधरणधृतानां त्रिकटुकादीनामष्टमो हिंगुभागो देयः । स च प्रथमकवले भोज्यो भक्षणीयः । सर्पिषा सम्यक् प्रयुक्तो मिश्रितो जठराग्निं जनयति । वातगुल्मं च हंति । मालिनीवृत्तम् ।

**हिंगूग्राबिडशुंठ्यजाजिविजयावाट्याभिधानामयैश्चूर्णः कुंभनिकुंभमूलसहितैर्भागोत्तरं वर्धितैः ।**
**पीतः कोष्णजलेन कोष्ठजरुजोगुल्मोदरादीनयं शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन् मृगौघानिव॥**

हिंगूग्रेत्यादिभिर्भागोत्तरमंशाधिकं वर्धितैश्चूर्णः कोष्णजलेन पीतो जठररुजादीन् पराकरोति । अयं शार्दूलाख्यश्चूर्णो हठात् प्रमथ्य व्याधीन् मृगौघानिव । शार्दूलः सिंहोऽप्यत एव श्लेषोपमोऽयमलंकारः । तथा शार्दूलशब्देन शार्दूलविक्रीडितं वृत्तमुपलक्ष्यते । यथा भीमशब्देन भीमसेन इति । शार्दूलविक्रीडितं वृत्तम् ।

**सिंधूत्थपथ्याकणदीप्यकानां**
**चूर्णानि तोयैः पिबतां कवोष्णैः ।**
**प्रयाति नाशं कफवातजन्मा**
**नाराचनिर्भिन्न इवामयौघः ॥ ३७॥**

सिंधूत्थादीनां चूर्णानि कोष्णैस्तोयैः पिबतां कफवातजो रोगसंघो नाशं याति । क इव । नाराचेन निर्भिन्न इवेत्युपमा । उपजातिर्वृत्तम् ।

**पूतीकपत्रगजचिर्भटचव्यवह्नि**
**व्योषं च संस्तरचितं लवणोपधानम् ।**
**दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं**
**गुल्मोदरश्वयथुपांडुगदोद्भवेषु ॥ ३८ ॥**

पूतिकादिद्रव्यं संस्तरचितं यथाक्रमनिर्दिष्टमुपर्युपरिभावेन संस्तीर्णं तथा लवणोपधानं लवणं सर्वोपर्युपधानं दत्त्वाऽनंतरं दग्ध्वा संचूर्ण्य ततो दधिमस्तुना युतं गुल्मादिषु प्रयोज्यम् । वसंततिलकावृत्तम् ।

**हिंगुत्रिगुणं सैंधवमस्मात्त्रिगुणं तु तैलमैरंडम् ।**
**तत्त्रिगुणरसोनरसं गुल्मोदरवर्ध्मशूलघ्नम् ॥ ३९ ॥**

सैंधवं हिंगुतस्त्रिगुणम् । अस्माच्च सैंधवादेरंडतैलं त्रिगुणम् । तस्माच्चैरंडतैलात्त्रिगुणं रसोनस्य रसम् । तदेतद्गुल्मादिघ्नम् । आर्यावृत्तम् ।

**मातुलुंगरसो हिंगुदाडिमं विडसैंधवम् ।**
**सुरामंडेन पातव्यं वातगुल्मरुजापहम् ॥ ४०॥**

मातुलुंगरसादिकं सुरादिकं सुरामंडेन पातव्यं वातगुल्मपीडाहरम् ।

**शुंठ्याः कर्षं गुडस्य द्वौ धौतात्कृष्णतिलात्पलम् ।**
**खादन्नेकत्र संचूर्ण्य कोष्णक्षीरानुयोजयेत् ॥ ४१ ॥**
**वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान् ।**

शुंठ्याः कर्षो गुडस्य द्वौ कर्षौ लुंचितकृष्णतिलात्पलमित्येकत्र मिश्रयित्वा खादन् कोष्णक्षीरानुपः सन् वातहृद्रोगादीन् जयेत् ।

**पिबेदेरंडतैलं तु वातगुल्मी प्रसन्नया ॥ ४२ ॥**
**श्लेष्मण्यनुबले वायौ पित्ते तु पयसा सह ।**

वातकफानुगे सत्यैरंडतैलं प्रसन्नया सह गुल्मवान् पिबेत् । पित्ते त्वनुगते पयसा सहैरंडतैलं पिबेत् ।

**विवृद्धं यदि वा पित्तं संतापं वातगुल्मिनः ॥४३॥**
**कुर्याद्विरेचनीयोऽसौ सस्नेहैरानुलोमिकैः ।**
**तापानुवृत्तावेवं च रक्तं तस्याऽवसेचयेत् ॥ ४४ ॥**

वातगुल्मिनः पित्तं विवृद्धं यदि संतापं कुर्यात् तदाऽसौ वातगुल्मी विरेचनीयो विरेचनार्हैरानुलोमिकैर्द्रव्यैः स्नेहयुतैः । एवं विरिक्तस्याऽपि तापानुवर्तने सति तस्य रक्तस्रावं कुर्यात् ।

**साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम् ।**
**क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाचयेत् ॥ ४५ ॥**
**वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम् ।**
**हृद्रोगं विद्रधिं शोषं साधयत्याशु तत्पयः ॥ ४६ ॥**

क्षीरं चोदकं च क्षीरोदकम् । तस्मिन् लशुनादष्टगुणे शुद्धशुष्कस्य लशुनस्य चतुःपलं साधयेत् । ततः क्षीरशेषं विपाचयेत् । तच्च क्षीरशेषं वातगुल्मादीन्यभिभवति ।

**तैलं प्रसन्नागोमूत्रमारनालं यवाग्रजः ।**
**गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ४७ ॥**

तैलादिकं मिलितं पीतं गुल्मादीन्हंति ।

**चित्रकग्रंथिकैरंडशुंठीक्वाथः परं हितः ।**
**शूलानाहविबंधेषु सहिंगुबिडसैंधवः ॥ ४८ ॥**

चित्रकादिक्वाथो हिंग्वादियुतः परं शूलादिषु हितः ।

**पुष्करैरंडयोर्मूलं यवधन्वयवासकम् ।**
**जलेन क्वथितं पीतं कोष्ठदाहरुजापहम् ॥ ४९ ॥**

पुष्करैरंडमूलादिकं जलेन क्वथितं पीतं कोष्ठदाहादिहृत् ।

**वाट्याह्वैरंडदर्भाणां मूलं दारु महौषधम् ।**
**पीतं निःक्वाथ्य तोयेन कोष्ठपृष्ठांसशूलजित् ॥५०॥**

वाट्याह्वादीनां मूलं देवदार्वादिवत्तोयेन क्वथितं पीतं कोष्ठादिशूलजित् ।

**शिलाजं पयसाऽनल्पपंचमूलशृतेन वा।**
**वातगुल्मी पिबेद्वाट्यमुदावर्ते तु भोजयेत् ॥ ५१ ॥**
**स्निग्धं पैप्पलिकैर्यूषैर्मूलकानां रसेन वा।**
**बद्धविण्मारुतोऽश्नीयात्क्षीरेणोष्णेन यावकम् ॥५२॥**
**कुल्माषान्वा बहुस्नेहान् भक्षयेल्लवणोत्तरान्।**

शिलाजतु वा महत्पंचमूलक्वथितेन क्षीरेण सह वातगुल्मी पिबेत्। उदावर्ते सति वाट्यं स्निग्धं सस्नेहं पिप्पलीसंशृतैर्यूषैः सह भोजयेत्। अथवा मूलकरसेनाश्नीयात्। बद्धविण्मारुत उष्णेन क्षीरेण यावकमश्नीयात्। अथवा कुल्माषान्बहुस्नेहान् लवणप्रधानान् भक्षयेत्।

**नीलिनीत्रिवृतादंतीपथ्याकंपिल्लकैः सह ॥ ५३ ॥**
**समलाय घृतं देयं सविडक्षारनागरम्।**

नीलिन्यादिभिः सह सदोषाय नराय बिडादियुतं घृतं देयम्।

**नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम्॥५४॥**
**पचेद्विडंगं व्याघ्रीं च पालिकानि जलाढके।**
**रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ॥ ५५ ॥**
**दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च।**
**ततो घृतपलं दद्याद्यवागूमंडमिश्रितम् ॥ ५६ ॥**
**जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम्।**
**गुल्मकुष्ठोदरव्यंगशोफपांड्वामयज्वरान् ॥ ५७ ॥**
**श्वित्रं प्लीहानमुन्मादं हंत्येतं नीलिनीघृतम्।**

नीलिन्यादीन् पलिकान् जलाढके पचेत्। अष्टभागशेषे च रसे दधिप्रस्थेन सुधाक्षीरपलेन च मिश्रयित्वा घृतप्रस्थं विपाचयेत्। ततो घृतपलं यवागूमंडमिश्रितं दद्यात्। जीर्णे च घृते सम्यग्विरिक्तं नरं रसयुतं भोजनं भोजयेत्। एतच्च नीलिनीघृतं गुल्मादीन्हंति।

**कुक्कुटाश्च मयूराश्च तित्तिरिक्रौंचवर्तकाः॥ ५८ ॥**
**शालयो मदिराः सर्पिर्वातगुल्मचिकित्सितम्।**

कुक्कुटादयो वातगुल्मचिकित्सितमुपक्रमः।

**मितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ॥५९॥**
**समंडावारुणीपानं तप्तं वा धान्यकैर्जलम्।**

वातगुल्मिनां च भोजनं मितमुष्णं द्रवं स्निग्धं च स्यात्। वारुणीं समंडधान्यकं शृतं जलं वा पानं स्यात्।

**स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ॥६०॥**
**द्राक्षाऽभयागुडरसं कंपिल्लं वा मधुद्रुतम् ॥**
**कल्पोक्तं रक्तपित्तोक्तं**

पैत्तिके गुल्मे स्निग्धोष्णेनोत्थिते सति स्रंसनं हितम्। तदेव विरेचनमाह। द्राक्षाभयागुडरसं स्रंसनं हितम्। अथवा मधुद्रुतं कंपिल्लं स्रंसनं हितम्। कल्पोक्तं विरेचनं कल्पविरेचनं कल्पविहितं रक्तपित्तोक्तं त्रिवृतात्रिफलेत्यादिकं हितम्।

**गुल्मे रूक्षोष्णजे पुनः ॥ ६१ ॥**
**परं संशमनं सर्पिस्तिक्तं वासाघृतं शृतम्।**
**तृणाख्यपंचकक्वाथे जीवनीयगणेन वा ॥ ६२ ॥**
**शृतं तेनैव वा क्षीरं न्यग्रोधादिगणेन वा।**

रूक्षोष्णजे पैत्तिके गुल्मे सर्पिस्तिक्तं कुष्ठचिकित्सितोक्तं तथा वासाघृतं संशमनं श्रेष्ठम्। तृणाख्यं पंचकं काशेक्षित्यादि। तच्च क्वाथे शृतं घृतं हितम्। अथवा जीवनीयगणेन शृतं घृतं हितम्। तेनैव जीवनीयगणेन शृतं क्षीरं हितम्। न्यग्रोधादिगणेन वा शृतं क्षीरं हितम्।

**तत्राऽपि स्रंसनं युंज्याच्छीघ्रमात्ययिके भिषक् ६३**
**वैरेचनिकसिद्धेन सर्पिषा पयसाऽपि वा।**

तत्राऽपि न केवलं स्निग्धोष्णजे रूक्षोष्णजेऽपि पैत्तिके सामान्यतो वा समुत्पन्ने गुल्म आत्ययिके शीघ्रं स्रंसनं युंज्यात्। केनेत्याह। विरेचनविहितद्रव्यसिद्धेन सर्पिषा क्षीरेण वा।

**रसेनामलकेक्षूणां घृतप्रस्थं विपाचयेत् ॥ ६४ ॥**
**पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत्।**
**पिबेद्वा तैल्वकं सर्पिर्यच्चोक्तं पित्तविद्रधौ ॥ ६५ ॥**

आमलकरसेक्षोश्च रसेन घृताच्चतुर्गुणितेनाऽढकमानेन पथ्यापादं घृतप्रस्थं विपाचयेत्। तच्च सिद्धं पित्तगुल्मं हंति। तैल्वकमथवा सर्पिः पिबेत्। यच्च पित्तविद्रधावुक्तं घृतं तच्च पिबेत्।

**द्राक्षां पयस्यां मधुकं चंदनं पद्मकं मधु।**
**पिबेत्तंडुलतोयेन पित्तगुल्मोपशांतये ॥ ६६ ॥**

द्राक्षादि तंडुलजलेन सह पित्तगुल्मशांतये पिबेत्।

**द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम्।**
**अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥ ६७ ॥**
**पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम्।**
**तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ ६८ ॥**

त्रायंत्या द्विपलं जलद्विप्रस्थसाधितमष्टभागावशेषं पटेन पूतं क्षीरसमं पिबेत्। तस्योपरि कोष्णं क्षीरमेव यथाशक्ति पिबेन्नान्यत्किंचित्। तेन क्षीरेणाऽपहृतदोषस्य गुल्मः पैत्तिकः शाम्यति।

**दाहेऽभ्यंगो घृतैः शीतैः साज्यैर्लेपो हिमौषधैः।**
**स्पर्शः सरोरुहां पत्रैः पात्रैश्च प्रचलज्जलैः ॥ ६९ ॥**

पैत्तिके गुल्मदाहे सति घृतैः शीतैः शीतवीर्यसाधितैः स्पर्शतश्च शीतैरभ्यंगस्तथा लेपः शीतवीर्यौषधैः सघृतैः स्यात्। पद्मपत्रैः पात्रैश्च प्रचलज्जलैः स्पर्शः।

**विदाहपूर्वरूपेषु शूले वह्नेश्च मार्दवे।**
**बहुशोऽपहरेद्रक्तं पित्तगुल्मे विशेषतः ॥ ७० ॥**

विदाहपूर्वरूपेषु गुल्मेषु तथा शूले वह्निमांद्ये च सति बहून् वारान् रक्तं हरेत्। पित्तगुल्मे विशेषेणाऽस्रं हरेत्।

**छिन्नमूला विदह्यंते न गुल्मा यांति च क्षयम् ।**
**रक्तं हि व्यम्लतां याति तच्च नास्ति नचाऽस्तिरुक् ७१**

छिन्नमूला गुल्मा न विदह्यंते न पाकं यांति । च पुनः क्षयं यांति । हि यस्माद्रक्तमंतः स्थितं व्यम्लीभावं याति । तच्च रक्तं नास्ति ततस्तदुत्था रुगपि नास्ति ।

**हृतदोषं परिम्लानं जांगलैस्तर्पितं रसैः ।**
**समाश्वस्तं सशेषार्तिं सर्पिरभ्यासयेत्पुनः ॥ ७२ ॥**

हृतदोषं परिम्लानं नरं जांगलमांसरसैस्तर्पितं समाश्वस्तं संतं सशेषार्तिं सर्पिरभ्यासयेत् ।

**रक्तपित्तातिवृद्धत्वात्क्रियामनुपलभ्य वा ।**
**गुल्मे पाकोन्मुखे सर्वा पित्तविद्रधिवत्क्रिया ॥७३॥**

रक्तपित्तातिवृद्धत्वाद्धेतोः क्रियां वाऽनुपलभ्यानासाद्य गुल्मे पाकोन्मुखे सति सर्वा पित्तविद्रधितुल्या क्रिया स्यात् ।

**शालिर्गव्याजपयसा पटोली जांगलं घृतम् ।**
**धात्रीपरूषकं द्राक्षा खर्जूरं दाडिमं सिताम् ॥ ७४ ॥**
**भोज्यं पानेऽबुबलया बृहत्याद्यैश्च साधितम् ।**

शाल्यादि भोज्यम् । पाने बलया साधितं जलं बृहत्यादिना वा ।

**श्लेष्मजे वाऽमयेत्पूर्वमवम्यमुपवासयेत् ॥ ७५ ॥**
**तिक्तोष्णकटुसंसर्ग्या वह्निं संधुक्षयेत्ततः ।**
**हिंग्वादिभिश्च द्विगुणक्षारहिंग्वम्लवेतसैः ॥ ७६ ॥**

श्लेष्मजे गुल्मे पूर्वं वामयेदवमनार्हं तु लंघयेत् । कृतोपवासस्य तिक्तोष्णकटुद्रव्ययुतया संसर्ग्या वह्निं दीपयेत् । तथा हिंग्वादिभिरग्निं संधुक्षयेत् । किंभूतैः । द्विगुणानि क्षारहिंग्वाम्लवेतसानि येषु तैः ।

**निगूढं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम् ।**
**आनाहादियुतं गुल्मं संशोध्य विनयेदनु ॥ ७७ ॥**
**घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ।**

निगूढादिधर्मयुक्तं गुल्मं संशोध्य विनयेदुपशमयेत् । पश्चात्कफगुल्मिना घृतं क्षारकटुकयुतं पातव्यम् ।

**सव्योपक्षारलवणं सहिंगुबिडदाडिमम् ॥ ७८ ॥**
**कफगुल्मं जयत्याशु दशमूलश्टतं घृतम् ।**

व्योपादियुतं दशमूलपक्वं सर्पिः कफगुल्मं शीघ्रमेव हंति ।

**भल्लातकानां द्विपलं पंचमूलं पलोन्मितम् ॥ ७९ ॥**
**अल्पं तोयाढके साध्यं पादशेषेण तेन च ।**
**तुल्यं घृतं तुल्यपयो विपचेदक्षसंमितैः ॥ ८० ॥**
**विडंगहिंगुसिंधूत्थयावशूकशठीबिडैः ।**
**सद्वीपिरास्नायष्ट्याह्वषड्ग्रंथाकणनागरैः ॥ ८१ ॥**
**एतद्भल्लातकघृतं कफगुल्महरं परम् ।**
**प्लीहपांड्वामयश्वासग्रहणीरोगकासनुत् ॥ ८२ ॥**

भल्लातकानां द्विपलम् । अल्पं ह्रस्वं पंचमूलं पृथक् पलप्रमाणं तोयाढके साधनीयम् । पादशेषेण च तेन क्काथेन समं सर्पिस्तुल्यं क्षीरं विडंगादिभिः कल्कीभूतैः कार्षिकैर्विपाचयेत् । एतच्च भल्लातकघृतं परमत्यर्थं सुष्ठु कफगुल्महरं प्लीहादिजिच्च ।

**ततोऽस्य गुल्मे देहे च समस्ते स्वेदमाचरेत् ।**

ततो घृतपानादनंतरं गुल्मे देहे चाऽस्य समस्ते स्वेदमाचरेत् ।

**सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ॥ ८३ ॥**
**या क्रिया क्रियते याति सा सिद्धिं न विरूक्षिते ।**

सर्वस्मिन्नष्टविधे च गुल्मे प्रथममादौ स्नेहस्वेदाभ्यामुपपादिते सति या क्रिया क्रियते सा सिद्धिं याति । या तु विरूक्षिते सति क्रिया सा सिद्धिं न याति ।

**स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यमागते ॥ ८४ ॥**
**यथोक्तां घटिकां न्यस्येद्गृहीतेऽपनयेच्च ताम् ।**
**वस्त्रांतरं ततः कृत्वा छिंद्याद्गुल्मं प्रमाणवित् ॥८५॥**
**विमार्गाजपदादर्शैर्यथालाभं प्रपीडयेत् ।**
**प्रमृज्याद्गुल्ममेवैकं न त्वंत्रहृदयं स्पृशेत् ॥ ८६ ॥**

स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यं याते सति यंत्रविध्युदितां घटिकां योजयेत् । गृहीते च गुल्मे तामप्यपसारयेत् । अनंतरं वस्त्रव्यवहितं गुल्मं कृत्वा प्रमाणविद्विमार्गादिभिर्यथालाभं भिंद्याद्विदारयेत्सूचिकादिना विमार्गो दारुमयः शस्त्राकृतिर्वस्तुविशेषश्चर्मकारसंबंधी । तथा गुल्ममेव केवलं प्रपीडयेत् प्रमृज्याच्च । न पुनरंत्रं हृदयं स्पृशेत् ।

**तिलैरंडातसीबीजसर्षपैः परिलिप्य च ।**
**श्लेष्मगुल्ममयस्पात्रैः सुखोष्णैः स्वेदयेत्ततः ॥ ८७॥**

अथवा कफगुल्मं तिलादिभिः परिलिप्याऽनंतरं लोहभाजनैः सुखोष्णैः स्वेदयेत् । अयस्पात्रैरिति । अतःकृकमीत्यादिना सादेशः ।

**एवं च विसृतं स्थानात् कफगुल्मं विरेचनैः ।**
**सस्नेहैर्बस्तिभिश्चैनं शोधयेद्दशमूलकैः ॥ ८८ ॥**

एवमस्मिन्प्रकारे कृते सति स्थानाच्चलितं कफगुल्मं स्नेहयुक्तैर्विरेचनैर्बस्तिभिश्च दशमूलकैः शोधयेत् ।

**पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैः पचेत् ।**
**एरंडतैलहविषोः प्रस्थौ पयसि षड्गुणे ॥ ८९ ॥**
**सिद्धोऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम् ।**
**वृद्धिविद्रधिशूलेषु वातव्याधिषु चामृतम् ॥ ९० ॥**

पिप्पल्यादिभिः पलोन्मितैरेरंडतैलसर्पिषोः प्रस्थौ द्वौ षड्गुणे क्षीरे पचेत् । अयं मिश्रकाख्यः स्नेहो गुल्मिनां परं स्रंसनं वृद्ध्यादिषु चामृततुल्यम् ।

**पिबेद्वा नीलिनीसर्पिर्मात्रया द्विपलीकया ।**
**तथैव सुकुमाराख्यं घृतान्यौदरिकाणि वा ॥ ९१ ॥**

अथवा नीलिनीघृतं प्रागुक्तं स्रंसनं द्विपलमात्रया पिबेत्। तथैव द्विपलमात्रया सुकुमाराख्यं घृतं विद्रध्युक्तं स्रंसनार्थं पिबेत्। उदरचिकित्सितोक्तानि वा घृतानि पिबेत्।

**द्रोणेंऽभसः पचेद्दंत्याः पलानां पंचविंशतिम्।**
**चित्रकस्य तथा पथ्यास्तावतीस्तद्रसे स्रुते ॥ ९२ ॥**
**द्विप्रस्थे साधयेत्पूते क्षिपेद्दंतीसमं गुडम्।**
**तैलात्पलानि चत्वारि त्रिवृतायाश्च चूर्णतः ॥ ९३ ॥**
**कणाकर्षौ तथा शुंठ्याः सिद्धे लेहे तु शीतले।**
**मधुतैलसमं दद्याच्चतुर्जाताच्चतुर्थिकाम् ॥ ९४ ॥**
**अतो हरीतकीमेकां सावलेहपलामदन्।**
**सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ९५ ॥**
**गुल्महृद्रोगदुर्नामशोफानाहगरोदरान्।**
**कुष्ठोत्क्लेशारुचिप्लीहग्रहणीविषमज्वरान् ॥ ९६ ॥**
**घ्नंति दंतीहरीतक्यः पांडुतां च सकामलाम्।**

जलद्रोणे दंतीपलानां पंचविंशतिं चित्रकस्य पलानां पंचविंशतिं हरीतकीस्तावतीः पंचविंशतिं पचेत्। तद्रसे स्रुते द्विप्रस्थदघ्ने पूते पथ्यासहिते दंतीतुल्यं गुडं क्षिपेत्। तैलपलानि त्रिवृत्पलानि चत्वारि। कणायाः कर्षौ द्वौ। शुंठ्याश्च। सिद्धे चास्मिन् लेहे तु सुशीते तैलतुल्यं माक्षिकं दद्यात्। चतुर्जातात्समुदिताच्चतुर्थिकां पलापरसंज्ञां दद्यात्। अतो लेहात् पथ्यामेकां सावलेहपलयुतां भक्षयेत्। स्निग्धो नरः सुखं दोषप्रस्थं विरिच्यते निरामयः। एता दंतीहरीतक्यः प्लीहादीन् घ्नंति।

**सुधाक्षीरद्रवं चूर्णं त्रिवृतायाः सुभावितम् ॥९७॥**
**कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते।**

सुधाक्षीरेण द्रवं त्रिवृतायाश्चूर्णं प्रकृतत्वात्सुधाक्षीरेणैव सुभावितं कर्षप्रमाणं मधुसर्पिर्भ्यां लीढ्वा सम्यग्विरिच्यते।

**कुष्ठश्यामात्रिवृद्दंतीविजयाक्षारगुग्गुलुम् ॥ ९८ ॥**
**गोमूत्रेण पिबेदेकं तेन गुग्गुलुमेव वा।**

कुष्ठादीन् गोमूत्रेण पिबेत्। अथवा तेन गोमूत्रेण गुग्गुलुमेकमेव पिबेत्।

**निरूहान्कल्पसिद्ध्युक्तान् योजयेद्गुल्मनाशनान् ९९**

कल्कसिद्ध्युक्तान्निरूहान् गुल्मनाशनान् योजयेत्।

**कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम्।**
**गूढमांसं जयेद्गुल्मं क्षारारिष्टाग्निकर्मभिः ॥ १०० ॥**
**एकांतरं द्व्यंतरं वा विश्रमय्याऽथ वा त्र्यहम्।**
**शरीरदोषबलयोर्वर्धनक्षपणोद्यतः ॥ १०१ ॥**

कृतमूलादिधर्मयुक्तं गुल्मं क्षारादिभिर्जयेत्। एकांतरं द्व्यंतरं वा त्र्यहं वा विश्रमय्य शरीरदोषबलयोर्यथाक्रमं वर्धनक्षपणयोरुद्यतः सन्।

**अर्शोऽश्मरीग्रहण्युक्ताः क्षारा योज्याः कफोल्बणे।**

कफाधिके गुल्मेऽर्शोऽश्मरीग्रहणीप्रोक्ता ये क्षारास्ते योज्याः।

**देवदारुत्रिवृद्दंतीकटुकापंचकोलकम् ॥ १०२ ॥**
**स्वर्जिकायावशूकाख्यौ श्रेष्ठा पाठोपकुंचिकाः।**
**कुष्ठं सर्पसुगंधां च द्व्यक्षांशं पटुपंचकम् ॥ १०३ ॥**
**पालिकं चूर्णितं तैलवसादधिघृताप्लुतम्।**
**घटास्यांतः पचेत्पक्वमग्निवर्णे घटे च तम् ॥ १०४ ॥**
**क्षारं गृहीत्वा क्षीराज्यतक्रमद्यादिभिः पिबेत्।**
**गुल्मोदावर्तवर्ध्माशोंजठरग्रहणीकृमीन् ॥ १०५ ॥**
**अपस्मारगरोन्मादयोनिशुक्रामयाश्मरीः।**
**क्षारोगदोऽयं शमयेद्विषं चाखुभुजंगजम् ॥ १०६ ॥**

देवदार्वादिसुगंधापर्यंतं द्विकार्षिकं लवणपंचकं पालिकमेतत्समस्तं चूर्णीकृतं तैलवसादधिघृतैराप्लुतमालोडितं घटस्य मध्येंऽतर्धूमं पचेत्। सर्पसुगंधा नाकुली। अग्निवर्णे च घटे सति पक्वं तं क्षारं गृहीत्वा यथादोषं क्षीरादिभिः पिबेत्। गुल्मादीन् जयेत्। अक्षारोऽगद आखुजं भुजंगमजं च विषं द्राक् शमयेत्।

**श्लेष्माणं मधुरं स्निग्धं रसक्षीरघृताशिनः।**
**छित्त्वा भित्त्वाऽऽशयं क्षारः क्षारत्वात्पातयत्यधः ॥**

श्लेष्माणं मधुरं स्निग्धं मांसरसाद्याशिनः क्षारः क्षारत्वादाशयं छित्त्वा भित्त्वाऽधस्तात्पातयति।

**मंदेऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम्।**
**योजयेदासवारिष्टान्निगदान्मार्गशुद्धये ॥ १०८ ॥**

मंदेऽग्नावरुचौ च सत्यां मद्यैः सात्म्यैः सह सस्नेहमाहारमश्नतामासवादीन् मार्गशुद्धये योजयेत्।

अधुनाऽत्र पानमाह।

**शालयः षष्टिका जीर्णाः कुलत्था जांगलं पलम्।**
**चिरिबिल्वाग्नितर्कारीयवानीवरणांकुराः ॥ १०९ ॥**
**शिग्रुस्तरुणबिल्वानि बालं शुष्कं च मूलकम्।**
**बीजपूरकहिंग्वम्लवेतसक्षारदाडिमम् ॥ ११० ॥**
**व्योषं तक्रं घृतं तैलं भक्तं पानं तु वारुणी।**
**धान्याम्लं मस्तु तक्रं च यवानीबिडचूर्णितम् १११**
**पंचमूलशृतं वारि जीर्णं मार्द्वीकमेव वा।**

शालय इत्यादिभक्तांतं भक्तम्। पानं तु वा वारुण्यादिमार्द्वीकांतम्।

**पिप्पलीपिप्पलीमूलचित्रकाजाजिसैंधवैः ॥ ११२ ॥**
**सुरा गुल्मं जयत्याशु जांगलश्च विमिश्रितः।**

पिप्पल्यादिभिः सह सुरा शीघ्रमेव गुल्मं जयति। जांगलश्च पिप्पल्यादिभिर्विमिश्रितो गुल्मं जयति।

**वमनैर्लंघनैः स्वेदैः सर्पिःपानैर्विरेचनैः ॥ ११३ ॥**
**बस्तिक्षारासवारिष्टगुलिमकापथ्यभोजनैः ।**
**श्लैष्मिको बद्धमूलत्वाद्यदि गुल्मो न शाम्यति११४**
**तस्य दाहं हृते रक्ते कुर्यादंते शरादिभिः ।**

वमनादिभिः प्रयुक्तैः श्लैष्मिको गुल्मो बद्धमूलत्वाद्यदि न शाम्यति तस्य गुल्मस्य हृते रक्तेऽते दाहं शरादिभिः कुर्यात् ।
अथ दाहविधानं प्रस्तूयते ।

**अथ गुल्मं सपर्यंतं वाससांतरितं भिषक् ॥ ११५ ॥**
**नाभिबस्त्यंत्रहृदयं रोमराजीं च वर्जयेत् ।**
**नातिगाढं परिमृशेच्छरेण ज्वलताऽथवा ॥ ११६ ॥**
**लोहेनारणिकोत्थेन दारुणा तैंदुकेन वा ।**
**ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ॥ ११७ ॥**

गुल्मं पर्यंतैः सह वस्त्रेणांतरितमाच्छादितं नाभ्यादिवर्जयन्नातिशयेन परामृशेद्वैद्यः । शरेण लोहेन वा ज्वलता । किंभूतेन । आरणिकोत्थेन । अथवा तैंदुकेन काष्ठेन । अनंतरमग्निवर्णे शमिते सति शीतैः प्रदेहादिभिर्व्रण इव क्रिया स्यात् ।

**आमान्वये तु पेयाद्यैः संधुक्ष्याग्निं विलंघिते ।**
**स्वं स्वं कुर्यात्क्रमं मिश्रं मिश्रदोषे च कालवित् ॥**

अमान्वये च सति वह्निं पेयाद्यैः संधुक्ष्य विलंघिते सति स्वं स्वं क्रमं यथादोषं कुर्यात् । मिश्रदोषे मिश्रं क्रमं कुर्यात्कालविद्वैद्यः ।

**गतप्रसवकालायै नार्यै गुल्मेऽस्रसंभवे ।**
**स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ॥ ११९ ॥**

नार्यै अस्रसंभवे गुल्मे सति स्नेहविरेचनं दद्यात् । किंभूतायै । गतः प्रसवकालो यस्यास्तस्यै इति । एवं हि पुराणत्वे सुखसाध्यता रक्तगुल्मस्य स्यात् सुनिश्चितत्वं च । तथा स्निग्धं स्विन्नं शरीरं यस्यास्तस्यै ।

**तिलक्वाथो घृतगुडव्योषभार्गीरजोन्वितः ।**
**पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषितः ॥ १२० ॥**

रक्तोत्थे गुल्मे तिलक्वाथो घृतादियुक्तः पाने योषितः पुष्पे च नष्टे पानं भवेत् ।

**भार्गी कृष्णा करंजत्वग्ग्रंथिकामरदारुजम् ।**
**चूर्णं तिलानां क्वाथेन पीतं गुल्मरुजापहम् ॥ १२१॥**

भार्ग्यादिजं चूर्णं तिलक्वाथेन पीतं गुल्मरुजाहृत् ।

**पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।**
**गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् १२२**

पलाशक्षारपात्रे द्वे तैलसर्पिषोर्द्वे पात्रे पक्त्वा गुल्मशैथिल्यजननीं मात्रां प्रयोजयेत् । स्नेहाच्चतुर्गुणं तोयमत्राऽऽक्षेप्तव्यम् ।

**न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम् ।**

एवं कृते सति यदि न प्रभिद्येत रक्तगुल्मस्तदा योनिविरेचनं दद्यात् ।

तदाह ।

**क्षारेण युक्तं पललं सुधाक्षीरेण वा ततः ॥ १२३ ॥**
**ताभ्यां वा भावितान्दद्याद्योनौ कटुकमत्स्यकान् ।**
**वराहमत्स्यपित्ताभ्यां नक्तकान्वा सुभावितान् १२४**
**किण्वं वा सगुडक्षारं दद्याद्योनौ विशुद्धये ।**
**रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ॥ १२५ ॥**
**लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रयोजयेत् ।**
**बस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम् ॥१२६॥**

क्षारयुक्तं भृष्टतिलचूर्णं ततस्तस्यां योनौ दद्यात् । सुधाक्षीरेण वाऽन्वितं पललं दद्यात् । ताभ्यां क्षारसुधाक्षीराभ्यां भावितान् कटुमत्स्यकान् योनौ दद्यात् । वराहमत्स्ययोः पित्ताभ्यां कटुकमत्स्यकान्सुभावितान् योनौ दद्यात् । अथवा किण्वं गुडक्षारान्वितं योनिविशुद्ध्यर्थं योनौ दद्यात् । रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा । लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रयोजयेत् । दाशमूलिकं बस्तिं कल्पोक्तं क्षीरगोमूत्रसहितं क्षारान्वितमस्यै दद्यात् ।

**अवर्तमाने रुधिरे हितं गुल्मप्रभेदनम् ॥**

रक्तेऽप्रवर्तमाने सति गुल्मप्रभेदनं हितम् ।

**यमकाभ्यक्तदेहायाः प्रवृत्ते समुपेक्षणम् ॥ १२७ ॥**
**रसौदनस्तथाऽऽहारः पानं च तरुणी सुरा ।**

प्रवृत्ते रक्ते सति यमकाभ्यक्तगात्रायाः समुपेक्षणं सम्यगुपेक्षणं हितम् । तथाऽऽहारे रसौदनो हितः । तरुणी सुरा च पानम् ।

**रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः ॥ १२८ ॥**
**कार्या वातरुगार्तायाः सर्वा वातहराः पुनः ।**
**आनाहादावुदावर्तबलासघ्न्यो यथायथम् ॥ १२९ ॥**

रुधिरेऽतिप्रवृत्ते पुना रक्तपित्तहराः क्रियाः कार्याः । वातरुगार्तायाः पुनः सर्वा वातहराः क्रियाः कार्याः । आनाहादौ सत्युदावर्तबलासजितः क्रियाः कार्या इति ।

इति श्रीमदरुणदत्तविरचितायां सर्वांगसुंदराख्यायां चिकित्सास्थाने गुल्मचिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पंचदशोऽध्यायः ।

अस्मादनंतरमुदरचिकित्सितं प्रक्रम्यते । संबंधश्चाऽस्य गुल्मोत्पत्तौ किल । यथा वायुः प्रधानं कारणं प्रायस्तथोदराणामपीत्याह ।

**अथाऽत उदरचिकित्सितं व्याख्यास्यामः ।**
**दोषातिमात्रोपचयात्स्रोतोमार्गनिरोधनात् ।**
**संभवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥ १ ॥**

दोषाणामतिमात्रमुपचयो वृद्धिस्तस्मात्स्रोतसां मार्गा मुखरूपाणि छिद्राणि तेषां निरोधाद्भवत्युदरम् । यतस्तस्मादेनमुदरिणमभीक्ष्णं विरेचयेत् ।

प्रायेण वातप्रधानत्वादस्य व्याधेः स्निग्धं विरेचनमाह ।

**पाययेत्तैलमैरंडं समूत्रं सपयोऽपि वा ।**
**मासं द्वौ वाऽथवा गव्यं मूत्रं माहिषमेव वा ॥ २ ॥**
**पिबेद् गोक्षीरभुक् स्याद्वा करभीक्षीरवर्तनः ।**
**दाहानाहातितृण्मूर्छापरीतस्तु विशेषतः ॥ ३ ॥**

तैलमैरंडं गोमूत्रान्वितं क्षीरयुतं वा मासमेकमथवा द्वौ मासौ पाययेत् । दोषादिवशाद् गव्यं मूत्रं माहिषं वा मूत्रं पिबेत् । अथवा गोक्षीरभुग्भवेत् । करभीक्षीरवर्तनो वा स्यात् । दाहादियुतस्तु विशेषेणैवंवृत्तिः स्यात् ।

**रूक्षाणां बहुवातानां दोषसंशुद्धिकांक्षिणाम् ।**
**स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत् ॥ ४ ॥**

रूक्षादीनां स्नेहनीयानि सर्पींष्युदरहंतॄणि योजयेत् ।

**षट्पलं दशमूलांबु मस्तुद्व्याढकसाधितम् ।**

पंचकोलयवक्षारमिति षट्पलं दशमूलांबुना मस्तुनो द्व्याढकेन च साधितं घृतप्रस्थं षट्पलोपलक्षणलक्षितं योजयेत् ।

**नागरं त्रिपलं प्रस्थं घृततैलात्तथाऽढकम् ॥ ५ ॥**
**मस्तुनः साधयित्वैतत्पिबेत्सर्वोदरापहम् ।**
**कफमारुतसंभूते गुल्मे च परमं हितम् ॥ ६ ॥**

तथा शुंठ्याः पलत्रयं प्रस्थं घृततैलान्मस्तुन आढकमेतत्साधयित्वा सर्वोदरापहं पिबेत् । कफमारुतोत्थे च गुल्मे सुष्ठु हितमेतत् ।

**चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ।**
**कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ७ ॥**

सर्पिषः प्रस्थं तदपेक्षया चतुर्गुणे जले गोमूत्रे द्विगुणे चित्रकपले कल्के सिद्धं सयवक्षारमुदरी पिबेत् ।

**यवकोलकुलत्थानां पंचमूलस्य चांभसा ।**
**सुरासौवीरकाभ्यां च सिद्धं वा पाययेद्धृतम् ॥ ८ ॥**

यवादिकाथेन सुराकांजिकाभ्यां सिद्धं वा घृतं पाययेत् ।

**एभिः स्निग्धाय संजाते बले शांते च मारुते ।**
**स्रस्ते दोषाशये दद्यात्कल्पदृष्टं विरेचनम् ॥ ९ ॥**

एभिः स्नेहैः स्निग्धाय नराय बले च संजाते सति पवने च शांते स्रस्ते दोषाशये सति कल्पोक्तं विरेचनं दद्यात् ।

**पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम् ।**
**कंपिल्लनीलिनीकुंभभागान् द्वित्रिचतुर्गुणान् ॥ १० ॥**
**पिबेत्संचूर्ण्य मूत्रेण पेयां पूर्वं ततो रसैः ।**
**विरक्तो जांगलैरद्यात्ततः षड्दिवसं पयः ॥ ११ ॥**
**शृतं पिबेद्व्योषयुतं पीतमेवं पुनःपुनः ।**
**हंति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥ १२ ॥**

पटोलमूलादिकार्षिकं कंपिल्लादीनां भागान् क्रमेण द्वित्रिचतुर्गुणान् संचूर्ण्य गोमूत्रेण पिबेत् । अनंतरं विरिक्तः सन् पेयां भुक्त्वा जांगलमांसरसैः शाल्यादिकमद्यात् । ततोऽनंतरं षड्दिवसानि क्वथितं क्षीरं त्रिकटुयुतं पिबेत् । एवं पुनरेतत्पीतं सर्वोदराणि जातसलिलान्यपि हंति ।

**गवाक्षीं शंखिनीं दंतीं तिल्वकस्य त्वचं वचाम् ।**
**पिबेत्कर्कंधुमृद्वीकाकोलांभोमूत्रसीधुभिः ॥ १३ ॥**

गवाक्ष्यादिकं चूर्णं कर्कंध्वादिजलमूत्रसीध्वन्यतमेन पिबेत् ।

**यवानी हपुषाधान्यं शतपुष्पोपकुंचिका ।**
**कारवी पिप्पलीमूलमजगंधा शठी वचा ॥ १४ ॥**
**चित्रकाजाजिकं व्योषं स्वर्णक्षीरी फलत्रयम् ।**
**द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपंचकम् ॥ १५ ॥**
**विडंगं च समांशानि दंत्या भागत्रयं तथा ।**
**त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा ॥ १६ ॥**
**एष नारायणो नाम चूर्णो रोगगणापहः ।**
**नैनं प्राप्याभिवर्धंते रोगा विष्णुमिवासुराः ॥ १७ ॥**
**तक्रेणोदरिभिः पेयो गुल्मिभिर्बदरांबुना ।**
**आनाहवाते सुरया वातरोगे प्रसन्नया ॥ १८ ॥**
**दधिमंडेन विट्संगे दाडिमांभोभिरर्शसैः ।**
**परिकर्ते सवृक्षाम्लैरुष्णांबुभिरजीर्णके ॥ १९ ॥**
**भगंदरे पांडुरोगे कासे श्वासे गलग्रहे ।**
**हृद्रोगे ग्रहणीदोषे कुष्ठे मंदेऽनले ज्वरे ॥ २० ॥**
**दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।**
**यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २१ ॥**

यवान्यादीनि विडंगपर्यंतानि समांशानि । दंत्या भागास्त्रयः । त्रिवृद्विशालयोर्द्वौ द्वौ भागौ । सातलायाश्च चत्वारः । एष चूर्णो नारायणो नाम रोगगणापहः । एनं चूर्णं प्राप्य रोगा नाभिवर्धंते । कं के । यथा विष्णुमिवासुराः । उदरीभिरेष तक्रेण पेयः । गुल्मादिभिर्बदरवारिभिः पेयः । भगंदरादिष्वेतद्यथास्नेहपीतेन विरेचनमेतत्पेयम् ।

**हपुषां कांचनक्षीरीं त्रिफलां नीलिनीफलम् ।**
**त्रायंतीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् ॥**
**सैंधवं काललवणं पिप्पलीं चेति चूर्णयेत् ।**
**दाडिमत्रिफलामांसरसमूत्रसुखोदकैः ॥ २३ ॥**
**पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।**
**श्वित्रे कुष्ठेष्वजरके सदने विषमेऽनले ॥ २४ ॥**

**शोफार्शःपांडुरोगेषु कामलायां हलीमके ।**
**वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥**

हपुषादिकमेतच्चूर्णं दाडिमादिरसैः पेयं गुल्मादिषु विरेकेण चैतदाशु वातपित्तकफान् संप्रसाधयेत् । काललवणं कृष्णलवणम् ।

**नीलिनीं निचुलं व्योषं क्षारौ लवणपंचकम् ।**
**चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ २६ ॥**

नीलिन्यादिकं चूर्णं सर्पिषा पिबेत् । उदरगुल्मघ्नम् ।

**पूर्ववच्च पिबेद्दुग्धं क्षामः शुद्धोऽतरांतरः ।**
**कारभं गव्यमाजं वा दद्यादात्ययिके गदे ॥ २७ ॥**
**स्नेहमेव विरेकार्थे दुर्बलेभ्यो विशेषतः ।**

पूर्ववच्च यथा पटोलमूलादिके चूर्णे कथितं तथैव शुद्धः क्षामः सन् जांगलरसादनंतरमंतरांतरा मध्ये मध्ये दुग्धं पिबेत् । कारभं गव्यं छागं वा क्षीरम् । आत्ययिके रोगे विरेकार्थे स्नेहमेव दद्यात् । दुर्बलेभ्यो वा विशेषेण ।

**हरीतकीसूक्ष्मरजः प्रस्थयुक्तं घृताढकम् ॥ २८ ॥**
**अग्नौ विलाप्य मथितं खजेन यवपल्लके ।**
**निधापयेत्ततो मासादुद्धृतं गालितं पचेत् ॥ २९ ॥**
**हरीतकीनां क्वाथेन दध्ना चाऽम्लेन संयुतम् ।**
**उदरं गरमष्ठीलामानाहं गुल्मविद्रधिम् ॥ ३० ॥**
**हंत्येतत्कुष्ठमुन्मादमपस्मारं च पानतः ।**

हरीतकीसूक्ष्मरजश्चूर्णं प्रस्थयुक्तं घृतसाढकमग्नौ विलाप्य खजेनालोडितं यवपल्लके यवराशिमध्ये निधापयेत् । ततो मासादनंतरमुद्धृतं गालितं हरीतकीनां क्वाथेन सामान्यपरिभाषोक्तप्रमाणेनाऽम्लेन दध्ना संयुतं च पचेत् । एतच्च पानेनोदरादीन् हंति ।

**स्नुक्क्षीरयुक्ताद्गोक्षीराच्छृतशीतात्खजाहतात् ॥ ३१**
**यज्जातमाज्यं स्नुक्क्षीरसिद्धं तच्च तथागुणम् ।**

स्नुक्क्षीरमिश्रिताद्गोक्षीराच्छृतशीतात् खजेनाहताद्यज्जातं सर्पिस्तत्स्नुक्क्षीरपक्कं पूर्वगुणम् ।

**क्षीरद्रोणं सुधाक्षीरप्रस्थार्धेन युतं दधि ॥ ३२ ॥**
**जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ।**

क्षीरद्रोणं स्नुक्क्षीरप्रस्थार्धेन युतं दधिजातं मथित्वा तत्सर्पिस्त्रिवृतापक्कं पूर्वगुणम् ।

**तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ॥ ३३ ॥**
**स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ।**

तथा सिद्धं पूर्ववत्पक्कं घृतप्रस्थं क्षीरेऽष्टगुणे स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन पिबेत् ।

**एषां चाऽनु पिबेत्पेयां रसं स्वादु पयोऽथवा ॥ ३४ ॥**

एषां च घृतादीनां पश्चात् पेयादीन् पिबेत् ।

**घृते जीर्णे विरिक्तश्च कोष्णं नागरसाधितम् ।**
**पिबेदंबु ततः पेयां ततो यूषं कुलत्थजम् ॥ ३५ ॥**

घृते जीर्णे विरिक्तश्च सन् कोष्णं शुंठीसाधितं जलं पिबेत् । अनंतरं पेयां पिबेत् । कुलत्थयूषं च पिबेत् ।

**पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वाऽप्रतिभोजितः ।**
**पुनः पुनः पिबेत्सर्पिरानुपूर्व्याऽनयैव च ॥ ३६ ॥**

एवं त्र्यहं रूक्षः सन् पुनरपि प्रतिभोजितः पुनः पुनरनेनैव क्रमेण सर्पिः पिबेत् ।

**घृतान्येतानि सिद्धानि विदध्यात्कुशलो भिषक् ।**
**गुल्मानां गरदोषाणामुदराणां च शांतये ॥ ३७ ॥**

एतानि प्रागुक्तानि सिद्धानि घृतानि कुशलो वैद्यः कुर्वीत गुल्मादीनां शांतये ।

**पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।**
**तैल्वकं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत् ॥ ३८ ॥**

पीलुकल्कपक्कं घृतमानाहभेदनं पिबेत् । तैल्वकं वा नीलिनीघृतं मिश्रकं वा स्नेहं पिबेत् ।

**हृतदोषः क्रमादश्नन् लघुशाल्योदनं प्रति ।**

हृतदोषः क्रमेण शाल्योदनमतिलघुगुणयुक्तमल्पं खादेत् । एवं संसर्जनक्रम आदरितव्यः ।

**उपयुंजीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥**
**हरीतकीसहस्रं वा गोमूत्रेण पयोनुपः ।**
**सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥ ४० ॥**
**पिप्पलीं वर्धमानां वा क्षीराशी वा शिलाजतु ।**
**तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा ॥ ४१ ॥**

जठरी दोषशेषस्य निवृत्तये हरीतकीसहस्रं गोमूत्रेणासकृद्भावितं पयोनुपः सन् खादेत् । अथवा स्नुहीदुग्धेनासकृद्भावितं पिप्पलीसहस्रमुपयुंजीत । पिप्पलीं वर्धमानां वा रसायनविधानेनोपयुंजीत । अथवा दुग्धाशनः सन्नद्रिजमुपयुंजीत । तथैव गुग्गुलं प्रयुंजीत । तथा तुल्यार्द्रकरसं क्षीरमुपयुंजीत ।

**चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ।**
**मासं युक्तस्तथा हस्तिपिप्पलीविश्वभेषजम् ॥ ४२ ॥**

अथवा चित्रकदेवदारुणोः कल्कं क्षीरेण पिबेत् । तथा मासं हस्तिपिप्पलीविश्वभेषजकल्कं युक्तो नियतः सन् क्षीरेण पिबेत् ।

**विडंगं चित्रको दंती चव्यं व्योषं च तैः पयः ।**
**कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ४३ ॥**

विडंगादिभिः कल्कैः कोलप्रमाणैरालोडितं पयः पीत्वा प्रवृद्धमुदरं जयेत् ।

**भोज्यं भुंजीत वा मासं स्नुहीक्षीरघृतान्वितम् ।**
**उत्कारिकां वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥ ४४**

स्नुक्क्षीरादियुतं भोज्यमाहारं मासं वा भुंजीत । स्नुक्क्षीरसिद्धं घृतं स्नुक्क्षीरघृतम् । स्नुक्क्षीरयुतं वा घृतं स्नुक्क्षीरघृतम् । उत्कारिकां वा स्नुक्क्षीरघृतयुतां भुंजीत । पीतः कोरंटकः ।

**पार्श्वशूलमुपस्तंभहृद्ग्रहं च समीरणः ।**
**यदि कुर्यात् ततस्तैलं बिल्वक्षारान्वितं पिबेत् ॥४५**
**पक्वं वा टिंटुकबलापलाशं तिलजालजैः ।**
**क्षारैः कदल्यपामार्गतर्कारीजैः पृथक्कृतैः ॥ ४६ ॥**

समीरणः पार्श्वशूलादिकं यदि कुर्यात् ततस्तैलं बिल्वादियुतं पिबेत् । अथवा मयूरजंघादिजैः क्षारैः कदल्यपामार्गतर्कारीजैः पृथक्कृतैः पक्वं तैलं पिबेत् ।

**कफे वातेन पित्ते वा ताभ्यां वाप्यावृतेऽनिले ।**
**बलिनः स्वौषधं युक्तं तैलमेरंडजं हितम् ॥ ४७ ॥**

कफे वातेनावृते पित्ते वा वातेनावृते ताभ्यां कफपित्ताभ्यां वाऽऽवृतेऽनिले सति बलिनो नरस्य स्वौषधयुतमेरंडतैलं हितम् ।

**देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।**
**साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः ॥ ४८ ॥**

देवदार्वादिभिर्गोमूत्रसहितैर्विरिक्तं म्लानमुदरं बाह्यांतः प्रलिंपेत् ।

**वृश्चिकालीवचाशुंठीपंचमूलपुनर्नवात् ।**
**वर्षाभूधान्यकुष्ठाच्च क्वाथैर्मूत्रैश्च सेचयेत् ॥ ४९ ॥**

वृश्चिकाल्यादीनां क्वाथैर्मूत्रैश्च जठरं सेचयेत् ।

**विरिक्तं म्लानमुदरं स्वेदितं साल्वलादिभिः ।**
**वाससा वेष्टयेदेवं वायुर्नाऽऽध्मापयेत्पुनः ॥ ५० ॥**

उदरं विरिक्तं म्लानं साल्वलादिभिः स्वेदितं ततो वस्त्रेण वेष्टयेत् । एवं कृते सति वायुर्न पुनराध्मापयेत् ।

**सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् ।**
**सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ५१ ॥**

सुविरिक्तस्य नरस्य यस्य पुनराध्मानं स्यात्तमुदरिणं नरं पुनरेव निरूहैः सुस्निग्धैरम्ललवणैश्चोपाचरेत् ।

**सोपस्तंभोऽपि वा वायुराध्मापयति यं नरम् ।**
**तीक्ष्णाः सक्षारगोमूत्राः शस्यंते तस्य बस्तयः ॥५२**

सहोपस्तंभेन कफाद्याधारकेण वर्तते सोपस्तंभो वायुर्यं नरमाध्मापयति तस्य तीक्ष्णा बस्तयः क्षारगोमूत्राभ्यां सह शस्यंते ।

**इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः ।**

इत्येवं सामान्येनोदरिणां क्रियाः सिद्धाः प्रोक्ताः ।

**वातोदरेऽथ बलिनं विदार्यादिशृतं घृतम् ॥ ५३ ॥**
**पाययेत्तु ततः स्निग्धं स्वेदितांगं विरेचयेत् ।**
**बहुशस्तैल्वकेनैनं सर्पिषा मिश्रकेण वा ॥ ५४ ॥**

वातोदरे सति बलवंतं पुरुषं विदार्यादिगणेन पक्वं घृतं पाययेत् । अनंतरं स्निग्धं स्वेदितशरीरमेनं बहुशस्तैल्वकेन घृतेन विरेचयेत् । मिश्रकेण वा घृतेन विरेचयेत् ।

**कृते संसर्जने क्षीरं बलार्थमवचारयेत् ।**
**प्रागुत्क्लेशान्निवर्तेत बले लब्धे क्रमात्पयः ॥ ५५ ॥**

कृते संसर्जने सति क्षीरं बलदानाय दद्यात् । उत्क्लेशात् प्रायेण कफोपचितेरुत्क्लेशं दृष्ट्वाऽनंतरं बले लब्धे सति क्रमेण क्षीरं निवर्तयेन्न सहसैव ।

**यूषै रसैर्वा मंदाम्ललवणैरेधितानलम् ।**
**सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेत्ततः ॥५६॥**
**तीक्ष्णाऽधोभागयुक्तेन दाशमूलिकबस्तिना ।**

ततोऽनंतरमुदरिणं यूषादिभिः समिद्धाग्निमुदावर्तवंतं पुनरपि स्निग्धं स्विन्नं दाशमूलिकबस्तिना निरूहयेत् । दाशमूलिको बस्तिर्द्विपंचमूलत्रिवृतफलमूलानि साधयेदित्यादिः कल्पोक्तः । तेन । किंभूतेन । तीक्ष्णाऽधोभागयुक्तेन । अधोभागेऽधस्ताच्छरीरे युक्तो यो भागः । तीक्ष्णश्चासावधोभागश्च तत्र युक्तश्च तेन ।

**तिलोरुबूकतैलेन वातघ्नाम्लशृतेन च ॥ ५७ ॥**
**स्फुरणाक्षेपसंध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ।**
**रूक्षं बद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥**
**अविरेच्यस्य शमना बस्तिक्षीरघृतादयः ।**

रूक्षं बद्धशकृद्वातं दीप्तानलं तिलैरेरंडतैलेन वातघ्नैर्द्रव्यैरम्लैश्च शृतेनानुवासयेत् । स्फुरणादिसद्भावे सत्यविरेच्यस्योदरिणो नरस्य शमनाय बस्त्यादयः प्रयोज्याः । न तु विरेच्यो नवज्वरीत्यादयो विरेचनविधावुक्ताः ।

**बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥**
**श्यामात्रिभंडीत्रिफलाविपक्वेन विरेचयेत् ।**
**सितामधुघृताढ्येन निरूहोऽस्य ततो हितः ॥६०॥**
**न्यग्रोधादिकषायेन स्नेहबस्तिश्च तच्छृतः ।**

बलवंतं पुरुषं पैत्ते जठरे सति मधुरवर्गसिद्धेन घृतेन संस्नेह्य श्यामादिभिर्विपक्वेन सर्पिषा विरेचयेत् । श्यामा मालविका । त्रिभंडी त्रिवृत् । अनंतरं शर्करामाक्षिकघृतबहुलेन तथा तेनैव न्यग्रोधादिकषायेण शृतः पक्वोऽस्याऽऽतुरस्य निरूहो हितः । तेनैव न्यग्रोधादिना विपक्वः स्नेहबस्तिरनुवासने हितः । ननु बलिनमित्युक्तम् । यतः प्रागभ्यधायि । नष्टचेष्टा बलाहारा इति । अत्रोच्यते । भेषजवेगसहिष्णुमात्रमत्र बलवत्त्वं परिकल्प्य बलिनमित्युक्तं नतु प्रकृष्टबलवंतमित्यदोषः ।

**दुर्बलं त्वनुवास्यादौ शोधयेत्क्षीरबस्तिभिः ॥ ६१ ॥**
**जाते त्वग्निबले स्निग्धं भूयो भूयो विरेचयेत् ।**
**क्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन तम् ॥ ६२ ॥**
**सातलात्रायमाणाभ्यां शृतेनाऽऽरग्वधेन वा ।**

**सकफे वा समूत्रेण सतिक्ताज्येन सानिले ॥ ६३ ॥**
**पयसान्यतमेनैषां विदार्यादिशृतेन वा ।**
**भुंजीत जठरं चाऽस्य पायसेनोपनाहयेत् ॥ ६४ ॥**

दुर्बलं तु नरं प्रागनुवास्य क्षीरबस्तिभिः शोधयेत् । अग्निबले च जाते स्निग्धं संतं पुनः पुनर्विरेचयेत् । केन । क्षीरेण । त्रिवृचूर्णयुतेनैरंडतैलशृतेन वा क्षीरेण सातलात्रायंतीभ्यां वा शृतेन पयसा कर्णिकारेण वा शृतेन क्षीरेणारग्वधेन पित्तोदरिणः सुतरां बलापेक्षित्वाद्दुर्बलमित्युक्तम् । कफयुते पित्ते समूत्रेण क्षीरेणैषामन्यतमेन सानिले पित्ते तिक्ताज्येन सह पयसा पूर्वोक्तद्रव्याणामन्यतमेन शृतेन विरेचयेत् । तिक्तद्रव्ययुतमाज्यं तिक्ताज्यं कुष्ठोक्तम् । तिक्तं घृतं वा । विदार्यादिशृतेन वा पयसा भुंजीत भोजनं कुर्वीत । जठरं चाऽस्य पायसेनोपनाहयेत् ।

**पुनः क्षीरं पुनर्बस्तिं पुनरेव विरेचनम् ।**
**क्रमेण ध्रुवमातिष्ठन्यतः पित्तोदरं जयेत् ॥ ६५ ॥**

पुनः क्षीरं पुनर्बस्तिं पुनरेव विरेचनं क्रमेण ध्रुवमातिष्ठन्नाचरन् यतो यत्नवान् सन् पित्तोदरं जयेत् । पुनः क्षीरमित्यादिषु पुनःशब्दो वीप्सार्थः । एतच्च क्रमेण ध्रुवमातिष्ठन्नित्यतो लब्धम् ।

**वत्सकादिविपक्वेन कफे संस्नेह्य सर्पिषा ।**
**स्विन्नं स्नुक्क्षीरसिद्धेन बलवंतं विरेचितम् ॥ ६६ ॥**
**संसर्जयेत्कटुक्षारयुक्तैरन्नैः कफापहैः ।**

कफे कफोदरे बलवंतमुदरिणं वत्सकादिविपक्वेन सर्पिषा संस्नेह्य स्विन्नं संतं स्नुक्क्षीरसिद्धेन घृतेन बलिनं विरेचितं संतं संसर्जयेत् पेयाद्यन्नैरुपक्रमेत् । किंभूतैः । कटुक्षारद्रव्ययुतैरन्नैः कफघ्नैः । कटुक्षारयुतानां कफघ्नत्वेऽपि कफघ्नैरित्युक्तमतिशयार्थम् ।

**मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितः ॥६७॥**
**मुष्ककादिकषायेण स्नेहबस्तिश्च तच्छृतः ।**
**भोजनं व्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥**

ततः संसर्जनादनंतरं निरूहो गोमूत्रत्रिकटुकतैलबहुलो मुष्ककादिवर्गक्वाथेनाऽस्य कफोदरिणो हितः । स्नेहबस्तिरनुवासनम् । तेनैव शृतो हितः । भोजनं व्योषयुक्तेन दुग्धेन सह हितं कुलत्थरसेन वा ।

**स्तैमित्यारुचिहृल्लासैर्मंदेऽग्नौ मद्यपाय च ।**
**दद्यादरिष्टान् क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥**

मद्यपाय नराय मंदेऽग्नौ स्तैमित्यादौ च सत्यरिष्टान् क्षारांश्च दद्यात् । कफेन स्त्यानं स्थिरं जठरं यस्य तस्मिन्निदं कार्यम् ।

**हिंगूपकुल्ये त्रिफलां देवदारु निशाद्वयम् ।**
**भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥**
**शुंठीं मार्द्रीं घनं कुष्ठं सरलं पटुपंचकम् ।**
**दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥**
**अंतर्धूमं ततः क्षाराद्बिडालपदकं पिबेत् ।**
**मदिरादधिमंडोष्णजलारिष्टसुरासवैः ॥ ७२ ॥**
**उदरं गुल्ममष्ठीलां तून्यौ शोफं विसूचिकाम् ।**
**प्लीहहृद्रोगगुदजानुदावर्तं च नाशयेत् ॥ ७३ ॥**

हिंग्वादिकं जर्जरीकृत्य दधिस्नेहचतुष्कयुतमंतर्धूमं दाहयेत् । तस्मात् क्षाराद्बिडालपदकं मदिरादिभिः पिबेत् । एष च क्षार उदरगुल्मादीन् नाशयेत् ।

**जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः ।**
**सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥**

दुर्बलस्य नरस्य कफोदरमरिष्टादिपानेन जयेत् । क्षारयुततैलपानैश्च जयेत् । अयस्कृतिः प्रमेहचिकित्सिते प्रोक्ता ।

**उपनाह्यं ससिद्धार्थकिण्वैर्बीजैश्च मूलकात् ।**
**कल्कितैरुदरस्वेदमभीक्ष्णं चाऽत्र योजयेत् ॥ ७५ ॥**

तथोपनाह्यं जठरमस्य दुर्बलस्य मूलकबीजैः कल्कितैः ससर्षपकिण्वैर्जयेत् । तथा नित्यमुदरस्वेदमत्र योजयेत् ।

**संनिपातोदरे कुर्यान्नातिक्षीणबलानले ।**
**दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥७६॥**
**दंतीद्रवंतीफलजं तैलं पाने च शस्यते ।**

संनिपातोदरेऽर्थात्संनिपातोदरवति नरे नातिक्षीणबलानलेऽधिकदोषानुरोधेन तद्वशेनैव क्रियामिमामनंतरोक्तां कुर्यात् । किं कृत्वा । प्रत्याख्याय । अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेदिति । एतदुदरमशक्यप्रतीकारमित्येवमुक्त्वा । अथोपक्रममाह । दंत्यादितैलं पाने च शस्यते ।

**क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥**
**दद्यादापृच्छ्य तज्ज्ञातीन् पातुं मद्येन कल्कितम् ।**
**मूलं काकादनीगुंजाकरवीरकसंभवम् ॥ ७८ ॥**

क्रियामतिक्रांते जठरे विशेषेण त्रिदोषजे तस्योदरिणो बंधून् पृष्ट्वा यथैतद्विषं विषमं किं जीवयत्युत मारयतीति संदेह इत्याद्युक्त्वा प्रयोज्यं वक्ष्यमाणं चैतत् । पातुमित्यादि । काकादन्यादिजं मूलं कल्कितं मद्येन पातुं दद्यात् । काकादनी काकणंतिका ।

**पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ।**
**यस्मिन्वा कुपितः सर्पो विमुंचति फले विषम् ७९**
**तेनास्य दोषसंघातः स्थिरो लीनो विमार्गगः ।**
**बहिः प्रवर्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥**
**तथा व्रजत्यगदतां शरीरांतरमेव वा ।**

अथवा पानभोजनसंयुक्तं स्थावरं विषं दद्यात् । यस्मिन् फले सर्पः कुपितो विषं मुंचति तद्वा दद्यात् । तेन विषेण प्रमाथिनाऽस्य दोषसंघातो भिन्नो बहिः प्रवर्तते । किंभूतः । स्थिरस्तथा लीनो धात्वादिषु । तथोन्मार्गगामी । तथा तेन प्रकारेणानुष्ठितेनोदर्यगदतां निर्व्याधितां व्रजति । शरीरांतरं वा याति । म्रियत इत्यर्थः ।

**हृतदोषं तु शीतांबुस्नातं तं पाययेत्पयः ॥ ८१ ॥**

**पेयां वा त्रिवृतः शाकं मंडूक्या वास्तुकस्य वा ।**
**कालशाकं यवाख्यं वा खादेत्स्वरससाधितम्॥८२॥**
**निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।**
**मासमेकं ततश्चैवं तृषितः स्वरसं पिबेत् ॥ ८३ ॥**

हृतदोषं च तं शीतजलेन स्नातं संतं पयः शीतं पाययेत् । पेयामथवा त्रिवृच्छाकं मंडूकीशाकं वास्तुकशाकं कालशाकं यवशाकं वा खादेत् । किंभूतम् । स्वरसेन साधितम् । तथाऽम्ललवणस्नेहवर्जितम् । तथा स्विन्नास्विन्नभोजी सन् । स्विन्नास्विन्नमिति । क्तेन नञ्विशिष्टेनेति समासः । मासमेकं यावदेतदश्नीयात् । तृषितः सन् स्वरसं प्रकृतत्वात्तच्छाकस्य पिबेत् ।

**एवं विनिर्हृते शाकैर्दोषे मासात् परं ततः ।**
**दुर्बलाय प्रयुंजीत प्राणभृत्कारभं पयः ॥ ८४ ॥**

एवं शाकविशेषेण दोषे निर्हृते प्रायेण जलाख्ये ततोऽनंतरं मासात् परं दुर्बलाय पुरुषाय कारभं क्षीरं प्राणकरं प्रयुंजीत ।

**प्लीहोदरे यथादोषं स्निग्धस्य स्वेदितस्य च ।**
**सिरां भुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ॥८५॥**

प्लीहोदरे दोषानुसारेण स्निग्धस्य स्वेदितस्य च दध्ना भुक्तवतः सिरां वामे बाहौ विमोक्षयेत् ।

**लब्धे बले च भूयोऽपि स्नेहपीतं विशोधितम् ।**
**समुद्रशुक्तिजं क्षारं पयसा पाययेत्तथा ॥ ८६ ॥**
**अम्लश्तं बिडकणाचूर्णाढ्यं नक्तमालजम् ।**
**सोभांजनस्य वा काथं सैंधवाग्निकणान्वितम्॥८७॥**
**हिंग्वादिचूर्णं क्षाराज्यं युंजीत च यथाबलम् ।**

बले च जाते पुनरपि स्नेहपीतं विशोधितं संतं क्षारं समुद्रशुक्त्योत्थं पयसा पाययेत् । तथा करंजजं क्षारमम्लैः कांजिकादिभिः श्टतं बिडकणाचूर्णभूयिष्ठं पाययेत् । अथवा सोभांजनस्य क्वाथं सैंधवादियुतं पिबेत् । हिंग्वादिजं चूर्णं क्षारं तथा घृतं षट्पलादि यथाबलं प्रयुंजीत । ननु यथाबल इहोच्यते । प्राक् चाभ्यधायि । नष्टचेष्टाबलाहारा इति । तदिमे वाक्ये परस्परं व्याघ्नाते। ब्रूमः । बलशब्देनेह भेषजबलं सोढुं शक्तं यद्बलमात्रं तदिह परिकल्पितम् । पूर्वं च प्रकृष्टं यद्बलं तद्विवक्षितमिति नाऽत्र पूर्वापरव्याहतत्वम् ।

**पिप्पलीनागरं दंती समांशं द्विगुणाभयम् ॥ ८८ ॥**
**बिडार्धांशयुतं चूर्णमिदमुष्णांबुना पिबेत् ।**

पिप्पलीनागरयोर्द्वावंशौ । दंत्या द्वौ भागौ । हरीतक्याश्च द्वौ भागौ । बिडलवणस्यार्धभाग इत्येवं चूर्णमुष्णांबुना पिबेत् ।

**विडंगं चित्रकं सक्तून् सघृतान् सैंधवं वचाम्॥८९**
**दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ।**

विडंगादिकं कपाले कर्परे दग्ध्वा क्षीरेण गुल्मप्लीहघ्नं पिबेत् ।

**तैलोन्मिश्रैर्बदरकपत्रैः संमर्दितैः समुपनद्धः ॥९०॥**
**मुशलेन पीडितोऽनु याति प्लीहा पयोभुजो नाशम्**

बदरकस्य पत्रैस्तैलमिश्रितैः सुष्ठु मर्दितैः समुपनद्धोऽनु पश्चाच्च मुशलेन पीडितः प्लीहा क्षीराशिनो नाशं व्रजति । उपगीतिवृत्तम् ।

**रोहीतकलताः कृत्ताः खंडशः साभयाजले ॥ ९१ ॥**
**मूत्रे वाऽऽसुनुयात्तत्तु सप्तरात्रस्थितं पिबेत् ।**
**कामलाप्लीहगुल्मार्शःकृमिमेहोदरापहम् ॥ ९२ ॥**

रोहीतकस्य लताः खण्डं खण्डं कृत्ताः सहरीतकीजले मूत्रे वाऽऽसुनुयात् । तच्च सप्तरात्रं स्थितं जलं मूत्रं वा पिबेत् । हरीतक्याश्च लेहवद्भुंजीत तत्पीतं कामलादिघ्नम् ।

**रोहीतकत्वचः कृत्वा पलानां पंचविंशतिम् ।**
**कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ९३ ॥**
**पालिकैः पंचकोलैस्तु तैः समस्तैश्च तुल्यया ।**
**हरीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ९४ ॥**
**प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।**

रोहीतकत्वचः पलानां पंचविंशतिं कृत्वा बदरप्रस्थद्वयसंयुक्तं कषायमवतारयेत् । पंचकोलैः पालिकैस्तैः समस्तैः पंचकोलैर्हरीतकत्वचा तुल्यया पिष्टैर्घृतप्रस्थं विपाचयेत् । एतद्घृतं प्रयोजितं प्लीहाभिवृद्धिं द्रागेव शमयति ।

**कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ॥ ९५ ॥**
**तैलं पक्वं जयेत्पानात्प्लीहानं कफवातजम् ।**

कदल्यादीनां क्षारेण तैलं पक्वं पानेन कफवातोत्थं प्लीहानं पराकरोति ।

**अशांतौ गुल्मविधिना योजयेदग्निकर्म च ॥ ९६ ॥**
**अप्राप्तपिच्छासलिले प्लीह्नि वातकफोल्बणे ।**

एवमप्यनुपशांतौ वातकफोत्थे प्लीह्न्यसंजातपिच्छोदके गुल्मविधानेनाग्निकर्म योजयेत् ।

**पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ॥ ९७ ॥**
**रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ।**

पैत्तिके पित्तोल्बणे प्लीह्नि जीवनीयगणसाधितानि सर्पींषि तथा क्षीरबस्तिरक्तावसेकादि च शस्यते । सिरां भुक्तवतो दध्ना वामबाहौ विमोक्षयेदित्यनेनैव रक्तावसेकस्योक्तत्वात् पुनर्वचनं प्रकर्षार्थम् । पित्ताधिक्ये हि रक्तातिवृद्धिः । तस्मादतिरक्तस्रावो योज्य इति प्रतिपादनार्थमेतदुक्तम् ।

**यकृति प्लीहवत्कर्म दक्षिणे तु भुजे सिराम् ॥ ९८ ॥**

यकृति प्लीहवत् कर्म कार्यम् । सिरां पुनर्दक्षिणे बाहौ मोक्षयेत् ।

**स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ।**

**सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥ ९९ ॥**
**परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम् ।**
**उदावर्तहरं कर्म कार्यं यच्चानिलापहम् ॥ १०० ॥**

बद्धोदरिणे पुरुषाय स्विन्नाय गोमूत्रतीक्ष्णौषधयुतं तैलं सैंधवाभ्यां सह निरूहं दद्यात्सानुवासनम् । पूर्वमनुवासनं पश्चाच्चेत्यर्थः । उदरिणः स्वेदनिषेधाद्बद्धोदरिणः स्वेदानुज्ञानमपवाद इति नैतत्पूर्वापरव्याहतम् । परिस्रंसीन्यनुलोमकराण्यन्नान्यस्मै च जठरिणे तीक्ष्णं च विरेचनं दद्यात् । उदावर्तहरं कर्म यच्च वातघ्नं तच्च कार्यम् ।

**छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत् ।**
**जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥ १०१॥**

छिद्रोदरं स्वेदमंतरेण श्लेष्मोदरवदुपक्रमेत् । यदा तु कथंचिद्रसश्छिद्रेभ्यः परिस्रवन् जठरमापूरयित्वा जलं भवेत्तदा तज्जातं सलिलं स्राव्यम् । न च सकृदेव स्राव्यमिति प्रतिपादनार्थं वीप्सा । जातं जातं जलं स्राव्यमिति । कियंतं कालं स्राव्यमित्याह । एवमित्यादि । एवमनेन प्रकारेण तद्बद्धोदरं यापयेत् । स्वास्थ्यमिति योग्यतयाऽत्र संबध्यते । तेनैव स्वास्थ्यं प्रापयेदिति बोध्यम्। नतु याप्यं विदध्यादिति व्याख्येयम्।नहि याप्यमुदरमस्ति।

**अपां दोषहराण्यादौ योजयेदुदकोदरे ।**
**मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवंति च ॥१०२॥**
**दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ।**

उदकोदरे पूर्वमपां दोषहराणि योजयेत् । तानि सर्वाणि गोमूत्रयुक्तानि तथा तीक्ष्णानि तथा विविधाः क्षारा विद्यंते येषु तानि विविधक्षारवंति । अनेकक्षारयुक्तानीत्यर्थः । नत्वपामित्यनर्थकं योजयेदुदकोदर इत्यनेनैवोदकहरत्वस्य सिद्धत्वात् । अत्रोच्यते । अपां च हरणानि यश्च तत्र संसृष्टो दोषोऽद्भिस्तस्य च हरणानि जलसंसृष्टदोषहरणानि तु प्रतिपादयितुमुक्तम् । आदाविति निर्देशात् । पश्चाद्वातादिदोषानुसारेण चाऽयं क्रमः कार्य इति द्योतयति । तथा भोजनैर्दीपनीयैः कफापहैश्चोपाचरेत् ।

**क्षारं छागकरीषाणां श्रुतं मूत्रेऽग्निना पचेत्॥१०३॥**
**घनीभवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत् ।**
**पिप्पलीपिप्पलीमूलं शुंठीलवणपंचकम् ॥ १०४ ॥**
**निकुंभकुंभत्रिफलास्वर्णक्षीरीविषाणिकाः ।**
**स्वर्जिकाक्षारपङ्कथासातलायवशूकजम् ॥ १०५ ॥**
**कोलाभा गुटिकाः कृत्वा ततः सौवीरकाप्लुताः ।**
**पिबेदजरके शोफे प्रवृद्धे चोदकोदरे ॥ १०६ ॥**

क्षारं छागकरीषाणां मूत्रे श्रुतं चाऽग्निना पचेत्। अस्मिंश्च क्षारजले घनीभवति सति कर्षांशं रजीकृतं पिप्पल्यादिकं क्षिपेत् । ततस्तस्मात्क्षाराद्गुलिकाः कोलाभाः कृत्वा सौवीरकालोडिता अजरकादौ पिबेत् ।

**इत्यौषधैरप्रशमे त्रिषु बद्धोदरादिषु ।**
**प्रयुंजीत भिषक् शस्त्रमार्तबंधुनृपार्थितः ॥ १०७ ॥**

इत्येवमौषधैरशांतौ सत्यां त्रिषु बद्धच्छिद्रोदकोदरेषु वैद्य आर्तज्ञातिभिर्नृपेण चाभ्यर्थितः सन् शस्त्रं प्रयुंजीत ।

**स्निग्धस्विन्नतनोर्नाभेरधो बद्धक्षतांत्रयोः ।**
**पाटयेदुदरं मुक्त्वा वामतश्चतुरंगुलात् ॥ १०८ ॥**
**चतुरंगुलमानं तु निष्कास्यांत्राणि तेन च ।**
**निरीक्ष्याऽपनयेद्वालमललेपोपलादिकम् ॥ १०९ ॥**
**छिद्रे तु शल्यमुद्धृत्य विशोध्यांत्रं परिस्रवम् ।**
**मर्कोटैर्दंशयेच्छिद्रं तेषु लग्नेषु चाऽहरेत् ॥ ११० ॥**
**कार्यं मूर्ध्नोऽनुचांत्राणि यथास्थानं निवेशयेत् ।**
**अक्तानि मधुसर्पिर्भ्यामथ सीव्येद्बहिर्व्रणम् ॥ १११॥**
**ततः कृष्णमृदाऽऽलिप्य बध्नीयाद्यष्टिमिश्रया ।**
**निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ॥११२॥**

बद्धक्षतांत्रयोर्बद्धोदरे छिद्रोदरे च स्निग्धस्विन्नशरीरस्य नाभेरध उदरं चतुरंगुलाद्वामेन मुक्त्वा चतुरंगुलप्रमाणं पाटयेत् । तेन च छिद्रेणांत्राणि बहिर्निष्कास्य बालमललेपोपलादिकमपनयेदिति बद्धोदरोपक्रमः । छिद्रोदरोपक्रममाह । छिद्रे तु परिस्राविणि शल्यमुद्धृत्य परिस्रवमात्रं विशोध्याऽनंतरं मर्कोटैश्छिद्रं दंशयेत् । तेषु च मर्कोटेषु भक्षयितुं लग्नेषु मूर्ध्नः शिरसोऽपरं कार्यम् । मर्कोटानामाकर्षेदनु पश्चाच्चांत्राणि मधुसर्पिर्भ्यामक्तानि यथास्थानं स्थापयेत् । अनंतरं बहिर्व्रणं सीव्येत् । बहिःशब्दनिर्देशादाभ्यंतरगतं न सीव्येदिति गम्यते । ततोऽनंतरं कृष्णमृदा मधुयष्टिकामिश्रयाऽऽलिप्य बध्नीयात् । अनंतरं निवातस्थः क्षीरवृत्तिः सन् स्नेहद्रोण्यां वसेत् ।

अधुना जलोदरस्याऽन्येषामपि जातजलानां जठराणां चिकित्सार्थमाह ।

**सजले जठरे तैलैरभ्यक्तस्याऽनिलापहैः ।**
**स्विन्नस्योष्णांबुनाऽऽकक्षामुदरे परिवेष्टिते ॥११३॥**
**बद्धच्छिद्रोदितस्थाने विध्येदंगुलमात्रकम् ।**
**निधाय तस्मिन्नाडीं च स्रावयेदर्धमंभसः ॥ ११४ ॥**
**अथाऽस्य नाडीमाकृष्य तैलेन लवणेन च ।**
**व्रणमभ्यज्य बद्ध्वा च वेष्टयेद्वाससोदरम् ॥ ११५ ॥**
**तृतीयेऽह्नि चतुर्थे वा यावदाषोडशं दिनम् ।**
**तस्य विश्रम्य विश्रम्य स्रावयेदल्पशो जलम्॥११६॥**
**विवेष्टयेद्गाढतरं जठरं च श्लथाश्लथम् ।**
**निःस्रुते लंघितः पेयामस्नेहलवणां पिबेत् ॥ ११७ ॥**

सजले जठरिणो जठरे तैलैस्तिलानां तैलैः सर्षपैरंडतैलादिभिरनिलघ्नैरभ्यक्तस्य तथोष्णांबुना स्विन्नस्याकक्षं कक्षांतं यावदुदरं पटेन वस्त्रेणाऽऽवेष्टिते तदुदरं वस्त्रेणैव वेष्टयित्वा बद्धच्छि-

द्वयोर्यत्कथितं स्थानं तस्मिन् स्थानेऽगुलप्रमाणं विध्येत् । तस्मिंश्च छिद्रे नाडीं निधाय जलस्योदरस्थस्यार्धं स्रावयेत् । जलस्रावादनंतरमस्योदरिणो नाडीमाकृष्य सलवणेन तैलेन व्रणमभ्यज्यबद्ध्वा च वाससा जठरं वेष्टयेत् । तृतीये दिवसेऽथवा चतुर्थे यावदाषोडशं दिनं तस्योदरिणो विश्रम्य विश्रम्याऽल्पशोऽल्पमल्पं कृत्वा जलं दोषं स्रावयेत् । सहसा हि प्रचुरजलस्रवणादपायः स्यात् । तस्मात् स्रुतिदिवसादनंतरं तृतीये चतुर्थे पंचमादौ वा दिने शरीरबलाबलमपेक्ष्य षोडशदिनं मर्यादीकृत्य जलस्रावणं कार्यम् । जठरं च शिथिलं वाससा गाढतरं विवेष्टयेत् । निःस्रुते च जलेऽसौ जठरी लंघितः सन् पेयामस्नेहलवणां पिबेत् । नञत्र ईषदर्थः । ईषत् स्नेहलवणं क्लेदरक्षार्थं वातकोपरक्षार्थं च । अन्यथा हि रूक्षां निर्लवणां पिबेदित्येवं निर्देशमाचार्यः कुर्यात् ।

**स्यात्क्षीरवृत्तिः षण्मासांस्त्रीन्पेयां पयसा पिबेत् ।**
**त्रींश्चाऽन्यान्पयसैवाद्यात् फलाम्लेन रसेन वा ॥**
**अल्पशः स्नेहलवणं जीर्णं श्यामाककोद्रवम् ।**
**प्रयतो वत्सरेणैवं विजयेत्तज्जलोदरम् ॥ ११९ ॥**

षण्मासान् क्षीरवृत्तिः स्यात् । त्रीन्मासान् क्षीरपेयां पिबेत् । त्रींश्चाऽन्यान्मासान् पयसैव जीर्णं श्यामाककोद्रवमद्यात् । फलाम्लेन वा मांसरसेन । कथम् । अल्पमल्पम् । तथैव स्नेहलवणम् । अनेन प्रकारेण प्रयतः सलिलोदरं वत्सरेण विजयेत् ।

**वर्ज्येषु यंत्रितो दिष्टे नात्यदिष्टे जितेंद्रियः ।**

वर्ज्येष्वाहारविहारादिष्वत्यर्थेऽम्ललवणादिषु यंत्रित उदरी स्यात् । दिष्टे कथितेऽन्नपानादौ नातियंत्रितः स्यात् । अदिष्टेऽकथिते पुनरन्नपानादौ जितेंद्रियः स्यादलोलुपेन तत्र भवितव्यमित्यर्थः ।

जलोदरचिकित्साप्रसंगेन सर्वोदरचिकित्सामाह ।

**सर्वमेवोदरं प्रायो दोषसंघातजं यतः ॥ १२० ॥**
**अतो वातादिशमनी क्रिया सर्वा प्रशस्यते ।**

सर्वोदरं बाहुल्येन दोषसंघातोत्थं यस्मादस्मात्सर्वत्रोदरे वातादिशमनी क्रिया प्रशस्यते । प्रायोग्रहणं किंचित् प्राक्तनकर्मनिमित्तमुदरं नावश्यं दोषसंघातजमिति ।

**वह्निर्मंदत्वमायाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥**
**तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ।**
**सपंचमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ १२२ ॥**

वह्निर्मंदत्वं यत आगच्छति दोषैरुदरे प्रपूरिते सति तस्मात्कारणाद्भोज्यान्याहारभोज्यानि भक्षयितव्यानि जठरिभिर्दीपनानि लघूनि च । तथा सह पंचमूलेन तथाऽल्पाम्लादयो येषु तानि ।

**भावितानां गवां मूत्रे षष्टिकानां च तंडुलैः ।**
**यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥१२३॥**
**पिबेदिक्षुरसं चानु जठराणां निवृत्तये ।**
**स्वं स्वं स्थानं व्रजंत्येषां वातपित्तकफास्तथा ॥१२४**

गोमूत्रे भावितानां षष्टिकानां तंडुलैर्यवागूं क्षीरेण सिद्धां प्रकाममिच्छया नरं भोजयेत् । अनु पश्चादिक्षुरसं च पिबेदुदराणां शांत्यर्थम् । तथा वातपित्तकफाश्चैषामुदरिणां स्वं स्वं स्थानं व्रजंति ।

**अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ।**
**गुडं तैलकृतं शाकं वारिपानावगाहयोः ॥ १२५ ॥**
**आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ।**

अत्यर्थोष्णाम्ललवणादिकं जठरी त्यजेत् ।

वारिपानावगाहयोर्यदि त्यजेत् तर्हि किं पेयमित्याह ।

**नात्यर्थसांद्रं मधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥**
**सकणालवणं वाते पित्ते सोषणशर्करम् ।**
**यवानीसैंधवाजाजीमधुव्योषैः कफोदरे ॥ १२७ ॥**
**त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ।**
**मधुतैलवचाशुंठीशताह्वाकुष्ठसैंधवैः ॥ १२८ ॥**
**प्लीह्नि बद्धे तु हपुषायवानीपटुजादिभिः ।**
**सकृष्णामाक्षिकं छिद्रे व्योषवत्सलिलोदरे ॥१२९॥**

तक्रमीषत्सांद्रं मधुरं पाने प्रशस्यते । तच्च पवने सपिप्पलिसैंधवं श्रेष्ठम् । पित्ते समरिचशर्करम् । यवान्यादिभिः सह कफोदरे हितम् । त्रिकटुकादिभिः संयुक्तं संनिपातोदरे । मधुतैलादिभिः प्लीहोदरे । हपुषादिभिर्युतं बद्धोदरे । पिप्पलीमधुयुतं छिद्रोदरे । जलोदरे व्योषयुतं श्रेष्ठम् ।

**गौरवारोचकानाहमंदवह्न्यतिसारिणाम् ।**
**तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ १३० ॥**

वातकफार्तानां गौरवारोचकादियुतानां तक्रममृतत्वाय कल्पते संपद्यते ।

एतच्च ब्रुवन् वातकफयोर्वृद्धावपि देयमिति द्योतयति ।

**प्रयोगाणां च सर्वेषामनुक्षीरं प्रयोजयेत् ।**
**स्थैर्यकृत्सर्वधातूनां बल्यं दोषानुबंधहृत् ।**

सर्वेषां च प्रयोगाणामनुक्षीरं तक्रं च प्रयोजयेत् । तच्च तक्रं सर्वधातूनां स्थिरत्वं करोति । तथा बल्यं स्याद्दोषानुबंधत्वं हरति ।

**भेषजोपचितांगानां क्षीरमेवामृतायते ॥ १३१ ॥**

भेषजेनोपचितं शरीरं येषां तेषां क्षीरमेवामृतत्वाय संपद्यते ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने उदरचिकित्सितं नाम पंचदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः।

अस्मादनंतरं पांडुरोगविचिकित्सितं व्याख्यातुमुपक्रम्यते। संबंधश्चास्य निदान एवोक्तः।

**अथाऽतः पांडुरोगविचिकित्सितं व्याख्यास्यामः।**
**पांड्वामयी पिबेत्सर्पिरादौ कल्याणकाह्वयम्।**
**पंचगव्यं महातिक्तं शृतं वाऽऽरग्वधादिना॥ १॥**

पांड्वातुरः कल्याणकाख्यं सर्पिरादौ पिबेत्। आदावित्यनेनैतद्गमयति। अस्मिन्व्याधौ प्राधान्येन पित्तचिकित्सा कार्या। तदनु वातकफयोः। तथा च पित्तस्यैवैतद्व्याधिकर्तृत्वे प्राधान्यम्। अत एव च निदानेऽध्यगीष्ट। पित्तप्रधानाः कुपिता इत्यादि। तस्मात् पित्तस्योपशांत्यै सर्पिःपानं युक्तम्। पंचगव्यं घृतमपस्मारप्रतिषेधोक्तम्। महातिक्तं कुष्ठचिकित्सितोक्तम्। आरग्वधादिगणेन वा पक्कं घृतं पिबेत्।

**दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम्।**
**चित्रकाच्छृंगवेराच्च पिप्पल्यर्धपलं च तैः॥ २॥**
**कल्कितैर्विंशतिपलं घृतस्य सलिलाढके।**
**सिद्धं हृत्पांडुगुल्मार्शः प्लीहवातकफार्तिनुत्॥ ३॥**
**दीपनं श्वासकासघ्नं मूढवातानुलोमनम्।**
**दुःखप्रसविनीनां च वंध्यानां च प्रशस्यते॥ ४॥**

दाडिमस्य कुडवं धान्यकात्कुडवार्धं चित्रकशुंठ्योः प्रत्येकं पलम्। पिप्पल्या द्वौ कर्षौ तैः पिष्टैर्घृतस्य पलानि विंशतिं तोयाढके पचेत्। तच्च सिद्धं हृदयाद्यर्तिजित्। दीपनादिगुणयुक्तं च। दुःखप्रसविनीनां स्त्रीणां वंध्यानामप्रसविनीनां च शस्यते।

**स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत्।**
**पयसा मूत्रयुक्तेन बहुशः केवलेन वा॥ ५॥**

स्नेहितं पांडुरोगिणं तीक्ष्णैर्वामयेत्। पुनरपि स्निग्धं च बहुशः क्षीरेण मूत्रयुतेन शोधयेत्। केवलेन वा पयसा शोधयेत्।

**दंतीपलरसे कोष्णे काश्मर्यांजलिमासुतम्।**
**द्राक्षांजलिं वा मृदितं तत् पिबेत् पांडुरोगजित् ६**
**मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम्।**

दंतीपलरसे कोष्णे काश्मर्यांजलिमासुतमथवा द्राक्षांजलिं मर्दितं पिबेत्। तदेतदुभयमपि पांडुरोगघ्नम्। गोमूत्रेण पिष्टां हरीतकीं वा पिबेत्। तेन गोमूत्रेण सिद्धं क्वथितं फलत्रयं वा पिबेत्।

**स्वर्णक्षीरीत्रिवृच्छ्यामाभद्रदारुमहौषधम्॥ ७॥**
**गोमूत्रांजलिना पिष्टं शृतं तेनैव वा पिबेत्।**
**साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम्॥ ८॥**

स्वर्णक्षीर्यादिकं गोमूत्रांजलिना पिष्टमथवा तेनैव गोमूत्रेण शृतं पिबेत्। एभिर्वा स्वर्णक्षीर्यादिभिर्द्रव्यैः क्षीरं साधितं दोषानुलोमकरं पिबेत्।

**मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत्।**
**जीर्णे क्षीरेण भुंजीत रसेन मधुरेण वा॥ ९॥**

गोमूत्रेण सप्ताहं स्थितं लोहचूर्णं क्षीरेण पिबेत्। जीर्णे तस्मिन् दुग्धेन सहान्नं भुंजीत। मांसरसेन वा मधुरेण नत्वम्लेन।

**शुद्धश्चोभयतो लिह्यात्पथ्यां मधुघृतद्रुताम्।**

शुद्धश्चोभयतः पायुतो मूर्धतश्च हरीतकीं मधुघृतद्रुतां लिह्यात्।

**विशालां कटुकां मुस्तां कुष्ठं दारुकलिंगकः॥ १०॥**
**कर्षांशाद्विपिचुर्मूर्वा कर्षार्धांशा घुणप्रिया।**
**पीत्वा तच्चूर्णमंभोभिः सुखैर्लिह्यात्ततो मधु॥ ११॥**
**पांडुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।**
**गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत्॥ १२॥**

विशालादयः षट्कर्षमात्राः। मूर्वापि द्विकर्षप्रमाणा। अर्धकर्षदघ्नी अतिविषा। तदेतच्चूर्णं कोष्णांबुना पीत्वा माक्षिकं लिह्यात्। एतच्च पांडुरोगादीन्हंति।

**वासागुडूचीत्रिफलाकट्वीभूनिंबनिंबजः।**
**क्वाथः क्षौद्रयुतो हंति पांडुपित्तास्रकामलाः॥१३॥**

वासादिक्वाथो मधुयुतः पांड्वादीन् हंति।

**व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः।**
**चूर्णितं तक्रमध्वाज्यकोष्णांभोभिः प्रयोजितम् १४**
**कामलापांडुहृद्रोगकुष्ठार्शोमेहनाशनम्।**

व्योषादिभिस्तुल्यमयोरजश्चूर्णितं तक्रादिभिरुपयोजितं कामलादिनाशनम्।

**गुडनागरमंडूरतिलांशान्मानतः समान्॥ १५॥**
**पिप्पलीद्विगुणान्दद्याद्गुटिकां पांडुरोगिणे।**

गुडादिकान् समभागान् पिप्पलीद्विगुणानिमां गुलिकां पांडुरोगिणे दद्यात्।

**ताप्यं दार्व्यास्त्वचं चव्यं ग्रंथिकं देवदारु च॥१६॥**
**व्योषादि नवकं चैतच्चूर्णयेद् द्विगुणं ततः।**
**मंडूरं चांजननिभं सर्वतोऽष्टगुणेऽथ तत्॥ १७॥**
**पृथग्विपक्के गोमूत्रे वटकीकरणक्षमे।**
**प्रक्षिप्य वटकान्कुर्यात्तान्खादेत्तक्रभोजनः॥ १८॥**
**एते मंडूरवटकाः प्राणदाः पांडुरोगिणाम्।**
**कुष्ठान्यजरकं शोफमुरुस्तंभमरोचकम्॥ १९॥**
**अर्शांसि कामलां मेहान् प्लीहानं शमयंति च।**

ताप्यादिकं व्योषादिनवकं च पूर्वोक्तं चूर्णयेत्। ततस्तेभ्यो द्विगुणं मंडूरमंजनसदृशं सर्वेभ्योऽष्टगुणे मूत्रे पृथक् विपक्के च वटकीकरणक्षमे घने सति प्रक्षिप्य वटकान् कुर्यात्। तांश्च त-

कप्रधानभोजनः सन् प्राश्नीयात् । एते मंडूरवटकाः पांड्वामयिनां प्राणदास्तथा कुष्ठादीन् घ्नंति ।

**ताप्यादिजतुरौप्यायोमलाः पंचपलाः पृथक् २०**
**चित्रकत्रिफलाव्योषविडंगैः पालिकैः सह ।**
**शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुना द्रुताः ॥२१॥**
**पांडुरोगं विषं कासं यक्ष्माणं विषमं ज्वरम् ।**
**कुष्ठान्यजरकं मेहं शोफं श्वासमरोचकम् ॥ २२॥**
**विशेषाद्धंत्यपस्मारं कामलां गुदजानि च ।**

ताप्यादयः पृथक् पंचपलाश्चित्रकादिभिः पालिकैः सह शर्कराष्टपलयुताश्चूर्णीकृता मधुना द्रवीकृताः पांडुरोगादीन् घ्नंति । विशेषेणापस्मारादींश्च ।

**कौटजत्रिफलानिंबपटोलघननागरैः ॥ २३ ॥**
**भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ।**
**शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥ २४ ॥**
**त्वक्क्षीरीपिप्पली धात्री कर्कटाख्याः पलोन्मिताः**
**निर्दग्धाः फलमूलाभ्यां पलं युक्त्या त्रिजातकम्॥**
**मधु त्रिपलसंयुक्तं कुर्यादक्षसमान्गुडान् ।**
**दाडिमांबुपयः पक्षिरसतोयसुरासवान् ॥ २६ ॥**
**तान् भक्षयित्वानुपिबेन्निरन्नो भुक्त एव वा ।**
**पांडुकुष्ठज्वरप्लीहतमकार्शोभगंदरम् ॥ २७ ॥**
**हृन्मूत्रपूतीशुक्राग्निदोषशोषगरोदरम् ।**
**कासासृग्दरपित्तास्रक्शोफगुल्मगलामयान् ॥२८॥**
**मेहवर्ध्मभ्रमान् हन्युः सर्वदोषहराः शिवाः ।**

कौटजादिभिर्द्रव्यै रसतां गतैः । क्वाथीकृतैरित्यर्थः । शिलाजतु पलान्यष्टौ दशाहानि द्विगुणानि त्रिगुणानि वा मासमेकं भावितानि । अहःशब्दो वारोपलक्षणार्थः । तदयमात्रार्थोऽवतिष्ठते । शिलाजतुपलाष्टकं केवलं जलधौतं कौटजादिकं तत्तुल्यमष्टगुणिते जले क्वथितं ततोऽष्टभागावशेषरसं गृहीत्वा तेन रसेन दश वारान् द्वित्रिगुणान्वा भावयेदिति । तावत्यष्टपलप्रमाणा सितशर्करात्वक्क्षीर्यादिकं पलोन्मितं कंटकार्याः फलमूलयोः पलम् । त्रिजातकं युक्त्या यावता त्रिजातकेनातिसौगंध्यं हीनसौगंध्यं वा न स्यात् । एवं न हीनमात्रमेतद्देयमव्यापकत्वान्न वातिमात्रमप्यतिव्यापकत्वेनायोगार्हत्वात् । मधुनस्त्रिभिः पलैः संयुक्तान् कार्षिकान् गुडान् विदध्यात् । तान् गुडान् भक्षयित्वाऽनु पश्चाद्दाडिमजलादीनि यथायोगं पिबेन्निरन्नः कृताहारो वा । ते च वटकाः पांड्वादीन् हन्युः । सर्वदोषहराः शिवाश्च स्युः ।

**द्राक्षाप्रस्थं कणाप्रस्थं शर्करार्धतुलां तथा ॥ २९ ॥**
**द्विपलं मधुकं शुंठीत्वक्क्षीरीं च विचूर्णितम् ।**
**धात्रीफलरसे द्रोणे तत्क्षिप्त्वा लेहवत्पचेत् ॥ ३० ॥**
**शीतान्मधुप्रस्थयुतान् लिह्यात्पाणितलं ततः ।**
**हलीमकं पांडुरोगं कामलां च नियच्छति ॥ ३१ ॥**

द्राक्षायाः षोडशपलानि पिप्पल्याश्च शर्करायाः पलानि पंचाशत् । यष्ट्यादिकं रजीकृतं द्विपलप्रमाणम् । धात्रीफलरसस्य द्रोणे सर्वमेतत्क्षिप्त्वा लेहमिव पचेत् । तस्माल्लेहाच्छीतान्मधुनः प्रस्थयुतात् पाणितलं कर्षमात्रं लिह्यात् । स च लेहो हलीमकादीन्नियच्छति पराकरोति ।

**कनीयः पंचमूलांबु शस्यते पानभोजने ।**
**पांडूनां कामलार्तानां मृद्वीकामलकाद्रसः ॥ ३२ ॥**

पानभोजने च शस्यते ह्रस्वपंचमूलजलम् । मृद्वीकारस आमलकरसश्च । पांडुरोगिणां कामलार्तानां च शस्यते ।

**इति सामान्यतः प्रोक्तं पांडुरोगभिषग्जितम् ।**
**विकल्प्य योज्यं विदुषा पृथग्दोषबलं प्रति ॥ ३३ ॥**

इत्येवं पांडुरोगे सामान्येन भिषग्जितमौषधं प्रोक्तम् । भिषज्धातुः कंड्वादौ भिषज्यते इत्युक्तः भिषग्जितम् । तदभिज्ञेन वैद्येन विकल्प्य निरूप्य पृथग्दोषबलं लक्षणीकृत्य योज्यम् ।

**स्नेहप्रायं पवनजे तिक्तशीतं तु पैत्तिके ।**
**श्लैष्मिके कटुरूक्षोष्णं विमिश्रं सांनिपातिके॥३४**

पवनजे पांडौ स्नेहप्रायं स्नेहभूयिष्ठं भेषजम् । तिक्तशीतप्रायं तु पैत्तिके । श्लैष्मिके तु कटुरूक्षोष्णभूयिष्ठम् । सांनिपातिके विमिश्रं चिकित्सितम् ।

**मृदं निर्यातयेत्कायात्तीक्ष्णैः संशोधनैः पुरः ।**
**बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत्३५**

कायाच्छरीरान्मृदं शल्यभूतं स्थितम् तीक्ष्णैः संशोधनैः स्नुहीक्षीरादिभिर्निर्हरेत्पुरः पूर्वम्। शुद्धे तु कोष्ठे बलाधानानि घृतानि योजयेत् ।

तान्येवाह ।

**व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।**
**मुस्तान्ययोरजः पाठा विडंगं देवदारु च ॥ ३६ ॥**
**वृश्चिकाली च भार्गी च सक्षीरैस्तैः श्रृतं घृतम् ।**
**सर्वान्प्रशमयत्याशु विकारान्मृत्तिकाकृतान्॥३७॥**

व्योषादिभिर्घृताच्चतुर्थांशैः श्रृतानि समेन क्षीरेण तच्चतुर्गुणजलेन घृतं श्रृतं सर्वान् विकारान् मृत्तिकाकृतान् शमयति ।

**तद्वत्केसरयष्ट्याह्वपिप्पलीक्षीरशाड्वलैः ।**

केसरादिभिः पक्वं सर्पिस्तद्वत् पूर्वगुणम् ।

**मृद्भेषणाय तल्लौल्ये वितरेद्भाविता मृदम्॥३८॥**
**वेल्लाग्निनिंबप्रसवैः पाठया मूर्वयाऽथवा ।**

मृद्भेषणार्थे तस्यां मृदि लौल्ये लोलुपत्वे सति वेल्लादिभिर्भावितां मृदं दद्यात् ।

**मृद्भेदभिन्नदोषानुगमाद्योज्यं च भेषजम् ॥ ३९ ॥**

मृदो भेदो विशेषः कृष्णपांडुरादिः । तेन भिन्नो विशेषितो यो दोषस्तस्य वातादेर्ज्ञानात् । मृत्कषायानिलं पित्तमूषरामधुरा त्कफं दूषयित्वा । एवं लक्षणाद्दोषानुगमाद्भेषजं योज्यम् । नैवमेवं मृद्भक्षणमात्रविज्ञानेन । मृन्निर्हरणौषधं चैतद्धेतुविपरीतमेवेत्यवेहि । यतो मृदा हेतुभूतया यः पांडुरोग उदभूत्तस्य मृन्निर्हरणं विपरीतमेव ।

**कामलायां तु पित्तघ्नं पांडुरोगाविरोधि यत् ।**

कामलायां पित्तहरमौषधं यत् पांडुरोगाविरोधि तद्देयम् ।

**पथ्याशतरसे पथ्यावृंतार्धशतकल्कितः ॥ ४० ॥**
**प्रस्थः सिद्धो घृताद्गुल्मकामलापांडुरोगनुत् ।**

पथ्याशतक्वाथे पथ्यावृंतपंचाशत्कल्कीकृतो घृतप्रस्यः पक्वः कामलादिघ्नः ।

**आरग्वधं रसेनेक्षोर्विदार्यामलकस्य वा ॥ ४१ ॥**
**सत्र्यूषणं बिल्वमात्रं पाययेत्कामलापहम् ।**

इक्षो रसेन विदार्या रसेनामलकरसेन वा कर्णिकाराद्यन्यतमरसेन सह त्रिकटुकं पलप्रमाणमारग्वधं कामलापहं पाययेत् ।

**पिबेन्निकुंभकल्कं वा द्विगुणं शीतवारिणा ॥ ४२ ॥**
**कुंभस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ।**

निकुंभकल्कं वा पलद्वयप्रमाणं शिशिरजलेन पिबेत् । कुंभचूर्णं क्षौद्रसहितं वा त्रैफलेन क्वाथेन पिबेत् ।

**त्रिफलाया गुडूच्या वा दार्व्या निंबस्य वा रसम्४३**
**प्रातःप्रातर्मधुयुतं कामलार्ताय योजयेत् ।**

त्रिफलाद्यन्यतमरसं मधुयुतं प्रातःप्रातः कामलिने योजयेत् ।

**निशागैरिकधात्रीभिः कामलापहमंजनम् ॥ ४४ ॥**

निशादिभिरंजनं कामलाहृत् ।

**तिलपिष्टनिभं यस्तु कामलावान्सृजेन्मलम् ।**
**कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ४५ ॥**

यः पुनः कामलावान्मलं तिलपिष्टसदृशं मुंचेत्तस्य कफरुद्धमार्गम् । तस्यातुरस्य कफघ्नैर्द्रव्यैः पित्तं जयेत् ।

**रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ।**
**कफसंमूर्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥४६॥**
**हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।**
**भवेत्साटोपविष्टंभो गुरुणा हृदयेन च ॥ ४७ ॥**
**दौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वरैः ।**
**क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ ४८॥**

५२

**रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ।**
**शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ४९ ॥**
**भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते ।**
**सबीजपूरकरसं लिह्याद्व्योषं तथाशयम् ॥ ५० ॥**
**स्वं पित्तमेति तेनाऽस्य शकृदप्यनुरज्यते ।**
**वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ ५१ ॥**
**निवृत्तोपद्रवस्याऽस्य कार्यः कामलिको विधिः ।**

रूक्षादिभिः पवनः कुपितः कफेन मिश्रितो यदा पित्तं बहिः क्षिपेत् तदा हारिद्रनेत्रादिः पुरुषो भवेदाटोपादिमांश्च । हृदयेन च गुरुणा युक्तः । दौर्बल्यादिभिः क्रमेण कुपितो वायुरल्पे पित्ते शाखासमाश्रितेऽनुषज्येत । अनुषज्येति कर्मकर्तरि । तं तादृशं नरं रसै रूक्षकट्वम्लैर्मयूरादिमांसजैस्तथा शुष्कमूलकोद्भवैर्यूषैस्तथा कुलत्थोत्थैर्भोजयेत् । भृशाम्लादिकं च भोजनं शस्यते । तथा बीजपूरकरससहितं व्योषं लिह्यात् । एवं कृते सत्यस पित्तं स्वमाशयमेति । शकृच्चानुषज्यते वायुश्च प्रशमं यात्याटोपांत्रकूजनादिभिरुपद्रवैः सह । अस्यातुरस्याऽपगतोपद्रवस्य सतः कामलाविहितो विधिः कार्यः ।

**गोमूत्रेण पिबेत्कुंभकामलायां शिलाजतु ॥ ५२ ॥**
**मासं माक्षिकधातुं वा किट्टं वाऽथ हिरण्यजम् ।**

कुंभकामलायां गोमूत्रेणालोडितं शिलाजतु पिबेत् । धातुमाक्षिकं वा पिबेत् । गोमूत्रेण मासं यावत् पिबेत् । हिरण्यजं रूप्योत्थं मलं वा गोमूत्रेण पिबेत् ।

**गुडूचीस्वरसक्षीरसाधितेन हलीमकी ॥ ५३ ॥**
**महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु ।**
**त्रिवृतां तद्विरिक्तोद्यात्स्वादु पित्तानिलापहम् ॥५४**
**द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ।**
**यापनान्क्षीरबस्तींश्च शीलयेत्सानुवासनान् ॥ ५५ ॥**
**मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ।**
**कासिकं वाभयालेहं पिप्पलीमधुकं बलाम् ॥ ५६ ॥**
**पयसा च प्रयुंजीत यथादोषं यथाबलम् ।**

हलीमकवान् गुडूचीस्वरसक्षीरपक्वेन महिषीघृतेन स्निग्धः सन् त्रिवृतां धात्रीरसेन पिबेत् । गुडूचीस्वरसोऽत्र घृताच्चतुर्गुणः क्षीरं घृतसममिति पाकक्रमः । तथा त्रिवृतया विरिक्ते सति मधुरं वातपित्तघ्नं चाद्यात् । प्रागुक्तं च द्राक्षालेहं भक्षयेत् । मधुरद्रव्यसाधितानि घृतानि चाद्यात् । यापनान्प्राणकारिणः क्षीरबस्तींश्च शीलयेदनुवासनसहितान् मार्द्वीकारिष्टयोगांश्च युक्त्या वह्निवृद्धये पिबेत् । अभयालेहं चागस्त्यं कासचिकित्सितोक्तं प्रस्थोन्मिते यवक्वाथे विंशतिर्विजया इत्यादि शीलयेत् । क्षीरेण च पिप्पलीं मधुयष्टिकां बलां च युंजीत यथादोषाद्बलाच्च ।

**पांडुरोगेषु कुशलः शोफोक्तं च क्रियाक्रमम् ॥५७॥**

पांडुरोगेषु शोफचिकित्सितं च क्रियाक्रमं सुधीः प्रयुंजीत ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां चिकित्सितस्थाने पांडुरोगचिकित्सितं नाम षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

पांडुरोगचिकित्सितादनंतरं शोफचिकित्सितं व्याख्यातुं प्रक्रम्यते ।

**अथाऽतः श्वयथुचिकित्सितं व्याख्यास्यामः ।**

संबंधश्चाऽस्य निदान एवोक्त इत्याह ।

**सर्वत्र सर्वांगसरे दोषजे श्वयथौ पुरा ।**
**सामे विशोषितो भुक्त्वा लघुकोष्णांभसा पिबेत् ॥**
**नागरातिविषादारुविडंगेंद्रयवोषणम् ।**
**अथवा विजयाशुंठीदेवदारुपुनर्नवम् ॥ २ ॥**
**नवायसं वा दोषाढ्यः शुध्यै मूत्रहरीतकीः ।**
**वराक्काथेन कटुकाकुंभायस्कत्र्यूषणानि वा ॥ ३ ॥**
**अथवा गुग्गुलुं तद्वज्जतु वा शैलसंभवम् ।**

सर्वत्र दोषजे श्वयथौ सर्वांगजे तथा सामे विशोषितः सन् लघु भुक्त्वा कोष्णेन जलेन नागरादि पिबेत् । विशोषणमत्रोपवासः । अथवा विजयादीन् कोष्णांभसा पिबेत् । दोषबहुलो नवायसं पांडुरोगोक्तं पिबेत् । शुध्यर्थं गोमूत्रेण हरीतकीः शीलयेत् । त्रिफलाक्काथेन सह कटुकात्रिवृतालोहचूर्णकटुत्रिकाणि शीलयेत् । वराक्काथेन कुंभादीन् गुग्गुलुं वा शिलाजतु वा त्रिफलाक्काथेनैव शीलयेत् ।

**मंदाग्निः शीलयेदामगुरुभिन्नविबद्धविट् ॥ ४ ॥**
**तक्रं सौवर्चलव्योषक्षौद्रयुक्तं गुडाभयम् ।**
**तक्रानुपानामथवा तद्वद्वा गुडनागरम् ॥ ५ ॥**

मंदाग्निरामगुरुभिन्नविबद्धविट् सन् तक्रं सौवर्चलादियुतं शीलयेत् । गुडयुतामभयां तक्रानुपानां वा । तथैव गुडनागरं तक्रानुपानं शीलयेत् ।

**आर्द्रकं वा समगुडं प्रकुंचार्धविवर्धितम् ।**
**परं पंचपलं मासं यूषक्षीररसाशनः ॥ ६ ॥**
**गुल्मोदरार्शःश्वयथुप्रमेहान्**
**श्वासप्रतिश्यालसकाविपाकान् ।**
**सकामलाशोफमनोविकारान्**
**कासं कफं चैव जयेत्प्रयोगः ॥ ७ ॥**

आर्द्रकं वा तुल्यगुडं पलार्धेन प्रतिदिनं वर्धितं परं पंचपलं यावदेकस्मिन्नेव दिने पलपंचकप्रमाणं स्यात्पुनरपि ह्रासयेदर्धपलं यावत् । एवं मासं यावदेषप्रयोगो यथोचितं कफपित्तवाताधिको यूषादिभोजी स्यात् । एष च प्रयोगो गुल्मादींश्चतुर्दशकफांतान् जयेत् ।

**घृतमार्द्रकनागरस्य कल्क-**
**स्वरसाभ्यां पयसा च साधयित्वा ।**
**श्वयथुक्षवथूदराग्निसादै-**
**रभिभूतोऽपि पिबन् भवत्यरोगः ॥ ८ ॥**

घृतमार्द्रकनागरस्य कल्कं स्वरसाभ्यां पयसा च साधयित्वा पक्का पिबन् शोफादिभिरभिभूतोऽपि निरामयः स्यात् । आर्द्रनागरमार्द्रकमुच्यते । उपजात्यौपच्छंदसिके वृत्ते ।

**निरामो बद्धशमलः पिबेच्छ्वयथुपीडितः ।**
**त्रिकटुत्रिवृतादंतीचित्रकैः साधितं पयः ॥ ९ ॥**
**मूत्रं गोर्वा महिष्या वा सक्षीरं क्षीरभोजनः ।**
**सप्ताहं मासमथवा स्यादुष्ट्रक्षीरवर्तनः ॥ १० ॥**

निरामो बद्धपुरीषः शोफार्तः सन् त्रिवृतादिभिः साधितं पयः पिबेत् । गोर्महिष्या वा संबंधि मूत्रं सक्षीरभोजनः सन् पिबेत् । तथोष्ट्रक्षीरभोजनः पानाहाराभ्यां विना सप्ताहमथवा मासं स्यात् । उष्ट्रक्षीरवर्तन इत्यत्र कुक्कुट्यादिना मंडादिषु पुंवद्भावो वक्तव्य इत्युष्ट्रशब्दस्य पुंवद्भावः । केचिदुष्ट्रीक्षीरमिति जगुः ।

**यवानकं यवक्षारं यवानीं पंचकोलकम् ।**
**मरिचं दाडिमं पाठां धानकामम्लवेतसम् ॥ ११ ॥**
**बालबिल्वं च कर्षांशं साधयेत्सलिलाढके ।**
**तेन पक्को घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ १२ ॥**

यवानकादि कर्षांशं जलाढके पचेत् । तेन क्काथेन घृतप्रस्थः पक्कः शोफादिहा स्यात् । ब्रह्मादिशब्दस्य प्रायिकत्वाच्छोफशब्दोत्तरादावपि हंतेः क्विप् ।

**दध्नश्चित्रकगर्भाद्वा घृतं तत्तक्रसंयुतम् ।**
**पक्कं सचित्रकं तद्वद्गुणैः**

चित्रकगर्भाद्दध्नश्चित्रकचूर्णमिश्रितात्क्षीराद्यज्जातं दधि तस्मान्मथ्यमानात्तक्रेण चित्रकतक्रेण संयुक्तं पक्कं तद्वद्यवानकादिघृतसदृशं गुणैः ।

**युंज्याच्च कालवित् ॥ १३ ॥**
**धान्वंतरं महातिक्तं कल्याणमभयाघृतम् ।**

कालविदवस्थादोषादिविद्धान्वंतरं महातिक्तकल्याणकमभयाघृतं युंज्यात् ।

**दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥**
**दत्त्वा गुडतुलां तस्मिन् लेहे दद्याद्विचूर्णितम् ।**
**त्रिजातकं त्रिकटुकं किंचिच्च यवशूकजम् ॥ १५ ॥**
**प्रस्थार्धे च हिमे क्षौद्रात्तं निहंत्युपयोजितम् ।**
**प्रवृद्धशोफज्वरमेहगुल्म-**
**कार्श्यामवाताम्लकरक्तपित्तम् ।**
**वैवर्ण्यमूत्रानिलशुक्रदोष-**
**श्वासारुचिप्लीहगरोदरं च ॥ १६ ॥**

दशमूलकषायस्याढके पथ्याशतं पचेत् । अत्र च सामान्यपरिभाषया क्वाथ्यद्रव्यस्य च दशमूलस्य च द्वात्रिंशत् पलानि भवंति । एवं च तंत्रांतरे विरोधः । तथा तत्रैवं कथ्यते। द्विपंचमूलस्य तुलाकषाये कंसेऽभयानां च शतं गुडाच्चेति। तदेवं विरोधं पश्यंतो व्याख्यामेवंविधां विद्वांसो विदधति । दशमूलस्य तुला तस्याः कषायो दशमूलकषाय इति । मयूरव्यंसकादित्वादुत्तरपदलोपी समासः । एवं दशमूलस्य पलशतं तत्क्वाथ्यस्याढके पथ्याशतं पचेत् । गुडतुलां दत्त्वा तस्मिन् लेहे विचूर्णितं त्रिजातकादि दद्यात् । एतेषां च प्रमाणं वासिष्ठलेहवत् कल्प्यम् । यवक्षारस्य कर्षमात्रं देयम् । तंत्रांतरेऽप्युक्तम् । व्योषाच्चतुष्पलं दद्यात्त्रिपलं त्रिसुगंधतः । कर्षमात्रं यवक्षारादिति । शांते च सति माक्षिकात्प्रस्थार्धं देयम्। तदेतदुपयोजितं प्रवृद्धशोफादीन् हंति । खारणादस्तु जगाद । दशमूलाढकमभयाशतसहितं पाचयेदपां द्रोणे । अवशेषितचतुरंशे तस्मिन्पुनः क्षिपेत् पथ्या इति। उपजातिर्वृत्तम् ।

**पुराणयवशाल्यन्नं दशमूलांबुसाधितम् ।**
**अल्पमल्पं पटुस्नेहं भोजनं श्वयथोर्हितम् ॥ १७ ॥**
**क्षारव्योषान्वितैर्मौद्गैः कौलत्थैः सकणै रसैः ।**
**तथा जांगलजैः कूर्मगोधाशल्यकजैरपि ॥ १८ ॥**
**अनम्लं मथितं पाने मद्यान्यौषधवंति च ।**

श्वयथोः पुराणयवादिदशमूलक्वाथसाधितमल्पम्। तथाल्पलवणस्नेहं भोजनं हितम् । कैः सह । मौद्गरसैः । किंभूतैः । क्षारत्र्यूषणयुक्तैः । तथा कौलत्थरसैः । किंभूतैः । सपिप्पलीकैः । तथा च मुनिः । कुलत्थयूषस्तु सपिप्पलीको मौद्गस्तु सत्र्यूषणयावशूकः । रसैस्तथा जांगलविष्किराणां सकूर्मगोधाशिखिशल्लकानामिति । अत्र शिखिनो जांगलविष्किरत्वेन गृहीता अपि पथ्यतरत्वप्रतिपादनार्थं पुनरुपात्ताः । तथायमेव तंत्रकृदष्टांगावतारेऽध्यगीष्ट। दशमूलांभसा सिद्धैर्व्योषक्षाररजोऽन्वितैः । रसैर्जांगलजैर्मौद्गैः कौलत्थैर्मौलकैरपीति । तथेत्यादि । तथा जांगलमांसजैस्तथा गोधादिजैस्तथा कच्छपादिजैश्च । पाने मथितमनम्लं मद्यानि च सौषधानि हितानि ।

**अजाजीशठिजीवंतीकारवीपौष्कराग्निकैः ॥ १९ ॥**
**बिल्वमध्ययवक्षारवृक्षाम्लैर्बदरोन्मितैः ।**
**कृता पेयाऽऽज्यतैलाभ्यां युक्तिभृष्टा परं हिता २०**
**शोफातिसारहृद्रोगगुल्मार्शोऽल्पाग्निमेहिनाम् ।**

अजाजीप्रभृतिभिः पेया घृततैलाभ्यां युक्त्या भृष्टाऽतिशयेन शोफादिमतां हिता ।

**गुणैस्तद्वच्च पाठायाः पंचकोलेन साधिता ॥ २१ ॥**

पंचकोलेन बदरोन्मितेन साधिता पेया गुणैस्तद्वच्च पूर्वोक्तगुणा । तथैव पाठायाः साधिता पेया स्यात् ।

**शैलेयकुष्ठस्थौणेयरेणुकागुरुपद्मकैः ।**
**श्रीवेष्टकनखस्पृक्कादेवदारुप्रियंगुभिः ॥ २२ ॥**
**मांसीमागधिकावन्यधान्यध्यामकबालकैः ।**
**चतुर्जातकतालीसमुस्तागंधपलाशकैः ॥ २३ ॥**
**कुर्यादभ्यंजनं तैलं लेपं स्नानाय तूदकम् ।**

तथा शैलेयादिभिरभ्यंजनतैलं तथा लेपं स्नानार्थमुदकं च कुर्यात् ।

**स्नानं वा निंबवर्षाभूनक्तमालार्कवारिणा ॥ २४ ॥**

निंबादिवारिणा च स्नानं कुर्यात् ।

**एकांगशोफे वर्षाभूकरवीरककिंशुकैः ।**
**विशालात्रिफलारोध्रनलिकादेवदारुभिः ॥ २५ ॥**
**हिंस्राकोशातकीमाद्रीतालपर्णीजयंतिभिः ।**
**स्थूलकाकादनीशालनाकुलीवृषपर्णिभिः ॥ २६ ॥**
**वृद्धिर्द्विहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम् ।**

एकांगजे शोफे पुनर्नवादिभिर्जलपिष्टैः सुखोष्णैर्लेपो हितः । इति सामान्येन श्वयथोरुपक्रमः ।

**अथाऽनिलोत्थे श्वयथौ मासार्धं त्रिवृतं पिबेत् २७**
**तैलमैरंडजं वातविड्विबंधे तदेव तु ।**
**प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत्तथा ॥ २८ ॥**
**स्वेदाभ्यंगान्समीरघ्नान् लेपमेकांगगे पुनः ।**
**मातुलुंगाग्निमंथेन शुंठीहिंस्रामराह्वयैः ॥ २९ ॥**

अनिलजे शोफे पक्षं यावत्त्रिवृतं तथैरंडतैलं पिबेत् । वातविड्विबंधे सति तदेव पूर्वोक्तमौषधं प्राग्भक्तं क्षीरेण सिद्धं मांसरसेन वा पिबेत् । तथा स्वेदाभ्यंगान् वातघ्नान् कारयेद्वैद्य इति शेषः । तथाऽनिलोत्थ एकांगगे शोफे मातुलुंगादिभिर्लेपं कारयेत् । हिंस्रा सिंही ।

**पैत्ते तिक्तं पिबेत्सर्पिर्न्यग्रोधाद्येन वा शृतम् ।**
**क्षीरं तृड्दाहमोहेषु लेपाभ्यंगाश्च शीतलाः ॥ ३० ॥**

पित्तश्वयथौ तिक्तकाख्यं घृतं पिबेत् । न्यग्रोधादिगणेन वा शृतं पिबेत् । तथा तृडादिषु क्षीरं पिबेत् । तथा लेपाभ्यंगाः शीता हिताः ।

**पटोलमूलत्रायंतीयष्ट्याह्वकटुकाभयाः ।**
**दारुदार्विहिमं दंती विशाला निचुलं कणा ॥ ३१ ॥**
**तैः क्वाथः सघृतः पीतो हंत्यंतस्तापतृड्भ्रमान् ।**
**ससंनिपातवीसर्पशोफदाहविषज्वरान् ॥ ३२ ॥**

पटोलादीनां क्वाथो घृतसहितः पीतोऽतस्तापतृष्णादीन् हंति ।

**आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ।**

कफोद्भवे शोफ आरग्वधादिना सिद्धं तैलं पिबेत् ।

**स्रोतोविबंधे मंदेऽग्नावरुचौ स्तिमिताशयः ॥ ३३ ॥**
**क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।**

स्रोतोविबंधे सति वह्नौ च मंदेऽरोचके च सति स्तिमिताशयः सन् क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।

**कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ॥३४॥**
**प्रलेपोन्मर्दने युंज्यात्सुखोष्णा मूत्रकल्किताः ।**

कृष्णादीन् कोष्णान् प्रलेप उन्मर्दने च मूत्रकल्कितान् युंजीत ।

**स्नानं मूत्रांभसी सिद्धे कुष्टतर्कारिचित्रकैः ॥ ३५ ॥**
**कुलत्थनागराभ्यां वा चंडागुरुविलेपने ।**

मूत्रजले कुष्टादिभिः सिद्धे स्नानाय हिते । कुलत्थशुंठीभ्यां वा क्वथिते गोमूत्रजले हिते । विलेपने चंडागुरुणी हिते ।

**कालाजश्रृंगीसरलबस्तगंधाह्वयाह्वयाः ॥ ३६ ॥**
**एकैषिका च लेपः स्याच्छ्वयथावेकगात्रजे ।**

कालाजश्रृंग्यादय एकांगके शोफे लेपः स्यात् । काला नीलिनी । बस्तगंधा कारवी । एकैषिका त्रिवृता ।

**यथादोषं यथासन्नं शुद्धिं रक्तावसेचनम् ।**
**कुर्वीत मिश्रदोषे तु दोषोद्रेकबलात्क्रियाम् ॥ ३७ ॥**

यथादोषं दोषानुसारेण शुद्धिं तथा रक्तावसेचनं यथासन्नं कुर्वीत । संसर्गजे तु यथाभ्यधिकदोषानुसारेण क्रियां कुर्यात् ।

**अजाजिपाठाघनपंचकोल-**
**व्याघ्रीरजन्यः सुखतोयपीताः ।**
**शोफं त्रिदोषं चिरजं प्रवृद्धं**
**निघ्नंति भूनिंबमहौषधैश्च ॥ ३८ ॥**

अजाज्यादयः कोष्णजलपीताः शोफं त्रिदोषोत्थं चिरकालोत्पन्नं वृद्धिंगतं निघ्नंति । भूनिंबनागरे च हृत इति वचनपरिणामेन संबंधः । उपजातिर्वृत्तम् ।

**अमृताद्वितयं सिवाटिका**
**सुरकाष्ठं सपुरं सगोजलम् ।**
**श्वयथूदरकुष्ठपांडुता**
**कृमिमेहोर्ध्वकफानिलापहम् ॥ ३९ ॥**

अमृतायुगलादिकं गुग्गुलुसहितं गोमूत्रेण पीतं शोफादीन् हंति । वैतालीयम् । षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरंतराः । न समात्र पराश्रिता कला वैतालीयेंऽते रलौ गुरुः ।

**इति निजमधिकृत्य पथ्यमुक्तं**
**क्षतजनिते क्षतजं विशोधनीयम् ।**
**श्रुतिहिमघृतलेपसेकरेकै-**
**र्विषजनिते विषजिच्च शोफ इष्टम् ॥ ४० ॥**

इति पूर्वोक्तेन प्रकारेण निजं शोफं दोषजमधिकृत्य चिकित्सितमुक्तम् । क्षतोत्थे शोफे क्षतजमसृग् विशोध्यम् । कैः । रक्तस्रावादिभिः । विषजनिते शोफे विषहरमिष्टम् । पुष्पिताग्रा ।

**ग्राम्यानूपं पिशितमबलं शुष्कशाकं तिलान्नम्**
**गौडं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम् ।**
**धानावल्लूरसमशमनमथो गुर्वसात्म्यं विदाहि**
**स्वप्नं रात्रौ श्वयथुगदवान्वर्जयेन्मैथुनं च ॥ ४१ ॥**

ग्राम्यादिमांसादि शोफी वर्जयेत् । म्लौ न्यौ यौ ज्ञेया कुसुमितलतावेल्लिताश्रुत्तुलोकैः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने श्वयथुचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

अस्मादनंतरं विसर्पचिकित्सितमुत्सेधसामान्याच्चिकित्सासादृश्याच्च व्याख्यायते ।

**अथाऽतो विसर्पचिकित्सितं व्याख्यास्यामः ॥**
**आदावेव विसर्पेषु हितं लंघनरूक्षणम् ।**
**रक्तावसेको वमनं विरेकः स्नेहनं न तु ॥ १ ॥**

विसर्पेषु पूर्वमेव लंघनादि हितम् । स्नेहनं तु न हितम् ।

**प्रच्छर्दनं विसर्पघ्नं सयष्टींद्रयवं फलम् ।**
**पटोलपिप्पलीनिंबपल्लवैर्वा समन्वितम् ॥ २ ॥**

वमनं विसर्पघ्नं मदनफलं मधुयष्टिकेंद्रयवान्वितम् हितम् । पटोलादिभिर्युतं वा मदनफलं हितम् ।

**रसेन युक्तं त्रायंत्या द्राक्षायास्त्रैफलेन वा ।**
**विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥**
**योज्यं कोष्ठगते दोषे विशेषेण विशोधनम् ।**

त्रिवृच्चूर्णं त्रायंत्या रसेन युक्तं द्राक्षारसेन वा त्रिफलारसेन वा विरेचनं योज्यम् । क्षीरेण घृतेन वा त्रिवृच्चूर्णं युक्तम् । कोष्ठगते दोषे विशेषेण शोधनं योज्यम् ।

**अविशोध्यस्य दोषेऽल्पे शमनं चंदनोत्पलम् ॥४॥**
**मस्तुनिंबपटोलं वा पटोलादिकमेव वा ।**
**सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥**

अशोधनार्हस्य पुंसोऽल्पे दोषे शमनं चंदनोत्पलं योज्यम् । मस्तुनिंबपटोलं वा । पटोलकटुरोहिणीत्यादिकं वा सारिवादिकं वा जले क्वथितम् ।

**दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ।**
**पाक्यं शीतकषायं वा तृष्णाविसर्पवान् पिबेत् ॥**

दुरालभादिकं क्वथितं शीतकषायं वा तृष्णादिमान् पिबेत् ।

**दार्वीपटोलकटुकामसूरत्रिफलास्तथा ।**
**सनिंबयष्टीत्रायंतीः क्वथिता घृतमूर्छिताः ॥ ७ ॥**

तथा दार्व्यादीन्निंबादिभिः सह क्वथितान् सर्पिर्विमिश्रितान् पिबेत् ।

**शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ।**
**त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥**

रक्ते च शाखादुष्टे सति प्रथमं रुधिरमेव हरेत् । कुत इत्याह । त्वङ्मांसेत्यादि । यस्मात्त्वगादिषु क्लेदो रक्तक्लेदाज्जायते तस्माद्रक्तं निर्हरेत् ।

**निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम् ।**
**घृतं तिक्तं महातिक्तं श्रृतं वा त्रायमाणया ॥९॥**

निरामे पुंसि तथा वातपित्ताधिके कफे च क्षीणे घृतं तिक्तकादिकं हितम् । पूर्वं सामान्येन विसर्पिणः स्नेहनं निषिद्धम् । अवस्थाविशेषेण च स्नेहनमिदमुक्तमिति पूर्वापरव्याहतत्वमत्र नाशंकनीयम् ।

**निर्हृतेऽस्रे विशुद्धेंऽतर्दोषे त्वङ्मांससंधिगे ।**
**बहिःक्रियाः प्रदेहाद्याः सद्यो विसर्पशांतये ॥१०**

रक्ते निर्हृतेंऽतर्विशुद्धे दोषे त्वङ्मांसाश्रिते सति प्रलेपसेकाद्या बहिःक्रियाः परिमार्जने विधेयाः । शीघ्रमेव विसर्पशांतये स्युः ।

**शताह्वामुस्तवाराहीवंशार्तगलधान्यकम् ।**
**सुराह्वा कृष्णगंधा च कुष्टं वा लेपनं चले ॥११॥**

शतपुष्पादिकं चले वाते विसर्पे प्रलेपनं हितम् । आर्तगलो नीलः सहचरः ।

**न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम् ।**

न्यग्रोधादिगणः पित्तविसर्पे प्रलेपो हितः । तथा पित्तविसर्पे पद्मोत्पलादिकं दशग्रंथ्याख्यं तंत्रादवधार्यम् । यथा षड्वणाख्यो योगः । संग्रहे चैवं पठ्यते । पद्मोत्पलशैवालपंकदूर्वामृणालश्रृंगाटककसेरुकशर्कराह्वीबेरचंदनमुक्तामणिगैरिकपयस्याप्रपौंडरीकमधुकपद्मकघृतक्षीराणीति ।

**न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ॥ १२ ॥**
**बिसग्रंथिश्च लेपः स्याच्छतधौतघृताप्लुतः ।**
**पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा ॥१३॥**
**शंखः प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम् ।**

न्यग्रोधस्य पादास्तरुणा अभिनवकदलीगर्भान्विता बिसग्रंथिश्च लेपोऽयं शतधौतघृतालोडितः । तथा पद्मिनीपंकः शिशिरो मौक्तिकं वा जलपिष्टम् । शंखो वा पिष्टो विद्रुमो वा शुक्तिर्वाऽथवा गैरिकं घृतयुक्तं लेपो हितः ।

**त्रिफलापद्मकोशीरसमंगाकरवीरकम् ॥ १४ ॥**
**नलमूलान्यनंता च लेपः श्लेष्मविसर्पहा ।**

त्रिफलादिभिर्लेपः श्लेष्मविसर्पहृत् ।

**धवसप्ताह्वखदिरदेवदारुकुरंटकम् ॥ १५ ॥**
**समुस्तारग्वधं लेपो वर्गो वा वरुणादिकः ।**
**आरग्वधस्य पत्राणि त्वचः श्लेष्मांतकोद्भवाः॥१६॥**
**इंद्राणीशाकं काकाह्वाशिरीषकुसुमानि च ।**

धवादिकं वरुणसैर्यकेत्यादिर्वा कर्णिकारस्य वा पत्राणि श्लेष्मांतकत्वचो वा इंद्राण्यादयो वा लेपः ।

**सेकव्रणाभ्यंगहविर्लेपचूर्णान् यथायथम् ॥ १७ ॥**
**एतैरेवौषधैः कुर्याद्वायौ लेपा घृताधिकाः ।**

एभिरेव श्लेष्मविसर्पलेपौषधैः सेकादीन् कुर्यात् । व्रणाभ्यंगाय हविरित्यश्वघासवत्समासः । वायौ ये लेपा उक्तास्ते घृताधिकाः कार्याः । अधिकशब्दनिर्देशाच्चेदं गमयति । अन्यत्राऽपि पित्तविसर्पे कफविसर्पे च ये लेपा उक्तास्तेऽपि सघृताः कार्या नत्वघृता इत्यर्थः ।

**कफस्थानगते सामे पित्तस्थानगतेऽथवा ॥ १८ ॥**
**आशीतोष्णा हिता रूक्षा रक्तपित्ते घृतान्विताः ।**
**अत्यर्थशीतास्तनवस्तनुवस्त्रांतरास्थिताः ॥ १९ ॥**
**योज्याः क्षणे क्षणेऽन्येऽन्ये मंदवीर्यास्त एव च ।**

कफस्थानगते सामे वायौ किंचिच्छीतोष्णरूक्षाश्च प्रलेपा हिताः । पित्तस्थानगते च रक्तपित्ते घृतान्वितः । अत्यंतशीतास्तनवस्तथा तनुवस्त्रांतरास्थिताः क्षणे क्षणेऽपरे योज्याः । च शब्दो यस्मादर्थे । यस्मात्त एव पुनः पुनः प्रयुज्यमाना मंदवीर्याः स्युः ।

**संसृष्टदोषे संसृष्टमेतत्कर्म प्रशस्यते ॥ २० ॥**

संसृष्टदोषे विसर्पे उभयरूपे च संसर्गाख्ये सन्निपाताख्ये चैतत्कर्मेदं चिकित्सितम् । यत्प्रतिदोषमुक्तं तदेव यथायथं संसृष्टं कृत्वा तत्र प्रशस्यते ।

इति सामान्येन संसृष्टदोषचिकित्सितमुक्त्वा वातपित्तजादिष्वग्निविसर्पादिषूपक्रममाह ।

**शतधौतघृतेनाऽग्निं प्रदिह्यात्केवलेन वा ।**
**सेचयेद्धृतमंडेन शीतेन मधुकांबुना ॥ २१ ॥**
**शीतांभसांभोजजलैः क्षीरेणेक्षुरसेन वा ।**
**पानलेपनसेकेषु महातिक्तं परं हितम् ॥ २२ ॥**

अग्निशब्देनाऽग्निविसर्प उपलक्ष्यते । तस्य च लक्षणम् । वातपित्तांतरे कफ इत्यादियावद्दुःप्रबाध श्रुते निद्रां सोऽग्निविसर्प उच्यत इति । तमग्निविसर्पं शतधौतघृतेन प्रलेपयेत् । सेचयेदित्यादि । अथवा केवलेन घृतमंडेन सेचयेत् । शिशिरेण मधुयष्टीजलेन वा सेचयेत् । एवं शर्कराजलेन मुस्तजलेन क्षीरेणेक्षुरसेन चेति योज्यम् । पानादिषु महातिक्तं सुष्ठु हितम् ।

**ग्रंथ्याख्ये रक्तपित्तघ्नं कृत्वा सम्यग्यथोदितम् ।**
**कफानिलघ्नं कर्मेष्टं पिंडस्वेदोपनाहनम् ॥ २३ ॥**

ग्रंथिविसर्पे रक्तपित्तघ्नं कर्म कृत्वा ततः कफानिलघ्नं कर्म पिंडस्वेदादिकमिष्टम् ।

**ग्रंथिविसर्पशूले तु तैलेनोष्णेन सेचयेत् ।**
**दशमूलविपक्केन तद्वन्मूत्रैर्जलेन वा ॥ २४ ॥**

ग्रंथिविसर्पशूले सति दशमूलविपक्केनोष्णेन तैलेन सेचयेत् । तथैव मूत्रैर्दशमूलविपक्कैरिति वचनपरिणामेन संबंधः । जलेन वा दशमूलक्कथितेन सेचयेत् ।

**सुखोष्णया प्रदिह्याद्वा पिष्टया कृष्णगंधया ।**
**नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥२५**

अथवा कृष्णगंधया पिष्टया सुखोष्णया प्रदिह्यात् । अथवा नक्तमालत्वचा पिष्टया सुखोष्णया प्रदिह्यात् । शुष्कमूलकैः पिष्टैः सुखोष्णैरथवा कलिना बिभीतकेन सुखोष्णेन लेपयेत् ।

**दंतीचित्रकमूलत्वक्सौधार्कपयसीगुडः ।**
**भल्लातकास्थिकासीसलेपो भिंद्याच्छिलामपि २६**
**बहिर्मार्गाश्रितं ग्रंथिं किं पुनः कफसंभवम् ।**
**दीर्घकालस्थितं ग्रंथिमेभिर्भिंद्याच्च भेषजैः ॥२७॥**

दंत्यादिभिर्द्रव्यैर्लेपः शिलामपि भिंद्यात् । किमुत कफजं बाह्यमार्गाश्रितं ग्रंथिं लेपो न भिंद्यात् । चिरकालावस्थितं ग्रंथिमेभिरेव पूर्वोक्तैरौषधैर्भिंद्यात् ।

**मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः ।**
**गोधूमान्नैर्यवान्नैश्च ससीधुमधुशर्करैः ॥ २८ ॥**
**सक्षौद्रैर्वारुणीमंडैर्मातुलुंगरसान्वितैः ।**
**त्रिफलायाः प्रयोगैश्च पिप्पल्याः क्षौद्रसंयुतैः २९**
**देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।**
**मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥**
**धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ।**
**तप्तायोहेमलवणपाषाणादिप्रपीडनैः ॥ ३१ ॥**

मूलकादियूषादिभिः सक्षारदाडिमैर्गोधूमादिभोजनैस्तथा पानैः ससीधुमधुशर्करैस्तथा सक्षौद्रैर्वारुणीमंडैर्मातुलुंगरसान्वितैस्तथा त्रिफलायाः प्रयोगैरित्यारभ्य यावत्तप्तायोहेमलवणपाषाणादिप्रपीडनैर्दीर्घकालस्थितं ग्रंथिं भिंद्यादित्यनुवर्त्य योज्यम् ।

**आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ।**
**ग्रंथिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥**
**अथास्य दाहः क्षारेण शरैर्हेम्नाऽपि वा हितः ।**
**पाकिभिः पाचयित्वा तु पाटयित्वा तमुद्धरेत्॥३३॥**

आभिः पूर्वोक्ताभिः क्रियाभिः सिद्धाभिः सिद्धर्षिप्रणीतत्वादविसंवादिनीभिस्तथा विविधाभिरनेकप्रकारादिभिः प्रयुक्ताभिर्बले स्थितो यदि ग्रंथिर्दीर्घकालानुबंधत्वादतिप्रवृद्ध अत एव पाषाणकठिनो यदि नैवोपशाम्यति ।अथाऽनंतरमस्य दाहः क्षारेण हितः । अग्निना शरैर्हेम्नाऽपि वा हितः । अथवा पाकिभिरौषधैर्बाह्यांतः शोधितैः पाचयित्वा पाटयित्वा तं ग्रंथिमुद्धरेत् ।

**मोक्षयेद्बहुशश्चाऽस्य रक्तमुत्क्लेशमागतम् ।**
**पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ ३४ ॥**

अस्य ग्रंथेर्ग्रंथिविसर्पवतो रक्तमुत्क्लेशमागतं विकारकरणं प्रत्युन्मुखतां प्राप्तं बहुशो मोक्षयेत् । पुनश्च रक्तेऽपहृते वातश्लेष्मजिदौषधं तत्र हितम् ।

**प्रक्लिन्ने दाहपाकाभ्यां बाह्यांतव्रणवत्क्रिया ।**
**दार्वीविडंगकंपिल्लैः सिद्धं तैलं व्रणे हितम्॥३५॥**
**दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ।**

प्रक्लिन्ने सर्वस्मिन् विसर्पे दाहपाकाभ्यां चोपलक्षिते बाह्यांतव्रणवत्क्रिया स्यात् । तथा दार्व्यादिभिः सिद्धं तैलं व्रणे हितम् । वातप्रधाने विसर्प इत्यर्थाद्गम्यते । तथा कफपित्तोत्तरे विसर्पे दूर्वास्वरसेन पक्कं घृतं हितम् ।

**एकतः सर्वकर्माणि रक्तमोक्षणमेकतः ॥ ३६ ॥**

एकत एकस्मिंश्चिकित्सापक्षे सर्वकर्माणि यथानिर्दिष्टानि रक्तमोक्षणमेकत एकस्मिन् पक्षे । एवं विसर्पोद्दिष्टया सर्वचिकित्सया रक्तमोक्षणस्य च विसर्पशमने तुल्यत्वात् ।

ननु कथमेतत्स्यादित्याह ।

**विसर्पो न्ह्यसंसृष्टः सोऽस्रपित्तेन जायते ।**
**रक्तमेवाश्रयश्चास्य बहुशोऽस्रं हरेदतः ॥ ३७ ॥**

यस्माद्विसर्पः सर्वो रक्तपित्तेनासंसृष्टोऽसंबद्धो न जायते । न कदाचिद्रक्तपित्ताभ्यामंतरेणोत्पद्यत इत्यर्थः । अस्य च विसर्पस्य रक्तमेवाश्रयो नान्यः ।अतोऽस्माद्बहुशो बहून् वारान् रक्तमेव हरेत् ।

**न घृतं बहुदोषाय देयं यन्न विरेचनम् ।**
**तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत् ॥ ३८ ॥**

बहुदोषाय विसर्पिणे तद्घृतं न देयं यद्विरेचनं न भवति । पित्तं हि विसर्पे प्राधान्येन चिकित्स्यम् । पित्तस्य च विरेचनमुपक्रमप्रधानमिति । तेन घृतेन विरेचनेन यस्मादुपस्तब्धस्तंभितोदोषस्त्वग्रक्तमांसानि पचेत् । तस्माद्विरेचनकरमेव घृतं योज्यमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने विसर्पचिकित्सितं नामाष्टादशोऽध्यायः।

## एकोनविंशोऽध्यायः ।

अस्मादनंतरं कुष्ठचिकित्सितमारभ्यते । संबंधश्चास्य निदान एवोक्त इत्याह ।

**अथाऽतः कुष्ठचिकित्सितं व्याख्यास्यामः ॥**

त्वग्रक्तमांसादिदूषणात्तत्स्रवणादामयस्वभावाच्च कायकार्श्यं कुष्ठिनः प्रायेणावश्यं भावि । अनेनैवानुसारेण वक्ष्यति । स्नेहैराप्याययेच्चैनं कुष्ठघ्नैरंतरांतर इत्याह ।

**कुष्ठिनं स्नेहपानेन पूर्वं सर्वमुपाचरेत् ।**

कुष्ठवंतं नरं सर्वमेव स्नेहपानैरुपक्रमेच्छरीराप्यायनार्थम् । पूर्वमस्य स्नेहोपयोगो युक्त इत्यर्थः ।

**तत्र वातोत्तरे तैलं घृतं वा साधितं हितम् ॥ १ ॥**
**दशमूलामृतैरंडशार्ङ्गेष्टामेषशृंगिभिः ।**

तस्मिन्वातोत्तरे कुष्ठे दशमूलादिभिः पक्वं तैलं घृतं वा हितम् ।

**पटोलनिंबकटुकादार्वीपाठादुरालभाः ॥ २ ॥**
**पर्पटं त्रायमाणां च पलाशं पाचयेदपाम् ।**
**द्व्याढकेऽष्टांशशेषेण तेन कर्षोन्मितैस्तथा ॥ ३ ॥**
**त्रायंतीमुस्तभूनिंबकलिंगकणचंदनैः ।**
**सर्पिषो द्वादशपलं पचेत्तत्तिक्तकं जयेत् ॥ ४ ॥**
**पित्तकुष्ठपरीसर्पपिटिकादाहतृड्भ्रमान् ।**
**कंडुपांड्वामयान् गंडान् दुष्टनाडीव्रणापचीः ॥ ५ ॥**
**विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि ।**
**हृद्रोगतिमिरव्यंगग्रहणीश्वित्रकामलाः ॥ ६ ॥**
**भगंदरमपस्मारमुदरं प्रदरं गरम् ।**
**अर्शोऽस्रपित्तमन्यांश्च**
**सुकृच्छ्रान् पित्तजान् गदान् ॥ ७ ॥**

पटोलादिपलांशं जले द्व्याढके पाचयेत् । तेनाष्टभागशेषेण क्वाथेन तथा कर्षमात्रैस्त्रायंत्यादिभिर्घृतस्य पलानि द्वादश पचेत् । तदेवं तिक्तकाख्यं सर्पिः पित्तकुष्ठादीन् जयेत् । अपरानपि पित्तजानामयान् हंति । एतैश्च द्वादशपलमात्रं पक्वं प्रकृष्टगुणं स्यादिति दृष्टं तत्त्वदर्शिभिर्महर्षिभिः ।

**सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ।**
**त्रिफला पद्मकं पाठा रजन्यौ सारिवे कणे ॥ ८॥**
**निंबचंदनयष्ट्याह्वविशालेंद्रयवामृताः ।**
**किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥**
**पटोलातिविषामुस्तात्रायंतीधन्वयासकम् ।**
**तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥**
**सिद्धं तिक्तान्महातिक्तं गुणैरभ्यधिकं मतम् ।**

सप्तच्छदादिभिः कल्कैर्घृतादष्टगुणे जले द्विगुणामलकरसे सर्पिः पक्वं महातिक्तसंज्ञं गुणैश्चाभ्यधिकं तिक्तान्मतं मुनीनामिति शेषः ।

**कफोत्तरे घृतं सिद्धं निंबसप्ताह्वचित्रकैः ॥ ११ ॥**
**कुष्ठोषणवचाशालप्रियालचतुरंगुलैः ।**

कफोत्तरे निंबादिभिः कल्कीकृतैः पक्वं घृतं पिबेत् ।

**सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥**
**स्नेहं घृतं वा कृमिजित्पथ्याभल्लातकैः शृतम् ।**

सर्वेषु च कुष्ठेषु भल्लातकोत्थं तुवरजं सर्षपजं वा स्नेहमथवा घृतं कृमिजिदादिभिः साधितं पिबेत् ।

**आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३॥**
**पिबेत्कुष्ठं जयत्याशु भजन् सखदिरं जलम् ।**

कर्णिकारस्य मूलेन शतवारान् घृतं पक्वं पिबन् कुष्ठं जयति खदिरयुतं पानीयं सेवमानः ।

**एभिरेव यथास्वं च स्नेहैरभ्यंजनं हितम् ॥ १४॥**

एभिरेव पूर्वोक्तैः स्नेहैर्यथायोगमभ्यंजनं हितम् ।

**स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम् ।**

स्निग्धस्य कुष्ठिनः शोधनं योज्यं यद्विसर्पे कथितम् । तत्र चोक्तम् । रसेन युक्तस्त्रायंत्या द्राक्षया इत्यादि ।

**ललाटहस्तपादेषु शिराश्चास्य विमोक्षयेत् ॥ १५ ॥**
**प्रच्छानमल्पके कुष्ठे शृंगाद्याश्च यथायथम् ।**

ललाटादिषु चास्यातुरस्य बलापेक्षी वैद्यो शिरां विमोक्षयेत् । अत्यल्पे कुष्ठे प्रच्छानं स्यात् । यथा यथास्वं शृंगाद्याश्च स्युः ।

**स्नेहैराप्याययेच्चैनं कुष्ठघ्नैरंतरांतरा ॥ १६ ॥**
**मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः ।**
**प्रभंजनस्तथा ह्यस्य न स्याद्देहप्रभंजनः ॥ १७ ॥**

अंतरांतरा सुतरक्तं कृतविरेकं च कुष्ठघ्नैः स्नेहैरेनं कुष्ठिनमाप्याययेत् । एवं कृते सत्यस्य कुष्ठिनो मुक्तरक्तस्य तथा विरिक्तस्यात एव रिक्तकोष्ठस्य प्रभंजनो देहस्य प्रभंजनो विघातको न स्यात् ।

**वासामृतानिंबवरापटोल-**
**व्याघ्रीकरंजोदककल्कपक्वम् ।**
**सर्पिर्विसर्पज्वरकामलास्र-**
**कुष्ठापहं वज्रकमामनंति ॥ १८ ॥**

वासादिभिः सिद्धं सर्पिर्विसर्पादिघ्नम् । एतच्च वज्रकसंज्ञं घृतं वदंति । इंद्रवज्रावृत्तम् ।

**त्रिफलात्रिकटुद्विकंटकारी-**
**कटुकाकुंभनिकुंभराजवृक्षैः ।**
**सवचातिविषाग्निकैः सपाठैः**
**पिचुभागैर्नववज्रदुग्धमुष्ट्या ॥ १९ ॥**

पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः
क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्
हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम् ॥ २० ॥

त्रिफलादिभिः कार्षिकैः प्रत्यग्रस्नुहीक्षीरपलेन सहपिष्टैरेभिरौषधैर्घृतप्रस्थं चतुर्गुणजलसिद्धं क्रूरकोष्ठे स्नेहनं स्यात् । रेचनं च । तथा कुष्ठादीन् दारुणान्हन्यात् । तच्च महावज्रकं नाम । उपच्छंदसिकशालिन्यौ वृत्ते ।

दंत्याढकमपां द्रोणे पक्त्वा तेन घृतं पचेत् ।
धामार्गवपले पीतं तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥

दंत्याः षोडश पलानि जलद्रोणे पचेत् । तेन क्वाथेन राजकोशातकीपले घृतं पचेत् । तत्पीतमूर्ध्वाधो विशुद्धिकरम् ।

आवर्तकीतुलां द्रोणे पचेदष्टांशशेषितम् ।
तन्मूलैस्तत्र निर्यूहे घृतप्रस्थं विपाचयेत् ॥ २२ ॥
पीत्वा तदेकदिवसांतरितं सुजीर्णे
भुंजीत कोद्रवसुसंस्कृतकांजिकेन ।
कुष्ठं किलासमपचीं च विजेतुमिच्छन्
इच्छन्प्रजां च विपुलां ग्रहणं स्मृतिं च ॥२३॥

आवर्तक्याः शतं द्रोणेऽपामष्टांशशेषितं पचेत् । तत्र क्वाथे तस्या मूलैः कल्कीकृतैर्घृतप्रस्थं विपाचयेत् । तद्धृतमेकदिवसांतरितं पीत्वा सुष्ठुजीर्णे च घृते कोद्रवसुसंस्कृतेन कांजिकेन सह भुंजीत । कुष्ठादीन् विजिगीषुः । प्रजां च विस्तीर्णामिच्छन् । ग्रहणं स्मृतिं चाभिलषन् । वसंततिलकावृत्तम् ।

यतेर्लेलीतकवसा क्षौद्रजातीरसान्विता ।
कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका ॥ २४ ॥

यतेर्ब्रह्मचर्यस्थितस्य लेलीतकवसा माक्षीकजातीरसयुता कुष्ठघ्नी स्यात् । लेलीतकवसा सौवर्चललवणतैलं गंधकमेके । जातीरसो बोलः । अथवा समघृता खदिरासनोदकसहिता कुष्ठघ्नी स्यात् ।

शालयो यवगोधूमाः कोरदूषाः प्रियंगवः ।
मुद्गा मसूरास्तुवरीतिक्तशाकानि जांगलम् ॥ २५ ॥
वरापटोलखदिरनिंबारुष्करयोजितम् ।
मद्यान्यौषधगर्भाणि मथितं चेक्षुराजितम् ॥ २६ ॥
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम् ।
दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम् ॥ २७ ॥

शाल्यादिकमन्नपानं च वरादिभिर्योजितं कुष्ठे हितम् । इक्षुराजिर्वाकूची । अम्लादिकमन्नपानं न हितं कुष्ठे स्यात् । तथा दध्यादीनतिशयेन वर्जयेत् । प्रतिरोगं च यन्निदानवर्जनं तच्चिकित्सितमेवेत्यवगंतव्यम् ।

पटोलमूलत्रिफलाविशालाः
पृथक्त्रिभागापचितत्रिशाणाः ।
स्युस्त्रायमाणा कटुरोहिणी च
भागार्धिके नागरपादयुक्ते ॥ २८ ॥
एतत्पलं जर्जरितं विपक्वं
जले पिबेद्ध्योपविशोधनाय ।
जीर्णे रसैर्धन्वमृगद्विजानां
पुराणशाल्योदनमाददीत ॥ २९ ॥
कुष्ठं किलासं ग्रहणीप्रदोष-
मर्शांसि कृच्छ्राणि हलीमकं च ।
षड्रात्रियोगेन निहंति चैतद्
हृद्बस्तिशूलं विषमज्वरं च ॥ ३० ॥

पृथक् प्रत्येकं त्रिभागेनापचितो न्यूनस्तृतीयः शाणो येषां ते पटोलादयः पंचपृथक्त्रिभागापचितत्रिशाणाः । लोकेऽपि चैवं प्रयुक्ता एव । यथा त्रिभागोनास्त्रयो द्रम्मा देया इति । अत्र हि द्वौ द्रम्मौ तृतीयश्च द्रम्मस्त्रिभागेन हीन इति गम्यते । तदेवं पटोलस्य शाणौ द्वौ धानकाश्चतस्रो भवंति । षड्धानको हि शाणः । एवं पटोलमूलादिद्रव्याणां पंचानां प्रत्येकं षोडशधानकाः स्युः । स्यात्त्रायमाणा कटुरोहिणी च भागार्धिका । किंभूते । नागरपादयुक्ते सत्यौ नतु केवले । तदयमर्थः । त्रायंत्या धानकाः षट् । कटुकाया धानकाः षट् । नागरस्य धानकाश्चतस्रः । षोडशधानका ह्यत्र मूलद्रव्यभागः । तदेवं पटोलादीनां पंचानामशीतिर्धानकाः । त्रायंतीकटुकयोः शुंठीपादयुतयोः षोडशधानकाः । इति षण्णवतिधानकाभिः पलं भवति । तदिदं पलं जर्जरितं किंचिच्चूर्णितं जले विपक्वं दोषं विशुद्ध्यर्थं पिबेत् । जीर्णे सत्यौषधे जांगलमृगपक्षिणां मांसरसैः सह पुराणशाल्योदनमश्नीयात् । उपजाती वृत्ते । एतच्च पीतं षड्रात्रयोगेन षड्दिनान्युपयुक्तं कुष्ठादीन् हंति । इंद्रवज्रा वृत्तम् ।

विडंगसारामलकाभयानां
पलत्रयं त्रीणि पलानि कुंभात् ।
गुडस्य च द्वादशमासमेष
जितात्मनां हंत्युपयुज्यमानः ॥ ३१ ॥
कुष्ठं श्वित्रं श्वासकासोदरार्शो-
मेहप्लीहग्रंथ्यरुग्जंतुगुल्मान् ।
सिद्धं योगं प्राह यक्षो मुमुक्षो-
र्भिक्षोः प्राणान्माणिभद्रः किलेमम् ॥ ३२॥

विडंगसारादीनां समुदितानां पलत्रयं त्रीणि पलानि कुंभात् त्रिवृतायास्त्रीणि पलानि । गुडस्य च द्वादशपलानि । एष प्रयोगो जितेंद्रियाणां मासमुपयुज्यमानो वक्ष्यमाणान् गदान्हंति । उपेंद्रवज्रा तु जगौ जगौ गः। मासशब्दोपादानाच्च प्रत्यहमस्माद्योगादर्धपलं धानकानवरक्तिकात्रयसहितमभ्यवहरणीयत्वेनात्रावतिष्ठते ।

अन्यत्राऽपि प्रदेशे य एवंविधो निर्देशस्तत्र परिमाणकल्पनायामयमेव न्यायोऽनुमंतव्यः । माणिभद्राख्यो यक्षो भिक्षोः प्राणान्मुमुक्षोर्जीवितं जिहासोरिमं सिद्धं योगं प्राणकरं प्राह । जगादेत्यर्थः । अत्रभूते काले प्राहेति न तथा साधुकिलेत्यागमिकत्वं च सूचयति । शालिनीवृत्तम् ।

**भूनिंबनिंबत्रिफलापद्मकातिविषाकणाः ।**
**मूर्वा पटोली द्विनिशा पाठातिक्तेंद्रवारुणीः॥३३॥**
**सकलिंगवचास्तुल्या द्विगुणाश्च यथोत्तरम् ।**
**लिह्याद्दंती त्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा॥३४॥**
**कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम् ।**

भूनिंबादयस्तुल्या दंत्यादयश्च यथोत्तरम् । द्विगुणाश्चूर्णिता मधुसर्पिषा लिह्यात् । कुष्ठादीनामेतत्परं भेषजम् ।

**वराविडंगकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः॥३५॥**

त्रिफलादीन्वा तैलघृतमाक्षिकैर्लिह्यात् ।

**काकोदुंबरिकावेल्लनिंबाब्दव्योषकल्कवान् ।**
**हंति वृक्षकनिर्यूहः पानात्सर्वांस्त्वगामयान्॥३६॥**

काकोदुंबरिकादिकल्कवान् वृक्षकक्वाथः पानात्सर्वान् त्वग्रोगान्हंति । काकोदुंबरिका फल्गुः । वृक्षको वत्सकः ।

**कुटजाग्निनिंबनृपतरुखदिरासनसप्तपर्णनिर्यूहे ।**
**सिद्धा मधुघृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः ।**

कुटजादिक्वाथे सिद्धाः पक्वा हरीतकीर्मधुघृतसंयुक्ताः कुष्ठनुदो भक्षयेत् । आर्यावृत्तम् ।

**दार्वीखदिरनिंबानां त्वक् क्वाथः कुष्ठसूदनः॥३७॥**

दार्व्यादीनां त्वक्क्वाथः कुष्ठनाशनः स्यात् ।

**निशोत्तमानिंबपटोलमूल-**
**तिक्तावचालोहितयष्टिकाभिः ।**
**कृतः कषायः कफपित्तकुष्ठं**
**सुसेवितो धर्म इवोच्छिनत्ति ॥ ३८ ॥**
**एभिरेव च शृतं घृतमुख्यं**
**भेषजैर्जयति मारुतकुष्ठम् ।**
**कल्पयेत्खदिरनिंबगुडूची-**
**देवदारुरजनीः पृथगेवम् ॥ ३९ ॥**

निशादिभिः कषायः कृतः कफपित्तजं कुष्ठमुद्दलयति । सुष्ठुसेवितो यथा धर्मः । एभिरेव पूर्वोक्तैरौषधैः पक्वं वरं घृतं वातकुष्ठं जयति । एवमनयैव कल्पनया पृथक् खदिरादीन् कल्पयेत् । उपजातिस्वागते वृत्ते ।

**पाठादार्वीवह्निघुणेष्टाकटुकाभि-**
**र्मूत्रं युक्तं शक्रयवैश्चोष्णजलं च ।**
**कुष्ठी पीत्वा मासमरुक् स्याद्गुदकीली**
**मेही शोफी पांडुरजीर्णी कृमिमांश्च॥४०॥**

पाठादिभिरिंद्रयवैश्च गोमूत्रं युक्तमथवोष्णजलं मासं पीत्वा कुष्ठी नीरुक् स्यात् । अर्शसादिश्च । वेदैरंध्रैर्म्तौ यसगामत्तमयूरम् ।

**लाक्षादंतीमधुरसवराद्वीपिपाठाविडंगं**
**प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम् ।**
**रक्तानिंबं सुरतरुकृतं पंचमूल्यौ च चूर्णं**
**पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम् ४१**

लाक्षादिचूर्णं गोमूत्रेण मासं पीत्वा हितभोजी सन् कुष्ठं जयति । रक्ता मंजिष्ठा । सुरतरुशब्दस्य नपुंसकत्वमौषधवाचित्वाल्लोकाश्रयत्वाल्लिंगस्येति वा । पंचमूल्यौ दशमूलमित्यर्थः । मंदाक्रांताजलधिषडगैर्म्भौ नतौ ताद्गुरूचेत् ।

**निशाकणानागरवेल्लतौवरं**
**सवह्निताप्यं क्रमशो विवर्धितम् ।**
**गवांबु पीतं वटकीकृतं तथा**
**निहंति कुष्ठानि सुदारुणान्यपि ॥ ४२ ॥**

निशादिकं क्रमेण विवर्धितं गोमूत्रेण पीतमथवा वटकीकृतं कुष्ठानि सुकृच्छ्राण्यपि निहंति । उशंति वंशस्थमिदं जतौ जरौ ।

**त्रिकटूत्तमातिलारु-**
**ष्कराज्यमाक्षिकसितोपला विहिता ।**
**गुलिका रसायनं स्यात्**
**कुष्ठजिच्च वृष्या च सप्तसमा ॥ ४३ ॥**

त्रिकटुकादिभिर्गुलिका विहिता रसायनं कुष्ठहृद् वृष्या च स्यात् । एवं च सप्तसमाख्यात्रिकटुकत्रिफले ह्यत्र समुदायरूपत्वाद् द्वे एव कल्पिते । आर्या विपुलातुयान्यथा पादभाक् ।

**चंद्रशकलाग्निरजनी-**
**विडंगतुवरास्थ्यरुष्करत्रिफलाभिः ।**
**वटका गुडांशकृताः**
**समस्तकुष्ठानि नाशयंत्यभ्यस्ताः ॥ ४४ ॥**

चंद्रशकलादिभिर्वटका गुडांशेन कृताः शीलिता निःशेषकुष्ठानि घ्नंति । चंद्रशकला वाकूची । आर्या गीतिः ।

**विडंगभल्लातकवाकुचीनां**
**सद्वीपिवाराहिहरीतकीनाम् ।**
**सलांगलीकृष्णातिलोपकुल्या**
**गुडेन पिंडी विनिहंति कुष्ठम् ॥ ४५ ॥**

विडंगादीनां चूर्णेन गुडेन पिंडी लांगलिकाद्यन्विता कुष्ठं विजयते ।

**शशांकलेखा सविडंगमूला**
**सपिप्पलीकासहुताशमूला ।**
**सयोमला सामलका सतैला**
**कुष्ठानि कृच्छ्राणि निहंति लीढा ॥ ४६ ॥**

शशांकलेखाविडंगादिभिः सह तैलेन लीढा कृच्छ्राणि कुष्ठानि विनाशयति । उपजातिर्वृत्तम् ।

**पथ्यातिलगुडैः पिंडी कुष्ठं सारुष्करैर्जयेत् ।**
**गुडारुष्करजंतुघ्नसोमराजीकृताऽथवा ॥ ४७ ॥**

पथ्यादिभिः सभल्लातकैः पिंडी कुष्ठं जयेत् । गुडादिभिर्वा कृता पिंडी कुष्ठं हंति ।

**विडंगाद्रिजतु क्षौद्रं सर्पिष्मत्खादिरं रजः ।**
**किटिभश्वित्रदद्रुघ्नं खादेन्मितहिताशनः ॥ ४८ ॥**

खदिरचूर्णं विडंगादियुतं मितहितभोजनः किटिभादिघ्नं खादेत् ।

**सितातैलकृमिघ्नानि धात्र्यायामलपिप्पलीः ।**
**लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ४९ ॥**

सितादीनि लिहानो शेषकुष्ठानि कृच्छ्राण्यपि जयति ।

**मुस्तं व्योषं त्रिफला मंजिष्ठादारुपंचमूले द्वे ।**
**सप्तच्छदनिंबत्वक् सविशाला चित्रको मूर्वा॥५०॥**
**चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ।**
**नित्यं कुष्ठनिबर्हणमेतत्प्रायोगिकं खादन् ॥ ५१ ॥**
**श्वयथुं सपांडुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।**
**वर्ध्मभगंदरपिडकाकंडूकोठापचीर्हंति ॥ ५२ ॥**

मुस्तादिकं समभागं सक्तुभागैर्नवभिः संयोजितं मध्वंशेन युतमेतच्चूर्णं प्रायोगिकं प्रयोगयोग्यं कुष्ठघ्नं सततं खादेत् । आर्यास्तिस्रः ।

**रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ।**
**भल्लातकं वाकुचिकां वह्निमूलं शिलाह्वयम् ॥ ५३ ॥**

रसायनोक्तेन विधिना तुवरास्थीनि शीलयेत् । भल्लातकं वा सोमराजीं वा चित्रकमूलं वा शिलाजतु वा ।

**इति दोषे विजितेऽतस्**
**त्वक्स्थे शमनं बहिः प्रलेपादिहितम् ।**
**तीक्ष्णालेपोत्क्लिष्टं**
**कुष्ठं हि विवृद्धिमेति मलिने देहे ॥ ५४ ॥**

इत्येवं प्रकारेणांतर्विजिते दोषेऽत एव त्वक्स्थे बहिः प्रलेपादि हितम् । आदिशब्देन स्नानादिपरिग्रहः । ननु बहिर्भागस्थं कुष्ठं किमिति पूर्वमेव प्रलेपादिना न जीयत इत्याह । तीक्ष्णेत्यादि । यस्मात्तीक्ष्णेन लेपेनोत्क्लिष्टमुत्क्लेशं प्रापितं कुष्ठं मलिने सदोषे काये विवृद्धिं याति । तस्मादंतःशुद्धे काये प्रलेपादिकं हितम् । आर्या गीतिः ।

**स्थिरकठिनमंडलानां कुष्ठानां पोटलैर्हितः स्वेदः ।**
**स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिपेत् ॥५५॥**

स्थिराणि कठिनानि च मंडलानि येषां कुष्ठानां तेषां पोटलैः स्वेदो हितः । स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपैर्लिपेत् । गीतिरार्या ।

**येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु ।**
**तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्यम् ॥**

येषु कुष्ठेषु स्पर्शेंद्रियनाशनेषु शस्त्रं न क्रमते तेषु रक्तं दोषं च विस्राव्य क्षारो निपातनीयः । क्रमत इति वृत्तिसर्गेत्यादिना तङ् ।

**लेपोऽतिकठिने परुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।**
**पीतागदस्य कार्यो विषैः समंत्रो गदैश्चानु ॥ ५७ ॥**

पाषाणवत्कठिने तथा परुषस्पर्शे तथा सुप्ते स्थिरीभूते तथा पुराणे च कुष्ठे सत्यातुरस्योपयुक्तो गदस्य विषैर्मंत्रसहितैर्लेपः कार्यः । अनु पश्चादगदैश्च लेपः ।

**स्तब्धातिसुप्तसुप्तान्यस्वेदनकंडुलानि कुष्ठानि ।**
**घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५८ ॥**

कुष्ठानि स्तब्धानि तथाऽतिसुप्तानि तथा स्वेदनानि कंडूवंति च शुष्कगोमयादिभिर्घृष्टान्यनंतरं प्रलेप्यानि ।

**मुस्तात्रिफलामदनं करंज आरग्वधकलिंगयवाः ।**
**सप्ताह्वकुष्ठफलिनीदार्व्यसिद्धार्थकं स्नानम् ॥ ५९ ॥**
**एष कषायो वमनं विरेचनं वर्णकरस्तथोग्धर्षः ।**
**त्वग्दोषकुष्ठशोफप्रबोधनः पांडुरोगघ्नः ॥ ६० ॥**

मुस्तादयः स्नानं स्यात् । एष एव कषायो वमनं वर्णकरस्तथोग्धर्षस्त्वग्दोषादिप्रबोधनः पांडुरोगहृच्च स्यात् ।

**करवीरनिंबकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम् ।**
**मूत्रे दर्वीलेपीक्वाथो लेपेन कुष्ठघ्नः ॥ ६१ ॥**

करवीरमूलादिना चतुर्गुणे गोमूत्रे क्वथिते दर्वीलेपीक्वाथो लेपेन कुष्ठापहः ।

**श्वेतकरवीरमूलं कुटजकरंजात्फलं त्वचो दार्व्याः ।**
**सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ६२ ॥**

सितकरवीरमूलादयः सुमनःपल्लवयुतो लेपो निश्चितं कुष्ठघ्नः ।

**शैरिषीत्वक्पुष्पं कार्पास्याराजवृक्षपत्राणि ।**
**पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥६३॥**

**व्योषसर्षपनिशागृहधूमै-**
**र्यावशूकपटुचित्रककुष्ठैः ।**

कोलमात्रगुटिकार्धविषांशाः
श्वित्रकुष्ठहरणो वरलेपः ॥ ६४ ॥

शिरीषत्वगादिलेपश्चतुःप्रकारः कुष्ठजित् । व्योषादिभिर्द्रव्यैः समांशैस्तदर्धविषोपेतैः कोलप्रमाणा वटिका लेपतः श्वित्रं कुष्ठं हंति । आर्याऽष्टौ ।

निंबं हरिद्रे सुरसं पटोलं
कुष्ठाश्वगंधे सुरदारुशिग्रुः ।
ससर्षपं तुंबरुधान्यवन्यं
चंडावचूर्णानि समानि कुर्यात् ॥ ६५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्यकंडूपिटिकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजंति ॥ ६६ ॥

पूर्वं तैलाभ्यक्तं शरीरं निंबादिभिः समभागेन चूर्णीकृतैरुद्वर्तनार्थं यत्नं कुर्यात् । तथा । एवं कृतेऽस्यातुरस्य कंड्वादयः शाम्यंति । उद्वर्तनानंतरमुष्णजलस्नानं कार्यम् ।

मुस्तामृतासंघकटंकटेरी-
कासीसकंपिल्लककुष्ठरोध्राः ।
गंधोपलः सर्जरसो विडंगं
मनःशिलालेकरवीरकत्वक् ॥ ६७ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुः सकंडूः किटिभानि पामा
विचर्चिका चेति तथा न संति ॥ ६८ ॥

मुस्तादीनि समान्येतानि चूर्णानि कृत्वा तानि तैलाभ्यक्तदेहस्यावचूर्णनार्थं दद्यात् । तथा । एवमवचूर्णिते सति दद्रुरित्यादयो नश्यंति । चत्वार्येतान्युपजातिसंज्ञानि वृत्तानि ।

स्नुग्गंडे सर्षपात्कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हंति रागवेग इव त्रपाम् ॥ ६९ ॥

मनःशिलालेमरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः ।
तथा करंजप्रपुनाटबीजं
कुष्ठान्वितं गोसलिलेन पिष्टम् ॥ ७० ॥

सर्षपाणां कल्कः स्नुह्यागंडे कुकूलाग्नौ पाचिते लेपेन विचर्चिकां हंति । रागवेगो लज्जां यथा । मनःशिलादयः प्रलेपात् कुष्ठहृत्तद्वदेव करंजादिगोमूत्रपिष्टम् । उपजातिर्वृत्तम् ।

गुग्गुलुमरिचविडंगैः सर्षपकासीससर्जरसमुस्तैः ।
श्रीवेष्टकालगंधैर्मनःशिलाकुष्टकंपिल्लैः ॥ ७१ ॥
उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभिः ।
दिनकरकराभितप्तैः कुष्ठं घृष्टं च नष्टं च ॥ ७२ ॥

गुग्गुल्वादिभिरेतैश्चक्रजतैलेन मिश्रितैः सूर्यरश्मितप्तैर्घृष्टं कुष्ठं द्राक् नश्यति । चाक्रिकं तैलं सद्यः पीडितं चक्रस्थमेवोष्णं तैलम् । केचित्तु बहुकालकृते तैलपीडनात् कोद्रकाष्ठाद्देवदारुकाष्ठवत् खंडशः पाटितायुक्तया यत्तैलं गृह्यते तच्चक्रतैलमित्याहुः ।

मरिचं तमालपत्रं कुष्टं समनःशिलं सकासीसम् ।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ७३ ॥
तेनालिप्तं सिध्मं सप्ताहाद्घर्मसेविनोपैति ।
मासान्नवं किलासं स्नानेन विना विशुद्धस्य ॥७४॥

मरिचादिकं तैलेन युक्तं सप्तदिनानि ताम्रभाजने स्थितं तेन च मरिचादिना सिध्ममालिप्तं घर्मसेविनो नरस्य सप्ताहेनापैति । मासायत्तस्योत्थितं श्वित्रं नश्यति । स्नानेन विना विशुद्धस्य नरस्य । चतस्र आर्याः । आर्याश्च जघनचपलाः ।

मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैलमभ्यंगात्सिध्मनाशनम्॥७५॥

अपामार्गक्षारोदके सप्तवारान् परिस्रुते सुवर्णलतातैलं पक्वमभ्यंगेन सिध्मं नाशयति ।

वायसजंघामूलं वमनीपत्राणि मूलकाद्बीजम् ।
तक्रेण भौमवारे लेपः सिध्मापहः सिद्धः ॥ ७६ ॥

काकजंघामूलं वमन्याः पत्रं मूलकबीजं तक्रेणांगारकदिने लेपः सिध्मघ्नः सिद्धः ।

जीवंतीमंजिष्ठादार्वी कंपिल्लकं पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः ॥७७॥
देयः समधूच्छिष्टो विपादिका तेन नश्यति ह्युक्ता ।
चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च ॥ ७८ ॥

एष घृततैलपाकः घृततैलाभ्यां पाको यस्य योगस्य स घृततैलपाको गमकत्वात्समासः । सिद्धो निष्पन्नः । सिद्धेऽस्मिन्पाके सर्जरसो मदनेन सह देयः । तेन सिद्धेन योगेन विपादिकाऽभ्यक्ता नश्यति । तथा चर्मैककुष्ठादिकं च शाम्यति । क्षीरमत्रार्कं ग्राह्यं यौगिकत्वाद्वृद्धवैद्यव्यवहाराच्च । आर्यास्तिस्रः ।

मूलं सप्ताह्वात्त्वक् शिरीषाश्वमारा-
दर्कान्मालत्याश्चित्रकास्फोतनिंबात् ।
बीजं कारंजं सार्षपं प्रापुनाटं
श्रेष्ठा जंतुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ७९ ॥
तिलतैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यंगेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ८० ॥

सप्तपर्णमूलं शिरीषादीनां त्वक् करंजादीनां बीजं तथा त्रिफलादय एतैर्गोमूत्रसहितैस्तिलतैलं पक्त्वा वातकफोद्भवानां त्व-

ग्दोषाणां तथा दुष्टनाडीव्रणानामभ्यंगेन नाशाय वज्रकसंज्ञमेतदलं समर्थम्। तथा वज्रतुल्यमव्याहतशक्तित्वात्।

**एरंडतार्क्ष्यघननीपकदंबभार्गी-**
**कंपिल्लवेल्लफलिनीसुरवारुणीभिः।**
**निर्गुंड्यरुष्करसुराह्वसुवर्णदुग्धा**
**श्रीवेष्टगुग्गुलुशिलापटुतालविश्वैः॥ ८१॥**
**तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम्।**
**अतिशयितवज्रकगुणं श्वित्रार्शोग्रंथिमालाघ्नम् ८२**

एरंडादिभिस्तुल्यस्नुगर्कदुग्धमिश्रं तैलं पक्कं महावज्रसंज्ञं स्मृतम्। अतिशयेन वज्रकगुणं श्वित्रादिघ्नम्। वसंततिलके आर्या च।

**कुष्ठाश्वमारभृंगार्कमूत्रस्नुक्क्षीरसैंधवैः।**
**तैलं सिद्धं विषावापमभ्यंगात्कुष्ठजित्परम्॥ ८३॥**

कुष्ठादिभिः सिद्धं तैलं विषावापमभ्यंगात्परं कुष्ठहृत्।

**सिद्धं सिक्थकसिंदूरपुरतुत्थकतार्क्ष्यजैः।**
**कच्छूं विचर्चिकां वाऽऽशु कटुतैलं नियच्छति॥**

सिक्थकादिभिः पक्कं सर्षपतैलं कच्छ्वादीन्निहंति।

**लाक्षाव्योषं प्रापुनाटं च बीजं**
**सश्रीवेष्टं कुष्टसिद्धार्थकाश्च।**
**तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो**
**दद्रूघ्नक्तो मूलकोत्थं च बीजम्॥ ८५॥**

लाक्षादयो निशा च तक्रोन्मिश्रो दद्रुषु लेप उक्तः। मूलकबीजं च तक्रमिश्रं तद्वत्। शालिनीवृत्तम्।

**चित्रकसोभांजनकौ गुडूच्यपामार्गदेवदारूणि।**
**खदिरो धवश्च लेपः श्यामा दंती द्रवंती च॥ ८६॥**
**लाक्षारसांजनैलापुनर्नवा चेति कुष्ठिनां लेपाः।**
**दधिमंडयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः॥८७**

चित्रकादयो दधिमंडान्विताः पादैः षड्वातश्लेष्मकुष्ठघ्ना गदिताः। तत्र चित्रकसोभांजनकावित्येको लेपः। गुडूच्यपामार्गदेवदारूणीति द्वितीयः। एवमन्येऽपि वेद्याः। आर्ये।

**जलवाप्यलोहकेसरपत्रप्लवचंदनमृणालानि।**
**भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे॥ ८८॥**

जलादीनि भागोत्तराणि सिद्धः पित्तकफकुष्ठे प्रलेपः। जलं वालकम्। वाप्यं कुष्ठम्। जघनचपलार्या।

**तिक्तघृतैर्धौतघृतैरभ्यंगो दह्यमानकुष्ठेषु।**
**तैलैश्चंदनमधुकप्रपौंडरीकोत्पलयुतैश्च॥ ८९॥**
**क्लेदे प्रपतति चांगे दाहे विस्फोटके च चर्मदले।**
**शीताः प्रदेहसेका व्यधनविरेकौ घृतं तिक्तम्॥**

तिक्तद्रव्यसाधितैर्घृतैस्तथा जलेन धौतैर्घृतैरभ्यंगो दाहयुक्तेषु कुष्ठेषु हितः। क्लेदे च प्रकर्षेण पतति सति तैलैश्चंदनादिभिर्युक्तैरभ्यंगः। चशब्दाद्घृतैश्च। प्रकृतत्वाद्धितः। अंगे दाहादिमति शीतप्रदेहसेकास्तिक्तं च घृतं हितम्। व्यधनं सिराव्यधः।

**खदिरवृषनिंबकुटजाः**
**श्रेष्ठाः कृमिजित्पटोलमधुपर्ण्यः।**
**अंतर्बहिः प्रयुक्ताः**
**कृमिकुष्ठनुदः सगोमूत्राः॥ ९१॥**

खदिरादयो गोमूत्रान्विता अभ्यंतरं बाह्यतश्च युक्ताः कृमियुतकुष्ठहृतः।

**वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।**
**पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्र्यम्॥ ९२॥**

वाताधिकेषु कुष्ठेषु घृतमग्रे पूर्वं हितम्। श्लेष्माधिकेषु च वमनम्। पित्तोत्तरेषु रक्तमोक्षो विरेचनं चाग्रे हितम्।

**ये लेपाः कुष्ठानां युज्यंते निर्हृतास्रदोषाणाम्।**
**संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥९३॥**

निर्हृतास्रदोषाणां तथा संशोधिताशयानां कुष्ठानां ये लेपा युज्यंते तेषां सद्यः शीघ्रमेव सिद्धिरामयनिवृत्तिर्भवति।

अत एवेदमाह।

**दोषे हृतेऽपनीते रक्ते बाह्यांतरे कृते शमने।**
**स्नेहे च कालयुक्ते न कुष्ठमतिवर्तते साध्यम्॥ ९४॥**

दोषे वातादौ हृते रक्तेऽपनीते बाह्येऽभ्यंतरे शमने कृते स्नेहे कृते च काले युक्ते कुष्ठं साध्यं नाऽतिवर्तते। अपितु प्रशाम्यति। आर्या षट्। अन्यत्र जघनचपलाः।

**बहुदोषः संशोध्यः कुष्ठी बहुशोनुरक्षता प्राणान्।**
**दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु॥ ९५॥**

बहुदोषः कुष्ठी प्राणान् रक्षता भिषजा पुनः पुनः संशोध्यः। एकवेलयैव कस्मान्न शोध्यत इत्याह। यस्माद्दोषेऽतिमात्रहृते सत्त्वबलं नरं वातो द्रागेव हन्यात्। आर्या।

**पक्षात्पक्षाच्छर्दनान्यभ्युपेया-**
**न्मासान्मासाच्छोधनान्यप्यधस्तात्।**
**शुद्धिर्मूर्ध्निस्यात्त्रिरात्रात्त्रिरात्रात्**
**षष्ठे षष्ठे मास्यसृङ्मोक्षणानि॥ ९६॥**

असौ कुष्ठी पक्षेण वमनानि सेवेत। मासान्मासादधःशोधनानि भजेत्। शिरसि त्रिरात्रे त्रिरात्रे शुद्धिः स्यात्। षष्ठे मासि रक्तमोक्षश्च स्यात्।

**यो दूर्वांतो दुर्विरिक्तोथवा स्यात्**
**कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ।**
**निःसंदेहं यात्यसाध्यत्वमेवं**
**तस्मात्कृत्स्नान्निर्हरेदस्य दोषान्॥ ९७॥**

यः कुष्ठी कृतासम्यग्वमनविरेचनः स्यात् । असावुद्धतैर्दोषैर्व्याप्यते । एवं निश्चयेनासाध्यत्वं याति । तस्माद्धेतोरस्य कुष्ठिनः कृत्स्नान्निखिलान् दोषान्निर्हरेत् । शालिनीवृत्तम् ।

व्रतदमयमसेवात्यागशीलाभियोगो
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री ।
शिवशिवसुतताराभास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयंति ॥ ९८ ॥

व्रतादिसेवात्यागाद्यभ्यासो द्विजादिपूजा सर्वसत्त्वमैत्री शिवाद्याराधनानि कुष्ठं प्रकटितमलपापं नाशयंति । मालिनीवृत्तम् ।

इति श्रीमृगांकदत्तपुत्रारुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सास्थाने कुष्ठचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ।

अस्मादनंतरं श्वित्रकृमिचिकित्सितं व्याख्यायते ॥

अथाऽतः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः ।

चिकित्सासाम्यमाह ।

कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वम् ।
श्वित्रमतस्तच्छांत्यै यतेत दीप्ते यथा भवने ॥ १ ॥

यद्यस्मात्कुष्ठादपि बीभत्सं जुगुप्सितं निंद्यं तथा शीघ्रतरमसाध्यत्वं श्वित्रं याति । अतोऽस्माद्धेतोस्तस्य श्वित्रस्य शमाय यत्नं कुर्यात् । यथा ज्वलिते गृहे । आर्या ।

संशोधनं विशेषात्प्रयोजयेत्पूर्वमेव देहस्य ।
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥२॥
तं पीत्वा भक्ततनुर्यथाबलं सूर्यपादसंतापम् ।
सेवेत विरिक्ततनुस्त्र्यहं पिपासुः पिबेत्पेयाम्॥३॥

प्रथममेव शरीरस्य संशोधनं विशेषेण प्रयोजयेत् । तदेवाह । श्वित्रे मलयूरसो बाकुचिकाक्काथः सह गुडया स्नुह्या सगुडो विरेचनमिष्यते । मुखचपला । तं क्काथं पीत्वाऽभ्यक्तशरीरः सन् यथाशक्तिः सूर्यकिरणसंतापं भजेत् । विरिक्तश्च सन् पिपासितः पेयां त्रीणि दिनानि पिबेत् ।

श्वित्रेंऽगे ये स्फोटा जायंते कंटकेन तान् भिंद्यात् ।
स्फोटेषु निस्रुतेषु प्रातः प्रातः पिबेत् त्रिदिनम् ३
मलयमसनं प्रियंगूं शतपुष्पां चांभसा समुत्क्काथ्य
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ ५ ॥

श्वित्रे साभ्यंगे ये स्फोटा उद्भवन्ति तान् स्फोटकान् कंटकेन भिंद्यात् । स्फोटेषु निस्रुतेषु सत्सु प्रातः प्रातस्त्रीणि दिनानि मलयादीनि समुत्क्काथ्य पिबेत् । पालाशं वा क्षारं फाणितयुक्तं यथाशक्ति पिबेत् । तिस्र आर्याः ।

फल्ग्वक्षवृक्षवल्कलनिर्यूहेणेंदुराजिकाकल्कम् ।
पीत्वोष्णस्थितस्य जाते स्फोटे तक्रेण भोजनं
निर्लवणम् ॥ ६ ॥

फल्गोः अक्षस्य च त्वचो निर्यूहः क्काथस्तेन बाकुच्याः कल्कं पीत्वा उष्ण आतपे स्थितस्य स्फोटेषु जातेषु सत्सु तक्रेण सह भोजनं निर्लवणं हितम् । आर्या गीतिः ।

गव्यं मूत्रं चित्रकव्योषयुक्तं
सर्पिःकुंभे स्थापितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिभिः पेयमेतत्
कार्यं चास्मै कुष्ठदृष्टं विधानम् ॥ ७ ॥

गोमूत्रं चित्रकादियुक्तं माक्षीकान्वितं घृतकुंभे स्थापितं पक्षं यावत् पक्षादूर्ध्वं श्वित्रवता तत्पेयम् । अस्मै च श्वित्रिणे कुष्ठोक्तं विधानम् । अस्मै इति क्रियाग्रहणात्संप्रदानत्वम् ।

मार्कवमथवा खादेद् भ्रष्टं तैलेन लोहपात्रस्थम् ।
बीजकशृतं च दुग्धं तदनुपिबेच्छ्वित्रनाशाय ॥८॥

भृंगराजं वा तैलेन भ्रष्टं लोहपात्रस्थं खादेत् । भुक्त्वा च पश्चाद्बीजकशृतं क्षीरं श्वित्रशांत्यै पिबेत् । आर्या ।

पूतीकार्कव्याधिघातस्नुहीनां
मूत्रे पिष्टाः पल्लवा जातिजाश्च ।
घ्नंत्यालेपाच्छ्वित्रदुर्नामदद्रू-
पामाकोष्ठान्दुष्टनाडीव्रणांश्च ॥ ९ ॥

पूतिकादीनां पल्लवा गोमूत्रेण पिष्टास्तथा जातिपल्लवा गोमूत्रपिष्टाः प्रलेपतः श्वित्रादीन् घ्नंति ।

द्वैपं दग्धं चर्म मातंगजं वा
श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।

द्वीपिसंबंधि चर्म दग्धं हस्तिजं च चर्मदग्धं तैलान्वितो लेपः श्वित्रेऽतिशयेन वरः ।

पूतिःकीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति ॥ १० ॥

पूतिःकीटो राजवृक्षजेन क्षारेण लेपत एक एव श्वित्रं हंति । पूतिःकीटो वर्षाकालोद्भवः । पिलिंदिकेति लोके प्रसिद्धः । शालिन्यौ वृत्ते ।

रात्रौ गोमूत्रे चासितान् जर्जरांगा-
नह्निच्छायायां शोषयेत्स्फोटहेतून् ।
एवं वारांस्त्रींस्तैस्ततः श्लक्ष्णपिष्टैः
स्नुह्याः क्षीरेण श्वित्रनाशाय लेपः ॥ ११ ॥

स्फोटहेतून् भल्लातकान् जर्जरीकृतान्निशि गोमूत्रे स्थितान्

दिवसे छायायां शोषयेत् । एवं त्रीन् वारान्मूत्रस्थितांश्छोषयेत् । शोषितांश्च ततोऽनंतरं तैः स्नुहीक्षीरेण श्लक्ष्णपिष्टैः श्वित्रशांत्यै लेपः । वैश्वदेवी ।

**अक्षतैलकृतो लेपः कृष्णसर्पोद्भवा मषी ।**
**शिखिपित्तं तथा दग्धं ह्रीबेरं वा तदाप्लुतम् ॥ १२ ॥**

कृष्णसर्पजा मषी ह्यक्षतैलेन कृतो लेपो मयूरपित्तलेपश्च पूर्वगुणः । अथवा ह्रीबेरं दग्धं तेनाक्षतैलेनालोडितं लेपस्तद्वत् ।

**कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ।**
**मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ १३ ॥**

बाकूचीबीजं पलचतुष्टयम् । हरितालपलं गोमूत्रेण पिष्टं श्वित्रे सवर्णकरं स्यात् । आर्या ।

**क्षारे सुदग्धे गजलिंडजे च**
**गजस्य मूत्रेण परिस्रुते च ।**
**द्रोणप्रमाणे दशभागयुक्तं**
**दत्त्वा पचेद्बीजमवल्गुजानाम् ॥ १४ ॥**
**श्वित्रं जयेच्चिक्कणतांगतेन**
**तेन प्रलिंपन्बहुशः प्रघृष्टम् ।**
**कुष्ठं मषी वा तिलकालकं वा**
**यद्वा व्रणे स्यादधिमांसजातम् ॥ १५ ॥**

गजपुरीषजे क्षारे सुदग्धे द्रोणप्रमाणे यथाप्रमाणं गजस्य मूत्रेण क्षारविधिना परिस्रुतेऽस्मिन्बाकूचीबीजं दत्त्वा पचेत् । किंभूतम् । दशभागयुक्तम् । दशभिर्भागैः प्रकृतत्वात् क्षारस्य संबंधिभिर्मिश्रितं तेन चिक्कणतां गतेन पुरुषो बहुशः प्रघृष्टं श्वित्रं प्रलिंपन् जयेत् । कुष्ठादींश्चाधिमांसरूपता यच्च व्रणे स्यात्तच्च जयेत् । उपजाती ।

**भल्लातकद्वीपिसुधार्कमूलं**
**गुंजाफलत्र्यूषणशंखचूर्णम् ।**
**तुत्थं सकुष्ठं लवणानि पंच**
**क्षारद्वयं लांगलिकां च पक्त्वा ॥ १६ ॥**
**स्नुगर्कदुग्धे घनमायसस्थं**
**शलाकया तद्विदधीत लेपम् ।**
**कुष्ठे किलासे तिलकालकेषु**
**मांसेषु दुर्नामसु चर्मकीले ॥ १७ ॥**

**शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।**
**श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १८ ॥**

भल्लातकादिकं स्नुगर्कयोर्दुग्धे पक्त्वा घनमायसपात्रस्थितं तदेतच्छलाकया लेपं कुष्ठादिषु विदधीत । इंद्रवज्रोपजाती । श्वित्रं कस्यचिदेव नरस्य क्षीणकलुषस्य शुद्ध्यादिभिः शाम्यति । आर्या ।

## इति श्वित्रचिकित्सा ।

अस्मादनंतरं कृमिचिकित्सितं व्याख्यायते चिकित्सासामान्यात् ।

**स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिणोदरे ।**
**उत्क्लेशितकृमिकफे शर्वरीं तां सुखोषिते ॥ १९ ॥**
**सुरसादिगणं मूत्रे क्वाथयित्वार्धवारिणि ।**
**तं कषायं कणागालकृमिजित्कल्कयोजितम् ॥ २० ॥**
**सतैलस्वर्जिकाक्षारं युंज्याद्बस्तिं ततोऽहनि ।**
**तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ॥ २१ ॥**
**त्रिवृत्कल्कं फलकणाकषायालोडितं ततः ।**
**ऊर्ध्वाधः शोधिते कुर्यात्पंचकोलयुतं क्रमम् ॥ २२ ॥**
**कटुतिक्तकषायाणां कषायैः परिषेचनम् ।**
**काले विडंगतैलेन ततस्तमनुवासयेत् ॥ २३ ॥**

कृमिणमुदरं यस्येति पामादित्वादनन्प्रत्ययः । तस्मिन् कृमिणोदरे स्निग्धस्विन्ने तथा गुडादिभिरुत्क्लेशिताः स्वस्थानाच्याविताः कृमयः कफश्च यस्य तस्मिंस्तथाभूत उदरे तथा समुत्क्लेशितादनंतरं तां रात्रिं सुखोषिते सति सतैलस्वर्जिकाक्षारं बस्तिं युंज्यात् । कथमित्याह । सुरसादिगणं गोमूत्रेऽर्धवारिणि क्वाथयित्वा ततस्तं कषायं कणादीनां कल्केन योजितं मिश्रं कृत्वा । ततो निरूहादनंतरं तस्मिन्नेवाहनि तं निरूढं विरेचनं त्रिवृत्कल्कं फलादिकषायालोडितं पाययेत् । ततोऽनंतरमूर्ध्वाधः शोधिते तस्मिन् पंचकोलयुतं क्रमं पेयाविलेप्यादिकं कुर्यात् । ततः कट्वादिभिः कषायैः परिषेचितं समनंतरं यदा संधुक्षितोऽग्निस्तदा तस्मिन्काले विडंगतैलेन तमनुवासयेत् ।

**शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।**
**उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ २४ ॥**

शिरोरोगप्रतिषेधे यदुक्तं तन्मूर्धगेषु कृमिष्वाचरेत् । अनु पश्चात् प्रभूततिक्तकटुकमल्पस्नेहं च भोजनमाचरेत् ।

**विडंगकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।**
**पिबेत्सस्वर्जिकाक्षारं यवागूं तक्रसाधिताम् ॥ २५ ॥**

तथा विडंगादिभिस्तक्रसाधितां पेयां पिबेत् ।

**रसं शिरीषाकिणिहिपारिभद्रककेंबुकात् ।**
**पलाशबीजपत्तूरपूतिकाद्वा पृथक् पिबेत् ॥ २६ ॥**
**सक्षौद्रं सुरसादीन्वा लिह्यात्क्षौद्रयुतान् पृथक् ।**

शिरीषादिरसं पिबेत् । किणिही गिरिकर्णिका । पलाशबीजादीनां वा रसं माक्षिकान्वितं पृथक् पिबेत् । अथवा सुरसादीन् क्षौद्रयुतान् पृथग् लिह्यात् ।

**शतकृत्वोऽश्वविट्चूर्णं विडंगक्वाथभावितम् ॥ २७ ॥**
**कृमिमान्मधुना लिह्याद्भावितं वा वरारसैः ।**

अश्वपुरीषचूर्णं बहून् वारान् विडंगक्काथेन भावितमथवाऽश्वशकृच्चूर्णं त्रिफलाक्काथेन साधितं मधुना कृमिमांल्लिह्यात् ।

**शिरोगतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥**

शिरोगतेषु कृमिषु तच्छिरोरोगनिषेधोक्तं चूर्णं प्रधमनं नस्यं वा चरेत् ।

**आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ।**
**पक्त्वा पूपलिकां खादेद्धान्याम्लं च पिबेदनु॥२९॥**
**सपंचकोललवणमसांद्रं तक्रमेव वा ।**

तथा मूषीककर्णीपल्लवैः सूक्ष्मचूर्णितैः शालिचूर्णमिश्रितैः पूपलिकां पक्त्वा खादेत्तदनुपश्चाच्च धान्याम्लं पिबेत् । अथवा तक्रं मथितं पंचकोललवणयुतं पिबेत् ।

**नीपमार्कवनिर्गुंडीपल्लवेष्वप्ययं विधिः ॥ ३० ॥**
**विडंगचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।**

नीपादिष्वयमेव पूर्वोक्तो मूषिककर्णीपल्लवविधिः कल्प्यः । अथवा पिष्टैर्विडंगचूर्णमिश्रितैर्भक्ष्यान् प्रकल्पयेत् ।

**विडंगतंडुलैर्युक्तमर्धांशैरातपस्थितम् ॥ ३१ ॥**
**दिनमारुष्करं तैलं पाने वस्तौ च योजयेत् ।**
**सुराह्वसरलस्नेहं पृथगेवं प्रकल्पयेत् ॥ ३२ ॥**

अरुष्करजं तैलं पाने बस्तौ च योजयेत् । किंभूतम् । अर्धभागप्रमाणैर्विडंगतंडुलैर्मिश्रितं तथा दिनमातपस्थितम् । दिनमित्यंतसंयोगे द्वितीया । देवदार्वादितैलं पृथगेवं विडंगतंडुलान्वितमातपस्थितं कल्पयेत् ।

**पुरीषजेपु सुतरां दद्याद्बस्तिविरेचने ।**

पुरीषजेषु कृमिषु सुतरां बस्तिं विरेचनं च स्यात् ।

**शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥**

कफजन्मसु कृमिषु शिरोविरेकं नस्यं वमनं शमनं च कुर्यात् ।

**रक्तजानां प्रतीकारं कुर्यात्कुष्ठचिकित्सिताम् ।**
**इंद्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ३४ ॥**

रक्तोत्थानां कृमीणां कुष्ठचिकित्सितात्प्रतीकारं विदध्यात् । ल्यब्लोपे पंचमी । कुष्ठचिकित्सितोक्तमपेक्ष्येत्यर्थः । रोमभोजिषु कृमिष्विंद्रलुप्तविधिरुत्तरे वक्ष्यमाणशिरोरोगप्रतिषेधः कार्यः ।

**क्षीराणि मांसानि घृतं गुडं च**
**दधीनि शाकानि च पर्णवंति ।**
**समासतोम्लान्मधुरान् रसांश्च**
**कृमीन् जिहासुः परिवर्जयेच्च ॥ ३५ ॥**

कृमीन् जिहासुः क्षीरादीन् वर्जयेत् । उपजातिर्वृत्तम् ।

इति श्रीमदरुणदत्तविरचितायां सर्वांगसुंदराख्यटीकायां चिकित्सितस्थाने श्वित्रकृमिचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ।

अस्मादनंतरं वातव्याधिचिकित्सितं व्याख्यातुमुपक्रम्यते । सर्वचिकित्साबाधितत्वात् ।

**अथाऽतो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥**
**केवलं निरुपस्तंभमादौ स्नेहैरुपाचरेत् ।**
**वायुं सर्पिर्वसामज्जातैलपानैर्नरं ततः ॥ १ ॥**
**स्नेहाक्रांतं समाश्वास्य पयोभिः स्नेहयेत्पुनः ।**
**यूषैर्ग्राम्योदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥**
**पायसैः कृसरैः साम्ललवणैः सानुवासनैः ।**
**वातघ्नैस्तर्पणैश्चान्नैः सुस्निग्धैः स्नेहयेत्ततः ॥ ३ ॥**
**स्वभ्यक्तं स्नेहसंयुक्तैः शंकराद्यैः पुनः पुनः ।**

केवलं शुद्धं तथा निरुपस्तंभमन्येनाधानकेन समीपसंभविनाऽनाधारितमीदृशं वायुं स्नेहैरादावेवोपाचरेत् । कथमित्याह । सर्पिरित्यादि । ननु तैलस्य पवनविजये प्राधान्यादेवं निर्देशः कर्तु युक्तः । तैलवसामज्जासर्पिःपानैरिति । युक्तमाह भवान् । किंत्वाजन्मसात्म्यात्सर्पिःप्रधानमनवरतमिति सर्पिः प्रागुपन्यस्तम् । सर्पिःपानादिभिस्तावत्स्नेहयेत् । यावत्स्नेहोद्वेगः क्रम इत्यादिस्नेहलक्षणं स्यात् । स्नेहाक्रांतं च नरं पयोभिः समाश्वास्य पुनःपुनर्यूषादिभिः स्नेहान्वितैः स्नेहयेत् । तथा तर्पणैश्चान्नैः सुस्निग्धैः स्नेहयेत् । ततोऽनंतरं सुष्ठ्वभ्यक्तं संतं शंकराद्यैः स्वेदैः स्वेदविधिगदितैः पुनः पुनः स्वेदयेत् ।

एवं स्वेदिते सति यो गुणः स्यात्तमाह ।

**स्नेहाक्तं स्विन्नमंगं तु वक्रं स्तब्धं सवेदनम् ॥ ४ ॥**
**यथेष्टमानामयितुं सुखमेव हि शक्यते ।**

स्नेहाभ्यक्तं गात्रं स्विन्नं तद्वक्रं स्तब्धं च तथा सरुजं यथेष्टं सुखमेवानामयितुं शक्यते ।

एतदेव दृष्टांतद्वारेण प्रतिपादयन्नाह ।

**शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ५ ॥**
**शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ।**

हि यस्माच्छुष्काण्यपि काष्ठानि स्नेहस्वेदसंयोजनेन कर्मण्यतां नेतुं शक्यन्ते । किं पुनर्जीवतां गात्राणि न शक्यंते । शक्यंत एवेत्यर्थः । शक्यमिति पूर्वोक्तक्रममात्रे नपुंसकत्वमेकत्वं वा । यथा कालिदासस्य । शक्यमंगुलिभिरुद्धृतैरधः शाखिनां पतितपुष्पकोमलैः । पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकानिति ।

**हर्षतोदरुगायामशोफस्तंभग्रहादयः ॥ ६ ॥**
**स्विन्नस्याशु प्रशाम्यंति मार्दवं चोपजायते ।**

स्विन्नस्य पुंसो हर्षादयः शीघ्रं प्रशाम्यंति मृदुत्वं च गात्रेषु जायते ।

**स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ॥**
**बलमग्निबलं पुष्टिं प्राणं चाऽस्याभिवर्धयेत् ।**

तथा स्विन्नस्य स्नेह उपयोजितो धातून् विशुष्कान् द्रागेव पुष्णाति तथाऽस्य वातरोगिणो बलादीनभिवर्धयेत् ।

**असकृत्तं पुनः स्नेहैः स्वेदैश्च प्रतिपादयेत् ॥ ८ ॥**
**तथा स्नेहमृदौ कोष्ठे न तिष्ठंत्यनिलामयाः ।**

तमातुरं पुनः स्नेहस्वेदाभ्यां योजयेत् । तथैवं कृते स्नेहमृदौ कोष्ठे सति सर्वे वातरोगा नश्यंति ।

**यद्येतेन सदोषत्वात्कर्मणा न प्रशाम्यति ॥ ९ ॥**
**मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत् ।**

अनेन कर्मणा चेन्न शाम्यति वातामयस्तदा तं वातामयिनं मृदुभिर्द्रव्यैः कर्णिकारादिभिः स्नेहान्वितैर्विशोधयेत् ।

**घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥१०**
**पयसैरंडतैलं वा पिबेद्दोषहरं शिवम् ।**

तिल्वकेन पक्वं सातलया वा पक्वं क्षीरेण वा सहैरंडतैलं पिबेत् । तच्च पीतं दोषहरं शिवं च स्यात् ।

ननु किमित्यनुलोमनं क्रियत इत्याह ।

**स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥**
**स्रोतो रुद्ध्वाऽनिलं रुध्यात्तस्मात्तमनुलोमयेत् ।**

यस्मात्स्निग्धादिभिराहारैर्मलश्चितः स्रोतांसि रुद्ध्वा वायुं रुध्यात् । तस्मान्मारुतमनुलोमयेत् ।

**दुर्बलो यो विरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ १२ ॥**
**दीपनैः पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ।**
**संशुद्धस्योत्थिते चाऽग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १३ ॥**

यो नरो दुर्बलो विरेचनार्हो भवेत्तं नरं निरूहैरुपाचरेत् । किंभूतैः । दीपनैः पाचनीयैश्च । अथवा तद्युक्तैर्दीपनीयपाचनीययुतैर्भोज्यैरुपाचरेत् । अनंतरं सम्यक्शुद्धस्य वह्नावुत्थिते सति पुनरपि स्नेहस्वेदौ हितौ ।

**आमाशयगते वायौ वमितप्रतिभोजिते ।**
**सुखांबुना षट्चरणं वचादिं वा प्रयोजयेत् १४**
**संधुक्षितेऽग्नौ परतो विधिः केवलवातिकः ।**
**मत्स्यान्नाभिप्रदेशस्थे सिद्धान्बिल्वशलाटुभिः १५**

आमाशयगते वाते सति तथा वमितश्चासौ प्रतिभोजितश्च तस्मिन्वमिते प्रतिभोजिते नर उष्णजलेन षट्चरणं वचादिगणं प्रयोजयेत् । षट्चरणयोगः संग्रहादेवावगंतव्यः । तत्रैवं पठ्यते । दार्वीकालिंगकटुकातिविषाग्निपाठामूत्रेण सूक्ष्मरजसा धरणप्रमाणाः। पीता जयंति गुदजोदरकुष्ठमेहकोष्ठानिलाढ्यपवनग्रहणीप्रदोषानिति । धरणं पलस्य दशमो भागः । अग्नौ संदीपिते सति तं नरं केवलं वातिको विधिः कार्य इति शेषः । नाभिप्रदेशस्थे वाते मत्स्यान् बिल्वशलाटुभिः सिद्धान् योजयेत् ।

**वस्तिकर्म त्वधोनाभेः शस्यते चाऽवपीडकः ।**

अधोनाभेः स्थिते वातेऽवपीडकः शस्यते । चशब्दान्मत्स्याश्च ।

**कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ १६ ॥**

कोष्ठगे वायौ क्षाराद्याः पाचना दीपनाश्च हिताः ।

**हृत्स्थे पयः स्थिरासिद्धम्**

हृदयस्थिते समीरणे क्षीरं शालिपर्ण्या शृतं हितम् ।

**शिरोवस्तिः शिरोगते ।**
**स्नेहिकं नावनं धूमः श्रोत्रादीनां च तर्पणम् ॥ १७ ॥**

शिरोगते तु शिरोबस्तिः शस्यते । स्नेहिकं नस्यं तथा धूमः कर्णादितर्पणं च हितम् ।

**स्वेदाभ्यंगानि वातानि हृद्यं चान्नं त्वगाश्रिते ।**

त्वक्स्थे मरुति स्वेदादीनि हितानि । हृदयप्रियं चान्नं च हितम् ।

**शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥१८ ॥**

रक्तस्थे मरुति शीताः प्रदेहा रक्तमोक्षणं च हितम् ।

**विरेको मांसमेदःस्थे निरूहाः शमनानि च ।**

मांसमेदःस्थिते वायौ विरेकस्तथा निरूहाः शमनानि च हितानि ।

**बाह्याभ्यंतरतः स्नेहैरस्थिमज्जागतं जयेत् ॥ १९ ॥**

अस्थिमज्जास्थं मारुतं बाह्याभ्यंतरतः स्नेहैर्जयेत् ।

**प्रहर्षोन्नं च शुक्रस्थे बलशुक्रकरं हितम् ।**

शुक्रस्थे समीरणे प्रहर्षणं तथा बलशुक्रकारि चान्नं हितम् ।

**विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥**
**विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत्क्रियाम् ।**

शुक्रं च रुद्धमार्गं दृष्ट्वा विरेकं च दद्यात् । विरिक्तं प्रतिभुक्तं च नरं पूर्वोदितां क्रियां कारयेत् । हृक्रोरन्यतरस्यामिति प्रतिभुक्तस्यापि कर्मत्वम् ।

**गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥**
**सिताकाश्मर्यमधुकैः सिद्धमुत्थापने पयः ।**

वातेन गर्भे शुष्के सति बालानां च विशुष्यतां शर्करादिभिः सिद्धं क्षीरमुत्थापने हितम् ।

**स्नावसंधिशिरोप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥**

स्नावादिप्राप्ते स्नेहदाहोपनाहनं हितम् ।

**तैलं संकुचितेऽभ्यंगो माषसैंधवसाधितम् ।**

संकुचितेंऽगे सति माषसैंधवसाधितं तैलमभ्यंगः ।

**आगारधूमलवणतैलैर्लेपः स्रुतेऽसृजि ॥ २३ ॥**
**सुप्तेंऽगे वेष्टयुक्ते तु कर्तव्यमुपनाहनम् ।**

रक्ते स्रुते सत्यागारधूमादिभिर्लेपः । सुप्ते गात्रे तथा वेष्टनयुक्ते चोपनाहः कार्यः ।

उत्क्षेपकादीनामसाध्यान्महात्ययत्वादपतानकस्य तावच्चिकित्सामाह ।

**अथाऽपतानकेनार्तमस्रस्ताक्षमवेपनम् ॥ २४ ॥**
**अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम् ।**
**अखट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥**

अथाऽनंतरं वातव्याधयः संज्ञानिर्दिष्टाः प्रस्तूयंते । एनमपतानकार्तं नरमस्रस्ताक्षादियुक्तं यावदखट्वाघातिनं च त्वरितं कृत्वोपक्रमेत् ।

**तत्र प्रागेव सुस्निग्धं स्विन्नांगे तीक्ष्णनावनम् ।**
**स्रोतोविशुद्धये युंज्यादच्छपानं ततो घृतम् ॥ २६ ॥**
**विदार्यादिगणक्वाथदधिक्षीररसैः श्रृतम् ।**
**नाऽतिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥२७॥**

तस्मिन्नपतानकार्ते नरे पूर्वमेव च सुष्ठु स्निग्धांगे स्विन्नांगे च तीक्ष्णं नस्यं त्रिकटुकादिना स्रोतोविशुद्धये योज्यम् । ततोऽनंतरमच्छपानं घृतं युंजीत । कतरदित्याह । विदार्यादिगणश्रृतम् । घृताद्विदार्यादिगणक्वाथश्चतुर्गुणो दधिक्षीररसाः सर्पिःसमा ग्राह्याः । तथा एवं कृते सति मारुतोऽतिमात्रं न व्याप्नोति । सहसा झटित्येव च नाश्नुते ।

**कुलत्थयवकोलानि भद्रदार्वादिकं गणम् ।**
**निःक्वाथ्यानूपमांसं च तेनाम्लैः पयसाऽपि च ॥**
**स्वादुस्कंधप्रतीवापं महास्नेहं विपाचयेत् ।**
**सेकाभ्यंगावगाहान्नपाननस्यानुवासनैः ॥ २९ ॥**
**संहंति वातं ते ते च स्नेहस्वेदाः सुयोजिताः ।**

कुलत्थादीनानूपमांसं च निःक्वाथ्यैतेन क्वाथेनाम्लैर्धान्याम्लादिभिः स्वादुस्कंधकृतकल्कं महास्नेहं विपाचयेत् । स महास्नेहो वातं हंति । ते ते च पूर्वोक्ताः स्नेहाः स्वेदाः सम्यग्योजिताः पवनं घ्नंति ।

**वेगांतरेषु मूर्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥**
**अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिबर्हणैः ।**
**श्वसनासु विमुक्तासु तथा संज्ञां स विंदति ॥**

वेगांतरेषु वेगांतरालेषु मूर्धानमसकृद्बहून् वारान् रेचयेत् । कैरित्याह । अवपीडैः । कल्काद्यैरवपीडस्तु सतीक्ष्णैर्मूर्धरेचन इत्युक्तेः । तथा प्रधमनैर्ध्मानं विरेचनैश्चूर्णैर्युंज्यादित्युक्तेः । एतैश्च तीक्ष्णैस्तीक्ष्णद्रव्यकृतैरत एव श्लेष्मनाशनैः । एवं कृते सति श्वसनासु श्लेष्मविमुक्तासु संज्ञां चेतनां स रोगी लभते । प्राणनाड्यो हृदाश्रिताः श्वसना इत्युच्यंते ।

**सौवर्चलाभयाव्योपसिद्धं सर्पिश्चलेऽधिके ॥ ३१ ॥**

वायावधिके सौवर्चलादिभिः कल्कीकृतैः सिद्धं सर्पिर्हितम् ।

**पलाष्टकं तिल्वकतो वरायाः**
**प्रस्थं पलांशं गुरुपंचमूलम् ।**
**सैरंडसिंहीत्रिवृतं घटेऽपां**
**पक्त्वा पचेत्पादश्रृतेन तेन ॥ ३२ ॥**

**दध्नः पात्रे यावशूकात्त्रिबिल्वैः**
**सर्पिःप्रस्थं हंति तत्सेव्यमानम् ।**
**दुष्टान्वातानेकसर्वांगसंस्थान्**
**योनिव्यापद्गुल्मवर्ध्मोदरं च ॥ ३३ ॥**

तिल्वकतो लोध्रात् पलाष्टकं त्रिफलायाः प्रस्थं महत्पंचमूलं पृथक् पलभागम् । किंभूतं पंचमूलम् । एरंडव्याघ्रीत्रिवृताभिर्युक्तम् । एतेऽपि पलांशा इत्यर्थः । जलद्रोणे पचेत् । तेन च पादावशेषेण तथा दध्न आढके यवक्षारपलैस्त्रिभिर्घृतप्रस्थं पचेत् । एतच्च घृतं सेव्यमानं दुष्टवातादीन्हंति । उपजातिशालिन्यौ वृत्ते ।

**विधिस्तिल्वकवज्ज्ञेयो शम्याकाशोकयोरपि ।**

तिल्वकस्येव तिल्वकवन्महानिंबस्याशोकस्य विधिर्ज्ञेयः ।

**चिकित्सितमिदं कुर्याच्छुद्धवातापतानके ॥ ३४ ॥**
**संसृष्टदोषे संसृष्टं**

एवमुपक्रमं शुद्धवातापतानके कुर्यात् । संसृष्टदोषे संसृष्टं दोषद्वयोक्तं चिकित्सितं कुर्यात् ।

**चूर्णयित्वा कफान्विते ।**
**तुंबुरूण्यभयाहिंगुपौष्करं लवणत्रयम् ॥ ३५ ॥**
**यवक्वाथांबुना पेयं हृत्पार्श्वार्त्यपतंत्रके ।**
**हिंगु सौवर्चलं शुंठी दाडिमं साम्लवेतसम् ॥ ३६ ॥**
**पिबेद्वा श्लेष्मपवनहृद्रोगोक्तं च शस्यते ।**

कफयुक्ते तुंबुर्वादिकं चूर्णयित्वा यवक्वाथजलेन पेयम् । हृत्पीडादिषु । अथवा हिंग्वादिकं यवक्वाथांबुना पेयम् । श्लेष्मवाते हृद्रोगे च यत्कथितं तच्च शस्यते ।

**आयामयोरर्दितवद्बाह्याभ्यंतरयोः क्रिया ॥ ३७ ॥**
**तैलद्रोण्यां च शयनमांतरोऽत्र सुदुस्तरः ।**

आयामयोर्बाह्याभ्यंतरयोरर्दितवत्क्रिया स्यात् । तैलद्रोण्यां शयनं चाऽत्राऽनयोर्मध्यादांतर आयामः सुष्ठु दुस्तरोऽतिकष्टसाध्यः ।

**विवर्णदंतवदनः स्रस्तांगो नष्टचेतनः ॥ ३८ ॥**
**प्रस्विद्यंश्च धनुष्कंभी दशरात्रं न जीवति ।**

विवर्णदंतास्यः स्रस्तांगादिः प्रस्वेदवांश्च धनुष्कंभी दशरात्रं न जीवति ।

**वेगेष्वतोऽन्यथा जीवेन्मंदेषु विनतो जडः ॥ ३९ ॥**
**खंजः कुणिः पक्षहतः पंगुलो विकलोऽथवा ।**
**हनुस्रंसे हनू स्निग्धस्विन्नौ स्वस्थानमानयेत् ॥४०॥**
**उन्नामयेच्च कुशलश्चिवुकं विवृते मुखे ।**
**नामयेत्संवृते शेषमेकायामवदाचरेत् ॥ ४१ ॥**

अतोऽन्यथा विवर्णदंतादिविपर्ययेण तथा मंदेषु वेगेषु सत्सु जीवेत् । जीवंश्च विनतादिगुणः स्यात् । हनुस्रंसे तु हनू स्निग्धस्विन्नौ संतौ स्वस्थानं प्रापयेत् । कुशलो भिषग्विवृते मुखे सति चिबुकमूर्ध्वं नामयेत् । शेषं चिकित्सितमेकायामवदाचरेत् । अर्दितवदाचरेत् ।

**जिह्वास्तंभे यथावस्थं कार्यं वातचिकित्सितम् ।**

जिह्वायाः स्तंभे सति यथावस्थं वातस्योपक्रमः कार्यः स्नेहनस्वेदान्वितः ।

**अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ॥ ४२ ॥**
**सशोफे वमनं दाहरागयुक्ते सिराव्यधः ।**

अर्दिते नावनादि चिकित्सितम् । शोफान्विते सति वमनं कार्यम् । दाहादियुक्ते सति सिराव्यधः ।

**स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ ४३ ॥**

पक्षाघाते स्नेहनं तथा विरेकः कार्यः स्नेहान्वितः ।

**अवबाहौ हितं नस्यं स्नेहश्चोत्तरभक्तिकः ।**

अवबाहौ नस्यादि हितम् । आमे तूपवास एव हित इत्युवाच संग्रहे ।

**ऊरुस्तंभे न च स्नेहो न च संशोधनं हितम् ॥ ४४॥**
**श्लेष्मामेदोबाहुल्याद्युक्त्या तत्क्षपणान्यतः ।**
**कुर्याद्रूक्षोपचारश्च यवश्यामाककोद्रवाः ॥४५॥**
**शाकैरलवणैः शस्ताः किंचित्तैलैर्जलैः शृतैः ।**
**जांगलैरघृतैर्मांसैर्मध्वंभोरिष्टपायिनः ॥ ४६ ॥**
**वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैंधवैः ।**
**आमवाते सुखांभोभिः पेयः षड्चरणोऽथवा ॥४७॥**

ऊरुस्तंभे तु स्नेहादि न हितं श्लेष्मामेदोबाहुल्यात् । अस्माच्च हेतोस्तयोरामश्लेष्मणोः क्षपणानि क्षयकारणानि युंज्यात् । रूक्षोपचारार्थं मध्वंभोरिष्टपायिनो यवादयः शाकैरीषल्लवणैस्तथा जलैः शृतैस्तथा मांसैः सह । किंभूतैर्जांगलैस्तथा घृतरहितैर्हिताः ।

**लिह्यात्क्षौद्रेण वा श्रेष्ठाचव्यतिक्ताकणाघनान् ।**
**कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ४८ ॥**
**मूत्रैर्वा शीलयेत्पथ्यां गुग्गुलुं गिरिसंभवम् ।**

अथवा क्षौद्रेण त्रिफलादिकं कल्कं लिह्यात् । चव्यादिकं वा कल्कं माक्षिकान्वितं लिह्यात् । अथवा गोमूत्रेण हरीतकीमभ्यसेत् । तथा गुग्गुलुं शिलाजतु वा शीलयेत् ।

**व्योषाग्निमुस्तत्रिफला विडंगैर्गुग्गुलुं समम् ॥ ४९ ॥**
**खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ।**

व्योषादिभिर्नवभिर्द्रव्यैर्गुग्गुलुं तुल्यं भक्षयन् सर्वान्मेदःश्लेष्मामवातजान् व्याधीन् हंति ।

**शाम्यत्येवं कफाक्रांतः समेदस्कः प्रभंजनः ॥ ५० ॥**
**क्षारमूत्रान्वितान् स्वेदान् सेकानुद्वर्तनानि च ।**
**कुर्याल्लिह्याच्च मूत्राढ्यैः करंजफलसर्षपैः ॥ ५१ ॥**
**मूलैर्वाप्यर्कतर्कारीनिंबजैः ससुराह्वयैः ।**
**सक्षौद्रसर्षपापकलोष्टवल्मीकमृत्तिकैः ॥ ५२ ॥**

एवं प्रागुक्ते क्रियाक्रमे कृते सति कफावृतो मरुत् समेदस्कश्च शाम्यति । तथा क्षारमूत्रयुतान् स्वेदादीन् कुर्यात् । तथा करंजफलसर्षपैः प्रभूतमूत्रालोडितैर्लिंपेत् । अथवा मूलैरर्कादिजैः क्षौद्रादियुतैर्लिंपेत् ।

**कफक्षयार्थं व्यायामे सह्ये चैनं प्रवर्तयेत् ।**
**स्थलान्युल्लंघयेन्नारीः शक्तितः परिशीलयेत् ॥५३॥**
**स्थिरतोयं सरः क्षेमं प्रतिस्रोतो नदीं तरेत् ।**
**श्लेष्ममेदःक्षये चाऽत्र स्नेहादीनवचारयेत् ॥ ५४ ॥**

एनमुरुष्कंभिणं सोढुं शक्ये व्यायामे मेदःकफक्षयाय प्रवर्तयेत् । शक्य इति शकिसहोश्चेति यत् । व्यायामं शनैः कारयेदित्यर्थः । तमेव व्यायाममाह । स्थलान्युल्लंघयेत् । नारीर्यथाशक्ति शीलयेत् । स्थिरतोयं सरस्तरेत् । क्षेमं ग्राहादिरहितम् । तथा नदीं तरेत् । कथम् । प्रतिस्रोतः स्रोतोऽभिमुखम् । श्लेष्ममेदःक्षये सत्यस्मिन् स्नेहादीनवचारयेत् ।

**स्थानं दूष्यादि चालोच्य कार्या शेषेष्वपि क्रिया ।**

शेषेषु च वातरोगेषु स्थानदूष्यादीन्निरूप्य चिकित्सितं कार्यम् ।

**सहचरं सुरदारुसनागरं**
**क्वथितमंभसि तैलविमिश्रितम् ।**
**पवनपीडितदेहगतिः पिबेद्**
**द्रुतविलंबितगो भवतीच्छया ॥ ५५ ॥**

सहचरादि क्वथितं तैलयुतं पिबन्मारुतार्दितशरीर इच्छया द्रुतगमनो विलंबितगमनो वा भवति । तंत्रकृता सुमतिनैतद्वात्तस्य वृत्तस्य नामाऽपि श्लिष्टं कृत्वा निबद्धम् । द्रुतविलंबिताख्यमेतद्वृत्तम् । तस्य च लक्षणम् । द्रुतविलंबितमाह नभौ भरौ इति ।

**रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम् ।**
**पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम् ॥ ५६ ॥**

रास्नादीन् पिष्ट्वा सर्पिः सामान्यपरिभाषया विपाचयेत् । तच्च सुष्ठु वातरोगहृत् ।

**निंबामृतावृषपटोलनिदिग्धिकानां**
**भागान् पृथक् दश पलान् विपचेद्घटेऽपाम् ।**
**अष्टांशशेषितरसेन पुनश्च तेन**
**प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ ५७ ॥**
**पाठाविडंगसुरदारुगजोपकुल्या**
**द्विक्षारनागरनिशाभिशिचव्यकुष्ठैः ।**

तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ५८ ॥
मंजिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पंचसंख्यैः ।
तत्सेवितं प्रधमति प्रबलं समीरं
संध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ५९ ॥
नाडीव्रणार्बुदभगंदरगंडमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसकासशोफ-
हृत्पांडुरोगमदविद्रधिवातरक्तम् ॥ ६० ॥

निशादीनां पृथक् पृथक् दशपलानंबुद्रोणे पचेत् । तेनाष्टांशशेषेण क्वाथेन पाठादिभिर्यवान्यंतैः कल्कीकृतैः कर्षांशैः श्रेष्ठगुग्गुलुपलैश्च पंचभिः सर्पिषः पुनः प्रस्थं विपचेत् । तत्सर्पिः शीलितं वायुमतिबलं संध्यादिगतमपि पराकरोति । कुष्ठमपीदृशं संध्यादिगतं हन्ति । तथा नाडीव्रणादीन् शमयति । वसंततिलकाश्चतस्रः ।

बलाबिल्वशृते क्षीरे घृतमंडं विपाचयेत् ।
तस्य शुक्तिः प्रकुंचो वा नस्यं वाते शिरोगते ॥६१॥

बलाबिल्वाभ्यां क्वथिते क्षीरे घृतमंडं विपाचयेत् । तस्य घृतमंडस्य पक्वस्य कर्षद्वयं पलं वा नस्यं शिरोगते वाते प्रयोक्तव्यम् ।

तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा ।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६२ ॥

तद्वत् मंडवन्नक्रादिजा वसा केवले वाते विशेषेण प्रयोज्या ।

जीर्णं पिण्याकं पंचमूलं पृथक्क
क्वाथ्यं क्वाथाभ्यामेकतस्तैलमाभ्याम् ।
क्षीरादष्टांशं पाचयेत्तेन पानाद्
वाता नश्येयुः श्लेष्मयुक्ता विशेषात् ॥ ६३ ॥

जीर्णं पिण्याकं पंचमूलं च पृथक् पृथक् क्वाथ्य क्वाथाभ्यामेताभ्यां तैलमेकत एकस्मिन् तैलं मिश्रितं क्षीरादष्टांशं पाचयेत् । तेन तैलेन वाता नश्यंति । विशेषेण कफयुक्ताः । वैश्वदेवी ।

प्रसारिणी तुलाक्वाथे तैलप्रस्थं पयः समम् ।
द्विमेदामिशिमंजिष्ठाकुष्ठरास्नाकुचंदनैः ॥ ६४ ॥
जीवकर्षभकाकोलीयुगुलामरदारुभिः ।
कल्कितैर्विपचेत्सर्वमारुतामयनाशनम् ॥ ६५ ॥

प्रसारिणीतुलाक्वाथे तैलप्रस्थं क्षीरसमं द्विमेदादिभिः कल्कितैः सामान्यपरिभाषयोक्तकल्कप्रमाणैर्विपचेत् । तच्चाऽशेषवातरोगघ्नम् ।

समूलशाखस्य सहाचरस्य
तुलां समेतां दशमूलतश्च ।
पलानि पंचाशदभीरुतश्च
पादावशेषं विपचेद्वहेऽपाम् ॥ ६६ ॥

तत्र सेव्यनखकुष्ठहिमैला-
स्पृक्प्रियंगुनलिकांबुशिलाजैः ।
लोहितानलदलोहसुराह्वैः
कोपनामिशितुरुष्कनतैश्च ॥ ६७ ॥
तुल्यं क्षीरं पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान्शीलितं हंति वातान् ।
कंपाक्षेपस्तंभशोषादियुक्तान्
गुल्मोन्मादौ पीनसं योनिरोगान् ॥ ६८ ॥

सहाचरस्य मूलशाखान्वितस्य तुलां समेतां दशमूलाच्च तुलां शतावर्याः पलानि पंचाशज्जलस्य चतुर्द्रोणे पादावशेषं पचेत् । तस्मिन्पादावशेषे सेव्यादिभिः पालिकैस्तैलाढकं तुल्यक्षीरं सिद्धं शीलितं कृच्छ्रान्मारुतान् कंपादियुतान् गुल्मादींश्च हंति । स्वागताशालिन्यौ वृत्ते ।

सहाचरतुलायास्तु रसे तैलाढकं पचेत् ।
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥ ६९ ॥
अथवा नतषड्ग्रंथास्थिराकुष्ठसुराह्वयान् ।
सैलानलदशैलेयशताह्वारक्तचंदनान् ॥ ७० ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ।
भेडस्य संमतं तैलं तत्कृच्छ्रानानिलामयान् ॥ ७१ ॥
वातकुंडलिकोन्मादगुल्मवर्ध्मादिकान् जयेत् ।

सहाचरतुलायाः क्वाथे तैलाढकं पचेत् । मूलकल्काद्दशपलानि क्षीरं तैलचतुर्गुणं दद्यादित्येवं पाकः । अथवा सहाचरतुलायाः क्वाथे नतादिभिः सिद्धेऽस्मिन् तैले शर्करारजसोऽष्टादशपलानि क्षिपेत् । एतच्च भेडाख्यस्य महर्षेः संमतं दारुणान् वातरोगान् वातकुंडलिकादींश्च जयेत् ।

बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७२ ॥
जलाढकं शते पक्त्वा शतभागस्थिते रसे ।
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः ॥ ७३ ॥
पचेत्साजपयोर्धांशं कल्कैरेभिः पलोन्मितैः ।
शठीसरलदार्वेलामंजिष्ठागुरुचंदनैः ॥ ७४ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७५ ॥
पलाशरसकस्तूरीनीलिकाजातिकोशकैः ।
स्पृक्काकुंकुमशैलेयजातिकाकट्फलांबुभिः ॥ ७६ ॥
त्वक्कुंदरुककर्पूरतुरुष्कश्रीनिवासकैः ।
लवंगनखकंकोलकुष्ठमांसीप्रियंगुभिः ॥ ७७ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः ।
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ॥ ७८ ॥
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितम् ।
कासश्वासज्वरच्छर्दिमूर्छागुल्मक्षतक्षयान् ॥ ७९ ॥
प्लीहशोषमपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ८० ॥

बलायाः शतं गुडूच्याः पंचविंशतिपलानि रास्नायाः सार्धानि द्वादशपलानि। एतच्च जलाढकशते पक्त्वाऽऽढकमात्रस्थिते क्काथे दध्यादिभिस्तुल्यैस्तैलाढकमजाक्षीरसार्धाढकं शठ्यादिभिः पलोन्मितैः पचेत्। कटुलघु कंकोलकम्। प्लवः कुटंनटः। अवतारिते चाऽस्मिन्पत्रकल्कं दद्यात्। अनंतरमेतत्तैलं विधिना प्रयोजितं कासादीन्हंति। एतद्बलातैलं श्रेष्ठं गर्भव्यापदुक्ताद्बलातैलात्। तथा वातरोगघ्नम्।

**पाने नस्येऽन्वासनेऽभ्यंजने च**
**स्नेहाः काले सम्यगेते प्रयुक्ताः।**
**दुष्टान्वातानाशु शांतिं नयेयु-**
**र्वंध्या नारीः पुत्रभाजश्च कुर्युः॥ ८१॥**

एते पूर्वोक्ताः स्नेहाः पानादिषु कालेऽवसरे प्रयुक्ता दुष्टान् वातान् द्रागेव शमयेयुः। वंध्याश्च नारीः पुत्रभाजो विदध्युः। शालिनीवृत्तम्।

**स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः।**
**पित्तं वा दर्शयेद्रूपं वस्तिभिस्तं विनिर्जयेत्॥८२॥**

स्नेहस्वेदैश्च यदा कफो द्रुतो द्रवत्वं प्राप्तः पक्वाशयस्थो रूपं दर्शयेदथवा पित्तं रूपं दर्शयेत्तं कफं पित्तं वा बस्तिभिर्विनिर्जयेत्।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने वातव्याधिचिकित्सितमेकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

अस्मादनंतरं वातरक्तचिकित्सितमारभ्यते। यतो वातशोणिताख्यो व्याधिः प्रायो वातव्याधिरेव वा शोणितयुक्तेन वायुना कृतत्वाद्बहुवक्तव्याच्च पृथगस्योपदेश इत्यत आह।

**अथाऽतो वातशोणितचिकित्सितं व्याख्यास्यामः।**
**वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत्।**
**अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम्॥ १॥**

वातशोणितिनो नरस्य स्निग्धस्य सतो बहून् वारान् लोहितमल्पाल्पं हरेद्वातकोपभयात्। अत एवाह। पालयन्वायुम्। तथा यथादोषं दोषानतिक्रमेण तथा बलानतिक्रमेण। यथादोषमित्युपलक्षणार्थम्। दूष्याद्यनतिक्रमेणाऽपि रक्तं हरेत्।

**रुग्रागतोददाहेषु जलौकाभिर्विनिर्हरेत्।**
**शृंगतुंबैश्चिमिचिमाकंडूरुग्दूयनान्वितम्॥ २॥**
**प्रच्छानेन सिराभिर्वा देशाद्देशांतरं व्रजत्।**

रुग्रागादिषु सत्सु जलौकाभी रुधिरं हरेत्। चिमिचिमान्वितं रक्तं शृंगतुंबैर्हरेत्। देशाद्देशांतरं गच्छदसृक् प्रच्छानेन शिरया वा हरेत्।

**अंगग्लानौ तु न स्राव्यं रूक्षं वातोत्तरं च यत्॥**
**गंभीरं श्वयथुं स्तंभं कंपस्नायुसिरामयान्।**
**ग्लानिमन्यांश्च वातोत्थान् कुर्याद्वायुरसृक्क्षयात्॥**

अंगग्लानौ तु सत्यां न स्राव्यं स्यात्। तथा रूक्षं वातोत्तरं च यद्रक्तं तदपि न स्राव्यम्। रूक्षं सति वातचिकित्सितं सेवेत। ननु कस्माद्रक्तस्रावो न विधीयत इत्याह। वायुरसृक्क्षयाद्गंभीरशोफादीन् कुर्यात्।

**विरेच्यः स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनैः।**

विरेचनयोग्यः पुरुषः स्नेहयित्वा विरेचनद्रव्यैः स्नेहयुतैर्विरेचनीयः।

**वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम्॥ ५॥**

वाताधिके वातरक्ते पुराणं घृतं पाययेत्।

**श्रावणीक्षीरकाकोलीक्षीरिणीजीवकैः समैः।**
**सिद्धं सर्षपकैः सर्पिः सक्षीरं वातरक्तनुत्॥ ६॥**

श्रावण्यादिभिः कल्कीकृतैः सिद्धं घृतं कटुयुक्तं वातशोणितहृत्।

**द्राक्षामधूकवारिभ्यां सिद्धं वा ससितोपलम्।**
**घृतं पिबेत्तथा क्षीरं गुडूचीस्वरसे शृतम्॥ ७॥**
**तैलं पयः शर्करां च पाययेद्वा सुमूर्छितम्।**

द्राक्षामधूकयोः क्काथे सिद्धं वा घृतं सशर्करं पिबेत्। क्षीरं च गुडूचीस्वरसे क्कथितं पिबेत्। तैलादि वा संमिश्रितं पाययेत्।

**बलाशतावरीरास्नादशमूलैः सपीलुभिः॥ ८॥**
**श्यामैरंडस्थिराभिश्च वातार्तिघ्नं शृतं पयः।**

बलादिभिः शृतं पयो वातरुजां नाशनं स्यात्।

**धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्॥ ९॥**

धारोष्णं क्षीरं गोमूत्रयुक्तं वा दोषानुलोमनं स्यात्।

**पैत्ते पक्त्वा वरीतिक्तापटोलत्रिफलामृताः।**
**पिबेद्घृतं वा क्षीरं वा स्वादु तिक्तकसाधितम्॥१०॥**

पैत्ते पित्ताधिके वातशोणिते शतावर्यादीन् पक्त्वा पिबेत्। स्वादुतिक्तद्रव्यैः साधितं घृतं क्षीरं वा पिबेत्।

**क्षीरेणैरंडतैलं च प्रयोगेण पिबेन्नरः।**
**बहुदोषो विरेकार्थं जीर्णे क्षीरोदनाशनः॥ ११॥**

बहुदोषो नरो विरेकार्थमेरंडतैलं क्षीरेण पिबेत्। जीर्णे तस्मिन् क्षीरोदनाशी स्यात्।

**कषायमभयानां वा पाययेद्घृतभर्जितम्।**
**क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा॥ १२॥**

अथवा हरीतकीनां क्काथं घृतभर्जितं पाययेत्। त्रिवृतामूलचूर्णं क्षीरानुपानं द्राक्षारसेन वा पाययेत्।

**निर्हरेद्वा मलं तस्य सघृतैः क्षीरवस्तिभिः ।**
**नहि वस्तिसमं किंचिद्वातरक्तचिकित्सितम् ॥ १३॥**
**विशेषात्पायुपार्श्वोरुपर्वास्थिजठरार्तिषु ।**

अथवा तस्य वातरक्तवतो मलं क्षीरबस्तिभिर्घृतान्वितैर्निर्हरेत् । यस्माद्बस्तितुल्यं नान्यद्वातरक्तचिकित्सितमस्ति । विशेषेण पाय्वादिपीडासु बस्तिर्हितः ।

**मुस्तद्राक्षाहरिद्राणां पिबेत्क्वाथं कफोल्बणे ॥ १४ ॥**
**सक्षौद्रं त्रिफलाया वा गुडूचीं वा यथा तथा ।**

मुस्तादीनां क्वाथं माक्षिकान्वितं कफोत्तरे वातशोणिते पिबेत् । त्रिफलायाः क्वाथं वा समाक्षिकं पिबेत् । सर्वेण प्रकारेण वा गुडूचीं वा पिबेत् ।

**यथाऽर्हस्नेहपीतं च वामितं मृदु रूक्षयेत् ॥ १५ ॥**

यो यस्याऽर्हः स्नेहस्तं पीतवंतं कृतवमनं च मृदु कृत्वा रूक्षयेत् ।

**त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम् ।**
**विडंगं पिप्पलीमूलं लोमशं वृषकं त्वचम् ॥ १६ ॥**
**ऋद्धिं लांगलिकं चव्यं समभागानि पेषयेत् ।**
**कल्कैर्लिप्त्वायसीं पात्रीं मध्याह्ने भक्षयेदिदम् ॥१७॥**
**वातास्रे सर्वदोषेऽपि परं शूलान्विते हितम् ।**

त्रिफलादीनि समांशानि जलेन पेषयेत् । पिष्ट्वा च प्रभाते लौहीं पात्रीं लिप्त्वा मध्याह्न इदं भक्षयेत् । एतच्च वातरक्ते सर्वदोषेऽपि परं शूलयुक्ते हितम् ।

**कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥१८॥**
**कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति ।**

कोकिलाक्षकशाकभोजिना कोकिलाक्षकक्वाथः पीतो वातरक्तं शमयति । कृपाभ्यासः क्रोधं यथा ।

**पंचमूलस्य धात्र्या वा रसैर्लेलीतकीं वसाम् ॥१९॥**
**खुडं सुरूढमप्यंगे ब्रह्मचारी पिबन् जयेत् ।**

पंचमूलस्य रसैरामलकरसैर्वा लेलीतकीं वसां ब्रह्मचारी पिबन् शरीरे खुडं सुस्थिरीभूतमपि जयेत् ।

**इत्याभ्यंतरमुद्दिष्टं कर्म बाह्यमतः परम् ॥ २० ॥**

इत्येवमाभ्यंतरं कर्म चिकित्सितमुक्तम् । अतः परं बाह्यं कर्मोच्यते ।

**आरनालाढके तैलं पादसर्जरसं शृतम् ।**
**प्रभूते खजितं तोये ज्वरदाहार्तिनुत्परम् ॥ २१ ॥**

कांजिकस्याढके तैलं चतुर्भागं सर्जरसं पक्वं प्रभूते जले मथितं परं ज्वरदाहार्तिनुत् ।

**समधूच्छिष्टमंजिष्ठं ससर्जरससारिवम् ।**
**पिंडतैलं तदभ्यंगाद्वातरक्तरुजापहम् ॥ २२ ॥**

पूर्वोक्तं तैलं पक्वं सहमधूच्छिष्टं मंजिष्ठासर्जरससारिवाभिरावापरूपाभिर्वर्तते यत्तदेवंभूतं सतिंपडतैलमुच्यते । तच्चाभ्यंगाद्वातरक्तरुजाहरम् ।

**दशमूले शृतं क्षीरं सद्यः शूलनिवारणम् ।**
**परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥**

दशमूलेन क्षीरं सिद्धं शीघ्रमेव शूलहृत् परिषेकेनेत्यर्थादवगम्यते । अत एवाह परिषेकोऽनिलप्राये तथैव कोष्णेन सर्पिषा ।

**स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।**
**स्तंभाक्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलैः ॥ २४ ॥**

अथवा स्तंभादिभिरार्तं नरं चतुर्भिर्मधुरद्रव्यसाधितैः स्नेहैः कोष्णैः परिषेचयेत् । दाहे पुनस्तैरेव शीतैः परिषेचयेत् ।

**तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।**

गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः स्तंभाक्षेपकहिध्मासु शूलार्तं तद्वत्प्राग्वत्परिषेचयेत् । दाहे पुनरेतैरेव शीतैः परिषेचयेत् ।

**निःक्वाथैर्जीवनीयानां पंचमूलस्य वा लघोः ॥२५ ॥**

जीवनीयानां द्रव्याणां निःक्वाथैर्लघोर्वा पंचमूलस्य क्वाथैः कोष्णैः स्तंभाद्यार्तं परिषेचयेत् । दाहे तु शीतलैः ।

**द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकांजिकम् ।**
**सेकार्थं तंडुलक्षौद्रं शर्करांभश्च शस्यते ॥ २६ ॥**

दाहे द्राक्षारस इक्षुरसमद्यानि दधिमस्त्वम्लकांजिकं सेकार्थं शस्यते । तथा तंडुलांभः क्षौद्रांभः शर्करांभश्च सेकार्थं शस्यते ।

**प्रियाः प्रियंवदा नार्यश्चंदनार्द्रकरस्तनाः ।**
**स्पर्शशीताः सुखस्पर्शा घ्नंति दाहं रुजं क्लमम् ॥२७॥**

नार्यः प्रिया वल्लभाः प्रियवचसश्चंदनेनार्द्राः कराश्च स्तना यासां ता एवंविधाः स्पर्शेन शीताः सुखस्पर्शाश्च दाहं क्लमं च घ्नंति ।

**सरागे सरुजे दाहे रक्तं हृत्वा प्रलेपयेत् ।**
**प्रपौंडरीकमंजिष्ठादार्वीमधुकचंदनैः ॥ २८ ॥**
**ससितोपलकासेक्षुमसूरैरकसक्तुभिः ।**
**लेपो रुग्दाहवीसर्परागशोफनिबर्हणः ॥ २९ ॥**

दाहे सरागे सरुजे सति रक्तं हृत्वा प्रपौंडरीकादिभिर्लेपः कार्यः । स च लेपो रुग्दाहादिनिबर्हणः । दार्वी दारुहरिद्रा । मधुकं यष्टीमधु । सितोपला शर्करा । एरकासक्तुः एरकाबीजसक्तुः ।

**वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः ।**
**तिलसर्षपपिंडैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥**

कृशरस्तिलमुद्गादिकृतो वातघ्नैः साधितो मुद्गपायसो मुद्गक्षीरे यो मिश्रितस्तिलसर्षपपिंडैश्चैतदुपनाहनं शूलघ्नम् ।

**औदका प्रसहानूपवेसवाराः सुसंस्कृताः ।**
**जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥ ३१ ॥**

**स्तंभतोदरुगायामशोफांगग्रहनाशनाः ।**
**जीवनीयौषधैः सिद्धाः सपयस्का वसाऽपि वा ३२**

औदकाद्या जीवनीयौषधैः साधिताः स्नेहयुक्ताः सुसंस्कृता उपनाहेन स्तंभादिनाशनाः स्युः । अथवा औदकादीनां वसा जीवनीयौषधैः सिद्धाः सपयस्काः स्तंभादिनाशनाः स्युः ।

**घृतं सहचरान् मूलं जीवंतीच्छागलं पयः ।**
**लेपः पिष्ट्वा तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥३३॥**

सहचरीजीवंतीमूलकल्को घृतच्छागलपयोमिश्रो लेप उपयोगी भवति । भृष्टास्तिला भृष्टा भर्जिताः पयसि क्षीरे निर्वृताः प्रक्षिप्तास्तद्वत् प्राग्वत् प्रलेपो योज्यः ।

**क्षीरपिष्टक्षुमालेपमेरंडस्य फलानि वा ।**
**कुर्याच्छूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके॥३४॥**

क्षुमामतसीं क्षीरेण पिष्टामधिकेऽनिलशूले शूलनिवृत्त्यर्थं लेपं कुर्यात् । यद्वा । एरंडस्य फलानि क्षीरपिष्टानि शूलनिवृत्त्यर्थं लेपं कुर्यात् । यद्वा । शताह्वां शतपुष्पां क्षीरे पिष्ट्वा शूलनिवृत्त्यर्थं लेपं कुर्यात् ।

**मूत्रक्षारसुरापक्वं घृतमभ्यंजने हितम् ।**

मूत्रादिभिः सिद्धं घृतमधिकेऽनिलेऽभ्यंजने हितम् ।

**सिद्धं समधुशुक्तं वा सेकाभ्यंगाः**

शुक्तं चुक्रं समाक्षिकं सेके परिषेकेऽभ्यंगे च हितम् ।

**कफोत्तरे ॥ ३५ ॥**
**गृहधूमो वचा कुष्टं शताह्वा रजनीद्वयम् ।**
**प्रलेपः शूलनुद्वातरक्ते**

वातकफोत्तरे वातरक्ते गृहधूमादिप्रलेपो हितो भवति । शताह्वा शतपुष्पा । रजनीद्वयं हरिद्रे द्वे ।

**वातकफोत्तरे ॥ ३६ ॥**
**मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ।**

वातकफोत्तरे वातरक्ते मधुशिग्रोर्बीजं कांजिकसंयुक्तम् तद्वत् प्रलेपे हितम् ।

**मुहूर्तलिप्तमम्लैश्च सिंचेद्वातकफोत्तरे ॥ ३७ ॥**

वातकफोत्तरे वातरक्ते मुहूर्तलिप्तमर्थादेवं कांजिकपिष्टमधुशिग्रुबीजेन लिप्तमम्लैः शुक्तादिभिः सिंचेत् ।

**उत्तानं लेपनाभ्यंगपरिषेकावगाहनैः ।**

उत्तानं वातरक्तं लेपादिभिराचरेत् चिकित्सेत् ।

**विरेकास्थापनैः स्नेहपानैर्गंभीरमाचरेत् ॥ ३८ ॥**

गंभीरं वातशोणितं विरेकादिभिराचरेत् ।

**वातश्लेष्मोत्तरे कोष्णा लेपाद्यास्तत्र शीतलैः ।**
**विदाहशोफरुक्कंडूविवृद्धिः स्तंभनाद्भवेत् ॥ ३९ ॥**

वातश्लेष्मोत्तर उत्ताने वातशोणिते लेपाद्याः कोष्णा हिताः । तत्र तस्मिन्वातश्लेष्मोत्तरे शीतलैर्लेपनैः स्तंभनाद्विदाहादीनां विवृद्धिर्भवति ।

**पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ।**
**उष्णैः प्लोषोपरुग्रागस्वेदापदरणोद्भवः ॥ ४० ॥**

वातरक्ते पित्तरक्तोत्तरे हिमाः शीता लेपादयो हिताः । तत्र पित्तरक्तोत्तरे वातरक्त उष्णैर्लेपैः प्लोषादयो भवंति ।

**मधुयष्ट्याः पलशतं कषाये पादशेषिते ।**
**तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ ४१ ॥**
**स्थिरातामलकीदूर्वापयस्याभीरुचंदनैः ।**
**लोहं हंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ ४२ ॥**
**काकोलीक्षीरकाकोलीशतपुष्पार्द्धिपद्मकैः ।**
**जीवंतीजीवकर्षभकत्वक्पत्रनखवालकैः ॥ ४३ ॥**
**प्रपौंडरीकमंजिष्ठासारिवैंद्रीवितुन्नकैः ।**
**चतुःप्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ ४४ ॥**

मधुयष्ट्याः पलशतं क्वाथकल्पनया क्वथितं तस्मिन्कषाये पादशेषिते चतुर्भागावशिष्टे तैलस्याढकम् समक्षीरमाढकप्रमाणेन क्षीरेण तुल्यं स्थिरादिभिः पलोन्मितैः कल्कीकृतैर्युक्तं पचेत् । तत्तैलं चतुःप्रयोगं पाने नस्येऽनुवासने बस्तौ योजितं वातासृगादीनामर्तिनुद्भवेत् । स्थिरा शालिपर्णी । तामलकी भूधात्री । पयस्याऽर्कपुष्पी । अभीरुः शतावरी । लोहमगरु । हंसपदी त्रिपादी कीटमारी । मधुपर्णी गुडूची । ऐंद्री विशाला । वितुन्नकं परिपेलवम् ।

**वलाकल्ककषायाभ्यां तैलं क्षीरसमं पचेत् ।**
**सहस्रशतपाकं तद्वातासृग्वातरोगनुत् ॥ ४५ ॥**
**रसायनं मुख्यतममिंद्रियाणां प्रसादनम् ।**
**जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ४६ ॥**

बलाकषायेण कल्केन च तैलं क्षीरेण समं तुल्यं पचेत् । तत्तैलं सहस्रपाकं शतपाकं वातशोणितोद्भववातरक्तहरम् । तथा मुख्यतमं श्रेष्ठं तद्रसायनमिंद्रियाणां चक्षुरादीनां प्रसादनम् । प्रसादजनकं जीवनं प्राणधारणम् । बृंहणमुपचयकरम् । स्वर्यं स्वरकरम् । शुक्रासृग्दोषाणां नाशनम् ।

**कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ।**
**अतिवृद्ध्यानिले शस्तमादौ स्नेहनबृंहणम् ॥ ४७ ॥**
**कृत्वा तंत्राढ्यवातोक्तं वातशोणितिकं ततः ।**
**भेषजं स्नेहनं कुर्याद्यच्च रक्तप्रसादनम् ॥ ४८ ॥**

अनिले वाते मेदसो वृद्ध्या कफस्य वाऽतिवृद्ध्या मार्गसंरोधात् कारणात् कुपिते स्नेहनबृंहणमौषधमादौ शस्तम् । तत्र मेदसावृते कफावृते वात आढ्यवातोक्तं यच्चिकित्सितं तत्कार्यम् । ततोऽनंतरं वातशोणितिकं स्नेहनं भेषजं कुर्यात् । यच्चाऽपि रक्तस्य प्रसादनं तदपि कुर्यात् ।

वातशोणितचिकित्सितमुक्त्वा प्राणादिचिकित्सामाह ।

**प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम् ।**
**यथासन्नं च भैषज्यं विकल्प्यं स्याद्यथाबलम् ॥४९॥**

प्राणादीनां पंचानां युगपत्तुल्यकालं कोपे यथोद्दिष्टं यथोक्तं वातव्याधिचिकित्सानतिक्रमेण यथामयम् । प्राणादिकोपजनितरोगाद्यपेक्ष्य यथासन्नं प्राणादीनामन्यतममासन्नमतिक्रम्य यस्मिन्नेव रोगे य एव प्राणादीनामन्यतममेव चिकित्सेत् । यथाबलं बलानतिक्रमेण प्राणादीनामन्यतमस्य बलिनः पूर्वं प्रतीकारं कुर्यात् । इत्येवमत्र भेषजमौषधं विकल्प्यं कल्पनीयं स्याद्भवेत् ।

**नीते निरामतां सामे स्वेदलंघनपाचनैः ।**
**रूक्षैश्चालेपसेकाद्यैः कुर्यात्केवलवातनुत् ॥ ५० ॥**

सामे वाते स्वेदादिभिस्तथा रूक्षैः सेकलेपादिभिर्निरामतां नीते पश्चात्केवलवातनुत् शुद्धवातचिकित्सितं कुर्यात् ।

**शोषाक्षेपणसंकोचस्तंभस्वपनकंपनम् ।**
**हनुस्रंसोर्दितं खांज्यं पांगुल्यं खुडवातता ॥ ५१ ॥**
**संधिच्युतिः पक्षवधो मेदोमज्जास्थिगा गदाः ।**
**एते स्थानस्य गांभीर्यात्सिध्येयुर्यत्नतो न वा ॥ ५२॥**
**तस्माज्जयेन्नवानेतान् बलिनो निरुपद्रवान् ।**

शोषोंऽगशोषः । अक्षेपणमायामः । संकोचोंऽगावयवानाम् । स्तंभो दंडवत् स्तब्धता । स्वपनमचैतन्यम् । कंपनं वेपथुः । हनुस्रंसो हनुभ्रंशः । अर्दितं वायुना वक्रीकृतं वक्रार्धम् । खांज्यम् खंजता । पांगुल्यं पंगुता । खुडवातं वातशोणितम् । संधीनां च्युतिः स्थानभ्रंशः । पक्षवधः पक्षाघातः । तथा ये गदा रोगा मेदोऽस्थिस्थानस्था भवंति त एते स्थानस्य गांभीर्यभावेन जाता न वाऽचिरकालोत्पन्ना यत्नतः सिध्येयुः । बलिनः पुंसः । तस्मादेतान्शोषादीन् शीघ्रजन्मनो जयेच्चिकित्सेत ।

**वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम्५३**
**व्यत्यासाद् योजयेत्सर्पिर्जीवनीयं च पाययेत् ।**
**धन्वमांसं यवाः शालिर्विरेकः क्षीरवान्मृदुः ॥५४॥**

वायौ पित्तावृते व्यत्यासात्पर्यायेण शीतामुष्णां च क्रियां बहुशः शतशो योजयेत् । तथा जीवनीयं सर्पिस्तमातुरं पाययेत् । अत्र च पित्तावृते वायौ धन्वमांसं जांगलं पिशितं योज्यम् । यवाः शालयश्च तथा क्षीरवान् क्षीरयुक्तो मृदुर्विरेको योज्यः ।

**सक्षीरा बस्तयः क्षीरं पंचमूलबलाशृतम् ।**
**कालेऽनुवासनं तैलं मधुरौषधसाधितम् ॥ ५५ ॥**

अत्र पित्तावृते वायौ बस्तयः सक्षीरा योज्याः । पंचमूलं महत् । तेन बलासहितेन शृतं क्षीरं प्रयोक्तव्यम् । काले यथावसरमनुवासनयोग्यैर्मधुरौषधसाधितैस्तैलैरनुवासनं देयम् ।

**यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ।**
**पंचमूलकषायेण वारिणा शीतलेन च ॥ ५६ ॥**

मधुयष्टितैलेन बलातैलेन घृतेन क्षीरेण च सेचनं हितम् । पंचमूलस्य कषायेण क्वाथेन वा शीतलेन वारिणा पित्तावृते वाते सेचनं योज्यम् ।

**कफावृते यवान्नानि जांगला मृगपक्षिणः ।**
**स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७॥**
**पुराणसर्पिस्तैलं च तिलसर्षपजं हितम् ।**

कफावृते यवान्नानि हितानि । जांगला मृगाः पक्षिणश्च तथा स्वेदा हिताः । तीक्ष्णा निरूहा आस्थापनविशेषाश्च । तीक्ष्णं वमनं सविरेचनं हितम् । पुराणं च सर्पिः सर्षपजं च तैलं हितम् ।

**संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥५८॥**

कफपित्ताभ्यां द्वाभ्यां संसृष्टे वात आदावेव पित्तं विनिर्हरेत् । पश्चात्कफं वातयुक्तं जयेत् ।

**कारयेद्रक्तसंसृष्टे वाते शोणितिकीं क्रियाम् ।**

रक्तसंसृष्टे वाते वातशोणितिकीं क्रियां कारयेत् ।

**स्वेदाभ्यंगरसाः क्षीरं स्नेहो मांसावृते हितः ॥५९॥**

मांसावृते स्वेदाभ्यंगमांसरसः क्षीरं स्नेहश्च यथायोगमेतद्धितम् ।

**प्रमेहमेदोवातघ्नमाढ्यवाते भिषग्जितम् ।**

आढ्यवाते मेदसा वृते वायौ प्रमेहघ्नं मेदोघ्नं वातघ्नं च भिषग्जितमौषधं हितम् ।

**महास्नेहोऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते ॥ ६० ॥**

अस्थिमज्जस्थे वाते महास्नेहो घृतमज्जावसातैलैः सिद्धो यद्वा नारायणादिर्हितः । रेतसावृते पूर्वोक्तवातव्याधौ शुक्रस्थवातोक्तं हितम् ।

**अन्नावृते पाचनीयं वमनं दीपनं लघु ।**

अन्नावृते पाचनीयमौषधं वमनं हितम् । दीपनीयमाग्नेयं यदौषधं लघु च प्रकृत्या तत्सर्वं हितम् ।

**मूत्रावृते मूत्रलानि स्वेदा उत्तरबस्तयः ॥ ६१ ॥**

मूत्रेणावृते वाते मूत्रलानि त्रपुसादीनि स्वेदाश्चोत्तरबस्तयो हिताः ।

**एरंडतैलं वर्चःस्थे बस्तिस्नेहाश्च भेदिनः ।**

वर्चसावृते वात एरंडतैलं बस्तयश्च स्नेहाश्च भेदिनो हिताः ।

**कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ॥ ६२ ॥**
**सर्वस्थानावृते त्वाशु तत्कार्यं मातरिश्वनि ।**

सर्वस्थानावृते मातरिश्वनि वायावाशु शीघ्रमेव यदौषधं कफपित्तयोरविरुद्धं वातस्य चाऽनुलोमनं तत्कार्यम् ।

**अनभिष्यंदि च स्निग्धं स्रोतसां शुद्धिकारणम् ॥ ६३ ॥**
**पाचना बस्तयः प्रायो मधुराः सानुवासनाः ।**
**प्रसमीक्ष्य बलाधिक्यं मृदु कायविरेचनम् ॥ ६४ ॥**
**रसायनानां सर्वेषामुपयोगः प्रशस्यते ।**
**शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ॥ ६५ ॥**
**लेहो वा भार्गवस्तद्वदेकादशसिता सितः ।**

तस्मिन् सर्वधात्वावृते मातरिश्वनि यदनभिष्यंदि स्निग्धं स्रोतसां यच्छुद्धिकरं तत्सर्वमत्र पानौषधं योज्यम् । पाचनसंज्ञा बस्तयो बाहुल्येन मधुराः सानुवासनाः स्नेहबस्तयश्च हिताः । बलस्याधिक्यं प्रसमीक्ष्य बुद्ध्वा मृदु कायविरेचनं हितम् । सर्वेषां रसायनप्रयोगाणामुपयोगः शस्यते । विशेषेणात्यर्थं शिलाजतुनः पयसा सह प्रयोगः प्रशस्यते । तथा शुद्धस्य गुग्गुलोः प्रयोगः । भार्गवो लेहो ब्राह्मरसायनोक्तश्च्यवनप्राशो वा तद्वदेकादशसितासितो ब्राह्मरसायनोक्तः शस्यते ।

**अपाने त्वावृते सर्वं दीपनं ग्राहिभेषजम् ॥ ६६ ॥**
**वातानुलोमनं कार्यं मूत्राशयविशोधनम् ।**

अपाने वायौ येन केनचिदावृते सर्वं भेषजं दीपनमग्नेर्ग्राहि संग्रहणं वातस्यानुलोमनं मूत्राशयस्य बस्तेर्विशोधनं तत्सर्वं कार्यम् ।

**इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ॥ ६७ ॥**
**प्राणादीनां भिषक्कुर्याद्वितर्क्य स्वयमेव तत् ।**

इत्यनंतरोक्तेन प्रकारेणावृतानां संक्षेपतश्चिकित्सितमौषधमुक्तम् । तत्प्राणादीनां पंचानामावृतानां चिकित्सितम् । तत्पूर्वोक्तं वितर्क्य भिषक् स्वयमेव विचार्य कुर्यात् ।

**उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ ६८ ॥**
**समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजयेत् ।**
**प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ६९**
**स्वं स्वं स्थानं नयेदेवं वृत्तान्वातान्विमार्गगान् ।**

उदानाख्यं वायुमूर्ध्वमेव योजयेत् । यतोऽसौ सदैवोर्ध्वगामी तथा प्रयतेत यथोर्ध्वगामी भवति । अपानाख्यं चाऽनिलमनुलोमयेदधोगतिर्ह्ययं सदैव समीरस्तस्मादधोगमनं यथा यस्य संपद्येत तथा चिकित्सितं कार्यमित्यर्थः । समानाख्यं वायुं विद्वान्वैद्यो वातघ्नैरौषधैः शमयेत् । अयमभिप्रायो ग्रंथकृतः । किल नास्योर्ध्वगामिता नैवाधोगामिता यथा संपद्यते तथा चिकित्सितं हितम् । किं तर्हि स्वस्थानप्रतिपत्तिरेवेत्येवं चिकित्सा कार्येति । व्यानाख्यं तु वायुं त्रिधा योजयेदूर्ध्वाधोमध्यगमनं यथाऽस्य शरीरे संपद्यते तथा चिकित्सा कार्येति । तथा प्राणो वायुश्चतुर्भ्योऽप्युदानापानसमानव्यानेभ्योऽपि सर्वप्रयत्नेन रक्ष्यः । यथोदानादिभिर्नास्य बाधा संपद्यते तथा चिकित्सा कार्येत्यर्थः । यतस्तस्य प्राणस्य स्थितौ सत्यां देहस्य शरीरस्य स्थितिर्जीवनं भवति प्राणं विना न जीवतीत्यर्थः । एवमनेन प्रकारेण वातान्विमार्गगानावृतान् स्वं स्वं स्थानं नयेत् ।

**सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम् ॥ ७० ॥**
**रसायनविधानेन लशुनो हंति शीलितः ।**

सर्वमेवावरणं वातानां पित्तरक्तसंसर्गवर्जितं रसायनविधिना शीलितो लशुनो हंति । एतेन पित्तरक्तसंसृष्टमावरणं वर्जयित्वा सर्वावरणान्यन्यानि लशुनः केवल एव निहंति ।

**पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥**

पित्तावृत उदानादौ पित्तहरं पवनस्य चानुलोमनं हितम् ।

**रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम् ।**
**रक्तपित्तानिलहरं विविधं च रसायनम् ॥ ७२ ॥**

रक्तावृते तद्वत् पित्तहरं तथैव मारुतानुलोमनं हितम् । यच्च खुडोक्तं वातशोणितोक्तं भेषजं तथा पित्तरक्तानिलहरं च हितम् । विविधं रसायनं च । विविधं नानाप्रकारं सर्वदोषदूष्यादिकं चालोक्य यथायोगं विधेयम् ।

**यथानिदानं निर्दिष्टमिति सम्यक्चिकित्सितम् ।**
**आयुर्वेदफलं स्थानमेतत्सद्योर्तिनाशनम् ॥ ७३ ॥**

इत्यनेन प्रकारेण यथानिदानं निदानानतिक्रमेण यथोद्देशस्तथा निर्देशः । अनया रीत्या सर्वमेव चिकित्सितं निर्दिष्टमेतच्चायुर्वेदफलभूतं स्थानमेतदुपदेशेन सद्योर्तिनाशनाद्धेतोः ।

**चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।**
**भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधम् ॥ ७४ ॥**

चिकित्सितादय औषधस्य पर्यायाः स्मृता इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां चिकित्सितस्थाने वातशोणितचिकित्साख्यो द्वाविंशोऽध्यायः ॥ २२ ॥

**समाप्तमिदं चिकित्सास्थानम्**

ॐ नमः सर्वज्ञाय । चिकित्सितस्थानानंतरं कल्पस्थानमारभ्यते । चिकित्सितस्थानस्य कल्पस्थानापेक्षत्वात् । तथाहि प्रागध्यगीष्ट । तर्पणेन रसेनेक्षोर्मद्ये कल्पोदितानि वा । वमनानि प्रयुंजीतेति । तदेवमाद्युपदेशात्सापेक्षत्वमस्य । तस्मात्कल्पस्थानमुच्यत इत्याह ।

### अथाऽतो वमनकल्पं व्याख्यास्यामः ॥

वमनमूर्ध्वं मुखेन दोषहरणम् । तस्य कल्पः कल्पनं योजनमित्यर्थः । शेषमायुष्कामीयाध्यायवद्व्याख्येयम् ।

प्राधान्याच्च वमनकल्पे मदनमेव शस्यत इत्याह ।

**इति ह स्माहुरात्रेयादयो महर्षयः ।**
**वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ॥**

वमनविषये नित्यं मदनं श्रेष्ठम् । निरपायत्वादन्यद्रव्यविषयेऽपि वा तस्योपयोगात्सर्वत्रानिषिद्धप्रसरत्वाच्च । लाघवमिच्छंश्च तंत्रकृदिदमवोचत् । त्रिवृन्मूलं विरेचन इति । यथा मदनं वमने नित्यं श्रेष्ठं तथा त्रिवृन्मूलं विरेचने निरपायत्वादिहेतुना ।

**नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १ ॥**

मदनं वर्जयित्वा व्याधिवशादन्यस्य जीमूतादेर्विशिष्टता । वक्ष्यति हि जीमूतं तु विशेषतः । प्रयोक्तव्यं ज्वरश्वासकासहिध्मातिसारिणामिति । एवं त्रिवृन्मूलं वर्जयित्वा परस्य विरेचनद्रव्यस्य व्याधिविशेषेण विशिष्टत्वम् । न तु त्रिवृन्मूलवत्सर्वत्रानिषिद्धप्रसरत्वं निरपायत्वं च । तथा चोक्तं चरके । त्रिवृत्सुखविरेचनानामिति । तदेवं वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने सर्वदेति स्थितम् ।

**फलानि तानि पांडूनि न चाऽतिहरितान्यपि ।**
**आदायाऽह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसंतयोः ॥ २ ॥**
**प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बद्ध्वा प्रलेपयेत् ।**
**गोमयेनानुमुत्तोलीं धान्यमध्ये निधापयेत् ॥ ३ ॥**
**मृदुभूतानि मध्विष्टगंधानि कुशवेष्टनात् ।**
**निष्कृष्य निर्गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ४ ॥**
**तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।**
**दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ५ ॥**
**ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ।**

अथशब्दोऽत्र प्रस्तुतौ मदनस्य प्रस्तावे । तानि मदनस्य फलानि पांडूनि गृहीत्वा नत्वतिपांडून्यतिक्रांतपाकत्वात् । न वाऽतिहरितान्यामत्वात् । कदादाय । प्रशस्तनक्षत्रे दिवसे । कस्मिन्नृतौ । मध्ये ग्रीष्मवसंतयोः । एवमृतुसंधौ गृहीतानि प्रमृज्य व्यपगतमलादिदोषाणि कृत्वा कुशमय्यां मुत्तोल्यां मृत्तिकायां क्षिप्त्वा पुनरुपरिष्टाद्बद्ध्वा च ततो गोमयेन तां मुत्तोलीं लिंपेत् । अनंतरं धान्यमध्ये निधापयेत् स्थापयेत् । कुशानां समूहो रचनाविशेषो निष्पादितः कुशमुत्तोलीत्युच्यते । मृदुभूतानि तानि मध्विष्टगंधानि कदाचिन्मधुगंधानि कदाचिदिष्टगंधानि कुशवेष्टनादष्टाहेन ज्ञात्वाऽनंतरमष्टाहेऽतिक्रांते कुशमुत्तोल्याः निष्कृष्टानि बहिःकृतान्यनंतरमातपे शोषयेत् । ततोऽनंतरं तेषां मदनफलानां शुष्काणां फलपिप्पलीरुद्धृत्य दधिमध्वाज्यपललैर्मृदित्वा संक्षुद्य पुनरातपे शोषयेत् । ततोऽनंतरं सुष्ठु गुप्तं धारयित्वा कार्यकाले वमनावसरे ताः प्रयोजयेत् ।

**अथाऽऽदाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥६॥**
**शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जले ।**
**कर्बुदारस्य बिंब्या वा नीपस्य विदुलस्य वा ॥ ७ ॥**
**शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्युदकेऽथवा ।**
**ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ८ ॥**
**सूत्रोदितेन विधिना साधु तेन तथा वमेत् ।**
**श्लेष्मज्वरप्रतिश्यायगुल्मांतर्विद्रधीषु च ॥ ९ ॥**
**प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ।**

अथाऽनंतरं ततः पिप्पलीभ्यो मात्रां परिमाणं प्रायेण देशकालादिवशाद्वा मात्रां विकल्प्याऽनंतरं तां मात्रां जर्जरीकृत्य संचूर्ण्य मधुयष्ट्यादीनामन्यतमस्य जले शर्वरीं सकलां रात्रिं वासयेदभिषवणाय । ततोऽनंतरं तं कषायं मृदितगालितं पूर्वं मृदितं पश्चाद्गालितं वस्त्रपूतं कृत्वा सूत्रोदितेन विधिना श्वोवम्यमित्यादिग्रंथोक्तेन पिबेत् । एवं कृते सति तेन साधु वमेत् । विशेषेण श्लेष्मज्वरादिषु वमेत् । यावत्पित्तस्य दर्शनम् ।

**फलपिप्पलिचूर्णं वा क्वाथेन स्वेन भावितम् ॥ १० ॥**
**त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ।**
**पिबेज्ज्वरारुचिष्वेवं ग्रंथ्यपच्यर्बुदोदरी ॥ ११ ॥**
**पित्ते कफस्थानगते जीमूतादिजलेन तत् ।**

अथवा मदनफलपिप्पलीचूर्णं स्वेन फलपिप्पलीक्वाथेन भावितं त्रिभागत्रिफलाचूर्णान्वितं कोविदारादिजलेन ज्वरादिष्वरुच्यंतेष्वेवं पूर्वोक्तेन प्रकारेण पिबेत् । पित्ते कफस्थानगते सति ग्रंथ्यादिमान्नरस्तन्मदनफलं जीमूतादिजलेन पिबेत् ।

**हृद्दाहेऽधोस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥१२॥**
**क्षैरेयीं वा**

हृदयदाहेऽधोगे रक्तपित्ते तस्य मदनफलपिप्पलीभिः क्वथितं क्षीरं क्षैरेयीं वा पिबेत् । तंत्रांतरे च क्षीरश्रपणविधिरुक्तः । द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः

क्षीरपाके स्वयं विधिरिति। अङ्गपित्त इत्येतावत्युक्त ऊर्ध्वगोभयगयोर्वमनायोग्यत्वादेवाधोग्रहणे सिद्धे पुनरधोग्रहणं सुखतरप्रतिपत्त्यर्थम्। क्षैरेयीमिति। क्षीराड्ढञिति ढञ् टिड्ढाणेति ङीप्।

**कफच्छर्दिप्रसेकतमकेषु तु।**
**दध्युत्तरं वा दधि वा तच्छृतक्षीरसंभवम्॥ १३॥**

कफच्छर्दिप्रसेकतमकेषु दध्युत्तरं दधिसरं वमने हितम्। अथवा दधि हितमुभयमपि वमने हितं तच्छृतक्षीरसंभवात्।

**फलादिक्वाथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम्।**
**सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम्॥१४॥**

कल्कश्च क्वाथश्च कल्कक्वाथौ। फलादीनां मदनफलजीमूतकादीनां कल्कक्वाथौ। ताभ्यां सिद्धं पक्वं सर्पिः कफेनाभिभूतेऽग्नौ शुष्यच्छरीरे च वामनं हितम्। किंभूतं सर्पिः। तत्सिद्धदुग्धजं तैश्च फलादिभिः शृतं तत्सिद्धं च तद्दुग्धं च तस्मादुद्भूतम्।

**स्वरसं फलमज्ज्ञो वा भल्लातकविधिश्रृतम्।**
**आदर्वीलेपनात्सिद्धं लीढ्वा प्रच्छर्दयेत्सुखम्॥ १५॥**
**तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत्।**

फलमज्ज्ञो वा स्वरसं भल्लातकविधानेन शृतं दर्वीलेपं यावत्पक्त्वा लीढ्वा सुखेन वमेत्। तं च लेहं भक्ष्यादिषु तथा तस्य मदनफलस्य कषायान्योजयेत्।

**वत्सकादिप्रतीवापः कषायः फलमज्जजः॥ १६॥**
**निंबार्कान्यतरक्वाथसमायुक्तो नियच्छति।**
**बद्धमूलानपि व्याधीन्सर्वान्संतर्पणोद्भवान्॥ १७॥**

मदनफलमज्जजो वा कषायो वत्सकादिगणप्रतीवापो निंबार्कान्यतरक्वाथसंयुक्तो व्याधीन् समूलानपि नियच्छति। कीदृशान् संतर्पणजान्।

**राटपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूक्षितम्।**
**वमेन्मंडरसादीनां तृप्तो जिघ्रन् सुखं सुखी॥ १८॥**

मदनपुष्पफलसूक्ष्मचूर्णैः सुरूक्षितं पुष्पं जिघ्रन् मंडरसादीनां तृप्तः। आदिग्रहणात् कृशराक्षीरयवागूनां परिग्रहः। तथाविधो जिघ्रन् सुखी क्लेशसहिष्णुः सुखेन वमेत्।

**एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा।**

एवमेवानेनैव क्रमेण फलाभावे सति पुष्पं प्रकृतत्वान्मदनस्य कल्पनीयम्। अथाऽऽदाय ततो मात्रां जर्जरीकृत्य वासयेत्। शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जल इत्यादिविधिना शलाटु वाऽपक्वं फलं वैवं कल्पनीयम्।

**जीमूताद्याश्च फलवत्**

जीमूततुंबीकोशातक्याद्याः कुटजफलपर्यंताः फलवन्मदनफलतुल्यविधिना कल्प्याः।

**जीमूतं तु विशेषतः॥ १९॥**
**प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम्।**

विशेषेण तु जीमूतो ज्वरादिषु योज्यः।

**पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता॥ २०॥**
**लोमशे क्षीरसंतानं दध्युत्तरमलोमशे।**
**शृते पयसि दध्यम्लं जाते हरितपांडुके॥ २१॥**
**आसुत्य वारुणीमंडं पिबेन्मृदितगालितम्।**
**कफादरोचके कासे पांडुत्वे राजयक्ष्मणि॥ २२॥**

अस्य जीमूतस्य पुष्पे संपन्ने पयः क्षीरं जीमूतकशृतं प्रयोज्यम्। फलेऽस्य निष्पन्ने पयस्कृता जीमूतशृतक्षीरनिष्पादिता पेया योज्या। जीमूतफलस्य लोमशा लोमशतया मृदुकठिनभेदेन द्वैविध्यम्। लोमशे तस्मिन् जीमूतफले शृतक्षीरस्य या संतानिका शीतीभूतस्योपरिष्टाद्घनोऽवयवस्तं वमने पिबेत्। अलोमशे जीमूते काठिन्यमागते तच्चूर्णयुतं दध्युत्तरं दधिसरं पिबेत्। शृते पयसि प्रकृतत्वाज्जीमूतफले शृते हरितपांडुके लोमशाऽलोमशयोर्मध्यमामवस्थां प्राप्ते सति दध्यम्लं जातं पिबेत्। अम्लमेव दधि दध्यम्लम्। केचित्तु मस्तु दध्यम्लमित्याहुः। जीमूतफलेन वाऽऽसुत्य वारुणीमंडं पिबेत्। किंभूतं मृदितगालितं पूर्वं मृदितं खजादिना पश्चाद् गालितम् प्रस्तुतम्। केषु। कफारोचकादिषु।

**इयं च कल्पना कार्या तुंबीकोशातकीष्वपि।**

इयं च कल्पना पयःपुष्पेऽस्य निर्वृत्त इत्यादिकाऽऽसुत्य वारुणीमंडमितिपर्यंतं तुंबीकोशातकीष्वपि कार्या।

**पर्यागतानां शुष्काणां फलानां वेणिजन्मनाम्॥२३॥**
**चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत्।**
**द्वे वा त्रीण्यपि वाऽपोथ्य क्वाथे तिक्तोत्तमस्य वा॥**
**आरग्वधादिनवकादासुत्यान्यतमस्य वा।**
**विमृद्य पूतं तं क्वाथं पित्तश्लेष्मज्वरी पिबेत्॥२५॥**

पर्यागतानां प्राप्तसम्यक्पाकानां फलानां वेणिजन्मनां देवदाल्युत्पन्नानां चूर्णस्य शुक्तिमर्धपलं पयसा वातपित्ताभ्यामर्दित आतुरः पिबेत्। द्वे वा त्रीण्यपि वा जीमूतफलान्यापोथ्य जर्जरीकृत्य तिक्तोत्तमस्य निंबस्य क्वाथे पित्तश्लेष्मज्वरी पिबेत्। अथवाऽऽरग्वधादिनवकादारग्वधवर्गादायौषधनवकादन्यतमस्य क्वाथे द्वे वा त्रीण्यपि वा जीमूतफलान्यासुत्य संधाय तथा विमृद्य पूतं क्वाथं पित्तश्लेष्मज्वरी पिबेत्। घराघरी च वेणी च देवदाली च जीमूतं चेति पर्यायाः।

**जीमूतचूर्णं कल्कं वा पिबेच्छीतेन वारिणा।**
**ज्वरे पैत्ते कवोष्णेन कफवातात्कफादपि॥ २६॥**

जीमूतचूर्णं फलपिष्टं कल्कीकृत्याथवा तच्चूर्णं पित्तज्वरे शीतजलेनालोड्य पिबेत्। तस्यैव कल्कं चूर्णं वा कफवातात् कफाच्चोद्भूते ज्वरे कवोष्णेन वारिणा पिबेत्।

**कासश्वासविषच्छर्दिज्वरार्ते कफकर्शिते ।**
**इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥**

कासाद्यार्ते कफार्दिते पुरुषे वमने वमनविषय इक्ष्वाकुः शस्तः। प्रताम्यति मानवे प्रतमकाक्रांतत्वाद्यः प्रताम्यति नरस्तस्मिंश्च शस्तः । फलपुष्पविहीनस्यासंजातफलपुष्पस्येक्ष्वाकोः किसलयैः क्षीरं साधितं पित्तश्लेष्मज्वरे पित्तोद्रिक्ते प्रयोजयेत् ।

**फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।**
**पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८॥**

फलपुष्पविहीनस्येत्यनेन कोमलत्वं प्रतिपादयति इक्ष्वाकोस्तंत्रकृत् । अन्यथा प्रवालैः साधितं क्षीरं पित्तोद्रिक्ते प्रयोजयेदिति ब्रूयात् ।

इक्ष्वाकुफलस्य जरठावस्थस्य प्रयोगमाह ।

**हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।**
**स्यात्तदा कफजे कासश्वासे वम्यं च पाययेत् २९**

हृतमध्ये जीर्णे सुपक्वे तस्मिन् इक्ष्वाकोः फले हृतमध्यभागत्वाच्छून्यमध्ये क्षीरं स्थितं सद्यदा दधि जातं स्यात्तदा कफकासादिषु वमनार्थं पाययेत् ।

**मस्तुना वा फलान्मध्यं पांडुकुष्ठविषार्दितः ।**
**तेन तक्रं विपक्वं वा पिबेत्समधुसैंधवम् ॥ ३० ॥**

इक्ष्वाकुफलमध्यं वा मस्तुना पांड्वाद्यर्दितः पिबेत् । तेनेक्ष्वाकुफलमध्येन तक्रं वा विपक्वं मधुसैंधवयुतं पिबेत् । समधुसैंधवमित्युक्तं स्पष्टार्थम् । वमनविधौ हि समधुसैंधवस्य वमनस्यानुज्ञानात् ।

**भावयित्वाऽजदुग्धेन बीजं तेनैव वा पिबेत् ।**
**विषगुल्मोदरग्रंथिगंडेषु श्लीपदेषु च ॥ ३१ ॥**

अजादुग्धेन तद्बीजं भावयित्वा तेनैव छगलीक्षीरेण पिबेत् । विषगुल्मादिषु ।

**सक्तुभिर्वा पिबेन्मंथं तुंबीस्वरसभावितैः ।**
**कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ३२ ॥**

सक्तुभिर्यवसक्तुभिस्तुंबीस्वरसभावितैर्मंथं वा पिबेत् । कफोद्भवेषु ज्वरादिषु ।

**गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत् ।**
**नरः साधु वमत्येवं नच दौर्बल्यमश्नुते ॥ ३३ ॥**
**तुंब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ।**
**छर्दयेन्माल्यमाघ्राय गंधसंपत्सुखोचितः ॥ ३४ ॥**

कल्कं तुंब्या मांसरसैः पिबेत् । गुल्मे तथा ज्वरे प्रसक्ते दीर्घकालानुबंधिनि । एवं सति पुरुषः साधुकृत्वा वमति । दौर्बल्यं न च प्राप्नोति । तुंब्याः फलरसैः पुष्परसैश्चावचूर्णितं शुष्कैः शोधितैस्तुंबीफलरसैस्तुंबीपुष्पचूर्णमिश्रैरवचूर्णितमाल्यमाघ्राय सुखं वमेत् । गंधसंपद्गंधसंपत्तिमत् ।

**कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते ।**
**कफे च कंठवक्त्रस्थे कफसंचयजेषु च ॥ ३५ ॥**
**धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ।**

कासादिषु तथा कफस्थानस्थे वाते श्लेष्मणि गलस्थे मुखस्थे च तथा कफसंचयजेष्वरोचकादिषु तथा स्थिरेषु दीर्घकालप्ररूढेषु महत्सु चात्यंतं प्रवृद्धेषु रोगेषु धामार्गवः कोशफलाख्य इष्टः ।

**जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥**
**काकोली श्रावणी मेदा महामेदा मधूलिका ।**
**तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः ॥३७॥**
**कासे हृदयदाहे च शस्ता मधुसिताद्रुताः ।**

जीवकर्षभादीनां पृथक् प्रत्येकं तेषां रजोभिश्चूर्णैर्मधुसिताभ्यामत्यंतं द्रुता द्रवीकृताः धामार्गवरजोऽन्वितास्तच्चूर्णमिश्रा लेहाः कासे हृदयदाहे च शस्ताः । मधूलिका मधुयष्टिः ।

**ते सुखांभोनुपानाः स्युः पित्तोष्मसहिते कफे॥३८॥**

त एव पूर्वोक्ता लेहा उष्णोदकानुपाना वमनाय भवेयुः । कफे पित्तोष्मसहिते सति पित्तेन तथा पित्तकार्येणोष्मणा युक्ते ।

**धान्यतुंबरुयूषेण कल्कस्तस्य विषापहः ।**

तस्य धामार्गवस्य कल्को धान्यतुंबरुभ्यां यूषेण क्वाथेनोपयुक्तो विषघ्नः स्यात् ।

**बिंब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥**
**एकं धामार्गवं द्वे वा मानसे मृदितं पिबेत् ।**
**तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः॥४०॥**

बिंब्यादीनामन्यतमस्य रसे क्वाथे धामार्गवफलमेकं मृदितं कृत्वाऽथवा द्वे फले मानसे मनोविकारे वमनं पिबेत् । अथवा तच्छृतक्षीरजं सर्पिर्धामार्गवफलसाधितं क्षीरोद्भवं फलादिभिः साधितं मदनफलजीमूतकेक्ष्वाकुधामार्गवकोशातकीकुटजैः षड्भिः पक्वं मानसे वमनार्थं पिबेत् ।

**क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते ।**
**कुष्ठपांड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥**

क्ष्वेडस्तिक्तकोशातक्यतितीक्ष्णोष्णकटुकत्वात्कुष्ठादिषु प्रगाढेष्वत्यंतचिरकालजत्वाद् दृढेषु प्रगूढेषु प्रशस्यते ।

**पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम् ।**
**कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥४२॥**

पृथक् फलादिषट्कस्य मदनफलेक्ष्वादिकस्य क्वाथे मांसमनूपजं कोशातक्या समं तया तुल्यं सिद्धं पक्वं तद्रसं तस्य मांसस्य रसं लवणान्वितं पिबेत् ।

**फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा ।**
**क्ष्वेडक्वाथे पिबेत्सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥**

फलादिपिप्पल्यो मदनफलजीमूतेक्ष्वाकुफलमध्यबीजानि ता-

भिस्तुल्यमानूपं मांसं समक्ष्वेडरसेन सिद्धं वा पिबेत् । यद्वेक्षुरसेन मिश्रं क्ष्वेडक्वाथे सिद्धमानूपजं मांसरसं सलवणं पिबेत् ।

**कुटजं सुकुमारेषु पित्तरक्तकफोदये ।
ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥**

कुटजं सुकुमारेष्वत्यंतवमनासहिष्णुषु पित्तरक्तकफोदयेऽतिशयेनाधिके तस्मिंस्तथा ज्वरादिषु वमनं श्रेष्ठम् ।

**सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत्कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥
सप्ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत्पृथक् ।
फलजीमूतकेक्ष्वाकुजीवंतीजीवकोदकैः ॥ ४६ ॥**

सर्षपादीनां पृथक् तोयेन क्वाथेन सैंधवस्य च जलेन कुटजबीजं पाययेत् । अथवा कृशरया सह कौटजं पाययेत् । अथवा सप्ताहमर्कदुग्धाक्तं कुटजबीजचूर्णं पृथङ्मदनफलाद्युदकैः पाययेत् ।

**वमनौषधमुख्यानामिति कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥**

वमनौषधमुख्यानां छर्दिषु प्रधानानामौषधानामित्येवंप्रकारेण कल्पस्य दिग्गतिरीरिता कल्पमार्ग उदितः । अनेन बीजेनानया दिशा सुमतिरन्यान्यपि वमनौषधानि कल्पयेदिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने वमनकल्पः प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

वमनादनंतरं विरेचनस्योपयोगः । इति वमनकल्पादनंतरं विरेचनकल्पः प्रक्रम्यत इत्याह ।

**अथाऽतो विरेचनकल्पं व्याख्यास्यामः ।**

कल्पनं कल्पो योजना । विरेचनमधोभागेन दोषनिर्हरणं तस्य कल्पो विरेचनकल्पस्तं व्याख्यास्यामः । शेषं पूर्ववत् । दंतीद्रवंत्यादिभ्यः सर्वेभ्योऽपि विरेचनद्रव्येभ्यो निरपायत्वाद्विरेचनसाध्ये व्याधावनिषिद्धप्रसरत्वात्पूर्वं त्रिवृताया उपन्यासः ।

**कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥**

अनेन चास्याः स्वरूपकथनम् ।

**सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥**

सैवंगुणा त्रिवृदधुना वातपित्तकफापहैरौषधैर्युक्ता कल्पविशेषत्वं प्राप्य विरेचनसाध्यव्याधिविषयसर्वरोगजिज्जायते ।

**द्विधा ख्यातं च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।**

तस्यास्त्रिवृतो मूलं द्विप्रकारम् । एकं श्याममपरं श्यामारुणम् । श्यामं मूलं श्यामा त्रिवृत्श्यामारुणं मूलमिति त्र्याख्यं द्विसंज्ञम् । तयोः श्यामश्यामारुणयोर्यद्वरुणं मूलं तद्वरतरम् । सामर्थ्याद्यं वरं श्यामारुणं यन्मूलं तन्निरपायत्वात्सुकुमारादिषु हितं न श्यामं सापायत्वात् ।

सापायत्वे विशेषेण हेतुमाह ।

**मूर्छासंमोहहृत्कंठकर्षणक्षणनप्रदम् ॥ ४ ॥
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥**

श्यामं मूलं मूर्छादिहृत् कंठकर्षणक्षणनप्रदम् । तत्तीक्ष्णत्वादाशुकारित्वाच्च सापायत्वमस्य तदेवंरूपमपि श्यामं शस्यते क्रूरकोष्ठादिविषये ।

**गंभीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
गृहीत्वा विसृजेत्काष्ठं त्वचं शुष्कां निधापयेत् ॥६॥**

गंभीरानुगतं गूढं कृत्वा भूमावंतःप्रविष्टं तथा श्लक्ष्णमपरुषं तथाऽतिर्यग्यातं स्पष्टं कृत्वा भूमौ गतमेवंविधं त्रिवृताया मूलं गृहीत्वा तत्काष्ठं विसृजेत् । त्वचं शुष्कां कृत्वा स्थापयेत् ।

**अथ काले तु तच्चूर्णं किंचिन्नागरसैंधवम् ।
वातामये पिबेदम्लैः पित्ते साज्यसितामधु ॥ ७ ॥
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कंधवरारसैः ।
कफामये पीलुरसमूत्रमद्याम्लकांजिकैः ॥ ८ ॥
पंचकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।**

अथ काले विरेचनप्रस्तावे ततो मूलत्वचश्चूर्णमीषन्नागरसैंधवमम्लैः कांजिकादिभिर्वातविकारे पिबेत् । पैत्तिकविकारे सहघृतशर्करामधु तच्चूर्णं क्षीरेण द्राक्षादिरसैर्वा पिबेत् । कफविकारे तच्चूर्णं पीलुरसादिभिः पिबेत् । पंचकोलादिभिश्चूर्णैश्च कफघ्नैर्युक्तम् । कथम् । युक्त्या युक्तम् । पंचकोलादिचूर्णानां योगो नातिव्याप्तिर्न वाऽव्याप्तिः पंचकोलादिचूर्णेन त्रिवृताचूर्णस्य सम्यग्योगः स्यादित्यर्थः । आदिशब्देनान्येषां पाचनदीपनानां पंचकोलसदृशानां चित्रकादीनां ग्रहणम् ।

**त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ ९ ॥
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ।**

त्रिवृतः कषायेण कल्केन कषायेण वा साधितः सशर्करो लेहः शीतो मधुत्रिजातसंयुक्तो हृद्यं विरेचनं स्यात् । अत्र च कासचिकित्सितोक्तकंटकारिकालेहवत् प्रमाणं निरूपयितव्यम् ।

**अजगंधा तवक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तंभपिपासादाहपीडितः ॥ ११ ॥**

अजगंधादिचूर्णं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते । सन्निपातज्वरादिपीडितः सन् ।

**लिंपेदंतस्त्रिवृतया द्विधा कृत्वेक्षुगंडिकाः ।**
**एकीकृत्य पचेत्स्विन्नं पुटपाकेन भक्षयेत् ॥ १२ ॥**

इक्षुगंडिकां द्विधा कृत्य पाटयित्वा त्रिवृतयांतर्लिंपेत् । अनंतरमेकीकृत्य पुटपाकेन स्विन्नं भक्षयेत् ।

**त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।**
**चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १३ ॥**
**वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।**
**नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १४ ॥**

त्वगेलाभ्यां तुल्या नीली तैश्च तुल्या त्रिवृत् । सर्वैश्च तुल्या सिता । चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् । वातपित्तकफोत्थेषु रोगेष्वल्पाग्निषु च नरेषु तथा सुकुमारेषु विरेचनमेतन्निरपायम् ।

**विडंगतंडुलवरा यावशूककणा त्रिवृत् ।**
**सर्वेभ्योऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ १५ ॥**
**गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।**
**कफवातकृतांश्चान्यान्परिमार्ष्टि गदान्बहून् ॥ १६ ॥**

विडंगतंडुलादयः समांशाः । सर्वेभ्योऽर्धेन त्रिवृत् । तदेतच्चूर्णं मधुघृताभ्यां लीढं गुडेन वाऽऽस्वादितं गुल्मादीन् कफवातोत्थांश्चान्यानपि गदान् बहून् परिमार्ष्टि पराकरोति ।

**विडंगपिप्पलीमूलत्रिफलाधान्यचित्रकम् ।**
**मरीचेंद्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ १७ ॥**
**दीप्यकं पंचलवणं चूर्णितं कार्षिकं पृथक् ।**
**तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८ ॥**
**धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान् ।**
**पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयंत्रणः ॥ १९ ॥**
**कुष्ठार्शःकामलागुल्ममेहोदरभगंदरान् ।**
**ग्रहणीपांडुरोगांश्च हंति पुंसवनश्च सः ॥ २० ॥**
**गुडः कल्याणको नाम सर्वेष्वृतुषु यौगिकः ।**

विडंगादीनि कार्षिकाणि त्रिवृताचूर्णं तिलतैले पृथगष्टपलप्रमाण आमलकफलरसप्रस्थांस्त्रीन् गुडपलानि पंचाशत् । मृद्वग्निना पक्त्वा तस्मान्मात्रामयंत्रणो यंत्रणारहितः सन्भक्षयेत् । स च भक्षितः कुष्ठादीन्हंति पुंसवनश्च स्यात् । गुडोऽयं कल्याणकसंज्ञः सर्वेष्वृतुषु यौगिको युज्यते ।

**व्योषत्रिजातकांभोदकृमिघ्नामलकैस्त्रिवृत् ॥ २१ ॥**
**सर्वैः समा समसिताः क्षौद्रेण गुटिकाः कृताः ।**
**मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२ ॥**
**तापे पांड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ।**

अविपत्तिरयं योगः प्रयोक्तव्यो व्योषादिभिः समभागैः सर्वैर्द्रव्यैस्त्रिवृत्समा सा च त्रिवृत्तुल्यशर्करा । एवमेताः क्षौद्रेण गुटिकाः कृता मूत्रकृच्छ्रादिषु शस्यंते ।

**त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ॥२३॥**
**क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।**

त्रिवृदादिकं क्षौद्रद्राक्षारससंयुक्तं प्रावृषि सुखं विरेचनम् ।

**त्रिवृद्दुरालभामुस्तशर्करोदीच्यचंदनम् ॥ २४ ॥**
**द्राक्षांबुना सयष्ट्याह्वं सातलं जलदात्यये ।**

त्रिवृद्दुरालभादिकं द्राक्षाजलेन शरदि विरेचनम् ।

**त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ॥२५॥**
**स्वर्णक्षीरीं च हेमंते चूर्णमुष्णांबुना पिबेत् ।**

त्रिवृतादिकं चूर्णमुष्णांबुना सह हेमंते पिबेत् ।

**त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २६॥**

त्रिवृच्छर्करासमा ग्रीष्मर्तौ विरेचनम् ।

**त्रिवृत्त्रायंतिहपुषासातलाकटुरोहिणीः ।**
**स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ॥२७॥**
**एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ।**

त्रिवृदादीनि संचूर्ण्य त्र्यहं गोमूत्रे भावयेत् । एष योगः सर्वर्तुष्वपि स्निग्धानां नराणां मलदोषस्य हारकः स्यात् ।

**श्यामात्रिवृद्दुरालंभाहस्तिपिप्पलिवत्सकम् ॥ २८ ॥**
**नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ।**
**रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा २९॥**

श्यामाद्यं संचूर्णीकृतं मांसरसघृतोष्णांबुभी रूक्षाणामपि सर्वकालं शस्तम् । अपिशब्दात् स्निग्धानां शस्तमेव ।

**ज्वरहृद्रोगवातासृग्गुदावर्तादिरोगिषु ।**
**राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ३० ॥**

ज्वरादिष्वन्येभ्यस्तद्विषयोक्तेभ्यो विरेचनद्रव्येभ्यो राजवृक्षोऽतिशयेन पथ्यः । किंभूतः । मृदुर्मधुरशीतलश्च ।

**बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।**
**योज्यो मृदुरनपायित्वाद्विशेषाच्चतुरंगुलः ॥ ३१ ॥**

बालादौ मृदुत्वादनपायित्वाच्च विशेषेण चतुरंगुलो योज्यः ।

**फलकाले परिणतं फलं तस्य समाहरेत् ।**
**तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ ३२॥**
**सप्तरात्रात्समुद्धृत्य शोषयेच्चातपे ततः ।**
**ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३३ ॥**

तस्य शम्याकस्य फलं काले परिणतं पक्वं फलं समाहरेत् संगृह्णीयात् । तेषां फलानां गुणवतां सुनिष्पन्नानां भारं पलशतं विंशतिर्वालुकासु विनिक्षिपेत् । सप्तरात्रादूर्ध्वं सिकताभ्य उद्धृत्यानंतरमातपे शोषयेत् । ततोऽनंतरं तेभ्यः फलेभ्यो मज्जानमुद्धृत्य गृहीत्वा पात्रे भांडे शुचौ शुद्धे स्थापयेत् ।

**द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ।**
**चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ॥ ३४ ॥**

तं मज्जानं द्राक्षारसेन दद्यात् । दाहाद्यार्ते नरे चतुर्वर्षे बाले सुखेनैतद्विरेचनं यावद्द्वादशवार्षिके बाले सुखं विरेचनमिदम् ।

**चतुरंगुलमज्ज्ञो वा कषायं पाययेद्धिमम् ।**
**दधिमंडसुरामंडधात्रीफलरसैः पृथक् ॥ ३५ ॥**
**सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ।**

अथवा राजवृक्षमज्ज्ञो हिमं शीतकषायं दधिमंडादिभिः पृथग्युक्तमथवा कांजिकेनाथवा कल्केन त्रिवृतासंबंधिना युक्तं पाययेत् ।

**दन्तीकषाये तन्मज्ज्ञो गुडं जीर्णं च निक्षिपेत्॥३६॥**
**तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ।**

दंतीकषाये तन्मज्ज्ञः कर्णिकारस्य मध्यानि गुडं जीर्णं च विनिक्षिपेत् । तं स्थितमरिष्टं मासं पाययेत् । पक्षं वा स्थितम् ।

**त्वचं तिल्वकमूलस्य त्यक्त्वाभ्यंतरवल्कलम् ॥३७॥**
**विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ।**
**रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ३८ ॥**
**कषाये दशमूलस्य तं भागं भावितं पुनः ।**
**शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत्॥३९॥**
**मस्तुमूत्रसुरामंडकोलधात्रीफलांबुभिः ।**

तिल्वकमूलस्य त्वचं त्यक्त्वा मध्यवल्कलं विशोष्य तथा चूर्णयित्वा ततश्चूर्णाद् द्वौ भागौ रोध्रस्यैव कषायेण गालयेत् । ततोऽनंतरमवशिष्टो यस्तृतीयो भागस्ततश्चूर्णात् तं तेन कषायेण वस्त्रगालितेन भावयेत् । अनंतरं वस्त्रगालितकषायेण भावितं पुनः कषाये दशमूलस्य भावितमनंतरं शुष्कचूर्णं ततश्चूर्णात्पाणितलं कर्षं मस्तु गोमूत्रादिकेन पिबेत् । कोलं बदरम् । धात्रीफलमामलकम् । तयोरंबुनी स्वरसौ । तद्भावनौषधप्रमाणं च शिलाजतुनः कल्पवत् कल्पयेत् । शिलाजतुकल्पं च वक्ष्यति । समगिरिजमष्टगुणितं निःक्वाथ्यं भावनौषधमित्यादि । तस्मादत्र तिल्वकत्वचो भाव्यौषधस्य रोध्रश्च भावनौषधं समं देयम् । ततोऽष्टगुणं जलं देयम् । तच्च क्वथनेनाष्टांशशेषं कार्यमिति । एवमन्यत्राऽप्यनिर्दिष्टप्रमाणानां भाव्यद्रव्यभावनाद्रव्याणां तोयावशिष्टानां परिमाणं बोध्यम् ।

**तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ ४० ॥**
**सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।**

रोध्रस्य कषायेण कल्केन च सशर्करो घृतान्वितो लेहः स्यात् । स च लेहः श्रेष्ठं विरेचनम् ।

**सुधा भिनत्ति दोषाणां महांतमपि संचयम् ॥४१॥**
**आश्वेव कष्टविभ्रंशान्नैव तां कल्पयेदतः ।**
**मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४२ ॥**

सुधा गुडा दोषाणां महांतमपि संचयं निहन्ति । एवंगुणामपि तां सुधां भिषग्मृदुकोष्ठादिषु न कल्पयेत् । शीघ्रमेव कष्टविभ्रंशादिति । कल्पयेदित्यतिसर्जने लिङ् ।

तर्हि क्वेयं प्रयोज्येत्याह ।

**कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ।**
**पांडौ दूषीविषे शोफे दोषविभ्रांतचेतसि ॥ ४३ ॥**
**सा श्रेष्ठा कंटकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।**

गुल्मादिषु कल्प्या सा स्नुक् तीक्ष्णैर्बहुभिः कंटकैश्चिता श्रेष्ठा स्यात् ।

**द्विवर्षा वा त्रिवर्षा वा शिशिरांते विशेषतः ॥४४॥**
**तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।**
**बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ॥ ४५ ॥**
**मिश्रयित्वा सुधाक्षीरं ततोऽगारेषु शोषयेत् ।**
**पिबेत्कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ ४६ ॥**

तां सुधां द्विवर्षामथवा त्रिवर्षां विशेषेण शिशिरांते कार्यवशादन्यस्मिन्नपि ऋतौ शस्त्रेण पाटयित्वा ततः सुधातः क्षीरमुद्धारयेत् । द्वे वर्षे प्रमाणमस्या इति ठक् । तस्य रसाल्लुगिति लुक् । ततश्च ठक् । ततोऽनंतरं बिल्वादीनां कंटकारीमहोटिकयोर्वा क्वाथेन एकश एकैनैकेन समं मेलयित्वा सुधाक्षीरमनंतरमंगारेषु तदुभयमपि शोषयेत् । ततो गुलिकां कृत्वा यथायोगं मस्त्वादिभिः पिबेत् ।

**त्रिवृतादीन्नववरां स्वर्णक्षीरीं ससातलाम् ।**
**सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ४७**

त्रिवृतादीन्नवेति। त्रिवृच्छ्यामा राजवृक्षस्तिल्वकश्च तथा सुधा। शंखिनी सप्तला दंती द्रवंतीति । तदेतान् त्रिवृतादींस्तथा त्रिफलां स्वर्णक्षीरीं सातलां च सप्त वासरान् स्नुक्पयःपीतान् स्नुक्क्षीरभावितान् मांसरसेन घृतेन वा पिबेत् ।

**तद्वद्व्योषोत्तमाकुंभनिकुंभादीन् गुडांबुना ।**

तथैव व्योषादीन् गुडांबुना पिबेत् ।

**नातिशुष्कं फलं ग्राह्यं शंखिन्या निस्तुषीकृतम् ४८**
**सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ।**
**श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ ४९ ॥**

शंखिन्याः फलं निस्तुषीकृतं नातिशुष्कं कार्यम् । सप्तलायाश्च मूलं ग्राह्यम् । ते च शंखिनीफलशातलामूले तीक्ष्णविकाषिणी श्लेष्मामयादिषु कल्पयेत् ।

**अक्षमात्रं तयोः पिंडं मदिरालवणान्वितम् ।**
**हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ ५० ॥**

तयोः शंखिनीसप्तलयोः पूर्वोक्तयोः कर्षमात्रं पिंडं सुरालवणयुक्तं वातकफजहृद्रोगादिषु कल्पयेत् ।

**दंतिदंतस्थिरं स्थूलं मूलं दंतीद्रवंतिजम् ।**
**आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि च ५१**
**गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनम् ।**

दंतिनो दंतस्तद्वत्स्थिरं स्थूलं च दंतीद्रवंत्युद्भवं मूलं किंचित्ताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि चेत्यादिना तत्स्वरूपोक्तिः।

**तत्क्षौद्रपिप्पलीलिप्तं स्वेद्यं मृद्दर्भवेष्टितम् ॥ ५२ ॥**
**शोष्यं मंदातपेऽग्न्यर्कौ हतो ह्यस्य विकाशिताम् ।**
**तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ ५३ ॥**
**अभिष्यन्नतनुर्गुल्मी प्रमेही जठरी गरी ।**
**गोमृगाजरसैः पांडुः कृमिकोष्ठी भगंदरी ॥ ५४ ॥**

तच्च क्षौद्रपिप्पलीभ्यां लिप्तं मृद्दर्भवेष्टितं स्वेदितं पश्चान्मंदातपे शोष्यम् । किमेवं क्रियत इत्याह । यस्मादग्न्यर्कावस्य विकाशितां हतः । तच्च मस्त्वादिभिः पिबेत् । अभिष्यन्नदेहादिपांड्वामयी कृमिकोष्ठी भगंदरी च गोमृगाजमांसरसैः पिबेत् ।

**सिद्धं तत्काथकल्काभ्यां दशमूलरसेन च ।**
**विसर्पविद्रध्यलजीकक्षादाहान् जयेद्घृतम् ॥ ५५ ॥**
**तैलं तु गुल्ममेहार्शोविबंधकफमारुतान् ।**
**महास्नेहः शकृच्छुक्रवातसंगानिलव्यथाः ॥ ५६ ॥**

तस्य मूलकस्य क्वाथकल्काभ्यां दशमूलरसेन च सिद्धं घृतं विसर्पादीन् जयेत् । तैलं सुसिद्धं गुल्मादीन् जयेत् । महास्नेहः शकृदादिसंगादीन् जयेत् ।

**विरेचने मुख्यतमा नवैते त्रिवृदादयः ।**

एते त्रिवृदादयो विरेचने नव श्रेष्ठतमाः ।

**हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ५७ ॥**

यथा त्रिवृदादेर्विधानमुक्तं अथ काले च ततश्चूर्णं किंचिन्नागरसैंधवमित्यादि तथैव हरीतक्या अपि विधातव्यमित्यर्थः ।

**गुडस्याष्टपले पथ्या विंशतिः स्यात्पलं पलम् ।**
**दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५८ ॥**
**प्रकल्प्य मोदकानेवं दशमे दशमेऽहनि ।**
**उष्णांभो नु पिबेत्खादेत्तान्सर्वान्विधिनाऽमुना ५९**
**एते निःपरिहाराः स्युः सर्वव्याधिनिवर्हणाः ।**
**विशेषाद्ग्रहणीपांडुकंडूकोठार्शसां हिताः ॥ ६० ॥**

गुडस्याष्टपले हि पथ्याविंशतिर्दंतीचित्रकयोः पलं पलं प्रत्येकं स्यात् । पिप्पलीत्रिवृतयोः कर्षावुभौ । दश मोदकानेवं प्रकल्प्यैकमेकं मोदकं दशमे दशमे दिने योजयेत् । पश्चादुष्णांबु पिबेत् । अमुना विधिना सर्वान्मोदकान् भक्षयेत् । एते मोदका निःपरिहारास्तथाऽशेषव्याधिनिवर्हणाः स्युः । विशेषेण ग्रहण्यादीनां हिताः । संबंधमात्रस्य विवक्षितत्वादत्र षष्ठी । अन्यथा तु हितयोगे चतुर्थी स्यात् ।

**अल्पस्याऽपि महार्थत्वं प्रभूतस्याऽल्पकर्मताम् ।**
**कुर्यात्संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१ ॥**

अल्पस्य वीर्येण मात्रया वा कदाचिदल्पौषधयोगस्य केनचित्तत्तयोग्यौषधसंश्लेषेण तस्य महार्थत्वं कार्यम् । तथा कालेन मध्याह्नादिना तथा संस्कारेण तद्योग्येन गुणांतरोत्पादनेन तथा युक्त्या योजनाप्रकारविशेषेण तथा वीर्येण प्रभूतस्य मात्रयाऽथवा महार्थस्य कदाचित् केनचिद्द्रव्येण विश्लेषं कृत्वा तस्याल्पकर्मत्वं कार्यम् । तथा कालेन प्रत्यूषादिना मंदवीर्येण तथा संस्कारेण गुणांतराधानेन तथा युक्त्या तादृश्याऽल्पशक्तित्वलक्षणं कर्म कार्यम् ।

**त्वक्केसराम्रातकदाडिमैला-**
**सितोपलामाक्षिकमातुलिंगैः ।**
**मद्यैश्च तैस्तैश्च मनोनुकूलै-**
**र्युक्तानि देयानि विरेचनानि ॥ ६२ ॥**

इति त्वक्केसरादिभिस्तैस्तैरन्यैश्च तथाविधैरनुकूलैर्मानसप्रियैरौषधैर्युक्तानि विरेचनानि देयानि । एवं कृते सम्यग्योगो विरेचनस्य स्यादिति । उपजातिर्वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने विरेचनकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथाऽतो वमनविरेचनकल्पाभ्यामनंतरं तद्व्यापत्सिद्धिं ब्रूते ।

**अथाऽतो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः।**

वमनविरेचनयोर्व्यापद्यथाशास्त्रमनुष्ठीयमाना याऽगदोत्पत्तिस्तस्या वमनविरेचनव्यापदः सिद्धिः साधनं चिकित्सितं तां वर्णयिष्यामः ।

**वमनं मृदुकोष्ठेन क्षुद्वताऽल्पकफेन वा ।**
**अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥ १ ॥**
**पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ।**
**वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥**

एवंविधेन पुरुषेणेवंविधं वमनं पीतमधः प्रयाति । तस्मिन्वमनेऽधस्तात्प्रयाते सतीष्टहानिरभिप्रेतस्य वमनकार्यस्यानिष्पत्तिः । तथा मलस्य वमनसाध्यस्य श्लेष्मणः केवलस्यान्यदोषयुक्तस्य वोदयः स्वस्थानस्थस्यैवामयकरणं प्रति चलप्रबलके च तं पुरुषं पीतवमनं पुरुषमथ वांतं पुनः स्निग्धं वामयेत् । पूर्वं स्निग्धमपीति पुनःशब्दस्यार्थः । कथं वामयेत् । स्मरन् पूर्वमतिक्रमं यतोऽतिक्रमात् पीतवमनोऽथाऽसौ पुरुषो वमनकर्मणः फलं नाप्तवान् । तमतिक्रममपराधं स्मरंश्चेतसि कुर्वाणो नत्वेवमेवं वामयेत् ।

**अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।**
**अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ।**

**तत्र पूर्वोदिता व्यापत्सिद्धिश्च न तथाऽपिचेत् ॥३॥**
**आशये तिष्ठति ततस्तृतीयं नावचारयेत् ।**
**अन्यत्र सात्म्याद्धृद्याद्वा भेषजान्निरपायतः ॥ ४ ॥**

अजीर्णिनस्तथा बहुश्लेष्मिणो विरेचनमतितीक्ष्णोष्णलवणमहृद्यमतिप्रभूतं च पीतमूर्ध्वं याति। तत्र तस्मिन्नूर्ध्वं व्रजति पूर्वोक्ता व्यापत्। इष्टहानिर्मलोदय इति। तत्र तथैव सिद्धिश्चिकित्सितम्। तथाऽनंतरं विरेचनस्योर्ध्वं गमनादविरिक्तं पुनः स्निग्धं विरेचयेत्। तथैव पूर्वं विरेचनातिक्रमं स्मरन्नितोऽपराधात्पूर्वं विरेचनेन विरिक्तस्तमतिक्रमं परिहरन् विरेचयेदित्यर्थः। तथा तदप्येवमनुष्ठीयमाने तद्विरेचनौषधं पीतं यद्याशये कोष्ठलक्षणे न तिष्ठति तत्र स्थितिं न बध्नाति। ऊर्ध्वमेव पुनरेति। ततस्तृतीयं विरेचनौषधं मदनारग्वधादिनाऽवचारयेत्। यदि तु सात्म्यं हृद्यं निरपायं च भेषजं तदा तृतीयमप्यवचारयेत्।

**अस्निग्धस्विन्नदेहस्य पुराणं रूक्षमौषधम् ।**
**दोषानुत्क्लेश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥ ५ ॥**
**विभ्रंशं श्वयथुं हिध्मं तमसो दर्शनं तृषम् ।**
**पिंडिकोद्वेष्टनं कंडूमूर्वोः सादं विवर्णताम् ॥ ६ ॥**
**स्निग्धस्विन्नस्य वाल्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ।**
**शीतैर्वा स्तब्धमामे वा समुत्क्लेश्य हरेन्मलान् ॥७॥**
**तानेव जनयेद्रोगानयोगः सर्व एव सः ।**

अस्निग्धस्विन्नशरीरस्य पुराणं रूक्षं विरेचनौषधमुपयुक्तं दोषानुत्क्लेश्य प्रच्याव्य निर्हर्तुमशक्तं विभ्रंशादिकान् गदान् जनयेत्। अथवा स्निग्धस्विन्नस्य चौषधमत्यल्पं मात्राहीनं दीप्ताग्नेर्जीर्णं स्यात्। परिणतं शीतैर्वा स्तब्धभेषजमामे वा स्तब्धः स तदा दोषानुत्क्लेश्य निर्हरेत् पूर्वोक्तानेव रोगान् जनयेत्। स एवंभूतः सर्व एवायोगः।

**तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरशंकरैः ॥ ८ ॥**
**निरूढं जांगलरसैर्भोजयित्वाऽनुवासयेत् ।**
**फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ९ ॥**
**स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।**

तमुत्क्लिष्टदोषं तैललवणाभ्यक्तं प्रस्तरशंकराख्यैः स्वेदैः स्विन्नं तथा निरूढं जांगलरसैर्भोजयित्वा फलादिसिद्धतैलेन मात्रयाऽनुवासयेत्। वातहरैः स्नेहैः स्निग्धं पुनस्तीक्ष्णेन विरेचनेन विशोधयेत्।

**बहुदोषस्य रूक्षस्य मंदाग्नेरल्पमौषधम् ॥ १० ॥**
**सोदावर्तस्य चोत्क्लेश्य दोषान्मार्गं निरुध्य तैः ।**
**भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम् ॥ ११ ॥**
**श्वासं विण्मूत्रवातानां संगं कुर्याच्च दारुणम् ।**
**अभ्यंगस्वेदवर्त्यादिसनिरूहानुवासनम् ॥ १२ ॥**
**उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते ।**

बहुदोषस्य रूक्षस्य तथा मंदाग्नेरल्पमौषधं योजितं तदोदावर्तवतो दोषानुत्क्लेश्य मार्गान् निरुध्य तैश्च दोषैर्भृशं नाभिमाध्मापयेत्। तथा पृष्ठादिरुजादीन् कुर्यात्। आध्मातस्य नरस्याभ्यंगादिकं कर्म ह्युदावर्तहरं सर्वं शस्यते ।

**पंचमूलयवक्षारवचाभूतिकसैंधवैः ॥ १३ ॥**
**यवागूः सुकृता शूलविबंधानाहनाशनी ।**

पंचमूलादिभिः सुकृता यवागूः शूलादिनाशनी।

**पिप्पलीदाडिमक्षारहिंगुशुंठ्यम्लवेतसान् ॥ १४ ॥**
**ससैंधवान्पिबेन्मद्यैः सर्पिषोष्णोदकेन वा ।**
**प्रवाहिकापरिस्रावे वेदनापरिकर्तने ॥ १५ ॥**

पिप्पल्यादीन्मद्येन सर्पिषोष्णांबुना पिबेत् प्रवाहिकादिषु।

**पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।**
**कुपिता हृदयं गत्वा घोरं कुर्वंति हृद्ग्रहम् ॥ १६ ॥**
**हिध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ।**
**जिह्वां खादति निःसंज्ञो दंतान्कटकटाययन् ॥ १७॥**

पीतौषधस्य वेगानां निग्रहाद्वातादयः कुपिता हृदयं गत्वा घोरं हृद्ग्रहं कुर्वंति हिध्मावियुक्तं स च हृद्ग्रहादिमान् जिह्वां खादति निःसंज्ञः सन् तथा दंतान् कटकटायते।

**न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।**
**मधुरैः पित्तमूर्छार्तं कटुभिः कफमूर्छितम् ॥ १८ ॥**
**पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।**
**कायाऽग्निं च बलं चास्य क्रमेणाऽभिप्रवर्तयेत् ॥१९॥**

तत्र तस्मिन्नवस्थाविशेषे भिषगाश्वेव तं रोगिणं संशयं हित्वा वामयेत्। मधुरैः पित्तमूर्छार्तं वामयेत्। कफमूर्छितं कटुभिर्वामयेत्। वामयित्वा चाऽस्य दोषशेषं पाचनीयैर्द्रव्यैर्विपाचयेत्। कायाग्निं बलं च क्रमेणाऽस्याऽभिप्रवर्धयेत्।

**पवनेनाऽतिवमतो हृदयं यस्य पीड्यते ।**
**तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥२०॥**

यस्यातिवमतः पवनेन हृदयं पीड्यते तस्मै रोगिणे स्निग्धाम्ललवणं दद्यात्। पित्तकफे कुपितेऽन्यथा मधुरशीतादिकं दद्यादित्यर्थः।

**पीतौषधस्य वेगानां निग्रहेण कफेन वा ।**
**रुद्धोऽति वा विशुद्धस्य गृह्णात्यंगानि मारुतः ॥ २१ ॥**
**स्तंभवेपथुनिस्तोदसादोद्वेष्टार्तिभेदनैः ।**
**तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ २२ ॥**

पीतभेषजस्य वेगानां निग्रहेण कफेन वा रुद्धोऽतिविशुद्धस्य वा वायुरंगानि गृह्णाति स्तंभादिभिः। तत्र सर्वं वातहरं स्नेहस्वेदादि शस्यते।

**बहुतीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ।**
**हृत्वाऽऽशु विट्पित्तकफान् धातूनास्रावयेद् द्रवान्**

क्षुधार्तस्य मृदुकोष्ठस्य नरस्य बहुतीक्ष्णं च भेषजं विट्पित्त-

कफाच्छीघ्रमेव हत्वा द्रवान्धातूनास्रावयेत्। तस्मिन् विरेचनाऽतियोगे मधुरैर्द्रव्यैः शेषं विरेचनद्रव्यमुद्धरेत्।

**तत्रातियोगे मधुरैः शेषमौषधमुल्लिखेत्।**
**योज्योऽतिवमने रेको विरेके वमनं मृदु ॥ २४ ॥**
**परिषेकावगाहाद्यैः सुशीतैः स्तंभयेच्च तम्।**

अतिवमने सति विरेको योज्यः। अतिविरेके च मृदु वमनं योज्यम्। परिषेकादिभिश्च शीतैस्तं विरेकं स्तंभयेत्। आदिशब्दो जलार्द्रशीतमारुतादिग्रहणाय।

**अंजनं चंदनोशीरमज्जासृक्शर्करोदकम् ॥ २५ ॥**
**लाजचूर्णैः पिबेन्मंथमतियोगहरं परम्।**

अंजनादिकं लाजचूर्णैः सहमंथं परं विरेकातियोगहरं पिबेत्।

**वमनस्याऽतियोगे तु शीतांबुपरिषेचितः ॥ २६ ॥**
**पिबेत्फलरसैर्मंथं सघृतक्षौद्रशर्करम्।**
**सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः॥२७॥**
**समधूकांजनं चूर्णं लेहयेन्मधुसंयुतम्।**

वमनस्य त्वतियोगे शीतांबुपरिषेचितः सन् फलरसैर्मंथं घृतादियुक्तं पिबेत्। अतिशयेन सोद्गारे वमने सति मूर्वादिचूर्णं लेहयेत्।

**वमनेऽतःप्रविष्टायां जिह्वायां कवलग्रहाः ॥ २८ ॥**
**स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः।**
**फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ॥२९**
**निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत्।**

छर्दयतोभ्यंतरे जिह्वायां प्रविष्टायां सत्यां कवलग्रहाश्छागमांसरसाः स्निग्धादियुक्ता मनःप्रिया हिताः। तथा तस्यांतःप्रविष्टजिह्वस्याग्रेऽपरे नरा अम्लानि फलानि खादेयुः। निःसृतां च रसनां तिलद्राक्षाकल्केन लिप्तामंतः प्रवेशयेत्।

**वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ॥ ३० ॥**
**यवागूं तनुकां दद्यात्स्नेहस्वेदौ च कालवित्।**

वाग्ग्रहादिषु वातरोगेषु घृतमांसोपसाधितां स्वच्छां यवागूं दद्यात् स्नेहस्वेदौ च योजयेत्।

**अतियोगाच्च भैषज्यं जीवं हरति शोणितम् ॥ ३१ ॥**
**तज्जीवादानमित्युक्तमादत्ते जीवितं यतः।**
**शुने काकाय वा दद्यात्तेनान्नमसृजासह ॥ ३२ ॥**
**भुक्ते तस्मिन् वदेज्जीवमभुक्ते पित्तमादिशेत्।**
**शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ॥ ३३॥**
**प्रक्षालितं विवर्णं स्यात्पित्ते शुद्धं तु शोणिते।**

अतियोगेन च यद्भेषजं जीवाख्यं शोणितं हरति तद्भेषज्यं जीवादानमिति गदितं यतस्तज्जीवितमादत्ते। पित्तरक्तयोर्गंधवर्णानुवृत्तित्वसामान्यात्किमिदं रक्तमुत पित्तमिति संशयः। तत्परीक्षार्थमाह। तेन विरेचनातियोगोद्भवेन रक्तेन मिश्रितमन्नं शुने वायसाय वा दद्यात्। तस्मिन् रक्तमिश्रितेऽन्ने भुक्ते सति जीवं वदेत्। अभुक्ते च तस्मिन् विरेचनातियोगेरितं पित्तं ब्रूयात्। शुक्लं वस्त्रं तेन विरेचनातियोगोद्भवेन रक्तेन संशयरूपेण भावितमार्द्रीकृतमनंतरमावानं शुष्कं कोष्णवारिणा प्रक्षालितं प्रकर्षेण धौतं पित्ते सति विवर्णं वस्त्रं स्यान्न शुद्धम्। शोणिते तु सति प्रक्षालितं वस्त्रं शुद्धं स्यात्।

**तृष्णामूर्छामदार्तस्य कुर्यादामरणं क्रियाम् ॥ ३४ ॥**
**रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम्।**
**मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ॥ ३५॥**
**पिबेज्जीवाभिसंधानं जीवं तद्ध्याशु गच्छति।**
**तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत् ॥ ३६ ॥**

तृष्णाद्यार्तस्य शोणिते स्रवत्येव रक्तपित्तातिसारघ्नीं प्राणरक्षणीं शीघ्रं क्रियां कुर्यात्। अनेन च मरणतुल्याऽधिरूढत्वं द्योतयति। संशयेऽपि चिकित्सा कार्येति प्रागभ्यधायि। तत्र मृगादीनां जीवतां सद्यस्कं तत्क्षणोत्पन्नं रक्तं पिबेत्। किंभूतम्। जीवाभिसंधानं जीवमभिसंधीयतेऽत्रेति जीवाभिसंधानम्। हि यस्मात्तद्रक्तं कर्तृभूतं जीवं कर्म आशु गच्छति प्राप्नोति। तदेतद्रक्तं दर्भमृदितमभिनवप्रसूतदर्भमृदितं बस्तौ निवेशयेत् प्रक्षिपेत्।

**श्यामाकाश्मर्यमधुकदूर्वोशीरैः शृतं पयः।**
**घृतमंडांजनयुतं वस्तिं वा योजयेद्धिमम् ॥ ३७ ॥**
**पिच्छाबस्तिं सुशीतं वा घृतमंडानुवासनम्।**

श्यामादिभिर्वा शृतं पयो घृतमंडांजनाभ्यां युक्तं बस्तिं हिमं शीतलं योजयेत्। अथवा पिच्छाबस्तिस्वल्पमनुवासनं सुशीतं घृतमंडेन स्वस्थेनार्धभवेन घृतस्योपरिभागस्थितेन देयम्।

अस्यामेवातियोगोद्भवायामवस्थायां गुदभ्रंशः संभाव्यत इत्याह।

**गुदं भ्रष्टं कषायैश्च स्तंभयित्वा प्रवेशयेत्।**

गुदं भ्रष्टं कषायैश्च कषायरसनिष्पादितैः क्वाथैः स्तंभयित्वा प्रवेशयेत्।

**विसंज्ञं श्रावयेत्साम वेणुगीतादिनिस्वनम् ॥ ३८ ॥**

विसंज्ञं संपन्नं सामवेदवेणुगीतादीनां निस्वनं श्रावयेदिति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

अथ दोषहरणसाकल्यं बस्तिकल्पं ब्रूते।

**अथाऽतो दोषहरणसाकल्यं बस्तिकल्पं व्याख्यास्यामः ॥**

बलां गुडूचीं त्रिफलां सरास्नां
द्विपंचमूलं च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात्पचेदप्सु चतुर्थशेषम् ॥ १ ॥
पूतो यवानीफलबिल्वकुष्ट-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥ २ ॥
बस्तिः परं सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृंहणश्च ।
बस्तौ च यस्मिन्पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ३ ॥

बलादीनि प्रत्येकं पलोन्मितानि तथाऽष्टौ मदनफलानि प्रायेण पलं स्युः । छागमांसात्पंचाशत्पलान्यप्सु चतुर्भागावशेषं पचेत् । पूतश्च क्वाथो यवान्यादिभिः कल्कैस्तथा गुडादिभिर्युक्तः सुखोष्णो लवणयुतश्च बस्त्यर्थं परिकल्पितत्वाद्बस्तिः सर्वगदानामुपहंता स्वस्थे च हितः स्वास्थ्यानुवृत्तत्वाज्जीवनो बृंहणश्च । अत्र चतुर्थशेषग्रहणमनर्थकम् । यतो वक्ष्यति । क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषतः । अत्रोच्यते । वक्ष्यमाणपरिभाषाप्रमाणमत्र नाश्रीयत इति प्रतिपादनाय चतुर्थशेषोपादानम् । तेन निरूहयोग्यक्वाथार्थं द्रव्याच्चतुर्गुणं जलं क्षिप्त्वा चतुर्भागावशेषं ग्राह्यमितीहावतिष्ठते । एवमन्यत्र निरूह उपयुज्यते । ये तु तंत्रकाराभिप्रायमविदंतः सरलाँशमुखीकाः सामान्यपरिभाषोक्तप्रमाणं जलं क्षिप्त्वा चतुरंशशेषं ग्राह्यमिति । शेषं स्थितं तथा यवान्यादिकल्कस्य पलद्वयमात्रं ग्राह्यं स्वस्थे कल्कपलद्वयमिति वचनात् स्नेहश्चात्र क्वाथे चतुर्थांशः षष्ठांशोऽष्टमांशः क्रमेण वातपित्तकफेन योज्यः । उक्तं च । ततः क्वाथचतुर्थांशं स्नेहं वाते प्रकल्पयेत् । पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिक इति । मधुलवणे च यथा नात्यच्छता नातिलवणता च बस्तौ स्यात्तथा योजयितव्ये । उक्तं च मधुयद्वाँदि । शेषं च युक्त्यैव । बस्तौ च यत्र कल्को न पठितस्तत्रामुमेव कल्कं दद्यात् । उपजातिर्वृत्तमिंद्रवज्रा च ।

द्विपंचमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य स पूर्वकल्कः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ४ ॥

दशमूलसहितस्य छागमांससहितस्य रसः क्वाथोऽम्लेन कांजिकादिना युक्तः पूर्वैर्यवान्यादिभिर्भक्ष्यैः सहितस्तथा त्रिभिः स्नेहैः सर्पिर्मज्जावसाख्यैरन्वितः श्रेष्ठो निरूहः सर्वव्याधिहरो गदितः ।

बलापटोल्यादे रसात्सुसिद्धाद्बलादिनिरूहमाह ।

बलापटोली लघुपंचमूल-
त्रायन्तिकैरंडयवात्सुसिद्धात् ।
प्रस्थो रसाच्छागरसार्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥ ५ ॥
प्रियंगुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैंधवश्च ।
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥ ६ ॥

बलादेः सुसिद्धाद्यो रसः पृथग्जातस्तस्मात्प्रस्थश्छागमांसरसार्धप्रस्थेन युक्तः पाकेन प्रस्थावशेषः कार्यः । तथा छागमांसरसार्धप्रस्थेन युक्तः पुनः साध्यः । यावदसौ प्रस्थप्रमाणः स्यात् । प्रियंग्वादिभिः कल्कैर्युक्तस्तैलादिसहितो बस्तिर्दीपनो मांसबलप्रदश्च स्यात् । चक्षुर्बलं च शीघ्रमेवोपदधाति ।

एरंडमूलात्त्रिपलं पलाशा-
त्तथा पलांशं लघुपंचमूलम् ।
रास्नाबलाछिन्नरुहाश्वगंधा-
पुनर्नवारग्वधदेवदारु ॥ ७ ॥
फलानि चाऽष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहपुषाप्रियंगु-
यष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
दद्यात्सुपिष्टं सहताक्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥
जंघोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबंधम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान्कफवातजातान् ॥ १० ॥

एरंडमूलस्य त्रीणि पलानि पलाशात्किंशुकाच्च पलानि त्रीणि ह्रस्वं पंचमूलं पालिकं रास्नादि प्रत्येकं पलिकान्यष्टौ मदनफलानि च जलाढकद्वये विपाचयेत् । अष्टांशशेषिते चास्मिन्वचादिकमक्षप्रमाणं सुपिष्टं दद्यात् । लवणकर्षचतुर्थांशयुक्तं माक्षिकतैलमूत्रान्वितो यः स लेखनो दीपनो जंघोरुमूलादींस्तांस्तान्बहुविधानपि वातश्लेष्मोत्थान् रोगान्जयति । षडुपजातय इंद्रवज्रादयश्च ।

यष्ट्याह्वरोध्राभयचंदनैश्च
शृतं पयोग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान्हंति सजीवनीयम् ॥ ११ ॥

यष्ट्याह्वादिभिः शृतं पयोग्र्यं श्रेष्ठं स्यात् । शर्कराक्षौद्रघृतयुक्तं सुशीतलं जीवनीयसहितं पित्तामयान् हंति । अभयमुशीरम् ।

रास्नां वृषं लोहितिकामनंतां
बलां कनीयस्तृणपंचमूल्यौ ।

गोषांगनाचंदनपद्मकर्धी-
यष्ट्याह्वरोध्राणि पलार्धकानि ॥ १२ ॥
निःक्वाथ्य तोयेन रसेन तेन
शृतं पयोर्धाढकमंबुहीनम् ।
जीवंतिमेदर्धिवरीविदारी
वीराद्विकाकोलिकसेरुकाभिः ॥ १३ ॥
सितोपलाजीवकपद्मरेणु-
प्रपौंडरीकोत्पलपुंडरीकैः ।
लोहात्मगुप्तामधुयष्टिकाभि-
र्नागाह्वमुंजातकचंदनैश्च ॥ १४ ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
ससैंधवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्
क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥ १५ ॥
दाहातिसारप्रदरास्रपित्त-
हृत्पांडुरोगान्विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन्
सर्वामयान् पित्तकृतान्निहंति ॥ १६ ॥

रास्नादीन्यर्धपलप्रमाणानि तोयेन निःक्वाथ्य तेन रसेन पयः शृतमर्धाढकमात्रजलहीनं जीवंत्यादिभिः सुपिष्टैर्घृतक्षौद्रयुतैर्निरूहं सैंधवान्वितं शीतलमेव दद्यात् । तस्मिन्निरूहे प्रत्यागते निर्गते परिषिक्तं गोधन्वमांसरसेन शालीनद्यात् । सात्म्यादिवशाद्वा क्षीरेणाद्यात् । तस्मिन्निरूहे प्रत्यागते परिषिक्तांगः स च दाहादीन् हंति । पंचोपजातय इंद्रवज्रा च ।

कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान्बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥
तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य ससर्पिषश्च ॥ १८ ॥
दद्यान्निरूहं कफरोगिताय
मंदाग्नये चाशनविद्विषे च ।

कोशातकादीन् जले पक्त्वा तस्य रसक्वाथस्य दशप्रसृताः स्युस्तान्सर्षपादिभिरक्षप्रमाणैर्युक्तान् क्षौद्रादीनां प्रत्येकं प्रसृतेन युक्तान् फलाह्वयं तैलं यन्मदनफलकल्केनाम्लैश्च पक्वं तैलं तदेतत्संयोज्य कफरोगार्तादिभ्यो निरूहं दद्यात् । अत्र कोशातकादीनां द्रव्याणां परिमाणमनुक्तमपि सामान्यपरिभाषया तत्परिमाणं कल्पनीयम् । यत्परिमाणेभ्यो द्रव्येभ्यो षोडशगुणं जलं दत्वा चतुर्भागावशेषं यथा दश प्रसृताः संपद्यंते तत्परिमाणानि कोशातक्यादीन्यत्र परिकल्पनीयानीति बोध्यम् ।

वक्ष्ये मृदून्स्नेहकृतो निरूहान्
सुखोचितानां प्रसृतैः पृथक् स्युः ॥ १९ ॥
अथेमान्सुकुमाराणां निरूहान् स्नेहनान्मृदून् ।
कर्मणा विप्लुतानां तु वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥

तुशब्दो भिन्नक्रमः । सुखोचितानां पुनः सुकुमाराणां तु निरूहान्पृथक् प्रसृतीर्वीक्ष्य भणिष्यामि । किंभूतान्मृदूनतीक्ष्णांस्तथा स्नेहकृतः कृतस्नेहान् । केचित्त्वसमग्रं वृत्तं चोक्तमनुष्टुभा संगृह्णते तच्चासम्यक् । एवंहि वृत्तस्य षंढता न स्यात् तस्मादयमेव पाठः श्रेयान् । प्रसृतैश्च निष्पादितत्वादेते बस्तयः प्रसृतैरुपलक्षिताः कार्याः । अथानंतरमिमान्निरूहान् स्नेहनसमर्थान् मृदूनतीक्ष्णान् सुकुमाराणां नराणां कर्मणा वमनादिना विप्लुतानां भ्रष्टानां प्रसृतैः पृथगुपलक्षितान् वक्ष्यामि ।

क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ २१ ॥

क्षीराद् द्वौ प्रसृतौ चत्वारि पलानि मधुतैलघृतात् त्रयः प्रसृताः षट् पलानि खजेन दर्व्याकारेण मथितो बस्तिर्वातं निहंति बलं वर्णं च करोति ॥

एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्वाथाद् द्वौ कौलत्थाद् द्वौ स वातजित् ॥ २२ ॥

तैलादीनां प्रत्येकं प्रसृत एको बिल्वादिपंचमूलक्वाथाद् द्वौ प्रसृतौ कौलत्थात्क्वाथात् द्वौ प्रसृतौ स बस्तिर्वातजित् ।

पटोलनिंबभूतीकरास्नासप्तच्छदांभसः ।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ २३ ॥
सपंचतिक्तोभिष्यंदकृमिकुष्ठप्रमेहहा ।

पटोलादीनां पंचानां क्वाथान् पृथक् प्रसृतो घृताच्च प्रसृतो बस्तिः ससर्षपकल्कः सपंचतिक्त अभिष्यंदादिहा ।

चत्वारस्तैलगोमूत्रदधिमंडाम्लकांजिकात् ॥ २४ ॥
प्रसृताः सर्षपैः पिष्टैर्विट्संगानाहभेदनः ।

तैलादिभ्यश्चतुर्भ्यश्चत्वारः प्रसृता अष्टौ पलानि पिष्टैः सर्षपैः सह बस्तिर्विट्संगादिजित् ।

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥
एकैकप्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ।

पयस्यादिक्वाथानां पंचानां प्रसृताः पंचमाक्षिकघृतयोर्द्वौ प्रसृतौ । द्वाविति सप्त प्रसृताः पिप्पलीकल्कवान् बस्तिर्वृषत्वकृच्छुक्रकरः ।

सिद्धबस्तीनतो वक्ष्ये सर्वदा यान्प्रयोजयेत् ॥ २६ ॥
निर्व्यापदो बहुफलान्बलपुष्टिकरान् सुखान् ।

अतः प्रसृतेभ्यो निरूहेभ्योऽनंतरं निर्व्यापत्त्वादिगुणतः संज्ञया

सिद्धबस्तीनतिप्रसिद्धान् वक्ष्ये भणिष्यामि यान्सर्वदा प्रयोजयेत्। तथा निर्व्यापदो बहुफलान्बलादिप्रदांश्च सुखांश्च। सुश्रुते चोक्तम्। यस्मिन्युक्ते तथा बस्तौ ध्रुवा सिद्धिः प्रकीर्तिता। सिद्धबस्तिरिति ख्यातो मुनिभिस्तत्त्वदर्शिभिः।

**मधुतैले समे कर्षः सैंधवाद् द्विपिचुर्मिसिः ॥२७॥**
**एरंडमूलक्राथेन निरूहो मधुतैलिकः।**
**रसायनं प्रमेहार्शःक्रमिगुल्मांत्रवृद्धिनुत् ॥ २८ ॥**

मधुतैले समे तुल्ये सैंधवस्य कर्षो मिसिः द्विपिचुर्द्विकर्षप्रमाण एरंडमूलक्राथेन सह मधुतैलिकोयं निरूहो रसायनं स्यात् प्रमेहादिजित्। यस्मान्मधुतैलं प्राधान्येनातिवर्तते मधुतैलिक इत्येष विज्ञेयो बस्तिचिंतकैरिति सुश्रुतः।

**सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित्।**

मधुयष्टियुक्तश्चैष बस्तिश्चक्षुष्यो रक्तपित्तजित्।

**यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥**
**पायुजंघोरुवृषणबस्तिमेहनशूलजित्।**

यापनाख्यो बस्तिर्मुस्तकल्केन सह मधुतैलमांसरसाज्ययुतः पाय्वादिशूलजित्। यापनः प्राणधारणात्।

**प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥**

यापनं निरूहं घृतादिभिः प्रसृतप्रमाणैः सैंधवार्धकर्षेण हपुषार्धपलयुतं कल्पयेत्।

**एरंडमूलनिःक्राथो मधुतैलः ससैंधवः।**
**एष युक्तरथो बस्तिः सवचापिप्पलीफलः ॥ ३१ ॥**

एरंडमूलनिःक्राथो मधुतैलसैंधवान्वित इत्येष वचापिप्पलीमदनफलान्वितो युक्तरथोन्वर्थनामा बस्तिः। सुश्रुते चोक्तम्। रथेष्वपि हि युक्तेषु हस्त्यश्वेष्वपि योजयेत्। तस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृत इति।

**स क्राथो मधुषड्ग्रंथाशताह्वाहिंगुसैंधवः।**
**सुरदारुवचारास्नाबस्तिर्दोषहरः परः ॥ ३२ ॥**

स पूर्वोक्त एरंडमूलक्राथो मध्वादिभिः सह एष बस्तिर्दोषहृच्छिवश्च।

**पंचमूलस्य निःक्राथस्तैलं मागधिका मधु।**
**ससैंधवः समधुकः सिद्धबस्तिरिति स्मृतः ॥३३॥**

पंचमूलक्राथस्तिलतैलादिकः सैंधवमधूकसहितः सिद्धबस्तिसंज्ञो मुनिभिः स्मृतः।

**द्विपंचमूलत्रिफलाफलबिल्वानि पाचयेत्।**
**गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ॥ ३४ ॥**
**सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च।**
**युक्तो बस्तिः कफव्याधिपांडुरोगविसूचिषु ॥ ३५ ॥**
**शुक्रानिलविबंधेषु बस्त्याटोपे च पूजितः।**

द्विपंचमूलादीनि गोमूत्रेण पाचयेत्। तेन क्वथितगोमूत्रेण पिष्टैश्च पाठादिभिर्युक्तः कफामयादिहृत्।

**मुस्तापाठामृतैरंडबलारास्नापुनर्नवा ॥ ३६ ॥**
**मंजिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः।**
**कनीयः पंचमूलं च पालिकं मदनाष्टकम् ॥ ३७ ॥**
**जलाढके पचेत्तच्च पादशेषं परिस्रुतम्।**
**क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ ३८ ॥**
**सपादजांगलरसः ससर्पिर्मधुसैंधवः।**
**पिष्टैर्यष्टिमिसिश्यामाकलिंगकरसांजनैः ॥ ३९ ॥**
**बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः।**
**वातासृङ्मोहमेहार्शो गुल्मविण्मूत्रसंग्रहम् ॥४०॥**
**विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः।**
**वंक्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ ४१ ॥**
**हन्यादसृग्दरोन्मादशोफकासाश्मकुंडलान्।**
**चक्षुष्यः पुत्रदो राज्ञां यापनानां रसायनम् ॥ ४२ ॥**

मुस्तादीनि कनीयःपंचमूलपर्यंतानि पृथक् पलिकानि मदनफलान्यष्टौ जलाढके पचेत्। तच्च पादशेषं परिस्रुतं क्षीरशेषं पुनः पचेदिति। तावत्कषायेण सह पक्तव्यं यावत्क्षीरप्रस्थद्वयं स्यादित्यर्थः। बस्तिः सर्पिर्मधुसैंधवयुतः पिष्टैर्यष्ट्यादिभिः सहितः सुखोष्णो मांसादिवर्धनो वातरक्तादीन् हन्यात्। चक्षुष्यादिगुणश्च। किंभूतः सपादजांगलरसस्तत्र चतुर्विंशतिपलिको निरूहस्तस्य पादेन षट्पलानि जांगलरसस्य स्युरित्यर्थः।

**मृगाणां लघुबभ्रूणां दशमूलस्य चांभसा।**
**हपुषामिसिगांगेयीकल्कैर्वातहरः परम् ॥ ४३ ॥**
**निरूहोत्यर्थवृष्यश्च महास्नेहसमन्वितः।**

ह्रस्वानां बृहतामुभयरूपाणां मृगाणां मांसानां तथा दशमूलस्य च क्राथेन सह हपुषादिकल्को बस्तिः सुष्ठु वातहरो महास्नेहयुतो वृष्यश्च स्यात्।

**मयूरं पक्षपित्तांत्रपादविट्तुंडवर्जितम् ॥ ४४ ॥**
**लघुना पंचमूलेन पालिकेन समन्वितम्।**
**पक्त्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ॥ ४५ ॥**
**तद्विदारीकणायष्टीशताह्वाफलकल्कवत्।**
**बस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ॥ ४६ ॥**

मयूरं पक्षादिवर्जितं दशपलमात्रं ह्रस्वेन पंचमूलेन पलमितेन युतं क्षीरं जले पक्त्वा क्षीरस्य द्व्याढिको जलस्य द्व्याढिक इत्येवं कृत्वा तावत्काथयेत्। यावत्क्षीरावशेषं स्यात्। क्षीरं च तच्छेषं च क्षीरशेषं। घृतमाक्षिकसहितं विदार्यादिकल्कान्वितमीषल्लवणयुक्तं बस्तिः परमशुक्रकृत्।

**कल्पनेयं पृथक् कार्या तित्तिरिप्रभृतिष्वपि।**
**विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ॥ ४७ ॥**
**जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता।**

इयं च कल्पना तित्तिर्यादिष्वपि विष्किरेष्वशेषेषु प्रतुदेषु प्रसहेषु च पृथक्कार्या । तथैव जलचरेष्वपीयं कल्पना कार्या । मत्स्येषु तु क्षीरवर्जिता कल्पनेयं कार्या । मत्स्यानां क्षीरेण सह विरुद्धत्वात् ।

**गोधानकुलमार्जारशल्यकोंदुरजं पलम् ॥ ४८ ॥**
**पृथक् दशपलं क्षीरे पंचमूलं च साधयेत् ।**
**तत्पयः फलवैदेहीकल्कद्विलवणान्वितम् ॥ ४९ ॥**
**ससितातैलमध्वाज्यो बस्तिर्योज्यो रसायनम् ।**
**व्यायाममथितोरस्कक्षीणेंद्रियबलौजसाम् ॥ ५० ॥**
**विबद्धशुक्रविण्मूत्रखुडवातविकारिणाम् ।**
**गजवाजिरथक्षोभभग्नजर्जरितात्मनाम् ॥ ५१ ॥**
**पुनर्नवत्वं कुरुते वाजीकरणसत्तमः ।**

गोधादीनां मांसं पृथक् प्रत्येकं दशपलं क्षीरे पंचमूलं साधयेत् । एतत्क्षीरं मदनफलकणाकल्कसैंधवसौवर्चलान्वितं बस्तिः शर्करातैलमधुघृतसहितो योज्यो रसायनं स्यात् । व्यायाममथितोरस्कादीनां पुनर्नवं कुरुते वाजीकरणेषु मुख्यश्च ।

**सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ ५२ ॥**

आत्मगुप्तादिभिः सिद्धेन पयसा सह भोज्यम् । उच्चटा गुंजा ।

**स्नेहांश्च यंत्रणान् सिद्धान्सिद्धद्रव्यैः प्रकल्पयेत् ।**

स्नेहांश्च स्नेहबस्तीनयंत्रणान्निःपरिहारान् सिद्धान् बहुशो दृष्टप्रत्ययान् सिद्धद्रव्यैर्निरपायैः प्रकल्पयेत् ।

**दोषघ्नाः सपरीहारा वक्ष्यंते स्नेहबस्तयः ॥ ५३ ॥**
**दशमूलं बलां रास्नामश्वगंधां पुनर्नवाम् ।**
**गुडूच्यैरंडभूतीकभार्गी वृषकरोहिषम् ॥ ५४ ॥**
**शतावरीं सहचरं काकनासां पलांशकम् ।**
**यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥५५ ॥**
**वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ।**
**पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ५६ ॥**
**अनुवासनमित्येतत्सर्ववातविकारनुत् ।**

अधुना दोषघ्नाः सपरीहाराः स्नेहबस्तयो वक्ष्यंते । तानेवाह । दशमूलादिकं पलप्रमाणं काकनासाकाकजंघायवादीनि प्रसृतप्रमाणानि जलस्य वहे द्रोणचतुष्टये विपाच्य तेन द्रोणशेषेण च तैलाढकं पलांशके जीवनीयैः पुष्पैः सह पचेत् । तदनुवासनमपि पवनविकारजित् ।

**अनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ५७ ॥**

अनूपप्राणिनां वसा जीवनीयद्रव्यसाधिता तद्वत्पूर्वगुणा ।

**शताह्वाचिरिबिल्वाम्लैस्तैलं सिद्धं समीरणे ।**

शताह्वादिभिस्तैलं पक्कं पवने योज्यम् ।

**सैंधवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ॥ ५८ ॥**

अग्निवर्णेन सैंधवेन तप्तं च घृतं समीरणजित् ।

**जीवंतीं मदनं मेदां श्रावणीं मधुकं बलाम् ।**
**शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥५९॥**
**स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम् ।**
**पिष्ट्वा तैलघृतक्षीरे साधयेत्तच्चतुर्गुणे ॥ ६० ॥**
**बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।**
**रजःशुक्रामयहरं पुत्रीयमनुवासनम् ॥ ६१ ॥**

जीवंत्यादीन् कल्कीकृत्य तैलघृतं यवकं क्षीरे चतुर्गुणे साधयेत् । एतदनुवासनं बृंहणं वातपित्तघ्नं बलादिवर्धनं रजःशुक्ररोगहरं पुत्रीयं च । पुत्रीयमिति हितार्थे पुत्राच्छ चेति छः ।

**सैंधवं मदनं कुष्टं शताह्वा निचुलो वचा ।**
**ह्रीवेरं मधुकं भार्गी देवदारुसकट्फलम् ॥ ६२ ॥**
**नागरं पुष्करं मेदा चविका चित्रकः शठी ।**
**विडंगातिविषा श्यामा हरेणुर्नीलिनी स्थिरा॥६३॥**
**बिल्वाजमोदचपला दंती रास्ना च तैः समैः ।**
**साध्यमेरंडतैलं वा तैलं वा कफरोगनुत् ॥ ६४ ॥**
**वध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।**
**आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ६५ ॥**

सैंधवादिभिः समांशैः सामान्यपरिभाषया एरंडतैलं तिलतैलं वा साध्यम् । द्विर्ग्रहणादेरंडतैलस्यार्धं तिलतैलस्यार्धमित्यपि कल्पनीयमित्याहुः । एतदनुवासनं कफरोगजिच्छीघ्रं वध्मोदीन्हन्यात् ।

**साधितं पंचमूलेन तैलं बिल्वादिनाऽथवा ।**
**कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ॥६६॥**
**फलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं कफे ।**

पंचमूलेन बिल्वादिना वा साधितं तैलं कफघ्नं तैलं कल्पयेत् । अथवा कफघ्नैर्द्रव्यैः फलैश्चाष्टगुणैरम्लैः सिद्धमनुवासनं कफे शस्तम् ।

**मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ६७**
**तीक्ष्णैर्विकर्षितः स्निग्धो मधुरः शिशिरो मृदुः ।**

मृदुश्चासौ बस्तिश्च मृदुबस्तिर्मधुरस्निग्धशीतलात्मकत्वान्मृदुर्मृदुबस्तिश्चासौ जडीभूतश्च मृदुबस्तिजडीभूतः कोष्ठाद्बहिर्निःसरणात्कोष्ठ एवावस्थितिं कृत्वा स्थितस्तस्मिंस्तथाभूतेऽन्यो बस्तिस्तीक्ष्णः शस्यते । तीक्ष्णैर्मूत्रादिनिष्पादितैर्बस्तिभिर्विकर्षिते कोष्ठे सति स्निग्धादिगुणो बस्तिरिष्यते ।

**तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।**
**प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥६८॥**

तीक्ष्णत्वं बस्तेर्मूत्रपील्वग्निलवणक्षारसर्षपैः प्राप्तकालं योग्यावसरे विधातव्यं क्षीरघृताद्यैश्च बस्तेर्मार्दवं प्राप्तकालं कर्तव्यम् ।

**बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्तयति ।**

बलादीन् प्रविभज्य स्वैः स्वैरौषधवर्गैर्यथायथं योग्यैः सिद्धो बस्तिर्योजितः स्वान्स्वानामयानुपशमयति ।

**उष्णार्तानां शीतांश्छीतार्तानां तथा सुखोष्णांश्च ।**
**तद्योग्यौषधयुक्तान्वस्तीन्संतर्क्य युंजीत ॥ ७० ॥**

स्पष्टम् ।

**वस्तींन्न बृंहणीयान् दद्याद्याधिषु विशोधनीयेषु ।**
**मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥७१**
**न क्षीणक्षतदुर्बलमूर्छितकृशशुष्कशुद्धदेहानाम् ।**
**दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥७२॥**

यस्मादेते दोषैर्निबद्धजीवितास्तस्मादेतेषां दोषनिर्हरणात् प्राणसंशयः स्यादित्याह । जीवितरक्षार्थमेते न विशोध्या इति । आर्याश्चतस्रः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने बस्तिकल्पश्चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अस्मादनंतरं बस्तिव्यापत्सिद्धिर्व्याख्यायते ।

**अथाऽतो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः ॥**

अथाऽत इति पूर्ववत् । असम्यक् प्रयुक्तेषु बस्तिषु या व्यापदस्तासां साधनायास्याध्यायस्यारंभः ।

**अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।**
**शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥१॥**
**वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।**
**करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥**
**नाभिवस्तिरुजादाहो हृल्लेपः श्वयथुर्गुदे ।**
**कंडूर्गंडानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥**

अस्निग्धादिगुणस्य पुंसः शिशिरस्तथाल्पस्नेहलवणोऽल्पद्रव्यमात्रोल्पद्रव्यकल्पस्तथा घनो बहुद्रव्यकल्पो बस्तिर्योजितः सन् बस्तिसाध्यं दोषं संक्षोभ्य दुर्बलत्वादनिर्हरन्नयोगं करोति तेन योगेन वातादिग्रहः स्यात् ।

**क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।**
**उष्णस्य तस्माद्धेकस्य तत्र पानं प्रशस्यते ॥ ४ ॥**
**फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।**
**विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥**
**सुरादिमांस्तत्र वस्तिः स प्राक्पेष्यस्तमानयेत् ।**

प्रागतीसारचिकित्सिते क्वाथद्वयं पाचने युगुलं द्वयं दोषेऽतिसारिणि विहितं भूतीकपिप्पल्यादिरेको बिल्वधनिको द्वितीयस्तस्मात्क्वाथद्वयादेकस्यान्यतमस्य क्वाथस्योष्णस्य तत्रावस्थायां पानं प्रशस्यते । तथा फलवर्तयः स्वेदाश्च नानाविधा अवस्थाश्च ज्ञात्वा विरेचनं शस्यते । बिल्वादिमान्बस्तिस्तथा सुरादिमान् बस्तिः स प्राक् पेष्यः । बलां गुडूचीमित्यादौ बस्तौ यः पेष्यो यवान्यादिकस्तेन प्राक्पेष्येण सह वर्तते स प्राक्पेष्यस्तमत्र दत्तबस्तिनोत्क्लिष्टं दोषमानयेदाकर्षयेत् ।

**युक्तोल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा ॥ ६ ॥**
**वस्तिर्दोषावृतो रुद्धमार्गो रुंध्यात्समीरणम् ।**
**सविमार्गोनिलः कुर्यादाध्मानं मर्मपीडनम् ॥ ७ ॥**
**विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनाम् ।**
**रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥**

दोषाढ्ये तथा रूक्षे क्रूरकोष्ठे वा बस्तिरल्पवीर्यो दत्तो दोषैर्वाय्वाद्यैरावरकैरावृतोऽनंतरं स बस्ती रुद्धमार्गः प्रतिहतगतिप्रसरणो वायुं रुंध्यात् । सोनिलो विमार्गग आध्मानं कुर्यात् । तथा हृदयादीनां मर्माणां व्यधनं पीडनं तथा गुदकोष्ठस्य विदाहं तथा मुष्कवंक्षणवेदनां च कुर्यात् । तथा शूलैर्नानाविधाभिर्भिन्नरुद्धमृदितपीडितावनद्धादिभिः पीडाभिर्हृदयं रुणद्धि आवृणोति । हृदयमावृत्यानंतरमितश्चेतश्चाऽनियते देशे धावति पवनः ।

**स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ।**
**बिल्वादिश्च निरूहः स्यात्पीलुसर्षपमूत्रवान् ॥ ९ ॥**
**सरलामरदारुभ्यां साधितं वाऽनुवासनम् ।**

तत्राऽवस्थाविशेषे सुष्ठ्वभ्यक्तांगस्य स्विन्नांगस्य फलवर्तिं प्रयोजयेत् । बिल्वादिकश्च निरूहः स्यात् पीलुसर्षपमूत्रवान् । सरलदेवदारुभ्यां साधितं तैलं वाऽनुवासनं स्यात् ।

**कुर्वतो वेगसंरोधं पीडितो वाऽतिमात्रया ॥ १० ॥**
**अस्निग्धलवणोष्णो वा बस्तिरल्पोल्पभेषजः ।**
**मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥११॥**
**निरेति मूर्छाहृल्लासतृड्दाहादीन्प्रवर्तयन् ।**

वेगसंरोधं वेगविधारणं कुर्वतः पुंसो यः पीडितो बस्तिरतिमात्रया वा पीडितोऽस्निग्धलवणोष्णो वा तथाल्पो मात्रयाल्पभेषजश्च मृदुर्वा स तथाभूतो मारुतेनोर्ध्वं क्षिप्तो मुखनासिकांते निरेति निर्गच्छति मूर्छादीन् प्रवर्तयेत् ।

**मूर्छाविकारं दृष्ट्वास्य सिंचेच्छीतांबुना मुखम् ॥१२॥**
**व्यजेदाक्लमनाशाच्च प्राणायामं च कारयेत् ।**
**पृष्ठपार्श्वोदरं मृज्यात्करैरुष्णैरधोमुखम् ॥ १३ ॥**
**केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ।**
**शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ १४ ॥**

**पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ।**
**प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥**
**अपानः पवनो बस्तिं तमाश्वेवापकर्षति ।**
**कुष्टक्रमुककल्कं च पाययेताम्लसंयुतम् ॥ १६ ॥**
**औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत्**
**गोमूत्रेण त्रिवृत्पथ्याकल्कं चाधोनुलोमनम् ॥ १७ ॥**
**पक्काशयस्थिते स्विन्ने निरूहो दशमूलिकः ।**
**यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ १८ ॥**
**बस्तिर्गोमूत्रसिद्धैर्वा साम्रृतावंशपल्लवैः ।**
**पूतीकरंजत्वक्पत्रशठीदेवाह्वरोहिषैः ॥ १९ ॥**
**सतैलगुडसिंधूत्थो विरेकौषधकल्कवान् ।**
**बिल्वादिपंचमूलेन सिद्धो बस्तिरुरःस्थिते ॥ २० ॥**
**शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ।**

अस्य तु तथाविधो बस्तिः पुरुषस्य मूर्छादिविकारं दृष्ट्वा शीतांबुना मुखं सिंचेत्तथा क्रमनाशं यावत्तं तालवृंतादिना वीजयेत् । तथा तं पुरुषं प्राणायामं च कारयेत् । प्राणायामेन ह्यूर्ध्वं विक्षिप्तो बस्तिरधो याति । उष्णैः करैः पृष्ठं पार्श्वमुदरं च मृज्यात्तथा तं पुरुषमधोमुखं कृत्वा केशैरुत्क्षिप्योर्ध्वं नीत्वा वपुर्धुन्वीत । तथा व्यालादिभिर्भीषयेत् । तथोर्ध्वं प्रवृत्तो बस्तिर्यस्मादधो गच्छति तथा पाणिभिर्वस्त्रैर्गलापीडं कुर्याद्यथा न म्रियेत । एवं सति प्राणोदाननिरोधः संपद्यते । प्राणोदाननिरोधेष्वस्मादधोगः सुप्रसिद्धतरायनो भूत्वाऽपानो वायुस्तं बस्तिं द्रागेवापकर्षत्यूर्ध्वादधः क्षिपेदिति सुष्टु प्रकर्षेण शुद्धतरमयनं यस्य स शुद्धतरायनः कुष्टादिकल्कं वाऽम्लसंयुतं पाययेत् । कल्कोस्यातुरस्योष्णादिगुणयोगात्तं बस्तिमनुलोमयेत् । त्रिवृतादिकल्कं पीतं गोमूत्रेणाधोनुलोमनं पक्काशयस्थिते दोषे स्निग्धैर्निरूहैर्दशमूलिको विधातव्यः । यवादिभिश्च गोमूत्रसाधितैर्वस्तिर्विधेयः । अथवा गोमूत्रसिद्धैर्गुडूच्यादिभिस्तैलगुडसैंधवयुक्तो बस्तिर्विरेकद्रव्यकल्कवान्विधेयः ।

**बस्तिरत्युष्णतीक्ष्णाम्लघनोतिस्वेदितस्य वा ॥ २१ ॥**
**अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ।**
**अतियोगत्वमापन्नो भवेत्कुक्षिरुजाकरः ॥ २२ ॥**
**विरेचनातियोगेन स तुल्याकृतिसाधनः ।**

अत्युष्णतीक्ष्णाम्लघनो बस्तिः प्रयुक्तोऽतिस्वेदितस्य वा पुंसोऽल्पे दोषे तथा मृदौ कोष्ठे मुहुर्मुहुः प्रयुक्तत्वादतियोगत्वं प्राप्तोयं कुक्षिरुग्जनकः स्यात् । स तथाविधो बस्तिर्विरेचनातियोगेन तुल्ये सदृशे लक्षणचिकित्सिते यस्य स एवं स्यात् ।

**बस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा २३**
**गुदं दहन् लिखन् क्षिण्वन्करोत्यस्य परिस्रवम् ।**
**सविदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥२४॥**
**बहुशश्चातिवेगेन मोहं गच्छति सोऽसकृत् ।**
**रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥**
**दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत् ।**
**तद्धि पित्तशकृद्वातान्हृत्वा दाहादिकान्जयेत् ॥२६॥**
**विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।**
**युंज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम् २७**
**माषयूषेण कुल्माषान्पानं दध्यथवा सुराम् ।**

क्षाराम्लतीक्ष्णोष्णलवणो बस्तिः प्रयुक्तः पैत्तिकस्य वा प्रयुक्तो गुदं दहन्निव विलिखन्निव क्षिपन्निवास्य नरस्य परिस्रवं करोति । स पुरुषस्तदा विदग्धमस्रं स्रवति । तथा बहुशो बहून्वारानतिवेगेन भूरिभिर्बहुभिर्वर्णैः पित्तं स्रवति । तथा मोहमसकृद् गच्छति । तत्रावस्थायां रक्तपित्तघ्नी तथा रक्तातिसारघ्नी क्रिया च प्रशस्यते । दाहमोहादिषु त्रिवृत्कल्कं द्राक्षाजलेन पिबेत् । अतिविरिक्तस्य क्षीणपुरुषस्य पुंसः कुल्माषान् माषयूषेण सह भोजनमथवा युंज्यात् पानं दध्यथवा सुरां दद्यात् ।

**सिद्धिर्बस्त्यापदामेवं स्नेहबस्तेस्तु वक्ष्यते ॥ २८ ॥**

बस्त्यापदां निरूहव्यापत्तीनामेवं सिद्धिश्चिकित्सितं स्यात् । स्नेहबस्तेरनुवासनस्य सिद्धिर्वक्ष्यते ।

**शीतोल्पो वाऽधिके वाते पित्तेत्युष्णः कफे मृदुः ।**
**अतिभुक्ते गुरुर्वर्चःसंचयेऽल्पबलस्तथा ॥ २९ ॥**
**दत्तस्तैरावृतस्नेहो नायात्यभिभवादपि ।**
**स्तंभोरुसदनाध्मानज्वरशूलांगमर्दनैः ॥ ३० ॥**
**पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ।**
**स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः ॥ ३१ ॥**
**सौवीरकसुराकोलकुलत्थयवसाधितैः ।**
**निरूहैर्निर्हरेत्सम्यक् समूत्रैः पंचमूलकैः ॥ ३२ ॥**
**ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।**

शीतो बस्तिरल्पो वाऽधिके वाते दत्तस्तथा पित्तेत्युष्णस्तथा कफे मृदुरयोगः संपद्यते । अतिभुक्ते गुरुर्बस्तिर्दत्तस्तथा वर्चसः पुरीषस्य संचयेऽल्पबल उभयथा मात्रया वीर्यतो दत्तो बस्तिः शीतादिकारणाद्वातादिभिः स्नेहबस्तिरावृतो नायाति गुदमार्गान्न प्रत्यागच्छति । अभिभवादप्यतोऽवस्तंभोरुसादादिभिर्वायुना स्नेहमावृतं विद्यात् । तमेवंविधं स्नेहं स्नेहबस्तिं निरूहैः सम्यक् स्निग्धाम्ललवणोष्णैर्निर्हरेत् । तानेव निरूहानाह । सौवीरकसुरादिसाधितैस्तथा गोमूत्रान्वितैस्तथा पंचमूलनिर्वृतैः पंचमूलक्काथवद्भिरित्यर्थः । रास्ना च पीतद्रुश्च रास्नापीतद्रू । ताभ्यां साधिते तैले रास्नापीतद्रुतैले ते विद्येते येषां निरूहाणां तैः क्वचित्पुटके रास्नातैलं क्वचिद्धरिद्रातैलं योज्यमित्यर्थः । ताभ्यामिति द्विवचननिर्देशात्पृथक्तैलद्वयमुपयोगीति गम्यते । चः समुच्चये । न केवलं तं निरूहयेत् । रास्नातैलेन पीतद्रुतैलेन वा दोषाद्यनुरोधादनुवासयेच्च सायंभुक्ते न तु प्रातर्भुक्ते ।

**तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ॥ ३३ ॥**
**विद्यात्पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ।**

तृडादिभिस्तृड्दाहादिभिः पित्तावृतं स्नेहबस्तिं विद्यात्। तं स्वादुतिक्तैर्बस्तिभिर्विनिर्हरेत्।

**तंद्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४ ॥**
**संमूर्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम्।**
**कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ ३५ ॥**
**फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत्।**

तंद्रादिभिः कफावृतं स्नेहबस्तिं विद्यात्। तं कषायकटुतिक्तकैः सुरामूत्रोपसाधितैः फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत्। फलानामुष्णवीर्याणामक्षोटादीनां तैलं केचित्तु फलं मदनफलं तिलतैलं च ताभ्यां युतास्तैरिति व्याचक्षते।

**छर्दिमूर्छारुचिग्लानिशूलनिद्रांगमर्दनैः ॥ ३६ ॥**
**आमलिंगैः सदाहैस्तं विद्यादत्यशनावृतम्।**
**कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥**
**मृदुर्विरेकः सर्वं च तत्रामविहितं हितम्।**

छर्द्यादिभिरामलिंगैर्दाहयुतैः स्नेहमत्यशनावृतं विद्यात्। कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनं हितं तथा मृदुभिरतीक्ष्णैर्विरेकस्तथा तस्मिन्नामविहितं सर्वमौषधं हितम्।

**विण्मूत्रानिलसंगार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ ३८ ॥**
**स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः।**
**श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ३९**
**निर्हरेद्विधिना सम्यगुदावर्तहरेण च।**

विण्मूत्रादिभिर्विडावृतं स्नेहं विदित्वा स्नेहादिभिस्तथा श्यामादिभिः सिद्धैर्निरूहैरनुवासनैश्च तथोदावर्तहरेण विधिना सम्यग् विनिर्हरेत्।

**अभुक्ते शूनपायौ वा पेयामात्राशितस्य च ॥ ४० ॥**
**गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः।**
**ऊर्ध्वं कायं ततः कंठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥४१॥**
**मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान्।**
**तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥४२॥**
**कंठादागच्छतस्तंभकंठग्रहविरेचनैः।**
**छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्हणम् ॥४३॥**

अभुक्ते स्नेहबस्तिस्तथा शूनः पायुर्यस्य तस्मिन्प्रणिहिते बस्तिरथवा पेयामात्रमेवाशितं येन पेयामात्राशितस्तस्य गुदे प्रणिहितः स्नेहबस्तिरनावृतः सन् वेगादूर्ध्वं कायं धावति। ततः कंठादूर्ध्वेभ्यश्च खेभ्यः पतति तत्र गोमूत्रादिसिद्धो यवादिमान् क्वाथस्तेन क्वाथेन सिद्धतैलैर्निरूहमनुवासनं दद्यात्। कंठादागच्छतः स्नेहस्य स्तंभकं च ग्रहादिभिश्छर्दिघ्नीभिः क्रियादिभिश्च तन्निर्हरणं कुर्यात्।

**नापक्वं प्रणयेत्स्नेहं गुदं स ह्युपलिंपति।**
**ततः कुर्यात्सतृण्मोहकंडूशोफान् क्रियाऽत्र वा ४४**
**तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम्।**

अपक्वं स्नेहं न दद्यात्। यस्मात्सोऽपक्वः स्नेहो गुदमुपलिंपति तत उल्लिप्ते गुदे रुजाभिः सह मोहादीन् कुर्यात्। अत्र चिकित्सितं तीक्ष्णो बस्तिस्तथाऽर्कपत्ररसे शृतं तैलम्।

**अनुच्छ्वास्य तु बद्धे वा दत्ते निःशेष एव च ॥४५॥**
**प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत्।**
**तत्राभ्यंगो गुदे स्वेदो वातघ्नान्यशनानि च ॥४६॥**

अनुच्छ्वास्य बस्तेर्वदने बद्धे सत्यथवा निःशेषं दत्ते सति प्रविश्यांतरे वायुः कुपितः शूलतोदकरः स्यात्। तस्मिन्नभ्यंगो गुदे स्वेदश्च तथा वातहंतॄणि भोजनानि च।

**द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा।**
**स्यात्कटीगुदजंघोरुबस्तिस्तंभार्तिभेदनम् ॥ ४७ ॥**
**भोजनं तत्र वातघ्नं स्वेदाभ्यंगाः सबस्तयः।**

शीघ्रं प्रणीते निष्कृष्टे सहसोत्क्षिप्ते च कट्यादिषु स्तंभपीडाभेदनानि स्युस्तत्र वातघ्नं शमनं स्वेदाभ्यंगश्च।

**पीड्यमानेंतरा मुक्ते गुदे प्रतिहतोनिलः ॥ ४८ ॥**
**उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली।**
**बस्तिः स्यात्तत्र बिल्वादिफलैः श्यामादिमूत्रवान् ॥**

पीड्यमाने बस्तिपुटकेंतरा मध्य एव कदाचित्तस्मिन् मुक्ते गुदेऽनिलः प्रतिहतो बलवान्दुष्टः शिरोरुजमूरुसादं च जनयेत्। तत्र बिल्वादिभिर्बस्तिर्मदनफलश्यामादिमान् स्यात्।

**अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम्।**
**तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च ॥ ५० ॥**

अतिप्रपीडितो बस्तिपुटकः कोष्ठे तिष्ठति गलं वाऽऽयाति तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च शस्यते।

**वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम्।**
**यथांडं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥**
**भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपवादतः।**

वमनविरेकाद्यैश्च विशुद्धं क्षामदेहं क्षामबलं क्षामानलं च पुरुषं वैद्यः प्रयत्नेन सर्वस्मादेवापवादाद्रक्षेत्। किमिव यथा तरुणमभिनवं कृतमंडं यथा तैलपूर्णं पात्रं रक्ष्यते तथा यत्नेन रक्षेत्।

**दद्यान्मधुरहृद्यानि ततोम्ललवणौ रसौ ॥ ५२ ॥**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः।**

स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततस्तस्मिन्मधुरहृद्यानि दद्यात्। अनंतरमम्ललवणौ रसौ ततः स्वादुतिक्तरसौ ततः कषायकटुकौ रसौ दद्यात्।

**अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥५३॥**
**व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत्।**

अन्योन्यप्रत्यनीकानां परस्परप्रतिपक्षाणां रसानां तथा स्निग्धरूक्षयोरन्योन्यं प्रत्यनीकयोर्व्यत्यासाद्विपर्ययादुपयोगेन यथास्वमुपयोगेन यथा मधुररसमुपयुज्य पुनरम्लान्यतमं तत्प्रतिपक्षं युंज्यात्। अम्लमुपयुज्य पुनर्मधुराद्यन्यतमं तत्प्रतिपक्षं युंज्यात्। एवं स्निग्धरूक्षयोगं कुर्यात्। तथा तं पुरुषं वमनादिभिर्विशुद्धप्रकृतिं यथोचितां स्वां नयेत्।

**सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥**

सर्वसहोऽशेषक्षमस्तथा स्थिरबलः प्रकृतिं प्राप्तः पुमान् वेद्यः।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने बस्तिव्यापत्सिद्धिर्नाम पंचमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथ भेषजकल्पो व्याख्यातुमारभ्यते। बस्तिव्यापदां ह्युत्पन्नानां सिद्धिः साधनं सद्भेषजप्रयोगादपि च सर्वेषां रोगाणां या सिद्धिः प्रशमोपायः सोऽपि सद्भेषजप्रयोगादेवेत्याह।

**अथाऽतो भेषजकल्पं व्याख्यास्यामः ॥**

भेषजस्य कल्पो योजना भेषजकल्पः। शेषं पूर्ववत्।

**धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ।**
**श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥**
**मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते।**
**अफालकृष्टेऽनाक्रांते पादपैर्बलवत्तरैः ॥ २ ॥**
**शस्यते भेषजं जातं युक्तं वर्णरसादिभिः।**
**जंत्वजग्धं दवादग्धमविदग्धं च वैकृतैः ॥ ३ ॥**
**भूतैश्छायातपांब्वाद्यैर्यथाकालं च सेवितम्।**
**अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥**

धन्वदेशे तथा साधारणे देशे तथा समे न निम्नोन्नते तथा सन्मृत्तिके तथा श्मशानादिवर्जिते। चैत्यं दिनचर्याध्याय उक्तम्। तथा मृदौ सुस्पर्शे तथा प्रदक्षिणमनुकूलं जलं यस्मिंस्तथा कुशरोहिषसंस्तृते तथाऽफालकृष्टे न लिखिते तथा वृक्षैर्महत्तरैरनाक्रांते देशे यद्भेषजं जातं युक्तं यथा स्ववर्णरसादिभिस्तद् भेषजं शस्यते। तथा जंतुभिः कीटैरजग्धमभक्षितं दवेन दावाग्निनाऽदग्धमप्लुष्टं तथाऽविदग्धं वैकृतैर्भूतैः स्वभावं परित्यज्य धर्मबाधाद्विकृतैराकाशादिभिर्यदनासेवितं तदविदग्धम्। विकृतमेव वैकृतम्। प्रज्ञादित्वादण्। तथा छायादिभिर्यथाकालं कालमनतिक्रम्य सेवितं यदा तस्य भेषजस्य वृद्धौ छायादीनामन्यतमं वस्तुजातमुपयुज्यते तदा तेन सेवितमित्यर्थः। तथाऽवगाढं दूरं गतं महत्पृथु मूलं यस्य तदवगाढमहामूलम्। तथोदीचीमुत्तरां दिशमाश्रितं तामाश्रित्य स्थितम्।

**अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः।**
**गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥**
**सक्षीरं तदसंपत्तावनतिक्रांतवत्सरम्।**
**ऋते गुडघृतक्षौद्रधान्यकृष्णाविडंगतः ॥ ६ ॥**

अथेत्यानंतर्ये मंगलसूचकः। भेषजमेवंविधं विदित्वाऽनंतरं कल्याणं स्वस्त्ययनादि चरितमनुष्ठितं येनासौ कल्याणचरितस्तथा भेषजहरणं प्रति श्रद्धावांस्तथा शुचिः स्थानादिशुद्धस्तथोपोषितः कृतोपवासः। एवंविधमौषधमेवंविधः पुमान् गृह्णीयात्। तच्च भेषजं स्वस्थं कृत्वा स्थितं काले सक्षीरमार्द्रं कल्पयेत्। तदसंपत्तौ तु तथाविधस्य सक्षीरस्यौषधस्यासंपत्तावनतिक्रांतवत्सरं भेषजं कल्पयेत्। किं सर्वं द्रव्यमनतिक्रांतवत्सरं कल्पयेत्। ऋत इत्यादि। गुडादीन्वर्जयित्वा परमौषधमनतिक्रांतवत्सरं कल्पयेत्।

**पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजम्।**
**वयोबलवतां धातुपिच्छश्रृंगखुरादिकम् ॥ ७ ॥**

क्षीरं बष्कयिण्याः संबंधि ग्राह्यम्। विण्मूत्रं च तत्क्षीरं च नीरुजमपगतदोषं ग्राह्यम्। वयोबलवतां धातुपिच्छादिकं ग्राह्यम्। आदिग्रहणाच्चिकित्सितोपयोगि केशनखचर्मादिकं गृह्यते। वयःशब्दोपादानाद्विशिष्टं तरुणं वयो गृह्यते। नह्यवयाः कश्चिदस्ति।

**कषाययोनयः पंच रसा लवणवर्जिताः।**
**रसः कल्कः शृतः शीतः फांटश्चेति प्रकल्पना॥८॥**
**पंचधैवं कषायाणां पूर्वं पूर्वं बलाधिका।**

कषायस्य योनय आकारा लवणवर्जिता मधुरादयः पंच रसास्तेभ्य एव कषायाः स्वरसादयः पंच संभवंति। लवणस्य तु स्वरसकल्पनाया योगा न संभवंति सदैव शुष्करूपत्वात्। कल्ककल्पनापि न संभवति यतो यद् द्रव्यं द्रवेण सिक्तं पिंडीभवति न तु विलीयते तत्कल्कसंज्ञामासादयति। तथा यद् द्रव्यं क्राथयित्वा जलादुद्ध्रियते द्रव्यावयवास्तूदकं प्रविशंति तत्रैव शृतकल्पना। लवणस्य तु विलीनरूपत्वादेवं न संभवति। इति शृतकल्पनाया अप्यसंभवः। एवं शीतफांटयोरप्येतेनैव न्यायेनासंभव इत्युक्तम्। लवणवर्ज्या रसाः कषाययोनय इति। मुनिनाप्युक्तम्। कल्पनावशतः पंचानां रसानां कषायसंज्ञाव्यवहार इति। लवणस्य कल्पनायोगाभावान्मधुरकषायोऽम्लकषायस्तिक्तकषायः कटुकषायः कषायश्चेति रसानां स्वरसादिकल्पनायोगो न संभवति। उक्तं चैतत्। तस्माद्गुणगुणिनोरभेदोपचारादिह रसग्रहणेन तदाश्रयाणां द्रव्याणां ग्रहणं मंतव्यम्। रसः कल्कः शृतः शीतः फांटश्चेति प्रकल्पना। पंचधैव कषायाणां स्वरसादीनां सा च कल्पना यथापूर्वं बलाधिकाऽधिकशक्तिः। एवं फांटाख्या कल्पना सब-

ला । ततोऽप्यधिकशक्तिः शीताख्या । ततोऽप्यधिकवीर्या शृताख्या । ततोऽप्यधिकशक्तिः कल्काख्या । चूर्णाख्यायाश्च कल्पनाया अंतर्भावादपृथग्ग्रहणम् । कल्काख्यायाश्च कल्पनायाः स्वरसाख्यकल्पनाया अधिका शक्तिः । ननु चूर्णादनंतरं कल्कः क्रियते नतु कल्कादनंतरं चूर्णं तस्मात्पंचानां कल्पनानां मध्ये चूर्णकल्पनैव निर्देष्टुं युक्ता नतु कल्ककल्पना । युक्तमाह भवान् । किंतु लवणस्य कषायसंज्ञायां समावेशो माभूदिति कल्पनानां मध्ये कल्क इति निर्देशः कृतो न चूर्ण इति तस्माल्लवणेन संभवति कषायसंज्ञासमावेशः ।

**सद्यः समुद्धृतक्षुण्णाद्यः स्रवेत्पटपीडितात् ॥ ९ ॥**
**स्वरसः स समुद्दिष्टः**

सद्यस्तत्क्षणं समभूमेः सम्यगुद्धृतमुत्खातं समनंतरं क्षुण्णं पिष्टं सद्यः समुद्धृतक्षुण्णं तस्माद्वस्त्रपीडिताद्यः स्रवेत् स स्वरसः कल्पनाकषायः समुद्दिष्टः संज्ञायां संकेतितः ।

**कल्कः पिष्टो द्रवाप्लुतः ।**
**चूर्णो प्लुतः**

द्रवेणाप्लुतः पिष्टः सन् कल्क इति कल्पनाकषायः संकेतितः । यस्माद् द्रव्यं द्रवेणाप्लुत्य शुष्कमेव पिष्टं स कल्पनाकषायश्चूर्ण इति गदितस्तेन कल्कस्यैवायं भेद इति नासौ कल्पनेति शंकनीयम् ।

**शृतः क्वाथः**

यद् द्रव्यं द्रवेणाप्लुत्य शृतं स कल्पनाकषायः क्वाथ इति कल्प्यते ।

**शीतो रात्रिं द्रवे स्थितः ॥ १० ॥**

यद् द्रव्यं द्रवे सकलां रात्रिं स्थितं स कल्पनाकषायः शीत इत्युच्यते ।

**सद्योभिषुतपूतस्तु फांटस्तन्मानकल्पने ।**
**युंज्याद्व्याध्यादिवलतस्तथा च वचनं मुनेः ॥ ११ ॥**
**मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।**
**आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥१२॥**

यद् द्रव्यं द्रव्येऽभिषुत्य सद्यः पूतं क्रियते स कल्पनाकषायः फांट इति संकेतितः । मानं च कल्पना च मानकल्पने तेषां स्वरसादीनां मानकल्पने तद्व्याध्यादिबलेन युंज्यात् । आदिशब्देन कोष्ठबलादीनां ग्रहणम् । तत्र सम्यग्रसवीर्यादीन् दोषधात्वाद्यालोच्य प्रथममनंतरं व्याध्यादिबलं च ततः स्वरसादीनां मानकल्पने युंज्यान्न नियमं कृत्वेत्यत आह । तथा च वचनं मुनेः । मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः । आलोच्य देशकालौ च योज्या तद्वच्च कल्पनेति ।

**मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुःपलम् ।**

मध्यमं मानं मात्रा स्वरसस्य चतुःपलम् ।

**पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये ॥ १३ ॥**

पेष्यस्योभयरूपस्य कल्कस्य चूर्णस्य वा कर्षं मध्यं मानं तच्च पेष्यस्य कर्षं द्रवस्य पलत्रये प्रक्षिप्यालोड्यम् ।

**क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम् ।**

क्वाथं द्रव्यपले द्रव्यस्य प्रकृतत्वात् तस्य प्रस्थार्धं दत्त्वा तच्च श्रपणेन पादशेषं कुर्यात् ।

**शीतं पले पलैः षड्भिः**

शीतं कषायं पले द्रव्यस्य षड्भिः पलैर्द्रवस्य कुर्यात् ।

**चतुर्भिश्च ततोऽपरम् ॥ १४ ॥**

ततः शीतकषायादनंतरं फांटाख्यं प्रकृतत्वाद् द्रव्यस्य पले चतुर्भिर्द्रवस्य पलैः कुर्यात् । पंचविधायां कषायकल्पनायां मध्यमं मानमस्माच्च मानाद्देशकालादीन् समीक्ष्योनाधिकभावो मात्रायाः स्वबुद्ध्या कल्प्यः ।

**स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।**
**कल्कस्नेहद्रवं योज्यम्**

स्नेहपाके विधातव्ये कल्कस्नेहद्रवाणाममानोक्तौ मानवचनस्य विशिष्टस्यानिर्देशे चतुर्गुणविवर्धितं कल्कस्नेहद्रवं योज्यम् । कल्कश्च स्नेहश्च द्रवश्च तेषां समाहारः कल्कस्नेहद्रवम् । तदेवं कल्कात् स्नेहश्चतुर्गुणः स्नेहाद् द्रवश्चतुर्गुण इति बोध्यम् । पंचप्रभृति तु द्रवं पृथक् स्नेहसमश्चायमित्यत्र योज्यमिति ।

**अधीते शौनकः पुनः ॥ १५ ॥**
**स्नेहे सिद्ध्यति शुद्धांबुनिःक्वाथस्वरसैः क्रमात् ।**
**कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १६ ॥**
**पृथक् स्नेहसमं दद्यात्पंचप्रभृति तु द्रवम् ।**

शौनकः प्रस्तुततंत्रकृदधीत एवं पठति । स्नेहेत्यादि । स्नेहः कदाचिच्छुद्धांबुना पच्यते कदाचिन्निःक्वाथेन कदाचित्स्वरसेनेति । तैः शुद्धांबुनिःक्वाथस्वरसैः स्नेहे सिद्ध्यति सति क्रमेण कल्कस्यांशं चतुर्थं षष्ठमष्टमं योजयेदिति । यत्र चतुर्भ्योऽधिकानि द्रवाणि तत्र पृथक् स्नेहसमानि नतु परस्परसाम्येन मिलितानि स्नेहाच्चतुर्गुणानि ।

पाकलक्षणमधुना लक्षयन्नाह ।

**नांगुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥१७॥**
**वर्णादिसंपच्च यदा तदैनं शीघ्रमाहरेत् ।**

नांगुलिमिति । कल्कविषयेंऽगुलिग्राहित्वं यदा न भवत्यग्नौ प्रक्षिप्ते वा स्नेहे सशब्दता चटचटायित्वं न भवति तथा वर्णगं-

धरसस्पर्शानां यदा संपच्छुभत्वं स्यात्तदा तस्मिन्कालेऽश्यामलच्छायामंतं स्नेहं शीघ्रमाहरेत्। अग्नितः स्नेहस्य कटाहस्थितस्य सकालोऽवतरण इत्यर्थः।

अन्यदपि स्नेहपाकलक्षणमस्ति।

**घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः॥ १८॥**
**लेहस्य तंतुमत्ताप्सु मज्जनं शरणं नच।**
**पाकस्तु त्रिविधो मंदश्चिक्कणः खरचिक्कणः॥ १९॥**
**मंदः कल्कसमे किंचिच्चिक्कणो मदनोपमे।**
**किंचित्सीदति कृष्णे च वर्तमाने च पश्चिमः॥२०॥**
**दग्धोत ऊर्ध्वं निःकार्यः स्यादामस्त्वग्निसादकृत्।**
**मृदुर्नस्ये खरोऽभ्यंगे पाने बस्तौ च चिक्कणः॥२१॥**

घृताख्यस्य स्नेहस्य पच्यमानस्य फेनोपशमो यदा जायते तैलाख्यस्य च स्नेहस्य सम्यक्पाकं प्राप्तस्य तदुद्भवः फेनोत्पत्तिः स्यात्तदा घृततैलयोः पाको भवति। लेहस्य पाकं प्राप्तस्य तंतुमत्ता तंतुप्रादुर्भावः पाकः। तथाप्सु मज्जनं पाकलक्षणम्। शरणाशरणरूपतया द्विधा संभवः संभवत्यत इदमाह। शरणं नच सर्वलेहस्याप्सु मज्जनं भवति नतु शरणमवयवशो गमनं तथाऽपि तस्य पाकः संपन्न इति वेद्यम्। पाकस्त्रिप्रकारो मंदश्चिक्कणः खरचिक्कणाख्यः। स्नेहपाकविधौ कियदाख्ये वस्तुजाते कल्कसमे यथा कल्कोंऽगुलिनोद्वेष्टन्याति तथा कियतोऽपि स्नेहपाकस्यांगुलिग्राहिता न भवति स स्नेहपाको मंद उच्यते। मदनोपमे कृते सत्येवमंगुलिग्राहिणि स्नेहपाकस्य स चिक्कणः पाकः। किंचिदीषत् कृते सति सीदति तथा वर्णतः कृष्णे च तस्मिंस्तथा वर्तमाने वर्तिमागच्छति सति पश्चिमः खरचिक्कणाख्यः पाकः। अतोऽस्मात् खरचिक्कणादूर्ध्वमनंतरं दग्धो भवति स्नेहः सच निःकार्यः स्यात् यथानिरूपितकार्यकरणो न भवेन्निर्वीर्यत्वात्। आम ईषत्पाकः स्नेहः पुनरप्यग्निसादकृत्। मृदुर्मंदपाकस्नेहो नस्ये तद्विषये योज्यः। खरः खरचिक्कणः स्नेहोऽभ्यंगे तद्विषये प्रयोज्यः। पाने तथा बस्तौ तद्विषये चिक्कणः प्रयोज्यः।

अधुना मानसंख्यायां यथास्वं संज्ञाविधानार्थमाह।

**शाणं पाणितलं मुष्टिः कुडवं प्रस्थमाढकम्।**
**द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम्॥ २२॥**

शाणादयो वहपर्यंताः क्रमेण चतुर्गुणाः पाणितलादिसंज्ञा ज्ञेयाः।

**द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम्।**

शुष्कार्द्रयोरेकस्मिन्योगे तुल्यपरिमाणनिर्दिष्टयोः शुष्कद्रव्यादार्द्रं द्रव्यं द्विगुणं दत्त्वा योजयेत्। शुष्कद्रव्ययोर्वा द्रवद्रव्ययोस्तुल्यपरिमाणनिर्दिष्टयोः शुष्कद्रव्याभावे सत्यार्द्रं द्रव्यं द्विगुणं कृत्वा योजयेत्। शुष्कद्रवद्रव्ययोरेकस्मिन्योगे तुल्यपरिमाणेन निर्दिष्टयोः शुष्कद्रव्याद् द्रवद्रव्यं कुडवादिपरिमाणसंज्ञया निर्दिष्टं द्विगुणं कृत्वा योजयेत्।

**पेषणालोडने वारि स्नेहपाके च निर्द्रवे॥ २३॥**

निर्द्रवेऽनुक्तद्रवे पेषणे लोडनार्थं वारि योजयेत्। स्नेहपाके वाऽनुक्तद्रवे वार्येव योजयत्।

**कल्पयेत्सदृशान्भागान्प्रमाणं यत्र नोदितम्।**
**कल्कीकुर्याच्च भैषज्यमनिरूपितकल्पनम्॥ २४॥**

यत्र यत्र प्रयोगे द्रव्याणां परिमाणं विशिष्टं नोक्तं तत्र तत्र द्रव्याणां सदृशान्भागान् कल्पयेत्।

**द्वौ शाणौ वटकः कोलं बदरं द्रंक्षणश्च तौ।**
**अक्षं पिचुः पाणितलं सुवर्णं कवलग्रहः॥ २५॥**
**कर्षो विडालपदकं तिंदुकः पाणिमानिका।**
**शब्दान्यत्वमभिन्नेऽर्थे शुक्तिरष्टमिका पिचू॥ २६॥**
**पलं प्रकुंचो बिल्वं च मुष्टिराम्रं चतुर्थिका।**
**द्वे पले प्रसृतस्तौ द्वावंजलिस्तौ तु मानिका॥ २७॥**
**आढकं भाजनं कंसो द्रोणः कुंभो घटोर्मणम्।**
**तुलापलशतं तानि विंशतिर्भार उच्यते॥ २८॥**

द्वौ शाणौ वटकः। कोलं बदरम्। द्रंक्षणश्चेत्यत्र शब्दान्यत्वं नतु तत्त्वतो भेदः। तौ द्वौ द्रंक्षणावक्षं तथा पिचुस्तथा पाणितलं तथा स्ववर्णं तथा कवलग्रहस्तथा कर्षस्तथा बिडालपदं तथा तिंदुकस्तथा पाणिमानिकेत्यत्राभिन्नेऽर्थे शब्दानेकत्वम्। तथा द्वौ पिचू शुक्तिस्तथाऽष्टमिका इत्यत्रापि शब्दान्यत्वमर्थस्यैक्ये सति पलं प्रकुंचो बिल्वं च मुष्टिराम्रं चतुर्थिकेत्यत्रापि शब्दानां वैलक्षण्ये सति नार्थतो भेदः। द्वे पले प्रसृत इत्युच्यते। तौ द्वौ प्रसृतावंजलिः कथ्यते। तौ द्वावंजली मानिका। अष्टौ पलानीत्येव। आढकादीनां शब्दानां स्वरूपतो भिन्नानां नार्थतो भेदस्तथैव द्रोणादीनां शब्दानां पलशतं तुला निगद्यते। तानि पलशतानि विंशतिर्भार उच्यते। क्वाथादीनामुत्तमादिमात्राः संग्रहादवधार्याः। संग्रहे ह्येवं पठ्यते। क्वाथो निर्यूहस्तत्र भेद्यान्यौषधान्यणुशो भेदयित्वा छेद्यानि। छेदयित्वा प्रक्षाल्योदकेन शुचौ रूक्षायामधःप्रलिप्तायां ताम्रायां मृन्मयान्यतमायां स्थाल्यां समावाप्य बाहुल्यपानीयग्राहितामौषधानामाकलय्य यावता सूक्तरसस्तस्य तावदुदकमासिच्योच्छोषयेच्चाग्नावधिश्रयेत्। यावन्मात्रोदकदाने तथा तदवशिष्टत्वे च तत्र नियमसामर्थ्यात् क्वाथ्यद्रव्यपरिमाणस्यात्र यत्परिमाणानि द्रव्याण्युदकमियत्प्रमाणं तदवशिष्टता च यत्प्रमाणेन न नियमोक्तिरेवंविधा विद्यते किंतर्ह्यभ्यूहनीयमेतत्सर्वमित्यत्र विधिः। यथाग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन् दर्व्या च विघट्टयन् मृदुना च परितः समुपगच्छ-

ताऽनलेन साधयेदवतार्य च सुपरिस्नुतं यथार्हस्पर्शं प्रयुंजीत। क्षीरादिसहितं च द्रव्यं न सम्यङ्मुक्तरसं भवति। इति वारिक्वाथपूर्वकं क्षीराद्यैस्तदुपदेशे तु यदग्र्यं क्वाथयेत् शीतसलिलाप्लुतं तु निशापर्युषितं पूर्वं शीतः कषाय उष्णांभसि क्षुण्णोऽभिषुतः पूतः फांट इति। तत्र सम्यग्रसवीर्यादीन्यौषधस्य समीक्ष्य व्याध्यातुरबलादिबलतश्च निर्यासादीनां कल्पनां मात्रां च संप्रयोजयेत्। तथाच केचिदाहुः। मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं च यः। आलोच्य देशकालौ च भैषज्यमवचारयेत्। एवंच सर्वमभ्यूह्यात्र कर्तव्यं न निश्चितं कृत्वोक्तेन विधिनेति। एतदेवमुपदिष्टं बुद्धिमतां ज्ञानप्रबोधाय यथातु सर्वे भिषजो विज्ञास्यंति तथैवोपदेक्ष्यत इति निर्यासे मध्यमा मात्रा चतुष्पलं कल्कचूर्णयोः कर्षः पलत्रयं तदालोडने निर्यूहे भेषजपलमुदकार्धप्रस्थे विशृत्य पादशेषमवतारयेत्। शीतफांटयोरौषधपलं षड्भिश्चतुर्भिरंबुपलैरासुतमिति। तथा शाणपरिमाणस्य पाणितलवाचकस्य किमपि परिमाणं नोक्तं येनासौ परिच्छिद्यत इति न वाच्यम्। संग्रहे तत्परिमाणस्योक्तत्वात्। तत्र ह्येवमुक्तं षड्वंश्यो मरीची। ताः षट् मरीच्यः सर्षप उच्यते। अष्टौ सर्षपास्तंडुलः। तौ द्वौ तंडुलावेको धान्यमाषः। तौ द्वौ धान्यमाषौ यवः। अतः परं चतुर्गुणवृद्ध्यांबूका माषकशाणकर्षपलकुडवप्रस्थाढकद्रोणवहाः कल्प्यंते। एवं चतुर्भिर्माषकैः शाणस्य परिमाणं परिभिद्यते। धरणं तु पलस्य दशमो भागः। माषकस्य तु पर्यायो हेमः। कर्षस्य षोडशिका। आढकस्य तु पर्यायाः कंसः पात्रं भाजनं च। द्रोणस्य पर्यायो नल्वणः। तथा अर्मणः। तयोन्मानस्तथा घटः कुंभः कलशश्च। द्रोणद्वयं च शूर्प इति।

शैलभेदाद्द्रव्यविशेषमाह।

**हिमवद्विंध्यशैलाभ्यां प्रायो व्याप्ता वसुंधरा।**
**सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैंध्यमौषधम्॥ २९॥**

हिमवत्पर्वतेन विंध्यशैलेन च बाहुल्येन वसुंधरा व्याप्ता। तत्र तयोर्मध्यादाद्यं हैमवतमौषधं सौम्यं पथ्यं च स्वभावाद्भवति। वैंध्यमौषधमाग्नेयं न तथा देहस्य पथ्यं स्यादिति।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां कल्पस्थाने द्रव्यकल्पो नाम षष्ठोऽध्यायः॥ ६॥

## समाप्तमिदं कल्पस्थानम्

# अष्टांगहृदये उत्तरस्थानम् ।

## प्रथमोऽध्यायः ।

अनंतरमुत्तरस्थानारंभः । यतः कायाख्यमाद्यमंगं तच्च पूर्वैः स्थानैः सर्वमुक्तम् । अधुना बालादीनामुत्तरेषामंगानामवसर इत्युत्तराख्यं स्थानमुच्यते । तत्राऽपि यथोद्देशस्तथा निर्देश इति बालाख्यमंगं विवक्षुराह ।

**अथाऽतो बालोपचरणीयमध्यायं व्याख्यास्यामः ॥**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

बालस्य शिशोरुपचरणं बालोपचरणं तस्मै हितः । शेषं पूर्ववत् । इतीत्यादिना स्वमनीषिकापरिकल्पितत्वमस्य तंत्रस्य निराकरोति ।

**जातमात्रं विशोध्योल्वाद्बालं सैंधवसर्पिषा ।**
**प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥**
**अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ।**
**अथास्य दक्षिणे कर्णे मंत्रमुच्चारयेदिमम् ॥ २ ॥**
**"अंगादंगात्संभवसि हृदयादभिजायसे ।"**
**"आत्मा वै पुत्रनामासि स जीव शरदां शतम्"॥३॥**
**"शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि"**
**"नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु" ॥ ४ ॥**

जातमात्रं सद्य एवोद्धृतं बालमुल्बादपरापरपर्यायात्सैंधवयुक्तेन घृतेन विविधैः प्रकारैः शोधयित्वा पश्चात्प्रसूत्या प्रसवेन क्लेशितं बालं बलातैलेन सेचयेत् । पश्चात्पाषाणयोर्वादनमस्य कर्णमूले कारयेद्वैद्यः । अनंतरमस्य दक्षिणकर्णे इमं वक्ष्यमाणं मंत्रमुच्चारयेत् । तमेव मंत्रमाह अंगादित्यादि ।

**स्वस्थीभूतस्य नाभिं च सूत्रेण चतुरंगुलात् ।**
**बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायामवसंजयेत् ॥ ५ ॥**
**नाभिं च कुष्टतैलेन सेचयेत्स्नपयेदनु ।**
**क्षीरिवृक्षकषायेण सर्वगंधोदकेन वा ॥ ६ ॥**
**कोष्णेन तप्तरजततपनीयनिमज्जनैः ।**

समाश्वस्तस्य च बालस्य नाभिं चतुरंगुलादूर्ध्वं सूत्रेण बद्ध्वानंतरं छेदयित्वा ग्रीवायां योजयेत् । नाभिं च कुष्टतैलेन सेचयेत् । अनु पश्चात् क्षीरिवृक्षकषायेण सेचयेत् । अश्वत्थोदुंबरप्लक्षवटपिप्पलसंज्ञिताः । पंचैते क्षीरिणो वृक्षाः समाख्याता विचक्षणैः । अथवा सर्वेषां गंधानां चंदनादीनां जलेन स्नपयेत् । किंभूतेन । कोष्णेन । कथम् । तप्ताभ्यां रूप्यसुवर्णाभ्यां निमज्जनैरसकृत्सेचनैः ।

**ततो दक्षिणतर्जन्या तालून्नम्यावगुंठयेत् ॥ ७ ॥**
**शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ।**
**हरेणुमात्रं मेधायुर्बलार्थमभिमंत्रितम् ॥ ८ ॥**
**ऐंद्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ।**

अनंतरं दक्षिणहस्ततर्जन्या वैद्यस्तालुमुन्नम्य शिरसि पिचुना तैलाक्तेनावगुंठयेत् । अस्य च बालस्य प्राश्यं लेहं मेधाद्यर्थं प्रयोजयेत् । कियन्मात्रं हरेणुप्रमाणम् । तथाऽभिमंत्रितं प्राङ्मंत्रेण । किंतत्प्राश्यमित्याह । ऐंद्री इंद्रवारुणी । ब्राह्मी मंडूकपर्णी ।

**चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥**
**लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ।**

अथवा सुवर्णादिकं सूक्ष्मं चूर्णीकृत्य लिह्यात् । रजीकृता इति । अरुर्मन इत्यादिना सुलोप इत्वं च । हेमधात्रीचूर्णं वा मधुघृतयुक्तं लिह्यात् ।

**गर्भांभः सैंधववता सर्पिषा वामयेत्ततः ॥ १० ॥**

ततोऽनंतरं गर्भांऽभः सर्पिषा सैंधवयुक्तेन वामयेत् ।

**प्राजापत्येन विधिना जातकर्माणि कारयेत् ।**

ततो जातकर्माणि वेदविहितानि प्राजापत्येन गृह्योक्तेन विधिना भिषक् कारयेत् ।

स्तन्यप्रवर्तने हेतुमाह ।

**सिराणां हृदयस्थानां विवृतत्वात्प्रसूतितः ॥ ११ ॥**
**तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ।**

हृदयाश्रितानां सिराणां प्रसवाद्धेतोर्यद्विवृतत्वं तस्मात्कारणात्तृतीयदिवसे कदाचिच्चतुर्थे योषितां स्तन्यं प्रवर्तते ।

**प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ १२ ॥**
**अनंतामिश्रिते मंत्रपाविते प्राशयेच्छिशुम् ।**

यत एवं दिनत्रिचतुर्मात्रं क्षीराभावस्तस्माद्धेतोः प्रथमेऽह्नि त्रीन् कालान् मधुघृतेयवासकयुक्ते मंत्रेण पाविते शिशुं भोजयेत् ।

**द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ १३ ॥**
**प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ।**
**स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४॥**

द्वितीये दिवसे तृतीये च दिवसे लक्ष्मणासिद्धं घृतं त्रीनेव कालान् भोजयेत् । अनंतरं तस्य शिशोः पाणेस्तलेन मध्येन संमितं तत्प्रमाणं नवनीतप्रयोगात् पूर्वं निवारितस्तन्यस्यास्य बालस्य द्वौ कालौ नवनीतं स्तन्यानुपानं प्रयोजयेत् ।

**मातुरेव पिबेत्स्तन्यं तत्परं देहवृद्धये ।**
**स्तन्यधात्र्यावुभे कार्ये तदसंपदि वत्सले ॥ १५ ॥**
**अव्यंगे ब्रह्मचारिण्यौ वर्णप्रकृतितः समे ।**
**नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥**
**हिताहारविहारेण यत्नादुपचरेच्च ते ।**

बालो मातुर्जनन्या एव स्तन्यं पिबेत् । कुतः । यस्माच्च तस्याः स्तन्यमतिशयेन देहस्य वृद्धये स्यात् । तदसंपदि मातृस्तन्यासंपत्तौ द्वे स्तन्यधात्र्यौ च वत्सले स्नेहले बालस्य वात्सल्यकामे कार्ये । तथा व्यंगत्वरहिते । ब्रह्मचारिण्यौ वर्जितमैथुने । वर्णेन पकृत्या च तुल्ये । तथा निरामये । मध्यवयस्के । जीवद्वत्से लौल्यवर्जिते काममुख्यादिरहिते । आदरयुक्ते । ते हितेनाहारेण यत्नादुपचरेत् ।

**शुक्क्रोधलंघनायासाः स्तन्यनाशस्य हेतवः ॥ १७**
**स्तन्यस्य सीधुवर्ज्यानि मद्यान्यानूपजा रसाः ।**
**क्षीरं क्षीरिण्य ओषध्यः शोकादेश्च विपर्ययः॥ १८॥**

शुगादीनि स्तन्यनाशस्य कारणानि । शुक् शोकः । स्तन्यस्य मद्यानि हेतवः । किंभूतानि सीधुवर्ज्यानि । आनूपजाश्च रसाः । तथा क्षीरवंत्य ओषध्यो जीवंत्याद्याः । शोकादिवैपरीत्यं च ।

**विरुद्धाहारभुक्तायाः क्षुधिताया विचेतसः ।**
**प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥१९॥**

तथा विरुद्ध आहारो भुक्तो यया तस्यास्तथा बुभुक्षिताया निंदितायाश्च तथा प्रदुष्टदोषाया गर्भिण्याश्चै संबंधि स्तन्यमुपयुक्तं बालस्य रोगहेतुः ।

**स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।**
**ह्रस्वेन पंचमूलेन स्थिरया वा सितायुतम् ॥ २० ॥**

स्तन्यस्याभावे सति छागं पयो गव्यं वा छागतुल्यगुणं पिबेत् । छागसमानगुणं गव्यं कथं स्यात्तथाह । ह्रस्वेनेत्यादि । ह्रस्वेन पंचमूलेन सिद्धं शालिपर्णीपृश्निपर्णीसिद्धं वा शर्करायुतं पिबेत् ।

**षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।**
**जागृयुर्बांधवास्तस्य दधतः परमां मुदम् ॥ २१ ॥**

अन्यथापि तस्य शिशोर्बांधवा विहितरक्षादयो निशां जागृयुः । षष्ठीं पुनस्तमस्विनीं विशेषेण यत्नेन जागृयुः । किं कुर्वंतः । परं हर्षं धारयंतः ।

**दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः ।**
**कारयेत्सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२**
**बिभ्रतोऽगैर्मनोह्लालरोचनागुरुचंदनम् ।**
**नक्षत्रदेवतायुक्तं बांधवं वा समाक्षरम् ॥ २३ ॥**

दशमे दिने पूर्णे सति सूतिकाया उत्थानं कारयेत् । कथं कारयेत् । स्वकुलयोग्यैर्विधानैः । बालस्य नामार्चितं प्रशस्तमनुगतं कुलजात्यादिभिः । किंभूतस्य । अंगैः पाण्यादिभिर्मनोह्लादीनि धारयंतः । किंभूतं नाम । नक्षत्रस्य यासौ देवता तया युक्तम् । अथवा बांधवं ज्ञातिपूर्वजं समवर्णं न तु विषमाक्षरम् ।

**ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।**
**प्रागुदक्शिरसः कुर्यात् बालस्य ज्ञानवान् भिषक् ॥**
**शुचिर्धौतोपधानानि निर्वलीनि मृदूनि च ।**
**शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ॥ २५ ॥**

ततो नामकरणादनंतरं प्रकृतिभेदेन विकृतिविज्ञानीय उक्तानि यानि रूपाणि तेनायुषः परीक्षणं बालस्य ज्ञानवान्सुमतिर्वैद्यः कुर्यात् । किंभूतस्य । प्राक्शिरस उत्तरशिरसो वा । तथा शुच्यादिगुणयुक्तान्युपधानानि शय्यायामास्तरणार्थं वासांसि कुर्यात् । तथा रक्षोघ्नैर्द्रव्यैर्धूपितानि ।

**काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।**

काकश्च वस्त्रादिधूपने शस्तः । किंभूतः । विशस्तो व्यापादितो ननु स्वयं मृतः । तथा त्रिवृतायुक्तः ।

**जीवत्खड्गादिशृंगोत्थान् सदा बालः शुभान् मणीन्**
**धारयेदौषधीः श्रेष्ठा ब्राह्मयैंद्रीजीवकादिकाः ।**
**हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् २७**
**आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षिणीम् ।**

बालः सर्वदा शुभहेतून्मणीन् बिभृयात् । किंभूतान् । जीवंतश्च ते खड्गादयश्च तेषां शृंगाणि तेभ्य उत्थानं येषां तान् जीवतामेव ये गृहीता इत्यर्थः । शृंगग्रहणमुपलक्षणार्थम् । अतएव सर्पादिजानपि मणीन् धारयेत् । तथौषधीर्ब्राह्म्यादीः शुभा धारयेत् । कैः । पाण्यादिभिः । विशेषेण सर्वदा वचां धारयेत् । किंभूतां वचाम् । आयुरादिकरणहेतुं तथा रक्षोनिवारिणीम् ।

**पंचमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत् ॥ २८ ॥**
**षष्ठेऽन्नप्राशनं मासि क्रमात्तत्र प्रयोजयेत् ।**

स्पष्टम् ।

**षट्सप्तमाष्टमासेषु नीरुजस्य शुभेऽहनि ॥ २९ ॥**
**कर्णौ हिमागमे विध्येद्धात्र्यंकस्थस्य सांत्वयन् ।**

अनंतरं षष्ठे मासि सप्तमेऽष्टमे वा बालस्य नीरुजस्य हिमागमे शुभे दिवसे कर्णौ विध्येत् । धात्र्युत्संगस्थितस्य । धात्री माता स्तनपायिनी च । कथं विध्येत् । सांत्वयन् प्रीतिवचनादिना ।

**प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ ३० ॥**
**दक्षिणेन दधत्सूचीं पालिमन्येन पाणिना ।**
**मध्यतः कर्णपीठस्य किंचिद्गंडाश्रयं प्रति ॥ ३१ ॥**

**जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ।**
**धृतस्य निश्चलं सम्यगलक्तकरसांकिते ॥ ३२ ॥**
**विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात् ।**
**नोर्ध्वं न पार्श्वतो नाधः शिरास्तत्र हि संश्रिताः३३**
**कालिका मर्मरी रक्ता**

कुमारस्य प्राक् पूर्वं दक्षिणं कर्णं योषितस्तु वामं वैद्यो विध्येत् । किं कुर्वन् । दक्षिणेन हस्तेन सूचीं दधन् । वामेन पाणिना पालिं दधन् । क विध्येत् । कर्णपीठस्य मध्यभागे किंचिन्मनाग्गंडस्थाने । कीदृशस्य बालस्य । सम्यङ्निश्चलं धृतस्य । क विध्येत् । दैवकृते छिद्रे । किंभूते । जरायुमात्रेण प्रच्छन्ने स्थगिते । तथा रविरश्मिभिरवभासित उद्योतिते । तथालक्तकरसेनांकिते चिह्निते । कथं विध्येत् । लाघवात् । सकृदेकवारमेव । तथा ऋजु स्पष्टं कृत्वा नोपरिष्टान्नाधस्तान्न पार्श्वतो विध्येत् । कुत इत्याह । हि यस्मात्तत्र शिरा आश्रिताः । ता एवाह । कालिकेत्यादि ।

**तद्व्यधाद्रागरुग्ज्वराः ।**
**सशोफदाहसंरंभमन्यास्तंभापतानकाः ॥ ३४ ॥**

तासां च व्यधाद्रागादयः स्युः ।

**तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितम् ।**

तेषां च रोगादीनां यथास्वं निरूप्य चिकित्सितं कुर्यात् ।

**स्थाने व्यधान्न रुधिरं न रुग्रागादिसंभवः ॥ ३५ ॥**

स्थाने व्यधान्न रुधिरं स्रवति न रुगादीनां संभवः ।

**स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।**
**आमे तैलेन सिंचेच्च बहलां तद्वदारया ॥ ३६ ॥**
**विध्येत्पालीं हितभुजः संचार्याथ स्थवीयसी ।**
**वर्तिर्त्र्यहात्ततो रूढं वर्धयेत शनैः शनैः ॥ ३७ ॥**

अनु कर्णव्यधस्य पश्चात् सूत्रं स्नेहलिप्तं सूच्यनुस्यूतं कर्णे निधापयेत् । आमे तैलेन सेचयेत् । बहलां घनां पालीं तद्वत्पूर्ववदारया विध्येद्धिताशिनः सतः । अनंतरं त्र्यहादूर्ध्वं स्थूलतरा वर्तिः संचार्या ततो रूढं कर्णं शनैः शनैर्वर्धयेत् ।

**अथैनं जातदशनं क्रमेणापानयेत्स्तनात् ।**
**पूर्वोक्तं योजयेत्क्षीरमन्नं च लघु बृंहणम् ॥ ३८ ॥**

अनंतरमेनं शिशुं जातदंतं संतं स्तनात् क्रमेणापसारयेत् । न सहसा । पूर्वोक्तं छागादिकं क्षीरमन्नं च लघु बृंहणं योजयेत् ।

**प्रियालमज्जमधुकमधुलाजासितोपलैः ।**
**अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ३९**
**दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।**
**संग्राही धातुकीपुष्पशर्करालाजतर्पणैः ॥ ४० ॥**

प्रियालादिभिर्मोदकोऽपस्तनस्य शिशोः प्रीणनो योज्यः । बालबिल्वादिभिर्दीपनो मोदको योज्यः । धातुक्यादिभिः संग्राही योज्यः ।

**रोगांश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ।**
**अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥४१॥**

यथावस्थमस्य शिशोः सौम्यैरौषधैरविषादकैरक्षोभकैरामयान् जयेत् । विरेकमतिशयेन वर्जयेदात्ययिकं व्याधिमंतरेण ।

**त्रासयेन्नाविधेयं तं त्रस्तं गृह्णंति हि ग्रहाः ।**

न च तं बालमविधेयमनायत्तं कृत्वा त्रासयेन्न भाययेत् । यतस्त्रस्तं बालं ग्रहा गृह्णंति ।

**वस्त्रवातात्परस्पर्शात् पालयेल्लंघिताच्च तम् ॥४२॥**

वस्त्रवातादिभ्यश्च तं रक्षयेत् ।

**ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैंधवैः ।**
**सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद्घृतम् ४३**
**आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ।**

ब्राह्म्यादिभिः कल्कीकृतैः साधितं सर्पिर्वाङ्मेधाकृत् । आयुष्यं पाप्मादिहृद्भूतोन्मादनिबर्हणं च ।

**वचेंदुलेखा मंडूकी शंखपुष्पी शतावरी ॥ ४४ ॥**
**ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ।**
**अष्टांगं विपचेत्सर्पिः प्रस्थं क्षीरं चतुर्गुणम्॥४५॥**
**तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ।**

वचादिभिः पालिकैश्चतुर्गुणक्षीराद् घृतप्रस्थमष्टांगं पचेत् । अष्टावंगानि वचादीनि यस्मिंस्तदष्टांगम् । एतत्पीतं धन्यादिगुणम् ।

**अजाक्षीराभयाव्योषपाठोग्राशिग्रुसैंधवैः ॥४६॥**
**सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ।**

अजाक्षीरादिभिः सिद्धं सारस्वतं घृतं वाङ्मेधादिकरम् ।

**वचामृताशठीपथ्याशंखिनीवेल्लनागरैः ॥ ४७ ॥**
**अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ।**

वचादिभिः साधितं घृतं पूर्वेण समानम् ।

**हेमश्वेतवचाकुष्ठमर्कपुष्पी सकांचना ॥ ४८ ॥**
**हेममत्स्याक्षकः शंखः कैडर्यः कनकं वचा ।**
**चत्वार एते पादोक्ताः प्राश्या मधुघृतप्लुताः॥४९॥**
**वर्षं लीढा वपुर्मेधाबलवर्णकराः शुभाः ।**

हेमादिश्लोकोक्ताः पादिकाश्चत्वारो योगा मधुघृताभ्यां सद्रवा वर्षं लीढा वपुरादिकृतः शुभाः ।

**वचायष्ट्याह्वसिंधूत्थपथ्यानागरदीप्यकैः ॥ ५० ॥**
**शुद्ध्यते वाग्घविर्लीढैः सकुष्टकणजीरकैः ।**

वचादिभिः सर्पिर्लीढैर्वाक् शस्यते शुध्यत इति चिंत्यम् । कर्मवत्कर्मकर्तेत्यस्य त्वविषयः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने बालोपचरणीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अस्मादनंतरं बालस्योपचर्यमाणस्य ये रोगास्तच्चिकित्सार्थो बालामयप्रतिषेध उच्यते ।

**अथाऽतो बालामयप्रतिषेधं व्याख्यास्यामः ॥**
**त्रिविधः कथितो बालः क्षीरान्नोभयवर्तनः ।**
**स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसंभवः १**

बालस्त्रिःप्रकारः कथितो मुनिभिः क्षीरवर्तनोऽन्नवर्तन उभयवर्तनश्च । क्षीरान्नाभ्यां यो वर्तते ताभ्यामन्नक्षीराभ्यामदुष्टाभ्यां स्वास्थ्यं भवति । दुष्टाभ्यां तु क्षीरान्नाभ्यां रोगोद्भूतिः ।

शुद्धं क्षीरं लक्षयति ।

**यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ।**
**तद्विशुद्धं पयः**

यत् क्षीरं जलेनैकतां यति वातादिदोषैश्चानधिष्ठितम् । तद्विशुद्धम् ।

दुष्टस्य लक्षणमाह ।

**वाताद्दुष्टं तु प्लवतेऽम्भसि ॥२॥**
**कषायं फेनिलं रूक्षं वर्चोमूत्रविबंधकृत् ।**

वातदुष्टं क्षीरं जले प्लवते तरति नैकतां गच्छति । कषायादिगुणयुक्तं च स्यात् ।

**पित्ताद्दुष्टाम्लकटुकं पीतराज्यप्सु दाहकृत् ॥ ३ ॥**

पित्ताद्दुष्टं क्षीरमुष्णाम्लकटुकम् । तथा तोये प्रक्षिप्तं पीतराजि स्याद्दाहकरं च ।

**कफात्सलवणं सांद्रं जले मज्जति पिच्छिलम् ।**

कफात् क्षीरं दुष्टं सलवणं घनं च स्यात् । अप्सु च मज्जति ।

**संसृष्टलिंगं संसर्गात्त्रिलिंगं सान्निपातिकम् ॥ ४ ॥**

संसर्गाद्दुष्टं क्षीरं संसृष्टलिंगं स्यात् । सान्निपातिकं क्षीरं त्रिलिंगं च स्यात् ।

**यथास्वलिंगांस्तद्व्याधीन् जनयत्युपयोजितम् ।**

तच्च क्षीरमुपयोजितं बालस्य च यथास्वलिंगान् व्याधीन् जनयति ।

**शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥**

बालस्य तीक्ष्णां खरामतीक्ष्णां च रुजं पीडां रोदनाल्लक्षयेत् । अतिरोदनेन किंचिद्रोदनेन च यथायोगं रुजं विद्यादित्यर्थः ।

**सोयं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।**
**तत्र विद्याद्रुजं**

यं देहदेशं स भृशं स्पृशेद्यत्र च देहदेशः स्पर्शनाक्षम एव स्यात् तत्र देशे रुजं विद्यात् ।

**मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥**
**हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडितैः ।**
**कोष्ठे विबंधवमथुस्तनदंशांत्रकूजनैः ॥ ७ ॥**
**आध्मानपृष्ठनमनजठरोन्नमनैरपि ।**
**वस्तौ गुह्ये च विण्मूत्रसंगत्रासदिगीक्षणैः ॥ ८ ॥**

शिरसि पीडामक्षिनिमीलनाद्विनाशहेतुमत एव जिह्वौष्ठदशनादिभिर्हृदि पीडां विद्यात् । विबंधादिभिराध्मानादिभिः कोष्ठरुजं विद्यात् । बस्तौ गुह्ये च पीडां विट्संगादिभिर्विद्यात् ।

**अथ धात्र्याः क्रियां कुर्याद्यथादोषं यथामयम् ।**

अथानंतरमेवं ज्ञात्वा धात्र्या वैद्यो यथादोषं यथारोगं क्रियां कुर्यात् ।

**तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ ९ ॥**
**अथवाग्निवचापाठाकटुकाकुष्टदीप्यकम् ।**
**सभार्गीदारुसरलवृश्चिकालीकणेपणम् ॥ १० ॥**

तत्र तेषु वातेन दुष्टे स्तन्ये त्रीणि दिनानि दशमूलं पिबेत् । अथवा चित्रकादीनि क्वथितानि त्र्यहं पिबेत् ।

**ततः पिबेदन्यतमं वातव्याधिहरं घृतम् ।**
**अनुचाच्छसुरामेवं स्निग्धं मृदु विरेचयेत् ॥ ११ ॥**
**वस्तिकर्म ततः कुर्यात्स्वेदादींश्चानिलापहान् ।**

अनंतरं वातव्याधिचिकित्सितोक्तं घृतं पिबेत् । पश्चादच्छसुरां पिबेत् । एवं स्निग्धां सतीं मृदु विरेचयेदारग्वधेन । अनंतरं बस्तिकर्म कुर्यात् । स्वेदनादींश्च मारुतापहान् । आदिशब्देनाभ्यंगादेर्ग्रहः ।

**रास्नाजमोदासरलदेवदारुरजोन्वितम् ॥ १२ ॥**
**बालो लिह्याद् घृतं तैर्वा विपक्वं ससितोपलम् ।**

रास्नादिचूर्णान्वितं शिशुः सर्पिर्लिह्यात् । अथवा तैः सिद्धं सशर्करं घृतं लिह्यात् ।

**पित्तदुष्टेऽमृताभीरुपटोलीनिंबचंदनम् ॥ १३ ॥**
**धात्री कुमारश्च पिबेत् क्वाथयित्वा ससारिवम् ।**
**अथवा त्रिफलामुस्तभूनिंबकटुरोहिणीः ॥ १४ ॥**
**सारिवादिं पटोलादिं पद्मकादिं तथा गणम् ।**

पित्तदुष्टे गुडूच्यादीनि क्राथयित्वा बालः पिबेत्। धात्री च। अथवा त्रिफलादीन् पिबेत्। अथवा सारिवादिगणं पिबेत्।

**घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम् १५**
**शीतांश्चाभ्यंगलेपादीन् युंज्यात्**

अथ सारिवादिगणैः पृथक् पृथक् सिद्धानि घृतानि लिह्यात्। विरेचनद्रव्यं च पित्तघ्नं कुर्यात्। अभ्यंगादींश्च शीतान् युंज्यात्।

**श्लेष्मात्मके पुनः।**
**यष्ट्याह्वसैंधवयुतं कुमारं पाययेद् घृतम्॥ १६॥**
**सिंधूत्थपिप्पलीमद्वा पिष्टैः क्षौद्रयुतैरथ।**
**राठपुष्पैः स्तनौ लिंपेच्छिशोश्च दशनच्छदौ॥१७॥**
**सुखमेवं वमेद्बालः**

श्लेष्मदुष्टे स्तन्ये मधुयष्टीसैंधवयुतं घृतं बालं पाययेत्। सैंधवपिप्पलीयुक्तं घृतं वा पाययेत्। मदनकुसुमैर्माक्षिकयुतैः स्तनौ लिंपेत्। बालस्य चोष्ठौ लिंपेत्। एवं कृते सति बालः सुखं वमेत्।

**तीक्ष्णैर्धात्रीं तु वामयेत्।**
**अथाचरितसंसर्गी मुस्तादिं क्वथितं पिबेत् ॥१८॥**
**तद्वत्तगरपृथ्वीकासुरदारुकलिंगकान्।**
**अथवाऽतिविषामुस्तषड्ग्रंथापंचकोलकम् ॥१९॥**

धात्रीं तीक्ष्णैर्वमनैर्वामयेत्। अनंतरं कृते संसर्गे सति मुस्तादिं क्वथितं पिबेत्। तगरादीन् वाऽतिविषादीन् वा पिबेत्।

**स्तन्ये त्रिदोषमलिने दुर्गंध्यामं जलोपमम्।**
**विबद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते॥२०॥**
**शकृन्नानाव्यथावर्णं मूत्रं पीतं सितं घनम्।**
**ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृंभिकाः ॥२१॥**
**अंगभंगोऽगविक्षेपः कूजनं वेपथुर्भ्रमः।**
**घ्राणाक्षिमुखपाकाद्या जायंतेऽन्येऽपि तं गदम् २२**
**क्षीरालसकमित्याहुरत्ययं चातिदारुणम्।**

त्रिदोषदुष्टे स्तन्ये दुर्गंध्यादिगुणं शकृदुपवेश्यते। तथा नानाव्यथावर्णं मूत्रं च पीतं सितं घनं स्त्यानं च स्यात्। तथा ज्वरादयोऽन्येऽप्येवंप्रकारा रोगा जायंते। तमीदृशं गदं क्षीरालसकमिति कथयंति। अत्ययं विनाशहेतुः। अत एवातिदारुणम्।

**तत्राशु धात्रीं बालं च वमनेनोपपादयेत्॥ २३॥**

तत्र क्षीरालसके शीघ्रमेव धात्रीं बालं च वमनेनोपक्रमेत्।

**विहितायां च संसर्ग्यां वचादिं योजयेद्गणम्।**
**निशादिं वाऽथवा माद्रीपाठातिक्ताघनामयान् २४**

संसर्ग्यां पेयादिके क्रमे कृते वचादिं निशादिं वा गणं प्रयोजयेत्। माद्रयादीन् वा योजयेत्।

५८

**पाठाशुंठ्यमृतातिक्ततिक्तादेवाह्वसारिवाः।**
**समुस्तमूर्वेंद्रयवाः स्तन्यदोषहराः परम्॥ २५॥**

पाठादय उपयुक्ताः परं स्तन्यदोषहराः। तिक्तः किराततिक्तः।

**अनुबंधे यथाव्याधि प्रतिकुर्वीत कालवित्।**

अनुबंधे तु सति यथारोगं चिकित्सितं कुर्याद्वैद्यः।

**दंतोद्भेदश्च रोगाणां सर्वेषामपि कारणम्॥२६॥**
**विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम्।**
**अतिस्पंदस्य पोथक्या विसर्पस्य च जायते॥२७॥**

रोगाणां च सर्वेषामपि दंतोद्भेदो हेतुर्जायते। विशेषेण ज्वरादीनां हेतुः संपद्यते।

**पृष्ठभंगे विडालानां बर्हिणां च शिखोद्गमे।**
**दंतोद्भवे च बालानां नहि किंचिन्न दूयते॥२८॥**

मार्जाराणां पृष्ठभंगे सति मयूराणां शिखोद्गमे सति दंतोत्थाने शिशूनां न किंचिन्न दूयते। अपि तु सर्वाण्यंगानि पीड्यंत इत्यर्थः।

**यथादोषं यथारोगं यथोद्रेकं यथाशयम्।**
**विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् २९**

तत्र दोषानुसारेण तथा दोषाधिक्यानुसारेण तथा दोषाधिक्यानुरोधेन रोगानुसारेण तद्देशकालसत्वसात्म्यप्रकृतीर्निरूप्य चौषधं प्रयोजयेत्।

**त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत्।**
**अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥३०॥**
**सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनात्।**

यद्यस्मात्त एव वातादयो दोषास्त एव रसादयो दूष्या ज्वरादयश्च रोगाः पूर्वोक्तास्त एव तस्मादेव पूर्वोक्तं भैषज्यम्। अस्य तु बालस्य मात्रा कनीयसी। कुतोऽस्य ह्रस्वतरा मात्रेत्याह। सौकुमार्येत्यादि।

**स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ३१**
**सद्यस्तान्वमनं तस्मात्पाययेन्मतिमान् मृदु।**

शिशवः सर्वदैव स्निग्धाः कुतो घृतक्षीरनिषेवणात्। यतश्चैवं तस्मात् तान् बालान् सद्यो वमनं मृदु धीमान् पाययेत्।

**स्तन्यस्य तृप्तं वमयेत् क्षीरक्षीरान्नसेविनम्॥३२॥**

क्षीरसेविनं तथा क्षीरान्नसेविनं बालं स्तन्यस्य तृप्तं संतं वामयेत्। स्तन्यस्य तृप्तमित्यधिकरणवाचिनश्चेति षष्ठी। वामयेदिति ग्लास्नावनुवमां चेति मित्वविकल्पः।

**पीतवंतं तनुं पेयामन्नादं घृतसंयुताम्।**

अन्नादं बालं तनुमघनां पेयां ससर्पिष्कां पीतवंतं वामयेत्।

**वस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ॥ ३३ ॥**
**युंज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ।**

विरेकेण साध्ये रोगे बस्तिं युंज्यात् । मर्शेन साध्ये रोगे प्रतिमर्शं युंज्यात् । विरेचनादीन् पुनर्यथोदितान् धात्र्या एव युंज्यात् ।

**मूर्वाव्योषवराकोलजंबूत्वक्दारुसर्षपाः ॥ ३४ ॥**
**सपाठा मधुना लीढाः स्तन्यदोषहराः परम् ।**

मूर्वादयो मधुना लीढाः सुष्ठु स्तन्यदोषहराः ।

**दंतपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ ३५ ॥**
**पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ।**

शिशोर्दंतपालीं पिप्पल्याश्चूर्णेन समाक्षिकेण प्रतिसारयेत् । अथवा धातकीपुष्पादिकृतेन चूर्णेन प्रतिसारयेत् ।

**लावतित्तिरवल्लूररजः पुष्परसप्लुतम् ॥ ३६ ॥**
**द्रुतं करोति बालानां दंतकेसरवन्मुखम् ।**

लावादिचूर्णं माक्षिकद्रवीकृतमुपयुक्तं शिशूनां शीघ्रं दंतकेसरवन्मुखं करोति । दंता एव केसरं तद्विद्यते यस्मिन्निति मतुप् ।

**वचाद्विबृहतीपाठाकटुकातिविषाघनैः ॥ ३७ ॥**
**मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ।**

वचादिभिः पक्वं घृतं दंतोत्थाने सिद्धमव्याहतशक्तित्वात् ।

**रजनी दारुसरलश्रेयसी बृहतीद्वयम् ॥ ३८ ॥**
**पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ।**
**ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ३९ ॥**
**अतीसारज्वरश्वासकामलापांडुकासनुत् ।**
**बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ४० ॥**

रजन्यादिचूर्णं माक्षिकयुक्तेन सर्पिषा लीढं ग्रहण्या दीपनं सुष्ठु वातस्य चानुलोमनम् । तथाऽतीसारादिजित् । बालस्य सर्वामयेषु हितं बलवर्णदं च ।

**समंगाधातकीरोध्रकुटंनटबलाह्वयैः ।**
**महासहाक्षुद्रसहाक्षुद्रविल्वशलाटुभिः ॥ ४१ ॥**
**सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।**
**क्षीरमस्तुयुतं हंति शीघ्रं दंतोद्भवोद्भवान् ॥ ४२ ॥**
**विविधानामयानेतद्वृद्धकश्यपनिर्मितम् ।**

समंगादिभिः सामान्यपरिभाषया तोये साधितं घृतं क्षीरमस्तुयुतं पक्वं दंतोत्थान् रोगाननेकप्रकारान् हंति । एतच्च वृद्धकश्यपेन निर्मितम् ।

**दंतोद्भवेषु रोगेषु न बालमतियंत्रयेत् ॥ ४३ ॥**
**स्वयमप्युपशाम्यंति जातदंतस्य यद्गदाः ।**

दंतोद्भवेषु रोगेषु बालं नातीव यंत्रयेत् । पथ्यभोजनादिना नातीव नियमयेत् । यथाऽन्यरोगिणम् । किमित्याह । यद्यस्मात्स्वयमेव चिकित्सामंतरेणाऽपि जातदंतस्य सतो बालस्य रोगाः प्रशाम्यंति ।

**अत्यहःस्वप्नशीतांबुश्लैष्मिकस्तन्यसेविनः ॥ ४४ ॥**
**शिशोः कफेन रुद्धेषु स्रोतःसु रसवाहिषु ।**
**अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते ॥४५॥**
**कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ।**

भृशं दिवास्वप्नादिसेविनोऽर्भकस्य कफेन रसवाहिषु स्रोतःसु रुद्धेषु सत्स्वरोचकादयः प्रादुर्भवंति । ततस्तेषु जातेषु कुमारः शुष्यति । स्निग्धं शुक्लं वदननयनं यस्य स एवंभूतः सन् ।

**सैंधवव्योषशार्ङ्गेष्टापाठागिरिकदंबकान् ॥ ४६ ॥**
**शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ।**

तस्याऽरोचकादिषु सैंधवादीन् समधुघृतान् योजयेत् ।

**अशोकरोहिणीयुक्तं पंचकोलं च चूर्णितम्॥४७॥**
**बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम् ।**

तथा पंचकोलं रजीकृतमशोककटुकाभ्यां युक्तं योजयेत् । अथवा बदर्यादिचूर्णं वा सर्पिषा द्रवीकृतं योजयेत् ।

**स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ॥४८॥**
**निचुलोत्पलवर्षाभूभार्गीमुस्तैश्च कार्षिकैः ।**
**सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ४९**

स्थिरादिभिः कार्षिकैश्च घृतस्य प्रस्थार्धं सिद्धं परं स्रोतसां विशोधनम् ।

**सिंह्यश्वगंधा सुरसा कणागर्भं च तद्गुणम् ।**

सिंह्यादिभिर्घृतं पूर्वगुणम् ।

**यष्ट्याह्वपिप्पलीरोध्रपद्मकोत्पलचंदनैः ॥ ५० ॥**
**तालीससारिवाभ्यां च साधितं शोषजिद्घृतम् ।**

मधुयष्टिकादिभिः साधितं सर्पिः शोषजित् ।

**श्रृंगीमधूलिकाभार्गीपिप्पलीदेवदारुभिः ॥ ५१ ॥**
**अश्वगंधाद्विकाकोलीरास्नर्षभकजीवकैः ।**
**सूपपर्णीविडंगैश्च कल्कितैः साधितं घृतम् ॥५२॥**
**शशोत्तमांगनिर्यूहे शुष्यतः पुष्टिकृत्परम् ।**

शृंग्यादिभिः कल्कितैः शशस्य शिरःक्वाथेन साधितं शुष्यतो बालस्याऽतिपुष्टिकरम् ।

**वचावयस्थातगरकायस्थाचोरकैः श्रृतम् ॥ ५३ ॥**
**वस्तमूत्रसुराभ्यां च तैलमभ्यंजने हितम् ।**

वचादिभिश्छागमूत्रसुराभ्यां च सिद्धं तैलमभ्यंजने हितम् ।

**लाक्षारससमं तैलप्रस्थं मस्तुचतुर्गुणम् ॥ ५४ ॥**
**अश्वगंधानिशादारुकौंतीकुष्टाब्दचंदनैः ।**
**समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः ॥ ५५ ॥**
**सिद्धं लाक्षादिकं नाम तैलमभ्यंजनादिदम् ।**
**बल्यं ज्वरक्षयोन्मादश्वासापस्मारवातनुत् ॥५६॥**
**यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ।**

लाक्षारसतुल्यं तैलप्रस्थं मस्तुचतुर्गुणमश्वगंधादिभिः सामान्यपरिभाषोक्तप्रमाणैः सिद्धं लाक्षादिसंज्ञमेतत्तैलमभ्यंगाद् बल्यं ज्वरादिजित् यक्ष्मादिघ्नं गर्भिणीभ्यश्च हितम् ।

**मधुनाऽतिविषाशृंगीपिप्पलीर्लेहयेच्छिशुम् ५७**
**एकां वातिविषां कासज्वरछर्दिरुपद्रुतम् ।**

अतिविषादीन्मधुना कासादिपीडितं शिशुं बालं लेहयेत् । अथवाऽतिविषामेकां लेहयेत् ।

**पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा॥५८॥**
**द्विवार्ताकीफलरसं पंचकोलं च लेहयेत् ।**
**पिप्पली पंचलवणं कृमिजित्पारिभद्रकम् ॥५९॥**
**तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम् ।**
**लाभतः शल्यकश्वाविद्गोधर्क्षशिखिजन्मनाम् ६०**

पिप्पल्यादिकं तद्वत्पूर्ववत् मधुसर्पिषाऽऽलोड्य लिह्यात् । व्योषं तथा मधुसर्पिषा लिह्यात् । शल्यकादिजन्मनां रोम्णां चर्मणां च यथालाभं मषीं मधुघृताभ्यां लिह्यात् ।

**खदिरार्जुनतालीसकुष्टचंदनजे रसे ।**
**सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥६१॥**

खदिरादिरसे सक्षीरं सर्पिः पक्कमुपयुक्तं वमिं शमयति ।

**सदंतो जायते यस्तु दंताः प्राग्यस्य चोत्तराः ।**
**कुर्वीत तस्मिन्नुत्पाते शांतिकं च द्विजातये ॥ ६२॥**
**दद्यात्सदक्षिणं बालं नैगमेषं च पूजयेत्* ।**

यस्तु बालो दंतैः सह जायते यस्य वा दंताः प्रथममुपरिष्टाद् भवंति तस्मिंस्तथाविध उत्पात उत्पन्ने सति शांतिं च कुर्यात् । तं च बालं ब्राह्मणाय सदक्षिणं ससुवर्णादिकं दद्यात् । नैगमेषं च पूजयेत् ।

**तालुमांसे कफः क्रुद्धः कुरुते तालुकंटकम् ॥ ६३॥**
**तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ।**
**तालुपातस्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ॥ ६४॥**
**तृडास्यकंड्वक्षिरुजा ग्रीवादुर्धरता वमिः ।**

कफो मधुराद्यैस्तालुमांसे प्रकुपितस्तालुकंटकं कुर्यात् । तेन तालुकंटकेन शिरसि तालुप्रदेशे निम्नता स्यात् । तथा तालुनः पतनं स्तनद्वेषः कृच्छ्रेण स्तनपानं शकृच्च द्रवं स्यात् । तथा तृडाद्याः स्युः ।

**तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ॥ ६५॥**
**तालु तद्वत्कणाशुंठीगोशकृद्रससैंधवैः ।**

तत्र तालूत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् । तथैव कणादिभिः प्रतिसारयेत् ।

**शृंगवेरनिशाभृंगं कल्कितं वटपल्लवैः ॥ ६६ ॥**
**बध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ।**
**रसेन लिंपेत्ताल्वास्यं नेत्रे च परिषेचयेत् ॥ ६७ ॥**

तथा शुंठ्यादि कल्कितं वटपल्लवैर्बध्वा गोशकृता लिप्तं ततः कुकूले स्वेदयेत् । अनंतरं रसेन च ततः स्रुतेन ताल्वास्यं च लिंपेत् । तथा नेत्रे परिषेचयेत् ।

**हरीतकीवचाकुष्टकल्कं माक्षिकसंयुतम् ।**
**पीत्वा कुमारः स्तन्येन मुच्यते तालुकंटकात् ॥६८॥**

हरीतक्यादिकं माक्षिकयुक्तं स्तन्येन शिशुः पीत्वा तालुकंटकाद्विमुच्यते ।

**मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।**
**ताम्रो व्रणोऽतःकंडूमान् जायते भूर्युपद्रवः ॥ ६९ ॥**
**केचित्तं मातृकादोषं वदंत्यन्येऽपि पूतनम् ।**
**पृष्टारुर्गुदकुंदं च केचिच्च तमनामिकम् ॥ ७० ॥**

गुदे रक्तकफोद्भवो मलोपलेपात्स्वेदाद्वा ताम्रो व्रणः कंडूमानांतरो बहूपद्रवो जायते । तथाविधं केचिन्मातृदोषं कथयंति । अपरे च पूतनसंज्ञमित्याहुः । केचित्पृष्टारुरिति । केचित् गुदकुंदमिति केचिच्च तमनामिकं ब्रुवते ।

**तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः ।**

तत्र तस्मिन्ननेकनाम्नि रोगे धात्र्याः क्षीरं शोधनीयम् । कैः । पित्तश्लेष्महृद्भिरौषधैः ।

**शृतशीतं च शीतांबुयुक्तमंतरपानकम् ॥ ७१ ॥**
**सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ।**
**त्रिफलाबदरीप्लक्षत्वक्क्काथपरिषेचितम् ॥ ७२ ॥**
**कासीसरोचनातुत्थमनोह्वालरसांजनैः ।**
**लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत् ॥ ७३ ॥**
**सुश्लक्ष्णैरथवा यष्टीशंखसौवीरकांजनैः ।**
**सारिवाशंखनाभिभ्यामसनस्य त्वचाऽथवा॥७४॥**
**रागकंडूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।**

* क्षेपकावत्र ।
हनुमूलगतो वायुदर्तदंशोस्थिगोचरः ।
यदा शिशोः प्रकुपितो नोत्तिष्ठंति तदा द्विजाः ॥ १ ॥
रूक्षाशिनो वातिकस्य चालयत्यनिलः शिराः ।
हन्वाश्रयाः प्रसुप्तस्य दंतैः शब्दं करोत्यतः ॥ २ ॥

**सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ७५ ॥**

सह क्षौद्रेण वर्तते यत्तत्सक्षौद्रं च तत् तार्क्ष्यशैलं च तेन युक्तं शीतांबु। अंतरं च पानकं च हितम्। किंभूतम्। शृतशीतम्। अत्र च शीतमात्रस्य शीतत्वेनैव लब्धत्वाच्छीतांब्वित्यतिशयार्थम्। एवं हि पित्तोपशांतिर्भवति। अतएव च तत्सहितस्य कफस्य शमनाय माक्षिकरसांजनयोगोऽत्र कृतः। तेन च जलेन व्रणं लेपयेत्। कथंभूतं व्रणम्। त्रिफलादिकाथेन परिषेचितं संतं कासीसादिपिष्टैर्वा लेपयेत्। अथवा एतैरेव चूर्णितैर्व्रणमवचूर्णयेत्। अथवा मधुकादिभिः सुपिष्टैरवचूर्णयेत्। सारिवाशंखनाभिभ्यामवचूर्णयेत्। अथवाऽसनत्वचा लिंपेत्। रागकंड्वाधिके जलौकोभिरसृक्स्रावं कुर्यात्। जलौकसा। जातावित्येकवचनांतस्य प्रयोगो न दोषाय। तथा सल्लक्ष्यस्य दृष्टत्वात्। सर्वं चिकित्सितं पित्तव्रणतुल्यं गुदकुट्टके शस्यते।

**पाठावेल्लद्विरजनीमुस्तभार्गीपुनर्नवैः।**
**सबिल्वत्र्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम् ७६**
**लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः।**

पाठादिभिः पक्वं घृतं मात्रया लिहन् मृत्तिकोद्भवैरामयैर्मुच्यते।

**व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः।**
**स्थितो मुहूर्तं धौतोनु पीतस्तं तं जयेद्गदम्॥७७॥**

यस्य रोगस्य यदौषधमुक्तं तेनैवौषधेन स्तनः प्रलेपितो मुहूर्तमात्रं नाडिकाद्वयं यावद् विधृतः स्तनेन पश्चात् पीतस्तं तमनियतं रोगं जयेत्।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने बालामयप्रतिषेधो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः।

अस्मादनंतरं बालग्रहप्रतिषेध उच्यते। ग्रहाणामपि रोगहेतुत्वात्।

**अथाऽतो बालग्रहप्रतिषेधं व्याख्यास्यामः ॥**

बालानां ग्रहास्तेषां प्रतिषेधो यस्मिन्स बालग्रहप्रतिषेधस्तम्। शेषं पूर्ववत्।

**पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना।**
**मनुष्यविग्रहाः पंच सप्त स्त्रीविग्रहा ग्रहाः ॥१॥**

पूर्वं श्रीमहादेवेन कार्तिकेयस्य रक्षार्थं मनुष्यशरीराः पंच ग्रहा निर्मिताः। स्त्रीशरीराश्च सप्तोत्पादिताः।

**स्कंदो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः।**
**शकुनिः पूतना शीतपूतना दृष्टिपूतना ॥ २ ॥**
**मुखमंडलिका तद्वद्रेवती शुष्करेवती।**

स्कंदादयः पंच नररूपाः। शकुन्यादयः सप्त स्त्रीरूपाः।

**तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः ॥ ३ ॥**

तेषां ग्रहाणां ग्रहीष्यतामभिलष्यमाणानां रूपं प्रततं रोदनं ज्वरश्च।

**सामान्यं रूपमुत्त्रासजृंभाभ्रूक्षेपदीनताः।**
**फेनस्रावोर्ध्वदृष्ट्योष्ठदंतदंशप्रजागराः ॥ ४ ॥**
**रोदनं कूजनं स्तन्यविद्वेषःस्वरवैकृतम्।**
**नखैरकस्मात्परितः स्वधात्र्यंगविलेखनम् ॥ ५ ॥**

तेषां सामान्यं रूपमुत्त्रास इत्यादि स्वधात्र्यंगविलेखनांतम्।

**तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः।**
**हतैकपक्षः स्तब्धांगः सस्वेदो नतकंधरः ॥ ६ ॥**
**दंतखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरः।**
**वक्रवक्त्रो वमेल्लालां भृशमूर्ध्वं निरीक्षते ॥ ७ ॥**
**वसासृग्गंधिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः।**
**चलितैकाक्षिगंडभ्रूः संरक्तोभयलोचनः ॥ ८ ॥**
**स्कंदार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम्।**

तत्र तेषु ग्रहेषु मध्य एकलोचनः स्रवणशीलस्तथा शिरो विक्षिपत इत्यादिसंरक्तलोचनद्वयांतं स्कंदगृहीतस्य लक्षणम्। तेन वैकल्यं पंगुत्वकारणत्वादि मृत्युरेव वा ध्रुवं निश्चितं भवेत्।

संप्रति विशाखस्य स्कंदापस्मारापरसंज्ञस्य लक्षणमाह।

**संज्ञानाशो मुहुः केशलुंचनं कंधरानतिः ॥ ९ ॥**
**विनम्य जृंभमाणस्य शकृन्मूत्रप्रवर्तनम्।**
**फेनोद्वमनमूर्ध्वाक्षहस्तभ्रूपादनर्तनम् ॥ १० ॥**
**स्तनस्वजिह्वासंदंशसंरंभज्वरजागराः।**
**पूयशोणितगंधश्च स्कंदापस्मारलक्षणम् ॥ ११ ॥**

संज्ञानाशादिकं पूयशोणितगंधांतं स्कंदापस्मारलक्षणम्।

**आध्मानं पाणिपादास्यस्पंदनं फेननिर्वमः।**
**तृण्मुष्टिबंधातीसारस्वरदैन्यविवर्णताः ॥ १२ ॥**
**कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः।**
**ओष्ठदंशांगसंकोचस्तंभबस्तामगंधताः ॥ १३ ॥**
**ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः।**
**मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ १४ ॥**

मेषस्य नैगमेषापरसंज्ञस्याध्मानाद्येकनेत्रशोफांतं लक्षणम्।

**कफो द्दपितरोमत्वं स्वेदश्चक्षुर्निमीलनम्।**

बहिरायामनं जिह्वादंशोऽतः कंठकूजनम् ॥१५॥
धावनं विट्सगंधत्वं क्रोशनं श्वानवच्छुनि ।

शुनि श्वग्रहे कंप इत्यादिकं क्रोशनं श्वानवदित्यंतं लक्षणम् ।

रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ॥१६॥
कासातीसारवमथुजृंभातृट्शवगंधताः ।
अंगेष्वाक्षेपविक्षेपः शोपस्तंभविवर्णताः ॥ १७ ॥
मुष्टिबंधः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ।

पितृग्रहे रोमहर्ष इत्यादिकं बालस्य स्युरित्यंतं लक्षणम् ।

स्रस्तांगत्वमतीसारो जिह्वातालुगले व्रणाः ॥१८॥
स्फोटाः सदाहरुक्पाकाः संधिषु स्युः पुनः पुनः ।
निश्यह्नि प्रविलीयंते पाको वक्रे गुदेऽपि वा ॥१९॥
भयं शकुनिगंधत्वं ज्वरश्च शकुनिग्रहे ।

शकुनिग्रहे स्रस्तांगत्वमित्यादिकं ज्वरश्चेत्यंतं लिंगम् ।

पूतनायां वमिः कंपस्तंद्रा रात्रौ प्रजागरः ॥ २० ॥
हिध्माध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ।
स्रस्तहृष्टांगरोमत्वं काकवत्पूतिगंधता ॥ २१ ॥

वमिकंप इत्यादिकं काकवत्पूतिगंधतेत्यंतं पूतनाग्रहे लिंगम् ।

शीतपूतनया कंपो रोदनं तिर्यगीक्षणम् ।
तृष्णांत्रकूजोऽतीसारो वसावद्विस्रगंधता ॥ २२ ॥
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ।

शीतपूतनया कंपरोदनमित्यादिकमुष्णत्वमपरस्य चेत्येवमंतं शीतपूतनाग्रहे लिंगम् ।

अंधपूतनया छर्दिर्ज्वरः कासोऽल्पवह्निता ॥ २३ ॥
वर्चसो भेदवैवर्ण्यदौर्गंध्यान्यंगशोषणम् ।
दृष्टिसादोऽतिरुक्कंडूपोथकीजन्मशून्यताः ॥ २४ ॥
हिध्मोद्वेगस्तनद्वेषवैवर्ण्यं स्वरतीक्ष्णता ।
वेपथुर्मत्स्यगंधित्वमथवा साम्लगंधिता ॥ २५ ॥

छर्यादिकं साम्लगंधितेत्यंधपूतनाया दृष्टिपूतनापरसंज्ञाया लक्षणम् ।

मुखमंडितया पाणिपादस्य रमणीयता ।
सिराभिरसिताभाभिराचितोदरता ज्वरः ॥ २६ ॥
अरोचकोऽगग्लपनं गोमूत्रसमगंधता ।

मुखमंडितायां ग्रहे पाणिपादस्य रमणीयतेत्यादिकं लक्षणम् ।

रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ॥ २७ ॥
कासहिध्माक्षिविक्षेपवक्रवक्त्रस्वरक्तताः ।
वस्तगंधो ज्वरः शोषः पुरीषं हरितं द्रवम् ॥ २८ ॥

रेवत्यां रेवतीग्रहे श्यावनीलत्वादि लिंगम् ।

जायते शुष्करेवत्यां क्रमात्सर्वांगसंक्षयः ।

शुष्करेवत्यां क्रमात्सर्वांगसंक्षय इति लिंगम् ।
अधुनाऽत्राऽसाध्यलक्षणं वक्ति ।

केशशातोन्नविद्वेषः स्वरदैन्यं विवर्णता ॥ २९ ॥
रोदनं गृध्रगंधित्वं दीर्घकालानुवर्तनम् ।
उदरे ग्रंथयो वृत्ता यस्य नानाविधं शकृत् ॥ ३० ॥
जिह्वाया निम्नता मध्ये श्यावं तालु च तं त्यजेत् ।

केशशात इत्यादिकं श्यावतालुता चेत्यंतं बालस्य स्यात् । तत्र चिकित्सेत् ।

भुंजानोऽन्नं बहुविधं यो बालः परिहीयते ॥ ३१ ॥
तृष्णागृहीतक्षामाक्षो हंति तं शुष्करेवती ।

भुंजानोऽन्नं बहुविधमित्यादिलक्षणं बालं शुष्करेवती हंति ।
त्रिभिः कारणैर्ग्रहा गृह्णंतीत्याह ।

हिंसारत्यर्चनाकांक्षा ग्रहग्रहणकारणम् ॥ ३२ ॥

हिंसा रतिश्चार्चना च तासामाकांक्षाऽभिलाषः सा ग्रहाणां ग्रहणे हेतुः ।

तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः ।
क्षतजिह्वः क्वणेद् बाढमसुखी साश्रुलोचनः ॥ ३३ ॥
दुर्वर्णो हीनवचनः पूतिगंधिश्च जायते ।
क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ॥ ३४ ॥
हस्तौ चोद्यम्य संरब्धो हंत्यात्मानं तथा परम् ।
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥ ३५ ॥
अप्सु मज्जेत्पतेत्कूपे कुर्यादन्यच्च तद्विधम् ।
तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत् ॥ ३६ ॥
रक्तं च सर्वमार्गेभ्यो रिष्टोत्पत्तिश्च तं त्यजेत् ।

तत्र तेषु ग्रहेषु मध्याद्धिंसात्मके ग्रहे सति बालो महान्वा पुरुषः स्रुतनासिकादिर्जायते । तथा क्षामः सन्निदमिदं कुर्यात् । तद्विधमात्महननादिकमन्यदपि कुर्यात् । तृड्दाहमोहस्तथा छर्दनं च पूयस्य प्रवर्तयेत् । तथा सर्वस्रोतोभ्यो रक्तं च प्रवर्तयेत् । रिष्टोत्पत्तिं च । तं बालं नोपक्रमेत् ।

रहः स्त्रीरतिसंलापगंधस्रग्भूषणप्रियः ॥ ३७ ॥
हृष्टः शांतश्च दुःसाध्यो रतिकामेन पीडितः ।

रहः स्त्रीरत्यादिप्रियो हृष्टादिगुणो बालो रतिकामेन ग्रहेण पीडितः कृच्छ्रसाध्यः स्यात् ।
संप्रत्यर्चाकामं ब्रूते ।

दीनः परिमृशेद्वक्त्रं शुष्कोष्ठगलतालुकः ॥ ३८ ॥
शंकितं वीक्षते रौति ध्यायत्यायाति दीनताम् ।
अन्नमन्नाभिलाषेऽपि दत्तं नाति बुभुक्षते ॥ ३९ ॥
गृहीतं बलिकामेन तं विद्यात्सुखसाधनम् ।

दीनादिगुणः सन्निदमिदं करोति । तमेवंविधं बलिकामेन गृहीतं बालं सुखसाध्यं विद्यात् ।

अधुनैषां चिकित्सितमाह ।

**हंतुकामं जयेद्धोमैः सिद्धमंत्रप्रवर्तितैः ॥ ४० ॥**
**इतरौ तु यथाकामं रतिबल्यादिदानतः ।**

जिघांसुं ग्रहं होमादिभिर्जयेत् । ननु हिंसाकामोऽसाध्यस्तं त्यजेदित्युक्तं तत्कथं तस्य साधनमुक्तम् । ब्रूमः । असाध्यस्यापि चिकित्सा कार्यैव । तथा च संग्रहेऽभ्यधायि । तस्मादाचरमोच्छ्वासाचिकित्सेदित्यादि । अपि च मंत्रप्रभावस्याचिंत्यत्वाच । इतरौ तु रत्यर्चाकामौ यथाभिलाषं रतिबल्यादिदानेन जयेत् ।

**अथ साध्यग्रहं बालं विविक्ते शरणे स्थितम्॥४१॥**
**त्रिरह्नः सिक्तसंसृष्टे सदा सन्निहितानले ।**
**विकीर्णभूतिकुसुमपत्रबीजान्नसर्षपे ॥ ४२ ॥**
**रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि ।**
**व्यवायमद्यपिशितनिवृत्तपरिचारके ॥ ४३ ॥**
**पुराणसर्पिषाभ्यक्तं परिषिक्तं सुखांबुना ।**
**साधितेन बलानिंबवैजयंतीनृपद्रुमैः ॥ ४४ ॥**
**पारिभद्रककटुंगजंबूवरुणकट्तृणैः ।**
**कपोतवंकापामार्गपाटलामधुशिग्रुभिः ॥ ४५ ॥**
**काकजंघामहाश्वेताकपित्थक्षीरपादपैः ।**
**सकदंबकरंजैश्च धूपं स्नातस्य चाचरेत् ॥ ४६ ॥**
**द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ।**

अथेति । कृतमंगलं साध्यग्रहं बालं विविक्ते गृहे स्थितम् । किंभूते । त्रीन् वारान् शोधिते सिक्ते च । त्रिरह्न इति कृत्वोऽर्थप्रयोगे कालेऽधिकरण इत्यधिकरणे षष्ठी। तथा सर्वदा निकटाग्नौ । तथा विक्षिप्तभूत्यादिके । रक्षोघ्नतैलप्रदीपे प्रदीपहतपापे। व्यवायादिनिवृत्तपरिचारके।किंभूतं बालम् ।पुराणघृताभ्यक्तम् । तथा स्नातमुष्णांबुना । किंभूतेन जलेन । बलादिभिः साधितेन। वैजयंती अरणिका । महाश्वेता कटभी । परिषिक्तस्य चाप्यस्य द्वीप्यादिचर्मादिभिर्घृतमिश्रितैर्धूपनं कुर्यात् ।

**पूतीदशांगीसिद्धार्थवचाभल्लातदीप्यकैः ॥ ४७ ॥**
**सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ।**

पूत्यादिभिर्धूपः सर्वग्रहविमोक्षणः स्यात् । पूती पूतीकरंजः ।

**वचाहिंगुविडंगानि सैंधवं गजपिप्पली ॥ ४८ ॥**
**पाठा प्रतिविषा व्योषं दशांगः कश्यपोदितः ।**

वचादिदशांगः कश्यपेन विनिर्मितः धूपः सर्वग्रहजित् ।

**सर्षपा निंबपत्राणि मूलमश्वखुरा वचा ॥ ४९ ॥**
**भूर्जपत्रं घृतं धूपः सर्वग्रहनिवारणः ।**

सर्षपादिभिर्धूपोऽशेषग्रहनिवारणः । अश्वखुरा गिरिकर्णिका ।

**अनंताम्रास्थितगरं मरिचं मधुरो गणः ॥ ५० ॥**
**शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ।**
**दशमूलरसक्षीरं युक्तं तद् ग्रहजित्परम् ॥ ५१ ॥**

यवासादिभिः कल्कितैर्दशमूलरसक्षीरयुतं घृतं पिबेत् । तच्च शिशोः पथ्यम् । परं ग्रहजित् ।

**रास्नाध्वंशुमतीवृद्धपंचमूलवचाघनात् ।**
**क्वाथे सर्पिः पचेत्पिष्टैः सारिवाव्योषचित्रकैः ॥५२॥**
**पाठाविडंगमधुकपयस्याहिंगुदारुभिः ।**
**सग्रंथिकैः सेंद्रयवैः शिशोस्तत्सततं हितम् ॥ ५३॥**
**सर्वरोगग्रहहरं दीपनं बलवर्णदम् ।**

रास्नादिक्वाथसारिवादिभिः कल्कैः सर्पिः पचेत् । तच्च शिशोः सदा पथ्यं सर्वरोगग्रहघ्नं दीपनं बलवर्णदं च ।

**सारिवासुरभीब्राह्मीशंखिनीकृष्णसर्षपैः ॥ ५४ ॥**
**वचाश्वगंधासुरसायुक्तैः सर्पिर्विपाचयेत् ।**
**तन्नाशयेद्ग्रहान्सर्वान्पानेनाभ्यंजनेन च ॥ ५५ ॥**

सारिवादिभिः सुरसायुक्तैः सर्पिर्विपाचयेत् । तच्च पानाभ्यंजनाभ्यां सर्वग्रहनाशनम् ।

**गोशृंगलोमवालाहिनिर्मोकवृषदंशविट् ।**
**निंबपत्राज्यकटुका मदनं बृहतीद्वयम् ॥ ५६ ॥**
**कार्पासास्थियवच्छागरोमदेवाह्वसर्षपम् ।**
**मयूरपत्रश्रीवासं तुषकेशं सरामठम् ॥ ५७ ॥**
**मृद्भांडे बस्तमूत्रेण भावितं श्लक्ष्णचूर्णितम् ।**
**धूपनार्थं हितं सर्वं भूतेषु विषमे ज्वरे ॥ ५८ ॥**

गोशृंगादि सर्पनिर्मोकादि च मृन्मये भांडे छागमूत्रेण भावितं श्लक्ष्णरजीकृतं सर्वभूतेषु विषमज्वरे च धूपनार्थं हितम् ।

**घृतानि भूतविद्यायां वक्ष्यन्ते यानि तानि च ।**
**युंज्यात्तथा बलिं होमं स्नपनं मंत्रतंत्रवित् ५९ ॥**

यानि च सर्पींषि भूतविद्यायां वक्ष्यंते तानि च युंज्यात् । तथा मंत्राः संग्रहोक्ताः । मंत्राणि च तंत्राणि च तानि वेत्तीति मंत्रतंत्रविद् वैद्यो बलिं होमं स्नपनं च युंज्यात् ।

**पूतीकरंजत्वक्पत्रं क्षीरिभ्यो बर्बरादपि ।**
**तुंबीविशालारलुकाशमीबिल्वकपित्थकाः ॥६०॥**
**उत्क्वाथ्य तोयं तद्रात्रौ बालानां स्नपनं शिवम् ।**

पूतीकरंजत्वक् तथा पत्रं क्षीरिवृक्षाद्बर्बरादिभ्यश्च तोयमुत्क्वाथ्य तद्रात्रौ बालानां स्नपनं शिवं स्यात् ।

**अनुबंधान्यथा कृच्छ्रं ग्रहापायेप्युपद्रवान् ।**
**बालामयनिषेधोक्तभेषजैः समुपाचरेत् ॥ ६१ ॥**

अनुबंधाद् यथा कृच्छ्रं तथा ग्रहाणामपायो मोक्षः ये चोपद्रवास्तांश्च बालामयप्रतिषेधाध्यायोक्तैरौषधैः समुपक्रमेत् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने बालग्रहप्रतिषेधो नाम तृतीयोऽध्यायः॥३॥

**इत्यष्टांगहृदये कौमारतंत्रं द्वितीयं समाप्तम् ।**

---

## चतुर्थोऽध्यायः ।

अधुना भूतविद्याज्ञानाध्यायारंभो ग्रहसामान्यात् ।

**अथाऽतो भूतविज्ञानं व्याख्यास्यामः ॥**

**लक्षयेज्ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।**
**पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ १ ॥**

यत्र पुरुषे ज्ञानाद्यपौरुषं लक्षयेत् तत्र भूतग्रहं वदेत् । इति सामान्यं भूतविज्ञानम् ।

**भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः ।**
**यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत् ॥ २ ॥**
**सोऽष्टादशविधो देवदानवादिविभेदतः ।**

यस्य भूतस्य रूपादेरनुकारं यादृशं भजेत् तेन तं पुरुषमधिष्ठितं गृहीतं वदेत् । स भूतोऽष्टादशप्रकारो देवादिभेदेन ।

**हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोऽथवा ॥ ३ ॥**
**प्रज्ञापराधः सुतरां तेन कामादिजन्मना ।**
**लुप्तधर्मव्रताचारः पूज्यानप्यतिवर्तते ॥ ४ ॥**
**तं तथा भिन्नमर्यादं पापमात्मोपघातिनम् ।**
**देवादयोप्यनुघ्नंति ग्रहाश्छिद्रप्रहारिणः ॥ ५ ॥**

तस्य भूतस्यानुषंगे प्रज्ञापराधः सद्योऽधुना ततः पूर्वजन्मकृतो वा हेतुः । तेन प्रज्ञापराधेन कामक्रोधादिजेन सुतरां नष्टधर्मव्रताचारः सन् पूज्यानप्यतिक्रामति । तं पुरुषं तथा लुप्तधर्मव्रताचारत्वाद्भिन्नमर्यादं देवादयो ग्रहा अप्यत्यंतमर्यादातिक्रमादनु पश्चाद् घ्नंति । न केवलं हिंसात्मकानां क्षमा इति द्योतनार्थोऽपिशब्दः । कीदृशास्ते । छिद्रप्रहारिणः । हेतावियं प्रथमा । छिद्रप्रहारित्वादित्यर्थः ।

**छिद्रं पापक्रियारंभः पाकोऽनिष्टस्य कर्मणः ।**
**एकस्य शून्येऽवस्थानं श्मशानादिषु वा निशि ॥६॥**
**दिग्वासस्त्वं गुरोर्निंदा रतेरविधिसेवनम् ।**
**अशुचेर्देवतार्चादिपरसूतकसंकरः ॥ ७ ॥**
**होममंत्रबलीज्यानां विगुणं परिकर्म च ।**
**समासाद्दिनचर्यादिप्रोक्ताचारव्यतिक्रमः ॥ ८ ॥**

छिद्रं पापक्रियारंभ उच्यते । स चाशुभस्य कर्मणः पाकः फलम् । एकस्याद्वितीयस्य शून्ये स्थाने वा स्थितिः । अथवा श्मशानादिषु निश्यवस्थितिः । तथा नग्नेत्यादि । किंवा बहुनोदितेन संक्षेपेण दिनचर्यादिकथितस्याचारस्य च व्यतिक्रम इति ग्रहग्रहणे हेतुः ।

**गृह्णंति शुक्लप्रतिपत्त्रयोदश्योः सुरा नरम् ।**
**शुक्लत्रयोदशीकृष्णद्वादश्योर्दानवा ग्रहाः ॥ ९ ॥**
**गंधर्वास्तु चतुर्दश्यां द्वादश्यां चोरगाः पुनः ।**
**पंचम्यां शुक्लसप्तम्येकादश्योस्तु धनेश्वराः ॥ १० ॥**
**शुक्लाष्टपंचमीपूर्णमासीषु ब्रह्मराक्षसाः ।**
**कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्वसु ॥ ११ ॥**
**दशामावास्ययोरष्टनवम्योः पितरोपरे ।**
**गुरुवृद्धादयः प्रायः कालं संध्यासु लक्षयेत् ॥ १२॥**

देवाः शुक्लप्रतिपदि शुक्लत्रयोदश्यां च नरं गृह्णंति । शुक्लत्रयोदश्यां कृष्णद्वादश्यां च दानवाः । गंधर्वास्तु चतुर्दश्यां द्वादश्यां च । सर्पास्तु पंचम्यां शुक्लपक्षस्य सप्तम्याम् । एकादश्यां च यक्षा गृह्णंति । शुक्लाष्टम्यादिषु ब्रह्मराक्षसा गृह्णंति । रक्षःपिशाचादयः कृष्णपक्षं नवमीद्वादश्योः पर्वसु गृह्णते । दशम्यादिषु पितरो गृह्णंति। अपरेऽनुक्ता गुरुवृद्धादयोऽष्टमीनवम्योर्गृह्णंति । पूर्वोक्तेष्वेव तिथिषु प्रायेण बाहुल्येन ग्रहणकालं संध्यासु पूर्वादिषु जानीयात् ।

**फुल्लपद्मोपममुखं सौम्यदृष्टिमकोपनम् ।**
**अल्पवाक्स्वेदविण्मूत्रं भोजनानभिलाषिणम् १३**
**देवद्विजातिपरमं शुचिसंस्कृतवादिनम् ।**
**मीलयंतं चिरान्नेत्रे सुरभिं वरदायिनम् ॥ १४ ॥**
**शुक्लमाल्यांबरसरिच्छैलोच्चभवनप्रियम् ।**
**अनिद्रमप्रधृष्यं च विद्याद्देववशीकृतम् ॥ १५ ॥**

फुल्लपद्मोपममुखमित्यादिं देवग्रहगृहीतं विद्यात् ।

**जिह्मदृष्टिं दुरात्मानं गुरुदेवद्विजद्विषम् ।**
**निर्भयं मानिनं शूरं क्रोधनं व्यवसायिनम् ॥ १६ ॥**
**रुद्रः स्कंदो विशाखोऽहमिंद्रोऽहमिति वादिनम् ।**
**सुरामांसरुचिं विद्यात् दैत्यग्रहगृहीतकम् ॥ १७ ॥**

जिह्मदृष्टिमित्यादिलक्षणलक्षितं दैत्यवशीकृतं विद्यात् ।

**स्वाचारं सुरभिं हृष्टं गीतनर्तनकारिणम् ।**
**स्नानोद्यानरुचिं रक्तवस्त्रमाल्यानुलेपनम् ॥ १८ ॥**
**शृंगारलीलाभिरतं गंधर्वाध्युषितं वदेत् ।**

स्वाचारमित्यादिलक्षणलक्षितं गंधर्वेण गृहीतं विद्यात् ।

**रक्ताक्षं क्रोधनं स्तब्धदृष्टिं वक्रगतिं चलम् ॥ १९ ॥**
**श्वसंतमनिशं जिह्वालालिनं सृक्किणीलिहम् ।**
**प्रियदुग्धगुडस्नानमधोवदनशायिनम् ॥ २० ॥**
**उरगाधिष्ठितं विद्यात्त्रस्यंतं चातपत्रतः ।**

रक्ताक्षमित्यादिलक्षणं छत्राच्च त्रसंतं सर्पाधिष्ठितं विद्यात् ।

**विप्लुतं त्रस्तरक्ताक्षं शुभगंधं सुतेजसम् ॥ २१ ॥**
**प्रियनृत्यकथागीतस्नानमाल्यानुलेपनम् ।**
**मत्स्यमांसरुचिं हृष्टं तुष्टं बलिनमव्ययम् ॥ २२ ॥**

चलिताग्रकरं कस्मै किं ददामीति वादिनम् ।
रहस्यभाषिणं वैद्यद्विजातिपरिभाविनम् ॥ २३ ॥
अल्परोषं द्रुतगतिं विद्याद्यक्षगृहीतकम् ।

विप्लुतत्रस्तमित्यादिलक्षणं यक्षगृहीतं विद्यात् ।

हास्यनृत्यप्रियं रौद्रचेष्टं छिद्रप्रहारिणम् ॥ २४ ॥
आक्रोशिनं शीघ्रगतिं देवद्विजभिषग्द्विषम् ।
आत्मानं काष्ठशस्त्राद्यैर्घ्नंतं भोःशब्दवादिनम् ॥२५॥
शास्त्रवेदपठं विद्याद् गृहीतं ब्रह्मराक्षसैः ।

हास्यनृत्यप्रियमित्यादिलक्षणं ब्रह्मराक्षसगृहीतं विद्यात् ।

सक्रोधदृष्टिं भ्रुकुटिमुद्वहंतं ससंभ्रमम् ॥ २६ ॥
प्रहरंतं प्रधावंतं शब्दंतं भैरवाननम् ।
अन्नाद्विनापि बलिनं नष्टनिद्रं निशाचरम् ॥ २७ ॥
निर्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ।
रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम् ॥ २८ ॥
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ ।
हसंतमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥ २९ ॥

सक्रोधदृष्टिमित्यादिलक्षणं राक्षसाधिष्ठितं वदेत् ।

अस्वस्थचित्तं नैकत्र तिष्ठंतं परिधाविनम् ।
उच्छिष्टनृत्यगांधर्वहासमद्यामिषप्रियम् ॥ ३० ॥
निर्भर्त्सनाद्दीनमुखं रुदंतमनिमित्ततः ।
नखैर्लिखंतमात्मानं रूक्षध्वस्तवपुःस्वरम् ॥ ३१ ॥
आवेदयंतं दुःखानि संबद्धाबद्धभाषिणम् ।
नष्टस्मृतिं शून्यरतिं लोलं नग्नं मलामसम् ॥ ३२ ॥
रथ्याचैलपरीधानं तृणमालाविभूषणम् ।
आरोहंतं च काष्ठाश्वं तथा संकरकूटकम् ॥ ३३ ॥
बह्वाशिनं पिशाचेन विजानीयादधिष्ठितम् ।

अस्वस्थचित्तमित्यादिलक्षणं पिशाचगृहीतं विद्यात् ।

प्रेताकृतिक्रियागंधं भीतमाहारविद्विषम् ॥ ३४ ॥
तृणच्छिदं च प्रेतेन गृहीतं नरमादिशेत् ।

प्रेताकृतिक्रियागंधमित्यादिलक्षणं प्रेतग्रहगृहीतं नरं विद्यात् ।

बहुप्रलापं कृष्णास्यं प्रविलंबितयायिनम् ॥ ३५ ॥
शूनप्रलंबवृषणं कूष्मांडाधिष्ठितं वदेत् ।

बहुप्रलापादिलक्षणं कूष्मांडाधिष्ठितं वदेत् ।

गृहीत्वा काष्ठलोष्टादि भ्रमंतं चीरवाससम् ३६
नग्नं धावंतमुत्त्रस्तदृष्टिं तृणविभूषणम् ।
श्मशानशून्यायतनं रथ्यैकद्रुमसेविनम् ॥ ३७ ॥
तिलान्नमद्यमांसेषु सततं सक्तलोचनम् ।
निषादाधिष्ठितं विद्याद् वदंतं परुषाणि च॥३८॥

गृहीत्वा काष्ठमित्यादिलक्षणं तथा परुषाणि भाषमाणं निषादगृहीतं विद्यात् ।

याचंतमुदकं चान्नं त्रस्तालोहितलोचनम् ।
उग्रवाक्यं च जानीयान्नरमौकिरणार्दितम् ॥३९॥

याचंतमुदकमित्यादिलक्षणमौकिरणार्दितं वदेत् ।

गंधमाल्यरतिं सत्यवादिनं परिवेपिनम् ।
बहुच्छिद्रं च जानीयाद्वेतालेन वशीकृतम् ॥४०॥

गंधमाल्यरतिमित्यादिलक्षणं वेतालगृहीतं विद्यात् ।

अप्रसन्नदृशं दीनवदनं शुष्कतालुकम् ।
चलन्नयनपक्ष्माणं निद्रालुं मंदपावकम् ॥ ४१ ॥
अपसव्यपरीधानं तिलमांसगुडप्रियम् ।
स्खलद्वाचं च जानीयात् पितृग्रहवशीकृतम् ४२

अप्रसन्नदृशमित्यादिलक्षणं पितृग्रहगृहीतं विद्यात् ।

गुरुवृद्धर्षिसिद्धाभिशापचिंतानुरूपतः ।
व्याहाराहारचेष्टाभिर्यथास्वं तद्ग्रहं वदेत् ॥४३॥

गुर्वादीनां शापचिंतानुरूपवचनादिभिर्यथायोगं तद्ग्रहं विद्यात् ।

कुमारवृंदानुगतं नग्नमुद्धतमूर्धजम् ।
अस्वस्थमनसं दैर्घ्यकालिकं तं ग्रहं त्यजेत् ॥ ४४ ॥

सर्वग्रहगृहीतं त्यजेत् । कीदृशम् । कुमारसमूहेनानुयातम् । तथा नग्नमुद्धतकेशं तथाऽस्वस्थचित्तम् । तथा दीर्घकालानुवर्तिनं च ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने भूतविज्ञानीयश्चतुर्थोऽध्यायः ॥ ४ ॥

---

## पंचमोऽध्यायः ।

भूतग्रहविज्ञानानंतरं भूतस्य प्रतिषेधचिकित्सितमुच्यते । ननु निदानचिकित्सितपदाभ्यां प्रसिद्धतराभ्यां पूर्ववत्किमितीदं तंत्रकृता नोपनिबद्धमिति केचिचोद्यमचूचुदंस्तान् संचक्ष्महे । शास्त्रकारस्यास्येदृशी प्रतिज्ञा सूत्रशारीरनिदानचिकित्सितकल्पोत्तराख्यैः षड्भिः स्थानैस्तंत्रमिदमभिधेयमिति । तदेवम् । यद्युत्तरे स्थानेऽपि किंचिन्निदानचिकित्सितपदाभ्यामभिधीयते । ततः षट्स्थानकमिदं तंत्रप्रतिज्ञां व्याहन्यात् । तस्मादयं विरेचनाप्रकारविशेषः कृतः ।

अथाऽतो भूतप्रतिषेधं व्याख्यास्यामः ।
भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः ।
तपःशीलसमाधानज्ञानदानदयादिभिः ॥ १ ॥

अहिंसाकामं भूतं जपादिभिर्जयेत् ।

हिंगुव्योषालनेपालीलशुनार्कजटाजटाः ।

**अजलोमी सगोलोमी भूतकेशी वचा लता ॥ २ ॥**
**कुक्कुटी सर्पगंधाख्या तिलाः कालविषाणिके ।**
**वज्रप्रोक्ता वयस्था च शृंगी मोहनवल्ल्यपि ॥ ३ ॥**
**स्रोतोजांजनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम् ।**
**खराश्वश्वाविदुष्ट्रार्क्षगोधानकुलशल्यकान् ॥ ४ ॥**
**द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्वतः ।**
**चर्मपित्तद्विजनखा वर्गेऽस्मिन् साधयेद्घृतम् ॥ ५ ॥**
**पुराणमथवा तैलं नवं तत्पाननस्ययोः ।**
**अभ्यंगे च प्रयोक्तव्यमेषां चूर्णं च धूपने ॥ ६ ॥**
**एभिश्च गुटिकां युंज्यादंजने सावपीडने ।**
**प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ॥ ७ ॥**
**प्रयोगोऽयं ग्रहोन्मादान्सापस्माराञ्शमं नयेत् ।**

हिंग्वादय औषधम् । अलं हरितालम् । नेपाली कस्तूरी । जटा जटामांसी । लता प्रियंगुः । कुक्कुटी शितिवारकः । सर्पगंधाख्या नाकुली । कालविषाणिके काकोलीक्षीरकाकोल्यौ । शृंगी अतिविषा । मोहनवल्ली मंदाकः । अन्यदपि रक्षोघ्नं गुग्गुल्वादिकमौषधम् । तथा गर्दभतुरंगादिभ्यश्चर्मादयः । सामुद्रसत्त्वतो जलधिजांतास्तदेतस्मिन् हिंग्वादिवर्गे घृतं पुराणमथवा नवं तैलं पचेत् साधयेत् । तच्च घृतं तैलं वा सिद्धं पाने नस्येऽभ्यंजने च प्रयोज्यम् । एषां द्रव्याणां च चूर्णं धूपने प्रयोज्यम् । एभिश्चूर्णैर्गुटिकामंजने चावपीडने च युंज्यात् । एषां च द्रव्याणां कल्कप्रलेपक्वाथं परिषेचने युंज्यात् । अयं प्रयोगो ग्रहादीन् शमयेत् ।

**गजाह्वा पिप्पलीमूलव्योषामलकसर्षपान् ॥ ८ ॥**
**गोधानकुलमार्जारझषपित्तप्रपेषितान् ।**
**नावनाभ्यंगसेकेषु विदधीत ग्रहापहान् ॥ ९ ॥**

हस्तिपिप्पल्यादीनि गोधादिपित्तपिष्टानि नस्याभ्यंगसेकेषु ग्रहापहान् कुर्यात् । मूलं पुष्करमूलम् । झषो जलचरभेदः ।

**सिद्धार्थकं वचा हिंगु प्रियंगुरजनीद्वयम् ।**
**मंजिष्ठा श्वेतकटभी वचा श्वेताद्रिकर्णिका ॥ १० ॥**
**निंबस्य पत्रं बीजं तु नक्तमालशिरीषयोः ।**
**सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ ११ ॥**
**सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।**
**ग्रहान्सर्वान्निहंत्याशु विशेषादासुरान् ग्रहान् ॥१२॥**
**कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च ।**

सर्षपादिगोमूत्रे चतुर्गुणे सर्पिः सिद्धं सिद्धार्थकसंज्ञं पाने नस्ये च योजितं सर्वान् ग्रहान्द्राङ् नाशयति । विशेषेणासुरग्रहान् कृत्यादींश्च । श्वेतकटभी श्वेतगुंजा । श्वेताद्रिकर्णिका शुक्ला गिरिकर्णिका ।

**एभिरेवौषधैर्बस्तवारिणा कल्पितो गदः ॥ १३ ॥**
**पाननस्यांजनालेपस्तनोद्धर्षणयोजितः ।**
**गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ १४ ॥**



एभिरेव द्रव्यैश्छागमूत्रेण कल्पितो गदः पानादिषु योजितः पूर्वेण तुल्य उक्तो राजद्वारे च सिद्धिकरः स्यात् ।

**सिद्धार्थकव्योषवचाश्वगंधा**
**निशाद्वयं हिंगुपलांडुकंदम् ।**
**बीजं करंजात्कुसुमं शिरीषात्**
**फलं च वल्कश्च कपित्थवृक्षात् ॥ १५ ॥**
**समाणिमंथं सनतं सकुष्ठं**
**स्योनाकमूलं किणिही सिता च ।**
**बस्तस्य मूत्रेण विभावितं तत्**
**पित्तेन गव्येन गुडान् विदध्यात् ॥ १६ ॥**
**दुष्टव्रणोन्मादतमो निशांधा-**
**नुद्बद्धकान् वारिनिमग्नदेहान् ।**
**दिग्धाहतान् दर्पितसर्पदष्टां-**
**स्ते साधयंत्यंजननस्यलेपैः ॥ १७ ॥**

सिद्धार्थकादि बस्तमूत्रेण सुभावितं गव्येन पित्तेन गुडकान् कुर्यात् । ते च गुडका अंजननस्यलेपैर्दुष्टव्रणादीन्साधयंति । उपजातिर्वृत्तमिंद्रवज्रा च ।

**कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिंडीतक-**
**त्वङ्मांसीवृकदंशविट्तुषवचाकेशाहिनिर्मोचनैः ।**
**नागेंद्रद्विजशृंगहिंगुमरिचैस्तुल्यैः कृतं धूपनं**
**स्कंदोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् १८**

कार्पासाऽस्थ्यादिभिः कृतं धूपनं स्कंधादिघ्नं परं स्यात् । निर्माल्यं महादेवसंबंधि । वृषदंशविण्मार्जारविष्ठा । शार्दूलविक्रीडितं वृत्तम् ।

**त्रिकटुकदलकुंकुमग्रंथिकक्षारसिंही**
**निशादारुसिद्धार्थयुग्मांबुशक्राह्वयैः ।**
**सितलशुनफलत्रयोशीरतिक्तावचा**
**तुत्थयष्टीबलालोहितैलाशिलापद्मकैः ।**
**दधितगरमधूकसारप्रियाह्वानिशा**
**ख्याविषाताक्ष्यशैलैः सचव्यामयैः ।**
**कल्कितैर्घृतमनवमशेषमूत्रांशसिद्धं मतं**
**भूतरावाह्वयं पानतस्तद् ग्रहघ्नं परम् ॥ १९ ॥**

त्रिकटुकादिभिः कल्कितैर्घृतमशेषमूत्राणां गोमूत्रादीनामंशैर्भागैः सिद्धं भूतरावाह्वसंज्ञं मतम् । तत् पानतः परं ग्रहघ्नं स्यात् । दलं तमालपत्रम् । सिद्धार्थयुग्मं पीतकृष्णभेदेन । तुत्थं कर्परिकातुत्थम् । शक्राह्वा इंद्रयवाः । सितलशुनं शुक्लरसोनम् । प्रियाह्वा कंगुणिका । विषाख्याऽतिविषा । विषा काकोली । प्रथमक इह दंडकश्चंडवृष्टिप्रयातो नद्वयानाप्यनाप्यरैः सप्तभिः । प्रतिपदमिह वृद्धिरेफवृद्ध्या स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशंखादयः ।

**नतमधुकरंजलाक्षापटोलीसमंगावचा**
**पाटलीहिंगुसिद्धार्थसिंहीनिशायुग्लतारोहिणी ।**
**बदरकटुफलत्रिकाकांडदारुकुमिग्नाजगंधा**
**मरांकोल्लकोशातकीशिग्रुनिंबांबुदेंद्राह्वयैः ।**
**गदशुष्कतरुपुष्पवीजोग्रयष्ट्यद्रिकर्णीनिकुंभा-**
**ग्निबिल्वैः समैः कल्कितैर्मूत्रवर्गेण सिद्धं घृतं ।**
**विधिविनिहितमाशु सर्वैः क्रमैर्योजितं हंति**
**सर्वग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतम् २०**

नतादिभिर्मूत्रवर्गेण गोमूत्रादिमूत्रकदंबकेन सर्पिः पक्कं विधिविनिहितं सर्वैः क्रमैरभ्यंगपाननस्यादिभिर्योजितं शीघ्रं सर्वान् ग्रहादीन् हंति । एतच्च महाभूतरावसंज्ञं घृतम् । दंडको व्यालाख्यः ।

**ग्रहा गृह्णंति ये येषु तेषां तेषु विशेषतः ।**
**दिनेषु बलिहोमादीन्प्रयुंजीत चिकित्सकः ॥ २१ ॥**

येषु दिनेषु ग्रहा गृह्णंति तेषु दिनेषु तेषां ग्रहाणां विशेषेण बलिहोमादीन् भिषक् प्रयुंजीत ।

**स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च ।**
**रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ॥ २२॥**

स्नानवस्त्रादि यद्येभ्यो ग्रहेभ्यो रोचते तत्तेभ्यस्तस्मिन् दिने दद्यात् ।

**रत्नानि गंधमाल्यानि बीजानि मधुसर्पिषी ।**
**भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम्॥२३॥**

तथा रत्नादीनि तथा बीजानि यवादीनि मधुसर्पिषी सर्वे च भक्ष्याः सर्वेषां ग्रहाणामित्ययं सामान्यो विधिः ।

**सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये ।**
**दिश्युत्तरस्यां तत्राऽपि देवायोपहरेद्बलिम् ॥ २४ ॥**
**पश्चिमायां यथाकालं दैत्यभूताय चत्वरे ।**
**गंधर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ॥ २५ ॥**
**पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे ।**
**यक्षाय यक्षायतने सरितोर्वा समागमे ॥ २६ ॥**
**चतुष्पथे राक्षसाय भीमेषु गहनेषु च ।**
**रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम् ॥ २७ ॥**
**शून्यालये पिशाचाय पश्चिमां दिशमास्थिते ।**

सुरादिभ्यः पंचभ्यः सुरालये बलिं दद्यात् । तत्राऽपि देवायोत्तरस्यां बलिमुपहरेत् । दैत्यभूताय पश्चिमायां दिशि चत्वरे बलिमुपहरेत् । गवां पथि वस्त्राभरणसहितं बलिं गंधर्वायोपहरेत् । पितृनागग्रहेभ्यो नद्यां बलिं दद्यात् । नागेभ्यः पूर्वदक्षिणदेशे बलिं दद्यात् । यक्षाय यक्षप्रासादे अथवा सरितोर्नद्योः समागमे बलिमुपहरेत् । राक्षसशब्देनेह ब्रह्मराक्षसो गृह्यते । राक्षसाय चतुष्पथे भयानकेषु वनेषु च बलिं दद्यात् । दक्षिणस्यां तु दिशि राक्षसानां बलिं दद्यात् । पूर्वस्यां दिशि ब्रह्मरक्षसां शून्यालये पश्चिमां दिशमास्थिते पिशाचाय बलिं दद्यात् ।

**शुचिशुक्लानि माल्यानि गंधाः क्षैरेयमोदनम् ॥ २८॥**
**दधि छत्रं च धवलं देवानां बलिरिष्यते ।**

शुचिशुक्लमाल्यादिकं च देवानां बलिरिष्यते ।

**हिंगुसर्षपषड्ग्रंथाव्योषैरर्धपलोन्मितैः ॥ २९ ॥**
**चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ।**
**तत्पाननावनाभ्यंगैर्देवग्रहविमोक्षणम् ॥ ३० ॥**

हिंग्वादिभिरर्धपलिकैः सर्पिःप्रस्थं चतुर्गुणे गोमूत्रे विपाचयेत् । तत्पानादिभिर्देवग्रहविमोक्षणं स्यात् ।

**नस्यांजनं वचाहिंगुलशुनं बस्तवारिणा ।**

वचाहिंगुलशुनं छागमूत्रेण नस्यमंजनं च दद्यात् ।

**दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः ॥ ३१ ॥**

दैत्यग्रहे बलिर्बहूनि फलानि यस्मिंस्तथोशीरकमलोत्पलैर्युक्तो देयः ।

**नागानां सुमनोलाजगुडापूपगुडौदनैः ।**
**परमान्नमधुक्षीरकृष्णमृन्नागकेसरैः ॥ ३२ ॥**
**वचापद्मपुरोशीररक्तोत्पलदलैर्बलिः ।**
**श्वेतपत्रं च रोध्रं च तगरं नागसर्षपाः ॥ ३३ ॥**
**शीतेन वारिणा पिष्टं नावनांजनयोर्हितम् ।**

नागानां सुमनोलाजादिभिर्बलिर्देयः । वचादयः शीतलजलपिष्टा नस्येऽभ्यंगे च हिताः । श्वेतपत्रं शुक्लपुंडरीकम् ।

**यक्षाणां क्षीरदध्याज्यमिश्रकोदनगुग्गुलुः ॥ ३४ ॥**
**देवदारूत्पलं पद्ममुशीरं वस्त्रकांचनम् ।**
**हिरण्यं च बलिर्योज्यो**

यक्षाणां क्षीरादिभिर्बलिर्योज्यः ।

**मूत्राज्यक्षीरमेकतः ॥ ३५ ॥**
**सिद्धं समोन्मितं पाननावनाभ्यंजने हितम् ।**

गोमूत्रक्षीरघृतं तुल्यप्रमाणमेकस्मिन् पक्कं नस्याभ्यंगयोर्हितम् ।

**हरीतकी हरिद्रे द्वे लशुनो मरिचं वचा ॥ ३६ ॥**
**निंबपत्रं च बस्तांबुकल्कितं नावनांजनम् ।**

हरीतक्यादि छागमूत्रेण पिष्टं नावनांजनं हितम् ।

**ब्रह्मरक्षोबलिः सिद्धं यवानां पूर्णमाढकम् ॥ ३७ ॥**
**तोयस्य कुंभः पललं छत्रं वस्त्रं विलेपनम् ।**

पक्कं यवानामाढकं पात्रं पूर्णं जलकुंभः पललं छत्रं वस्त्रं प्रलेपनमिति ब्रह्मराक्षसाय बलिं दद्यात् । यवानां पूर्णं सिद्धमा-

ढकं पक्कं पात्रं यवैः पूर्णपक्कपात्रमित्यर्थः । पूरणार्थेऽत्र षष्ठी । आढकशब्दोऽत्र पात्रवाचको न तु मानवाचकः । पक्कपात्रं पक्कशरावमिति ।

**गायत्रीविंशतिपलक्काथेऽर्धपलिकैः पचेत् ॥ ३८ ॥**
**त्र्यूषणत्रिफलाहिंगुषड्ग्रंथामिशिसर्षपैः ।**
**सनिंबपत्रलशुनैः कुडवान्सप्तसर्पिषः ॥ ३९ ॥**
**गोमूत्रे त्रिगुणे पाने नस्याभ्यंगेषु तद्धितम् ।**

खदिरविंशतिपलक्काथे त्र्यूषणादिभिरर्धपलिकैः सप्त कुडवान् घृतस्य गोमूत्रे त्रिगुणे पचेत् । तत्पानादिषु हितम् ।

**रक्षसां पललं शुक्तं कुसुमं मिश्रकौदनम् ॥ ४० ॥**
**बलिः पक्कामममांसानि निष्पावा रुधिरोक्षिताः ।**

राक्षसानां पललादयो यावन्निष्पावलोहितसिक्तो बलिर्देयः ।

**नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च ॥ ४१ ॥**
**तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकम् ।**
**हिंग्विद्रयवसिद्धार्थलशुनामलकीफलम् ॥ ४२ ॥**
**नावनांजनयोर्ज्योज्यो बस्तमूत्रहृतो गदः ।**

नक्तमालादिकं बस्तमूत्रेण हृतमगदो नस्याभ्यंजनयोर्योज्यः ।

**एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे ॥ ४३ ॥**
**रक्षोग्रहान् वारयते पानाभ्यंजननावनैः ।**

एभिरेव द्रव्यैर्घृतं गोमूत्रेण चतुर्गुणेन सिद्धं पनादिभी रक्षोग्रहनिवारणं स्यात् ।

**पिशाचानां बलिः सीधुपिण्याकः पललं दधि ४४**
**मूलकं लवणं सर्पिः सभूतोदनयावकम् ।**

पिशाचानां सीध्वादिभिर्बलिर्देयः ।

**हरिद्राद्वयमंजिष्ठामिशिसैंधवनागरम् ॥ ४५ ॥**
**हिंगुप्रियंगुत्रिकटुरसोनत्रिफला वचा ।**
**पाटलाश्वेतकटभीशिरीषकुसुमैर्घृतम् ॥ ४६ ॥**
**गोमूत्रपादिकं सिद्धं पानाभ्यंजनयोर्हितम् ।**

हरिद्राद्वयादिभिर्गोमूत्रपादिकं घृतं पक्कं परं पानाभ्यंजनयोर्हितम् ।

**बस्तांबुपिष्टैस्तैरेव योज्यमंजननावनम् ॥ ४७ ॥**

बस्तांबुपिष्टैस्तैरेव द्रव्यैर्नस्यमंजनं च हितमुक्तम् ।

**देवर्षिपितृगंधर्वे तीक्ष्णं नस्यादि वर्जयेत् ।**
**सर्पिःपानादिमृद्वस्मिन् भैषज्यमवचारयेत् ॥ ४८ ॥**

देवर्षिपितृगंधर्वे तीक्ष्णं नस्यादि वर्जयेत् । मृदु सर्पिःपानादिकमौषधमत्र योज्यम् ।

**ऋते पिशाचान्सर्वेषु प्रतिकूलं च नाचरेत् ।**
**सवैद्यमातुरं घ्नंति क्रुद्धास्ते हि महौजसः ॥ ४९ ॥**

सर्वेषु च ग्रहेषु पिशाचमंतरेण प्रतिकूलं नाचरेत् । ते हि देवादयो महौजसा प्रतिकूलाचरणात्क्रुद्धाः सन्तः सवैद्यमातुरं घ्नंति ।

**ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।**
**सर्वव्याधिचिकित्संतं जपन् सर्वग्रहान् जयेत्॥५०॥**
**तथोन्मादानपस्मारादन्यं वा चित्तविप्लवम् ।**

ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् । तथा सर्वव्याधिचिकित्सितमित्यादि जपन् सर्वान् ग्रहानुन्मादादींश्च पराकरोति ।

**महाविद्यां च मायूरीं शुचिं तं श्रावयेत्सदा ॥५१॥**

मायूरीं महाविद्यां तं ग्रहगृहीतं शुचिं संतं सततं श्रावयेत् ।

**भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।**
**जपन् सिद्धांश्च तन्मंत्रान् ग्रहान्सर्वानपोहति॥५२॥**

तथा स्थाणुं भूताधिपं पूजयेत् । तथा तस्य गणान् प्रमथसंज्ञान् पूजयेत् । सिद्धांश्च सिद्धमंत्रान् जपन् सर्वग्रहान् पराकरोति ।

**यच्चानंतरयोः किंचिद्वक्ष्यतेऽध्याययोर्हितम् ।**
**यच्चोक्तमिह तत्सर्वं प्रयुंजीत परस्परम् ॥ ५३ ॥**

यदप्यनंतरयोरध्याययोरुन्मादापस्मारप्रतिषेधाख्ययोर्वक्ष्यति भणिष्यति तच्चात्र हितम् । यच्चास्मिन्नध्याये देवग्रहादीनां पृथक् चिकित्सितं कथितं तदपि ग्रहाणां परस्परं प्रयुंजीत ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने भूतप्रतिषेधो नाम पंचमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

भूतप्रतिषेधानंतरमुन्मादापस्मारप्रतिषेध उच्यते । चिकित्सासामान्यात् । यत्राप्यपस्मारादुन्मादस्य पूर्वमुपन्यासो बहुवक्तव्यत्वादित्याह ।

**अथाऽत उन्मादप्रतिषेधं व्याख्यास्यामः ।**

उन्मादस्य प्रतिषेधं चिकित्सितं भणिष्यामः ।

**उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ।**

प्रत्येकं दोषैस्त्रयः । सान्निपातिक आधिजो विषजश्चेति ।

**उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥ १ ॥**

उन्मादो दोषैर्वातपित्तकफैरुन्मार्गगैरपरत्र प्रस्थितैर्मनसो यो मदः स उन्मादो नाम रोग उच्यते ।

अधुना विस्तरेणोत्पत्तिक्रममुन्मादानामाह ।

**शारीरमानसैर्दुष्टैरहितादन्नपानतः ।**
**विकृतासात्म्यसमलाद्विषमादुपयोगतः ॥ २ ॥**
**विषमस्याल्पसत्त्वस्य व्याधिवेगसमुद्गमात् ।**
**क्षीणस्य चेष्टावैषम्यात्पूज्यपूजाव्यतिक्रमात् ॥ ३ ॥**

**आधिभिश्चित्तविभ्रंशाद् विषेणोपविषेण च ।**
**एभिर्विहीनसत्त्वस्य हृदि दोषाः प्रदूषिताः ॥ ४ ॥**
**धियो विधाय कालुष्यं हत्वा मार्गान् मनोवहान् ।**
**उन्मादं कुर्वते तेन धीविज्ञानस्मृतिभ्रमात् ॥ ५ ॥**
**देहो दुःखसुखभ्रष्टो भ्रष्टसारथिवद्रथः ।**
**भ्रमत्यचिंतितारंभः**

शारीरमानसैर्दोषैर्दुष्टैर्यावदुपविषेण चेति । एभिरमीभिर्हेतुभिर्दोषा हृदये प्रदूषिताः संतो हीनसत्त्वस्य पुंसो बुद्धेः कालुष्यं कृत्वा तथा चित्तवहानि स्रोतांसि हत्वोन्मादं कुर्वते । तेनोन्मादेन देहो बुद्धिभ्रमान्नष्टसुखदुःखो भ्रष्टसारथिरिव रथो भ्रमति । अचिंतितारंभः अचिंतितोऽनिरूपितक्रिया आरंभ उद्यमो यस्य स एवम् ।

इति सामान्यलक्षणमुन्मादस्योक्त्वा पवनादिजस्य विशिष्टं लक्षणमाह ।

**तत्र वातात्कृशांगता ॥ ६ ॥**
**अस्थाने रोदनाक्रोशहसितस्मितनर्तनम् ।**
**गीतवादित्रवागंगविक्षेपास्फोटनानि च ॥ ७ ॥**
**असाम्ना वेणुवीणादिशब्दानुकरणं मुहुः ।**
**आस्यात्फेनागमोऽजस्रमटनं बहुभाषिता ॥ ८ ॥**
**अलंकारोनलंकारैरयानैर्गमनोद्यमः ।**
**गृद्धिरभ्यवहार्येषु तल्लाभे वावमानता ॥ ९ ॥**
**उत्पिंडितारुणाक्षित्वं जीर्णे चान्ने गदोद्भवः ।**

वातादुन्मादे सति कृशांगादिलक्षणं च जीर्णे चान्ने गदोद्भव इत्यंतम् । अस्थानेऽप्रसंगे रोदनादीनि । असाम्ना औद्धत्येन पुनः पुनः वेणुवीणादिवाद्यस्यानुकरणम् ।

**पित्तात्संतर्जनं क्रोधो मुष्टिलोष्टाद्यभिद्रवः ॥ १० ॥**
**शीतच्छायोदकाकांक्षा नग्नत्वं पीतवर्णता ।**
**असत्यज्वलनज्वालातारकादीपदर्शनम् ॥ ११ ॥**

पित्तादुन्मादे सति संतर्जनक्रोधादयः । असत्यानां ज्वलनादीनां दर्शनम् ।

**कफादरोचकच्छर्दिरल्पेहाहारवाक्यता ।**
**स्त्रीकामता रहःप्रीतिर्लालासिंघाणकस्रुतिः ॥ १२ ॥**
**बैभत्स्यं शौचविद्वेषो निद्राश्वयथुराननने ।**
**उन्मादो बलवान् रात्रौ भुक्तमात्रे च जायते ॥१३॥**

कफादुन्मादे सत्यरोचकादयः स्युः । तथा रात्रौ बलवान्सद्यो भुक्ते च स्यात् ।

**सर्वायतनसंस्थानसन्निपाते तदात्मकम् ।**
**उन्मादं दारुणं विद्यात् तं भिषक्परिवर्जयेत् ॥१४॥**

आयतनानि निमित्तानि । संस्थानानि लिंगानि । सर्वाणि त्रिदोषविषयाण्यायतनानि संस्थानानि यस्मिन्सन्निपाते तदात्मकं त्रिदोषोत्थमुन्मादं दारुणं मारणात्मकं विद्यात् । तमुन्मादं नोपक्रमेत् ।

अथ चित्तजमुन्मादं वक्ति ।

**धनकांतादिनाशेन दुःसहेनाभिषंगवान् ।**
**पांडुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥ १५ ॥**
**रोदित्यकस्मान्म्रियते तद्गुणान् बहु मन्यते ।**
**शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥ १६॥**

धनादिनाशेन दुःसहेनाभिषंगवानुन्मादः स्यात् । तेन पांड्वादिकः सन्निदमिदं करोति । तथा खिन्नः शोकचेता ध्यायन् जागरणशीलो विचेष्टते ।

**विषेण श्यावबदनो नष्टच्छायाबलेंद्रियः ।**
**वेगांतरेऽपि संभ्रांतो रक्ताक्षस्तं विवर्जयेत् ॥ १७॥**

विषेणोन्मादे श्यावबदनः स्यात् । तं वर्जयेन्नोपक्रमेत् ।

**अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।**
**पूर्वमावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ १८ ॥**

अथेदृश्युन्मादलक्षणेऽवगते सति पवनजो य उन्मादस्तस्मिन्स्नेहपानं पूर्वं कारयेत् । आवृतवर्त्मनि त्वनिले सस्नेहं मृदु शोधनं पूर्वं स्नेहपानात्कारयेत् ।

**कफपित्तभवेऽप्यादौ वमनं सविरेचनम् ।**
**स्निग्धस्विन्नस्य बस्तिं च शिरसः सविरेचनम् १९**
**तथास्य शुद्धदेहस्य प्रसादं लभते मनः ।**

कफभवे पित्तभवे चोन्मादे स्निग्धस्विन्नस्य नरस्य यथासंख्यं वमनं विरेचनं च कारयेत् । अपिशब्दान्न केवलं पवनजे स्नेहपानमादौ यावत् कफपित्तोत्थेऽपि कार्यमिति गमयति । तथा च मुनिः । उन्मादं स्नेहपानेन पूर्वं सर्वमुपाचरेदिति । बस्तिं शिरसः सविरेचनं त्रिष्वप्युन्मादेषु कारयेत् । तथा च एवं शुद्धशरीरस्य सतो मनः प्रसीदति ।

**इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमंजनम् ॥ २० ॥**
**हर्षणाश्वासनोत्रासभयताडनतर्जनम् ।**
**अभ्यंगोद्वर्तनालेपधूमान् पानं च सर्पिषः ॥ २१ ॥**
**युंज्यात्तानि हि शुद्धस्य नयंति प्रकृतिं मनः ।**

एवमप्युपक्रांत उन्मादेऽस्यानुबंधे सति तीक्ष्णं नावनांजनं युंज्यात् । हर्षणादि च । कुतः । यस्मादेतानि कृतानि शुद्धदेहस्य चित्तं प्रकृतिं प्रापयंति ।

**हिंगुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥ २२ ॥**
**सिद्धं समूत्रमुन्मादभूतापस्मारनुत्परम् ।**

हिंग्वादिभिर्द्विपलिकैर्घृतस्याढकं गोमूत्रेण सह पचेत् । तच्चोपयुक्तं परममुन्मादादिजित् ।

**द्वौ प्रस्थौ स्वरसाद् ब्राह्मया घृतप्रस्थं च साधितम् ।**

व्योषश्यामात्रिवृद्दंतीशंखपुष्पीनृपद्रुमैः ।
ससप्तलाकृमिहरैः कल्कितैरक्षसंमितैः ॥ २४ ॥
पलवृद्ध्या प्रयुंजित परं मात्राचतुष्पलम् ।
उन्मादकुष्ठापस्मारहरं वंध्यासुतप्रदम् ॥ २५ ॥
वाक्स्वरस्मृतिमेधाकृद् धन्यं ब्राह्मीघृतं स्मृतम् ।

ब्राह्मी स्वरसात्प्रस्थद्वयं घृतस्य प्रस्थं व्योषादिभिः कार्षिकै रजीकृतैः पक्वं पलवृद्ध्या । पलं प्रथमेऽह्नि । द्विपलं द्वितीयेऽह्नि । त्रिपलं तृतीयेऽह्नि । चतुष्पलं चतुर्थेऽह्नि । ततः परं चतुःपलमित्येवं प्रयुंजीत । तच्चोन्मादादिजिद्वंध्यासुतप्रदं वागादिकृच्छिवं ब्राह्मीघृतं स्मृतम् ।

वराविशालाभद्रैलादेवदार्वेलवालुकैः ॥ २६ ॥
द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः ।
बृहतीकुष्ठमंजिष्ठानागकेसरदाडिमैः ॥ २७ ॥
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः ।
सदंतीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ॥ २८ ॥
प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मसु ।
पांडुकंडूविषे शोफे मोहे मेहे गरे ज्वरे ॥ २९ ॥
अरेतस्यप्रजसि वा दैवोपहतचेतसि ।
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ॥ ३०॥
वल्यं मंगल्यमायुष्यं कांतिसौभाग्यपुष्टिदम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ ३१ ॥

वरादिभिः कर्षप्रमाणैर्घृतप्रस्थं पचेत् । तच्चोपयुक्तं भूतग्रहादिषु श्रेष्ठं बल्यादिगुणं च । कल्याणकाख्यमेतत्सर्पिः पुंसवनेषु च वरम् । अत्र च भद्रैला स्थूलैला ।

एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिः ।
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरचतुर्गुणम् ॥ ३२ ॥
वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः ।
सूर्पपर्णीयुतैरेतन्महाकल्याणकं परम् ॥ ३३ ॥
बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ।

एभ्यो वरादिभ्यो मध्यादाद्यानि सप्त हित्वा द्विसारिवादीन्येकविंशतिर्जले षोडशगुणे स्नेहापेक्षया पचेद्यावत्स्नेहाच्चतुर्गुणः क्वाथस्तस्मिन् स्नेहचतुर्गुणे रसे सर्पिर्गृष्टिक्षीरचतुर्गुणम् । वीरादिभिः स्नेहकथितैः पादिकैः कल्कीकृतैः पचेत् । एतन्महाकल्याणकं नाम घृतं पूर्वस्मात्कल्याणकाद् गुणैरधिकमित्युक्तम् । अत्र द्विसारिवादीनां पाठादेवैकविंशतित्वं चेत् तद्गुणसंविज्ञानो बहुव्रीहिरिति कस्यचिद् भ्रांतिः स्यात् । एवं च सारिवादिद्वयस्य ग्रहणं न प्राप्नुयादित्येकविंशतिग्रहणम् ।

जटिला पूतना केशी चारटी मर्कटी वचा ॥ ३४ ॥
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ।
कायस्था शूकरी छत्रा अतिच्छत्रा पलंकषा ॥ ३५॥
महापुरुषदंता च वयस्था नाकुलीद्वयम् ।
कटंभरा वृश्चिकाली शालिपर्णी च तैर्घृतम् ॥३६॥
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ।
महापैशाचकं नाम घृतमेतद्यथामृतम् ॥ ३७ ॥
बुद्धिमेधास्मृतिकरं बालानां चांगवर्धनम् ।

जटिलादिभिर्घृतं पक्वं चातुर्थिकादिनाशनम् । जटिला मांसी । पूतना हरीतकी । केशी गंधमांसी । चारटी पद्मचारिणी । मर्कटी कपिकच्छूः । जयाऽरणिका । वीरा काकोलिका । चोरकश्चंडा । वयस्था धात्री । शूकरी वृद्धदारकः । छत्रा धान्यकम् । अतिच्छत्रा शतपुष्पा । पलंकषा लाक्षा । महापुरुषदंता शतावरी । कायस्था क्षीरकाकोली । नाकुलीद्वयं सर्पाक्षी सर्पसुगंधा च । महापैशाचकसंज्ञं चातुर्थिकादिनाशनम् । तथाऽमृततुल्यं महागुणत्वात् । बुद्ध्यादिकं शिशूनां च संवर्धयति ।

ब्राह्मीमैंद्रीविडंगानि व्योषं हिंगु जटां मुराम्॥३८॥
रास्नां विशल्यां लशुनं विषघ्नां सुरसां वचाम् ।
ज्योतिष्मतीं नागविन्नामनंतां सहरीतकीम् ॥३९॥
काच्छीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ।
वर्तिर्नस्यांजनालेपधूपैरुन्मादसूदनी ॥ ४० ॥

ब्राह्म्यादिभिर्गजमूत्रपिष्टा वर्तिश्छायायां विशोषिता नस्यादिभिरुन्मादहृत् । विषघ्नाऽतिविषा । विशल्या लांगली । नागविन्ना नागदंती । काच्छी सौराष्ट्रिका ।

अवपीडाश्च विविधाः सर्षपाः स्नेहसंयुताः ।
कटुतैलेन चाभ्यंगो ध्मापयेच्चास्य तद्रजः ॥ ४१ ॥
सहिंगुस्तीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ।

कल्काद्यैरवपीडस्त्विति कथितोऽवपीडः । तेऽवपीडाः सर्षपयुता हिताः । अभ्यंगश्च सर्षपतैलेन । तथाऽस्य तद्रजः सर्षपचूर्णं घ्राणेऽऽध्मापयेत् । तथा सूत्रस्थानोक्ततीक्ष्णो धूमो हिंगुना सह हितः ।

शृगालशल्यकोलूकजलूकावृषबस्तजैः ॥ ४२ ॥
मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ।
धूपधूमांजनाभ्यंगप्रदेहपरिषेचनम् ॥ ४३ ॥

शृगालादिमूत्रादिभिर्धूपादिकमाचरेत् । अत्र जलूका चर्मचटिका ।

धूपयेत्सततं चैनं श्वगोमत्स्यैस्तु पूतिभिः ।
वातश्लेष्मात्मके प्रायः

एनं चोन्मादिनं पुनः पुनश्च गोमत्स्यादिभिः सुष्ठु पूतिगंधिभिर्धूपयेत् । वातश्लेष्मात्मके बाहुल्येनैवोपक्रमः ।

पैत्तिके तु प्रशस्यते ॥४४॥
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ।
शिशिराण्यन्नपानानि मधुराणि लघूनि च ॥ ४५ ॥

पैत्तिके तून्मादे तिक्तकं सर्पिर्जीवनीयं च शस्यते । तथा मिश्रको यमकः स्नेहः प्रशस्यते । तथा शिशिराणि मधुराण्यन्नपानानि लघूनि शस्यंते ।

**विध्येच्छिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा ।**
**निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ॥ ४६ ॥**

तथा शिराविध्युक्तां शिरां विध्येत् । मेदुरमांसस्य तृप्तं निवाते स्वापयेच्च । एवं कृते सति मतिविभ्रमात् मुच्यते ।

**प्रक्षिप्याऽसलिले कूपे शोषयेद्वा बुभुक्षया ।**
**आश्वासयेत्सुहृत्तं वा वाक्यैर्धर्मार्थसंहितैः॥४७॥**
**ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ।**
**बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे ॥ ४८ ॥**
**कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।**
**कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनिःक्षिपेत् ॥**
**अथवा वीतशस्त्राश्मजने संतमसे गृहे ।**
**सर्पेणोद्धृतदंष्ट्रेण दांतैः सिंहैर्गजैश्च तम् ॥ ५० ॥**
**अथवा राजपुरुषा बहिर्नीत्वा सुसंयुतम् ।**
**भापयेयुर्वधेनैनं तर्जयंतो नृपाज्ञया ॥ ५१ ॥**
**देहदुःखभयेभ्यो हि परं प्राणभयं मतम् ।**
**तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥५२॥**

अथवा जलवर्जिते कूपे प्रक्षिप्य क्षुधा शोषयेत् । अथवा तमुन्मादवंतं सुहृद्धर्मार्थयुतैर्वाक्यैराश्वासयेत् सांत्वयेत् । अथवाऽस्य पुत्रादेर्विनाशं ब्रूयात् । अद्भुतानि वा तं दर्शयेत् । अथवा कटुतैलेनाभ्यक्तं बध्वा तमुत्तानं कृत्वाऽऽतपे न्यसेत् । कपिकच्छ्वा स्पृशेत् । अथवा तप्तैर्लोहादिभिरथवा चर्मकशाभिराहत्य बद्धं संतमवटे विनिःक्षिपेत् । शस्त्रादिवर्जिते त्वगारे भवने वा बध्वा विनिक्षिपेत् । ननु चैकस्य शून्यगृहे स्थितिरुन्मादस्य निदानमुक्तम् । यच्च यस्य निदानं तदेव तस्य कथं चिकित्सितं स्यात् । नैष दोषः । तदर्थकारिभेषजत्वात् । तदर्थकारिणि हि भेषजे यदेव निदानं तदेवौषधम् । यथा तुल्थदग्धेऽग्निप्रतपनम् । मदात्यये मद्यपानमिति । तद्वदिहाप्यवगंतव्यम् । अथवा समुत्पाटितदंष्ट्रेण सर्पेण भापयेत् । दांतैर्गजादिभिर्वा । राजपुरुषा बहिर्नीत्वा सुष्ठु तं यंत्रितं कृत्वा राजाज्ञया तर्जयंतो वधेन भापयेयुः । यतो देहदुःखभयेभ्यः सकाशात् परमतिशयेन प्राणभयं मतम् । तेन भयेन इतश्चेतश्चित्तं विप्लुतमुन्मादिनः शममेति ।

**सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया ।**

इयं क्रिया देशाद्यपेक्षया सिद्धा प्रयोजनीया ।

**इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ॥ ५३ ॥**
**तस्य तत्सदृशप्राप्तिः सांत्वाश्वासैः शमं नयेत् ।**

इष्टद्रव्यविनाशाद् यस्य मानसमुपहन्यते तस्य तादृशी तुल्या प्राप्तिः कार्या । तथा सांत्वनैश्चाश्वासनैश्च शममुन्मादिनं नयेत् ।

**कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ॥ ५४ ॥**
**परस्परप्रतिद्वंद्वैरेभिरेव शमं नयेत् ।**

कामादिजानुन्मादानन्योन्यप्रतिपक्षैरेभिरेव कामादिभिः शमं नयेत् ।

**भूतानुबंधमीक्षेत प्रोक्तलिंगाधिकाकृतिम् ॥ ५५ ॥**
**यद्युन्मादे ततः कुर्याद्भूतनिर्दिष्टमौषधम् ।**

भूतैर्देवादिभिः पूर्वोक्तैरनुबंधोऽनुषंग एव तमनंतरोक्त आगतावुन्मादे यदीक्षेत ततो भूतप्रतिषेधोक्तमौषधं कुर्यात् । ननु कथमीक्षणं कर्तुं शक्येत इति विशेषणद्वारेण हेतुमाह । प्रोक्तलिंगाधिकाकृतिमिति । प्रोक्तानि पूर्वं षड्विधस्योन्मादस्य यानि लिंगानि तेभ्योधिकाऽऽकृतिर्लक्षणं यस्य भूतानुबंधस्य तं तथाविधम् ।

**बलिं च दद्यात्पललं यावकं सक्तुपिंडिकाम् ॥ ५६॥**
**स्निग्धं मधुरमाहारं तंडुलान् रुधिरोक्षितान् ।**
**पक्वामकानि मांसानि सुरामैरेयमासवम् ॥ ५७ ॥**
**अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ।**
**चतुष्पथे गवां तीर्थे नदीनां संगमेषु च ॥ ५८ ॥**

तथाऽत्र भूतानुबंधे पललयावकादि च यावत् पुष्पाणि सहचरस्य चेति बलिं दद्यात् । क्व चतुष्पथे । तथा गोतीर्थे नद्योर्वा संगमे ।

**निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।**
**निजागंतुभिरुन्मादैः सत्ववान्न स युज्यते ॥ ५९ ॥**

यः पुरुषो निवृत्तमद्यमांसो हितभोजी प्रयतः शुचिः स्यात् स सात्विको निजागंतुभिरुन्मादैर्न युज्यते । तस्मादीदृशेन भवितव्यमिति भावः ।

**प्रसाद इंद्रियार्थानां बुद्ध्यात्ममनसां तथा ।**
**धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ६० ॥**

इंद्रियार्थानां प्रसन्नत्वं तथा बुद्ध्यात्ममनसां च धातूनां प्रकृतिस्थत्वं चेति विगतोन्मादस्य लक्षणम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने उन्मादप्रतिषेधो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अस्मादनंतरमपस्मारप्रतिषेध उच्यते । चिकित्सासामान्यात् ।

**अथाऽतोऽपस्मारप्रतिषेधं व्याख्यास्यामः ।**
**स्मृत्यपायो ह्यपस्मारः संधिसत्त्वाभिसंप्लवात् ।**
**जायतेऽभिहते चित्ते चिंताशोकभयादिभिः ॥ १ ॥**

**उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः ।**
**हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ २॥**
**तमोविशन्मूढमतिर्बीभत्साः कुरुते क्रियाः ।**
**दंतान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन्३**
**पश्यन्नसंति रूपाणि प्रस्खलन्पतति क्षितौ ।**
**विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥ ४ ॥**
**कालांतरेण स पुनश्चैवमेव विचेष्टते ।**

स्मृतेरपायो विनाशोऽपस्मार उच्यते । इत्यपस्मारस्य निर्वचनार्थमेतद्वचनम् । स च स्मृतिविनाशो बुद्ध्यादिविनाशाच्चित्ते चितायभिहते तथोन्मादवच्चित्तदेहगतैर्दोषैः प्रकुपितैः सत्त्वे हते हृदये व्याप्ते तथा संज्ञावाहिषु स्रोतःसु व्याप्तेषु सत्सु जायते । तस्मिंश्च जाते सति मूढमतिः सन् तमो मोहं विशन् बीभत्सा निंदिताः क्रियाः कुरुते । ननु तमोद्रव्यविशेष इह उच्यते तस्य दिवाऽसंभवात् । यदि वा तमसोऽसंभवस्यापि दर्शनं संभाव्यमेव रोगस्वभावात् । अत एव वक्ष्यति । पश्यन्नसंति रूपाणीति । ता एव क्रिया वक्ति । दंतानित्यादि यावद्विजिह्माक्षिभ्रुव इति । विजिह्ममक्षिभ्रुवं यस्य स एवम् । अक्षिभ्रुवशब्दोऽचतुरादिनानिपातितः । दोषवेगे चातिक्रांते विबुध्यते प्रकृतिं याति कालांतरे सोऽपस्मार्येवमेव पूर्वं व्यक्तं करोति ।

**अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन तु ॥ ५ ॥**

अपस्मारश्चतुःप्रकारः । कथमित्यादि । वातादिभिः सन्निपातेन च ।

**रूपमुत्पित्स्यमानेऽस्मिन् हृत्कंपः शून्यता भ्रमः ।**
**तमसो दर्शनं ध्यानं भ्रूव्युदासोक्षिवैकृतम् ॥ ६ ॥**
**अशब्दश्रवणं स्वेदो लालासिंघाणकश्रुतिः ।**
**अविपाकोऽरुचिर्मूर्छा कुक्ष्याटोपो बलक्षयः ॥ ७ ॥**
**निद्रानाशोऽगमर्दस्तृट् स्वप्ने गानं सनर्तनम् ।**
**पानं मद्यस्य तैलस्य तयोरेव च मेहनम् ॥ ८ ॥**

अस्मिन्नपस्मार उद्बुभूषति सति हृत्कंपादयः स्युः । अक्षिवैकृतमिति विकृतिशब्दात्स्वार्थे प्रज्ञादित्वादण् । स्वप्ने च गानादि स्यात् । तैलमद्ययोः पानं तयोरेव मेहनं मूत्रणं स्यात् ।

**तत्र वातात्स्फुरत्सक्थि प्रपतंश्च मुहुर्मुहुः ।**
**अपस्मारेति संज्ञां च लभते विस्वरं रुदन् ॥ ९ ॥**
**उत्पिंडिताक्षः श्वसिति फेनं वमति कंपते ।**
**आविध्यति शिरोदंतान् दशत्याध्मातकंधरः ॥१०॥**
**परितो विक्षिपत्यंगं विषमं विनतांगुलिः ।**
**रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ॥११॥**
**चपलं परुषं रूपं विरूपं विकृताननम् ।**

तत्र तेषु मध्याद्वातादपस्मारे सति स्फुरत्सक्थ्यादिकः स्यात् ।

**अपस्सरति पित्तेन मुहुः संज्ञां च विंदति ॥ १२ ॥**
**पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीम् ।**
**भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ १३ ॥**

पित्तेनापस्मारे सति पुनः पुनः संज्ञां चेतनां लभते । पीतफेनाक्षिमुखत्वं स्यात् । अत्र च वक्त्रग्रहणेनैवाक्षिग्रहणे सिद्धेऽक्षिग्रहणमतिशयार्थम् । तथाऽऽस्फालयति मेदिनीमित्यादि च स्यात् ।

**कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम् ।**
**चेष्टाऽल्पा भूयसी लाला शुक्लनेत्रनखास्यता ॥१४॥**
**शुक्लाभरूपदर्शित्वं**

कफाच्चिरेण कालेन ग्रहणम् । चिरेणैव विबोधनं मोक्षणं स्यात् । चेष्टाल्पेत्यादि च ।

**सर्वलिंगं तु वर्जयेत् ।**

सर्वलिंगमपस्मारं वर्जयेन्नोपक्रमेत् ।

**अथाऽऽवृतानां धीचित्तहृत्खानां प्राक्प्रबोधनम् १५**
**तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः ।**

अथैवमपस्मारस्वरूपमवगत्य धीचित्तहृदयस्रोतसां पूर्वं प्रबोधनं कुर्यात् । कैर्वमनादिभिस्तीक्ष्णैः कर्मभिः ।

**वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ॥ १६॥**
**श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ।**

वातिकमपस्मारं बस्तिप्रायैरुपाचरेत् । पैत्तिकं प्रायो विरेचनैः । श्लैष्मिकं तु वमनप्रायैरुपाचरेत् ।

**सर्वतस्तु विशुद्धस्य सम्यगाश्वासितस्य च ॥ १७॥**
**अपस्मारविमोक्षार्थं योगान्संशमनान् शृणु ।**

सर्वतोऽध उपरिष्टाच्च विशुद्धस्य तथा सम्यगाश्वासितस्य च कृतपेयाद्यन्नसंसर्गिकस्य च सम्यगाश्वासनं संपद्यते । तस्यापस्मारिणोऽपस्मारविशोधनाय वक्ष्यमाणानिमान् योगानाकर्णय । तानेवाह ।

**गोमयस्वरसक्षीरदधिमूत्रैः शृतं हविः ॥ १८ ॥**
**अपस्मारज्वरोन्मादकामलांतकरं पिबेत् ।**

गोमयस्वरसादिभिर्घृतं पक्वमपस्मारादिघ्नं पिबेत् ।

**द्विपंचमूलीत्रिफलाद्विनिशाकुटजत्वचः ॥ १९ ॥**
**सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ।**
**शम्याकपुष्करजटाफल्गुमूलदुरालभाः ॥ २० ॥**
**द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषते ।**
**भार्गीपाठाढकीकुंभनिकुंभव्योषरोहिषैः ॥ २१ ॥**
**मूर्वाभूतिकभूनिंबश्रेयसीसारिवाद्वयैः ।**
**मदयंत्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत् ॥ २२ ॥**
**प्रस्थं तद्वद्द्रवैः पूर्वैः पंचगव्यमिदं महत् ।**

**ज्वरापस्मारजठरभगंदरहरं परम् ॥ २३ ॥**
**शोफार्शःकामलापांडुगुल्मकासग्रहापहम् ।**

द्विपंचमूलादीनि पृथग् द्विपलप्रमाणानि जलद्रोणे पक्त्वा पादावशेषिते क्वाथे भार्ग्यादिभिः कर्षांशैः कल्कीकृतैर्घृतस्य प्रस्थं तद्वत्पूर्वैर्गोमयस्वरसादिभिर्द्रवैः पाचयेत् । महदिदं पंचगव्यं परं ज्वरादिहरम् । शोफादिघ्नं च । बहुद्रव्ययोगाच्चास्य महत्त्वं यथा महाकल्याणकादेः ।

**ब्राह्मीरसवचाकुष्ठशंखपुष्पीशृतं घृतम् ॥ २४ ॥**
**पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ।**

ब्राह्म्यादिभिः पुराणं सर्पिः पक्वं मेध्यमुन्मादादिजित् ।

**तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ॥ २५ ॥**
**क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणम् ।**

तैलप्रस्थं घृतप्रस्थं जीवनीयै रजीकृतैः पलप्रमाणैः क्षीरद्रोणे पचेत् । तत्सिद्धमपस्मारविमोक्षणम् ।

**कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ॥ २६ ॥**
**कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ।**
**वातपित्तोद्भवं क्षिप्रमपस्मारं निहंति तत् ॥ २७ ॥**

क्षीरेक्षुरसयोः कंस आढके तथा काश्मर्यरसेऽष्टगुणेऽष्टप्रस्थपरिमाणे घृतादस्याष्टगुणत्वम् । जीवनीयैः कार्षिकैर्घृतप्रस्थं विपाचयेत् । तद्वातपित्तजमपस्मारं शीघ्रमेव निहंति । ननु द्वंद्वजस्यापस्मारस्यासंभवात् कथमुक्तं वातपित्तोद्भवं हंतीति । उच्यते । वातपित्तोत्थयोर्द्वयोरप्यपस्मारयोर्हंतीत्येतदिहोक्तमित्यदोषः ।

**तद्वत्कासविदारीक्षुकुशक्वाथशृतं पयः ।**

तद्वत्पूर्ववत्काशादिक्वाथे शृतं क्षीरं स्यात् ।

**कूष्मांडस्वरसे सर्पिरष्टादशगुणे शृतम् ॥ २८ ॥**
**यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदम् ।**

कूष्मांडस्वरसेऽष्टादशगुणे मधुयष्टिकाकल्कं घृतप्रस्थं पक्वमपस्मारजिद् बुद्ध्यादिप्रदं च ।

**कपिलानां गवां पित्तं नावनं परमं हितम् ॥ २९ ॥**
**श्वशृगालबिडालानां सिंहादीनां च पूजितम् ।**

कपिलानां गवां पित्तं नस्यं सुष्ठु हितम् । न कृष्णानां गवामचिंत्यत्वात्प्रभावस्य । श्वादीनामपि पित्तं हितम् ।

**गोधानकुलनागानां वृषभर्क्षगवामपि ॥ ३० ॥**
**पित्तेषु साधितं तैलं नस्येऽभ्यंगे च शस्यते ।**

गोधादीनां च पित्तेषु साधितं तैलं नस्येऽभ्यंगे च शस्यते ।

**त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः ॥ ३१ ॥**
**श्यामापामार्गकारंजबीजैस्तैलं विपाचितम् ।**
**बस्तमूत्रे हितं नस्यं चूर्णं वाध्मापयेद्भिषक् ॥ ३२ ॥**

त्रिफलादिभिः कल्कितैश्छागमूत्रे चतुर्गुणे साधितं तैलं नस्यमुन्मादापस्मारिणोर्हितम् । चूर्णं त्रिफलादेर्वा वैद्यो नासाया मध्येऽध्मापयेत् ।

**नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।**
**तुंडैः पक्षैः पुरीषैश्च धूममस्य प्रयोजयेत् ॥ ३३ ॥**

नकुलादीनां यथासंभवं तुंडादिभिरपस्मारिणो धूमं योजयेत् ।

**शीलयेत्तैललशुनं पयसा वा शतावरीम् ।**
**ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ ३४ ॥**

तथा तैललशुनं शीलयेत् । क्षीरेण शतावरीमद्यात् । ब्राह्मीरसं वा कुष्ठरसं मधुना समभ्यसेद्वचां वा ।

**समं कुद्धैरपस्मारो दोषैः शारीरमानसैः ।**
**यज्जायते यतश्चैष महामर्मसमाश्रयः ॥ ३५ ॥**
**तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत् ।**
**तदार्तं चाग्नितोयादेर्विषमात्पालयेत्सदा ॥ ३६ ॥**

यद्यस्मादपस्मारो युगपत्प्रकोपितैः शारीरमानसैर्दोषैर्जायते यतश्चैष महामर्माश्रयस्तत एनमपस्मारं दुश्चिकित्स्यं रसायनैरुपाचरेत् । अपस्मारार्तं चाग्निजलादेर्विषमात्सदा पालयेत् ।

**मुक्तं मनोविकारेण त्वमित्थं कृतवानिति ।**
**न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥३७॥**

मनोविकारेण च मुक्तं संतं त्वमित्थं कृतवानिति न ब्रूयात् । अस्य च मनः क्लिष्टमिष्टैर्विषयैरुपबृंहयेत् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थानेऽपस्मारप्रतिषेधो नाम सप्तमोऽध्यायः॥७॥

**इत्यष्टांगहृदये भूततंत्रं तृतीयं समाप्तम् ।**

---

## अष्टमोऽध्यायः ।

अपस्मारादनंतरं शालाक्यमुपक्रम्यते । यथैव हृदयाख्यमहामर्माश्रितैरपस्मारो जन्यते तथैव मूर्धाख्यमहामर्माश्रितैरूर्ध्वजत्रुत्था रोगा जन्यंते । तेषामपि च मध्येऽक्षिरोगाणां प्राधान्यात पूर्वमुपन्यास इत्याह ।

**अथाऽतो वर्त्मरोगविज्ञानीयमध्यायं व्याख्यास्यामः।**

वर्त्मनि रोगा वर्त्मरोगाः कृच्छ्रोन्मीलनादयः । तेषां विज्ञानमवबोधः । स विद्यते यस्मिन्निति छस्तस्य पूर्ववल्लुक् ।

**सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।**
**अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥ १ ॥**
**शिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः।**
**वर्त्मसंधिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा ॥ २ ॥**
**रोगान् कुर्युः**

सर्वरोगनिदानेऽप्युक्तान्यभिहितानि यथायोगं तिक्तोषणादीनि तैराहारविहारैः प्रकुपिता मला रोगान्कुर्युः । विशेषादचक्षुष्यैरा-

हारविहारैः कुपिता मलाः प्रायो बाहुल्येन पित्तानुसारिणस्तथा शिरादिभिः करणभूताभिरूर्ध्वं जत्रुणः प्रसृतास्तथा नेत्रस्य संबंधिनमवयवं वक्ष्यमाणं वर्त्मादिकमाश्रिताः । वर्त्मेत्यादि । वाशब्दः प्रत्येकं युज्यते । वर्त्म वा संधिं वा सितं वाऽसितं वा दृष्टिं वा सकललोचनमाश्रिता इति सामान्येन नयनरोगाणां संप्राप्तिः ।

**चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः ।**
**सुप्तोत्थितस्य कुरुते वर्मस्तंभं सवेदनम् ॥ ३ ॥**
**पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ।**
**विमर्दनात्स्याच्च शमः कृच्छ्रोन्मीलं वदंति तम् ॥४॥**

तत्र तेषु वर्त्माद्याश्रितेषु मध्ये वर्त्माश्रयाः सिरा वायुः प्राप्य सुप्तोत्थितस्य नरस्य वर्त्मस्तंभं कुरुते रुजया सह । तथा पांशुपूर्णाभनयनत्वं कृच्छ्रेणोन्मीलनमश्रु च कुरुते । विमर्दनान्मलनाच्च शमः स्यात् । तमीदृक्स्वरूपं कृच्छ्रोन्मीलाख्यं नेत्ररोगं वदंति ।

**चालयन्वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः ।**
**करोत्यरुङ् निमेषोऽसौ**

वायुर्वर्त्मनी चालयन् निमेषोन्मेषणं पीडारहितं पुनः पुनः करोति । असौ निमेषाख्यो रोगो ज्ञेयः ।

**वर्त्म यत्तु निमील्यते ॥ ५॥**
**विमुक्तसंधि निश्चेष्टं हीनं वातहतं हि तत् ।**

यत्पुनर्वर्त्म विमुक्तसंधि तथा निश्चेष्टं हीनं च निमील्यते तं वातहताख्यं रोगं वदंति । मुनय इति शेषः ।

**कृष्णाः पित्तेन बह्व्योंऽतर्वर्त्मकुंभीकबीजवत् ॥ ६ ॥**
**आध्मायंते पुनर्भिन्नाः पिटिकाः कुंभिसंज्ञिताः ।**

पित्तेन कृष्णवर्णाभाः पिटिका बह्व्यो वर्त्मनोर्मध्ये कुंभीकबीजतुल्यास्तथा भिन्नाः सत्यः पुनराध्मायंते ताः कुंभीसंज्ञाः ।

**सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम् ॥ ७ ॥**
**पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशंति तत् ।**

पित्तेन सदाहक्लेदनिस्तोदं तथा रक्ताकारं स्पर्शनाक्षमं वर्त्म जायते तत् पित्तोत्क्लिष्टमुशंति कथयंति ।

**करोति कंडूं दाहं च पित्तं पक्ष्मांतमास्थितम् ॥ ८ ॥**
**पक्ष्मणां शातनं चानु पक्ष्मशातं वदंति तम् ।**

पित्तं पक्ष्मांतमास्थितं कंडूं दाहं च करोति । अनु पश्चात् पक्ष्मशातं करोति तं पक्ष्मशातं वर्णयंति ।

**पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात्**
**शोफोपदेहहृत्कंडूपिच्छिलाश्रुसमन्विताः ।**

कफात् पिटिकाः श्वेताः सर्षपोपमा घना निबिडाः शोफादियुता पोथकीसंज्ञाः ।



**कफोत्क्लिष्टं भवेद्वर्त्म स्तंभक्लेदोपदेहवत् ॥ १० ॥**

स्तंभादियुतं वर्त्म यद् भवेत् तत्कफोत्क्लिष्टं नाम ।

**ग्रंथिः पांडुररुक्पाकः कंडूमान् कठिनः कफात् ।**
**कोलमात्रः स लगणः किंचिदल्पस्ततोऽपि वा ११**

कफाद्यो ग्रंथिः कोलमात्रोऽथवा तत्कोलात्किंचिदल्पः पांडुः पीडापाकरहितः कडूमान्कठिनश्च स्यात् स लगणाख्यः ।

**रक्ता रक्तेन पिटिकास्तत्तुल्यपिटिकाचिताः ।**
**उत्संगाख्याः**

रक्तेन रक्तवर्णाः पिटिकास्तत्तुल्यपिटिकैराचिता उत्संगाख्याः ।

**तथोत्क्लिष्टं राजिमत्स्पर्शनाक्षमम् ॥ १२ ॥**

तथोत्संगवदुत्क्लिष्टाख्यं वर्त्म । तच्च पिटिकारूपं किं तर्हि राजियुतं स्पर्शनाक्षमं च स्यात् ।

**अर्शोऽधिमांसं वर्त्मांतः स्तब्धं स्निग्धं सदाहरुक् ।**
**रक्तं रक्तेन तत्स्रावी छिन्नं छिन्नं च वर्धते ॥ १३ ॥**

अधिकमांसं च वर्त्माभ्यंतरस्थितमर्शो नाम रक्तेन स्यात् । रक्तं वर्णतस्तथा स्तब्धतादिगुणं स्यात् । तथा तत्स्रावि तद्रक्तं स्रवत्यभीक्ष्णं पुनः पुनश्छिन्नमपि वर्धते ।

**मध्ये वा वर्त्मनोंऽते वा कंडूषारुग्वती स्थिरा ।**
**मुद्गमात्रासृजा ताम्रा पिटिकांजननामिका ॥ १४ ॥**

असृजा ताम्रा पिटिका मुद्गप्रमाणा वर्त्मनो मध्येंऽते वा कंडूादिमती स्थिरा चांजननामिका स्यात् ।

**दोषैर्वर्त्म बहिः शूनं यदंतः सूक्ष्मखाचितम् ।**
**सस्रावमंतरुदकं बिसाभं बिसवर्त्म तत् ॥ १५ ॥**

दोषैर्वातादिभिर्बहिः शूनं यद्वर्त्म सूक्ष्मैः खैश्छिद्रैरंतराचितं सस्रावं च तद् बिसवर्त्म उदकांतस्थितं सच्छिद्रं बिसतुल्यत्वात् ।

**यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात् ।**
**रक्तदोषत्रयोत्क्लेशाद् वदंत्युत्क्लिष्टवर्त्म तत् ॥ १६ ॥**

यद्वर्त्म रक्तोत्क्लेशाद्दोषत्रयोत्क्लेशाच्च ह्युक्लिष्टमुत्क्लेशितं सदकस्माद् हेतुंविनैव म्लानिमियाच्छुष्कत्वं यायात् तदुक्लिष्टं वर्त्म स्यात् ।

**श्यावंवर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत् ।**

रक्तसहितैस्त्रिमलैर्यद्वर्त्म श्यावं रुजा क्लेदेन शोफेन च युक्तं भवति तच्छ्यावंवर्त्म ।

**श्लिष्टाख्यवर्त्मनी श्लिष्टे कंडूश्वयथुरागिणी ॥ १७ ॥**

श्लिष्टे एकत्र संलग्ने वर्त्मनी कंड्वादियुते श्लिष्टवर्त्मनी नाम ।

**वर्त्मनोंऽतः खरा रूक्षाः पिटिकाः सिकतोपमाः ।**
**सिकतावर्त्म**

वर्त्मनो मध्ये वालुकातुल्याः पिटिकाः खरस्पर्शास्तथा रूक्षास्तत् सिकतावर्त्म ।

**कृष्णं तु कर्दमं कर्दमोपमम् ॥ १८ ॥**

कर्दमसदृशं कृष्णं वर्त्म कर्दमाख्यम् ।

**बहलं बहलैर्मांसैः सवर्णैश्चीयते समैः ।**

बहलैर्घनैर्मांसैः सवर्णैः समैर्न विषमैश्चीयते तद्बहलं नाम ।

**कुकूणकः शिशोरेव दंतोत्पत्तिनिमित्तजः ॥ १९ ॥**
**स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ।**
**स वर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः ॥ २० ॥**

कुकूणकः शिशोरेव न महतो जायते । यतोऽसौ दंतोत्पत्तिहेतुको भवति । तेन कुकूणकेन बाल उच्छूनताम्रनयनो वीक्षणाक्षमस्तथा वर्त्मशूलादिमान् कर्णादिमर्दनश्च स्यात् ।

**पक्ष्मोपरोधे संकोचो वर्त्मनां जायते तथा ।**
**खरतांतर्मुखत्वं च लोम्नामन्यानि वा पुनः ॥ २१ ॥**
**कंटकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि सूयते ।**
**उष्यते चानिलादिद्विड्लपाहःशांतिरुद्धृतैः ॥ २२ ॥**

पक्ष्मोपरोधे वर्त्मनां संकोचो भवति । तथा खरत्वमंतर्मुखत्वं च रोम्णामन्यानि वा रोमाणि जायंते । तैः खरांतर्मुखैरपूर्वैर्वा रोगस्वभावात्तीक्ष्णाग्रैः कंटकैरिव घृष्टमक्षि सूयते । उष्यते च सांतर्दाहस्तीव्रोष्मा स्यादित्यर्थः । तथा पवनादिद्विट् । आदिशब्देनानलातपौ गृह्येते । स्तोकान्यहान्युद्धृतैरुत्पाटितैस्तैस्तैः शांतिर्भवति ।

**कनीनके बहिर्वर्त्म कठिनो ग्रंथिरुन्नतः ।**
**ताम्रः पक्वोऽस्रपूयास्रुदलज्याध्मायते मुहुः ॥ २३ ॥**

कनीनके वर्त्मनोर्बाह्यतः कठिन उन्नतो ग्रंथिरलजीत्युच्यते । किंभूतो ग्रंथिः । ताम्रः पक्वश्चास्रस्रावी पूयस्रावी च । तथा च मुहुः स्रुतः सन्नाध्मायते ।

**वर्त्मांतर्मांसपिंडाभः श्वयथुर्ग्रथितो रुजः ।**
**सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥ २४ ॥**

वर्त्मनोंऽतरे मांसपिंडाकृतिः श्वयथुः सरक्तैस्त्रिभिर्दोषैरर्बुदः स्यात् । किंभूतः । श्वयथुर्ग्रथितो नीरुजः स च बाह्यतश्चलो विषमश्च स्यात् ।

**चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः ।**

इत्यनेन प्रकारेण चतुर्विंशतिसंख्याका वर्त्माश्रया रोगाः ।

**आद्योऽत्र भेषजैः साध्यो द्वौ ततोऽर्शश्च वर्जयेत् ॥**
**पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रेण साधयेत् ।**

एषु मध्यादाद्यः कृच्छ्रोन्मीलनाख्यो भेषजैः साध्यः । ततोऽनंतरं द्वौ निमेषवातहतावर्शश्च वर्जयेत् । पक्ष्मरोधो यापनीयः । शेषानेकोनविंशतिं शस्त्रेणोपचरेत् ।

**कुट्टयेत्पक्ष्मसदनं छिंद्यात्तेष्वपि चार्बुदम् ॥ २६ ॥**
**भिंद्याल्लगणकुंभीकाबिसोत्संगांजनालजीः ।**
**पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयम् ।**
**सकर्दमं सबहलं विलिखेत्सकुकूणकम् ॥ २७ ॥**

तेष्वपि शस्त्रसाध्येषु मध्ये पक्ष्मसदनं कुट्टयेत् सूचीकूर्चेण । अर्बुदं छिंद्याद्वृद्धिपत्रादिना । लगणादीनि व्रीहिमुखेन भिंद्यात् । पोथक्यादयः कुकूणकांता एकादश विलेख्याः । उत्क्लिष्टचतुष्टयं पित्तोत्क्लिष्टं कफोत्क्लिष्टं रक्तोत्क्लिष्टमुत्क्लिष्टवर्त्म च ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने वर्त्मरोगविज्ञानीयो नामाष्टमोऽध्यायः ॥८॥

---

## नवमोऽध्यायः ।

वर्त्मरोगविज्ञानादनंतरं वर्त्मरोगप्रतिषेधमारभ्यत इत्याह ।

**अथाऽतो वर्त्मरोगप्रतिषेधं व्याख्यास्यामः ।**
**कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्कांबुसाधितम् ।**
**ससितं योजयेत्स्निग्धं नस्यधूमांजनादि च ॥ १ ॥**

कृच्छ्रोन्मीले वर्त्मरोगे पुराणं घृतं द्राक्षाकल्कांबुसाधितं पक्वं समशर्करं योजयेत् । स्निग्धं नस्यादिकम् ।

कुंभीकावर्त्मरोगोपक्रममाह ।

**कुंभीकावर्त्मलिखितं सैंधवप्रतिसारितम् ।**
**यष्टीधात्रीपटोलीनां क्वाथेन परिषेचयेत् ॥ २ ॥**

कुंभीकावर्त्म विलिखितं वृद्धिपत्रादिना सैंधवलवणेन प्रतिसारितं सत् मधुयष्टिकादिक्वाथेन परिषेचयेत् ।

कथं वर्त्म विलेखनीयमित्याह ।

**निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।**
**बहिः कोष्णांबुतप्तेन स्वेदितं वर्त्म वाससा ॥ ३ ॥**
**निर्भुज्य वस्त्रांतरितं वामांगुष्ठांगुलीधृतम् ।**
**न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः ॥ ४ ॥**
**मंडलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदांकितम् ।**
**लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥ ५ ॥**
**फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ।**
**स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ ६ ॥**
**यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ।**
**घृतेनासिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ ७ ॥**
**ऊर्ध्वाधः कर्णयोर्दत्त्वा पिंडीं च यवसक्तुभिः ।**
**द्वितीयेऽहनि मुक्तस्य परिषेकं यथायथम् ॥ ८ ॥**
**कुर्यात् चतुर्थे नस्यादीन्मुंचेदेवाह्नि पंचमे ।**

निवाते स्थान आप्तैरधिष्ठितस्य कृताश्रयस्य तथा शुद्धस्य वमनविरेचनादिना उत्तानं नित्यं शेते तस्य वर्त्म वाससा कोष्णांबुना तप्तेन स्वेदितं सन्निर्भुज्य कुटिलीकृत्य वस्त्रांतरितं वामांगु-

ष्ठांगुलीभ्यां धृतमेवं न स्रंसते । न वा चलति सर्वतः । अनंतरं तद्वर्त्म तिर्यङ् मंडलाग्रेण शस्त्रपदांकितं कृत्वा तेनैव शस्त्रेण शाकादिपत्रैर्वा समुद्रफेनेन वा लिखेत् । किं कुर्वन् । पिचुना कर्पटादियोजितेन रक्तं प्रमृजन् । रक्ते स्थितेऽवहति सुलिखितं तद्वर्त्म ज्ञात्वा सक्षौद्रैर्यथास्वं कथितैः सैंधवादिभिः प्रतिसारयेत् । पश्चाच्चोष्णेन वारिणा प्रक्षाल्य सर्पिषा सिक्तमनंतरमभ्यक्तं मधुसर्पिषा ह्यूर्ध्वाधः कर्णयोर्यवसक्तुभिः पिंडीं कृत्वा बध्नीयात् । द्वितीये दिवसे मुक्तस्य वर्त्मनो यथास्वं परिषेकं कुर्यात् । चतुर्थे दिवसे नस्यादीन् कुर्यात् । पंचमे दिवसे मुंचेदेव नान्यत्किंचित्कुर्यात् ।

**समं नखनिभं शोफकंडूघर्षाद्यपीडितम् ॥ ९ ॥**
**विद्यात्सुलिखितं वर्त्म लिखेद् भूयो विपर्यये ।**

समं नखसदृशं शोफाद्यपीडितं सुलिखितं वर्त्म जानीयात् । विपर्ययेऽस्माल्लक्षणाद्विपरीत्ये सति तद्वर्त्म पुनर्लिखेत् ।

**रुक्पक्ष्मवर्त्मसदनं स्रंसनादतिलेखनात् ॥ १० ॥**
**स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ।**

अतिलेखनाद्रुजादीनि स्युः । तस्मिन्नतिलेखने स्नेहस्वेदादिको वातघ्नो विधिः कार्यः ।

**अभ्यज्य नवनीतेन श्वेतरोध्रं प्रलेपयेत् ॥ ११ ॥**
**एरंडमूलकल्केन पुटपाके पचेत्ततः ।**
**स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतम् ॥१२॥**
**स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनम् ।**

श्वेतरोध्रं नवनीतेनाभ्यज्य एरंडमूलकल्केन प्रलेपयेत् । अनंतरं पुटपाके पचेत् । स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतं सद्युवतीक्षीरेण छगल्या वा क्षीरेण मृदितं नेत्रसेचनं हितम् ।

**शालितंडुलकल्केन लिप्तं तद्वत्परिष्कृतम् ॥ १३ ॥**
**कुर्यान्नेत्रेऽतिलिखिते मृदितं दधिमस्तुना ।**
**केवलेनाऽपि वा सेकं मस्तुना जांगलाशिनः ॥१४॥**

अतिलिखिते वर्त्मनि नवनीतेनाक्तं श्वेतरोध्रं शालितंडुलकल्केन लिप्तं बद्धं परिष्कृतं पूर्ववत्परिकल्पितं पुटपाकीकृतं स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतं चेत्यर्थः । दधिमस्तुना मृदितं सेकं कुर्यात् । दधिग्रहणं तक्रमस्त्वादिनिवृत्त्यै अथवा केवलेन कल्करोध्ररहितेन मस्तुना जांगलमांसाशिनो नरस्य सेकं कुर्यात् । अपि स्वेदनपातनसमुदायो विकल्पार्थः ।

**पिटिका व्रीहिवक्त्रेण भित्त्वा तु कठिणोन्नताः ।**
**निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ॥ १५ ॥**

कठिनोन्नताः पिटिकाः व्रीहिवक्त्रेण भित्त्वाऽनु निष्पीडयेत् । परिशेषोऽपि विधिः प्रलेपनबंधनक्षालनसेचनादिः पूर्ववत्कार्यः ।

**लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ।**

लेखने भेदने च एष एव क्रमः सर्वत्र वर्त्मनि कार्यः ।

**पित्तास्रोत्क्लिष्टयोः स्वादुस्कंधसिद्धेन सर्पिषा १६**
**सिराविमोक्षः स्निग्धस्य त्रिवृच्छ्रेष्टं विरेचनम् ।**
**लिखिते स्रुतरक्ते च वर्त्मनि क्षालनं हितम् ॥ १७॥**
**यष्टीकषायः सेकस्तु क्षीरं चंदनसाधितम् ।**

पित्तोत्क्लिष्टे रक्तोत्क्लिष्टे च मधुरस्कंधश्टतेन घृतेन स्निग्धस्य पुंसः सिराविमोक्षः कार्यः । तथा त्रिवृतात्रिफलाविरेचनम् । लिखिते स्रुतरक्ते च वर्त्मनि क्षालनं हितम् । लिखितवर्त्मनि स्रुतरक्ते सति मधुयष्टिकाक्वाथः क्षालने हितः । क्षीरं चंदनसाधितं तु सेके हितम् ।

**पक्ष्मणां सदने सूच्या रोमकूपान् विकुट्टयेत् ॥१८॥**
**ग्राहयेद्वा जलौकोभिः पयसेक्षुरसेन वा ।**
**वमनं नावनं सर्पिः श्टतं मधुरशीतलैः ॥ १९ ॥**

पक्ष्मणां सदने सति रोमकूपान् रोममूलानि सूच्या विकुट्टयेत् । जलौकोभिर्वा ग्राहयेत् । क्षीरेणेक्षुरसेन वा वमनं हितम् । मधुरशीतलैर्द्राक्षादिभिः पक्वं घृतं नावनं हितम् ।

**संचूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ।**
**ताम्रे दशाहं परमं पक्ष्मशाते तदंजनम् ॥ २० ॥**

पुष्पकासीसं संचूर्णयित्वा ताम्रपात्रे दशाहं सुरसारसैः समूर्वारसैर्भावयेत् । तदेतत्पक्ष्मशाते श्रेष्ठमंजनम् ।

**पोथकीर्लिखिताः शुंठीसैंधवप्रतिसारिताः ।**
**उष्णांबुक्षालिताः सिंचेत् खदिराढकिशिग्रुभिः २१**
**अप्सिद्धैर्द्विनिशाश्रेष्ठामधुकैर्वा समाक्षिकैः ।**

पोथकीर्लिखिता वृद्धिपत्रादिभिः शुंठीसैंधवाभ्यां प्रतिसारितास्तथोष्णांबुना क्षालिता जलक्वथितैः खदिरादिभिः सिंचेत् । द्विनिशादिभिर्वा जलक्वथितैः समाक्षिकैः सिंचेत् ।

**कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारणम् ॥२२॥**
**सूक्ष्मैः सैंधवकासीसमनोह्वाकणतार्क्ष्यजैः ।**
**वमनांजननस्यादि सर्वं च कफजिद्धितम् ॥ २३ ॥**

कफोत्क्लिष्टे वर्त्मनि शस्त्रेण विलिखिते सैंधवादिभिः सूक्ष्मरजीकृतैर्माक्षिकसहितैः प्रतिसारणं हितम् । तथा वमनादि हितम् । सर्वं च यत्कफजित्तच्च हितम् ।

**कर्तव्यं लगणेप्येतदशांतावग्निना दहेत् ।**

लगणेऽपीदं कार्यम् । एवमप्यशमे सति ज्वलनेन दहेत् ।

**कुकूणे खदिरश्रेष्ठानिंबपत्रैः श्टतं घृतम् ॥ २४ ॥**
**पीत्वा धात्री वमेत्कृष्णायष्टीसर्षपसैंधवैः ।**

कुकूणे खदिरादिभिः पक्वं घृतं धात्री स्तनदायिनी पीत्वा कृष्णादिभिर्वमेत् ।

**अभयापिप्पलीद्राक्षाक्काथेनैनां विरेचयेत् ॥ २५ ॥**

अभयादिक्वाथेनैनां स्तनदायिनीं विरेचयेत् ।

**मुस्ताद्विरजनीकृष्णाकल्केनालेपयेत्स्तनौ ।**
**धूपयेत्सर्षपैः साज्यैः**

मुस्तादिकल्केन कुचावालेपयेत् । साज्यैः सर्षपैः स्तनौ धूपयेत् ।

**शुद्धां क्वाथं च पाययेत् ॥ २६ ॥**
**पटोलमुस्तमृद्वीकागुडूचीत्रिफलोद्भवम् ।**

शुद्धां च वमनविरेचनादिना पटोलादिकं क्वाथं तां च पाययेत् ।

**शिशोस्तु लिखितं वर्त्म स्रुतासृग्वांबुजन्मभिः २७**
**धात्र्यश्मंतकजंबूत्थपत्रक्वाथेन सेचयेत् ।**

शिशोः पुनर्वर्त्म लिखितं जलौकाभिर्वा स्रुतरक्तं धात्र्यादिपत्रक्वाथेन सेचयेत् ।

**प्रायः क्षीरघृताशित्वाद् बालानां श्लेष्मजा गदाः ॥**
**तस्माद्वमनमेवाग्रे सर्वव्याधिषु पूजितम् ।**

प्रायो बाहुल्येन क्षीरघृतभोजनत्वाच्छिशूनां कफजा रोगाः स्युः । तस्माद्वमनमेव पूर्वं तेषां सर्वव्याधिषु पूजितम् ।

तदेव वमनमाह ।

**सिंधूत्थकृष्णापामार्गबीजाज्यस्तन्यमाक्षिकम् ॥२९॥**
**चूर्णो वचायाः सक्षौद्रो मदनं मधुकान्वितम् ।**
**क्षीरं क्षीरान्नमन्नं च भजतः क्रमशः शिशोः ॥ ३०॥**
**वमनं सर्वरोगेषु विशेषेण कुकूणके ।**

सिंधूत्थेत्यादिवमनं दद्यात् । वचाचूर्णः सक्षौद्रो वा मदनफलं मधुयष्टीयुक्तं वा । क्षीरं क्षीरान्नम् । तथाऽन्नं भजतः शिशोर्यथाक्रमं वमनत्रयमेव योज्यम् । वमनं सर्वेष्वेवामयेषु शिशोः श्रेष्ठम् । विशेषेण कुकूणके हितम् ।

**सप्तलारससिद्धाज्यं योज्यं चोभयशोधनम् ॥ ३१ ॥**

सप्तलारसेन वा सिद्धं घृतमूर्ध्वाधः शोधनं हितम् ।

**द्विनिशारोध्रयष्ट्याह्वरोहिणीनिंबपल्लवैः ।**
**कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोन्वितैः ॥ ३२ ॥**
**क्षीरक्षौद्रघृतोपेतं दग्धं वा लोहितं रजः ।**

कुकूणके द्विहरिद्रादिभिस्ताम्रचूर्णयुक्तैर्जलपिष्टैर्वर्तिर्हिता । क्षीरादियुक्तं दग्धं लोहोत्थितं चूर्णं हितम् । केचित्तु समुद्रफेनचूर्णं दग्धं दुग्धमाक्षिकमित्याहुः ।

**एलारसोनकतकशंखोषणफणिज्जकैः ॥ ३३ ॥**
**वर्तिः कुकूणपोथक्योः सुरापिष्टैः सकट्फलैः ।**

एलादिभिः कट्फलयुक्तैः कुकूणपोथक्योः सुरापिष्टैर्वर्तिर्हिता ।

**पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ॥ ३४ ॥**
**उत्सृज्य द्वौ भ्रुवोऽधस्ताद्भागौ भागं च पक्ष्मतः ।**
**यवमात्रं यवाकारं तिर्यक्छित्त्वाऽऽर्द्रवाससा ३५**
**अपनेयमसृक् तस्मिन्नल्पीभवति शोणितम् ।**
**सीव्येत्कुटिलया सूच्या मुद्गमात्रांतरैः पदैः ॥ ३६ ॥**
**बध्वा ललाटे पट्टं च तत्र सीवनसूत्रकम् ।**
**नातिगाढश्लथं सूच्या निक्षिपेदथ योजयेत् ॥३७॥**
**मधुसर्पिःकवलिकां न चास्मिन्बंधमाचरेत् ।**
**न्यग्रोधादिकषायैश्च सक्षीरैः सेचयेद्रुजि ॥ ३८ ॥**
**पंचमे दिवसे सूत्रमपनीयावचूर्णयेत् ।**
**गैरिकेण व्रणं युंज्यात्तीक्ष्णं नस्यांजनादि च ॥ ३९॥**

पक्ष्मरोधे रोमसु प्रकर्षेण वृद्धेषु शुद्धशरीरस्य नरस्य भ्रुवोरधस्ताद्वौ भागावुत्सृज्य विहाय पक्ष्मतो भागं हित्वा यवमात्रं यवसंस्थानं तिर्यक् छित्त्वा क्लिन्नवस्त्रेण रक्तमपनयेत् । रक्ते चाल्पीभवति सति वक्रया सूच्या मुद्गमात्रांतरैः पदैः सीव्येत् । ततो ललाटे पट्टं बध्वा तत्र च पट्टं सीवनसूत्रकं नातिगाढश्लथं सूच्या विनिक्षिपेत् । अनंतरं माक्षिकघृतकवलिकां योजयेत् । नचात्र बंधं कुर्यात् । पीडायां सत्यां न्यग्रोधादिकषायैः क्षीरयुतैः सेचयेत् । पंचमे दिवसे सूत्रमपनीय व्रणं गैरिकेणावचूर्णयेत् । तीक्ष्णं च नस्यादि युंज्यात् ।

**दहेदशांतौ निर्भुज्य वर्त्मदोषाश्रयां वलीम् ।**
**संदंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ४० ॥**
**सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजेः पुनः ।**
**भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥४१॥**

एवमप्यशांतौ वर्त्मदोषाश्रयां वलीं निर्भुज्य दहेत् । अधिकं पक्ष्मसंदंशेन हृत्वा तस्य पक्ष्मण आश्रयं दहेत् । केन । सूच्यग्रेणाग्निवर्णेन बाह्यालजेस्तु भिन्नस्य दाहः कार्यः । अलजीशब्दः पुंस्यपि दृष्टः । अर्बुदस्य क्षारवह्निभ्यां सुच्छिन्नस्य दाहः कार्यः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने वर्त्मरोगप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

वर्त्मरोगप्रतिषेधादनंतरं स्थानानुपूर्व्या संधिसितासितरोगविज्ञानमारभ्यते ।

**अथाऽतः संधिसितासितरोगविज्ञानमारभ्यते ॥**

संधिश्च सितासितौ च संधिसितासितास्तेषु रोगास्तेषां विज्ञानम् । शेषं पूर्ववत् ।

यथोद्देशस्तथा निर्देश इति तावेव तावत्संधिरोगावाह ।

**वायुः क्रुद्धः शिराः प्राप्य जलाभं जलवाहिनीः ।**
**अस्रु स्रावयते वर्त्म शुक्लसंधेः कनीनकात् ॥ १ ॥**
**तेन नेत्रं सरुग्रागशोफं स्यात्स जलास्रवः ।**

पवनः कुपितो जलवाहिनीः सिराः प्राप्य जलाकृत्यश्रु स्रावयते । कुतः वर्त्मशुक्लसंधेः कनीनकात् । तेन जलाभस्रावेण नयनं सरुक् सरागं सशोफं च स्यात् । स च जलस्रावाख्यो रोगः ।

**कफात्कफस्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥ २ ॥**

कफात्कफस्रवे सति श्वेतं पिच्छिलं च बहलं च स्रवेत् ।

**कफेन शोफस्तीक्ष्णाग्रः क्षारबुद्बुदकोपमः ।**
**पृथुमूलबलः स्निग्धः सवर्णमृदुपिच्छिलः ॥ ३ ॥**
**महानपाकः कंडूमानुपनाहः स नीरुजः ।**

श्लेष्मणा शोफस्तीक्ष्णादिगुणः स उपनाहाख्यो नीरुजः स्यात् ।

**रक्ताद् रक्तस्रवे ताम्रं बहूष्णं चाश्रु संस्रवेत् ॥४॥**

रक्तेन रक्तस्रावो भवति तस्मिंश्च ताम्रवर्णमुष्णं वास्रं संस्रवेत् ।

**वर्त्मसंध्याश्रया शुक्ले पिटिका दाहशूलिनी ।**
**ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ ५ ॥**

वर्त्मसंधिराश्रयो यस्याः सा वर्त्मसंध्याश्रया शुक्ले पिटिका शूलदाहवती ताम्रवर्णा मुद्गसदृशी पर्वणी भण्यते । सा च भिन्ना सती रक्तं स्रवति । एषा च रक्तसमुत्थैव वेद्या । रक्तस्रावादनंतरमस्याः पाठाद्रक्तस्रावित्वाच्च ।

**पूयास्रावे मलाः सास्रवर्त्मसंधेः कनीनकात् ।**
**स्रावयंति मुहुः पूयं सास्रत्वङ्मांसपाकतः ॥ ६ ॥**

पूयस्रावाख्ये दोषा रक्तसहिता वर्त्मसंधेः कनीनकात् पुनः पुनः पूयं सास्रत्वङ्मांसपाकाद्धेतोः स्रावयंति ।

**पूयालसो व्रणः सूक्ष्मः शोफसंरंभपूर्वकः ।**
**कनीनसंधावाध्मायी पूयास्रावी सवेदनः ॥ ७ ॥**

पूयालसो व्रण उच्यते । कीदृक् सूक्ष्मः । तथा शोफसंरंभपूर्वकः । क्वासौ स्यात् । कनीनसंधौ । तथाऽऽध्माय्यानाहवान् । पूयास्रावी सरुक् स्यात् ।

**कनीनस्यांतरलजी शोफो रुक्तोददाहवान् ।**

कनीनस्यांतः शोफो रुक्तोददाहवानलजीत्युच्यते ।

**अपांगे वा कनीने वा कंडूपापक्ष्मपोटवान् ॥ ८ ॥**
**पूयास्रावी कृमिग्रंथिर्ग्रंथिकृमियुतोऽर्तिमान् ।**

अपांगे कनीने वा कंड्वादिवांस्तथा पूयास्रावी ग्रंथिरेव कृमियुक्तोऽर्तिमान् कृमिग्रंथिरुच्यते ।

**उपनाहकृमिग्रंथिपूयालसकपर्वणीः ॥ ९ ॥**
**शस्त्रेण साधयेत्पंचसालजी नास्रवांस्त्यजेत् ।**

उपनाहादींश्चतुरः शस्त्रेण साधयेत् । आस्रवान् जलास्रावादींश्चतुर अलजीं चेति पंच त्यजेत् ।

एवं संधिगतान्नव रोगानाख्याय सितभागस्थान् रोगानाह ।

**पित्तं कुर्यात्सिते बिंदूनसितश्यावपीतकान् ॥ १० ॥**
**मलाक्तादर्शतुल्यं वा सर्वं शुक्लं सदाहरुक् ।**
**रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः ॥ ११ ॥**

सिते नेत्रदेशे । पित्तं कर्तृ बिंदून् कृष्णश्यावपीतान् कुर्यात् । मललेपदिग्धदर्पणसमानं वा सर्वं शुक्लमेवमुभयप्रकारोऽप्ययं सदाहरुक् शुक्तिकसंज्ञो रोगः शकृद्भेदेन तृषा ज्वरेण च युक्तः ।

**कफाच्छुक्ले समं श्वेतं चिरवृद्ध्यधिमांसकम् ।**
**शुक्लार्म**

कफाच्छुक्लभागे समं न तु विषमं तथा श्वेतवर्णमधिमांसकं चिरवृद्धि तच्छुक्लार्म ।

**शोफस्त्वरुजः सवर्णो बहलो मृदुः ॥ १२ ॥**
**गुरुः स्निग्धोऽम्बुबिंद्वाभो बलासग्रथितं स्मृतम् ।**

शोफस्तु निरुजः समानवर्णो बहलादिस्तथा जलबिंदुसमो बलासग्रथितं स्मृतम् ।

**बिंदुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत् ॥ १३ ॥**

बिंदुभिः पिष्टवत्सितैरुत्सन्नैः पिष्टकं नामार्म वदेत् ।

**रक्तराजीततं शुक्लमुष्यते यत्सवेदनम् ।**
**अशोफाश्रूपदेहं च शिरोत्पातः सशोणितम् ॥१४॥**

रक्तराजीततं शुक्लं शुक्लभाग उष्यते । यत्सवेदनं शोफाश्रूलेपरहितं शोणिताच्छिरोत्पातः ।

**उपेक्षितः सिरोत्पातो राजीस्ता एव वर्धयन् ।**
**कुर्यात्सास्रं सिराहर्षं तेनाक्ष्युद्वीक्षणाक्षमम् ॥ १५ ॥**

सिरोत्पातोऽचिकित्सितस्ता एव रक्ता एव राजीर्वर्धयन् सिराहर्षं सास्रं कुर्यात् । तेन सिराहर्षेण लोचनं वीक्षणाक्षमं स्यात् ।

**सिराजाले सिराजालं बृहद्रक्तं घनोन्नतम् ।**

सिराजाले बृहत्तथा रक्तं घनमुन्नतं च यद् भवति तत्सिराजालं नाम ।

**शोणितार्मसमं श्लक्ष्णं पद्माभमधिमांसकम् ॥ १६ ॥**

समं न तु विषमं तथा श्लक्ष्णं यदधिमांसकं तच्छोणितार्म ।

**नीरुक् श्लक्ष्णोऽर्जुनं बिंदुः शशलोहितलोहितः ।**

नीरुजः श्लक्ष्णो बिंदुः शशलोहितलोहितस्ताम्रोऽर्जुनं नाम ।

**मृद्वाशुवृद्ध्यरुङ्मांसं प्रस्तारिश्यावलोहितम् ॥१७॥**
**प्रास्तार्यर्ममलैः सास्रैः**

मांसं प्रस्तारितं तथा मृदु तथा प्रागाशुवृद्धि तथा निरुक् श्यावलोहितं प्रस्तार्यर्मेत्युच्यते । तच्च त्रिभिर्दोषैः सशोणितैः स्यात् ।

**सावार्म स्नावसन्निभम् ।**

स्नावसदृशं तु स्नावार्मेत्युच्यते ।

**शुक्लासृक्पिंडवच्छयावं यन्मांसं बहलं पृथु ॥१८॥**
**अधिमांसार्म तद्**

शुक्लरक्तपिंडवच्छयावं यन्मांसं तथा बहलं पृथु च स्यात् तदधिमांसार्म भण्यते ।

**दाहघर्षवंत्यः सिरावृताः ।**
**कृष्णासन्नाः सिरासंज्ञाः पिटिकाः सर्षपोपमाः ॥**

पिटिका दाहादिमत्यस्तथा सिराचिताः कृष्णभागासन्नाः सर्षपसंस्थानाः सिरासंज्ञाः ।

सितभागानां तेषां त्रयोदशानां साधनं सूत्रयति ।

**शुक्तिहर्षशिरोत्पातपिष्टकग्रथितार्जुनम् ।**
**साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥ २० ॥**
**नवोत्थं तदपि द्रव्यैः**

शुक्त्यादीन् षडौषधैः साधयेत् । शेषान् सप्त शस्त्रेण साधयेत् । नवोत्थाने तानपि भेषजैरुपक्रमेत् । न केवलं पूर्वोक्तं षट्कमित्यर्थः ।

**अर्मोक्तं यच्च पंचधा ।**
**तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम् ॥२१॥**
**चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं च वर्जयेत् ।**

यच्च पंचप्रकारकमर्मोक्तं शुक्लार्म शोणितार्म प्रस्तार्यर्म स्नावार्माधिमांसार्म एतच्छेदनार्हम् । यत् कृष्णभागप्राप्तं मांसस्नावसिरावृतं चर्मोद्दालवदुच्छ्रायि तद्वर्जयेन्न चिकित्सेत् । यच्च दृष्टिप्राप्तं तदपि वर्जयेत् ।

अथ कृष्णरोगानाह ।

**पित्तं कृष्णेऽथवा दृष्टौ शुक्रं तोदाश्रुरागवत् २२**
**छित्त्वा त्वचं जनयति तेन स्यात्कृष्णमंडलम् ।**
**पक्वजंबूनिभं किंचिन्निम्नं च क्षतशुक्रकम्॥ २३ ॥**
**तत्कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात् ।**
**तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ॥२४॥**
**तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ।**

पित्तं कर्तृ कृष्णभागे दृष्टौ वा शुक्रं जनयते । किंभूतम् । तोदाश्रुरागयुक्तम् । किं कृत्वा । त्वचं प्रथमं पटलं छित्त्वा तेन कृष्णमंडलं पक्वजंबूसदृशं निम्नं च क्षतशुक्रकं स्यात् । तच्च कृच्छ्रसाध्यम् । द्वितीयपटलव्यधात्तु याप्यं स्यात् । तत्र द्वितीयपटलव्यधे तोदादीनां बाहुल्यम् । तथा सूचीविद्धोपमकृष्णमंडलत्वं च तोदादिभूयस्त्वेन । सेवनीविद्धोपमकृष्णमंडलतया च द्वितीयपटलव्यधोऽनुमीयत इत्यर्थः । तृतीयपटलच्छेदाद् व्रणैर्निचितमसाध्यं क्षतशुक्रकम् ।

एवं क्षतशुक्रकं त्रिधा विधाय शुद्धशुक्रमाचष्टे ।

**शंखशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकम् २५**

शंखवच्छुक्लं शुद्धशुक्रकं तच्च कफाज्जायते ।

**आताम्रपिच्छलास्रस्रुदाताम्रपिटिकातिरुक् ।**
**अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्यास्रुजाजका ॥**

आताम्रमीषत्ताम्रवर्णं पिच्छलं चास्रं स्रवति या सा आताम्रपिच्छलास्रस्रुत् । तथा आताम्रपिटिका तथातिपिडावती तथाऽजाविट्सदृश उच्छ्रायः कार्ष्ण्यो यस्याः सैवमजकाख्या रक्तेन स्यात् । सा च वर्ज्याऽसाध्यत्वात् ।

**सिराशुक्रं मलैः सास्रैस्तज्जुष्टं कृष्णमंडलम् ।**
**सतोददाहताम्राभिः सिराभिरवतन्यते ॥ २७ ॥**
**अनिमित्तोष्णशीताच्छघनास्रस्रुक् च तत्त्यजेत् ।**

सरक्तैर्मलैः सिराशुक्रं स्यात् । तेन शिराशुक्रेण जुष्टं कृष्णमंडलं सिराभिरवतन्यते । किंभूताभिः । सतोददाहताम्राभिः । अनिमित्तमकस्मादस्मिन् कदाचिच्छीतं कदाचिदुष्णमच्छं घनं वाऽस्रं स्रवति तच्च त्यजेदसाध्यत्वात् ।

**दोषैः सास्रैः सकृत्कृष्णं नीयते शुक्ररूपताम् ॥२८॥**
**धवलाभ्रोपलिप्ताभं निष्पावार्धदलाकृति ।**
**अतितीव्ररुजारागदाहश्वयथुपीडितम् ॥ २९ ॥**
**पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम् ।**

दोषैः सरक्तैः सकृदेकहेलयैव कृष्णमंडलं शुक्ररूपतां नीयते । किंभूतम् । धवलाभ्रोपलिप्ताभम् । तथा निष्पावार्धदलस्येवाकृतिर्यस्य तदेवम् । तथा तीव्रवेदनारागदाहश्वयथुभिः पीडितम् । तच्च शुक्रं पाकात्ययेन तीव्ररुजं वर्जयेन्नोपक्रमेत् ।

**यस्य वाऽऽलिंगनाशोऽतः श्यावं यद्वा सलोहितम् ।**
**अत्युत्सेधावगाढं वा सास्रुनाडीव्रणावृतम् ॥ ३० ॥**
**पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम् ।**

यस्य च शुक्रस्य लिंगनाशोऽतर्दृष्टिविनाश इत्यर्थः । यच्च श्यावमंतर्यच्च किंचिल्लोहितम् । तथाऽत्युन्नतमवगाढं वा । सास्रुनाडीव्रणावृतं वा । तथा पुराणं वत्सरातीतम् । तथा विषमसंस्थानम् । तथा मध्ये विच्छिन्नं यच्च शुक्रकं तत्सर्वं वर्जयेत् ।

**पंचेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः ॥३१**

कृष्णमंडल इति पूर्वोक्तेन प्रकारेण पंच रोगाः साध्यासाध्यविभागेनोक्ताः । सुखग्रहधारणार्थं संख्योपादानम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने संधिसितासितरोगविज्ञानीयो नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

अस्मादनंतरं संधिसितासितरोगप्रतिषेध उच्यते ।

**अथातः संधिसितासितरोगप्रतिषेधं व्याख्यास्यामः**

प्रतिषिध्यते निराक्रियते चिकित्स्यत इति प्रतिषेधश्चिकित्सा। शेषं पूर्ववत् ।

जलास्रावकफास्रावयोरसाध्यत्वादुपनाहचिकित्सामाह ।

**उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च ।**
**लेखयेन्मंडलाग्रेण ततश्च प्रतिसारयेत् ॥ १ ॥**
**पिप्पलीक्षौद्रसिंधूत्थैर्बध्नीयात्पूर्ववत्ततः ।**
**पटोलपत्रामलककाथेनाश्चोतयेच्च तम् ॥ २ ॥**

वैद्यो मंडलाग्रेणोपनाहं संधिरोगं लेखयेत् । किंभूतम् । स्विन्नं वर्त्मरोगप्रतिषेधोक्तेन प्रकारेण पोटलिकयोष्णोदकप्लुतयेति । तथा व्रीहिमुखेन भिन्नं ततः पिप्पल्यादिभिः प्रतिसारयेत् । अनंतरं पूर्ववत् प्रक्षाल्योष्णेन वारिणा घृतेन सिक्तमभ्यक्तं मधुसर्पिषा ऊर्ध्वाधः कर्णयोश्च यवसक्तुभिः पिंडीं दत्वा बध्नीयादिति । तथा पटोलपत्रामलकक्काथेन चाश्चोतयेत् ।

**पर्वणी बडिशेनात्ता बाह्यसंधित्रिभागतः ।**
**वृद्धिपत्रेण वर्ध्याऽर्धे स्यादश्रुगतिरन्यथा ॥ ३ ॥**
**चिकित्सा चार्मवत्क्षौद्रसैंधवप्रतिसारिता ।**

पर्वणी बाह्यसंधित्रिभागे बडिशेन गृहीता सती वृद्धिपत्रेण वर्ध्या छेदनीया । कुत्र भागेऽर्धेत्याह । अर्धेऽतोन्यथाऽधिकच्छेदनादश्रुगतिः स्यात् । चिकित्सा चेयमर्मवत् । तत्र चैवमुक्तम् । सम्यक् छिन्नं मधुव्योषसैंधवप्रतिसारितम् । उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा । बध्नीयात्सेचयेन्मुक्त्वा तृतीयादिदिनेषु च । करंजबीजसिद्धेन क्षीरेणेति ।

**पूयालसे सिरां विध्येत्ततस्तमुपनाहयेत् ॥ ४ ॥**
**कुर्वीत चाक्षिपाकोक्तं सर्वं कर्म यथाविधि ।**

पूयालसे सिरां विध्येदनंतरमुपनाहयेत् । अक्षिपाकोक्तं चाशेषं कर्म यथाविधि कुर्वीत ।

**सैंधवार्द्रककासीसलोहताम्रैः सचूर्णितैः ॥ ५ ॥**
**चूर्णांजनं प्रयुंजीत सक्षौद्रैर्वा रसक्रियाम् ।**

सैंधवादिभिश्चूर्णांजनं प्रयुंजीत । सैंधवादिभिरेव माक्षिकयुतै रसक्रियां वा ।

**कृमिग्रंथिं करीषेण स्विन्नं भित्त्वा विलिख्य च ॥**
**त्रिफलाक्षौद्रकासीससैंधवैः प्रतिसारयेत् ।**

कृमिग्रंथिं भित्त्वा त्रिफलाभिः प्रतिसारयेत् । किंभूतम् । करीषेण गोमयादिना स्विन्नं तथा व्रीहिमुखादिभिर्भित्त्वा विलिख्य च ।

**पित्ताभिष्यंदवच्छुक्तिं**

शुक्त्याख्यं रोगं पित्ताभिष्यंदेन तुल्यमुपाचरेत् ।

**बलासाह्वयपिष्टकौ ॥ ७ ॥**
**कफाभिष्यंदवन्मुक्त्वा सिराव्यधमुपाचरेत् ।**
**बीजपूररसाक्तं च व्योषकट्फलमंजनम् ॥ ८ ॥**

बलासग्रथितं पिष्टकं च सिराव्यधं वर्जयित्वा कफाभिष्यंदवदुपाचरेत् । तथा बीजपूरकरसेनाक्तं व्योषकट्फलमंजनं हितम् ।

**जातीमुकुलसिंधूत्थदेवदारुमहौषधैः ।**
**पिष्टैः प्रसन्नया वर्तिः शोफकंडूघ्नमंजनम् ॥ ९ ॥**

जातीमुकुलादिभिः प्रसन्नया पिष्टैर्वर्तिः शोफकंडूघ्नमंजनम् ।

**रक्तस्यंदवदुत्पातहर्षजालार्जुनक्रिया ।**

सिरोत्पातसिराहर्षसिराजालार्जुने क्रिया रक्तस्यंद इव कार्या ।

**सिरोत्पाते विशेषेण घृतमाक्षिकमंजनम् ॥ १० ॥**
**सिराहर्षे तु मधुना श्लक्ष्णघृष्टं रसांजनम् ।**
**अर्जुने शर्करामस्तुक्षौद्रैराश्चोतनं हितम् ॥ ११ ॥**
**स्फटिकः कुंकुमं शंखो मधुको मधुनांजनम् ।**
**मधुना चांजनं शंखः फेनो वा सितया सह ॥१२॥**

सिरोत्पाते विशेषेण घृतमाक्षिकमंजनं हितम् । सिराहर्षे माक्षिकेण श्लक्ष्णं घृष्टं रसांजनम् । अर्जुने शर्करामस्तुक्षौद्रेणाश्चोतनं हितम् । स्फाटिकादिमाक्षिकेणांजनमथवा सौवीरांजनं मधुना सह हितम् । शंखो वा समुद्रफेनो वा शर्करया सह हितः ।

**अर्मोक्तं पंचधा तत्तु नतु धूमाविलं च यत् ।**
**रक्तं दधिनिभं यच्च शुक्रवत्तस्य भेषजम् ॥ १३ ॥**

अर्म पंचप्रकारमुक्तम् । तेषु मध्ये यत्तनु धूमवदाविलं च तथा रक्तं रक्तवर्णं दधिसदृशं च यत्तस्यार्मणः शुक्रसदृशमौषधम्।

अथार्मणः शस्त्रचिकित्सामाह ।

**उत्तानस्येतरत् स्विन्नं ससिंधूत्थेन चांजितम् ।**
**रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १४ ॥**
**इत्थं संरोषिताक्षस्य प्रचलेऽर्माधिमांसके ।**
**धृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥१५॥**
**अपांगमीक्षमाणस्य वृद्धेऽर्मणि कनीनकात् ।**
**वली स्याद्यत्र तत्रार्म बडिशेनावलंबितम् ॥१६॥**
**नात्यायतं मुचुंड्या वा सूच्या सूत्रेण वा ततः ।**
**समंतान्मंडलाग्रेण मोचयेदथ माक्षिकम् ॥ १७ ॥**
**कनीनकमुपानीय चतुर्भागावशेषितम् ।**
**छिंद्यात्कनीनके रक्षेद्वाहिनीश्चाश्रुवाहिनीः ॥ १८ ॥**

**कनीनकव्यधादश्रुनाडी चाक्षिण प्रवर्तते ।**
**वृद्धेऽर्मणि तथाऽपांगात्पश्यतोऽस्य कनीनकात्१९**

उत्तानस्य पुंसो वामदक्षिणयोरितरदेकमक्षि स्विन्नं कृतस्वेदं च । तथा बीजपूररसेन सैंधवान्वितेनांजितं निमील्य स्थगयित्वा विमर्दयेन्मलयेत् । अनेन प्रकारेण संरोषिताक्षस्य सतोऽर्माधिमांसे प्रचले सति मूर्ध्नि निश्चलं धृतस्य वर्त्मनोश्च विशेषेण धृतस्य कनीनकादर्मणि वृद्धे सत्यपांगं पश्यतो यत्र वली स्यात् तत्रार्म बडिशेनावलंबितं नात्यायतं नातिदीर्घं यथा भवति तथाऽवलंबितम् । ततोऽनंतरं मुचुंड्या सूच्या सूत्रेण वा मोचयेत् । यथा मोक्षितं च विच्छेदितं च सत्कनीनकमुपानीय चतुर्भागावशेषितं मंडलाग्रेण छिंद्यात् । व्यवहितानामत्र पदार्थानां योग्यतावशादेव संबंधोऽत्र योज्यः । कनीनकं रक्षेत् । कनीनकव्यधादस्रनाडी चाक्षिण प्रवर्तते । अपांगप्रदेशाच्चार्मणि वृद्धे तथा कनीनकं वीक्षमाणस्य छिंद्यात् ।

**सम्यक् छिन्नं मधुव्योषसैंधवप्रतिसारितम् ।**
**उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ २० ॥**
**बध्नीयात्सेचयेन्मुक्त्वा तृतीयादिदिनेषु च ।**
**करंजवीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ २१ ॥**
**सक्षौद्रैर्द्विनिशारोध्रपटोलीयष्टिकिंशुकैः ।**
**कुरंटमुकुलोपेतैर्मुंचेदेवाह्नि सप्तमे ॥ २२ ॥**

सम्यक् छिन्नं मध्वादिभिः प्रतिसारितं घृतेनोष्णेन सिक्तं माक्षिकसर्पिषाऽभ्यक्तं बध्नीयात् । तृतीयादिदिनेषु च मुक्त्वा क्षीरेण करंजवीजसिद्धेन सेचयेत् । द्विहरिद्रादिभिश्च क्वथितैः शीतैश्च मधुयुतैः सेकं कुर्यात् । सप्तमे दिने मुंचेदेव ।

**सम्यक् छिन्ने भवेत्स्वास्थ्यं हीनातिच्छेदजान्गदान् सेकांजनप्रभृतिभिर्जयेल्लेखनबृंहणैः ॥ २३ ॥**

सम्यक् छिन्नेऽर्मणि स्वास्थ्यं भवेत् । हीनातिच्छेदजान् गदान् सेकांजनाद्यैर्यथायोगं लेखनबृंहणैश्च जयेत् ।

**सितामनःशिलालेयलवणोत्तमनागरम् ।**
**अर्धकर्षोन्मितं तार्क्ष्यं पलार्धं च मधुप्लुतम् ॥ २४ ॥**
**अंजनं श्लेष्मतिमिरपिल्लशुक्रार्मशोषजित् ।**

सितादिभिरर्धकर्षान्वितै रसांजनं द्विकर्षोन्मितं मधुद्रुतमंजनं श्लेष्मतिमिरादिजित् ।

**त्रिफलैकतमद्रव्यत्वचं पानीयकल्किताम् ॥ २५ ॥**
**शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः ।**
**पृथक्शेषौषधरसैः पृथगेव च भाविता ॥ २६ ॥**
**सा मषी शोषिता पेष्या भूयो द्विलवणान्विता ।**
**त्रीण्येतान्यंजनान्याह लेखनानि परं निमिः ॥ २७ ॥**

त्रिफलायामेकतमस्य हरीतक्यादेर्द्रव्यस्य त्वचं पानीयकल्कितां शरावपिहितां कपाले दग्ध्वा चूर्णयेत् । तत एव त्रिफलायाः पृथक् शेषौषधरसैः पृथगेव चैकैकं भाविता सा मषी शोषिता पुनः पेष्या लवणद्वययुता त्रीण्येतान्यंजनानि परं लेखनानि तिमिरघ्नानि निमिर्वक्ति ।

**सिराजाले सिरायास्तु कठिनालेखनौषधैः ।**
**न सिद्ध्यंत्यर्मवत्तासां पिटिकानां च साधनम्॥२८॥**

सिराजाले याः सिराः कठिना लेखनौषधैर्न सिध्यंति तासामर्मवच्चिकित्सा । पिटिकानां च ।

**दोषानुरोधाच्छुक्रेषु स्निग्धरूक्षं वराघृतम् ।**
**तिक्तमूर्धमसृक्स्रावो रेकसेकादि चेष्यते ॥ २९ ॥**

शुक्रेषु दोषवशात्कदाचिद्रूक्षा कदाचित् स्निग्धा त्रिफला हिता । तथा घृतं तिक्तं मूर्धमसृक्स्रावो रेकसेकादि चेष्यते ।

**त्रिस्त्रिवृद्धारिणा पक्वं क्षतशुक्रे घृतं पिबेत् ।**
**सिरया नु हरेद्रक्तं जलौकोभिश्च लोचनात् ३०**
**सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।**
**ससितेनाजपयसा सेचनं सलिलेन वा ॥ ३१ ॥**
**रागाश्रुवेदनाशांतौ परं लेखनमंजनम् ।**

त्रिवृत्क्वाथेन त्रीन् वारान् घृतं पक्वं क्षतशुक्रे पिबेत् । पश्चात्सिरया रक्तं नयनाद्वा जलौकोभिर्वा तथाऽऽजदुग्धेनोत्पलादिभिः सिद्धेन सशर्करेण सेचनं हितम् । अथवोत्पलादिक्वथितेन जलेन सेचयेत् । रागाश्रुवेदनाशांतौ सत्यां लेखनमंजनं हितम् ।

**वर्तयो जातिमुकुललाक्षागैरिकचंदनैः ॥ ३२ ॥**
**प्रसादयंति पित्तास्रं घ्नंति च क्षतशुक्रकम् ।**

जातिमुकुलादिभिर्वर्तयः पित्तास्रं प्रसादयंति । क्षतशुक्रं च घ्नंति ।

**दंतैर्दंतिवराहोष्ट्रगवाश्वाजखरोद्भवैः ॥ ३३ ॥**
**सशंखमौक्तिकांभोधिफेनैर्मरिचपादिकैः ।**
**क्षतशुक्रमपि व्यापि दंतवर्तिर्निवर्तयेत् ॥ ३४ ॥**

गजाद्युद्भवैर्दंतैः शंखमुक्ताफेनयुतैश्चतुर्थांशकमरिचैः क्षतशुक्रमपि व्यापि दंतवर्तिर्निवर्तयेत् । अपिशब्दाच्छुद्धशुक्रकमिति ।

**तमालपत्रं गोदंतशंखफेनोऽस्थि गार्दभम् ।**
**ताम्रं च वर्तिर्मूत्रेण सर्वशुक्रकनाशिनी ॥ ३५ ॥**

तमालपत्रादिभिर्वर्तिर्गोमूत्रेण सर्वशुक्रहृत् ।

**रत्नानि दंताः शृंगाणि धातवस्त्र्यूषणं त्रुटिः ।**
**करंजबीजं लशुनो व्रणसादि च भेषजम् ॥ ३६ ॥**
**सव्रणाव्रणगंभीरत्वक्स्थशुक्रघ्नमंजनम् ।**

रत्नानि मौक्तिकादीनि । दंता गजादीनां । शृंगाणि छागादीनाम् । धातवो गैरिकाद्याः । त्र्यूषणादीनि । तथा व्रणसादि भेषजं स्वर्णक्षीर्यादि । एतदंजनं सव्रणाव्रणगंभीरत्वक्स्थशुक्रहरम् ।

**निम्नमुन्नमयेत्स्नेहपाननस्यरसांजनैः ॥ ३७ ॥**
**सरुजं नीरुजं तृप्तिपुटपाकेन शुक्रकम् ।**

निम्नं शुक्रकं स्नेहपानादिभिरुन्नमयेत् । सरुजं नीरुजं च तर्पणपुटपाकेनोन्नमयेत् ।

**शुद्धशुक्रे निशायष्टीसारिवाशावरांभसा ॥ ३८ ॥**
**सेचनं रोध्रपोटल्या कोष्णांभोमग्नयाऽथवा ।**

शुद्धशुक्रे हरिद्रादिक्वाथेन सेचनं हितम् । अथवा रोध्रपोटल्या कोष्णांबुमग्नया ।

**बृहतीमूलयष्ट्याह्वताम्रसैंधवनागरैः ॥ ३९ ॥**
**धात्रीफलांबुना पिष्टैर्लेपितं ताम्रभाजनम् ।**
**यवाज्यामलकीपत्रैर्बहुशो धूपयेत्ततः ॥ ४० ॥**
**तत्र कुर्वीत गुटिकास्ता जलक्षौद्रपेषिताः ।**
**महानीला इति ख्याताः शुद्धशुक्रहराः परम् ॥४१॥**

बृहतीचूर्णादिभिरामलकजलेन पिष्टैस्ताम्रभाजनं लेपितं यवादिभिर्धूपयेत् । अनंतरं तत्र गुटिकास्तोयमाक्षिकपिष्टाः कुर्यात् । एताश्च महानीला इति प्रथिताः परं शुक्रघ्नाः ।

**स्थिरे शुक्रे घने चाऽस्य बहुशोऽपहरेदसृक् ।**
**शिरःकायविरेकांश्च पुटपाकांश्च भूरिशः ॥ ४२ ॥**

स्थिरे शुक्रे घने चातुरस्याऽस्य बहुशो रक्तं मोक्षयेत् । शिरोविरेकादीन् पुटपाकांश्च पुनः पुनः कुर्यात् ।

**कुर्यान्मरिचवैदेहीशिरीषफलसैंधवैः ।**
**घर्षणं त्रिफलाक्काथपीतेन लवणेन वा ॥ ४३ ॥**

मरिचादिभिर्घर्षणं कुर्यात् । त्रिफलाक्काथपीतेन सैंधवेन वा ।

**कुर्यादंजनयोगौ वा श्लोकार्धगदिताविमौ ।**
**शंखकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥ ४४ ॥**
**सुरादंतार्णवमलैः शिरीषकुसुमान्वितैः ।**

इमौ श्लोकार्धोक्तौ योगौ घर्षणाय कुर्यात् । शंखादिभिर्माक्षिकान्तैरेको योगः । सुरादिः कुसुमांतैरन्यः ।

**धात्रीफणिज्जकरसे क्षारो लांगलिकोद्भवः ॥ ४५ ॥**
**उषितः शोषितश्चूर्णः शुक्रहर्षणमंजनम् ।**

धात्र्यादिरसे क्षारो लांगलिकज उषितः शोषितश्चूर्णः शुक्रहर्षणमंजनम् ।

**मुद्गा वा निस्तुषाः पिष्टा शंखक्षौद्रसमायुताः ४६**
**सारो मधूकान्मधुमान् मज्जा वाक्षात्समाक्षिका ।**

शंखमधुयुता मुद्गा निस्तुषाः पिष्टा अंजनम् । मधूकात्सारो मधुयुतोऽजनम् । अथवा बिभीतकान्मज्जा वा माक्षिकान्विता ।

**गोखराश्वोष्ट्रदशनाः शंखः फेनः समुद्रजः ॥ ४७ ॥**
**वर्तिरर्जुनतोयेन हृष्टशुक्रकनाशिनी ।**

गवादिदंताः शंखः समुद्रफेनः पार्थजलेन पिष्टा वर्तिर्हृष्टशुक्रहरा ।

**उत्सन्नं वा सशल्यं वा शुक्रं वालादिभिर्लिखेत् ४८**

उत्सन्नं वा सशल्यं शुक्रं वा वालशाकपत्रादिभिर्लिखेत् ।

**सिराशुक्रे त्वदृष्टिघ्ने चिकित्सा व्रणशुक्रवत् ।**

सिराशुक्रे पुनरदृष्टिघ्ने चिकित्सा व्रणशुक्र इव कार्या ।

**पुंड्रयष्ट्याह्वकाकोलीसिंहीलोहनिशांजनम् ॥ ४९ ॥**
**कल्कितं छागदुग्धेन सघृतैर्धूपितं यवैः ।**
**धात्रीपत्रैश्च पर्यायाद्वर्तिर्नेत्रांजनं परम् ॥ ५० ॥**

पुंड्रादिकं छागदुग्धेन पिष्टं ससर्पिष्कैर्यवैरामलपत्रैश्च पर्यायेण धूपिता वर्तिर्नेत्रांजनं परम् ।

**अशांतावर्मवच्छस्त्रमजकाख्ये च योजयेत् ।**

अशांतौ सत्याममर्वदजकाख्ये च शस्त्रं प्रयोजयेत् ।

**अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधैः ॥५१॥**
**वेदनोपशमं स्नेहपानासृक्स्रवणादिभिः ।**
**कुर्याद्बीभत्सतां जेतुं शुक्रस्योत्सेधसाधनम् ॥ ५२॥**

असाध्यायामजकायां शुक्रे चान्यत्र रोगे तत्प्रकारेऽसाध्ये वेदनोपशमं स्नेहपानादिभिर्विदधीत । बीभत्सतां निंद्यतां जेतुं शुक्रस्योत्सेधसाधनं कुर्यात् ।

**नालिकेरास्थिभल्लाततालवंशकरीरजम् ।**
**भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजम् ॥५३॥**
**चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमंजनम् ।**
**साध्येषु साधनायालमिदमेव च शीलितम् ॥ ५४॥**

नालिकेरास्थ्यादिजं भस्माद्भिः स्रावयेत् । ताभिरद्भिः करभास्थिजं चूर्णं भावयेत् । तच्चूर्णमंजनमसाध्येषु शुक्रेषु वैवर्ण्यहरम् । शीलितं चेत्तदेव शुक्राणां साधनायालं श्रेष्ठम् ।

**अजकां पार्श्वतो विध्वा सूच्या विस्राव्य चोदकम् ।**
**समं प्रपीड्यांगुष्ठेन वसार्द्रेणानुपूरयेत् ॥ ५५ ॥**
**व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ।**
**सप्तरात्राद् व्रणे रूढे कृष्णभागे समे स्थिरे ॥ ५६ ॥**
**स्नेहांजनं च कर्तव्यं नस्यं च क्षीरसर्पिषा ।**
**तथापि पुनराध्माने भेदच्छेदादिकां क्रियाम् ॥५७॥**
**युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ।**

अजकां पार्श्वतः सूच्या विध्वा जलं च निस्राव्यानंतरमंगुष्ठेन समं वसार्द्रेण वसया द्रवीकृत्य व्रणं गोमांसचूर्णेन पूरयेत् । बद्धं बद्धं विमुच्य च सप्तरात्राद् व्रणे रूढे सति तया कृष्णभागे समे स्थिरे सति स्नेहांजनं च कर्तव्यम् । क्षीरघृते च नस्यम् । एव-

मपि कृते पुनराध्माने सति भेदच्छेदादिकां क्रियां युक्त्या कुर्यात् । यथाऽतिच्छेदेन दृष्टेर्निमज्जनं स्यात् ।

**नित्यं च शुक्रेषु घृतं यथास्वं**
**पाने च मर्शे च घृतं विदध्यात् ।**
**न हीयते लब्धबला तथांत-**
**स्तीक्ष्णांजनैर्दृक् सततं प्रयुक्तैः ॥ ५८ ॥**

शुक्रेषु च नित्यं घृतं यथायोगं पक्वं पानादौ विदध्यात् । किमित्याह । तथा घृतपानेन सेचनेन लब्धबला दृगंतर्प्रांततः प्रयुक्तैस्तीक्ष्णांजनैर्न हीयते हानिं न यायादिति । उपजातिर्वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने संधिसितासितरोगप्रतिषेधो नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

अस्मादनंतरं दृष्टिरोगविज्ञानमाह । तत्राऽपि पूर्वं तिमिरं लिलक्षयिषुराह ।

**अथाऽतो दृष्टिरोगविज्ञानीयमध्यायं व्याख्यास्यामः।**
**सिरानुसारिणि मले प्रथमं पटलं श्रिते ।**
**अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ १ ॥**

दोषे वाताद्यन्यतमे सिरानुसारिणि तथा प्रथमं बाह्यं पटलं श्रिते सत्यव्यक्तं रूपं पश्यति व्यक्तमपि कदाचिन्निमित्तमंतरेण पश्यति । एष तिमिराख्यो रोग इति वक्ष्यमाणेन संबंधः ।

**प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।**
**भूतं तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ २ ॥**
**दूरांतिकस्थं रूपं च विपर्यासेन मन्यते ।**
**दोषे मंडलसंस्थाने मंडलानीव पश्यति ॥ ३ ॥**
**द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।**
**दृष्टेरभ्यंतरगते ह्रस्ववृद्धविपर्ययम् ॥ ४ ॥**
**नांतिकस्थमधःसंस्थे दूरगं नोपरि स्थितम् ।**
**पार्श्वे पश्येन्नपार्श्वस्थे तिमिराख्योऽयमामयः ॥ ५ ॥**

द्वितीयं पटलं प्राप्तेऽभूतमपि पश्यति । न केवलं भूतम् । भूतं तु यत्नेन पश्यति । तच्चासन्नमेव दूरे न च सूक्ष्मं पश्यति । दूरांतिकस्थं च रूपं वैपरीत्येन मन्यते । दूरस्थं निकटस्थं निकटस्थं दूरस्थमित्यर्थः । दोषे मंडलसंस्थाने द्वितीयपटलाश्रिते । एवं मंडलानीवालोकते । दृष्टिमध्यस्थे दोषे एकमेव वस्तु द्विप्रकारं पश्यति । बहुधा स्थिते दोषे एकमेव वस्तु बहुप्रकारं पश्यति । दृष्टेरभ्यंतराश्रिते दोषे ह्रस्वं वृद्धं च तयोर्विपर्ययः । ह्रस्वं च महांतं महांतं च ह्रस्वमिति वैपरीत्येन पश्यति । अधःस्थिते दोषे समीपस्थं पदार्थं नेक्षते । उपरिष्टात्स्थिते दोषे दूरगं न पश्यति । पार्श्वस्थे दोषे पार्श्वे रूपं न पश्येत् । अयं सर्वस्तिमिरसंज्ञो रोगः ।

**प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।**
**तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम् ॥ ६ ॥**
**यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ।**

तृतीयं पटलं स्थिते दोषे काचत्वं प्राप्नोति । तेन काचेनोर्ध्वमीक्षते न त्वधः । तच्च तनुवस्त्रच्छन्नसदृशं दृष्टिश्चात्र दोषानुसारेण रज्यते । यथा वातेन श्यावेत्यादिक्रमेण च दृष्टिर्हीयते ।

**तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ ७ ॥**
**लिंगनाशं मलः कुर्वन् छादयेद्दृष्टिमंडलम् ।**

एवमप्युपेक्षमाणस्याचिकित्सितस्य तृतीयं पटलं मुक्त्वा चतुर्थपटलं गतो मलो दोषो लिंगनाशं दृष्टिनाशं च कुर्वन् दृष्टिमंडलं छादयेत् ।

इति सामान्यलक्षणमुक्त्वा विशेषमाह ।

**तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥ ८ ॥**
**चलाविलारुणाभासं प्रसन्नं चेक्षते मुहुः ।**
**जालानि केशान्मशकान् रश्मींश्चोपेक्षितेऽत्र च ९**
**काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ।**
**चंद्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥ १० ॥**
**वृद्धः काचो दृशं कुर्याद्रजोधूमावृतामिव ।**
**स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ११**
**स लिंगनाशो**

तत्र तिमिरेषु मध्ये पवनतिमिरे सति व्याविद्धमिव पश्यति । तथा चलं च धूमाविलमरुणाभासं पुनः प्रसन्नं चावलोकते । प्रकृतिस्थनयनेन पश्यति पवनस्य चलरूपत्वात् । तथा जालादीनि मुहुः पश्यति । आस्यं मुखमनासिकं नासिकारहितं पश्यति । तथा चंद्रदीपादीनामनेकत्वं वक्रमवक्रमिव मन्यते । वृद्धः काचो रजोधूमावृतामिव दृष्टिं च कुर्यात् । तथा स्पष्टाऽरुणाऽऽभा यस्यास्तां तथापि विस्तीर्णां सूक्ष्मां च तथा हतदर्शनाम् । स एवंभूतो लिंगनाशः । इति वातजास्तिमिरलिंगनाशा उक्ताः ।

अधुना वायुसामान्याद् गंभीरां दृष्टिं व्याचष्टे ।

**वाते तु संकोचयति दृक्सिराः ।**
**दृग्मंडलं विशत्यंतर्गंभीरा दृगसौ स्मृता ॥ १२ ॥**

वाते तु दृक् सिराः संकोचयति । दृष्टिमंडलमंतः प्रविशति । सा गंभीरा दृष्टिः स्मृता । मुनिभिरिति शेषः ।

**पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम् ।**
**शिखितित्तिरिपिच्छाभं प्रायो नीलं च पश्यति१३**
**काचे दृक् काचनीलाभा तादृगेव च पश्यति ।**
**अर्केन्दुपरिवेषाग्निमरीचींद्रधनूंषि च ॥ १४ ॥**

**भृंगनीला निरालोका दृक् स्निग्धा लिंगनाशतः ।**
**दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी १५**
**भवेत्पित्तविदग्धाख्या पीता पीताभदर्शना ।**

पित्तोद्भवे तिमिरे विद्युदादिदीपितं तथा मयूरतित्तिरिपत्राभं प्रायेण नीलं च पश्यति । काचे काचनीलसदृशी दृष्टिः स्यात् । तादृगेव काचनीलाभा संपश्यति । तथाऽर्केंदुपरिवेषादीन् पश्यति । लिंगनाशाद् दृष्टिश्च भ्रमरनीला निरालोका स्निग्धा च स्यात् । तेन ह्रस्वसंज्ञा दृष्टिः स्यात् । सा च ह्रस्वसंस्थाना तथाऽह्रस्वदर्शिन्यल्पदर्शिनी पित्तविदग्धसंज्ञा दृष्टिः पीतवर्णा स्यात् । तथा पीताभं दर्शनं यस्याः सा पीताभदर्शना ।

**कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ॥१६॥**
**शंखेंदुकुंदकुसुमैः कुमुदैरिव चाचितम् ।**
**काचे तु निःप्रभैर्द्धर्कप्रदीपाद्यैरिवाचितम् ॥ १७ ॥**
**सिताभा सा च दृष्टिः स्याल्लिंगनाशे तु लक्ष्यते ।**
**मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ॥ १८॥**
**बिंदुर्जलस्येव चलः पद्मिनीपुटसंस्थितः ।**
**उष्णे संकोचमायाति छायायां परिसर्पति ॥ १९ ॥**
**शंखकुंदेंदुकुमुदस्फटिकोपमशुक्लिमा ।**

कफेन तिमिरे सति प्रायः स्निग्धं शुक्लं चालोकते । तथा शंखादिभिरिवाचितं पश्यति । काचे तु निःप्रभेऽर्कादिभिरिवाचितं पश्यति । दृक् शुक्लाभा स्याल्लिंगनाशे तु दृश्यते । मूर्तः कफो दृष्टिगतः स्निग्धस्तथा दृष्टिविनाशनश्च । जलस्येव बिंदुश्चलः पद्मिनीपुटसंस्थितः । आतपे चासौ बिंदुः संकुचति । छायायां प्रसरति । तथा शंखादिशुक्लिमा स्यात् ।

**रक्तेन तिमिरे रक्तं तमोभूतं च पश्यति ॥ २० ॥**
**काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ।**
**लिंगनाशेऽपि तादृग् दृङ् निःप्रभा हतदर्शना २१**

रक्तेन तिमिरे सति रक्ताभं तथा तम इव च पश्यति । काचेन रक्ता वा कृष्णा वा दृष्टिः स्यात् । तादृगेव रक्तं कृष्णं वा पश्यति । लिंगनाशे च तादृशी काचदृष्टिस्तथा निःप्रभा हतदर्शना च स्यात् ।

**संसर्गसन्निपातेषु विंद्यात्संकीर्णलक्षणान् ।**
**तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणम् ॥ २२**
**तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते ।**

संसर्गसन्निपातेषु संकीर्णलक्षणांस्तिमिरकाचलिंगनाशान्विद्यात् । तथाऽकस्मान्निमित्तमंतरेण तैः संसर्गसन्निपातैर्व्यक्तं स्पष्टं कदाचिदाकुलमीक्षणं दर्शनं यस्य स एवंभूतो नरस्तिमिरे स्यात् । शेषयोः काचलिंगनाशयोर्दृष्टौ चित्ररागः स्यात् ।

**द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥२३॥**
**नकुलांधः स तत्राह्नि चित्रं पश्यति नो निशि ।**

यस्यातुरस्य नकुलस्येव दृष्टिर्दोषैर्निचिता द्योत्यते । देदीप्यते । स नकुलांधस्तत्र नकुलांधो दिवा चित्रं पश्यति न तु निशि रजन्याम् ।

**अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तंभमागताः ॥ २४ ॥**
**स्थगयंति दृशं दोषा दोषांधः स गदोपरः ।**
**दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ॥ २५ ॥**
**विलीनलीना यच्छंति व्यक्तमत्राह्नि दर्शनम् ।**

अर्केऽस्तपर्वतस्य मस्तके न्यस्ता गभस्तयो येन तस्मिन् सति स्तंभं प्राप्ता दोषा दृशं छादयंति । स एवंभूतो दोषांधो नाम रोगो दिवा रूपं पश्यति इत्यत्र युक्तिमाह । मला अह्नि दिवाकररश्मिभिः स्पृष्टास्तथा दृष्टिपथाद्भ्रष्टा विलीनाः संतोऽत्र रात्र्यंधे स्पष्टं दर्शनं ददति । दिवाकरकरस्पृष्टा इति हेतौ प्रथमा ।

**उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ॥ २६ ॥**
**त्रिदोषरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोऽक्षिणी ।**
**दाहोषे मलिनं शुक्लमह्न्याविलदर्शनम् ॥ २७ ॥**
**रात्रावांध्यं च जायेत विदग्धोष्णेन सा स्मृता ।**

उष्णेन तप्तस्य सहसा झटित्येव शिशिरजलनिमज्जनात् त्रिदोषरक्तसंपृक्त ऊष्मोर्ध्वमक्षिणं याति । तत ऊष्मण ऊर्ध्वगमनादक्षिण दाहोषे भवतः । शुक्लभागश्च मलिनो भवति । अहनि दिन आविलं दर्शनं जायते रात्रौ चांध्यं सा दृष्टिरुष्णविदग्धाख्या ।

**भृशमम्लाशनाद्दोषैः सास्रैर्या दृष्टिराचिता ॥ २८॥**
**सक्लेदकंडूकलुषा विदग्धाम्लेन सा स्मृता ।**

अत्यंतमम्लाशनादम्लभक्षणाद्दोषैः सरक्तैर्या दृष्टिराचिता क्लेदकंडूकलुषान्विता स्यात् । सा विदग्धाम्लेति दृष्टिः स्मृता ।

**शोकज्वरशिरोरोगसंतप्तस्यानिलादयः ॥ २९ ॥**
**धूमाविलां धूमदर्शां दृशं कुर्युः स धूमरः ।**

शोकादिसंतप्तस्य नरस्य वातादयो धूमेनेवाविलां धूमदर्शनां दृष्टिं कुर्युः । स धूमरो नाम रोगः ।

**सहसैवाल्पसत्त्वस्य पश्यतो रूपमद्भुतम् ॥ ३० ॥**
**भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ।**
**कुर्वंति तेजः संशोष्य दृष्टिं मुषितदर्शनाम् ॥ ३१ ॥**
**वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम् ।**
**औपसर्गिक इत्येष लिंगनाशो**

सहसैवातर्कितस्य पुंसोऽल्पसत्त्वस्य रूपमद्भुतं पश्यतो भास्वरं भास्करप्रकारं पश्यतो वा वातादयो लोचनाश्रिता दृष्टिं मुषितदर्शनां वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिव पीडारहितां कुर्वंति । किं कृत्वा तेजः संशोष्य । इत्येष औपसर्गिको लिंगनाशः ।

**ऽत्र वर्जयेत् ।**
**विना कफाल्लिंगनाशान् गंभीरां ह्रस्वजामपि ॥३२॥**

**षट् काचा नकुलांधश्च याप्याः शेषांस्तु साधयेत्।**
**द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥२३॥**

वातपित्तसंसर्गसन्निपातरक्तजौपसर्गिकान् षड्वर्जयेत्। गंभीरां ह्रस्वजामपि वर्जयेत्। षड्वातपित्तकफरक्तसंसर्गसन्निपातजाः षट् काचा नकुलांधः सप्तम एते याप्याः। शेषांस्तु द्वादश साधयेत्। तत्र वातपित्तकफरक्तसंसर्गसन्निपातैः पृथक् तिमिराणीति षट्। सप्तमः कफेन च लिंगनाशः। अष्टमः पित्तविदग्धा दृष्टिः। नवमो दोषांधः। दशम उष्णविदग्धा। एकादशो विदग्धाम्ला। द्वादशो धूमरः। इत्येवं दृष्टिमंडले रोगाः सप्तविंशतिसंख्याः कथिताः।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने दृष्टिरोगविज्ञानं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः।

अस्मादनंतरं तिमिरप्रतिषेध उच्यते।

**अथाऽतस्तिमिरप्रतिषेधं व्याख्यास्यामः।**

ननु दृष्टिरोगविज्ञानानंतरं दृष्टिरोगप्रतिषेधो ज्ञाप्यः। उपपन्नमाह भवान्। किं तु दृष्टिरोगचिकित्सितस्य बहुवक्तव्यत्वात् पृथगध्यायो वक्तुं युक्तः। तत्राऽपि क्रमप्राप्तस्तिमिरप्रतिषेध इति तिमिरप्रतिषेधारंभ एव युक्तः। काचादीनां त्वल्पवक्तव्यत्वादत्रैवाभिधानम्। ततो बहुवक्तव्यत्वात् पृथगध्यायो लिंगनाशस्येति सर्वं युक्तम्।

**तिमिरं काचतां याति काचोप्यांध्यमुपेक्षया।**
**नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतम् ॥ १ ॥**

तिमिरमुपेक्षया काचत्वं याति काचोप्युपेक्षित आंध्यं गच्छति। अतः कारणान्नेत्ररोगेषु मध्ये तिमिरं दारुणं शीघ्रं साधयेत्।

**तुलां पचेत जीवंत्या द्रोणेऽपां पादशेषिते।**
**तत्क्वाथे द्विगुणं क्षीरं घृतप्रस्थं विपाचयेत् ॥ २ ॥**
**प्रपौंडरीककाकोलीपिप्पलीरोध्रसैंधवैः।**
**शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३ ॥**
**कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम्।**
**द्राक्षाचंदनमंजिष्ठाकाकोलीद्वयजीवकैः ॥ ४ ॥**
**सिताशतावरीमेदापुंड्राह्वमधुकोत्पलैः।**
**पचेज्जीर्णं घृतप्रस्थं समक्षीरं पिचून्मितैः ॥ ५ ॥**
**हंति तत्काचतिमिररक्तराजीशिरोरुजः।**

जीवंत्याः पलशतमपां द्रोणे पादावशेषितं पचेत्। तत्क्वाथे घृतप्रस्थं द्विगुणक्षीरं प्रपौंडरीकादिभिः कर्षपरिमाणैः कल्कितैर्विपाचयेत्। निशि पीतं तत्परं तिमिरापहम्। तथा द्राक्षादिभिः पिचून्मितैः कर्षांशैर्जीर्णस्य पुराणघृतस्य प्रस्थं समक्षीरं पचेत्। तच्च काचादीन् हंति।

**पटोलनिंबकटुकादार्वीसेव्यवरावृषम् ॥ ६ ॥**
**सधन्वयासत्रायंती पर्पटं पालिकं पृथक्।**
**प्रस्थमामलकानां च क्वाथयेन्नल्वणेंऽभसि ॥ ७ ॥**
**तदाढकेऽर्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत्।**
**मुस्तभूनिंबयष्ट्याह्वकुटजोदीच्यचंदनैः ॥ ८ ॥**
**सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णास्यरोगजित्।**
**विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ॥ ९ ॥**
**विशेषाच्छुक्रतिमिरनक्तांध्योष्णाम्लदाहनुत्।**

पटोलादिकं पर्पटांतं पृथक् पलोन्मितमामलकानां प्रस्थं नल्वणे द्रोणेंऽभसि क्वाथयेत्। तदाढके मुस्तादिभिः सपिप्पलीकैः पिष्टैः कल्कितैरर्धपलिकैर्घृतप्रस्थं विपाचयेत्। तच्च घृतं घ्राणादिरोगजित्। विद्रध्यादिरोगजित्। विशेषेण शुक्रादिघ्नम्। एतत्पटोलाद्यं घृतम्।

**त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ १० ॥**
**तेन तुल्यपयस्केन त्रिफलापलकल्कवान्।**
**अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा॥११॥**
**युक्तं पिबेत्तत्तिमिरी तद्युक्तं वा वरारसम्।**

त्रिफलायाः पलाष्टकं जलाढके पादशेषं क्वाथ्यम्। तेन क्वाथेन तुल्यक्षीरेण त्रिफलापलकल्कयुक्तो घृतार्धप्रस्थः पक्वः शर्करया माक्षिकेण वा युतं तत्तिमिरी पिबेत्। घृतेन वा तद् युक्तं त्रिफलाक्वाथं दोषदूष्यादिवशात् पिबेत्। एतच्च त्रिफलाघृतमुच्यते।

**यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ १२ ॥**
**पालिकैःससिताद्राक्षैर्घृतप्रस्थं पचेत्समैः।**
**अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ॥ १३ ॥**
**महात्रैफलमित्येतत्परं दृष्टिविकारजित्।**

यष्ट्यादिभिः पालिकैः सहसिताद्राक्षैरजाक्षीरादिभिः पृथक्स्वरसैः समैः प्रस्थप्रमाणैः सर्पिःप्रस्थं विपाचयेत्। एतन्महात्रैफलं सुष्ठु दृष्टिविकारजित्।

**त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ॥ १४ ॥**
**यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम्।**
**मासमेकं हिताहारः पिबन्नामलकोदकम् ॥ १५॥**
**सौपर्णं लभते चक्षुरित्याह भगवान्निमिः।**

त्रैफलेन च सर्पिषा त्रिफलां यष्टीयुक्तां माक्षिकेण च परिप्लुतां रात्रौ लिहानो मासमेकं हिताशी सन्नामलकोदकं पिबन् गारुत्मतं चक्षुर्लभत इति भगवान्निमिराह।

**ताप्यायोहेमयष्ट्याह्वसिताजीर्णाज्यमाक्षिकैः॥ १६॥**
**संयोजिता यथाकामं तिमिरघ्नी वरा वरा।**

ताप्यादिभिः संयोजिता त्रिफला यथाकामं वरा तिमिरघ्नी स्यात्।

सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ १७ ॥
अपूपसूपसक्तून्वा त्रिफलाचूर्णसंयुतान्।

अथवा त्रिफलाक्वाथं ससर्पिष्कं तिमिररोगहरमभ्यसेत्। अपूपादीन् वा त्रिफलाचूर्णसंयुतान् शीलयेत्।

पायसं वा वरायुक्तं शीतं समधुशर्करम् ॥ १८॥
प्रातर्भक्तस्य वा पूर्वमद्यात्पथ्यां पृथक् पृथक्।
मृद्वीकां शर्कराक्षौद्रैः सततं तिमिरातुरः ॥ १९॥

पायसं त्रिफलायुतं वा शीतं समधुशर्करं प्रातरद्यात्। भक्तस्य पूर्वं वा हरीतकीं वा मृद्वीकां शर्कराक्षौद्रैः पृथक् पृथग् युतामनारतं तिमिरातुरोऽद्यात्।

स्रोतोजांशांश्चतुःषष्टिं ताम्रायोरूप्यकांचनैः।
युक्तान् प्रत्येकमेकांशैरंधमूषोदरस्थितान् ॥ २० ॥
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत्।
रसस्कंधकषायेषु सप्तकृत्वः पृथक् पृथक् ॥ २१ ॥
वैडूर्यमुक्ताशंखानां त्रिभिर्भागैर्युतं ततः।
चूर्णांजनं प्रयुंजीत तत्सर्वं तिमिरापहम् ॥ २२ ॥

स्रोतोजाच्चतुःषष्टिमंशांस्ताम्रादिभिः प्रत्येकमेकांशैर्युतानंधमूषोदरस्थितान् ध्मापयित्वा सम्यगावर्तितं शिलायां ततोऽनंतरं मधुरादिगणक्वाथेषु तं निषेचयेत्। पृथक् सप्त वारान् ततो वैडूर्यमुक्तानां शंखानां त्रिभिर्भागैर्युतमेतच्चूर्णांजनं सर्वतिमिरघ्नं प्रयुंजीत।

मांसीत्रिजातकायःकुंकुमनीलोत्पलाभयातुत्थैः।
सितकाचशंखफेनकमरिचांजनपिप्पलीमधुकैः २३
चंद्रेऽश्विनीसनाथे सुचूर्णितैरंजयेद्युगुलमक्ष्णोः।
तिमिरार्मरक्तराजीकंडूकाचादिशममिच्छन् ॥ २४॥

मांस्यादिभिः सूक्ष्मरजीकृतैश्चंद्रेऽश्विनीयुक्ते सत्यक्षियुग्ममंजयेत्तिमिरादिशांतिमिच्छन्। आर्ये मुखचपले।

मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम्
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित्॥

मरिचसैंधवयोर्द्वौ भागौ पिप्पलीसमुद्रफेनयोर्द्वौ भागौ सौवीरांजनस्य भागा नव एतच्चित्रायां चूर्णितं कफामयजित्। गीतिरार्या।

द्राक्षामृणालीस्वरसे क्षीरमद्यवसासु च।
पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् २६
तच्चूर्णितं स्थितं शंखे दृक्प्रसादनमंजनम्।
शस्तं सर्वाक्षिरोगेषु विदेहपतिनिर्मितम् ॥ २७ ॥

द्राक्षादिस्वरसेषु पृथक् पृथग् दिव्ये जले स्रोतोंऽजनं सप्तकृत्वो निषेचयेत्। तच्चूर्णीकृतं शंखे स्थितं दृष्टिप्रसादकृदंजनं सर्वाक्षिरोगेषु श्रेष्ठं विदेहपतिनिर्मितम्।

निर्दग्धं बादरांगारैस्तुत्थं चेत्थं निषेचितम्।
क्रमादजापयः सर्पिः क्षौद्रे तस्मात् पलद्वयम् ॥२८॥
कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः।
पटुरोध्रशिलापथ्याकणैलांजनफेनिकैः ॥ २९ ॥
युक्तं पलेन यष्ट्याश्च मूषांतर्ध्मातचूर्णितम्।
हंति काचार्मनक्तांध्यरक्तराजीः सुशीलितः ॥ ३०॥
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा।

बादरांगारैस्तुत्थं निर्दग्धं पूर्ववत्क्रमेण छागक्षीरघृतमाक्षिके निषेचितं तस्मान्निर्दग्धाच्च तुत्थात्पलद्वयं ताप्यादिभिः कार्षिकैर्यष्टीपलेन च युक्तं मूषांतर्ध्मापितं चूर्णितं काचादीन् हंति। सुसेवितोयं भास्करश्चूर्णो विशेषेण तिमिरं हंति। यथा रविरंधकारमित्युपमाश्लेषोलंकारः।

त्रिंशद्भागा भुजंगस्य गंधपाषाणपंचकम्।
शुल्वतारकयोर्द्वौ द्वौ वंगस्यैकोंजनात्त्रयम् ॥ ३१ ॥
अंधमूषीकृतं ध्मातं पक्वं विमलमंजनम्।
तिमिरांतकरं लोके द्वितीय इव भास्करः ॥३२॥

भुजंगस्य सीसकस्य त्रिंशद्भागा गंधपाषाणस्य भागपंचकं शुल्वतारकयोर्द्वौ द्वौ भागौ वंगस्य त्रपुष एको भागः। अंजनाद्भागत्रयमंधमूषाध्मातं विपक्वमंजनम्। द्वितीयो भास्कर इव लोके तिमिरांतकरम्। भुजंगादीनां शोधितानामत्र प्रयोगः नतु मारितानाम्।

गोमूत्रे छगणरसेऽम्लकांजिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्याद्गरुडसमं नरस्य चक्षुः ॥ ३३ ॥

तत्तुत्थं नरस्य गरुडतुल्यं नयनं कुर्यात्। कतमं यद्दीप्तं सत् गोमूत्रादिष्वनेकशः सप्तकृत्वो निषिक्तम्। प्रहर्षिणी।

श्रेष्ठाजलं भृंगरसं सविषाज्यमजापयः।
यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक् पृथक् ॥३४॥
तप्तं तप्तं पायितं तच्छलाका-
नेत्रे युक्ता सांजनानंजना वा।
तैमिर्यार्मस्रावपैच्छिल्यपैल्लं
कंडूं जाड्यं रक्तराजीं च हंति ॥ ३५ ॥

यत्सीसं तप्तं तप्तं त्रिफलायाः क्वाथादिकं पृथक् पृथक् सप्तकृत्वः पायितं तस्य सीसस्य शलाकेयमिति प्रथिता नयने युक्ता सहांजनांऽजनेन रहिता वा तैमिर्यादीन् हंति। शालिनी।

रसेंद्रभुजगौ तुल्यौ तयोस्तुल्यमथांजनम्।
ईषत्कर्पूरसंयुक्तमंजनं तिमिरापहम् ॥ ३६ ॥

**यो गृध्रस्तरुणरविप्रकाशगल-**
**स्तस्यास्यं समयमृतस्य गोशकृद्भिः ।**
**निर्दग्धं समघृतमंजनं च पेष्यं**
**योगोऽयं नयनबलं करोति गार्ध्रम् ॥ ३७ ॥**

पारदसीसकौ समांशौ तयोः सममंजनं षोडशांशकर्पूरयुतमिदमंजनं तिमिरापहं भवति । यो गृध्रस्तरुणरविप्रकाशगलस्तस्य समयमृतस्यास्यं मुखं गोशकृद्भिर्गोमयकरीषैर्निर्दग्धं भस्मसात्कृतं तस्य सममंजनं स्रोतोजं समघृतं समभागं पेष्यं चूर्णयितव्यम् । अयं योगो नयनयोर्बलं गार्ध्रं गृध्रतुल्यं करोति ।

**कृष्णसर्पवदने सहविष्कं दग्धमंजनमनिःसृतधूमम् ।**
**चूर्णितं नलदपत्रविमिश्रं भिन्नतारमपि रक्षति चक्षुः**

कृष्णसर्पस्य वदने सहविष्कमंजनमनिःसृतधूमं दग्धं मांसीपत्रविमिश्रितं चूर्णितमुपयुक्तं सचक्षुर्भिन्नतारमपि रक्षति । भिन्नतारमपीत्यनेन शक्त्यतिशयमस्याह । नतु भिन्नतारस्य कथंचिद्रक्षणं स्यात् । अन्यत्राप्येवंविधो न्यायोऽयमनुसरणीयः । स्वागतावृत्तम् ।

**कृष्णं सर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान् ।**
**क्षीरकुंभे त्रिसप्ताहं क्लेदयित्वाथ मंथयेत् ॥ ३९ ॥**
**तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम् ।**
**अंधस्तस्य पुरीषेण प्रेक्षते ध्रुवमंजनात् ॥ ४० ॥**

क्षीरकुंभे मृतं कृष्णसर्पं न्यस्य वृश्चिकांश्च चतुरस्त्रिसप्ताहं क्लेदयित्वा विलोडयेत् । तस्मिन् यन्नवनीतं भवेत् तेन नवनीतेन कुक्कुटं पुष्णीयात् । तस्य कुक्कुटस्य पुरीषेणांधोप्यंजनान्निश्चितमीक्षते ।

**कृष्णसर्पवसा शंखः कतकात् फलमंजनम् ।**
**रसक्रियेयमचिरादंधानां दर्शनप्रदा ॥ ४१ ॥**

कृष्णसर्पस्य वसा शंखकतकफलसौवीरांजनम् । इयं रसक्रिया द्रागेवांधानां दृष्टिप्रदा ।

**मरिचानि दशार्धपिचु-**
**स्ताप्यात्तुत्थात्पलं पिचुर्यष्ट्याः ।**
**क्षीरार्द्रदग्धमंजन-**
**मप्रतिसाराख्यमुत्तमं तिमिरे ॥ ४२ ॥**

दश मरिचानि विट्माक्षिकादर्धकर्षं तुत्थात्पलं मधुयष्टिकायाः कर्षः । एतत्सर्वं क्षीरार्द्रं पश्चाद्दग्धमप्रतिसारसंज्ञमंजनमतिश्रेष्ठं तिमिरे । गीतिरार्या ।

**अक्षबीजमरिचामलकत्वक्**
**तुत्थयष्टिमधुकैर्जलपिष्टैः ।**
**छाययैव गुटिकाः परिशुष्का**
**नाशयंति तिमिराण्यचिरेण ॥ ४३ ॥**

अक्षबीजादिभिर्जलपिष्टैर्गुटिका छाययैव परिशुष्का न चातपेन तिमिराणि लघु नाशयंति । स्वागतावृत्तम् ।

**मरिचामलकजलोद्भव-**
**तुत्थांजनताप्यधातुभिः क्रमवृद्धैः ।**
**षण्माक्षिक इति योग-**
**स्तिमिरार्मक्लेदकाचकंडूहंता ॥ ४४ ॥**

मरिचादिभिः क्रमवृद्धैः षण्माक्षिक इति योगस्तिमिरादिघ्नः । षण्माक्षिक इति कोर्थः । कीदृशः समासः । ब्रूमः । माक्षिकशब्देनादिलोपाख्यया तंत्रयुक्त्या वट्माक्षिक इत्युच्यते । षट्पूरणो वट्माक्षिको यस्मिन्निति समासः । तेनास्मिन् योगे षष्ठो वट्माक्षिक इत्यवतिष्ठते । गीतिरार्या ।

**रत्नानि रूप्यं स्फटिकं सुवर्णं**
**स्रोतोंजनं ताम्रमयः सशंखम् ।**
**कुचंदनं लोहितगैरिकं च**
**चूर्णांजनं सर्वदृगामयघ्नम् ॥ ४५ ॥**

रत्नादिभिश्चूर्णांजनम् । रत्नान्यत्र वज्रमरकतादीनि यथालाभं ग्राह्याणि । लोहितगैरिकं लोहितं गैरिकम् । केचित्तु लोहितं कुंकुममाहुः । एतच्चूर्णांजनमशेषदृष्टिरोगहरम् । उपजातिः ।

**तिलतैलमक्षतैलं भृंगस्वरसोऽसनाच्च निर्यूहः ।**
**आयसपात्रविपक्वं करोति दृष्टेर्बलं नस्यम् ॥४६॥**

तिलतैलमक्षतैलं च समांशं मार्कवस्वरसोऽसनाच्च निर्यूहः क्वाथश्चेत्ययसः पात्रे विपक्वं दृष्टेर्बलमेतन्नस्यं करोति । आर्या ।

**दोषानुरोधेन च नैकशस्तं**
**स्नेहास्रविस्रावणरेकनस्यैः ।**
**उपाचरेदंजनमूर्धवस्ति-**
**वस्तिक्रियातर्पणलेपसेकैः ॥ ४७ ॥**

दोषवशाच्च स्नेहादिभिर्मुहुर्मुहुरेनं नेत्ररोगिणमुपक्रमेत् । मूर्धबस्तिर्गंडूषादिविध्युक्तः । बस्तिर्बस्तिविध्युक्तः । उपजातिर्वृत्तम् ।

**सामान्यं साधनमिदं प्रतिदोषमतः शृणु ।**

इदमनंतराभिहितं सामान्यं चिकित्सितमतोऽनंतरं प्रतिदोषं साधनं शृणु ।

किं तदित्याह ।

**वातजे तिमिरे तत्र दशमूलांभसा घृतम् ॥ ४८॥**
**क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ।**
**त्रिफलापंचमूलानां कषायं क्षीरसंयुतम् ॥ ४९॥**
**एरंडतैलसंयुक्तं योजयेच्च विरेचनम् ।**

तेषु तिमिरादिषु मध्ये वातोत्थे तिमिरे दशमूलक्काथेन घृतं क्षीरे चतुर्गुणे त्रिफलाकल्कपक्वं पिबेत् । अनंतरं त्रिफलापंचमूलानां क्काथं क्षीरेण संयुतमेरंडतैलान्वितं विरेचनं योजयेत् ।

**समूलजालजीवंतीतुलां द्रोणेऽभसः पचेत् ॥५०॥**
**अष्टभागस्थिते तस्मिंस्तैलप्रस्थं पयः समे ।**
**बलात्रितयजीवंतीवरीमूलैः पलोन्मितैः ॥ ५१ ॥**
**यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ।**
**लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ५२**
**वातपित्तामयान् हंति तद्विशेषाद् दृगाश्रयान् ।**
**केशास्यकंधरास्कंधपुष्टिलावण्यकांतिदम् ॥ ५३॥**

मूलजालयुताया जीवंत्याः पलशतं जलद्रोणे पचेत् । तस्मिन् जलेऽष्टभागशेषे क्षीरतुल्यं तैलप्रस्थं बलात्रितयादिभिः पलोन्मितैर्मधुयष्टिकापलैश्चतुर्भिर्लोहपात्रे विपाचयेत् । लोहभांड एव मासं स्थितं तन्नस्येनोर्ध्वजत्रुजान् रोगान् हंति । विशेषेण दृष्ट्याश्रयान् वातपित्तरोगान्निराकरोति । केशादिषु पुष्टिलावण्यकांतिकरम् ।

**सितैरंडजटासिंहीफलदारुवचानतैः ।**
**घोषया बिल्वमूलैश्च तैलं पक्कं पयोन्वितम् ५४**
**नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिजित् ।**

शुक्लैरंडमूलादिभिस्तैलं सक्षीरं पक्कं नस्येन सर्वजत्रूर्ध्वरोगादिजित् ।

**वसांजने च वैय्याघ्री वाराही वा प्रशस्यते ॥५५**
**गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ।**

वैयाघ्री वाराही वा वसांजने शस्यते । गृध्रसर्पकुक्कुटोत्था वा वसा पृथङ् मधुयष्टिकायुता श्रेष्ठा ।

**प्रत्यंजने च स्रोतोजं रसक्षीरघृते क्रमात् ॥५६ ॥**
**निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम् ।**

प्रत्यंजने च स्रोतोंजनं मांसरसादिषु क्रमेण तप्तं तप्तं सप्तकृत्वः निषिक्तं पूर्ववद्योज्यम् । एतच्च परं तिमिरहरम् ।

**नचेदेवं शमं याति ततस्तर्पणमाचरेत् ॥ ५७ ॥**

यद्येवं तिमिरं न शाम्येत् ततस्तर्पणमाचरेत्कुर्यात् ।

**शताह्वाकुष्टनलदकाकोलीद्वययष्टिभिः ।**
**प्रपौंडरीकसरलपिप्पलीदेवदारुभिः ॥ ५८ ॥**
**सर्पिरष्टगुणक्षीरं पक्कं तर्पणमुत्तमम् ।**

शताह्वादिभिर्घृतमष्टगुणक्षीरं पक्कं श्रेष्ठं तर्पणम् ।

**मेदसस्तद्वदैणेयाद्दुग्धसिद्धात् खजाहतात् ॥ ५९ ॥**
**उद्धृतं साधितं तेजो मधुकोशीरचंदनैः ।**

तथैव कृष्णहरिणान् मेदसो दुग्धे सिद्धात् खजेनालोडितात् तेज उद्धृत्य मधुकोशीरचंदनैः सह पक्कं तर्पणमुत्तमम् ।

**श्वाविच्छल्यकगोधानां दक्षतित्तिरिबर्हिणाम्॥६०॥**
**पृथक्पृथगनेनैव विधिना कल्पयेद्वसाम् ।**

श्वाविदादीनां पृथगनेनैव विधिना वसां कल्पयेत् ।

**प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ॥ ६१ ॥**

पुटपाकं प्रसादनं स्नेहनं च तर्पणपुटपाकविध्युक्तं प्रयोजयेत् ।

**वातपीनसवच्चात्र निरूहं सानुवासनम् ।**

अत्र च वातजे तिमिरे पीनस इव निरूहमनुवासनं च प्रयोजयेत् ।

**पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ॥ ६२ ॥**
**विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम् ।**

पित्तजे तिमिरे जीवनीयैः फलत्रिकेण च पक्कं सर्पिः पाययित्वा ततः स्निग्धस्य सतः सिरां व्यधयेत् ।

**शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत् ॥ ६३ ॥**

शर्करादिभिः समाक्षिकैर्विरेचयेत् ।

**सुशीतान् सेकलेपादीन् युंज्यान्नेत्रास्यमूर्धसु ।**

नेत्रास्यशिरःसु चातिशिशिरान् सेकलेपादीन् युंज्यात् ।

**सारिवापद्मकोशीरमुक्ताशावरचंदनैः ॥ ६४ ॥**
**वर्तिः शस्त्रांजने चूर्णस्तथा पत्रोत्पलांजनैः ।**
**सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ ६५ ॥**

सारिवादिभिर्वर्तिरंजने शस्ता । तथा पत्रादिभिः सनागपुष्पादिभिरंजनं शस्तम् ।

**सौवीरांजनतुत्थकशृंगीधात्रीफलस्फटिककर्पूरम् ।**
**पंचांशं पंचांशं त्र्यंशमथैकांशमंजनं तिमिरघ्नम् ॥**

सौवीरांजनादिकमंजनं शस्तम् । कियत्कियत्प्रमाणमित्याह । पंचांशमित्यादि । तदेवं पंच भागाः सौवीरांजनस्य । पंचैव तुत्थकस्य । शृंग्यामलकानां भागास्त्रयः । स्फटिककर्पूरस्य भाग एकः । इति स्थितम् । एवमेतदंजनं तिमिरहृत् । गीतिरार्येयम् ।

**नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ।**

क्षीरेण चतुर्गुणेन जीवनीयादिभिराज्यं घृतं पक्कं नस्ये श्रेष्ठम् ।

**श्लेष्मोद्भवे मृताकाथवराकणमृतं घृतम् ॥ ६७ ॥**
**विध्येत्सिरां पीतवतो दद्याच्चानु विरेचनम् ।**
**काथं पूगाभयाशुंठीकृष्णाकुंभनिकुंभजम् ॥ ६८ ॥**

श्लेष्मोत्थतिमिरेऽमृतादिभिः पक्कं घृतं पीतवतः सिरां विध्येत् । विरेचनं च पूगादिभिः काथं दद्यात् ।

**ह्रीवेरदारुद्विनिशाकृष्णाकल्कैः पयोन्वितैः ।**
**द्विपंचमूलनिर्यूहे तैलं पक्कं च नावनम् ॥ ६९ ॥**

ह्रीवेरादिभिः कल्कितैः पयोन्वितैर्द्विपंचमूलकाथे तैलं पक्कं नावनं हितम् ।

**शंखप्रियंगुनेपालीकटुत्रिकफलत्रिकैः ।**
**दृग्वैमल्याय विमला वर्तिः स्यात्कोकिला पुनः ७०**
**कृष्णलोहरजोव्योषसैंधवत्रिफलांजनैः ।**

शंखादिभिर्दृग्वैमल्याय विमलाख्येयं वर्तिर्हिता स्यात् । कृष्णलोहादिभिः कोकिलाख्या वर्तिः ।

**शशगोखरसिंहोष्ट्रद्विजालालाटमस्थि च ॥ ७१ ॥**
**श्वेतगोवालमरिचशंखचंदनफेनकम् ।**
**पिष्टं स्तन्याजदुग्धाभ्यां वर्तिस्तिमिरशुक्रजित् ॥**

शशादिजा द्विजा दंता एषामेव लालाटं ललाटे भवमस्थि तथा श्वेतगोवालादीनि स्त्रीक्षीरच्छागदुग्धाभ्यां पिष्टानि वर्तिस्तिमिरशुक्रे हरेदित्यर्थः ।

**रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं प्रसादयेत् ॥७२॥**

रक्तजे तिमिरे पित्तवदुपक्रमः शीतवीर्यैः शीतस्पर्शैरन्नपानौषधसेकलेपादिभिश्च रक्तं प्रसादयेत् ।

**द्राक्षया नलदरोध्रयष्टिभिः**
**शंखताम्रहिमपद्मपद्मकैः ।**
**सोत्पलैश्छगलदुग्धवर्तितै-**
**रस्रजं तिमिरमाशु नश्यति ॥ ७३ ॥**

द्राक्षादिभिश्छगलीदुग्धपिष्टैः शीघ्रं रक्तोत्थं तिमिरं नश्यति ।

**संसर्गसन्निपातोत्थे यथा दोषोदयं क्रिया ।**

संसर्गजे सन्निपाते तिमिरे यथादोषोद्रेकं चिकित्सितं कुर्यात् ।

**सिद्धं मधूककृमिजिन्मरिचामरदारुभिः ॥ ७४ ॥**
**सक्षीरं नावनं तैलं पिष्टैर्लेपो मुखस्य च ।**

मधूकादिभिः सक्षीरं तैलं सिद्धं नावनं हितम् । मधूकादिभिरेव जलेन पिष्टैर्मुखलेपो हितः ।

**नतनीलोत्पलानंतायष्ट्याह्वसुनिषण्णकैः ॥ ७५ ॥**
**साधितं नावने तैलं शिरोबस्तौ च शस्यते ।**

नतादिभिः साधितं तैलं नावने शिरोबस्तौ च शस्यते ।

**दद्यादुशीरनिर्यूहचूर्णितं कणसैंधवम् ॥ ७६ ॥**
**तच्छृतं सघृतं भूयः पचेत्क्षौद्रं घने क्षिपेत् ।**
**शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽजनम् ७७**

उशीरक्वाथे पिप्पलीसैंधवं रजीकृतं दद्यात् । तच्च शृतं सद् घृतान्वितं पुनः पचेत् । घने चास्मिन् शीते च क्षौद्रं क्षिपेत् । एतच्च सर्वोत्थतिमिरे हितमंजनम् ।

**अस्थीनि मज्जपूर्णानि सत्त्वानां रात्रिचारिणाम् ।**
**स्रोतोजांजनयुक्तानि वहत्यंभसि वासयेत् ॥ ७८ ॥**
**मासं विंशतिरात्रं वा ततश्चोद्धृत्य शोषयेत् ।**
**समेषशृंगीपुष्पाणि सयष्ट्याह्वानि तानि तु ॥ ७९ ॥**
**चूर्णितान्यंजनं श्रेष्ठं तिमिरे सान्निपातिके ।**

रात्रिचारिणां प्राणिनामस्थीनि मज्जपूर्णानि स्रोतोंजनयुक्तानि जले वहति मासं विंशतिर्वा निशा वासयेत् । ततः प्रश्चादुद्धृत्य शोषयेत् । तानि च मेषशृंगीपुष्पैर्युतानि मधूकेन च चूर्णितानि सान्निपातिके तिमिरेंजनं श्रेष्ठम् ।

**काचेऽप्येषा क्रिया मुक्त्वा सिरां यंत्रनिपीडिताः**
**आंध्याय स्युर्मला दद्यात्स्राव्ये रक्ते जलौकसः ।**

काचेऽप्येषा पूर्वोदिता क्रिया सिरां हित्वा । सिरापि कस्मान्नानुमीयत इत्याह । यंत्रेत्यादि । शिरोपयोगियंत्रनिपीडिता मला आंध्याय यतः स्युः । स्राव्ये तु रक्ते जलौकसो दद्यात् ।

**गुडः फेनांजनं कृष्णा मरिचं कुंकुमाद्रजः ॥८१॥**
**रसक्रियेयं सक्षौद्रा काचयापनमंजनम् ।**

गुडादयो रसक्रिया क्षौद्रान्वितेयं काचयापनमंजनम् ।

**नकुलांधे त्रिदोषोत्थे तैमिर्यविहितो विधिः॥८२॥**

नकुलांधे त्रिदोषजे तिमिरे विहितो विधिः कार्यः ।

**रसक्रियाघृतक्षौद्रगोमयस्वरसद्रुतैः ।**
**तार्क्ष्यगैरिकतालीसैर्निशांध्ये हितमंजनम् ॥ ८३ ॥**

घृतादिद्रुतै रसांजनादिभिर्निशांध्ये रसक्रिया हितमंजनम् ।

**दध्ना विघृष्टं मरिचं रात्र्यांध्यांजनमुत्तमम् ।**

दध्ना विघृष्टं मरिचं रात्र्यांध्येऽजनं श्रेष्ठम् ।

**करंजिकोत्पलस्वर्णगैरिकांभोजकेसरैः ॥ ८४ ॥**
**पिष्टैर्गोमयतोयेन वर्तिर्दोषांध्यनाशिनी ।**

करंजिकादिभिर्गोमयरसेन पिष्टैर्वर्तिर्नक्तांध्यहृत् ।

**अजामूत्रेण वा कौंतीकृष्णास्रोतोजसैंधवैः ॥८५॥**

अजामूत्रेण पिष्टैः कौंत्यादिभिर्वा वर्तिर्निशांध्यघ्नी ।

**कालानुसारीत्रिकटुत्रिफलालमनःशिलाः ।**
**सफेनाश्छागदुग्धेन रात्र्यंधे वर्तयो हिताः ॥८६॥**

कालानुसार्यादयोऽजाक्षीरेण पिष्टा वर्तयो निशांध्ये हिताः ।

**सन्निवेश्य यकृन्मध्ये पिप्पलीरदहन्पचेत् ।**
**ताः शुष्का मधुना घृष्टा निशांध्ये श्रेष्ठमंजनम्८७**

पिप्पलीर्यकृन्मध्ये सन्निवेश्यादहन् पचेत् । ततः पिप्पल्यः शुष्का मधुघृष्टा रात्र्यंधे परमंजनम् ।

**खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ।**

माहिषे च प्लीहयकृती तैलसर्पिषा सह भक्षयेत् ।

**घृते सिद्धानि जीवंत्याः पल्लवानि च भक्षयेत् ॥**
**तथातिमुक्तकैरंडशेफाल्यभिरुजानि च ।**
**श्रेष्ठं घृतं कुंभयोनेः पत्रैः पाने च पूजितम् ८९**

जीवंत्याः पल्लवानि सर्पिषा पक्कानि भुंजीत । तथाऽतिमुक्तकादीनि पत्राणि घृतसिद्धानि खादेत् । अगस्तिपत्रैः सर्पिः सिद्धं पाने च पूजितम् ।

**धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।**
**स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ९०**

अम्लपित्तोष्णैर्विदाहो विदग्धश्चाम्लपित्तोष्णविदाहः धूमराख्यश्चाम्लपित्तोष्णविदाहश्च तस्मिन् । तत्र धूमराख्यः शोकज्वरादीत्यादिलक्षणः । भृशमम्लाशनादित्यादिनाम्लविदग्धा भवेत्पित्तविदग्धाख्येति पित्तविदग्धा । उष्णतप्तस्येत्यादिना उष्णविदग्धेति । तस्मिन् धूमराख्याम्लपित्तोष्णैर्विदाहेऽतिपुराणसर्पिषाऽभ्यक्तं स्निग्धं शीतैर्विशोधयेत् । शीतैश्च सर्वतो लेपयेत् ।

**गोशकृद्रसदुग्धाज्यैर्विपक्कं शस्यतेऽजनम् ।**
**स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ९१ ॥**

गोशकृदादिभिर्विपक्कमंजनं शस्यते । स्वर्णगैरिकादीनां चूर्णैरावापो यस्यां सा एवंविधा रसक्रिया वा शस्यते ।

**मेदाशावरकानंतामंजिष्ठादार्वियष्टिभिः ।**
**क्षीराष्टांशं घृतं पक्कं सतैलं नावनं हितम् ॥९२॥**

मेदादिभिः क्षीराष्टांशं घृतं तैलसहितं पक्कं नावनं हितम् ।

**तर्पणं क्षीरसर्पिः स्यादशाम्यति सिराव्यधः ।**

क्षीराद्भवं तत्सर्पिस्तर्पणं हितम् । एवमशाम्यति सिराव्यधः कार्यः ।

**चिंताभिघातभीशोकरौक्ष्यात्सोत्कटकासनात् ९३**
**विरेकनस्यवमनपुटपाकादिविभ्रमात् ।**
**विदग्धाहारवमनात्क्षुत्तृष्णादिविधारणात् ॥ ९४ ॥**
**अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ।**

चिंतादिभिरतिमिरवानपि तिमिररोगीवत्पश्येत् ।

**यथास्वं तत्र युंजीत दोषादीन् वीक्ष्य भेषजम् ९५**

तस्मिंश्च तिमिररोगीसदृशदर्शने यथायोगं दोषदूष्यदेशादीन् वीक्ष्यौषधं प्रयुंजीत ।

**सूर्योपरागानलविद्युदादि**
**विलोकनेनोपहतेक्षणस्य ।**
**संतर्पणं स्निग्धहिमादि कार्यं**
**तथांजनं हेमघृतेन घृष्टम् ॥ ९६ ॥**

सूर्योपरागादिविलोकनेनोपहतदर्शनस्य स्निग्धहिमादि संतर्पणं कार्यम् । आदिशब्देनातिसूक्ष्मातिभासुरादिपरिग्रहः । सुवर्णं च घृतेन घृष्टमंजनं हितम् ।

**चक्षूरक्षायां सर्वकालं मनुष्यै-**
**र्यत्नः कर्तव्यो जीविते यावदिच्छा ।**
**व्यर्थो लोकोऽयं तुल्यरात्रिंदिवानां**
**पुंसामंधानां विद्यमानेऽपि वित्ते ॥ ९७ ॥**

नेत्ररक्षायां सदा यत्नो विधेयो यावज्जीविताभिलाषित्वम् । यस्मादंधानां तुल्यरात्रिंदिवानां पुंसां विद्यमानेऽपि धने लोक एव निरर्थकः स्यात् । रात्रिंदिवशब्दोऽत्राऽचतुरादिसूत्रे निपातितः । वैश्वदेवी वृत्तम् ।

**त्रिफला रुधिरस्रुतिर्विशुद्धि-**
**र्मनसोनिर्वृतिरंजनं च नस्यम् ।**
**शकुनाशनता सपादपूजा**
**घृतपानं च सदैव नेत्ररक्षा ॥ ९८ ॥**

त्रिफलादिकं सदैव सर्वकालं नेत्ररक्षा स्यात् ।

**अहितादशनात्सदा निवृत्ति-**
**र्भृशभास्वचलसूक्ष्मवीक्षणाच्च ।**
**मुनिना निमिनोपदिष्टमेतत्**
**परमं रक्षणमीक्षणस्य पुंसाम् ॥ ९९ ॥**

अहितादाहारात्सततं निवृत्तिः । अतिभासुराद्यालोकनाच्चोपरतिरित्येतन्निमिनाम्ना मुनिना परमं नृणां नयनस्य रक्षणमुदितम् । औपच्छंदसिकं वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने त्रयोदशोऽध्यायः ॥१३॥

---

## चतुर्दशोऽध्यायः ।

लिंगनाशस्तिमिरप्रतिषेधात्पृथगुच्यते । बहुवक्तव्यत्वात् ।

**अथाऽतो लिंगनाशप्रतिषेधं व्याख्यास्यामः ।**
**विध्येत्सुजातं निःप्रेक्ष्यं लिंगनाशं कफोद्भवम् ।**
**आवर्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ १ ॥**

सुजातं सुष्ठु घनीभूतं लिंगनाशं निःप्रेक्ष्यं कफोद्भवं विध्येत् । शेषास्तु लिंगनाशा असाध्या इति न तान् विध्येत् । तथाऽऽवर्तक्यादिभिर्वक्ष्यमाणैः षड्भिरुपद्रवैर्विवर्जितं सुजातम् ।

कस्माद्विध्येदित्याह ।

**सोऽसंजातो हि विषमो दधिमस्तुनिभस्तनुः ।**
**शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ २ ॥**
**करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ।**
**श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ३**

स लिंगनाशो यस्मादसंजातो विषमो न समसंस्थानः । तथा दधिमस्तुसदृशस्तथा तनुर्न घनः शलाकयाऽवकृष्टोऽपि सन् पु-

नरूर्ध्वं प्रवर्तते । तीव्रां रुजं करोति । पुनरपि कृतव्यधोऽपि सन् भूयोऽपि दृष्टिमाच्छादयेत् । श्लेष्मलैराहारैराशु पूर्यते । सोऽपरैश्च श्लेष्मलैराहारैः सोपद्रवैश्चिरात्पूर्यते ।

**श्लैष्मिको लिंगनाशो हि सितत्वाच्छ्लेष्मणः सितः।**
**तस्यान्यदोषाभिभवाद्भवत्यानीलता गदः ॥ ४ ॥**

यस्माच्छ्लैष्मिको लिंगनाशः श्लेष्मणश्च शुक्लत्वाच्छुक्लः तस्य लिंगनाशस्यान्यदोषेण वातादिनाऽभिभवादानीलता भवति गदः।

**तत्रावर्तचला दृष्टिरावर्तक्यरुणा सिता ।**

तत्र तेष्वावर्तक्यादिषु मध्य आवर्तकी दृष्टिरावर्तवचला तथाऽरुणाऽसिता च स्यात् ।

**शर्करार्कपयोलेशनिचितेव घनाति च ॥ ५ ॥**

शर्कराऽर्कक्षीरलवनिचितेव तथातिघना स्यात् ।

**राजीमती दृङ्निचिता शालिशूकाभराजिभिः ।**

राजीमती दृष्टिः शालिशूकसदृशीभी राजीभिर्निचिता स्यात्।

**विषमच्छिन्नदग्धाभा सरुक्छिन्नांशुका स्मृता ६**

विषमा छिन्नदग्धाभा तथा सरुजा छिन्नांशुका दृष्टिः स्मृता।

**दृष्टिः कांस्यसमच्छाया चंद्रकी चंद्रकाकृतिः ।**

चंद्रकी दृष्टिः कांस्यतुल्यच्छाया चंद्रकाकारा स्यात् ।

**छत्राभा नैकवर्णा च छत्रकी नाम नीलिका॥७॥**

छत्राभाऽनेकवर्णा छत्रकी नाम नीलिका स्यात् ।

**न विध्येदसिराहार्णां न दृक्पीनसकासिनाम् ।**
**नाजीर्णीभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ८॥**

असिराहादीनां नराणां लिंगनाशं न विध्येत् ।

**अथ साधारणे काले शुद्धसंभोजितात्मनः ।**
**देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्चपीठगः ॥ ९ ॥**
**यंत्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।**
**अंगुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ १० ॥**
**स्वनासां प्रेक्षमाणस्य निष्कंपं मूर्ध्नि धारिते ।**
**कृष्णादर्धांगुलं मुक्त्वा तदर्धार्धमपांगतः ॥११॥**
**तर्जनीमध्यमांगुष्ठैः शलाकां निश्चलं धृताम् ।**
**दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामंथयन्निव ॥ १२ ॥**
**सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।**
**विध्येत्**

अथेति मंगलार्थः । कृतमंगलस्य शुद्धस्य तथा संभोजितात्मन आतुरस्य साधारणे काले प्रकाशे देशे पूर्वाह्णे जानुतुल्यासनस्थितो वैद्य आतुरस्य यंत्रितोपविष्टस्य तथा स्विन्नेऽक्षिणी यस्य तस्य स्विन्नाक्षस्य कैर्मुखवायुभिस्तथांगुष्ठेन मलिते नयने सति दृष्टौ मलमुत्प्लुतमुद्गतं दृष्ट्वा स्वां नासिकां वीक्ष्यमाणस्य मूर्धनि निष्कंपं धारिते सति कृष्णमंडलादर्धांगुलं हित्वाऽपांगाच्चांगुलचतुर्भागं मुक्त्वा तर्जनीमध्यमांगुष्ठैः शलाकां निश्चलं यथा भवति तथा धृतां दैवच्छिद्रस्य पार्श्वे नयेत् । ऊर्ध्वमालोडयन्निव सव्यं नेत्रं दक्षिणकरेण वामेन च हस्तेन दक्षिणमक्षि विध्येत् ।

**सुविद्धे शब्दः स्यादरुक्चांबुलवस्रुतिः१३**
**सांत्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।**
**शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमंडलम् ॥१४॥**
**अबाधमानः शनकैर्नासां प्रतिनुदंस्ततः ।**
**उत्सिंचनाच्चापहरेद्दृष्टिमंडलगं कफम् ॥ १५ ॥**
**स्थिरे दोषे चले वापि स्वेदयेदक्षि बाह्यतः ।**
**अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ १६ ॥**
**घृताप्लुतं पिचुं दत्त्वा बद्ध्वाक्षं शाययेत्ततः ।**
**विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥ १७॥**
**निवाते शयनेऽभ्यक्तशिरःपादं हिते रतम् ।**

सुविद्धे सति शब्दः स्यात्। तथाऽरुग् जललवस्य च स्रुतिः स्यात् । सांत्वयन् रोगिणमनुपश्चान्नेत्रं स्तन्येनासेचयेत् । ततोऽनंतरं शलाकाया अग्रेण दृष्टिमंडलं निर्लिखेत् । कथमपीडयन् । तथा शनैर्नासां प्रति कफं नुदन् । तत उत्सिंचनाच्च दृष्टिमंडलगं कफं हरेत् । दोषे चले स्थिरे वा सत्यक्षिबाह्यतोऽतिस्वेदयेत् । अनंतरं रूपेषु वस्तुषु दृष्टेषु सत्सु शनैः शलाकामाकर्षेत । ततो घृताप्लुतं पिचुं दत्त्वा पट्टिकया बद्धाक्षं विद्धादन्येन पार्श्वेन शाययेत् । द्वयोरक्ष्णोर्व्यधे सति तमुत्तानं निवाते शयनेऽभ्यक्तशिरःपादं हिते रतं शाययेत् ।

**क्षवथुं कासमुद्गारं ष्ठीवनं पानमंभसः ॥ १८ ॥**
**अधोमुखस्थितिं स्नानं दंतधावनभक्षणम् ।**
**सप्ताहं नाचरेत्स्नेहपीतवच्चात्र यंत्रणा ॥ १९ ॥**

क्षवथ्वादीन् सप्ताहं नाचरेत्। अत्र च स्नेहपीत इव यंत्रणा।

**शक्तितो लंघयेत्सेको रुजि कोष्णेन सर्पिषा ।**
**सव्योषामलकं वाट्यमश्नीयात्सघृतं द्रवम् ॥२०॥**
**विलेपीं वा त्र्यहाच्चास्य क्वाथैर्मुक्त्वाक्षि सेचयेत् ।**
**वातघ्नैः सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ २१ ॥**

शक्त्यनुसारेण च तं लंघयेत् । पीडायां सत्यां कोष्णेन घृतेन सेको हितः । यथा व्योषामलकयुक्तं वाट्यं द्रवं सघृतं त्र्यहं भुंजीत । विलेपिकां च । त्र्यहादनंतरं नयनं मुक्त्वा क्वाथैर्वातघ्नैः सेचयेत् । सप्तमे तु दिने सर्वथैवाक्षि मोचयेत् ।

**यंत्रणामनुरुध्येत दृष्टेरास्थैर्यलाभतः ।**
**रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥२२॥**

दृष्टेश्च यंत्रणां कुर्यात् । अतिसूक्ष्मभासुरादीन् नेक्षेतेत्यर्थः । स्थैर्यलाभो यावदक्ष्णि स्यात् । स्थिरीभूतायामपि दृशि सूक्ष्माणि रूपाणि भासुराणि च सहसा नावलोकयेत् ।

**शोफरागरुजादीनामधिमंथस्य चोद्भवः ।**
**अहितैर्वेधदोषाच्च यथास्वं तानुपाचरेत् ॥ २३ ॥**

अहितैराचरितैस्तथा वेधदोषाच्च शोफादीनामधिमंथस्य चोद्भूतिः । तांश्च यथायोगमुपाचरेदुपक्रमेत् ।

**कल्किताः सघृता दूर्वायवगैरिकसारिवाः ।**
**मुखालेपे प्रयोक्तव्या रुजारागोपशांतये ॥ २४ ॥**

दूर्वादयः कल्किता सघृता मुखालेपेः प्रयोक्तव्या रुग्रागशमाय ।

**ससर्षपास्तिलास्तद्वन्मातुलुंगरसाप्लुताः ।**
**पयस्यासारिवानंतामंजिष्टामधुयष्टिभिः ॥ २५ ॥**
**अजाक्षीरयुतैर्लेपः सुखोष्णः शर्मकृत्परम् ।**

तिलाः सर्षपयुक्ता बीजपूररसाप्लुताः पूर्वगुणाः । पयस्यादिभिश्छागक्षीरान्वितैः सुखोष्णो लेपः परं सुखकृत् ।

**रोध्रसैंधवमृद्वीकामधुकैश्छागलं पयः ॥ २६ ॥**
**श्रृतमाश्चोतनं योज्यं रुजारागविनाशनम् ।**

रोध्रादिभिरजाक्षीरं श्रृतमाश्चोतने योज्यं रुजादिहृत् ।

**मधुकोत्पलकुष्टैर्वा द्राक्षालाक्षासितान्वितैः ॥ २७ ॥**
**वातघ्नसिद्धे पयसि श्रृतं सर्पिश्चतुर्गुणे ।**
**पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ॥ २८ ॥**

मधुकादिभिर्वा श्रृतमजाक्षीरमाश्चोतनं हितम् । वातघ्नश्रृते क्षीरे चतुर्गुणे सर्पिः पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ।

**सिरां तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।**
**मंथोक्तां च क्रियां कुर्याद्व्यधे रूढेऽजनं मृदु ॥ २९ ॥**

एवमप्यनुपशांतौ स्निग्धस्विन्नस्य सिरां मोक्षयेत् । मंथोक्तं चोपक्रमं युंजीत । व्यधे रूढे सति मृद्वंजनं हितम् ।

**आढकीमूलमरिचहरितालरसांजनैः ।**
**विद्धेऽक्ष्णि सगुडा वर्तिर्योज्या दिव्यांबुपेषिता ३०**

आढक्यादिभिः सगुडा वर्तिर्दिव्यांबुपिष्टा विद्धनयने योज्या ।

**जातीशिरीषधवमेषविषाणिपुष्प-**
**वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।**
**आजेन ताम्रमसुना प्रतनु प्रदिग्धं**
**सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ३१ ॥**
**पिंडांजनं हितमनातपशुष्कमक्ष्णि**
**विद्धे प्रसादजननं बलकृच्च दृष्टेः ।**

जात्यादिकमजाक्षीरेण श्लक्ष्णं पिष्टमेतेन च ताम्रं प्रतनु प्रदिग्धं सप्ताहात्पुनरजाक्षीरेण पिष्टं पिंडांजनं छायाशुष्कं विद्धे नयने प्रसादजननं हितम् । दृष्टेश्च बलकृत् ।

**स्रोतोजविद्रुमशिलांबुधिफेनतीक्ष्णै-**
**रस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥ ३२ ॥**

स्रोतोजादिभिरजाक्षीरपिष्टैः पिंडांजनं पूर्ववदिति । वसंततिलकं वृत्तम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने लिंगनाशप्रतिषेधो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पंचदशोऽध्यायः ।

अधुना क्रमप्राप्तं सर्वाक्षिरोगविज्ञानं वक्ति ।

**अथातः सर्वाक्षिरोगविज्ञानं व्याख्यास्यामः ॥**
**वातेन नेत्रेऽभिष्यंदे नासानाहोऽल्पशोफता ।**
**शंखाक्षिभ्रूललाटस्य तोदस्फुरणभेदनम् ॥ १ ॥**
**शुष्काल्पादूषिकाशीतमच्छमश्रु चला रुजः ।**
**निमेषोन्मेषणं कृच्छ्राज्जंतूनामिव सर्पणम् ॥ २ ॥**
**अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितम् ।**
**स्निग्धोष्णैश्चोपशमनं**

नेत्रे वातेनाभिषण्णे नासानाह इत्यादिना लिंगनिर्देशः । स्निग्धैश्चोपशमनं सुखमित्युपशयनिर्देशः ।

**सोऽभिष्यंद उपेक्षितः ॥ ३ ॥**
**अधिमंथो भवेत्तत्र कर्णयोर्नदनं भ्रमः ।**
**अरण्येव च मथ्यंते ललाटाक्षिभ्रुवादयः ॥ ४ ॥**

वाताभिष्यंदो मोहादुपेक्षितोऽधिमंथो भवेत् । तत्राधिमंथे कर्णनादादिकं स्यात् । अरणिशब्दः पुंस्त्रीलिंगः ।

**हताधिमंथः सोऽपि स्यात् प्रमादात्तेन वेदनाः ।**
**अनेकरूपा जायंते व्रणो दृष्टौ च दृष्टिहा ॥ ५ ॥**

अधिमंथोऽपि प्रमादादुपेक्षितो हताधिमंथो भवेत् । तेन हताधिमंथेनानेकरूपा वेदना जायंते । व्रणश्च दृष्टौ दृष्टिहा स्यात् ।

**मन्याक्षिशंखतो वायुरन्यतो वा प्रवर्तयेत् ।**
**व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ॥ ६ ॥**
**संकोचयति पर्यश्रु सोऽन्यतो वातसंज्ञितः ।**

मन्यादिभ्यो वायुरन्यतो वा तीव्रां व्यथां प्रवर्तयेत् । नयनं संकोचयति । किंभूतम् । पैच्छिल्यरागशोफरहितम् । तथा पर्यश्रु । स अन्यतो वातसंज्ञितः ।

**तद्वन्नेत्रं भवेज्जिह्ममूनं वातविपर्यये ॥ ७ ॥**

तद्वदन्यतो वात इव जिह्मं नेत्रमूनं हीनं वातविपर्यये स्यात् ।

**दाहो धूमायनं शोफः श्यावता वर्त्मनो बहिः ।**

**अंतःक्लेदोऽश्रुपीतोष्णं रागः पीताभदर्शनम् ॥ ८ ॥**
**क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यंदलक्षणम् ।**

दाह इत्यादिपित्ताभिष्यंदलक्षणम् ।

**ज्वलदंगारकीर्णाभं यकृत्पिंडसमप्रभम् ॥ ९ ॥**
**अधिमंथे भवेन्नेत्रं**

अधिमंथे ज्वलदंगारकीर्णाभं यकृत्पिंडतुल्याभं नेत्रं भवेत् ।

**स्यंदे तु कफसंभवे ।**
**जाड्यं शोफो महान् कंडूर्निद्रान्नानभिनंदनम् ॥१०॥**
**सांद्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता ।**
**अधिमंथे नतं कृष्णमुन्नतं शुक्लमंडलम् ॥ ११ ॥**
**प्रसेको नासिकाध्मानं पांशुपूर्णमिवेक्षणम् ।**

कफजे त्वभिष्यंदे जाड्यादिकं स्यात् । अधिमंथे कृष्णमंडलं नतं शुक्लमंडलं चोन्नतं प्रसेकादि च स्यात् ।

**रक्ताश्रुराजीदूषीकशुक्लमंडलदर्शनम् ॥ १२ ॥**
**रक्तस्यंदेन नयनं सपित्तस्यंदलक्षणम् ।**

रक्तस्यंदेन रक्ताश्रुराज्यादिकं नयनं स्यात् । पित्तस्यंदलक्षणं च ।

**मंथेऽक्षि ताम्रपर्यंतमुत्पाटनसमानरुक् ॥ १३ ॥**
**रागेण बंधूकनिभं ताम्यति स्पर्शनाक्षमम् ।**
**असृङ् निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥१४॥**

मंथे सति ताम्रपर्यंतं तथोत्पाटनेन समानरुग् यस्य तदेवंभूतं नयनं स्यात् । बंधूकपुष्पतुल्यरागम् । तथा ताम्यति स्पर्शनाक्षमम् । लोहितनिमग्ननिंबाभम् । कृष्णं पावकसदृशं च दर्शनं स्यात् ।

**अधिमंथा यथास्वं च सर्वे स्यंदाधिकव्यथाः ।**
**शंखदंतकपोलेषु कपाले चातिरुक्कराः ॥ १५ ॥**

अधिमंथाश्च यथास्वं सर्वे स्यंदाधिकव्यथाः शंखदंतकपोलेषु कपाले चातिरुक्कराः ।

**वातपित्तोत्तरं घर्षतोदभेदोपदेहवत् ।**
**रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलनमीलनम् ॥ १६ ॥**
**विकूणनं विशुष्कत्वं शीतेच्छा शूलपाकवत् ।**
**उक्तः शुष्काक्षिपाकोऽयं**

वातात्पित्तोत्तरं नेत्रं घर्षादिमत् स्यात् । तथा रूक्षे दारुणे च वर्त्मनी यस्मिंस्तथा कृच्छ्रादुन्मीलननिमीलने यस्मिंस्तथाक्षिसंकोचनं शुष्कत्वं तथा शीतेच्छा शूलपाकेन युतमक्षि स्यात् । अयं शुष्काक्षिपाको नाम उक्तः ।

**सशोफः स्यात्त्रिभिर्मलैः ॥ १७ ॥**
**सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ।**
**पक्वोदुंबरसंकाशं जायते शुक्लमंडलम् ॥ १८ ॥**
**अश्रूष्णशीतविशदपिच्छलाच्छघनं मुहुः ।**

त्रिभिर्मलैर्दोषैर्वातादिभिः सरक्तैः सशोफो नाम नेत्ररोगो भवेत् । तत्र सशोफे शोफोऽतिरुग् दाहः ष्ठीवनादिमान् भवेत् । तदा शुक्लं मंडलं पक्वोदुंबरसंकाशं जायते । अश्रु च मुहुरुष्णं मुहुः शीतमित्यादि घनं च ।

**अल्पशोफेऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा १९**
**अक्षिपाकात्यये शोफः संरंभः कलुषाश्रुता ।**
**कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥ २० ॥**
**दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ।**

पाक इति । पाकशब्देनाक्षिपाकात्यय उपलक्ष्यते । आद्यंतलोपाख्यया तंत्रयुक्त्याऽक्षिपाकात्ययाख्यो रोगो भवति । तथा किंभूतः । तथा तेन प्रकारेण परैः शुष्कपाकाक्षिपाकोक्तैर्लक्षणैरुपलक्षितः स्यात् । तस्मिन्नक्षिपाकात्यये शोफः संरंभः कलुषाश्रुता भवति । तथा कृष्णमंडलं कफोपदिग्धं स्यात् । शुक्लमंडलं प्रक्लेदरागयुक्तं स्यात् । तथा दाहो दर्शनस्य संरोधो वेदनाश्चलाः स्युः ।

अम्लोषितं लक्षयति ।

**अन्नसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः ॥२१॥**
**शिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ।**
**सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ २२ ॥**
**अम्लोषितोऽयम्**

पित्तरक्तोल्बणैर्दोषैरन्नसारोऽम्लत्वं नीतः शिराभिर्नेत्रमारूढः सन् श्यावलोहितं नयनं करोति तथा शोफादियुतम् । भृशं चास्पष्टदर्शनम् । इत्ययमम्लोषितः ।

**इत्युक्ता गदाः षोडश सर्वगाः ।**

इत्येवं षोडश सर्वगा रोगा उक्ताः । प्रकृतत्वात्सर्वनेत्रगा इति गम्यते ।

**हताधिमंथमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २३ ॥**

एतेषु रोगेषु मध्ये साक्षिपाकात्ययं हताधिमंथं त्यजेत् ।

**वातोद्भूतः पंचरात्रेण दृष्टिं**
**सप्ताहेन श्लेष्मजातोऽधिमंथः ।**
**रक्तोत्पन्नो हंति तद्वत्त्रिरात्रान्**
**मिथ्याचारात् पैत्तिकः सद्य एव ॥ २४ ॥**

वातोद्भूतः पंचरात्रेण दृष्टिं हंति मिथ्याचारात् । मिथ्याचारादिति सर्वत्रानुवर्तते । श्लेष्मजोऽधिमंथः सप्तरात्रेण दृष्टिं हंति । रक्तजश्चाधिमंथस्त्रिरात्रेण दृष्टिं हंति । पैत्तिकश्चाधिमंथो मिथ्याचारात्सद्य एव दृष्टिं हंति । शालिनीवृत्तम् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने सर्वाक्षिरोगविज्ञानीयः पंचदशोऽध्यायः १५

## षोडशोऽध्यायः ।

अधुना सर्वाक्षिरोगप्रतिषेध उपक्रम्यते ।

**अथाऽतः सर्वाक्षिरोगप्रतिषेधं व्याख्यास्यामः ।**
**प्राग्रूप एव स्यंदेषु तीक्ष्णगंडूषनावनम् ।**
**कारयेदुपवासं च कोपादन्यत्र वातजात् ॥ १ ॥**

स्यंदेषु पूर्वरूपावस्थायां तीक्ष्णमेव गंडूषादिकमुपवासं च स्यंदवंतं कारयेत् वातोत्थं कोपं मुक्त्वा ।

**दाहोपदेहरागाश्रुशोफशांत्यै विडालकम् ।**
**कुर्यात्सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः ॥ २ ॥**
**सरसांजनयष्ट्याह्वनतचंदनसैंधवैः ।**
**सैंधवं नागरं तार्क्ष्यं भृष्टं मंडेन सर्पिषः ॥ ३ ॥**
**वातजे घृतभृष्टं वा योज्यं शबरदेशजम् ।**
**मांसीपद्मककाकोलीयष्ट्याह्वैः पित्तरक्तयोः ॥ ४ ॥**
**मनोह्वाफलिनीक्षौद्रैः कफे सर्वैस्तु सर्वजे ।**

दाहादिशांत्यै विडालकं कुर्यात् । सर्वत्र स्यंदे पत्रैलादिभिः सैंधवांतैर्विडालकं कुर्यात् । सैंधवादिघृतमंडेन भृष्टं वा पवनजे घृतभृष्टं वा रोध्रं योज्यम् । मांस्यादिभिः पित्तरक्तयोर्विडालकं कुर्यात् । मनःशिलादिभिः कफजे । सर्वजे तु स्यंदे सर्वैः पूर्वोक्तैर्मिलितैर्विडालकं कार्यम् ।

**सितमरिचभागमेकं चतुर्मनोह्वं द्विरष्टशाबरकम् ।**
**संचूर्ण्य वस्त्रबद्धं प्रकुपितमात्रेऽवगुंठनं नेत्रे ॥ ५ ॥**

चतुर्भागप्रमाणा मनोह्वा यस्मिन् द्विरष्टशाबरकं तेन सितमरिचस्यैकं भागं मनःशिलायाश्चतुरो भागान् रोध्रस्य षोडश भागान्संचूर्ण्य एतत्सूक्ष्मवस्त्रबद्धं प्रकुपितमात्रे सद्यः प्रकुपिते नयनेऽवगुंठनं हितम् । गीतिर्मुखचपला ।

**आरण्याश्छगणरसे पटावबद्धाः**
**सुस्विन्नानखवितुषीकृताः कुलत्थाः ।**
**तच्चूर्णं सकृदवचूर्णनान्निशीथे**
**नेत्राणां विधमति सद्य एव कोपम् ॥ ६ ॥**

आरण्याः कुलत्थाश्छगणरसे गोशकृद्रसे पटावबद्धाः सुस्विन्नास्तथा नखैर्वितुषीकृतास्तेषां चूर्णमेकवारमेवावचूर्णनात् सद्य एव नेत्राणां कोपं विधमति जयति । प्रहर्षिणीवृत्तम् ।

**घोषाभयातुत्थकयष्टिरोध्रै-**
**र्मूती ससूक्ष्मैः श्लथवस्त्रबद्धैः ।**
**ताम्रस्थधान्याम्लनिमग्नमूर्ति-**
**र्रतिं जयत्यक्षिणि नैकरूपाम् ॥ ७ ॥**

घोषादिभिः सूक्ष्मैः श्लथवस्त्रबद्धैर्मूती पोटलिका ताम्रस्थकांजिकनिमग्नमूर्तिः पीडां नानाविधां नेत्रे धारिता जयति । इंद्रवज्रा ।

**षोडशभिः सलिलपलैः**
**पलं तथैकं कटंकटेर्याः सिद्धम् ।**
**सेकोऽष्टभागशिष्टः**
**क्षौद्रयुतः सर्वदोषकुपिते नेत्रे ॥ ८ ॥**

दार्व्याः पलं जलपलैः षोडशभिः शृतमष्टभागशेषः सेको मधुयुतः सर्वदोषकुपिते चक्षुषि हितः । आर्या गीतिः ।

**वातपित्तकफसन्निपातजां**
**नेत्रयोर्बहुविधामपि व्यथाम् ।**
**शीघ्रमेव जयति प्रयोजितः**
**शिग्रुपल्लवरसः समाक्षिकः ॥ ९ ॥**

एकदोषजां सन्निपातजां वा नयनयोर्नानाविधां पीडां शीघ्रमेक एव शोभांजनकरसः सक्षौद्रो जयति । रथोद्धता वृत्तम् ।

**तरुणमुरुबूकपत्रं**
**मूलं च विभिद्य सिद्धमाजे क्षीरे ।**
**वाताभिष्यंदरुजं**
**सद्यो विनिहंति सक्तुपिंडिका चोष्णा ॥१०॥**

एरंडस्य तरुणं पत्रं मूलं च विभिद्य संक्षुद्य छागदुग्धसिद्धं वाताभिष्यंदपीडां सद्य एव निहंति । दोषादिवशात्सक्तुपिंडिका उष्णा वा रुजं हंति । आर्या गीतिः ।

**आश्चोतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ।**
**कोष्णः सहैरंडजटाबृहतीमधुशिग्रुभिः ॥ ११ ॥**
**ह्रीबेरवक्रशार्ङ्गेष्टोदुंबरत्वक्षु साधितम् ।**
**सांभसा पयसाजेन शूलाश्चोतनमुत्तमम् ॥ १२ ॥**
**मंजिष्ठारजनीलाक्षाद्राक्षाद्धिमधुकोत्पलैः ।**
**क्वाथः सशर्करः शीतः सेचनं रक्तपित्तजित् ॥ १३ ॥**

वातजेऽभिष्यंदे बिल्वादिभिरेरंडमूलादिभिः सह क्वाथः कृतः कोष्णो हितमाश्चोतनम् । ह्रीबेरादिषु साधितं सजलेनाजेन पयसा उत्तमं शूलाश्चोतनं प्रसादनं भवेत् । ह्रीबेरं वालकम् । वक्रं तगरम् । मंजिष्ठादिभिः क्वाथः ससितः शिशिरः सेको रक्तपित्तघ्नः ।

**कसेरुयष्ट्याह्वरजस्तांतवे शिथिलं स्थितम् ।**
**अप्सु दिव्यासु निहितं हितं स्यंदेऽस्रपित्तजे ॥१४॥**

कसेरुकादिरजो वस्त्रे शिथिलं स्थितं दिव्यजले क्षिप्तं स्यंदे रक्तपित्तजे हितम् ।

**पुंड्रयष्टीनिशामूती प्लुता स्तन्ये सशर्करे ।**
**छागदुग्धेऽथवा दाहरुग्रागाश्रुनिवर्तनी ॥ १५ ॥**

पुंड्रादिभिर्मूती स्त्रीक्षीरे सशर्करे प्लुता छागदुग्धे वा दाहादिहृत् ।

**श्वेतरोध्रं समधुकं घृतभृष्टं सुचूर्णितम् ।**
**वस्त्रस्थं स्तन्यमृदितं पित्तरक्ताभिघातजित् ॥ १६ ॥**

श्वेतरोध्रं समधुकं घृतभृष्टं सूक्ष्मरजीकृतं वसनस्थं स्तन्येन मृदितं पित्तादिजित् ।

**नागरत्रिफलानिंबवासारोध्ररसः कफे ।**
**कोष्णमाश्चोतनं**

नागरादिरसः श्लेष्मण्याश्चोतनं कोष्णं हितम् ।

**मिश्रैर्भेषजैः सान्निपातिके ॥ १७ ॥**

सान्निपातिकेऽभिष्यंदे मिश्रैरौषधैस्तैरेवानंतरोक्तैराश्चोतनं कोष्णं हितम् ।

**सर्पिः पुराणं पवने पित्ते शर्करयान्वितम् ।**
**व्योषसिद्धं कफे पीत्वा यवक्षारावचूर्णितम् १८**
**स्रावयेद्रुधिरं भूयस्ततःस्निग्धं विरेचयेत् ।**

पवने पुराणं घृतं हितम् । पित्ते शर्करया युतं घृतं हितम् । कफे व्योषसिद्धं घृतम् । यवक्षारावचूर्णितं पीत्वा रुधिरं स्रावयेत् । भूयः स्निग्धं ततो विरेचयेत् ।

**आनूपवेसवारेण शिरोवदनलेपनम् ॥ १९ ॥**
**उष्णेन शूले दाहे तु पयःसर्पिर्युतैर्हिमैः ।**

आनूपवेसवारेण शिरोवदनलेपनमुष्णेन कार्यम् । शूले सति दाहे तु सति क्षीरघृतान्वितैः शीतैः प्रलेपः कार्यः ।

**तिमिरप्रतिषेधं च वीक्ष्य युंज्याद्यथायथम्॥२०॥**

तिमिरप्रतिषेधं च पर्यालोच्य यथायोगं चिकित्सितं युंज्यात् ।

**अयमेव विधिः सर्वो मंथादिष्वपि शस्यते ।**

एष एव विधिरशेषेषु मंथादिष्वपि शस्यते ।

**अशांतौ सर्वथा मंथे भ्रुवोरुपरि दाहयेत् ॥२१॥**

सर्वथैवाशांतौ मंथे भ्रुवोरुपरि दाहयेत् ।

**रूप्यं रूक्षेण गोदध्ना लिंपेन्नीलत्वमागते ।**
**शुष्के तु मस्तुना वर्तिर्वाताख्यामयनाशिनी २२**

रूप्यं गोदध्ना रूक्षेण लिंपेत् । तस्मिन् दध्नि नीलत्वमागते शुष्के च मस्तुना वर्तिर्वाताक्षिरोगनाशिनी ।

**सुमनःकोरका शंखस्त्रिफला मधुकं बला ।**
**पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा॥२३॥**

सुमनःकलिकादयो वर्तिर्दिव्येन जलेन पिष्टा पित्तरक्तहृत् ।

**सैंधवं त्रिफला व्योषं शंखनाभिः समुद्रजः ।**
**फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत् २४**

सैंधवादिभिर्वर्तिः श्लेष्माक्षिरोगजित् ।

**प्रपौंडरीकं यष्ट्याह्वं दार्वी चाष्टपलं पचेत् ।**
**जलद्रोणे रसे पूते पुनः पक्के घने क्षिपेत् ॥२५॥**
**पुष्पांजनाद्दशपलं कर्षं च मरिचात्ततः ।**
**कृतश्चूर्णोऽथवा वर्तिः सर्वाभिष्यंदसंभवान्॥२६॥**
**हंति रागरुजाघर्षान् सद्यो दृष्टिं प्रसादयेत् ।**
**अयं पाशुपतो योगो रहस्यं भिषजां परम् ॥२७॥**

प्रपौंडरीकादिकमष्टपलं पृथग्जलद्रोणे पचेत् । रसे पूते पुनः शृते घने च पुष्पांजनाद्दश पलानि मरीचात्कर्षं च क्षिपेत् । कृतचूर्णोऽथ वा वर्तिः सर्वाभिष्यंदोत्थान् रोगादीन् हंति । तथा सद्य एव दृष्टिं प्रसादयेत् । एष पाशुपताख्यो योगो भिषजां परं रहस्यम् ।

**शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम् ।**
**घृतेन जीवनीयेन नस्यं तैलेन चाणुना ॥ २८ ॥**
**परिषेको हितश्चात्र पयः कोष्णं ससैंधवम् ।**

शुष्काक्षिपाके घृतस्य पानमक्ष्णोश्च जीवनीयसिद्धेन घृतेन तर्पणं हितम् । अणुना तैलेन नस्यं हितम् । अत्र च क्षीरं कोष्णं सैंधवयुतं परिषेको हितः ।

**सर्पिर्युक्तं स्तन्यपिष्टमंजनं हि महौषधम् ॥ २९॥**
**वसा चानूपसत्त्वोत्था किंचित्सैंधवनागरा ।**

नागरं स्तन्यपिष्टं घृतान्वितमंजनं हितम् । आनूपप्राणिजाता वा वसा किंचित्सैंधवशुंठीयुता शस्यते ।

**घृताक्तान् दर्पणे घृष्टान् केशान् मल्लकसंपुटे ॥३०॥**
**दग्ध्वाज्यपिष्टा लोहस्था सा मषी श्रेष्ठमंजनम् ।**

केशान्घृताक्तान् दर्पणघृष्टान् मल्लकसंपुटे दग्ध्वा घृतभृष्टा लोहपात्रस्था सा मषी श्रेष्ठमंजनम् ।

**सशोफे चाल्पशोफे च स्निग्धस्य व्यधयेत्सिराम्॥**
**रेकः स्निग्धैः पुनर्द्राक्षापथ्याक्वाथत्रिवृद्धृतैः ।**

सशोफेऽल्पशोफे वा स्निग्धस्य सिरां विध्येत् । स्निग्धस्य पुनर्द्राक्षादिभिर्विरेकः ।

**श्वेतरोध्रं घृतभृष्टं चूर्णितं तांतवस्थितम् ॥३२॥**
**उष्णांबुना विमृदितं सेकः शूलहरः परम् ।**

श्वेतरोध्रं घृते भृष्टं चूर्णितं वस्त्रस्थितमुष्णांबुना मृदितं सेकः शूलहृत्परम् ।

**दार्वीप्रपौंडरीकस्य क्वाथो वाश्चोतने हितः॥३३॥**

दार्वीप्रपौंडरीकयोश्च क्वाथ आश्चोतने हितः ।

**संधावांश्च प्रयुंजीत घर्षरागाश्रुरुग्घरान् ।**

संधावांश्च वक्ष्यमाणान् घर्षादिहरान् प्रयुंजीत ।

ताम्रं लोहे मूत्रघृष्टं प्रयुक्तं
नेत्रे सर्पिर्धूपितं वेदनाघ्नम् ।
ताम्रैर्घृष्टो गव्यदध्नः सरो वा
युक्तः कृष्णासैंधवाभ्यां वरिष्ठः ॥ ३४ ॥

लोहभांडे ताम्रं गोमूत्रेण घृष्टं सर्पिर्धूपितं नेत्रे प्रयुक्तं पीडाहृत् । गव्यदधिसरस्ताम्रघृष्टः कृष्णासैंधवयुक्तो नेत्रप्रयुक्तो वरीयान् वेदनाघ्नः संधावः ।

शंखं ताम्रे स्तन्यघृष्टं घृताक्तैः
शम्याः पत्रैर्धूपितं तद्यवैश्च ।
नेत्रे युक्तं हंति संधावसंज्ञं
क्षिप्रं घर्षं वेदनां चातितीव्राम् ॥ ३५ ॥

शंखं स्तन्येन ताम्रे घृष्टं शमीपत्रैर्यवैश्च घृताक्तैर्धूपितं तत्संधावसंज्ञं नेत्रे प्रयुक्तं शीघ्रं घर्षं वेदनामतिदारुणां हंति । शालिन्यौ वृत्ते ।

उदुंबरफलं लोहे घृष्टं स्तन्येन धूपितम् ।
साज्यैः शमीच्छदैर्दाहशूलरागाश्रुहर्षजित् ॥३६॥

उदुंबरफलं लोहे स्तन्येन घृष्टं घृताक्तैः शमीपत्रैर्धूपितं दाहादिजित् ।

शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसंपुटे ।
घृतेन धूपितो हंति शोफघर्षाश्रुवेदनाः ॥ ३७ ॥

शिग्रुपल्लवरसः सुघृष्टस्ताम्रसंपुटे घृतेन धूपितः शोफादीन् हंति ।

तिलांभसा मृत्कपालं कांस्ये घृष्टं सुधूपितम् ।
निंबपत्रैर्घृताभ्यक्तैर्घर्षशूलाश्रुरागजित् ॥ ३८ ॥

मृत्कपालं तिलांभसा कांस्ये घृष्टं तथा निंबपत्रैर्घृताक्तैर्धूपितं नरस्य घर्षादिजित् ।

संधावेनांजिते नेत्रे विगतौषधवेदने ।
स्तन्येनाश्चोतनं कार्यं त्रिः परं नांजयेच्च तैः॥३९॥

संधावेन नेत्रेऽञ्जिते विगतौषधवेदने सति स्तन्येनाश्चोतनं हितं कार्यम् । त्रीन् वारांस्तैश्च संधावैः परं त्रिभ्यो वारेभ्यो नांजयेत् ।

तालीसपत्रचपलानतलोहरजांजनैः ।
जातीमुकुलकासीससैंधवैर्मूत्रपेषितैः ॥ ४० ॥
ताम्रमालिप्य सप्ताहं धारयेत्पेषयेत्ततः ।
मूत्रेणैवानु गुटिकाः कुर्याच्छायाविशोषिताः ४१
ताः स्तन्यघृष्टा वर्षाश्रुशोफकंडूविनाशनाः ।

तालीसपत्रादिभिर्मूत्रपिष्टैस्ताम्रमालिप्य सप्ताहं धारयेत् । ततः सप्ताहादूर्ध्वं गोमूत्रेणैव गुटिकाः कुर्यात् । ताश्च छायाविशोषिताः स्तन्यघृष्टा घर्षादिघ्नाः ।

व्याघ्रीत्वङ्मधुकं ताम्ररजोजाक्षीरकल्कितम्॥४२॥
शम्यामलकपत्राज्यधूपितं शोफरुक्प्रणुत् ।

व्याघ्र्यादिकमजाक्षीरकल्कितं शम्यामलकपत्रैर्घृतान्वितैर्धूपितं शोफरुक्प्रणुत् ।

अम्लोषिते प्रयुंजीत पित्ताभिष्यंदसाधनम् ॥ ४३ ॥

अम्लोषिते नेत्ररोगे पित्ताभिष्यंदचिकित्सितं कार्यम् ।

उत्क्लिष्टाः कफपित्तास्रनिचयोत्थाः कुकूणकः ।
पक्ष्मोपरोधः शुष्काक्षिपाकः पूयालसो बिसः॥४४॥
पोथक्यम्लोषितोल्पाख्यंस्यदमंथाविनानिलात् ।
एतेऽष्टादश पिल्लाख्या दीर्घकालानुबंधिनः॥४५॥
चिकित्सा पृथगेतेषां स्वंस्वमुक्ताथ वक्ष्यते ।

उत्क्लिष्टादयोऽष्टादश रोगा इमे पिल्लाख्या दीर्घकालानुबंधिनः। एतेषां पृथक् चिकित्सा यथास्वमुक्ता । अथ चिकित्सा पिल्लीभूतेषु सामान्येन भणिष्यते ।

पिल्लीभूतेषु सामान्यादथ पिल्लाक्षिरोगिणः॥४६॥
स्निग्धस्य छर्दितवतः शिराविद्धहृतासृजः ।
विरिक्तस्य च वर्त्मानु निर्लिखेदाविशुद्धितः ४७

अथ पिल्लाक्षिरोगवतः स्निग्धस्य छर्दितवतो नरस्य विद्धशिरस्य विरिक्तस्य वर्त्म निर्लिखेदाविशुद्धेः ।

तुत्थकस्य पलं श्वेतमरिचानि च विंशति ।
त्रिंशता कांजिकपलैः पिष्ट्वा ताम्रे निधापयेत्४८
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।
तत्सेकेनोपदेहास्तु कंडूशोफांश्च नाशयेत् ॥४९॥

तुत्थकस्य पलं विंशतिर्मरिचानि श्वेतानि सौभांजनबीजानि कांजिकपलैस्त्रिंशता पिष्ट्वा ताम्रे निधापयेत् । तत्सेकेन पिल्लान् बहुवर्षोत्थितानप्यपिल्लान् कुरुते । उपदेहादींश्च नाशयेत् ।

करंजबीजं सुरसं सुमनःकोरकाणि च ।
संक्षुद्य साधयेत्क्वाथे पूते तत्र रसक्रिया ॥ ५० ॥
अंजनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम् ।

करंजबीजादीनि संक्षुद्य जले साधयेत् । क्वाथे पूते तत्र रसक्रिया अंजनं पिल्ले औषधं पक्ष्मणां च प्ररोहणम् ।

रसांजनं सर्जरसो रीतिपुष्पं मनःशिला ॥ ५१॥
समुद्रफेनं लवणं गैरिकं मरिचानि च ।
अंजनं मधुना पिष्टं क्लेदकंडूघ्नमुत्तमम् ॥ ५२ ॥

रसांजनादिकं मधुना पिष्टमंजनं परं क्लेदकंडूहृत् ।

**अभयारसपिष्टं वा तगरं पिल्लनाशनम् ।**
**भावितं बस्तमूत्रेण सस्नेहं देवदारु च ॥ ५३ ॥**

हरीतकीक्वाथपिष्टं तगरं परं पिल्लघ्नम् । देवदारु सस्नेहं बस्तमूत्रेण भावितं तद्वत् ।

**सैंधवत्रिफलाकृष्णाकटुकाशंखनाभयः ।**
**सताम्ररजसो वर्तिः पिल्लशुक्रकनाशिनी ॥ ५४ ॥**

सैंधवादयस्ताम्ररजःसहिता वर्तिः पिल्लशुक्रहृत् ।

**पुष्पकासीसचूर्णो वा सुरसारसभावितः ।**
**ताम्रे दशाहं तत् पैल्लयपक्ष्मशातजिदंजनम्॥५५॥**

पुष्पकासीसचूर्णः सुरसारसेन दशाहं भावितस्तदंजनं पैल्लयपक्ष्मशातघ्नम् । सुरसा मूर्वा ।

**अलं च सौवीरकमंजनं च**
**ताभ्यांसमं ताम्ररजश्च सूक्ष्मम् ।**
**पिल्लेषु रोमाणि निषेवितोसौ**
**चूर्णः करोत्येकशलाकयापि ॥ ५६ ॥**

हरितालं सौवीरांजनम् । ताभ्यां द्वाभ्यां तुल्यं ताम्रचूर्णं सूक्ष्ममेष चूर्णो निषेवित एकयाऽपि शलाकया पिल्लेषु रोमाणि करोति । उपजातिः ।

**लाक्षानिर्गुंडीभृंगदार्वीरसेन**
**श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ।**
**दीपः प्रज्वाल्यः सर्पिषा तत्समुत्था**
**श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ५७ ॥**

लाक्षादिरसेन श्रेष्ठं कार्पासं सप्तवारान् भावितं तेन कार्पासेन सर्पिषा दीपः प्रज्वाल्यस्तत्समुत्था मषी पिल्लानां रोपणार्थे श्रेष्ठा । वैश्वदेवी वृत्तम् ।

**वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।**
**पुनः पुनर्विरेकं च नित्यमाश्चोतनांजनम् ॥ ५८ ॥**
**नावनं धूमपानं च पिल्लरोगातुरो भजेत् ।**
**पूयालसे त्वशांतेतद्दाहः सूक्ष्मशलाकया ॥ ५९ ॥**

पिल्लरोगी वर्त्मावलेखादिकं पुनः पुनर्भजेत् । पूयालसे पुनरशांते सत्यंते सूक्ष्मशलाकया दाहो हितः ।

**चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ।**
**परस्परमसंकीर्णाः कात्स्न्येंन गदिता गदाः ॥६०॥**
**सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः।**
**पुराणयवगोधूमशालिषऽष्टिककोद्रवान् ॥ ६१ ॥**
**मुद्गादीन् कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ।**
**शाकं चैवंविधं मांसं जांगलं दाडिमं सिताम् ६२**
**सैंधवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ।**
**आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ॥ ६३ ॥**
**वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ।**
**शोकक्रोधदिवास्वप्ननिशाजागरणानि च ॥ ६४ ॥**
**विदाहि विष्टंभकरं यच्चेहाहारभेषजम् ।**

इत्येवमक्ष्णश्चतुर्नवति गदा लक्षणहेतुसाधनैरन्योन्यमसंकीर्णाः कात्स्न्येंनोक्ताः । स्वस्थोऽपि नयनवल्लभः सन् सदैव पुराणयवादिकं निषेवेत । एवंविधं च कफपित्तघ्नं शाकं च विधिवद् विधिर्विद्यते यस्मिंस्तच्छोधनं विरेचनं दोषशोधनं च भजेत् । तथा वेगसंरोधादिकं वर्जयेत् ।

**द्वे पादमध्ये पृथुसन्निवेशे**
**शिरे गते ते बहुधा च नेत्रे ।**
**ताम्रक्षणोद्वर्तनलेपनादीन्**
**पादप्रयुक्तान्नयनं नयंतिं ॥ ६५ ॥**

द्वे पादसमध्ये पृथुरूपे सिरे ते च बहुधा नेत्रगते । ताः सिरा बहुधा अभ्यंगादीन्पादप्रयुक्तान्नेत्रं प्रापयंति ।

**मलोष्णसंघट्टनपीडनाद्यै-**
**स्ता दूषयंते नयनानि दुष्टाः ।**
**भजेत्सदा दृष्टिहितानि तस्माद्**
**उपानदभ्यंजनधावनानि ॥ ६६ ॥**

ताश्च मलोष्णादिभिर्दुष्टा नयनानि दूषयंते । यत एवं तस्माद् दृष्टिहितानि सर्वदा उपानदभ्यंजनादीनि भजेत् । उपजाती वृत्ते ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थानेऽक्षिरोगप्रतिषेधो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

नयनामयादनंतरं दूरग्रहणसाधर्म्येण कर्णरोगानाह । यथा हि चक्षुर्दूरदेशस्थमपि पश्यति तथा श्रोत्रं दूरस्थमपि शृणोतीत्याह ।

**अथाऽतः कर्णरोगविज्ञानीयं व्याख्यास्यामः ।**
**प्रतिश्यायजलक्रीडाकर्णकंडूयनैर्मरुत् ।**
**मिथ्यायोगेन शब्दस्य कुपितोन्यैश्च कोपनैः ॥ १ ॥**
**प्राप्य श्रोत्रशिराः कुर्याच्छूलं स्रोतसि वेगवत् ।**
**अर्धावभेदकं स्तंभं शिशिरानभिनंदनम् ॥ २ ॥**
**चिराच्च पाकं पक्वं तु लसीकामल्पशः स्रवेत् ।**
**श्रोत्रं शून्यमकस्माच्च स्यात्संचारविचारवत् ॥ ३ ॥**

प्रतिश्यायेत्यादिभिः शब्दस्य मिथ्याभियोगेन पवनः कुपितोऽपरैरपि सर्वनिदानैः कुपितः श्रोत्रशिराः प्राप्य स्रोतसि कर्णविवरे शूलं वेगवत् कुर्यात् । तथार्धावभेदकं शिरोरोगं स्तंभं क-

र्णस्यैव तथा शीतस्नानभिनंदनं चिरेण च पाकं कुर्यात् । पक्वं तु श्रोत्रमल्पशो लसीकां स्रवेत् । अकस्माच्छून्यं स्यात्संचारविचारवच्च स्थगितास्थगितं च यथा स्यात् ।

**शूलं पित्तात्सदाहोषा शीतेच्छा श्वयथुं ज्वरम् ।**
**आशु पाकं प्रपक्वं च सपीतलसिकास्रुति ॥ ४ ॥**
**सा लसीका स्पृशेद्यद्यत्तत्तत्पाकमुपैति च ।**

पित्तेन शूलं दाहान्वितं स्यात् । तत्रोषाप्रादेशिकः संतापः । दाहः सर्वांगीणस्तीव्रोष्मा । सदाऽरतिर्मांस्तथाऽऽशुपाको यस्मिंस्तदेवम् । तथा प्रपक्वं च सपीतलसिकास्रुतिः स्यात् । सा च लसीका यद्यदंगं स्पृशेत् तत् तत् पाकं गच्छति ।

**कफाच्छिरोहनुग्रीवागौरवं मंदतारुजः ॥ ५ ॥**
**कंडूः श्वयथुरुष्णेच्छा पाकाच्छ्वेतघना स्रुतिः ।**

कफाच्छिरआदिगौरवं जायते । रुजो मंदत्वं कंड्वादि च स्यात् । पाकाच्छ्वेता घना च स्रुतिः स्यात् ।

**करोति श्रवणे शूलमभिघातादि दूषितम् ॥ ६ ॥**
**रक्तं पित्तसमानार्ति किंचिद्वाधिकलक्षणम् ।**

रक्तमभिघातादिदूषितं कर्णे शूलं करोति । किंभूतं रक्तम् । पित्तेन समा पीडा यस्मिंस्तदेवम् । किंचिच्चाधिकलक्षणम् ।

**शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥ ७ ॥**
**पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ।**
**पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ ८ ॥**

समुदितैः सन्निपतितैर्दोषैः शूलं शोफादियुतं जायते । तथा पर्यायेणोष्णशीतेच्छाश्रुतिजाड्ययुक्तं च पक्वं सितासितारक्तघनं पूयं प्रवहति ।

**शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः ।**
**नादानकस्माद्विविधान् कर्णनादं वदंति तम् ॥ ९ ॥**

शब्दवाहिनीषु सिरासु गते वाते मुहुः शब्दान् विविधानकस्माच्छृणोति तं कर्णनादं वदंति ।

**श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः ।**
**उच्चैः कृच्छ्राच्छ्रुतिं कुर्याद्बधिरत्वं क्रमेण च ॥१०॥**

वायुः श्लेष्मणानुगतः कर्णनादो वा समुपेक्षितोऽचिकित्सितः कर्णे श्रोत्र उच्चैः कृच्छ्राच्छ्रुतिं श्रवणं कुर्यात् । क्रमेण बधिरत्वं बाधिर्यं कुर्यात् ।

**वातेन शोषितः श्लेष्मा स्रोतो लिंपेत्ततो भवेत् ।**
**रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥ ११ ॥**

वातेन श्लेष्मा शोषितः स्रोतो लिंपेत् । ततस्तद्गौरवं तस्य स्रोतसो गुरुत्वं स्यात् । स्थगनं च । स प्रतीनाहसंज्ञको गदः ।

**कंडूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ।**

कफात् कंडूशोफौ कर्णे स्थिरौ तत्संज्ञकौ कंडूशोफाख्यौ भवतः ।

**कफो विदग्धः पित्तेन सरुजं नीरुजं त्वपि ॥ १२ ॥**
**घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम् ।**

कफः पित्तेन विदग्धः सरुजं नीरुजं वा घनपूति बहुक्लेदं पूतिकर्णकमनुगतार्थं कुरुते ।

**वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजां रुजम् ॥१३॥**
**खादंतो जंतवः कुर्युस्तीव्रां स कृमिकर्णकः ।**

वातादिभिः श्रोत्रं दूषितं जंतवो भक्षयंतो मांसादिक्लेदजां तीव्रां रुजं कुर्युः स कृमिकर्णकाख्यः ।

**श्रोत्रकंडूयनाज्जाते क्षते स्यात्पूर्वलक्षणः ॥ १४ ॥**
**विद्रधिः पूर्ववच्चान्यः**

श्रोत्रकंडूयनाज्जाते क्षते पूर्वोक्तलक्षणो विद्रधिः स्यात् । निदाने ह्येवमुक्तम् । यः शोफो बहिरंतर्वा महामूलो महारुजः । वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिरिति । तद्वदिह विद्रधिसामान्यात्कर्णविद्रधिरेक एवोक्तः ।

**शोफोऽर्शोऽर्बुदमीरितम् ।**
**तेषु रुक्पूतिकर्णत्वं बधिरत्वं च बाधते ॥ १५ ॥**

अर्शोऽर्बुदं च तदीरितमिति कर्णार्शः कर्णार्बुदमिति । तत्र ह्युक्तम् । अर्शोऽधिमांसं वर्त्मोत्थं स्तब्धं स्निग्धं सदाहरुक् । रक्तं रक्तेन तत्स्रावि छिन्नं छिन्नं विवर्धत इत्यर्बुदस्य लक्षणम् । वर्त्मोत्थमांसपिंडाभः श्वयथुर्ग्रथितो रुजः । स्यात्सैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चल इति । तेष्वर्शोऽर्बुदेषु रुग् बाधते पूतिकर्णत्वं बधिरत्वं च ।

**गर्भेऽनिलात्संकुचिता शष्कुली कूचिकर्णकः ।**

वाताद्गर्भेऽभ्यंतरे संकुचिता शष्कुली कूचिकर्णसंज्ञः ।

**एको नीरुगनेको वा गर्भे मांसांकुरः स्थिरः ॥ १६॥**
**पिप्पलीपिप्पलीमानः**

मांसांकुरो गर्भे स्थिर एकोऽनेको वा नीरुजः पिप्पलीत्युच्यते । कर्णपिप्पलीत्यर्थः । स च मांसांकुरः पिप्पलीमानः ।

**सन्निपाताद्विदारिका ।**
**सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः ॥ १७॥**
**कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति ।**
**संकोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम्॥१८॥**

सन्निपातेन विदारिकाख्यः श्वयथुः स्तब्धस्तथा सवर्णः सरुजः स उपेक्षितः सन् कटुतैलनिभं स्रवेत् कृच्छ्रेण रोहति । सा च विदारिका रूढा सती निश्चलं कर्णशष्कुलीं संकोचयति ।

**सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम् ।**

सिरास्थो वायुः पालीशोषं तदाह्वयं पालीशोषसंज्ञं कुरुते ।

**कृशा दृढा च तंत्रीवत् पाली वातेन तंत्रिका॥१९॥**

वातेन पाली कृशा दृढा च तंत्रीव स्यात् । सा तंत्रिकेत्युच्यते ।

**सुकुमारे चिरोत्सर्गात्सहसैव प्रवर्धिते ।**
**कर्णे शोफः सरुक्पाल्यामरुणः परिपोटवान्॥२०॥**
**परिपोटः स पवनात्**

सुकुमारे कर्णे चिरोत्सर्गात्सहसैव न शनैः प्रवर्धिते श्वयथुः पाल्यां सरुक् तथा लोहितः परिपोटवांश्च । परिपोटः स्फुटनम् । स वातात्परिपोटसंज्ञः स्यात् ।

**उत्पातः पित्तशोणितात् ।**
**गुर्वाभरणभाराद्यैः श्यावो रुग्दाहपाकवान् ॥२१॥**
**श्वयथुः स्फोटपिटकारागोषाक्लेदसंयुतः ।**

पित्तशोणितात्स एवोत्पातसंज्ञो गुर्वाभरणभारादिभिर्हेतुभूतैः प्रकुपितात् पित्तशोणिताच्छोफो रुगादिमान् स्फोटादिसंयुतः श्यावोऽनुगतार्थः ।

**पाल्यां शोफोनिलकफात्सर्वतो निर्व्यथः स्थिरः २२**
**स्तब्धः सवर्णः कंडूमानुन्मंथो गल्लिरश्च सः ।**

वातकफात्पाल्यां शोफः सर्वतो निर्व्यथः स्थिरः स्तब्धः समानवर्णः कंडूयुत उन्मंथ उच्यते । स एव गल्लिराख्यः ।

**दुर्विद्धे वर्धिते कर्णे सकंडूदाहपाकरुक् ॥ २३ ॥**
**श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्धनः ।**

कर्णे दुर्विद्धे सति कंड्वादियुतः शोफः सन्निपातात्मको दुःखवर्धनसंज्ञः ।

**कफासृक्कृमिजाः सूक्ष्माः सकंडूक्लेदवेदनाः ॥२४॥**
**लेह्याख्याः पिटिकास्ता हि लिह्युः पालीमुपेक्षिताः ।**

कफरक्तजकृमिजाः सूक्ष्माः कंड्वादियुता लेह्याख्याः पिटिका यस्मात्ता उपेक्षिताः पालिं लिह्युः ।

**पिप्पलीसर्वजं शूलं विदारी कूचिकर्णकः ॥ २५ ॥**
**एषामसाध्या याप्यैका तंत्रिकान्यांस्तु साधयेत् ।**
**पंचविंशतिरित्युक्ताः कर्णरोगा विभागतः ॥ २६ ॥**

पिप्पल्यादयश्चत्वारो रोगा एषां मध्येऽसाध्याः । तंत्रिका याप्या । अन्यांस्तु विंशति रोगान्साधयेत् । इत्येवं प्रागुक्तेन प्रकारेण पंचविंशतिरामया विभागेनोक्ताः । अनेनान्यतंत्रकृतां संकीर्णकर्णरोगकथनं सूचयति । संख्यानं च सुखस्मरणार्थमत्र कृतम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने कर्णरोगविज्ञानीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः ।

अस्मादनंतरमेतच्चिकित्सोच्यत इत्याह ।

**अथाऽतः कर्णरोगप्रतिषेधं व्याख्यास्यामः ॥**
**कर्णशूले पवनजे पिबेद्रात्रौ रसाशितः ।**
**वातघ्नसाधितं सर्पिः कर्णं स्विन्नं च पूरयेत् ॥१॥**
**पत्राणां पृथगश्वत्थबिल्वार्कैरंडजन्मनाम् ।**
**तैलसिंधूत्थदिग्धानां स्विन्नानां पुटपाकतः ॥ २ ॥**
**रसैः कवोष्णैस्तद्वच्च मूलकस्यारलोरपि ।**

वातोद्भवे कर्णशूले मांसरसेन भोजितो वातघ्नद्रव्यसाधितं घृतं निशि पिबेत् । कर्णं च स्विन्नं सत् पृथगश्वत्थादीनां पत्राणां तैलसैंधवदिग्धानां पुटपाकतः स्विन्नानां रसैः कोष्णैः पूरयेत् । तथैव मूलकस्य रसेन सोनाकस्य च रसेन पूरयेत् ।

**गणे वातहरेऽम्लेषु मूत्रेषु च विपाचितः ॥ ३ ॥**
**महास्नेहो द्रुतं हंति सुतीव्रामपि वेदनाम् ।**

वातहरे गणेऽम्लेषु मूत्रेषु च गोमूत्रादिषु विपाचितो महास्नेहो द्रागेव सुदारुणामपि पीडां जयति ।

**महतः पंचमूलस्य काष्ठात्क्षौमेण वेष्टितात् ॥ ४ ॥**
**तैलसिक्तात्प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ।**

महतः पंचमूलस्य एकैकतमात् काष्ठात्क्षौमेण वेष्टितात् तैलसिक्तात् प्रज्वलितात् ग्राह्यः स्नेहः स कर्णे निषिक्तः सद्यो रुजं हंति ।

**योज्यश्चैवं भद्रकाष्ठात्कुष्ठात्काष्ठाच्च सारलात् ॥५॥**

एवमनेनैव विधिना देवदारुकाष्ठात् कुष्ठात्सरलकाष्ठाच्च च्युतः स्नेहो रसो योज्यः ।

**वातव्याधिप्रतिश्यायविहितं हितमत्र च ।**

वातव्याधौ प्रतिश्याये च यद्विहितं भेषजं तच्चात्र हितम् ।

**वर्जयेच्छिरसा स्नानं शीतांभःपानमन्ह्यपि ॥ ६ ॥**

शिरसा सह स्नानं वर्जयेत् । शीतजलपानं दिवापि न कार्यम् । रात्रौ तु सर्वथा वर्ज्यमेवेत्यर्थः ।

**पित्तशूले सितायुक्तं घृतस्निग्धं विरेचयेत् ।**
**द्राक्षायष्टिशृतं स्तन्यं शस्यते कर्णपूरणम् ॥ ७ ॥**

पित्तशूले सितान्वितघृतेन स्निग्धं विरेचयेत् । द्राक्षामधुकसिद्धं स्त्रीक्षीरं कर्णपूरणं हितम् ।

**यष्ट्यनंताहिमोशीरकाकोलीरोध्रजीवकैः ।**
**मृणालबिसमंजिष्ठासारिवाभिश्च साधयेत् ॥ ८ ॥**
**यष्टीमधुरसप्रस्थं क्षीरद्विप्रस्थसंयुतम् ।**
**तैलस्य कुडवं नस्यपूरणाभ्यंजनैरिदम् ॥ ९ ॥**
**निहंति शूलदाहोषाः केवलं क्षौद्रमेव वा ।**

यष्ट्यादिभिः कल्कैर्मधुककाथप्रस्थेन क्षीरस्य द्विप्रस्थेन च संयुतं तैलकुडवं साधयेत् । नस्यकर्णपूरणाभ्यंजनैरिदं शूलादीन् हंति । केवलं क्षौद्रं वा ।

**यष्ट्यादिभिश्च सघृतैः कर्णौ दिह्यात्समंततः ॥१०॥**

यष्ट्यादिभिः पूर्वोक्तैः ससर्पिष्कैः कर्णौ च परितो लिंपेत् ।

**वामयेत् पिप्पलीसिद्धसर्पिःस्निग्धं कफोद्भवे ।**
**धूमनावनगंडूषस्वेदान् कुर्यात्कफापहान् ॥ ११ ॥**

कफोत्थे पिप्पलीपक्वघृतस्निग्धं वामयेत् । धूमादींश्च कफघ्नान् विदध्यात् ।

**लशुनार्द्रकशिग्रूणां सुरुग्या मूलकस्य च ।**
**कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ १२ ॥**

लशुनादीनां पृथक् पृथक् स्वरसः कर्णपूरणे कोष्णः श्रेष्ठः ।

**अर्कांकुरानम्लपिष्टांस्तैलाक्तांल्लवणान्वितान् ।**
**संनिधाय स्नुहीकांडे कोरिते तच्छदावृतान् ॥१३॥**
**स्वेदयेत्पुटपाकेन स रसः शूलजित्परम् ।**

अर्कांकुरानम्लेन कांजिकेन पिष्टांस्तैलेन रूक्षितान् लवणान्वितान् स्नुहीकांडे कोरिते सन्निधाय तस्याः स्नुह्याः पत्रैरावृतान् पुटपाकेन स्वेदयेत् । स रसः परं शूलजित् ।

**रसेन बीजपूरस्य कपित्थस्य च पूरयेत् ॥ १४ ॥**
**सूक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत् ।**

तथा बीजपूरस्य रसेन कपित्थरसेन पूरयेत् । अथवा सूक्तेन पूरयित्वा समुद्रफेनचूर्णैरवचूर्णयेत् ।

**अजाविमूत्रवंशत्वक्सिद्धं तैलं च पूरणम् ॥ १५ ॥**
**सिद्धं वा सार्षपं तैलं हिंगुतुंबुरुनागरैः ।**

अजाविमूत्राभ्यां वंशत्वचा च सिद्धं तैलं पूरणं हितम् । सार्षपं तैलं हिंगुतुंबुरुशुंठीभिः सिद्धं पूरणं हितम् ।

**रक्तजे पित्तवत्कार्यं शिरां चाशु विमोक्षयेत् ॥१६॥**

रक्तजे कर्णशूले पित्तवत्कार्यम् । शीघ्रं च शिरां विमोक्षयेत् ।

**पक्वे पूयवहे कर्णे धूमगंडूषनावनम् ।**
**युंज्यान्नाडीविधानं च दुष्टव्रणहरं च यत् ॥ १७ ॥**

पक्वे पूयवहे कर्णे धूमादिकं योज्यं नाडीविधानं च योज्यम् । दुष्टव्रणघ्नं यत्तच्च योज्यम् ।

**स्रोतः प्रमृज्य दिग्धं तु द्वौ कालौ पिचुवर्तिभिः ।**
**पूरयेद् धूपयित्वा तु माक्षिकेण प्रपूरयेत् ॥ १८ ॥**
**सुरसादिगणक्वाथफाणिताक्तां च योजयेत् ।**
**पिचुवर्तिं सुसूक्ष्मैश्च तच्चूर्णैरवचूर्णयेत् ॥ १९ ॥**

पिचुवर्तिभिश्च कर्णस्रोतो दिग्धं प्रपूरयेत् । द्वौ कालौ प्रमृज्य गुग्गुलुना धूपयित्वा ततो माक्षिकेण पूरयेत् । सुरसादिगणक्वाथकृतां फाणिताक्तां पिचुवर्तिं च योजयेत् । सुसूक्ष्मैस्तच्चूर्णैः सुरसादिरजोभिरवचूर्णयेत् कर्णस्रोतः ।

**शूलक्लेदगुरुत्वानां विधिरेष निवर्तकः ।**

शूलादीनां निवर्तको विधिरेषः ।

**प्रियंगुमधुकांबष्ठाधातक्युत्पलपर्णिभिः ॥ २० ॥**
**मंजिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च ।**
**पचेत्तैलं तदास्रावं निगृह्णात्याशु पूरणात् ॥ २१ ॥**

प्रियंग्वादिभिः कपित्थरसेन तैलं पचेत् । तत्पूरणाद्द्रागेव स्रावं निर्हरति ।

**नादबाधिर्ययोः कुर्याद् वातशूलोक्तमौषधम् ।**
**श्लेष्मानुबंधे श्लेष्माणं प्राग्जयेद्वमनादिभिः ॥२२॥**

नादे बाधिरत्वे च वातशूलोक्तमौषधं कुर्यात् । श्लेष्मानुबंधे प्राक् श्लेष्माणं वमनादिभिर्जयेत् ।

**एरंडशिग्रुवरुणमूलकात्पत्रजे रसे ।**
**चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते ॥ २३ ॥**
**यष्ट्याह्वाक्षीरकाकोलीकल्कयुक्तं निहंति तत् ।**
**नादबाधिर्यशूलानि नावनाभ्यंगपूरणैः ॥ २४ ॥**

एरंडादिपत्रजे रसे चतुर्गुणे क्षीरे चाष्टगुणे यष्टिकादिकल्कयुतं तैलं पचेत् । तच्च नावनादिभिर्नादादीन् हंति ।

**पक्वं प्रतिविषाहिंगुमिशित्वक्स्वर्जिकोषणैः ।**
**ससूक्तैः पूरणात्तैलं रुक्स्रावश्रुतिनादनुत् ॥ २५ ॥**

प्रतिविषादिभिः संयुक्तं तैलं पक्वं पूरणाद्रुगादिजित् ।

**कर्णनादे हितं तैलं सर्षपोत्थं च पूरणे ।**

सर्षपोत्थं तैलं कर्णनादे हितम् ।

**शुष्कमूलकखंडानां क्षारो हिंगु महौषधम् ॥ २६ ॥**
**शतपुष्पावचाकुष्ठदारुशिग्रुरसांजनम् ।**
**सौवर्चलयवक्षारस्वर्जिकौद्भिदसैंधवम् ॥ २७ ॥**
**भूर्जग्रंथिविडं मुस्तामधुसूक्तं चतुर्गुणम् ।**
**मातुलुंगरसस्तद्वत् कदलीस्वरसश्च तैः ॥ २८ ॥**
**पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ।**
**कंडूं क्लेदं च बाधिर्यं पूतिकर्णं च रुक्कृमीन् ॥२९॥**
**क्षारतैलमिदं श्रेष्ठं मुखदंतामयेषु च ।**

शुष्कमूलकखंडक्षारादीनि सामान्यपरिभाषोक्तप्रमाणानि तथा तैलान्मधुयुक्तं सूक्तं चतुर्गुणं तथा बीजपूररसः कदलस्विरसश्चतुर्गुणस्तैरेतैस्तैलं पक्वं पूरणात्सुकृच्छ्रानपि कंड्वादीनाशु जयेत् । इदं क्षारतैलं मुखदंतरोगेषु च श्रेष्ठम् ।

**अथ सुप्ताविव स्यातां कर्णौ रक्तं हरेत्ततः ॥ ३० ॥**

यदि कर्णौ सुप्ताविव स्यातां तदाऽस्रं हरेत् ।

**सशोफक्लेदयोर्मंदश्रुतेर्वमनमाचरेत् ।**

कर्णयोः सशोफक्लेदयोर्मंदश्रुतेरातुरस्य वमनं प्रयुंज्यात् ।

**बाधिर्यं वर्जयेद्बालवृद्धयोश्चिरजं च यत् ॥ ३१ ॥**

बाधिर्यं बालवृद्धयोश्चिरजातं च यत्तद्वर्जयेत् ।

**प्रतिनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत् ।**
**कर्णशोधनकेनाशु कर्णौ तैलस्य पूरयेत् ॥ ३२ ॥**
**ससुक्तसैंधवमधोर्मातुलुंगरसस्य वा ।**
**शोधनाद् रूक्षतोत्पत्तौ घृतमंडस्य पूरणम् ॥ ३३ ॥**

प्रतिनाहे स्नेहस्वेदैः परिक्लेद्य कर्णं कर्णशोधनकेन विशोधयेत्। पश्चात्तैलस्य सुक्तादिना युक्तस्य कर्णौ पूरयेत् । तैलस्येति संबंधमात्रे षष्ठी । मातुलुंगरसस्य वा सुक्तादियुक्तस्य पूरयेत् । शोधनेन रूक्षतोत्पत्तौ सत्यां घृतमंडस्य पूरणं हितम् ।

**क्रमोऽयं मलपूर्णेऽपि कर्णे कंडूां कफापहम् ।**
**नस्यादितद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम् ॥३४॥**

कर्णे मलेन पूर्णेऽप्ययं प्रतिनाहोक्तः क्रमः कार्यः । कंडूां तथा कफघ्नं नस्यादिशोफेऽपि तथैवायं क्रमः । कटूष्णैश्च लेपनं हितम् ।

**कर्णस्रावोदितं कुर्यात्पूतिकृमिककर्णयोः ।**
**पूरणं कटुतैलेन विशेषात् कृमिकर्णके ॥ ३५ ॥**

पूतिकर्णे कृमिकर्णे च कर्णस्रावोक्तं चिकित्सितं कुर्यात् । कृमिकर्णके विशेषात्कटुतैलेन पूरणं हितम् ।

**वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रिया ।**

कर्णविद्रधौ वमनपूर्वा विद्रधिक्रिया शस्ता ।

**पित्तोत्थकर्णशूलोक्तं कर्तव्यं क्षतविद्रधौ ॥ ३६ ॥**

क्षतविद्रधौ पित्तोत्थकर्णशूलोक्तं कर्तव्यम् ।

**अर्शोऽर्बुदेषु नासावद्**

अर्शोऽर्बुदेषु नासाचिकित्सितम् ।

**आमा कर्णविदारिका ।**
**कर्णविद्रधिवत्साध्या यथादोषोदयेन च ॥ ३७ ॥**

कर्णविदारिकाऽपक्वा कर्णविद्रधिवत् चिकित्स्या यथादोषोदयेन च ।

**पालीशोषेऽनिलश्रोत्रशूलवन्नस्यलेपनम् ।**
**स्वेदं च कुर्यात् स्विन्नां च पालीमुद्वर्तयेत्तिलैः ३८**
**प्रियालबीजयष्ट्याह्वहयगंधायवान्वितैः ।**
**ततः पुष्टिकरैः स्नेहैरभ्यंगं नित्यमाचरेत् ॥ ३९ ॥**

पालीशोषे वातश्रोत्रशूल इव नस्यादिस्वेदं च कुर्यात् । पालीं च स्विन्नां तिलैः प्रियालबीजादियुक्तैरुद्वर्तयेत् । ततः स्नेहैः पुष्टिकृद्भिर्नित्यं साऽभ्यक्तव्या ।

**शतावरीवाजिगंधापयस्यैरंडजीवकैः ।**
**तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥ ४० ॥**

शतावर्यादिभिस्तैलं सक्षीरं पक्वं पालीनां परं पुष्टिकृत् ।

**कल्केन जीवनीयेन तैलं पयसि पाचितम् ।**
**आनूपमांसक्वाथे च पालीपोषणवर्धनम् ॥ ४१ ॥**

जीवंत्यादिगणजेन कल्केन क्षीरे आनूपमांसक्वाथे तैलं पाचितं पालीपोषणं पालीवृद्धिकृच्च ।

**पालीं छित्त्वातिसंक्षीणां शेषां संधाय पोषयेत् ।**

पालीमतिसंक्षीणां छित्त्वा शेषां संधाय संवर्धयेत् ।

**याप्येवं तंत्रिकाख्यापि परिपोटेप्ययं विधिः ॥४२॥**

याप्येवं तंत्रिकासंज्ञा । परिपोटेप्येष एव विधिर्याप्याख्यः ।

**उत्पाते शीतलैर्लेपो जलौकोहृतशोणिते ।**

उत्पाते जलौकोभिरपनीतरक्ते शीतलैर्लेपः ।

**जंब्वाम्रपल्लवबलायष्टीरोध्रतिलोत्पलैः ॥ ४३ ॥**
**सधान्याम्लैः समंजिष्ठैः सकदंबैः ससारिवैः ।**
**सिद्धमभ्यंजनं तैलं विसर्पोक्तघृतानि च ॥ ४४ ॥**

जंब्वादिभिः सिद्धतैलमभ्यंजने हितम् । विसर्पोक्तघृतानि च हितानि ।

**उन्मंथेऽभ्यंजनं तैलं गोधाकर्कवसान्वितम् ।**
**तालपत्राश्वगंधार्कबाकुचीतिलसैंधवैः ॥ ४५ ॥**
**सुरसालांगलीभ्यां च सिद्धं तीक्ष्णं च नावनम् ।**

उन्मंथे तैलं गोधाकर्कवसायुक्तं तालपर्णादिभिः सिद्धमभ्यंजने हितम् ।तथा सुरसालांगलीभ्यां च तैलं सिद्धं तीक्ष्णं नावनं हितम् ।

**दुर्विद्धेऽश्मंतजंब्वाम्रपत्रक्वाथेन सेचितम् ॥ ४६ ॥**
**तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरवचूर्णयेत् ।**
**चूर्णैर्मधुकमंजिष्ठाप्रपुंडाह्वनिशोद्भवैः ॥ ४७ ॥**
**लाक्षाविडंगसिद्धं च तैलमभ्यंजने हितम् ।**

दुर्विद्धेऽश्मंतकादिक्वाथेन सेचितां पालीं तैलेन स्वभ्यक्तां मधुकादिभिः सूक्ष्मरजीकृतैरवचूर्णयेत् । लाक्षाविडंगसिद्धतैलमभ्यंजने हितम् ।

**स्विन्नां गोमयजैः पिंडैर्बहुशः परिलेहिकाम् ॥ ४८**
**विडंगसारैरालिंपेदुरभ्रीमूत्रकल्कितैः ।**
**कौटजेंगुदकारंजबीजशम्याकवल्कलैः ॥ ४९ ॥**
**अथवाभ्यंजने तैर्वा कटुतैलं विपाचयेत् ।**
**सनिंबपत्रमरिचमदनैर्लेहिकाव्रणे ॥ ५० ॥**

परिलेहिकां गोमयजैः पिंडैर्बहुशः स्विन्नां विडंगसारैरुरभ्रीमूत्रकल्कितैरालिंपेत् । कौटजादि बीजादिभिर्वाऽविमूत्रेण क-

लिकतैरालिंपेत् । अथवा तैरेव कौटजादिभिः कटुतैलं निंबादिभिः सह विपाचयेल्लेहिकाव्रणे ।

**छिन्नं तु कर्णं शुद्धस्य बंधमालोच्य यौगिकम् ।**
**शुद्धास्रं लागयेल्लग्ने सद्यश्छिन्ने विशोधनम् ॥ ५१॥**

कर्णं तु छिन्नं शुद्धरक्तं शुद्धस्य यौगिकं बंधमालोच्य लागयेत् । लग्ने कर्णे सद्यश्छिन्ने विशोधनं विरेकादि ।

अथ कर्णरोगविधानमाह ।

**अथ ग्रथित्वा केशांतं कृत्वा छेदनलेखनम् ।**
**निवेश्य संधिं सुषमं न निम्नं न समुन्नतम् ॥ ५२ ॥**
**अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुंठितम् ।**
**सूत्रेणागाढशिथिलं बध्वा चूर्णैरवाकिरन् ॥ ५३ ॥**
**शोणितस्थापनैर्व्रण्यमाचारं चादिशेत्ततः ।**
**सप्ताहादामतैलाक्तं शनैरपनयेत् पिचुम् ॥ ५४ ॥**

केशांतं ग्रथित्वा छेदनं लेखनं कृत्वा संधिं सुषमं निवेश्य न निम्नं नवोन्नतं सुषममिति । सुषामादिषु चेति षत्वम् । अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुंठितम् । सूत्रेण न गाढं न च शिथिलं बध्वा । शोणितस्थापनैर्मधुकगैरिकादिभिरवचूर्णयेत् । ततो व्रणहितमाचरेत् । सप्ताहादूर्ध्वमामतैलेनाक्तं शनैः पिचुमपनयेत् । सुश्रुतेऽप्युक्तम् । न कर्णे शोफरागादियुक्ते संधानमिष्यते । न घस्मरस्य नात्युष्णे नाविशुद्धतनोरपीति ।

**सुरूढं जातरोमाणं श्लिष्टसंधिसमस्थिरम् ।**
**सुवर्ष्माणं सुरागं च शनैः कर्णं विवर्धयेत् ॥ ५५ ॥**

सुरूढादिगुणं च कर्णं शनैर्विवर्धयेत् ।

वर्ष्मरूपमुच्यते ।

**जलशूकः स्वयंगुप्ता रजन्यौ बृहतीद्वयम् ।**
**अश्वगंधाबलाहस्तिपिप्पलीगौरसर्षपाः ॥ ५६ ॥**
**मूलं कोशातकाश्वघ्नरूपिकासप्तपर्णजम् ।**
**छुछुंदरीकालमृतागृहं मधुकरीकृतम् ॥ ५७ ॥**
**जंतूका जलजन्मा च तथा शावरकंदकम् ।**
**एभिः कल्कैः खरं पक्कं सतैलं माहिषं घृतम् ॥५८॥**
**हस्त्यश्वमूत्रेण परमभ्यंगात्कर्णवर्धनम् ।**

जलशूकादिभिर्गजाश्वयोर्मूत्रैः पिष्टैः सतैलं माहिषं घृतं खरपाकमभ्यंगात् कर्णवर्धनम् । जलशूकः शैवालः । रूपिकः अर्कः । छुछुंदरी मूषिकाभेदः । साच कालेन मृता नतु व्यापादिता स्वयम् । जंतूका चर्मचटिका । जलजन्मा जलौका । शवरकंदको लशुनः ।

**अथ कुर्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकाम्॥५९॥**
**छिंद्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः ।**
**त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ॥६०॥**
**सीव्येद् गंडं ततः सूच्या सेविन्या पिचुयुक्तया ।**
**नासाच्छेदे च लिखिते परीवर्त्योपरि त्वचम् ॥६१॥**
**कपोलबंधं संदध्यात्सीव्येन्नासां च यत्नतः ।**
**नाडीभ्यामुत्क्षिपेदंतः सुखोच्छ्वासप्रवृत्तये ॥ ६२ ॥**
**आमतैलेन सिक्त्वा तु पतंगमधुकांजनैः ।**
**शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ॥ ६३ ॥**
**ततो मधुघृताभ्यक्तं बध्वा चारिकमादिशेत् ।**
**ज्ञात्वावस्थांतरं कुर्यात् सद्यो व्रणविधिं ततः॥६४॥**
**छिंद्याद्रूढेऽधिकं मांसं नासोपांते च चर्मवत् ।**
**सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्धयेत्पुनः ॥ ६५ ॥**

अथेति मंगले । कृतमंगलस्य वयस्थस्य शुद्धस्य नासिकां छिन्नां कुर्यात् । कथमित्याह । नासातुल्यं पत्रं छिंद्यात् । तेन पत्रेण तुल्यं कपोलाच्छिंद्यात् । नासिकातुल्ये देशे त्वचं मांसं रक्षंस्तत् पत्रं तनुतां नयेत् । अनंतरं सूच्या सेविन्या पिचुयुक्तया गंडं सीव्येत् । अथ नासाछेदे लिखिते तत्त्वचमुपरिवर्त्य कपोलबंधं संदध्यात् । नासां च यत्नेन सीव्येत् । अंतर्मध्ये नासिकां नाडीभ्यामुत्क्षिपेत्सुखोच्छ्वासप्रवर्तनाय । तत आमतैलेन सिक्त्वा पतंगमधुकांजनैरवचूर्णयेत् । अन्यैरपि शिराव्यधविध्युक्तैः शोणितस्थापनैः सुश्लक्ष्णैश्चूर्णैरवचूर्णयेत् । अनंतरं माक्षिकघृताभ्यामभ्यक्तं बध्वाऽऽचारिकं स्नेहविध्युक्तमादिशेत् । अवस्थांतरं च ज्ञात्वा सद्यो व्रणप्रतिषेधविधिं कुर्यात् । ततो रूढे सत्यधिकं मांसं तच्च नासासमीपादधिकं चर्म छिंद्यात् । अनंतरं सीव्येत् । ततः सुश्लक्ष्णं च कृत्वा पुनः सीव्येत् । हीनं च वर्धयेत् ।

**निवेशिते यथान्यासं सद्यश्छेदेऽप्ययं विधिः ।**

सद्यश्छिन्नेऽपि घ्राणे यथान्यासं निवेशिते सत्ययमेव विधिः ।

**नाडीयोगाद्विनौष्ठस्य नासासंधानवद्विधिः ॥ ६६ ॥**

नाडीयोगमंतरेणोष्ठस्यापि छिन्नस्य नासासंधानतुल्यो विधिः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने कर्णरोगप्रतिषेधो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

अथ क्रमप्राप्तं नासारोगविज्ञानं बिभणिषुराह ।

**अथाऽतो नासारोगविज्ञानीयं व्याख्यास्यामः ।**
**अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।**
**नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥**
**अत्यंबुपानरमणच्छर्दिबाष्पग्रहादिभिः ।**
**क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः॥**
**जनयंति प्रतिश्यायं वर्धमानं क्षयप्रदम् ।**

अवश्यायादिभिर्वातोल्बणा दोषाः क्रुद्धा नासायां स्त्यानतां घनत्वं प्राप्ताः प्रतिश्यायं जनयंति । किंभूतं विवर्धमानं क्षयप्रदम् ।

**तत्र वातात्प्रतिश्याये मुखशोषो भृशं क्षवः ॥ ३ ॥**
**घ्राणोपरोधनिस्तोददंतशंखशिरोव्यथाः ।**
**कीटका इव सर्पंति मन्यते परितो भ्रुवौ ॥ ४ ॥**
**स्वरसादश्चिरात्पाकः शिशिराच्छकफस्रुतिः ।**

तेषु वातपित्तकफोत्थेषु मध्ये वातात् प्रतिश्याये सति मुखशोषादयः स्युः । भ्रुवौ परितः कीटकाः सर्पंतीव मन्यते । भ्रुवौ परित इत्यभितः परित इति द्वितीया । स्वरसादादयश्च स्युः ।

**पित्तात्तृष्णाज्वरघ्राणपिटिकासंभवभ्रमाः ॥ ५ ॥**
**नासाग्रपाको रूक्षोष्णस्ताम्रपीतकफस्रुतिः ।**

पित्तात्प्रतिश्याये सति तृष्णादयो भवंति । घ्राणमध्ये पिटिका घ्राणपिटिकास्तासां संभवः । नासाया अग्रे पाको नासाग्रपाकः ।

**कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम् ॥६॥**
**माधुर्यं वदने कंडूः स्निग्धशुक्लघना स्रुतिः ।**

कफात्प्रतिश्याये सति कासादयो भवंति ।

**सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशांतिमान् ॥ ७॥**

त्रिदोषजः प्रतिश्यायः सर्वदोषलक्षणैर्युतोऽकस्मान्निमित्तं विना वृद्धिमांश्छांतिमांश्च ।

**दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक् ।**
**उरसः सुप्तताताम्रनेत्रत्वं श्वासपूतिता ॥ ८ ॥**
**कंडूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम् ।**

रक्तं दुष्टं नासासिराः प्राप्तं प्रतिश्यायं करोति । तस्मिन्नुरसः सुप्तत्वं ताम्रनयनादिकं पित्ताभिहतं लक्षणं स्यात् ।

अथ दुष्टप्रतिश्यायलक्षणमाह ।

**सर्व एव प्रतिश्याया दुष्टतां यांत्युपेक्षिताः ॥ ९ ॥**
**यथोक्तोपद्रवाधिक्यात्स सर्वेंद्रियतापनः ।**
**साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ॥ १० ॥**
**कुप्यत्यकस्माद्बहुशो मुखदौर्गंध्यशोफकृत् ।**
**नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ॥ ११ ॥**
**पूयोपमा सिता रक्तग्रथिता श्लेष्मसंस्रुतिः ।**
**मूर्छंति चात्र कृमयो दीर्घस्निग्धसिताणवः ॥ १२ ॥**

सर्वे एव प्रतिश्याया उपेक्षिता दुष्टत्वं यांति स तु दुष्टपीनसो यथोक्तोपद्रवाणां मुखशोषादीनामाधिक्याद्धेतोः सर्वेंद्रियतापनो नासाचक्षुरादीनां खेदकोऽग्निसादादियुतश्च स्यात् । तथा सहसैव पुनः पुनः कुप्यति । मुखदौर्गंध्यादिकरस्तथा नासिकाक्लेदादिकरो मुहुः पूयसदृशकृष्णरक्तपिंडितश्लेष्मस्रुतिः । अत्र च कृमयो मूर्छंति दीर्घाः स्निग्धाः श्वेताः सुसूक्ष्माश्च ।

**पक्वलिंगानि तेष्वंगलाघवं क्षवथोः शमः ।**
**श्लेष्मा सचिक्कणः पीतो ज्ञानं च रसगंधयोः ॥१३॥**

तेषु प्रतिश्यायेषु पक्वलक्षणानि । तद्यथांऽगस्य शरीरस्य लाघवं स्यात् । क्षुतेश्च शमः कफः सचिक्कणः पीतो रसगंधयोश्च ज्ञानमिति ।

भृशक्षवाख्यं लक्षयितुमाह ।

**तीक्ष्णघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।**
**वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥ १४ ॥**
**विघट्टितेऽनिलः क्रुद्धो रुद्धः शृंगाटकं व्रजेत् ।**
**निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशं क्षवः ॥ १५ ॥**

तीक्ष्णस्य मरीचादेर्घ्राणातिसहनात्तथा रव्यादिभिर्वातकोपिभिरन्यैर्वा नासातरुणास्थनि विघट्टिते सति वायुः क्रुद्धो रुद्धः शृंगाटकं व्रजेत् । सन्निवृत्तः सन्नत्यंतं छिक्कां कुरुते स भृशं क्षव उच्यते ।

**शोषयन्नासिकास्रोतः कफं च कुरुतेऽनिलः ।**
**शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥ १६ ॥**
**स्मृतोऽसौ नासिकाशोषो**

शोषयन्नासिकास्रोतः कफं च वायुः शूकपूर्णाभनासात्वं कुरुते । ततः कृच्छ्रादुच्छ्वसनं स्यात् । असौ नासिकाशोषः स्मृतः ।

**नासानाहे तु जायते ।**
**नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥ १७ ॥**
**निःश्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव ।**

नासानाहाख्ये रोगे जाते सति घ्राणस्य नद्धत्वमापूरमिव जायते । श्लेष्मरूपिणा रुद्धेन वातेन निश्वासोच्छ्वाससंरोधात्स्रोतसी संवृते इव स्याताम् ।

**पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥१८॥**
**स घ्राणपाकः**

पित्तं कर्तृ नासापुटे त्वङ्मांसं सदाहशूलं पचेत् । स घ्राणपाकाख्यः ।

**स्रावस्तु तत्संज्ञः श्लेष्मसंभवः ।**
**अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते ॥१९॥**

स्रावस्तु तत्संज्ञो घ्राणस्रावाख्यः स च कफादेव केवलाद्भवति । अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते । विशेषेण रात्रौ ।

**कफः प्रवृद्धो नासायां रुद्ध्वा स्रोतांस्यपीनसम् ।**
**कुर्यात्सघुर्घुरं श्वासं पीनसाधिकवेदनम् ॥ २० ॥**
**अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ।**
**अजस्रं पिच्छलं पीतं पक्वं सिंघाणकं घनम् ॥ २१॥**

कफो नासायां प्रवृद्धो रुद्ध्वा स्रोतांस्यपीनसं घुर्घुरश्वासयुतं

पीनसाधिकरुजं कुर्यात्। तेनाऽपि नासाधिकरुजं कुर्यात्। तेन पीनसेनास्य रोगिणो मेषस्येवानवरतं प्रक्लिन्ननासिकापिच्छिलादियुक्तं नासाकफं सिंघाणकं स्रवति।

**रक्तेन नासादग्धेन बाह्यांतः स्पर्शनासहा।**
**भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च॥ २२॥**

रक्तेन नासादग्धेन बाह्यतोऽतश्च स्पर्शनं न सहते। तथा धूमोपमोच्छ्वासाद्दहतीव च। सा दीप्तिसंज्ञा रोगजातिः।

**तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात्।**
**श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदंति तम् २३**

तालुदेशे मूले दोषैर्दुष्टैर्मुखनासिकाद् वायुः कफश्च पूतिर्निर्गच्छेत् तं पूतिनासं वदंति।

**निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत्।**
**तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम्॥ २४॥**

ससंनिपातादभिघाताद्वा नासा पूयासृक् स्रवेत्। तत्पूयरक्तसंज्ञं शिरोदाहरुजाकरमाख्यातम्।

**पित्तश्लेष्मावरुद्धोऽतर्नासायां शोषयेन्मरुत्।**
**कफं सशुष्कपुटतां प्राप्नोति पुटकं तु तत्॥ २५॥**

पित्तश्लेष्मावरुद्धो वायुरंतर्नासायां शोषयेत्कफम्। सच कफः शुष्कपुटतां प्राप्नोति। पुटकं तदुच्यते।

**अर्शोर्बुदानि विभजेद्दोषलिंगैर्यथायथम्।**

अर्शोर्बुदानि च दोषलिंगैर्यथास्वं जानीयात्।

**सर्वेषु कृच्छ्राच्छ्वसनं पीनसः प्रततं क्षवः॥ २६॥**
**सानुनासिकवादित्वं पूतिनासः शिरोव्यथा।**

सर्वेष्वर्शःस्वर्बुदेषु च कृच्छ्रादुच्छ्वसनम्। तथा पीनसोऽनवरतं क्षवस्तथा सानुनासिकभाषित्वं तथा पूतिनासः शिरोव्यथेति स्युः।

**अष्टादशानामित्येषां यापयेद्दुष्टपीनसम्॥ २७॥**

एषामष्टादशानां पीनसानां मध्ये दुष्टपीनसं यापयेद्।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने नासारोगविज्ञानीयो नामैकोनविंशोऽध्यायः॥ १९॥

---

## विंशोऽध्यायः।

अधुना नासाचिकित्सितं भणनावसर इत्याह।

**अथाऽतो नासारोगप्रतिषेधं व्याख्यास्यामः।**
**सर्वेषु पीनसेष्वादौ निवातागारगो भवेत्।**
**स्नेहनस्वेदवमनधूमगंडूषधारणम्॥ १॥**
**वासो गुरूष्णं शिरसः सुघनं परिवेष्टनम्।**
**लघ्वम्ललवणं स्निग्धमुष्णं भोजनमद्रवम्॥ २॥**
**धन्वमांसगुडक्षीरचणकत्रिकटूत्कटम्।**
**यवगोधूमभूयिष्ठं दधिदाडिमसाधितम्॥ ३॥**
**बालमूलकजो यूषः कुलत्थोत्थश्च पूजितः।**
**कवोष्णं दशमूलांबु जीर्णां वा वारुणीं पिबेत्॥ ४॥**
**जिघ्रेच्चोरकतर्कारीवचाजाज्युपकुंचिकाः।**

पीनसेष्वखिलेष्वपि निवातवेश्मस्थितं सत् स्नेहनस्वेदनवमनधूमगंडूषधारणं च सेवेत। तथा वस्त्रमुष्णस्वभावं कौशेयाविकादिभिर्मूर्ध्नः परिवेष्टनं सुघनं भजेत्। तथा भोजनं लघ्वादिगुणं भजेत्। दाडिमं श्रेष्ठं दाडिमसरं दधिदाडिमसाधितमिति केचित्पठंति। बालमूलकोत्थो यूषः कुलत्थोत्थश्च यूषः पूजितः। दशमूलांबु कोष्णं प्रसन्नां वा पुराणां पिबेत्। चोरकादीनि जिघ्रेत्।

**व्योषतालीसचविकातिंत्तिडीकाम्लवेतसम्॥ ५॥**
**साग्न्यजाजीद्विपलिकात्वगेलापत्रपादिकम्।**
**जीर्णाद्गुडात्तुलार्धेन पक्केन वटकीकृतम्॥ ६॥**
**पीनसश्वासकासघ्नं रुचिस्वरकरं परम्।**

व्योषादिकं पृथक्द्विपलदघ्नं त्वगादिकं द्विकार्षिकं पुराणगुडेन पंचाशत्प्रमाणेन पक्केन वटकीकृतमेतत्पीनसादिहृत्परं रुच्यादिकृत्।

**शताह्वात्वग्बलामूलं स्योनाकैरंडबिल्वजम्॥ ७॥**
**सारग्वधं पिबेद्धूमं वसाज्यमदनाऽन्वितम्।**
**अथवा सघृतान्सक्तून् कृत्वा मल्लकसंपुटे॥ ८॥**

शताह्वादिकं वसादियुक्तं धूमं पिबेत्। मल्लकसंपुटे वा सक्तून् ससर्पिष्कांश धूमं कृत्वा पिबेत्।

**त्यजेत्स्नानं शुचं क्रोधं भृशं शय्यां हिमं जलम्।**

स्नानादीनि त्यजेत्।
इति सामान्येन चिकित्सामभिधाय विशेषेणाह।

**पिबेद्वातप्रतिश्याये सर्पिर्वातघ्नसाधितम्॥ ९॥**
**पटुपंचकसिद्धं वा विदार्यादिगणेन वा।**
**स्वेदनस्यादिकां कुर्यात् चिकित्सामर्दितोदिताम् १०**

वातप्रतिश्याये वातघ्ने रास्नादिभिः साधितं घृतं पिबेत्। सैंधवादिभिः पंचलवणैर्वा सिद्धम् विदारिपंचांगुलेत्यादिना सिद्धं घृतं पिबेत्। तथाऽऽर्दितोक्तां चिकित्सां स्वेदादिकां कुर्यात्।

**पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम्।**
**परिषेकान्प्रदेहांश्च शीतैः कुर्वीत शीतलान्॥ ११॥**

पित्तोत्थे रक्तजे च प्रतिश्याये मधुरद्रव्यैः शृतं सर्पिः पातव्यम्। परिषेकादीन् शीतवीर्यैः शीतलान् कुर्यात्।

**धवत्वक्त्रिफलाश्यामाश्रीपर्णीयष्टिबिल्वकैः।**
**क्षीरे दशगुणे तैलं नावनं सनिशैः पचेत्॥ १२॥**

धवत्वगादिभिस्तैलं क्षीरे दशगुणे हरिद्रान्वितं नावनं पचेत्।

**कफजे लंघनं लेपः शिरसो गौरसर्षपैः ।**
**सक्षारं वा घृतं पीत्वा वमेत् पिष्टैस्तु नावनम् ॥१३॥**
**बस्तांबुना पटुव्योषवेल्लवत्सकजीरकैः ।**

कफजे लंघनं हितम् । तथा शिरसो गौरसर्षपैर्लेपः । घृतं सयवक्षारं पीत्वा वमेत् । छागमूत्रेण पिष्टैः सैंधवादिभिर्नस्यं हितम् ।

**कटुतीक्ष्णैर्घृतैर्नस्यैः कवलैः सर्वजं जयेत् ॥ १४ ॥**

घृतैः कटुतीक्ष्णैर्नस्यैः कवलैश्च सान्निपातिकं प्रतिश्यायं जयेत् ।

**यक्ष्मकृमिक्रमं कुर्वन् पाययेद्दुष्टपीनसे ।**

दुष्टपीनसे पाययेद् यक्ष्महरं कृमिहरं च चिकित्सितं कुर्वन् ।

**व्योषोरुबूककृमिजिद् दारुमाद्रींगदे गुदम् ॥ १५ ॥**
**वार्ताकबीजं त्रिवृता सिद्धार्थः पूतिमत्स्यकः ।**
**अग्निमंथस्य पुष्पाणि पीलुशिग्रुफलानि च ॥ १६ ॥**
**अश्वविड्रसमूत्राभ्यां बस्तिमूत्रेण चैकतः ।**
**क्षौमगर्भां कृतां वर्तिं धूमं घ्राणास्यतः पिबेत् ॥१७॥**

व्योषादितुरगविड्रसमूत्राभ्यां हस्तिमूत्रेण चैकतः शिग्रुफलांतानि पिष्टानि क्षौमगर्भां कृतां वर्तिं नासया मुखेन पिबेत् ।

**क्षवथौ पुटपाकाख्ये तीक्ष्णैः प्रधमनं हितम् ।**

क्षवथौ पुटपाकाख्ये रोगे तीक्ष्णैः प्रधमनं हितम् ।

**शुंठी कुष्टकणावेल्लद्राक्षाकल्ककषायवत् ॥ १८ ॥**
**साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ।**

शुंठ्यादिकल्कक्काथैस्तैलं घृतं च साधितं नस्यं क्षवपुटं च हंति ।

**नासाशोषे बलातैलं पानादौ भोजनं रसैः ॥ १९ ॥**
**स्निग्धो धूमस्तथा स्वेदो नासानाहेऽप्ययं विधिः ।**

नासाशोषे बलातैलं पाने नस्यादौ हितम् । भोजनं मांसरसैर्हितम् । तथा स्निग्धो धूमः स्वेदश्च हितः । नासानाहेप्येष एव विधिश्चिकित्सेत्यर्थः ।

**पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादिसंस्रुतौ ॥२०॥**

नासापाके दीप्तौ च पित्तघ्नं चिकित्सितम् । संस्रुतौ स्रावे तीक्ष्णं नस्यादि हितम् ।

**कफपीनसवत्पूतिनासापीनसयोः क्रिया ।**

पूतिनासापीनसयोः कफपीनसवदुपक्रमः ।

**लाक्षाकरंजमरिचवेल्लहिंगुकणागुडैः ॥ २१ ॥**
**अविमूत्रद्रुतैर्नस्यं कारयेद्वमने कृते ।**

लाक्षादिभिरुरभ्रसूत्रद्रुतैः कृते वमने नस्यं कारयेत् ।

**शिग्रुसिंहीनिकुंभानां बीजैः सव्योषसैंधवैः ॥ २२ ॥**
**सवेल्लसुरसैस्तैलं नावनं परमं हितम् ।**

शिग्र्वादीनां बीजैर्व्योषादियुतैस्तैलं पक्वं पूतिनासापीनसयोर्नस्यं हितम् ।

**पूयरक्ते नवे कुर्याद् रक्तपीनसवत्क्रियाम् ॥ २३ ॥**
**अतिप्रवृद्धे नाडीवद्**

पूयरक्ते नवोत्थे रक्तपीनस इव चिकित्सितं कुर्यात् । अतिप्रवृद्धे चास्मिन्नाडीव्रणवदुपक्रमः ।

**दग्धेष्वर्शोर्बुदेषु च ।**
**निकुंभकुंभसिंधूत्थमनोह्वालवणाग्निकैः ॥ २४ ॥**
**कल्कितैर्घृतमध्वाक्तां घ्राणे वर्तिं प्रवेशयेत् ।**
**शिग्र्वादि नावनं चात्र पूतिनासोऽपि तं भजेत् २५**

अर्शोर्बुदेषु दग्धेषु निकुंभादिभिः कल्कितैर्घृतमध्वाक्तां घ्राणे वर्तिं प्रवेशयेत् । शिग्र्वादिकं च नस्यं पूतिनासोक्तं भजेदिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने नासारोगप्रतिषेधो नाम विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ।

क्रमप्राप्तं मुखरोगविज्ञानं विभणिषुराह ।

**अथाऽतो मुखरोगविज्ञानं व्याख्यास्यामः ।**
**मत्स्यमाहिषवाराहपिशितामकमूलकम् ।**
**माषसूपदधिक्षीरसुक्तेक्षुरसफाणितम् ॥ १ ॥**
**अवाक् शय्या च भजतो द्विषतो दंतधावनम् ।**
**धूमच्छर्दनगंडूषानुचितं च सिराव्यधम् ॥ २ ॥**
**क्रुद्धाः श्लेष्मोल्वणा दोषाः कुर्वत्यंतर्मुखे गदान् ।**

मत्स्यमाहिषवाराहपिशितादिभजतो दंतधावनं द्विषतः सेवमानस्य धूमादिकं चोचितं द्विषतः सिराव्यधं च द्विषतः श्लेष्मोल्वणा दोषाः क्रुद्धा मुखसांते गदान् कुर्वते ।

**तत्र खंडौष्ठ इत्युक्तो वातेनोष्ठो द्विधा कृतः ॥ ३ ॥**

तेषु मुखरोगेषु मध्ये पवनादोष्ठो द्विधा कृतः खंडौष्ठ इति गदितः ।

**ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ ।**
**दाल्येते परिपाट्येते परुषासितकर्कशौ ॥ ४ ॥**

पवनादोष्ठकोपे त्वोष्ठौ स्तब्धौ महारुजौ दाल्येते तथा परिपाट्येते इव । तथा परुषौ कृष्णौ रूक्षौ दृश्येते ।

**पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ।**
**पिटिकाभिर्महाक्लेदावाशु पाकौ**

पित्तेनोष्ठौ तीक्ष्णं न सहते पीतौ च स्याताम् । तथा च सर्षपाकृतिभिः पिटिकाभिश्चितौ बहुक्लेदौ शीघ्रपाकौ च ।

**कफात्पुनः ॥ ५ ॥**
**शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ ।**

कफेन शीतासहौ । गुरू शूनौ । सवर्णैः पिटिकैराचितौ स्याताम् ।

**सन्निपातादनेकाभौ दुर्गंधास्रावपिच्छिलौ ॥ ६ ॥**
**अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ ।**

सन्निपातादोष्ठौ नानावर्णपिटिकैराचितौ दुर्गंधस्रावपिच्छिलौ । सहसैव म्लानौ कदाचित्संशूनौ सरुजौ विषमपाकिनौ ।

**रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ७ ॥**
**खर्जूरसदृशं चाऽत्र क्षीणे रक्तेऽर्बुदं भवेत् ।**

रक्तेन युक्तं रुधिरं स्रवंतौ रक्तप्रभौ च । क्षीणे रक्ते खर्जूराकारमर्बुदमोष्ठे स्यात् ।

**मांसपिंडोपमौ मांसात्स्यातां मूर्छत्क्रमी क्रमात्॥८॥**

मांसेन मांसपिंडोपमावोष्ठौ ततश्च मूर्छत्क्रमयो जायंत इत्यर्थः । क्रमेण मूर्छत्क्रमी स्याताम् ।

**तैलाभश्वयथुक्लेदौ सकंड्वौ मेदसा मृदु ।**

मेदसा तैलाभः शोफः क्लेदश्च ययोस्तावेवं तथा कंडूयंतौ मृदु चोष्ठौ स्याताम् ।

**क्षतजाववदीर्येते पाट्येते चासकृत्पुनः ॥ ९ ॥**
**ग्रथितौ च पुनः स्यातां कंडूलौ दशनच्छदौ ।**

क्षतजावसकृद्दीर्येते भेद्येते परिपाट्येते इव ग्रथितौ च पुनरोष्ठौ स्यातां सकंडूलौ ।

**जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ॥ १० ॥**

वातकफाद् बुद्बुदाकारं जलार्बुदमोष्ठे स्यात् । इत्येकादश ओष्ठे ।

**गंडालजी स्थिरः शोफो गंडे दाहज्वरान्वितः ।**

स्थिरः शोफो गंडप्रदेशे दाहज्वरयुतो गंडालजीत्युच्यते । इत्येको गंडे ।

**वातादुष्णसहा दंताः शीतस्पर्शाधिकव्यथाः॥११॥**
**दाल्यंत इव शूलेन शीताख्यो दालनश्च सः ।**

वातेन दंता उष्णसहाः शीतस्पर्शेऽधिकव्यथाः शूलेन दाल्यंत इव चासौ शीतदंतसंज्ञो दालनश्चोक्तः ।

**दंतहर्षे प्रवाताम्लशीतभक्ष्याक्षमा द्विजाः ॥ १२ ॥**
**भवंत्यम्लाशनेनैव सरुजाश्चलिता इव ।**

दंतहर्षे प्रचंडवातस्याम्लशीतभक्ष्यस्यासहाद् द्विजास्तथाम्लाशनेनैव सरुजाश्चलिता इव च स्युः ।

**दंतभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ॥ १३ ॥**

दंतभेदे दंतास्तोदादियुताः स्युः ।

**चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः ।**

चालाख्यो रोगो दंतैश्च चलद्भिर्भक्षणादधिकव्यथैश्च स्यात् ।

**करालः सुकरालानां दशनानां समुद्भवः ॥ १४ ॥**

सुकरालानां दंतानां समुद्भवः करालाख्यो रोगः ।

**दंताधिकोऽधिदंताख्यः स चोक्तः खलु वर्धनः ।**
**जायते जायमानेऽतिरुग् जाते तत्र शाम्यति ॥१५॥**

अधिको दंतोऽधिदंतसंज्ञो रोगो वर्धनः स एवोक्तः । जायमाने तस्मिन् दंतेऽतिपीडा जायते । जाते तु तस्मिन् पीडा शाम्यति ।

**अधावनान्मलो दंते कफो वा वातशोषितः ।**
**पूतिगंधः स्थिरीभूतः शर्करा सोऽप्युपेक्षितः ॥१६॥**

अधावनाद्दंते मलः कफो वा पवनेन शोषितः पूतिगंधः स्थिरीभूतः स एवोपेक्षितः शर्करा स्यात् ।

**शातयत्यणुशो दंतात्कपालानि कपालिका ।**

कपालिकाख्यो दंतान् कपालान्यणुशः स्तोकं स्तोकं शातयति ।

**श्यावः श्यावत्वमायाता रक्तपित्तानिलैर्द्विजाः॥१७**

द्विजाः श्यावत्वमायाता रक्तपित्तानिलैः शावाख्यः ।

**समूलं दंतमाश्रित्य दोषैरुल्बणमारुतैः ।**
**शोषिते मज्ज्ञि सुषिरे दंतेऽन्नमलपूरिते ॥ १८ ॥**
**पूतित्वात्क्रमयः सूक्ष्मा जायंते जायते ततः ।**
**अहेतुतीव्रार्तिशमः ससंरंभो सितश्चलः ॥ १९ ॥**
**प्रभूतपूयरक्तस्तु स चोक्तः कृमिदंतकः ।**

समूलं दंतमाश्रित्य दोषैरुल्बणमारुतैः शोषिते मज्ज्ञि सुषिरे दंतेऽन्नमलपूरिते पूतित्वात् क्रमयः सूक्ष्मा जायंते । ततो निमित्तमंतरेण तीव्रार्तिरहेतुशांतिर्जायते । तथा संरंभान्वितः कृष्णश्चलः प्रलूनाख्यः पूयरक्तस्रावी स च कृमिदंतकः । इति दंते दशैते ।

**श्लेष्मरक्तेन पूतीनि वहंत्यस्रमहेतुकम् ॥ २० ॥**
**शीर्यंते दंतमांसानि मृदुक्लिन्नासितानि च ।**
**शीतादोऽसौ**

श्लेष्मरक्तेन दंतानां मांसानि पूतीनि रक्तं निर्निमित्तं वहंति शीर्यंते । किंभूतानि । मृदुक्लिन्नानि असितानि च । असौ शीतादः कथ्यते ।

**उपकुशः पाकः पित्तासृगुद्भवः ॥ २१ ॥**
**दंतमांसानि दह्यंते रक्तान्युत्सेदवंत्यतः ।**
**कंडूमंति स्रवंत्यस्रमाध्मायंतेऽसृजि स्थिते ॥ २२ ॥**
**चला मंदरुजो दंताः पूतिवक्त्रं च जायते ।**

पित्तरक्तोत्थो यो दंतमांसपाक उपकुशसंज्ञस्तेन दंतमांसानि दह्यंते रक्तवर्णानि सोत्सेधानि च । ततः कंडूयुतानि रक्तं स्रवंति । रक्ते स्थिते सत्याध्मायंते । चला दंता मंदरुजः स्युः । पूतिवक्रं च जायते ।

**दंतयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः ॥२३॥**
**कफास्रात्तीव्ररुक् शीघ्रं पच्यते दंतपुप्पुटः ।**

द्वयोर्दंतयोस्त्रिषु वा दंतेषु शोफो बदरास्थिसदृशो घनः कफरक्तात्तीव्ररुक् शीघ्रं पच्यते । स दंतपुप्पुटसंज्ञः ।

**दंतमांसे मलैः सास्रैर्बाह्यांतः श्वयथुर्गुरुः ॥ २४ ॥**
**सरुग्दाहः स्रवेद्भिन्नः पूयास्रं दंतविद्रधिः ।**

दंतमांसे बाह्येऽभ्यंतरे च दोषैः सरक्तैर्गुरुः श्वयथुः सरुग्दाहः स च भिन्नः सन् पूयास्रं स्रवेत् । स दंतविद्रधिः ।

**श्वयथुर्दंतमूलेषु रुजावान् पित्तरक्तजः ॥ २५ ॥**
**लालास्रावी स सुषिरो दंतमांसप्रशातनः ।**

दंतमूलेषु श्वयथुः पीडावान् पित्तरक्तोत्थो लालास्रावी स सुषिरसंज्ञो दंतमांसप्रशातनः ।

**स सन्निपातज्वरवान् सपूयरुधिरस्रुतिः ॥ २६ ॥**
**महासुषिर इत्युक्तो विशीर्णद्विजबंधनः ।**

सन्निपातज्वरयुतः पूयरुधिरस्रावेनान्वितः स महासुषिराख्य उक्तः । स च विशीर्णद्विजबंधनः स्यात् ।

**दंतांते कीलवच्छोफो हनुकर्णरुजाकरः ॥ २७ ॥**
**प्रतिहंत्यभ्यवहृतिं श्लेष्मणा सोऽधिमांसकः ।**

दंतांते कीलसदृशः शोफो हनौ कर्णे च रुजां करोति । अभ्यवहृतिं प्रतिहंति सोऽधिमांसकः श्लेष्मणा स्यात् ।

**घृष्टेषु दंतमांसेषु संरंभो जायते महान् ॥ २८ ॥**
**यस्मिंश्चलंति दंताश्च स विदर्भोऽभिघातजः ।**

दंतमांसेषु दंतकाष्ठादिना घृष्टेषु महान् संरंभो जायते । यस्मिन्सति दंताश्चलंति सोऽभिघातजो विदर्भाख्यः ।

**दंतमांसाश्रितान् रोगान् यः साध्यानप्युपेक्षते २९**
**अंतस्तस्यास्रवन् दोषः सूक्ष्मां संजनयेद्गतिम् ।**
**पूयं मुहुः सा स्रवति त्वङ्मांसास्थिप्रभेदिनी ३०**
**ताः पुनः पंच विज्ञेया लक्षणैः स्वैर्यथोदितैः ।**

दंतमांसाश्रितान् रोगान् साध्यानपि य उपेक्षते तस्यांतरेषु दोषोऽस्रवन्सूक्ष्मां गतिं संजनयेत् । सा च गतिः पुनः पुनः पूयं स्रवति । त्वङ्मांसास्थीनि प्रभिनत्ति । ताश्च गतयः पंच विज्ञेयाः स्वैः स्वैर्घातादिभिर्लक्षणैः । इति दंतमूले त्रयोदश ।

**शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ॥ ३१ ॥**
**जिह्वा**

वातदूषिता जिह्वा शाकपत्रवत् खरा सुप्ता स्फुटिता च स्यात् ।

**पित्तात् सदाहोषा रक्तैर्मांसांकुरैश्चिता ।**

पित्तात्सदाहोषा तथा रक्तैर्मांसांकुरैश्च चिता जिह्वा स्यात् ।

**शाल्मलीकंटकाभैस्तु कफेन बहुला गुरुः ॥ ३२ ॥**

कफेन शाल्मलीकंटकाभैः कंटकैश्चिता बहुला गुरुश्च जिह्वा स्यात् ।

**कफपित्तादधः शोफो जिह्वास्तंभकृदुन्नतः ।**
**मत्स्यगंधिर्भवेत्पक्वः सोऽलसो मांसशातनः ॥३३॥**

कफपित्तात् जिह्वाया अधः शोफो जिह्वास्तंभकर उन्नतः पक्वो मत्स्यगंधिर्भवेत् । सोऽलसाख्यो मांसशातनः ।

**प्रबंधनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः ।**
**सांकुरः कफपित्तास्रैर्लालोषास्तंभवान् खरः ॥३४॥**
**अधिजिह्वः सरुक्कंडूर्वाक्याहारविघातकृत् ।**

जिह्वायाः प्रबंधनेऽधस्ताज्जिह्वाग्रतुल्यः शोफः सहांकुरः कफपित्तरक्तैर्लालोषास्तंभयुतः खरस्पर्शयुतोऽधिजिह्वो रुक्कंडूभ्यां युतो वाक्याहारविघातं करोति ।

**तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः ॥ ३५ ॥**

तादृगेवाधिजिह्वसदृश उपजिह्वो जिह्वाया उपरि स्थितः । इति जिह्वायाः षडेते ।

**तालुमांसेनिलाद्दुष्टे पिटिकाः सरुजः खराः ।**
**बह्वयो घनाः स्रावयुक्तास्तास्तालुपिटिकाः स्मृताः॥**

वातात्तालुमांसे दुष्टे पिटिकाः सरुजः खरा बह्वयो घनाः स्रावान्विताश्च तास्तालुपिटिकाः स्मृताः ।

**तालुमूले कफात्सास्रात् मत्स्यबस्तिनिभो मृदुः ।**
**प्रलंबः पिच्छिलः शोफो नासयाऽऽहारमीरयन् ३७**
**कंठोपरोधस्तृट्कासवमिकृद्गलशुंडिका ।**

तालुमूले कफाद्रक्तसहितात् मत्स्यबस्तिसदृशो मृदुः प्रलंबः पिच्छिलः शोफो नासयाऽऽहारं प्रेरयन् कंठोपरोधादिकृत् । गलशुंडिकाख्यः ।

**तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः ॥ ३८ ॥**

तालुमध्ये निरुङ्मांसं संहतं सा तालुसंहतिरित्युच्यते ।

**पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम् ।**

तालुमध्ये पद्माकारो रक्ताद्दुष्टाच्छ्वयथुरर्बुदम् ।

**कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ३९**
**कोलाभः श्लेष्ममेदोभ्यां पुप्पुटो नीरुजः स्थिरः ।**

*कफाद्दुष्टात् तालुप्रदेशे यः श्वयथुः कच्छपाकारश्चिरवृद्धिर-

* कफादित्यारभ्याध्यायांतं चंद्रिकाव्याख्या । अरुणदत्तव्याख्यापत्राणि त्रुटितानि ।

रुक् स च कच्छप इत्युच्यते । श्लेष्ममेदोभ्यां दुष्टाभ्यां कोलाभः कोलसदृशो नीरुजः स्थिरश्च यः शोफः स्यात्स पुप्पुट इत्युच्यते ।

**पित्तेन पाकः पाकाख्यः पूयास्रावी महारुजः॥४०॥**

पित्तेन दुष्टेन यस्तालुपाकः पूयास्रावी महारुजः स पाकाख्यः पाकसंज्ञः ।

**वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ।**

वातपित्तज्वरायासैः प्रतिबद्धो यः शोफस्तालुशोषः स तदाह्वयस्तालुशोष इत्युच्यते । इत्यष्टौ तालुरोगाः ।

**जिह्वाप्रबंधजाः कंठे दारुणा मार्गरोधिनः ॥ ४१ ॥**
**मांसांकुराः शीघ्रचया रोहिणी शीघ्रकारिणी ।**

कंठे कंठप्रदेशे ये मांसांकुरा जिह्वाप्रबंधजा जिह्वामूलोत्था दारुणा दुःसहाः कंठमार्गानुरोधिनः शीघ्रचयाः सत्वरोद्भूता भवंति । सा शीघ्रकारिण्याशुव्यापादनशीला रोहिणीत्युच्यते ।

**कंठास्यशोषकृद्वातात्सा हनुश्रोत्ररुक्करी ॥ ४२ ॥**

सा रोहिणी वातात्समुत्पन्ना कंठास्यशोषं करोति हन्वोः श्रोत्रयोश्च रुजं करोति ।

**पित्ताज्ज्वरोषातृण्मोहकंठधूमायनान्विता ।**
**क्षिप्रजा क्षिप्रपाकार्तिरागिणी स्पर्शनासहा ॥४३॥**

पित्ताद् रोहिणी ज्वरादिभिरन्विता स्यात् क्षिप्रजा शीघ्रोत्थाना । शीघ्रपाका अतिरागिणी भृशलोहिता । स्पर्शनासहा स्पर्शं न सहते ।

**कफेन पिच्छिला पांडुः**

कफेन दुष्टेन रोहिणी पिच्छिला पांडुरा च भवति ।

**असृजा स्फोटकाचिता ।**
**तप्तांगारनिभा कर्णरुक्करी पित्तजाकृतिः ॥ ४४ ॥**

असृजा रक्तेन रोहिणी स्फोटकैराचिता समंताद् व्याप्ता स्यात् । तप्तांगारनिभा वर्णतः स्पर्शतो वा कर्णयो रुजं करोति । पित्तजाकृतिः पित्तोत्थरोहिणीलक्षणसमन्विता भवेत् ।

**गंभिरपाका निचयात्सर्वलिंगसमन्विता ।**

निचयात्सन्निपाताद् रोहिणी गंभीरपाका गूढपाका स्यात् । सर्वलिंगैर्वातादिभिः समन्विता युक्ता स्यात् ।

**दोषैः कफोल्बणैः शोफः कोलवद् ग्रथितोन्नतः॥४५**
**शूककंटकवत्कंठे शालूको मार्गरोधनः ।**

दोषैर्वातादिभिः कफोल्बणैः कफप्रधानैः कंठे कोलवद् ग्रथितोन्नतः शूककंटकवन्मार्गरोधनो यः शोफः स्यात् स कंठशालूक इत्युच्यते ।

**वृंदो वृत्तोन्नतो दाहज्वरकृद् गलपार्श्वगः ॥ ४६ ॥**

कंठे वृत्तोन्नतो गलपार्श्वगो यः शोफो भवति दाहं ज्वरं च करोति स नाम्ना वृंद इत्युच्यते ।

**हनुसंध्याश्रितः कंठे कार्पासीफलसन्निभः ।**
**पिच्छिलो मंदरुक् शोफः कठिनस्तुंडिकेरिका॥४७॥**

कंठप्रदेशे शोफः कार्पास्याः फलसन्निभस्तदाकारः पिच्छिलो मंदरुक् शोफः कठिनश्च । स नाम्ना तुंडिकेरिकेत्युच्यते ।

**बाह्यांतः श्वयथुर्घोरो गलमार्गार्गलोपमः ।**
**गलौघो मूर्धगुरुतातंद्रालालाज्वरप्रदः ॥ ४८ ॥**

कंठे श्वयथुर्बाह्यांतर्घोरो दुस्तरो गलमार्गार्गलोपमः स इव जायते । मूर्धगुरुतादीन् प्रददाति । स गलौघ इत्युच्यते ।

**वलयं नातिरुक् शोफस्तद्वदेवायतोन्नतः ।**

गले यः शोफो नातिरुगायतोन्नतः स्यात् स व्याधिर्वलयमित्युच्यते । तद्वदेव गलौघवच्छोफो नातिरुगथवा तद्वदेव वलयाकृतित्वात् ।

**मांसकीलो गले दोषैरेकोऽनेकोऽथवाल्परुक् ॥४९॥**
**कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो गलायुकः ।**

दोषैर्वातादिभिर्दुष्टैर्गले मांसकील एकोऽनेको वाऽल्परुग् जातो मूले पृथुर्विस्तीर्णः । कृच्छ्राद्दुःखेन उच्छ्वासाभ्यवहृतिर्यस्य स तथाविधो व्याधिर्गलायुक इत्युच्यते ।

**भूरिमांसांकुरवृता तीव्रतृड्ज्वरमूर्धरुक् ॥ ५० ॥**
**शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी ।**

भूरिभिः प्रभूतैर्मांसांकुरैरावृता परिवृता तीव्रतृड्ज्वरमूर्धरुग्युता वृता या वर्तिः सा शतघ्नीत्युच्यते । निचयात्संचयं प्राप्ता शतघ्नीवत् सातिरुक्करी । शतघ्नी शस्त्रविशेषः ।

**व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ॥ ५१ ॥**
**पूतिपूयनिभस्रावी श्वयथुर्गलविद्रधिः ।**

व्याप्तः सर्वगलः कंठो येनेत्येवंविधो यः श्वयथुः शीघ्रजन्मपाको महारुजः पूति दुर्गंधि पूयसदृशं स्रवति मलं स गलविद्रधिरित्युच्यते ।

**जिह्वावसाने कंठादावपाकं श्वयथुं मलाः ॥ ५२ ॥**
**जनयंति स्थिरं रक्तं नीरुजं तद्गलार्बुदम् ।**

जिह्वावसाने पर्यंते कंठादौ श्वयथुमपाकं स्थिरं रक्तं नीरुजं मला दोषा जनयंति । तद्गलार्बुदं स्मृतं कथयंत्याचार्याः ।

**पवनश्लेष्ममेदोभिर्गलगंडो भवेद्बहिः ।**
**वर्धमानः स कालेन मुष्कवल्लंबते निरुक् ॥ ५३ ॥**

दुष्टैः पवनश्लेष्ममेदोभिर्गलस्य बहिर्गलगंडो नाम व्याधिर्भवेत् । स च कालेन विवर्धमानोऽतिरुक् मुष्कवल्लंबते ।

**कृष्णोऽरुणो वा तोदाढ्यः स वातात्कृष्णराजिमान्।**
**वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम् ॥५४॥**

स गलगंडो वातात् कृष्णोऽरुणो वा तोदाढ्यः कृष्णराजि-

मान् स्यात्। स च वृद्धः सन् तालुगले शोषं विरसास्यतां च कुर्यात्।

**स्थिरः सवर्णः कंडूमान् शीतस्पर्शो गुरुः कफात्।**
**वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यताम् ॥ ५५ ॥**

कफात्प्रकुपिताद् गले गलगंडो जातः स्थिरः समानवर्णः कंडूमान् शीतस्पर्शो गुरुश्च भवेत्। वृद्धः सन् तालुगले लेपं कुर्यात्। तथा मधुरास्यतां मधुरवक्त्रत्वं च कुर्यात्।

**मेदसः श्लेष्मवद्धानिवृद्ध्योः सोऽनुविधीयते।**
**देहं वृद्धश्च कुरुते गले शब्दं स्वरेऽल्पताम् ॥५६॥**

मेदसः प्रवृद्धादुत्पन्नो गलगंडः कफवल्लक्षणैर्भवेत्। स च देहं शरीरं हानिवृद्ध्योरनुविधीयते अनुकरोति। तेन देहस्य वृद्धौ सोऽपि वृद्धो भवेत्। देहस्य क्षयात् क्षीणः स्यात्। वृद्धः स गले शब्दं स्वरे चाल्पतां कुरुते।

**श्लेष्मरुद्धाऽनिलगतिः शुष्ककंठो हतस्वरः।**
**ताम्यन् प्रसक्तं श्वसिति येन स स्वरहानिलात् ५७**

श्लेष्मणा दुष्टेन यदाऽनिलस्य वायोर्गती रुद्धा भवेत्। येन व्याधिना पुरुषः शुष्ककंठो हतस्वरः स्यात्। ताम्यन् तमोगच्छन् तमः प्रविशन् प्रकर्षेण सक्तं श्वासं मुंचति। स व्याधिरनिलाद्वातात् स्वरहा स्वरघ्ननाम्ना भवेत्। इति गलरोगा अष्टादश।

**करोति वदनस्यांतर्व्रणान्सर्वसरोऽनिलः।**
**संचारिणोऽरुणान् रूक्षानोष्ठौ ताम्रौ चलत्वचौ ५८**
**जिह्वा शीतासहा गुर्वी स्फुटिता कंटकाचिता।**
**विवृणोति च कृच्छ्रेण मुखपाको मुखस्य च ॥५९॥**

अनिलो वायुः सर्वसरः सर्वतः प्रसरन् सन् सर्वतो वदनस्यांतर्व्रणान् संचारिणोऽरुणान् रूक्षांश्च करोति। तथोष्ठौ ताम्रौ ताम्रवर्णौ चलत्वचौ। जिह्वा शीतासहा शीतस्पर्शाऽक्षमा गुर्वी स्फुटिता कंटकैराचिता स्यात्। स च मुखं कृच्छ्रेण विवृणोति। स मुखस्य पाक इत्युच्यते।

**अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः।**
**यात्यूर्ध्वं वक्त्रदौर्गंध्यं कुर्वन्नूर्ध्वगदस्तु सः ॥ ६० ॥**

अर्शोगुल्मकफादिभिर्वायुरधः प्रतिहतो वक्त्रदौर्गंध्यं कुर्वन्नूर्ध्वं याति स ऊर्ध्वगद इति संज्ञितः।

**मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता।**
**क्षारोक्षितक्षतसमा व्रणाः**

पित्तजे पित्तोद्भवे मुखपाके दाहोषे भवतः। तथा तिक्तवक्त्रता तिक्तास्यत्वं भवेत्। क्षारेणोक्षितं यत् क्षतं व्रणस्तेन समाना तत्समरुजा व्रणा भवंति।

**तद्वच्च रक्तजे ॥ ६१ ॥**

रक्तजे पाके मुखस्यांतः पित्तजपाकवल्लक्षणानि भवंति।

**कफजे मधुरास्यत्वं कंडूमतिपिच्छिला व्रणाः।**

कफजे पाके मधुरास्यत्वं मधुरमुखत्वं स्यात्। तथा कंडूमतिपिच्छिलाश्च व्रणा भवंति।

**अंतःकपोलमाश्रित्य श्यावपांडु कफोऽर्बुदम् ॥ ६२ ॥**
**कुर्यात्तत्पाटितं छिन्नं मृदितं च विवर्धते।**

कफो वृद्धोंऽतःकपोलमाश्रित्यार्बुदं श्यावं पांडु च कुर्यात्। तच्चार्बुदं पाटितं छिन्नं मृदितं च विवर्धते।

**मुखपाको भवेत्सास्रैः सर्वैः सर्वाकृतिर्मलैः ॥ ६३ ॥**

मलैर्वाताचितैः सर्वैस्त्रिभिः सास्रैः सरक्तैर्मुखपाको भवेत्। स च सर्वाकृतिः सर्वलक्षणः स्यात्।

**पूत्यास्यता च तैरेव दंतकाष्ठादिविद्विषः।**

दंतकाष्ठविद्विषो नरस्य तैरेव दोषैः पूत्यास्यता पूतिवक्त्रत्वं स्यात्।

**ओष्ठे गंडे द्विजे मूले जिह्वायां तालुके गले ॥ ६४ ॥**
**वक्त्रे सर्वत्र चेत्युक्ताः पंचसप्ततिरामयाः।**
**एकादशैको दश च त्रयोदश तथा च षट् ॥ ६५ ॥**
**अष्टावष्टादशाष्टौ च क्रमात्**

ओष्ठ एकादश। एको गंडे। दंते दश। दंतमूले त्रयोदश। जिह्वायां षट्। तालुन्यष्टौ। गलेऽष्टादश। वक्त्रेऽष्टावामयाः। एवं सर्वत्र पंचसप्ततिरामया आख्याता उक्ताः।

**तेष्वनुपक्रमाः।**
**करालो मांसरक्तोष्ठावर्बुदानि जलार्बुदं ॥ ६६ ॥**
**कच्छपस्तालुपिटिका गलौघः सुषिरो महान्।**
**स्वरघ्नोर्ध्वगदः श्यावः शतघ्नीवलयालसाः ॥ ६७ ॥**
**नाड्योष्ठकोपो निचयात् रक्तात्सर्वैश्च रोहिणी।**
**दशने स्फुटिते दंतभेदः पक्वोपजिह्विका ॥ ६८ ॥**
**गलगंडः स्वरभ्रंशः कृच्छ्रोच्छ्वासोऽतिवत्सरः।**
**याप्यस्तु हर्षो भेदश्च शेषान् शस्त्रौषधैर्जयेत् ॥६९॥**

ओष्ठामयेषु मध्येऽनुपक्रमा असाध्याः। करालो नाम दंतरोगः। महासुषिरो दंतरोगः। स्वरघ्नो गलरोगः। ऊर्ध्वगदो वक्त्ररोगः। शतघ्नीवलयौ कंठरोगौ। अलसोऽधिजिह्वरोगः। निचयात्सन्निपातात् नाडीदंतमूलजा। ओष्ठकोपः सन्निपातजोऽसाध्यः। रक्तात्सन्निपाताज्जाता रोहिणी। दंतभेदो दशने स्फुटिते। पक्वोपजिह्विकाऽसाध्या गलगंडः स्वरभ्रंशः कृच्छ्रोच्छ्वासोऽतिवत्सरोऽसाध्यः। याप्यस्तु हर्षो भेदश्च दंतहर्षो दंतभेदश्च द्वावेतौ याप्यौ। शेषान् रोगान् शस्त्रौषधैर्जयेत्। यथायोगैर्वक्ष्यमाणैः।

इत्यष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थान एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः।

**अथाऽतो मुखरोगप्रतिषेधं व्याख्यास्यामः।**
**खंडौष्ठस्य विलिख्यांतौ स्यूत्वा व्रणवदाचरेत्।**

खंडौष्ठस्य छिन्नौष्ठस्य स्निग्धस्विन्नस्य ओष्ठप्रांतौ विलिख्य सुश्लिष्टौ क्षौमसूत्रेण स्यूत्वा सद्यो व्रणवदुपचारं कुर्यात्। शतधौतघृताभ्यक्तां व्रणस्योपरि कवलिकां दद्यात्।

**यष्टीज्योतिष्मतीरोध्रश्रावणीसारिवोत्पलैः॥ १॥**
**पटोल्या काकमाच्या च तैलमभ्यंजनं पचेत्।**

मधुयष्ट्यादिभिः कल्कितैस्तैलमभ्यंजनं पचेत्।

**नस्यं च तैलं वातघ्नमधुरस्कंधसाधितम्॥ २॥**

वातहरमधुरौषधसाधितं तैलं नस्यं प्रयोज्यम्।

**महास्नेहेन वातौष्ठे सिद्धेनाक्तः पिचुर्हितः।**
**देवधूपमधूच्छिष्टगुग्गुलवमरदारुभिः॥ ३॥**

सर्जरससिक्थकगुग्गुलुदेवदारुभिः सिद्धेन महास्नेहेन सर्पिर्मज्जवसातैलाख्येनाक्तः पिचुर्वातोष्ठे वातज ओष्ठकोपे हितः।

**यष्ट्याह्वचूर्णयुक्तेन तेनैव प्रतिसारणम्।**

तेनैव महास्नेहेन मधुयष्टीचूर्णयुक्तेन वातोष्ठे वा प्रतिसारणं हितम्।

**नाड्योष्ठं स्वेदयेद्दुग्धसिद्धैरेरंडपल्लवैः॥ ४॥**

ओष्ठं वातौष्ठं दुग्धसिद्धैरेरंडपल्लवैर्नाड्या स्वेदयेत्।

**खंडौष्ठविहितं नस्यं तस्य मूर्ध्नि च तर्पणम्।**

खंडौष्ठविहितं खंडौष्ठोक्तं नस्यं प्रयोज्यम्। तथा तस्य मूर्ध्नि तर्पणं शिरोभ्यंगः कार्यः।

**पित्ताभिघातजावोष्ठौ जलौकोभिरुपाचरेत्॥ ५॥**

पित्तजमभिघातजमोष्ठकोपं जलौकोभिरुपाचरेच्चिकित्सेत्। ताभी रक्तं स्रावयेत्।

**रोध्रसर्जरसक्षौद्रमधुकैः प्रतिसारणम्।**

पित्तोत्थेऽभिघातजे चौष्ठकोपे रोध्रादिभिः प्रतिसारणं हितम्।

**गुडूचीयष्टिपत्तंगसिद्धमभ्यंजने घृतम्॥ ६॥**

गुडूच्यादिभिः कल्कितैर्घृतं सिद्धमभ्यंजने हितम्।

**पित्तविद्रधिवच्चात्र क्रिया**

अत्र तयोः पित्ताभिघातजयोः पित्तविद्रधिवत् क्रिया चिकित्सा कार्या।

**शोणितजेऽपि च।**
**इदमेव भवेत्कार्यं कर्म**

शोणितजे रक्तोत्थेऽप्योष्ठ इदमेव कर्म कार्यं भवेत्।

**ओष्ठे तु कफोत्तरे॥ ७॥**
**पाठाक्षारमधुव्योषैर्हृतास्रे प्रतिसारणम्।**
**धूमनावनगंडूषाः प्रयोज्याश्च कफच्छिदः॥ ८॥**

कफोत्तर ओष्ठे हृतास्रे हृतरक्ते पाठादिभिः प्रतिसारणं हितम्। तथा धूमादयः कफघ्ना हिताः।

**स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना।**
**प्रियंगुरोध्रत्रिफलामाक्षिकैः प्रतिसारयेत्॥ ९॥**

मेदोजमोष्ठकोपं स्विन्नं भिन्नं विदारितं गतमेदसं संतमग्निना दहेत्। प्रियंग्वादिभिः प्रतिसारयेत्।

**सक्षौद्रा घर्षणं तीक्ष्णा भिन्नशुद्धे जलार्बुदे।**
**अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया॥१०**

तीक्ष्णाः पिप्पलीमरिचादयः समाक्षिका भिन्नशुद्धे जलार्बुदे घर्षणम्। अवगाढेऽतिवृद्धे जलार्बुदे क्षारोऽग्निरथवा चिकिसितम्। क्षारेणाग्निना वा दहेदित्यर्थः।

**आमाद्यवस्थास्वलजीं गंडे शोफवदाचरेत्।**

आमाद्यवस्थास्वलजीं गंडे कपोलेऽलजीं रोगं शोफवदुपक्रमेत्।

**स्विन्नस्य शीतदंतस्य पालीं विलिखितां दहेत्॥११॥**
**तैलेन प्रतिसार्या च सक्षौद्रघनसैंधवैः।**
**दाडिमत्वग्वरातार्क्ष्यकांताजंब्वस्थिनागरैः॥ १२॥**
**कवलः क्षीरिणां क्वाथैरणुतैलं च नावनम्।**

शीतदंतस्य स्विन्नस्य पालीं व्रीहिमुखेन शस्त्रेण विलिखितां तैलेन दहेत्। दाडिमत्वगादिभिः क्षौद्रादियुतैः प्रतिसार्या च। क्षीरिणां क्वाथैः कवलो हितः। नस्यमणुतैलं हितम्।

**दंतहर्षे तथा भेदे सर्वा वातहरा क्रिया॥ १३॥**
**तिलयष्टीमधुश्रृतं क्षीरं गंडूषधारणम्।**

दंतभेदे हर्षे च सर्वा वातघ्नी क्रिया शस्ता। तिलयष्टीमधुशृतं क्षीरं गंडूषधारणम्।

**सस्नेहं दशमूलांबु गंडूषः प्रचलद्द्विजे॥ १४॥**
**तुत्थरोध्रकणाश्रेष्ठापत्तंगपटुघर्षणम्।**
**स्निग्धाः शील्या यथावस्थं नस्यान्नकवलादयः॥१५॥**

प्रचलद्द्विजे दशमूलांबु सस्नेहं गंडूषस्तुत्थादिभिर्घर्षणम्। स्निग्धा नस्यादयोऽवस्थावशादभ्यसनीयाः।

**अधिदंतकमालिप्तं यदा क्षारेण जर्जरम्।**
**कृमिदंतमिवोत्पाट्य तद्वच्चोपचरेत्तदा॥ १६॥**
**अनवस्थितरक्ते च दग्धे व्रण इव क्रिया।**

अधिदंतकमालिप्तं यदा क्षारेण जर्जरं तदा कृमिदंतं यथोत्पाट्य तथैवोपक्रमेत्। अनवस्थितरक्ते च दग्धे व्रण इव चिकित्सा कार्या। तस्मिन् अधिदंतक उत्पाटिते रक्तेऽनवस्थिते सति तस्मिन् स्थाने दग्धे पश्चाद्व्रणवच्चिकित्सा कार्या।

**अहिंसन् दंतमूलानि दंतेभ्यः शर्करां हरेत् ॥ १७ ॥**
**क्षारचूर्णैर्मधुयुतैस्ततश्च प्रतिसारयेत् ।**

दंतेभ्यः शर्करां हरेद्दंतमूलान्यहिंसन्नपीडयन् रक्षन् । ततोऽनंतरं शर्करां विलिख्य दंतलेखनकेन शस्त्रेण क्षारचूर्णैर्मधुयुतैः प्रतिसारयेत् ।

**कपालिकायामप्येवं हर्षोक्तं च समाचरेत् ॥ १८ ॥**

कपालिकायामप्येवमेष एवोपक्रमः कार्यः । दंतहर्षोक्तं च समाचरेत् । दंतशर्करोक्तं सर्वं तदाचरेत् ।

**जयेद्विस्रावणैः स्विन्नमचलं कृमिदंतकम् ।**
**स्निग्धैश्चालेपगंडूषनस्याहारैश्चलापहैः ॥ १९ ॥**
**गुडेन पूर्णं सुषिरं मधूच्छिष्टेन वा दहेत् ।**
**सप्तच्छदार्कक्षीराभ्यां पूरणं कृमिशूलजित् ॥ २० ॥**

कृमिदंतकं स्विन्नमचलं विस्रावणैर्विस्रावयेत् । तथा स्निग्धैर्वातघ्नैरालेपादिभिर्गुडेन पूर्णं सुषिरं मदनेन दहेद्वा। गुडेन पूर्णं मधूच्छिष्टेन सिक्थकेन वा पूर्णं कुब्जशलाकया तप्तया दहेत् । सप्तपर्णार्कक्षीराभ्यां पूरणं हितम् । तत् कृमिशूलजित् । सप्तच्छदक्षीरेण यत्सुषिरपूरणं तत्कृमिशूलनुत्स्यात् ।

**हिंगुकट्फलकासीसस्वर्जिकाकुष्ठवेल्लजम् ।**
**रजो रुजं जयत्याशु वस्त्रस्थं दशने धृतम् ॥ २१ ॥**

हिंग्वादिकं चूर्णं वसनस्थितं तांतवबद्धं दंतस्योपरि स्थापितं दंते धृतं रुजाहृत् ।

**गंडूषं धारयेत्तैलमेभिरेव च साधितम् ।**
**क्वाथैर्वा युक्तमेरंडद्विव्याघ्रीभूकदंबजैः ॥ २२ ॥**

एभिरेव हिंग्वादिभिः सिद्धं तैलं गंडूषं रोगिणं ग्राहयेत् । एरंडादिजैः क्वाथैर्युक्तं तैलं गंडूषं धारयेद्वा ।

**क्रियायोगैर्बहुविधैरित्यशांतरुजं भृशम् ।**
**दृढमप्युद्धरेद्दंतं पूर्वं मूलाद्विमोक्षितम् ॥ २३ ॥**
**संदंशकेन लघुना दंतनिर्घातनेन वा ।**
**तैलं सयष्ट्याह्वरजो गंडूषो मधुना ततः ॥ २४ ॥**

इत्येवमादिभिः क्रियायोगैर्बहुप्रकारैः कृतैरप्युपक्रमैरशांतपीडं दंतं सुदृढमपि पूर्वं मूलाद्विमोक्षितं लघुना संदंशकेन दंतनिर्घातनेन यंत्रेण वोद्धरेत् । अनंतरं तैलं मधुयष्टीचूर्णयुतं गंडूषं धारयेत् । माक्षिकं वा मधुयष्टीचूर्णयुतम् ।

**ततो विदारियष्ट्याह्वशृंगाटककसेरुभिः ।**
**तैलं दशगुणक्षीरं सिद्धं युंजीत नावनम् ॥ २५ ॥**

ततो विदार्यादिदशगुणक्षीरं तैलं पक्वं नस्यं युंजीत ।

**कृशदुर्बलवृद्धानां वातार्तानां च नोद्धरेत् ।**
**नोद्धरेच्चोत्तरं दंतं बहूपद्रवकृद्धि सः ॥ २६ ॥**
**एषामप्युद्धृतैः स्निग्धः स्वादुः शीतः क्रमो हितः ।**

कृशादीनां दंतं नोद्धरेत् । उत्तरं च दंतं नोद्धरेत् । यस्मात्स उद्धृतो बहूपद्रवकरः । एषामपि दंतैरुद्धृतैः स्निग्धस्वादुशीतक्रमो हितः ।

**विस्रावितास्रे शीतादे सक्षौद्रैः प्रतिसारणम्॥२७॥**
**मुस्तार्जुनत्वक्त्रिफलाफलिनीतार्क्ष्यनागरैः ।**
**तत्काथः कवलो नस्यं तैलं मधुरसाधितम् ॥२८॥**

विस्राविते रक्ते शीतादे मुस्तादिभिः सक्षौद्रे प्रतिसारणं हितम्। तेषां मुस्तादीनां क्वाथः कवलो मधुरैः साधितं तैलं नस्यम् ।

**दंतमांसान्युपकुशे स्विन्नान्युष्णांबुधारणैः ।**
**मंडलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् ॥ २९ ॥**
**ततश्च प्रतिसार्याणि घृतमंडमधुद्रुतैः ।**
**लाक्षाप्रियंगुपत्तंगलवणोत्तमगैरिकैः ॥ ३० ॥**
**सकुष्ठशुंठीमरिचयष्टीमधुरसांजनैः ।**
**सुखोष्णो घृतमंडोऽनु तैलं वा कवलग्रहः ॥ ३१ ॥**
**घृतं च मधुरैः सिद्धं हितं कवलनस्ययोः ।**

उपकुशे दंतमांसानि स्विन्नान्युष्णांबुगंडूषधारणेन ततो मंडलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् । ततो लाक्षादिभिर्घृतमंडमधुद्रुतैः प्रतिसारणीयानि । अनंतरं सुखोष्णो घृतमंडस्तैलं वा कवलग्रहः । मधुरैर्मधुरौषधैः कल्कक्काथीकृतैश्च पक्वं घृतं कवलनस्ययोर्हितम् ।

**दंतपुप्पुटके स्विन्नछिन्नभिन्नविलेखिते ॥ ३२ ॥**
**यष्ट्याह्वस्वर्जिकाशुंठीसैंधवैः प्रतिसारणम् ।**

दंतपुप्पुटके स्विन्नछिन्नभिन्नविलिखिते यष्ट्यादिभिः प्रतिसारणम् ।

**विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कवललेपनम् ॥ ३३ ॥**
**घर्षणं कटुकाकुष्ठवृश्चिकालीयवोद्भवैः ।**
**रक्षेत्पाकं हिमैः पक्वः पाट्यो दाह्योऽवगाढकः ॥३४**

विद्रधौ दंतविद्रधौ कटुकादिभिः कवललेपनं हितम् । कट्वादिभिर्घर्षणं हितम् । हिमैः शीतवीर्यौषधैः शीतलैः पाकं रक्षेत् । पक्वः पाटनीयः । अग्निना दाह्योऽवगाढः ।

**सौषिरे छिन्नलिखिते सक्षौद्रैः प्रतिसारणम् ।**
**रोध्रमुस्तमिशिश्रेष्ठातार्क्ष्यपत्तंगकिंशुकैः ॥ ३५ ॥**
**सकट्फलैः कषायैश्च तेषां गंडूष इष्यते ।**
**यष्टीरोध्रोत्पलानंतासारिवागरुचंदनैः ॥ ३६ ॥**
**सगैरिकसितापुंड्रैः सिद्धं तैलं च नावनम् ।**

सौषिरे छिन्नलिखिते च रोध्रादिभिर्माक्षिकयुतैः प्रतिसारणम् । तैरेव कषायैर्गंडूषश्च स्यात् । यष्ट्यादिभिः पक्वं तैलं नावनम् ।

**छित्त्वाधिमांसकं चूर्णैः सक्षौद्रैः प्रतिसारयेत्॥३७॥**
**वचातेजोवतीपाठास्वर्जिकायवशूकजैः ।**
**पटोलनिंबत्रिफलाकषायः कवलो हितः ॥ ३८ ॥**

अधिमांसकं छित्वा वचादिजैश्चूर्णैः सक्षौद्रैः प्रतिसारयेत्। पटोलादिक्वाथः कवलो हितः।

**विदर्भे दंतमूलानि मंडलाग्रेण शोधयेत्।**
**क्षारं युंज्यात्ततो नस्यं गंडूषादि च शीतलम्॥३९॥**

विदर्भे दंतमूलानि मंडलाग्रेण शोधयेत्। क्षारं युंजीत ततो नस्यं गंडूषादि च शीतलम्। शीतवीर्यसाधितम्।

**संशोध्योभयतः कायं शिरश्चोपचरेत्ततः।**
**नाडीं दंतानुगां दंतं समुद्धृत्याग्निना दहेत्॥ ४०॥**
**कुब्जां नैकगतिं पूर्णां मदनेन गुडेन वा।**
**धावनं जातिमदनखदिरस्वादुकंटकैः॥ ४१॥**
**क्षीरिवृक्षांबुगंडूषो नस्यं तैलं च तत्कृतम्।**

उभयत ऊर्ध्वमधश्च कायं मूर्धानं च विरेकेण नस्यादिना च संशोध्य ततो नाडीं दंतानुगामुपचरेत्। दंतं समुद्धृत्याग्निना दहेत्। कुब्जां नैकगतिं पूर्णां गुडेन मदनेन वा दहेत्। जात्यादिभिर्धावनं हितम्। क्षीरिवृक्षांबुगंडूषस्तत्पक्वं च तैलं नस्यम्। क्षीरिवृक्षाणां मधुराणां क्वाथेन गंडूषस्तत्कृतं क्षीरिवृक्षसिद्धं तैलं नस्ये योज्यम्।

**कुर्याद्वातोष्ठकोपोक्तं कंटकेष्वनिलात्मसु॥ ४२॥**
**जिह्वायां**

वातोत्थेषु कंटकेषु वातोष्ठकोपोक्तं चिकित्सितं जिह्वायां कुर्यात्।

**पित्तजातेषु घृष्टेषु रुधिरे स्रुते।**
**प्रतिसारणगंडूषनावनं मधुरैर्हितम्॥ ४३॥**

पित्तजातेषु जिह्वाकंटकेषु घृष्टेषु रुधिरे स्रुते प्रतिसारणादि मधुरैर्हितम्।

**तीक्ष्णैः कफोत्थेष्वप्येवं सर्षपत्र्यूषणादिभिः।**

कफोत्थेष्वप्येवं कफजेषु जिह्वाकंटकेषु घृष्टेषु रुधिरे स्रुते तीक्ष्णैः सर्षपादिभिः प्रतिसारणादि हितम्। आदिशब्दाद् गंडूषो नावनं च।

**नवे जिह्वालसेऽप्येवं तं तु शस्त्रेण न स्पृशेत्॥४४॥**

नवे च जिह्वालसे एष एवोपक्रमः। एषो वेति। तीक्ष्णैरौषधैः प्रतिसारणादयो योज्याः। किं तु शस्त्रेणैनं न स्पृशेत्। एतद् युक्त्या च पूर्वेषां शस्त्रस्पर्शनं कार्यमित्यनुजज्ञौ।

**उन्नम्य जिह्वामाकृष्टां वडिशेनाधिजिह्विकाम्।**
**छेदयेन्मंडलाग्रेण तीक्ष्णोष्णैर्घर्षणादि च॥ ४५॥**

अधिजिह्विकां वडिशेनाकृष्टां मंडलाग्रेण छेदयेत्। किंकृत्वा। उन्नम्य जिह्वां तीक्ष्णोष्णैर्घर्षणादि च कार्यम्।

**उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत्।**

उपजिह्वां शस्त्रेण शाकादिपत्रैर्वाऽङ्गुलिशस्त्रेण परिस्राव्य यवक्षारेण घर्षयेत्।

**कफघ्नैः शुंडिका साध्या नस्यगंडूषघर्षणैः॥ ४६॥**

शुंडिका कफघ्नैर्नस्यादिभिः साधनीया।

**ऐर्वारुबीजप्रतिमं वृद्धायामसिराततम्।**
**अग्रे निविष्टं जिह्वाया वडिशाद्यवलंबितम्॥ ४७॥**
**छेदयेन्मंडलाग्रेण नात्यग्रे न च मूलतः।**
**छेदेऽत्यसृक्क्षयान्मृत्युर्हीने व्याधिर्विवर्धते॥४८॥**

वृद्धायां गलशुंडिकायां सत्यां जिह्वाया अग्रे निविष्टं कृष्णदीर्घं कर्कटिकाबीजसदृशं वडिशादिनाऽवलंबितं मंडलाग्रेण छेदयेत्। कथं नातिशयेन प्रांते न चातिशयेन मूले। यतोऽतिच्छेदे सत्यसृक्क्षयान्मृत्युर्हीनच्छिन्ने सति व्याधिर्विवर्धते।

**मरिचातिविषापाठावचाकुष्टकुटंनटैः।**
**छिन्नायां सपटुक्षौद्रैर्घर्षणं कवलः पुनः॥ ४९॥**
**कटुकातिविषापाठानिंबरास्नावचांबुभिः।**

सम्यक्छिन्नायां शुंडिकायां मरिचादिभिः ससैंधवक्षौद्रैर्घर्षणम्। कवलः कटुकादिक्वाथेन।

**संघाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत्॥ ५०॥**

संहतौ पुप्पुटके कच्छपे विलिख्यैवमनेन क्रमेण शस्त्रेण विलेखनं कृत्वा समाचरेत्।

**अपक्वे तालुपाके तु कासीसक्षौद्रतार्क्ष्यजैः।**
**घर्षणं कवलः शीतकषायमधुरौषधैः॥ ५१॥**

अपक्वे तु तालुपाके कासीसादिभिर्घर्षणम्। शीतकषायमधुरौषधैः कवलः।

**पक्वेऽष्टापदवद्भिन्ने तीक्ष्णोष्णैः प्रतिसारणम्।**
**वृषनिंबपटोलाद्यैस्तिक्तैः कवलधारणम्॥ ५२॥**

पक्वे तालुपाकेऽष्टापदवद्भिन्ने सति तीक्ष्णोष्णैः प्रतिसारणं कार्यम्। अष्टापदं चतुरंगपिटम्। तद्वल्लेखाभिर्भेदो मंडलाग्रेण कार्यः। शस्त्रेणाष्टापदवद् भिन्ने सति वृषादिभिस्तिक्तद्रव्यैः कवलधारणम्। आद्यशब्दात् जातीकरवीरगुडूचीकटुकाहरिद्राद्वयवेत्राग्रकंटकारिकाक्वाथो मधुतैलं च।

**तालुशोषे त्वतृष्णस्य सर्पिरुत्तरभक्तिकम्।**
**कणाशुंठीशृतं पानमम्लैर्गंडूषधारणम्॥ ५३॥**
**धन्वमांसरसाः स्निग्धाः क्षीरसर्पिश्च नावनम्।**

तालुशोषे त्वतृष्णस्य सतः सर्पिरुत्तरभक्तिकं योज्यम्। पिप्पलीशुंठीभ्यां शृतं जलपानम्। अम्लैः कांजिकादिभिर्गंडूषधारणम्। धन्वमांसरसाः स्निग्धास्तथा क्षीरस्य सर्पिश्च नावनं हितम्।

**कंठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादि कर्म च॥ ५४॥**

**क्वाथः पानं च दार्वीत्वङ्निंबताक्ष्यकलिंगजः ।**
**हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ५५ ॥**

कंठरोगेषु सर्वेषु रक्तमोक्षः सिरादिभिस्तीक्ष्णैर्द्रव्यैर्नस्यगंडूषादि च दार्वीत्वगादीनां क्वाथः पातव्यः । हरीतक्या क्वाथः समाक्षिकः पेयः ।

**श्रेष्ठाव्योषयवक्षारदार्वीद्वीपिरसांजनैः ।**
**सपाठातेजिनीनिंबैः सूक्तगोमूत्रसाधितैः ॥ ५६ ॥**
**कवलो गुटिका चाऽत्र कल्पिता प्रतिसारणम् ।**

श्रेष्ठादिभिः सूक्तगोमूत्रसाधितैः कवलो गुटिका चाऽत्रास्मिन् क्वाथे परिकल्पिता प्रतिसारणम् ।

**निचुलं कटभीमुस्तं देवदारुमहौषधम् ॥ ५७ ॥**
**वचा दंती च मूर्वा च लेपः कोष्णोर्तिशोफहा ।**

निचुलादिभिर्लेपः कोष्णो रुजाशोफघ्नः ।

**अथांऽतर्बाह्यतः स्विन्नां वातरोहिणिकां लिखेत्५८**
**अंगुलीशस्त्रकेणाऽशु पटुयुक्तनखेन वा ।**
**पंचमूलांबुकवलस्तैलं गंडूषनावनम् ॥ ५९ ॥**

अथेति मंगले । मंगलपूर्वकां वातजां रोहिणिकामंतर्बाह्यतश्च स्विन्नामंगुलिशस्त्रकेणाऽथवा पटुयुक्तेन नखेन शीघ्रमेव लिखेत् । पंचमूलक्वाथः कवलस्तैलं गंडूषो नस्यं च ।

**विस्राव्य पित्तसंभूतां सिताक्षौद्रप्रियंगुभिः ।**
**घर्षेत्सरोध्रपत्तंगैः कवलः क्वथितैश्च तैः ॥ ६० ॥**
**द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ।**

पित्तजां रोहिणीं विस्राव्य रक्तं निर्हृत्य सितादिभिर्घर्षयेत् । तैश्च सितादिभिः क्वथितैः सरोध्रादिभिः कवलो द्राक्षापरूषकयोः क्वाथः कवलो हितः ।

**उपाचरेदेवमेव प्रत्याख्यायास्रसंभवाम् ॥ ६१ ॥**

रक्तजां रोहिणिकां प्रत्याख्याय पित्तजामिवोपक्रमेत् ।

**सागारधूमैः कटुकैः कफजां प्रतिसारयेत् ।**
**नस्यगंडूषयोस्तैलं साधितं च प्रशस्यते ॥ ६२ ॥**
**अपामार्गफलश्वेतादंतीजंतुघ्नसैंधवैः ।**

कटुकैः कटुवर्गोक्तैः सागारधूमैः कफोत्थां प्रतिसारयेत् । अपामार्गादिभिः कल्कितैः साधितं तैलं कफरोहिण्यां नस्यगंडूषयोः श्रेष्ठम् ।

**तद्वच्च वृंदशालूकतुंडकेरीगिलायुषु ॥ ६३ ॥**

तद्वच्च कफरोहिणीवदेव चिकित्सा वृंदादिषु ।

**विद्रधौ स्राविते श्रेष्ठारोचनाताक्ष्यगैरिकैः ।**
**सरोध्रपट्टपत्तंगकणैर्गंडूषघर्षणे ॥ ६४ ॥**

विद्रधौ शस्त्रेण स्राविते श्रेष्ठादिभिर्गंडूषादि हितम् ।

**गलगंडः पवनजः स्विन्नो निःसृतशोणितः ।**
**तिलैर्बीजैश्चलट्वोमाप्रियालशणसंभवैः ॥ ६५ ॥**
**उपनाह्यो व्रणे रूढे प्रलेप्यश्च पुनः पुनः ।**
**शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवैः ॥ ६६ ॥**
**कालामृतार्कमूलैश्च पुष्पैश्च करहाटजैः ।**
**एकैषिकान्वितैः पिष्टैः सुरया कांजिकेन वा ॥६७॥**

गलगंडो वातोद्भवः स्विन्नो निःसुतास्रस्तिलैर्लट्वादिबीजैश्च उपनाह्यः । रूढे व्रणे सति प्रलेप्यश्च बहुशः शिग्र्वादिभिः सुरया कांजिकेन वा पिष्टैः । एकैषिका त्रिवृत् ।

**गुडूचीनिंबकुटजहंसपादीबलाद्वयैः ।**
**साधितं पाययेत्तैलं सकृष्णादेवदारुभिः ॥ ६८ ॥**

गुडूच्यादिभिः सकृष्णादेवदारुभिः कल्कितैर्गलगंडिनमातुरं पक्वं तैलं पाययेत् ।

**कर्तव्यं कफजेप्येतत्स्वेदविम्लापने त्वति ।**

कफोत्थेप्येतद् वातगलगंडोक्तं चिकित्सितं कार्यम् । किंतु स्वेदविम्लापने चात्यर्थं कार्ये ।

**लेपोजगंधातिविषाविशल्यासविषाणिकाः ॥ ६९ ॥**
**गुंजालाबुशुकाह्वाश्च पलाशक्षारकल्किताः ।**

कफजे गलगंडेऽजगंधादयः पलाशक्षारनिश्चोतकल्किताः लेपः ।

**मूत्रश्रुतं हठक्षारं पक्त्वा कोद्रवभुक् पिवेत् ॥७०॥**
**साधितं वत्सकाद्यैर्वा तैलं सपटुपंचकैः ।**
**कफघ्नान् धूमवमननावनादींश्च शीलयेत् ॥ ७१ ॥**

हठो मिमिणिस्तस्य क्षारं गोमूत्रे शृतं पक्त्वा क्षारन्यायेन पिबेज्जलेन । पेषणालोडने वारीति वचनात् । किंभूतः सन् । कोद्रवभुक् । वत्सकादिभिर्वा तैलं साधितं हितम् । कफघ्नान् धूमकादीन् शीलयेत् ।

**मेदोभवे सिरां विध्येत्कफघ्नं च विधिं भजेत् ।**
**असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ७२ ॥**

मेदोभवे गलगंडे सिरां विध्येत् । कफघ्नं च विधिं सेवेत । असनादिचूर्णं चैनं प्रातर्गोमूत्रेण पाययेत् ।

**आशांतौ पाटयित्वा च सर्वान् व्रणवदाचरेत् ।**

अशांतौ सत्यां पाटयित्वा सर्वान् व्रणवदुपक्रमेत् ।

**मुखापाकेषु सक्षौद्राः प्रयोज्या मुखधावनाः ॥७३॥**
**क्वथितास्त्रिफलापाठामृद्वीका जातिपल्लवाः ।**
**निष्ठेव्या भक्षयित्वा वा कुठेरादिगणोऽथवा ॥७४॥**

मुखपाकेषु समाक्षिका मुखधावनाः क्वथितास्त्रिफलादयः प्रयोज्याः । अथवा त्रिफलादीन् भक्षयित्वा निष्ठेव्या भुक्त्वा निष्ठीवेत् । कुठेरादिर्गणो वा हरीतकवर्गोक्तो भक्षयित्वा निष्ठेव्यः ।

**मुखपाकेऽनिलात् कृष्णापट्वेलाः प्रतिसारणम् ।**
**तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ७५ ॥**

मुखपाकेऽनिलात् कृष्णादयः प्रतिसारणम् । वातघ्नैः सिद्धं तैलं कवले नस्ये च हितम् ।

**पित्तास्रे रक्तपित्तघ्नः कफघ्नश्च कफे विधिः ।**

पित्तास्रे पित्तरक्तघ्नो विधिः । कफे च कफहृत् विधिः ।

**लिखेच्छाखादिपत्रैश्च पिटिकाः कठिणाः स्थिराः ॥**

पिटिकाः कठिनाः स्थिराः शाखादिपत्रैर्लिखेत् ।

**यथादोषोदयं कुर्यात्सन्निपाते चिकित्सितम् ।**

सन्निपाते सन्निपातोद्भवे मुखपाके यथादोषोदयं चिकित्सितं कुर्यात् ।

**नवेर्बुदे त्वसंवृद्धे छेदिते प्रतिसारणम् ॥ ७७ ॥**
**स्वर्जिकानागरक्षौद्रैः क्राथो गंडूष इष्यते ।**
**गुडूचीनिंबकल्कोत्थो मधुतैलसमन्वितः ॥ ७८ ॥**
**यवान्नभुक् तीक्ष्णतैलनस्याभ्यंगांस्तथाचरेत् ।**

अर्बुदे नवोत्थेऽसंवृद्धे छेदिते च प्रतिसारणम् । स्वर्जिकादिभिः क्राथो गंडूष इष्टो गुडूचीनिंबकल्कोद्भवो मधुतैलयुक्तस्तथा यवान्नभोजी तीक्ष्णतैलनस्याभ्यंगानाचरेत् ।

**वमिते पूतिवदने धूमस्तीक्ष्णः सनावनः ॥ ७९ ॥**
**समंगाधातकीरोध्रफलिनीपद्मकैर्जलम् ।**
**धावनं वदनस्यांतश्चूर्णितैरवचूर्णनम् ।**
**शीतादोपकुशोक्तं च नावनादि च शीलयेत् ॥८०॥**

पूतिमुखे वमिते सति तीक्ष्णधूमो नस्यं च तीक्ष्णं प्रयोज्यम् । समंगादिजलेन वदनस्यांतः क्षालयेत् । एतैरेव मुखांतरं चूर्णितैरवचूर्णयेत् । शीतादोपकुशोक्तं च नस्यादिकमभ्यसेत् ।

**फलत्रयद्वीपिकिराततिक्त-**
**यष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।**
**मुस्ताहरिद्राद्वययावशूक-**
**वृक्षाम्लकाम्लाग्रिमवेतसाश्च ॥ ८१ ॥**
**अश्वत्थजंब्वाम्रधनंजयत्वक्**
**त्वक् चाहिमारात्खदिरस्य सारः ।**
**क्राथेन तेषां घनतां गतेन**
**तच्चूर्णयुक्ता गुटिका विधेयाः ॥ ८२ ॥**
**ता धारिता घ्नंति मुखेन नित्यं**
**कंठौष्ठताल्वादिगदान् सुकृच्छ्रान् ।**
**विशेषतो रोहिणिकास्यशोष-**
**गंधान् विदेहाधिपतिप्रणीताः ॥ ८३ ॥**

त्रिफलादीनां द्रव्याणां क्राथेन घनत्वं गतेन तच्चूर्णेन त्रिफलादिरजसान्विता गुटिकाः कार्याः । ता मुखेन नित्यं धारिताः कंठादिरोगान् दारुणानपि घ्नंति । विशेषेण रोहिणिकादीन् । विदेहपतिना निर्मिता एताः । अम्लाग्रिमवेतसोऽम्लवेतसः । अत्राद्ये वृत्ते उपजाती । अंत्यमिंद्रवज्रा ।

**खदिरतुलामंबुघटे पक्त्वा तोयेन तेन पिष्टैश्च ।**
**चंदनजोंगककुंकुमपरिपेलववालकोशीरैः ॥ ८४ ॥**
**सुरतरुरोध्रद्राक्षामंजिष्ठाचोचपद्मकविडंगैः ।**
**स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकैः सपत्तंगैः ॥**
**तैलप्रस्थं विपचेत्**
**कर्षांशैः पाननस्यगंडूषैस्तत् ।**
**हत्वास्ये सर्वगदान् जनयति**
**गार्ध्रीं दृशं श्रुतिं च वाराहीम् ॥ ८६ ॥**

खदिरपलशतं जलद्रोणे पक्त्वा पादावशेषितेन तेन जलेन पिष्टैश्चंदनादिभिः कर्षांशैस्तैलप्रस्थं पचेत् । तच्च पाननस्यगंडूषैरास्ये धारितं सर्वान् रोगान् जित्वा गृध्रसदृशीं दृष्टिं वराहतुल्यां श्रुतिं विधत्ते । आर्या गीतिः ।

**उद्वर्तितं च प्रपुन्नाटरोध्र-**
**दार्वीभिरभ्यक्तमनेन वक्त्रम् ।**
**निर्व्यंगनीलीमुखदूषिकादि**
**संजायते चंद्रसमानकांति ॥ ८७ ॥**

प्रपुन्नाटादिभिरुद्वर्तितं मुखं तैलेनानेनाभ्यक्तं व्यंगादिरहितं चंद्रतुल्यकांति संजायते । उपजातिः ।

**पलशतं बाणात्तोयघटे**
**पक्त्वारसेऽस्मिंश्च पलार्धिकैः ।**
**खदिरजंबूयष्ट्यानंताम्रै-**
**रहिमारनीलोत्पलान्वितैः ॥ ८८ ॥**
**तैलप्रस्थं पाचयेच्छ्लक्ष्णपिष्टै-**
**रेभिर्द्रव्यैर्धारितं तन्मुखेन ।**
**रोगान्सर्वान् हंति वक्त्रे विशेषा-**
**त्स्थैर्यं धत्ते दंतपंक्तेश्चलायाः ॥ ८९ ॥**

नीलसहचरात्पलशतं जलघटे पक्त्वा तस्मिन् रसे द्विकार्षिकैः खदिरादिभिः कल्कितैः सूक्ष्मरजीकृतैस्तैलप्रस्थं विपाचयेत् । तन्मुखेन धारितं सर्वमुखरोगहृत् । विशेषेण दंतपंक्तेश्चलायाः स्थैर्यकृच्च । शालिनी ।

**खदिरसाराद् द्वे तुले पचेद्वल्कात्तुलां चारिमेदसः।**
**घटचतुष्के पादशेषेऽस्मिन् पूते पुनः क्राथनाद् घने**
**आक्षिकं क्षिपेत्सुसूक्ष्मं रजः सेव्यांबुपत्तंगगैरिकम्।**
**चंदनद्वयरोध्रपुंड्राह्वे यष्ट्याह्वलाक्षांजनद्वयम् ॥९१॥**
**धातकीकट्फलद्विनिशात्रिफलाचतुर्जातजोंगकम् ।**
**मुस्तमंजिष्ठान्यग्रोधप्ररोहमांसीयवासकम् ॥ ९२ ॥**
**पद्मकैलेयसमंगाश्च शीते तस्मिंस्तथा पालिकां पृथक्**
**जातिपत्रिकां सजातीफलां सहलवंगकंकोल्लकाम्॥**

**स्फटिकशुभ्रसुरभिकर्पूरकुडवं च तत्रावपेत्ततः ।**
**कारयेद्गुटिकाः सदा चैता धार्या मुखे तद्गदापहाः॥**

खदिरसाराद् द्वे तुले तुलां चारिमेदसो वल्काज्जलघटचतुष्टये पचेत् । पादावशोषिते पूते तस्मिन् पुनः क्काथनाद् घनीभूते कार्षिकाणि सुश्लक्ष्णचूर्णानि सेव्यादीनि क्षिपेत् । अस्मिन् शीते जातीपत्रादीन् पृथक्पालिकान् क्षिपेत् । श्रेष्ठतमोज्ज्वलकर्पूरकुडवं चात्र क्षिपेत् । अनंतरं गुटिकाः कारयेत् । एताः सदा मुखे धार्याः सर्वमुखरोगहराः ।

**क्वाथौषधव्यत्यययोजनेन**
**तैलं पचेत्कल्पनयाऽनयैव ।**
**सर्वास्यरोगोद्धृतये तदाहु-**
**र्दंतस्थिरत्वे त्विदमेव मुख्यम् ॥ ९५ ॥**

क्वाथौषधयोः खदिरसारारिमेदसोर्व्यत्ययो वैपरीत्यमरिमेदसो वल्कलाद् द्वे तुले प्रयोज्ये । खदिरसारात्तुलाम् । अन्यत्सर्वं पूर्ववद्देयम् । तैलं पचेदनयैव कल्पनया । तत् तैलं सर्वमुखरोगघ्नम् । दंतस्थिरकृताविदमेव प्रधानमाहुः । इंद्रवज्रा ।

**खदिरेणैता गुटिका-**
**स्तैलमिदं वारिमेदसा प्रथितम् ।**
**अनु शीलयन् प्रतिदिनं**
**स्वस्थोऽपि दृढद्विजो भवति ॥ ९६ ॥**

खदिरेणैता गुटिकास्तैलं चैतदरिमेदसा प्रथितम् । द्वयमप्येतत्प्रतिदिनमभ्यस्तं स्वस्थस्याऽपि द्विजदार्ढ्यकृत् । आर्या ।

**क्षुद्रागुडूचीसुमनःप्रवाल-**
**दार्वीयवासत्रिफलाकषायः ।**
**क्षौद्रेण युक्तः कवलग्रहोऽयं**
**सर्वामयान् वक्त्रगतान्निहंति ॥ ९७ ॥**

क्षुद्रादिभिः कषायः क्षौद्रेण युतः कवलग्रहोऽयं सर्वमुखरोगान् हंति । इंद्रवज्रा ।

**पाठादार्वीत्वक्कुष्ठमुस्तासमंगा-**
**तिक्तापीतांगारोध्रतेजोवतीनाम् ।**
**चूर्णः सक्षौद्रो दंतमांसार्तिकंडू-**
**पाकस्रावाणां नाशनो घर्षणेन ॥ ९८ ॥**

पाठादीनां चूर्णः क्षौद्रयुतो दंतमांसार्त्यादीनां घर्षणेन नाशनः । वैश्वदेवी ।

**गृहधूमतार्क्ष्यपाठाव्योपक्षाराग्न्ययोवरातेजोह्वैः ।**
**मुखदंतगलविकारे सक्षौद्रः कालको विधार्यश्चूर्णः**

गृहधूमादिभिश्चूर्णः समाक्षिकः कालकाख्यो मुखविकारे धार्यः । आर्या गीतिः ।

**दार्वीत्वक्सिंधूद्भवमनःशिलायावशूकहरितालैः ।**
**धार्यः पीतकचूर्णो दंतास्यगलामये समध्वाज्यः१००**

दार्व्यादिभिः पीतकाख्यश्चूर्णो दंताद्यामये समधुघृतो धार्यः । गीतिरार्या ।

**द्विक्षारधूमवरापंचपट्वव्योपवेल्लगिरितार्क्ष्यैः ।**
**गोमूत्रेण विपक्वा गलामयघ्नी रसक्रियैषा ॥ १०१ ॥**

द्विक्षारादिभिर्गोमूत्रेण विपक्वा एषा रसक्रिया गुटिका गलरोगघ्नी भवति ।

**गोमूत्रक्वथनविलीनविग्रहाणां**
**पथ्यानां जलमिशिकुष्ठभावितानाम् ।**
**अत्तारं नरमणवोऽपि वक्त्ररोगाः**
**श्रोतारं नृपमिव न स्पृशंत्यनर्थाः ॥ १०२ ॥**

गोमूत्रक्वाथेन विलीनशरीराणां पथ्यानां बालकशतपुष्पाकुष्ठैर्भावितानां भक्षयितारं नरं स्वल्पा अपि रोगा न स्पृशंति । अनर्थाः श्रोतारं नृपमिवेत्युपमालंकारः । प्रहर्षिणी ।

**सप्तच्छदोशीरपटोलमुस्त-**
**हरीतकीतिक्तकरोहिणीभिः ।**
**यष्ट्याह्वराजद्रुमचंदनैश्च**
**क्वाथं पिबेत्पाकहरं मुखस्य ॥ १०३ ॥**

सप्तच्छदादिभिः क्वाथं मुखपाकहरं पिबेत् ।

**पटोलशुंठीत्रिफलाविशाला-**
**त्रायंतितिक्ताद्विनिशामृतानाम् ।**
**पीतः कषायो मधुना निहंति**
**मुखस्थितश्चास्यगदानशेषान् ॥ १०४ ॥**

पटोलादीनां कषायो मधुमान् पीतो मुखेऽवस्थितो गंडूषो धारितो मुखगदानशेषान्निहंति ।

**स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः ।**
**आस्यस्थः समधुर्वक्त्रपाकनाडीव्रणापहः ॥ १०५ ॥**

दार्व्या रसः क्वथितो घनीभूतः सगैरिकक्षौद्रो मुखस्थो वक्त्रपाकादिघ्नः ।

**पटोलनिंबयष्ट्याह्ववासाजात्यरिमेदसाम् ।**
**खदिरस्य वरायाश्च पृथगेवं प्रकल्पना ॥ १०६ ॥**

पटोलादीनां पृथगेवं प्रकल्पना कार्या ।

**खदिरायोवरापार्थमदयंत्यहिमारकैः ।**
**गंडूषोऽम्बुशृतैर्धार्यो दुर्बलद्विजशांतये ॥ १०७॥**

खदिरादिभिर्जलशृतैर्गंडूषो द्विजदार्ढ्यकृद्धार्यः । अहिमारकोऽरिमेदकः ।

**मुखदंतमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः ।**
**तस्मात्तेषामसकृद् रुधिरं विस्रावयेद्दुष्टम् ॥ १०८ ॥**

मुखादिगदा बाहुल्येन कफरक्तभूयिष्ठा यतस्तस्माद्धेतोस्तेषां दुष्टं रुधिरं पुनः पुनर्विस्रावयेत् ।

**कायशिरसोर्विरेकोवमनंकवलग्रहाश्चकटुकतिक्ताः**
**प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म ॥ १०९ ॥**

कायशिरसोर्विरेकादिकं बाहुल्येन तेषां शस्तम् । कफरक्तहरं च यत्कर्म तत् शस्तम् ।

**यवतृणधान्यं भक्तं विदलैः क्षारोषितैरपस्नेहाः ।**
**यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥११०॥**

तेषां मुखदंतरोगाणां भक्तं भोजनं यवतृणधान्यं क्षारोषितैः क्षारोदके उषितैर्विदलैर्मुद्गादिभिः कृता यूषा भक्ष्याश्च हिताः स्नेहरहिताः । अन्यदपि श्लेष्मनाशाय भवति तदत्र शस्तम् ।

**प्राणानिलपथसंस्थाः श्वसितमपि निरुंधंते प्रमादवतः**
**कंठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥१११॥**

प्राणपवनमार्गस्थिताः कंठरोगाः प्रमादवतः श्वासमपि निरुंधंति यतोऽतोऽस्माद्धेतोस्तेषु रोगेषूपक्रमं द्राग् विदधीत । आर्याश्चतस्रः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने मुखरोगप्रतिषेधो नाम द्वाविंशोऽध्यायः ।

---

## त्रयोविंशोऽध्यायः ।

अथ क्रमप्राप्तं शिरोरोगविज्ञानमाह ।

**अथाऽतः शिरोरोगविज्ञानं व्याख्यास्यामः ॥**
**धूमातपतुषारांबुक्रीडातिस्वप्नजागरैः ।**
**उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः ॥ १ ॥**
**अत्यंबुमद्यपानेन कृमिभिर्वेगधारणैः ।**
**उपधानमृजाभ्यंगद्वेषाधः प्रततेक्षणैः ॥ २ ॥**
**असात्म्यगंधदुष्टामभाष्याद्यैश्च शिरोगताः ।**
**जनयंत्यामयान् दोषाः**

धूमादिभिः शिरोगता दोषा रोगान् जनयंति ।

**तत्र मारुतकोपतः ॥ ३ ॥**
**निस्तुद्येते भृशं शंखौ घाटा संभिद्यते तथा ।**
**भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनम् ॥ ४ ॥**
**बाध्येते स्वनतः श्रोत्रे निःकृष्येत इवाक्षिणी ।**
**घूर्णतीव शिरः सर्वं संधिभ्य इव मुच्यते ॥ ५ ॥**
**स्फुरत्यतिसिराजालं कंदराहनुसंग्रहः ।**
**प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥ ६ ॥**
**मार्दवं मर्दनस्नेहस्वेदबंधैश्च जायते ।**
**शिरस्तापोऽयम्**

तत्र तेषु मध्ये वातकोपोत्थे शंखनिस्तोदादयः स्युः । तथा मर्दनादिभिर्मार्दवं जायते । घूर्णतीवेति घूर्णस्तुदादिः । अयमीदृशः शिरस्ताप उच्यते ।

**अर्धे तु मूर्ध्नः सोर्धावभेदकः ॥ ७ ॥**
**पक्षात्कुप्यति मासाद्वा स्वयमेव च शाम्यति ।**
**अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत् ॥ ८ ॥**
**शिरोभितापे पित्तोत्थे शिरो धूमायनं ज्वरः ।**
**स्वेदोक्षिदहनं मूर्छा निशि शीतैश्च मार्दवम् ॥ ९ ॥**

अर्धे तु शिरसोर्धावभेदक उच्यते । स च पक्षेण कुप्यति । मासेन वा कुप्यति । स्वयमेव चिकित्सितं विनोपशाम्यति । अतिवृद्धस्त्वयं लोचनं कर्णं वा हन्यात् । शिरोभितापेत्यादि । शिरसोभितापे पित्तोद्भवे शिरोधूमायनं ज्वरादयश्च स्युः ।

**अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता ।**
**शिरानिस्पंदतालस्यं रुग्मंदाह्न्यधिका निशि ॥ १० ॥**
**तंद्राशूनाक्षिकूटत्वं कर्णकंडूयने वमिः ।**

कफजे शिरोभितापेऽरुच्यादयः स्युः । दिवा पीडा मंदा भवति विभावर्यामधिका । तथा तंद्रादयः स्युः ।

**रक्तात् पित्ताधिकरुजः**

रक्तोद्भवे मूर्धतापे पित्ताधिकरुजः स्यात् ।

**सर्वैः स्यात्सर्वलक्षणः ॥ ११ ॥**

सन्निपातेन सर्वलक्षणः स्यात् ।

**संकीर्णभोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ।**
**कोपिते सन्निपाते च जायंते मूर्ध्नि जंतवः ॥ १२ ॥**
**शिरसस्ते पिबंतोऽस्रं घोराः कुर्वंति वेदनाः ।**
**चित्तविभ्रंशजननीर्ज्वरः कासो बलक्षयः ॥ १३ ॥**
**रौक्ष्यशोफे व्यधच्छेददाहस्फुटनपूतिताः ।**
**कपाले तालुशिरसोः कंडूः शोषप्रमीलकः ॥ १४ ॥**
**ताम्राच्छसिंघाणकता कर्णनादश्च जंतुजे ।**

संकीर्णैराहारैः शिरसि क्लेदिते रुधिरे मांसे च सन्निपाते च कोपिते कृमयो मूर्ध्नि जायंते । तेच मूर्ध्नो रक्तं पिबंतो दारुणाः पीडा मनोविभ्रंशकारिणीर्जनयंति ज्वरादयश्च स्युः । तथा कपाले तालुशिरसोः कंड्वाद्याः स्युः । तथा ताम्राच्छसिंघाणकत्वं कर्णनादश्च कृमिजे स्यात् ।

**वातोल्बणाः शिरःकंपं तत्संज्ञं कुर्वते मलाः ॥१५॥**

वाताधिका दोषाः शिरःकंपं शिरःकंपाख्यं कुर्वते ।

**पित्तप्रधानैर्वाताद्यैः शंखे शोफः सशोणितैः ।**
**तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १६ ॥**
**तिक्तास्यः पीतवदनः क्षिप्रकारी स शंखकः ।**
**त्रिरात्राज्जीवितं हंति सिध्यत्यप्याशु साधितः १७**

पित्ताधिकैर्दोषैः सरक्तैः शंखे शोफोऽतिदाहादयश्च स्युः । स

च शंखस्तिक्तास्यः पीतवर्णमुखः क्षिप्रकारी च स्यात् । तिक्तं तिक्तस्वादमास्यं यस्मिन् शंखके सः । एवमन्यदपि योज्यम् । स चानुपक्रांतस्त्रिरात्रेण जीवितं हरति । शीघ्रं च चिकित्सितः सिध्यत्यपि । अपिशब्दात् कदाचिन्न सिध्यति ।

**पित्तानुबद्धः शंखाक्षिभ्रूललाटेषु मारुतः ।**
**रुजं सस्पंदनां कुर्यादनुसूर्योदयोदयाम् ॥ १८ ॥**
**आमध्याह्नं विवर्धिष्णुः क्षुद्वतः सा विशेषतः ।**
**अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परम् ॥ १९॥**
**सूर्यावर्तः स**

पित्तानुरुद्धो मारुतः शंखादिषु रुजं सस्पंदनां कुर्यात् । किंभूतां रुजम् । अनुसूर्योदयं उदयो यस्याः सा ताम् । आमध्याह्नं मध्याह्नं मर्यादीकृत्य वर्धनशीला सा पीडा बुभुक्षितस्य विशेषेण । तथाऽनियतशीतोष्णसुखा । अतो मध्याह्नात् परं शमं गच्छति स इत्येवं सूर्यावर्त उक्तः ।

**इत्युक्ता दश रोगाः शिरोगताः ।**

दशैते मूर्धगता रोगा उक्ताः ।

**शिरस्येवं च वक्ष्यंते कपाले व्याधयो नव ॥ २० ॥**

शिरस्येव कपाले नव रोगा भणिष्यंते ।

**कपाले पवने दुष्टे गर्भस्थस्याऽपि जायते ।**
**सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥ २१ ॥**

कपाले पवने दुष्टे गर्भस्थितस्याऽपि नीरुजः शोफस्तत्सवर्णः कायसमानवर्णो जायते । तमुपशीर्षकाख्यं रोगं जानीयात् ।

**यथादोषोदयं ब्रूयात् पिटिकार्बुदविद्रधीन् ।**

पिटिकादीन् त्रीन् यथादोषोदयं ब्रूयात् ।

**कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजंतुभिः ॥२२॥**
**कंगुसिद्धार्थकनिभाः पिटिकाः स्युररुंषिकाः ।**

कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजंतुभिः कंगुसिद्धार्थकफलरूपाः पिटिका अरुंषिकाः स्युः ।

**कंडूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः ॥ २३ ॥**
**सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ।**

कंड्वादिकृत् त्वचः स्फुटनं सुसूक्ष्मं यत् तद्दारुणकं कफवाताभ्यां विद्यात् ।

**रोमकूपानुगं पित्तं वातेन सह मूर्छितम् ॥ २४ ॥**
**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ।**
**रोमकूपान् रुणद्ध्यस्य तेनान्येषामसंभवः ॥ २५ ॥**
**तदिंद्रलुप्तं रूढ्यां च प्राहुश्चाचेति चापरे ।**

पित्तं वातेन सह मूर्छितं रोमकूपानुगतं रोमाणि प्रच्यावयति । ततः श्लेष्मा रक्तसहितो रोमकूपान् रुणद्धि । तेन कारणेनास्येंद्रलुप्तवतोऽन्येषां रोम्णामनुत्पत्तिः । तदेतदिंद्रलुप्तं रूढ्यां चाचेत्यन्य आहुः ।

**खलतेरपि जन्मैवं सदनं तत्र तु क्रमात् ॥ २६ ॥**

एवमेतत्तुल्यरूपा खलतेरुत्पत्तिः । किंतु खलतौ क्रमेण केशानां शातो न त्विंद्रलुप्त इव सहसा ।

**सा वातादग्निदग्धाभा पित्तात्स्विन्नशिरावृता ।**
**कफाद्घनत्वग्वर्णाश्च यथास्वं निर्दिशेत् त्वचि॥२७॥**
**दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा ।**
**दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥२८॥**

सा खलतिर्वातादग्निदग्धाभा स्यात् । पित्तात् स्विन्नशिरावृता स्यात् । कफेन घनत्वक् । त्वचि वर्णाश्च यथादोषं निर्दिशेत् । सर्वैर्दोषैः सर्वाकृतिः सर्वलक्षणा खलतिः । नखप्रभाऽसाध्या स्यात् । अग्निदग्धतुल्यरोमरहिता सदाहा च या जायते साऽप्यसाध्या स्यात् ।

**शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः ।**
**केशान् सदोषः पचति पलितं संभवत्यतः ॥ २९ ॥**

शोकादिभिरुद्वतः शरीरोष्मा मूर्ध्नि दोषैः सहितः केशान् पचति । अतः पलितं जायते ।

**तद्वातात्स्फुटितं श्यावं खरं रूक्षं जलप्रभम् ।**
**पित्तात्सदाहं पीताभं कफात् स्निग्धं विवृद्धिमत् ३०**
**स्थूलं सुशुक्लं सर्वैस्तु विद्याद्व्यामिश्रलक्षणम् ।**

तच्च पलितं वातात् स्फुटितादिगुणं स्यात् । पित्तेन सदाहं पीतवर्णं कफात् स्निग्धं विवृद्धिमत् स्थूलं सुशुक्लं च । सर्वैस्तु दोषैः संकीर्णलक्षणं विद्यात् ।

**शिरोरुजोद्भवं चान्यद्विवर्णं स्पर्शनासहम् ॥ ३१ ॥**

शिरोरुजोत्थं चापरं पलितं विवर्णं स्पर्शनासहं स्यात् ।

**असाध्या सन्निपातेन खलतिः पलितानि च ।**

खलतिः सन्निपातेनासाध्या । पलितानि च सन्निपातोत्थान्यसाध्यानि । दोषैः सर्वैः खलतिरसाध्येति प्रागुक्तमेव । इदं तु वचनं स्पष्टार्थमेवेति मन्ये । तथा सन्निपातोद्भूतानि पलितान्यसाध्यानीति ।

**शरीरपरिणामोत्थान्यपेक्षंते रसायनम् ॥ ३२ ॥**

शरीरपरिणामोद्भवानि तु पलितानि रसायनमपेक्षंत इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने शिरोरोगविज्ञानीयो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ।

अथैतच्चिकित्सितं व्याख्यातुमाह ।

**अथाऽतः शिरोरोगप्रतिषेधं व्याख्यास्यामः ।**
**शिरोऽभितापेऽनिलजे वातव्याधिविधिं चरेत् ।**

पवनजे शिरोऽभितापे वातव्याधिचिकित्सितं कुर्यात् ।

**घृताभ्यक्तशिरा रात्रौ पिबेदुष्णपयोनुपः ॥ १ ॥**
**माषान् मुद्गान् कुलत्थान्वा तद्वत्खादेत् घृतान्वितान्**
**तैलं तिलानां कल्कं वा क्षीरेण सह पाययेत् ॥ २ ॥**
**पिंडोपनाहस्वेदाश्च मांसधान्यकृता हिताः ।**
**वातघ्नदशमूलादिसिद्धक्षीरेण सेचनम् ॥ ३ ॥**
**स्निग्धं नस्यं तथा धूमः शिरःश्रवणतर्पणम् ।**

अभ्यक्तशिरा रात्रौ घृतं पिबेत् । पश्चादुष्णं क्षीरं पिबेत् । माषादीन् घृतान्वितान् खादेत्तद्वदुष्णपयोनुपः सन् तिलानां तैलं कल्कं वा क्षीरेण सह पाययेत् । पिंडस्वेदा उपनाहस्वेदाश्च मांसयुक्तैर्धान्यैः कृता हिताः । वातहरदशमूलादिना सिद्धेन क्षीरेण सेचनं हितम् । स्निग्धं च नस्यादिकं हितम् ।

**वरणादौ गणे क्षुण्णे क्षीरमर्धोदकं पचेत् ॥ ४ ॥**
**क्षीरावशिष्टं तच्छीतं मथित्वा सारमाहरेत् ।**
**ततो मधुरकैः सिद्धं नस्यं तत्पूजितं हविः ॥ ५ ॥**

वरणसैर्यकेत्यादिगणे जर्जरिते क्षीरमर्धोदकं पचेत् । तत्क्षीरावशिष्टं शितीभूतं मथित्वा सारमाहरेत् । अनंतरं तद्धृतं मधुरद्रव्यैः पक्कं नस्यं श्रेष्ठम् ।

**वर्गेऽत्र पक्कं क्षीरे च पेयं सर्पिः सशर्करम् ।**

अस्मिन्नेव वरणादौ वर्गे क्षीरे च घृतं पक्कं सशर्करं पेयम् ।

**कार्पासमज्जात्वङ्मुस्तासुमनःकोरकाणि च ॥ ६ ॥**
**नस्यमुष्णांबुपिष्टानि सर्वमूर्धरुजापहम् ।**

कार्पासमज्जादीन्युष्णजलेन पिष्टानि सर्वमूर्धरुजाघ्नं नस्यम् ।

**शर्कराकुंकुमश्टतं घृतं पित्तासृगन्वये ॥ ७ ॥**
**प्रलेपः सघृतैः कुष्ठकुटिलोत्पलचंदनैः ।**
**वातोद्रेकभयाद्रक्तं न चास्मिन्नवसेचयेत् ॥ ८ ॥**
**इत्यशांतौ जले दाहः कफे चोष्णं यथोदितम् ।**

शर्कराकुंकुमशृतं सर्पिः पित्तासृगुत्थे हितम् । कुष्ठादिभिः सघृतैः प्रलेपः । कुटिलं तगरम् । अस्मिंश्च वातोद्रेकभयाल्लोहितं नावसेचयेत् । एवमप्यनुपशमे वायौ दाह इष्टः । कफे च यथोक्तमुष्णमिष्टम् ।

**अर्धावभेदकेप्येषा यथादोषान्वयात्क्रिया ॥ ९ ॥**

अर्धावभेदकेप्येषा एव क्रिया दोषान्वयाद्दोषानुरोधाच्च यथास्वं कार्या ।

**शिरीषबीजापामार्गमूलं नस्यं बिडान्वितम् ।**
**स्थिरारसो वा लेपे तु प्रपुन्नाटोऽम्लकल्कितः॥ १०**

शिरीषबीजादिभिर्नस्यं स्यात् । शालिपर्णीक्वाथो वा नस्यम् । प्रपुन्नाटबीजमम्लेन पिष्टं लेपः ।

**सूर्यावर्ते तु तस्मिंस्तु सिरयापहरेदसृक् ।**

सूर्यावर्तेऽप्येष एवोपक्रमः । तस्मिंश्च सिरया रक्तं स्रावयेत् ।

**शिरोऽभितापे पित्तोत्थे स्निग्धस्य व्यधयेत्सिराम्**
**शीताः शिरोमुखालेपसेकशोधनवस्तयः ।**
**जीवनीयश्टते क्षीरसर्पिषी पाननस्ययोः ॥ १२ ॥**

मूर्धाभितापे पित्तसंभवे स्निग्धस्य सतः सिरां मोक्षयेत् । तथा शिरोमुखालेपादयः शीता हिताः । जीवनीयैः शृते क्षीरघृते पाननस्ययोर्हिते ।

**कर्तव्यं रक्तजेऽप्येतत् प्रत्याख्याय च शंखके ।**

रक्तजेऽप्येतच्चिकित्सितं कार्यम् । शंखके च प्रत्याख्यायैष एवोपक्रमः कार्यः ।

**श्लेष्माभितापेर्जीर्णाज्यस्नेहितः कटुकैर्वमेत्॥ १३॥**
**स्वेदप्रलेपनस्याद्या रूक्षतीक्ष्णोष्णभेषजैः ।**
**शस्यंते चोपवासोऽत्र निचये मिश्रमाचरेत्॥ १४॥**

श्लेष्मणा शिरोऽभितापे पुराणघृतेन स्नेहितः कटुकैर्वमेत् । स्वेदादयो रूक्षादिद्रव्यैः शस्यंते । उपवासश्चात्र हितः । निचये मिश्रमाचरेत् । सन्निपाते मिश्रमाचरेत्

**कृमिजे शोणितं नस्यं तेन मूर्छंति जंतवः ।**
**मत्ताः शोणितगंधेन निर्यांति घ्राणवक्त्रयोः॥ १५॥**
**सुतीक्ष्णनस्यधूमाभ्यां कुर्यान्निर्हरणं ततः ।**

कृमिजे शोणितं नस्यं देयम् । तेन शोणितेनास्य जंतवो मूर्छंति । रक्तगंधेन च मत्ता घ्राणेन वक्त्रेण च निर्गच्छंति । अनंतरं तीक्ष्णनस्यधूमाभ्यां तेषां कृमीणां निर्हरणं कुर्यात् ।

**विडंगस्वर्जिकादंतीहिंगुगोमूत्रसाधितम् ॥ १६ ॥**
**कटुनिंबेंगुदीपीलुतैलं नस्यं पृथक् पृथक् ।**

विडंगादिभिः साधितं सर्षपतैलं निंबतैलमिंगुदीतैलं पीलुतैलं वा पृथक् पृथक् नस्यं हितम् ।

**अजामूत्रद्रुतं नस्ये कृमिजित् कृमिजित्परम्॥ १७॥**

कृमिजिद् विडमजामूत्रेण द्रुतं नस्ये प्रयुक्तं कृमिजित्स्यात् ।

**पूतिमत्स्ययुतैः कुर्याद् धूमं नावनभेषजैः ।**

पूतिमत्स्यान्वितैर्नस्यद्रव्यैर्धूमं कुर्यात् ।

**कृमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ॥१८॥**

अत्र च रक्तं न विस्रावयेत् । कुतो हेतोरित्याह । कृमिभिः पीतरक्तत्वात् ।

**वाताभितापविहितः कंपे दाहाद्विना क्रमः ।**

कंपे वाताभितापोक्तो विधिर्दाहाद्विना ।

**नवे जन्मोत्तरं जाते योजयेदुपशीर्षके ॥ १९ ॥**
**वातव्याधिक्रियां पक्के कर्मविद्रधिचोदितम् ।**

उपशीर्षके नवे जन्मोत्तरं जाते वातव्याधिचिकित्सितं कुर्यात् । पक्के विद्रधिविहितं कर्म कुर्यात् ।

**आमपक्के यथायोग्यं विद्रधीपिटिकार्बुदे ॥ २० ॥**

आमे पक्के च विद्रधौ पिटिकायामर्बुदे च यथास्वं कर्म कुर्यात् ।

**अरुंषिकाजलौकोभिर्हृतास्रा निंबवारिणा ।**
**सिक्ता प्रभूतलवणैर्लिपेदश्वशकृद्रसैः ॥ २१ ॥**
**पटोलनिंबपत्रैर्वा सहरिद्रैः सुकल्कितैः ।**
**गोमूत्रजीर्णपिण्याककृकवाकुमलैरपि ॥ २२ ॥**

अरुंषिका जलौकोभिर्निःसुतरक्ता निंबजलेन सिक्ता वाजिशकृद्रसैः प्रभूतलवणैर्लिपेत् । पटोलनिंबपत्रैर्निशान्वितैः सुपिष्टैर्वा गोमूत्रादिभिर्वा । कृकवाकुः कुक्कुटः ।

**कपालभृष्टं कुष्टं वा चूर्णितं तैलसंयुतम् ।**
**रूंषिकालेपनं कंडूक्लेददाहार्तिनाशनम् ॥ २३ ॥**

कुष्टं चूर्णितं कपालभृष्टं तैलसंयुतं रूंषिकालेपनं कंड्वादिहितम् ।

**मालतीचित्रकाश्वघ्ननक्तमालप्रसाधितम् ।**
**वचारूंषिकयोस्तैलमभ्यंगः क्षुरघृष्टयोः ॥ २४ ॥**

मालत्यादिप्रसाधितं तैलं वचारूंषिकयोः क्षुरघृष्टयोरभ्यंगः ।

**अशांतौ शिरसः शुद्ध्यै यतेत वमनादिभिः ।**

अशांतौ सत्यां मूर्ध्नः शोधनाय वमनादिभिर्यतेत ।

**विध्येच्छिरां दारुणके लालायां शीलयेन्मृजाम्॥**
**नावनं मूर्ध्नि बस्तिं च लेपयेच्च समाक्षिकैः ।**
**प्रियालबीजमधुककुष्टमाषैः ससर्षपैः ॥ २६ ॥**
**लाक्षाशम्याकपत्रैडगजधात्रीफलैस्तथा ।**
**कोरदूषतृणक्षारवारिप्रक्षालनं हितम् ॥ २७ ॥**

दारुणके लालायां शिरां विध्येत् । मृजां शुद्धिं नस्यं मूर्ध्नि बस्तिं च शीलयेत् । प्रियालादिभिः समाक्षिकैर्लेपयेच्च । लाक्षादिभिः क्षौद्रयुतैर्लेपः कोद्रवतृणक्षारजलेन प्रक्षालनं हितम् ।

**इंद्रलुप्ते यथासन्नं सिरां विध्वा प्रलेपयेत् ।**
**प्रच्छाय गाढं कासीसमनोह्वातुत्थकोपणैः ॥२८॥**
**वन्यामरतरुभ्यां वा गुंजामूलफलैस्तथा ।**
**तथा लांगलिकामूलैः करवीररसेन वा ॥ २९ ॥**
**सक्षौद्रक्षुद्रवार्ताकस्वरसेन रसेन वा ।**
**धत्तूरकस्य पत्राणां भल्लातकरसेन वा ॥ ३० ॥**
**अथवा माक्षिकहविस्तिलपुष्पत्रिकंटकैः ।**

इंद्रलुप्ते यथासन्ने देशे सिरां विध्वा वारिणा प्रच्छाय प्रच्छादनं कृत्वा कासीसादिभिर्लेपयेत् । वन्यदेवदारुभ्यां वा लेपयेत् ।

**तैलाक्ता हस्तिदंतस्य मषी वा चौषधं परम् ॥ ३१ ॥**

हस्तिदंतमषी तैलाक्ता वा चौषधं परम् ।

**शुक्लरोमोद्गमे तद्वन्मषी मेषविषाणजा ।**

सितरोमोद्गमे मेषविषाणजा मषी तैलाक्ता श्रेष्ठा ।

**वर्जयेद्वारिणा सेकं यावद्रोमसमुद्भवः ॥ ३२ ॥**

जलसेकं च वर्जयेत् यावद्रोमोद्भूतिः ।

**खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम् ।**
**नस्यवक्त्रशिरोभ्यंगप्रदेहैः समुपाचरेत् ॥ ३३ ॥**

खलत्यादिषु शोधितमातुरं नस्यादिभिरुपाचरेत् ।

**सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ।**
**मासं वा निंबजं तैलं क्षीरभुङ्नावयेद्यतिः॥३४॥**

बृहत्यादिभिर्जीवनीयैश्च पक्कं तैलं नस्यं हितम् । निंबोद्भवं वा तैलं मासं क्षीरभुङ्नावयेद्यतिः संयमी ब्रह्मचर्यपरः ।

**नीलीशिरीषकोरंटभृंगस्वरसभावितम् ।**
**शैल्वक्षतिलरामाणां बीजं काकांडकीसमम्॥३५॥**
**पिष्ट्वाऽजपयसा लोहाल्लिप्तादर्कांशुतापितात् ।**
**तैलं श्रृतं क्षीरभुजो नावनात् पलितांतकृत् ॥**

नील्यादिस्वरसेन भावितं शैल्वादीनां बीजं काकांडकीतुल्यं छागदुग्धेन पिष्ट्वा लोहाल्लिप्ताद् रविरश्मिभिस्तापितात्तैलं स्रुतं क्षीराशिनो नस्यं पलितांतकरम् ।

**क्षीरात्सहचराद् भृंगरजसः सौरसाद्रसात् ।**
**प्रस्थैस्तैलस्य कुडवः सिद्धो यष्टीपलान्वितः ३७**
**नस्यं शैलोद्भवे भांडे श्रृंगे मेषस्य वा स्थितः ।**

क्षीरात्प्रस्थेन सहचररसात्प्रस्थेन भृंगराजरसात्प्रस्थेन सुरसारसात्प्रस्थेन तैलस्य कुडवः पक्को मधुयष्टीपलयुतः शैले भांडे मेषश्रृंगे वा स्थितो नस्यम् ।

**क्षीरेण श्लक्ष्णपिष्टौ वा दुग्धिकाकरवीरकौ॥३८॥**
**उत्पाट्य पलितं देयावाशये पलितापहौ ।**

दुग्धिकाकरवीरकौ क्षीरेण सूक्ष्मपिष्टौ पलितमुत्पाट्य तत्स्थाने देयौ पलितघ्नौ ।

**क्षीरं प्रियालं यष्ट्याह्वं जीवनीयो गणस्तिलाः ३९**
**कृष्णाः प्रलेपो वक्त्रस्य हरील्लोमवलीहितः ।**

क्षीरादयो वक्त्रस्य लेप इंद्रलुप्तवलीषु हितः ।

**तिलाः सामलकाः पद्मकिंजल्को मधुकं मधु ॥४०॥**
**बृंहयेच्च रजेच्चैतत् केशान्मूर्धप्रलेपनात् ।**

तिलादिकं शिरःप्रलेपनात् केशान् रजेत् पुष्णीयाच्च ।

**मांसी कुष्टं तिलाः कृष्णाः सारिवा नीलमुत्पलम् ॥**
**क्षौद्रं च क्षीरपिष्टानि केशसंवर्धनं परम् ।**

मांसादीनि क्षीरपिष्टानि परं केशसंवर्धनानि ।

**अयोरजो भृंगरजस्त्रिफला कृष्णमृत्तिका ॥ ४२ ॥**
**स्थितमिक्षुरसे मासं समूलं पलितं रजेत् ।**

लोहचूर्णादिकमिक्षुरसे मासं स्थितं समूलं पलितं रजेत् ।

**माषकोद्रवधान्याम्लैर्यवागूस्त्रिदिनोषिता ॥ ४३ ॥**
**लोहशुक्लोत्कटा पिष्टा बलाकामपि रंजयेत् ।**

माषादिभिर्यवागूस्त्रिदिवसोषिता लोहशुक्लोत्कटा पिष्टा बलाकामपि रंजयेत् । किंपुनः पलितं न हन्ति ।

**प्रपौंडरीकमधुकपिप्पलीचंदनोत्पलैः ॥ ४४ ॥**
**सिद्धं धात्रीरसे तैलं नस्येनाभ्यंजनेन च ।**
**सर्वान् मूर्धगदान् हंति पलितानि च शीलितम् ४५**

प्रपौंडरीकादिभिर्धात्रीरसे सिद्धं तैलं नावनेनाभ्यंजनेन च सर्वान् शिरोरोगान् हंति । शीलितं पलितानि च हंति ।

**वरीजीवंतिनिर्यासपयोभिर्यमकं पचेत् ।**
**जीवनीयैश्च तन्नस्यं सर्वजत्रूर्ध्वरोगजित् ॥४६ ॥**

शतावरीजीवंतिकाथेन क्षीरेण जीवनीयैश्च यमकं पचेत् । तन्नस्यं सर्वजत्रूर्ध्वरोगजित् ।

**मयूरं पक्षपित्तांत्रपादविट्तुंडवर्जितम् ।**
**दशमूलबलारास्नामधुकैस्त्रिपलैर्युतम् ॥ ४७ ॥**
**जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।**
**कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगजित् ॥ ४८ ॥**
**तदभ्यासीकृतं पानं वस्त्यभ्यंजननावनैः ।**

मयूरं पक्षादिवर्जितं त्रिपलप्रमाणे दशमूलादिभिर्युतं जले पक्त्वा तस्मिन् जले क्षीरसमं घृतप्रस्थं पचेत् । एतन्मायूराख्यं घृतं कल्कितैर्मधुरद्रव्यैरभ्यस्तं सर्वजत्रूर्ध्वरोगजित् । पानादिभिरभ्यस्तं तद्घृतं सर्वजत्रूर्ध्वरोगजित् ।

**एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ॥ ४९ ॥**
**चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ।**
**जीवंतीत्रिफलामेदामृद्वीकादिपरूषकैः ॥ ५० ॥**
**समंगाचविकाभार्गीकाश्मरीकर्कटाह्वयैः ।**
**आत्मगुप्तामहामेदातालखर्जूरमुस्तकैः ॥ ५१ ॥**
**मृणालबिसखर्जूरयष्टीमधुकजीवकैः ।**
**शतावरीविदारीक्षुबृहतीसारिवायुगैः ॥ ५२ ॥**
**दूर्वाश्वदंष्ट्रर्षभकशृंगाटककसेरुकैः ।**
**रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करैः ॥ ५३ ॥**
**पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः ।**
**मधूकाक्षोटवाताममुंजाताभिषुकैरपि ॥ ५४ ॥**
**महामायूरमित्येतन्मायूरादधिकं गुणैः ।**
**धात्विंद्रियस्वरभ्रंशश्वासकासार्दितापहम् ॥ ५५ ॥**
**योन्यसृक्शुक्रदोषेषु शस्तं वंध्यासुतप्रदम् ।**

एतेनैव क्वाथेन घृतप्रस्थं विपाचयेत् । चतुर्गुणेन क्षीरेणैभिर्जीवंत्यादिभिः कल्कैः कार्षिकैरेतन्महामयूरं मायूराद्गुणैरधिकं धात्वादिभ्रंशघ्नं च । योन्यादिदोषेषु शस्तम् । वंध्यासुतप्रदम् ।

**आखुभिः कर्कटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ ५६ ॥**

मूषिकादिभिरेवं कल्पयेत् ।

**जत्रूर्ध्वजानां व्याधीनामेकत्रिंशशतद्वयम् ।**
**परस्परमसंकीर्णं विस्तरेण प्रकाशितम् ॥ ५७ ॥**

जत्रूर्ध्वानां रोगाणां शतद्वयमेकत्रिंशदधिकमन्योऽन्यमसंकीर्णं विस्तरेण प्रकाशितम् ।

**ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ।**
**मूलप्रहारिणस्तस्माद् रोगान् शीघ्रतरं जयेत् ॥५८॥**

ऊर्ध्वमूलमधःशाखं मुनयश्च यस्मात् पुरुषं जानंति तस्मान्मूलापहारिणो रोगान् शीघ्रतरं जयेत् ।

**सर्वेंद्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।**
**तेन तस्योत्तमांगस्य रक्षायामादृतो भवेत् ॥ ५९ ॥**

यस्मादस्मिन्नुत्तमांगे सर्वेंद्रियाणि यतश्चात्र प्राणाः संश्रितास्तस्मादुत्तमांगस्य रक्षायां यत्नवता भाव्यम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने शिरोरोगप्रतिषेधो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पंचविंशोऽध्यायः ।

अथ क्रमप्राप्तं व्रणविज्ञानीयप्रतिषेधं व्याचिख्यासुराह ।

**अथाऽतो व्रणविज्ञानीयप्रतिषेधं व्याख्यास्यामः ।**
**व्रणो द्विधा निजागंतुदुष्टशुद्धविभेदतः ।**
**निजो दोषैः शरीरोत्थैरागंतुर्बाह्यहेतुजः ॥ १ ॥**
**दोषैरधिष्ठितो दुष्टः शुद्धस्तैरनधिष्ठितः ।**

व्रणो द्विःप्रकारो निजागंतुभेदाद् दुष्टशुद्धभेदाच्च । निजो व्रणः शारीरदोषैर्भवति । आगंतुर्बाह्यहेतूद्भवः । दोषैरधिष्ठितो दुष्टः । शुद्धो यो दोषैरनधिष्ठितः ।

**संवृतत्वं विवृतता काठिन्यं मृदुताऽपि वा ॥ २ ॥**
**अत्युत्सन्नावसन्नत्वमत्यौष्ण्यमतिशीतता ।**
**रक्तत्वं पांडुता कार्ष्ण्यं पूतिपूयपरिस्रुतिः ॥ ३ ॥**
**पूतिमांसस्सिरास्नायुछन्नतोत्संगितातिरुक् ।**
**संरंभदाहश्वयथुकंड्वादिभिरुपद्रुतिः ॥ ४ ॥**
**दीर्घकालानुबंधश्च विद्याद्दुष्टव्रणाकृतिम् ।**

संवृतत्वादि यो व्रणस्तं दुष्टव्रणाकृतिं विद्यात् ।

**स पंचदशधा दोषैः सरक्तैः**

स च पंचदशप्रकारो रक्तसहितैर्दोषैः स्यात् । तत्र पृथग् दोषैस्त्रयः । संसर्गजास्त्रयः । सन्निपातेनैक इति । एवंभूता रक्तसहितैः सप्त । एवं चतुर्दश । रक्तेन केवलेनैक इति पंचदश । ननु प्रागभ्यधायि । शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् । रक्तोरक्ताच्च पाकः स्यादित्यादि । तदिहैकदोषजत्वं द्विदोषजत्वं रक्तरहितत्वं चोच्यमानं पूर्वापरव्याहतं स्यात् । अत्रोच्यते । काससंप्राप्तिवदत्र न्यायो बोध्यः । तथा ह्येकदोषजेऽपि कासे दोषांतरस्यानुबंधत्वमुररीकृत्य द्विदोषजानुसारेण यथोपक्रमस्तथेहापीति नात्र पूर्वापरव्याहतत्वम् ।

**तत्र मारुतात् ॥ ५ ॥**
**श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि च।**
**मस्तुमांसपुलाकांबुतुल्यतन्वल्पसंस्रुतिः ॥ ६ ॥**
**निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते ।**

तेषु मध्ये मारुताच्छ्यावादिगुणो मस्त्वादितुल्यतन्वल्पविस्रावस्तथा निर्मांसादिगुणः स्यात् ।

**पित्तेन क्षिप्रजः पीतोऽनीलः कपिलपिंगलः॥७॥**
**मूत्रकिंशुकभस्मांबुतैलोभोष्णबहुस्रुतिः ।**
**क्षारोक्षितक्षतसमव्यथो रागोष्मपाकवान् ॥ ८ ॥**

पित्तेन व्रणः क्षिप्रोद्भवः पीतादिगुणो मूत्रादिसदृशबहुस्रावः क्षारोक्षिततुल्यरुजो रागोष्मपाकवान् ।

**कफेन पांडुः कंडूमान् बहुश्वेतघनस्रुतिः ।**
**स्थूलौष्टः कठिनः स्नायुसिराजालस्ततोल्परुक् ९**

कफेन पांडुः कंडूयुतो बहुशुक्लघनस्रावः स्थूलौष्टः कठिनस्तथा स्नायुसिराजालस्ततोऽल्परुजः ।

**प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत् ।**
**वाजिस्थानसमो गंधे युक्तो लिंगैश्च पैत्तिकैः १०**

रक्तेन विद्रुमलोहितः सरक्तं पूयं स्रवेत् । तुरगस्थानतुल्यो गंधेन तथा पैत्तिकैर्लिंगैर्युतः ।

**द्वाभ्यां त्रिभिश्च सर्वैश्च विद्याल्लक्षणसंकरात् ।**

द्वाभ्यां त्रिभिः सर्वैश्च लक्षणानां संकरात् संसर्गजादीन् विद्यात् ।

**जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्टपिटिकः समः११**
**किंचिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः ।**

जिह्वाप्रभादिगुणो व्रणोऽनुपद्रवः शुद्धः स्यात् ।

**त्वगामिषशिरास्नायुसंध्यस्थीनि व्रणाशयाः॥१२॥**
**कोष्ठो मर्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम् ।**

त्वगादीनि व्रणाश्रयास्तथा कोष्ठो मर्म चेत्यष्टावुत्तरोत्तरं दुःसाध्यानि ।

**सुसाध्यः सत्त्वमांसाग्निवयोबलवति व्रणः ॥१३॥**
**वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः ।**
**तथास्फिक्पायुमेढ्रोष्ठपृष्ठांतर्वक्त्रगंडयोः ॥ १४ ॥**

सत्त्वादिमति व्रणः सुसाध्यो वृत्तादिगुणस्तथा स्फिगादिषु च सुसाध्यः ।

**कृच्छ्रसाध्योक्षिदशननासिकापांगनाभिषु ।**
**सेवनीजठरश्रोत्रपार्श्वकक्षास्तनेषु च ॥ १५ ॥**

अक्ष्यादिषु स्थितः कृच्छ्रसाध्यः ।

**फेनपूयानिलवहः शल्यवानूर्ध्वनिर्वमी ॥**
**भगंदरोंतर्वदनस्तथा कक्ष्यस्थिसंश्रितः ॥ १६ ॥**
**कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।**
**व्रणाः कृच्छ्रेण सिद्ध्यंति येषां च स्युर्व्रणे व्रणाः॥**

फेनादिवहः शल्ययुक्त ऊर्ध्वनिर्वमी तथा भगंदरोंऽतर्मुखस्तथा कक्ष्यस्थिसंश्रितस्तथा कुष्ठिमतादीनां व्रणाः कृच्छ्रेण सिद्ध्यंति । तथा येषां व्रणे व्रणाः स्युस्ते च दुःसाध्याः ।

**नैव सिद्ध्यंति वीसर्पज्वरातीसारकासिनाम् ।**
**पिपासूनामनिद्राणां श्वासिनामविपाकिनाम् ॥१८॥**
**भिन्ने शिरःकपाले वा मस्तुलुंगस्य दर्शने ।**

विसर्पज्वरादिमतां व्रणा नैव सिद्ध्यंति । शिरःकपाले च भिन्ने मस्तुलुंगदर्शने व्रणो न सिद्ध्यति ।

**स्नायुक्लेदात्सिराच्छेदाद्गांभीर्यात्क्रमिभक्षणात् १९**
**अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्कितात् ।**
**मिथ्याबंधादतिस्नेहाद्रौक्ष्याद्रोमातिघट्टनात् ॥२०॥**
**क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ।**
**मद्यपानाद्दिवास्वापाद् व्यवायाद्रात्रिजागरात् २१**
**व्रणो मिथ्योपचाराच्च नैव साध्योऽपि रोहति ।**

स्नायुक्लेदादेः कारणात् साध्योऽपि व्रणो न सिद्ध्यति ।

**कपोतवर्णप्रतिमा यस्यांताः क्लेदवर्जिताः ॥ २२ ॥**
**स्थिराश्चिपिटिकावंतो रोहतीति तमादिशेत् ।**

यस्य कपोतवर्णाभाः प्रक्लेदवर्जिता अंतास्तथा चिपिटिकावंतोऽम्लानिप्रायास्तं व्रणं रोहतीति निर्दिशेत् ।

**अथाऽत्र शोफावस्थायां यथासन्नं विशोधनम् २३**
**योज्यं शोफो हि शुद्धानां व्रणश्चाशु प्रशाम्यति ।**

अत्र च व्रणे शोफावस्थायां सत्यां यथासन्नमूर्ध्वमधो वा शोधनं वमनं विरेचनं वा योज्यम् । शुद्धानां हि शोफो व्रणश्च शीघ्रं शाम्यति ।

**कुर्याच्छीतोपचारं तु शोफावस्थस्य संततम् ॥ २४ ॥**
**दोषाग्निरग्निवत्तेन प्रयाति सहसा शमम् ।**

शोफावस्थस्य सततं शीतोपचारं कुर्यात् । तेन शीतोपचारेण कृतेन सता दोषाग्निरग्निरिव सहसैव शमं याति ।

**शोफे व्रणे च कठिने विवर्णे वेदनान्विते ॥ २५ ॥**
**विषयुक्ते विशेषेण जलौकाद्यैर्हरेदसृक् ।**
**दुष्टास्रेऽपगते सद्यः शोफरागरुजां शमः ॥ २६ ॥**

शोफे व्रणे च कठिनादिगुणे विशेषेण जलौकोप्रभृतिभिरस्रं हरेत् । यतो दुष्टरक्तेऽपनीते सद्य एव शोफादिशमः स्यात् ।

**हृते हृते च रुधिरे सुशीतैः स्पर्शवीर्ययोः ।**
**सुश्लक्ष्णैस्तदहःपिष्टैः क्षीरेक्षुस्वरसद्रवैः ॥ २७ ॥**
**शतधौतघृतोपेतैर्मुहुरन्यैरशोषिभिः ।**
**प्रतिलोमं हितो लेपः सेकाभ्यंगाश्च तत्कृताः॥२८॥**

पुनः पुनः स्राविते च रक्ते सति स्पर्शवीर्ययोः सुष्ठु शीतद्रव्यैः सुश्लक्ष्णैस्तस्मिन्नेवाहनि पिष्टैर्नतु पर्युषितैस्तथा क्षीरादिद्रवैः शतधौतघृतयुक्तैर्मुहुरपरैरशोषिभिर्लेपो हितः । प्रतिलोमं नत्वनुलोमं सेकाभ्यंगाश्च पूर्वोक्तैः कृता हिताः ।

**न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः ।**
**प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम् ॥ २९ ॥**

न्यग्रोधादित्वग्भिः प्रदेहो भूरिघृतः परं शोफनिर्वापणः ।

**वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ।**
**स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम्॥३०॥**
**आनूपवेसवाराद्यैः स्वेदः सोमास्तिलाः पुनः ।**
**भृष्टा निर्वापिताः क्षीरे तत्पिष्टा दाहरुग्घराः ॥ ३१॥**

वातोल्बणानां तथा स्तब्धानां कठिनानां तीव्ररुजां स्रुतरक्तानां शोफानां व्रणानामपि चेदक्स्वरूपाणां कुट्टितघृतादिसंस्कृतानूपमांसाद्यैः स्वेदो हितः । अतसीयुक्तास्तिला भृष्टा दुग्धे निर्वापितास्तेनैव क्षीरेण पिष्टा दाहरुजाघ्नाः ।

**स्थिरान् मंदरुजः शोफान् स्नेहैर्वातकफापहैः ।**
**अभ्यज्य स्वेदयित्वा च वेणुनाड्या शनैः शनैः ३२**
**विम्लापनार्थं मृद्नीयात् तलेनांगुष्ठकेन वा ।**
**यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३३ ॥**

शोफान् स्थिरानल्पपीडान्वातकफघ्नैः स्नेहैर्म्रक्षयित्वा स्वेदयित्वा च वंशनाड्या विम्लापनार्थं शनैः शनैर्मलयेत् । तलेनांगुष्ठकेन वा मलयेत् । यवादिभिः सिद्धपिष्टैः प्रदेहयेत् ।

**विलीयते स चेन्नैवं ततस्तमुपनाहयेत् ।**
**अविदग्धस्तथा शांतिं विदग्धः पाकमश्नुते ॥ ३४॥**

एवं कृते यदि शोफो न विलीयते ततस्तमुपनाहयेत् । तथा कृते सत्यविदग्धः शोफः सन् शांतिं प्राप्नोति । विदग्धस्तु पच्यते ।

**सकोलतिलवल्लोमा दध्यम्ला सक्तुपिंडिका ।**
**सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ ३५ ॥**

बदरादियुता सक्तुपिंडिकाऽम्लदधियुता किण्वाद्यन्विता कोष्णा उपनाहे श्रेष्ठा ।

**सुपक्के पिंडिते शोफे पीडनैरुपपीडिते ।**
**दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ ३६ ॥**

शोफे सुपक्के ग्रथिते पीडनैर्द्रव्यैरुपपीडिते सति दारणार्हस्य सुकुमारस्य नरस्य दारणमिष्यते ।

**गुग्गुल्वतसिगोदंतस्वर्णक्षीरी कपोतविट् ।**
**क्षारौषधानि क्षाराश्च पक्कशोफविदारणम् ॥ ३७ ॥**

गुग्गुल्वादीनि तथा क्षारौषधानि क्षारविध्युक्तानि क्षाराश्च पक्कशोफविदारणं स्यात् । गोदंतो हरितालम् ।

**पूयगर्भानणुद्वारान् सोत्संगान्मर्मगानपि ।**
**निःस्नेहैः पीडनद्रव्यैः समंतात्प्रतिपीडयेत् ॥ ३८ ॥**

पूयगर्भान् सूक्ष्मद्वारान् सोत्संगान् मर्माश्रितान् स्नेहरहितैः पीडनद्रव्यैः परितः प्रतिपीडयेत् ।

**शुष्यंतं समुपेक्षेत प्रलेपं पीडनं प्रति ।**
**न मुखे चैनमालिंपेत् तथा दोषः प्रसिच्यते ॥ ३९॥**

पीडनं प्रति यो लेपस्तं शुष्यंतं समुपेक्षेत । मुखे चैनं व्रणं नालिंपेत् । तथा च एवं दोषः प्रसिच्यते निर्याति ।

**कलाययवगोधूममाषमुद्गहरेणवः ।**
**द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ४०**

कलायादयः पिच्छिलानां द्रव्याणां त्वचो मूलानि च प्रपीडनं स्यात् ।

**सप्तसु क्षालनाद्येषु सुरसारग्वधादिकौ ।**
**भृशं दुष्टे व्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ४१ ॥**

सप्तसु क्षालनादिषु क्षालनमालेपो घृतं तैलं रसक्रिया चूर्णो वर्तिश्चेति सप्त । तेषु सुरसादिरारग्वधादिश्चेति दुष्टव्रणे भृशं योज्यौ तथा मेहादिषु च ।

**अथवा क्षालनं क्राथः पटोलीनिंबपत्रजः ।**
**अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ४२ ॥**

अथवाऽविशुद्धे व्रणे पटोलीनिंबपत्रजः क्राथः क्षालने हितः । विशुद्धे तु व्रणे न्यग्रोधादित्वगुद्भवः क्राथः क्षालनादौ हितः ।

**पटोलीतिलयष्ट्याह्वत्रिवृद्दंतीनिशाद्वयम् ।**
**निंबपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ४३ ॥**

पटोलादिभिर्लेपः सैंधवयुतो व्रणशोधनः ।

**व्रणान् विशोधयेद्वर्त्या सूक्ष्मास्यान् संधिमर्मगान् ।**
**कृतया त्रिवृतादंतीलांगलीमधुसैंधवैः ॥ ४४ ॥**

व्रणान् सूक्ष्ममुखान्संधिमर्माश्रितान् वर्त्या त्रिवृतादिभिः कृतया विशोधयेत् ।

**वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।**
**यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ४५ ॥**

वाताभिभूतान् सास्रावान् दारुणवेदनान् यवादिभिर्धूपयेत् ।

**निर्वापयेद् भृशं शीतैः पित्तरक्तविषोल्बणान् ।**

पित्तादिकान् शीतैर्भृशं निर्वापयेत् ।

**शुष्काल्पमांसे गंभीरे व्रण उत्सादनं हितम् ॥ ४६ ॥**
**न्यग्रोधपद्मकादिभ्यामश्वगंधाबलानिलैः ।**
**अद्यान्मांसादमांसानि विधिनोपहितानि च ॥४७॥**
**मांसं मांसादमांसेन वर्धते शुद्धचेतसः ।**

व्रणे शुष्काल्पमांसे गंभीरे उत्सादनं हितम् । न्यग्रोधादिभिस्तथा मांसादानां प्राणिनां मांसानि सुष्ठु संस्कृतानि भक्षयेत् । यतः शुद्धमनसो मांसादमांसेन पिशितं वर्धते ।

**उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ४८ ॥**
**जातीमुकुलकासीसमनोह्वालपुराग्निकैः ।**

व्रणानामुत्सन्नमृदुमांसानां जातीमुकुलादिभिरवसादनं हितम् ।

**उत्सन्नमांसान् कठिनान् कंडूयुक्तांश्चिरोत्थितान् ४९**
**व्रणान्सुदुःखशोध्यांश्च शोधयेत्क्षारकर्मणा ।**

उत्सन्नमांसादिका व्रणास्तथा ये तु सुष्ठु दुर्विशोध्यास्तान् क्षारकर्मणा विशोधयेत् ।

**स्रवंतोऽश्मरिजामूत्रं ये चान्ये रक्तवाहिनः ॥ ५० ॥**
**छिन्नाश्च संधयो येषां यथोक्तैर्ये च शोधनैः ।**
**शोध्यमाना न शुद्ध्यंति शोध्याः स्युस्तेऽग्निकर्मणा५१**
**शुद्धानां रोपणं योज्यमुत्सादाय यदीरितम् ।**

अश्मरिजा व्रणा मूत्रं स्रवंतो ये चान्ये रक्तवाहिनो येषां च संधयश्छिन्ना ये च यथोक्तैः शोधनैः शोध्यमाना न शुद्ध्यंति तेऽग्निकर्मणा शोध्याः स्युः । यदुत्सादार्थं द्रव्यं कथितं तदेव शुद्धानां व्रणानां रोपणे योज्यम् ।

**अश्वगंधारुहारोध्रं कट्फलं मधुयष्टिका ॥ ५२ ॥**
**समंगाधातकीपुष्पं परमं व्रणरोपणम् ।**

अश्वगंधादिकं व्रणरोपणं परम् ।

**अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५३ ॥**
**कल्कं संरोहणं कुर्यात् तिलानां मधुकान्वितम् ।**

अपगतपूतिमांसानां मांसस्थानां व्रणानावमरोहतां तिलकल्कं समधुकं संरोहणं कुर्यात् ।

**स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ५४ ॥**
**सक्षौद्रनिंबपत्राभ्यां युक्तः संशोधनं परम् ।**
**पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः ५५**

एष तिलकल्कः स्निग्धादिगुणैः सर्वरोगजित् । स माक्षिकनिंबपत्राभ्यां युतस्तिलकल्कः परं शोधनम् । पूर्वाभ्यां क्षौद्रनिंबपत्राभ्यां सर्पिषा चाऽसौ तिलकल्को युतः शीघ्रसंरोहणः स्यात् ।

**तिलवद्यवकल्कं तु केचिदिच्छंति तद्विदः ।**

केचिद् व्रणस्वरूपाभिज्ञा यवकल्कं तिलकल्कवदिच्छंति ।

**सास्रपित्तविषागंतुगंभीरान्सोष्मणो व्रणान् ॥ ५६ ॥**
**क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ।**
**रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ ५७ ॥**

सास्रपित्तादीन् व्रणान् क्षीरयुक्तरोपणद्रव्यपक्केन घृतेन रोपयेत् । रोपणद्रव्यसिद्धेन तैलेन कफवातोत्थान् रोपयेत् ।

**काच्छीरोध्राभयासर्जसिंदूरांजनतुत्थकम् ।**
**चूर्णितं तैलमदनैर्युक्तं रोपणमुत्तमम् ॥ ५८ ॥**

काच्छ्यादिकं सौराष्ट्रीमृतसूक्ष्मरजीकृतं तैलं मदनैर्युक्तं श्रेष्ठं रोपणम् ।

**समानां स्थिरमांसानां त्वक्स्थानां चूर्ण इष्यते ।**

समानां व्रणानां स्थिरमांसानां त्वक्स्थानां चूर्णमिष्टम् ।

**ककुभोदुंबराश्वत्थजंबूकट्फलरोध्रजैः ॥ ५९ ॥**
**त्वचमाशु निगृह्णंति त्वक्चूर्णैश्चूर्णिता व्रणाः ।**

ककुभादिजैश्चूर्णैर्व्रणाश्चूर्णिताः शीघ्रमेव त्वचं निगृह्णंति ।

**लाक्षामनोह्वामंजिष्ठाहरितालनिशाद्वयैः ॥ ६० ॥**
**प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ।**

लाक्षादिभिर्घृतक्षौद्रसहितो लेपः परं त्वग्विशुद्धिकरः ।

**कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥ ६१ ॥**
**लेपः सगोमयरसः सवर्णकरणः परम् ।**

कालीयकादिभिर्लेपः सगोशकृद्रसः परं सवर्णकरणः ।

**दग्धो वारणदंतोंतर्धूमं तैलं रसांजनम् ॥ ६२ ॥**
**रोमसंजननो लेपस्तद्वत्तैलपरिप्लुता ।**
**चतुष्पान्नखरोमास्थित्वक्शृंगखुरजा मषी ॥६३॥**

वारणदंतोंतर्धूमं दग्धस्तैलं रसांजनं च लेपो रोमोद्भवकरस्तथैव तैलपरिप्लुता चतुष्पान्नखादिजा मषी पूर्वगुणा ।

**व्रणिनः शस्त्रकर्मोक्तं पथ्यापथ्यान्नमादिशेत् ।**

व्रणिनः शस्त्रकर्मविधिकथितं पथ्यापथ्यान्नमादिशेत् ।

**द्वे पंचमूले वर्गश्च वातघ्नो वातिके हितः ॥ ६४ ॥**
**न्यग्रोधपद्मकाद्यौ तु तद्वत्पित्तप्रदूषिते ।**
**आरग्वधादिः श्लेष्मघ्नः कफे मिश्रस्तु मिश्रके ६५**

द्वे पंचमूले तथा वर्गो वातघ्नो वाताधिके हितः । तथा पैत्तिके न्यग्रोधादिपद्मकादी हितौ । श्लैष्मिक आरग्वधादिः कफघ्नो हितः । मिश्रे तु मिश्र उपक्रमो हितः ।

**एभिः प्रक्षालनालेपघृततैलरसक्रियाः ।**
**चूर्णो वर्तिश्च संयोज्या व्रणे सप्त यथायथम्॥ ६६॥**

एभिः पूर्वोक्तैः प्रक्षालनादयः सप्त व्रणे सति यथास्वं योज्याः ।

**जातीनिंबपटोलपत्रकटुकादार्वीनिशासारिवा-**
**मंजिष्ठाभयसिद्धतुत्थमधुकैर्नक्ताह्वबीजान्वितैः ।**
**सर्पिःसाध्यमनेन सूक्ष्मवदना मर्माश्रिताः क्लेदिनो**
**गंभिराः सरुजो व्रणाः सगतयः शुद्ध्यंति रोहंति च**

जात्यादिभिः सर्पिः साध्यम् । अभयमुशीरमत्र । अनेन सर्पिषा सूक्ष्ममुखा मर्मस्थादयश्च व्रणाः शुद्ध्यंति रोहंति चेति । शार्दूलविक्रीडितम् ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने व्रणप्रतिषेधो नाम पंचविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

व्रणप्रक्रमात्सद्यो व्रणप्रतिषेधं व्याचिख्यासुराह ।

**अथाऽतः सद्योव्रणप्रतिषेधं व्याख्यास्यामः ।**
**सद्योव्रणा ये सहसा संभवंत्यभिघाततः ।**
**अनंतैरपि तैरंगमुच्यते जुष्टमष्टधा ॥ १ ॥**
**घृष्टावकृत्तविच्छिन्नप्रविलंबितपातितम् ।**
**विद्धं भिन्नं विदलितं**

अभिघातात्सहसैव ये सद्यो व्रणा जायंते । असंख्यैरपि तैर्व्रणैः शरीरं जुष्टमष्टधा कथ्यते । तानेवाष्टौ प्रकारानाह । घृष्टेत्यादि ।

अथैषामेव लक्षणान्याह ।

**तत्र घृष्टं लसीकया ॥ २ ॥**
**रक्तलेशेन वा युक्तं सप्लोषं छेदनात् स्रवेत् ।**
**अवगाढं ततः कृत्तं विच्छिन्नं स्यात्ततोऽपि च ॥३॥**
**प्रविलंबि सशेषेऽस्थि पतितं पातितं तनोः ।**
**सूक्ष्मास्यशल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥४॥**
**भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतम् ।**
**प्रहारपीडनोत्पेषात्सहास्थ्रा पृथुतां गतम् ॥ ५ ॥**

तेषु मध्ये घृष्टं लसीकया रक्तलेशेन वा युक्तं स्रवेत् । छेदनात्सप्लोषम् । तस्मादवगाढमवकृत्तं स्यात् । ततोप्यवगाढतरं विच्छिन्नं स्यात् । प्रविलंबि सशेषास्थि यत् पतितं यच्छरीरात् तत् पातितं स्यात् । सूक्ष्ममुखशल्यविद्धं यत्तद्विद्धं कथ्यते कोष्ठवर्जितम् । अन्यत्कोष्ठे यद्विद्धं तद्भिन्नमुच्यते । विदलितं तद् गद्यते यन्मज्जरक्तपरिप्लुतं प्रहारादिभिः सहास्थ्रा पृथुतां गतम् ।

**सद्यः सद्यो व्रणं सिंचेदथ यष्ट्याह्वसर्पिषा ।**
**तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ ६ ॥**

अथैवं व्रणस्वरूपतां ज्ञात्वा सद्य एवेति सद्यो व्रणं तीव्रव्यथं मधुयष्टीघृतेन कोष्णेन सिंचेत् । बलातैलेन वा कोष्णेन पुनः पुनः सिंचेत् ।

**क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।**
**कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ ७ ॥**

क्षतोष्मणश्च शांतये तत्कालनिर्गतस्य च कषायादयो लेपाद्याः शस्यंते ।

**सद्यो व्रणेष्वायतेषु संधानार्थं विशेषतः ।**
**मधुसर्पिश्च युंजीत पित्तघ्नीश्च हिमाः क्रियाः ॥८॥**

सद्यो व्रणेष्वायतेषु संधानार्थं विशेषेण माक्षीकं सघृतं युंजीत । तथा पित्तघ्नीश्च शीताः क्रिया हिताः ।

**ससंरंभेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।**
**उपवासो हितं भुक्तं प्रततं रक्तमोक्षणम् ॥ ९ ॥**

ससंरंभेषु व्रणेषूर्ध्वमधश्च शोधनं कार्यम् । तथोपवासो विधातव्यः । अवस्थावशात् पूर्वोक्तं भोजनं हितं तथा प्रततं रक्तस्रावणं हितम् ।

**घृष्टे विदलिते चैष सुतरामिष्यते विधिः ।**
**तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ १० ॥**

घृष्टे विदलिते च एषा पूर्वोक्ता चिकित्सेष्यते । यस्मात्तयोर्घृष्टविदलितयोरस्रमल्पं स्रवति । तेन च कारणेन तयोराशु शीघ्रं पाको जायते ।

**अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते ।**
**ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ ११ ॥**
**स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ।**
**स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १२ ॥**

अन्यत्र विक्षते बाहुल्येन बहुरक्तं स्रवति । नच पाकं याति । अनंतरमत्यंतरक्तस्रावात् पवने कुपितेऽतिरुजाकरे सति स्नेहपानादिकं स्नेहबस्तिं च वातहरौषधसाधितं कुर्वीत ।

**इति सप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ।**
**सप्ताहाद्गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १३ ॥**

इत्येवं सप्ताहिकः सद्योव्रणहितो विधिरुक्तः । सप्ताहेन निर्वृत्त इति प्राग्वहतेष्ठक् इति ठक् । सप्ताहादूर्ध्वं गते क्षोभे सति पूर्वोक्तं विधिं व्रणप्रतिषेधोक्तं कुर्यात् ।

**प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक्पृथक् ।**
**घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १४ ॥**

प्रायो बाहुल्येन सद्यो व्रण एतत्सामान्यं कर्म पृथक्पृथग् विशेषेण कर्म भणिष्यते । घृष्टे व्रणे पीडां प्रागुपशमय्य चूर्णानि योजयेत् ।

**कल्कादीन्यवकृत्ते तु**

अवकृत्ते पुनर्व्रणे कल्कादीनि योजयेत् ।

**विच्छिन्नप्रविलंबिनोः ।**
**सीवनं विधिनोक्तेन बंधनं चानुपीडनम् ॥ १५ ॥**

विच्छिन्ने प्रविलंबिनि च व्रणे सीवनं पूर्वोक्तेन विधानेन तथा बंधनं पीडनं च पश्चाद् योजयेत् ।

**असाध्यं स्फुटितं नेत्रमदीर्णं लंबते तु यत् ।**
**सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥१६॥**
**पीडयेत् पाणिना पद्मपलाशांतरितेन तत् ।**

स्फुटितं लोचनमसाध्यम् । अस्फुटितं तु यन्नेत्रमविदीर्णं लंबते तत् स्वे स्थाने सन्निवेश्याव्याविद्धसिरं पद्मपत्रांतरितेन हस्तेन पीडयेत् ।

**ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १७ ॥**
**विपक्कमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।**
**सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८ ॥**

अनंतरमस्यातुरस्य घृतं छागं सक्षीरैर्यष्ट्यादिभिः कल्कैः पक्वं सेचनादौ हितं यतस्तद् घृतं परं सर्वनेत्राभिघातजित् ।

**गलपीडावसन्नेऽक्षिण वमनोत्क्लेशनक्षवाः ।**
**प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत्॥१९॥**

गलपीडावसन्ने नेत्रे वमनादयः कार्याः प्राणायामो वा । तथा क्षतनेत्रक्रिया चाऽत्र हिता ।

**कर्णे स्थानाच्च्युते स्यूते स्रोतस्तैलेन पूरयेत् ।**

कर्णे स्थानाद् भ्रष्टे स्यूते सति तैलेन स्रोतः पूरयेत् ।

**कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥२०॥**
**समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरंतरम् ।**

कृकाटिकायां छिन्नायां वातेऽपि निर्याते सति समं स्थापयित्वा स्यूत्वा च निरंतरं शीघ्रं बध्नीयात् ।

**आजेन सर्पिषा चाऽत्र परिषेकः प्रशस्यते ॥ २१ ॥**
**उत्तानोऽन्नानि भुंजीत शयीत च सुयंत्रितः ।**

अत्राऽऽजेन घृतेन च परिषेकः श्रेष्ठः । उत्तानः सन् भोजनं भुंजीत । सुयंत्रितश्च स्वप्यात् ।

**घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते२२**
**स्यूत्वा वेल्लितबंधेन बध्नीयद्घनवाससा ।**
**चर्मणा गोष्फणाबंधः कार्यश्चासंगते व्रणे ॥ २३ ॥**

शाखासु हतमातुरं तिर्यक्स्थितं शरीरे सम्यक्स्थापिते स्यूत्वा वेल्लितबंधेन घनवाससा बध्नीयात् । असंगते व्रणे चर्मणा गोष्फणाबंधो विधेयः ।

**पादौ विलंबिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।**
**प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्नसंज्ञया ॥२४॥**
**कार्यश्च गोष्फणाबंधः कट्यामावेश्य पट्टकम् ।**
**स्नेहसेकं न कुर्वीत तत्र क्लिद्यति हि व्रणः ॥ २५ ॥**

विलंबिमुष्कस्य पादौ नेत्रे च वारिणा प्रोक्ष्य वृषणौ प्रवेश्य सीव्येत् । कथं तुन्नसंज्ञया सेवन्या । तथा कट्यां पट्टकमासज्य गोष्फणाबंधं कुर्यात् । स्नेहसेकं न कुर्वीत । यतः स्नेहसेके सत्यस्मिन् व्रणः क्लिद्यति ।

**कालानुसार्यगुर्वेलाजातीचंदनपर्पटैः ।**
**शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् २६**

कालानुसार्यादिभिः कल्कितैः पक्वं तैलं वृषणयो रोपणम् ।

**छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ।**
**बध्नीयात् कोशबंधेन ततो व्रणवदाचरेत् ॥ २७ ॥**

निःशेषेण छिन्नां शाखां दग्ध्वा तैलेन युक्त्या कोशबंधेन बध्नीयात्। अनंतरं व्रणमिवाचरेत्।

**कार्या शल्याहृते विद्धे भंगाद्विदलिते क्रिया।**
**शिरसोपहृते शल्ये वालवर्तिं प्रवेशयेत्॥ २८॥**
**मस्तुलुंगस्रुते क्रुद्धो हन्यादेनं चलोऽन्यथा।**
**व्रणे रोहति चैकैकं शनैरपनयेत्कचम्॥ २९॥**
**मस्तुलुंगस्रुतौ खादेन्मस्तिष्कानन्यजीवजान्।**

विद्धे शल्याहृते सति भंगाद्विदलिते क्रिया कार्या। शिरसः शल्ये निपतिते सति वालवर्तिं प्रवेशयेत्। अन्यथा वालवर्तिप्रवेशान्मस्तुलुंगस्रावाद्वायुः क्रुद्ध एनं व्रणिनं हन्यात्। व्रणे रोहति सत्येकैकं कचं शनैर्नयेत्। आचरमोच्छ्वासादातुरं समुपाचरेदिति वचनान्मस्तुलुंगस्रुतावप्युपक्रममाह। मस्तुलुंगस्य मज्जाख्यस्य स्रुतावन्यजीवजान्मस्तिष्कान् खादेत्।

**शल्ये हृतेंगादन्यस्मात्स्नेहवर्तिं निधापयेत्॥ ३०॥**

अंगादन्यस्माच्छल्ये हृते सति तत्र व्रणे स्नेहवर्तिं निधापयेत्।

**दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः।**
**सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान्॥ ३१॥**

ये व्रणा दूरावगाढादिगुणास्तांश्चक्रतैलेन कोल्हुकाद्युद्भवेन तैलेन सेचयेत्। किंभूतेन। सूक्ष्मनेत्रेणार्पितेन क्षिप्तेन।

**भिन्ने कोष्ठे स्रजा पूर्णे मूर्छाहृत्पार्श्ववेदनाः।**
**ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनंदनम्॥ ३२॥**
**संगो विण्मूत्रमरुतां श्वासः स्वेदोक्षिरक्तता।**
**लोहगंधित्वमास्यस्य स्याद् गात्रे च विगंधता॥३३॥**

भिन्ने कोष्ठे रक्तेन पूर्णे सति मूर्छाद्याः स्युः।

**आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।**
**आध्मानेनाऽतिमात्रेण शूलेन च विशस्यते॥ ३४॥**

आमाशयस्थे रुधिरे रक्तमुद्वमत्यप्याध्मातेनाऽतिमात्रेण शूलेन च विशस्यते व्यापद्यते।

**पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत्।**
**नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः॥३५॥**

पक्वाशयस्थे लोहितशूलसहितं गौरवं भवेत्। नाभेरधोभागे शैत्यम्। छिद्रेभ्यो रुधिरस्यैवागमनम्।

**अभिन्नोप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते।**
**असृजास्पंदमानेन पार्श्वे मूत्रेण बस्तिवत्॥ ३६॥**

आशयो भिन्नोऽपि सूक्ष्मैः स्रोतोभिर्लोहितेन स्पंदमानेनाभिपूर्यते। पार्श्वे मूत्रेण बस्तिरिव।

**तत्रांतर्लोहितं शीतपादोच्छ्वासकराननम्।**
**रक्ताक्षं पांडुवदनमानद्धं च विवर्जयेत्॥ ३७॥**

तेषु मध्येऽतर्लोहितं व्रणिनं शीतपादं शीतोच्छ्वासं शिशिरकरं शीतवक्त्रं लोहिताक्षं पांडुवदनमानद्धं च वर्जयेत्।

**आमाशयस्थे वमनं हितं पक्वाशयाश्रये।**
**विरेचनं निरूहं च निःस्नेहोष्णैर्विशोधनैः॥ ३८॥**

आमाशयस्थे रक्ते वमनं हितम्। पक्वाशयगते विरेचनं हितम्। निरूहं च विगतस्नेहैरुष्णैश्च विशोधनं हितम्।

**यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः।**
**भुंजीतान्नं यवागूं वा पिबेत्सैंधवसंयुताम्॥ ३९॥**

यवादीनां रसैः स्नेहरहितैरन्नं भक्षयेत्। पेयां सैंधवान्वितां वा पिबेत्।

**अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक्।**

अतिनिःस्रुतलोहितो भिन्नकोष्ठो रुधिरं पिबेत्।

**छिन्नभिन्नांत्रभेदेन कोष्ठभेदो द्विधा स्मृतः॥४०॥**
**मूर्छादयोऽल्पाः प्रथमे द्वितीये त्वतिबाधकाः।**
**छिन्नांत्रः संशयी देही भिन्नांत्रो नैव जीवति॥४१॥**

छिन्नांत्रभेदेन भिन्नांत्रभेदेन च कोष्ठभेदो द्विप्रकार उक्तः। प्रथमे छिन्नांत्राख्ये मूर्छादयोऽल्पाः किंचिदेव स्युः। द्वितीये भिन्नांत्राख्येऽतिशये न बाधकाः स्युः। छिन्नांत्रो देही संशयी स्याद् जीवने। भिन्नांत्रो न जातु जीवति।

**यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः।**
**व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवत्यसंशयम्॥४२॥**

यस्य विण्मूत्रमारुता यथायथं मार्गं प्राप्ता विगतोपद्रवश्च स नरो भिन्नकोष्ठोऽपि सन् जीवति।

**अभिन्नमंत्रं निष्क्रांतं प्रवेश्यं नत्वतोऽन्यथा।**
**उत्पंगिलशिरोग्रस्तं तदप्येके वदंति तु॥ ४३॥**

अंत्रमभिन्नं निष्क्रांतं प्रवेशनीयमंतरे। नत्वतोऽन्यथा भिन्नमित्यर्थः। अन्ये त्वेवमाचक्षते। उत्पंगिलशिरसामकोंटशीर्षेण ग्रस्तं भिन्नमप्यंत्रं प्रवेश्यम्।

**प्रक्षाल्य पयसा दिग्धं तृणशोणितपांसुभिः।**
**प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः॥ ४४॥**

अंत्रं निष्क्रांतं तृणादिभिर्दिग्धं पयसा प्रक्षाल्य सर्पिषाऽभ्यक्तं कृत्तनखः शनैः शनैः प्रवेशयेत्।

**क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतम्।**
**अंगुल्या प्रमृशेत्कंठं जलेनोद्वेजयेदपि॥ ४५॥**
**तथांत्राणि विशंत्यंतस्तत्कालं पीडयंति च।**

शुष्कमंत्रं क्षीरेणार्द्रीकृतं बहुघृतपरिप्लुतमंगुल्या गलं प्रमृशेज्जलेनोद्वेजयेत्। तथा एवमंत्राण्यंतः प्रविशंति तत्कालं च पीडयंति।

**व्रणसौक्ष्म्याद्बहुत्वाद्वा कोष्ठमंत्रमनाविशत्॥ ४६॥**
**तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत्।**

**यथास्थानं स्थिते सम्यगंत्रे सीव्येदनुव्रणम् ॥ ४७ ॥**
**स्थानादपेतमादत्ते जीवितं कुपितं च तत् ।**
**वेष्टयित्वानुपट्टेन घृतेन परिषेचयेत् ॥ ४८ ॥**
**पाययेत्तं ततः कोष्णं चित्रातैलयुतं पयः ।**
**मृदुक्रियार्थं शकृतो वायोऽश्चाधः प्रवृत्तये ॥४९॥**
**अनुवर्तेत वर्षं च यथोक्तां व्रणयंत्रणाम् ।**

व्रणसूक्ष्मत्वादंत्रस्य बहुत्वात्कोष्ठमनाविशदंत्रं जठरं तत्प्रमाणेन पाटयित्वा प्रवेशयेत् । यथास्थानं स्थिते सम्यगंत्रे सति पश्चाद् व्रणं सीव्येत् । स्थानाच्युतमंत्रं जीवितं हरति । कुपितं च तदंत्रं पट्टेन वेष्टयित्वा पश्चाद्घृतेन परिषेचयेत् । अनंतरं चित्रातैलान्वितं कोष्णं क्षीरं पिबेत् । शकृतो मृदूकरणाय पवमानस्य च प्रवर्तनाय यथोक्तां च व्रणयंत्रणां संवत्सरं यावदनुवर्तेत ।

**उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ ५० ॥**
**अवकीर्य कषायैर्वा श्लक्ष्णैर्मूलैस्ततः समम् ।**
**दृढं बध्वा च सूत्रेण वर्धयेत्कुशलो भिषक् ॥ ५१ ॥**
**तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु ।**
**स्यादन्यथा रुगाटोपो मृत्युर्वा छिद्यमानया ॥५२॥**
**सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् ।**
**क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम् ॥५३॥**
**रुग्दाहजित्सयष्ट्याह्वैः परं पूर्वोदितो विधिः ।**
**मेदोग्रंथ्युदितं तत्र तैलमभ्यंजने हितम् ॥ ५४ ॥**

जठरान्मेदसो वर्तिं निर्गतां भस्मना वा मृदाऽवकीर्याथवा श्लक्ष्णचूर्णैः कषायैर्मूलैरवकीर्य ततो मूलेन समं दृढं च कृत्वा सूत्रेण बध्वा तीक्ष्णेन वह्निप्रतप्तेन शस्त्रेण कुशलो वैद्यः सकृदेव वर्धयेत् । अन्यथा छिन्नया रुजाऽऽटोपो मृत्युर्वा स्यात् । ततो व्रणे समाक्षिके बद्धेऽन्ने च सुजीर्णे सति घृतं पिबेत् । अथवा शर्करादिभिः शृतं दुग्धं पिबेत् । तच्च घृतं क्षीरं वा रुजाहृत् । अनंतरं पूर्वोक्तो विधिः । तत्र मेदोग्रंथिषु कथितं तैलमभ्यंजने हितम् ।

**तालीसं पद्मकं मांसीहरेण्वगुरुचंदनम् ।**
**हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ५५ ॥**
**पक्कं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ।**

तालीसादिभिः कल्कितैः पक्कं तैलं सद्योव्रणेषु रोपणं परमुक्तम् ।

**गूढप्रहाराभिहते पतिते विषमोच्चकैः ॥ ५६ ॥**
**कार्यं वातास्रजित् तृप्तिमर्दनाभ्यंजनादिकम् ।**

गूढप्रहारेणाभिहते गूढेनादृश्यमानेन प्रहारेणाभिहते पुरुषे । तथा विषमं पतिते तथोच्चकैः पतिते च वातरक्तहरादिकं कार्यम् ।

**विश्लिष्टदेहं मथितं क्षीणं मर्माहताहतम् ।**
**वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ५७**

विश्लिष्टदेहादिकं नरं तैलद्रोण्यां मांसरसाशिनं वासयेत् ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने सद्योव्रणप्रतिषेधो नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ।

अस्मादनंतरं क्रमप्राप्तो भंगप्रतिषेधः शस्यते ।

**अथाऽतो भंगप्रतिषेधं व्याख्यास्यामः ।**
**पातघातादिभिर्द्वेधा भंगोऽस्थ्नां संध्यसंधितः ।**
**प्रसारणाकुंचनयोरशक्तिः संधिमुक्तता ॥ १ ॥**
**इतरस्मिन् भृशं शोफः सर्वावस्थास्वतिव्यथा ।**
**अशक्तिश्चेष्टितेऽल्पेऽपि पीड्यमाने सशब्दता ॥२॥**
**समासादिति भंगस्य लक्षणं बहुधा तु तत् ।**
**भिद्यते भंगभेदेन तस्य सर्वस्य साधनम् ॥ ३ ॥**
**यथा स्यादुपयोगाय तथा तदुपदेक्ष्यते ।**

पातादिभिरस्थ्नां भंगो द्विधा द्विप्रकारः । संधीनां भंगो संधेर्वा संधिभंगे प्रसारण आकुंचने चाऽशक्तिः संधिमुक्तता च । इतरस्मिन् संधिभंगेऽतिशोफः । सर्वास्ववस्थास्वतिशयेन रुजा । अल्पेऽपि चेष्टितेऽशक्तिः । पीड्यमाने च सशब्दता स्यात् । इति संक्षेपेण भंगस्य लक्षणमुक्तं । तच्च भंगभेदेनानेकधा भिद्यते । तस्य भंगस्य साधनं चिकित्सितं यथोपयोगाय स्यात् तथोपदेक्ष्यते ।

**प्राज्याणुदारि यत्त्वस्थि स्पर्शे शब्दं करोति यत् ४**
**यत्राऽस्थिलेशः प्रविशेन्मध्यमस्थ्नो विदारितः ।**
**भग्नं यच्चाभिघातेन किंचिदेवावशेषितम् ॥ ५ ॥**
**उन्नम्यमानं क्षतवद्यच्च मज्जनि मज्जति ।**
**तद्दुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ॥ ६ ॥**

प्राज्याश्च तेऽणवश्च प्राज्याणवः । प्रभूतसूक्ष्मास्तैर्दारणानि विद्यंते यत्रास्थनि तत् प्रभूताणुदारि यदस्थि तद्दुःसाध्यम् । यच्चास्थि स्पर्शने स्पर्शे सति शब्दं करोति तच्च दुःसाध्यम् । यत्रास्थिलेशो दारितः पाटितोऽस्थ्नां मध्यं प्रविशेत् तच्च दुःसाध्यम् । यच्चाभिघातेन भग्नं । किंभूतं । किंचिदेवावशेषितं भवेत् तच्च दुःसाध्यम् । यच्चोन्नम्यमानं क्षतसमं स्यात् तच्च दुःसाध्यम् । तथा यन्मज्जनि मज्जति तथा कृशादीनामपि यत्तद्दुःसाध्यम् ।

**भिन्नं कपालं यत् कट्यां संधिमुक्तं च्युतं च यत् ।**
**जघनं प्रति पिष्टं च भग्नं यत्तद्विवर्जयेत् ॥ ७ ॥**

कट्यां कटिप्रदेशे यत्कपालं भिन्नं विदारितं यच्च संधिमुक्तं यच्च संधेश्च्युतं यच्च जघनं प्रति पिष्टं भग्नं च यत् तद्विवर्जयेत्परिहरेत् ।

**असंश्लिष्टकपालं च ललाटं चूर्णितं तथा ।**
**यच्च भग्नं भवेच्छंखशिरःपृष्ठस्तनांतरे ॥ ८ ॥**

ललाटमसंश्लिष्टकपालं भिन्नं चूर्णितं च नोपक्रामेत् । शंखशिरःपृष्ठस्तनानां मध्ये यच्छिन्नं भवेत्तच्च वर्जयेत् ।

**सम्यग्यमितमप्यस्थिदुर्न्यासाद्दुर्निबंधनात् ।**
**संक्षोभादपि यद्गच्छेद्विक्रियां तद्विवर्जयेत् ॥ ९ ॥**
**आदितो यच्च दुर्जातमस्थिसंधिरथापि वा ।**

तथाऽस्थि सम्यगुद्धृतमपि दुर्न्यासादिना यद् विक्रियां गच्छेत्तच्च वर्जयेत् । आदितः प्रथममेव यच्चाऽस्थि दुर्जातमसम्यगुत्पन्नं स्यात् तच्च दुःसाध्यं । अथवाऽस्थिसंधिर्यो दुर्जातः स्यात्स च दुःसाध्यः । दुर्जातं च दुर्जातश्च दुर्जातं नपुंसकमनपुंसकेनेत्येकशेषः।

**तरुणास्थीनि भुज्यंते भज्यंते नलकानि तु ॥ १० ॥**
**कापालानि विभिद्यंते स्फुटंत्यन्यानि भूयसा ।**

तथा तरुणास्थीनि नासाकर्णाक्षिकोषाणि भुज्यंते कुटिलीक्रियंते । तथा नलकानि भंगं यांति । कपालानि च विदार्यंते । कपालरूपाण्यस्थीनि तानि खंडशो भिद्यंते । अन्यानि चाऽस्थीनि बाहुल्येन स्फुटंति । एतत्सर्वं दुःसाध्यम् ।

**अथावनतमुन्नम्यमुन्नतं चावपीडयेत् ॥ ११ ॥**
**आंछेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ।**

अथैषां भंगस्थितिं ज्ञात्वाऽवनतमस्थ्युन्नमनीयमुन्नतं चास्थ्यवपीडयेत् । अतिक्षिप्तमस्थ्यांछेत् । अधस्ताद्गतं चोपरि वर्तयेत् ।

**आंछनोत्पीडनोन्नामचर्मसंक्षेपबंधनैः ॥ १२ ॥**
**संधीन् शरीरगान्सर्वान् चलानप्यचलानपि ।**
**इत्येतैः स्थापनोपायैः सम्यक् संस्थाप्य निश्चलम् १३**
**पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ।**
**कदंबोदुंबराश्वत्थसर्जार्जुनपलाशजैः ॥ १४ ॥**
**वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ।**
**सुश्लक्ष्णैः सुप्रतिस्तंभैर्वल्कलैः शकलैरपि ॥ १५ ॥**
**कुशाह्वयैः समं बंधं पट्टस्योपरि योजयेत् ।**

इत्येवंप्रकारैरेतैरांछनादिभिः स्थापनोपायैः सर्वाञ्छरीरगान् संधीनचलांश्चलांश्च निश्चलं संस्थाप्य वस्त्रखंडजैः पट्टैर्बहुसर्पिष्कैः सुखावहैर्वेष्टयित्वाऽनंतरं कदंबादिजैर्वल्कलैर्वंशोत्थैर्वा शकलैः खंडैर्विस्तीर्णैस्तथा तनुभिर्नतु स्थूलैः सुनिवेशितैस्तथा कोमलैस्तथा प्रतिस्तंभयुक्तैः कुशासंज्ञैः समं बंधं पट्टस्योपरि कुर्यात् ।

**शिथिलेन हि बंधेन संधेः स्थैर्यं न जायते ॥ १६ ॥**
**गाढेनातिरुजादाहपाकश्वयथुसंभवः ।**

श्लथेन बंधेन संधेः स्थैर्यं न संपद्यते । अतिगाढेन तु बंधेन रुजाद्युद्भवः ।

**त्र्यहात्त्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ॥ १७ ॥**
**साधारणे तु पंचाहाद् भंगदोषवशेन वा ।**

उष्णे ऋतौ त्र्यहात्त्र्यहान्मोक्षयेत् । शीते च ऋतौ सप्ताहान्मोक्षयेत् । साधारणे शरद्वसंताख्ये पंचाहान्मोक्षयेत् । अथवा भंगवशेन मोक्षयेत् ।

**न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥ १८॥**
**तं पंचमूलपक्वेन पयसा तु सवेदनम् ।**

ततो न्यग्रोधादिगणद्रव्यकषायेण शीतेन सेचयेत्तं भंगसंधितम् । सरुजं पंचमूलशृतेन क्षीरेण सेचयेत् ।

**सुखोष्णं वावचार्यं स्याच्चक्रतैलं विजानता॥१९॥**
**विभज्य देशं कालं च वातघ्नौषधसंयुतम् ।**

अवस्थादिविशेषं विज्ञाय चक्रतैलं वातघ्नौषधसंयुतं सुखोष्णं विजानता वैद्येन चावचारणीयम् ।

**प्रततं सेकलेपांश्च विदध्याद् भृशशीतलान्॥२०॥**

प्रततं सेकादींश्च सुशीतलान् कुर्यात् ।

**गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।**
**प्रातः प्रातः पिबेद्भग्नः शीतलं लाक्षया युतम् २१**

भग्नो नरो गृष्टिक्षीरं घृतसहितं मधुरद्रव्यसाधितं शीतलं लाक्षया युक्तं प्रातः पिबेत् ।

**सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ।**
**कषायैः प्रतिसार्योऽथ शेषो भंगोदितः क्रमः॥२२॥**

सव्रणस्य भग्नस्य व्रणो मधुघृतोत्तरैः कषायैः प्रतिसारणीयः । अथ शेषः क्रमो भंगकथितो विधेयः ।

**लंबानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।**
**संदधीत व्रणान् वैद्यो बंधनैश्चोपपादयेत् ॥२३॥**

व्रणमांसानि लंबानि मधुघृतेनालिप्य व्रणान् वैद्यः संदध्यात् । कृतसंधानांश्च तान् यथास्वं बंधैर्योजयेत् ।

**तान्समान्सुस्थिताञ्ज्ञात्वा फलिनीरोध्रकट्फलैः।**
**समंगाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ २४ ॥**
**धातकीरोध्रचूर्णैर्वा रोहंत्याशु तथा व्रणाः ।**

तान् व्रणान्सुस्थिरान्समांश्च विदित्वा फलिन्यादिभी रजीकृतैरवचूर्णयेत् । धातकीरोध्रयोश्चूर्णेन वा । तथैवं कृते सति व्रणा द्रागेव रोहंति ।

**इति भंग उपक्रांतः**

इत्यनेन प्रकारेण भंगश्चिकित्सितः ।

**स्थिरधातो ऋतौ हिमे ॥ २५ ॥**
**मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ।**

शीततौं स्थिरधातोस्तथा मांसलस्य स्तोकदोषस्य व्रणः सुखसाध्यः । अन्यथाऽतो विपर्ययेण दारुणः कृच्छ्रसाध्योऽसाध्यो वा ।

**पूर्वमध्यांतवयसामेकद्वित्रिगुणैः क्रमात् ॥ २६ ॥**
**मासैः स्थैर्यं भवेत्संधेर्यथोक्तं भजतो विधिम् ।**

यथोक्तं विधिं कुर्वतां पूर्वमध्यांतवयसामेकद्वित्रिगुणैर्मासैर्यथासंधेः स्थैर्यं जायते ।

**कटीजंघोरुभग्नानां कपाटशयनं हितम् ॥ २७ ॥**
**यंत्रणार्थं तथा कीलाः पंच कार्या निबंधनाः ।**
**जंघोर्वोः पार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥ २८**
**श्रोण्यां वा पृष्ठवंशे वा वक्षस्याक्षकयोस्तथा ।**

कट्यादिभग्नानां कपाटे स्थितिर्हिता । यंत्रणार्थं च कीलाः कीलकाः पंच स्थिरस्थितिहेतवः कार्याः । तेषां च स्थानान्याह । जंघोर्वोर्द्वौ द्वौ कीलकौ । तल एकः कीलकः । श्रोण्यां भग्नस्य पृष्ठवंशे तु भग्नस्य पार्श्वयोर्द्वौ द्वावेक इति । अत एवाह श्रोण्यां वेत्यादि । वक्षस्याक्षकयोश्च भग्नस्य पंचैव कीलका योज्याः । विशेषस्त्वतो नोपरिष्टात् कीलको योज्यो युक्तिवशात् ।

**विमोक्षे भग्नसंधीनां विधिमेवं समाचरेत् ॥ २९ ॥**

भग्नसंधीनां विमोक्ष एवंप्रकारं विधिं समाचरेत् ।

**संधींश्चिरविमुक्तांस्तु स्निग्धान्स्विन्नान् मृदूकृतान् ।**
**उक्तैर्विधानैर्बुद्ध्या च यथास्वं स्थानमानयेत् ॥ ३० ॥**

चिरविमुक्तसंधीन् पूर्वं स्निग्धान् पश्चात् स्विन्नान्मृदूकृतान् यथोक्तविधानैर्बुद्ध्या च विशेषेण यथात्मीयं स्थानं प्रापयेत् ।

**असंधिभग्ने रूढे तु विषमोल्बणसाधिते ।**
**आपोथ्य भंगं यमयेत्ततो भग्नवदाचरेत् ॥ ३१ ॥**

असंधौ भग्ने रूढे च विषमोल्बणसाधिते सति भंगमापोथ्य भङ्क्त्वा पश्चाद्भंगं यमयेत् । अनंतरं भग्नवदाचरेत् ।

**भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।**
**पक्वमांससिरास्नायुसंधिः श्लेषं न गच्छति ॥ ३२ ॥**

भग्नं यथा पाकं न प्राप्नोति तथा वैद्यो यत्नं कुर्यात् । यतः संधिः पक्वमांससिरास्नायुः सन् श्लेषं न याति ।

**वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत् ।**
**चतुःप्रयोगान् बल्यांश्च बस्तिकर्म च शीलयेत् ३३**

वातव्याधिकथितान्स्नेहांश्चतुःप्रयोगान् पाननस्याभ्यंगानुवासनैर्बल्यान् बलाय हितान् भग्नस्य योजयेत् । तथा बस्तिकर्म प्राक् स्नेह एकः पंचांत इत्यादिनोक्तमभ्यसेत् ।

**शाल्याज्यरसदुग्धाद्यैः पौष्टिकैरविदाहिभिः ।**
**मात्रयोपचरेद्भग्नं संधिसंश्लेषकारिभिः ॥ ३४ ॥**
**ग्लानिर्न शस्यते तस्य संधिविश्लेषकृद्धि सा ।**

भग्नं नरं मात्रया शाल्यादिभिः पुष्टिकृद्भिः संधिश्लेषकारिभिरविदाहिभिरुपक्रमेत् । तस्य भग्नस्य ग्लानिर्न शस्यते । यतः सा ग्लानिः संधिविश्लेषं कुरुते ।

**लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।**
**व्यायामं च न सेवेत भग्नो रूक्षं च भोजनम् ॥३५॥**

भग्नो लवणादिकं रूक्षं चाहारं न सेवेत ।

**कृष्णांस्तिलान् विरजसो दृढवस्त्रबद्धान्**
**सप्त क्षपा वहति वारिणि वासयेत ।**
**संशोषयेदनुदिनं प्रविसार्य चैतान्**
**क्षीरे तथैव मधुकक्वथिते च तोये ॥ ३६ ॥**
**पुनरपि पीतपयस्कां-**
**स्तान् पूर्ववदेव शोषितान् बाढम् ।**
**विगततुषानरजस्का-**
**न्संचूर्ण्य सुचूर्णितैर्युज्यात् ॥ ३७ ॥**
**नलदवालकलोहितयष्टिका**
**नखमिशिप्लवकुष्टबलात्रयैः ।**
**अगरुचंदनकुंकुमसारिवा**
**सरलसर्जरसामरदारुभिः ॥ ३८ ॥**
**पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ।**
**समस्तगंधभैषज्यसिद्धदुग्धेन पीडयेत् ॥३९ ॥**
**शैलेयरास्नांशुमतीकसेरु-**
**कालानुसारीनतपत्ररोध्रैः ।**
**सक्षीरयुक्तैः सपयस्कदूर्वै-**
**स्तैलं पचेत्तन्नलदादिभिश्च ॥ ४० ॥**
**गंधतैलमिदमुत्तममस्थि-**
**स्थैर्यकृज्जयति चाशु विकारान् ।**
**वातपित्तजनितानतिवीर्यान्**
**व्यापिनोऽपि विविधैरुपयोगैः ॥ ४१ ॥**

कृष्णान् तिलान् वहत्यस्थिरे जले सप्तरात्रीर्विगतरेणूंस्तथा दृढवसनसंयुतान् वासयेत् । एतांश्च प्रविरलान् विकार्य प्रतिदिनं संशोषयेत् । तथैव पूर्वोक्तेन प्रकारेण क्षीरस्थितताननुदिनं प्रतिसार्य शोषितान् सप्त रात्रीरेवं मधुयष्टीक्वथिते च जले वासयेद्विशोषयेच्च । वसंततिलकावृत्तम् । पुनरपि च पीतक्षीरांस्तांस्तिलान् पूर्ववदेवातिशयेन शोषितानपगततुषांस्तथा विरजसः संचूर्ण्य नलदाद्यैः सुचूर्णितैर्योजयेत् । आर्या । तानेवाह नलदे-

त्यादि । औपच्छंदसिकम् । पद्मकादित्यादि । किंभूतैर्नलदादिभिः पद्मकादिगणसहितैः सुचूर्णितैर्योजयित्वा चैतत् तिलपिष्टं सकलचोरकादिगंधद्रव्यसिद्धेन क्षीरेण सह पीडयेत् । ततस्तत्तैलं सैर्यकादिभिर्नलदादिभिश्च कल्कीकृतैर्दुग्धसहितैः पचेत् । इंद्रवज्रा । एतद् गंधतैलमतिवीर्यमस्थिस्थिरत्वकृदामयांश्च पवनपित्तोत्थानतिवीर्यान् व्यापिनोप्याशु जयति विविधैः पाननस्यादिभिरुपयोगैः । स्वागता ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने भंगप्रतिषेधो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

व्रणसामान्याद् भगंदरप्रतिषेधमाचष्टे ।

**अथाऽतो भगंदरप्रतिषेधं व्याख्यास्यामः ।**
**हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ।**
**अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥**
**अनिष्टादृष्टपाकेन सद्यो वा साधुगर्हणैः ।**
**प्रायेण पिटिकापूर्वो योंगुले द्व्यंगुलेऽपि वा ॥ २ ॥**
**पायोर्व्रणोंतर्वाह्यो वा दुष्टासृङ्मांसगो भवेत् ।**
**वस्तिमूत्राशयाभ्यासगतत्वात्स्पंदनात्मकः ॥ ३ ॥**
**भगंदरः स**

हस्त्यश्वादिगमनादिभिरर्शोनिदानोक्तैरपरैरपि निषेवितैरशुभपुराकृतकर्मविपाकेन सद्यो वा साधुनिंदाभिः पायोरंगुले द्व्यंगुले वा यो व्रणोंतर्वाह्यो वा बाहुल्येन पिटिकापूर्वो दुष्टरक्तमांसगो वस्तिमूत्राशयसमीपगतत्वात्स्पंदनस्वभावः स भगंदरः स्यात् ।

**सर्वश्च दारयत्यक्रियावतः ।**
**भगवस्तिगुदांस्तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥**
**वातमूत्रशकृच्छुक्रं खैः सूक्ष्मैर्वमति क्रमात् ।**

भगादीन्सर्वान् दारयति । क्रियारहितस्य पुंसस्तेषु भगादिषु शीर्यमाणेषु खैश्छिद्रैः सूक्ष्मैर्बहुभिः क्रमेण वातादीन् वमति ।

**दोषैः पृथग्युतैः सर्वैरागंतुः सोष्टमः स्मृतः ॥ ५ ॥**

भगंदराख्यो व्रणो दोषैः पृथक् त्रिधा । युक्तैश्च दोषैस्त्रिधा । सर्वैरेकः । आगंतुरष्टमो गदितः ।

**अपक्कं पिटिकामाहुः पाकप्राप्तं भगंदरम् ।**

अपक्कं शोफं पिटिकां कथयंति । पक्कं शोफं भगंदरमाहुः ।

**गूढमूलां ससंरंभां रुगाढ्यां रूढकोपिनीम् ॥ ६ ॥**
**भगंदरकरीं विद्यात् पिटिकां न त्वतोऽन्यथा ।**

पिटिकां गूढमूलादिगुणां भगंदरकरीं विद्यात् । अतोऽन्यथा विपर्ययेण पिटिकामात्रां विजानीयात् ।

**तत्र श्यावारुणा तोदभेदस्फुरणरुक्करी ॥ ७ ॥**
**पिटिका मारुतात्**

तेषु मध्याच्छयावादिगुणा पिटिका पवनात् स्यात् ।

**पित्तादुष्ट्रग्रीवावदुच्छ्रिता ।**
**रागिणी तनुरुष्माढ्या ज्वरधूमायनान्विता ॥ ८ ॥**

पित्तात् पिटिकोष्ट्रग्रीवेवोच्छ्रिता रागादिगुणान्विता च स्यात् ।

**स्थिरा स्निग्धा महामूला पांडुः कंडूमती कफात् ।**

कफात् पिटिका स्थिरादिगुणा स्यात् ।

**श्यावा ताम्रा सदाहोषा घोररुग् वातपित्तजा ९**

वातपित्तोत्था पिटिका श्यावादिगुणा स्यात् ।

**पांडुरा किंचिदाश्यावा कृच्छ्रपाका कफानिलात् ।**

श्लेष्मपवनात् पिटिका पांडुरादिगुणा स्यात् । कफपित्तजस्तु भगंदरोर्शःसमाश्रयेदित्यारभ्याग्रे प्रतिपादयिष्यति । तेनेह तत्पिटिका तंत्रकृता नाभिहिता ।

**पादांगुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ॥ १० ॥**
**शूलारोचकतृड्दाहज्वरछर्दिरुपद्रुता ।**

सर्वैर्दोषैः पादांगुष्ठतुल्या नानाविधव्यथा शूलादिभिरुपद्रुता पिटिका स्यात् ।

**व्रणतां यांति ताः पक्काः प्रमादात्**

ताश्च पिटिकाः प्रमादादयत्नात्पक्काः सद्यो व्रणतां यांति ।

**तत्र वातजा ॥ ११ ॥**
**दीर्यतेणुमुखैश्छिद्रैः शतपोनकवत् क्रमात् ।**
**अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम् ॥ १२ ॥**
**शतपोनकसंज्ञोऽयम्**

तेषु मध्याद्वातजा पिटिका शतपोनकवत् तितउवत्सूक्ष्मद्वारैश्छिद्रैः क्रमेण दीर्यते । किंकुर्वाणैः । अच्छं तनुमास्रावं सह फेनमनवरतं स्रवद्भिः । अयं शतपोनकसंज्ञो भगंदरः ।

**उष्ट्रग्रीवस्तु पित्तजः ।**

पित्तजस्तु भगंदर उष्ट्रग्रीवाख्यः ।

**बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ १३ ॥**

कफोत्थो भगंदरो बहुपिच्छापरिस्रावी स्यात् । स च परिस्रावी कथ्यते ।

**वातपित्तात्परिक्षेपी परिक्षिप्य गुदं गतिः ।**
**जायते परितस्तत्र प्राकारपरिखेव च ॥ १४ ॥**

वातपित्तात् परिक्षेपीत्युच्यते । तत्र गुदं परिक्षिप्य गतिः पुरप्राकारं परितः परिखेव च जायते ।

**ऋजुर्वातकफादृज्व्या गुदो गत्या तु दीर्यते ।**

वातकफाद् ऋजुसंज्ञो भगंदरस्तत्र ऋज्व्या गत्या गुदो दीर्यते ।

**कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ॥ १५ ॥**
**अर्शोमूले ततः शोफः कंडूदाहादिमान् भवेत् ।**
**स शीघ्रं पकभिन्नोस्य क्लेदयन्मूलमर्शसः ॥ १६ ॥**
**स्रवत्यजस्रं गतिभिरयमर्शो भगंदरः ।**

पूर्वोत्थं दुर्नाम समाश्रित्य कफपित्ते यदा कुप्यतः ततस्तत्कोपादर्शो मूले शोफः कंडूादिमान् स्यात् । स शोफः पक्वभिन्नोस्यार्शसो मूलमाश्वेव क्लेदयन् गतिभिरजस्रं स्रवति स शोफोर्शो भगंदर उच्यते ।

**सर्वजः शंबुकावर्तः शंबुकावर्तसन्निभः ॥ १७ ॥**
**गतयो दारयंत्यस्मिन् रुग्वेगैर्दारुणैर्गुदम् ।**

सन्निपातोत्थः शंबुकावर्तसंज्ञः शंबुकावर्तसमः स्यात् । अस्मिन्सर्वजे भगंदरे रुग्वेगैस्तीव्रैर्गतयो गुदं दारयंति ।

**अस्थिलेशोऽभ्यवहृतो मांसगृद्ध्या यदा गुदम् ॥१८॥**
**क्षणोति तिर्यङ्निर्गच्छन्नुन्मार्गं क्षततो गतिः ।**
**स्यात्ततः पूयदीर्णायां मांसकोथेन तत्र च ॥ १९ ॥**
**जायंते क्रमयस्तस्य खादंतः परितो गुदम् ।**
**विदारयंति न चिरादुन्मार्गी क्षतजश्च सः ॥ २० ॥**

अस्थिलवो मांसगार्ध्येन भुक्तो यदा तिर्यगुन्मार्गं निर्गच्छन् गुदं क्षणोति तदा क्षताद्गतिः स्यात् । ततः पूयदीर्णायां गतौ मांसकोथेन च तस्मिन् क्रमयो भवंति । ते च क्रमयः तस्य भगंदरिणो गुदं भक्षयंतः परितो विदारयंति शीघ्रमेव । असावुन्मार्गी क्षतजश्चोच्यते ।

**तेषु रुग्दाहकंड्वादीन् विंद्याद् व्रणनिषेधतः ।**

तेषु भगंदरेषु व्रणनिषेधतो व्रणप्रतिषेधाद् रुगादीन् विंद्यात् ।

**षट्कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ॥२१॥**
**प्रवाहिनीं वलीं प्राप्तं सेवनीं वा समाश्रितम् ।**

तेषां मध्यात् कृच्छ्रसाधनाः षट् । एकदोषजान्द्विदोजांश्च सन्निपातजं क्षतजं च त्यजेत् । प्रवाहिनीं वलीं प्राप्तं यद्भगंदरं तत्त्यजेत् । तथा सेवनीमाश्रित्य यज्जातं तच्च वर्जयेत् ।

**अथाऽस्य पिटिकामेव तथा यत्नादुपाचरेत् ॥२२॥**
**शुद्ध्यास्रक्स्रुतिसेकाद्यैर्यथा पाकं न गच्छति ।**

अथाऽस्य भगंदरस्य पिटिकामेव पिटिकावस्थामेव यत्नं कृत्वा शुद्ध्यादिभिस्तथोपक्रमेत् यथा पाकं न प्राप्नोति ।

**पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ॥ २३ ॥**
**यंत्रयित्वार्शसमिव पश्येत्सम्यग्भगंदरम् ।**
**अवाचीनं पराचीनमंतर्मुखबहिर्मुखम् ॥ २४ ॥**

पाके तु सत्युपस्निग्धमवगाहेन च स्वेदितं ततोर्शसमिव यंत्रयित्वा सुष्ठु भगंदरं पश्येदवाङ्मुखं पराङ्मुखं वांतर्मुखं बहिर्मुखं चेत्येवं सुष्ठु निरूप्यावाचीनमिति । विभाषां चेरदिक् स्त्रियामिति स्वार्थे खः ।

**अथांतर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ।**
**बहिर्मुखं च निःशेषं ततः क्षारेण साधयेत् ॥ २५ ॥**
**अग्निना वा भिषक् साधुक्षारेणैवोष्ट्रकंधरम् ।**

अनंतरमंतर्मुखमेषिण्या एषित्वा सम्यक् शस्त्रेण पाटयेत् । बहिर्मुखं च भगंदरं निःशेषं पाटयित्वा ततः क्षारेण साधयेत् । ज्वलनेन वा । उष्ट्रकंधरमुष्ट्रग्रीवं क्षारेणैव साधु कृत्वा वैद्यः साधयेन्नत्वग्निना ।

**नाडीरेकांतराः कृत्वा पाटयेच्छतपोनकम् ॥ २६ ॥**
**तासु रूढासु शेषाश्च मृत्युदीर्णे गुदेऽन्यथा ।**

शतपोनकाख्यमेकांतरा नाडीः कृत्वा पाटयेत् । तासु रूढासु शेषा अपि नाडीः पाटयेत् । अन्यथैकहेलयैव गुदे पाटिते सति मृत्युः स्यात् ।

**परिक्षेपिणि चाप्येवं नाड्युक्तैः क्षारसूत्रकैः ॥२७॥**

परिक्षेपिणि च भगंदरे नाडीकथितैः क्षारसूत्रकैरेवं क्रमात्साधयेत् ।

**अर्शोभगंदरे पूर्वमर्शांसि प्रतिसाधयेत् ।**
**त्यक्त्वोपचर्यः क्षतजः शल्यं शल्यवतस्ततः ॥ २८ ॥**
**आहरेच्च तथा दद्यात् क्रमिघ्नं लेपभोजनम् ।**
**पिंडनाड्यादयः स्वेदाः सुस्निग्धा रुजि पूजिताः ॥**

अर्शोभगंदरे पूर्वमर्शांसि प्रतिसाधयेदुपचरेत् । क्षतजो भगंदरस्त्यक्त्वा प्रत्याख्याय चिकित्स्यः । अनंतरं शल्यवतः सशल्यस्य शल्यमाहरेत् । तथा क्रमिघ्नं लेपं भोजनं च दद्यात् । पीडायां च सत्यां पिंडस्वेदादयः सुस्निग्धा हिताः ।

**सर्वत्र च बहुच्छिद्रे छेदानालोच्य योजयेत् ।**
**गोतीर्थसर्वतोभद्रदललांगललांगलान् ॥ ३० ॥**

बहुच्छिद्रे च भगंदरे सर्वत्रैवालोच्य चतुरश्छेदान् गोतीर्थकादिकान् कुर्यात् । तानेव छेदानाह । गोतीर्थेत्यादि ।

**पार्श्वे गतेन शस्त्रेण छेदो गोतीर्थको मतः ।**
**सर्वतः सर्वतोभद्रः पार्श्वच्छेदोर्धलांगलः ॥ ३१ ॥**
**पार्श्वद्वये लांगलकः**

शस्त्रेण पार्श्वे गतेन यश्छेदः स गोतीर्थकाख्यः । स च काव्यगतगोमूत्रिकाकारः । सर्वतो यश्छेदः स सर्वतोभद्राख्यः । स च सर्वतोभद्रकाव्याकारः । य एकस्मिन् पार्श्वे छेदः स च दललांगलकाख्यः । कुटासहित हलाकारः पार्श्वद्वये यश्छेदः स लांगलकाख्यः संपूर्णहलाकारः ।

**समस्तांश्चाग्निना दहेत् ।**
**अस्रावमार्गान्निःशेषान्नैवं विकुरुत पुनः ॥ ३२ ॥**

व्रणाः सर्वांश्चास्रावमार्गान् निःशेषं कृत्वाऽग्निना दहेत्। एवं कृते सति पुनर्विकारं व्रणो न याति।

**यतेत कोष्ठशुद्धौ च भिषक् तस्यांतरांतरा।**

तस्य भगंदरिणः कोष्ठशुद्धौ चांतरांतरा वैद्यो यतेत।

**लेपो व्रणे बिडालास्थित्रिफलारसकल्कितम्॥३३॥**

मार्जारास्थि त्रिफलारसकल्कितं व्रणे लेपो हितः।

**ज्योतिष्मतीमलयुलांगलिशेलुपाठा-**
**कुंभाग्निसर्जकरवीरवचासुधार्कैः।**
**अभ्यंजनाय विपचेत भगंदराणां**
**तैलं वदंति परमं हितमेतदेषाम्॥ ३४॥**

ज्योतिष्मत्यादिभिरभ्यंगार्थं तैलं पचेत्। भगंदराणामेतेषामेतत् परमतिशयेन हितं वदंति। वसंततिलकं वृत्तं। वक्ष्यमाणं च मधुकादि द्रुतविलंबितम्।

**मधुकरोध्रकणात्रुटिरेणुका-**
**द्विरजनीफलिनीपटुसारिवाः।**
**कमलकेसरपद्मकधातकी-**
**मदनसर्जरसामयरोध्रकाः॥ ३५॥**
**सबीजपूरच्छदनैरेभिस्तैलं विपाचितम्।**
**भगंदरापचीकुष्ठमधुमेहव्रणापहम्॥ ३६॥**

मधुकादिभिरेतैः सबीजपूरपत्रैस्तैलं विपाचितं भगंदरादिघ्नम्।

**मधुतैलयुताविडंगसार-**
**त्रिफलामागधिकाकणाश्च लीढाः।**
**कृमिकुष्ठभगंदरप्रमेह-**
**क्षतनाडीव्रणरोहणा भवंति॥ ३७॥**

विडंगसारादयो माक्षिकतैलयुक्ता लीढाः कृम्यादिव्रणरोपणाः स्युः। मागधिकाकणाः पिप्पलीतंडुलाः। औपच्छंदसिकं वृत्तम्।

**अमृतात्रुटिवेल्लवत्सकं**
**कलिपथ्यामलकानि गुग्गुलुः।**
**क्रमवृद्धमिदं मधुद्रुतं**
**पिटिकास्थौल्यभगंदरान् जयेत्॥ ३८॥**
**मागधिकाग्निकलिंगविडंगै-**
**र्बिल्वघृतैः सवरापलषट्कैः।**
**गुग्गुलुना सदृशेन समेतैः**
**क्षौद्रयुतैः सकलामयनाशः॥ ३९॥**

अमृतादिकमिदं क्रमेण भागवृद्ध्या वृद्धं मधुना द्रुतं पिटिकादीन् जयेत्। वैतालीयम्। मागधिकादिकैर्बिल्वघृतैः पृथक् पलमितैस्त्रिफलपलषट्कसहितैः सर्वैस्तुल्येन गुग्गुलुना युतैर्मधुसमेतैर्मिश्रितैर्मात्रया भक्षितैः समस्तव्याधिहरणं स्यात्।

**गुग्गुलुपंचपलं पलिकांशा**
**मागधिका त्रिफला च पृथक्स्यात्।**
**त्वक् त्रुटिकर्षयुतं मधुलीढं**
**कुष्ठभगंदरगुल्मगतिघ्नम्॥ ४०॥**

गुग्गुलुपलानि पंच पिप्पल्यादयः पलांशिकाः त्वगेलयोः प्रत्येकं कर्षं तदेतन्मधुलीढं कुष्ठादिघ्नं स्वायंभुवाख्यो गुग्गुलुरेषः प्रसिद्धः। दोधकं वृत्तम्।

**शृंगवेररजोयुक्तं तदेव च सुभावितम्।**
**क्वाथेन दशमूलस्य विशेषाद्वातरोगजित्॥ ४१॥**

तदेव गुग्गुल्वादि द्रव्यं शुंठीचूर्णयुतं दशमूलक्वाथेन सुभावितं विशेषेण वातरोगजित्।

**उत्तमाखदिरसारजं रजः**
**शीलयन्नसनवारिभावितम्।**
**हंति तुल्यमहिषाख्यमाक्षिकं**
**कुष्ठमेहपिटिकाभगंदरान्॥ ४२॥**

त्रिफलादिरजोऽसनक्वाथेन भावितं तुल्यमहिषाख्यमाक्षिकं शीलयन् कुष्ठादीन् हंति। रथोद्धता।

**भगंदरेष्वेष विशेष उक्तः**
**शेषाणि तु व्यंजनसाधनानि।**
**व्रणाधिकारात्परिशीलनाच्च**
**सम्यग्विदित्वौषधिकं विदध्यात्॥ ४३॥**

भगंदरेषु सर्वेष्वयमुपक्रमविशेषोऽभिहितः शेषाणि तु व्रणानि प्रकटसाधनानि। तेषु व्रणाधिकारात्परिशीलनाच्च सम्यग्विदित्वोपक्रमं यथायोग्यं कुर्यात्। उपजातिः।

**अश्वपृष्ठगमनं चलरोधं**
**मद्यमैथुनमजीर्णमसात्म्यम्।**
**साहसानि विविधानि च रूढे**
**वत्सरं परिहरेदधिकं वा॥ ४४॥**

भगंदरे व्रणे रूढेऽपि तुरगपृष्ठगमनादिकं वर्षं यावदधिकं वा परिहरेदिति। स्वागतावृत्तम्।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने भगंदरप्रतिषेधो नामाष्टाविंशोऽध्यायः॥ २८॥

---

## एकोनत्रिंशोऽध्यायः।

ग्रंथ्यादिविज्ञानमुच्यते।

**अथाऽतो ग्रंथ्यर्बुदश्लीपदापचीनाडीविज्ञानं व्याख्यास्यामः।**

**कफप्रधानाः कुर्वंति मेदोमांसास्रगा मलाः।**
**वृत्तोन्नतं यं श्वयथुं स ग्रंथिर्ग्रथनात्स्मृतः॥ १॥**

मेदोमांसरक्तस्थिताः कफप्रधाना दोषा वृत्तोन्नतं यं श्वयथुं कुर्वंति स ग्रथनाद् ग्रंथिः स्मृतः ।

**दोषास्रमांसमेदोऽस्थिसिराव्रणभवा नव ।**

ते च ग्रंथयो दोषाद्यात्मकत्वान्नवसंख्याः स्युः ।

**ते तत्र वातादायामतोदभेदान्वितो सितः ॥ २ ॥**
**स्थानात्स्थानांतरगतिरकस्माद्धानिवृद्धिमान् ।**
**मृदुर्बस्तिरिवानद्धो विभिन्नोच्छं स्रवत्यसृक् ॥ ३ ॥**

तेषु मध्ये वातादायामादिगुणः श्वयथुः स्यात् । स च विभिन्नो लोहितमच्छं स्रवति ।

**पित्तात्सदाहः पीताभो रक्तो वा पच्यते द्रुतम् ।**
**भिन्नोऽस्रमुष्णं स्रवति**

पित्तेन दाहयुतः पीतच्छविरथवा रक्तशोफः शीघ्रं पच्यते । भिन्नः स उष्णमसृक् स्रवति ।

**श्लेष्मणा नीरुजो घनः ॥ ४ ॥**
**शीतः सवर्णः कंडूमान् पक्वः पूयं स्रवेद्घनम् ।**

कफेन नीरुजो घनः शोफः शीतस्पर्शः शरीरसमानवर्णः कंडूयुतश्च स्यात् । स पक्वः पूयं घनं स्रवेत् ।

**दोषैर्दुष्टेऽसृजि ग्रंथिर्भवेन्मूर्छत्सु जंतुषु ॥ ५ ॥**
**सिरामांसं च संश्रित्य सः स्वापः पित्तलक्षणः ।**

दोषैर्दुष्टे लोहिते सति ग्रंथिर्भवेत् । जंतुषु कृमिषु वृद्धिं गच्छत्सु सिरामांसं च संश्रित्य स्वापान्वितः शोफः पित्तसमानलक्षणः स्यात् ।

**मांसलैर्दूषितं मांसमाहारैर्ग्रंथिमावहेत् ॥ ६ ॥**
**स्निग्धं महांतं कठिनं सिरानद्धं कफाकृतिम् ।**

मांसलैराहारैर्मांसं दूषितं तद् ग्रंथिं स्निग्धादिगुणयुक्तं कफाकारं करोति ।

**प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि ॥ ७ ॥**
**वायुना कुरुते ग्रंथिं भृशं स्निग्धं मृदुं चलम् ।**
**श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ॥ ८ ॥**
**स विभिन्नो घनं मेदस्ताम्राऽसितसितं स्रवेत् ।**

मेदुरैर्भोजनैर्मेदः प्रवृद्धं वायुना मांसे नीतमथवा त्वचि नीतं मेदोग्रंथिं भृशं स्निग्धादिगुणं श्लेष्मसमानाकारं तथा शरीरक्षयवृद्धिभ्यां क्षयोदयौ यस्य तं तादृशं करोति । स च ग्रंथिर्भिन्नः सन् घनं ताम्रमसितं सितं च मेदः स्रवति ।

**अस्थिभंगाभिघाताभ्यामुन्नतावनतं तु यत् ॥ ९ ॥**
**सोऽस्थिग्रंथिः**

अस्थिभंगेनाभिघातेन वाऽस्थ्न्युन्नतमवनतं वा यत्स्यात् सोऽस्थिग्रंथिः ।

**पदातेस्तु सहसांभोवगाहनात् ।**
**व्यायामाद्वा प्रतांतस्य सिराजालं सशोणितम् १०**
**वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च ।**
**निःस्फुरं नीरुजं ग्रंथिं कुरुते स सिराह्वयः ॥ ११ ॥**

पदातेः सहसैव जलावगाहाद्व्यायामाद्वा प्रतांतस्य ग्लानस्य पवनः क्रुद्धः सरक्तं सिराजालं संपीड्य तथा संकोच्य वक्रीकृत्य विशोष्य च निःस्फुरं नीरुजं ग्रंथिं कुरुते स सिरासंज्ञः । निःस्फुरमिति । स्फुरतिस्फुलत्योरित्यादिना पत्वम् ।

**अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ।**
**सार्द्रे वा बंधरहिते गात्रेऽश्माभिहतेऽथवा ॥१२॥**
**वातास्रमस्तुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।**
**कुर्यात्सदाहः कंडूमान् व्रणग्रंथिरयं स्मृतः॥१३॥**

अरूढे व्रणे तथा रूढमात्रे सद्यो रूढे व्रणे सर्वरसाशिनो नरस्याथवा । सार्द्रे व्रणे बंधरहिते शरीरेऽश्माभिहते वा वातो रक्तमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणं कुर्यात् । दाहादियुत एष व्रणग्रंथिः स्मृतो मुनिभिः ।

**साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः ।**
**मर्मकंठोदरस्थाश्च**

दोषास्रमेदोजा ग्रंथयः साध्याः । न पुनः स्थूलाः खराश्चलास्तथा मर्मस्थाः कंठस्था उदरस्थाश्च ग्रंथयः साध्याः ।

**महत्तु ग्रंथितोर्बुदम् १४**
**तल्लक्षणं च मेदोंतैः षोढा दोषादिभिस्तु तत् ।**
**प्रायो मेदःकफाढ्यत्वात्स्थिरत्वाच्च न पच्यते१५**

ग्रंथेर्यन्महत्तदर्बुदं तस्य चार्बुदस्य लक्षणं षट्प्रकारम् । कथम् । दोषैस्त्रीणि । रक्तमांसमेदोभिस्त्रीणीति । तच्चार्बुदं मेदःकफबाहुल्यात् स्थिरत्वाच्च प्रायः पचनं न याति ।

**सिरास्थं शोणितं दोषः संकोच्यांतः प्रपीड्य च ।**
**पाचयेत तदानद्धं सास्रावं मांसपिंडितम्॥१६॥**
**मांसांकुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ।**
**अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ॥१७॥**

सिरास्थितं रक्तं दोषो वाताद्यन्यतमः संकोच्यांतरमभ्यंतरे च प्रपीड्य पाचयेत् । तत्पक्वं च सदानद्धं सास्रावं मांसपिंडितं मांसांकुरैश्चितं वृद्धिं गच्छति । वृद्धं च सदाशु सततं दुष्टं रुधिरं प्रभूतं स्रवति । तदेवंविधं शोणितार्बुदं गद्यते । मांसार्बुदमेदोर्बुदयोश्च लक्षणं तद् ग्रंथिलक्षणेनैवोक्तप्रायत्वान्नेहोक्तम् ।

**तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ।**

तेषु षट्स्वर्बुदेषु मध्ये शोणितमांसजे द्वे अर्बुदे नोपक्रमेत् । अपराणि चत्वारि साधयेत् ।

**प्रस्थिता वंक्षणोर्वादिमधः कायं कफोल्बणाः॥ १८**
**दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते।**
**शनैः शनैर्घनं शोफं श्लीपदं तत्प्रचक्षते॥ १९॥**

अधः कायं वंक्षणोरुप्रभृतिदोषा गताः कफोल्बणा मांसलोहितगाः कालेन पादौ समाश्रित्य निबिडं श्वयथुं शनैः शनैर्विदधति। तदेतच्छ्लीपदं प्रचक्षते।

**परिपोटयुतं कृष्णमनिमित्तरुजं खरम्।**
**रूक्षं च वातात्**

श्लीपदं वातात् परिपोटेन त्वग्भेदेन युक्तं कृष्णवर्णमहेतुपीडं खरं रूक्षं च स्यात्।

**पित्तात्तु पीतं दाहज्वरान्वितम्॥ २०॥**
**कफाद्गुरुस्निग्धमरुक्चितं मांसांकुरैर्बृहत्।**

पित्तात् पीतं दाहज्वरयुतं च स्यात्। कफेन गुरु स्निग्धं रुजारहितं मांसांकुरैश्चितं महच्च स्यात्।

**तत्त्यजेद्वत्सरातीतं सुमहत्सु परिस्रुति॥ २१॥**

तच्छ्लीपदं वर्षातिक्रांतं सुमहत्सु परिस्रावं च त्यजेत्।

**पाणिनासौष्ठकर्णेषु वदंत्येके तु पादवत्।**
**श्लीपदं जायते तच्च देशेऽनूपे भृशं भृशम्॥ २२॥**

पाण्यादिष्वपि पादवच्छ्लीपदं जायत इत्येके वदंति। तच्चानूपदेशेऽतिशयेन रोगस्वभावाज्जायते।

**मेदस्थाः कंठमन्याक्षकक्षावंक्षणगा मलाः।**
**सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन्॥**
**अवगाढान् बहून् गंडांश्चिरपाकांश्च कुर्वते।**
**पच्यंतेऽल्परुजस्त्वन्ये स्रवंत्यन्येतिकंडुराः॥ २४॥**
**नश्यंत्यन्ये भवंत्येते दीर्घकालानुबंधिनः।**
**गंडमालापची चेयं दूर्वेव क्षयवृद्धिभाक्॥ २५॥**

मेदस्थाः कंठादिगा दोषाः सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकारानवगाढान् बहून् गंडांश्चिरपाकांश्च कुर्वते। ते च गंडाः स्तोकपीडाः पच्यंते। अन्ये च स्रवंति। अपरे चातिकंडुराः कंडुं रांति दधत इति कंडुराः। नश्यंत्यन्ये। अन्ये जायंते दीर्घकालानुबंधिनः। इयमीदृशी गंडमाला अपची चोच्यते। दूर्वेव क्षयवृद्धिभाक्।

**तां त्यजेत्सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम्।**

तां गंडमालां ज्वरादियुतां त्यजेत्।

अथ नाडीविज्ञानमाह।

**अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः॥ २६॥**
**अनुप्रविश्य मांसादीन् दूरं पूयोऽभिधावति।**
**गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः॥ २७॥**
**नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः।**

पक्वशोफस्याभेदनादपथ्यसेविनश्च पुंसो व्रणे पूयो मांसादीननुप्रविश्य दूरं व्रजति। सा दूरगमनाद् गतिरित्युच्यते। नाडीव संस्रुतेर्नाडीत्युच्यते। अन्येषां तु तंत्रकृतां मत एका नाड्यनृजुर्वक्रा नाडीत्युच्यते। सैव नाड्यनेकगतिर्गतिरित्युच्यत इति।

**सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पंचमी॥ २८॥**

सा नाडी पृथग्दोषैस्त्रिसंख्यासन्निपातेन चतुर्थी। पंचमी शल्यहेतुः।

**वातात्सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्गमा।**
**स्रवत्यभ्यधिकं रात्रौ**

वातात्सरुजादिगुणा।

**पित्तात्तृड्ज्वरदाहकृत्॥ २९॥**
**पीतोष्णपूतिपूयास्रुर्दिवा चाऽतिनिषिंचति।**

पित्तात्तृडादिकृत्। पीतोष्णपूतिपूयस्रावी दिवसे चाऽतिशयेन स्रवति।

**घनपिच्छिलसंस्रावा कंडूला कठिना कफात् ३०**
**निशि चाऽभ्यधिकक्लेदा**

कफाद् घनपिच्छिलस्रावा कंडूमती कठिना निशि चाऽभ्यधिकक्लेदा स्यात्।

**सर्वैः सर्वाकृतिं त्यजेत्।**

सर्वैर्दोषैः सर्वाकारां तां च त्यजेत्।

**अंतःस्थितं शल्यमनाहृतं तु**
**करोति नाडीं वहते च साऽस्य।**
**फेनानुविद्धं तनुमल्पमुष्णं**
**सास्रं च पूयं सरुजं च नित्यम्॥ ३१॥**

अंतरे स्थितं शल्यमनाकृष्टं सन्नाडीं करोति। अस्य च शल्यवतः पुंसः सा नाडी फेनिलं तन्वादिगुणं च पूयं नित्यमेव सरुजं वहत इति। उपजातिर्वृत्तम्।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने ग्रंथ्यर्बुदश्लीपदापचीनाडीविज्ञानं नाम एकोनत्रिंशोऽध्यायः॥ २९॥

## त्रिंशोऽध्यायः।

अधुना ग्रंथ्यादीनां चिकित्सितं विभणिषुराह।

**अथाऽतो ग्रंथ्यर्बुदश्लीपदापचीनाडीप्रतिषेधं व्याख्यास्यामः॥**

**ग्रंथिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया।**

आमेष्वपक्वेषु ग्रंथिषु शोफेष्विव क्रिया चिकित्सितम्।

**बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ १ ॥**
**स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम् ।**

बृहत्यादिभिः सिद्धेन सर्पिषा शुद्धिकामं नरं स्नेहयेत् । ततः शुद्धस्य कृतवमनविरेकस्य सततस्तीक्ष्णैर्द्रव्यैर्लेपनं कार्यम् ।

**संस्वेद्य बहुशो ग्रंथिं विमृद्नीयात् पुनः पुनः ॥ २ ॥**

ग्रंथिं सम्यक्स्वेदयित्वांगुष्ठादिभिः पुनः पुनर्विमृद्नीयात् ।

**एष वाते विशेषेण क्रमः पित्तास्रजे पुनः ।**
**जलौकसो हिमं सर्वं कफजे वातिको विधिः ॥३॥**

एष क्रमो विशेषेण वाते कार्यः । पित्तास्रजे ग्रंथौ जलौकसः सर्वदा शीतं प्रलेपादिकं हितम् । कफजे ग्रंथौ वातोद्भवग्रंथिविहितः क्रमः ।

**तथाप्यपक्वं छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ।**
**साध्वशेषं सशेषो हि पुनराप्ययते ध्रुवम् ॥ ४ ॥**

एवमप्यपक्वमेनं ग्रंथिं साधु यथाभवत्यशेषं च तथा छित्त्वा स्थिते रक्ते सत्यग्निना दहेत् । शेषः कस्मान्न क्रियत इत्याह । यस्मात्सशेषो ग्रंथिर्निश्चयेनैव पुनराप्यायते वृद्धिं याति ।

**मांसव्रणोद्भवौ ग्रंथी पाटयेदेवमेव च ।**

मांसव्रणोद्भवौ ग्रंथी एवमेव पाटयेत् ।

**कार्यं मेदोभवेप्येतत्तप्तैः फालादिभिश्च तम् ॥ ५ ॥**
**प्रमृद्यात्तिलदिग्धेन छन्नं द्विगुणवाससा ।**
**शस्त्रेण पाटयित्वा वा दहेन्मेदसि सूद्धृते ॥ ६ ॥**

मेदोजेप्येतत् कार्यम् । तं च मेदोद्भवं ग्रंथिं तिलकल्कदिग्धेन द्विगुणवाससा छन्नं संतं मेदोग्रंथिं पाठयित्वा तप्तैः फालादिभिरुपस्पृशेत् । अथवा शस्त्रेण पाटयित्वा मेदसि निःशेषमुद्धृते सत्यग्निना दहेत् ।

**सिराग्रंथौ नवे पेयं तैलं साहचरं तथा ।**
**उपनाहोनिलहरैर्बस्तिकर्मसिराव्यधः ॥ ७ ॥**

सिराग्रंथौ च नवे साहचरं तैलं पेयम् । तथा वातघ्नैरुपनाहो हितो बस्तिकर्म सिराव्यधश्च ।

**अर्बुदे ग्रंथिवत् कुर्यात् यथास्वं सुतरां हितम् ।**

अर्बुदे ग्रंथाविव सर्वं यथायोगं सुतरां हितं कुर्यात् ।

**श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ८**
**सिरामुपरि गुल्फस्य द्व्यंगुले पाययेच्च तम् ।**
**मासमेरंडजं तैलं गोमूत्रेण समन्वितम् ॥ ९ ॥**
**जीर्णे जीर्णान्नमश्नीयाच्छुंठीशृतपयोन्वितम् ।**
**त्रैवृतं वा पिबेदेवमशांतावग्निना दहेत् ॥ १० ॥**
**गुल्फस्याधः सिरामोक्षः**

श्लीपदे वातोत्थे स्निग्धे स्विन्न उपनाहिते च गुल्फस्य द्व्यंगुल उपरि सिरां व्यधेत् । तं च श्लीपदिनं मासमेरंडोद्भवं तैलं गोमूत्रयुतं पाययेत् । जीर्णे चैरंडतैले पुराणमन्नं शाल्योदनं शुंठीशृतेन क्षीरेण सहाश्नीयात् । त्रैवृतं वा पिबेत् । एवमप्यशांतौ बह्निना दहेत् । तथा गुल्फस्याधस्तात्सिरां मोक्षयेत् ।

**पैत्ते सर्वं च पित्तजित् ।**

पैत्ते तु श्लीपदे सर्वं पित्तजिच्चिकित्सितं हितम् ।

**सिरामंगुष्ठके विध्वा कफजे शीलयेद्यवान् ॥११॥**
**सक्षौद्राणि कषायाणि वर्धमानास्तथाभयाः ।**
**लिंपेत्सर्षपवार्ताकीमूलाभ्यां धान्ययाथवा ॥१२॥**

कफजे तु सिरामंगुष्ठके विध्वा यवान्नं शीलयेत् । कषायगुणयुक्तानि द्रव्याणि माक्षिकान्वितानि हितानि । तथा वर्धमाना द्वित्र्यादिक्रमेण हरीतक्यो हिताः । सर्षपमूलेन वार्ताकीमूलेन च लिंपेत् । धान्यया यवासकयवाशुंठ्या लिंपेत् ।

**ऊर्ध्वाधः शोधनं पेयमपच्यां साधितं घृतम् ।**
**दंतीद्रवंतीत्रिवृताजालिनीदेवदालिभिः ॥ १३ ॥**
**शीलयेत्कफमेदोघ्नं धूमगंडूषनावनम् ।**
**सिरयाऽपहरेद्रक्तं पिबेन्मूत्रेण तार्क्ष्यजम् ॥१४॥**

अपच्यामूर्ध्वाधः शोधनं दंत्यादिभिः साधितं घृतं पातव्यम् । तथा कफमेदोहरं धूमादिकमभ्यसेत् । सिरया रक्तं हरेत् । रसांजनं गोमूत्रेणालोडितं पिबेत् ।

**ग्रंथीनपक्वानालिंपेन्नाकुलीपटुनागरैः ।**
**स्विन्नान् लवणपोटल्या कठिनाननु मर्दयेत् १५**

आमान् ग्रंथीन्नाकुल्यादिभिरालिंपेत् । कठिनान् ग्रंथींल्लवणपोटल्या स्विन्नान् पश्चादंगुष्ठादिना मर्दयेत् ।

**शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ।**
**लेपः पिष्टोम्लतक्रेण ग्रंथिगंडविलापनः ॥ १६ ॥**

शम्यादिभिरम्लतक्रपिष्टैर्लेपो ग्रंथ्यादिविम्लापनः ।

**पाकोन्मुखान् स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ।**
**अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥१७॥**

पाकोन्मुखान् ग्रंथीन् स्रुतरक्तस्य पित्तश्लेष्मघ्नैर्द्रव्यैर्जयेत् । अथवाऽपक्वानेव ग्रंथीनुद्धृत्य क्षाराग्निभ्यामुपक्रमेत् ।

**काकादनीलांगलिकानहिकोत्तुंडिकीफलैः ।**

---

**१ सार्धश्लोकः क्षेपकः ।**

क्षुण्णानि निंबपत्राणि क्लिन्नैर्भल्लातकैः सह ।
शरावसंपुटे दग्ध्वा सार्धं सिद्धार्थकैः समैः ॥ १ ॥
एतच्छगांबुना पिष्टं गंडमालाप्रलेपनम् ।

जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥ १८ ॥
पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करंजतैलस्य निर्गुंडीस्वरसाढकैः ॥१९॥
अनेन मालागंडानां चिरजा पूयवाहिनी ।
सिध्यत्यसाध्यकल्पाऽपि पानाभ्यंजननावनैः २०

काकादन्यादिभिः कल्कैर्द्विकर्षोन्मितैर्विषकर्षयुतैः करंजतैलस्य प्रस्थं निर्गुंडीस्वरसस्याढके पचेत् । तेन तैलेन गंडमाला चिरोत्था पूयवाहिनी वाऽसाध्यप्रायाऽपि पानादिभिः सिध्यति ।

तैलं लांगलिकीकंदकल्कपादे चतुर्गुणे ।
निर्गुंडीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥२१॥

लांगलिकीकंदकल्कपादं निर्गुंडीस्वरसे चतुर्गुणे तैलं पक्वं नस्याद्यैरपचीजित् । पादमिति पाठे लांगलकीकंदकल्कः पादो यस्मिंस्तैले तदेवम् ।

भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्धनैः ।
मनःशिलालनलदविशालाकरवीरकैः ॥ २२ ॥
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ।
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥ २३ ॥
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्टं दुष्टनाडीव्रणापचीः २४

भद्रश्रीदार्वादिभिः पलिकैर्गोमूत्रपिष्टैर्विषस्य चार्धपलेन युक्तैर्ब्राह्मीरसादिभिः संयुतं सर्षपतैलप्रस्थं पक्वं पानाद्यैरभ्यस्तं कुष्टादीन् शीघ्रमेव हंति ।

वचाहरीतकीलाक्षाकटुरोहिणिचंदनैः ।
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥२५॥

वचाहरीतक्यादिभिः कल्कितैस्तैलं पक्वं पीतं निर्मूलामपचीं कुर्यात् ।

शरपुंखोद्भवं मूलं पिष्टं तंदुलवारिणा ।
नस्याल्लेपाच्च दुष्टारुरपचीविषजंतुजित् ॥ २६ ॥

शरपुंखामूलं तंदुलजलेन पिष्टं नस्येन लेपनेन च दुष्टारुःप्रभृतीन् हंति ।

मूलैरुत्तमकारुण्याः पीलुवर्ण्याः सहाचरात् ।
सरोध्राभययष्ट्याह्वशताह्वाद्वीपिचारुभिः ॥ २७ ॥
तैलं क्षीरसमं सिद्धं नस्येऽभ्यंगे च पूजितम् ।

उत्तमकारुण्यादीनां मूलैस्तैलं क्षीरतुल्यं सिद्धं नस्येऽभ्यंगे च हितम् । उत्तमैवोत्तमकेति अन्यतरस्यामिति ह्रस्वः । उत्तमका चासावरणिश्चोत्तमकारणी । उत्तमकारुणी करंभः ।

गोव्यजाश्वखुरादग्धाकटुतैलेन लेपनम् ॥ २८ ॥
ऐंगुदेन तु कृष्णाहिर्वायसो वा स्वयं मृतः ।

गवादीनां खुरा दग्धाः कटुतैलेन विमिश्रितेन लेपो हितः । कृष्णसर्पो दग्ध इंगुदीतैलेन काको वा स्वयं मृत इंगुदीतैलेन लेपनं हितम् ।

इत्यशांतौ गदस्यान्यपार्श्वजंघासमाश्रितम् ॥२९॥
वस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाग्निना दहेत् ।

एवमप्यशांतौ सत्यां रोगस्यापरपार्श्वजंघासमाश्रितं बस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वा ज्वलनेन दहेत् ।

स्थितस्योर्ध्वं पदं भित्त्वा तन्मानेन च पार्ष्णितः ३०
तत ऊर्ध्वं हरेद् ग्रंथीनित्याह भगवान्निमिः ।

स्थितस्य पुंस ऊर्ध्वं पदं भित्त्वा तन्मानेन पार्ष्णिप्रदेशात्तावन्मात्रं भित्त्वा तत ऊर्ध्वं ग्रंथीन् हरेदिति निमिमुनिः प्राज्याशयो वदतीति ।

पार्ष्णिं प्रति द्वादश चांगुलानि
मुक्त्वेंद्रबस्तिं च गदान्यपार्श्वे ।
विदार्यमत्स्यांडनिभानि मध्या-
ज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥३१॥

पार्ष्णिं लक्षीकृत्य द्वादशांगुलानि भित्त्वा इंद्रबस्तिं मुक्त्वा गदास्यापरपार्श्वे विदार्य मध्यान्मत्स्यांडसदृशानि जालानि कर्षेदेवं सुश्रुतस्य वचनम् । उपजातिवृत्तम् ।

आगुल्फकर्णात्सुमितस्य जंतो-
स्तस्याष्टभागं खुडकाद्विभज्य ।
घ्राणार्जवेधः सुरराजबस्ते-
र्भित्त्वाक्षमात्रं त्वपरे वदंति ॥ ३२ ॥

गुल्फांतं यावत् कर्णादारभ्य प्राणिनः सुष्ठुमितस्य कर्णानां ह्रस्वलंबत्वेनानियतस्थानत्वात् स्थाननियमं करोति । घ्राणार्जव इति । एतदुक्तं भवति। नासाग्रात् कर्णं प्रति स्पष्टत्वे सति सुमितस्य कर्णाद् गुल्फं यावन्नवमेच तथा तस्य नरस्य खुडकाद् गुल्फादष्टभागं विभज्य त्यक्त्वा इंद्रबस्तेरधस्ताद्भित्त्वाऽक्षमात्रं कर्षेदित्यपरे वदंति । इंद्रवज्रावृत्तम् ।

उपनाह्यानिलान्नाडीं पाटितां साधु लेपयेत् ।
प्रत्यक्पुष्पीफलयुतैस्तैलैः पिष्टैः ससैंधवैः ॥ ३३ ॥

वातान्नाडीमुपनाह्य पाटयित्वा साधु कृत्वाऽपामार्गादिभिर्लेपयेत् ।

पैत्तीं तु तिलमंजिष्ठानागदंतीशिलाह्वयैः ।

पैत्तीं तु पाटितां सतीं तिलादिभिः प्रदेहयेत् ।

श्लैष्मिकीं तिलसौराष्ट्रीनिकुंभारिष्टसैंधवैः ॥ ३४ ॥

श्लैष्मिकीं च पाटितां तिलसौराष्ट्र्यादिभिः प्रदेहयेत् ।

**शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।**

शल्यजां गतिं छिन्नां शोधितां च तिलमध्वाज्यैर्लेपयेत् ।

**अशस्त्रकृत्यामेषिण्या भित्त्वांते सम्यगेषिताम् ३५**
**क्षारपीतेन सूत्रेण बहुशो दारयेद् गतिम् ।**

शस्त्रेण छेदनानर्हां गतिं सम्यगेषितामेषिण्या भित्त्वांऽते क्षारयुक्तेन सूत्रेण पुनः पुनर्दारयेत् ।

**व्रणेषु दुष्टसूक्ष्मास्यगंभीरादिषु साधनम् ॥ ३६ ॥**
**या वर्त्यो यानि तैलानि तन्नाडीष्वपि शस्यते ।**

दुष्टेषु सूक्ष्ममुखेषु गंभीरादिषु व्रणेषु यत्साधनं कथितं या वर्त्तय उक्ता यानि तैलानि तदेतच्चिकित्सितं नाडीष्वपि युज्यते ।

**पिष्टं चंचुफलं लेपान्नाडीव्रणहरं परम् ॥ ३७ ॥**

चंचोः फलं पिष्टं लेपेन परं नाडीव्रणहृत् ।

**घोंटाफलत्वग्लवणं सलाक्षं**
**बूकस्य पत्रं वनितापयश्च ।**
**स्नुगर्कदुग्धान्वित एष कल्को**
**वर्तीकृतो हंत्यचिरेण नाडीम् ॥ ३८ ॥**

घोंटाफलादिकः स्त्रीक्षीरस्नुगर्कदुग्धयुत एष कल्को वर्तीकृतो द्रागेव नाडीं हंति । इंद्रवज्रावृत्तम् ।

**सामुद्रसौवर्चलसिंधुजन्म**
**सुपक्वघोंटाफलवेश्मधूमाः ।**
**आम्रातगायत्रिजपल्लवाश्च**
**कटंकटेर्यावथ चेतकी च ॥ ३९ ॥**
**कल्केऽभ्यंगे चूर्णे**
**वर्त्यां चैतेषु सेव्यमानेषु ।**
**अगतिरिव नश्यति गति-**
**श्चपला चपलेषु भूतिरिव ॥ ४० ॥**

समुद्रलवणादिकं कल्केऽभ्यंगे चूर्णे वर्त्यां चामीष्वभ्यस्यमानेष्वविद्यमानगतिरिव गतिः शीघ्रं नश्यति । चपला चपलेषु नरेषु भूतिर्वित्तं यथेति । उपजातिरार्या च ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने ग्रंथ्यर्बुदश्लीपदापचीनाडीप्रतिषेधो नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ।

क्षुद्ररोगविज्ञानं क्रमप्राप्तमाचिख्यासुराह ।

**अथाऽतः क्षुद्ररोगविज्ञानं व्याख्यास्यामः ।**
**स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसंमिता ।**
**पिटिका कफवाताभ्यां बालानामजगल्लिका ॥ १॥**

बालानां कफवाताभ्यां स्निग्धादिगुणयुक्ता पिटिकाऽजगल्लिकाख्या स्यात् ।

**यवप्रख्यायवप्रख्या ताभ्यां मांसाश्रिता घना ।**

ताभ्यां वातकफाभ्यां यवप्रख्या यवसंज्ञा सा यवप्रख्या । यवाकारा मांसाश्रिता घना कठिना च ।

**अवक्राश्चालजीवृत्तास्तोकपूया घनोन्नताः ॥ २ ॥**
**ग्रंथयः पंच वा षड्वा कच्छपी कच्छपोन्नता ।**

ग्रंथयः पंच वा षड्वा । किंभूता अमुखास्तथाऽलजीव वृत्ता वर्तुलाः स्तोकपूया घना उन्नताश्च कच्छपीत्युच्यते । सा च कच्छपोन्नता स्यात् ।

**कर्णस्योर्ध्वं समंताद्वा पिटिका कठिनोग्ररुक् ॥ ३ ॥**
**शालूकाभा पनसिका**

कर्णस्योपरिष्टात् परितो वा पिटिका कठिना तीव्ररुजा शालूकनिभा पनसिकासंज्ञा ।

**शोफस्त्वल्परुजः स्थिरः ।**
**हनुसंधिसमुद्भूतस्ताभ्यां पाषाणगर्दभः ॥ ४ ॥**

शोफोल्परुजः स्थिरो हनुसंधिसमाश्रितो वातकफाभ्यां पाषाणगर्दभः ।

**शाल्मलीकंटकाकाराः पिटिकाः सरुजो घनाः ।**
**मेदोगर्भा मुखे यूनां ताभ्यां च मुखदूषिकाः ॥ ५ ॥**

वातकफाभ्यां शाल्मलीकंटकसदृशाः पिटिका रुजान्विता घना मेदोगर्भास्तरुणानां मुखे स्युस्ताश्च मुखदूषिकाः ।

**ते पद्मकंटका ज्ञेया यैः पद्ममिव कंटकैः ।**
**चीयते नीरुजैश्श्वेतैः शरीरं कफवातजैः ॥ ६ ॥**

पद्मकंटकसंज्ञास्ते वेद्याः । यैः कंटकैर्नीरुजैः श्वेतवर्णैर्वातकफजैः पद्ममिव शरीरं चीयते ।

**पित्तेन पिटिका वृत्ता पक्वोदुंबरसन्निभा ।**
**महादाहज्वरकरी विवृता विवृतानना ॥ ७ ॥**

पित्तेन या पिटिका वर्तुला पक्वोदुंबरनिभा महादाहाज्वरकृच्च सा विवृताख्या विवृतमुखा स्यात् ।

**गात्रेष्वंतश्च वक्त्रस्य दाहज्वररुजान्विताः ।**
**मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटिका घनाः ॥ ८ ॥**

गात्रेष्ववयवेषु वक्त्रस्य चांऽतरे दाहादियुता मसूरप्रमाणास्तद्वर्णास्तत्संज्ञा मसूरिका घनाः पिटिकाः ।

**ततः कष्टतराः स्फोटा विस्फोटाख्या महारुजाः ।**

ताभ्यो मसूरिकाभ्यो दारुणतमाः स्फोटा महारुजा विस्फोटसंज्ञाः ।

**या पद्मकर्णिकाकारा पिटिका पिटिकान्विता ॥९॥**
**सा विद्धा वातपित्ताभ्यां**

पद्मकर्णिकानिभा या पिटिका पिटकैराचिता सा वातपित्ताभ्यां विद्धा स्यात् ।

**ताभ्यामेव च गर्दभी ।**
**मंडला विपुलोत्सन्ना सरागपिटिकाचिता ॥ १० ॥**

ताभ्यामेव वातपित्ताभ्यां गर्दभीसंज्ञा मंडलाकारा विस्तीर्णा तथोत्सन्ना सरागपिटकैराचिता ।

**कक्षेति कक्षासन्नेषु प्रायो देशेषु सानिलात् ।**

कक्षानिकटेषु प्रदेशेषु सा गर्दभी कक्षेत्युच्यते । सा च वातात्स्यात् ।

**पित्ताद्भवंति पिटिकाः सूक्ष्मा लाजोपमा घनाः ११**

तस्यामेव पित्तेन सूक्ष्माः पिटिका लाजाकारा घनाः कक्षासंज्ञा एव स्युः ।

**तादृशी महती त्वेका गंधनामेति कीर्तिता ।**
**घर्मस्वेदपरीतेंऽगे पिटिकाः सरुजो घनाः ॥ १२ ॥**
**राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ।**

तादृशी लाजासदृशी महती पिटिकैका गंधनामेति स्मृता । घर्मस्वेदयुक्ते शरीरे पिटिकारुजायुता घना राजिकावर्णा राजिकाकारा राजिकाप्रमाणा राजिकासंज्ञाः ।

**दोषैः पित्तोल्बणैर्मंदैर्विसर्पति विसर्पवत् ॥ १३ ॥**
**शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ।**

पित्ताधिकैर्दोषैर्मंदैर्यः शोफो विसर्प इव विसर्पति । तथाऽपाकस्तनुस्ताम्रवर्णो ज्वरकारी च स जालगर्दभः स्यात् ।

**मलैः पित्तोल्वणैः स्फोटा ज्वरिणो मांसदारणाः१४**
**कक्षाभागेषु जायंते येऽग्न्याभाः साऽग्निरोहिणी ।**
**पंचाहात्सप्तरात्राद्वा पक्षाद्वा हंति जीवितम् ॥ १५॥**

पित्तोल्बणैर्मलैर्ज्वरवतो मांसदारणाः स्फोटाः कक्षाप्रदेशेषु येऽग्निसदृशा जायंते साऽग्निरोहिणीत्युच्यते । पंचाहेन सप्तरात्रेण पक्षेण वा जीवितं हंति ।

**त्रिलिंगा पिटिकावृत्ता जत्रूर्ध्वमिरिवेल्लिका ।**

त्रिदोषलक्षणा पिटिका वर्तुला जत्रुण ऊर्ध्वमिरिवेल्लिकाख्या ।

**विदारीकंदकठिना विदारी कक्षवंक्षणे ॥ १६ ॥**

विदारीकंदवत् कठिना कक्षायां वंक्षणे च विदारी स्यात् । कक्षा च वंक्षणं च कक्षावंक्षणं तस्मिन् पाण्योरित्यादिना ह्रस्वः ।

**मेदोऽनिलकफैर्ग्रंथिः स्नायुमांससिराश्रयैः ।**
**भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः १७**
**मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ।**
**दुर्गंधं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥ १८ ॥**
**तां स्रावयंति निचितां विद्यात्तच्छर्करार्बुदम् ।**

मेदः पवनकफैः स्नायुमांससिराश्रयैर्ग्रंथिः स्यात् । स च भिन्नो वसाघृतमधुनिभं स्रवेत् । तस्मिन् पवनोऽधिको मांसं विशोष्य ग्रथितां शर्करां कुर्यात् । ततो दोषास्तां शर्करां निचितां दुर्गंधं लोहितं क्लिन्नं विविधवर्णं स्रावयंति । तदेवंविधं शर्करार्बुदं विद्यात् ।

**पाणिपादतले संधौ जत्रूर्ध्वं वोपचीयते ॥ १९ ॥**
**वल्मीकवच्छनैर्ग्रंथिस्तद्वद्बह्वणुभिर्मुखैः ।**
**रुग्दाहकंडूक्लेदाढ्यो वल्मीकोऽसौ समस्तजः २०**

पाणितले पादतले संधौ जत्रूर्ध्वं वा ग्रंथिर्वल्मीक इव शनैरुपचीयते । तद्वद्व वल्मीकवद्बहूनि च तान्यणूनि च तैर्भूरिसूक्ष्मैर्वदनैरुपलक्षितो रुग्दाहकंडूक्लेदबहुलो वल्मीकाख्योऽसौ त्रिदोषजः।

**शर्करोन्मथिते पादे क्षते वा कंटकादिभिः ।**
**ग्रंथिः कीलवदुत्सन्नो जायते कदरं तु तत् ॥ २१ ॥**

शर्करादिभिरुन्मथिते पादे कंटकादिभिर्वा क्षते कीलसदृशो ग्रंथिरुत्सन्नो जायते तत्कदरं नाम ।

**वेगसंधारणाद्वायुरपानोऽपानसंश्रयम् ।**
**अणूकरोति बाह्यांतर्मार्गमस्य ततः शकृत् ॥ २२ ॥**
**कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ।**

अपानाख्यो वायुर्वेगसंधारणादपानाश्रयं मार्गं बाह्यान्तरणूकरोति । ततोऽस्यातुरस्य कृच्छ्रेण शकृन्निर्याति । अयं रोगो रुद्धगुदो मतः ।

**कुर्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ॥२३॥**
**चिप्यमक्षतरोगं च विद्यादुपनखं च तम् ।**

पित्तानिले कर्तनखमांसे सरुग्ज्वरं पाकं कुर्यात् । तच्चिप्यं तथाऽक्षतरोगमुपनखं च विद्यात् ।

**कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥२४॥**

अभिघातात्कृष्णवर्णो रूक्षश्च खरश्च नखः कुनखाख्यः ।

**दुष्टकर्दमसंस्पर्शात्कंडूक्लेदान्वितांतराः ।**
**अंगुल्योऽलसमित्याहुस्**

दुष्टकर्दमसंस्पर्शात् कंडूक्लेदयुतांतरा अंगुल्योऽलसमिति वदंति।

**तिलाभांस्तिलकालकान् ॥ २५ ॥**
**कृष्णानवेदनांस्त्वक्स्थान्**

तिलसदृशान् कृष्णवर्णानरुजांस्त्वक्स्थांस्तिलकानाहुः ।

**माषांस्तानेव चोन्नतान् ।**

तानेव तिलकानुन्नतान् माषानाहुः ।

**माषेभ्यस्तून्नततरांश्चर्मकीलान् सितासितान्॥२६॥**

माषेभ्यः सकाशादुन्नततरान् वर्णतः सितासितान् चर्मकीलांस्तानाहुः ।

**तथाविधो जतुमणिः सहजो लोहितस्तु सः ।**

तत्प्रमाणो जतुमणिः सहजो लोहितवर्णश्चासौ ।

**कृष्णं सितं वा सहजं मंडलं लांछनं समम् ॥ २७॥**

शुक्लं कृष्णं सहजं मंडलाकारं शरीरसमं लांछनमाहुः ।

**शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ।**
**श्यामलं मंडलं व्यंगं वक्त्रादन्यत्र नीलिका ॥ २८ ॥**

वातपित्ताच्छोकादिकुद्धात्तनु श्यामवर्णं मंडलाकारं मुखे व्यंगं वदंति । मुखादन्यत्र नीलिका ।

**परुषं परुषस्पर्शं व्यंगं श्यावं च मारुतात् ।**
**पित्तात्ताम्रान्तमानीलं श्वेतान्तं कंडुमत्कफात् २९**
**रक्ताद्रक्तांतमाताम्रं शोषं चिमचिमायते ।**

परुषच्छविस्तथा परुषस्पर्शं श्यामवर्णं च व्यंगं वातात्स्यात् । पित्तेनाताम्रांतं किंचिन्नीलं कफेन श्वेतान्तं सकंडु च स्यात् । रक्ताद्रक्तांतं किंचित्ताम्रं शोषयुतं चिमचिमायते च ।

**वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति॥३०॥**
**ततस्त्वग्जायते पांडुः क्रमेण च विचेतना ।**
**अल्पकंडुरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः ॥ ३१ ॥**

पवनेन कफः प्रेरितस्त्वचं प्राप्य विशुष्यत्यनंतरं त्वक् पांडुः क्रमेण च विचेतना अल्पकंडूर्विक्लेदरहिता च जायते । सा प्रसुप्तितः प्रसुप्तिः स्यात् ।

**असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।**
**मंडलान्यतिकंडूनि रागवंति बहूनि च ॥ ३२ ॥**
**उत्कोठः सोऽनुबद्धस्तु कोठ इत्यभिधीयते ।**

असम्यग्वमनेन प्रेरितः पित्तश्लेष्मान्ननिग्रहैर्मंडलान्यतिशयकंडूनि रागवंति लोहितानि बहूनि च उत्कोठः स्यात् । स एवानुबद्धः कोठ इत्युच्यते ।

**प्रोक्ताः षट्त्रिंशदित्येते क्षुद्ररोगा विभागशः॥३३॥**

इत्यनेन प्रकारेण षट्त्रिंशत् क्षुद्ररोगा विभागेनोक्ता इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने क्षुद्ररोगविज्ञानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ।

अथैषां चिकित्सितं विवक्षुराह ।

**अथाऽतः क्षुद्ररोगप्रतिषेधं व्याख्यास्यामः ।**
**विस्रावयेज्जलौकोभिरपक्वामजगल्लिकाम् ।**

अपक्वामजगल्लिकां जलजन्मभिर्विस्रावयेत् ।

**स्वेदयित्वा यवप्रख्यां विलयाय प्रलेपयेत् ॥ १ ॥**
**दारुकुष्ठमनोह्वालैर्**

यवप्रख्यां स्वेदयित्वा विलायनार्थं प्रलेपयेद्दार्वादिभिः ।

**इत्यापाषाणगर्दभात् ।**
**विधिस्तांश्चाचरेत्पक्वान् व्रणवत्साजगल्लिकान् ॥२॥**

पाषाणगर्दभं यावदेष विधिः । तेन ग्रंथिकच्छपशालूकपाषाणगर्दभानां पूर्वोक्तं कार्यमित्यवतिष्ठते । तांश्च पक्वान् साजगल्लिकांश्च व्रणवदुपक्रमेत् ।

**रोध्रकुस्तुंबरुवचाप्रलेपो मुखदूषिके ।**
**वटपल्लवयुक्ता वा नारीकेलोत्थशुक्तयः ॥ ३ ॥**
**अशांतौ वमनं नस्यं ललाटे च सिराव्यधः ।**

मुखदूषिके रोध्रादयः प्रलेपाः वटपल्लवयुक्ता नारीकेलशुक्तयो वा । एवमप्यनुपशमे वमनं नस्यं च हितम् । ललाटे च सिरामोक्षः ।

**निंबांबुवांतो निंबांबुसाधितं पद्मकंटके ॥ ४ ॥**
**पिबेत्क्षौद्रान्वितं सर्पिर्निंबारग्वधलेपनम् ।**

पद्मकंटके निंबांबुना कृतवमनो निंबक्वाथपक्वं घृतं सक्षौद्रं पिबेत् । निंबकर्णिकाराभ्यां लेपः ।

**विवृतादींस्तु जालांतांश्चिकित्सेन्निरिवेल्लिकान् ।**
**पित्तवीसर्पवत्तद्वत् प्रत्याख्यायाग्निरोहिणीम् ॥ ५ ॥**

विवृतादीन् जालांतान्निरिवेल्लिकांश्च पित्तवीसर्पमिव चिकित्सेत् । अग्निरोहिणीं च प्रत्याख्याय चिकित्सेत् ।

**विलंघनं रक्तविमोक्षणं च**
**विरूक्षणं कायविशोधनं च ।**
**धात्रीप्रयोगान् शिशिरप्रदेहान्**
**कुर्यात्सदा जालकगर्दभस्य ॥ ६ ॥**

जालकगर्दभस्य लंघनादि यथावस्थं सदा कुर्यात् ।

**विदारिकां हृते श्लेष्मग्रंथिवदाचरेत् ।**

विदारिकां रक्ते स्रुते कफग्रंथिमिव चिकित्सेत् ।

**मेदोर्बुदक्रियां कुर्यात्सुतरां शर्करार्बुदे ॥ ७ ॥**

शर्करार्बुदे सुष्ठु मेदोर्बुदक्रियां कुर्यात् ।

**प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ।**
**वल्मीकं हस्तपादे च वर्जयेद्**

वल्मीकं प्रवृद्धादिगुणं हस्तपादे जातं च वर्जयेत् ।

**इतरत्पुनः ॥ ८ ॥**

**शुद्धस्यास्रे हृते लिंपेत् सपट्वारैवतामृतैः ।**
**श्यामाकुलत्थिकामूलदंतीपललसक्तुभिः ॥ ९ ॥**

इतरत्पुनर्वल्मीकं शुद्धस रक्ते हृते श्यामादिभिः सलवणकर्णिकारगुडूचीभिर्लिंपेत् ।

**पक्के तु दुष्टमांसानि गतीः सर्वाश्च शोधयेत् ।**
**शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ॥ १० ॥**

पक्के तु दुष्टमांसानि सर्वाश्च गतीः शोधयेत् । केन । शस्त्रेण । कथम् । सम्यक् । पश्चात्क्षारेणाग्निना च ।

**शस्त्रेणोत्कृत्य निःशेषं स्नेहेन कदरं दहेत् ।**
**निरुद्धमणिवत्कार्यं रुद्धपायोश्चिकित्सितम् ॥ ११ ॥**

कदरं शस्त्रेण निःशेषमुत्कृत्य स्नेहेन दहेत् । रुद्धगुदे च चिकित्सितं निरुद्धमणिसदृशं कार्यम् ।

**चिप्यं शुद्ध्या जितोष्माणं साधयेच्छस्त्रकर्मणा ।**

चिप्यं शुद्ध्या विरेकादिकया जितोष्माणं संतं शस्त्रकर्मणा साधयेत् ।

**दुष्टं कुनखमप्येवं**

कुनखं दुष्टमप्येवमेव साधयेत् ।

**चरणावलसे पुनः ॥१२॥**
**धान्याम्लसिक्तौ कासीसपटोलीरोचनातिलैः ।**
**सनिंबपत्रैरालिंपेद्**

अलसे तु चरणौ कांजिकसिक्तौ कासीसादिभिः सनिंबपत्रैरालिंपेत् ।

**दहेत्तु तिलकालकान् ॥ १३ ॥**
**मषांश्च सूर्यकांतेन क्षारेण यदि वाऽग्निना ।**

तिलकालकान्मषांश्च सूर्यकांतादिभिर्दहेत् ।

**तद्वदुत्कृत्य शस्त्रेण चर्मकीलजतूमणी ॥ १४ ॥**

चर्मकीलजतूमणी शस्त्रेणोद्धृत्य तथैव सूर्यकांतादिभिर्दहेत् ।

**लांछनादित्रये कुर्याद्यथासन्नं सिराव्यधम् ।**
**लेपयेत्क्षीरपिष्टैश्च क्षीरिवृक्षत्वगंकुरैः ॥ १५ ॥**

लांछनादिषु त्रिषु लांछनव्यंगनीलिकासु यथासन्नं सिरां विध्येत् । क्षीरिवृक्षाणां त्वग्भिरंकुरैश्च क्षीरपिष्टैर्लेपयेत् ।

**व्यंगेषु चार्जुनत्वग्वा मंजिष्ठा वा समाक्षिका ।**
**लेपः सनवनीता वा श्वेताश्वखुरजा मषी ॥ १६ ॥**

व्यंगादिषु चायं लेपोऽर्जुनवल्कं माक्षिकपिष्टं वा मंजिष्ठा माक्षिकसहिता वा । श्वेताश्वखुरजा मषी सनवनीता वा ।

**रक्तचंदनमंजिष्ठाकुष्टरोध्रप्रियंगवः ।**
**वटांकुरा मसूराश्च व्यंगघ्ना मुखकांतिदाः ॥ १७ ॥**

रक्तचंदनादयो व्यंगहरा मुखकांतिकरा लेप इति प्रकृतत्वाद् गम्यते ।

**द्वे जीरके कृष्णतिलाः सर्षपाः पयसा सह ।**
**पिष्टाः कुर्वंति वक्त्रेंदुमपास्तव्यंगलांछनम् ॥ १८ ॥**

जीरकद्वयादयो लेपे प्रयुक्ताः पयसा पिष्टा वक्त्रचंद्रं निरस्तव्यंगलांछनं विदधति । वक्त्रमेवेंदुर्व्यंगमेव लांछनमिति रूपकालंकारः ।

**क्षीरपीष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः ।**
**मसूराः क्षीरपिष्टा वा तीक्ष्णाः शाल्मलिकंटकाः१९**
**सगुडः कोलमज्जा वा शशासृक्क्षौद्रकल्कितः ।**
**सप्ताहं मातुलुंगस्थं कुष्टं वा मधुनान्वितम् ॥ २० ॥**
**पिष्टा वा छागपयसा सक्षौद्रा मौशली जटा ।**
**गौरस्थि मुशलीमूलयुक्तं वा साज्यमाक्षिकम् ॥२१॥**

मसूरा भृष्टा निस्तुषाश्च क्षीरपिष्टाः सर्पिर्माक्षिकान्विता लेपः । शाल्मलीकंटकास्तीक्ष्णाः क्षीरपिष्टा वा लेपः । कोलस्याम्लबदरस्य मज्जा शशासृक्क्षौद्रपिष्टो गुडान्वितो लेपः । सप्ताहं बीजपूरस्यांतरस्थितं कुष्टं माक्षिकयुतं वा लेपः । मौशलीजटा शाल्मलीमूलं छागलीक्षीरपिष्टं सक्षौद्रं वा लेपः । गव्यमस्थि तालपत्रीमूलान्वितं सघृतमाक्षिकं वा लेपः ।

**जंब्वाम्रपल्लवा मस्तुहरिद्रे द्वे नवो गुडः ।**
**लेपः सवर्णकृत् पिष्टं स्वरसेन च तिंदुकम् ॥ २२ ॥**

जंब्वाम्रपल्लवादिको लेपः सवर्णकरस्तिंदुकं च स्वरसेन पिष्टं लेपः सवर्णकरः ।

**उत्पलपत्रं तगरं प्रियंगुकालीयकंबदरमज्जा ।**
**इदमुद्वर्तनमास्यं करोति शतपत्रसंकाशम् ॥ २३ ॥**

उत्पलादिकमेतदुद्वर्तनं पद्मसदृशं मुखं विधत्ते । आर्या ।

**एभिरेवौषधैः पिष्टैर्मुखाभ्यंगाय साधयेत् ।**
**यथादोषर्तुकान् स्नेहान् मधुकक्काथसंयुतैः ॥ २४ ॥**

एभिरेव पूर्वोदितैः पिष्टैर्मधुकं क्काथान्वितैर्मुखाभ्यंगार्थं यथादोषं यथर्तुस्नेहान् पाचयेत् ।

**यावान् सर्जरसं रोध्रमुशीरं चंदनं मधु ।**
**घृतं गुडं च गोमूत्रे पचेदादर्विलेपनात् ॥ २५ ॥**
**तदभ्यंगान्निहंत्याशु नीलिकाव्यंगदूषिकान् ।**
**मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥ २६ ॥**

यवादीन् दर्विलेपं यावद् गोमूत्रे पाचयेत् । एतदभ्यंगाद् द्रागेव नीलिकादीन् हंति । वक्त्रं शतपत्रसदृशं करोति । चरणौ पंकजपत्रतुल्यौ विदधाति ।

**कुंकुमोशीरकालीयलाक्षायष्ट्याह्वचंदनम् ।**
**न्यग्रोधपादांस्तरुणान् पद्मकं पद्मकेसरम् ॥ २७ ॥**
**सनीलोत्पलमंजिष्ठं पालिकं सतिलाढके ।**
**पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥ २८ ॥**

**लाक्षापत्तंगमंजिष्ठायष्टीमधुककुंकुमैः ।**
**अजाक्षीरद्विगुणितं तैलस्य कुडवं पचेत् ॥ २९ ॥**
**नीलिकापलितव्यंगवलीतिलकदूषिकान् ।**
**हंति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥ ३० ॥**

कुंकुमादिकं सनीलोत्पलमंजिष्ठं पलप्रमाणं जलाढके पक्त्वा तेन पादावशेषेण लाक्षादिभिश्च पिष्टैः कार्षिकैस्तैलस्य कुडवं छागीक्षीरद्विकुडवं पचेत् । तत् तैलं नस्यं शीलितं नीलिकादीन् हंति । मुखोपचयकरं वर्णकरं च ।

**मंजिष्ठाशंबरोद्भवस्तुवरिकालाक्षाहरिद्राद्वयं**
**नेपालीहरितालकुंकुमगदागोरोचनागैरिकम् ।**
**पत्रं पांडुवटस्य चंदनयुगं कालीयकं पारदं**
**पत्तंगं कनकत्वचं कमलजं बीजं तथा केसरम् ३१**
**सिक्थं तुत्थं पद्मकाद्यो वसाज्यं**
**मज्जा क्षीरं क्षीरिवृक्षांबु चाग्नौ ।**
**सिद्धं सिद्धं व्यंगनील्यादिनाशे**
**वक्रे छायामैंदवीं चाशु धत्ते ॥ ३२ ॥**

कनकस्य त्वक् कनकत्वक् तां कनकत्वचम् । मंजिष्ठादीनि वसाघृतं मज्जा गोक्षीरं क्षीरिवृक्षक्काथ एतदग्नौ सिद्धं पक्वं व्यंगादिनाशे सिद्धमव्याहतशक्ति । मुखस्य कांतिं चांद्रमसीं शीघ्रं करोति । शार्दूलविक्रीडितशालिन्यौ वृत्ते ।

**मार्कवस्वरसक्षीरतोयपिष्टानि नावने ।**

नावने नस्ये मार्कवस्वरसादीनि ।

**प्रसुप्तौ वातकुष्ठोक्तं कुर्याद्दाहं च वह्निना ।**

प्रसुप्तौ वातकुष्ठविहितं कुर्यात् । वह्निना च दहेत् ।

**उत्कोठे कफपित्तोक्तं कोठे सर्वं च कौष्ठिकम् ॥ ३३**

उत्कोठे कफपित्तविहितं कार्यं कोठे च सर्वं कुष्ठोक्तमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने क्षुद्ररोगप्रतिषेधो नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ।

अथ क्रमप्राप्तं गुह्यरोगं व्याचिख्यासुराह ।

**अथाऽतो गुह्यरोगविज्ञानं व्याख्यास्यामः ।**
**स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।**
**दोषाध्युषितसंकीर्णमलिनाणुरजःपथाम् ॥ १ ॥**
**अन्ययोनिमनिच्छंतीमगम्यां नवसूतिकाम् ।**
**दूषितं स्पृशतस्तोयं रतांतेष्वपि नैव वा ॥ २ ॥**
**विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।**
**मुष्टिदंतनखोत्पीडाविषवच्छुक्रपातनैः ॥ ३ ॥**
**वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः ।**
**दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥ ४ ॥**
**जनयंत्युपदंशादीन्**

वनितासंभोगान्निवृत्तस्य सहसाऽकस्मादेव स्त्रीव्यवायं भजतः । केचित्करादिनैव व्यवायाभासं कुर्वंति तन्निवृत्त्यै स्त्रीग्रहणम् । अथवेति वक्ष्यमाणगुणां स्त्रियं सेवमानस्य । किंभूताम् । वाताद्यधिष्ठितस्तथा संकीर्णः संकटो मलिनोऽणुः सूक्ष्मो रजोमार्गो यस्यास्तां तथाविधां स्त्रियम् । तथाऽन्ययोनिं महिष्यादींस्तथाऽनभिलषंतीम् । तथाऽगम्यां भगिन्यादिकाम् । तथा नवसूताम् । तथा दूषितं सविषजंत्वादिभिर्जलं स्पृशतो रतांतेष्वपि नैव वा जलं स्पृशतः । विवर्धयितुमिच्छया तीक्ष्णान् प्रलेपसेकादीन् वा कृत्वा गुह्ये प्रयच्छतः । तथा मुष्ट्यादिपातनैस्तथा वेगरोधनेन । तथा दीर्घातिखरस्पर्शनेन च योनिविघट्टनानि तैरेव दोषा दुष्टा गुह्यं प्राप्तास्त्रयोविंशतिं वक्ष्यमाणानुपदंशादीन्कुर्वंति ।

**उपदंशोऽत्र पंचधा ।**
**पृथग्दोषैः सरुधिरैः समस्तैश्च**

अत्र एषु मध्य उपदंशः पंचप्रकारः । कथमित्याह । दोषैः पृथक् त्रयः । रक्तेन चतुर्थः । सन्निपातेन पंचमः ।

**अत्र मारुतात् ॥ ५ ॥**
**मेढ्रशोफे रुजश्चित्राः स्तंभस्त्वक्परिपोटनम् ।**

एषां मध्ये वातेनोपदंशे मेढ्रशोफो भवति । दारुणाः पीडाः स्तंभस्तथा त्वचः परिपोटनम् ।

**पक्वोदुंबरसंकाशः पित्तेन श्वयथुर्ज्वरः ॥ ६ ॥**

पित्तेन श्वयथुः पक्वोदुंबरफलनिभो ज्वरश्च स्यात् ।

**श्लेष्मणा कठिनः स्निग्धः कंडूमान् शीतलो गुरुः ।**

श्लेष्मणा श्वयथुः कठिनादिगुणः स्यात् ।

**शोणितेनासितस्फोटसंभवोऽस्रस्रुतिर्ज्वरः ॥ ७ ॥**

लोहितेन कृष्णस्फोटसंभवादयः स्युः ।

**सर्वजे सर्वलिंगत्वं श्वयथुर्मुष्कयोरपि ।**
**तीव्रा रुगाशुपचनं दरणं कृमिसंभवः ॥ ८ ॥**

सर्वदोषजे सर्वलिंगत्वं श्वयथुश्च मुष्कयोः स्यात् । तीव्रा रुक्शीघ्रपाकादिश्च ।

**याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ।**

एतेषां मध्ये रक्तजो याप्यः । सन्निपातोत्थो मृत्युहेतुः ।

**जायंते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ॥ ९ ॥**
**अंतर्बहिर्वा मेढ्रस्य कंडूला मांसकीलकाः ।**
**पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ॥१०॥**
**तेऽर्शांस्युपेक्षया घ्नंति मेढ्रपुंस्त्वभगार्तवम् ।**

दोषैर्गुह्यरक्तमांसाश्रयैः क्रुद्धैर्मेढ्रस्यांतर्बहिर्वा कंडूला मांसकीलकाः शंकवो जायंते । तथा पिच्छिलरक्तस्राविणस्तथैव योनौ छत्रसदृशाः स्युः । ते मांसकीला अर्शांसि गद्यंते । उपेक्षिताश्च मेढ्रे जाताः पुंस्त्वं घ्नंति । भगे जाता आर्तवं घ्नंति ।

**गुह्यस्य बहिरंतर्वा पिटिकाः कफरक्तजाः ॥ ११ ॥**
**सर्षपा मानसस्थाना घनाः सर्षपिकाः स्मृताः ।**

गुह्यस्य बाह्यतोंऽतरे कफरक्तजाः पिटिकाः सर्षपप्रमाणाः सर्षपाकारा घनाः सर्षपिकाः स्मृताः ।

**पिटिका बहवो दीर्घा दीर्यते मध्यतश्च याः ॥ १२ ॥**
**सोऽवमंथः कफासृग्भ्यां वेदनारोमहर्षवान् ।**

पिटिका बहवो दीर्घा मध्ये च या दीर्यंते सोऽवमंथो वेदनारोमांचवान् कफरक्ताभ्यां स्यात् ।

**कुंभीका रक्तपित्तोत्था जांबवास्थिनिभाऽशुजा १३**

जांबवास्थिरूपा कुंभिका रक्तपित्तोद्भवा शीघ्रोत्पत्तिश्च ।

**अलजीं मेहवद्विद्याद्**

अलजीं प्रमेहे यथा तथाऽस्मिन्नपि विद्यात् ।

**उत्तमां रक्तपित्तजाम् ।**
**पिटिकां माषमुद्गाभां**

उत्तमाख्यां पित्तरक्तजां मेढ्रपिटिकां माषसमां मुद्गाभां विद्यात्।

**पिटिका पिटिकाचिता ॥ १४ ॥**
**कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ।**

पिटिकाचिता या पिटिका स्यात् । तथा पद्मकर्णिकाकारा पुष्करकर्कटाभा तां पुष्करिकेति विद्यात् ।

**पाणिभ्यां भृशसंव्यूढे संव्यूढपिटिका भवेत् ॥१५॥**

हस्ताभ्यामतिशयेन संव्यूढे घृष्टे पिटिकाख्या स्यात् ।

**मृदितं मृदितं वस्त्रसंरब्धं वातकोपतः ।**

मृदितं मलितं वस्त्रसंरब्धं वाससा क्षोभितं वातकोपान्मृदितं स्यात् ।

**विषमा कठिना भुग्ना वायुनाऽष्ठीलिका स्मृता १६**

या पिटिका विषमा समुन्नता तथा कठिना कुटिला च पवनेनाष्ठीलिका गदिता ।

**विमर्दनादिदुष्टेन वायुना चर्ममेढ्रजम् ।**
**निवर्तते सरुग्दाहं क्वचित्पाकं च गच्छति ॥ १७ ॥**
**पिंडितं ग्रंथितं चर्म तत्प्रलंबमधोमणेः ।**
**निवृत्तसंज्ञं सकफं कंडूकाठिन्यवत्तु तत् ॥ १८ ॥**

वायुना विमर्दनादिदुष्टेन मेढ्रजं चर्म सरुग्दाहं निवर्तते । क्वचित्कदाचित् पाकमपि याति । तच्चर्म मणेरधः पिंडितं ग्रंथितं प्रलंबं च स्यात् । तत्सकफं कफेन तु सह कंडूकाठिन्ययुतं निवृत्तसंज्ञं स्यात् ।

**दुरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका ।**

कृच्छ्रेण रोहति यच्च दुःस्फुटितं चर्म तत् कथितमवपाटिका ।

**वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् ॥ १९॥**
**स्रोतोमूत्रं ततोभ्येति मंदधारमवेदनम् ।**
**मणेर्विकाशरोधश्च सनिरुद्धमणिर्गदः ॥ २० ॥**

वातेन चर्म दूषितं मणौ सक्तं चेत्स्रोतो रुणद्धि । ततो मंदधारमरुजं मूत्रमेति । मणेश्च विकाशरोधः स एवंविधो रोगो निरुद्धमणिसंज्ञः ।

**लिंगं शूकैरिवापूर्णं ग्रथिताख्यं कफोद्भवम् ।**

लिंगं शूकैराकीर्णमिव स्यात् । तद्ग्रथितसंज्ञं कफजम् ।

**शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ॥ २१ ॥**

शूकदूषितरक्तोद्भवा स्पर्शहानिः सा स्पर्शहानिसंज्ञा ।

**छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम् ।**
**वातशोणितकोपेन तं विद्याच्छतपोनकम् ॥ २२ ॥**

यत्पुनर्मेढ्रं छिद्रैः सूक्ष्ममुखैः सर्वतः परितश्चितं वातशोणितकोपात् तच्छतपोनकं विद्यात् ।

**पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वरदाहवान् ।**

पित्तरक्ताभ्यां त्वचः पाको ज्वरदाहान्वितस्त्वक्पाकाख्यः ।

**मांसपाकः सर्वजः सर्ववेदनो मांसशातनः ॥ २३ ॥**

सर्वदोषोत्थो मांसपाकाख्यः सर्ववेदनो मांसशातनः ।

**सरागैरसितैः स्फोटैः पिटिकाभिश्च पीडितम् ।**
**मेहनं वेदनाश्चोग्रास्तं विद्यादसृगर्बुदम् ॥ २४ ॥**

ईषल्लोहितैः कृष्णैः स्फोटैः पिटिकाभिश्च पीडितं लिंगं वेदनाश्च दारुणास्तमेवंविधं रक्तार्बुदं जानीयात् ।

**मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ।**

मांसार्बुदं पूर्वमुक्तं ग्रंथ्यादिरोगविज्ञानीये तच्च त्रिदोषजम् । विद्रधिश्च त्रिदोषजः स उक्तो विद्रध्यादिविज्ञानीये ।

**कृष्णानि भूत्वा मांसानि विशीर्यंते समंततः ॥२५॥**
**पक्वानि सन्निपातेन तान् विद्यात्तिलकालकान् ।**

कृष्णानि मांसानि भूत्वा परितो विशीर्यंते पक्वानि सन्निपातेन तानेवंप्रकारांस्तिलकालकान् विद्यात् ।

**मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ॥२६॥**
**चतुरो वर्जयेदेषांश्छेषांश्छीघ्रमुपाचरेत् ।**

एषां मध्ये मांसार्बुदादींश्चतुरस्त्यजेन्नोपक्रमेत्। शेषान् षोडश रोगांश्छीघ्रमुपक्रमेत्।

**विंशतिर्व्यापदो योनेर्जायंते दुष्टभोजनात् ॥ २७ ॥**

योनेर्व्यापदो विंशतिर्दुष्टाहाराद्भवंति।

**विषमस्थांगशयनभृशमैथुनसेवनैः।**
**दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ॥ २८ ॥**
**योनौ क्रुद्धोऽनिलः कुर्याद् रुक्तोदायामसुप्तताः।**
**पिपीलिकासृप्तिमिव स्तंभं कर्कशतां स्वनम् ॥ २९ ॥**
**फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम्।**
**स्रंसं वंक्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ॥ ३० ॥**
**तांस्तांश्च स्वान्गदान्व्यापद्वातिकी नाम सा स्मृता।**

विषमस्थांगशयनादिभिर्योनौ पवनः कुपितो रुजादीन् कुर्यात्। तथा पिपीलिकोपसर्पणमिव स्तंभं कर्कशतां स्वनं च। तथा फेनिलादिगुणार्तवस्रुतिं तथा वंक्षणादौ भ्रंशं रुजां क्रमेण च गुल्मं कुर्यात्। तांस्तांश्चानेकविधान् रोगान् कुर्यात्। सैवंविधा व्यापद् वातिकी स्मृता।

**सैवातिचरणा शोफसंयुक्तातिव्यवायतः ॥ ३१ ॥**

सैवाऽतिशरणा श्वयथुयुताऽतिव्यवायात्स्यात्।

**मैथुनादतिबालायाः पृष्ठजंघोरुवंक्षणम्।**
**रुजन्संदूषयेद्योनिं वायुः प्राक्चरणेति सा ॥ ३२ ॥**

मैथुनादतिबालायाः पवनः पृष्ठजंघोरुवंक्षणं पीडयन् योनिं संदूषयेत्। प्राक्चरणेति सा स्यात्।

**वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः।**
**स फेनिलं रजः कृच्छ्रादुदावृत्तं विमुंचति ॥ ३३ ॥**
**इयं व्यापदुदावृत्ता**

वेगोदावर्तनेन मारुतो योनिं प्रकर्षेण पीडयति। ततः सा योनिः फेनिलं रजः कृच्छ्रादुदावृत्तं विसृजति। एषा व्यापत्तिरुदावृत्ताख्या।

**जातघ्नी तु यदानिलः।**
**जातं जातं सुतं हंति रौक्ष्याद्दुष्टार्तवोद्भवम् ॥३४॥**

यदा तु वायुः सुतमुत्पन्नमुत्पन्नं रौक्ष्याद्दुष्टार्तवजं हंति तदा जातघ्नी स्यात्।

**अत्याशिताया विषमं स्थितायाः सुरते मरुत्।**
**अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ३५**
**सास्थिमांसं मुखं तीव्ररुजमंतर्मुखीति सा ॥**

अतिसुहिताया विषमं स्थिताया निधुवने पवनोऽन्नेनोत्पीडितो योनेः संबंधिनि स्रोतसि स्थितो मुखं योनेरेव वक्रीकुर्यादस्थिमांसेन सह दारुणपीडं सांतर्मुखीत्युच्यते।

**वातलाहारसेविन्यां जनन्यां कुपितोऽनिलः ॥३६॥**
**स्त्रियो योनिमणुद्वारां कुर्यात्सूचीमुखीति सा।**

वातलाहारसेविन्यां मातरि वायुः कुपितः स्त्रियो गर्भस्थायाः सूक्ष्मद्वारां योनिं कुर्यात्। सूचीमुखी सा स्यात्।

**वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसंग्रहम् ॥ ३७ ॥**
**करोति योनेः शोषं च शुष्काख्या सातिवेदना।**

ऋतौ वेगधारणाद्वायुर्दुष्टो विण्मूत्रसंग्रहं करोति योनेः शोषं च करोति सा शुष्कसंज्ञाऽतिरुजा स्यात्।

**षडाहात्सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ॥ ३८ ॥**
**वमेत्सरुङ् नीरुजो वा यस्याः सा वामिनी मता।**

षडहेनाथवा सप्ताहेन गर्भाशयाद्वायुः सरुजो नीरुजो वा यस्याः शुक्रं वमेत् सा वामिनी गदिता।

**योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः ॥ ३९ ॥**
**नृद्वेषिण्यस्तनी च स्यात्षंढसंज्ञाऽनुपक्रमा।**

वातोपतप्तायां योनौ स्त्रीगर्भे बीजदोषान्नरद्वेषिणी स्तनरहिता च स्त्री स्यात्। सा षंढसंज्ञाऽनुपक्रमा।

**दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः ॥४०॥**
**कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम्।**
**उत्सन्नमांसां तामाहुर्महायोनिं महारुजाम् ॥ ४१ ॥**

पवनो दुष्टो योन्यास्यं विष्टभ्य गर्भकोष्ठं च विवृतमुखीं भ्रष्टां वातिकीमिव सुदुःखामुत्सृष्टमांसां प्रकृतत्वाद्योनिं कुरुते। तां महारुजां महायोनिं वदंति।

**यथास्वैर्दूषणैर्दुष्टं पित्तं योनिमुपाश्रितम्।**
**करोति दाहपाकोषापूतिगंधज्वरान्विताम् ॥ ४२ ॥**
**भृशोष्णभूरिकुणपनीलपीतासितार्तवाम् ।**
**सा व्यापत्पैत्तिकी**

यथायोगं दूषणैः सर्वरोगनिदानाद्युक्तैर्दुष्टं पित्तं योनौ स्थितं योनिं दाहाद्यन्वितां करोति। तथा भृशोष्णादिगुणयुतार्तवाम्। सा पैत्तिकी व्यापत्।

**रक्तयोन्याख्यासृगतिस्रुतेः ॥४३॥**

रक्तयोन्याख्या रक्तस्यातिस्रुतेः स्यात्।

**कफोभिष्यंदिभिः क्रुद्धः कुर्याद्योनिमवेदनाम्।**
**शीतलां कंडुलां पांडुपिच्छिलां तद्विधस्रुतिम् ४४**
**सा व्यापच्छ्लैष्मिकी**

श्लेष्माऽभिष्यंदकरणहेतुभिः कुपितो योनिं पीडारहितां शीतलादिगुणां तथा तद्विधा पांडुपिच्छिला स्रुतिर्यस्यास्तां तथाविधां कुर्यात्। सैवंविधा व्यापत् श्लैष्मिकी स्यात्।

**वातपित्ताभ्यां क्षीयते रजः ।**
**सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ॥ ४५॥**

यस्यां वातपित्ताभ्यां रजः क्षीयते दाहकार्श्यवैवर्ण्ययुतं सा लोहितक्षयाख्या ।

**पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।**
**पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥ ४६ ॥**
**शूनास्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।**
**बस्तिकुक्षिगुरुत्वातीसारारोचककारिणी ॥ ४७ ॥**
**श्रोणिवंक्षणरुक्तोदज्वरकृत्सा परिप्लुता ।**

पित्तलायाः स्त्रिया नरसंयोगात् क्षवथूद्गारधारणात् पित्तान्वितेन वायुना योनिर्दूषिता शूनादिगुणा बस्त्यादिगुरुत्वादिविधायिनी तथा श्रोण्यादितोदकरी स्यात् । सा परिप्लुताख्या ।

**वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥४८॥**
**उपप्लुता स्मृता योनिर्**

वातश्लेष्मरोगेण व्याप्ता शुक्लपिच्छिलस्राविणी योनिरुपप्लुता स्यात् ।

**विप्लुताख्या त्वधावनात् ।**
**संजातजंतुः कंडूला कंड्वा चातिरतिप्रिया ॥ ४९ ॥**

अक्षालनात्तु योनिः संभूतक्रिमिः कंडूयुता कंड्वा चाहेतुना सुतरां सुरताभिलाषिणी विप्लुताख्या ।

**अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्छितः ।**
**कर्णिकां जनयद्योनौ रजोमार्गनिरोधिनी ॥ ५० ॥**
**सा कर्णिनी**

मरुदकालवाहनात्कफरक्तमिश्रितो योनौ कर्णिकां रजोमार्गनिरोधिनीं कुर्यात् । सा कर्णिनी गद्यते ।

**त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ।**
**यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥ ५१ ॥**

त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैर्यथायोगमुपद्रवकारिभिर्या व्यापत् सा सान्निपातिकी स्यात् ।

**इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति ।**
**ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणान् ।**
**असृग्दरार्शोगुल्मादीनाबाधाश्चानिलादिभिः ॥ ५२**

इतिः समाप्तौ । एवं योनिरोगाः कथिता इति शेषः । यैरामयैर्योनिः शुक्रं न प्रतीच्छति । ततो गर्भं नादत्ते । रोगांश्च दारुणानसृग्दरादीनश्नुते वातपित्तकफैश्चाबाधा पीडाविशेषान् प्राप्नोति ।

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने गुह्यरोगविज्ञानं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ।

अथैतच्चिकित्सां ब्रूते ।

**अथाऽतो गुह्यरोगप्रतिषेधं व्याख्यास्यामः ।**
**मेढ्रमध्ये सिरां विध्येदुपदंशे नवोत्थिते ।**
**शीतां कुर्यात् क्रियां शुद्धिं विरेकेण विशेषतः ॥१॥**
**तिलकल्कघृतक्षौद्रैर्लेपः पक्वे तु पाटिते ।**

उपदंशेऽचिरोद्भूते लिंगस्य मध्ये सिरां मोक्षयेत् । शिशिरां च चिकित्सां लेपसेकादिभिः कुर्यात् । विशेषेण विरेचनेन शुद्धिं विदधीत । पक्वे पाटिते च तिलकल्काज्यमधुभिर्लेपः ।

**जंब्वाम्रसुमनोनीपश्वेतकांबोजिकांकुरान् ॥ २ ॥**
**शल्लकीबदरीबिल्वपलाशातिनिशोद्भवाः ।**
**त्वचः क्षीरिद्रुमाणां च त्रिफलां च जले पचेत् ३**
**स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम् ।**

जंब्वाद्यंकुरान् । शल्लक्यादीनां त्वचः क्षीरिवृक्षाणां च त्वचस्त्रिफलां च जले पचेत् । स क्वाथः क्षालनं हितम् । तेन क्वाथेन तैलं पक्वं रोपणं स्यात् ।

**तुत्थगैरिकलोध्रैलामनोह्वालरसांजनैः ॥ ४ ॥**
**हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ।**
**लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः ॥ ५ ॥**

तुत्थादिभिर्माक्षिकद्रुतैः सूक्ष्मीकृतैर्लेप उपदंशव्रणहरः ।

**कपाले त्रिफला दग्धा सघृता रोपणं परम् ।**

कर्परे त्रिफला दग्धा घृतान्विता परं रोपणम् ।

**सामान्यं साधनमिदं प्रतिदोषं तु शोफवत्॥६॥**

सामान्यमेतत्साधनं प्रतिदोषं तु शोफतुल्यं चिकित्सितं ज्ञेयम् ।

**न च याति यथा पाकं प्रयतेत तथा भृशम् ।**
**पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥**

यथा च पाकं न याति तथाऽतियत्नः कार्यः । यतः पक्वैः स्नाय्वादिभिः प्रायेण ध्वजो मेढ्रो नश्यति ।

**अर्शसां छिन्नदग्धानां क्रिया कार्योपदंशवत् ।**

अर्शसां छिन्नानां दग्धानां चोपदंशतुल्या क्रिया कार्या ।

**सर्षपा लिखिताः सूक्ष्मैः कषायैरवचूर्णयेत् ॥८॥**
**तैरेवाभ्यंजनं तैलं साधयेद् व्रणरोपणम् ।**

सर्षपिकाः शस्त्रेण लिखिताः कषायद्रव्यैर्जंब्वादिभिः पूर्वोक्तैः सूक्ष्मचूर्णैरवचूर्णयेत् । तैरेव कषायैस्तैलं पचेत् । तदभ्यंजनं व्रणरोपणं स्यात् ।

**क्रियेयमवमंथेऽपि रक्तं स्राव्यं तथोभयोः ॥ ९ ॥**

एतच्चिकित्सितमवमंथेपि कार्यम् । तथैनयोः सर्षपावमंथयोरसं स्राव्यम् ।

**कुंभीकायां हरेद्रक्तं पक्कायां शोधिते व्रणे ।**
**तिंदुकत्रिफलारोध्रैर्लेपस्तैलं च रोपणम् ॥ १० ॥**

कुंभीकायां लोहितं मोक्षयेत् । पक्कायां तु व्रणे शोधिते सति तिंदुकादिभिर्लेपः तिंदुकादिभिरेव सिद्धं तैलं रोपणं स्यात् ।

**अलज्यां स्रुतरक्तायामयमेव क्रियाक्रमः ।**

अलज्यां स्रुतशोणितायामेष एवोपक्रमः ।

**उत्तमाख्यां तु पिटिकां संछिद्य बडिशोद्धृताम् ११**
**कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ।**

उत्तमाख्यां पिटिकां बडिशोद्धृतां सम्यक् छेदयित्वा कषायाणां कल्कैश्चूर्णैः क्षौद्रयुक्तैरुपक्रमेत् ।

**क्रमः पित्तविसर्पोक्तः पुष्करव्यूढयोर्हितः ॥१२॥**

पुष्करिकायां संव्यूढे च पित्तविसर्पविहितं चिकित्सितं हितम् ।

**त्वक्पाके स्पर्शहान्यां च सेचयेद्**

त्वक्पाकस्पर्शहान्योः सेचनम् ।

**मृदितं पुनः ।**
**बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ १३ ॥**

मृदितं नाम लिंगरोगं वक्ष्यमाणेन बलातैलेन सेचयेत् । तथा मधुरैर्द्रव्यैः कल्कितैः सुखोष्णैर्घृतस्निग्धैरुपनाहश्च कार्यः ।

**अष्ठीलिकां हृते रक्ते श्लेष्मग्रंथिवदाचरेत् ।**

अष्ठीलिकां रक्ते हृते कफग्रंथिमिवोपक्रमेत् ।

**निवृत्तं सर्पिषाऽभ्यज्य स्वेदयित्वोपनाहयेत् ॥१४॥**
**त्रिरात्रं पंचरात्रं वा सुस्निग्धैः शाल्वलादिभिः।**
**स्वेदयित्वा ततो भूयः स्निग्धं चर्म समानयेत् १५**
**मणिं प्रपीड्य शनकैः प्रविष्टे चोपनाहनम् ।**
**मणौ पुनः पुनः स्निग्धं भोजनं चाऽत्र शस्यते १६**

निवृत्तसंज्ञं लिंगरोगं घृतेनाभ्यज्य स्वेदयित्वा चोपनाहयेत् । त्रिरात्रं पंचरात्रं वा सुस्निग्धैः शाल्वलादिभिः । ततो भूयः स्वेदयित्वा स्निग्धं चर्म मणिं समानयेत् । किं कृत्वा । मणिं शनैः प्रपीड्य । प्रविष्टे मणौ चोपनाहं पुनः पुनः कुर्यात् । भोजनं चाऽत्र स्निग्धं हितम् ।

**अयमेव प्रयोज्यः स्यादवपाट्यामपि क्रमः ।**

अयमेव क्रमोऽवपाटिकायां योज्यः स्यात् ।

**नाडीमुभयतोद्वारां निरुद्धे जतुना स्रुताम् ॥ १७ ॥**
**स्नेहाक्तां स्रोतसि न्यस्य सिंचेत्स्नेहैश्चलापहैः ।**
**त्र्यहात्त्र्यहात्स्थूलतरां न्यस्यनाडीं विवर्धयेत् ॥ १८ ॥**
**स्रोतोद्वारमसिद्धौ तु विद्वान् शस्त्रेण पाटयेत् ।**
**सेवनीं वर्जयन् युंज्यात्सद्यःक्षतविधिं ततः ॥१९॥**

निरुद्धे निरुद्धाख्ये निरुद्धमणौ नाडीं द्विद्वारां जतुना स्रुतां लिप्तां स्नेहाक्तां लिंगे न्यस्य लिंगं बलातैलादिभिः स्नेहैः सिंचेत् त्र्यहात्त्र्यहात्स्थूलतरां नाडीं क्षिप्त्वा स्रोतोद्वारं वृद्धिं नयेत् । एवमप्यसिद्धौ धीमान् वैद्यः सेवनीं परिहरन् शस्त्रेण पाटयेत् । ततः पाटनादनंतरं सद्यःक्षतविधानं युंज्यात् ।

**ग्रंथितं स्वेदितं नाड्या स्निग्धोष्णैरुपनाहयेत् ।**

ग्रंथितसंज्ञं नाड्या स्वेदितं स्निग्धोष्णैरुपनाहयेत् ।

**लिंपेत्कषायैः सक्षौद्रैर्लिखित्वा शतपोनकम् ॥२०॥**

शतपोनकं लिंगरोगं लिखित्वा कषायद्रव्यचूर्णैः समाक्षिकैर्लिंपेत् ।

**रक्तविद्रधिवत्कार्या चिकित्सा शोणितार्बुदे ।**

शोणितार्बुदे रक्तविद्रधिवच्चिकित्सा कर्तव्या ।

**व्रणोपचारं सर्वेषु यथावस्थं प्रयोजयेत् ॥ २१ ॥**

सर्वेषु लिंगरोगेषु यथावस्थमवस्थावशाद् व्रणोपचारानंतःशुद्धिकषायलेपघृततैलरसक्रियाचूर्णाञ्छोधनरोपणान् प्रयोजयेत् ।

**योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।**
**स्नेहनस्वेदबस्त्यादिवातजासु विशेषतः ॥ २२ ॥**

योनिव्यापत्सु विषये प्रायेण पवनविजयि चिकित्सितं युक्तं स्नेहनादि वातोत्थासु व्यापत्तिषु विशेषेण शस्यते ।

**नहि वाताद्दते योनिर्वनितानां प्रदुष्यति ।**
**अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ॥ २३॥**

यतो वातमंतरेण योषितो योनिर्न दुष्यति तस्मात्तं जित्वा परस्य दोषस्यौषधं कुर्यात् ।

**पाययेत बलातैलं मिश्रकं सुकुमारकम् ।**
**स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्समाम्॥**
**पाणिनोन्नमयेज्जिह्मां संवृत्तां व्यधयेत्पुनः ।**
**प्रवेशयेन्निःसृतां च विवृतां परिवर्तयेत् ॥ २५ ॥**
**स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रियो भवेत् ।**

तां स्त्रियं बलातैलं मिश्रकाख्यं वा सुकुमारकाह्वयं पाययेत् । तथा योनिं स्निग्धां स्विन्नां च दुःस्थितां समां स्थापयेत् । जिह्मां कुटिलां योनिं हस्तेन नमयेत् । संवृत्तां तु व्यधयेत् । प्रसारयेदित्यर्थः । निःसृतां च प्रवेशयेत् । विवृतां तु सतीं परिवर्तयेत् । यतः स्थानाद् भ्रष्टा योनिः स्त्रियः शल्यरूपा भवेत् ।

**कर्मभिर्वमनाद्यैश्च मृदुभिर्योजयेत्स्त्रियम् ॥ २६ ॥**
**सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ।**
**बस्त्यभ्यंगपरीषेकप्रलेपपिचुधारणम् ॥ २७ ॥**

वमनादीनि च कर्माणि मृदून्यखराणि स्त्री कारयितव्या। सर्वतोध उपरिष्टाच्च विशुद्धाया नार्याः परिशिष्टं कर्म बस्त्यादिकं क्रियते।

काश्मर्यत्रिफलाद्राक्षाकासमर्दनिशाद्वयैः।
गुडूचीसैर्यकाभीरुशुकनासापुनर्नवैः॥ २८॥
पुरूषकैश्च विपचेत्प्रस्थमक्षसमैर्घृतात्।
योनिवातविकारघ्नं तत्पीतं गर्भदं परम्॥ २९॥

काश्मर्यादिभिः कल्कितैः कार्षिकैर्घृतात्प्रस्थं पचेत् तद्धृतं पीतं योनिवातविकारहरं सुष्ठु गर्भदम्।

वचोपकुंचिकाजाजीकृष्णावृषकसैंधवम्।
अजमोदायवक्षारशर्कराचित्रकान्वितम्॥ ३०॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तद्धृतभर्जितम्।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये॥ ३१॥

वचादिकं पिष्ट्वा प्रसन्नयाऽलोड्य घृतभर्जितं खादेद्योनिपार्श्वार्त्यादिशांतये।

वृषकं मातुलुंगस्य मूलानि मदयंतिकाम्।
पिबेन्मद्यैः सलवणैस्तथा कृष्णोपकुंचिकैः॥३२॥

वृषकादीनि मद्यैः सलवणैः पिबेत्। तथा पिप्पलीस्थूलजीरकैर्वा मद्यैः सलवणैः पिबेत्।

रास्नाश्वदंष्ट्रावृषकैः श्रृतं शूलहरं पयः।

रास्नादिभिः श्रृतं पयः शूलघ्नम्।

गुडूचीत्रिफलादंतीक्वाथैश्च परिषेचनम्॥ ३३॥

गुडूच्यादिभिः क्वाथैः परिषेचनं सुखोष्णं हितं प्रकृतत्वाद्योनौ।

नतवार्ताकिनीकुष्ठसैंधवामरदारुभिः।
तैलात्प्रसाधिताद्धार्यः पिचुर्योनौ रुजापहः॥३४॥

नतादिभिस्तैलात् पक्वात् पिचुर्योनौ धृतो रुजाघ्नः।

पित्तलानां तु योनीनां सेकाभ्यंगपिचुक्रियाः।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ३५

पित्तलानां च योनीनां शीतादिकाः क्रियाः सेकाद्याः कार्याः स्नेहनार्थं घृतानि च देयानि।

शतावरीमूलतुलाचतुष्कात्क्षुण्णपीडितात्।
रसेन क्षीरतुल्येन पाचयेत घृताढकम्॥ ३६॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः।
पिष्टैः प्रियालैश्चाक्षांशैर्मधुकाद्विबलान्वितैः॥ ३७॥
सिद्धशीते तु मधुनः पिप्पल्याश्च पलाष्टकम्।
शर्कराया दशपलं क्षिपेल्लिह्यात्पिचुं ततः॥ ३८॥
योऽन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम्।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम्॥३९॥
कामलां वातरुधिरं विसर्पं हृच्छिरोग्रहम्।
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत्॥ ४०॥

शतावरीमूलतुलाचतुष्टयात् क्षुण्णपीडिताद् रसेन दुग्धसमेन सर्पिष आढकं पचेज्जीवनीयादिभिः कर्षांशैः कल्कीकृतैः पक्वे शीते च माक्षिकपलाष्टकं कणाष्टपलं सितापलानि च दश क्षिपेत्। तस्माच्च कर्षमात्रं लिह्यात् योन्यादिदोषघ्नं वृष्यादिगुणं च।

एवमेव पयः सर्पिर्जीवनीयोपसाधितम्।
गर्भदं पित्तजानां च रोगाणां परमं हितम्॥ ४१॥

अनेनैव क्रमेण क्षीरं सर्पिर्वा जीवनीयैः पक्वं गर्भप्रदं पित्तजानां च रोगाणां परमं हितम्।

बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत्।
क्षीरे चतुर्गुणे कृष्णाकाकनासासितान्वितैः॥४२॥
जीवंतीक्षीरकाकोलीस्थिरावीरर्द्धिजीरकैः।
पयस्याश्रावणीमुद्गपीलुमाषाख्यपर्णिभिः॥ ४३॥
वातपित्तामयान् हत्वा पानाद् गर्भं दधाति तत्।

बलाया द्रोणद्वयस्य कषाये घृततैलयोराढकं पचेत्। क्षीरचतुराढके कृष्णादिभिः कल्कितैः सामान्यपरिभाषयोक्तप्रमाणैस्तद्धृतं पानेन वातरोगान् हत्वा गर्भं धत्ते। मुद्गीनां पर्ण्या प्रत्येकं संबंधो मुद्गपर्णी पीलुपर्णी माषपर्णीति।

रक्तयोन्यामसृग्वर्णैरनुबंधमवेक्ष्य च॥ ४४॥
यथादोषोदयं युंज्याद् रक्तस्थापनमौषधम्।

रक्तयोन्यां लोहितं वर्णैर्लक्षयित्वाऽनुबंधं च यथादोषोदयं रक्तस्थापनं भेषजं प्रयुंजीत।

पाठाजंब्वाम्रयोरस्थिशिलोद्भेदं रसांजनम्॥ ४५॥
अंबष्ठां शाल्मलीपिच्छां समंगां वत्सकत्वचम्।
बाह्लीकबिल्वातिविषारोध्रतोयदगैरिकम्॥ ४६॥
शुंठीमधूकमाचीकरक्तचंदनकट्फलम्।
कट्वंगवत्सकानंताधातकीमधुकार्जुनम्॥ ४७॥
पुष्ये गृहीत्वा संचूर्ण्य सक्षौद्रं तंडुलांभसा।
पिबेदर्शःस्वतीसारे रक्तं यश्चोपवेश्यते॥ ४८॥
दोषा जंतुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम्॥ ४९॥
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्।

पाठादिकं पुष्ये गृहीत्वा संचूर्ण्य क्षौद्रान्वितं ज्येष्ठांभसा पिबेत्। अर्शोविषयादिषु येषु दोषा जंतुकृता बालानां तांश्च योनिदोषादीन् हंति पुष्यानुगसंज्ञमेतच्चूर्णं हितमात्रेयपूजितं च।

योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम्॥५०॥

योन्यां बलासेन दुष्टायां सर्वमेव रूक्षोष्णं हितम्।

**धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।**
**जंब्वाम्रसारकासीसरोध्रकट्फलतिंदुकैः ॥ ५१ ॥**
**सौराष्ट्रिकादाडिमत्वगुदुंबरशलाटुभिः ।**
**अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ५२ ॥**
**तैलप्रस्थं तदभ्यंगपिचुबस्तिषु योजयेत् ।**
**शूनोतानोन्नता स्तब्धा पिच्छिला स्राविणी तथा ॥**
**विप्लुतोपप्लुता योनिः सिद्ध्येत्सस्फोटशूलिनी ।**

धातक्यादिभिः कार्षिकैश्छागमूत्रे द्विगुणे क्षीरे च द्विगुणे तैलप्रस्थं पचेत् । तत्तैलमभ्यंगादिषु योज्यम् । अनेन तैलेन शूनादिगुणा योनिः सिध्यति ।

**यवान्नमभयारिष्टं सीधुतैलं च शीलयेत् ॥ ५४ ॥**
**पिप्पल्ययोरजःपथ्याप्रयोगांश्च समाक्षिकान् ।**

तथा यवान्नादिकं शीलयेत् । पिप्पल्यादिप्रयोगांश्च क्षौद्रान्वितानभ्यसेत् ।

**कासीसं त्रिफलाकाक्षीसाम्रजंब्वस्थिधातुकी ॥५५॥**
**पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ।**

कासीसादिकश्चूर्णो माक्षिकान्वितः पैच्छिल्ये विशदत्वकृत् ।

**पलाशधातकीजंबूसमंगामोचसर्जजः ॥ ५६ ॥**
**दुर्गंधे पिच्छिले क्लेदस्तंभनश्चूर्ण इष्यते ।**
**आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥ ५७ ॥**

पलाशादिजश्चूर्णो दुर्गंधादिषु स्तंभनमिष्यते । आरग्वधादिवर्गक्वाथो दुर्गंधादौ परिषेकः ।

**स्तब्धानां कर्कशानां च कार्यं मार्दवकारकम् ।**
**धारणं वेसवारस्य कृसरापायसस्य च ॥ ५८ ॥**

स्तब्धानां खरस्पर्शानां च योनीनां मृदुत्वकरं वेसवारादिधारणं विधेयम् । वेसवारः कुट्टितस्विन्नसंस्कृतमाषविशेषः । कृसरा च पायसं च कृसरापायसम् ।

**दुर्गंधानां कषायः स्यात्तैलं वा कल्क एव वा ।**
**चूर्णो वा सर्वगंधानां पूतिगंधापकर्षणः ॥ ५९ ॥**

दुर्गंधानां योनीनां सर्वगंधद्रव्याणां कषायः क्वाथो हितः । तत्पक्वं तैलं तत्कल्क एव वा । अथवा सर्वगंधानां चूर्णः पूतिगंधापहः ।

**श्लेष्मलानां कटुप्रायाः समूत्रा बस्तयो हिताः ।**
**पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः ॥ ६० ॥**

श्लेष्मलानां योनीनां कटुप्राया गोमूत्रयुता बस्तयो हिताः । पित्ते मधुयष्टीक्षीरयुक्ता बस्तयः । वाते तैलाम्लयुता बस्तयो हिताः ।

**सन्निपातसमुत्थायाः कर्म साधारणं हितम् ।**

सन्निपातोत्थायाः साधारणं कर्म हितम् ।

**एवं योनिषु शुद्धासु गर्भं विंदंति योषितः ॥ ६१ ॥**
**अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति ।**

एवमनेन प्रकारेण योनिषु विशुद्धासु सतीषु स्त्रियो गर्भं लभंते । प्राकृते बीजेऽदुष्टे सति तथा जीवस्योपक्रमेण क्षेपे सति ।

**पंचकर्मविशुद्धस्य पुरुषस्याऽपि चेंद्रियम् ॥ ६२ ॥**
**परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ।**

नरस्य पंचभिः कर्मभिः शुद्धस्येंद्रियं शुक्रं दोषाणां वर्णैर्दुष्टं परीक्ष्य तद्घ्नैर्दोषघ्नैरुपक्रमेत् ।

**मंजिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः ॥ ६३ ॥**
**द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ।**
**पयस्याहिंगुकाकोलीवाजिगंधाशतावरीः ॥ ६४ ॥**
**पिष्ट्वाक्षांशैर्घृतप्रस्थं पचेत्क्षीराच्चतुर्गुणम् ।**
**योनिशुक्रप्रदोषेषु तत्सर्वेषु च शस्यते ॥ ६५ ॥**
**आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ।**
**फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत् ॥६६॥**
**म्रियमाणप्रजानां च गर्भिणीनां च पूजितम् ।**
**एतत्परं च बालानां ग्रहघ्नं देहवर्धनम् ॥ ६७ ॥**

मंजिष्ठादिभिः कार्षिकैः पिष्टैर्घृतप्रस्थं क्षीरचतुर्गुणं पचेत् । तद्घृतं सर्वेषु योनिशुक्रप्रदोषेषु शस्यते । आयुष्यादिगुणं परं पुंसवनं म्रियमाणगर्भाणां गर्भिणीनां च हितम् । फलसर्पिरिति नाम्ना प्रसिद्धम् । कुतः । यस्मात्पुष्पेऽर्तवसमये पीतं फलाय जायते । तथा परं बालानां ग्रहघ्नं शरीरवृद्धिकरं चेति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने गुह्यरोगप्रतिषेधो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पंचत्रिंशोऽध्यायः ।

अधुना विषतंत्रमुच्यते । सद्यः प्राणहारित्वेन तुल्यसाधर्म्यात् ।

**अथाऽतो विषप्रतिषेधं व्याख्यास्यामः ।**

तत्र विषस्य प्रागुत्पत्तिदर्शनार्थमाह ।

**मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।**
**जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ १ ॥**
**दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः ।**
**जगद्विषण्णं तं दृष्ट्वा तेनाऽसौ विषसंज्ञितः ॥ २ ॥**
**हुंकृतो ब्रह्मणा मूर्तौ ततः स्थावरजंगमे ।**
**सोऽध्यतिष्ठन्निजं रूपमुज्झित्वा वंचनात्मकम् ॥ ३ ॥**

समुद्रे सुरासुरैरमृतार्थं विलोड्यमानेऽमृतोत्पत्तेः पूर्वं पुरुषो दारुणदृष्टिः समिद्धधामा चतुर्दंष्ट्रो हरिद्वर्णकचो दहनतुल्यनेत्रो

जातः । तं पुरुषं दृष्ट्वा भुवनं विषादं गतम् । अत एवासौ जगद्विषदनाद्विषसंज्ञः । ब्रह्मणा हुंकृतस्तु सन्नसौ वंचनस्वभावं स्वं रूपं हित्वा स्थावरजंगमाख्ये मूर्ती अधितस्थौ । पुरुषरूपी तिष्ठेदसौ ततो ब्रह्मा शापं दद्यात् ।

**स्थिरमत्युल्बणं वीर्यं यत्कंदेषु प्रतिष्ठितम् ।**
**कालकूटेंद्रवत्साख्यशृंगीहालाहलादिकम् ॥ ४ ॥**

यद्विषं स्थिरं स्थावरं कंदेषु प्रतिष्ठितं वीर्यं अत्युल्बणं तत् कालकूटादिभेदभिन्नं फलादिष्वपि तद् भवति । किं तु कंदे वीर्यातिकृत् । आदिशब्देन संग्रहोक्ता भेदा गृह्यंते । यथा कालकूटं वत्सनाभं शांकुकं मालकं दामवैराटिमुस्तकं शृंगी पुंडरीकं महाविषं हालाहलं मर्कटकं काशपुष्पकमिंद्रायुधं तथा तैलमिति भेदाः प्रकीर्तिताः । एषां तु लक्षणं तत्रोक्तं तदिह विस्तरतरग्रंथशंकया नोक्तम् ।

**सर्पलूतादिदंष्ट्रासु दारुणं जंगमं विषम् ।**

सर्पादिदंष्ट्रासु यद्व्यवस्थितं तज्जंगमम् । तच्च दारुणं दंष्ट्रेत्युपलक्षणार्थं । नखविषाणमूत्रादीनामपि पुरा विषत्वेन वक्ष्यमाणत्वात् ।

**स्थावरं जंगमं चेति विषं प्रोक्तमकृत्रिमम् ॥ ५ ॥**
**कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ।**
**हंति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ ६ ॥**
**शोफपांडूदरोन्माददुर्नामादीन् करोति च ।**

स्थावरं जंगमं चेति द्विःप्रकारं विषमकृत्रिमम् । गरसंज्ञं तु कृत्रिमम् । यस्मात्तत् क्रियते । अतएव विविधानि वक्ष्यमाणान्यौषधानि यस्मिंस्तदेवं तच्च योगवशाच्छीघ्रं हंति । तथा विविधयोगवशाच्चिराच्चिरं हंति । शोफादींश्च विधत्ते ।

अथ विषगुणान्निर्दिशति ।

**तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु ॥ ७ ॥**
**विकाशि सूक्ष्ममव्यक्तरसं विषमपाकि च ।**

तत्सर्वं विषं तीक्ष्णादिगुणं स्यात् । गुणनिर्देशनादस्य रौक्ष्याद्वातमुष्णत्वात् पित्तं करोतीति ज्ञाप्यते । ननु रौक्ष्यादिभिर्गुणैर्वायोः कोपो न युज्यते रौक्ष्यादीनां गुणत्वाद्वायोश्च द्रव्यत्वात् । ब्रूमः वायोर्ये रौक्ष्यादयो गुणास्तेषामेव विषस्थै रौक्ष्यादिभिर्गुणैर्वृद्धिः क्रियते ते च वायोरात्मभूताः । तन्नाशे वायोर्नाशः स्यात् । यथा तंतुनाशे पटनाशः । तस्माद्युक्तः पवनस्थरौक्ष्यादिभिर्गुणैः प्रकोपः । एवं पित्तेऽपि योज्यम् । कट्वम्लोष्णादिकथनमपि विषस्याव्यक्तरसत्वमनेकरससंभवादेकस्याऽपि च व्यक्तस्याऽनुपलब्धेः । व्यवायित्वं चाऽस्य द्रागेवाऽखिलकायस्य व्याप्तेः । तथा अपाकि । विषस्य हि मंत्रतंत्राभ्यामंतरेण पाकाभावात् । पक्वेऽप्यन्ने विषस्यापक्वस्यैवोपलब्धेः । अत एव शमितमपि किंचित्कारणं प्राप्य पुनः कुप्यति ।

**ओजसो विपरीतं तत् तीक्ष्णाद्यैरन्वितं गुणैः ॥ ८ ॥**
**वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् ।**

तथा विषमोजसो विपरीतं तीक्ष्णादिभिर्दशभिर्गुणैर्युक्तम् । तीक्ष्णाद्यैरन्वितमिति हेतौ प्रथमा । तीक्ष्णादिगुणयुक्तत्वादोजसो विपरीतमित्यर्थः । तथा वातपित्तोत्तरं नराणां द्रागेव जीवितं हरति ।

कुत इत्याह ।

**विषं हि देहं संप्राप्य प्राग् दूषयति शोणितम् ॥९॥**
**कफपित्तानिलांश्चानु समं दोषान्सहाशयान् ।**
**ततो हृदयमास्थाय देहोच्छेदाय कल्प्यते ॥ १० ॥**

यस्माद्विषं शरीरं प्राप्य पूर्वं रक्तं सर्वशरीरगतं दूषयति । पश्चात् कफपित्तवातानाशयसहितान् दूषयति । अनंतरं कफादिभिः सममेव हृदयमाश्रित्य शरीरनाशाय संपद्यते । ननु विषस्य तीक्ष्णादिभिर्गुणैर्युगपत्त्रिदोषकोपित्वाद्रक्तकोपित्वाच्च पूर्वं शोणितं दूषयति पश्चात्त्रीन् दोषानिति यदुक्तं तदयुक्तिमदिव दृश्यते । अत्र भणामः । विषप्रभावेण रक्तमाकृष्टं पूर्वं सह तेन संयुक्तं विषेण दूष्यते ततो युगपदेव दोषत्रयकोपस्ततो दोषैः शोणितेन सह हृदयं प्राप्य सर्वस्रोतांसि बद्ध्वा देहोच्छेदाय प्रवर्तेत इति न किंचिदत्रानुपपन्नम् ।

**स्थावरस्योपयुक्तस्य वेगे पूर्वे प्रजायते ।**
**जिह्वायाः श्यावता स्तंभो मूर्छा त्रासः क्लमो वमिः॥**

स्थावरस्य विषस्योपयुक्तस्य प्रथमे वेगे रसनाश्यावतादि जायते ।

**द्वितीये वेपथुः स्वेदो दाहः कंठे च वेदना ।**
**विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ १२ ॥**

द्वितीये वेगे वेपथ्वादयो विषं चामाशयं प्राप्तं हृदये वेदनां विधत्ते ।

**तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।**
**दुर्बले हरिते शूने जायेते चास्य लोचने ॥ १३ ॥**
**पक्वाशयगते तोदहिध्माकासांत्रकूजनम् ।**

तृतीये च वेगे तालुशोषः । आमाशयेऽतिरुजा स्यात् । नेत्रे चास्य दुर्बलादिगुणे भवतः । पक्वाशयगते तोदादयः स्युः ।

**चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ १४ ॥**

चतुर्थे वेगे मूर्ध्नोऽतिगुरुत्वं जायते । चशब्दात्पूर्वोक्ता रसनाश्यावतादयः स्युः । एवमग्रेऽपि चशब्दार्थो बोध्यः ।

**कफप्रसेको वैवर्ण्यं पर्वभेदश्च पंचमे ।**
**सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ १५ ॥**

पंचमे वेगे कफप्रसेकादिः । सर्वदोषाणां प्रकोपः पूर्वोक्ताश्च पक्वाशयव्यथाश्च ।

**षष्ठे संज्ञाप्रणाशश्च सुभृशं चाऽतिसार्यते ।**

षष्ठे वेगे चेतनायाः प्रणाशोऽतिशयेनाऽतिसारश्च ।

**स्कंधपृष्ठकटीभंगो भवेन्मृत्युश्च सप्तमे ॥ १६ ॥**

सप्तमे स्कंधादिभंगः सप्तानां धातूनां दूषणान्मृत्युश्च स्यात् ।

**प्रथमे विषवेगे तु वांतं शीतांबुसेचितम् ।**
**सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद् द्रुतम् ॥ १७ ॥**

प्रथमे विषवेगे तु कृतवमनं शिशिरजलसेचितं शीघ्रमेवागदं सघृतमाक्षिकं पाययेत् ।

**द्वितीये पूर्ववद्वांतं विरिक्तं चाऽनुपाययेत् ।**

द्वितीये विषवेगे पूर्ववच्छीतांबुसेचितं वांतं विरिक्तं चाऽनु पश्चादगदं पाययेत् ।

**तृतीये गदपानं तु हितं नस्यं तथांजनम् ॥ १८ ॥**

तृतीये वेगेऽगदपानं नस्यमंजनं च हितम् ।

**चतुर्थे स्नेहसंयुक्तमगदं प्रतियोजयेत् ।**

चतुर्थे वेगे स्नेहसंयुक्तमगदं प्रतियोजयेत् ।

**पंचमे मधुकक्काथमाक्षिकाभ्यां युतं हितम् ॥ १९ ॥**

पंचमे वेगे मधुयष्टिकाक्काथमाक्षिकाभ्यां युक्तमगदं हितम् ।

**षष्ठेऽतिसारवत्सिद्धिर्**

षष्ठे वेगेऽतिसारतुल्या चिकित्सा ।

**अवपीडस्तु सप्तमे ।**

**मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् २०**

सप्तमे वेगेऽवपीडो रोगानुत्पादनीयोक्तो देयः । अथवा मस्तके काकपदं कृत्वा सरक्तं पिशितं न्यसेत् ।

**कोशातक्यग्निकः पाठासूर्यवल्यमृताभयाः ।**
**शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया ॥२१॥**
**पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बला ।**
**एषा यवागूं निर्यूहेऽशीतां सघृतमाक्षिकाम् ॥२२॥**
**युंजाद्वेगांतरे सर्वविषघ्नीं कृतकर्मणः ।**

कोशातक्यादीनां क्वाथे यवागूं सिद्धां शीतां ससर्पिष्कमाक्षिकां युंज्यात् । सूर्यवल्ली करवीरकाकारपुष्पी । क्षौद्रसाह्वं वटमाक्षिकम् । वेगांतरे वेगमध्ये सर्वविषघ्नीम् । कृतं कर्म यस्य तस्यैवं कार्यम् ।

**तद्वन्मधूकमधुकपद्मकेसरचंदनैः ॥ २३ ॥**

मधुकादिक्वाथैः पेयां शीतां सघृतमाक्षिकां युंज्यात् ।

**अंजनं तगरं कुष्टं हरितालं मनःशिला ।**
**फलिनी त्रिकटु स्पृक्का नागपुष्पं सकेसरम् ॥ २४ ॥**
**हरेणु मधुकं मांसी रोचना काकमालिका ।**
**श्रीवेष्टकं सर्जरसः शताह्वा कुंकुमं बला ॥ २५ ॥**
**तमालपत्रतालीसभूर्जोशीरे निशाद्वयम् ।**
**कन्योपवासिनी स्नाता शुक्लवासा मधुद्रुतैः ॥ २६ ॥**
**द्विजानभ्यर्च्य तैः पुष्पैः कल्पयेदगदोत्तमम् ।**
**वैद्यश्चात्र तदा मंत्रं प्रयतात्मा पठेदिमम् ॥२७॥**
**नमः पुरुषसिंहाय नमो नारायणाय च ।**
**यथासौ नाभिजानाति रणे कृष्णपराजयम् ॥ २८॥**
**एतेन सत्यवाक्येन अगदो मे प्रसिद्ध्यतु ।**
**नमो वैडूर्यमाते हुलुहुलु रक्ष मां सर्वविषेभ्यः २९**
**गौरि गांधारि चंडालि मातंगि स्वाहा ।**
**पिष्टे च द्वितीयो मंत्रः**

**ॐ हरिमायि स्वाहा ॥ ३० ॥**

**अशेषविषवेतालग्रहकार्मणपाप्मसु ।**
**मरकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ ३१॥**
**पाननस्यांजनालेपमणिबंधादियोजितः ।**
**एष चंद्रोदयो नाम शांतिः स्वस्त्ययनं परम् ॥३२॥**

अंजनादीनि द्रव्याणि कन्या कृतोपवासा स्नाता शुक्लवस्त्रा तैः पूर्वोक्तैर्द्रव्यैर्माक्षिकसिक्तैः पुष्यनक्षत्रे विप्रान् पूजयित्वाऽनंतरमगदवरमिमं कल्पयेत् । वैद्यश्च समीपस्थो मंत्रं नम इत्यादिकं पठेत् । पिष्टे चागदे द्वितीयो मंत्रो हरिमाय्यादिकोत्र योज्यः । निखिलेषु विषादिषु पानादिषु पानादिमणिबंधादियोजितोयं चंद्रोदयो नामागदः परं शांतिः स्वस्त्ययनम् ।

**जीर्णं विषघ्नौषधिभिर्हतं वा**
**दावाग्निवातातपशोषितं वा ।**
**स्वभावतो वा सुगुणैर्न युक्तं**
**दूषीविषाख्यां विषमभ्युपैति ॥ ३३ ॥**
**वीर्याल्पभावादविभाव्यमेत-**
**त्कफावृतं वर्षगणानुबंधि ।**
**तेनार्दितो भिन्नपुरीषवर्णो**
**दुष्टास्नरोगी तृडरोचकार्तः ॥ ३४ ॥**
**मूर्छन् वमन् गद्गदवाक् विमुह्यन्**
**भवेच्च दूष्योदरलिंगजुष्टः ।**
**आमाशयस्थे कफवातरोगी**
**पक्वाशयस्थेऽनिलपित्तरोगी ॥ ३५ ॥**

यद्विषं पुराणं विषघ्नौषधिभिर्वा हतवीर्यं यद्वा दावाग्न्यादिभिः शोषितम् । स्वभावेनैव सुगुणैर्न सुष्ठु युक्तं तद् दूषीविषसंज्ञामुपैति । तथा वीर्यस्याल्पत्वादेतदविभाव्यमलक्ष्यम् । तथा कफेनावृतं वर्षवृंदं च तत्स्थायि तेन दूषीविषेण पीडितो भिन्नपुरीषवर्णादिकः स्यात् । तथा मूर्छा गच्छन् वमन्नस्फुटवाक् तथा विमुह्यन् । तथा दूष्येणोपलक्षित उदरे यानि लिंगानि तैः सेवितश्च भवेत् । आमाशयस्थे दूषीविषे कफवातरोगी स्यात् । पक्वाशयस्थे दूषीविषेऽनिलपित्तरोगी स्यात् । उपजातयः ।

**भवेन्नरो ध्वस्तशिरोरुहांगो**
**विलूनपक्षः स यथा विहंगः ।**
**स्थितं रसादिष्वथवा विचित्रान्**
**करोति धातुप्रभवान् विकारान् ॥ ३६ ॥**

ध्वस्ताः कचाः शरीरं च यस्य स ध्वस्तशिरोरुहांगो विलूनपक्षः पक्षीव भवेत् । रसादिषु च स्थितं नानाविधान् धातुप्रभवान् विकारान् करोति । उपेंद्रवज्रावृत्तम् ।

**प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ।**
**दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ ३७ ॥**

तच्च पुरो वातादिभिर्दुष्टं सद्धातून् दूषयति यतस्ततोऽपि हेतोर्दूषीविषं स्मृतम् ।

**दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ।**
**दूषीविषारिमगदं लेहयेन्मधुना प्लुतम् ॥ ३८ ॥**

दूषीविषपीडितं नरं सुस्विन्नमूर्ध्वमधस्ताच्च शोधितं संतं दूषीविषारिं वक्ष्यमाणं माक्षिकेणाप्लुतमगदं लेहयेत् ।

तमेवाह ।

**पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्चिका ।**
**कुटंनटं नतं कुष्टं यष्टी चंदनगैरिकम् ॥ ३९ ॥**
**दूषीविषारिर्नाम्नाऽयं न चान्यत्राऽपि वार्यते ।**

पिप्पल्यादिकोऽयमगदो नाम्ना दूषीविषारिः । न चान्यस्मिन्नपि वार्यते । किंतु विशेषेण प्रयुज्यते ।

**विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ ४० ॥**
**विवर्णभावं भजते विषादं चाशु गच्छति ।**
**कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ ४१ ॥**
**श्रोणिपृष्ठशिरःस्कंधसंधयः स्युः सवेदनाः ।**
**कृष्णदुष्टास्रविस्रावी तृण्मूर्छाज्वरदाहवान् ॥४२॥**
**दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ।**
**आरक्तपीतपर्यंतः श्यावमध्योतिरुग्व्रणः ॥ ४३ ॥**
**सूयते पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।**
**प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ४४**
**कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ।**

विषदिग्धेन विषलिप्तेन शस्त्रेण विद्धो नरः पुनः पुनः प्रताम्यति । तथा वैवर्ण्यं प्रयाति । द्रागेव विषादमेति । अस्य च विषदिग्धेन विद्धस्य शरीरं कीटैरिव व्याप्तं चिमिचिमायते । श्रोण्यादयश्चास्य सरुजः स्युः । कृष्णं दुष्टं च रक्तं क्षरति । तृडादियुतः क्षणेनैव च दृष्टिकालुष्यादिकरः स्यात् । तथा व्रण ईषद्रक्तपर्यंतः श्यावमध्यो महारुजः स्यात् । तथा सूयते पाकं याति । तेषां सद्य एव च मांसं कृष्णतां गत्वा प्रक्लिन्नं सद्दीर्यते । नित्यमेव पिच्छिलयुतं परिस्रवं कुर्यात् । अमर्मविद्धस्य हृदयावरणं द्रुतं विदधीत ।

**शल्यमाकृष्य तप्तेन लोहेनाशु दहेद्व्रणम् ॥ ४५ ॥**
**अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः ।**
**शिरिषाद् गृध्रनख्याश्च क्षारेण प्रतिसारयेत् ॥४६॥**
**शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ।**

शल्यमाकृष्य तप्तेन लोहेन व्रणं पश्चाद्दहेत् । अथवा मुष्ककादिक्षारेण प्रतिसारयेत् । शुकनासादिभिश्च लेपयेद् व्रणम् ।

**कीटदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ॥४७॥**

तस्य च दिग्धफलविद्धस्य कीटदष्टाचिकित्सितं यथायोगं कुर्यात् ।

**व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ।**

व्रणे च पूतिमांसे पित्तविसर्प इव चिकित्सा कार्या ।

**सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽरातिचोदिताः४८**
**गरमाहारसंपृक्तं यच्छंत्यासन्नवर्तिनः ।**

नानाकांता योषितः पत्यौ सौभाग्यार्थं राज्ञश्च निकटवर्तिनो नराश्चारातिप्रेरिता गरयुक्तं भोजनं ददति ।

**नानाप्राण्यंगशमलविरुद्धौषधिभस्मनाम् ॥ ४९ ॥**
**विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः ।**

नानाप्रकारप्राण्यंगशकृतां तथा विरुद्धौषधिभस्मनां विषाणां च स्तोकवीर्याणां यो योगः स गर इति स्मृतः ।

**तेन पांडुः कृशोल्पाग्निः कासश्वासज्वरार्दितः ५०**
**वायुना प्रतिलोमेन स्वप्नचिंतापरायणः ।**
**महोदरयकृत्प्लीहीदीनवाग्दुर्बलोऽलसः ॥ ५१ ॥**
**शोफवान्सतताध्मातः शुष्कपादकरः क्षयी ।**
**स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ ५२ ॥**
**प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ।**
**मन्यते कृष्णमात्मानं गौरो गौरं च कालकः ॥५३॥**
**विकर्णनासानयनं पश्येत्तद्विहतेंद्रियः ।**

तेन गरेण पांड्वादिगुणः कृशादिपीडितश्च स्यात् । वातेन प्रतिलोमेन युक्तस्तथा स्वप्नचिंतापरः स्यात् । तथा बृहज्जठरयकृत्प्लीहवान् दीनवागादिगुणश्च स्यात् । स्वप्ने शृगालादीन् पश्यति । प्रायेण शुष्कवृक्षोदपानानि लोकते । आत्मानं च गौरः सन् कृष्णं मन्यते । कृष्णश्च गौरं मन्यते । तेन गरविषेण विहतेंद्रियः सन् विकर्णघ्राणचक्षुषं पश्येत् ।

**एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ॥ ५४ ॥**
**गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ।**

एतैरुक्तैरुपद्रवैरपरैश्चानुक्तैर्दारुणैः क्लिष्टः सन् गरपीडितः कश्चिदचिकित्सितः सद्य एव नाशमश्नुते ।

**गरार्तो वांतवान् भुक्त्वा तत्पथ्यं पानभोजनम् ५५**
**शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ।**

गरातुरः कृतवमनः पूर्वोक्तं पथ्यं पानभोजनं भुक्त्वा शुद्धहृदयः सुवर्णं शीलयेत् । किं कुर्वन् । सूत्रस्थानोक्तविधेः । शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेदिति स्मरन् विधेः स्मरन्नित्यत्राधीगर्थेत्यादिना विधिशब्दात् कर्मणि षष्ठी ।

**शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ ५६ ॥**
**लेहः प्रशमयत्युग्रं सर्वयोगकृतं विषम् ।**

माक्षिकधातुकांचनयोश्चूर्णं शर्करामाक्षिकान्वितं लेहो दारुणं गरयोगजं विषं हंति ।

**मूर्वामृतानतकणापटोलीचव्यचित्रकान् ॥ ५७ ॥**
**वचामुस्तविडंगानि तक्रं कोष्णांबुमस्तुभिः ।**
**पिबेद्रसेन वाम्लेन गरोपहतपावकः ॥ ५८ ॥**

मूर्वादीनि तक्रादिभिरम्लेन वा बीजपूररसादिरसेन गरोपहताग्निः पुमान् पिबेत् ।

**पारावतामिषशठीपुष्कराह्वं शृतं हिमम् ।**
**गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ ५९ ॥**

पारावतामिषादिभिः शृतं शीतं जलं गरतृष्णादिघ्नम् ।

**विषप्रकृतिकालान्नदोषदूष्यादिसंगमे ।**
**विषसंकटमुद्दिष्टं शतस्यैकोऽत्र जीवति ॥ ६० ॥**

विषप्रकृत्यादियोगे सति विषसंकटं कथितम् । अस्मिंश्च विषसंकटे विषार्तः शतमध्य एको जीवेत् । तत्र विषप्रकृतिः पित्तप्रकृतिः । कालो वर्षा । विषान्नं सर्षपादि । विषदोषः पित्तम् । दूष्यं रक्तम् । आदिशब्देन सात्म्यादीनां ग्रहणम् ।

**क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ।**
**आजीर्णवर्चो द्रवतः पित्तमारुतवृद्धिभिः ॥ ६१ ॥**
**तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ।**
**हस्तिमूषिकवादित्रनिःस्वनैर्विषसंकटैः ॥ ६२ ॥**
**पुरोवातोत्पलामोदमदनैर्वर्धते विषम् ।**

क्षुधादिभिर्विषं वृद्धिमेति ।

**वर्षासु चांबुयोनित्वात्संक्लेदं गुडवद्गतम् ॥ ६३ ॥**
**विसर्पति घनापाये तदगस्त्यो हिनस्ति च ।**
**प्रयाति मंदवीर्यत्वं विषं तस्माद्घनात्यये ॥ ६४ ॥**

प्रावृषि च जलप्रभवत्वाद्विषं संक्लेदं गुडवद् याति । विसर्पति प्रसरति । घनापाये विगतवर्षासमये तद्विषमगस्त्यो हिनस्त्यल्पशक्ति करोति । तस्माद्घनात्यये शरत्समये मंदवीर्यत्वं प्रयाति ।

**इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम् ।**
**आलोच्य निपुणं बुद्ध्या कर्मानंतरमाचरेत् ॥ ६५ ॥**

इत्येवं पूर्वोक्तेन प्रकारेण प्रकृत्यादिकं बुद्ध्वा यत्नेन निरूप्य ततः कर्म कुर्यात् ।

**श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ।**
**कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥ ६६ ॥**

श्लैष्मिकं विषं वमनैरुष्णादिगुणैः प्रलेपैश्चेदृशैर्भोजनैश्च कषायादिगुणैः शांतिं नयेत् ।

**पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः ।**
**कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ ६७ ॥**

पैत्तिकं विषं विरेचनैस्तथाऽतिशीतलैः सेकैः प्रलेपैश्च तथा भोजनैः कषायतिक्तमधुरैराज्ययुतैश्च शमयेत् ।

**वातात्मकं जयेत्स्वादुस्निग्धाम्ललवणान्वितैः ।**
**सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनैः ॥ ६८ ॥**
**नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम् ।**

वातिकं मधुरादियुक्तैः ससर्पिष्कैर्भोजनैर्लेपैश्च जयेन्मांसभोजनैः कषायतिक्तमधुरैराज्ययुतैश्च शमयेत् । विषे स्रंसनं विरेचनं प्रलेपो वा भोज्यमौषधं वा नाघृतं शस्तम् । किं तर्हि सर्वमेव तत्सघृतं शस्तम् ।

**सर्वेषु सर्वावस्थेषु विषेषु न घृतोपमम् ॥ ६९ ॥**
**विद्यते भेषजं किंचिद्विशेषात्प्रबलेऽनिले ।**

सर्वेषु विषेषु सर्वावस्थेषु च घृततुल्यं नान्यदौषधं किमप्यस्ति विशेषेण च वातेऽतिरिक्ते ।

**अयत्नाच्छ्लैष्मिकं साध्यं यत्नात् पित्ताशयाश्रयम् ।**
**सुदुःसाध्यमसाध्यं वा वाताशयगतं विषम् ॥७०॥**

कफगतं विषमल्पयत्नेन साध्यम् । पित्ताशयाश्रयं यत्नेन साध्यम् । वाताशयाश्रितं सुष्ठु दुःखेन साध्यतेऽसाध्यं वा स्यादिति

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने विषप्रतिषेधो नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः ।

विषप्रक्रमात्सर्पविषप्रतिषेधं विवक्षुराह ।

**अथातः सर्पविषप्रतिषेधं व्याख्यास्यामः ।**
**दर्वीकरा मंडलिनो राजीमंतश्च पन्नगाः ।**
**त्रिधा समासतो भौमा भिद्यंते ते त्वनेकधा ॥ १ ॥**
**व्यासतो योनिभेदेन नोच्यंतेऽनुपयोगिनः ।**

दर्वीकरादिभेदेन भुजंगाः संक्षेपेण त्रिप्रकारा भौमाः । ते तु योनिभेदेन विस्तरतोऽनेकधा भिद्यंते । विशेषाश्चेहानुपयोगिनो यतस्ततो न निगद्यंते ।

**विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम् ॥ २ ॥**
**विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ।**

दर्वीकरमंडलिराजीमंतस्तेषां विषं रूक्षादिगुणं क्रमेण च वा-

तपित्तकफानां कोपनं स्यात्। यद्यपि विषं रूक्षादिगुणं तथाप्यतिशयार्थं पुनरिह गुणकथनं विशेषादुष्णमेव कथितं न शीतलम्।

**तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च ॥ ३ ॥**
**विषोल्बणा भवंत्येते व्यंतरा ऋतुसंधिषु।**

एते च दर्वीकरादयस्तारुण्यादिषु यथाक्रमं वृष्ट्यादिषु च विषोल्बणा भवंति। वृष्टिशब्देनेह श्रावणादयश्चत्वारो मासा गृहीताः शीतातपाद्याश्चत्वारो मासा गृहीताः। व्यंतरा विजातय ऋतुसंधिषु विषाधिकाः स्युः। ऋतुसंधिः प्रागुक्तः।

**रथांगलांगलच्छत्रस्वस्तिकांकुशधारिणः ॥ ४ ॥**
**फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः।**

रथांगादिधारिणः फणावंतो द्रुतगतयो भुजंगा दर्वीकरा इति मुनिभिः स्मृताः।

**ज्ञेया मंडलिनोऽभोगा मंडलैर्विविधैश्चिताः ॥ ५ ॥**
**प्रांशवो मंदगमना**

अभोगा अल्पभोगास्तथा नानाप्रकारैर्मंडलैश्चिताः प्रांशवो शीघ्रगतयो मंडलिनो वेद्याः।

**राजीमंतस्तु राजिभिः।**
**स्निग्धा विचित्रवर्णाभिस्तिर्यगूर्ध्वं विचित्रिताः॥६॥**

स्निग्धाभिर्नानाप्रकाराभिस्तिर्यगूर्ध्वगराजिभिर्विचित्रिता राजीमंतो वेद्याः। विजातयोऽधुनोच्यंते।

**गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः।**
**चतुष्पाद्**

गोधापुत्रो गौधेरः। ननु गौधेर इति नाम्नैव गोधासुतः प्रत्यपादि। तथा च गोधायाः फगित्यपत्यर्थे व्युत्पादितोयम्। सत्यमाह भवान्। यादृच्छिकनामशंकानिरासाय त्वेतत्। स च दर्वीकरैर्विषेण तुल्यस्तैरेव जातत्वात्। चतुष्पाचतुष्पादोसौ।

**व्यंतरान्विद्यादेतेषामेव संकरात् ॥ ७ ॥**
**व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः।**

व्यंतरांश्चैतेषामेव संकरेण जानीयात्। यतश्च ते संकीर्णलक्षणास्तस्मात्सन्निपातप्रकोपनाः स्युः।

**आहारार्थं भयात्पादस्पर्शादतिविषात् क्रुधः ॥ ८॥**
**पापवृत्तितया वैराद्देवर्षियमचोदनात्।**
**दशंति सर्पास्तेपूक्तं विषाधिक्यं यथोत्तरम् ॥ ९ ॥**

आहारादिभिः कारणैर्भुजंगा दशंति। तेषु यथोत्तरं विषस्याधिक्यं कथितम्।

**आदिष्टात्कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम्।**

आदिष्टात्सर्पाद् हेतुं विदित्वा यथास्वं चिकित्सेत्।

**व्यंतरः पापशीलत्वान्मार्गमाश्रित्य तिष्ठति ॥ १० ॥**

व्यंतरो भुजंगमः पापस्वभावत्वाद्वर्त्म आश्रित्यास्ते।

**यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते।**
**नतु दंष्ट्राकृतं दंशं तत्तुंडाहतमादिशेत् ॥ ११ ॥**
**एकं दंष्ट्रपदं द्वे वा व्यालीढाख्यमशोणितम्।**
**दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ १२ ॥**
**मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्ट्रकम्।**
**दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥ १३ ॥**
**निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत्।**

यस्मिन्काये लालापरिक्लेदमात्रं उपलभ्यते न पुनर्दंष्ट्राकृतं दंशम्। तदेवंभूतं तुंडाहतं कथयंति। एकं दंष्ट्रापदं द्वे वा दंष्ट्रापदे रक्तवर्जिते तद् व्यालीढसंज्ञम्। द्वे दंष्ट्रापदे सशोणिते व्यालुप्तं विद्यात्। त्रीणि तु दंष्ट्रापदानि मांसच्छेदात्संततास्रवाहीनि दष्टकमादिशेत्। दंष्ट्रापदानि चत्वारि तद्वद्दष्टमिव दष्टनिपीडितं स्यात्। एषु मध्ये द्वयमादिकथितं निर्विषं वदेत्। पश्चिमं दष्टनिपीडिताख्यमसाध्यं वदेत्। व्यालुप्तदष्टकं तु कृच्छ्रसाध्यमित्यर्थाद्गम्यते।

**विषमाहेयमप्राप्य रक्तं दूषयते वपुः ॥ १४ ॥**
**रक्तमण्वपि तु प्राप्तं वर्धते तैलमंबुवत्।**

सर्पजं विषं न शोणितमप्राप्य शरीरं दूषयते। अपि तु प्राप्य। किंतु रक्तं स्तोकमपि प्राप्य विषं वर्धते। यथा तैलं जलं प्राप्य प्रसरति तथैव। आहेयमिति दृतिकुक्षीत्यादिना भवार्थे ढञ्।

**भीरोस्तु सर्पसंस्पर्शाद्भयेन कुपितोनिलः ॥ १५ ॥**
**कदाचित्कुरुते शोफं सर्पांगाभिहतं तु तत्।**

भीरोः सभयस्य पुंसः सर्पसंस्पर्शाद्धेतोर्यद्भयं तेन वायुः क्रुद्धः कदाचिच्छोफं विधत्ते तत्सर्पांगाभिहतं स्यात्।

**दुर्गंधकारे विद्धस्य केनचिद्दष्टशंकया ॥ १६ ॥**
**विषोद्वेगो ज्वरश्छर्दिर्मूर्छादाहोऽपि वा भवेत्।**
**ग्लानिर्मोहोतिसारो वा तच्छंकाविषमुच्यते ॥१७॥**

दुर्गंधकारे केनचित्प्राणिना विद्धस्य दष्टशंकया विषोद्वेगादयः स्युः। तच्छंकाविषं निगद्यते।

**तुद्यते सविषो दंशः कंडूशोफरुजान्वितः।**
**दह्यते ग्रथितः किंचिद्विपरीतस्तु निर्विषः ॥ १८ ॥**

सविषो दंशो व्यथ्यते कंड्वादियुतो दह्यते जालकवत् किंचित् ग्रथितोऽस्माद्विपरीतश्च निर्विषः स्यात्।

**पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक्।**
**श्यावता तेन वक्रादौ सर्पंतीव च कीटकाः ॥ १९॥**

दर्वीकराणां प्रथमे विषवेगे श्याववर्णं दुष्टं च रक्तं स्यात्। तेन च तादृशा रक्तेन मुखनयनादौ श्यावता स्यात्। कटिकाश्च गात्रं सर्पंतीव।

**द्वितीये ग्रंथयो वेगे तृतीये मूर्ध्नि गौरवम् ।**
**दुर्गंधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥ २० ॥**
**संधिविश्लेषणं तंद्रा पंचमे पर्वभेदनम् ।**
**दाहो हिध्मा च षष्ठे च हृत्पीडा गात्रगौरवम् २१**
**मूर्छा विपाकोऽतीसारः प्राप्य शुक्रं तु सप्तमे ।**
**स्कंधपृष्ठकटीभंगः सर्वचेष्टानिवर्तनम् ॥ २२ ॥**

द्वितीये विषवेगे ग्रंथयः स्युः । तृतीये शिरोगुरुत्वादयः स्युः । चतुर्थे ष्ठीवनादयः । पंचमे संधिविश्लेषणं तंद्रा पर्वभेदनं दाहो हिक्का च । षष्ठे च वेगे हृदयपीडाद्याः । सप्तमे शुक्रं प्राप्य स्कंधादिभंगः सर्वचेष्टानिवर्तनं स्यात् ।

**अथ मंडलिदष्टस्य दुष्टं पीतीभवत्यसृक् ।**
**तेन पीतांगता दाहो द्वितीये श्वयथूद्भवः ॥ २३ ॥**
**तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते ।**
**चतुर्थे ज्वर्यते दाहः पंचमे सर्वगात्रगः ॥ २४ ॥**
**दष्टस्य राजिलैर्दुष्टं पांडुतां याति शोणितम् ।**
**पांडुता तेन गात्राणां द्वितीये गुरुताऽति च ॥२५॥**
**तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवाः ।**
**चतुर्थे गरिमा मूर्ध्नो मन्यास्तंभश्च पंचमे ॥ २६ ॥**
**गात्रभंगो ज्वरः शीतः शेषयोः पूर्ववद्वदेत् ।**

मंडलिना दष्टस्य प्रथमे वेगे रक्तं दुष्टं पीतीभवति । तेन च रक्तेन पीतांगता दाहश्च द्वितीये श्वयथूद्भूतिः । तृतीये दंशविक्लेदादयः । चतुर्थे वेगे ज्वरो दाहः । पंचमे सर्वशरीरगतो दाहः । राजिमता दष्टस्य रक्तं दुष्टं पांडुतां गच्छति । तेन हेतुना गात्राणां पांडुता । द्वितीये वेगेऽतिगात्रगुरुत्वम् । तृतीये दंशविक्लेदादयः । चतुर्थे मूर्ध्नो गरिमादयः । पंचमे गात्रभंगादयः । शेषयोः षष्ठसप्तमयोर्लक्षणं पूर्ववद्दर्वीकरवद्वदेत् ।

**कुर्यात्पंचसु वेगेषु चिकित्सां न ततः परम् ॥ २७॥**

पंचसु वेगेषु चिकित्सितं कुर्यात् । नतु तस्मात्परमसाध्यत्वात् ।

**जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ।**
**शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥ २८ ॥**
**तूर्णं देशांतरायाता विमुक्तविषकंचुकाः ।**
**कुशौषधीकंटकवद्ये चरंतीव काननम् ॥ २९ ॥**
**देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ।**

जलाप्लुतादयः सर्पा अल्पविषा ज्ञेयाः । दिव्याध्युषितो देशो यत्र देवताः कृतसन्निधानास्तं देशं चरंति । संग्रहेऽधिकमुक्तम् । स्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये । चतुष्पथे जलस्थाने जीर्णोद्यानेषु कोटरे । क्षीरद्रुमे निम्बतरौ निर्झरे गिरिगह्वरे । चक्रवज्रगदाकुंतात्रिशूलांकजटाधराः । रक्तास्यनयना ये च ते स्युराशीविषोपमाः । न तेषु कालनियमो न च वेगेष्वनुक्रमः । मंत्रतंत्रबलान्नादि प्रसह्य विनिवर्तनम् ।

**श्मशानचितिचैत्यादौ पंचमीपक्षसंधिषु ॥ ३० ॥**
**अष्टमीनवमीसंध्यामध्यरात्रिदिनेषु च ।**
**याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ॥ ३१ ॥**
**नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ।**
**दष्टमात्रः सितास्याक्षः शीर्यमाणशिरोरुहः ॥ ३२॥**
**स्तब्धजिह्वो मुहुर्मूर्छन् शीतोच्छ्वासो न जीवति ।**

श्मशानादिषु दष्टं मर्मसु च दष्टं त्यजेत् । याम्यं भरणी । आग्नेयं कृत्तिका । नैर्ऋतं मूलम् । नैर्ऋताख्यो मुहूर्तो संध्योदय एव । यः शुक्लमुखनयनः पतत्कचः स्तब्धरसनः पुनः पुनर्मूर्छन् शीतोच्छ्वासः स न जीवति । संग्रहे तु । श्वयथुर्वेदनास्तीव्रा ग्रीवाभंगोऽक्षिरक्तता । मूर्छागलग्रहच्छर्दिप्रेतराजस्य किंकराः । जाम्बवप्रतिमो दंशः कूर्मपृष्ठवदुन्नतः । रक्तं खेभ्यः समस्तेभ्यो वर्तते न तु दंशतः । रोमहर्षो न शिशिरैः श्वयथुर्लोहितोऽसितः । हृष्टेहनता वक्रवक्रत्वं यस्य तं त्यजेत् ।

**हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः ३३**
**जायंते युगपद्यस्य स हृच्छूली न जीवति ।**

यस्य देहिन एककालमेव हिध्मादयो हृच्छूलं च स्यात् स न जीवति ।

**फेनं वमति निःसंज्ञः श्यावपादकराननः ॥ ३४ ॥**
**नासावसादो भंगोंगे विक्लेदः श्लथसंधिता ।**
**विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ ३५ ॥**
**भवंत्येतानि रूपाणि संप्राप्ते जीवितक्षये ।**

यश्च फेनं वमति निश्चेतनः श्यावपादादिस्तथा नासावसादादयश्च यस्य पुंसो विषपीतस्य तथा दष्टमात्रस्य विषलिप्तकेनाभिहतस्य च । सामान्येनैतानि रूपाणि । तस्य जीवितक्षये संप्राप्ते स्युः । विषपीतस्येत्याहिताऽग्निषूक्तत्वात्परनिपातः ।

**न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥३६॥**
**दंडाहतस्य नोराजीप्रयातस्य यमांतिकम् ।**

तीक्ष्णैर्नस्यैर्न चेतना न चैतन्यम् । तथा क्षताच्छिन्नाद्रक्तागमो न भवति । तथा दंडेन लगुडेनाहतस्य राजिर्लेखा न भवति । यमसमीपं प्रयातस्य गमिष्यतो नरस्य । प्रयातस्येति वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यति क्तः ।

**अतोऽन्यथा तु त्वरया प्रदीप्तागारवद्भिषक् ॥३७॥**
**रक्षन् कंठगतान् प्राणान् विषमाशु शमं नयेत् ।**

अतोऽन्यथा साध्यत्वे सति सद्यो द्रागेव त्वरया कंठगतान् प्राणान् ज्वलितगृहमिव रक्षन् विषं शीघ्रं शांतिं नयेत् ।

**मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ३८ ॥**
**देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयत् ।**

शरीरिणो दष्टस्य दंशे मात्राशतं तुल्यकालं विषं स्थित्वा देहं

प्रक्रमते रुधिरादीन् धातून् दूषयत् प्रक्रमत इति प्रोषाभ्यामिति तङ् ।

**एतस्मिन्नंतरे कर्म दंशस्योत्कर्तनादिकम् ॥ ३९ ॥**
**कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ।**

अस्मिन्नंतरेऽवसरे दंशस्योत्कर्तनादिकं कर्म चपलं विदधीत यथा विषवल्ली काये न रोहति । विषं वल्लीवेति उपमितं व्याघ्रादिभिरिति समासः ।

**दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ॥ ४० ॥**
**लोष्टं महीं वा दशनैश्छित्वा चाऽनु ससंभ्रमम् ।**
**निष्ठीवेन समालिंपेद्दंशं कर्णमलेन वा ॥ ४१ ॥**

दष्टमात्रः पुरुषस्तमेव सर्पं दष्टारं शीघ्रमेव खादेत् । अथवा लोष्टं धरणीं दशनैश्छित्वा पश्चाच्च झटिति निष्ठीवेन दंशमालिंपेत् । कर्णमलेन वा लिंपेत् ।

**दंशस्योपरि बध्नीयादरिष्टां चतुरंगुले ।**
**क्षौमादिभिर्वेणिकया सिद्धैर्मंत्रैश्च मंत्रवित् ॥ ४२ ॥**
**अंबुवत्सेतुबंधेन बंधेन स्तभ्यते विषम् ।**
**न वहंति सिराश्चाऽस्य विषं बंधाभिपीडिताः ४३**

दंशस्योपरिष्टाच्चतुरंगुलेऽरिष्टां क्षौमादिभिर्वेणिकया सिद्धैश्च मंत्रैरुपलक्षितो मंत्रज्ञो बध्नीयात् । बंधेन विषं स्तभ्यते । जलं यथा सेतुबंधेन । अस्य च दष्टस्य सिरा विषं बंधनपीडिता न वहंति ।

**निष्पीड्यानूद्धरेद्दंशं मर्ममध्यगतं तथा ।**
**न जायते विषावेगो बीजनाशादिवांऽकुरः ॥ ४४ ॥**

अनु पश्चान्निष्पीड्य दंशमुद्धरेन्मर्मसंधिं वर्जयित्वा । तथैवं कृते सति विषावेगो न जायते । यथांऽकुरो बीजनाशात् ।

**दंशं मंडलिनां मुक्त्वा पित्तलत्वादथापरम् ।**
**प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा ॥ ४५ ॥**
**करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात् ।**

मंडलिनां च दंशं पित्तलत्वाद्धेतोर्मुक्त्वाऽथापरं दंशं हेमादिभिः प्रतप्तैः शीघ्रं दहेदुल्मुकेन वा । यतोऽग्निः सद्य एव भस्मतां सर्वमेव वस्तु नयति । क्षतं तु कियन्मात्रम् ।

**आचूषेत्पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ ४६ ॥**
**प्रच्छायांतररिष्टायां मांसलं तु विशेषतः ।**
**अंगं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ ४७ ॥**
**चंदनोशीरयुक्तेन सलिलेन च सेचयेत् ।**

अथवा पित्तलप्रायः स्यात् तदा मृदादिभिः पूर्णवदनोऽरिष्टामध्यं प्रच्छाय प्रच्छानं कृत्वाऽऽचूषेत् । मांसलं तु स्थानं विशेषेण प्रच्छायाऽचूषेत् । तथा दंशेन सार्धमंगमगदेन पुनः पुनर्लेपयेत् । चंदनोशीरान्वितेनोदकेन सेचयेच्च शरीरम् ।



**विषे प्रविसृते विध्येत्सिरां सा परमा क्रिया ॥ ४८ ॥**
**रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ।**

विषे प्रविसृते सति सिरां विध्येत् । सा हि उत्तमा क्रिया । यतोऽस्यासृजि निर्ह्रियमाणे विषं सर्वमेव निर्ह्रियेत तदाश्रितत्वात् ।

**दुर्गंधं सविषं रक्तमग्नौ चटचटायते ॥ ४९ ॥**
**यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ।**

सविषं शोणितं दुर्गंधं स्यात् । वह्नौ च क्षिप्तं चटचटायते । विशुद्धं च रक्तं दोषानुसारेण पूर्ववत्सिराव्यधविध्युक्तेन लक्षणेन विद्यात् ।

**सिरास्वदृश्यमानासु योज्याः शृंगजलौकसः ॥ ५०**

सिरासु तु शोफादिनाऽनुपलभ्यमानासु शृंगं जलौकसो वा युंज्यात् ।

**शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा ।**
**लेपसेकैस्तु बहुशः स्तंभयेद्भृशशीतलैः ॥ ५१ ॥**

स्रुतशेषं च लोहितं विषोष्मणा प्रविलीनं लेपादिभिः पुनः पुनरुपयुक्तैरतिशीतलैः स्तंभयेत् ।

**अस्कन्ने विषवेगाद्धि मूर्छायमदहृद्द्रवाः ।**
**भवंति तान् जयेच्छीतैर्वीजेच्चारोमहर्षतः ॥ ५२ ॥**

अस्कन्नेऽस्रुतेऽस्त्याने हि रक्ते विषवेगेन मूर्छाद्या भवंति । तांश्च जयेच्छीतैर्लेपादिभिः । तथा रोमांचो यावच्छीतेन स्यात् तावद्वीजेच्च ।

**स्कन्ने तु रुधिरे सद्यो विषवेगः प्रशाम्यति ।**

अस्रे तु स्कन्ने सति विषवेगः शीघ्रमेव प्रशाम्यति ।

**विषं कर्षति तीक्ष्णत्वाद् हृदयं तस्य गुप्तये ॥ ५३ ॥**
**पिबेद्घृतं घृतक्षौद्रमगदं वा घृताप्लुतम् ।**
**हृदयावरणे चाऽस्य श्लेष्मा हृद्युपचीयते ॥ ५४ ॥**

विषं तीक्ष्णादियोगाद् हृदयं कर्षति । तस्य हृदयस्य गुप्तये रक्षणाय घृतं घृतक्षौद्रमगदं वा पिबेत् । घृताप्लुतमस्य पुरुषस्य हृदयावरणे सति श्लेष्मा हृदये चयं याति ।

**प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ।**
**द्रवैः कांजिककौलत्थतैलमद्यादिवर्जितैः ॥ ५५ ॥**
**वमनैर्विषहृद्भिश्च नैवं व्याप्नोति तद्वपुः ।**

प्रवृत्ताः संजाता गौरवोत्क्लेशहृल्लासा यस्य स एवंभूतस्तं द्रवैः कांजिकादिरहितैर्वमनैर्वामयेत् विषहरैश्च वामयेत् । एवं कृते सति तस्य विषार्तस्य शरीरं विषं न व्याप्नोति ।

**भुजंगदोषप्रकृतिस्थानवेगविशेषतः ॥ ५६ ॥**
**सुसूक्ष्मं सम्यगालोच्य विशिष्टां वाऽऽचरेत्क्रियाम्**

भुजंगदोषादिकं सुसूक्ष्मया बुद्ध्या सम्यगालोच्य विशिष्टां क्रियां समाचरेत् ।

**सिंदुवारितमूलानि श्वेता च गिरिकर्णिका ॥५७॥**
**पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ।**

सिंदुवारितमूलादिकं जलान्वितं दर्वीकरैर्दष्टे पानं नस्यं माक्षिकं कुष्ठसहितं हितम् ।

**कृष्णसर्पेण दष्टस्य लिंपेद्दंशं हृतेऽसृजि ॥ ५८ ॥**
**चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ।**
**पानं च क्षौद्रमंजिष्ठागृहधूमयुतं घृतम् ॥ ५९ ॥**

कृष्णभुजंगदष्टस्य रक्ते सति हृते दंशं गुंजानाकुलीभ्यां लिंपेत् । तीक्ष्णेन मूलविषेण वा लिंपेत् । क्षौद्रादियुतं च सर्पिःपानम् ।

**तंदुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ।**
**मातुलुंगी सिता सेलुः पाननस्यांजनैर्हितः॥६०॥**
**अगदः फणिनां घोरे विषे राजीमतामपि ।**

तंदुलीयकादिकः पानादिभिरगदः फणिनां राजीमतां च दारुणे विषे हितः ।

**समाः सुगंधा मृद्वीका श्वेताख्या गजदंतिका६१**
**अर्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमम् ।**
**सक्षौद्रो मंडलिविषे विशेषादगदो हितः ॥६२॥**

सुगंधादयः समाः समभागा अर्धभागेन सुरसपत्रादिकमिति समाक्षिको मंडलिनो विषे विशेषेणागदो हितः ।

**पंचवल्कवरायष्टीनागपुष्पैलवालुकम् ।**
**जीवकर्षभकौशीरं सितापद्मकमुत्पलम् ॥ ६३ ॥**
**सक्षौद्रो हिमवान्नाम हंति मंडलिनां विषम् ।**
**लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ ६४ ॥**

पंचवल्कादिको माक्षिकयुतो हिमवान्नामाऽगदो मंडलिविषं लेपेन हंति । शोफादिहा च । शिरीषपिप्पलवटप्लक्षवेतसानां पंचानां त्वक् पंचवल्कमुच्यते ।

**काश्मर्यवटशृंगाणि जीवकर्षभकौ सिता ।**
**मंजिष्ठा मधुकं चेति दष्टो मंडलिना पिबेत् ६३**

काश्मर्यादिकं मंडलिदष्टो नरः पिबेत् ।

**वंशत्वग्बीजकटुकापाटलीबीजनागरम् ।**
**शिरीषबीजातिविषे मूलं गावेधुकं वचा ॥ ६६॥**
**पिष्टो गोवारिणाष्टांगो हंति गोनसजं विषम् ।**

वंशत्वगादिकोष्टांगोऽगदो गोमूत्रपिष्टो गोनसविषं हंति । वंशस्य त्वग्बीजे ।

**कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ॥ ६७ ॥**
**सक्षौद्रव्योषतगरा घ्नंति राजीमतां विषम् ।**

कटुकादयो राजीमतां विषं घ्नंति ।

**निखनेत्कांडचित्राया दंशं यामद्वयं भुवि ॥ ६८॥**
**उद्धृत्य प्रस्थितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ।**
**पिबेत्पुराणं च घृतं वराचूर्णावचूर्णितम् ॥ ६९ ॥**
**जीर्णे विरिक्ते भुंजीत यवान्नं सूपसंस्कृतम् ।**

कांडचित्रायाः सर्पविशेषस्य दंशं यामद्वयं भुवि निखनेत् । तत उद्धृत्य प्रस्थितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् । धान्यस्य मृद् धान्यमृत् । तथा पुराणं घृतं त्रिफलाचूर्णयुतं पिबेत् । जीर्णे विरिक्तो यवान्नं शाल्यादिकं सूपेन संस्कृतमद्यात् ।

**करवीरार्ककुसुममूललांगलिकाकणाः ॥ ७० ॥**
**कल्कयेदारनालेन पाठामरिचसंयुताः ।**
**एष व्यंतरदष्टानामगदः सार्वकार्मिकः ॥ ७१ ॥**

करवीरार्कयोः कुसुममूलं लांगलिकादींश्च कांजिकेन कल्कयेत् । एषोऽगदः सार्वकार्मिको व्यंतरदष्टानां हितः । सार्वकार्मिक इत्यनुशतिकादित्वादुभयपदवृद्धिः ।

**शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।**
**भावितं सर्पदष्टानां पाने नस्यांजने हितम् ७२**

शिरीषकुसुमरसे सप्तवासराणि सितमरिचं भावितं भुजंगदष्टानां पानादौ हितम् ।

**द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ।**
**अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ॥ ७३ ॥**

तगरकुष्ठयोर्द्वे पले घृतमाक्षिकयोश्चत्वारि पलानि । तक्षकेणापि दष्टानां तत्पीतं शर्मदम् ।

**अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम् ।**
**अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥७४॥**

दर्वीकृतां च प्रथमे वेगे पूर्वे रक्तं विस्राव्याऽनंतरं मधुघृतयुतमगदं शीघ्रमेव पिबेत् ।

**द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ।**

द्वितीये वेगे वमनं विधाय तथा वाऽगदं पिबेत् ।

**विषापहैः प्रयुंजीत तृतीयेऽजननावने ॥ ७५ ॥**

तृतीये वेगे विषघ्नमंजनादि दद्यात् ।

**पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते ।**

चतुर्थे वेगे कृतवमनः पूर्वोक्तां यवागूं पिबेत् ।

**षष्ठपंचमयोः शीतैर्दिग्धं सिक्तमभीक्ष्णशः ॥७६॥**

**पाययेद्वमनं तीक्ष्णं यवागूं च विषापहैः ।**

षष्ठपंचमयोर्वेगयोः पुरुषं शिशिरैर्मुहुर्लिप्तं सिक्तं च तीक्ष्णं वमनं पाययेत् । यवागूं च विषघ्नैः कृतां पाययेत् ।

**अगदं सप्तमे तीक्ष्णं युंज्यादंजननस्ययोः ॥ ७७ ॥**
**कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं गतः ।**
**मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ७८**

सप्तमे वेगे तीक्ष्णमगदमंजने नस्ये च युंज्यात् । ततः शस्त्रेण काकपदमवगाढं मूर्ध्नि विधाय ततस्तस्य दष्टस्य तस्मिन् काकपदे मांसं सशोणितं न्यसेदथवा चर्म निक्षिपेत् ।

**तृतीये वमितः पेयां वेगे मंडलिनां पिबेत् ।**

तृतीये मंडलिनां वेगे वमितः पेयां पिबेत् ।

**अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥ ७९॥**

षष्ठेऽतीक्ष्णमगदं पद्मकादिं वा गणं योजयेत् ।

**आद्येवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ।**
**अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥ ८० ॥**

राजीमतां वेगे प्रथमेऽतिशयेन प्रच्छायालाबुना रक्तं हरेत् । पूर्ववच्चागदं पिबेत् ।

**षष्ठेऽजनं तीक्ष्णतममवपीडं च योजयेत् ।**

षष्ठेंऽजनमतितीक्ष्णं योजयेदवपीडं च ।

नन्वत्र केचिद्वेगा नोदिता एव तेषु किं विधेयमित्याह ।

**अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥८१॥**

अकथितेषु दर्वीकरोक्तां क्रियां योजयेत् ।

**गर्भिणीबालवृद्धेषु मृदुं विध्येत्सिरां न च ।**

गर्भिण्यादिषु मृदुं क्रियां योजयेत् । शिरां च न व्यधयेत् ।

**त्वङ्मनोह्वानिशे वक्रं रसः शार्दूलजो नखः॥ ८२॥**
**तमालः केसरं शीतं पीतं तंडुलवारिणा ।**
**हंति सर्वविषाण्येतद्वज्रिवज्रमिवासुरान् ॥ ८३ ॥**

त्वगादिकमिदं ज्येष्ठांभसा पीतं सर्वाणि विषाणि हंति । वज्रिवज्रमिवासुरानित्युपमालंकारः ।

**विल्वस्य मूलं सुरसस्य पुष्पं**
**फलं करंजस्य नतं सुराह्वम् ।**
**फलत्रिकं व्योषनिशाद्वयं च**
**वस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥ ८४ ॥**
**भुजंगलूतोंदुरवृश्चिकाद्यै-**
**र्विपूचिकाजीर्णगरज्वरैश्च ।**
**आर्तान्नरान् भूतविधर्षितांश्च**
**स्वस्थीकरोत्यंजनपाननस्यैः ॥ ८५ ॥**

बिल्वमूलादिकं छागमूत्रेण सुश्लक्ष्णपिष्टमंजनादिभिर्भुजगादिभिरार्तान् पुरुषान् भूतोपद्रुतांश्च स्वस्थयति । उपजाती वृत्ते ।

**प्रलेपाद्यैश्च निःशेषं दंशादप्युद्धरेद्विषम् ।**
**भूयो वेगाय जायेत शेषं दूषीविषाय वा ॥ ८६ ॥**

प्रलेपाद्यैर्दंशादपि किंपुनः कायान्निःशेषं सर्वं विषमुद्धरेत् । शेषं हि विषं पुनर्वेगाय संपद्यते दूषीविषाय वा ।

**विषापायेऽनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ।**
**तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥ ८७ ॥**
**पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः ।**
**समाक्षिकेण वर्गेण कफमारग्वधादिना ॥ ८८ ॥**

विषापगमे सति वायुं कुपितं स्नेहादिभिरुपक्रमेत्तैलादिवर्जितैर्वातनाशनैः। पित्तं पित्तज्वरहरैः क्राथैः स्नेहबस्तिभिश्चोपक्रमेत्। आरग्वधादिगणेन समाक्षिकेण कफमुपाचरेत् ।

**सिता वैगंधिको द्राक्षा पयस्या मधुकं मधु ।**
**पाने समंत्रपूतांबुप्रोक्षणं सांत्वहर्षणम् ॥ ८९ ॥**
**सर्पांगाभिहते युंज्यात्तथा शंकाविषार्दिते ।**

सितादिकं मंत्रपूतजलेन सहितं पानं प्रोक्षणम् । प्रकृतत्वान्मंत्रपूतजलेन वेगशोंऽगशश्च । तथा सांत्वनं हर्षणं सर्पांगाभिहते युंज्यात् । शंकाविषपीडिते च युंज्यात् ।

**कर्कैतनं मरकतं वज्रं वारणमौक्तिकम् ॥ ९० ॥**
**वैडूर्यगर्दभमणिं पिचुकं विषमूषिकाम् ।**
**हिमवद्गिरिसंभूतां सोमराजीं पुनर्नवाम् ॥ ९१ ॥**
**तथा द्रोणां महाद्रोणां मानसीं सर्पजं मणिम् ।**
**विषाणि विषशांत्यर्थं वीर्यवंति च धारयेत् ॥ ९२ ॥**

कर्कैतनादीनि च विषाणि वीर्यवंति विषशांत्यर्थं धारयेत् ।

**छत्री जर्जरपाणिश्च चरेद्रात्रौ विशेषतः**
**तच्छायाशब्दवित्रस्ताः प्रणश्यंति भुजंगमाः ॥९३॥**

छत्रवान् जर्जरिहस्तश्च चरेद्विशेषेण रात्रौ । तयोश्छत्रजर्जरयोर्यथासंख्यं छायाशब्दाभ्यां वित्रस्ताः सर्पाः प्रणश्यंति तस्मादेवमाचरणीयमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने सर्पप्रतिषेधो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

विषप्रक्रमात् कीटलूतादिचिकित्सितं वक्ति ।

**अथाऽतः कीटलूतादिविषप्रतिषेधं व्याख्यास्यामः।**
**सर्पाणामेव विण्मूत्रशुक्रांडशवकोथजाः ।**
**दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥१॥**

सर्पाणां पूर्वोक्तानां विण्मूत्रादिजाः कीटा दोषैः पृथग्युक्तास्त्रिप्रकाराः समुदितैश्च युक्ता इति चतुःप्रकाराः स्युः ।

**दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ।**

तेषु मध्ये वायव्यैर्वातलैः कीटैर्दष्टस्य दंशस्तोदरुजाधिको भवेत् ।

**आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥ २ ॥**
**पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथवा ।**

आग्नेयैः कीटैर्दष्टस्य दंशोऽल्पस्रावादिमान् स्यात् । पक्वपीलुफलनिभः खर्जूरसदृशो वा स्यात् ।

**कफाधिकैर्मंदरुजः पक्वोदुंबरसंनिभः ॥ ३ ॥**

कफाधिकैः कीटैर्दष्टस्य दंशो मंदरुजः पक्वोदुंबरसदृशः ।

**स्रावाढ्यः सर्वलिंगस्तु विवर्ज्यः सान्निपातिकैः ।**

सान्निपातिकैस्त्रिदोषाधिकैः कीटैर्दष्टस्य दंशः स्रुत्यधिकः सर्वलिंगः स च वर्ज्यो नोपक्रमणीयः ।

**वेगाश्च सर्पवच्छोफो वर्धिष्णुर्विस्ररक्तता ॥ ४ ॥**
**शिरोक्षिगौरवं मूर्छा भ्रमः श्वासोऽतिवेदना ।**

वेगाश्च सर्पवत्कीटेषु स्युः । तथा श्वयथुर्वर्धनस्वभावो विस्रशोणितत्वं च । मूर्धनेत्रगुरुत्वं मूर्छाद्याश्च स्युः ।

**सर्वेषां कर्णिकाशोफो ज्वरः कंडूररोचकः ॥ ५ ॥**

कर्णिकाद्याश्च सर्वेषां दंशानां स्युः ।

**वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।**
**ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ ६ ॥**
**दंशः सद्योऽतिरुक् श्यावस्तुद्यते स्फुटतीव च ।**

वृश्चिकस्य तीक्ष्णं विषं भवति । तच्च प्रथममग्निरिव दहति । उपरिष्टादाश्वेवारोहति । पश्चाच्च दंशे तिष्ठति । दंशो वृश्चिकसंबंधी सद्योऽतिरुगादिः स्यात् । तुद्यते स्फुटतीव च । तुद्यत इति कर्मकर्तरि तङ् ।

**ते गवादिशकृत्कोथाद्विग्धदष्टादिकोथतः ॥ ७ ॥**
**सर्पकोथाच्च संभूता मंदमध्यमहाविषाः ।**

ते वृश्चिका गवादिशकृत्कोथाद्विषदिग्धदष्टादिकोथात् सर्पकोथाच्च संभूता यथासंख्यं मंदविषा मध्यविषा महाविषाश्च स्युः ।

**मंदाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥८॥**
**रोमशा बहुपर्वाणो लोहिताः पांडुरोदराः ।**

मंदविषाः कीटाः पीतादिगुणाः । रोमशा इति लोमादीत्यादिना शः ।

**धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥ ९ ॥**
**पिशंगाः शबलाश्चित्राः शोणिताभा**

मध्यविषास्तु कपिलादिगुणाः ।

**महाविषाः ।**
**अग्न्याभा द्व्येकपर्वाणो रक्ताः सीतसितोदराः॥१०॥**

महाविषा दर्भदूर्वासदृशा द्विपर्वाण एकपर्वणो वा । रक्तोदराः केचित्कृष्णोदराः केचित्सितोदराश्च ।

**तैर्दष्टः शूनरसनः स्तब्धगात्रो ज्वरार्दितः ।**
**खैर्वमन् शोणितं कृष्णमिंद्रियार्थानसंविदन् ॥ ११ ॥**
**स्विद्यन्मूर्छन् विशुष्कास्यो विह्वलो वेदनातुरः ।**
**विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥ १२ ॥**

तैर्महाविषैर्दष्टः सन् शूनजिह्वादिः स्यात् । तथेदमिदं कुर्वन्नीदृशः सन् प्रायशो जीवितं त्यजति ।

**उच्चिटिंगस्तु वक्रेण दशत्यभ्यधिकव्यथः ।**
**साध्यतो वृश्चिकात् स्तंभं शेफसो हृष्टरोमताम् १३**
**करोति सेकमंगानां दंशः शीतांबुनेव च ।**
**उष्ट्रधूमः स एवोक्तो रात्रिचाराच्च रात्रिकः ॥ १४ ॥**

उच्चिटिंगाख्यो वृश्चिको वक्रेण दशति । साध्याद्वृश्चिकादतिरिक्तव्यथस्तथा स्तंभं करोति मेढ्रस्य । तथा हृष्टरोमतां रोमहर्षं करोति । तथा दंशश्च शिशिरजलेनेव सेकमंगानां विधत्ते । स एवोष्ट्रधूमकः कथितः । रात्रिचरणाच्च रात्रिकः स एवोक्तः ।

**वातपित्तोत्तराः कीटाः श्लैष्मिकाः कणभोंदुराः ।**
**प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः॥१५॥**

कीटा वातपित्ताधिका कणभोंदुराः श्लेष्मोल्बणाः प्रायेण वृश्चिका वातोल्बणविषा उष्ट्रधूमकाश्च ।

**यस्य यस्यैव दोषस्य लिंगाधिक्यं प्रतर्कयेत् ।**
**तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥ १६ ॥**

यस्य यस्यैव दोषस्य लिंगाधिक्यं ज्ञायते तस्य तस्य दोषस्य भेषजैर्विपरीतगुणैः क्रियां विदधीत ।

**हृत्पीडोर्ध्वानिलस्तंभः शिरायामोऽस्थिपर्वरुक् ।**
**घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥ १७ ॥**

वातिके विषे हृत्पीडादयः स्युः ।

**संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।**
**मांसावदरणं शोफो रक्तपीतश्च पैत्तिके ॥ १८ ॥**

पित्तोल्बणे संज्ञानाशादयः स्युः ।

**छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ।**
**सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषम् ॥ १९ ॥**

कफाधिकं विषं छर्द्यादिभिर्जानीयात् ।

**पिण्याकेन व्रणालेपस्तैलाभ्यंगश्च वातिके ।**
**नाडीस्वेदो पुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥ २० ॥**

वातिके विषे पिण्याकेन व्रणलेपो योज्यः । तैलाभ्यंगश्च नाड्यादिभिश्च स्वेदो बृंहणश्च विधिः स्मृतः ।

**पैत्तिकं स्तंभयेत्सेकैः प्रदेहैश्चातिशीतलैः ।**

पित्ताधिकं विषं सेकादिभिरतिशिशिरैः स्तंभयेत् ।

**लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ २१ ॥**

श्लैष्मिकं लेखनाद्यैर्जयेत् ।

**कीटानां त्रिःप्रकाराणां त्रैविध्येन प्रतिक्रिया ।**
**स्वेदालेपनसेकांस्तु कोष्णान् प्रायोऽवचारयेत् २२**
**अन्यत्र मूर्छिताद्दंशपाकतः कोथतोऽथवा ।**

कीटानां त्रिविधानां यथास्वं त्रिविधैव चिकित्सा हिता । स्वेदादींश्च प्रायेण कोष्णान् कुर्यात् । मूर्छितं नरं दंशपाकं च वर्जयित्वा तथा दंशकोथं च हित्वा ।

**नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम्॥२३॥**
**विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ।**

नरकचादयो धूपनं सर्वस्य विषदंशस्य परं हितमिति भगवान् काश्यपोऽवादीत् ।

**विषघ्नं च विधिं सर्वं कुर्यात्संशोधनानि च २४**

तथा विषघ्नं विधिं सकलं विदध्यात् । संशोधनानि च कुर्यात् ।

**साधयेत्सर्पवद्दष्टान् विषोग्रैः कीटवृश्चिकैः ।**

विषोग्रैः कीटवृश्चिकैर्दष्टान् सर्पवत्साधयेत् ।

**तंदुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् २५**
**याति कीटविषैः कंपं न कैलास इवानिलैः ।**

त्रिवृतां तंदुलीयकसमां घृतेन नरः पिबेत् । एवं कीटविषैश्च कंपं क्षोभं न याति । कैलास इव वायुभिः ।

**क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥ २६ ॥**

शुद्धे सति क्षीरिवृक्षत्वगालेपः कीटविषघ्नः ।

**मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ।**

मौक्तिकलेपः श्रेष्ठः शोफादिघ्नः ।

**वचा हिंगुविडंगानि सैंधवं गजपिप्पली ॥ २७॥**
**पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ।**
**दशांगमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २८ ॥**

वचादिकदशद्रव्यनिर्मितत्वाद्दशांगमगदं काश्यपेन निर्मितं पीत्वा सर्वं कीटविषं हंति ।

**सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ।**
**विदारिगंधासिद्धेन कवोष्णेनेतरेण वा ॥ २९ ॥**

वृश्चिकोत्थं दंशं सद्य एव चक्रतैलेन सेचयेत् । शालिपर्णीसिद्धेन वा इतरेण चक्रतैलेन कवोष्णेन वा सेचयेत् ।

**लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।**
**सिंचेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ ३० ॥**

सैंधवान्वितेन वाज्येन मुहुर्मुहुः सिंचेत् । कवोष्णेन कांजिकेन दुग्धसैंधवान्वितेन वा सिंचेत् ।

**उपनाहो घृते भृष्टः कल्कोऽजाज्याः ससैंधवः ।**

जीरककल्कः सैंधवयुक्तो घृतेन भृष्ट उपनाहः स्यात् ।

**आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ३१**
**रजनीसैंधवव्योषशिरीषफलपुष्पजैः ।**

आसमंततो दंशं स्वेदितं प्रच्छाय चूर्णैं रजन्यादिजैर्घर्षयेत् ।

**मातुलुंगाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ३२ ॥**
**लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा**
**पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ ३३ ॥**

बीजपूराम्लगोमूत्रपिष्टं सुरसापुष्पं लेपः स्यात् । तथा सुखोष्णः पिण्याको गोमयो वा लेपो हितः । पाने हैयंगवीनं क्षौद्रयुक्तं दुग्धं वा प्रभूतसितं हितम् ।

**पारापतशकृत्पथ्यातगरं विश्वभेषजम् ।**
**बीजपूररसोन्मिश्रः परमो वृश्चिकागदः ॥ ३४ ॥**
**सशैवलोष्ट्रदंष्ट्रा च हंति वृश्चिकजं विषम् ।**

पारापतशकृतादिभिः फलपूररससंयुक्तः श्रेष्ठो वृश्चिकागदः । करभदंष्ट्राशैवालयुता वृश्चिकविषघ्नी । तथा च संग्रहे । ससैंधवोष्ट्रदंष्ट्रा च हंति वृश्चिकजं विषम् । मनोह्वा सैंधवं हिंगु मालती पल्लवानि च । गोशकृद्रसपिष्टेयं गुलिका वृश्चिकार्दिते । लशुनो मरिचं हिंगु सुरसं विश्वभेषजम् । अर्कक्षीरेण गुटिका वृश्चिकार्दितशंकरी ।

**हिंगुना हरितालेन मातुलुंगरसेन च ॥ ३५ ॥**
**लेपांजनाभ्यां गुटिका परमं वृश्चिकापहा ।**

हिंगुहरिताले सबीजपूररसे लेपांजनाभ्यां गुटिका परं वृश्चिकविषहृत् ।

**करंजार्जुनशैलूनां कटभ्याः कुटजस्य च ॥ ३६ ॥**
**शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ।**

करंजादीनां पुष्पाणि मस्तुना दंशलेपः ।

**यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ ३७ ॥**
**तस्य पथ्यानिशाकृष्णामंजिष्ठातिविषोषणम् ।**
**सालांबुवृंतं वार्ताकरसपिष्टं प्रलेपनम् ॥ ३८ ॥**

यो नरो मुह्यत्यादीन्विधत्ते तथा दारुणपीडस्तस्य पथ्यादिकं वार्ताकरसपिष्टं प्रलेपनं कार्यम् ।

**सर्वत्र चोग्रालिविषे पाययेद्दधिसर्पिषी ।**
**विध्येत्सिरां विदध्याच्च वमनांजननावनम् ।**
**उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ॥ ३९ ॥**

सर्वस्मिन्सुदारुणे वृश्चिकविषे दधिसर्पिषी पाययेत् । सिरां च विध्येत् । वमनादिकं च कुर्यात् । उष्णगुणादिकं च भोजनं वातघ्नं हितम् ।

**नागरं गृहकपोतपुरीषं**
**बीजपूरकरसो हरितालम् ।**
**सैंधवं च विनिहंत्यगदोऽयं**
**लेपतोलिकुलजं विषमाशु ॥ ४० ॥**

नागरादिकमयमगदो लेपेन वृश्चिकविषं शीघ्रं पराकरोति । स्वागता वृत्तम् ।

**अंते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ।**
**विषेणालेपयेद्दंशमुच्चिटिंगेऽप्ययं विधिः ॥ ४१ ॥**

वृश्चिकदष्टानामंते भृशं समुदीर्णे विषे विषेण दंशमालेपयेत् । उच्चिटिंगसंज्ञेप्येषैव चिकित्सा ।

**नागपुरीषच्छत्रं रोहिषमूलं च शेलुतोयेन ।**
**कुर्याद्गुटिकां लेपादियमलिविषनाशनी श्रेष्ठा ॥४२॥**

गजपुरीषच्छत्रं कत्तृणमूलं च श्लेष्मातकजलेन गुटिकां विदधीत । एषा च लेपेन परं वृश्चिकविषघ्नी ।

**अर्कस्य दुग्धेन शिरीषबीजं**
**त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।**
**एषो गदो हंति विषाणिकीट**
**भुजंगलूतोंदुरवृश्चिकानाम् ॥ ४३ ॥**

अर्कक्षीरेण शिरीषबीजं त्रीन् वारान् भावितं पिप्पलीरजोयुतमयमगदः कीटादीनां विषाणि हंति ।

**शिरीषपुष्पं सकरंजबीजं**
**काश्मीरजं कुष्ठमनःशिला च ।**
**एषो गदो रात्रिकवृश्चिकानां**
**संक्रांतिकारी कथितो जिनेन ॥ ४४ ॥**

शिरीषकुसुमादिकमेषो गदो रात्रिकवृश्चिकानां विषसंक्रांतिकृद् भगवता जिनेनोक्तः । उपजाती वृत्ते ।

**कीटेभ्यो दारुणतरा लूताः षोडश ता जगुः ।**
**अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः ॥४५॥**
**सहस्ररश्म्यनुचरा वदंत्यन्ये सहस्रशः ।**
**बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥ ४६ ॥**

कीटेभ्योऽपि घोरा लूताः । ताश्च मुनयः षोडशसंख्या अध्यगीषन् । अन्ये अष्टाविंशतिर्लूता इत्यवोचन् । ततोप्यपरे बहुतरा आचख्युः । अन्ये तु रवेरनुचराः सहस्रशो वदंतीति नानामतमुक्त्वा स्वमतं युक्त्या सर्वमतानुग्राहि वक्ति । अनेकोपद्रवस्वभावत्वेनैकैव लूता विषात्मिका ।

**रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसंकरात् ।**
**नास्ति स्थानव्यवस्था च दोषतोऽतः प्रचक्षते ॥४७॥**

नाम्ना यानि रूपाणि तानि तस्या अतिसंकराद्धेतोर्दुर्ज्ञातानि स्थानव्यवस्थापि नास्ति । तस्माद्दोषवशेन भणिष्यते ।

**कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा ।**

पृथग्दोषैर्लूता कृच्छ्रसाध्या सन्निपातेन चासाध्या ।

**तद्दंशः पैत्तिको दाहतृट्स्फोटज्वरमोहवान् ॥४८॥**
**भृशोष्मा रक्तपीताभः क्लेदी द्राक्षाफलोपमः ।**

तस्या दंशः पैत्तिको दाहादिमान् भृशोष्मा पीतरक्ताभः क्लेदवान् द्राक्षाफलाकारः स्यात् ।

**श्लैष्मिकः कठिनः पांडुः परूषकफलाकृतिः ॥ ४९॥**
**निद्रां शीतज्वरं कासं कंडूं च कुरुते भृशम् ।**

श्लैष्मिको लूतादंशः कठिनः पांडुवर्णः परूषकफलनिभो निद्रादीनतिशयेन करोति ।

**वातिकः परुषः श्यावः पर्वभेदज्वरप्रदः ॥ ५० ॥**

वातिको दंशः परुषस्पर्शः श्यावस्तथा पर्वभेदज्वरकृत् ।

**तद्विभागं यथास्वं च दोषलिंगैर्विभावयेत् ।**

तासां विभागं दोषाणां लक्षणैर्यथायोगं लक्षयेत् ।

**असाध्यायां तु हृन्मोहश्वासहिध्माशिरोरुजाः॥५१॥**
**श्वेताः पीताः सिता रक्ता पिटिकाः श्वयथूद्भवाः ।**
**वेपथुर्वमथुर्दाहस्तृडांध्यं वक्रनासता ॥ ५२ ॥**
**श्यावोष्ठवक्रदंतत्वं पृष्ठग्रीवावभंजनम् ।**
**पक्वजंबूसवर्णं च दंशात्स्रवति शोणितम् ॥ ५३ ॥**

असाध्यायां लूतायां हृन्मोहाद्याः स्युः । श्वेतादिगुणाः पिटिकास्तथा श्वयथ्वाद्याश्च । दंशाद् रक्तं पक्वजंबूनिभं स्रवति ।

**सर्वापि सर्वजा प्रायो व्यपदेशस्तु भूयसा ।**

सर्वा च लूता त्रिदोषजैव । बाहुल्येन तु व्यपदेशः ।

**तीक्ष्णमध्यावरत्वेन सा त्रिधा हंत्युपेक्षिता ॥ ५४ ॥**
**सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।**

सा च लूता तीक्ष्णादिभेदेन त्रिःप्रकारा । उपेक्षिता च सती यथासंख्यं सप्ताहेन दशाहेन पक्षेण च हंति ।

**लूतादंशाश्च सर्वेऽपि दद्रूमंडलसंनिभः ॥ ५५ ॥**
**सितोऽसितोरुणः पीतः श्यावो वा मृदुरुन्नतः ।**

**मध्ये कृष्णोऽथवा श्यावः पर्यंते जालकावृतः ५६**
**विसर्पवांश्छोफयुतस्तप्यते बहुवेदनः ।**
**ज्वराशुपाकविक्लेदकोथावदरणान्वितः ॥ ५७ ॥**
**क्लेदेन यत्स्पृशत्यंगं तत्राऽपि कुरुते व्रणम् ।**

सर्वश्च लूतादंशो दद्रुमंडलाकारः सितादिवर्णो मृदुरुन्नतो मध्ये कृष्णवर्णः श्याववर्णो वा परितो. जालकवृतो विसर्पादिमान्स्यात् । तथा तप्यतेऽनेकरुजः । तथा ज्वरादियुतस्तथा स च दंशः क्लेदेन यद्यदंगं स्पृशेत् तत्र तत्र चांगे व्रणं विदधाति ।

**श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः ॥ ५८ ॥**
**अष्टाभिरुद्वमत्येषा विषं वक्रैर्विशेषतः ।**

श्वासादिभिरष्टाभिरेषा लूता विषमुद्वमति । वक्रेण विशेषेण ।

**लूता नाभेर्दशत्यूर्ध्वमूर्ध्वं वाऽधश्च कीटकाः ॥ ५९**
**तद्दूषितं च वस्त्रादिदेहे पृक्तं विकारकृत् ।**

नाभेरूर्ध्वं लूता दशति । ऊर्ध्वमधस्ताच्च कीटा दशंति । तया लूतया दूषितं वस्त्रासनादि शरीरे लग्नं विकारकृत् ।

**दिनार्धं लक्ष्यते नैवं दंशो लूताविषोद्भवः ॥ ६० ॥**
**सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ।**
**अव्यक्तवर्णः प्रचलः किंचित्कंडूरुजान्वितः ॥ ६१ ॥**

लूताविषजो दंशो दिनार्धं न लक्ष्यत एव । ततोनंतरमसौ दंशः प्रथमे दिने सूचीव्यधतुल्य आभाति । अव्यक्तवर्णः प्रकर्षेण चलो मनाक्कंडूरुग्युतश्च ।

**द्वितीयेऽभ्युन्नतोंतेषु पिटकैरिव वाचितः ।**
**व्यक्तवर्णो नतो मध्ये कंडूमान् ग्रंथिसन्निभः ॥६२॥**

द्वितीयेहन्यभ्युन्नतोंतेषु पिटकैरिव वाचितो व्यक्तवर्णो मध्ये नतः सकंडूर्ग्रंथिनिभः ।

**तृतीये सज्वरो रोमहर्षकृद्रक्तमंडलः ।**
**शरावरूपस्तोदाढ्यो रोमकूपेषु सस्रवः ॥ ६३ ॥**

तृतीयेऽहनि ज्वरान्वितो रोमांचकृद्रक्तमंडलः शरावाकारोऽधिकव्यथो रोमकूपेषु स्राववान् ।

**महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ।**

चतुर्थे वासरे महांश्छोफस्तापादिकृत् ।

**विकारान् कुरुते तांस्तान् पंचमे विषकोपजान्॥६४**

पंचमे दिने तांस्तान्पूर्वोक्तान् विषकोपजान् विकारान् विधत्ते ।

**षष्ठे व्याप्नोति मर्माणि सप्तमे हंति जीवितम् ।**

षष्ठे दिने मर्माण्यश्नुते । सप्तमे दिवसे जीवितं हंति ।

**इति तीक्ष्णं विषं मध्यं हीनं च विभजेदतः ॥ ६५ ॥**

इत्येवरूपं तीक्ष्णं विषं मध्यं हीनं च वाऽतो निरूप्य लक्षयेत् ।

**एकविंशतिरात्रेण विषं शाम्यति सर्वथा ।**

सर्वथा एकविंशतिरात्रेण विषं शमं याति ।

**अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ॥ ६६ ॥**
**दहेच्च जांबवौष्ठाद्यैर्न तु पित्तोत्तरं दहेत् ।**

अथेति मंगले । कृतमंगलस्य लूतादष्टस्यासमंताद्दंशं क्षिप्रं शस्त्रेणोद्धरेत् । जांबवौष्ठादिभिश्च दहेत् । पित्ताधिकं वर्जयित्वा ।

**कर्कशं भिन्नरोमाणं मर्मसंध्यादिसंश्रितम् ॥ ६७ ॥**
**प्रसृतं सर्वतो दंशं न छिंदीत दहेन्न च ।**

कर्कशादिगुणं दंशं न छिंद्यान्न च दहेत् ।

**लेपयेद्दग्धमगदैर्मधुसैंधवसंयुतैः ॥ ६८ ॥**
**सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ।**

दग्धं दंशमगदैर्माक्षिकसैंधवान्वितैर्लेपयेत् । पश्चात् क्षीरिवृक्षजैः कषायैरतिशिशिरैः सेचयेच्च ।

**सर्वतोपहरेद्रक्तं शृंगाद्यैः सिरयाऽपि वा ॥ ६९ ॥**
**सेकालेपास्ततः शीता बोधिश्लेष्मातकाक्षकैः ।**

सर्वतो रक्तं विस्रावयेच्छृंगादिभिरनंतरं सेका लेपाश्च शिशिरा हिताः । पिप्पलादिभिः ।

**फलिनीद्विनिशाक्षौद्रसर्पिर्भिः पद्मकाह्वयः ॥ ७० ॥**
**अशेषलूता कीटानामगदः सर्वकार्मिकः ।**

फलिन्यादिकोऽयं पद्मकसंज्ञोऽगदः सार्वकार्मिकः । अशेषक्रियासु लूताकीटानां हितः ।

**हरिद्राद्वयपत्तंगमंजिष्ठानतकेसरैः ॥ ७१ ॥**
**सक्षौद्रसर्पिः पूर्वस्मादधिकश्चंपकाह्वयः ।**

हरिद्राद्वयादिभिः क्षौद्रघृतान्वितश्चंपकनामागदः पूर्वस्मादधिकः

**तद्वद्गोमयनिष्पीडाशर्कराघृतमाक्षिकैः ॥ ७२ ॥**

गोशकृन्निष्पीडादिभिरगदस्तद्वत्पूर्वगुणः ।

**अपामार्गमनोह्वालदार्वीध्यामकगैरिकैः ।**
**नतैलाकुष्ठमरिचयष्ट्याह्वघृतमाक्षिकैः ॥ ७३ ॥**
**अगदो मंदरो नाम तथाऽन्यो गंधमादनः ।**
**नतरोध्रवचाकट्वीपाठैलापत्रकुंकुमैः ॥ ७४ ॥**

अपामार्गादिभिरगदो मंदरो नामाऽन्यश्च वक्ष्यमाणो नतादिर्गंधमादनो नाम ।

**विषघ्नं बहुदोषेषु प्रयुंजीत विशोधनम् ।**

बहुदोषेषु नरेषु विषघ्नं विशोधनं प्रयुंजीत ।

**यष्ट्याह्वमदनांकोल्लजालिनीसिंदुवारिकाः ॥७५॥**
**कफे श्रेष्टांबुना पीत्वा विषमाशु समुद्वमेत् ।**

कफे यष्ट्याह्वादीनि तंडुलोदकेन पीत्वा विषं क्षिप्रमुद्वमेत् ।

**शिरीषपत्रत्वङ्मूलफलं वांकोल्लमूलवत् ॥ ७६ ॥**
**विरेचयेच्च त्रिफलानीलिनीत्रिवृतादिभिः ।**

अथवा शिरीषपत्रादिकमंकोल्लमूलयुतं ज्येष्ठांभसा पीत्वोद्वमेत् । त्रिफलादिभिर्विरेचयेच्च ।

**निवृत्ते दाहशोफादौ कर्णिकां पातयेद् व्रणात् ७७**

दाहादावुपशांते सति व्रणात् कर्णिकां पातयेत् ।

**कुसुंभपुष्पं गोदंतः स्वर्णक्षीरी कपोतविट् ।**
**त्रिवृतासैंधवं दंतीकर्णिकापातनं तथा ॥ ७८ ॥**
**मूलमुत्तरवारुण्या वंशनिर्लेखसंयुतम् ।**

कुसुंभकुसुमादिकं दंतीपर्यंतं कर्णिकायाः पातनं वरम् । उत्तमारणीमूलं वंशनिर्लेखनयुक्तं वा ।

**तद्वच्च सैंधवं कुष्टं दंतीकटुकदौग्धिकम् ॥ ७९ ॥**
**राजकोशातकीमूलं किणो वा मथितोद्भवः ।**

सैंधवादिकं पूर्वगुणम् । तक्रजो वा किण उपरिष्टात् फेनाभः पूर्वगुणः ।

**कर्णिकापानसमये बृंहयेच्च विषापहैः ॥ ८० ॥**

कर्णिकापातनकाले च विषघ्नैर्बृंहयेत् ।

**स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ।**
**विषस्य वृद्धये तैलमग्नेरिव तृणोलुपम् ॥ ८१ ॥**

लूतायामशेषस्नेहेन यत्कार्यं कर्तुं योग्यं तद् घृतेनैव कुर्यात् । यतस्तैलं विषस्य वृद्धये तृणोलुपमिव वह्नेः ।

**ह्रीबेरवैकंकतगोपकन्या-**
**मुस्ताशमीचंदनटिंटुकानि ।**
**शैवालनीलोत्पलवक्रयष्टी-**
**त्वङ्नाकुलीपद्मकराठमध्यम् ॥ ८२ ॥**
**रजनीघनसर्पलोचना-**
**कणशुंठीकणमूलचित्रकाः ।**
**वरुणागुरुबिल्वपाटली-**
**पिचुमंदाभयशेलुकेसरम् ॥ ८३ ॥**
**बिल्वचंदननतोत्पलशुंठी-**
**पिप्पलीनिचुलवेतसकुष्टम्**
**शुक्तिशाकवरपाटलिभार्गी-**
**सिंदुवारकरघाटवरांगम् ॥ ८४ ॥**
**पित्तकफानिललूताः पानांजननस्यलेपसेकेन ।**
**अगदवरा वृत्तस्थाः कुमतीरिव वारयंत्येते ॥ ८५ ॥**

ह्रीबेरादिकमिंद्रवज्रावृत्तम् । रजन्यादिकं वैतालीयं वृत्तम् । बिल्वादिकं स्वागतावृत्तम् । एते त्रयोऽगदवरा वृत्तस्थाः पित्तश्लेष्मानिललूताः क्रमात् पानादिभिः कुमतिरिव वारयंति । आर्या

**रोध्रं सेव्यं पद्मकं पद्मरेणुः**
**कालीयाख्यं चंदनं यच्च रक्तम् ।**
**कांतापुष्पं दुग्धिनीका मृणालं**
**लूताः सर्वा घ्नंति सर्वक्रियाभिः ॥८६**

रोध्रादीनि सर्वाभिः पानादिभिः क्रियाभिः सर्वा लूता घ्नंति । शालिनी ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने कीटलूतादिविषप्रतिषेधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

विषचिकित्साप्रक्रमात् मूषिकालर्कविषमुपक्रमते ।

**अथाऽतो मूषिकालर्कविषप्रतिषेधं व्याख्यास्यामः।**
**लालनश्चपलः पुँत्रोहसिरश्चिक्किरोजिरः ।**
**कषायदंतः कुलकः कोकिलः कपिलोसितः ॥१॥**
**अरुणः शबलः श्वेतः कपोतः पलितोंदुरः ।**
**छुछुंदरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥**

लालनादिभेदेन दशाष्टाधिका इत्यष्टादश मूषिका भवंति ।

**शुक्रं पतति यत्रेषां शुक्रदिग्धैः स्पृशंति वा ।**
**यदंगमंगैस्तत्रास्रे दूषिते पांडुतां गते ॥ ३ ॥**
**ग्रंथयः श्वयथुः कोथो मंडलानि भ्रमोऽरुचिः ।**
**शीतज्वरोऽतिरुक्सादो वेपथुः पर्वभेदनम् ॥ ४ ॥**
**रोमहर्षः स्रुतिर्मूर्छादीर्घकालानुबंधनम् ।**
**श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं सतृट् ॥ ५ ॥**

एषां मूषिकाणां यत्र शुक्रं पतति । शुक्रदिग्धैरंगैर्वा यदंगं स्पृशंति । तस्मिन्नंगे रक्ते दूषिते पांडुत्वं याति सति ग्रंथ्यादयः स्युः । तथा तत्प्रभावात् कफानुगतबहुमूषिकपोतकवमनं सतृट् स्यात् ।

**व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति ।**

आखुविषं व्यवायि सकलशरीरव्यापनशीलं तथा कृच्छ्रं कृच्छ्रसाध्यं पुनः पुनः प्रकुप्यति ।

**मूर्छांगशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ६ ॥**
**शिरोगुरुत्वं लालास्रक्छर्दिश्चासाध्यलक्षणम् ।**

मूर्छादयोऽसाध्यलक्षणम् ।

**शूनबस्तिं विवर्णौष्ठमाखुवाभैर्ग्रंथिभिश्चितम् ॥ ७॥**
**छुच्छुंदरसगंधं च वर्जयेदाखुदूषितम् ।**

शूनबस्तिं विवर्णाधरं मूषिकनिभैर्ग्रंथिभिर्व्याप्तं छुच्छुंदरगंधतुल्यगंधं च मूषिकविषदूषितं नोपक्रामेत् ।

**शुनः श्लेष्मोल्वणा दोषाः संज्ञां संज्ञावहाश्रिताः**
**मुष्णंतः कुर्वते क्षोभं धातूनामतिदारुणम् ।**
**लालावानंधबधिरः सर्वतः सोऽभिधावति ॥ ९॥**

शुनः सारमेयस्य श्लेष्माधिका दोषाः संज्ञावहानि स्रोतांस्याश्रिताः संज्ञामपहरंतो धातूनामतिघोरं क्षोभं कुर्वंति । स श्वा लालायुतोंऽधबधिरो ध्वस्तपुच्छो हनुस्कंधशिरोदुःखी नतमुखः सर्वतो धावति ।

**स्रस्तपुच्छहनुस्कंधशिरोदुःखी नताननः ।**
**दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ॥ १० ॥**
**हृच्छिरोरुग्ज्वरस्तंभस्तृष्णामूर्छोद्भवो नु च ।**

तेन शुना विदष्टस्य दंशः सुप्तोऽचेतनः कृष्णं रक्तं स्रवति । पश्चाद् हृत्पीडाद्युद्भूतिः स्यात् ।

**अनेनान्येऽपि बोद्धव्या व्याला दंष्ट्रप्रहारिणः ॥११॥**

शृगालादय एवं वेद्याः ।

**कंडूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ।**
**विदाहरागरुक्पाकशोथग्रंथिविकुंचनम् ॥ १२ ॥**
**दंशावदरणं स्फोटाः कर्णिका मंडलानि च ।**
**सर्वत्र सविषे लिंगं विपरीतं तु निर्विषे ॥ १३ ॥**

सर्वत्रैव सविषे दंशकंड्वादयो लिंगम् । निर्विषे च दंशेऽतो विपरीतं लक्षणं विद्यात् ।

**दष्टो येन तु तच्चेष्टा रुतं कुर्वन्विनश्यति ।**
**पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ १४ ॥**

येन प्राणिना दष्टस्तच्चेष्टा रुतं कुर्वन् म्रियते तमेव दष्टारमादर्शकादिषु सहसा पश्यन् विनश्यति ।

**योऽद्भयस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः ।**
**जलसंत्रासनामानं दष्टं तमपि वर्जयेत् ॥ १५ ॥**

यो जलेभ्योदष्टोऽपि संत्रसेच्छब्दसंस्पर्शदर्शनैर्हेतुभिस्तं त्रासंज्ञं दष्टं वर्जयेत् ।

**आखुना दष्टमात्रस्य दंशं कांडेन दाहयेत् ।**
**दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकान्यथा ॥ १६ ॥**

आखुना दष्टमात्रस्य नरस्य सतो दंशं कांडेन दाहयेत् । दर्पणेन वा दाहयेत् । अन्यथा एवमदग्धे सति कर्णिका दारुणपीडा स्यात् ।

**दग्धं विस्रावयेद्दंशं प्रच्छिन्नं च प्रलेपयेत् ।**
**शिरीषरजनीवक्रकुंकुमामृतवल्लिभिः ॥ १७ ॥**

दंशं दग्धं प्रच्छिन्नं विस्रावयेत् । शिरीषबीजादिभिः प्रलेपयेच ।

**अगारधूममंजिष्ठारजनीलवणोत्तमैः ।**
**लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ॥ १८ ॥**

अगारधूमादिको लेपो ह्ययं मूषिकाविषं हंति । कर्णिकां च पातयति ।

**ततोऽम्लैः क्षालयित्वाऽनु तोयैरनु च लेपयेत् ।**
**पालिंदीश्वेतकटभीबिल्वमूलगुडूचिभिः ॥ १९ ॥**
**अन्यैश्च विषशोफघ्नैः सिरां वा मोक्षयेद्द्रुतम् ।**

अनंतरमम्लैः क्षालयित्वाऽनु जलैः क्षालयेत् । पश्चात् पालिंद्यादिभिरपरैश्च विषघ्नैः श्वयथुघ्नैश्च लेपयेत् । अथवा सिरां शीघ्रं व्यधयेत् । पालिंदी मालविका त्रिवृत् ।

**छर्दनं नीलिनीक्राथैः शुकाख्यांकोल्लयोरपि ॥ २० ॥**

नीलिनीक्राथेन छर्दनं कार्यम् । शुकाख्यांकोल्लयोश्च क्राथेन वमनम् । शुकाख्यः शिरीषः ।

**केशातक्याः शुकाख्यायाः फलं जीमूतकस्य च ।**
**मदनस्य च संचूर्ण्य दध्ना पीत्वा विषं वमेत् ॥२१॥**

कोशातक्यादीनां फलानि संचूर्ण्य दध्ना पीत्वा विषं वमेत् ।

**वचामदनजीमूतकुष्टं वा मूत्रपेषितम् ।**
**पूर्वकल्पेन पातव्यं सर्वोंदुरविषापहम् ॥ २२ ॥**

वचादिं वा गोमूत्रेण संचूर्ण्य पूर्वकल्पेन दध्ना पीत्वा सर्वोंदुरविषं हंति ।

**विरेचनं त्रिवृन्नीलीत्रिफलाकल्क इष्यते ।**

विरेचनं त्रिवृतादिकल्क इष्यते । शिरोविरेचने शिरीषस्य सारः फलं च योज्यम् ।

**अंजनं गोमयरसो व्योषसूक्ष्मरजोन्वितः ॥ २३ ॥**

गोमयरसश्चूर्णीकृतत्रिकटुकान्वितोंऽजनम् ।

**कपित्थगोमयरसो मधुमानवलेहनम् ।**

कपित्थगोमयरसः समाक्षिकोऽवलेहनम् ।

**तंदुलीयकमूलेन सिद्धं पाने हितं घृतम् ॥ २४ ॥**
**द्विनिशाकटभीरक्तायष्ट्याह्वैर्वाऽमृतान्वितैः ।**
**आस्फोतमूलसिद्धं वा पंचकापित्थमेव वा ॥२५॥**

तंदुलीयकमूलेन पक्कं सर्पिः पाने हितम् । द्विनिशादिभिर्वा साधितं घृतं पाने हितम् । अथवार्कमूलेन सिद्धं घृतं पाने हितम् । अथवा पंचकापित्थसिद्धं सर्पिः पाने हितम् । कपित्थस्येमानि कापित्थानि मूलत्वक्पत्रपुष्पफलानि पंच । पंच च तानि कापित्थानि च तैः सिद्धं पंचकापित्थम् ।

**सिंदुवारनतं शिग्रुबिल्वमूलं पुनर्नवा ।**

**वचाश्वदंष्ट्राजीमूतमेषां क्वाथं समाक्षिकम् ॥ २६ ॥**
**पिबेच्छाल्योदनं दध्ना भुंजानो मूषिकार्दितः ।**

सिंदुवारादीनां क्वाथं समाक्षिकं पिबेत् । मूषिकविषपीडितो दध्ना शाल्योदनं भुंजानः ।

**तक्रेण शरपुंखाया बीजं संचूर्ण्य वा पिबेत् ॥२७॥**

अथवा शरपुंखाया बीजं संचूर्ण्य मथितेन पिबेत् ।

**अंकोल्लमूलकल्को वा बस्तमूत्रेण कल्कितः ।**
**पानालेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ २८ ॥**

अंकोल्लमूलकल्को वा छागमूत्रेण पिष्टः पानलेपनयोर्युक्तः सर्वाखुविषहा ।

**कपित्थमध्यतिलकतिलांकोल्लजटाः पिबेत् ।**
**गवां मूत्रेण पयसा मंजरी तिलकस्य वा ॥ २९ ॥**

कपित्थबीजादिकं गोमूत्रेण पिबेत् । क्षीरेण वा तिलकमंजरीं पिबेत् ।

**अथवा सैर्यकान्मूलं सक्षौद्रं तंदुलांबुना ।**

सैर्यकमूलं वा समाक्षिकं ज्येष्ठांभसा पिबेत् ।

**कटुकालांबुविन्यस्तं पीतं वांबुनि शोषितम् ॥ ३० ॥**

अथवा कटुकालांबुनि जलं निक्षिप्तं रात्रिस्थितं पीतं मूषिकविषनाशनं स्यात् ।

**सिंदुवारस्य मूलानि विडालास्थिविषं नतम् ।**
**जलपिष्टो गदो हंति नस्याद्यैराखुजं विषम् ॥ ३१ ॥**

सिंदुवारमूलादिको जलपिष्टोऽगदो नस्याद्यैर्मूषिकविषं हंति ।

**सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने ।**
**यथायथं वा कालेषु दोषाणां वृद्धिहेतुषु ॥ ३२ ॥**

मूषिकविषं किंचिच्छेषं जलदोन्नतौ कुप्यति । अथवा वातादीनां यथास्वं कालेषु वृद्धिकारणेषु प्रकुप्यति ।

**तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।**
**यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥३३॥**

तत्रावस्थावशादुपक्रमाः सर्वे यथायोगं प्रयोज्याः स्युः । ये च दूषीविषघ्ना निर्दिष्टास्ते च प्रयोज्याः ।

**दंशं ह्यलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।**
**प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ ३४ ॥**

अलर्कदष्टस्य दंशमुष्णेन घृतेन दग्धमगदैस्तैस्तैः पूर्वोक्तैर्लेपयेत् । पुराणं च सर्पिः पिबेत् ।

**अर्कक्षीरयुतं चाऽस्य योज्यमाशु विरेचनम् ।**

अर्कक्षीरान्वितं चाऽस्य विरेचनं क्षिप्रं योज्यम् ।

**अंकोल्लोत्तरमूलांबु त्रिफलं सहविः पलम् ॥ ३५ ॥**
**पिबेत्सधत्तूरफलां श्वेतां वाऽपि पुनर्नवाम् ।**

अंकोल्लोत्तरमूलजलं पलत्रयमात्रं सघृतपलं पिबेत् । धत्तूरफलयुतां श्वेतां वा पुनर्नवां जलेन पिबेत् ।

**ऐकध्यं पललं तैलं रूषिकायाः पयो गुडः ॥ ३६ ॥**
**भिनत्ति विषमालर्कं घनवृंदमिवानिलः ।**

भृष्टतिलचूर्णं तैलं रूषिकाया अर्कस्य क्षीरं गुड एकत्र मिश्रितं प्रकृतत्वाज्जलेन पीतं विषमालर्कं भिनत्ति । पयोदौघमिव वायुः ।

**समंत्रं सौषधीरत्नं स्नपनं च प्रयोजयेत् ॥ ३७ ॥**

मंत्रान्वितमौषधीरत्नयुतं स्नपनं च कारयेत् । तथा च संग्रहे । अष्टोत्तरशतं वारान् सिद्धमंत्राभिमंत्रितैः । अष्टोत्तरशतोन्मानैः पुष्पमालावगुंठितैः । गोचर्ममात्रके लिप्ते ज्वलितेऽग्नौ कुशास्तृते । स्थंडिले सरितस्तीरे स्नानं चास्य चतुष्पथे । अलर्काधिपते यक्ष सारमेय गणाधिप । अलर्कं जुष्टमेतन्मे निर्विषं कुरु माचिरात् । स्वाहेति मंत्रोऽलर्काते सर्वकर्मसु शस्यते ।

**चतुष्पाद्भिर्द्विपाद्भिर्वा नखदंतपरिक्षतम् ।**
**शूयते पच्यते रागज्वरस्रावरुजान्वितम् ॥ ३८ ॥**

चतुष्पाद्भिर्दंत्यश्वप्रभृतिभिः प्राणिभिर्द्विपाद्भिर्मनुष्यमयूरकुक्कुटादिभिर्वा नखपरिक्षतं दंतपरिक्षतं च शूयते पच्यते च रागाद्यन्वितम् ।

**सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।**
**रजन्यौ गैरिकं लेपो नखदंतविषापहः ॥ ३९ ॥**

खदिरादिभिर्लेपो नखदंतविषघ्न इति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने मूषिकालर्कादिविषप्रतिषेधो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## इति विषतंत्रं षष्ठं समाप्तम् ।

---

## एकोनचत्वारिंशोऽध्यायः ।

अधुना पूर्वोक्तहेतुसंबंधं रसायनाध्यायं जिगदिषुराह ।

**अथाऽतो रसायनाध्यायं व्याख्यास्यामः ।**
**दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।**
**प्रभावर्णस्वरौदार्यं देहेंद्रियबलोदयम् ॥ १ ॥**
**वाक्सिद्धिं वृषतां कांतिमवाप्नोति रसायनात् ।**
**लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥**

दीर्घायुःप्रभृतीन् रसायनादधिगच्छति । कस्मादेतानि रसायनाल्लभ्यंत इत्याह । यस्माच्छ्रेष्ठानां रसरुधिरादीनां यो लाभोपायः स रसायनमुच्यते ।

**पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।**
**स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥**

तद् रसायनं जितात्मनः पुरुषस्याद्ये वयस्यतिबाल्यातिक्रांतमात्रेऽथवा मध्यमे वयसि प्रयोज्यम् । कीदृशस्य पुंसः । स्निग्धेत्यादि स्निग्धादि गुणयुक्तस्य । तथा सर्वथाऽध उपरिष्टाच्च शुद्धस्य ।

**अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।**
**वाजीकरो वा मलिने वस्त्रे रंग इवाफलः ॥ ४ ॥**

यस्मादविशुद्धे शरीरे रासायनो विधिरुपयुक्तो वाजीकरो वोपयुक्तो निष्फलः स्यात् । यथा मलिने वस्त्रे रंगः । मलिनं हि वस्त्रं न रज्यते ।

**रसायनानां द्विविधं प्रयोगमृषयो विदुः ।**
**कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥ ५ ॥**

मुनयो रसायनानां प्रयोगं द्विःप्रकारं जानंति । तत्र मुख्यं कुटीप्रवेशनिर्वृतं वातातपिकमन्यथाऽमुख्यमित्यर्थः ।

**निर्वाते निर्भये हर्म्ये प्रायोपकरणे पुरे ।**
**दिश्युदीच्यां शुभे देशे त्रिगर्भा सूक्ष्मलोचनाम् ॥६॥**
**धूमातपरजोव्यालस्त्रीमूर्खाद्यविलंघिताम् ।**
**सज्जवैद्योपकरणां सुमृष्टां कारयेत्कुटीम् ॥ ७ ॥**

क्व तत्कुर्वीत । पुरे प्राप्योपकरणीये । हर्म्ये धवलगृहं निवातं निर्भयं च यस्मिन् तस्मिंस्तथोदीच्यां दिशि शुभे दुर्भिक्षमरकादिरहिते कुटीं त्रिगर्भा कारयेत् । प्रथममेकं गृहम् । तस्याभ्यंतरे द्वितीयम् । तस्याभ्यंतरे तृतीयम् । एवं त्रिगर्भास्त्रयो गर्भा अंतराणि यस्या इति कृत्वा । तथा सूक्ष्मगवाक्षाम् । तथा धूमादिभिरविलंघितामनाक्रांताम् । तथा प्रगुणानि वैद्योपकरणानि भेषजादीनि यस्यां तां तथाविधाम् । सुमृष्टामुपलेपनादिकरणेन शुद्धाम् ।

**अथ पुण्येऽह्नि संपूज्य पूज्यांस्तां प्रविशेच्छुचिः ।**
**तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥ ८ ॥**
**ब्रह्मचारी धृतियुतः श्रद्दधानो जितेंद्रियः ।**
**दानशीलदयासत्यव्रतधर्मपरायणः ॥ ९ ॥**
**देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः ।**
**प्रियौषधः पेशलवाक् प्रारभेत रसायनम् ॥ १० ॥**

अथ कृतमंगलः शुभे दिवसे शुचिः पूज्यान् गुरुमित्रादीन्संपूज्य तां पूर्वोपवर्णितां कुटीं प्रविशेत् । तस्यां कुट्यां कृतसन्निवेशः संशोधनैः शुद्धः सुख्यरोगः । एतच्च बाहुल्येनोक्तम् । शिलाजतुच्यवनप्राशादीनां व्याधिष्वप्यनुज्ञातत्वात् । तथा च वक्ष्यति । न सोऽस्ति रोगो भुवि साध्यरूपो जत्वश्मजं यं न जयेत्प्रसह्येति । तथा । इत्येष च्यवनप्राशोऽयं प्राश्य च्यवनो मुनिः । जराजर्जरितोऽप्यासीन्नारीनयननंदनः । कासं श्वासं क्षयं शोफं वैस्वर्यं च व्यपोहति । पुनर्जातबल इति प्रकृतिबलेन यो बलवानासीत्तस्य संशोधनेन बलहीनत्वेन पुनर्जातबलो बृंहणाहारादिना यदा स तदा रसायनमारभेतेत्यर्थः । असंजातबलो ह्युत्कृष्टवीर्याणां रसायनानां वीर्यं सोढुं न क्षमत इति पुनर्जातबल इत्युक्तम् । ब्रह्मचारी निवृत्तस्त्रीसंगपरः । तथा जातसंतोषः । श्रद्धालुरलोलुपश्च । तथा दानरतः दयादितत्परः । तथा देवताभक्तः । युक्तौ स्वप्नजागरौ यस्य स एवम् । तथा भेषजानुरागवान्मधुरवचनः । एवंविधेन विशेषणकलापेन युक्तस्य कायवाङ्मनोविशुद्धस्य ।

रसायनेन च यत्पूर्वं करणीयं तदाह ।

**हरीतकीमामलकं सैंधवं नागरं वचाम् ।**
**हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णांबुना पिबेत् ॥११॥**
**स्निग्धः स्विन्नो नरः पूर्वं तेन साधु विरिच्यते ।**

हरीतक्यादिकं योगमुष्णजलेन प्राक् स्निग्धः स्विन्नो नरः पिबेत् । तेन योगेन सम्यग् विरिच्यते ।

**ततः शुद्धशरीराय कृतसंसर्जनाय च ॥ १२ ॥**
**त्रिरात्रं पंचरात्रं वा सप्ताहं वा घृतान्वितम् ।**
**दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथवा ॥ १३ ॥**

अनंतरं शुद्धदेहाय कृतपेयादिकक्रमाय च त्रिरात्रं पंचरात्रं वा सप्ताहं वा सर्पिर्युतं यावकं दद्यात् । अथवा पुराणशकृतः शुद्धिं यावत्तावद्यावकं ससर्पिष्कं दद्यात् । त्रिविधमलापेक्षया त्रिविधं परिज्ञानं हीनपुरीषस्य त्रिरात्रम् । मध्यपुरीषस्य पंचरात्रम् । उत्कृष्टपुरीषस्य सप्तरात्रमिति । तथा हि बहुवर्चस्कस्य पंचरात्रेण सप्तरात्रेण वा मलः शुद्ध्यति । अल्पमलस्य त्रिरात्रेणैवेति त्रिविधं परिज्ञानं युक्तम् । बहुतरमलस्य बहुतरैरेवाहोभिः शुद्धिः स्यादित्युक्तत्वात् । आशुद्धेः पुराणशकृतोऽथवेति ।

**इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।**
**यस्य यद्यौगिकं पश्येत्सर्वमालोच्य सात्म्यवित् १४**

एवं संस्कृतकोष्ठस्य नरस्य यस्य यद्रसायनं यौगिकमुपलभ्यते सात्म्यज्ञो भिषक् सर्वमालोच्य तस्य तद्रसायनमुपाहरेत् ।

**पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितम् ।**
**पंचानां पंचमूलानां सार्धं पलशतद्वयम् ॥ १५ ॥**
**जले दशगुणे पक्त्वा दशभागस्थिते रसे ।**
**आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ १६**
**विनीय तस्मिन्निर्यूहे योजयेत्कुडवांशकम् ।**
**त्वगेलामुस्तरजनीपिप्पल्यगुरुचंदनम् ॥ १७ ॥**
**मंडूकपर्णीकनकशंखपुष्पीवचाप्लवम् ॥**
**यष्ट्याह्वयं विडंगं च चूर्णितं तुलयाधिकम् ॥ १८॥**
**सितोपलार्धभारं च पात्राणि त्रीणि सर्पिषः ।**
**द्वे च तैलात् पचेत्सर्वं तदज्ञो लेहतां गतम् ॥ १९॥**
**अवतीर्णे हिमं युंज्याद्विंशैः क्षौद्रशतैस्त्रिभिः ।**

**ततः खजेन मथितं निदध्याद् घृतभाजने ॥ २० ॥**
**यानोपरुध्यादाहारमेकं मात्रास्य सा स्मृता ।**
**षष्टिकः पयसा चाऽत्र जीर्णे भोजनमिष्यते ॥ २१॥**
**वैखानसा वालखिल्यास्तथा चाऽन्ये तपोधनाः ।**
**ब्रह्मणा विहितं धन्यमिदं प्राश्य रसायनम् ॥ २२॥**
**तंद्राश्रमक्लमवलीपलितामयवर्जिताः ।**
**मेधास्मृतिबलोपेता वभूवुरमितायुषः ॥ २३ ॥**

अभयानां सहस्रमामलकसहस्रत्रितययुतम् । तथा पंचानां पंचमूलानां पलशतद्वयं सार्धं सलिले दशगुणे पक्त्वा दशांशस्थिते रस आपोथ्य मृदित्वा हरीतक्यामलकानि व्यस्थीनि कृत्वा तस्मिन् क्वाथे प्रक्षिप्य कुडवप्रमाणं त्वगेलादिकं चूर्णितं योजयेत् । कनकं नागकेसरं व्यस्थीनीति नपुंसकमनपुंसकेनेत्येकशेषः । पलशतेनाधिकं शर्कराया अर्धभारं घृतस्य त्रीण्याढकानि द्वे चाढके तैलात् । तत्सर्वं वह्नौ पचेत् । तच्च लेहतां गतमवतीर्णं शीतं क्षौद्रशतैस्त्रिभिर्विंशत्यधिकैर्युंजीत । अनंतरं खजेनालोडितं घृतभांडे निदध्यात् । या मात्रैकमाहारं सायंतनं नोपरुध्यात् साऽस्य रसायनस्य मात्रा स्मृता । आहारमेकमिति वचनाच्च प्रथमाहारकालस्य रसायनमात्रयाऽवश्यमुपरोधः कार्य इति वेदयति । अस्मिंश्च लेहे जीर्णे षष्टिकः क्षीरेण सह भोजनमिष्टम् । वैखानसादयो ब्रह्मणा निर्मितमेतदुपयुज्य रसायनं तंद्रादिवर्जिता मेधादियुता अमितजीविताश्चाभूवन् । धन्यमिति धनाय हितम् । ननु रसायनस्य धनार्जनोपायत्वाभावात् कथं धन्यत्वम् । अत्र ब्रूमः । कार्ये कारणोपचारादेवमुक्तम् । तथा हि । रसायनमिदमामयघ्नत्वादारोग्ये च सति मेधास्मृत्यादियुक्तधनायोद्यमं कुर्वतोऽवश्यं धनसंपत्तिरिति युक्तमेव । नन्वामयवर्जिता इत्यनेनैवोक्तार्थत्वात्तंद्रादिग्रहणमवाच्यमेव । अत्राचक्ष्महे । आमयवर्जिते स्वास्थ्यानुवृत्तिकरणसामर्थ्यमस्य रसायनस्यावादीत्तंत्रकृत् । तंद्रादिग्रहणं च रोगनाशेऽप्यस्य ज्यायस्त्वमिति प्रतिपादनार्थम् ।

**अभयामलकसहस्रं निरामयं पिप्पलीसहस्रयुतम् ।**
**तरुणपलाशक्षारद्रवीकृतं स्थापयेद्भांडे ॥ २४ ॥**
**उपयुक्ते च क्षारे छायासंशुष्कचूर्णितं योज्यम् ।**
**पादांशेन सितायाश्चतुर्गुणाभ्यां मधुघृताभ्याम् २५**
**तद्घृतकुंभे भूमौ निधाय षण्माससंस्थमुद्धृत्य ।**
**प्राह्णे प्राश्य यथानलमुचिताहारो भवेत्सततम् २६**
**इत्युपयुंज्याऽशेषं वर्षशतमनामयो जरारहितः ।**
**जीवति वलपुष्टिवपुः स्मृतिमेधाद्यन्वितो विशेषेण॥**

अभयामलकानां सहस्रं दृढं कणासहस्रान्वितमजीर्णपलाशक्षारद्रवीकृतं भाजने स्थापयेत् । क्षारे चोपयुक्ते सति छायायां शुष्कं चूर्णितं च शर्करायाश्चतुर्थांशेन चतुर्गुणाभ्यां घृतमाक्षिकाभ्यां योज्यम् । एतद्घृतकुंभे निधाय भूमौ षण्मासस्थितं समुद्धृत्य पूर्वाह्णे यथाग्नि भुक्त्वा सात्म्याहारः सदा स्यात् । तिस्र आर्याः । एवमेतत्सर्वमुपयुज्य संवत्सरशतं नीरोगो जरारहितो जीवति । विशेषेण बलादियुतः । गीतिरार्या ।

**निरुजार्द्रपलाशस्य छिन्ने शिरसि तत्क्षतम् ।**
**अतंर्द्विहस्तं गंभीरं पूर्यमामलकैर्नवैः ॥ २८ ॥**
**आमूलं वेष्टितं दर्भैः पद्मिनीपंकलेपितम् ।**
**आदीप्य गोमयैर्वन्यैर्निर्वाते स्वेदयेत्ततः ॥ २९ ॥**

**स्विन्नानि तान्यामलकानि तृप्त्या**
**खादेन्नरः क्षौद्रघृतान्वितानि ।**
**क्षीरं शृतं चाऽनु पिवेत्प्रकामं**
**तेनैव वर्तेत च मासमेकम् ॥ ३० ॥**
**वर्ज्यानि वर्ज्यानि च तत्र यत्ना-**
**त्स्पृश्यं च शीतांवु न पाणिनाऽपि ।**
**एकादशाहेऽस्य ततो व्यतीते**
**पतंति केशा दशना नखाश्च ॥ ३१ ॥**
**अथाल्पकैरेव दिनैः सुरूपः**
**स्त्रीष्वक्षयः कुंजरतुल्यवीर्यः ।**
**विशिष्टमेधावलवुद्धिसत्त्वो**
**भवत्यसौ वर्षसहस्रजीवी ॥ ३२ ॥**

नीरुजो जंत्वादिभिरनुपद्रुतो यः पलाशस्तस्य शिरसि छिन्ने तद्विहस्तमात्रं तत्क्षतं सुषिरीकृतं गंभीरं नवैरामलकैः पूरणीयम् । पूर्णं यावद्दर्भैर्वेष्टितं पद्मिनीकर्दमेन लेपितं तत आरण्यैर्गोमयैरादीप्य निवाते स्वेदयेत् । तानि चामलकानि स्विन्नानि क्षौद्रघृतयुतानि तृप्त्या पुरुषः खादेत् । पश्चाद्दुग्धं क्वथितं बहु पिबेत् । तेनैव च दुग्धेन मासमेकं वर्तेत । इंद्रवज्रा । रसायनविधौ यान्युक्तानि क्षारादीनि वर्ज्यानि तानि परिहर्तव्यानि यत्नेन । हस्तेनाऽपि शिशिरं जलं न स्पर्शयितव्यम् । ततोऽस्य रसायनविधातुरेकादशेऽह्नि व्यतिक्रांते केशादयः पतंति । ततोऽल्पकैरेव दिनै रूपवांस्तरुणीविषय अक्षयशक्तिर्गजसमानसामर्थ्य उत्कृष्टमेधादिरसौ भवति । वर्षसहस्रजीवी च । उपजाती वृत्ते ।

**दशमूलवलामुस्तजीवकर्षभकोत्पलम् ।**
**पर्णिन्यौ पिप्पलीशृंगीमेदातामलकीत्रुटिः ॥३३॥**
**जीवंती जोंगकं द्राक्षा पौष्करं चंदनं शठी ।**
**पुनर्नवर्द्धिकाकोलीकाकनासामृताह्वयाः ॥ ३४ ॥**
**विदारीवृषमूलं च तदैकध्यं पलोन्मितम् ।**
**जलद्रोणे पचेत्पंचधात्रीफलशतानि च ॥ ३५ ॥**
**पादशेषं रसं तस्माद्व्यस्थीन्यामलकानि च ।**
**गृहीत्वा भर्जयेत्तैलघृताद्द्वादशभिः पलैः ॥३६॥**

मत्स्यंडिकातुलार्धेन युक्तं तल्लेहवत् पचेत् ।
स्नेहार्धे मधुसिद्धे तु तवक्षीर्याश्चतुष्पलम् ॥३७॥
पिप्पल्या द्विपलं दद्याच्चतुर्जातं कणार्धितम् ।
अतोऽवलेहयेन्मात्रां कुटीस्थः पथ्यभोजनः ३८
इत्येष च्यवनप्राशो यं प्राश्य च्यवनो मुनिः ।
जराजर्जरितोऽप्यासीन्नारीनयननंदनः ॥ ३९ ॥
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम् ।
मूत्रशुक्राश्रयान् दोषान् वैस्वर्यं च व्यपोहति ।
बालवृद्धक्षतक्षीणकृशानामंगवर्धनः ॥ ४० ॥

मेधां स्मृतिं कांतिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम् ।
स्त्रीषु प्रहर्षं बलमिंद्रियाणा-
मग्नेश्च कुर्याद्विधिनोपयुक्तः ॥ ४१ ॥

दशमूलादिकं पलोन्मितमैकध्यं तोयद्रोण आमलकशतानि पंच पचेत् । तस्माच्चतुर्थांशं रसं विगतास्थीनि चामलकान्यादाय तैलघृतयोः प्रत्येकं द्वादशभिः पलैर्भर्जयेत् । शर्करातुलार्धेनान्वितं तदेतत्सर्वं लेहमिव पचेत् । स्नेहसार्धं पक्के शीते मधु तथा तवक्षीरीचतुष्पलं कणाद्विदलं कणार्धेन चतुर्जातं च दद्यात् । अतो लेहान्मात्रां कुटीस्थितः पथ्यान्यश्नन्नवलेहयेत् । इत्येवंप्रकारोऽयं च्यवनप्राशाख्यो लेहः । यं लेहं प्राश्य च्यवनसंज्ञो मुनिर्जराक्रांतोऽपि तरुणीलोचनरंजन आसीत् । अयं लेहः कासादीन् व्यपोहति । उपसर्गादस्यत्यूह्योर्वावचनमिति तङ् । बालादीनामंगवृद्धिकृत् । मेधादींश्च विदध्यात् । विधिना रसायनोक्तेनोपयुक्तोयम् । इंद्रवज्रावृत्तम् ।

मधुकेन तवक्षीर्या पिप्पल्या सिंधुजन्मना ।
पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥ ४२ ॥
सितया वा समायुक्ता समायुक्ता रसायनम् ।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥४३॥

मधुकेन समा तुल्या युक्ता त्रिफला तथा समैः सर्वैर्युक्तोपयुक्ता रसायनं सर्वरोगघ्नी मेधादिदा स्यात् । तवक्षीर्यादीनां प्रत्येकं त्रिफलांगत्वेन रसायनानि निरूप्याणि । सिंधुजन्मना सैंधवेन लोहै रूप्यताम्रसीसत्रपु अय इति पंच । तैः सुवर्णेन च पृथग्युक्ता वरा रसायनमिति योज्यम् । मधुसर्पिषेत्येकवचननिर्देशाद् द्वाभ्यामपि युगपद्योग एकं रसायनं वेद्यम् ।

मंडूकपर्ण्याः स्वरसं यथाग्नि
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसं गुडूच्याः सहमूलपुष्प्याः
कल्कं प्रयुंजीत च शंखपुष्प्याः ॥ ४४ ॥

आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शंखपुष्पी ॥ ४५ ॥

मंडूकपर्णीस्वरसं प्रयुंजीत । अग्निबलापेक्षया । दुग्धेन मधुयष्टीचूर्णं युंजीत । तथा गुडूच्या रसं प्रयुंजीत । तथा सहमूलपुष्पाभ्यां वर्तते सहमूलपुष्पी तस्याः शंखपुष्प्याश्च कल्कं प्रयुंजीत । इत्येतानि रसायनान्यायुःप्रदानि रोगघ्नानि बलादिवर्धनानि मेधायै हितानि च । अतिशयेन शंखपुष्पी मेध्या । उपजाती वृत्ते ।

नलदं कटुरोहिणी पयस्या
मधुकं चंदनसारिवोग्रगंधाः ।
त्रिफला कटुकत्रयं हरिद्रे
सपटोलं लवणं च तैः सुपिष्टैः ॥ ४६ ॥
त्रिगुणेन रसेन शंखपुष्प्याः
सपयस्कं घृतनल्वणं विपक्वम् ।
उपयुज्य भवेज्जडोऽपि वाग्मी
श्रुतधारी प्रतिभानवानरोगः ॥ ४७ ॥

नलदादिभिः सुपिष्टैः सामान्यपरिभाषोक्तप्रमाणाद्विगुणेन शंखपुष्पीरसेन घृतस्याढकं क्षीरसहितं विपक्वं प्राश्य जडोऽपि नरो वाग्मी श्रुतधरः सप्रतिभो निरामयश्च स्यात् । औपच्छंदसिके वृत्ते ।

पेष्यैर्मृणालबिसकेसरपत्रबीजैः
सिद्धं सहेमशकलं पयसा च सर्पिः ।
पंचारविंदमिति तत्प्रथितं पृथिव्यां
प्रभ्रष्टपौरुषबलप्रतिभैर्निषेव्यम् ॥ ४८ ॥

मृणालादिभिः कल्कैः सुवर्णशकलान्वितं हैयंगवीनं सक्षीरं पक्वं पंचारविंदमिति यस्मिन्निति समासः । एवमग्रेऽपि कार्यः । एतद्घृतं नष्टशुक्रादिभिर्निषेवितव्यमेतन्निषेवनेनैतानि स्युरित्यर्थः ।

यन्नालकंददलकेसरवद्विपक्वं
नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ।
सर्पिश्चतुःकुवलयं सहिरण्यपत्रं
मेध्यं गवामपि भवेत् किमु मानुषाणाम्

यद्घृतं नीलोत्पलस्य नालादिमत् कांचनशकलान्वितं सक्षीरं विपक्वं तदपि चतुष्कुवलयं प्रसिद्धम् । गवामपि जडानामप्येतन्मेध्यम् । किंपुनर्मानुषाणाम् । तेषां समेधानामतिशयेनेत्यर्थः । वसंततिलके वृत्ते ।

ब्राह्मीवचासैंधवशंखपुष्पी-

मत्स्याक्षकब्रह्मसुवर्चलेंद्रयः ।
वैदेहिका च त्रियवाः पृथक्स्यु-
र्यवौ सुवर्णस्य तिलो विषस्य ॥ ५० ॥
सर्पिषश्च पलमेकत एत-
द्योजयेत्परिणते च घृताढ्यम् ।
भोजनं समधु वत्सरमेवं
शीलयन्नधिकधीस्मृतिमेधः ॥ ५१ ॥
अतिक्रांतजराव्याधितंद्रालस्यश्रमक्लमः ।
जीवत्यब्दशतं पूर्णं श्रीतेजःकांतिदिप्तिमान् ॥ ५२
विशेषतः कुष्ठकिलासगुल्म-
विषज्वरोन्मादगरोदराणि ।
अथर्वमंत्रादिकृताश्च कृत्याः
शाम्यंत्यनेनातिवलाश्च वाताः ॥ ५३ ॥

ब्राह्मयादयस्त्रियवप्रमाणाः पृथक् स्युः । मत्स्याक्षकः पत्तूरः । सुवर्णस्य यवौ द्वौ । तिल एको विषस्य घृतस्य च पलम् । एतदेकतो योजयेत् । जीर्णे चाऽस्मिन् भेषजे बहुघृतं भोजनं समाक्षिकं योजयेत् । एवं वर्षं शीलयन् विपुलबुद्ध्यादिकः स्यात् । उपजातिस्वागते वृत्ते । जरादिरहितः पूर्णलक्ष्म्यादिको वर्षशतं जीवति । विशेषेण कुष्ठादयोऽनेन शाम्यंति । अतिबला वाताश्च । उपजातिः ।

शरन्मुखे नागबलां पुष्ययोगे समुद्धरेत् ।
अक्षमात्रं ततो मूलाच्चूर्णितात्पयसा पिबेत् ॥ ५४ ॥
लिह्यान्मधुघृताभ्यां वा क्षीरवृत्तिरनन्नभुक् ।
एवं वर्षप्रयोगेण जीवेद्वर्षशतं बली ॥ ५५ ॥

शरदादौ पुष्यनक्षत्रे नागबलामूलं समुद्धरेत् । तस्मान्मूलाच्चूर्णितादक्षमात्रं कर्षमात्रं दुग्धेन पिबेन्माक्षिकघृताभ्यां वा लिह्यात् । क्षीरवर्तनोऽनन्नाशी । एवं वर्षप्रयोगेण बलवान्सन् वर्षशतं जीवेत् ।

फलोन्मुखो गोक्षुरकः समूल-
श्छायाविशुष्कः सुविचूर्णितांगः ।
सुभावितः स्वेन रसेन तस्मा-
न्मात्रां परां प्रासृतिकीं पिबेद्यः ॥ ५६ ॥
क्षीरेण तेनैव च शालिमश्नन्
जीर्णे भवेत्सद्वितुलोपयोगात् ।
शक्तः सुरूपः सुभगः शतायुः
कामी ककुद्मानिव गोकुलस्थः ॥ ५७ ॥

गोक्षुरकः फलाभिमुखो मूलयुतश्छायाविशुष्कः श्लक्ष्णचूर्णितः स्वरसेन सुभावितस्तस्माद्गोक्षुरकान्मात्रां प्रासृतिकीं परां यः क्षीरेण पिबेत् । परिणते तस्मिन् दुग्धेनैव च शालीन् भक्षयेत् । स पुरुषः पलशतद्वयोपयोगाच्छक्तयादिगुणः स्यात् । उपजातींद्रवज्रावृत्ते ।

वाराहीकंदमार्द्रार्द्रं क्षीरेण क्षीरपः पिबेत् ।
मासं निरन्नो मासं च क्षीरान्नादो जरां जयेत् ५८

वाराह्या वृद्धदारकस्य मूलमत्यार्द्रं दुग्धेन मासं पिबेत् । जीर्णेऽपि क्षीरपो निरन्नः स्यात् । अपरं च मासं क्षीरान्नाशी सन् जरां जयति ।

तत्कंदश्लक्ष्णचूर्णं वा स्वरसेन सुभावितम् ।
घृतक्षौद्रप्लुतं लिह्यात्तत्पक्वं वा घृतं पिबेत् ॥ ५९ ॥

तस्या वाराह्या मूलं श्लक्ष्णचूर्णं वा स्वरसेन सुष्ठु भावितं घृतमाक्षिकाप्लुतं लिह्यात् । तेन वा मूलकल्केन पक्वं घृतं पिबेत्पूर्वगुणम् ।

तद्वद्विदार्यतिवलाबलामधुकवायसीः ।
श्रेयसी श्रेयसी युक्ता पथ्याधात्रीस्थिरामृताः ॥६०॥
मंडूकीशंखकुसुमावाजिगंधाशतावरी ।
उपयुंजीत मेधावी वयःस्थैर्यबलप्रदाः ॥ ६१ ॥

विदार्यादींश्च पृथक् पृथक् तद्वद्वृद्धदारकवत् सर्पिर्दुग्धयुतान्मेधायावहानुपयुंजीत । ततश्चोपयुक्ता वयःस्थैर्यादिप्रदाः स्युः ।

यथास्वं चित्रकः पुष्पैर्ज्ञेयः पीतसितासितैः ।
यथोत्तरं स गुणवान् विधिना च रसायनम् ॥६२॥

चित्रको यथायोगं पुष्पैः पीतैः शुक्लैः कृष्णैश्च यथोत्तरं गुणवान् वेदितव्यः । विधिना च प्रयुक्तो रसायनं स्यात् ।

छायाशुष्कं ततो मूलं मासं चूर्णीकृतं लिहन् ।
सर्पिषा मधुसर्पिर्भ्यां पिबन् वा पयसा यतिः ॥६३॥
अंभसा वा हितान्नाशी शतं जीवति नीरुजः ।
मेधावी बलवान् कांतो वपुष्मान् दीप्तपावकः ६४

तस्माच्चित्रकान्मूलं छायाशुष्कं मासं चूर्णीकृतं घृतेन मधुघृताभ्यां वा लिह्यात् । पयसा वा ब्रह्मचारी पिबेत् । पानीयेन वा हितान्नभोजनः सन् पिबेत् । सुखी मेधावान् बलवान् रमणीयो वपुष्मान् दीप्ताऽग्निः समाः शतं जीवति ।

तैलेन लीढो मासेन वातान् हंति सुदुस्तरान् ।
मूत्रेण श्वित्रकुष्ठानि पीतस्तक्रेण पायुजान् ॥ ६५ ॥

तैलेन लीढश्चित्रको मासेन दारुणान् वातान् जयति । गोमूत्रेण पीतः श्वित्रकुष्ठानि हंति । तक्रेण पीतोऽर्शांसि जयेत् ।

भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ।
ग्रीष्मे संगृह्य हेमंते स्वादुस्निग्धहिमैर्वपुः ॥ ६६ ॥
संस्कृत्य तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ।
अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ ६७ ॥
वर्धयेत्प्रत्यहं चानु तत्रैकैकमरुष्करम् ।
सप्तरात्रत्रयं यावत् त्रीणि त्रीणि ततः परम् ॥६८॥

**आचत्वरिंशतस्तानि ह्रासयेद्वृद्धिवत्ततः ।**
**सहस्रमुपयुंजीत सप्ताहैरिति सप्तभिः ॥ ६९ ॥**
**यंत्रितात्मा घृतक्षीरशालिषष्टिकभोजनः ।**
**तद्वत्रिगुणितं कालं प्रयोगांतेऽपि चाचरेत् ॥ ७०॥**
**आशिषो लभते पूर्वा वह्नेर्दीप्तिं विशेषतः ।**
**प्रमेहकृमिकुष्ठार्शो मेदोदोषविवर्जितः ॥ ७१ ॥**

भल्लातकानि सुनिष्पन्नानि ग्रीष्मे संगृह्य धान्यराशौ निधापयेत् । हेमंते मधुरस्निग्धशीतलैः संस्कृतशरीरस्तान्यष्टावष्टगुणे जले क्वाथयेत् । तत्क्वाथमष्टांशशेषं क्षीरसहितं शीतं पिबेत् । पश्चात्तस्मिन् प्रतिदिनं चैकैकं भल्लातकं वर्धयेदधिकीकृत्य क्वाथयेदित्यर्थः । सप्तरात्रत्रयं यावत् सप्तरात्रत्रयात्परतस्त्रीणि त्रीण्यरुष्कराणि चत्वारिंशतं यावद्वर्धयेत् । अनंतरं तान्यरुष्कराणि वृद्धिवद्ध्रासयेत् । इत्येवं सप्तभिः सप्ताहैः सहस्रमुपयुंजीत । यंत्रितात्मा पुरुषो घृतक्षीरशालिषष्टिकभोजनः । तथैव च भल्लातकप्रयोगांत एकविंशतिसप्ताहान् घृतक्षीरशालिषष्टिकभोजनं कुर्यात् । एवं कृतभल्लातकप्रयोगोऽपूर्वा अभिलषिता दयिता आशिषो लभते । तथा वह्निपाटवं विशेषेण प्रमेहादिवर्जितः स्यात् ।

**पिष्टस्वेदनमरुजैः पूर्णं भल्लातकैर्विजर्जरितैः ।**
**भूमिनिखाते कुंभे प्रतिष्ठितं कृष्णमृल्लिप्तम् ॥ ७२ ॥**
**परिवारितं समंतात्पचेत्ततो गोमयाग्निना मृदुना ।**
**तत्स्वरसो यश्च्यवते गृह्णीयात्तं दिनेऽन्यस्मिन् ७३**
**अमुमुपयुज्य स्वरसं मध्वष्टमभागिकं द्विगुणसर्पिः ।**
**पूर्वविधियंत्रितात्मा प्राप्नोति गुणान्स तानेव ॥७४॥**

पिष्टं शालिचूर्णं स्वेद्यतेऽस्मिन्निति पिष्टस्वेदनं भांडं तदरुजैर्दृढैर्भल्लातकैस्तथा विजर्जरितैः पूर्णं सत् कृतच्छिद्रं भूमिनिखाते कुंभे प्रतिष्ठितं कृष्णमृत्तिकया लिप्तमनंतरं गोमयाग्निना मृदुना परिवारितं पचेत् । तत्स्वरसो यस्तत्र धरानिखाते कुंभे पतेत् । तमन्यस्मिन्नहनि गृह्णीयात् । अमुं पूर्वोक्तं स्वरसं माक्षिकाष्टमभागं द्विगुणघृतं पूर्वविधिना यंत्रितात्मा सन्नुपयुंज्य तानेव पूर्वोक्तान् गुणान् प्राप्नोति । आर्यास्तिस्रः । मध्यमा च मुखचपला ।

**पुष्टानि पाकेन परिच्युतानि**
**भल्लातकान्याढकसम्मितानि ।**
**घृष्टेष्टिकाचूर्णकणैर्जलेन**
**प्रक्षाल्य संशोष्य च मारुतेन ॥ ७५ ॥**
**जर्जराणि विपचेज्जलकुंभे**
**पादशेषघृतगालितशीते ।**
**तद्रसं पुनरपि श्रपयेत**
**क्षीरकुंभसहितं चरणस्थे ॥ ७६ ॥**
**सर्पिः पक्वं तेन तुल्यप्रमाणं**
**युंज्यात्स्वेच्छं शर्कराया रजोभिः ।**
**एकीभूतं तत्खजक्षोभणेन**
**स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥ ७७ ॥**
**तममृतरसपाकं यः प्रगे प्राशमश्नन्**
**अनु पिबति यथेष्टं वारिदुग्धं रसं वा ।**
**स्मृतिमतिबलमेधासत्त्वसारैरुपेतः**
**कनकनिचयगौरः सोऽश्नुते दीर्घमायुः ॥ ७८ ॥**

सुनिष्पन्नानि भल्लातकानि पाकेन परिच्युतान्याढकसंख्यानि इष्टिकाचूर्णकणैर्घृष्टानि जलेन प्रक्षाल्य मारुतेन संशोष्य नत्वातपे ततो जर्जराणि जलद्रोणे विपचेत् । पादशेषघृतगालितं शीतं च तं रसं पुनरपि क्षीरद्रोणे सहितं पचेत् । तस्मिन् पादशेषस्थे तुल्यप्रमाणं सर्पिःपक्वं शर्कराचूर्णेन युतं यथेच्छं प्रकृत्यादिवशाद्युंजीत । तच्च खजलोडनेनैकीभूतं धान्यमध्ये सप्तरात्रं सुगुप्तं स्थाप्यम् । इंद्रवज्रास्वागताशालिन्यो वृत्तानि । तममृतरसतुल्यपाकं यः पूर्वाह्णे प्राशं लेहं भक्षयन् पश्चाद्यथेष्टं जलं क्षीरं मांसरसं वा पिबति स स्मृत्यादियुतः सुवर्णौघगौरो दीर्घमायुः प्राप्नोति । मालिनी ।

**द्रोणेऽम्भसो व्रणकृतां त्रिशताद्विपक्वात्**
**क्वाथाढके पलसमैस्तिलतैलपात्रम् ।**
**तिक्ताविषाद्वयवरागिरिजन्मतार्क्ष्यैः**
**सिद्धं परं निखिलकुष्ठनिबर्हणाय ॥ ७९ ॥**

जलद्रोणे व्रणकृतां भल्लातकानां शतत्रयाद्विपक्वात् क्वाथस्याढकेऽवशिष्टे तिलतैलाढकं तिक्तादिभिः पालिकैः कल्कितैः पक्वं निःशेषं कुष्ठनिषूदनाय परं श्रेष्ठम् । वसंततिलकम् ।

**सहामलकशुक्तिभिर्दधिसरेण तैलेन वा**
**गुडेन पयसा घृतेन यवसक्तुभिर्वा सह ।**
**तिलेन सह माक्षिकेण पललेन सूपेन वा**
**वपुष्करमरुष्करं परममेध्यमायुष्करम् ॥ ८० ॥**

आमलकत्वगादिभिः सह प्रत्येकं भल्लातकमुपयुक्तं प्रशस्तशरीरकरणकारणम् । तथा परमतिशयेन मेध्यमायुःप्रदं च स्यात् । पृथ्वीवृत्तम् ।

**भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।**
**भवंत्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ८१ ॥**

भल्लातकानि तीक्ष्णानि सुनिष्पन्नानि दहनतुल्यानि तानि यथाविधि प्रयुक्तान्यमृतकल्पानि भवंति ।

**कफजो न स रोगोऽस्ति न विबंधोऽस्ति कश्चन ।**
**यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥ ८२ ॥**

श्लेष्मोत्थो रोगः स नास्ति विबंधश्च स कश्चिदपि न विद्यते यं रोगं विबंधं वा भल्लातकं पटुतरदहनकरं न हन्यात् ।

**वातातपविधानेऽपि विशेषेण विवर्जयेत् ।**
**कुलत्थदधिसूक्तानि तैलाभ्यंगाग्निसेवनम् ॥ ८३ ॥**

वातातपविधावपि भल्लातकस्य कुलत्थादीनि विशेषेण वर्जयेत् ।

वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः ।
वीचीतरंगविक्षोभमारुतोद्धूतपल्लवाः ॥ ८४ ॥
तेभ्यः फलान्याददीत सुपक्वान्यंबुदागमे ।
मज्जा फलेभ्यश्चादाय शोषयित्वाऽवचूर्ण्य च॥८५॥
तिलवत् पीडयेद् द्रोण्यां क्वाथयेद्वा कुसुंभवत् ।
तत्तैलं संसृतं भूयः पचेदासलिलक्षयात् ॥ ८६ ॥
अवतार्य करीषे च पक्षमात्रं निधापयेत् ।
स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य तत्ततः ॥८७॥
चतुर्थभक्तांतरितः प्रातः पाणितलं पिबेत् ।
मंत्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ८८ ॥
मज्जासार महावीर्य सर्वान् धातून् विशोधय ।
शंखचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः॥ ८९॥
तेनास्योर्ध्वमधस्ताच्च दोषा यांत्यसकृत्ततः ।
सायमस्नेहलवणां यवागूं शीतलां पिबेत्॥९०॥
पंचाहानि पिबेत्तैलमित्थं वर्ज्यानि वर्जयेत् ।
पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥ ९१ ॥

तुवरसंज्ञावृक्षास्तुवरकाः पश्चिमसमुद्रतटोद्भूता वीचीत्यादिना विशेषणेन तोयनिधिनिकटतरत्वं प्रतिपादयति । तेभ्यो वृक्षेभ्यो जलदागमे सुपक्वानि फलानि गृह्णीयात् । फलेभ्योऽपि मज्जा गृहीत्वा शोषयित्वा सुष्ठु चूर्णयित्वा च तिलवद् द्रोण्यां पीडयेत्। कुसुंभवद्वा क्वाथयेत् । तच्च तैलं सिद्धं पुनः पचेत्तोयक्षयं यावत् पक्वं चावतार्य करीषे मासार्धं निधापयेत् । यंत्रपीडितं तु प्रकृत्यैव निस्तोयं तैलं तदक्वथितमेव निधापयेत् । ततः पक्षादनंतरं तैलमुद्धृत्य स्निग्धस्विन्नो हृतदोषो मंत्रेणानेन मज्जसारेत्यादिना पवित्रितस्य तैलस्य शुभदिवसे चतुर्थेन भक्तेनांतरितोऽहर्मुखे कर्षं पिबेत् । तेन तैलेनास्य पुंस ऊर्ध्वमधश्च पुनः पुनर्दोषा यांति । अनंतरमपराह्णेऽस्नेहलवणां यवागूं शिशिरां पिबेत् । इत्थमनेन प्रकारेण परिहार्यान् परिहरन् पंच दिवसानि तैलं पिबेत् । पक्षं मुद्गरसान्नभोजनं सर्वकुष्ठैर्विमुच्यते ।

तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ।
निहितं पूर्ववत्पक्षं पिबेन्मासं सुयंत्रितः ॥ ९२॥
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम् ।
अनेनाशु प्रयोगेण साधयेत्कुष्ठिनं नरम् ॥ ९३ ॥

तदेव तैलं खदिरक्वाथेन त्रिगुणेन सम्यक्पक्वं पूर्ववत् करीषे पक्षं निहितं मासं सुयंत्रितः पिबेत् । तेन च तैलेनाभ्यक्तशरीरो भोजनं पूर्वोक्तं मुद्गरसान्नं विदध्यात् । एतेन प्रयोगेण शीघ्रं कुष्ठवंतं पुरुषमुपक्रमेत् ।

सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना ।
पक्षं मांसरसाहारं करोति द्विशतायुषम् ॥ ९४॥

तदेव तुवरास्थितैलं खदिरमंतरेण घृतमधुयुतं पक्षं पीतं सन्मांसरसाहारं वरं द्विशतायुषं विधत्ते ।

तदेव नस्ये पंचाशद्दिवसानुपयोजितम् ।
वपुष्मंतं श्रुतधरं करोति त्रिशतायुषम् ॥ ९५ ॥

तदेव तैलं नस्ये पंचाशद्वासरान् सेवितं वरशरीरं श्रुतधरं त्रिवर्षशतायुषं करोति ।

पंचाष्टौ सप्तदश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ९६ ॥

पंचपिप्पलीरथवा सप्ताष्टौ वा दश वा माक्षिकसर्पिर्भ्यां रसायनगुणमभिलष्य वर्षमेकं प्रयोजयेत् ।

तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ९७
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ।

पलाशक्षारभाविताः पिप्पल्यः सर्पिषा भर्जिता माक्षिकान्वितास्तिस्रः पूर्वाह्णे तिस्रो भुक्त्वा तिस्रो भोजनस्याग्रे प्रयोज्या रसायनगुणं कामयमानेन ।

क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम् ॥९८ ॥
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ।
जीर्णौषधश्च भुंजीत षष्टिकं क्षीरसर्पिषा ॥ ९९ ॥
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ।
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः॥१००॥
तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ।

दश दिनानि दश पैप्पलिकं दिनक्रमवृद्ध्या क्षीरेण सह भोजयेत् । वर्धमाना दश पिप्पलीः प्रयोजयेदित्यर्थः । तथैव दशपैप्पलिकं दिनं पयसा सहापनयेत् । परिणतभेषजश्च षष्टिकं दुग्धघृतेनाद्यात् । अयमेवंप्रकारः सहस्रपिप्पलीनां प्रयोगो रसायनं स्यात् । ताः पिप्पल्यः पिष्टाः सत्यो बलवद्भिर्नरैः पातव्याः । मध्यबलैर्नरैः क्वथिताः पेयाः । तद्वच्चेति । अनेनैव क्रमेण छागक्षीरेण सह द्वे सहस्रे प्रयोजयेत् ।

एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥
यक्ष्मामेहग्रहण्यर्शःपांडुत्वविषमज्वरान् ।
घ्नंति शोफं वमिं हिध्मां प्लीहानं वातशोणितम्॥

एभिः पूर्वोक्तैः प्रयोगैः पिप्पल्य उपयुक्ताः कासादींश्छोफादींश्च जयंति ।

विल्वार्धमात्रेण च पिप्पलीनां
पात्रं प्रलिंपेदयसो निशायाम् ।
प्रातः पिबेत्तत्सलिलांजलिभ्यां
वर्षं यथेष्टाशनपानचेष्टः ॥ १०२ ॥

पिप्पलीकर्षद्वयमात्रेण निशायां लोहपात्रं लिंपेत्। तच्च जलांजलियुगेन प्रातः पिबेत्संवत्सरं स्वेच्छाभोजनपानक्रियः। एतच्च रसायनं पूर्वगुणम्। इंद्रवज्रा वृत्तम्।

**शुंठीविडंगत्रिफलागुडूची-**
**यष्टीहरिद्रातिबलाबलाश्च।**
**मुस्तासुराह्वागुरुचित्रकाश्च**
**सौगंधिकं पंकजमुत्पलानि॥ १०४॥**
**धवाश्वकर्णासनवालपत्र-**
**सारास्तथा पिप्पलिवत्प्रयोज्याः।**
**लोहोपलिप्ताः पृथगेव जीवे-**
**त्समाः शतं व्याधिजराविमुक्तः॥१०५॥**

शुंठ्यादीन् पृथगेव पिप्पलीरिव लोहोपलिप्तानुपयुज्य वर्षशतं रोगजरारहितो जीवति।

**क्षीरांजलिभ्यां च रसायनानि**
**युक्तान्यमून्यायसलेपनानि।**
**कुर्वंति पूर्वोक्तगुणप्रकर्ष-**
**मायुःप्रकर्षं द्विगुणं ततश्च॥ १०६॥**

अमूनि पूर्वोक्तानि रसायनानि लेपनानि क्षीरांजलिभ्यां दुग्धपलाष्टकेनोपयुक्तानि पूर्वोक्तगुणातिशयमायुःप्रकर्षं च ततो द्विगुणं विदधाति। आद्यंते इंद्रवज्राख्ये। मध्यमं तूपजातिः।

**असनखदिरयूषैर्भाविता सोमराजीं**
**मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम्।**
**शरदमवलिहानः पारिणामान् विकारां-**
**स्त्यजति मितहिताशी तद्वदाहारजातान्॥ १०७॥**

असनादिक्वाथे भावितां बाकुचीं माक्षिकादिभिर्युक्तां वर्षमवलिहन् पारिणामान्वयःपरिणतजान् विकारान् जयति। तथा हितमितभोजन आहारजान् विकारांस्त्यजति। मालिनी।

**तीव्रेण कुष्ठेन परीतमूर्ति-**
**र्यः सोमराजीं नियमेन खादेत्।**
**संवत्सरं कृष्णातिलद्वितीयां**
**ससोमराजीं वपुषाऽतिशेते॥ १०८॥**

दारुणेन कुष्ठेन व्याप्तदेहो यः शशांकलेखां कृष्णतिलयुतां नियमेन वत्सरं भक्षयेत् स चंद्रकांतिः शरीरेण जायते। उपजातिः।

**ये सोमराज्या वितुषीकृताया-**
**श्चूर्णैरुपेतात्पयसः सुजातात्।**
**उद्धृत्य सारं मधुना लिहंति**
**तक्रं तदेवानुपिबंति चांते॥ १०९॥**
**कुष्ठिनः कुथ्यमानांगास्ते जातांगुलिनासिकाः।**
**भांति वृक्षा इव पुनः प्ररूढनवपल्लवाः॥ ११०॥**

ये पुरुषा वितुषीकृताया इंदुराज्याश्चूर्णैर्युक्तात्क्षीरात्सुजातात्सारं नवनीताख्यमुद्धृत्य माक्षिकेण सह लिहंति। पश्चात् तदेव तक्रं च ये पिबंति ते कुष्ठवंतः शीर्यमाणशरीराः समुद्भूतांगुलिघ्राणाः शोभंते। तरव इव भूयः संजातप्रत्यग्रपल्लवाः। इंद्रवज्रा।

**शीतवातहिमदग्धतनूनां**
**स्तब्धभुग्नकुटिलव्यथितास्थ्नाम्।**
**भेषजस्य पवनोपहतानां**
**वक्ष्यते विधिरतो लशुनस्य॥ १११॥**

अथ लशुनादिकल्पमाचष्टे।

**राहोरमृतचौर्येण लूनाद्ये पतिता गलात्।**
**अमृतस्य कणा भूमौ ते रसोनत्वमागताः॥ ११२॥**
**द्विजा नाश्नंति तमतो दैत्यदेहसमुद्भवम्।**
**साक्षादमृतसंभूतेर्ग्रामणीः स रसायनम्॥ ११३॥**

स्वर्भानोरमृतापहरणापराधेन कंठाच्छिन्नाद्येऽमृतस्य बिंदवो धरित्र्यां पतितास्ते लशुनत्वं प्राप्ताः। यतोऽस्माद्धेतोर्दैत्यदेहोत्थं लशुनमतो द्विजा न भक्षयंति। साक्षाद्वामृतसंभूतत्वाद्धेतोरसौ रसोनो रसायनं ग्रामणीः श्रेष्ठः।

**शीलयेल्लशुनं शीते वसंतेऽपि कफोल्बणः।**
**घनोदयेऽपि वातार्तः सदा वा ग्रीष्मलीलया ११४**
**स्निग्धशुद्धतनुः शीतमधुरोपस्कृताशयः।**
**तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः॥ ११५॥**

शीते हेमंतशिशिरयोर्लशुनं शीलयेत्। कफाधिको वसंतेऽपि शीलयेत्। वातोत्तरो वर्षास्वपि शीलयेत्। सर्वदैव वा वातार्तो ग्रीष्मर्तुचर्याचरणेन शीलयेत्। कीदृशः सन्। स्निग्धा शुद्धा च तनुर्यस्य स एवं तथा शीतलैर्मधुरैश्चोपस्कृतः संस्कृत आशयो यस्य स एवम्। तथा तस्य लशुनस्य शेखरकर्णपूराभ्यां मंडिता अनुचराः सेवका अंगणे यस्य स तथा।

**तस्य कंदान् वसंतांते हिमवच्छकदेशजान्।**
**अपनीतत्वचो रात्रौ तीमयेन्मदिरादिभिः॥ ११६॥**
**तत्कल्कस्वरसं प्रातः शुचितांतवपीडितम्।**
**मदिरायाः सुरूढायास्त्रिभागेन समन्वितम्॥११७॥**
**मद्यस्यान्यस्य तैलस्य मस्तुनः कांजिकस्य वा।**
**तत्काल एव वा युक्तं युक्तमालोच्य मात्रया॥११८॥**
**तैलसर्पिर्वसामज्जक्षीरमांसरसैः पृथक्।**
**क्वाथेन वा यथाव्याधि रसं केवलमेव वा॥११९॥**
**पिबेद्गंडूषमात्रं प्राक् कंठनाडीविशुद्धये।**

तस्य लशुनस्य कंदान् वसंतऋतुजांस्तथा हिमवद्देशजांश्छकदेशजान् वा उद्धृतत्वचो रात्रौ मदिराबीजपूररसादिभिस्तीमयेत् क्लेदयेत्। तत्कल्कस्य स्वरसं धौतवस्त्रपीडितं मदिरायाः सुरूढायास्त्रिभागेन युतं मद्यादेर्वा त्रिभागेन युतमथवा तस्मिन्नेव काले सुरादिभिर्युतं मात्रया देशकालातुराद्यपेक्षिण्या आलोच्य

निरूप्य तैलादि वा पृथग् युक्तं यदि वा क्काथेन यथाव्याधिवशा-युक्तं केवलमेव वा रसं प्राक् पूर्वं गंडूषमात्रं पिबेद्गलनाडीविशो-धनाय ।

**प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ १२० ॥**
**शीतांबुसेकः सहसा वमिमूर्छाययोर्मुखे ।**

वेदनायां सत्यां सततं स्वेदनं श्रेष्ठम् । तथा वमौ मूर्छाये च सहसा झटित्येव शीतलजलसेको मुखे शस्यते ।

**शेषं पिबेत् क्लमापाये स्थिरतां गत ओजसि ॥१२१॥**

शेषं रसं क्लांतेरपगम ओजसि स्थैर्ये प्राप्ते सति पिबेत् ।

**विदाहपरिहाराय परं शीतानुलेपनः ।**
**धारयेत्सांबुकणिका मुक्ताः कर्पूरमालिकाः ॥१२२॥**

विदाहोपशांतयेऽतिशीतानुलेपनः स्यात् । तथा मुक्ता मालिकाः कर्पूरमालिकाश्च सजकलणा धारयेत् ।

**कुडवोऽस्य परा मात्रां तदर्धं केवलस्य तु ।**
**पलं पिष्टस्य तन्मज्ज्ञः सभक्तं प्राक् च शीलयेत्१२३**

अस्योत्तमा मात्रा सुरासहितस्य कुडवः । केवलस्य तु रसस्य कुडवार्धं परं मात्रा । तन्मज्ज्ञः पिष्टस्य पलं परा मात्रा । सभक्तं प्राक् चाहारात्तच्छीलयेत् ।

**जीर्णशाल्योदनं जीर्णे शंखकुंदेंदुपांडुरम् ।**
**भुंजीत यूषैः पयसा रसैर्वा धन्वचारिणाम् ॥१२४॥**

पुराणशालिभक्तं परिणते शंखादिवत् सितं यूषादिभिः सा-त्म्यादिवशाद् भुंजीत ।

**मद्यमेकं पिबेत्तत्र तृट्प्रबंधे जलान्वितम् ।**
**अमद्यपस्त्वारनालं फलांबुपरिसिस्थिकाम् ॥ १२५ ॥**

तत्र च तृषि जातायां केवलं मद्यं जलयुतं पिबेत् । अमद्य-पस्तु नरो धान्याम्लादीनि पिबेत् । परिसिस्थिकासदृक् विशेषः । किटिरिति क्वचित्प्रसिद्धा ।

**तत्कल्कं वा समघृतं घृतपात्रे खजाहतम् ।**
**स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम् ॥ १२६॥**

अथवा तस्य लशुनस्य कल्कं तुल्यघृतं खजेनालोडितं घृत-भांडे स्थितं दशाहादूर्ध्वं भुंजीत । तथैव वसया सह स्थितं दशाहादूर्ध्वं भुंजीत ।

**विकंचुकप्राज्यरसोनगर्भान्**
**सशूल्यमांसान् विविधोपदंशान् ।**
**विमर्दकान्वा घृतशुक्तयुक्तान्**
**प्रकाममद्याल्लघु तुत्थमश्नन् ॥ १२७॥**

विकंचुको विगतत्वग् यः प्राज्यः प्रभूतो लशुनः स गर्भो येषां तांस्तथाविधांस्तथा सहशूल्यमांसेन सशूल्यमांसांस्तथा ना-नाविधरुचकानीदृशान्वा विमर्दकान् घृतसुक्तकान्वितान् यथेच्छं खादेल्लघु तथा तुत्थमल्पं भुंजानः । उपेंद्रवज्रावृत्तम् ।

**पित्तरक्तविनिर्मुक्तसमस्तावरणावृते ।**
**शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम् ॥१२८॥**

वाते लशुनात्परमन्यद् द्रव्यं न विद्यते । किंभूते पित्तरक्त-विहीनसकलावरणावृते । शुद्धे केवले पवनेऽपरं द्रव्यं न विद्यते ।

**प्रियांबुगुडदुग्धस्य मांसमद्याम्लविद्विषः ।**
**अतितिक्षोरजीर्णे च रसोनो व्यापदे ध्रुवम् १२९**

लशुनं प्रियं जलादेर्नरस्य मांसादिद्वेषिणस्तथाऽजीर्णमतिति-क्षोर्निश्चयेन व्यापत्तये स्यात् ।

**पित्तकोपभयादंते युंज्यान्मृदु विरेचनम् ।**
**रसायनगुणानेवं परिपूर्णान्समश्नुते ॥ १३० ॥**

लशुनप्रयोगांते च पित्तकोपभयान्मृद्वतीक्ष्णं च विरेचनं का-रयेत् । एवमनेन प्रकारेण युक्ते रसोने रसायनगुणान् परिपूर्णान् प्राप्नोति ।

अधुना शिलाजतुकल्पं ब्रूते ।

**ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमंति यत् ।**
**हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥ १३१ ॥**

ग्रीष्मे ऋतौ गिरयो रवितप्ता जतुतुल्यं यद्वमंति क्षरंति । सु-वर्णादयश्च ते षड्धातवश्च तेषां रसं तच्छिलाजतु गद्यते ।

**सर्वं च तिक्तकटुकं नात्युष्णं कटुपाकतः ।**
**छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥ १३२ ॥**

सर्वं षड्धातुजमपि गिरिजं तिक्तकटुकं न चातिशयेनोष्णं पाके कटुकं छेदनं च विशेषेण । तत्र मध्ये लौहं शिलाजं प्रशस्यते ।

**गोमूत्रगंधि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम् ।**
**स्निग्धमनम्लकषायं मृदु गुरु च शिलाजतु श्रेष्ठम् ॥**

गोमूत्रगंध्यादिगुणं शिलाजतु वरं स्यात् ।

**व्याधिव्याधितसात्म्यं**
**समनुसरन् भावयेदयःपात्रे ।**
**प्राक् केवलजलधौतं**
**शुष्कं क्काथैस्ततो भाव्यम् ॥ १३४ ॥**

व्याधिश्च व्याधितश्च तयोः सात्म्यमुपशयं समनुस्मरंल्लोहपात्रे गिरिजं भावयेत् । कथमित्याह । पूर्वं केवलजलेन धौतं ततः शुष्कं सत् क्काथैर्भावनीयम् ।

**समगिरिजमष्टगुणिते निःक्काथ्यं भावनौषधं तोये ।**
**तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेद् गिरिजम् ॥१३५॥**
**तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ।**
**स्वैः स्वैरेवं क्काथैर्भाव्यं वारान् भवेत्सप्त ॥ १३६ ॥**

समं गिरिजं यस्मिन् भावनौषधे तदेवमष्टगुणे जले निःक्का-थ्यम् । तत्क्काथेऽष्टांशशेषे पूतोष्णे सति शिलाजतु प्रक्षिपेत् ।

तत्समरसतां प्राप्तं शुष्कं पुना रसे क्षिपेत्। एवं स्वैः स्वैः क्वाथैः सप्त वारान् भावनीयम्। आर्याश्चतस्रः।

**अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम्।**
**त्र्यहं युंजीत गिरिजमेकैकेन तथा त्र्यहम्॥ १३७॥**
**फलत्रयस्य यूषेण पटोल्या मधुकस्य च।**
**योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत्॥ १३८॥**
**शिलाजमेवं देहस्य भवत्यत्युपकारकम्।**
**गुणान्समग्रान् कुरुते सहसा व्यापदं न च॥१३९॥**

अथ गिरिजमेवं भावयित्वा स्निग्धस्य शुद्धस्य च नरस्य तिक्तकसाधितं घृतं दिवसत्रयमुपयुंजीत। ननु यदि स्निग्धशुद्ध एवासौ तत्किमिति पुनः सर्पिर्युज्यते। ब्रूमः। कृतघृतस्य शिलाजतुविधानं सुतरां शस्तम्। तथा चोक्तम्। यथा हि कवची शस्त्रं परेभ्यः सहतेऽधिकम्। तथाऽस्नेहाधिके गात्रे सेव्यमानं शिलाजत्वित्यादि। तथा एकैकेन वक्ष्यमाणेन सह शैलजं त्र्यहमुपयुंज्यात्। त्रिफलायाः क्वाथेन त्र्यहं पटोल्याश्च क्वाथेन त्र्यहं मधुयष्ट्याश्च क्वाथेन त्रिदिवसमनंतरं योग्यं योगं कालादीनपेक्ष्य प्रयोजयेत्। एवमनेन विधिना गिरिजं युक्तं शरीरस्योपकारकतरं स्यात्। सकलान् गुणान् विधत्ते। अकस्मादेव च व्यापदं न करोति।

**एकत्रिसप्तसप्ताहं कर्षमर्धपलं पलम्।**
**हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः॥१४०॥**

एकं सप्ताहं त्रिसप्ताहं सप्तसप्ताहमिति काले योगः। कर्षमर्धपलं पलमिति मात्रायोगः इति द्वयेप्यत्र यथाक्रमं हीनमध्योत्तमत्वम्। एकश्च त्रयश्च सप्त च तेषां सप्ताहमिति समासः। मुनिनाप्युक्तम्। प्रयोगः सप्तसप्ताहस्त्रय एकश्च कालतः निर्दिष्टस्त्रिविधस्तस्य वरो मध्योऽवरस्तथा। पलमर्धपलं कर्षं मात्रा तस्य त्रिधा मतेति।

**संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम्।**
**युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः १४१**
**क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम्।**
**कुलत्थां काकमाचीं च कपोतांश्च सदा त्यजेत्॥**

संस्कृतं पवनादिहरैर्द्रव्यैर्भावितं संस्कृते देहे स्नेहनशोधनैः कृतसंस्कारे शरीरे शिलाजतु प्रयुक्तं ताम्रादिभिः समुदितैर्व्यस्तैर्वा युक्तं दुग्धेनालोडितं क्षिप्रमेव रसायनफलं विदध्यात्। कुलत्थादीनि कृततत्प्रयोगः सदैव जह्यात्। खारणादे काकमाचीकपोतौ न वर्जितौ। तद्वचनं हि। शुष्कामिषं विरूढं पिष्टं युक्तं विदाहि गुरु चान्यत्। पानाशनं कुलत्थान् विशेषतो वर्जयेचात्रेत्यादि। मुनिनापि नैतौ वर्जितौ। तथा च तद्ग्रंथः। शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च। वर्जयेत्सर्वकालेषु कुलत्थांश्च सदा त्यजेदिति। विदाह्यादिवर्जनं रसायनकालाद् द्विगुणं कालं विधेयम्। कुलत्थांश्च यावज्जीवमित्येके। अन्ये तु वदंति सदाशब्देन संवत्सर उच्यते। यतो य एते षड् ऋतव एव। एतावानेव कालो न षड्ऋतुव्यतिरिक्तोऽन्यः कालोऽस्तीति तेषामयमभिप्रायः। ननु विदाहिगुर्वादिभ्यः किमिति कुलत्थानामधिकः परिहार इष्यते। ब्रूमः। पाषाणभेदे कुलत्थानामधिकतरस्वभावत्वात्। तथा हि। संतप्तकुलत्थजलेनाप्लुतानां पाषाणानां पाषाणहंतृभिः सुखेनैव विदारणं दृष्टम्। शिलाजतु च गिरिजमित्युक्तम्। अतः शिलाजतुप्रयोगात् तन्मयमेव शरीरं संपद्यते तेन तस्य कुलत्थाबाधविधायिनः। इति परिहारस्तेषामधिकः कृतः।

**न सोस्ति रोगो भुवि साध्यरूपो**
**जत्वश्मजं यं न जयेत्प्रसह्य।**
**तत्कालयोगैर्विधिवत्प्रयुक्तं**
**स्वस्थस्य चोर्जां विपुलां दधाति॥ १४२॥**

अत्र भूर्लोकग्रहणं सकलभूलोकपरिग्रहार्थम्। अन्यथा कश्चिदेव देशो गृह्यते नत्वशेषो भूलोकः। रूपग्रहणेन साध्यः सविकल्पोऽपि गृह्यते। तेन कृच्छ्रसाध्योऽपि मद्यादिभेदेन भिन्न इह गृह्यते। रूपपदमंतरेण तु सुखसाध्य एव केवलो गृह्येत। शमयति ततः क्षिप्रतरं निश्चितं च रोगजयं करोतीति गमयति। तदयं भावः। कुष्ठघ्नानि मूत्रकृच्छ्राणि वा यथौषधानि तेषां शमयति। ततः क्षिप्रतरं निश्चितं च रोगजयं करोति गिरिजमिति। न स रोगो साध्यरूपो विद्यते यं शिलाजतु प्रसह्य न जयेत्। गिरिजं कालयोगेन च विधिना प्रयुक्तं नीरुजस्य पुरुषस्य महतीमूर्जां च करोति। उपजातिः। अतएव संग्रहे जगाद। ज्वरी ज्वरघ्नांबुदपर्पटादिक्वाथेन रक्ती मधुयष्टिकायाः। शोषी रसैः क्रव्यभुगामिषोत्थैर्मायूरमांसैः पयसा च कार्श्ये। मध्वंबुना मेदसि संप्रवृद्धे क्षीरेण पर्याकुलबुद्धिसत्त्वः। पांडौ सशोफे जठरे सकृच्छ्रे पिबेच्छिलाजं महिषीजलेन। अश्मवीरतराद्येन कुष्टं खदिरवारिणा। विषं विषघ्नैरगदैर्हेत्येवं तद्यथामयम्। शैलजत्रिकटुक्षौद्रक्षौद्रधातून् निषेवते। क्षीरोदनाशी यो जीर्णे यक्ष्मणा न स बाध्यते। सुभावितां सारजलैस्तुलां पीत्वा शिलोद्भवात्। सारांबुनैव भुंजानः शालीन् जांगलजै रसैः। अपोह्य मधुमेहाख्यमंतकं रोगसंकरम्। वपुर्वर्णबलोपेतः शतं जीवत्यनामयः। अमरमंदिरमंदरसंभवात्पलशतं गिरिजादुपयोजय। यदि जरामयदुःखविवर्जितां सुचिरमिच्छसि जीवितसंततिम्। दशगुणमुपयुंक्ते यः शतं शैलजाताल्लघुहितमितभोजी वर्जयन् वर्जनीयान्। सततसमनुषक्तान् वर्जितान् वैद्यवृन्दैर्विधमति स गदौघानेक्षते चायुषोऽतमिति। शिवगुटिका चात्रैवोक्ता। यथा। शिलाह्वात् षोडशपलं त्रिस्त्रिरेकत्र भावयेत्। वराया दशमूलस्य गुडूच्याः कर्कटस्य च। बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि। क्षीरे सकृत् क्रमेणैवं सप्तकृत्वस्तथा पुनः। काकोलियुग्मघनपुष्करवह्विरास्नामेदायुगर्धिचविकागजपिप्पलीनाम्। पाठाद्विजीरकनि-

कुंभविदारियुग्मवीरावरीमधुफलांशुमतीद्वयानाम् । पलिकानामब्द्रोणे सिद्धानां पादशेषिते क्वाथे । भावितमित्थं गिरिजं द्विपलैश्चूर्णीकृतैर्युज्यात् । कर्कटशृंगीधात्रीव्योषैस्तालीसपत्रकुडवेन । चूर्णपलेन विदार्यास्तवक्षीर्याः कर्षयुग्मेन । कुडवेन चतुर्जातैस्तैलघृतक्षौद्रशर्कराभिश्च । द्विपलाभिर्द्विगुणाभिः कुर्याद्गुलिकास्ततोऽक्षसमाः । ताः शुष्का नवकुंभे जातीपुष्पाधिवासिते स्थाप्याः । तासामेकां खादेत् प्रतिदिनमनुपानमत्रेष्टम् । क्षीररसदाडिमांभो मार्द्वीकसुरासवाद्यन्यतमम् । जीर्णेऽन्नं लघु भोज्यं यूषपयःपिशितनिर्यूहैः । सप्ताहमात्रमेवं सर्वान्नीनः क्रमाद्भवेत्परतः । भक्तस्यांते प्राग्वा गुलिका न विरुध्यते चैषाम् । निरपाया भूरिफला परिहारसुखोपयोजिता जयति । प्रबलमपि वातशोणितमूरुस्तंभं ज्वरं दीर्घम् । भगमूत्रशुक्रदोषप्लीहयकृद्रक्तपांडुहृद्रोगान् । वर्ध्मवमिगुल्मपीनसहिध्माकासारुचिश्वासान् । विद्रधिमुदरं कुष्ठं श्वित्रं षांढ्यं क्षयं मदं मूर्छाम् । उन्मादमपस्मारं मुखनेत्रशिरोगदांस्तांस्तान् । आनाहमतीसारं हलीमकं कामलाग्रहणीरोगान् । ग्रंथ्यर्बुदान् सपिडकान् भगंदरं गंडमालां च । अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीपदं गुदे कीलान् । दंष्ट्राविषं समूलं गरप्रयोगान्सुघोरांश्च । अभिचारमरातिकृतं दुःस्वप्नं भौतिकीं तथा बाधाम् । पाप्मालक्ष्मीं चेयं गुटिका शमयेच्छिवा नाम । वृष्याऽऽयुष्या धन्या कांतियशःश्रीविबोधनी मेध्या । कुरुते नृपवल्लभतां जयति विवादे च वक्त्रस्था । जितखलतिवलीपलितं जीवयति सुखं शतद्वयं शरदान् । वर्षद्वयप्रयोगाद्वर्षशतचतुष्टयं जीवेत् । खारणादे तूक्तम् । कनकाद्रजतात्ताम्रादयःसीसात्तथा त्रपुणः । गिरिविवरनिःसृतं तत्क्वाथस्निग्धातिमृदुमृत्स्नम् । जत्वाभं च शिलाजतु विंद्यादेतज्जडात्मकं गिरिजम् । संरक्तपीतवर्णं सतिक्तमधुरं रसे कटुविपाकि । शीतं कनकशिलाजतु विशेषतः श्लेष्मपित्तघ्नम् । श्वेतं च तिक्तमधुरं पाचनवल्लेखनं शीतम् । किंचिल्लवणं विंद्याद्विशेषतो वातपित्तघ्नम् । शितिकंठतुल्यवर्णं तीक्ष्णोष्णं लेखनं विपाककटु । किंचिल्लवणं ताम्रात्मकं स्मृतं कफवृद्धिदोषेण । गुग्गुलुकाभं स्निग्धं तिक्तं लवणं सरं विशदतीक्ष्णम् । कटुपाकिनातिशीतं त्रिमलघ्नं त्वायसं श्रेष्ठम् । स्वाकरसमानवर्णे सीसत्रपुसंभवे शिलाजतुनी । अल्पांतरकर्मगुणे कृष्णायसजाच्छिलाजतुनः । गोमूत्रगंधमसितं गुग्गुलुकाभं विशर्करं मृत्स्नम् । स्निग्धमनम्लकषायं शिलोद्भवं सर्वकर्मण्यम् । इत्यत्र गुरुमृदुगुणौ नोक्तौ । तथोक्तम् । सस्नेहलवणभावाद्वातघ्नं पित्तनुत्सरत्वात्तत् । रसपाकयोः कटुत्वात्तैक्ष्ण्याच्च श्लेष्ममेदोघ्नम् । कटुतीक्ष्णत्वाद्दीपनमग्नेरुद्दीपनान्मलान् पचति । तिक्तत्वाद्रक्तघ्नं कटुतैक्ष्ण्यौष्ण्यात्कृमिघ्नं वा । शोभनभावाद्वृष्यं स्निग्धत्वात्पौष्टिकं च बल्यं च । आयुष्यं च विषघ्नं मंगल्यममृतान्वयत्वाच्च । शोधनभावात्स्रोतो धात्विंद्रियबुद्धिशोधनं वर्ण्यम् । पुन्त्यं च वृष्यभावान्मेध्यं योनिस्वभावाच्चेत्यादि । तथा । भावितमन्यैर्द्रव्यैर्वीर्योत्कर्षाद्विशेषकर्मण्यम् । तत्स्मात्तस्माद्भाव्यं वातादिहरौषधकषायैः । रास्नादशमूलबलापुनर्नवैरंडशुंठिमधुकानाम् । क्वाथेन भावितं तद्विशेषतो वातरोगघ्नम् । द्राक्षाभीरुपटोलीत्रायंतिगुडूचिजीवनीयानाम् । क्वाथेन भावितं तद्विशेषतः पित्तरोगघ्नम् । त्रिफलावचाविडंगकरंजघनमुख्यपंचमूलानाम् । सहपंचकोलकाक्वाथे न कफामये भाव्यम् । लघुपंचमूलशुंठीद्राक्षाकाश्मर्यवाजिगंधानाम् । सगुडूचीरसबलानां रसेन पित्तानिलगदेषु । घनकुष्ठवचात्रिफलासुरदारुविडंगपंचकोलानाम् । रजनीमरिचातिविषायुक्तानां वातकफजेषु । पाठापटोलनिंबत्रिफलाघनकुष्ठसप्तपर्णानाम् । त्रायंत्यमृतातिविषासहितानां पित्तकफजेषु । त्रिमूलेषु यथादोषं योगानेतान् विकल्प्य भाव्यं स्यात् । केवलजलधौतं शुष्कं क्वाथैस्ततो भाव्यम् । गिरिजं चतुर्गुणजलक्वाथ्यं साद्भावनौषधं तत्र । चतुर्थशेषे क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजमिति । अत्र चतुर्गुणजलस्यौषधस्य क्वाथेन मुक्तरसता न तथा स्यादिति वाग्भटोक्तमेवाष्टगुणजलक्वाथेन कार्यमिति मन्यामहे । तथोक्तम् । सलिलविशुद्धाद्गिरिजात् पिबेद्रोगः फलत्रिकरसेन । मात्रां क्रमाभिवृद्धां त्र्यहं कषायेण मधुकस्येति । रोगान्वितेषु गिरिजं जलशुद्धं भावितं कषायैश्च । दोषव्याधिबलातुरकालापेक्षी प्रयुंजीत । जीर्णौषधः सुखोदकपरिषिक्तो मांसरसपयोयूषैः । रक्तादिषष्टिकोदनमनवमरोगो गदी चाद्यात् । व्याध्यातुरदोषबलं दृष्ट्वा तस्य त्रिधा प्रयोगः स्यात् । श्रेष्ठस्त्रिषष्टिरात्रं मासो मध्यस्त्रिसप्तरात्रमवरः । पानावगाहयोः स्याद्दिव्यं शैलोद्भवं कौपम् । मुनिस्त्वस्य चतुर्धातुजत्वमेव संगिरते । तथा च तद्ग्रंथः । अनम्लं च कषायं च कटु पाके शिलाजतु । अत्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य संभवः । हेम्नः सरजतात्ताम्राद्वरं कृष्णायसादपीति । संग्रहे च गुग्गुलुकल्पोऽभिहितः । यथा । दानवेंद्रविजितान् पुरासुरान् भ्रष्टकांतिधृतिशौर्यतेजसः । वीक्ष्य विष्णुरमृतं किलासृजद्गुग्गुलुं बलवपुर्जयप्रदम् । अद्याप्यतः सुरगणाः किल धूपमुख्यान् हित्वा वरागुरुतुरुष्कहिमेंदुदर्पान् । निर्दह्य मानवपुषोऽपि शिखां पिबंतो गंधेन यस्य मुदिता दधति प्रसादम् । स योगवाही स शिवः स शार्वः सर्वर्तुसेव्यः सुखशीलनीयः । हंता जरापाप्ममयामलानां कर्ताग्निमेधास्मृतिपाटवानाम् । गंधोत्कटः सदाहे स्निग्धद्रवपिच्छिलो विगतशल्यः । महिषाख्यः पुष्परागस्फटिकासितनीरुजच्छायः । यः पद्मरागरागेभ्यः कनकच्छदपाटलो यो वा । जयतींद्रनीलममलं भग्नोप्यतिकांतिमत्त्वेन । ज्येष्ठः प्रयोगोऽस्य तुलापलान्नैवाधिकं पिबेत् । आत्रेयमुनिगीतश्च मंत्रोऽयं सर्वकर्मकृत् । भगवान् पुंडरीकाक्षो देवाश्च सपुरंदराः । आज्ञापयंति सम्यक्त्वां प्रभावं चादिशंति ते । जरामरणदुःखेभ्यो यथा तेऽभ्युत्थिताः सुराः । उपयोक्तुस्तथैवास्य भव त्वं हि महाबल इति । पंचमूलस्य महतः क्वाथेन हितभोजिना । गुग्गुलुः शीलितो हंति सर्वान् वातकफामयान् । लघीयसोऽपि तद्वच्च सुखोष्णेन जलेन वा । मस्तुधान्याम्लमद्यैर्वा वचादेः सलिलेन वा । वरणा-

देस्तु बाधिर्ये दंतकर्णशिरोरुजः । स्वरभेदोदरश्वासवध्मांतर्गुल्मविद्रधीन् । वातपित्तास्रिरोगेषु बृंहणार्थिनि चेष्यते । क्वाथेन वाजिगंधाया जीवनीयगणस्य वा । क्वाथेनोत्पलमृद्वीकारक्तचंदनजन्मना । वातपित्तं निहंत्येष पद्मकादिगुणस्य वा । चव्यकुष्ठविडंगानां यवान्या नागरस्य वा । प्रसारण्याश्च तोयेन गुग्गुलुः कफवातजित् । त्र्यूषणाग्निघनवेल्लवराभिर्भक्षयन्समघृतं महिषाक्षम् । आशु हंति कफमारुतमेदोदोषजान् बलवतोऽपि विकारान् । पटोलनिंबत्रिफलागुडूचीगायत्रिरात्रिद्वयबीजकानाम् । क्वाथैः पृथक्पथ्यपरस्य हंति मासेन घोरान् कफपित्तरोगान् । विशेषाच्छोफवीसर्पदुष्टव्रणभगंदरान् । शुक्रार्तवमनोदोषप्रमेहश्वित्रपांडुताः । पटोलारिष्टनिर्यूहपिष्टशुल्यरसांजनः । गलरोगापचीव्यंगग्रंथिस्थौल्यकृमिप्रणुत् । शिलाजतुसमः पीतः पयसा वातशोणितम् । निवर्तयत्यतिबलं क्षीरमांसघृताशिनः । रसेन पयसा मूत्रैर्वातपित्तकफापहः । ब्राह्मीमंडूकशंखानां पृथङ् मेधादिकृद्रसैः । मागधिकाग्निविडंगकलिंगैर्बिल्वघृतैः स वचापलषट्कैः । गुग्गुलुना सदृशेन समेतैः क्षौद्रयुतैः सकलामयनाशः । पिबेत्पलशतं योऽस्य विधिना नियतो यतिः । नाकालमृत्युर्न व्याधिर्न तस्य जरसो भयम् । कल्पयेदोषधैः स्वैः स्वैर्व्याधिषु व्याधिनाशनैः । शिलाजतुविधानं च गुग्गुलोः सर्वमिष्यते । गुणनिधिरपि कुर्यात् सोऽतिमात्रोपयुक्तस्तिमिरवदनशोषक्लीबताकार्श्यमेहान् । शमलशिथिलभावं देहरौक्ष्यं च तस्माद्रजनिचरनिषेवी स्यान्न रोगीष्वमीषु।

**कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।**
**अतोऽन्यथा तु ये तेषां सूर्यमारुतिको विधिः १४४**

क्षणिनां व्यापारकरणं प्रति स्वतंत्राणां तथा परिच्छदवतां सपरिवाराणां कुटीप्रवेशलक्षणो विधिर्हितः । अतोऽस्मायेऽन्यथा परतंत्राः परिवाररहितास्तेषां सूर्यमारुतिको विधिर्हितः ।

**वातातपसहा योगा वक्ष्यंतेऽतो विशेषतः ।**
**सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः॥१४५॥**

अस्माच्च हेतोर्ये वातातपसहा योगास्ते विशेषेण वक्ष्यंते । यथा ये न दुःखावहा भ्रंशेऽपि व्यापत्तावपि शरीरस्य न पीडाकृतः।

**शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।**
**त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः॥१४६॥**

शिशिरजलादिकमेकैकशो द्विशस्त्रिशो वा प्राग्भोजनात्पीतं वयः स्थापयेत् । तेन शीतांभो वा क्षीरं वा मधुमाक्षिकं वा सर्पिर्वा पीतमथवा शीतांभःपयसी शीतजलक्षौद्रे शीतजलघृते इत्येवं यथासंभवं द्वे संयुक्ते प्राक्पीतेऽथवा त्रीणि संयुक्तानि पीतानि समस्तं वा चतुष्टयमित्येवमवतिष्ठते ।

**गुडेन मधुना शुंठ्या कृष्णया लवणेन वा ।**
**द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी १४७**

गुडादिना प्रत्येकं द्वे द्वे हरीतक्यौ सर्वदा भक्षयन् समाः शतं सुखी जीवेत् ।

**हरीतकीं सर्पिषि संप्रताप्य**
**समश्नतस्तत् पिबतो घृतं च ।**
**भवेच्चिरस्थायि बलं शरीरे**
**सकृत् कृतं साधु यथा कृतज्ञे ॥ १४८ ॥**

घृते हरीतकीं सम्यक् तापयित्वा भक्षयतस्तच्च घृतं पिबतो देहेऽतिदृढं बलं स्थिरतरं भवेत् । यथा कृतज्ञे नरे सकृदेकवारं शोभनं कृतं चिरस्थायि भवेत् । उपेंद्रवज्रा ।

**धात्रीरसक्षौद्रसिताघृतानि**
**हिताशनानां लिहतां नराणाम् ।**
**प्रणाशमायांति जराविकारा**
**ग्रंथा विशाला इव दुर्गृहीताः ॥ १४९ ॥**

आमलकस्वरसमाक्षिकशर्कराघृतानि नराणां हिताशनानां लिहतां जराविकाराः प्रणाशमायांति । यथा विशाला ग्रंथा दुःपठिताः प्रणाशं यांति ।

**धात्रीकृमिघ्नासनसारचूर्णं**
**सतैलसर्पिर्मधुलोहरेणु ।**
**निषेवमाणस्य भवेन्नरस्य**
**तारुण्यलावण्यमविप्रणष्टम् ॥ १५० ॥**

धात्र्यादिकमासेवमानस्य नरस्य यौवनादिकं प्रणष्टमप्यविप्रणष्टं भवति ।

**लोहं रजो वेल्लभवं च सर्पिः**
**क्षौद्रद्रुतं स्थापितमब्दमात्रम् ।**
**सामुद्गके बीजकसारकॢप्ते**
**लिहन् बली जीवति कृष्णकेशः ॥ १५१ ॥**

लोहचूर्णादिकं सामुद्गके संपुटे बीजसारमये वर्षमात्रं स्थापितं लिहन् बली बलसहितः कालकचो जीवति ।

**विडंगभल्लातकनागराणि**
**येऽश्नंति सर्पिर्मधुसंयुतानि ।**
**जरानदीं रोगतरंगिणीं ते**
**लावण्ययुक्ताः पुरुषास्तरंति ॥ १५२ ॥**

विडंगादीनि ये पुरुषा मध्वाज्ययुतानि खादंति ते जरानदीं गदकल्लोलवतीं लावण्यवंतस्तरंति । निरामया जीवंतीत्यर्थः । उपजातयः ।

**खदिरासनयूषभाविताया-**
**स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।**
**नियमेन नरा निषेवितारो**
**यदि जीवंत्यरुजः किमत्र चित्रम् ॥ १५३**

खदिरबीजसारयूषभावितां त्रिफलां घृतमधुयुतां नियमेन ये

खादंति ते निरामया निश्चयेन भवंतीत्यत्र नास्ति संदेहः। औपच्छंदसिकम्।

**बीजकस्य रसमंगुलिहार्यं**
**शर्करामधुघृतं त्रिफलां च।**
**शीलयत्सु पुरुषेषु जरता**
**स्वागतापि विनिवर्तत एव ॥ १५४ ॥**

बीजसारस्य रसमंगुलिहार्यमतिखरं शर्करादिकं च शीलयन्नरो जराभावं सुष्ठ्वागतमप्यपाकुरुते। स्वागताख्यं चेदं वृत्तमिति श्लेषलेशः। तल्लक्षणं च स्वागतारनुभगैर्गुरुकांतेति।

**पुनर्नवस्यार्धपलं नवस्य**
**पिष्टं पिबेद्यः पयसार्धमासम्।**
**मासद्वयं तत्रिगुणं समां वा**
**जीर्णोऽपि भूयः स पुनर्नवः स्यात् १५५**

पुनर्नवस्य प्रत्यग्रस्य कर्षद्वयं पिष्टं मासार्धं मासद्वयं तत् त्रिगुणं षण्मासान् वर्षं वा देशपुरुषाद्यपेक्षया यः पयसा पिबेत् स पुरुषो जीर्णशरीरोऽपि पुनर्नवो भवेत्।

**मूर्वाबृहत्यंशुमतीवलाना-**
**मुशीरपाठासनसारिवाणाम्।**
**कालानुसार्यागुरुचंदनानां**
**वदंति पौनर्नवमेव कल्पम् ॥ १५६ ॥**

मूर्वादीनां कल्पनां पुनर्नवासदृशीं कथयंति।

**शतावरीकल्ककषायसिद्धं**
**ये सर्पिरश्नंति सिताद्वितीयम्।**
**तान् जिविताध्वानमभिप्रपन्ना-**
**न्न विप्रलुंपंति विकारचौराः ॥ १५७ ॥**

शतावरीकल्कक्काथाभ्यां पक्वं घृतं शर्करासहितं ये खादंति तान् जीवितमार्गमपि प्रपन्नान् विकारचौरा न छिंदंति। जीविताध्वानमिति विकारचौरा इति समासरूपकम्। तस्य हि लक्षणम्। उपसर्जनोपमेयं कृत्वा समासमेतयोरुभयोः। यत्र प्रयुज्यते तद्रूपकमन्यत्समासोक्तमिति।

**पीताश्वगंधापयसार्धमासं**
**घृतेन तैलेन सुखांबुना वा।**
**कृशस्य पुष्टिं वपुषो विधत्ते**
**वालस्य सस्यस्य यथा सुवृष्टिः ॥ १५८ ॥**

अश्वगंधाऽर्धमासं पयसा घृताद्यन्यतमेन वा पीता कृशस्य वपुषः पुष्टिं करोति। यथा वालस्य सस्यस्य शोभना वृष्टिः।

**दिने दिने कृष्णतिलप्रकुंचं**
**समश्नतां शीतजलानुपानम्।**
**पोषः शरीरस्य भवत्यनल्पो**
**दृढीभवंत्यामरणाच्च दंताः ॥ १५९ ॥**

अनुदिनं कृष्णतिलपलं शिशिरजलानुपानं भक्षयतां शरीरस्य पुष्टिर्महती स्यात्। मरणावधयश्च द्विजा दृढाः स्युः।

**चूर्णं श्वदंष्ट्रामलकामृतानां**
**लिहन्ससर्पिर्मधुभागमिश्रम्।**
**वृषः स्थिरः शांतविकारदुःखः**
**समाः शतं जीवति कृष्णकेशः ॥ १६० ॥**

गोक्षुरकादीनां घृतमाक्षिकमिश्रं लिहन् वृषादिगुणान्वितो वर्षशतं कृष्णकचो जीवति। षडुपजातयः।

**सार्धं तिलैरामलकानि कृष्णै-**
**रक्षाणि संक्षुद्य हरीतकीर्वा।**
**येऽद्युर्मयूरा इव ते मनुष्या**
**रम्यं परीणाममवाप्नुवंति ॥ १६१ ॥**

कृष्णतिलैः सह धात्रीफलानि संक्षुद्य बिभीतकानि हरीतकीर्वा ये नरा भक्षयेयुस्ते शिखिन इव रमणीयं वयःपरिणामं प्राप्नुवंति। दर्शनीया भवंतीत्यर्थः। इंद्रवज्रावृत्तम्।

**शिलाजतुक्षौद्रविडंगसर्पि-**
**र्लोहाभयापारदताप्यभक्षः।**
**आपूर्यते दुर्बलदेहधातु-**
**स्त्रिपंचरात्रेण यथा शशांकः ॥ १६२ ॥**

शिलाजत्वादिभक्षोऽर्धमासेन दुर्बलशरीरधातुरापूर्यते। इंदुरिवेत्युपमा।

**ये मासमेकं स्वरसं पिबंति**
**दिने दिने भृंगरजःसमुत्थम्।**
**क्षीराशिनस्ते बलवीर्ययुक्ताः**
**समाः शतं जीवितमाप्नुवंति ॥ १६३ ॥**

ये मार्कवस्वरसमनुदिनं मासं यावत् पिबंति दुग्धभोजनाः संतस्ते बलवीर्ययुता वर्षशतं जीवितमश्नुवते।

**मासं वचामप्युपसेवमानाः**
**क्षीरेण तैलेन घृतेन वाऽपि।**
**भवंति रक्षोभिरधृष्यरूपा**
**मेधाविनो निर्मलमृष्टवाक्याः ॥ १६४ ॥**

वचां च मासं क्षीराद्यन्यतमेनोपयुंजाना राक्षसैरनुपद्रुतरूपा मेधावंतो ज्वलदुज्ज्वलाश्च स्युः। मेधाविन इत्यस्मायेति इनिः। उपजातयः।

**मंडूकपर्णीमपि भक्षयंतो**
**भृष्टां घृते मासमनन्नभक्ष्याः।**
**जीवंति कालं विपुलं प्रगल्भा-**
**स्तारुण्यलावण्यगुणोदयस्थाः ॥१६५ ॥**

मंडूकपर्णी घृतेन पक्कां खादंतो मासमनन्नाशिनो महांतं कालं जीवंति प्रागल्भ्यादिगुणयुक्ताः । इंद्रवज्रावृत्तम् ।

**लांगलीत्रिफलालोहपलपंचाशतीकृतम् ।**
**मार्कवस्वरसे षष्ट्या गुटिकानां शतत्रयम् ॥ १६६ ॥**
**छायाविशुष्कं गुटीकार्धमद्या-**
**त्पूर्वं समस्तामपि तां क्रमेण ।**
**भजेद्विरिक्तः क्रमशश्च मंडं**
**पेयां विलेपीं रसकौदनं च ॥ १६७ ॥**
**सर्पिः स्निग्धं मासमेकं यतात्मा**
**मासादूर्ध्वं सर्वथा स्वैरवृत्तिः ।**
**वर्ज्यं यत्नात्सर्वकालं त्वजीर्णं**
**वर्षेणैवं योगमेवोपयुंज्यात् ॥ १६८ ॥**
**भवति विगतरोगो योऽप्यसाध्यामयार्तः**
**प्रबलपुरुषकारः शोभते योऽपि वृद्धः ।**
**उपचितपृथुगात्रश्रोत्रनेत्रादियुक्त-**
**स्तरुण इव समानां पंच जीवेच्छतानि ॥१६९॥**

लांगल्यादीनां पलंपंचाशतं भृंगस्वरसेन कृतं षष्ट्याऽधिकं गुटिकानां शतत्रयं छायाविशुष्कं ततो गुटिकाया अर्धं पूर्वमद्यात् । क्रमेण ताः समाः समस्ता अपि भुंजीत । ततो विरिक्तः क्रमेण मंडादीनद्यात् । उपजातिर्वृत्तम् । मासमेकं सर्पिःस्निग्धमन्नं जितात्मा भुंजीत मासादनंतरं यथेष्टभोजनः स्यात् । सर्वदा तु यत्नेनाजीर्णं वर्ज्यम् । एवमनेन प्रकारेण वर्षेण सर्वा गुटिका उपयुंज्यात् । कृतोपयोगो नीरोगो योऽप्यसाध्यरोगार्तो वृद्धोऽपि प्रकृष्टपुरुषकारवान् जायते । पुष्टविस्तीर्णशरीरः प्रशस्तनयनकर्णादिमांस्तरुण इव पंचवर्षशतानि जीवति ।

**गायत्रीशिखिशिंशिपासनशिवावेल्लाक्षकारुष्करान्**
**पिष्ट्वाष्टादशसंगुणेंभसि धृतान् खंडैः सहायोमयैः ।**
**पात्रे लोहमये त्र्यहं रविकरैरालोडयन् पाचय-**
**दग्नौ चानुमृदौ सलोहशकलं पादस्थितं तत्पचेत् ॥**
**पूतस्यांशः क्षीरतोंशस्तथांशौ**
**भांर्गान्निर्यासाद् द्वौ वरायास्त्रयोंशाः ।**
**अंशाश्चत्वारश्चेह हैयंगवीना-**
**देकीकृत्यैतत्साधयेत्कृष्णलौहैः ॥ १७१ ॥**
**विमलखंडसितामधुभिः पृथ-**
**ग्युतमयुक्तमिदं यदि वा घृतम् ।**
**स्वरुचिभोजनपानविचेष्टितो**
**भवति ना पलशः परिशीलयन् ॥ १७२ ॥**
**श्रीमान्निर्धूतपाप्मा वनमहिषबलो**
**वाजिवेगः स्थिरांगः**
**केशैर्भृंगांगनीलैर्मधुसुरभिमुखो**
**नैकयोषिन्निषेवी ।**
**वाङ्मेधाधीसमृद्धः सपटुहुतवहो**
**मासमात्रादयोगाद्**
**धत्तेऽसौ नारसिंहं वपुरनलशिखा-**
**तप्तचामीकराभम् ॥ १७३ ॥**
**भत्तारं नारसिंहस्य व्याधयो न स्पृशंत्यपि ।**
**चक्रोज्ज्वलभुजं भीता नारसिंहमिवासुराः ॥१७४॥**

गायत्र्यादीन् पिष्ट्वाऽष्टादशगुणे जले लौहैः शकलैः सहघृतानायसे भाजने त्रीणि दिनानि दिनकरकरैराशोषयन् पाचयेत् । पश्चादतीक्ष्णे वह्नौ लोहशकलैः सह पादस्थितं तत् पचेत् । शार्दूलविक्रीडितम् । पूतस्यास्य भागः क्षीरतोंऽशः । भृंगरजःक्वाथादंशौ द्वौ । तथा वराश्चांशास्त्रयः। घृतादंशाश्चत्वारः। एतत्सर्वं मेलयित्वा कृष्णलोहे पचेत् । वैश्वदेवीवृत्तम् । उज्ज्वलखंडशर्करामाक्षिकैः पृथग्युतमयुक्तं वा घृतमेतदात्मेच्छया कृताहारपानविहारो नरः पलं पलमश्नन् श्रीमदादियुतो भवेत् । द्रुतविलंबितवृत्तम् । श्रीमान्निर्धूतपाप्मा भवेत् । तथा वनमहिषतुल्यबलः । वाजिनोऽश्वस्य वेगेन समः । स्थिरांगो दृढशरीरः । तथा केशैर्भ्रमरकृष्णैरुपलक्षितो भवेत् । तथा मधुवत्सुरभिमुखः स्यात् । तथा बहुस्त्रीगमनसामर्थ्ययुक्तः स्यात् । तथा वाङ्मेधादिभिः । समृद्धः । तथा सुष्ठुपटुस्तीक्ष्णो हुतवहोऽग्निर्यस्य स तथाविधो मासमात्रोपयोगात्स्यात् । असावस्य घृतस्योपयोक्ता नरसिंहसदृशं शरीरमतिदार्ढ्ययोगात्तथा वह्निशिखासंतप्तसुवर्णकांतिं धारयेदिति । स्रग्धरावृत्तम् । नरसिंहाख्यस्य हविषो भोक्तारं रोगा न स्पृशंत्येव । आसतां तावद्व्याधयः । यथा नारसिंहं रूपं चक्रोज्ज्वलभुजं प्रवेष्टुं दैत्या भीत्या स्प्रष्टुमशक्ता इत्युपमा ।

**भृंगप्रवालानमुनैव भृष्टान्**
**घृतेन यः खादति यंत्रितात्मा ।**
**विशुद्धकोष्ठोऽसनसारसिद्ध-**
**दुग्धानुपस्तत् कृतभोजनार्थः ॥ १७५ ॥**
**मासोपयोगात् ससुखी जीवत्यब्दशतद्वयम् ।**
**गृह्णाति सकृदप्युक्तमविलुप्तस्मृतींद्रियः ॥ १७६ ॥**

मार्कवपल्लवानेतेनैव सर्पिषा भृष्टान् योऽश्नाति यतः शुद्धकोष्ठः सन् बीजकसारसिद्धक्षीरानुपस्तेनैवासनसारसिद्धेन दुग्धेन कृतभोजनार्थस्तद्वृत्तिरित्यर्थः। स पुरुषो मासोपयोगात्सुखी नीरोगो वर्षशते द्वे जीवति । तथैकवारमपि कथितं गृह्णाति। कीदृक् सन्। अविलुप्तानि स्मृतींद्रियाणि यस्य स एवम् ।

**अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ।**
**तानेवाप्नोति स गुणान् कृष्णकेशश्च जायते॥१७७॥**

अनेनैव विधानेन यः पुरुषस्तैलमुपयोजयेत् स तानेव पूर्वोक्तान् गुणान् प्राप्नोति । कृष्णकचश्च संपद्यते ।

**उक्तानि शक्यानि फलान्वितानि**
**युगानुरूपाणि रसायनानि ।**

**महानुशंसान्यपि चापराणि**
**प्राप्त्यादिकष्टानि न कीर्तितानि ॥ १७८ ॥**

रसायनानि यानि शक्यानि फलयुक्तानि युगानुरूपाणि च तान्युक्तानि । अपराणि चाशक्यानि यानि महाफलान्यपि तानि न कथितानि । उपजातिः ।

**रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।**
**यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् १७९**

रसायनस्य विधिभ्रंशादपायाद्यदि रोगा भवेयुस्ततो रसायनं विहाय तेषां यथायोगं सर्वमौषधं कार्यम् ।

**सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियम् ।**
**शांतं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥ १८० ॥**

सत्यभाषिणं तथा क्रोधरहितं तथाऽध्यात्मप्रवणानि योगप्रगुणानींद्रियाणि यस्य तं तथा शमयुक्तं तथा सद्वृत्तिनिरतं स्थितमेवंभूतं नरं नित्यरसायनं जानीयात् ।

**गुणैरेभिः समुदितः सेवते यो रसायनम् ।**
**स निवृत्तात्मा दीर्घायुः परत्रेह च मोदते ॥१८१ ॥**

एभिः सत्यवचनादिभिर्गुणैः संयुक्तः पुरुषो रसायनं सेवते यः स पुरुषो निवृत्तचित्तो दीर्घायुश्च सन्निह मोदतेऽन्यजन्मनि च ।

**शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्तिनः ।**
**बुद्धिरस्खलितार्थेषु परिपूर्णं रसायनम् ॥ १८२ ॥**

चेष्टा शास्त्रनुसारिणी । पार्श्वासीनाश्च चित्तविदर्थेषु विषयेषु बुद्धिरस्खलितेत्येतत् परिपूर्णं रसायनमिति ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षष्ठ उत्तरस्थाने रसायन एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

**समाप्तं रसायनतंत्रम्**

---

## चत्वारिंशोऽध्यायः ।

अथ क्रमप्राप्तं वाजीकरणाध्यायं ब्रूते ।

**अथाऽतो वाजीकरणाध्यायं व्याख्यास्यामः ।**

वाजीव येन समर्थः क्रियते तद्वाजीकरणम् । तस्याध्यायः शेषमायुःकामीयवद्योज्यम् ।

**वाजीकरणमन्विच्छेत्सततं विषयी पुमान् ।**
**तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम् ॥ १ ॥**
**अपत्यसंतानकरं यत्सद्यः संप्रहर्षणम् ।**

विषयी यः पुरुषः स सततं वाजीकरणमौषधमन्विच्छेत् । पुंग्रहणं स्त्रीपंढादिनिवृत्त्यर्थम् । अन्यथा यथा पंचकर्माणि ऋतुविधानादि च सामान्योक्तत्वात्स्त्र्यादीनामपि प्रसजति तथेदमपि विज्ञायते । तस्मात्तद्व्यवच्छेदार्थं पुंग्रहणम् । सततग्रहणेनैतद् योतयति । यथा रसायनमुपयुक्तं चिरकालमनु वर्तते न तथा वाजीकरणमिति । अपि तु यस्मिन्नेवाह्नि प्रयुज्यते तस्मिन्नेव कार्यकरणसमर्थं प्रायेण स्यादिति सततमनवरतं वाजीकरणमन्विच्छेदित्युक्तम् । वाजीकरणेन कोऽर्थः स्यादित्याह । तुष्टिरित्यादि । तत्र वाजीकरणे तुष्ट्यादिसंश्रितम् । अपत्यं किंभूतम् । गुणवन्नतु दुरपत्यं कुलांगाररूपम् । यतोऽपत्यसंतानकरमविच्छेदस्थितिकरं च । यच्च शीघ्रमेव संप्रहर्षणं वाजीकरणम् ।

**वाजी वाऽतिबलो येन यात्यप्रतिहतोंगनाः ॥ २ ॥**
**भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।**
**तद्वाजीकरणं तद्धि देहस्योर्जस्करं परम् ॥ ३ ॥**

येन वाजीकरणेन तुरंग इवाप्रतिहतसामर्थ्यस्तरुणीः संगच्छति । तथा येन योषितामतिवल्लभः स्यात् । तथा येनोपचयं प्राप्नोति तद्वाजीकरणमुच्यते । तद्धि शरीरस्योर्जस्करमतिशयेन । ननु वाजीकरणमुपायहेतुर्विषयाणामिहैव बंधनदर्शनात् । उक्तं च तंत्रांतरे । कोशकारो यथैवामूनुपादत्ते बंधवहानित्यादि । तस्मान्नार्थो वाजीकरणेनेत्याह ।

**धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् ।**
**अनुमोदामहे ब्रह्मचर्यमेकांतनिर्मलम् ॥ ४ ॥**

यतो धर्म्यादनपेतं धर्म्यं ब्रह्मचर्यं तदनुमोदामहे । तथा यशस्यादिहेतुः । तथा लोकद्वय इहलोके परलोके च रसायनमिव रसायनं सदोपकारकत्वात् । तथा एकांतेन सर्वथा निर्मलम् । यतो ब्रह्मचर्यं न तु ब्रह्मचर्यवत् । स्वदारादिषु पुत्राद्यर्थमेव निर्मलम् । अतो हेतोस्तदनुमोदामहे । किं त्वाभ्युदयिकं मार्गमाश्रित्य वाजीकरणोपदेशः । द्विविधो हि मार्गो नैश्रेयसिक आभ्युदयिकश्च । तत्र नैश्रेयसिकं मार्गं समनुसृत्य ब्रह्मचर्योपदेशश्च कोशकारदृष्टांतश्च क्लेशनाशकृच्च । आभ्युदयिकं च मार्गमाश्रित्यायमुपदेश इत्यत्राह ।

**अल्पसत्त्वस्य तु क्लेशैर्बाध्यमानस्य रागिणः ।**
**शरीरक्षयरक्षार्थं वाजीकरणमुच्यते ॥ ५ ॥**

स्तोकसत्त्वस्य पुंसः क्लेशैर्विषयोत्थैः पीड्यमानस्य रागिणः कामिनः शरीरक्षयरक्षार्थं वाजीकरणमुच्यते । अनेन शास्त्रकृता अपरैश्च तंत्रकारैः ।

**कल्पस्योदग्रवयसो वाजीकरणसेविनः ।**
**सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥ ६ ॥**

कल्पस्य समर्थस्य तथा यौवनस्थस्य वाजीकरणं सततं कुर्वतस्तस्य सर्वेष्वेव ऋतुषु दिने दिने व्यवायो मैथुनं न निषिध्यते ।

**अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान् ।**
**घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ ७ ॥**
**योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनम् ।**
**ततो वाजीकरान् योगान् शुक्रापत्यविवर्धनान्॥८॥**

अथ कृतमंगलस्य स्निग्धस्य तथा विशुद्धस्य तथा क्षीराशिनो योगविद्भिः प्राङ्निरूहान्सानुवासनान् घृतादिसंयुक्तान् कारयेत्। ततोऽनंतरं वाजीकरान् योगान् योजयेत् । किंभूतान्। शुक्रादिप्रदान् ।

**अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।**
**यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥ ९ ॥**

अच्छायत्वादिभिर्गुणैर्युक्तोऽर्थिनां यथा तरुरनाश्रयणीयस्तथा तादृशो मानवो निरपत्य इति । एकवचनेनैव एकार्थस्य लब्धत्वादेकग्रहणं केवलार्थप्रतिपत्त्यर्थम् । एकः केवलो माधवीलतादिरहितः ।

**स्खलद्गमनमव्यक्तवचनं धूलिधूसरम् ।**
**अपि लालाविलमुखं हृदयाह्लादकारकम् ॥ १० ॥**
**अपत्यं तुल्यता केन दर्शनस्पर्शनादिषु ।**
**किं पुनर्यद्यशोधर्ममानश्रीकुलवर्धनम् ॥ ११ ॥**

स्खलद्गमनादिकमपत्यं केन पदार्थेन दर्शनादिषु समानम्। यदपत्यमेवंविधं तस्य केन तुल्यता स्यात् केनोपमीयते । किं पुनर्यद्यश आदिवर्धनात् तस्य केन तुल्यता भवेत् । अपत्यशब्दस्य पुंस्त्वमत्र चिंत्यम् । तत्किल नितरां सुखप्रदमित्यर्थः ।

**शुद्धकाये यथाशक्ति वृष्ययोगान् प्रयोजयेत् ।**

शुद्धशरीरे पुरुषे यथाऽभिबलं वृष्ययोगान् प्रयोजयेत् ।
तानेवाह ।

**शरेक्षुकुशकाशानां विदार्या वीरणस्य च ॥ १२ ॥**
**मूलानि कंटकार्याश्च जीवकर्षभकौ बलाम् ।**
**मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम्॥१३॥**
**अश्वगंधामतिबलामात्मगुप्तां पुनर्नवाम् ।**
**वीरां पयस्यां जीवंतीमृद्धीं रास्नां त्रिकंटकम् ॥१४॥**
**मधुकं शालिपर्णीं च भागांस्त्रिपलिकान् पृथक् ।**
**माषाणामाढकं चैतद् द्विद्रोणे साधयेदपाम् ॥१५॥**
**रसेनाढकशेषेण पचेत्तेन घृताढकम् ।**
**दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम् ॥ १६ ॥**
**घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ।**
**वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्पलीम्॥**
**द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ।**
**तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ १८॥**
**शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च ।**
**मरिचस्य प्रकुंचेन पृथगर्धपलोन्मितैः ॥ १९ ॥**
**त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्राद् द्विकुडवेन च ।**
**पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ॥ २० ॥**
**तेनारोहति वाजीव कुलिंग इव हृष्यति ।**

शरादीनां कंटकारीपर्यंतानां मूलानि तथा जीवकादीनि त्रिपलिकान् भागान् पृथङ् माषाणामाढकं चैतत्सर्वं जलद्रोणद्वये पाचयेत् । तेन रसेनाढकशेषेण घृताढकं विदार्यादिरसादीनां च पृथक्पृथगाढकं दत्त्वा क्षीराढकचतुष्टयं दत्त्वा पचेत् । वीरादीन् कल्कान्सामान्यपरिभाषोक्तप्रमाणान्निक्षिपेत् । तद्घृतं पक्वं पूतं पृथक्शर्करातुगयोश्चूर्णप्रस्थेन कणायाः पलचतुष्टयेन मरिचपलेन च योजयेत् । त्वगादिभिः श्लक्ष्णैः पृथगर्धपलोन्मितैः क्षौद्रस्य कुडवयुगलेन योजयेत् । ततो मिश्रितात् पलमात्रं प्रतिदिनं भक्षयेत् । मांसरसक्षीरभोजी सन् । तेनोपयुक्तेन तुरंग इवारोहति । चटक इव हृष्यति ।

**विदारीपिप्पलीशालिप्रियालेक्षुरकाद्रजः ॥ २१ ॥**
**पृथक् स्वगुप्ता मूलाच्च कुडवांशं तथा मधु ।**
**तुलार्धं शर्कराचूर्णात् प्रस्थार्धं नवसर्पिषः ॥ २२ ॥**
**सोऽक्षमात्रमतः खादेत् यस्य रामाशतं गृहे ।**

विदार्यादीनां चूर्णं कपिकच्छुमूलाच्च चूर्णं पृथक् कुडवमात्रं माक्षिकस्य च कुडवः शर्करापलानि पंचाशत् । प्रत्यग्रघृतस्य पलानि षोडश । अतः संयोजितात् कर्षमात्रं स खादेद्यस्य भवने कांताशतमस्ति ।

**सात्मगुप्ताफलान् क्षीरे गोधूमान्साधितान् हिमान्॥**
**माषान्वा सघृतक्षौद्रान् खादन् गृष्टिपयोऽनुपः ।**
**जागर्ति रात्रिं सकलामखिन्नः खेदयेत्स्त्रियः ॥ २४ ॥**

गोधूमान्सकपिकच्छूफलान् दुग्धे साधितान् हिमान् माषान् वा घृतमधुयुतान् खादन् गृष्टिक्षीरमनुपिबेद्यः स सर्वां रात्रिमखिन्नो रामा रमयन् जयति ।

**बस्तांडसिद्धे पयसि भावितानसकृत्तिलान् ।**
**यः खादेत्ससितान् गच्छेत्स स्त्रीशतमपूर्ववत्॥२५॥**

छागलांडपक्वे क्षीरे तिलानसकृद्भावितान्सशर्करान् यः खादेत् स कांताशतमपूर्व इव याति ।

**चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ।**
**क्षौद्रसर्पिर्युतं लीढ्वा प्रमदाशतमृच्छति ॥ २६ ॥**

शृगालिकायाश्चूर्णं विदारीस्वरसेनैव बहुशो भावितं मधुघृतयुक्तं लीढ्वा रामाशतं याति ।

**कृष्णाधात्रीफलरजः स्वरसेन सुभावितम् ।**
**शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत् ॥ २७॥**
**स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ।**

कृष्णामलकचूर्णं धात्रीस्वरसेन सुभावितं शर्कराक्षौद्रघृतैर्लीढ्वा योऽनु क्षीरं पिबेत् स पुरुषोऽशीतिवर्षोऽपि तरुण इव हृष्यति ।

**कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥ २८ ॥**
**पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ।**

मधुयष्टिकाचूर्णस्य कर्षं घृतक्षौद्रयुतं क्षीरानुपानं यो लेढि सोऽप्रणष्टवेगः पुरुषः स्यात् ।

**कुलीरशृंग्या यः कल्कमालोड्य पयसा पिबेत् २९**
**सिताघृतपयोन्नाशी स नारीषु वृषायते ।**

कर्कटशृंग्याः कल्कं क्षीरेणालोड्य यः पिबेच्छर्करासर्पिःक्षीरान्नभुक् स रामासु वृषायते ।

**यः पयस्यां पयःसिद्धां खादेन्मधुघृतान्विताम् ३०**
**पिबेद्वाष्कयणं चानु क्षीरं न क्षयमेति सः ।**

क्षीरकाकोलीं क्षीरसिद्धां माक्षिकघृतयुतां यः खादेत् । वष्कयणीक्षीरमनु यः पिबेत् स शुक्रक्षयं न याति ।

**स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ॥ ३१ ॥**
**धारोष्णेन नरः पीत्वा पयसा रासभायते ।**

कपिकच्छूक्षुरकबीजचूर्णं शर्करासहितं धारोष्णेन पीत्वा नरो बालेय इवाचरति ।

**उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥ ३२ ॥**

उच्चटायाः शतावर्याश्च चूर्णमप्येवमेव योजयेत् ।

**चंद्रशुभ्रं दधिसरं ससितं षष्टिकौदनम् ।**
**पटे सुमार्जितं भुक्त्वा वृद्धोऽपि तरुणायते ॥ ३३॥**

दध्नः सरं शशिधवलं शर्कराषष्टिकौदनयुक्तं वस्त्रेण सुभावितं भुक्त्वा वृद्धोऽपि तरुण इवाचरति ।

**श्वदंष्ट्रेक्षुरमाषात्मगुप्ताबीजशतावरीः ।**
**पिबन् क्षीरेण जीर्णोऽपि गच्छति प्रमदाशतम् ३४**

श्वदंष्ट्रादीन् क्षीरेण पीत्वा वृद्धोऽपि रामाशतं याति ।

**यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।**
**मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ ३५ ॥**

यत्किंचिद्वस्तु मधुरादिगुणं चित्तहर्षजननं च तत्सर्वमपि वृष्यं कथ्यते ।

**द्रव्यैरेवंविधैस्तस्माद्दर्पितः प्रमदां व्रजेत् ।**
**आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३६ ॥**

तस्मादेवंप्रकारैर्द्रव्यैः कृतदर्पः शतं ललनानां यायात् । न केवलं वृष्यद्रव्यैर्दर्पितो यावदात्मवेगेन चोदीर्णः प्रेरितः । नतु वाजीकरणं मे युक्तमिति योषितं गच्छेत् । स्त्रीगुणैर्लावण्यकौमल्यादिभिः कृतप्रहर्षः सन् ।

**सेव्याः सर्वेंद्रियसुखा धर्मकल्पद्रुमांकुराः ।**
**विषयातिशयाः पंच शराः कुसुमधन्वनः ॥ ३७ ॥**

तथा विषयातिशया मनोहराः शब्दस्पर्शरूपरसगंधाः सेवनीयाः । किंभूताः । सर्वेंद्रियाणां सुखहेतवः । तथा धर्म एव कल्पवृक्षेऽकुरा इवांकुराः । तथा पुष्पचापस्य पंचशिलीमुखा इति वाक्यरूपकम् ।

**इष्टा ह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परम् ।**
**किंपुनः स्त्रीशरीरे ये संघातेन प्रतिष्ठिताः ॥ ३८ ॥**

यस्मादेकैकशोऽपि व्यस्ता अप्यर्थाः शब्दादयः सेव्यमानाः परं हर्षप्रीत्युत्पादकाः । किमुत स्त्रियाः शरीरे । ये समुदायेन व्यवस्थिताः ।

**नामापि यस्या हृदयोत्सवाय**
**यां पश्यतां तृप्तिरनाप्तपूर्वा ।**
**सर्वेंद्रियाकर्षणपाशभूता**
**कांतानुवृत्तिव्रतदीक्षिता या ॥ ३९ ॥**
**कलाविलासांगवयोविभूषा**
**शुचिः सलज्जा रहसि प्रगल्भा ।**
**प्रियंवदा तुल्यमनःशया या**
**सा स्त्री वृषत्वाय परं नरस्य ॥ ४० ॥**

यस्याः स्त्रिया नामापि हृदयोत्सवाय । यां स्त्रियमालोकयतामनाप्तपूर्वा तृप्तिः स्यात् । तथा याऽशेषाणां करणानामाकर्षणपाशः । तथा कांतस्य भर्तुरनुवर्तनं तदेव व्रतं तत्र या दीक्षिता । इंद्रवज्रावृत्तम् । तथा कलादय एव विभूषा यस्याः सैवम् । तथा शुचिरंतर्बहिश्च । लज्जान्विता । रहसि सुरते प्रौढा । तथा सौम्यवचना । तथा तुल्यः समो मनःशयो मनसिजो यस्याः सैवं या सा स्त्री वामलोचना । परमतिशयेन पुंसो वृषत्वाय कल्पते । उपजातिः ।

**आचरेच्च सकलां रतिचर्यां**
**कामशास्त्रविहितामनवद्याम् ।**
**देशकालबलशक्त्यनुरोधा-**
**द्वैद्यतंत्रसमयोक्त्यविरुद्धाम् ॥ ४१ ॥**

तथा कामशास्त्रविहिता या सकला रतिचर्या तामगर्ह्यां देशादिवशादाचरेत् । तथा वैद्यकशास्त्राचारेऽविरुद्धां । स्वागतावृत्तम् ।

**अभ्यंजनोद्वर्तनसेकगंध-**
**स्रक्पत्रवस्त्राभरणप्रकाराः ।**
**गांधर्वकाव्यादिकथाप्रवीणाः**
**समस्वभावा वशगा वयस्याः ॥ ४२ ॥**
**दीर्घिका स्वभवनांतनिविष्टा**
**पद्मरेणुमधुमत्तविहंगा ।**
**नीलसानुगिरिकूटनितंबे**
**काननानि पुरकंठगतानि ॥ ४३ ॥**
**दृष्टिसुखा विविधा तरुजातिः**
**श्रोत्रसुखः कलकोकिलनादः ।**
**अंगसुखर्तुवशेन विभूषा-**
**चित्तसुखः सकलः परिवारः ॥ ४४ ॥**
**तांबूलमच्छमदिरा**
**कांता कांता निशा शशांकांका ।**
**यद्यच्च किंचिदिष्टं**
**मनसो वाजीकरं तत्तत् ॥ ४५ ॥**

तथाऽभ्यंजनादि वाजीकरणमिति वक्ष्यमाणेन संबंधः । गी-

तादिकुशलास्तुल्यस्वभावा वशगाः सहायाः । तथा दीर्घिका क्रीडापुष्करिणी स्वगृहसमीपे कृता । पद्मरेणुमधुभ्यां मत्ता विहंगा यस्याः सैवं हरितसमभूभागं यत्पर्वतशृंगं तस्य नितंबस्तत्र च यानि काननानि तानि पुरसमीपभूतानि । उपजातिस्वागते वृत्ते । दृष्टिसुखकारिणी तथा नानाप्रकारा महीरुहजातिः । कलकंठकूजितं श्रवणसुखकार्यंगे सुखानुरोधेन ऋत्वनुरोधेन च भूषणम् । तथा सकलः परिवारो मनःसुखहेतुः । तथा तांबूलादिकं वाजीकरणम् । न च केवलं तांबूलादिकमपि तु यद्यच्च किंचिच्चेतसः प्रियं तच्च वाजीकरणम् । दोधकमुद्गीतिरार्या ।

**मधुमुखमिव सोत्पलं प्रियायाः**
**कलरणना परिवादिनी प्रियेव ।**
**कुसुमचयमनोरमा च शय्या**
**किसलयिनी लतिकेव पुष्पिताग्रा ॥ ४६ ॥**
**देशे शरीरे च न काचिदर्ति-**
**रर्थेषु नाल्पोऽपि मनोविघातः ।**
**वाजीकराः सन्निहिताश्च योगाः**
**कामस्य कामं परिपूरयंति ॥ ४७ ॥**

तथा मार्द्वीकं सजलजं दयितावदनमिव परिवादिनी वीणा मधुरक्वणना वल्लभेव । पुष्पनिकररमणीया शय्या पल्लववती कुसुमप्रधाना लतेव । पुष्पिताग्रेति वृत्तनामश्लेषः । देश इत्यादि । एते पदार्थाः कामस्य काममिच्छां पूरयंति । काममुत्पादयंतीत्यर्थः । पुष्पिताग्रेंद्रवज्रे वृत्ते ।

अधुनाऽग्र्यसंग्रहमाह ।

**मुस्तापर्पटकं ज्वरे तृषि जलं मृद्भृष्टलोष्टोद्भवं**
**लाजाच्छर्दिषु वस्तिजेषु गिरिजं मेहेषु धात्रीनिशे।**
**पांडौ श्रेष्ठभयोभयानिलकफे प्लीहामये पिप्पली**
**संधाने कृमिजा विषे शुकतरुर्मेदोऽनिले गुग्गुलुः४८**
**वृषोऽस्रपित्ते कुटजोऽतिसारे**
**भल्लातकोऽर्शःसु गरेषु हेम ।**
**स्थलेषु तार्क्ष्यं कृमिषु कृमिघ्नं**
**शोषे सुराच्छागपयोऽनु मांसम् ॥ ४९ ॥**
**अक्ष्यामयेषु त्रिफला गुडूची**
**वातास्ररोगे मथितं ग्रहण्याम् ।**
**कुष्ठेषु सेव्यः खदिरस्य सारः**
**सर्वेषु रोगेषु शिलाह्वयं च ॥ ५० ॥**
**उन्मादं घृतमनवं शोकं मद्यं विसंस्मृतिं ब्राह्मी ।**
**निद्रानाशं क्षीरं जयति रसाला प्रतिश्यायम् ॥५१॥**
**मांसं कार्श्यं लशुनः प्रभंजनं स्तब्धगात्रतां स्वेदः ।**
**गुडमंजर्याः खपुरो नस्यां स्कंधांसबाहुरुजम् ॥५२॥**
**नवनीतखंडमर्दितमौष्ट्रं मूत्रं पयश्च हंत्युदरम् ।**
**नस्यं मूर्धविकारान् विद्रधिमचिरोत्थमस्रविस्रावः**
**नस्यं केवलमुखजां नस्यांजनतर्पणानि नेत्ररुजः ।**
**वृद्धत्वं क्षीरघृते मूर्छां शीतांबुमारुतच्छायाः॥५४॥**
**समशुक्ताद्रर्कमात्रा मंदे वह्नौ श्रमे सुरा स्नानम् ।**
**दुःखसहत्वे स्थैर्ये व्यायामो गोक्षुरर्हितः कृच्छ्रे ५५**
**कासे निदग्धिका पार्श्वशूले पुष्करजा जटा ।**
**वयसः स्थापने धात्री त्रिफला गुग्गुलुर्व्रणे ॥ ५६ ॥**
**बस्तिर्वातविकारान्**
**पैत्तान् रेकः कफोद्भवान् वमनम् ।**
**क्षौद्रं जयति बलासं**
**सर्पिः पित्तं समीरणं तैलम् ॥ ५७ ॥**
**इत्यग्र्यं यत्प्रोक्तं रोगाणामौषधं शमायालम् ।**
**तद्देशकालबलतो विकल्पनीयं यथायोगम् ॥ ५८ ॥**

मुस्तापर्पटकं ज्वरे श्रेष्ठं रोगोपशमनहेतुः । एवं शेषेष्वपि योज्यम् । संधान उरःसंधाने कृमिजा लाक्षा श्रेष्ठा । शुकतरुः शिरीषः । शार्दूलविक्रीडितं वृत्तम् । वृषादयो रक्तपित्तादिषु श्रेष्ठाः । उपजातिः । अक्ष्यामयादिषु त्रिफलादीनि सेव्यानि । इंद्रवज्रा । अनवं पुराणं सर्पिः कर्तृभूतमुन्मादं जयति । व्यपस्मृतिमपस्मारं ब्राह्मी जयति । एवं क्षीरादयो निद्रानाशादीन् जयंतीति योज्यम् । गुडमंजरी काला शाल्मली तस्याः खपुरो निर्यासो नस्येन स्कंधादिजां रुजं हंति। नवनीतयुक्तं खंडमर्दितम् । औष्ट्रं पयो मूत्रं च जठरं पराकरोति। औष्ट्रमिति चिंत्यम् । उष्ट्राद्वुग्नि प्राप्ते केचित्तु तस्येदमिति विवक्षया अण्प्रत्ययः कार्य इत्याहुः। नस्यादयो मूर्धविकारान् जहतीति संबंधः । ननु वृद्धत्वं क्षीरघृते हत इत्यनुपपन्नम्। तथा ह्येकरसाभ्यासो दौर्बल्यकरणमित्युक्तम्। दौर्बलस्य करणं च कथं वृद्धत्वहत्स्यात् । ब्रूमः । उत्सर्गत्वात्तस्य वचस अपवादरूपं त्विदं वचनम् । तस्मात्क्षीरघृतादन्यत्रैकरसाभ्यासस्य दौर्बल्यकरणत्वं वेद्यम् । गीतयस्तिस्रः । कासेत्यादि । आर्या । इत्युक्तेन प्रकारेण यच्छ्रेष्ठमौषधमुक्तं तद् रोगाणां शमाय शांत्यै अलं समर्थम् । तच्चाग्र्ये देशादीनां बलेन यथास्वं कल्पनीयम् । जघनचपलार्या । एतच्च यथास्वं चिकित्सितेषु कथितम् । संक्षेपतया पुनः कथितम् । शास्त्रं हि व्यासेन समासेन च विमतयो विरुंधते । तस्मात्पूर्वं व्यासेनोपदेशः । इदं तु समासेनेत्यवबुध्यस्व ।

**इत्यात्रेयादागमय्यार्थसूत्रं**
**तत्सूक्तानां पेशलानामतृप्तः ।**
**भेडादीनां संमतो भक्तिनम्रः**
**पप्रच्छेदं संशयानोऽग्निवेशः ॥ ५९ ॥**

आत्रेयाद्भगवतः पुनर्वसोरित्युक्तेन प्रकारेणार्थसूत्रमभिधेयतत्त्वं चागमय्यावबुध्याग्निवेशः संशयानो न तु शास्त्रावबोधाहंकृत इदं वक्ष्यमाणं पप्रच्छ । किंभूतः । तस्यात्रेयस्य मुनेः सूक्तानि तानि सुभाषितानि युक्तियुक्तार्थप्रतिपादनात्तेषां सूक्तानां मधुराणामतृप्तः साकांक्षः । तथा च किंभूतः । भेडजातूकर्ण्यादीनां पुनर्वसुशिष्याणां संमतः । तथा भक्तिनम्रो न तु ज्ञानोद्धतः सन्स पप्रच्छ । शालिनीवृत्तम् ।

किं पृष्टवानित्याह ।

**दृश्यंते भगवन् केचिदात्मवंतोऽपि रोगिणः ।**
**द्रव्योपस्थातृसंपन्ना वृद्धवैद्यमतानुगाः ॥ ६० ॥**
**क्षीयमाणामयप्राणा विपरीतास्तथापरे ।**
**हिताहितविभागस्य फलं तस्मादनिश्चितम् ॥ ६१ ॥**
**किं शास्ति शास्त्रमस्मि-**
**न्निति कल्पयतोऽग्निवेशमुख्यस्य ।**
**शिष्यगणस्य पुनर्वसु-**
**राचख्यौ कार्त्स्न्यतस्तत्त्वम् ॥ ६२ ॥**

भगवन् पुनर्वसो केचिन्नरा आत्मवंतो हिताहारविहारा अपि रोगिणः प्रत्यक्षानुमानाद्यैरुपलभ्यंते । आत्मवंतोपीत्यपिशब्दादनात्मवंतोऽपि । कदाचिच्छेषपादत्रयविकलत्वेन रोगित्वं स्यान्नेत्याह । द्रव्योपस्थातृसंपन्ना वृद्धवैद्यमतानुगा इति । तथाऽऽमयाश्च प्राणाश्चामयप्राणाः । क्षीणा आमयप्राणा येषां त एवम् । केचिद्रोगाद्विमुच्यमानाः केचिच्च म्रियमाणा इत्यर्थः । विपरीतास्तथापर इति । अनात्मवंतो द्रव्योपस्थातृविकला वृद्धवैद्यमताननुसारिणश्चैवंभावा दृश्यंते तस्मादनंतरोक्तात्कारणाद्धिताहितविभागस्य तंत्रोक्तं फलमनिश्चितमनैकांतिकम् । अनिश्चितफलत्वाच्च कारणाच्छास्त्रमायुर्वेदाख्यं किं शास्ति न किंचिच्छिक्षयतीति । अतश्चैतदारंभो निष्फलः काकदंतपरीक्षाशास्त्रवत् । इति विकल्पयतः शिष्यगणस्य जातूकर्ण्यभेडादेर्भगवान् पुनर्वसुस्तत्त्वं परमार्थं कार्त्स्न्येन सामस्त्येन जगाद । किंभूतस्य शिष्यगणस्य अग्निवेशो मुख्यः प्रधानो यस्य तस्येति ।

किं तदुक्तवानित्याह ।

**न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।**
**विनापि क्रिययाऽस्वास्थ्यं गच्छतां षोडशांशया ६३**

चिकित्सा चतुष्पात् षोडशगुणयुक्ताऽचिकित्सा हिताहितविभागाऽपरामर्शेन यत्किंचन कारिता सा तुल्या भवितुं नार्हति । केषां क्रियां विना स्वास्थ्यमपि गच्छताम् । अपिशब्दो भिन्नक्रमः स्वास्थ्यमपीत्यतोऽनंतरं द्रष्टव्यः । किंभूतया क्रियया षोडशांशया । तदयं भावः । षोडशभागया चिकित्सयाविना यत्र रोगोपशांतिः स्यात् तत्रापि चिकित्सया क्षिप्रतरं तत्साधनम् । चिकित्साविशिष्टा । तथा चिकित्सासाध्यानां रोहिणिकादीनां चिकित्सामंतरेण शांतिर्नास्ति । तदेवमपि चिकित्सया तुल्याऽचिकित्सा न भवितुमर्हतीति ।

**आतंकपंकमग्नानां हस्तालंबो भिषग्जितम् ।**
**जीवितं म्रियमाणानां सर्वेषामेव नौषधात् ॥ ६४ ॥**

तस्मादातंक एव पंको दुरुत्तरत्वात्तस्मिन्मग्नानां तप्तानां भिषग्जितम् । तदुपदेशकशास्त्रमुपचारादेवमुक्तं तद्भिषग्जितं हस्तालंबो हस्तालंबतुल्यं म्रियमाणानां सर्वेषामेव साध्यानामपि भेषजाज्जीवितं न च भवति ।

**नह्युपायमपेक्षंते सर्वे रोगा न चान्यथा ।**
**उपायसाध्याः सिध्यंति नाहेतुर्हेतुमान् यतः ॥६५॥**

यस्मात्सर्वे रोगा असाध्या अप्युपायं चतुष्पादलक्षणं चिकित्सितं नापेक्षंते । असाध्यरोगाणां चिकित्सानिरपेक्षत्वात् । ये चोपायसाध्या रोगा रोहिण्यादयस्तेऽन्यथा चिकित्सामंतरेण नैव सिध्यंति यतो यो हेतुः स हेतुमान्न भवति । अपि तु निर्युक्तिक एवायं हेतुवादो यच्चिकित्साख्येन हेतुना विनैव रोगोपशांतिर्दृश्यत इति यत्तूक्तं सर्वसंपत्तियुक्तयापि चिकित्सया मृत्युर्भवति तन्नैवम् । नोपायेऽस्त्यनुपायता । यत्तूक्तं सर्वसंपत्तियुक्तयापि चिकित्सया मृत्युर्भवति । दृश्यंते भगवन् केचिदात्मवंतोऽपि रोगिणः यावत्क्षीयमाणामयप्राणा इत्यादि तदेवं न भवति । यथा त्वं वदसि । यस्मान्न उपायेऽनुपायतास्ति । यो हि यस्य यया युक्त्योपायः कथितः स न कदाचित्तस्यानुपायः । यथा घटस्य मृद्दंडचक्रादिसामग्रीविशेषो न कदाचिदनुपायो भवितुमर्हति । तस्माच्चतुष्पाच्चिकित्सासाध्यस्य रोगस्योपाय एव चिकित्सा नत्वनुपायः ।

**अप्येवोपाययुक्तस्य धीमतो जातुचित्क्रिया ।**
**न सिध्येद्दैववैगुण्यान्न त्वियं षोडशात्मिका ॥६६॥**

धीमतः प्राज्ञस्य नरस्योपाययुक्तस्याऽपि दैवापराधादियं षोडशात्मिका क्रियां कदाचिन्न सिध्यति । तस्मादायुः परीक्ष्य साध्यासाध्यविभागज्ञो ज्ञानपूर्वं चिकित्सायां वैद्यः प्रवर्तते । तस्माद्दैववैगुण्ये विमलविपुलमत्या सम्यक् परिच्छेदाच्चिकित्साया रोगविषये प्रवृत्तायाः सिद्धिरेव स्यान्नासिद्धिः । यस्माद्यो यत्रोपायः स तत्रानुपायो न भवति । मुनिनाप्युक्तम् । साध्यासाध्यविभागज्ञो ज्ञानपूर्वं चिकित्सकः । कालेनारभते कर्म यत्तत्साधयते ध्रुवमिति ।

एतदेव प्रतिपादयन्नाह ।

**कस्यासिद्धोऽग्नितोयादिस्वेदस्तंभादिकर्मणि ।**
**न प्रीणनं कर्शनं वा कस्य क्षीरगवेधुकम् ॥ ६७ ॥**
**कस्य माषात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।**
**विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६८ ॥**
**विषं कस्य जरां याति मंत्रतंत्रविवर्जितम् ।**
**कः प्रासः कल्पतां पथ्यादृते रोहिणिकादिषु ॥६९॥**

कस्य पुरुषस्य वह्निः स्वेदकर्मणि स्तंभनकर्मणि च तोयं न सिद्धम् । आदिशब्दान्मूर्छापगमादौ शीतानिलादिः । अपि तु सर्वस्यैव सिद्धोऽन्वयव्यतिरेकात् । एवं यावद्रोहिणिकादिष्विति व्याख्येयम् । एवं निश्चितफला चिकित्सेति स्थितम् ।

**अपि चाकालमरणं सर्वसिद्धांतनिश्चितम् ।**
**महतापि प्रयत्नेन वार्यतां कथमन्यथा ॥ ७० ॥**

न केवलं पूर्वोक्ताद्धेतोश्चिकित्सातंत्रं सफलम् । यतश्चाकालमरणं सर्वसिद्धांतनिश्चितम् । तदन्यथा चिकित्साशास्त्रमंतरेण परे-

णापि यत्नेन कथं केन प्रकारेण निवार्यताम्। न केनचिदित्यर्थः। न चाकालमृत्युरक्षैव प्रयोजनमस्य तंत्रस्येत्याह।

**चंदनाद्यपि दाहादौ रूढमागमपूर्वकम्।**
**शास्त्रादेव गतं सिद्धिं ज्वरे लंघनबृंहणम्॥ ७१॥**

दाहादौ विषये चंदनादि चागमपूर्वकमेव लोकरूढं न त्वेवमेव तथा शास्त्रादेव चिकित्साख्यात्सकललोकप्रसिद्धज्वरे लंघनबृंहणं भक्तच्छेदक्षीरादिसिद्धिमुपगतं नान्यस्मात्।

**चतुष्पाद्गुणसंपन्ने सम्यगालोच्य योजिते।**
**मा कृथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते॥**

तस्माच्चतुष्पादा ये गुणा आयुःकामीयोक्तास्तैः संपन्ने युक्ते तथा सुष्ठु निरूप्य देशकालादीन् योजिते चिकित्सिते व्याधिनिर्घातं प्रति विचिकित्सां संशयं मा कृथाः।

**एतद्धि मृत्युपाशानामकांडे छेदनं दृढम्।**
**रोगोत्त्रासितभीतानां रक्षासूत्रमसूत्रकम्॥ ७३॥**

यतश्चाकांडेऽकाले मृत्युपाशा ज्वरादयस्तेषामेतच्चिकित्साशास्त्रं दृढं सारं छेदनम्। तथा समुत्पन्नेभ्योऽपि ज्वरादिभ्यस्त्रस्तानां शंकया भीतानां सूत्ररहितं रक्षासूत्रकं तत् कार्यकारणादित्यर्थः। तस्मादध्येतव्यं चिकित्साशास्त्रम्।

**एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम्।**
**याति हालाहलत्वं च सद्यो दुर्भाजनास्थितम्॥७४॥**

तथैतच्चिकित्साशास्त्रं तत्सकललोकप्रसिद्धं साक्षात्स्वरूपेणामृतं मृत्युजये। तदपि लोकप्रसिद्धं जगतः सुरासुररूपस्यायासादुत्पन्नं क्षीरोदमथनकाले तेन वर्जितमिदममृतमपि दुर्भाजनस्थितं सद्यः शीघ्रमेव विषत्वं याति।

तदेव दुर्भाजनं दर्शयति।

**अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान्।**
**त्यजेद्दूराद् भिषक्पाशान् पाशान् वैवस्वतानिव७५**

अज्ञातः शास्त्रसद्भावः परमार्थो यैस्तांस्तथाविधान् भिषक्पाशान् दूरतस्त्यजेत्। तथा शास्त्रमात्रपरायणान् शास्त्रपाठमात्रशरणान्। अत एव विषसामान्यतः शास्त्रपाठमात्रत्वेन निषिद्धम्। तथा शास्त्रपरमार्थानवबोधाच्च विषत्वम्। कानिव। वैवस्वतान् यमसंबंधिनः पाशान् यथेति तावदसंपूर्णान्।

सम्यग् भिषजः श्लाघमानो ब्रूते।

**भिषजां साधुवृत्तानां भद्रमागमशालिनाम्।**
**अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम्॥७६॥**

सुवैद्यानां सच्चरितानामिह लोकेऽन्यत्र च सदैव भद्रम्। किंविधानामागमेन ग्रंथतोऽर्थतः श्लाघितुं शीलं येषां तेषाम्। ईदृशा अप्यनभ्यस्तकर्माणो न श्लाघार्हाः स्युरित्याह। अभ्यस्तमसकृत्तैललेहादिपाकाद्यनुवासननिरूहादियोजनं च यैस्तेषां लोकद्वयेऽपि भद्रं सर्वसत्त्वानां पुत्रमित्रादिरूपेण भद्रमिव हितं सुखं चाभिलषंति इच्छंति ये तेषामपि भद्रं शस्तम्।

अधुनाऽष्टांगहृदयाख्यस्य संग्रहात् पृथक्करणे प्रयोजनमाह।

**इति तंत्रगुणैर्युक्तं तंत्रदोषविवर्जितम्।**
**चिकित्साशास्त्रमखिलं व्याप्य यत् परितः स्थितम् ७७**
**विपुलामलविज्ञानमहामुनिमतानुगम्।**
**महासागरगंभीरसंग्रहार्थोपलक्षणम्॥ ७८॥**

**अष्टांगवैद्यकमहोदधिमंथनेन**
**योऽष्टांगसंग्रहमहामृतराशिराप्तः।**
**तस्मादनल्पफलमल्पसमुद्यमानां**
**प्रीत्यर्थमेतदुदितं पृथगेव तंत्रम्॥ ७९॥**

**इदमागमसिद्धत्वात्प्रत्यक्षफलदर्शनात्।**
**मंत्रवत्संप्रयोक्तव्यं न मीमांस्यं कथंचन॥ ८०॥**

तंत्र्यते धार्यते शरीरमनेनेति तंत्रम्। तस्य गुणास्तंत्रगुणा यैस्तंत्रमलं क्रियते तंत्रयुक्त्यादयस्तैरेवंप्रकारैर्युक्तम्। तथा चोक्तं संग्रहे। अलंकृतं युक्तिपदैः सद्रत्नैरिव कांचनम्। षट्त्रिंशतार्थदुर्गेषु भिषजां संक्रमैरिव। तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च। प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्। उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः। प्रसंगैकांतनैकांताः सापवर्गो विपर्ययः। पूर्वपक्षविधानानुमतव्याख्यानसंशयाः। अतीतानागतापेक्षा स्वसंज्ञोह्यसमुच्चयाः। निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम्। प्रत्युत्सारस्तथोद्धारसंभवस्तंत्रयुक्तय इति। तत्राधिकरणं नाम। यदधिकृत्य वर्तते शास्त्रं स्थानमध्यायप्रकरणं वाक्यं वा। तत्र शास्त्राधिकरणम्। यदधिकृत्य शास्त्रं प्रवर्तते। यथा। अष्टावंगान्यधिकृत्य हृदयाख्यं सर्वशास्त्रं प्रवृत्तम्। यथोक्तं कायबालेत्यादि। स्थानाधिकरणं यथा। अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यंते हि सर्वत इति। अध्यायोऽपि यदधिकृत्य प्रवर्तते तदध्यायाधिकरणम्। यथा। अथाऽतो दिनचर्याध्यायं व्याख्यास्याम इति। प्रकरणं यदधिकृत्य प्रवर्तते तत्प्रकरणाधिकरणम्। यथा। दशमूलसिराहृत्स्थास्ताः सर्वं सर्वतो वपुरित्यादियावदित्यवेध्यविभागार्थं प्रत्यंगं वर्णिताः सिरा इत्यादि। एवं वाक्यमपि यदधिकृत्य प्रवर्तते तद्वाक्याधिकरणं वेद्यम्। योगो नाम योजना। उद्देशनिर्देशयोः सूत्रभाष्ययोर्वा। यथा। अथातोंऽगविभागं शारीरं व्याख्यास्याम इत्युद्दिश्यांगानि विभजते। शिरोंऽतराधिर्द्वौ बाहू सक्थिनी च समासतः। षडंगमित्यादि। युक्तिर्वा योगः। प्रतिज्ञाहेतुदृष्टांत उपनयो निगमनमिति पंचविधः। यथा। अग्निः शरीरस्थितेर्मूलमिति प्रतिज्ञा। अग्निपक्काहारे सति तत्स्थितेरिति हेतुः। तत्राग्निर्हेतुराहारान्नह्यपक्काद्रसादय इति वचनात्। यथा शाल्यंकुरस्य बीजमिति दृष्टांतः। उपनयो यथा। चिकित्साशास्त्रस्य प्रयोजनत्वसाधनाय बहुधा दृष्टांतोपनयं कृतवांस्तंत्रकृत्। कस्यासिद्धोऽग्नितोयादिरित्यादयः। तस्मात्सप्रयोजनमेव चिकित्साशास्त्रं प्रत्यक्षफलत्वादित्युपनयः। तस्मादारंभणीयमिति प्रमाणपदोपदर्शनमुखेन निगमनम्। यथोक्तम्। चतुष्पा-

द्गुणसंपन्ने सम्यगालोच्य योजिते । प्राक्कथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते । साध्यव्याधिचिकित्सायां संशयानुपपत्त्या प्रतिपादितया प्रमाणफलोपसंहारकरणम् । हेत्वर्थो नाम । यदन्यप्रस्तावोक्तमन्यत्रापि वोपपद्यते । यथा । तत्रैकैकं च शाखायां शतं तस्मिन्न वेधयेत् । सिरा जालंधरा नाम तिस्रश्चाभ्यंतराश्रिता इत्यादि । तथा अवेध्याः संकीर्णा ग्रथिताः क्षुद्रा इत्यादि । तदेतेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इत्यन्यथैतानि वचांसि निरर्थकानि स्युरिति । पदार्थो नाम पदेनार्थो गम्यते । यथा द्रव्यमिति पदं तस्यार्थो भूजलादिः । गुण इति पदं तस्यार्थो गुर्वादिः । प्रदेशो नाम येषामर्थानामतिबहुत्वात्साकल्येनाभिधानस्याशक्यत्वात् स्तोकमुच्यते । यथोक्तम् । इति द्रव्यैकदेशोऽयं यथास्थूलमुदाहृत इति । उद्देशो नाम । संक्षेपाभिधानम् । यथा । वायुः पित्तं कफश्चेति त्रयो दोषाः समासत इत्यादि । निर्देशो नाम तस्यैव विस्तारोक्तिः । यथोक्तम् । तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिल इति । वाक्यशेषो नाम । यस्मिन्सूत्रे लाघविकेनार्थाद्गम्यमानमनुक्तपूरणार्थमध्याहीयते । यथा । तत्र खात् खानि देहेऽस्मिन् भवंतीति वाक्यशेषः । आप्या जिह्वा रसक्लेदा इत्युत्तरत्र भवार्थे तद्धितश्रवणात् । प्रयोजनं नाम । यदर्थं शास्त्रादि प्रवर्तते । यथा । आतंकपंकमग्नानां हस्तालंबो भिषग्जितमिति । अनेन प्रयोजनेन चिकित्साशास्त्रमध्येयमित्यादि । उपदेशो नाम । आप्तवचनम् । यथा । स्नेहक्लिन्नाः कोष्ठगा धातुगा वा स्रोतोलीना ये च शाखास्थिसंस्थाः । दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं नीताः सम्यक्शुद्धिभिर्निर्ह्रियंत इत्यादि । अपदेशो नाम । यदाचार्यः किंचिदर्थं प्रतिज्ञाय हेतुमुपदिशति । यथा । जीवितं म्रियमाणानां सर्वेषामेव नौषधादिति प्रतिज्ञाय हेतुमाह । नह्युपायमपेक्षंते सर्वे रोगाणामुपायापेक्षाभावात् । अतिदेशो नाम । यत् किंचिदेवार्थजातमुक्त्वाऽनुक्तार्थसाधनाय एवमन्यदपि प्रत्येतव्यमिति परिभाषायां स्थापयति । यथोक्तम् । कर्णरोगप्रतिषेधे । महतः पंचमूलस्य काष्ठात् क्षौमेण वेष्टितात् । तैलसिक्तात्प्रदीप्ताग्राद् ग्राह्यः स्नेहो रुजापहः । योज्यश्चैवं भद्रकाष्ठात् कुष्ठात्काष्ठाच्च सारलादित्यादि । अर्थापत्तिर्नाम । योऽन्येनार्थेनोक्तेन ततोऽपरोऽप्यर्थो गदित इव ज्ञायते । यथा । नैवाद्यान्निशि नैवोष्णमित्युक्तम् । ननूक्तं दिवा भुंजीतेति । एतच्चार्थापत्त्या गम्यते । कः पुनरर्थः । का चास्यापत्तिः । ब्रूमः । दध्यभ्यवहारोऽर्थस्तत्र तंत्रकृता नैवाद्यान्निशीति कालो निषिद्धो नतु दधिभक्षणम् । ततो योयमनिषिद्धोऽर्थः स आपद्यते दिवा दधिभोजनार्थे रात्रिप्रतिषेधे दिनव्यतिरेकेण कालांतराभावात् । सर्वथा अनभ्यवहरणीयस्याहारप्रस्तावे प्रतिषेधानुपपत्तेः । एवमन्यत्रापि व्याख्येयम् । निर्णयो नाम । यन्निवारितस्यार्थस्य प्रतिष्ठापनम् । यथा । दृश्यंते भगवन् केचिदात्मवंतोऽपि रोगिण इत्यादिना चिकित्साशास्त्रफलं प्रति संशयकरणे पश्चान्निर्णयार्थमुक्तम् । यथा न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हतीत्यादि । प्रसंगो नाम । पूर्वाभिहितस्यार्थस्य केनचित्संबंधांतरेण पुनरभिधानम् । यथोक्तं सिराव्यधविधौ । लोहितं प्रवदेच्छुद्धं तनोस्तेनैव च स्थितिरित्युक्त्वा पुनः शारीरे शुद्धार्तवप्रसंगेनोक्तम् । शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः । गर्भः संपद्यते युक्तिवशादग्निरिवारणाविति । न च पुनरुक्तता तस्य । यस्मात्सिराव्यधे शरीरप्रभवत्वमेव रक्तस्योक्तम् । नतु क्रमो वर्णितः । शारीरे तु ययाऽनुपूर्व्या शरीरहेतुः स्यात्तद्विस्तारेणोक्तम् । यथा । बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः । मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्धत इति । एकांतो नाम । य एकमेव पक्षमव्यभिचारेण श्रयति नान्यम् । ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः । रागद्वेषभयाद्याश्च ते स्युरागंतवो गदा इति । नैकांतो नाम । अन्यतरपक्षानवधारणात् । यथा । जीवितं म्रियमाणानां सर्वेषामेव नौषधात् । एकांतेन नह्युपायमपेक्षंते सर्वे रोगा इत्यादि । अपवर्गो नाम । साकल्येनोत्सृष्टस्य यत्पुनस्तदेकदेशापकर्षणम् । यथा । शीतोष्णस्निग्धरूक्षाद्यैरुपक्रांताश्च ये गदाः । सम्यक्साध्या न सिद्ध्यंति ते च रक्तप्रकोपजाः । तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिरामित्युत्सर्गमभिधाय एकदेशेऽपवादं वक्ति नतु न षोडशातीतसप्तत्यब्दस्रुतास्रजामित्यादि । विपर्ययो नाम । उपदिष्टविपर्ययेण लक्षणादिकरणम् । यथोक्तम् । वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् । स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्यय इति । पूर्वपक्षो नाम । प्रतिज्ञातार्थसंदूषणं वाक्यम् । यथा हिताहितविभागं प्रतिचिख्यासन्नाह । यथा । दृश्यंते भगवन् केचिदित्यारभ्य यावद् हिताहितविभागस्य फलं तस्मादनिश्चितमित्यादि । विधानं नाम यत्प्रकरणानुपूर्व्ं विधानमावेक्ष्यते । वृथैव परिमोचितं स्थलमिदं च मूढात्मना । अनुमतं नाम । उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षतेऽपि च । नानात्मकमपि द्रव्यमग्नीषोमौ महाबलावित्यादि नह्यनुगतं न विघातः कृतः । व्याख्यानं नाम । यन्मादृशेभ्यो विशिष्टतरबुद्धिगम्यम् । यथा । सप्ताहात्कललीभवेत् । द्वितीये मासि कललात् घनः पेश्यथवार्बुदम् । पुंस्त्रीक्लीबाः क्रमादिति । नह्यत्र गर्भस्यावर्तमानाभावाः शक्या विज्ञातुं योगिदृष्टिं मुक्त्वा । संशयो नाम । साकांक्षत्वमनिश्चितवस्तुविज्ञानम् । यथा संशयं प्राप्तमात्रे यो जीवितं तस्य मन्यत इत्यादि । अतीतापेक्षणं नाम । यदतिक्रांतमपेक्ष्य प्रस्तुतस्य साधनमुच्यते । यथोक्तं हृद्रोगचिकित्सिते । रास्नाजीवकेत्यादि यावन्महास्नेहैर्विपाचयेदिति । अत्र च न ज्ञायते कतमो महास्नेह इति । तदेतदतिक्रांतमपेक्ष्य प्रसाध्यते स्नेहविध्युक्तम् । यथा । द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महानित्यपेक्ष्य व्याख्यायते । तथैतदपि चिंतयेन्मनसि गूढबुद्ध्या । स्वसंज्ञा नाम । या तंत्रकारैः स्वतंत्रसंव्यवहारार्थं प्रणीता सती परतंत्रेषु न व्यवहरति । यथा । शाखा रक्तादयस्त्वक्चेति । ऊह्यं नाम । यदप्रतिबद्धं ग्रंथे स्वयं प्रज्ञया तर्कयित्वा योज्यम् । यथोक्तम् । त्रयस्त्रिंशदिति प्रोक्ता

वर्गास्तेषु त्वलाभतः। युंज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम्। समुच्चयो नाम। यथा पेयां विलेपीमकृतं कृतं च यूषं रसं च समुच्चिनोति। तथा त्रीण्युभयं तथैकमिति। क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्ध इति। निदर्शनं नाम। यन्निदर्शयितव्यं सूक्ष्ममप्यर्थं स्वधर्म्यसादृश्यात् स्पष्टीकरोत्यादर्श इव मुखविधुम्। यथोक्तम्। यथा कुसुंभादियुतात्तोयाद्रागं हरेत्पटः। तथा द्रवीकृताद्देहाद्वस्तिर्निर्हरते मलानित्यादि। निर्वचनं नाम। निर्णयार्थं वचनं निरुक्तम्। यथोक्तं विषविधाने। मथ्यमाने जलनिधावमृतार्थं सुरासुरैः। जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञित इति विषस्य निर्वचनं जगद्विषदनाद्विषमिति। नियोगो नाम यो यस्यानुष्ठेयः। यथा। उष्णोदकोपचारी स्यादित्यादि। विकल्पो नाम। विविधं कल्पनमिदं कार्यमिदं वाऽकार्यम्। यथोक्तं पूर्वरूपदर्शने। ज्वरादौ हितं लघ्वशनमपतर्पणं वा। प्रत्युत्सारो नाम। यत्रोपपत्तिं दर्शयंतः परस्परमतानि निवारयंति। तद्यथा। अस्थ्नां शतानि षष्ठानि त्रीणि दंतनखैः सह। धन्वंतरिस्तु त्रीण्याह संधीनां च शतद्वयम्। दशोत्तरं सहस्रे द्वे निजगादात्रिनंदन इति। पूर्वमतात् षष्टिं प्रत्युत्सारयति। धन्वंतरेरपि मतं दशोत्तरं संधिशतद्वयमिति पुनर्वसुः प्रत्युत्सारयति संधिसहस्रद्वयं साधयन्। उद्धारो नाम। शास्त्रारंभप्रत्याख्यानादिचोद्यस्य समाधानम्। तद्यथा। दृश्यंते भगवन् केचिदात्मवंतोऽपि रोगिणः। यावत् हिताहितविभागस्य फलं तस्मादनिश्चितमिति कृते चोद्ये। न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हतीति परिहारः। संभवो नाम। उपपत्तिर्यस्मिन्नुपपद्यते अनुपदिष्टे। यथा। दुष्टरक्तापगमनात्सद्यो रागरुजां शम इत्युक्तम्। प्रच्छन्नालांबुजलौकाजशृंगसिराव्यधैर्यथासंभवं रक्तमपनीयते। यथोक्तम्। प्रच्छन्नेनैकदेशस्थं ग्रथितं जलजन्मभिः। हरेच्छृंगादिभिः सुप्तमसृग्व्यापि सिराव्यधैरिति। एवमन्यत्रापि संभवार्थो योज्यः। व्याख्या अपि तंत्रस्य गुणः। ताभिरपि तंत्रमलंक्रियते। ताश्च पंचदशप्रकाराः। तद्यथा। पिंडपदपदार्थाधिकरणप्रकरणार्थकृच्छ्रफलोचितकन्यासप्रयोजनानुलोमप्रतिलोमाऽतिसूत्रसमस्तव्याख्या। तत्र पिंडव्याख्या नाम। संक्षेपतया सूत्ररूपेणाध्यायादीनां व्याख्या। यथा। रूपेंद्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु। अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः। विकृतिर्या समासेन रिष्टं तदिह लक्षयेदित्यनेन सूत्रेण सकलरिष्टाध्यायसमास उक्तः। पदव्याख्या नाम। यत्पदानां छेदं कृत्वोच्चारणम्। यथा। अथात आयुष्कामीयमध्यायं व्याख्यास्यामः। इति सप्तपदं सूत्रं पूर्वं व्याख्यातम्। पदार्थव्याख्या नाम। तेषामेव पदानां विवरणम्। यथा। अथशब्द आनंतर्ये अधिकारे वा। अतःशब्दो हेतावित्यादि। अधिकरणव्याख्या नाम। यद्वस्तु प्रकृतमारभ्य तदनुषंगेण व्याख्यानमारभ्यते। यथा। अथातो दिनचर्याध्यायं व्याख्यास्याम इति प्रस्तुत्य ब्राह्मे मुहूर्ते उत्तिष्ठेत्स्वस्थो रक्षार्थमायुष इत्यादिना सैव दिनचर्या विवृत्य व्याख्यायते सविस्तरा। प्रकरणव्याख्या नाम। यस्मिन्नर्थे सूत्रे वा प्रकृतेनाप्रकृतं साध्यते यथा। त्रिलवणाद्ये चूर्णे गुणानुक्त्वाऽभयाख्ये एवमाह। समानं पूर्वेणेति। तत्र समानगुणता व्याख्याता। अर्थव्याख्या नाम। यत्र प्रकरणे सूत्रे वा स्वभावस्योपवर्णनं क्रियते। तद्यथा। प्रकृतिरुच्यते स्वभावः। स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः। तद्यथा। माषमुद्गयोः शूकरैणयोश्च। कृच्छ्रव्याख्या नाम। यत्र लेशत उक्तानामविस्पष्टानां प्रकरणे सूत्रे वा अर्थानां यत्नत उद्भावनं क्रियते। तद्यथा। अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमामिति लेशतो ब्रुवाणः शास्त्रकारः सर्वेषु हेतुलिंगौषधादिषु मध्यमा प्रतिपदाश्रयणीयेति सूचयति। फलव्याख्या नाम। यत्र वस्तुनि बहुष्वनिश्चितार्थेष्वेकीयमतेषु प्रस्तुतेषु वस्तु सारभूतं स्वमतं स्वमर्थमुपनिक्षिप्यैकीयमतानि तस्मिन्नेव स्वमतेंऽतर्भावं नयति। यथा। निरूहमात्रापुटकादिष्वियत्तायां साध्यायां च निश्चितानि महर्षिभिर्बहूनि मतानि प्रशस्तानि। यथा। द्वादशप्रसृतो निरूहः कार्य इत्येके। मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथगित्याद्यन्ये। तदेतानि मतानि दोषौषधबलापेक्षया स्वमतेंऽतर्भावितानि प्रमाणानि च। यथोक्तम्। दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत्। अन्योन्यविरुद्धमपि सम्यङ्निरूढलिंगं तु नासंभाव्य निवर्तयेदिति। उचितकव्याख्या नाम। यस्मिन्सूत्रे निदर्शनभूतान्युदाहरणानि तत्रांतः समाकृष्यार्थः शस्यते। यथा। पृथिव्यादिषु च महाभूतसंज्ञा स्थापिता। रसादिषु च धातुसंज्ञा निवेशिता। रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातव इति पुनरुच्यते। परस्परोपसंस्तंभाद्धातुस्नेहपरंपरेति। अत्र किं धातोर्ग्रहणेन भूतान्यपि धातुशब्दवाच्यानि भवंतीति। न्यासव्याख्या नाम। यस्मिन्नधिकारे वर्तमाने तेनाधिकरणार्थेन सहितं संबंधमभिवीक्ष्यास्यार्थो विनिक्षिप्यते। यथा। दृश्यंते भगवन् केचिदात्मवंतोऽपि रोगिण इति। हिताहितविभागस्य फलं प्रति संशयमभिवीक्ष्य न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हतीत्यादिना उत्तरं दत्त्वा तेनैव प्रसंगेनान्योऽर्थो निक्षिप्यते। यथा। एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम्। याति हालाहलत्वं तु सद्यो दुर्भोजनस्थितमिति। एवमन्येषामप्यर्थानां संबंधमवधार्य व्याख्याऽर्थार्हा कल्पनीया। प्रयोजनव्याख्या नाम। यत्सूत्रमभिधीयमानं स्वार्थस्य निष्पत्तौ निमित्तभावमुपैति। यथा। उक्तांगविभागेऽनेकधा सिराविस्तरः न च तेन सिराविस्तरेणोक्तेन किंचिदिहोपकारो दृश्यते। यदि प्रकरणावसरे प्रयोजनमिदं ब्रूयादित्यवेध्यविभागार्थं प्रत्यंगं वर्णिताः सिराः। एतदर्थं सिराविवरणं प्रवृत्तम्। कश्चिदयं वैद्यो वेध्यावेध्यविभागं सिराणां जानीयादिति। आनुलोम्यं नाम। येन * * * * * * तत्र प्रधानस्य कल्पना। प्रधानेन वा कल्पना प्रधानकल्पना। प्रधानस्य कल्पना यथा। सर्पिः स्नेहनं क्षीरं जीवनं मधुसंधानकृदित्यत्र मध्ये प्रकृष्टगुणत्वात्सर्पिःक्षीरे स्नेहनजीवने कल्प्येते। न तु तैलतोया-

दिष्वपि स्नेहनजीवनत्वं नास्तीति । माक्षिकं च संधाने प्रधानत्वात्संधानकृदित्युक्तं न तु सिक्थकमधुयष्टिकादिष्वपि संधानकृत्त्वं नास्तीति । प्रधानेन तु कल्पना यथा । क्षीरदधितक्रमस्तुनवनीतक्षीरघृतपुराणघृतकिलाटपीयूषकूर्चिकामोरणादिवर्गः सर्वः क्षीरवर्ग इत्युक्तम् । क्षीरप्राधान्यात् । प्रधानेन कल्पना व्यपदेश इत्येकोऽर्थः । गुणकल्पना नाम । येन धर्मेणोपेतोऽर्थः प्रयुज्यमानः समर्थो भवति । तेन धर्मेण युक्तस्य तस्यासावगुणोऽपि गुर्वादिष्वपाठाद्गुण इति कल्प्यते । यथोक्तम् । भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् । चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणमित्यादि दक्षत्वादिगुणनिर्देशः सर्वथा प्रशंसागुण इति गम्यते । लेशकल्पना नाम । अनुपदिष्टस्य विधेः कंठपाठेन यत्किंचित्सूत्रावयवांतरमाश्रित्यार्थः कल्प्यते । यथा । नात्र शास्त्रे कालमृत्योरकालमृत्योर्वा किंचिल्लक्षणं प्रणीतम् । तत्तु लेशतोऽनुमीयते । कथमिति । यदाहि कालनियतमायुः क्षयं प्राप्तं भवति तदा रिष्टमुत्पद्यते । न विषमापरिहारेण म्रियमाणे नरे । उक्तं हि । भिषक् भेषजपानान्नगुरुमित्रद्विषश्च ये । वशगाः सर्व एवैते विज्ञेयाः समवर्तिन इति । अत्र विकृतिविज्ञानीये गुरुमित्रद्विषश्चेति योऽयं चशब्दोऽस्माच्छ्लोकात् पूर्वकाणि यानि चोत्तराणि तानि सर्वाण्येव समुच्चिनोति । समवर्ती हि कालो मृत्युरिष्ट इतरस्त्वसमवर्ती । अत एवाचष्टे तंत्रांतरे । कालमृत्योरेव रिष्टानि नाकालमृत्योरिति स्वाभिप्रायप्रकाशनार्थं तंत्रकारः संकटेनोदाहरणं दत्तवान् । यथा । सम एव बाध्यमानः स्वप्रमाणक्षये भंगपूर्वरूपाण्याप्नोति । यथा नियतायुषः स्वप्रमाणक्षये रिष्टसंभवः । यथा च स एवातिभाराक्रांतत्वाद्विषमपथाश्रितत्वादकालेऽपि क्षयमाप्नोति तथा अनियतायुषो रिष्टोत्पत्तिमंतरेण मृत्युः । यदि पुनरनियतायुषोऽपि रिष्टोत्पत्तिपूर्वं मरणं कल्पेत तदा वार्षिके षाण्मासिके चाऽरिष्टे समुत्पन्ने शुभहेतुयोगान्न मृत्युः स्यात् । अनियतायुषो हि सम्यगुपचाराज्जीवितानुवृत्तिः । विषमहेत्वपरिहारान्मृत्युः । अतएवानियतायुषमधिकृत्य रसायनान्युपदिष्टानि । तद्योगादयं बहून्यपि वर्षाणि जीवेत् । नियतायुषस्तु कालमृत्युवर्षशतात् परेण जीवितं न निर्दिष्टम् । यथोक्तं शारीरे । मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् । तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणामिति । तस्मादविशेषोक्तावपि नियतायुष एवारिष्टोत्पत्तिपूर्वं मरणमिति निश्चितम् । तथा च ऋतुचर्याध्यायं व्याख्यास्याम इति प्रतिज्ञायां षड्ऋतुविशेषे प्रतिपत्तिर्भवति । न तु ऋतुस्तु द्वादशनिशा अस्य ऋतोरिति । विकल्पना नाम । यथा सर्वविद्यानुगतार्थे निर्देशे शास्त्रकारस्य सर्वविद्यास्थानानुप्रवेश इह शास्त्रे हित इति वचनाद् विनापीष्यते । तत्र आर्द्रसंतानतात्याग इत्यादिना वाक्येन बुद्धिवचनविषयेध्यात्मविद्यासंग्रहे इङ्ग्यते । अर्चयेद्देवगोविप्रेत्यादिना धर्मशास्त्रोपदेशसंग्रहः । तथा जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञित इत्यादिना पदव्युत्पादनान्निरुक्तकरणाच्च शब्दविद्याया निरुक्तेश्चोपसंग्रहः । साधकेऽहनि सूतिका गृहं प्रवेशयेत् । तथा । भरणीकृत्तिकाश्लेषापूर्वार्द्रापितृनैर्ऋत इति ज्योतिःशास्त्रोपरोधः । विचित्रभूषितशास्त्रस्योत्प्रेक्षणीयम् । भक्ष्यकल्पना नाम । एतत्तदमृतं साक्षादित्यादि । आज्ञाकल्पना नाम । यस्यानुष्ठाने हेतुः सम्यगवगंतुं न शक्यः । केवलमाप्तवचनं प्रमाणीकृत्यानुष्ठीयते । यथा । न छिंद्यात्तृणम् । न भुवं लिखेदिति । नह्यत्र हेतुर्वक्तुं शक्यते एतदनुष्ठेयमिति । इयं सप्तविधा कल्पना विंशत्याश्रया भवति । यथा आदिलोपः । मध्यलोपः । उभयपदलोपः । आदिमध्यांतलोपः । वर्णोपजननम् । ऋषिक्लिष्टम् । तंत्रशीलम् । तंत्रसंज्ञा । प्राकृतम् । समानतंत्रप्रत्ययः । परतंत्रप्रत्ययः । हेतुहेतुकधर्मः । कार्यकारणधर्मः । आद्यंतविपर्ययः । शब्दांतरम् । प्रत्ययः । उपनयः । संभवः । तत्रादिलोपो यथा । बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रस इत्यत्र मांसशब्दलोपेन । तथा च । धारणोदीरणनिशेत्यादौ धारणं वेगधारणमुदीरणं वेगोदीरणमिति । मध्यलोपो यथा । द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्याम इत्यत्र द्रवद्रव्यस्वरूपविज्ञानीयो द्रवद्रव्यविज्ञानीय इत्युक्तः । अनंतरमन्नस्वरूपविज्ञानीय इत्यत्र स्वरूपशब्दश्रवणात् । अंतलोपो नाम । यथा कफं पुनर्गौर्यः स्निग्धाः स्थिराः शीता वहंते इत्यत्रास्रशब्दस्य लोपो द्रष्टव्यः । पूर्वत्रास्रशब्दस्य प्रकृतत्वात् । यथोक्तम् । तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात् सिराः । प्रस्यंदिन्यश्च वातास्रमिति । एवमिहापि कफास्रं वहंत इत्यनुमेयम् । तुल्यजातीयत्वात् । उभयपदलोपो यथा । आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेदिति वचनं मध्ये विदाहादम्लतां ततः । पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनरेतेनाग्निनाशोषितं पक्वं पिंडितं कटुमारुतमिति । आदिशब्दश्रवणान्मध्यांतशब्दावत्र लुप्तनिर्दिष्टौ द्रष्टव्यौ । आदिमध्यांतलोपो यथा । अन्नं कालेभ्यवहृतमादौ कोष्ठं प्राणानिलाहृतम् । मध्येंऽते च द्रवैरित्यादि । वर्णोपजननं नाम । यत्रानुक्तो ग्रंथे वर्ण आचार्येण पश्चाद् व्याख्याकाल उपजन्यार्थोऽभिधीयते । तत्र खात्खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता । तथा । वातात्स्पर्शत्वगुच्छ्वासावह्नेर्दृग्रूपपक्तयो भवंतीति वर्णत्रयमुपजन्यव्याख्या करणीया । आप्या जिह्वा रसक्लेदा घ्राणगंधास्थिपार्थिवमिति । द्वयोर्भूतयोर्भवार्थे तद्धितप्रत्ययश्रवणात् । वाक्यशेषोऽप्ययमेवंप्राय एव । ऋषिक्लिष्टं नाम । यदृषी ऋषिपुत्रो वाऽसमाहितचित्ततयाऽशक्त्या वा किंचित्पदजातमभ्रष्टमुच्चारितम् । तथैव तल्लोके प्रयुज्यते । यथा रोम लोमेत्यादि । तंत्रशीलं नाम । या तंत्रकाराणां प्रकृतिः स्वभाव इत्यर्थः । यथा । किंचिच्छिष्यानुग्रहार्थं विस्तीर्णं संक्षिपंति । तथा । अस्थ्नां शतानि षष्ठानि त्रीणि दंतनखैः सहेति । नतान्यंगुलिहस्तपाणिबंधादिविभागेन विस्तरितानि किंचिद्विस्तारयंति । यथा । तत्रैवांगविभागे सिरा विस्तारिताः । इत्यवेध्यविभागार्थं प्रत्यंगं वर्णिताः सिरा इति वचनादिति । तंत्रसंज्ञा नाम । यत्कस्मिंश्चिदर्थे मध्ये व्याख्यायमाने स्वतंत्रसिद्धोदाहरणं तत्प्रमाणा-

र्थमुच्यते । यथा । नवज्वरे कषाया अपक्वेषु दोषेषु वर्जनीया उक्ताः । ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते । कषायो दोषशेषस्य पाचनः शमनोऽथवेति । विशेषवचानात्तत्र स्वरसादेः पंचविधस्य कषायस्य प्रतिषेधः प्रसक्तः । ततः स्वतंत्रसंज्ञाया विशेषः प्रतिषिध्यते । तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफ इत्यादि । तस्मात्स्वतंत्रसंज्ञया तिक्तकटुकषायौ निषिद्धौ पंचविधया स्वरसादिकल्पनया । प्राकृतं नाम ऊषकस्तुत्थकं हिंगुकासीसद्वयसैंधवमित्यौषधाधिकारात्सैंधवं लवणम् । नत्वश्वादिकम् । समानतंत्रप्रत्ययो नाम । यत्साध्यस्य कस्यचिदर्थस्य साधनायानुपलभ्यमाने स्वतंत्राप्रत्यये समानेभ्यस्तंत्रेभ्यः प्रत्यय इति । उदाहरणं यथा । नीचलोमनखश्मश्रुरित्याचारेषूक्तम् । इयद्भिरियद्भिर्दिनैः केशनखश्मश्रूण्यवतार्य नीचलोमादिना भवितव्यमिति नोक्तम् । ततो व्याख्याकाराः क्षारपाणिप्रसिद्धा दशरात्रेण केशादीनां संहरणमिति । निश्चिन्वंति । मुनिस्त्ववादीत् । त्रिःपक्षस्य केशश्मश्रुलोमनखान् संहरेदिति । परतंत्रप्रत्ययो नाम । यस्यार्थस्य प्रसिद्धितो न स्वकीयमुदाहरणं शक्यमभिधातुं नान्येभ्यो भिषक्तंत्रेभ्यः । ततस्तस्मिन् द्वये परतंत्रादुदाहरणं कल्प्यते । यथा । कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः । सम्यक्योगश्च विज्ञेयो रोगारोग्यैककारणमित्युक्तम् । योगस्य च लक्षणं नोक्तं तंत्रे । अन्यत्र वा विष्वक्तंत्रे तत्र बौद्धतंत्रप्रत्ययेन निश्चीयते । स्वहेतुभ्यः शीतोष्णादिलक्षणेन कालस्योत्पत्तिरेव योग इति । हेतुहेतुकधर्मो नाम । यो हेतुहेतुकेन धर्मो ज्ञायते । यथा । पित्तातिसारिणः पित्तलातिसेवनात्पित्तमुद्रिक्तं रक्तातिसाराय न चिरादस्य भविष्यतीत्यनुमीयते । समर्थस्य हेतोः स्वकार्यस्याव्यभिचारात् । कार्यकारणधर्मो नाम । यत्र कार्यसंज्ञया कारणं निर्दिश्यते । कारणसंज्ञया वा कार्यं तत्र कार्यसंज्ञया तावत्कारणं निर्दिश्यते । यथा । दोषा अपि रोगशब्दं लभंते । तत्र दोषाः कारणम् । सर्वेषामेव रोगाणां निदानं कुपिता मला इति वचनात् । स चेदानीं दोषो रोग इति व्यपदिश्यमानः । कारणे दोषे कार्यं रोग उपचरितो भवति । एवं कार्यं कारणसंज्ञया निर्दिश्यते । आद्यंतविपर्ययो नाम । यथा । अन्नस्वरूपविज्ञानं प्राप्तमुज्झित्वा पानमेव प्रथममुक्तं द्रवद्रव्यविज्ञानं कुर्वता तोयादीनां पंचानां वर्गाणामल्पवक्तव्यत्वात्समुद्रोपमतया शास्त्रस्यानुपूर्वसुखावगाहनार्थं पूर्वं ह्यल्पं सुखेनावगाह्यते पश्चात्प्रभूतमिति न्यायात् । शब्दान्यत्वं नाम । यदर्थे पर्यायशब्दं वर्णयंति शास्त्रकृतः । यथा । रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः । यक्ष्मातंकगदाबाधाः शब्दाः पर्यायवाचिन इत्यादि । प्रत्ययधर्मो नाम । यो नच हेतुहेतुधर्मोपपत्तिमात्रेण च केनचिद्धेतुत्वेन व्यपदिश्यते । यथा । देवदानवगंधर्वाद्युन्मादापस्मारादिविचित्रग्रहविकारा उक्ताः । यथोक्तम् । फुल्लपद्मोपममुखं सौम्यदृष्टिमकोपनम् । यावदनिद्रमप्रधृष्यं च विंद्याद्देववशीकृतमित्यादि । नचैते परमार्थतो हेतवः । किं तर्हि प्रज्ञापराधः । तथा चोक्तम् । हेतुस्तदनुपत्तौ तु सद्यः पूर्वकृतोऽथवा । प्रज्ञापराधः । सुतरामिति । उपनयो नाम । सूत्रहेतुप्रस्तावेन यत्रान्यत्प्रकरणमुपनीयते । यथा । मात्राशितीये । आहारमात्रालक्षणप्रस्तावे । अतिमात्रभोजननिमित्ताया विसूचिकायाश्चिकित्सा उपनीता । मात्रायां हि विभज्यमानायामवश्यमूनातिमात्रेऽपि विभजनीये तदपेक्षया मात्रायाः सम्यक् प्रतिपादनसौकर्यात् तत्प्रस्तावेन च विसूचिकायाश्चिकित्सा । संभवो नाम । यत्सूत्रं प्रकरणं वा विधीयमानमर्थस्य व्यापकत्वात्सकलेन शास्त्रेण व्याख्यायते । यथा । कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषान् । अष्टावंगानि तस्याहुश्चिकित्सा येषु संश्रितेति । एतान्यष्टावंगानि सकलेन शास्त्रेणोपदिश्यंत इत्याचार्यः प्रतिजानीते । भंग्यविभवकल्पनायाश्चास्यायं विशेषः । अयं व्याख्याया विभवो भवति । सतु विनैव व्याख्यायाः पठ्यमान एवेति । सप्तदशताच्छील्यादीत्युक्तम् । तद्यथा । ताच्छील्यमवयवो विकारः सामीप्यं भूयस्त्वं प्रकारो गुणिगुणविभवः संसक्तता तद्धर्मता स्थानम् तादर्थ्यम् साफल्यमकर्मचेष्टानिमित्ततासाहचर्यं मूलसंज्ञा तात्स्थ्यमिति । तत्र ताच्छील्यं नाम । यत्केनचिदेव धर्मसादृश्येन युक्तो भावस्ताच्छील्यमुच्यते । यथा । सर्वांगसंश्रयस्तोदभेदस्फुरणभंजनम् । स्तंभनाक्षेपणं स्वापं संध्याकुंचनकंपनम् । कुपितोनिलः करोतीत्यंतं । न चांगानि स्वपंति । किं तर्हि देवदत्तः स्वपिति तद्धर्मसादृश्यादंगानि स्वापशब्देनोच्यंते । तद्यथा । पुरुषः सुप्तो न किंचिद्वेदयते । न चेतयते । तथांगमपि यत्किंचिन्न वेदयते । नखतोदादि तत्सुप्तमिव सुप्तमित्युच्यते । अवयवो नाम । यत्रैकदेशोदाहरणे क्रियमाणेऽनुक्तोऽन्योऽपि तज्जातीयकोऽर्थो लभ्यते । यथा । लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति । स्वास्थ्यं क्षुत्तृड्रुचिः पक्तिर्बलमोजश्च जायते । इत्यनेनैकदेशोदाहरणेन लंघनेन दोषक्षपणेन लाघवे सति स्वास्थ्याद्युत्पत्तिः । तत्प्रतिपक्षेण त्वलंघनेन दोषक्षपणेन जाते सत्यस्वास्थ्यादयोऽनुक्ता अपि लभ्यंते । विकारो नाम । विपरीतक्रिया । यथा विकारसंज्ञया प्रकृतिरपि लभ्यते । प्रकृतिसंज्ञया च विकारः । तत्र विकारसंज्ञायां च प्रकृतिर्यथा । पुष्पे पत्रे फले नाले कंदे च गुरुता क्रमात् । शाकमधिकृत्योक्तम् । अत्र प्रकृतिः पाठाशूकादीनां पत्रादीनि । तानि हि पाकेन विक्रियमाणानि चावस्थांतरं प्रतिपद्यमानानि शाकसंज्ञां लभ्यंते । तदयं शास्त्रप्रकारस्तेषां विकारस्तेषां विकारसंज्ञा यव्यौंदिमंडादिसंज्ञया यवादिकं चोक्तवान् ।*** भूयस्त्वं नाम । यदेकस्मिन् वर्तमानमाधिक्येन क्वचिल्लभ्यते । यथा तंत्रे । अम्लो भक्तं रोचयतीत्युक्तं । न च मधुरादिरपि न रोचयतीति । कस्यचिच्चाम्लविद्वेषिणोऽम्लो रसो भक्तविद्वेषमेव कुर्यात् । तत्र भूयस्त्वमाश्रित्येदमुक्तम् । अम्लो रोचयति । कदाचित्कस्यचिद्वा नासौ रोचयेन्न तावतान्नरोचनम् । प्रकारो नाम । यो यस्य समानधर्मा स तस्य प्रकारः । यथा । कंठमेरंडनालेन स्पृशन्वमेदित्युक्तम् । न च तत्प्रकाराणां सुवर्चलाशतपुष्पादिनालानां न ग्रहणम् । गुणिगुणविभवो नामशब्देनोक्तानि । यस्मादाह । पार्थिवाः पार्थिवाने-

वेति । नहि पार्थिवा गुणाः संति केचिये पठ्येरन् । गुणश्च गुणिवद्यथा । मेधास्मृतिबलोपेता बभूवुरमितायुष इति । अत्रायुर्गुणोपेतममितत्वम् । नायुषः परिमाणगुण आयुर्गुणेनैव शक्यः । संसक्तता नाम । यदेकस्य बहुभिः संबंधः । यथा । विद्यमानेष्वपि तत्रान्येषु संबंधेषु तस्यैव व्यपदेशः क्रियते । यथा । मधुरस्कंधनिर्देशेन माक्षिकादयो गुणिताः कषायादिरसोपेता अपि मधुरप्रायत्वान्मधुरसंसक्ततया । तद्धर्मता नाम । येन तथाभूतं सत्तद्धर्मतामासाद्य दर्शनात्तामेवाख्यां लभते । यथा । विवर्जयेद्भिषक्पाशान् पाशान्वैवस्वतानिवेति । मारणधर्मो हि वैवस्वतपाशेन समानो दृष्ट इत्यतस्तेऽपि तथैवोक्ताः । स्थानं नाम । यत्र स्थानिना स्थानं स्थानेन वा स्थानी व्यपदिश्यते । तत्र स्थानिना स्थानं यथा । कर्णनादः श्रोत्ररोग इत्युक्तो न च श्रोत्रेंद्रियस्यास्ति नादः । किं तर्हि तदधिष्ठानस्य कर्णस्य । तस्मादयं श्रोत्रेण स्थानिना कर्णमधिष्ठानमुक्तवान् । स्थानेन स्थानी यथा । जिह्वा रसं गृह्णाति तत्र न जिह्वा रसं गृह्णाति । किंतर्हि रसना । तादर्थ्यं नाम यत्प्रयोजनार्थं प्रवर्तते । यो भावस्तेनैव व्यपदिश्यते । यथा । मदनमधुकालाब्वित्यादीनि छर्दनप्रयोजनानीत्यर्थः । साहचर्यं नाम । यो येन नित्यं संबंध उपलभ्यते स तस्मात्संबंधात्तमेव संबंधिशब्दं लभते । यथा । मथ्यमानाद् धूमं दृष्ट्वा ज्वलद्धासुरं वह्निद्रव्यमवश्यमभ्युत्थितो वह्निरित्येव । कर्म नाम । यत्र कर्मकर्मेति चोपचर्यते । यथोच्यते । मुनयः प्रशमं जग्मुः । नचाग्रामस्थानीयः कश्चित्प्रशमोस्ति । किं तर्हींद्रियाणां विषयेभ्यः केवलं शक्तिनियमः प्रशमः । अथ च गतिः कर्मविषयेभ्यस्त्विंद्रियाणां क्रियानिवृत्तिः । तदेव च कर्मेत्युक्तम् । गुणनिमित्तं कर्म । यत्कस्य विभूतिः प्रशंसादिका ख्याप्यते । धर्म्यं यशस्यमायुष्यं लोकद्वयपरायणम् । अनुमोदामहे ब्रह्मचर्यमेकांतनिर्मलमिति ब्रह्मचर्यस्य प्रशंसाविभूतिः ख्याप्यते । ब्रह्मचर्यस्य हीमे गुणा न ब्रह्मचर्यमेवेति । चेष्टानिमित्तं नाम यस्मिन्नाममात्रं कस्यचित् क्रियया भवति भावस्य । नात्र प्रस्पंदक्रियेष्टा । यथा दीपवदस्य ज्ञानं ज्वलतीत्युच्यते । न च ज्ञानस्य प्रदीपस्येवार्चीषि संति । ऊर्ध्वगामीनि दीपवद्वा सन्निकृष्टानि द्रव्यांतराणि दहंति । रूपं वा स्पर्शो वा तैलादिकोपादानम् । किंतु प्रकाशक्रियामात्रं परिगृह्य ज्वलतीति प्रशंसाकर्मणि क्रोधभयशोकलोभहर्षेर्ष्यामोहादिभिरुपहतं विज्ञानं मलोपहतदर्पणवदप्रकाशवृत्तिर्भवेत् । मूलसंज्ञा नाम । या लोकेऽन्यस्मिन्नर्थे प्रसिद्धा तंत्रे चास्मिन्निवेशिता । यथा । निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा । संप्राप्तिश्चेति रूपं च लोके नीलपीतलोहितादिप्रसिद्धं स्वशास्त्रे संज्ञयानुरूपं लिंगलक्षणमिति । तात्स्थ्यं नाम । यदन्यस्यैवार्थस्य तत्स्थत्वादन्यस्यैव कल्प्यते । तद्यथा बस्तिमेहनयोः शूलमिति तत्र पुंसंस्थेन कारणेन बस्तिमेहनयोरिति कल्प्यते । चैतन्याभावे बस्तिमेहनयोः सतोरपि शूलाभावात्तत्प्रदेशस्थितत्वात्तयोरित्युपचर्यते । तथा तंत्रदोषैः पंचदशभिरप्रसिद्धशब्दादिभिर्वर्जितम् । अप्रसिद्धशब्दम् । दुःप्रणीतम् । असंगतार्थम् । असुखारोहि । विरुद्धम् । अतिविस्तृतम् । अतिसंक्षिप्तम् । अप्रयोजनम् । भिन्नक्रमम् । संदिग्धम् । पुनरुक्तम् । किंप्रमाणकम् । असमाप्तार्थम् । अपार्थकम् । व्याहतम् । तत्राप्रसिद्धं नाम । यल्लोके नातीव प्रसिद्धम् । यथा । उदक्यागमनलक्षणमसुखानामिति । यथा । वाऽऽधारस्यासिपाणिधारेष्वकुशलयोगता इति । अस्यार्थः । अकुनाम वृक्षः । तस्य शलमिति । दुःप्रणीतम् । सूत्रभाष्यप्रयोजनरहितम् । असंगतार्थम् । यत्सूत्रेणासंबद्धम् । असुखारोहिपदम् । यत्पदसन्निवेशस्य विषमतया दुःखेनोच्चार्यते । चर्करीतादिप्रायम् । यथा । धातर्यरिप्रदमिति । विरुद्धं नाम । यद् दृष्टांतसिद्धांतसमयैर्विरुद्धम् । यथा । कश्चिद्देनित्यः पुरुषोऽकृतकत्वादिति हेतुः । घट इति दृष्टांतविरुद्धम् । तथा मधुराम्ललवणाः कफं शमयंति । कटुतिक्तकषाया वातं जयंतीति वैद्यकसिद्धांतविरुद्धमेतत् । समयविरुद्धं नाम यथा यः समयः पूर्वाचार्यैस्तत्त्वदर्शिभिः कृतस्तं व्युत्क्रम्यागच्छति । यथा न लोष्टं विमृद्नीयात् न तृणं छिंद्यादिति । एतत् तत्त्वदर्शिभिरुक्तत्वाल्लोष्टमर्दनादि न क्रियते न तु हेतुरत्रास्ति । अतिविस्तृतं नाम । यथा मधुरादिस्कंधं ब्रुवन् यावंति मधुराणि जगति संति मधुरप्रायाणि मधुरप्रभवानि तान्यशेषाणि यद्यभिदधाति तदाऽतिविस्तृतत्वं स्यात् । अतिसंक्षिप्तं नाम । यथा योगशतकप्रायम् । यथा वा हेतुलिंगौषधोद्देश एव क्रियते । नतु तदवबोधकवाक्यानामिति शेषः । अप्रयोजनं नाम । यथा । इत्याचारः समासेनेत्येतावद्यदि वदेन्नतु ब्रूयात् । यं प्राप्नोति समाचरन् । आयुरारोग्यमैश्वर्यमित्यादि । तदा न कश्चिदनुतिष्ठेदिति । भिन्नक्रमं नाम । पूर्वं येनानुक्रमेणोक्तं न तेनैव निर्दिश्यते प्रयोजनांतरासंभवेपि । यथा । वातपित्तकफानुद्दिश्य तत्र रूक्षो लघुरित्यादौ वातगुणनिर्देशमकृत्वैव पित्तस्य विदधीत । एवं क्रमो भिन्नो भवेत् । संदिग्धं नाम यथा । किमकालमृत्युरस्ति उत नास्तीत्युभयत्र हेत्वाभासपरिग्रहात्संशयः । पुनरुक्तं नाम । योर्थ उक्तोपि पुनरुच्यते । किंप्रमाणं नाम । पाक्यं शीतकषायं वा मुस्तापर्पटकमिति । अत्र तावदुच्यते । परतोपि चेदित्येतत्ततः समाप्तार्थत्वान्न ज्ञायते किमनेन कार्यमिति । अनर्थकं नाम । यदन्यार्थेनापि पदेनापगताभिधेयम् । व्याहतं नाम । यया पूर्वया वाक्ययुक्त्याऽपरा व्याहन्यते । अपरया पूर्वा वा । यथा । अनास्थाप्या मेहिन इत्युक्त्या पुनरास्थापनमनुजज्ञे । मुस्तादेर्निर्यूहे पपाठ । वातासृक्शोफमेहार्शोगुल्मविण्मूत्रसंग्रहमित्यादि । तदत्र विधिप्रतिषेधयोः परस्परनिरोधाद्व्याहतत्वम् । अत्र समाधानार्थं विपुलमतय एवमभिदधुः । प्रमेहिणमास्थाप्य निषेधाद्बस्तिकल्पे पुनरनुज्ञानात्तंत्रकृतोभिप्रायविशेष ईदृगनुमीयते मेहिनो वातस्य प्रबलत्वेन बस्तिमंतरेण नान्यस्तथाविध उपक्रमोऽस्ति तस्मात्तस्यावस्थातुरवशाद्योज्यो बस्तिर्यदार्तमेहिनो दृश्यते पवनस्याल्पत्वे तदोपक्रमांतरेणैव चिकित्सितुं शक्य इति । तदा बस्तिर्न

योज्य इति प्रतिपादयितुमेवंविधो विन्यासः कृतः। इति पूर्वोक्तैस्तंत्रगुणैस्तंत्रयुक्त्याख्यैर्युक्तं तंत्रदोषैरप्रसिद्धशब्दादिभिर्वर्जितमल्पसमुद्यमानां स्तोकव्यायामानां प्रीत्यर्थं पृथगेवेदं तंत्रमुक्तम्। किंभूतम्। चिकित्साशास्त्रं शतसहस्रं ब्रह्मप्रोक्तमग्निवेशादिप्रणीतं वा व्यापद्य परितः समंतात् स्थितम्। न चैतत्स्वमनीषानिरूपितमित्याह। विपुलेत्यादि विपुलं विस्तीर्णं समस्तवस्तुविषयममलं निर्मलमाविपर्ययस्तं विज्ञानं येषां महामुनीनामात्रेयादीनां त एवं ते च ते विपुलामलविज्ञानमहामुनयश्च तेषां मतमभिप्रायस्तदनुगच्छत्यनुवर्तते यत्तद्विपुलामलविज्ञानमहामुनिमतानुगम्। ननु संग्रहेणैव महामुनिमतं संगृहीतम्। तत्किमनेनेत्याह। महासागर इव गंभीरो यः संग्रहाख्यस्तस्योपलक्षणमुपायभूतमेतत् तस्मात्पृथगेतत् तंत्रमुदितम्। आष्टावंगानि यस्य तदेवाष्टांगम्। तद्वैद्यकं च तदेव महोदधिरष्टांगवैद्यकमहोदधिस्तस्य मंथनमिव मंथनं पाठश्रवणचिंतनादिभिर्विक्षोभणात्। तेन करणभूतेन योष्टांगसंग्रह एव महानमृतराशिराप्तस्तस्मादष्टांगसंग्रहमहामृतराशेः सकाशात् पृथगेतत्तंत्रमुदितम्। कीदृशम्। अनल्पफलमायुरारोग्यैश्वर्यसुखादिकं यस्य तदेवं महाफलमित्यर्थः। तदयंभावः। तंत्रस्याल्पत्वात् पाठादिषु स्वल्प एवायासो भवति महच्च फलं यतः स्यात् ततोयमादरणीय इत्यर्थः। वसंततिलकम्। इदमागमसिद्धत्वात्प्रत्यक्षफलदर्शनात्। मंत्रवत्संप्रयोक्तव्यं न मीमांस्यं कथंचन। इदमनंतराभिहितं तंत्रं मंत्रवदाचरितं संप्रयोक्तव्यं न कथंचिदपि मीमांस्यं किमिदं स्याद्वा नवेति संशयो न कार्य इत्यर्थः। कस्मात्सुविशुद्धज्ञानेभ्यो महामुनिभ्य आगमेन शुद्धत्वात्। तथा। प्रत्यक्षफलस्य ज्वरवच्चिकित्सादिकस्य दर्शनात्।

**दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः।**
**पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम्॥ ८१॥**

अतोष्टांगहृदयाख्यात्तंत्रात् पाठबोधानुष्ठानै रोगिचिकित्सालक्षणेन ध्रुवमवश्यं दीर्घजीवितादीन् प्राप्नोति।

नच तानेव प्राप्नोति किंतर्हि परमपीत्याह।

**एतत्पठन् संग्रहबोधशक्तः**
**स्वभ्यस्तकर्मा भिषगप्रकंप्यः।**
**आकंपयत्यन्यविशालतंत्र-**
**कृताभियोगान्यदि तन्न चित्रम्॥ ८२॥**

एतदनंतरोक्तमष्टांगहृदयाख्यं तंत्रमधीयानः कंठे दधत्संग्रहबोधशक्त एतद्ग्रंथार्थविशेषः शेषवस्त्ववबोधार्थं तस्मात्स्वभ्यस्तकर्मा अत एव पाठावबोधः स्वाभ्यस्तकर्मा तस्य गुणशतयोगादष्टांगहृदयस्य व्याख्याता। अन्येषां भेषजकर्मजेन सत्स्वभ्यस्तकर्मणा चिकित्सक अक्षोभ्यः सन्नन्येषु चरकादिषु विशालतंत्रेषु विहिताभियोगान् वैद्यान् यदि कंपयति क्षोभयति। तन्नाश्चर्यम्। उपजातिः।

यथा चाकंपयंतेऽपरे भिषजस्तथा दर्शयन्नाह।

**यदि चरकमधीते तद् ध्रुवं सुश्रुतादि**
**प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।**
**अथ चरकविहीनः प्रक्रियायामखिन्नः**
**किमिह खलु करोतु व्याधितानां वराकः ८३**

यदि केवलं चरकं पठति। ततस्तस्मात्सुश्रुतादिप्रणिगदितानां वर्त्मसंधिसितासितादिजानां रोगाणां ध्रुवं संज्ञामात्रावयवेऽपि बाह्यः किंतु हेतुलक्षणोपक्रमेणानभिज्ञ इत्यपिशब्दार्थः। अथ चरकविहीनः केवलं सुश्रुतपाठसाध्यप्रक्रियायां दोषदूष्यकालशरीरसत्त्वसात्म्यादिलक्षणायामखिन्नः सन् व्याधितानां कासश्वासाद्यभिभूतानां किमिव वराकोऽल्पधीर्विदधातु। न किंचिद्विधातुं शक्त इत्यर्थः। इह तु चरकोक्तप्रक्रियायाः प्रतिपादनात् सुश्रुतोक्तामयाभिधानाच्च तदध्येता रोगचिकित्सायां प्रवर्तमानो रोगशांतिं ध्रुवं विदधात्येव। मालिनीवृत्तम्।

तथैवं मन्यसे यद्यपि तत्र तंत्रमेद्गुणम्। तथाप्यार्षतंत्राध्ययने समाधानातिशय इति तत इदमाह।

**अभिनिवेशवशादभियुज्यते**
**सुभणितेऽपि न यो दृढमूढकः।**
**पठतु यत्नपरः पुरुषायुषं**
**स खलु वैद्यकमाद्यमनिर्विदः॥ ८४॥**

अभिनिवेशो वस्तुपक्षपातस्तस्य वशः सामर्थ्यं तस्मादन्यत्र गुणदोषावभिताशोभनोक्तेऽपि तंत्रे यो नाभियुज्यते। ऋषिप्रणीते प्रीतिं करोति स नर आदौ भवमाद्यं प्रथमप्रणीतं ब्रह्मोक्तं शतसाहस्रं वैद्यकं यत्नपरस्तथा अनिर्वेदः सन् पुरुषायुषं वर्षशतं पठतु। किलास्मिन् काले हीयमानबुद्धिमेधाजीवितस्य पुरुषस्य श्रवणचिंतनावबोधानुष्ठानानि सुदूरोत्सारितान्येवेत्यर्थः। पुरुषायुषमित्यचतुरादिसूत्रे निपातितम्। अथैवं मन्यसे वक्तृत्वविशेषादवश्यमेवार्थातिशयो भवति। तस्मादाद्येषु सुकृतेष्वेवाभियोगो युक्तो न त्विदानींतनकविकृतेष्विति तदेतन्न वाच्यम्।

कुत इत्याह।

**वाते पित्ते श्लेष्मशांतौ च पथ्यं**
**तैलं सर्पिर्माक्षिकं च क्रमेण।**
**एतद् ब्रह्मा भाषते ब्रह्मजो वा**
**का निर्मंत्रे वक्तृभेदोक्तिशक्तिः॥ ८५॥**

वाते तैलं पथ्यं पित्ते घृतं पथ्यं श्लेष्मशांतौ माक्षिकं पथ्यं यथाक्रमम्। इत्येवं भगवान् ब्रह्मा भाषते। ब्रह्मजो वा सनत्कुमारादिर्भणतु। निर्मंत्र अशब्दस्वभावे तैलादिके स्वाकरत उत्पन्ने वातादिशमनशक्तेर्वक्तृविशेषोत्तया शक्तिर्न काचिदित्यर्थः। मालिनीवृत्तम्।

तदेवोपसंहरन् स्पष्टयति।

**अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते।**
**अतो मत्सरमुत्सृज्य माध्यस्थमवलंब्यताम्॥ ८६॥**

अभिधातृवशात् किं तैलादेर्द्रव्यस्य शक्तिर्विशिष्यते अपि तु न कश्चिदेव विशेष उत्पद्यते यतः स्वभावहेतुभ्य एव एतच्छ

क्तियुक्ताश्चोत्पन्नाः । अतोभिधातृवशाद् द्रव्यशक्तिविशेषलक्षणाद्धेतोर्मत्सरमुत्सृज्य विद्वेषं विहाय माध्यस्थमाश्रीयताम्। मध्यस्थो हि पुरुषः कालबुद्ध्याद्यनुरूपमिदमेव शास्त्रमुपकारकं मम न त्वतोपरं शास्त्रमुपकारकं बुद्ध्वा परामर्शाध्येष्यते न त्वज्ञानाभिनिवेशाग्रहमेतीत्यर्थः ।

ननु किमस्माकमुपकारकत्वादिद्वारेण ऋषिप्रणीतमेव तंत्रमनुरागवशादध्येष्यमित्याशंक्याह ।

**ऋषिप्रणीते प्रीतिश्चे-**
**न्मुक्त्वा चरकसुश्रुतौ ।**
**भेडाद्याः किं न पठ्यं ते**
**तस्माद् ग्राह्यं सुभाषितम् ॥ ८७ ॥**

यदि ऋषिप्रणीते प्रीतिस्ततश्चरकसुश्रुताख्यौ हित्वा भेडजातूकर्णादिमुनिप्रणीतानि किमिति न पठ्यंते सर्वेणैव वैद्यवृंदेन । अपि तु सुभाषितप्रियतया चरकसुश्रुतौ बाहुल्येन यथा पठ्येते न तथा भेडादयः तस्मात्स्थितमेतत् सुभाषितं ग्राह्यम् । न तु मुनिप्रणीतमेव तंत्रम् । अतश्चरकसुश्रुतवदनार्षमपीदं गुणवत्त्वान्मतिमद्भिर्ग्राह्यमेव ।

**हृदयमिव हृदयमेतत्सर्वायुर्वेदवाङ्मयपयोधेः ।**
**दृष्ट्वा यच्छुभमाप्तं शुभमस्तुपरं ततो जगतः ॥८८॥**

**इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टांगहृदयसंहितायामुत्तरस्थानं समाप्तम् ॥**

एतद् हृदयाख्यं तंत्रं हृदयमिव कस्य सर्वायुर्वेदवाङ्मयपयोधेः । यथा हृदयं शरीरस्यैकदेशमपि दशभिर्मूलसिराभिः सकलकायं व्याप्नोति । तथेदमपि षड्भिः स्थानैः सकलमष्टांगायुर्वेदवाङ्मयं व्याप्य स्थितमिति साधर्म्यात् । तदेवमीदृशं हृदयं दृष्ट्वा विधाय यत्कल्याणं परं श्रेष्ठं प्राप्तं तस्माच्छुभाज्जगतो मंगलं भवत्वित्यार्याः ।

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामुत्तरस्थाने वाजीकरणं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

| | रु. | आ. | ट.आ. |
|---|---|---|---|
| सप्तशती. सुटी प्रत. ... ... | ० | १२ | २ |
| समयमातृका. ... ... | ० | ८ | १ |
| समासचक्र. ... ... | ० | ‌।।। | ।। |
| सर्वपूजा. ... ... ... | ० | १ | ।। |
| सप्तशती मध्यम टैपांची. रेशमी. | ० | ६ | १ |
| ,, ,, ,, साधी... | ० | ४ | १ |
| ,, ,, ,, सुटी.... | ० | ४ | १ |
| साम्बपञ्चाशिका. ... ... | ० | ४ | ।। |
| सिद्धांतकौमुदी. मध्यम टैपांची. | २ | ८ | ४ |
| सिद्धांतकौमुदी. बारीक टैपांची. | २ | ० | ४ |
| सुभद्राहरणम्. ... ... | ० | ४ | ।। |
| सुभाषितरत्नभाण्डागार. ... | ३ | ८ | ५ |
| सूर्यसहस्रनामावळी. ( रेशमी. ) | ० | ३ | ।। |
| सूर्यसहस्रनामावळी. ( साधी. ) | ० | १।। | ।। |
| सूर्यशतक. मयूरकविप्रणीत ... | ० | ६ | १ |
| हितोपदेश. नारायणपण्डितकृत | ० | ८ | १ |
| ,, अर्थप्रदर्शक इंग्रजी टिप्पणीसहित. ... ... ... | १ | ० | १।। |

## मराठी पुस्तकें.

| | रु. | आ. | ट.आ. |
|---|---|---|---|
| आशौचनिर्णयप्राकृतभाषांतरसहित. | | ४ | १ |
| आनंदराव. ... ... ... | ० | ३ | ।। |
| आर्यवृत्त. ... ... ... | ० | १ | ।। |
| आरत्या.—भाग पहिला. ... | ० | ।। | ।। |
| आल्फ्रेद धि ग्रेत ह्याचें चरित्र. | ० | १० | १ |
| इंग्रजी सुरस रत्नमाला.... ... | ० | ३ | ।। |
| इंद्रियमहत्त्वविचार. ... ... | ० | ८ | १ |
| एकादशीमाहात्म्य. ... ... | ० | १।। | ।। |
| एकनाथचरित्र. ... ... | ० | १२ | २ |
| एब्राहामलिंकनचें चरित्र. क्लाथबाउंड. | | १० | ।। |
| ,, ,, पेपरबाउंड. ... ... | | ८ | ।। |
| कहाण्या. ... ... ... | ० | ३ | ।। |
| कहाण्या भाग दुसरा.... ... | ० | ५ | १ |
| कादंबरी कथासार. ... ... | ० | ३ | ।। |
| कृष्णाकुमारी काव्य. ... ... | ० | ५ | ।। |
| गरुडपुराण. ... ... ... | १ | ४ | २ |
| गंगालहरीचें उत्कृष्टभाषांतर ... | ० | ६ | १ |
| गीतापद्यमुक्ताहार. ... ... | २ | ० | ० |
| गृहवैद्य. ... ... ... | ० | १२ | २ |
| चमत्कारिक नाटक. ... ... | ० | १० | १ |
| चंद्रसेना किंवा अहिमहिनिधन... | ० | २ | ।। |
| चित्तवेधक साधुचरित्र... ... | ० | ४ | ।। |
| छत्रपति संभाजीमहाराज. ... | १ | ४ | २ |
| जन्माष्टमी. ... ... ... | ० | २ | ।। |
| तुकारामाष्टक. ... ... ... | ० | ।। | ।। |
| त्वरितामहात्म्य... ... ... | ० | ८ | २ |
| दारूची लावणी. ... ... | ० | । | ।। |
| दामाजीपंताचें चरित्र. ... ... | ० | ।। | ।। |
| दिनार्बेस. ... ... ... | ० | १४ | १।। |
| दिवाळी. ... ... ... | ० | १ | ।। |
| दुःखिताश्रुमार्जन. ... ... | ० | ३ | ।। |
| देवीमाहात्म्य.(सप्तश०प्रा०ओ०टीका) | १ | ४ | २ |
| देहावर निराकारी पदें व अभंग. | ० | १।। | ।। |
| द्रौपदीहरण. ... ... ... | ० | १ | ।। |
| दृष्टीसंरक्षण ... ... ... | ० | ८ | १ |
| धर्मसिंधु. ( संस्कृत मूळ व मराठी भाषांतर. )... ... ... | ६ | ० | ६ |
| धर्मराजद्रौपदीसंवाद. ... ... | ० | १।। | ।। |
| धांवे व पदें. ... ... ... ... | | । | ।। |
| ध्रुवाख्यान. ... ... ... | ० | ।। | ।। |
| धंदेशिक्षण. ... ... ... | ० | २ | ।। |
| नलदमयंतीचरित्र. ... ... | ० | ४ | ।। |
| नकला किंवा वैद्यकीय चुटके ... | ० | ३ | ।। |
| नागानंदसार. ... ... ... | ० | २।। | ।। |
| नाटकी गंगू. ... ... ... | ० | १ | ।। |
| निवडक बोधपर पदें व अभंग. | ० | १।। | ।। |
| पथ्यापथ्यविचार. ... ... | ० | २ | ।। |
| पाळणे.... ... ... ... | ० | ।। | ।। |
| पांडवप्रताप. श्रीधरकृत ... | ४ | ० | १४ |
| प्रपंच आणि परमार्थ. ... ... | ० | १ | ।। |
| फुलांची परडी.... ... ... | ० | ४ | ।। |
| बाळमित्र. ... ... ... | ० | १ | ।। |
| बाळमित्र भाग २ रा ... ... | ० | १२ | १ |
| बालबोध पहिलें पुस्तक. ओककृत. | ० | १ | ।। |
| ,, दुसरें पुस्तक. ,, | ० | २ | ।। |
| बालबोध पहिला व्हाल्यूम. ... | ० | ६ | ।। |
| ,, दुसरा व्हाल्यूम. ... | ० | ६ | ।। |
| ,, तिसरा व्हाल्यूम. ... | ० | ६ | ।। |
| ,, चवथा व्हाल्यूम. ... | ० | ८ | १ |
| ,, पांचवा व्हाल्यूम. ... | ० | ८ | १ |
| ,, साहावा व्हाल्यूम ... | ० | १२ | १।। |
| ,, सातवा व्हाल्यूम. ... | ० | १२ | १।। |
| ,, आठवा व्हाल्यूम. ... | ० | १२ | १।। |

| | रु. | आ. | ट.आ. |
|---|---|---|---|
| बालबोध नववा व्ह्याल्यूम. ... | ० | १२ | १॥ |
| श्रीमंत पहिले बाजीराव बल्लाळ पेशवे यांचें चरित्र. ... ... | ० | ८ | २ |
| भाऊबंदांत कलह उत्पन्न होऊन विभक्त होतात त्याचीं कारणें काय व ते न होण्याचे उपाय. ... ... | ० | ४ | ॥ |
| भानुदासचरित्र ... ... ... | ० | ३ | ॥ |
| भूपाळ्या. ... ... ... | ० | ॥ | ॥ |
| मदालसाचरित्र ... ... ... | ० | २ | ॥ |
| मनुवचन. ... ... ... | ० | १ | ॥ |
| मनुकथामृत ... ... ... | ० | ३ | ॥ |
| महामारी. ... ... ... | ० | ६ | ॥ |
| मऱ्हाठ्यांच्या संबंधानें चार उद्गार. | १ | ४ | २ |
| मुद्राराक्षससार... ... ... | ० | ३ | ॥ |
| मुलांस उत्तम बक्षीस.... ... | ० | ८ | १ |
| मुलांचें कल्याण. ... ... | ० | १॥ | ॥ |
| ययातिराजाची कथा. ... ... | ० | १ | ॥ |
| यशोदागीत. ... ... ... | ० | ॥ | ॥ |
| रघुवंशनामक महाकाव्य कालिदासकविविरचित ह्याचें मराठी पद्यात्मक भाषांतर. | २ | ० | ३ |
| राजगुरु दादोजी कोंडदेव आणि छत्रपति शिवाजीमहाराज. ... ... | ० | ६ | १ |
| रामनवमी ... ... ... | ० | १ | ॥ |
| रामविजयग्रंथ. ( ओंवीबद्ध. )... | ३ | ० | ११ |
| रुक्मिणीस्वयंवर. रेशमी पुठ्यानें बांधलेलें. ... ... ... | ० | ८ | १ |
| लहान मुलांचें शिक्षण.... ... | ० | २ | ॥ |
| वाल्मीकिरामायणाचें मराठी भाषांतर. ... ... ... | २० ट.रु.१ | | २ |
| वासवदत्ता कथासार. ... ... | ० | १ | ॥ |
| विचारमणिमाला मणि १।२ प्रत्येकीं | | । | ॥ |
| विचारसाधन. ... ... ... | ० | ५ | ॥ |
| विष्णुबावा ब्रह्मचारीकृत वेदोक्तधर्मविचार. ... ... ... | ० | ७ | ॥ |
| विदुरवचन. ... ... ... | ० | २ | ॥ |
| विद्यार्थी. ... ... ... | ० | १॥ | ॥ |
| विद्यार्थ्यांचा व्याकरणमित्र. ... | ० | १॥ | ॥ |
| वियुक्तदंपतिप्रहसन. ... ... | ० | ४ | ॥ |

| | रु. | आ. | ट.आ. |
|---|---|---|---|
| वेणीबंधन. ... ... ... | ० | ६ | १ |
| वैद्यावतंस ( लोलिंबराजकृत ) प्राकृतश्लोकबद्ध भाषांतरसहित ... | | २ | ॥ |
| शकुंतलाचरित्र. ... ... | ० | १ | ॥ |
| शनिमाहात्म्य. ( ओंवीबद्ध. ) | ० | २ | ॥ |
| शिवलीलामृत. मोठें. ... ... | ० | १२ | २ |
| शिवलीलामृत. रेशमी. ... | ० | ८ | १॥ |
| शूद्रकमलाकर. भाषांतरसहित... | ४ | ० | ४ |
| श्रीज्ञानेश्वरचरित्र. ... ... | ० | १२ | २ |
| श्रीमद्भगवद्गीता. सुबोधचंद्रिका. | ० | १० | १ |
| सदाचार. ... ... | १ | ४ | २ |
| सद्वर्तन. ... ... ... | ० | १२ | १॥ |
| सवाईमाधवराव.... ... ... | ० | ३ | ॥ |
| सरस्वतीमंडल ... ... ... ... | | १॥ | १ |
| साहा सुलभ संवाद. ... ... | ० | १ | ॥ |
| साम्युएल जान्सन. ... ... | ० | ७ | १ |
| सावित्रीचरित्र. ... ... | ० | १ | ॥ |
| सुगम प्रियदर्शिका. ... ... | ० | २ | ॥ |
| सुलभ विक्रमोर्वशी. ... ... | ० | ३ | ॥ |
| सुलभ शाकुंतल. ... ... | ० | २॥ | ॥ |
| सुलभ शाकुंतल उत्तरभाग. ... | ० | ३ | ॥ |
| सुशील यमुना अथवा वासुदेव बळवंत फडक्यांच्या बंडाची धामधूम. | ० | १२ | १॥ |
| सुशर्माचरित्र ... ... ... | ० | २ | ॥ |
| सोपीं गाणीं. ... ... ... | ० | १ | ॥ |
| सोळा सोमवार. ... ... | ० | १ | ॥ |
| सौंदर्यलहरी व तिची समश्लोकी टीका. ... ... ... | ० | ४ | १ |
| स्वर्गारोहणाचे अभंग. ... ... | ० | ॥ | ॥ |
| स्वदेशाभिमान.... ... ... | ० | २ | ॥ |
| स्त्रीशिक्षणबोध. ... ... | ० | २ | ॥ |
| स्त्रीगीत भाग पहिला.... ... | ० | ३ | ॥ |
| ,, ,, दुसरा. ... ... | ० | ५ | १ |
| ,, ,, तिसरा.... ... | ० | ४ | १ |
| हरिविजय. (ओंवीबद्ध.) छापत आहे | २ | ० | ८ |
| हरिदासबत्तिशी ... ... ... | | ४ | ॥ |

## हिंदुस्थानी पुस्तकें.

| | रु. | आ. | ट.आ. |
|---|---|---|---|
| आत्मबोध. ... ... ... | ० | ४ | ॥ |
| कर्मविपाकसंहिता ... ... | १ | ४ | २ |
| तत्त्वबोध. ... ... ... | ० | २॥ | ॥ |
| नीलकंठशैवसंवाद. ... ... | ० | २ | ॥ |

| | रु | आ. | ट.आ. |
|---|---|---|---|
| न्यायप्रकाश. ... ... ... ... | ७ | ० | १३ |
| महावाक्यविवेक. ... ... | ० | १ | ॥ |
| योगवासिष्ठ. प्रकरणें २ वैराग्य व मुमुक्षु. हिंदुस्थानी. ... | ० | १० | २ |
| योगवासिष्ठ मोठा. ६ प्रकरणें... | १२ | ० | १रु० |
| श्रीमद्भागवत एकादशस्कंधभाषा. | १ | ० | ४ |
| सटीक रामगीता. ... ... | ० | १० | १॥ |
| सप्तश्लोकी गीता. ... ... | ० | १ | ॥ |
| सिद्धांतबिंदुप्रकाश. ... ... | ० | ८ | १॥ |
| हस्तामलक स्तोत्र. ... ... | ० | २ | ॥ |
| रामस्तवराज दोहा. ... ... | ० | ४ | ॥ |

## गुजराथी पुस्तकें.

| | रु | आ. | ट.आ. |
|---|---|---|---|
| धर्मसिंधु. ... ... ... | ६ | ० | ६ |
| विचारसाधन. ... ... ... | ० | २ | ॥ |
| होरीसागर. ... ... ... | ० | ८ | ॥ |

## हेमंतव्याख्यानमाला.

| | रु | आ. | ट.आ. |
|---|---|---|---|
| रा. सा. नारायण विष्णु बापट, उन्नति ह्मणजे काय व तिची आवश्यकता. | ० | ॥। | ॥ |
| नामदार काशीनाथ त्रिंबक तेलंग, सी. आय्. ई.—शास्त्र व रूढि यांच्या बलाबलाविषयीं विचार, पूर्वभाग व उत्तरभाग. ... ... | ० | १॥ | ॥ |
| वरील विषयावर झालेला वादविवाद. | ० | १ | ॥ |
| वे. रा. रा. भीमाचार्य झळकीकर—मध्वमत. ... ... ... | ० | १ | ॥ |
| रा. रा. काशीनाथ त्रिंबक खरे.—हिंदुस्थान देशाच्या व्यवहारिक स्थितीविषयीं कांहीं विचार. | ० | १ | ॥ |
| वे. रा. रा. गोविंद शंकर शास्त्री बापट—हिंदुस्थान देशाची अवनति. | ० | ३ | ॥ |
| रा. रा. गणेश रामचंद्र किर्लोसकर, एम्. ए. एल्. एल्. बी.—सरकारचे कर. ... ... | ० | ॥ | ॥ |
| रा. रा. रावजी भवानराव पावगी, बी. ए.—आमची कुटुंबव्यवस्था. | ० | १ | ॥ |
| रा. रा. यशवंत वासुदेव आठले, एम्. ए. एल्. एल्. बी.—हिंदुलोकांतील विवाहकाल. ... | ० | १ | ॥ |
| रा. रा. वामन आबाजी मोडक, बी. ए.—बालविवाहापासून होणारे नफे व तोटे. ... ... | ० | १ | ॥ |
| रा. रा. रामचंद्र भिकाजी गुंजीकर—विद्यावृद्धीच्या कामीं आमची अनास्था. ... ... ... | ० | १ | ॥ |
| रा. रा. जनार्दन बाळाजी मोडक, बी. ए.—महाभारत. ... | ० | ४ | १ |
| डाक्टर मोरेश्वर गोपाळ देशमुख, बी. ए. एम्. डी., बी. एस्. सी.—विवाहकालाविषयीं शारीरशास्त्राचें मत.... ... ... | ० | १ | ॥ |
| डाक्टर कान्होबा रणछोडदास कीर्तीकर—अश्रु त्यांची उत्पत्ति आणि योजना. ... ... ... | ० | १ | ॥ |
| मुंबईतील महाराष्ट्रवक्तृत्वोत्तेजक मंडळी.—हिची इ० १८८६ ह्या वर्षाची हकीकत ह्मणजे १. तिचा हिशेब. २. अध्यक्षांचीं भाषणें. ३. पसंत ठरलेलीं भाषणें.... | ० | ४ | ॥ |
| इ० स० १८८७ सालचा रिपोर्ट. | ० | ३ | ॥ |
| मूकव्याख्यान पहिलें. ... ... | ० | १ | ॥ |
| महामहोपाध्याय वे० शा० सं० राजाराम शास्त्री बोडस—ईश्वरस्मरणपूर्वक स्वपरसंतोषजनक लोकवर्तन ... ... ... | ० | १॥ | १ |
| रा. रा. वासुदेव गोपाळ भांडारकर—स्त्रियांची खरी योग्यता. ... | ० | २ | ॥ |
| रा. सा. नारायण विष्णु बापट—संस्कृतविद्येचें पुनरुज्जीवन.... | ० | २ | ॥ |

हीं पुस्तकें मुंबईत काळकादेवीच्या रस्त्यावर "निर्णयसागर" छापखान्यांत रोख पैसा पाठविला असतां विकत मिळतील.